प्रह्लादस्तालधारी तरलगतितया चोद्धवः कांस्यधारी
वीणाधारी सुरर्षिः स्वरकुशलतया रागकर्त्तार्जुनोऽभूत् ।
इन्द्रोऽवादीन्मृदङ्गं जयजयसुकराः कीर्तने ते कुमारा-
यत्राग्रे भाववक्ता रसविरचनया व्यासपुत्रो बभूव ॥ ८६ ॥

ननर्त मध्ये त्रिकमेव तत्र
भक्त्यादिकानां नटवत्सुतेजसाम् ।
अलौकिकं कीर्तनमेतदीक्ष्य
हरिः प्रसन्नोऽपि वचोऽब्रवीत्तत् ॥ ८७ ॥

मत्तो वरं भागवता वृणुध्वं—
प्रीतः कथाकीर्तनतोऽस्मि साम्प्रतम् ।
श्रुत्वेति तद्वाक्यमतिप्रसन्नाः—
प्रेमार्द्रचित्ता हरिमूचिरे ते ॥ ८८ ॥

नगाहगाथासु च सर्वभक्तै—
रेभिस्त्वयाभाव्यमिति प्रयत्नात् ।
मनोरथोयं परिपूरणीय—
स्तथेति चोक्त्वान्तरधीयताच्युतः ॥ ८९ ॥

ततोऽनमत्तच्चरणेषु नारदस्तथा शुकादीनपि तापसाश्च ।
अथ प्रहृष्टाः परिनष्टमोहाः सर्वे ययुः पीतकथामृतास्ते ॥ ९० ॥

भक्तिः सुताभ्यां सह रक्षिता सा—
शास्त्रे स्वकीयेऽपि तदा शुकेन ।
अतो हरिर्भागवतस्य सेवनात्—
चित्तं समायाति हि वैष्णवानाम् ॥ ९१ ॥

दारिद्र्यदुःखज्वरदाहितानां—
मायापिशाचीपरिमर्दितानाम् ।
संसारसिन्धौ परिपातितानां—
क्षेमाय वै भागवतं प्रगर्जति ॥ ९२ ॥

शौनक उवाच ।

शुकेनोक्तं कदा राज्ञे गोकर्णेन कदा पुनः ।
सुरर्षये कदा ब्राह्मैश्छिन्धि मे संशयन्त्विमम् ॥ ९३ ॥

सूत उवाच ।

आकृष्णनिर्गमात्त्रिंशद्वर्षाधिगते कलौ ।
नवमीतो नभस्ये च कथारम्भं शुकोऽकरोत् ॥ ९४ ॥

परीक्षिच्छ्रवणान्ते च कलौ वर्षशतद्वये ।
शुद्धे शुचौ नवम्यां च धेनुजोऽकथयत्कथाम् ॥ ९५ ॥

तस्मादपि कलौ प्राप्ते त्रिंशद्वर्षे गते सति ।
ऊचुरूर्जे सिते पक्षे नवम्यां ब्रह्मणः सुताः ॥ ९६ ॥

इत्येतत्ते समाख्यातं यत्पृष्टोऽहं त्वयाऽनघ ।
कलौ भागवती वार्ता भवरोगविनाशिनी ॥ ९७ ॥

कृष्णप्रियं सकलकल्मषनाशनं च—
मुक्त्यैकहेतु इह भक्तिविलासकारि ।
सन्तः ! कथानकमिदं पिबतादरेण—
लोके हितार्थपरिशीलनसेवया किम् ॥ ९८ ॥

स्वपुरुषमपि वीक्ष्य पाशहस्तं—
वदति यमः किल तस्य कर्णमूले ।
परिहर[१] भगवत्कथासु मत्तान्—
प्रभुरहमन्यनृणां न वैष्णवानाम् ॥ ९९ ॥

असारे संसारे विषयविषसङ्गाकुलधियः—
क्षणार्धं क्षेमार्थं पिबत शुकगाथातुलसुधाम् ।
किमर्थं व्यर्थं भो व्रजत कुपथे कुत्सितपथे—
परीक्षित्साक्षीयच्छ्रवणगतमुक्त्युक्तिकथने ॥ १०० ॥

रसप्रवाहसंस्थेन श्रीशुकेनेरिता कथा ।
कण्ठे सम्बध्यते येन स वैकुण्ठप्रभुर्भवेत् ॥ १०१ ॥

इति च परमगुह्यं सर्वसिद्धान्तसिद्धं—
सपदि निगदितं ते शास्त्रपुञ्जं विलोक्य ।
जगति शुककथातो निर्मलं नास्ति किञ्चित्—
पिब परसुखहेतोर्द्वादशस्कन्धसारम् ॥ १०२ ॥

एतां यो नियततया शृणोति भक्त्या—
यश्चैनां कथयति शुद्धवैष्णवाग्रे ।
तौ सम्यग्विधिकरणात्फलं लभेते—
याथार्थ्यान्नहि भुवने किमप्यसाध्यम् ॥ १०३ ॥

इतिश्रीपद्मपुराणे उत्तरखण्डे श्रीमद्भागवतमाहात्म्ये
श्रवणविधिकथनं नाम
षष्ठोऽध्यायः ॥ ६ ॥

[१] मधुसूदनप्रपन्नान् इति पाठान्तरम् ॥

## इति श्रीभागवतमाहात्म्यं सम्पूर्णम्

हरिःओम् ।

श्रीकृष्णार्पणमस्तु ।

॥श्रीः॥

# विज्ञापनम् ।

## परपक्षगिरिवज्रः ।

अयि विचक्षणाः ! अद्यातिप्रहर्षसमयो वरीवर्त्ति अहं तत्रभवद्भ्यो भवद्भ्योऽद्भुतग्रन्थं निवेदयामि यद्ग्रन्थान्वेषणं सहस्राणिविद्वांसो
ऽकार्षुः स्वातकास्वातिबिन्दूनिव, तथा ऽपि तद्ग्रन्थदर्शनमपि दुर्लभमभूत् तत्पाठनविचारणादि तु दूरापास्तमेवासीत् तमेव ग्रन्थमत्या-
नन्देन समस्तभारतवासिनां श्रीमतां सेवायां निवेदयामि यं ग्रन्थं 'शारीरकहार्दसंचयनामकं' कथयन्ति, केचित्तु परपक्षगिरिवज्राख्यम्
अध्यासगिरिवज्राख्यमपि ब्रुवन्ति, एष ग्रन्थो वेदान्तिनां शिरोधार्य्यो ऽस्ति, किञ्च सर्वमनीषिणामेतत्सुविदितमस्ति, निगमकल्पतरो रस-
मयफलं वेदान्तशास्त्रमेवास्ति, यद्यपि वेदान्तशास्त्रस्य स्वस्वसिद्धान्तानामनुकूला अनेके ग्रन्था मुद्रितास्सन्ति, तथापीदृशः को ऽपि
ग्रन्थोऽद्यावधि न मुद्रितो ऽस्ति, यद्ग्रन्थावलोकनेनैव सर्वं सिद्धान्तज्ञानं भवति, एतस्मिन् ग्रन्थेऽद्भुतचमत्कारोऽस्ति एतदवलोकनेनैव
सर्वशास्त्रसिद्धान्तज्ञानपूर्वकसत्यासत्यविचारो भवति, अन्यवेदान्तग्रन्थस्यावलोकनावश्यकता ऽपि न भवति, सर्वेषां विपश्चितामेतत्
ग्रन्थावलोकनेन पूर्णानन्दावाप्तिर्भवति, एष च ग्रन्थो विदुषां पठनपाठनादिषु प्रचारणीयो ऽस्ति, किम्बहुलेखनेनैतद्ग्रन्थावलोकयितॄणा
ब्रह्मानन्दास्वादसमुद्रस्तरङ्गित इव भवति, एतद्ग्रन्थावलोकनेन विद्वन्मण्डल्यां वाग्विलासे सङ्कोचः कदा ऽपि न भवति, एष च ग्रन्थो
निम्नलिखितप्रकरणैर्विभूषितो ऽस्ति, एतस्मिन् ग्रन्थे चत्वारो ऽध्यायास्सन्ति, तत्र प्रथमे ऽध्याये विषयसम्बन्धगिरिनिपात-प्रयोजनाधि-
कारिगिरिनिपात-अध्यासगिर्यधिष्ठानगिरिनिपातादीनि महाविस्तीर्णानि त्रयोविंशतिः प्रकरणानि सन्ति. द्वितीये चाध्याये जिज्ञास्यो-
पपत्तिगिरिनिपातादीनि दश प्रकरणानि सन्ति तृतीयेऽध्याये साङ्ख्यगिरिनिपातादीनि दश प्रकरणानि सन्ति चतुर्थेऽध्याये जीवन्मुक्ति
गिरिनिपातो ऽस्ति, एवं चत्वारिंशत्प्रकरणैर्विभूषितो ऽष्टसहस्रश्लोकसंख्यापरिमितो ग्रन्थोऽस्तीति विज्ञेयं मनीषिभिरिति शम् ॥ मूल्यम्
रौप्यकपञ्चकम् ५)

पूज्यपादश्रीविश्वनाथचक्रवर्तिविरचितम्

## श्रीकृष्णभावनामृतम् ।

श्रीकृष्णभावनामृतम् श्रीकृष्णचन्द्राष्टकालिकसेवानिरूपणपरम् क्रीडानिकुञ्जस्थ किङ्करीशुकशारिकादीनां परस्परसेवानिरूपण
पर सुरूपपद्यात्मकं महाकाव्यम् तदनुगुणामिताक्षरसंस्कृतटीकया समलङ्कृतम्, मूल्यम् रौप्यकत्रयम् ३)

## श्रीजगन्नाथवल्लभनाटकम् ।

इह खलु जगति विद्यास्थानेष्वनेकेषु पठनीयेषु सत्स्वपि शास्त्रान्तराणां सहिष्णुवेद्यत्वेन सूक्ष्ममतिवेद्यत्वेन च तेष्वल्पजनादरणीयेषु
जातेषु इदानीं स्थलमितिवेद्यत्वेन सुकुमारवेद्यत्वेन च काव्यनाटकादीन्येव मनुष्याणां समयापनयोग्यानि तानि च भगवद्विषयकाणि
चेद्भुक्तिमुक्तिप्रदानीति विचार्यैदानीं जगन्नाथवल्लभनाटकं सर्वजनसौकर्यायप्रकाशितम् इदं च नाटकं श्रीराधाकृष्णरहस्यक्रीडा विषये
प्रतापरुद्र नृपतितोषार्थं रामानन्दराय कविना निर्मितम् अत्र च पञ्चाङ्काः सन्तितत्र प्रथमेऽङ्के नटनटीसूत्रधाराणां संवादपूर्वकप्रस्तावना
नन्तरं श्रीराधिकाया अभिसरणक्रियानिरूपणम् ४ पञ्चमे श्रीराधाकृष्णयोः सङ्गमनिरूपणम् अस्मिन् ग्रन्थे मध्ये मध्ये गीतगोविन्दवद्राग-
पद्यान्यपि विद्यन्ते ॥ मूल्यम् द्वादश आणकाः ॥।]

## वेदान्तसारः ।

भो भो वेदवेदान्तसकलशास्त्रपरावारपारङ्गताः !

विदितमेव भवतां श्रीमद्वैय्यासिकसूत्रार्थयाथात्म्यप्रतिपादको बालानामपि वेदान्तार्थसंशयनिवारणकरो वेदान्तसारोनाम ग्रन्थ-
रत्नम् स चेदानीं सुललितैर्नागराक्षरैरपूर्वतया मुद्रितस्सन् जाज्वलीति. अतस्सर्वेऽप्येतद्ग्रन्थरत्नं केवलेन सार्धरूपकमूल्येन ग्रहीत्वा
मनोनयनानन्दं प्राप्नुवन्तु भवन्तः । अस्य मू० ३]

**श्रीश्रीनिम्बार्कदर्शनम्**—भो भोः परिनिष्ठितविद्वांसः ! अस्मन्मुद्रणालये अद्यावधि क्वाप्यमुद्रितम् भाष्यत्रयोपेतम् श्रीमन्निम्बार्क
दर्शनम्, समग्रं सम्मुद्रितं तत्क्रयेतां ग्रहणोत्सुकैः सप्तमुद्रा-मूल्येन, पश्चादधिकेन लभ्यते इति विदन्तु मू० ७]

विद्वज्जन कृपाकाङ्क्षी—श्रीनित्यस्वरूप ब्रह्मचारी श्रीदेवकीनन्दन प्रेस श्रीवृन्दावन–जिला मथुरा ।

# श्रीमद्भागवतम् ।

## प्रथमस्कन्धः ।

### प्रथमोऽध्यायः ।

ॐ नमो भगवते वासुदेवाय ।

जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट्
तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत् सूरयः ।
तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गोऽमृषा
धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ॥ १ ॥

अर्थेषु ( कार्य्याकार्य्येषु ) अन्वयादितरतश्च ( अन्वयव्यतिरेकाभ्यां योऽस्ति ), ( अतएव ) अस्य ( जगतः ) जन्मादि ( जन्मस्थिति-भङ्गं ) यतः ( भवति तं ), ( ततः ) यः ( च ) अभिज्ञः ( सर्वज्ञः ) स्वराट् ( स्वतःसिद्धज्ञानवान् तं ), यत् ( यस्मिन् ब्रह्मणि वेदे ) सूरयः ( ब्रह्मादयोऽपि ) मुह्यन्ति ( तत् ) ब्रह्म ( तं वेदं ) आदिकवये ( ब्रह्मणे ) हृदा ( मनसैव यः ) तेने ( प्रकाशितवान् तं ), ( किञ्च ) यथा तेजोवारिमृदां विनिमयः ( अन्यस्मिन्नन्यावभासः तेजसि वारिबुद्धिर्मृगतृष्णायां मृदि काचादौ जलबुद्धिरित्यादि तथा ) यत्र ( शुद्ध-भगवत्स्वरूपे ) त्रिसर्गः ( मायागुणसर्गः भूतेन्द्रियदेवतारूपः ) अमृषा ( सत्यः ) ( मृषा वा ) ( किञ्च ) स्वेन धाम्ना ( तेजसा ) सदा निरस्तकुहकं सत्यं परं ( परमेश्वरं ) धीमहि ( ध्यायेम ) इति समस्तान्वयः ॥ १ ॥

---

श्रीधरस्वामी ।

ॐ नमो भगवते परमहंसास्वादितचरणकमलचिन्मकरन्दाय भक्तजनमानसनिवासाय श्रीकृष्णाय ।
वागीशा यस्य वदने लक्ष्मीर्यस्य च वक्षसि । यस्यास्ते हृदये संवित् तं नृसिंहमहं भजे ॥ १ ॥
विश्वसर्गविसर्गादि नवलक्षणलक्षितम् । श्रीकृष्णाख्यं परं धाम जगद्धाम नमामि तत् ॥ २ ॥
माधवो माधवावीशौ सर्वसिद्धिविधायिनौ । वन्दे परस्परात्मानौ परस्परनतिप्रियौ ॥ ३ ॥
सम्प्रदायानुरोधेन पौर्वापर्यानुसारतः । श्रीभागवतभावार्थदीपिकेयं प्रतन्यते ॥ ४ ॥
क्वाहं मन्दमतिः क्वेदं मथनं क्षीरवारिधेः । किं तत्र परमाणुर्वै यत्र मज्जति मन्दरः ॥ ५ ॥
मूकं करोति वाचालं पङ्गुं लङ्घयते गिरिम् । यत्कृपा तमहं वन्दे परमानन्दमाधवम् ॥ ६ ॥
श्रीमद्भागवताभिधः सुरतरुस्तारांकुरः सज्जनिः स्कन्धैर्द्वादशभिस्ततः प्रविलसद्भक्त्यालवालोदयः ।
द्वात्रिंशत्त्रिशतञ्च यस्य विलसच्छाखाः सहस्राण्यलं पर्णान्यष्ट दशोष्टदोऽतिसुलभो वर्वर्त्ति सर्वोपरि ॥ ७ ॥

अथ नानापुराणशास्त्रप्रबन्धैश्चित्तप्रसत्तिमलभमानस्तत्र तत्रापरितुष्यन्नारदोपदेशतः श्रीमद्भगवद्गुणवर्णनप्रधानं श्रीभागवतशास्त्रं प्रारिप्सुर्वेदव्यासस्तत्प्रतिपाद्यपरदेवतानुस्मरणलक्षणं मङ्गलमाचरति जन्माद्यस्येति । परं परमेश्वरम् । धीमहीति ध्यायतेर्लिङि च्छान्दसं ध्यायेम इत्यर्थः । बहुवचनं शिष्याभिप्रायकम् । तमेव स्वरूपतटस्थलक्षणाभ्यामुपलक्षयति । तत्र स्वरूपलक्षणं सत्यमिति । सत्यत्वे हेतुः यत्र यस्मिन् त्रयाणां मायागुणानां तमोरजःसत्त्वानां सर्गो भूतेन्द्रियदेवतारूपोऽमृषा सत्यः—यत् सत्यतया मिथ्यासर्गोऽपि सत्यवत् प्रतीयते तं परं सत्यमित्यर्थः । अत्र दृष्टान्तः—तेजोवारिमृदां यथा विनिमयः व्यत्ययः ( व्यत्यासः ) अन्यस्मिन्नन्यावभासः स यथाधिष्ठानसत्तया सत्यवत् प्रतीयते तद्वदित्यर्थः । तत्र तेजसि वारिबुद्धिर्मरीचिकायां प्रसिद्धा मृदि च काचादौ वारिबुद्धिरित्यादि यथायथमूह्यम् । यद्वा तस्यैव परमार्थसत्यत्वप्रतिपादनाय तदितरस्य मिथ्यात्वमुक्तम् । यत्र मृषैवायं त्रिसर्गो न वस्तुतः सन्निति । यत्रेत्यनेन प्राप्तमुपाधिसम्बन्धं वारयति स्वेनैव धाम्ना महसा निरस्तं कुहकं कपटं यस्मिन् तम् । तटस्थलक्षणमाह जन्मादीति । अस्य विश्वस्य जन्मस्थितिभङ्गं यतो भवति तं धीमहि । तत्र हेतुः अन्वयादितरतश्च अर्थेषु कार्य्येषु परमेश्वरस्य सद्रूपेणान्वयात् अकार्य्येभ्यः खपुष्पादिभ्यस्तद्व्यतिरेकाच्च । यद्वा अन्वयशब्देनानुवृत्तिः इतरशब्देन व्यावृत्तिः । अनुवृत्तत्वात् सद्रूपं ब्रह्म कारणं मृत्सुवर्णादिवत् । व्यावृत्तत्वात् विश्वं कार्य्यं घटकुण्डलादिवदित्यर्थः । यद्वा सावयवत्वादन्वयव्यतिरेकाभ्यां यदस्य जन्मादि तद्यतो भवतीति सम्बन्धः ।

### श्रीधरस्वामी ।

तथाच श्रुतिः यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्तीत्याद्या । स्मृतिश्च—यतः सर्वाणि भूतानि भवन्त्यादियुगागमे । यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये इत्याद्या । तर्हि किं प्रधानं जगत्कारणत्वात् ध्येयमित्यभिप्रेतं नेत्याह अभिज्ञो यस्तं स ईक्षत लोकान्नुसृजा इति स इमान् लोकानसृजतेत्यादिश्रुतेः ईक्षतेर्नाशब्दमिति न्यायाच्च । तर्हि किं जीवः स्यान्नेत्याह स्वराट् स्वेनैव राजते यस्तं स्वतःसिद्धज्ञानमित्यर्थः । तर्हि किं ब्रह्मा हिरण्यगर्भः समवर्त्ततान्ग्रे भूतस्य जातःपतिरेक आसीत् इति श्रुतेः । नेत्याह तेने इति । आदिकवये ब्रह्मणेऽपि ब्रह्म वेदं यस्तेने प्रकाशितवान् । यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये इत्यादि श्रुतेः । ननु ब्रह्मणोऽन्यतो वेदाध्ययनमप्रसिद्धं सत्यं तत्तु हृदा मनसैव तेने । अनेन बुद्धिवृत्तिप्रवर्त्तकत्वेन गायत्र्यर्थोऽपि दर्शितः । वक्ष्यति हि प्रचोदिता येन पुरा सरस्वती वितन्वताऽजस्य सतीं स्मृतिं हृदि । स्वलक्षणा प्रादुरभूत् किलास्यतः स मे ऋषीणामृषभः प्रसीदतामिति । ननु ब्रह्मा सुप्तप्रतिबुद्धन्यायेन स्वयमेव वेदमुपलभताम् । नेत्याह यद्यस्मिन् ब्रह्मणि सूरयोऽपि मुह्यन्ति । तस्माद्‌ब्रह्मणोऽपि पराधीनज्ञानत्वात् स्वतःसिद्धज्ञानः परमेश्वर एव जगत्कारणम् । अतएव सत्यः असतः सत्ताप्रदत्वाच्च परमार्थसत्यः सर्वज्ञत्वेन च निरस्तकुहकस्तं धीमहीति गायत्र्या प्रारम्भेण च गायत्र्याख्यब्रह्मविद्यारूपमेतत् पुराणमिति दर्शितम् । यथोक्तं मत्स्यपुराणे पुराणदानप्रस्तावे । यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः । वृत्रासुरवधोपेतं तद्भागवतमिष्यते । लिखित्वा तच्च यो दद्याद्धेमसिंहसमन्वितम् । प्रौष्ठपद्यां पौर्णमास्यां स याति परमं पदम् । अष्टादश सहस्राणि पुराणं तत् प्रकीर्त्तितमिति ॥ पुराणान्तरे च—ग्रन्थोऽष्टादशसाहस्रो द्वादशस्कन्धसम्मितः । हयग्रीवब्रह्मविद्या यत्र वृत्रवधस्तथा । गायत्र्या च समारम्भस्तद्वै भागवतं विदुरिति ॥ पद्मपुराणे च अम्बरीषं प्रति श्रीगौतमवचनम् । अम्बरीष शुकप्रोक्तं नित्यं भागवतं शृणु । पठस्व स्वमुखेनापि यदीच्छसि भवक्षयमिति ॥ अतएव भागवतं नामान्यदित्यपि न शङ्कनीयम् ॥ १ ॥

---

### दीपनी ।

इह खलु परमकारुणिकः परमहंसपरिव्राजकाचार्य्यः श्रीश्रीधरयतीन्द्रः प्रारिप्सितायाः श्रीमद्भागवतटीकाया निर्विघ्नेन परिसमाप्तिप्रचयगमनशिष्टाचारपरिपालनफलं विशिष्टाचारानुमित स्मृतिपरिकल्पितश्रुतिबोधितकर्त्तव्यताकं स्वाभिमतदेवतातत्त्वानुसन्धानात्मकं मङ्गलमाचरति वागीशा यस्य वदने इति । ईशा विधिनिषेधयोः जीवान् नियमयतीति वेदलक्षणा वाक् यस्य मुखे वर्त्तते । अनेन तद्वदनानुस्मरणात् अपराविद्यावाप्तिर्ध्वनिता । यदुरसि श्रीर्हेमरेखारूपेणास्ते इति सच्चिन्मूर्त्तौ भगवति चिज्जडभागाभावेन देहदेहिभागासम्भवेऽपि यद्वदनादिस्मरणात् इष्टसाधनसम्पल्लाभसिद्धिर्ध्वनिता। तावता विद्यालक्ष्मीभ्यां त्रिवर्गलाभसिद्धेस्तद्वदनादि स्मरणात् त्रिवर्गलाभसिद्धिरिति । यस्य हृदये संवित् परा विद्या आस्ते इति तद्‌भजनाद् ब्रह्मात्मैक्यज्ञानरूपपराविद्यावाप्तिरिति मुक्तिसिद्धिः । अत्र हृदयसंविदोरभेदात् पूर्ववद् व्यपदेशः । तं भगवन्तं श्रीनरसिंहमूर्त्तिं कीर्त्तननमनादिभिः सेवे इत्यर्थः ।

ततः श्रीमद्भागवतप्रतिपाद्यं श्रीकृष्णाख्यं सर्वाश्रयं परमात्मानं नमस्करोति विश्वसर्गविसर्गादीति । आदिपदेन स्थानं पोषणमूतिर्मन्वन्तराणि ईशानुकथा निरोधो मुक्तिरिति सप्तानां लक्षणानां ग्रहणम् । तत्र परमेश्वरात् कर्त्तुः गुणानां परिणामात् आकाशादीनां शब्दादीनामिन्द्रियाणां महत्तत्त्वाहङ्कारतत्त्वयोश्च यत् विराड्‌रूपेण स्वरूपेण च जन्म स सर्गः । चतुर्मुखब्रह्मणा कृतश्चराचरसर्गो विसर्गः । भगवतः सृष्टानां तत्तन्मर्य्यादापालनेनोत्कर्षः स्थितिः स्थानम् । स्वभक्तेषु भगवदनुग्रहः पोषणम् । कर्मणां वासनाएव ऊतयः कर्मभिर्वर्द्धन्ते संश्लिष्यन्ते वेति ऊतिशब्दार्थः । भगवदनुगृहीतानां सतां मन्वन्तराधिपतीनां धर्मो मन्वन्तराणि । हरेरवतारानुचरितम् अस्यानुवर्त्तिनाञ्च सतां कथा ईशानुकथाः । हरेर्योगनिद्रावलम्बनानन्तरं जीवानां स्वोपाधिभिः सह शयनं लयो निरोधः । अविद्यया अध्यस्तं कर्तृत्वादि हित्वा ब्रह्मतया व्यवस्थितिर्मुक्तिरिति । एतमेतत्पुराणोक्तेन विश्वसर्गादिनवलक्षणेन लक्षितं यत् श्रीकृष्णाख्यं परं धाम तत् जगद्धामनमामीत्यर्थः । धाम इति आश्रयशब्दार्थः । तत्र सृष्टिर्लयश्च यतो भवति अध्यवसीयते प्रकाशते च स ब्रह्मेति परमात्मेति प्रसिद्ध आश्रय इति । तदुक्तं अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः । मन्वन्तरेशानुकथा निरोधो मुक्तिराश्रयः । दशमस्य विशुद्ध्यर्थं नवानामिह लक्षणम् । वर्णयन्ति महात्मानः श्रुतेनार्थेन चाञ्जसेति द्वितीयस्कन्धान्तर्गतदशमाध्यायस्य प्रथमादिसंख्यकश्लोकग्रन्थार्थोऽपि संक्षेपतो दर्शित इति ॥

एवं निर्गुणत्वेन प्रणम्य तत्रैव बहुश्रुतिस्मृतिसिद्धहरिहराद्वैतप्रदर्शनपूर्वकं सगुणत्वेनाभिवन्दति माधवो माधवाविति । सन्दने कार्यो सर्वसिद्धिविधायिनाविति । हेतुगर्भविशेषणमेतत् । नन्वीश्वर एक एव सर्वशास्त्रसिद्धः कथमुभयोरीशत्वं वदतो व्याघातादिति चेत्सैवं शब्दार्थयोरिव नाममात्रं तयोर्भेदसहिष्णुत्वेऽपि परमार्थतोऽभेद एवेत्याशयेनाह परस्परात्मानाविति । परस्परनतिप्रियाविति । भक्तकृतैकतरस्य नमस्कारेणोभौ प्रीतौ भवतः परस्परतादात्म्यादित्यर्थः ॥

व्याख्याक्रमं प्रतिजानीते सम्प्रदायानुरोधेनेति । गुरुपरम्परागतसदुपदेशः सम्प्रदाय इति भरतः । अनुरोधो अनुवर्त्तनम् इत्यमरः । तथाच गुरुपरम्परागतसदुपदेशानुवर्त्तनेनेत्यर्थः । न चाहमेव केवलं गुरुपरम्परागतसदुपदेशानुवर्त्तने व्रतोऽस्मि किन्त्वेवं बहव एव वृता इत्यत आह पौर्वापर्य्यानुसारत इति । किञ्चात्र सम्प्रदायविदः—सम्प्रदायोऽत्र ब्रह्मादिपरम्परागताद्वैतरूपः तदनुवर्त्तनेऽपि पौर्वापर्य्यानुसरणमावश्यकम् अन्यथाकृष्णस्तु भगवान् स्वयमित्यादि ( १ स्कं ३ अं २८ श्लो ) पूर्वापरवाक्यानालोचनेन अथाहमंशभागेन ( १० स्कं २ अं ९ श्लो ) इत्यादावंशावतारत्वादिव्याख्यानं स्यात् । यद्वा यथा भगवता ब्रह्मणा नारदं प्रति—यथा हरौ भगवति नृणां भक्तिर्भविष्यति । सर्वात्मन्यखिलाधारे इति सङ्कल्प्य वर्णयेति ( २ स्कं ७ अं ५२ श्लो ) हरिलीलाप्राधान्येन श्रीभागवतं वर्णय न तु भक्तिरसविधानेन केवलं तत्त्वमित्युपदिष्टं तथेति ॥

दीपनी ।

अन्यमहिमप्रदर्शनाय तद्व्याख्याने स्वायोग्यतामाह कारुमिति ॥

तत्र भगवत्कृपया सर्वं भवतीति सूचयन् पुनस्तमभिवन्दति मूकमिति । मूकं सामान्यतो वाक्शक्तिहीनं मुग्धमिति वा । पङ्गुं सामान्यतो गतिशक्तिशून्यं अरुणमिति वा । गिरिं पर्वतं सुमेरुमिति वा ।

अथैतत् पुराणं रूपकालङ्कारेण स्कन्धाध्यायादिसंख्यां सूचयन् स्तौति श्रीमदिति । श्रीमद्भागवताभिधः सुरतरुः कल्पवृक्षः सर्वोपरि सर्वशास्त्रोपरि वर्वर्ति अतिशयेन वर्त्तते । कथम्भूतः तारांकुरः । तारः प्रणवः स एव अंकुरः प्ररोहो यस्य सः । सज्जनिः सतः नारायणात् जनिरुत्पत्तिर्यस्य सः । किञ्च द्वादशभिः स्कन्धैः स्थूलशाखाभिः ततः विस्तृतः । प्रविलसन्ती उद्रिक्ता या भक्तिः सा एव आलवालः तस्मिन्नेव उदयो यस्य स इत्यर्थः । आलवालश्च तरुमूले जलरक्षणाय मृदादिरचितपरिधिविशेषः । पुनस्तस्यैवार्थतो विशेषणमाह द्वात्रिंशत्त्रिशतञ्च यस्य विलसच्छाखा इति । वर्त्तन्ते इति शेषः । तथाहि—द्वाभ्यामधिका त्रिंशत् द्वात्रिंशत् शतञ्च शतञ्च शतञ्च शतानि द्वात्रिंशच्च त्रयश्च शतानि च तेषां समाहारः द्वात्रिंशत्त्रिशतम् । एवं सति पञ्चत्रिंशदधिकशतत्रयाध्यायाः ( ३३५ ) भवन्तीति महामहोपाध्यायगोपालभट्टाचार्य्यकृतव्याख्यालेशाख्यटिप्पनी तत्रादौ द्वात्रिंशदित्यत्र शाकपार्थिवादयश्चेति समासः । तन्त्र शतमित्यत्रैकशेषात् शतानीति । ततो द्वात्रिंशच्च त्रयश्च शतानि चेति समाहारद्वन्द्वेनैकत्वमिति ज्ञेयम् । कञ्च—द्वात्रिंशच्च त्रयश्च शतानि चेति त्रिपदद्वन्द्वः कपिञ्जलानालभेतेत्यत्रेवानिर्द्धारितविशेषं बहुत्वं त्रित्वे पर्य्यवस्यति । तेन पञ्चत्रिंशदधिकशतत्रयसंख्यकाः शाखाः इत्यर्थः । समाहारोत्तरद्वन्द्वे तु त्रिशतीति स्यादिति वत्साहरणलीलारम्भे प्रपञ्चितम् । एतेनाघासुरवधादाध्यायाभावाभिप्रायं द्वात्रिंशत्पदमिति केनचिदुत्प्रेक्षितं प्रत्युक्तमिति भागवतटीकायां धर्मसिद्धान्तनिबन्धकारः श्रीकाशीनाथोपाध्यायः । अपि च—द्वात्रिंशदिति शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम् ( पां २, १, ६०, ) इति वार्त्तिकेन मध्यमपदलोपि तत्पुरुषसमासं कृत्वा द्वाभ्यामधिका त्रिंशदिति विग्रहे साधनीयम् । तच्च पृथक् पदम् । ततः शतमित्यत्रैकशेषात् शतानीति । ततः त्रयश्च शतानि चेति बहुप्रकृतिकद्वन्द्वे बहुप्रकृतिरेव द्वन्द्व एकवदित्यनुशासनादेकत्वं तथाच त्रिशतमित्युत्तरं च शब्दस्यापि सार्थक्यम् । अथवा शतानीत्यत्र कपिञ्जलालम्भनन्यायेन अनिर्णीतबहुत्वस्यानवस्थाभिया त्रित्वमात्रे पर्य्यवसानात् त्रिशतमेव ज्ञेयमिति नव्यसूरयः । केचित्तु द्वात्रिंशत्त्रिशतमिति पदान्तर्गतशतशब्दस्य त्रित्वपर्य्यवसायित्वस्वीकारभीरवो दशमस्कन्धस्याघासुरवधादि द्वादशाध्यायत्रयाणामभागवतत्वं मन्यन्ते । अहो किमेषां मनोराज्यविजृम्भकाणां कूपमण्डूकानां साहसः । तैः किं ऋग्वेदीयमन्त्रभागवतस्तथा बोपदेवीयमुक्ताफलहरिलीलादिग्रन्थोऽपि नादर्शि । पश्यन्तु तावत् ऋग्वेदीयमन्त्रभागवतस्य वृन्दावनकाण्डीय द्वितीयसर्गे हि कृण्वति वसुपत्नी वसूनामित्यारभ्य यस्मिन् वृक्षे मध्वदः सुपर्णानीनि ( १०. ११, १२, १३, १४, ) मन्त्रान् तदीय नीलकण्ठकृतटीकाञ्च किञ्च बोपदेवीयमुक्ताफले विष्णुभक्तानामद्भुतरसकथने दशमाद्यङ्के तदस्तु मे नाथ स भूरिभाग इत्यादिना गृहीतान् दशमस्कन्धीय चतुर्दशाध्यायस्य त्रिंशत्तमश्लोकावधि चतुस्त्रिंशत्तमश्लोकपर्य्यन्तान् तदीय कैवल्यदीपिकाख्यटीकाञ्च तथा तदीयहरिलीलाग्रन्थे दशमस्कन्धवर्णनप्रसङ्गे बकश्च वत्सवकयोस्तथाघासुरभोगिनः । वत्सचौरब्रह्ममोहो ब्रह्मणा स्तवनं हरेरित्येकादशश्लोकम् मधुसूदनसरस्वतीकृततट्टीकाञ्च । वस्तुतस्तु तेषां मते द्वात्रिंशत्त्रिशतमिति पदान्तर्गतत्रिशतपदमेव न सिद्ध्येत् शतत्रयबोधनाय समाहारद्वन्द्वातिरिक्तान्यसमासाप्राप्त्या तत्साधनस्य शशशृङ्गायमाणत्वात् अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्ट(पां २, ४, १७,) इत्यनुशासनेन समाहारद्विगौ द्विगोश्च (पां२, १, २३, ) इति ङीपो दुर्वारत्वेन त्रिलोकी पञ्चशूलीतिवत् त्रिशतीति प्रयोगापत्तेः । किञ्चात्र बहुतरप्राचीनपुस्तकसम्मत द्वादशस्कन्धीय द्वादशाध्यायीकेनाघासुरवधो धात्रेत्यादिलीलानुवादकेनाष्टाविंशतितमश्लोकेनापि तल्लीलानुवादो दृश्यते । परमहंसप्रियादि प्राचीनटीकाकाराणां सम्मतिरपि दरीदृश्यते । श्रीश्रीधरयतीन्द्रोऽपि दशमस्कन्धीयप्रथमाध्याये स्कन्धानुक्रमणिकाकथने कृता नवतिरध्याया इति एवं नवतिरध्याया इत्यनेन च दशमस्कन्धस्य पुनःपुनर्नवत्यध्यायान्वितत्वमुक्त्वा प्रोक्ताध्यायत्रयस्यापि व्याख्यानमङ्गीकरदिति । तथाच व्याख्यालेशाद्युक्तिरेव समीचीनेति सर्वं चतुरस्रम् । पुनरर्थतो विशेषमाह सहस्राणीति । अष्टदश च सहस्राणीति पृथक्पदे नान्वयः । समासे अष्टादशेति स्यात् । अष्टदश सहस्राणि अलं भूषणस्वरूपाणि पर्णानि श्लोकस्थानीयानि यस्य भवन्तीत्यध्याहारः । अत्र तु सुविख्यातमहाभारतादि टीकाकारमहामहोपाध्याय नीलकण्ठादि बहुप्राचीनसूरिसम्मतः काशीकाश्मीरादि सर्वदेशप्रचलितवेदव्यासाभिप्रेताष्टादशसहस्रश्लोकसंख्याक्रमोऽयं प्रत्येकम् उवाचान्त एकैकश्लोकः आर्य्यादि नानाविधच्छन्दसां गद्यानां पुष्पिकाणाञ्च द्वात्रिंशदक्षरगणनया ये अनुष्टुप्श्लोका भवन्ति ते प्रसिद्धानुष्टुप्श्लोकाश्चेति । काशीनाथोपाध्यायेन चण्डीसप्तशतीपाठक्रमेणापि अष्टादशसहस्रसंख्याः परिगणिता इति तद् व्याख्याने स्पष्टम् । पुनश्च कथम्भूतः इष्टदोऽति सुलभश्चेति ।

एवं मङ्गलाचरणादिकं कृत्वैतत्पुराणकथने व्यासस्य प्रवृत्तेः कारणमाह अथेति । नारदोपदेशतः एतत्स्कन्धीय पञ्चमाध्यायोक्तप्रकारेण नारदोपदेशादित्यर्थः । परमित्यस्यार्थः परमेश्वरमिति स्वरूपतटस्थलक्षणाभ्यां तस्यैव बोधितत्वात् । तथाच श्रुतिः—तमीश्वराणां परमं महेश्वरं तं देवतानां परमञ्च दैवतम् । पतिं पतीनां परमं परस्तात् विदाम देवं भुवनेशमीड्यमिति ( श्वेताश्वतरोपनिषदि ६ अं ७ मं ) । ध्यायतेर्लिङि छान्दसमिति । अत्रोपाध्यायः—लिङि विधिलिङि । छान्दसमिति । ध्यै चिन्तायामित्यस्मात् व्यत्ययो बहुलमिति सूत्रेण परस्मैपदव्यत्ययादात्मनेपदं छन्दस्युभयथेत्युभयसंज्ञायां सार्वधातुकत्वात् सीयुटः सकारलोपः आर्द्धधातुकत्वाच्छपभावः बाहुलकात् ध्यायतेः सम्प्रसारणं हल इति दीर्घः इत्येवं वैदिकप्रक्रियास्थसूत्रैः साधनीयमिति । बहुवचनं शिष्याभिप्रायकमिति । इह खलु कर्त्तुः सविशेषणत्वाभावाद् बहुवचनमात्मनि सम्यगेव अस्मदो द्वयोश्च ( पां १, २, ५९ ) इति पक्षे तद्विधानात् । तथाच श्रीधरस्वामिनां क्लिष्टकल्पनं निरर्थकमिति न शङ्कनीयम् । यतोऽस्मदो द्वयोश्चेति सूत्रम् अविशेषणास्मच्छब्दोत्तर बहुवचनप्रत्ययस्यैकवार्थे लक्षणाग्राहकम् । यद्यविशेषणास्मच्छब्दोत्तरबहुवचनस्य शक्तिप्रतिपाद्यरूपार्थप्रयोगनिर्वाहसम्भवः स्यात् तर्हि लक्षणाप्रयोगोऽनुचितः सति वाच्यार्थसम्भवे लक्षणाग्रहणस्य शास्त्रानभिमतत्वात् । किञ्च अविशेषणस्यास्मद एकत्वरूपवाच्यार्थेऽपि बहुवचनं विहितं तदौपचारिकमिति शाब्दिकशिरोमणिगोपीचन्द्रसम्मतम् । एवञ्च सति बहुत्वरूपवाच्यार्थसम्भवस्थले औपचारिकबहुवचनस्याग्राह्यत्वं

## दीपनी ।

स्पष्टमेव तस्य चारोपितरूपत्वादिति । अतएव धीमहीत्यत्र बहुवचनं शिष्याभिप्रायकमिति श्रीधरस्वामिलिखनं बहुत्वरूपसंख्यार्थसूचकमितिसुसमीचीनमिति दिक् । तथाहि—धीमहि ध्यायेम समस्तजीवाभिप्रायेण बहुत्वमिति भागवतव्याख्यालेशाख्यटिप्पन्यामाद्यश्लोके गायत्र्यर्थव्याख्याने सुविख्यातमहामहोपाध्यायगोपालभट्टाचार्य्यः । धीमहीति बहुवचनं कालदेशपरम्परास्थितस्य सर्वस्यापि तत्कर्तव्यताभिप्रायेणानन्तकोटिब्रह्माण्डान्तर्यामिणां पुरुषांशिनो भगवत्येव ध्यानस्याभिधानादिति श्रीमद्भागवतसन्दर्भस्य तृतीयसन्दर्भे विख्यातनामा द्वैतवादाचार्य्यः श्रीजीवगोस्वामी । धीमहि ध्यायेम बहुवचनेन कालदेशपरम्पराप्राप्तान् सर्वानेव जीवान् स्वान्तरीकृत्य स्वशिक्षया तान् ध्यातमुपादिशन्नेव क्रोडीकरोतीति सारार्थदर्शिन्याख्यभागवतटीकायां विश्वनाथचक्रवर्त्ती चेति ॥ स्वरूपतटस्थलक्षणाभ्यामिति । तदुक्तं—स्वरूपं तटस्थं द्विधा लक्षणं स्यात् स्वरूपे प्रवेशात् स्वरूपेऽनिवेशात् । स्वरूपस्य सिद्धिर्द्विधा लक्षणाभ्यां यथा काकवन्तो गृहाः खं विलञ्च इति । स्वसम्पत्तिसमर्पकत्वे सतीतरव्यावर्त्तकत्वं स्वरूपत्वम् । यद्वा यत् स्वरूपान्तर्गतं सत् इतरव्यावृत्ततया लक्ष्यं वोधयति तत् स्वरूपलक्षणं तथा गोः सास्नाश्रृङ्गादि । स्वरूपाप्रविष्टत्वे सति विशेषणान्तरं संसूच्य इतरव्यावर्त्तकत्वं तटस्थत्वम् । यद्वा यावल्लक्ष्यकालमनवस्थितत्वेन स्वरूपानन्तर्गतं सत् यल्लक्ष्यं इतरव्यावृत्तं बोधयति तत्तटस्थलक्षणं यथा गोविशेषस्य अलङ्कारविशेषादि देवदत्तगृहस्थकाकादि वा । प्रकृते सत्यं ज्ञानमानन्दञ्च परमेश्वरस्वरूपमेव सत् असज्जड्दुःखप्रपञ्चव्यावृत्ततया बोधयतीति स्वरूपलक्षणं सम्पद्यते । जगज्जन्मादिकारणत्वं तु तटस्थलक्षणं न हि तत् सर्वदास्ति प्रलयादिकाले तदभावात् । अतः स्वरूपानन्तर्गतं सदाकाशादिव्यावृत्तमीश्वरं लक्षयतीति तटस्थलक्षणमिति । तत्र स्वरूपलक्षणस्य मुख्यत्वात् आवृत्तिक्रममुल्लङ्घ्य प्रथमं व्याख्यायते तत्र स्वरूपलक्षणमिति । सत्यपद ज्ञानानन्दयोरुपलक्षणम् । यत्र यस्मिन्नधिष्ठाने इत्यर्थः । भूतेन्द्रियेति । तम सर्गः आकाशादिभूतपञ्चकं रजःसर्गः कर्मेन्द्रियपञ्चकं प्राणपञ्चकञ्च सत्त्वसर्गः ज्ञानेन्द्रियपञ्चकं प्राणपञ्चकञ्च सत्त्वसर्गः ज्ञानेन्द्रियपञ्चकम् अन्तःकरणचतुष्टयं तत्तदिन्द्रियाद्यधिष्ठातृदेवताश्चेति विभागः । उपाधिसम्बन्धमिति आधाराधेयभावम् । तथा सति द्वैतप्रसङ्गः स्यादिति भावः । स्वेनेति । स्वेनैव स्वस्वरूपेणैवेत्यर्थः । धाम्नेत्यस्यार्थः महसेति । महसा तेजसा चिद्रूपेणेति यावत् । कं ब्रह्मसुखं पटते आच्छादयतीति कपटम् अज्ञानमित्यर्थः । माययैव भेदो भवति सा च माया अखण्डचिद्रूपे एतस्मिन् वस्तुतो नास्त्येव कुत उपाधिप्रसङ्ग इति भावः । लक्षणान्तरं प्रतिजानीते तटस्थेति । तत्र जन्मादीति जन्म उत्पत्तिरादिर्यस्येति तद्गुणसंविज्ञानो बहुव्रीहिः । जन्मस्थितिभङ्ग समाहारः समासार्थः समाहारे नपुंसकत्वैकत्वयोः सत्त्वात् । जन्मादीति नपुंसकैकवचनम् । यत इति पञ्चम्यर्थे तसिनिमित्तोपादानोभयपरः । यस्मात् परमेश्वरात् कर्त्तुरुपादानाच्च भवतीत्यर्थः । यत इत्यव्ययनिर्देशेन कारणस्याविकृतत्वं ध्वन्यते । तत्र परमेश्वरस्योभयविधकारणत्वे हेतुः अन्वयादिति । यत्सत्त्वे यत्सत्त्वमन्वयः यदभावे यदभावो व्यतिरेकः यथा मृदः कुलालस्य वा सत्त्वे घटोत्पत्तिसत्त्वं तदभावे तदभावाधिकरणे तन्त्वादौ घटोत्पत्त्यभाव इत्यन्वयव्यतिरेकौ प्रत्यक्षौ मृदादेः कारणत्वे घटादेः कार्य्यत्वे च मानम् । तथा यत्र यत्र सद्रूपेण परमेश्वरस्य सत्त्वं घटः सन् इति प्रत्यक्षतो दृश्यते तत्र कार्य्यत्वं यत्र खपुष्पादौ तदभावः खपुष्पं सत् खपुष्पमस्तीत्यनुभवाभावात् तत्र कार्य्यत्वस्याभाव इति अन्वयव्यतिरेकाभ्यां ईश्वरस्य कारणत्वं जगतः कार्य्यत्वञ्च बोधयते इत्यर्थः । अत्रार्थपदेन कार्य्यार्थकेन अन्वयग्रहाधिकरणमुपात्तं व्यतिरेकग्रहाधिकरणं खपुष्पादिकन्तु व्यतिरेकार्थकादितरपदादाक्षेपलब्धमिति बोध्यम् । ननु मृदादिव्यतिरेकग्रहाधिकरणं तन्त्वादि भावरूप प्रसिद्धं खपुष्पादिकं त्वलीकमनुपाख्यं तस्य कथं व्यतिरेकग्रहाधिकरणता इत्यपरितोषादाह यद्वेति । अन्वयादिपदस्य यत्सत्त्वे इत्यादिरर्थः पारिभाषिकः तं विहाय अवयवार्थयोगी यौगिकोऽर्थः परिगृह्यत इत्यर्थः । अनुवृत्तिस्तादात्म्येन प्रतीतिः । व्यावृत्तिर्भेदः । अर्थेषु कार्य्यकरणेषु कारणस्यानुवर्त्तमानत्वे कार्य्यस्य व्यावृत्तत्वञ्च दृश्यते तेन यदनुवर्त्तमानम् तत् कारणं यद्व्यावृत्तं तत् कार्य्यमिति निश्चेतव्यम् । सुवर्णादि कारणं हि कारणावस्थायाम् अनुवर्त्तते इदं सुवर्णकुण्डलं सुवर्णकटकं सुवर्णमिति तादात्म्येन प्रतीयमानत्वात् । कटककुण्डलादि कार्य्यन्तु परस्परं कारणावस्थायाञ्च नानुवर्त्तते कुण्डले सुवर्णपिण्डे च कटकादितादात्म्यप्रतीत्यभावात् । अतः कुण्डलं कटकं न सुवर्णपिण्डः कटकं नेत्येवं भेदेन प्रतीयमानत्वात् व्यावृत्तत्वं कार्य्यस्य । एवं घटः सन् पटः सन् इति विश्वकार्य्ये सद्रूपं ब्रह्मानुवर्त्तते । घटादिकार्य्यन्तु पटादौ कार्य्ये सृष्टयग्रे कारणावस्थायाञ्च नानुवर्त्तते सृष्टिप्राक्कालिकं ब्रह्म घटो न घटः पटो नेत्यादि भेदप्रतीतेः । अतो व्यावृत्तत्वात् विश्वं कार्य्यं सद्रूपं ब्रह्म कारणमिति भावः । ननु सिद्धान्ते निमित्तोपादानत्वोभयविधकारणत्वं परमेश्वरस्येष्टम् । अनुवृत्तिश्चोपादानस्यैव मृदादेर्घटादौ दृश्यते न तु निमित्तस्य कर्त्तुः कुलालादेः अतोऽनुवृत्तिव्यावृत्तिहेतुना कार्य्यकारणभावसाधने परमेश्वरस्योपादानत्वमेव सिद्ध्यत् न तु कर्तृत्वमपि किञ्च पूर्वमीमांसकैः सृष्टिप्रलयानभ्युपगमात् जगतो जन्मादेरप्रसिद्धौ जन्मादिकारणत्वं कथं तटस्थलक्षणं स्यादित्याशङ्कायामाह यद्वा सावयवत्वादन्वयेति । अत्रान्वयेतरपदाभ्याम् अन्वयव्याप्तिः व्यतिरेकव्याप्तिश्च गृह्यते । तेनार्थेष्विति बहुवचनव्यञ्जितवस्तुपरिच्छेदसहचारितसावयवत्वादिहेतोरध्याहारः सूच्यते । तथा च अर्थेषु घटपटादिकार्य्येषु आत्मनि च गृहीतान्वयव्यतिरेकव्याप्तिकस्य सावयवत्वादिहेतोरस्येतिपदवाच्यजगति पक्षे परामर्शादिकारणसामग्रीबलाद् यज्जन्मादि निश्चितं तद्यतो भवति तं धीमहीत्यन्वयः । तत्र हेतुपुरःसरा व्याप्तिः अन्वयव्याप्तिः साध्याभावपुरःसरा व्याप्तिर्व्यतिरेकव्याप्तिः । तथा च प्रयोगः—इदं विश्वं जन्मादिमत् सावयवत्वात् । यत्र यत्र सावयवत्वं घटपटादौ तत्र जन्मादिमत्त्वम् । यत्र जन्मादिमत्त्वाभावः आत्मनि तत्र सावयवत्वाभावः । तथा पृथिव्यादिजगतोऽपि सावयवत्वाज्जन्मादिमत्त्वसिद्धिः । एवं परिच्छिन्नत्वदृश्यत्वादिहेतुस्तस्य व्याप्तिपक्षतादिकं बोध्यम् । एवञ्च अन्वयव्यतिरेकव्याप्तिवदनुमानेन जगति जन्मादिकं प्रसाध्य तत्कारणत्वम् उभयविधं परमेश्वरस्य श्रुत्यैव साधनीयमित्यभिप्रायः । तदाह तथा च श्रुतिरिति । यतो वा इमानीति तैत्तिरीया श्रुतिः ( चरमवल्ल्यां १ अनुवाकस्य ) । अन्वयव्याप्तिकमेव अनुमानं न व्यतिरेकव्याप्तिकम् इति वेदान्तिमते व्यतिरेकपदेन अर्थापत्तिर्ग्रहा तथा च सावयवत्वाद्यन्यथाऽनुपपत्त्या यज्जन्मादि सिद्ध्यति तद्यत इत्यर्थः । यतो निमित्तोपादानरूपात् परमेश्वरात् भूतानि आकाशादीनि स्थूलशरीरान्तानि जायन्ते जातानि सन्ति येन जीवन्ति पोषणपालनादिकं लभन्ते प्रयन्ति नश्यन्ति सन्ति यदभिसंविशन्ति यस्मिंस्तादात्म्येन प्रविशन्ति तद् ब्रह्मेति ( तैत्तिरीयोपनिषदि आद्यवल्ल्यां ६ अनुवाकस्य ६ श्रुत्येकदेशः ) तदात्मानं स्वयमकुरुत ( उक्तश्रुत्यर्थः । आदिपदेन सच्च त्यच्चाभवदिति

दीपनी।

वल्ल्यां ७ अनुवाकस्य अत्राश्रुत्येकदेशः ) इत्यादिश्रुत्यन्तरसंग्रह इति । तत्र स्मृतिमप्युदाहरति स्मृतिश्चेति । तामाह यतः सर्वाणीति ( महाभारतानुशासनिकपर्वणि दानधर्मोत्तरे विष्णुसहस्रनामप्रकरणे १३ वचनम् ) ॥ ननु नेयं श्रुतिरीश्वरस्य जगदुपादानत्वादिपरा चेत-नद्रव्योपादानत्वादर्शनात् घटादिकार्ये हि मृदाद्यचेतनोपादानकं दृश्यते तेन योऽहजडदुःखात्मकजगत्तत्सदृशं त्रिगुणं प्रधानमेव उपा-दानं युक्तं पुरुषसन्निधानमात्रेण प्रधानं स्वयमेव जगदाकारेण परिणमति न तत्र कर्तुरीश्वरस्यापेक्षा तस्मात् यतः प्रधानात् भूतानि जायन्ते प्रधानमेवात्मानं जगदाकारेण कुरुते इत्येवं श्रुतिभिरपि प्रधानमेव । जगत्कारणत्वेन प्रतिपाद्यत इति शङ्कते तर्हीति । प्रधानं त्रिगुणात्म-कम् अव्यक्तमित्यर्थः सिद्धान्तमाह नेति । अभिज्ञं सर्वज्ञ इत्यर्थः । प्रमाणमाह स ईक्षत इति ( ऐतरेयोपनिषदि १ खण्डे १ ब्राह्मणम् ) । स सर्वज्ञः स्वाभाव्यादत्मा एक सन् ईक्षत ऐक्षत आलोचितवानिति यावत् । ननु प्रागुत्पत्तेरकार्यकारणत्वात् कथमीक्षितवानिति नाशङ्कनीयं सर्वज्ञेन स्वाभाव्यात् । तथा च श्रुतिः "अपाणिपादो जवनो ग्रहीता"इत्यादि ( श्वेताश्वतरोपनिषदि ३ अ० १९ मन्त्र ) । केनाभि-प्रायेणेत्याह लोकान् अम्भ प्रभृतीन् प्राणिकर्मफलोपभोगस्थानभूतान् नु सृजा सृजेमेत्यर्थः । स इमानीति ( ऐतरेये १ खण्डे २ ब्राह्म-णम् ) । एवमालोच्य स इमान् लोकान् असृजत इत्यर्थः । जगत्कारणस्य ईक्षणश्रवणाज्जडस्य प्रधानस्य ईक्षणासम्भवात् श्रुतिसिद्धे-तनमेव जगत्कारणं प्रतिपाद्यते न प्रधानम् । जडमेव द्रव्योपादानमित्यादिनियम आरम्भवादे इष्टो न तु विवर्तवादे रज्ज्वादौ सर्पा-दिभ्रमे जडरज्ज्वादेरपि : सर्पादिचिदनन्योपादानत्वादिदर्शनात् नातिविलक्षणत्वादि ( शारीरके २ अ० १ पा० ) सूत्रेऽयेथा सतः पुरुषात् केशलोमानि तथाऽक्षरात् सम्भवतीह विश्व"मित्यादिश्रुत्या च जगद्विलक्षणस्यैव ईश्वरस्योपादानत्वसम्भवोक्तेश्चेति भावः । विस्तरोऽत्राकरे द्रष्टव्यः । न्यायः श्रुत्यर्थनिर्णायकसूत्रसमुदायः । "ईक्षतेर्नाशब्द"मिति शारीरकमीमांसायाम् आदितः पञ्चमाधिकरणे सिद्धान्तसूत्रम् अस्यार्थः—न साङ्ख्याभिमतं प्रधानं जगत्कारणमिति प्रतिज्ञा । तत्र अशब्दमिति हेतुगर्भं विशेषणम् अशब्दत्वात् वेदशब्दाप्रतिपाद्यत्वा-दित्यर्थः कुतो वेदशब्दाप्रतिपाद्यत्वम् इति शङ्कायामाह ईक्षतेरिति । स ईक्षतेत्यादिश्रुतिषु जगत्कारणस्येक्षणश्रवणादीक्षणस्य जडे प्रधाने न सम्भवतीति वेदशब्दाप्रतिपाद्यम् अतो न कारणमिति न्यायोक्तिः ईक्षणश्रुतिरपि कथञ्चित् प्रधाने योज्यतेत्यादिशङ्कानिकरनिरासाय । नन्वी-श्वरस्य कर्तृत्वादिकं वैषम्यादिदोषाप्रसङ्गार्थं जीवकर्मापेक्षं वाच्यं जीवश्च धर्मादिकर्मणां कर्ता उपादानश्चेति कर्मद्वारेश्वरस्य सृष्ट्यादिप्रयोज-कत्वेन जगदुभयविधकारणत्वं पर्यवसति लोके जयकर्तृयोधप्रयोजके जेतृव्यवहारदर्शनात् । तथा च जीवो ध्येयः स्यादिति शङ्कते तर्हि किं जीव इति । समाधत्ते नेत्याहेत्यादि । अविद्यावृतज्ञानस्य जीवस्य ध्याने फलाभावात् स्वतःसिद्धज्ञानस्वरूपं धीमहीति भावः । ननु समष्टिजीवस्य हिरण्यगर्भस्य अनावृतज्ञानैश्वर्यश्रुतेः स ध्येयोऽस्त्विति शङ्कते तर्हि किमिति । अग्रे व्यष्टिजीवोपाधिकभौतिकसृष्टेः पूर्वं हिरण्यगर्भः समवर्त-तग्रे भूतस्य जातः पतिरेक आसीदिति श्रुत्यर्थः । अत्रैश्वर्यस्याप्यन्यतः प्राप्त्यश्रवणात् तज्ज्ञानस्य ज्ञानस्यापि तथात्वा-वगतेरनावृतत्वमिति भावः । समाधत्ते नेत्याहेत्यादि । आदिकवये ब्रह्मण इति । तत्र नानाविधस्तोत्रैस्तुष्टस्तस्मै वेदं प्रकाशितवान् इति व्यञ्जयितुं कविपदं तत्स्तोत्राणां निर्देशत्वाय आदाविति । य इति । यः परमेश्वरः पूर्वं महाकल्पादौ ब्रह्माणं विदधाति उत्पादयति दैनन्दि-नकल्पादौ सुप्तं प्रबोधयति यश्च तस्मै ब्रह्मणे वेदान् प्रहिणोति ददाति तद्बुद्धौ प्रकाशयतीत्यर्थः उभयत्र भूतार्थे लट् । "तं देवम् आत्म-बुद्धिप्रकाशं देहान्ते देवः परं ब्रह्म तारकं व्याचष्ट" इति ( नृसिंहतापनीय ) श्रुतेः आत्मज्ञानप्रदम् । यद्वा अहं ब्रह्मास्मीत्यादिमहावाक्यो-त्थधीवृत्तित्वेन ब्रह्माकारबुद्धौ स्वप्रकाशतया प्रकाशत इति तं ह प्रसिद्धं मुमुक्षुर्मोक्षमिच्छुरहं वै निश्चितं शरणं प्रपद्ये तदेकशरणो भवामीत्यर्थः । भगवच्छरणत्वविशेषः—तवैवाहं ममैवासौ स एवाहमिति त्रिधा । भगवच्छरणत्वं स्यात् साधनाभ्यासपाकतः ॥ इति वचनैर्भगवद्गीताटीकायां सर्वधर्मान् परित्यज्येत्यत्र ( गीता १८ अ० ६६ श्लो० ) भक्तिरसायनाख्यग्रन्थादौ च पूज्यपादमधुसूदनसरस्वतीपा-दैरुक्तः । तत्राद्यस्य मृदुत्वं द्वितीयस्य मध्यत्वं तृतीयस्याधिमात्रत्वमुक्त्वा अम्बरीषगोपीप्रह्लादप्रभृतयस्तत्र तत्र भूमिकायामुदाहृतास्त्या-इति वर्णितश्चेति चिन्त्यम् । मनसैवेति । मनस्येव प्रकाशितवान् सप्तम्यर्थे तृतीया । मनसि यथा वेदस्फूर्तिः स्यात्तथा मनोवृत्तिं प्रवर्त-यामास इत्यर्थः । अनेन बुद्धिवृत्तिप्रवर्तकत्वेनेति । समष्टिजीवस्य ब्रह्मणो बुद्धिवृत्तिप्रवर्तकत्वेन व्यष्टिभूतानां जीवानामपि तत्प्रवर्तकत्वं बोध्यम् । भगवता ब्रह्मणो हृदि प्रथमं प्रकाशितो वेदस्तन्मुखतः प्रादुर्भूत इत्यर्थं स्पष्टयितुं द्वितीयस्कन्धस्य ( ४ अ० २२ ) श्लोकमाह प्रचोदितेति । पुरा कल्पादौ अजस्य ब्रह्मणो हृदि सृष्टिविषयां स्मृतिं वितन्वता विस्तारयता येन भगवता प्रेरिता सती वेदवाणी सरस्वती तस्य मुखतः किल प्रादुर्भूता । स्वानि शिक्षादियुक्तानि लक्षणानि यस्याः । ऋषीणां ज्ञानप्रदानां श्रेष्ठ इति तदर्थः । पुनश्चोदयति ननु ब्रह्मेति । लोकेऽत्यतिप्रसिद्धोऽर्थोऽपि न्यायपदाभिधः । यथा पूर्वं गुरोराचार्याद्वेदमधीत्य सुप्त्वा परेद्युः प्रबुद्धः गुरुनिरपेक्ष एव वेदं पठति तद्वद्दैनन्दिनकल्पे महाकल्पादौ तु जातिस्मरवददृष्टविशेषात् कल्पान्तरानुष्ठितकर्मोपासनबललब्धब्रह्मत्वाधिकारः कल्पान्तरस्थं वेदं स्मरतीत्यर्थः । तत् परिहरति नेति । यस्मिन् ब्रह्मणि वेदे सूरयोऽधिकारिणो ब्रह्मादयोऽपि मुह्यन्तीत्यर्थः । पूर्वोक्तस्मृतिपुराणबलात् ब्रह्मणः कल्पादौ वेदविषये मोहो निश्चीयते तेन सुप्तप्रबुद्धन्यायस्य जातिस्मरत्वकल्पनस्य च बाध इत्यर्थः । पूर्वपक्षोक्तहिरण्यगर्भश्रुतौ तु श्रुत्यन्तरोक्ता परमेश्वराज्ज्ञानादिप्राप्तिरुपसंहर्तव्येति भावः उक्तश्लोकार्थं निगमयति अतएवेत्यादिना । स्वतःसिद्धज्ञानस्य परमेश्वरस्य प्रातीतिकजगत्कारणत्वेन सत्यत्वं प्रदर्श्य तस्यैव परमार्थसत्यतामाह असत इति । परमात्मा सत्यो भवितुमर्हति असतो जगतः सत्त्व-प्रदत्वात् रज्जुसर्पवदित्यनुमानेन परमात्मनः अनारोपितसत्यत्वं बोद्धव्यमिति ।

गायत्र्या प्रारम्भेण चेति । सवितृगायत्रीमन्त्रैकवाक्यत्वाय धीमहीति पदसंवलितगायत्र्यर्थं न प्रारम्भेणोत्यर्थः । अत्यन्तगुणोपेयाया सर्व-मन्त्रादिरूपाया गायत्र्याः प्रकाश्यतया पठनानर्हत्वादपि गायत्र्यर्थेन प्रारम्भ इति बोध्यम् । जन्माद्यस्येत्यत्र समग्रश्लोकव्याख्यालक्षणा बहुविधव्याख्या सुबोधिन्यादिबहुटीकाकृद्भिः कृता तत्रातिविशदत्वादत्र व्याख्यालेशोऽनुव्याख्येयं परिगृह्यते । जन्माद्यस्य यत इत्यनेन वरेण्यपदस्यार्थः उक्तः । यतः सूते इति सविता अत्र स्थितिप्रलययोरप्युपलक्षणम् । परमित्यनेन वरेण्यपदस्यार्थ उक्तः उभयोरपि सवितुरित्यस्यार्थ उक्तः । यतः सूते इति सविता अत्र स्थितिप्रलययोरप्युपलक्षणम् । परमित्यनेन वरेण्यपदस्यार्थ उक्तः उभयोरपि श्रेष्ठवाचकत्वात् । सत्यमित्यनेन भर्गपदस्यार्थ उक्तः यतो ब्रह्मैव सदन्यदसत्यम् । तत्पदार्थस्तु विशेषणसत्यो न स्वतन्त्रः । यद्वा तत्र श्रेष्ठवाचकत्वात् । सत्यमित्यनेन भर्गपदस्यार्थ उक्तः यतो दीव्यति स्वतः प्रकाशते इति देवः स्वेनात्मनैव राजते इति स्वराट् । प्रकाशोऽस्य भानं तस्य प्रसिद्धं स्वराडित्यनेन देवपदस्यार्थ उक्तः ।

दीपिनी ।

धीवृत्तीनां प्रकाशकत्वात् । यदुक्तं ज्योतिर्वै ज्ञानानि भवन्तीति तेन स्वतःसिद्धज्ञानं स्वप्रकाशः अन्येषान्तु तदधीनप्रकाशः । तेन ब्रह्मेत्यादिपद-
पञ्चकेन धियो यो नः प्रचोदयादिति वाक्यस्यार्थ उक्तः । यो हि ब्रह्मणोऽपि वेदप्रदानेन ज्ञानमन्वादिषु स तु सर्वेषामस्माकं जीवानां
बुद्धिवृत्तीः प्रवर्त्तयति न त्वन्य इति वाक्यार्थः । धीमहीति तुल्यमेव । यद्वा बुद्धिवृत्तिप्रवर्त्तनेन पालनमुक्तं श्रेयः कर्माचरणेन निर्विघ्न-
संसारचक्रप्रवर्त्तनात् विपरीतप्रवर्त्तनेन संहारश्च अतो जन्मस्थितिभङ्गहेतुत्वम् इति तात्पर्य्यार्थः । यद्वा तदित्यव्ययं तं भर्गो भर्ग इति
यावत् प्रथमा सुपां सुलुक् इत्यनेन तं भर्गं परं ब्रह्म धीमहि ध्यायेम । समस्तजीवाभिप्रायेण बहुत्वम् । बिभर्त्ति पुष्णाति पालयतीति
भर्गश्च । भृञो गमादित्वात् गः बाहुल्याद् गुणाश्च । जगदधिष्ठानं पालकञ्चेत्युक्तम् । किञ्च भृज्जति नाशयतीति भर्गः औणादिको गः
निरुक्तौ लोपगुणौ प्रलयकर्त्तारमित्यर्थः । कथं भूतं सवितुः सवितारं जगदुद्भवकारणम् । पूर्ववत् षष्ठी । अनेन जन्माद्यस्य यत इत्य-
स्यार्थ उक्तः । तदित्यस्यार्थः सत्यं परमित्यनेनैवोक्तः यतो ब्रह्मैवाबाधितं सत् अन्यदसत् । जगदधिष्ठानत्वेन प्रलयावधित्वं तत्कर्तृत्व-
ञ्चोक्तम् । कथंभूतं वरेण्यं वृणोति सर्वं व्याप्नोति इति वरेण्यस्तम् । अन्वयादितरतश्चार्थेष्विल्यनेन अयमर्थ उक्तः उपादानतया कार्य्ये-
जातव्यापनात् । व्रियते प्रार्थ्यते चतुर्वर्गान् सर्वैरसौ इति वरेण्यस्तं सर्वस्य दातारं सर्वेश्वरञ्चेत्यर्थः । अतएव तस्यैव ध्यानमुचितम्
एतत् तु परमित्यनेनोक्तम् । एतेन यद्ब्रह्म सृष्टिस्थितिप्रलयकारि जगदधिष्ठानं जगद्व्यापि सर्वेश्वरं तद्ध्यायेमेत्यर्थः । एवमपि निर्लेपत्वमाह
देवस्येति । देवमित्यर्थः । पूर्ववद्विभक्तिव्यत्ययः । दीव्यति द्योतते प्रकाशते देवः । नित्यं स्वप्रकाशत्वेन निरञ्जनः । एतत् तु स्वेनैवेत्यनेन
धाम्ना स्वेन सदा निरस्तकुहकम् इत्यनेन चोक्तम् । किञ्च देवयति असदपि सद्रूपेण प्रकाशयतीति देवः एतत् तु यत्र त्रिसर्गोऽमृषेत्य-
नेनोक्तं मिथ्याभूतस्य मायात्रिगुणसर्गस्य स्वसत्तया तद्वत् प्रतीतिकरणात् । बुद्धिवृत्तिप्रवर्त्तकत्वेन तस्य भक्तिमुक्तिप्रदत्वमाह धिय
इत्यादि व्याख्यातम् । धियो बुद्धिवृत्तीः । प्रचोदयात् प्रवर्त्तयति । एतेन यः सृष्ट्यादिकर्त्ता सर्वेश्वरः सर्वव्यापी बुद्धिप्रवर्त्तकः तं ध्यायेम
सत्कर्मसु नोऽस्मान् प्रवर्त्त्य भक्तिमुक्ती ददातु इति वाक्यार्थः । एतत् सर्वं तेनेत्यादिपदैरुक्तम् । यद्वा राहोः शिर इतिवत् सवितुरित्यत्रा-
भेदेऽपि भेदोपचारः सवितुर्जगत्कारणस्य तत्र तं भर्गः भर्गं तेजःस्वरूपं ब्रह्म धीमहीत्यन्वयः । अन्यत् सर्वं पूर्ववदिति गायत्र्याख्येति ।
गायत्रीमन्त्रेण गायत्रीपदेन वा आख्यायते या ब्रह्मविद्या सा रूप्यते प्रतिपाद्यते येनेति तद्रूपं प्रतिपाद्यप्रतिपादकयोरभेदविवक्षया विद्या-
स्वरूपमेव वा श्रीमद्भागवतमित्यर्थः । यथोक्तमित्यनेन प्रतिज्ञातं मत्स्यपुराणवचनमुदाहरति यत्रेति सार्द्धद्वाभ्याम् । अधिकृत्य आश्रित्य
हेमसिंहसमन्वितं सुवर्णसिंहासनसंयुक्तम् । प्रौष्ठपद्यां भाद्रीयायाम् । पुराणान्तरे चेत्यनेन प्रतिज्ञातं वामनपुराणीयं स्कन्दपुराणीयञ्च
वचनमाह ग्रन्थोऽष्टादशसाहस्र इति सार्द्धेन । हयग्रीवब्रह्मविद्या हयग्रीवेणोक्ता ब्रह्मविद्या षष्ठस्कन्धीयनवमाध्यायप्रसिद्धा इति । पद्म-
पुराणीयपातालखण्डवचनमाह अम्बरीषेति सम्बोधनम् । शुकेन प्रोक्तं शुकप्रोक्तमिति । नन्वेवं सति शुकानुक्तस्य प्रथमस्कन्धस्य द्वादश-
स्कन्धीयषष्ठाध्यायैकदेशावधिसमाप्तिपर्य्यन्तस्य च ग्रन्थस्य भागवतत्वासिद्धमिति वाच्यम् अनागताख्यानेनैव गायत्र्यर्थद्योतकजन्माद्य-
स्येत्यारभ्य विष्णुरातममूमुचदित्यन्तायाः अनादिसिद्धायाः भागवतसंहितायाः व्यासादध्ययनपूर्वकं परीक्षितं प्रति शुकेनोक्तत्वात् । तथाहि-
-यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः । अष्टादशसहस्राणि पुराणं तत् प्रकीर्त्तितम् । ग्रन्थोऽष्टादशसाहस्रो द्वादशस्कन्धसम्मितः ।
गायत्र्या च समारम्भस्तद्वै भागवतं विदुरिति । इदं भागवतं नाम पुराणं ब्रह्मसम्मितम् । उत्तमश्लोकचरितं चकार भगवानृषिः । तदिदं
ग्राहयामास सुतमात्मवतां वरम् । सर्ववेदेतिहासानां सारं सारं समुद्धृतम् । स तु संश्रावयामास महाराजं परीक्षितम् ( १ स्कं ३ अ ४०
४१ । ४२ श्लो ) । स वै मह्यं महाराज भगवान् बादरायणः । इमां भागवतीं प्रीतः संहितां वेदसम्मिताम् ( १२ स्कं ४ अ ४२ श्लो ) इति
च । यद्वा शुकप्रोक्तं शुकाय शुकस्य तृतीये प्रोक्तं कथितं व्यासेनेति शेषः अश्वाय घास इतिवत् । तथाहि—स संहितां भागवतीं कृत्वा-
ऽनुक्रम्य चात्मजम् । शुकमध्यापयामास निवृत्तिनिरतं मुनिः ( १ स्कं ७ अ ८ श्लो ) । अत्रानुक्रम्यशब्देन शोधयित्वेति ज्ञेयम् । न च
संक्षेपेण कृत्वेति वाच्यम् । स वै निवृत्तिनिरतः सर्वत्रोपेक्षको मुनिः । कस्य वा बृहतीमेतामात्मारामः समभ्यसत् ( १ स्कं ७ अ ९ श्लो )
इत्येतेनाक्षिप्तमतिर्भगवान् बादरायणिः । अध्यगान्महदाख्यानमिति ( १ स्कं ७ अ ११ श्लो ) शास्त्रविरोधादिति । पठस्व स्वमुखेनापीति ।
अत्र अपीत्यनेन प्रतिनिधिनाऽपि पाठयस्वेति सूचितम् । अतएव भागवतं नामान्यदित्यपि न शङ्कनीयमिति । अत्रोपाध्यायाः ननु लक्षणा-
मनुक्त्वैव दानश्रवणादिविधानं युक्तं भगवता प्रोक्तं भागवतं भगवत इदं प्रतिपादकं भागवतमिति समाख्ययैव भागवतपदार्थज्ञानसम्भवा-
दित्याशङ्कायामाह अतएवेति । लक्षणोक्तिपूर्वकं दानपाठनादिविधानादेवेत्यर्थः । अयं भावः लक्षणोक्तिं विना भागवतं दद्यादित्यत्र दानादि-
विधाने एवञ्चकार भगवान् व्यक्तः कृपणवत्सलः ( १ स्कं ४ अ २४ श्लो ) इत्युक्त्या भगवद्व्यासप्रणीतत्वेन पुराणमात्रस्य भागवतत्व-
सम्भवात् श्रीविष्णुशिवयोरुभयोरपि भगवत्त्वेन तत्प्रतिपादकविष्णुशिवपुराणादेरपि भागवतत्वसम्भवाच्च न सामञ्जस्येन पदार्थनिर्णय-
तथा च भागवतं नामान्यत् विष्णुपुराणादिकमेव स्यात् लक्षणोक्तौ तु यथोक्तलक्षणलक्षितं शुकपरीक्षितसंवादरूपं द्वादशस्कन्धा-
त्मकं भागवतमिति विशेषनिर्णयेन न शङ्कनीयं शङ्कितुं योग्यं न भवति सर्वत्र लक्षणोक्तेरतिव्याप्त्यादिनिरासार्थायाः सत्त्वात् । इत्यपि
न शङ्कनीयम् इत्यपि ब्रह्मविद्यारूपत्वोक्त्या कर्मविद्यावन्मुमुक्षुभिरसेव्यमित्यपि न शङ्कनीयम् इति बोध्यते । पिबत भागवतं रसमाल-
यमित्यादौ ( १ स्कं ३ श्लो ) मुक्तैरपि सेव्यत्वस्य प्रख्य माहात्म्याश्चेति सद्भिर्विभावनीयम् । तथा च गारुडे—अर्थोऽयं ब्रह्मसूत्राणां भारता-
र्थविनिर्णयः । गायत्रीभाष्यभूतोऽसौ वेदार्थपरिबृंहितः । पुराणानां सामरूपः साक्षाद्भगवतोदितः । ग्रन्थोऽष्टादशसाहस्रः श्रीमद्भागवता-
भिधः इत्यत्रैतस्य ब्रह्मसूत्रार्थत्वात् ब्रह्मविद्यारूपत्वं व्यञ्जितम् । वेदेषु सामवत् पुराणेषु श्रेष्ठत्वात् सामरूपत्वम् । कस्मै येन विभाषितो-
ऽयमित्युपसंहारात् साक्षात् भगवदुक्तत्वम् । अतः साक्षाद्भगवता प्रोक्तं भागवतमिति निरुक्त्या योगरूढोऽयं भागवतशब्दो न केवलं
यौगिक इति न विष्णुपुराणादेर्भागवतत्वमिति । किञ्चात्र परमहंसपरिव्राजकाचार्य्यरामाश्रमयतीन्द्रः— अथ भागवतं नामान्यदित्यपि
न शङ्कनीयमिति श्रीधरस्वामिवचनात् शङ्का भागवतीति गम्यते अन्यथा न शङ्कनीयमिति किमर्थमिति चेत्—उच्यते मीमांसकैर्वैदिका-
दिभिर्वेदस्य प्रामाण्यं साधितमिति प्राग्वेदाप्रामाण्यशङ्का स्थिता इति न स्वीकार्य्यमिति । वस्तुतस्तु श्रीधरस्वामिनां नायमाशयः प्राक्
शङ्का स्थितेति किन्त्वन्य एव । तथाहि—सर्गश्चेति दशलक्षणानि यत्रोक्तानि तद्भागवतमिति स्थिते द्वितीयस्कन्धस्य भागवतत्वमस्तु

श्रीवीरराघवः।

त्वसिद्धिः अथपदानियोज्यन्ते प्रवन्धस्यवेदान्तार्थोपबृंहणरूपतांदर्शयितुंद्योतयतिजन्मादीति यतोवाइमानिभूतानि जायन्तइति वेदान्तार्थ-
प्रत्यभिज्ञानाव शारीरकार्थसंग्रहं चात्रद्योतयति शारीरकद्वितीयसूत्रस्यवादावुपादानात् अत्यर्थप्रत्यभिज्ञानादेवपरंधीमहीत्यत्रब्रह्म-
त्यध्याहारोबोध्यः अस्यविश्वचिन्मयस्यजगतोयतोजन्मादितं सत्यंपरंब्रह्मधीमहीत्यन्वयः कारणात्रूपयदृष्टितिश्रुतेरितिभावः एवमन्येषामपि-
यच्छब्दानांजन्मादीतितद्गुणसंविज्ञानोबहुव्रीहिः जन्मस्थितिलयं अन्यपदार्थः अतएवनपुंसकमेकवचनत्वम् अतद्गुणसंविज्ञानबहुव्री-
हित्वेसृष्टिकारणत्वाऽसिद्धिः तथास्थितिलययोरेवान्यपदार्थत्वेनजन्मादिशब्दस्यद्विवचनान्तत्वेईदूदेद्विवचनमितिप्रगृह्यसंज्ञायांसन्ध्यभाव-
प्रसङ्गः तद्गुणसंविज्ञानबहुव्रीहित्वपक्षेऽपिजन्मादित्रयाणामसमुदितानामन्यपदार्थत्वेजन्मादिशब्दस्यबहुवचनान्तत्वापत्तेः जन्मनःएवान्य
पदार्थत्वं समस्यमानपदार्थत्वं च विरुद्धं जन्मप्रत्येवतस्यादित्वानुपपत्तिश्च अतोजन्मस्थितिलयसमाहारमन्यपदार्थं विवक्षितत्वात्
जन्मादीतितद्गुणसंविज्ञानबहुव्रीहिप्रयुक्तः तस्यान्यगुणपदार्थगुणाविशेषणानिसमस्यमानपदार्थइतियावत् तेषां समीत्येकीकारसंवि-
ज्ञानं विशेष्यभूतान्यपदार्थान्तर्भावेनज्ञानंयस्माद्बहुव्रीहेर्लम्बकर्णोगतइत्यादिः सतद्गुणसंविज्ञानोबहुव्रीहिः तद्विपरीतश्चित्रगुरित्यादिस्त्व-
तद्गुणसंविज्ञानः यतोजन्मादितद्धीमहीत्यनेनजन्मादिकारणत्वं ब्रह्मणोलक्षणं विवक्षितं यतोवाइमानीत्यादिश्रुतौप्रतिवाक्यं तद्ब्रह्मेत्य-
नुक्तेरनेकलक्षणवैयर्थ्याच्च जन्मादिसमुदायएकंलक्षणं नतुजन्मकारणत्वं स्थितिकारणत्वंलयकारणत्वं चेत्यनेकलक्षणम् अत्रसत्यंपरं
ब्रह्मधीमहीत्येतावन्मात्रोक्तौब्रह्मशब्दस्य बृहन्महदादिशब्दपर्यायत्वाभिधानेन प्रकृतिजीवादिपरत्वस्यापिसम्भवात् तेषामेवात्रध्येयत्वंप्रस-
क्तंतद्व्युदासायात्रध्येयस्यब्रह्मणोनिरतिशयबृहत्त्वं स्वरूपगुणबृहत्त्वं तदेवब्रह्मशब्दप्रवृत्तिनिमित्तं प्रकृष्टादिषुब्रह्मशब्दस्त्वौपचारिकश्चेतिव-
क्तुमत्रलक्षणमुच्यते तत्रचैकेनैवसमुदायलक्षणेनध्येयस्यब्रह्मणोनिरतिशयबृहत्त्वलाभात् ततएवप्रकृत्यादिव्युदासान्नानेकलक्षणत्वम् अन्य-
थासृष्टिकारणत्वमात्रान्तरानुकूलज्ञानशक्त्यादिलाभेऽपिस्थित्याद्यनुकूलज्ञानशक्त्याद्यलाभेननिरतिशयबृहत्त्वासिद्धिः नचत्रितयोक्तावपिमो-
चकत्वोपयोगिज्ञानशक्त्याद्यलाभइतिवाच्यं मोक्षस्यस्थितिलयान्यतरान्तर्भूतत्वेनतत्कारणोक्त्यैवतल्लाभात् स्थितिर्नामानिष्टपरिहारपूर्वकेष्ट-
प्रापणरूपमोचकत्वंचतादृशमेव यदिचायंमोक्षआत्यन्तिकनाशरूपइष्टस्तर्हिलयान्तर्भूतः यतइतिहेतौपञ्चमीनतुजनिकर्तुः प्रकृतिरित्यपादान-
संज्ञायांपञ्चमी तथा सति स्थितिलययोरनन्वयः स्यात् जनिकर्तुः प्रकृतिरिति सूत्रेहि प्रकृतिशब्दउपादानकारणवाचीजायमानस्योपादान-
मपादानसंज्ञकमितितत्सूत्रार्थात् अत्रतत्सूत्रविहितापादानसंज्ञानिमित्तपञ्चम्यभ्युपगमेजन्मकारणत्वस्यलक्षणत्वलाभेऽप्यादिशब्दग्राह्यस्थि-
तिलयकारणत्वस्यलक्षणत्वाभावात् तयोरनन्वयः स्फुटएवहेत्वर्थपञ्चम्यान्तुहेतुत्वस्यानिमित्तोपादानसाधारण्यात्तदन्वयउपपन्नः तत्रभा-
व्यवस्थाविशेषवतः प्रागवस्थायोगित्वमुपादानत्वंनिमित्तत्वंनामकर्तृत्वंएवंचात्रजगज्जन्मादिप्रत्युपादानत्वनिमित्तत्वरूपोभयविधकार-
णत्वं ब्रह्मणोलक्षणंविवक्षितं ननुलोकेमृत्कुलालयोर्विभिन्नयोरेवोपादानत्वनिमित्तत्वदर्शनात्कथमेकस्योभयविधकारणत्वमित्यत्राह अन्व-
यादितरतश्चार्थेष्विति अर्थेषुकार्यभूतेषुदेवमनुष्यादिष्वन्वयादनुवृत्तेरुपादानत्वम् इतरतोव्यतिरेकादनन्वयात्प्रकृतिपुरुषाभ्यांविलक्षणत्वेन
तन्नियन्तृतयापृथगेवावस्थानान्निमित्तत्वं चैकस्यैवब्रह्मणउपपन्नमित्यर्थः कुलालस्यासर्वशक्तेर्घटादिषुमृत्कार्येष्वनन्वयान्नोपादानत्वंअचेतना
यामृदस्तुव्यतिरेकाभावान्निमित्तत्वं ब्रह्मणस्तुप्रत्यक्षादिप्रमाणान्तरानवगतस्य केवलवेदान्तैकसमधिगम्यस्य चिदचिद्विलक्षणस्योभयविध
कारणत्वोपयुक्तसार्वज्ञ्यसर्वशक्तियुक्तस्यान्वयव्यतिरेकाभ्यांवेदान्तेभ्योऽवगतत्वादुभयविधकारणत्वोपपत्तिरितिभावः वेदान्तोश्चसर्वंखल्वि
दंब्रह्मऐतदात्म्यमिदं सर्वंअयमात्माब्रह्मतत्त्वमसीत्यादयोऽन्वयप्रतिपादकाः तदैक्षतयःपृथिव्यांतिष्ठन्पृथिव्या अन्तरोयंपृथिवीनवेदयस्यपृथि-
वीशरीरंयःपृथिवीमन्तरोयमयतियआत्मनितिष्ठन्नात्मनोऽन्तरोयमात्मानवेदयस्यात्माशरीरंयआत्मानमन्तरोयमयतीत्याद्याव्यतिरेकप्रतिपा
दकाः यद्वैवंविधानामुभयविधकारणत्वनिर्वाहकान्वयव्यतिरेकप्रतिपादकानामुभयविधकारणत्वप्रतिपादकानांसदेवसोम्येदमग्रआसीदेक
मेवाद्वितीयन्तदैक्षतबहुस्यांप्रजायेयसन्मूलाःसोम्येमाःसर्वाःप्रजाइत्यादीनांचवेदान्तानांब्रह्मणिप्रतिपादकतयाऽन्वयात् अर्थेषुइतरतोऽन्वयात्
प्रकृतिपुरुषादिषूभयविधकारणत्वप्रतिपादकत्वेनान्वयाभावाच्चब्रह्मैवोभयविधकारणमित्यर्थः यथाब्रह्मस्वरूपगुणादिकंशास्त्रैकसमधिगम्य-
न्तदुभयविधकारणत्वंब्रह्मण्येवशास्त्रेभ्योऽवगतन्तुप्रकृत्यादिष्वितिभावः अस्मिन्पक्षेअन्वयादित्यनेनसमन्वयाध्यायप्रथमपादार्थउक्तः इतर-
तइत्यनेनत्रिपाद्यर्थः ब्रह्मकारणमेवब्रह्मैवकारणमित्ययोगान्ययोगव्यवच्छेदेनकारणत्वंहिसमन्वयाध्यायेसमर्थितं पूर्वव्याख्यानेत्वनुवृत्त्यननु-
वृत्तिभ्यामुपादानत्वनिमित्तत्वनिर्वाहकाभ्यान्तदुभयविधकारणत्वेप्रसाधिते अर्थादेवप्रकृत्यादीनामकारणत्वसिद्धेरयोगान्ययोगव्यवच्छेदा-
वर्थादेवसिध्यतः यद्वासमन्वयादुभयविधकारणत्वस्यब्रह्मण्येवसङ्गतेरर्थेषुप्रकृत्यादिषुइतरतोऽसङ्गतेश्चब्रह्मणएवकारणत्वमित्यर्थःएकमेवा-
द्वितीयमित्यनेनहिकृत्स्नस्यजगतएकमेवोभयविधकारणमवगतं तत्रप्रकृत्यादिषूभयविधकारणत्वोपयुक्तसर्वज्ञत्वसर्वशक्तित्वाद्यभावस्यब्रह्म-
णितद्भावस्य च श्रुतिभ्यएवयः सर्वज्ञः सर्ववित् सत्यकामः सत्यसङ्कल्पः परास्यशक्तिर्विविधैवश्रूयते स्वाभाविकीज्ञानबलक्रिया च ज्ञाज्ञौद्वा-
वजावीशानीशौ अजामेकांलोहितशुक्लकृष्णामित्यादिभ्योऽवगमादुभयविधकारणंब्रह्मैवेतिभावः अस्मिन्पक्षेसार्वज्ञ्यसर्वशक्तित्वादिगुणप्र-
तिपादकत्वेनवेदान्तानांब्रह्मण्यन्वयात्तस्मिन्नुभयविधकारणत्वोपपत्तिः तदुपपत्तेश्चजन्मादिकारणत्वस्यलक्षणत्वसिद्धिरवगन्तव्या अस्मि-
न्नपिपक्षेअयोगान्ययोगव्यवच्छेदौशाब्दीयद्वाब्रह्मणोलक्षणेनप्रतिपत्तव्यम् अनुमानेनाप्यवगन्तुंशक्यत्वात् अप्राप्तेहिशास्त्रमर्थवत् शास्त्रैकप्र-
माणकत्वेऽपितस्मिन्प्रवृत्तिनिवृत्त्युभयरहितअपुरुषार्थस्वरूपेणवेदान्तानांबोधकत्वेनान्वयः पुरुषार्थपर्यवसानासम्भवान्नशास्त्रप्रमाणमित्यत
आह अन्वयादितरतश्चार्थेष्वितिअत्रान्वयादित्यनेन समन्वयाधिकरणसिद्धान्तार्थउक्तः शास्त्रयोन्यधिकरणार्थस्त्वर्थादेवविवक्षितः शास्त्रयो-
न्यधिकरणस्यलक्षणाक्षेपपरिहाररूपत्वेनलक्षणकथनेनैव तदाक्षेपपरिहारयोरप्यत्रविवक्षितत्वप्रतीतेः समन्वयाधिकरणन्तुशास्त्रयोन्यधिक
रणाक्षेपपरिहाररूपमिति तदन्वयादित्यनेनप्रदर्शितं अयम्भावः नतावदनुमानगम्यंब्रह्मतस्यासम्भवात् यच्चापिघटादिवत् सावयवत्वादिनाजग-
तः कार्यत्वमनुमीयते कार्यंचतदभिज्ञकर्तृकमित्यनभिज्ञजीवव्यतिरिक्तः कृत्स्नजगन्निर्माणचतुरईश्वरोऽनुमातुंशक्यते तथापिलाघवात्कार्यत्वा
द्विहेतुनाऽनुमीयमानोयः कश्चित्कर्ताजीवएवस्यात् तस्यैवदृष्टत्वात् तनजीवलक्षीलाघवमीश्वरलक्षौगौरवमितिनेश्वरसिद्धिः नतुजीवानामल्प-
ज्ञत्वात्कथं महीमहीधराद्यनेककर्तृकत्वमितिचेन्न सत्त्वाद्विलक्षणपुण्यविशेषोपचितशक्तिविशेषाणांविश्वामित्रादीनामेव तत्सम्भवात् अस्मिन्क-
कस्मिन्नण्डेविश्वामित्रोऽन्यत्रसन्तीतिचेन्न अन्यत्राप्यन्यस्य विद्यमानत्वात् कल्पकल्पे... सर्वज्ञः सर्वेषां... कर्ता...

श्रीविजयध्वजः ।

स्त्वयं प्रेक्षावतां न मृषा क्वचित् ॥ ५ ॥ हिमकरलसद्बिम्बद्योतः सुधारसजित्वरीं स मम सुहृदानन्दतीर्थमहामुनिः । मणि-मणिवरः शोणोल्लीय इवाधिसमुत्थितः शमदमगुणा यस्योल्लसन्ति सन्ततमेधसि ॥ ६ ॥ चरणनलिने दैत्यारातेर्भवार्णवोत्तरसत्तरीम् । दिशतु विशदां भक्तिं मह्यं महेन्द्रतीर्थयतीश्वरः ॥ ७ ॥ क्व शब्दः क्वाभ्यासः श्रुतिरपि गुरोः क्वाप्रसरणीः समीक्षापौराणी क्व खलु विबुधा मत्सरधियः । तथापि व्यामोहाद्गुरुगुरुकटाक्षैः शरणं मनाग्व्याकुर्वेऽहं भागवतपुराणं प्रगहनम् ॥ ८ ॥ आचार्यैरपरैरपि प्रावृतान्मार्गात्त्वनः खेदतां खद्योतस्तपनप्रकाशितपदे किं तत्र कुर्य्यादिति । तन्मार्गानुगमेन वाक्तनुमनः शुद्धिक्रिया ये ततः श्रीमद्भागवतं पुराणमतुलं व्याकर्तुकामोय ते ॥ ९ ॥ तदस्यां पद्यायां झटिति कृतयात्रेमयि कृपां महान्तः कुर्वन्तो दिवि भूविवसन्तः सदयनाः । निरस्तासूया ये परमपदभक्तिक्षितिधरो ब्रह्मग्रीवाविपुलकरुणाः सर्वसुहृदः ॥ १० ॥ आनन्दतीर्थविजयतीर्थौ प्रणम्य मस्करिवरवन्द्यौ । तयोः कार्ति स्फुटमुपजीव्यप्रवच्मि भागवतपुराणम् ॥ ११ ॥

अथ कलिमलापनुत्तये विधिभवपुरःसरैरमरवरैरादरात् प्रार्थितादिति सुतवलभरपरिखिन्नधरणितले चिरसमय समाचीर्णतपसा सत्यवत्यां पराशरादवतीर्णो व्यासनामा मुरमथनः समुद्धृतसमुत्सन्ननिगमकल्पतरुरल्पमतिमनुजदयालुः शाखोपशाखाभेदेन विभक्तवेदस्तदर्थ निर्णयेच्छुर्विरचित ब्रह्मसूत्रस्तदनधिकारिजनापवर्गाय प्रकाशित पुराणसंहितो वेदान्तार्थप्रकाशिकां द्वादशस्कन्धसम्मिताम् अष्टादशसहस्रसंख्योपेतां भागवतपुराणसंहितां चिकीर्षुः कालदोषेण पिहितान् भागवतधर्मानाविश्चिकीर्षुर्निरन्तरापरोहित ब्रह्मस्वरूपो निरन्तरायोऽपि प्रेक्षावच्छिक्षायै मङ्गलाचरणानामनेक प्रयोजनाय च सर्वेष्टदेवतां नारायणाख्याम् अनुस्मरति । जन्माद्यस्य यत इति । अत्र यच्छब्द श्रुतेस्तच्छब्दोऽध्याहार्य्यः अस्य जगतो जन्मादि यतः यश्चार्थेष्वभिज्ञः यश्च स्वराट् यश्च ब्रह्महृदा आदिकवये तेने यं प्रति सूरयोमुह्यन्ति तेजो वारिमृदां विनिमयो यथा तथा त्रिसर्गोऽपि यत्र मृषा तं स्वेनधाम्ना सदानिरस्तकुहकं सत्यं परं धीमहीति समस्तान्वयः । तत्र प्रथमं परं धीमहीति व्यस्तान्वयः पश्चादाकाङ्क्षावशादादितः सर्वेषामन्वयः परं पूर्णं गुणैरिति शेषः पृपालनपूरणयोरिति धातोः द्विविधा हि देवताग्रन्थारम्भेन नमस्कारादिमङ्गलक्रियामर्हति आधिकारिकी अभीष्टा चेति यथा ज्योतिःशास्त्रे सूर्य्यादिग्रहलक्षणदेवताधिकारिकी नमनादिक्रियार्हा परमप्रेमादिविषया ह्यभीष्टा चेति । भगवांस्तूभयरूप इत्यभिप्रायेण परमित्युक्तं परमात्माहि सकलप्राणिनां संसारोन्मूलनायास्मिन् शास्त्रे प्रतिपाद्यते तदेतत् प्रेयः पुत्रात् प्रेयोऽन्यस्मात्सर्वस्मादन्तरं यदयमात्मेति श्रुतेः स एव परमप्रेमविषयः परोऽपि नारायण एव नान्यः कश्चित् यदेतत्परमंब्रह्मवेदवादेषु पठ्यते । सदेवः पुण्डरीकाक्षः स्वयं नारायणः पर इति हरिवंशे सत्यतपः प्रश्नोत्तरत्वेन दुर्वाससः प्रतिवचने परस्य नारायणत्वोक्तेः ब्रह्मविदाप्नोति परमिति श्रुतेश्च धीमहि ध्यायेम जन्माद्यस्य यत इत्यादि विशेषणैः परशब्दोक्तान् गुणान् विशिनष्टि । पालनपूरणाभ्यां यथासम्भवं सृष्ट्यादयो वाच्या इत्यूहनीयम् अलौकिकवस्तुनो लक्षणोपदेशमन्तरेण ज्ञातुमशक्यत्वात् शशविषाणकल्पं तदित्यतो वा लक्षणमाह जन्माद्यस्य यत इति अस्य प्रत्यक्षस्य जगतो जन्म आदिर्यस्य तज्जन्मादीति तद्गुणसंविज्ञानो बहुव्रीहिः यतो यस्मात् भवतीति शेषः आदिशब्देन स्थितिसंहारनियम न ज्ञानाज्ञानबन्धमोक्षा गृह्यन्ते न केवलं स्थितिसंहारौ श्रुतिस्मृतिविरोधात् यथा सास्नादिमान् गौरिति वृद्धोपदिष्टसास्नादिमन्तं पदार्थमश्वादिभ्यो व्यावृत्तं गोशब्दवाच्यं प्रत्येति तथा जगज्जन्मादिकारणं परमिति श्रुत्याचार्य्योपदिष्टं जन्मादिकं प्रत्येकं परब्रह्मलक्षणतया ज्ञातव्यं वेदान्तसूत्रेषु प्रतिपादितत्वात् ननु परस्य जन्मादिकारणत्वं कुत इति तत्राह अन्वयादिति यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्तीत्यादिश्रुतीनाम् । अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते स्रष्टा पाता तथैवात्तानिखिलस्यैक एवत्वित्यादिश्रुतिस्मृतीनां च जगत्कारणोहरावन्वयात् उपक्रमोपसंहारादितात्पर्य्यलिङ्गात् परं ब्रह्मैव जगत्कारणं नान्यदिति भावः । ननु रुद्रादीनामपि जन्मादिकारणत्वं श्रूयते अतः कथं परस्यैवेत्यवधार्य्यते उच्यते यद्यपि रुद्रादीनां वेदैकदेशप्रतिपाद्यत्वमस्ति तथाप्यनन्तवेदकदम्बप्रतिपादित्वं विष्णोरेव । सर्वे वेदा यत्पदमामनन्ति वेदैश्च सर्वैरहमेव वेद्य इत्यादिश्रुतिस्मृतिभ्यः । ननु श्रुत्यादेः पिपीलिकादिलिपिवत् अप्रमाणत्वान्माणवकदृष्टशार्दूलकल्पनेन तन्निश्चयाभावादतः परमाणुपुञ्जस्यैव कारणत्वमिति तत्राह इतरत इति प्रत्यक्षागमाभ्यामनुगृहीतादितरस्मात्तर्कात् परब्रह्मणः कारणत्वं ज्ञायते समुदाय उभयहेतुकोऽपि तदप्राप्तिरिति भगवता कृष्णद्वैपायनेन परमाणुपुञ्जवादस्य निरस्तत्वात् । अत्र श्रुत्याद्यनुगृहीततर्काभावात् केवलतर्कस्याप्रतिष्ठितत्वात् । ननु कार्य्यं कारणपूर्वकं कार्य्यत्वादिति कारणसामान्यमात्रं सिद्धं विशेषतः कुतः सिद्धिरिति चेत् सत्यं प्रधानादेरचेतनत्वेन बुद्धिपूर्वककर्तृत्वानुपपत्तेरस्वातन्त्र्याच्च क्षित्यादेश्चेतनकर्तृकत्वं परिशेषसिद्धं चेतनाश्च पित्रादेः पुत्राद्युत्पत्तिदर्शनात्तद्दृष्टान्तेन ब्रह्मादिचेतनजातं परमचेतनाद्विष्णोरुत्पद्यत इति सुशकोऽयं तर्कः समुच्चिष्ठते च शब्दः समुच्चये वेदानामपौरुषेयत्वेन कर्तृप्रसिद्ध्यभावादसन्दिग्धप्रमाणत्वेन तदनुगृहीततर्कस्यापि प्रतितर्कपराहतिर्नाशङ्कनीयेत्यस्मिन्नर्थे वा अनेन अथातो ब्रह्मजिज्ञासा जन्माद्यस्य यतः शास्त्रयोनित्वात् तत्तु समन्वयादिति चतुःसूत्री च व्याख्याता जिज्ञासैव धीमहीत्युच्यते वेदविचारनिर्णीतगुणोपसंहाररूपत्वात् ध्यानेव विशेषः ध्यानमेव ज्ञानसाधनं न कर्मादिकमित्यतो धीमहीति पदं कर्मणः शुद्धान्तकरणस्य ध्यानसम्भवादिति यस्तुश्रुतिस्मृती अनादृत्य केवलतर्केण ब्रह्मणो जन्मादिकारणत्वं विघटय्यप्रत्यवतिष्ठते सोऽन्वयव्यतिरेकात्मकतर्केणापहासितव्य इत्यतो वाह अन्वयादितरत इति अन्वयात् अन्वयानुमानात् इतरतो व्यतिरेकानुमानात् ते च दर्शिते च शब्दस्तूक्ततर्कस्य केवलस्य व्याप्तिशून्यत्वादस्य च प्रत्यक्षगृहीतव्याप्तिकत्वेन बलीयस्त्वादप्रतिहतः स्वार्थं साधयतीत्येतस्मिन्नर्थे वर्त्तते ननु यथापयोम्बादेरचेतनस्य स्पन्दनादिप्रवृत्तिदर्शनात्तन्निदर्शनेन प्रधानस्य कारणत्वं किं न स्यादिति तत्राह अर्थेष्विति अर्थेषु घटपटादिष्वभिज्ञः सर्वतः अशेषाकारेण जानातीत्यभिज्ञः प्रधानस्य जडत्वेन ज्ञानाश्रयत्वलक्षणासम्भवान्नेतरान् न सर्वज्ञत्वं विष्णोस्तु सर्वज्ञत्वं श्रुतिस्मृतिसिद्धं यः सर्वज्ञः स सर्ववित् नाहं वेदसर्वाणि न त्वं वेत्थ परन्तपेत्यादि नन्वस्य हेतोः सर्वज्ञे रुद्रादावपि वृत्तेरसाधकत्वमिति तत्राह स्वराडिति स्वयमेव राजत इति स्वराट् स्वस्य स्वयमेव राजानान्योऽधिपतिरिति वा अयं भावः यं कामये तं तमुग्रं कृणोमीति रुद्रादीनां श्रीप्रसादायत्तज्ञानादिगुणावत्त्व-दर्शनान्मम योनिरप्स्वन्तरिति श्रियश्च विष्ण्वनुगृहीतज्ञानादिमत्त्वदर्शनाद्विष्णोस्त्वनन्याधीनज्ञानादिगुणवत्त्वासम्भृतानां विशेषणस-

सुबोधिनी ।

स्तोत्रपक्षेसमागतस्यक्लिष्टत्वमाशंक्यतथात्वेस्तोत्रासंभवात्तन्निवृत्त्यर्थमुक्तमात्मागमोविस्तेस्तुस्त्रियं स्तोत्रंकुर्वंतीति तासांस्वरूपमनुवदतिभगवत्प्रीत्यर्थंप्रत्युत्फुल्लमुखाइतिप्रीत्याहिउत्फुल्लमुखत्वंहिलोकसिद्धंयेषांयाद्विरहेणमुकुलतामुखस्यतेषांतद्दर्शनेनउत्फुल्लतातदाहिमुखेस्थितंमाधुर्यंप्रकटीभवतितेतस्तत्संहितानिवाक्यानिमिष्टानिभवंति किंच हर्षगद्गदयागिरेतिस्तोत्रंहितानात्मकंवेदेप्रसिद्धंस्थिरमनसांकर्मोपयोगिनतुभक्तानांप्रेम्णासंभ्रमचित्तानाम्अतोगिरेत्युक्तंतत्रापियोहर्षः आनंदोद्गमः तेनगद्गदयागद्गदशब्दोऽनुकरणशब्दः शब्देतथाध्वनियुक्तत्वंवदतिगदव्यक्तायांवाचीतिगदधातुर्निरुक्तः आदरंबोधगतिधाष्ट्र्यदोषंवारयतिपितरामितियथाप्रोषितेपितरिसमागतेमहाराजाधिराजेतितत्पुत्राउद्गच्छंतिअत्रतथाविकलत्वंनास्तीतिदृष्टांतांतरमाह सर्वसुहृदामिति सर्वसुहृदः "गौर्वावसर्वस्यमित्रमि" तिश्रुतेः तांयथा वद्वत्सः संध्यापर्यंतंक्षुधितःस्वजातिशब्दंकुर्वन्नुपधावतिअत्रापिदीनतमत्वाभावात्दृष्टांतांतरमाह अवितारमितियथाअरण्यादौभयस्थानेचोरादिभिर्मार्यमाणाअर्भकाः पूर्वपरिचितंरक्षणसमर्थंदृष्ट्वोद्गच्छंतिवदंतिचस्वखेदंतद्वदित्यर्थः ॥ ५ ॥

सर्वाःप्रजाश्चतुर्विधाः स्त्रीपुंभेदेनप्रथमंद्विविधाः पुरुषास्त्रिविधाः ज्ञानिवैषयिकभक्तभेदेन तत्राद्यानांज्ञानिनांवचनमाहनताःस्मेतितेअंघ्रिपंकजंनताः स्मनमेनमइत्येतावत्सदुपशिक्षितमिति सिद्धांतात्भगवतिदृष्टेनमनमेवकर्त्तव्यं सर्वज्ञत्वेऽपिभिन्नतयास्थापितत्वात् "किमासनंतेगरुडासनाये"तिवाक्यात् ननुकिंफलार्थंनमनंतत्राह हेनाथ! हेपालकभर्त्तः! स्वतएवसर्वकामानांपूरकत्वात्नित्यएवायंनमस्कारः नकाम्यइतिज्ञापयतिसदेति प्रवेशोऽपिनापेक्ष्यतइत्याभिप्रायः ननुकथंब्रह्मलोकादिगमनफलपरित्यागेनसदानमनेनैवास्थितिःप्रार्थ्यतेतत्राहविरिंचिवैरिंच्येतिविरिंचिर्ब्रह्मावैरिंच्योमहादेवः सुरादेवाः अन्येइंद्रश्चएभिश्चतुर्भिरुत्कृष्टैरपिवंदितं तत्रगतानामप्येतदेवकार्यंततोदूरापेक्षया निकटएवस्थित्वावरम् ननुयद्यपिज्ञानिनामैहिकामुष्मिकफलविरागोभवतिभगवत्सायुज्यंचभक्तिरसाज्ञापेक्ष्यते तथापिभगवतासहगमनसामर्थ्यंस्थानच्युतिहेतुप्रतिबंधाभावः स्थिताज्ञानादिसंरक्षणं च अपेक्ष्यतएवततस्तदर्थं कथंननमनमित्याशंक्याहपरायणमितिइहसंसारप्रवाहेपरंक्षेममभिच्छतांयत्परायणमाश्रयभूतंरक्षकमितियावत्चरणारविंदमेवसर्वसाधकंक्षेममिहेच्छतामितिपदत्रयेणोक्तंतत्रक्षेमपदेनज्ञानादिरक्षोइहेतिस्थानादिप्रच्युतिः इच्छतामितिसहगमनेच्छायांतत्सामर्थ्यदानं च यद्यपिवाक्यार्थोनभवतितथापिपदार्थमनुदेहस्यकालप्रवाहजातत्वान्नमनासिद्ध्यर्थमपिदेहस्थितिः काम्येतिचेत्तत्राह नयत्रकालइतियत्रनमनेस्थितोभगवतिनम्रत्वात् भगवत्सेवकस्यनकालस्यप्रभवः परः वासुदेवः प्रभुर्यस्य ॥ ६ ॥

विषयपराआहुः भवायनस्त्वमितिहेविश्वभावन! सर्वानेवविषयसंबंधेनभावयसिअधिकान्करोषिअतोऽस्माकमपिउद्भवायभवनस्त्वमितिवाहेतुः यतोऽस्माकंत्वंस्वामीसर्वप्रार्थनायामनुचितत्वाभावायभगवातिषट्कमेत्वंप्रतिपादयतिमातेत्यादित्वमेवनोमातात्वद्गर्भादेवनिर्गतत्वात् उदरस्थानांजीवानामेववहिः सृष्टेः ब्रह्मांडाख्येचोदरेसांप्रतमपि स्थितेः लोकप्रतीत्यातासांजरायुवत्पोषकत्वंच्चाअतस्त्वमेवमाताअतो रोदनेनबलाद्वात्वमेवप्रार्थनीयः किंच अथसुहृत् अविवेकदशायांयथात्वंप्रार्थनीयः अथतदनंतरंविवेकदशायामपित्वमेवप्रार्थ्यः अतस्त्वं सुहृन्मित्रं "द्वासुपर्णासयुजासखायावि"तिश्रुतेः सुष्ठुहृदयः सुहृत्एकस्मिन्नेवहृदयेउभयोःस्थितत्वात् सुष्ठुहरतीतिवासर्वफलभोक्तृत्वात् अतएवंयुक्त्यापिभगवानेवप्रार्थनीयः सर्वफलदातृत्वात् किंच असेवायंपराधेनदण्डनेऽपिभगवानेव प्रार्थनीयइत्याह पतिरितिनह्यन्यागतिरस्माकमस्तियथास्वयमनलंकृतोऽपिभार्यामलंकरोतिवहुभिराभरणैः अलंकृतेतुसंदेहएवनास्तिअतस्त्वंमहान्अस्मानलंकुर्वित्यर्थः किंच त्वमस्माकंपिताअतोजन्ममात्रेणैववयंतेदायभागिनः जगत्कर्तृत्वेनैवभगवतः श्रवणात्एवमैहिकसर्वफलदानार्थंभगवद्रूपमुक्त्वापारलौकिकसर्वदानार्थमाहत्वंगुरुर्नः परमंचदैवतमितिप्रक्रियांतरत्वात् पुनस्त्वमितिग्रहणंपरलोकस्तुतदर्थविहितकर्मज्ञानभक्तिभिर्भवतितत्रअज्ञानादन्यथाज्ञानान्मोहनार्थंवापाखंडादिवहवोमार्गाजाताः तत्रसन्मार्गवक्तादुर्लभः संदेहेनविश्वासाभावाच्चत्वंत्वव्ययंज्ञानमितिवचनात्त्वमेवगुरुः जीवास्त्वसद्गुरवः त्वमेवसद्गुरुरितिअतोगुरुशुश्रूषयेतिवाक्यात् स्वसेवामेवशिक्षयेत्यर्थः एवंकर्मणांफलमितिपक्षेगुरुसेवयैवकृतार्थतादेवताफलदानपक्षे"फलमतउपपत्ते"॥३।२।३७॥इतिब्रह्मदानपक्षेऽपित्वमेवफलदातेत्यर्थः परमंचदैवतमितिदेवतादानपक्षेऽपिनांगदेवताः फलंप्रयच्छंति किंतु सहकारिणोभवंतिअतः परममित्युक्तंमध्ये चकारात्ब्रह्मपक्षेऽपिपरमात्मादेवताभवानेवदेवानांत्वदंशत्वात् ब्रह्मरूपत्वाच्च अतस्तवाराधनमेवास्माकंकर्त्तव्यम्अन्यत्सुखतएवभाविष्यतीत्याह यस्यानुवृत्त्येतिकृतमस्यास्तीतिकृतीभगवदनुवृत्तिव्यतिरेकेणकृतेनान्येनधर्मादिनानकृतीत्वंभवति "धर्मःक्षरतिकीर्त्तनात् कृतघ्नेनास्तिनिष्कृति"रितिअतस्तवानुवृत्त्यर्थंतथासंपाद्ययथाकृतिनोवभूवमेत्यर्थः ॥ ७ ॥

भक्ताआहुः अहोइति अहोइत्याश्चर्येवयंत्वद्भक्त्यैवपूर्णमनोरथाः इदानींत्वमपिमिलितइत्याश्चर्यं अथवाअल्पायभक्तिः कृतास्माभिःफलंमहज्जातमित्याश्चर्यंभवतावयंसनाथाः नारायणपराः सर्वेनकुतश्चनविभ्यतीतिन्यायेन अपेक्षाभावात् नियतानापेक्ष्यतेभगवतस्तुभक्तिविषयत्वेनैवग्रहणम् एवमपिभगवानेवस्वयमुख्यफलदानादिकं करोतिचेत् तदातेसनाथाभवंति तत्वाश्चर्यकरंभवति इहतुभवतावयं सनाथाः स्वयमागत्यसर्वकार्यं निर्वाहयसीत्यर्थः किंच इदंपुनः सर्वजनीनगुप्ततयाभक्तानांभगवान्स्वयंकिंचित्करोतीतिश्रूयते अत्र तुसाक्षात्सर्वजनीनंसर्वंकरोतीतिस्मेत्युक्तं किंच यद्वयंसर्वदापश्येमनहिसर्वदाभगवान् सर्वैःसाक्षात्क्रियतेसात्त्विकैः क्रियतइतियदितदाहत्रैविष्टपानामपि दूरदर्शनमितित्रिविष्टपेस्वर्गेभवास्तिष्ठंतीतिवातत्रभूमिस्थानां दर्शनशंकैवनास्ति किंच कदाचिद्देवानामापदायां कृपयाभगवत्साक्षात्कारोभवतितथापिनैवंरूपंपश्यंतीत्यभिप्रायेणाहप्रेमस्मितस्निग्धनिरीक्षणमितिप्रेमास्मितेन च स्निग्धंयन्निरीक्षणंतत्सहितमाननंयस्ये"तियेयथामांप्रपद्यंते"इतिप्रेमभक्तेषुभगवतोऽपिप्रेमज्ञानेनमुक्ताः कालांतरेस्वसेवार्थंभक्ताःक्रियंतेतेनमोहिताइवएतइतिस्मितम्अथवाभगवद्भक्तेषुमोहनमल्पंभगवद्गुणरूपयोरेवमोहोनान्यत्रेतिमायारूपहासस्यमंदत्वंअनेनदयानिरूपिताभवतिप्रेमदयाभ्यांहिसर्वंवस्तुस्निग्धभवतिमूर्त्तानांतैलादिःस्नेहहेतुः अमूर्त्तानांस्नेहःहृदयेआत्मसंबंधानांतेनभगवद्दृष्टिः उभाभ्यामतिस्निग्धाप्रथमतोभगवद्दर्शनमेवदुर्लभंतत्रापि सन्मुखतयातत्रापिभगवद्दृष्टिः स्वस्मिन्पतिततदाहिभगवद्दृष्ट्यागृहीतः भगवतिप्रविष्टएवतत्रापिस्निग्धयादृष्ट्यागृहीतः कदापिनविश्लेषमेतितत्रहेतुपूर्वकंस्निग्धयाहेतुत्वापिदयासापिस्नेहेनसंबद्धानास्मादन्यः कश्चिदुत्कर्षोऽस्तिभगवदीयानांभगवति किंच एतादृशमपिरूपंसर्वसौभाग्ययुक्तंभवतिस्वापेक्षितसर्वविषयभूतम्एतावतानात्रविषयत्यागोऽप्यपेक्षितः ॥ ८ ॥

यर्ह्यम्बुजाक्षापससार भो भवान् कुरून्मधून्वाथ सुहृद्दिदृक्षया ।
तत्राब्दकोटिप्रतिमः क्षणो भवेद्रविं विनाक्ष्णोरिव नस्तवाच्युत ! ॥ ९ ॥
कथं वयं नाथ चिरोषिते त्वयि प्रपन्नतृष्णाखिलतापशोषणम् ।
जीवेम ते सुन्दरहाससशोभित मपश्यमाना वदनं मनोहरम् ॥ १० ॥
इतिचोदीरिता वाचः प्रजानां भक्तवत्सलः ।
शृण्वानोऽनुग्रहं दृष्ट्या वितन्वन् प्राविशत्पुरीम् ॥ ११ ॥
मधु-भोज-दशा-र्हा-र्ह कुकुरा-न्धक-वृष्णिभिः ।
आत्मतुल्य वलैर्गुप्तां नागैर्भोगवतीमिव ॥ १२ ॥

श्रीविश्वनाथचक्रवर्त्ती ।

वैरिञ्च्याः सनकादयः । परं परायणं परमाश्रयम् । यत्र अंघ्रि पंकजे परेषां ब्रह्मादीनां प्रभुरपि कालो न प्रभवेत् ॥ ६ ॥
भवाय क्षेमाय । "भवः क्षेमे च संसारे" इति मेदिनी ॥ ७ ॥ त्रैपिष्टपानां देवानाम् ॥ ८ ॥

---

सिद्धांतप्रदीपः ।

पितरमर्भकाबालाइवसर्वसुहृदमवितारंरक्षकंश्रीकृष्णमूचुः प्रजाइतिप्रकरणादन्वेति ॥ ५ ॥
तदेवाह नताःस्मेतिपंचभिः इहपरंक्षेममिच्छतांपरायणंसर्वोत्कृष्टंशरणम् तेपदारविन्दंनताःस्म यत्रयस्मिन् शरणीकृतेसतिशरणापन्नेषु परेषामशरणापन्नानांप्रभुरपिकालोनप्रभवेत् कथमनुवर्ततांभवभयंतवयद्भ्रूकुटिः सृजातिमुहुस्त्रिणेमि रभवच्छरणेषुभयमितिवक्ष्यमाणात् ६
हेविश्वभावन ! जगदुत्पादकयस्यानुवृत्त्योपासनयाकृतिनः कृतार्थावभूविमजातावयंसत्त्वंनोभवायोद्भवायभव ॥ ७ ॥
कृतित्वंवर्णयंति अहोइति वयंभवतासनाथाः स्मः यतः अहोत्रैविष्टपानामपिदूरेदर्शनंयस्यतस्यतवरूपंपश्येम कथंभूतंरूपं प्रेमपूर्वस्मितमन्दहसितंस्निग्धंसरसंनिरीक्षणंचयस्मिन्तदाननंयस्मिन्तत् सर्वसंपूर्णसौभगंयस्मिन्तत् ॥ ८ ॥

---

भाषा टीका ।

द्वारिका के सब प्रजा प्रीति से प्रसन्न मुख होकर हर्ष से गद्गदवाणी से सबके सुहृद तथा रक्षक पिता के तुल्य श्रीकृष्ण की स्तुति करते भये ॥ ५ ॥
हे नाथ ! हम आप के अंघ्रि पंकज में सदा प्रणत हैं । जिस अंघ्रि पंकज को ब्रह्मा सनकादिक और सुरेन्द्र वंदना करते हैं जो क्षेम इच्छा करने वालों का परम परायण है । और जहां ब्रह्मादिकों का प्रभु काल भी अपना प्रभाव नहीं कर सका है ॥ ६ ॥
हे विश्वभावन ! तुम हमारे मङ्गलार्थ होहो ? तुमही माता हो सुहृत् हो पति हो पिताहो तुमही सद्गुरु और परम देवता हो जिनकी अनुवृत्ति से हम कृतार्थ हुए हैं ॥ ७ ॥
अहो ? हम सब आप से सनाथ हैं । कि जो देवताओं के भी दूर दर्शन, प्रेम स्मित युक्त स्निग्ध निरीक्षण, आप के सर्व सौभग रूप को दर्शन करते हैं ॥ ८ ॥

---

श्रीधरस्वामी ।

अर्भका इव सकरुणमाहुः । यर्हि यदा । भो अम्बुजाक्ष ! । नो भवानिति पाठे न इत्यनादरे षष्ठी अस्माननादृत्य । अपससार अपहाय जगाम । कुरून् हस्तिनापुरम् । मधून् मथुरां वा । तत्र तदा रविं विना आन्ध्यादक्ष्णोर्यथा एवं तव नः त्वदीयानामस्माकमपीत्यर्थः ॥ ९ ॥ १० ॥
इति च एवंविधाः अन्याश्चोदीरिता वाचः शृण्वन् दृष्ट्यासाभिनन्दावलोकनेनानुग्रहं कुर्वन् ( पुरं द्वारकां प्राविशत् ) ॥ ११ ॥
द्वारकां स्तौति पंचभिः स्वतुल्यबलैः मधुभोजादिभिः गुप्तां रक्षिताम् ॥ १२ ॥

---

दीपनी ।

मधूमित्यस्यार्थः मथुरामण्डलमिति । अनेन सान्त्वयामास सप्रेमैरायास्य इति दौत्यकैरिति ( १० स्कंध ३९ अ ३५ श्लो ) यदक्रूरयाने वक्ष्यति तस्य सङ्गतिरुक्ता इति बुधरञ्जनी ॥ ९ ॥ १८ ॥

---

श्रीवीरराघवः ।

भोअम्बुजाक्ष ! भवान्सुहृद्दिदृक्षयायदाकुरून्मधून्वाजनपदानपससारजगामतत्रतदा हेअच्युत ! नोऽस्माकंत्वामपश्यतां रवेर्विनारविंविना
नाक्ष्णोः क्षणकालोऽब्दकोटिप्रतिमः सम्वत्सरकोटिकालतुल्योभवेत् ॥ ९ ॥ १० ॥

इतीत्थंप्रजानामुदीरितावाचः शृण्वानोभक्तवत्सलोभगवानवलोकनेनानुग्रहंवितन्वन्पुरंप्राविशत्पूः शब्दोऽयंनतुपुरशब्दः ॥ ११ ॥

कथंभूतांपुरंमध्वादयोयादवान्तरविशेषाः तैरात्मतुल्यवलैः कृष्णतुल्यवलैर्नागैःकाद्रवेयादिभिर्भोगवतीमिवगुप्तांरक्षितांभोगवतीनामना
गानांपुरी ॥ १२ ॥

---

श्रीविजयध्वजः ।

हेअंबुजाक्ष ! अथयर्हियदामाधवः श्रीवल्लभोभवान्मधुविषयेभ्यः सुहृदांपांडवानांदिदृक्षयादर्शनेच्छया कुरून्कुरुविषयान् कुरुविषये
भ्योमधून्वांप्रतिगच्छति हेअच्युत ! तत्रतस्यामवस्थायांतवेतिषष्ठीद्वितीयार्थे त्वांविनाकुरूणांमधूनांचनोऽस्माकंयथारविंविनाक्ष्णांतथैकः
क्षणः काल अब्दकोटिप्रतिमः वर्षकोटिसमानः स्यादित्येकान्वयः ॥ ४६ ॥

दृष्ट्यादर्शनेन शृण्वानः शृण्वन् चशब्दाद्वंदिमागधादीनांगिरः ॥ ४७ ॥

गुप्तांरक्षितां भोगवतीनामनागानांपुरी आत्मतुल्यवलैः परस्परमात्मनातुल्यवीर्यैरधिकदृष्टांतन्यायोवा ॥ ४८ ॥

---

क्रमसन्दर्भः ।

यर्हीति यदा यदेत्यर्थः तत्र तदा तदा क्षणोऽपि अब्दकोटिप्रतिमो भवति । तथा रविं विना अक्ष्णोर्यादृश्यान्ध्यावस्था तादृश्यपि भवतीत्यर्थः । नो भवानिति पाठे नोऽस्माकं स्वामी यो भवान् स त्वमित्यर्थः । तत्र मधून् मथुरां वेति व्याख्याय तदानीं तन्मण्डले सुहृदो व्रजस्था एव प्रकटाइति तैरप्यभिमतम् । तत्र योगप्रभावेण नीत्वा सर्वजनं हरिरित्यत्र सर्वशब्दप्रयोगात् । वलभद्रः कुरुश्रेष्ठ भगवान् रथमास्थितः । सुहृद्दिदृक्षुरुत्कंठः प्रययौ नन्दगोकुलमित्यत्र प्रसिद्धत्वात् ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥

---

सुबोधिनी ।

विषयरूपोऽपिस्वयमेवजातइतितस्मादेतन्महदाश्चर्यमितिस्त्रियः स्त्रीप्रधानाश्चाहुः एतानभगवंतंनवागुणान्जानंतिअपितुस्वानुभवंत
श्चवस्तुसामर्थ्यात्प्रजायतेतदनुवदंतियर्ह्यंबुजाक्षेति हेकमलनयन ! दृष्टैयवामृतंपाययतीतितथासम्बोधनं नःअस्माननादृत्यकिमेताः मत्स्वरूपा
विदः अतस्तत्रगमिष्यामियत्रमांजानंतीति इत्यपससारभयानितिगमनसमयायवयंसंमुखतयानदृष्टाः कुरून्हस्तिनापुरदेशान् अथततएवप्र
क्रियांतरेणभीष्मादिदर्शनार्थंकुरुक्षेत्रंतत्रतास्मिन्समयेएकःक्षणःअब्दकोटिप्रतिमोभवेत् यातनास्वेवंश्रूयतेक्षणमध्येवर्षसहस्रंकृत्वाभोजयंती
तितथैवास्माकमनुभवः ननुसुखेऽपिश्रूयतेक्षणमात्रेकल्पभोगान्भुंक्तइति तत्राह रवेर्विनाक्ष्णामिवविषयसंस्कारकत्वेनअधिष्ठातृत्वेन चय
दारविः प्रविशतितदाविषयग्रहणसमर्थंचक्षुर्भवतितथास्माकमंतर्वहिश्चेत्भगवान्तिष्ठतितदासर्वकार्यक्षमत्वंअयमर्थः यथायोगिनः समा
धौप्रत्याहारेण चक्षुर्निमीलनंकृत्वादेवतांस्ववशेस्थापयित्वातिष्ठंतिक्षणेक्षणेमूर्छितामवामइतिजीवनंत्वच्युतइतिसंबोधनात् यथात्वमच्युतः
तथावयमप्यस्मिन्नंशेजाताइतिद्योतितम् ॥ ९ ॥ १० ॥

एवंचतुर्विधानांवाक्यंभगवान्सत्यत्वेनसमर्थयित्वासत्यवाक्यश्रवणमङ्गलमनुभूयपुरंप्राविशदित्याहइतीति चकारादन्यान्यपिवहुविधानि
प्रजानामितिनात्रवचनेदोषग्रहणंतदाभगवतोमहतीकृपाउद्गतेतिवोधयतिभक्तवत्सलइतियथागौर्वत्संदृष्ट्वाव्याकुलाभवतितथाभगवान्जातइत्य
र्थः दृष्ट्यानुग्रहंवितन्वन्तथातासुदृष्टिः पतिताभगवान्ज्ञानादिसंपन्नः यथावत्सासांहृदयेप्रविष्टः येनसुखितान किंचिदुक्तवत्यः ततः पुरीं
द्वारकांप्रकर्षेणमहतासंभ्रमेणअविशत् ॥ ११ ॥

प्रविष्टांतांपुरींवर्णयतिपंचभिः मधुभोजेतिविश्वायथातथापुरीतिविज्ञापयितुम् "अधिष्ठानेवहिश्चोर्ध्वमंतश्चांतार्विभेदतः सुंदरंभगवद्योग्य
स्थानंनान्यत्कथंचन" तत्राधिष्ठातॄन्वर्णयतिमधुभोजेतिषड्विधायादवाः मधवोभोजाः दशार्हेश्वर्हाः कुकुराअंधकावृष्णयश्चतैर्गुप्तांसत्वरूप
मंतः करणंयदाषड्भिरिंद्रियैः संरक्ष्यतेतदाभगवत्प्रवेशयोग्यंभवति इंद्रियैर्विषयाकृष्टैरितिवाक्यात् तैरेवनाशश्रवणात् पुरीचगृहभेदेनदृश्यति
आत्मतुल्यवलैः यथाआत्मदेहः तत्तुल्यंवलंयेषाम्आत्मावायुर्वा "अहंमनुरभवंसूर्यश्च"तिसूक्तेअहंदेवतायावायुभेदत्वात् मंडलमध्यत्वाद्दस्य
सूत्रस्यवलं सेनावाभगवत्तुल्यसेना सर्वाप्रवेशेनदृष्टांतः नागैरितिशरीरमिवप्राणैर्नागैः प्राणैःभोगवतीतनुः प्राणायामैः संरक्षितायोगितनुं
यथाभगवान्प्रविशतिभोगवतींगंगाप्रवाहोवारक्षाभावेदेवैरपि साह्रियेत ॥ १२ ॥

---

सर्वर्तु सर्वविभवपुण्य वृक्षलताश्रमैः ।
उद्यानोपवना रामैर्वृतपद्माकर श्रियम् ॥ १३ ॥
गोपुरद्वारमार्गेषु कृतकौतुक तोरणाम् ।
चित्रध्वजपताकाग्रैरन्तः प्रतिहतातपाम् ॥ १४ ॥
संमार्जित महामार्ग रथ्या-पणकचत्वराम् ।
सिक्तां गन्धजलै रुप्तां फल पुष्पाक्षताङ्कुरैः ॥ १५ ॥
द्वारि द्वारि गृहाणां च दध्य क्षतफलेक्षुभिः ।
अलंकृतां पूर्ण कुम्भैर्बलिभिर्धूपदीपकैः ॥ १६ ॥

श्रीविश्वनाथचक्रवर्त्ती ।

भो अम्बुजाक्ष ! । नो भवानिति पाठे नोऽस्मान् अनाहत्य । कुरून् हस्तिनापुरम् । मधून् मथुरामण्डलं नन्दव्रजमित्यर्थः नतु मथुरापुरीं तदानीं तस्यां सुहृदामभावात् । तत्र योगप्रभावेण नीत्वा सर्वजनं हरिरित्यत्र सर्वशब्दात् । तेन आयास्य इति दौत्यकैरिति ज्ञातीन् वो द्रष्टुमेष्याम इत्यादि यद्भगवता उक्तं व्रजं प्रत्यागमनं तत् पाद्मादिपुराणेषु स्पष्टं सदपि ( तदपि ) श्रीभागवते त्वस्मिन्नत्रैव ज्ञापितम् । तदा नस्तव त्वदीयानामस्माकम् ॥ ९ ॥ १० ॥

दृष्ट्या तान् प्रति दृष्टिक्षेपेण ॥ ११ ॥

तां द्वारकां वर्णयति पञ्चभिः ॥ १२ ॥

---

सिद्धांतप्रदीपः ।

कुरून्मधून्वादेशान् अपससारजगामतवतावकानांनोऽस्माकम् ॥ ९ ॥
किंच तेवदनमपश्यमानाः कथंजीवेम ॥ १० । ११ ॥
पुरींवर्णयतिमध्वितिपंचभिः गुप्तांपालिताम् ॥ १२ ॥

---

भाषाटीका ।

हे अम्बुजाक्ष ? जब आप हम लोगों को छोडकर अपने सुहृदों के देखने की इच्छा से कुरुदेश वा मधुदेश में गमन करते हैं तव हम को एक एक क्षण कोटि कोटि वर्ष के समान हो जाता है । हे अच्युत ? जैसे सूर्य के विना अन्धकार में आंखों को पल पल कठिन हो जाता है ॥ ९ ॥

हे नाथ ? आप के चिरकाल विदेश रहने से शरणागत जनों का तृष्णा तथा सब ताप का शोषक सुंदर हास से शोभित एवं मनो हर आप के श्रीमुख के दर्शन बिना हम लोग कैसे जीवेंगे ॥ १० ॥

भक्त वत्सल भगवान् इन प्रजाओं के उदीरित वचनों को सुनते दृष्टि से सब पर अनुग्रह करते पुरी में प्रविष्ट हुए ॥ ११ ॥

जो पुरी आत्मतुल्य बलवाले मधु भोज दशार्ह अर्ह कुक्कुर अन्धक और वृष्णिओं से नागों से भोगवती के समान रक्षित है ॥ १२ ॥

---

श्रीधरस्वामी

सर्वेषु ऋतुषु सर्वे विभवाः पुष्पादिसम्पदो येषां ते पुण्यवृक्षाः लताश्रमाः लतामण्डपाश्च येषु तैरुद्यानादिभिः वृता ये पद्माकराः सरांसि तैः श्रीः शोभा यस्यां ताम् । उद्यानं फलप्रधानम् । उपवनं पुष्पप्रधानम् । आरामः क्रीडार्थं वनम् ॥ १३ ॥

गोपुरं पुरद्वारम् । द्वारं गृहद्वारम् । कृतानि कौतुकेन उत्सवेन तोरणानि यस्यां ताम् । गरुडादिचिह्नांकिता ध्वजाः जयप्रदयन्त्रांकिताः पताकाः चित्राणां ध्वजपताकानाम् अग्रैः अन्तःप्रतिहतः आतपो यस्यां ताम् ॥ १४ ॥

सम्मार्जितानि निःसारितरजस्कानि महामार्गादीनि यस्याम् । महामार्गो राजमार्गः । रथ्या इतरमार्गाः आपणकाः पण्यवीथयः । चत्वराणि अङ्गनानि फलादिभिरुप्ताम् अवकीर्णाम् ॥ १५ ॥ १६ ॥

---

श्रीविजयध्वजः ।

न्तानां तैरक्षातत्वाच्च तेषां निरुपचरितसर्वज्ञत्वमतो नान्येषु तस्य हेतोर्व्यभिचार इति स एव सर्वकर्त्तेति । न ते विष्णो जायमानः एष सर्वेश्वर एष भूताधिपतिरित्यादिश्रुतिरनन्याधिपतित्वे सर्वाधिपत्ये च मानं स्पष्टराजान्तररहित इति वा स्वराट् स्वात्मानं स्वयमेव राजयति प्रकाशयति न परेच्छयेति वा ननु श्रुतीनामनंतत्वादेकत्र हरेरन्याधीनत्वकथनत्वसम्भवादतः कुतोनिश्चयः परोनान्याधीन इति । तत्राह तेन इति यः पर आदिकवये चतुर्मुखाय ब्रह्मसाङ्गं वेदं हृदा स्वेहेन तेने विस्तारितवान् तस्य सकृदुपदेशमात्रेणाशेषग्रहणसामर्थ्येऽपि वक्तव्यं ब्रह्मगुरुणा चतुर्वारंस्तथापि वेत्युपदेशशास्त्रमनुसृत्य तेन इत्युक्तं शिष्याशिक्षायै तथोपदेशसम्भवात् चतुर्मुखस्य वेदोपदेशेन हरेरनन्याधिपतित्वस्य किमायातमिति चेन्न प्रजापते नत्वदेतान्यन्यो विश्वा जातानि परिता बभूवेति श्रुतौ चतुर्मुखस्य निरतिशयमाहात्म्यकथनात्तदुपदेशात्तस्यानन्याधिपतित्वसिद्धेः यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोऽति तस्मा इति श्रुतेः सकलवेदविद्योपदेशोऽपि सिद्धः आदि कवित्वं च ब्रह्मणः कविर्यः पुत्रः स इमाचिकेतेत्यादिश्रुतिसिद्धं ब्रह्मवेदस्तपस्तत्वं ब्रह्मा विप्रः प्रजापतिरित्यभिधानं हृतस्नेहे मनसि स्निग्धे सुहृद्बन्धौ हरावपीति च न प्रहेलिकावदुपदेश इति द्योतनाय हृदेत्युक्तं तेने ब्रह्मेति सर्वज्ञत्वे युक्त्यन्तरं वा सकलचेतनराश्युत्तमस्य चतुराननस्योपदेष्टुः शार्ङ्गपाणेः सर्वज्ञत्वं न्यायप्राप्तमिति भावः वेदाह मे तं पुरुषं महान्तमादित्यवर्णं तमसः परस्तादिति श्रुतौ नारायणविषयज्ञाने स्वातन्त्र्याकथनात्तदुपदिष्टज्ञानेनैव तज्ज्ञानं कथं सङ्गच्छत इत्याशङ्क्य यमेवैष वृणुते तेन लभ्य इति श्रुतेः तत्प्रसादायत्तज्ञानेनैतद्विषयं ज्ञानं न तु स्वायत्तम् अन्यथाज्ञानमेव न स्यादुक्तहेतोरित्यभिप्रेत्याह मुह्यन्ति यं सूरय इति भूतभविष्यद्वर्त्तमानब्रह्मादयो यत्र प्रसादमन्तरेणमुह्यन्ति मुह वैचित्य इति धातोश्चित्तिं ज्ञानं न जानन्ति कश्चिदन्यथा च जानन्तीत्यर्थः । तेनेत्युक्तेरस्माद्ब्रह्मादिचेतनराश्यचिन्त्यमहिमामहीधरः प्रसादाभावे इति प्रतीयते । नन्वीश्वरः सृष्ट्यादौ प्रवर्त्तमानः प्रयोजनार्थी भवति अन्यथा वा न प्रथमः यत्प्रयोजनार्थं प्रवर्त्तते तस्य तत् पूर्वं तदभावादपूर्णत्वेनाशक्तत्वात् सृष्ट्यनुपपत्तेः न द्वितीयः प्रवृत्तिमात्रस्य स्वप्रयोजनोद्देशेन दृष्टत्वाद्वृथा तदनुपपत्तेरतो मायामयी सृष्टिरेष्टव्येत्यत आह तेजोवारीति । तेजो वारि मृदां विनिमयो यथा तथा त्रिसर्गः यत्र यस्मिन् भगवतिविषये मृषैव पूर्वाप्राप्तप्रयोजनप्रापको न भवति कथं तर्हि प्रवृत्तिरिति चेदुच्यते देवस्यैष स्वभावोयमाप्तकामस्य कास्पृहा लोकवत्तु लीलाकैवल्यमिति श्रुति सूत्रबलादाप्तसमस्तप्रयोजनस्य हरेः लीलयैव प्रवृत्तिरिति भावः जीवेश्वर जडानां सर्गस्त्रिसर्गः यथा एकमेव मूलं तेजः स्वकार्य्येषु पार्थिवादिपदार्थेषु बहुधा भूत्वा प्रविशति बहिश्च मथनादिनादिनाविर्भवति तथेश्वरोऽपि जगत्सृष्ट्वा बहुरूपोभूयजगदन्तःप्रविशति बहिश्च भूतानुकम्पया वासुदेवादिबहुरूप आविर्भवति अयमीश्वरसर्गः । दीपादीपान्तरोत्पत्तिर्यथा तथेश्वर सर्ग इति वा यथा सूर्य्यादितेजसां जलाद्युपाधिनिमित्तैः बहूनि प्रतिबिम्बानि सूर्यकान्तादीनि सूर्य्यादेः जायन्ते । तथैव सूक्ष्मस्थूलशरीराद्युपाधिनिमित्तैः प्रतिबिम्बभूताजीवाहरेरुत्पद्यन्ते । एष जीवसर्गः यथा कुलालो मृदमुपादानीकृत्यघटादीन् सृजति तथेश्वरो जडप्रकृतिमुपादायमहदहङ्काराद्यशेष जडपदार्थान् सृजत्येष जडसर्गः । अनेन मायामयीसृष्टिरित्यस्य किमायातमिति चेदुच्यते । यत्रेश्वर इति विशेषणादन्यत्रमृषामिथ्या न भवति । तथाच योजना यथा तेजोवारिमृदां विनिमयः कार्य्यम् अर्थक्रियायोग्यत्वात् सदसद्विलक्षणो न भवति । तथा यत्र यदाधारतया क्रियमाणस्त्रिसर्गो मिथ्या न भवति । अर्थक्रियोपपत्तिरेव मिथ्यात्वबाधिकेति भावः । ननु तेजःकार्य्यं केशोण्डूकादि वारिकार्य्यं फेनादि मृत्कार्य्यं घटादि यथा मिथ्या तथा यत्र जगन्मिथ्येत्यर्थः । स्यात्तथाच श्रुतिः । वाचारम्भणं विकारः अनुमानं च विमतं मिथ्यादृश्यत्वादित्यतो मायामयीसृष्टिरित्यत आह धाम्नेति । स्वेन धाम्ना स्वरूपज्ञानमहिम्ना सदा नित्यं निरस्तं कुहकम् इन्द्रजालादिमाया येन यस्य वा स तथोक्तः तं । यः सर्वज्ञः अथैन माहुः सत्यकर्मेति । विश्वं सत्यमित्यादिश्रुतिविरोधादुदाहृत श्रुतेः अर्थान्तरत्वसम्भवादनुमानस्य व्याप्तिशून्यत्वेन तद्विरोधामावान्नित्यनिरस्तेन्द्रजालो विष्णुर्मायामयीं सृष्टिं न विदधाति । किन्तु सत्यामेव लोके वाऽसमर्थः सन् इन्द्रजालादिकं सृजति । न तु समर्थः विष्णुस्तु नित्यपरिपूर्णशक्तिः किमर्थं तत्करोतीत्यर्थः । मुक्तव्यावृत्तये सदेत्युक्तं तेषां मुक्तेः पूर्वं बन्धभावेन कुहकत्वसम्भवात् । ननु विष्णोः सदानिरस्तकुहकत्वेमुक्तव्यावृत्तिर्घटते तदेव कुत इति तत्राह सत्यमिति । सत्यं निर्दुःखनित्यनिरतिशयानन्दाद्यनुभवरूपं सच्छब्द उत्तमं ब्रूयादानन्दतीति वै वदेत् येति ज्ञानं समुद्दिष्टमिति वचनान्नित्यनिरस्तकुहकत्वेनमुक्तव्यावृत्तिर्युज्यत इति भावः । एतदुक्तं भवति । उपक्रमादितात्पर्ययुक्त्युपेत सर्वश्रुतिस्मृतितात्पर्यालोचनया जगत्सृष्ट्यादिकर्तृत्वात् सर्वज्ञत्वादनन्याधिपतित्वाच्चतुर्मुखज्ञानोपदेष्टृत्वात् । स्वानुग्रहमन्तरेण दुर्ज्ञेयत्वात् स्वप्रयोजनानुद्देशेन केवललीलयैव जगत्सर्जनादिप्रवृत्तिमत्त्वात् स्वत एव निरस्तेन्द्रजालत्वेन सत्यमहिमत्वान्निर्दुःखनित्यनिरतिशयानन्दाद्यनुभवरूपत्वाच्च सर्वगुणपूर्णो विष्णुः सर्वैर्ध्येय इति वा तात्पर्यार्थः ननु धीमहीति छान्दसः प्रयोगः कस्मात् कृतः उच्यते गायत्रीप्रतिपाद्यं नारायणाख्यं परंब्रह्मैव न सूर्यः तस्य चक्षोः सूर्यो अजायतेति श्रुत्यातदङ्गजननोक्तेरितिदर्शयतुं यथावेदाध्ययनोपक्रमे गायत्र्यभिधीयते विशिष्टफलहेतुत्वात्तथा भागवतोपक्रमे इति वा गायत्र्याद्यशेष वेदप्रतिपाद्यो नारायण एव भागवते प्रतिपाद्यत इति वा इतरेषां भगवत्कृतत्वेन तत्परत्वेऽपि तद्व्यावृत्तय इति वा इतरेभ्योऽस्य माहात्म्याधिक्यप्रकटनायेति वा धीमहीति छान्दसपदं प्रायुङ्क्त भगवान् बादरायणः तथाच मत्स्यपुराणे पुराणदानमाहात्म्ये प्रस्तावे माहात्म्य तल्लक्षणं प्रदर्श्यते यत्राधिकृत्यगायत्रीं वर्ण्यते धर्मविस्तरः । वृत्रासुरवधश्चापि यत्तद्भागवतं विदुः ॥ लिखित्वा तच्च यो दद्याद्धेमसिंहसमन्वितम् । पौर्णमास्यां प्रौष्ठपद्यां स याति परमं पदम् । अष्टादशसहस्राणि पुराणं तत्प्रकीर्त्तितमिति स्कान्दे ग्रन्थोऽष्टादशसाहस्रो द्वादशस्कन्धसम्मितः । हयग्रीव ब्रह्मविद्यायत्र वृत्रवधस्तथा । गायत्र्या च समारम्भो यत्र भागवतं विदुरिति गारुडे च अर्थोऽयं ब्रह्मसूत्राणां भारतार्थविनिर्णयः । गायत्रीभाष्यरूपोऽसौ वेदार्थपरिबृंहितः । पुराणानां सामरूपः साक्षाद्भगवतोदितः । द्वादशस्कन्धसंयुक्तः शतविच्छेदसंयुतः । ग्रन्थोऽष्टादशसाहस्रः श्रीमद्भागवताभिधः । इति अन्ये चतुर्विंशत्साहस्रं भागवतमिति वदन्ति असम्प्रदाय विदां वचनमित्युपेक्षणीयं गायत्र्यर्थोऽप्यनेन श्लोकेन सूचितः तथाहि तत्सवितुर्देवस्येत्यस्यार्थो जन्माद्यस्य यत इत्यादीति धाम वरेण्यं परमित्यभिधानाद्वरेण्यमित्यस्य व्याख्यानं परमिति भर्गो इत्यस्य व्याख्यानं धाम्नास्वेन सदा निरस्तकुहकमिति भर्गः सकलदुरितभर्जनं ज्योतीरूपं तत्पदार्थव्याख्याने स्वराडिति धियो यो नः प्रचोदयादित्यस्य विवरणं तेने ब्रह्महृदाय आदिकवये

श्रीविजयध्वजः ।

इति यः सविता जन्मादिकर्त्ता नः अस्माकं धियः धर्मादिविषया बुद्धीः । उपलक्षणमेतत् । सर्वेन्द्रियाणि इत्यादि स्वतत्त्वविषयं ज्ञानं गुरुमुखेनोपदिश्य तज्ज्ञानसाधनानि सर्वाणि करणानि प्रचोदयात् प्रचोदयति स्वात्मविषयतया प्रेरयति तस्य सवितुर्देवस्य क्रीडादिगुणसम्पन्नस्य नारायणस्य अनन्याधीनतया तत्तत्त्वाह्वयासत्वात्तद्वरेण्यं सकलगुणाकरतया परममङ्गलं भर्गः ज्योतीरूपं भरणगमनयोगात् सर्वज्ञं वा वपुः ज्ञानादिगुणरचितकरचरणाद्यवयवमिति यावत् धीमहि ध्यायेमज्ञानमेव तत्प्रीतिजनकं न कर्मादिकं तस्मात् तच्चिन्तनं कर्त्तव्यमित्यर्थः यत्तु केनचिच्छेदसम्मितैवंविधग्रन्थव्याख्यानारम्भसमये प्रजल्पितं पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना आक्षेपश्च समाधानमिति व्याख्यानलक्षणम् अतिरिक्तं पदं त्याज्यं हीनं वाक्ये निवेशयेत् विप्रकृष्टं च सन्दध्यादानुपूर्व्यं च कल्पयेत् लिङ्गं धातुं विभक्तिं च योजयेच्चानुलोमतः वाक्यार्थस्यानुसारेण तेषां च प्रत्ययोऽपि चेति तदनुपासितग्रन्थसम्प्रदायवित्सज्जनचरणोपेक्षितमिति विदुषां परिषदिसारस्यम् आश्रसेन हि यथा वेदादावकरीत्यत्राकरोदिति पदम् अशक्यनिवेशनं तथात्राप्यतिरिक्तं पदं सन्त्यज्यहीनमप्रयोज्यं यत एतद्व्याख्यानं तल्लक्षणं न भवति तस्माद्यथास्थितग्रन्थव्याख्यानमेव सज्जनचित्तरञ्जनमिति सन्तोष्टव्यं ननु नायं श्लोकार्थः किन्त्वन्य एव तथाहि तं धीमहि ननु मृत्तिकेत्येव सत्यमिति मृदादेरपि सत्यत्वं श्रूयते तद्वदस्यापीति तत्राह परमिति मृदादेः कार्योपेक्षया सत्यत्वं अयं तु परमार्थिकः सत्यं तत्सत्यं स आत्मेति श्रुतेः परस्य सत्यस्यावाङ्मनोगोचरस्य कथं ध्यातृध्यानध्येयादिव्यवहारगोचरत्वमित्याशङ्क्याह जन्मादिति अस्य जगतो जन्मस्थितिभङ्गा यतः परात्सत्यात् तं धीमहीत्यर्थः यतो वा इमानि भूतानि जायन्ते इति श्रुतिसिद्धजगत्कारणरूपेणावाङ्मनोगोचरस्यापि ध्यातृध्यानादिव्यवहारो घटत इति भावः ननु ब्रह्मणः सिद्धरूपत्वात्प्रमाणान्तरागोचरत्व मतस्तत्र वेदान्तानामनुवादकत्वादप्रामाण्यमित्याशङ्क्याह अन्वयादिति वेदान्तानां ब्रह्मण्येवान्वयात्तात्पर्यादित्यर्थः तथाच श्रुतिस्मृती सर्वे वेदा यत्पदमामनन्ति वेदैश्च सर्वैरहमेव वेद्य इति प्रमाणान्तरसिद्धत्वेन ह्यननुवादकत्वं सिद्धमित्यपि ज्ञातव्यं न केवलं श्रुत्यन्वयात् स्मृत्यन्वयाच्चेत्याह इतरश्चेति अहं सर्वस्य जगतः प्रभवः प्रलयस्तथेति स्मृतितश्चेत्यर्थः अथवा प्रतिपदोक्तविवक्षितार्थसिद्धये हेतुमाह अन्वयादि तरतश्चेति अस्ति प्रकाशते इति ब्रह्मणश्च कार्यप्रपञ्चे मृदादेरिव घटादौ समन्वयादितरतो प्रकाशव्यतिरेकेण कदाचिदपि कस्याप्यप्रति भासान्मृदादिव्यतिरेकेण घटादेरिवेत्यन्वयव्यतिरेकौ दर्शितौ अथवा ब्रह्मणिकारणपक्षे महदादिकार्य्यदर्शनादन्यथाऽदर्शनादिति सत्तास्थित्योरन्वयव्यतिरेकौ दर्शितौ ननु तर्हि सांख्यपरिकल्पितं प्रधानमेव जगत्कारणमस्तु किं ब्रह्मणेति तत्राह अर्थेष्वभिज्ञ इति उत्पाद्यसर्वपदार्थेष्वभिज्ञः सः अभितः सर्वतः सर्वमिदं जानातीति एवम्विधस्यैव कारणत्वं नेतरस्य प्रधानस्य जड़त्वान्न सर्वज्ञत्वं तथाच यःसर्वज्ञ इति श्रुतिः तर्ह्यर्थेष्वभिज्ञानां जीवानामेव जगत्कारणत्वमास्त्वित्याशङ्क्याह स्वराडिति स्वयमेव राजत इति स्वराट् जीवानां परिच्छिन्नज्ञानत्वेन पराधीनत्वान्न स्रष्टृत्वं सम्भवतीत्यर्थः एष सर्वेश्वरः एष सर्वलोकपाल इति श्रुतेः नन्वीश्वरस्यापि न तस्य कार्यं कारणं च विद्यत इति श्रुत्याकार्य्यकारणाद्यभावात् कथं सर्वज्ञत्वमिति तत्राह तेने ब्रह्मेति आदिकवये ब्रह्मणे यः ब्रह्म ऋग्वेदादिलक्षणं साङ्गं वेदं हृदा मनसा मनोमात्रेण साधनान्तरनिरपेक्षतया तेने स्वर मात्रा वर्ण पद वाक्यादिक्रमेण विस्तारितवान् ब्रह्मणा उपाधिभूतां बुद्धिं निर्माय तत्र वेदं प्रकाशितवानित्यर्थः अथवा हृदोपनिषदा सह सङ्कल्पमात्रेण कार्य्यकारणसम्बन्धरहितोऽपि भगवान् सर्वान्तर्यामी ब्रह्मादिकार्य्यकारणसाक्षित्वेन सर्वज्ञ इत्यर्थः एवं जगत्कारणे सच्चिदानन्दात्मके वैदिक वेद्य निरवद्ये सर्वेश्वरे परैरुद्भाव्यदोषकलापि नास्तीत्यभिधत्ते मुह्यन्तीति यं प्रति सूरयः कपिलादयः शास्त्रप्रणेतारः मुह्यन्तीत्युक्ते तत्प्रणीतशास्त्रस्य निर्मूलत्वेनाप्रामाण्यात्तद्विरोधिग्रन्थो नास्तीत्यर्थः नानाऽसत्तर्ककलिलान्तःकरणदुरवग्रहवादिनां विवादानवसरे उपरतसमस्तमायामये भगवति कोऽस्तु दुर्घट इति स्वोक्तेः अतः परमसत्यादप्युत्पन्नस्य जगतः कुतः सत्यत्वं किन्तु मिथ्यात्वमेवेति दर्शयति तेजोवारीति विनिमयः कार्य्यं तेजो विनिमयः केशोण्ड्रकादि वारिणो विनिमयः हिमकरकादिः मृदो विनिमयो घटादिः यथा येन प्रकारेण तथा कारणसत्ताप्रतीति व्यतिरेकेण कार्य्यस्य पृथक् सत्ताप्रतीतिशून्यत्वमेवात्र मिथ्यात्वं तद्वत्तेजोवारिमृदामपि कारणसत्ताप्रतीति व्यतिरेकेण कार्य्यस्य पृथकसत्ताप्रतीत्यभावान्मिथ्यात्वमित्यर्थः किं च त्रिवृत्कृतानां चोभयेषां दृष्टान्तदार्ष्टान्तिकव्याजेन मिथ्यात्वं कथितमिति सम्प्रदायविदामभिप्रायः ननु ब्रह्मणो जगत्कारणत्वे क्रियाकारकादिसम्बन्धादसङ्गो ह्ययं पुरुष इति विरुद्ध्येतेत्यतो वाह तेजोवारीति त्रिसर्गस्त्रयाणां सर्गः तेजोवारिमृदां सर्गं उपलक्षणं चैतत् पञ्चभूतानां सृष्टिः यत्र मृषा कथं यथा तेजोवारिमृदां विनिमयो मिथ्या तथा जगदपि मिथ्येत्यर्थः वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमिति श्रुतेः इदानीमेवंविधप्रपञ्चकारणत्वेन कल्पितमायासम्बन्धनिबन्धनं किञ्चिदपि चिद्रूपपरमसत्यात्मके ईश्वरे स्वदृष्ट्यावस्तुगत्यापि नास्तीति दर्शयति धाम्नेति । धाम्नाप्रकाशेन स्वेनस्वरूपभूतेनात्मचैतन्ये नोपचारतः कारणत्वेन कल्पितेन सदासर्वदानिरस्तं निराकृतं कुहकं कपटाख्यं येन स तथोक्तः तं सदेति । जीवाद्विलक्षण्यप्रदर्शनाय अर्थादसङ्गत्वं कूटस्थत्वं चोक्तं तस्मादेकमेव ब्रह्मोपहितानुपहितभेदेन द्वेवाव ब्रह्मणोरूपे मूर्त्तञ्चैवा मूर्त्तञ्चेति श्रुत्या प्रतिपाद्यते तत्र सगुणब्रह्मोपासनाजनितेन ज्ञानेन शुद्धान्तःकरणस्य निर्गुणब्रह्मोपास्तौ बुद्धिरुपतिष्ठते । ततश्च सकलं स्वात्मानं पश्यन्नात्मव्यतिरिक्तं किञ्चिदप्यपश्यन्निर्गुण एवावतिष्ठते । इत्येषोऽर्थोऽनेन प्रतिपाद्यते नापरोऽप्रामाणिक इति । तदेतत् कण्ठशोषणप्रलापज्वलनज्वालातुल्यमिति न परीक्षकाः क्षणमपि कटाक्षेण प्रेक्षन्ते पूर्वापरपर्यालोचनया स्वोत्प्रेक्षितयुक्तिविरुद्धत्वाच्छ्रुतिस्मृतीनां सत्तात्पर्यार्थत्वात् प्रत्यक्षादिप्रमाणप्रहरणप्रहतशिरस्कत्वादाचार्यैस्तत्र तत्र निराकृतत्वाच्छ्रुत्यादीनां मिथ्यात्वपरत्वे विरोधस्य दर्शितत्वादस्मदुक्तार्थे बहुप्रमाणसम्भवाद्ग्रन्थबाहुल्यभयान्नतन्निराकरणं प्रपञ्च्यते न हि अपरस्परसम्भूतं किमन्यत्कामहैतुकमिति वदतां सम्प्रदाय वित्त्वमिति ॥ १ ॥

क्रमसंदर्भः ।

श्रीश्रीकृष्णचैतन्यचन्द्राय नमः ।

अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया । चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥ १ ॥ श्रीमद्भागवतं नौमि यदैश्यकस्य प्रसादतः ।

। क्रमसन्दर्भः ।

अज्ञातावपि जानाति सर्वः सर्वागमानपि ॥ २ ॥ श्रीभागवतसन्दर्भान् श्रीमद्वैष्णवतोषणीम् । दृष्ट्वा भागवतव्याख्या लिख्यतेऽत्र यथामति ॥ ३ ॥ यदत्र स्खलितं किञ्चिज्जायतेऽनवधानतः । ज्ञेयं न तत्तत्कर्त्तॄणां समाहर्त्तुर्ममैव तत् ॥ येषां प्रोत्साहनेनास्मि प्रवृत्तोऽस्यन्तसाहसे । ते दीनानुग्रहव्यग्राः शरणं मम वैष्णवाः ॥ ५ ॥

अथ श्रीभागवतलोकहिताभिलाषपरतया श्रीभागवतसन्दर्भनामानं ग्रन्थमारभमाणो महाभागवतकोटिबहिरन्तर्दृष्टिनिष्टङ्कितभगवद्भावं निजावतारप्रचारप्रचारितस्वस्वरूपभगवत्पदकमलावलम्बि दुर्लभप्रेमपीयूषमयगङ्गाप्रवाहसहस्रं स्वसम्प्रदायसहस्राधिदैवं श्रीश्रीकृष्णचैतन्यदेवनामानं भगवन्तं कलियुगेऽस्मिन् वैष्णवजनोपास्यावतारतयार्थविशेषालिङ्गितेन श्रीभागवतसंवादेन स्तौति । "कृष्णवर्णं त्विषाकृष्णं साङ्गोपाङ्गास्त्रपार्षदम् । यज्ञैः सङ्कीर्त्तनप्रायैर्यजन्ति हि सुमेधसः ॥" एकादशस्कन्धस्य कलियुगोपास्यप्रसङ्ग पद्यमिदम् । अस्यार्थविशेषस्तत्रैव दर्श्यते । तन्निर्गलितार्थमाह । अन्तः कृष्णं बहिर्गौरं दर्शिताङ्गादिवैभवम् । कलौ सङ्कीर्त्तनाद्यैः स्मः कृष्णचैतन्यमाश्रिताः ॥ अथ निजगुरुपरमगुरू स्तौति । जयतां मथुराभूमौ श्रीलरूपसनातनौ । यौ विलेखयतस्तत्त्वज्ञापकौ पुस्तिकामिमाम् ॥ तौ सन्तोषयता सन्तौ श्रीलरूपसनातनौ । दाक्षिणात्येन भट्टेन पुनरेतद्विविच्यते ॥ तस्याद्यं ग्रन्थनालेखं क्रान्तव्युत्क्रान्तखण्डितम् । पर्य्यालोच्याथ पर्य्यायं कृत्वा लिखति जीवकः ॥ पूर्वं यान्येव वाक्यानि धृतान्यर्थविशेषतः । तानि मूलक्रमेणापि धार्य्याणि क्रमलब्धये ॥ धार्य्याण्यर्थविशेषार्थमधृतान्यपि कानिचित् । तत्रेति शब्दः कर्त्तव्यः कचिद्व्याख्या च केवला ॥ स्थानञ्च मुहुरङ्काभ्यां ज्ञेयं सन्दर्भवाक्ययोः । तत्राङ्कास्तत आशब्दात् तदङ्कादिष्वतीष्यताम् ॥ व्याशब्दात् तद्गतव्याख्यागतं तद्वाक्यमीयताम् । तथा पुनश्चेति शब्दादन्यात्रापीति दृश्यताम् ॥ यत्र व्याख्यागतं वाक्यव्याख्यानं तच्छिदाकृते । द्वौ तत्र प्रणवौ लेख्यौ तयोर्मध्यन्तु गृह्यताम् ॥ यः स्कन्धाध्याययोरङ्कः स तु तच्छेदकः स्फुटम् । न तत्र प्रणवापेक्षापीति सर्वत्र वीक्ष्यताम् ॥ अत्र सर्वग्रन्थार्थं संक्षेपेण दर्शयन्नपि मङ्गलमाचरति । यस्य ब्रह्मेति संज्ञां क्वचिदपि निगमे याति चिन्मात्रसत्ताप्यंशो यस्यांशकैः स्वैर्विभवति वशयन्नेव मायां पुमांश्च । एकं यस्यैव रूपं विलसति परमे व्योम्नि नारायणाख्यं स श्रीकृष्णो विधत्तां स्वयमिह भगवान् प्रेम तत्पादभाजाम् ॥ अथैवं सूचितानां श्रीकृष्णवाच्यवाचकतालक्षणसम्बन्धतद्भजनलक्षणाभिधेयतत्प्रेमलक्षणप्रयोजनानां निर्णयाय पूर्वं तत्त्वसन्दर्भादिषट्सन्दर्भा निरूपिताः । अधुना तु श्रीमद्भागवतक्रमव्याख्यानाय तत्रापि सम्बन्धाभिधेय प्रयोजन निर्णय दर्शनाय च सप्तमः क्रमसन्दर्भोऽयमारभ्यते । श्रीभागवतनिध्यर्थो टीकादृष्टिरदायि यैः । श्रीधरस्वामिपादांस्तान् वन्दे भक्त्येकरक्षकान् ॥ स्वामिपादैर्न यद्व्यक्तं यद्व्यक्तं चास्फुटं क्वचित् । तत्र तत्र च विज्ञेयः सन्दर्भः क्रमनामकः ॥ ( अथात्र परिभाषेयं ज्ञातव्या यद्यपेक्ष्यते । मूलं सटीकमङ्काद्यैः परिच्छिद्य सहान्वया ॥ अङ्का वाक्यान्त एवात्र देया पद्यान्ततो न तु । बहुपद्यैकवाक्यत्वे गर्भाङ्का विन्दुमस्तकाः ॥ यस्मिन् पद्ये नास्ति टीका तदप्यङ्केन योजयेत् । एकपद्यान्यवाक्यत्वे संख्याशब्दास्तु कालतकाः ॥ बहुपद्यैकवाक्यत्वेऽप्यमीज्ञेयास्तथाविधाः । यथार्द्धकं युग्मकञ्च त्रिकमित्याद्युदाहृतिः ॥ )

जन्माद्यस्येत्यत्र श्रीश्रीधरस्वामिचरणानामयमभिप्रायः । परं परमेश्वरमिति ॥ न पुनरभेदवादिनामिव चिन्मात्रं ब्रह्मेत्यर्थः ध्येयध्यातृध्यानभेदावगमात् । सत्यमिति । तदुपलक्षत्वेन सत्यं ज्ञानमनन्तं ब्रह्मेत्युक्तलक्षणमित्यर्थः । अथ कस्मादुच्यते ब्रह्म बृंहति बृंहयति चेति श्रुतेः । बृहत्त्वाद्बृंहणत्वाच्च यद्ब्रह्म परमं विदुरिति विष्णुपुराणोक्तेश्चात्रापि शक्तिमत्त्वेन ब्रह्मशब्दस्य परमेश्वरवाचकत्वात् । तत्र सत्यत्वसाधकं यत्र त्रिसर्गो मृषेति । यत्र यदाश्रयतयेत्यर्थः । अत्र दृष्टान्तः तेज इति । तद्वद्यत्रारोपित इत्यर्थः । तदारोपकर्त्तृत्वं त्वस्माकं जीवानामेवेति लभ्यते । यत्रारोप्यते तच्च परं यद्यचेतनं चेतनं वा स्यात्तदा जीवानामेवारोपकर्त्तृत्वेन तत्र स्वाज्ञानस्य त्रिसर्गस्य सम्बन्धो न स्यात् किन्तु जीवेष्वेव मरीचिकादाविव जलादेस्तद्भ्रमहेतवज्ञानस्य च । किन्त्वत्र तत्तु चेतनम् अभिज्ञ इति योजयिष्यमाणत्वात् । तत्रैव स्वराडित्यनेन ज्ञानरूपस्यापि स्वरूपज्ञानेनैव ज्ञातृत्वाङ्गीकाराच्च । ततो यद्व्यष्ट्यंशोपाधित्वेन जीवा भ्रान्ताः स्युस्तच्च समष्ट्युपाधित्वेन स तु सुतरां तादृशः स्यादित्याशङ्कामनूद्य सिद्धान्तयति यत्रेत्यनेनेति । महसेति स्वतःसिद्धपरमज्ञानशक्तित्वेनेत्यर्थः तथाग्रे व्याख्यास्यमानत्वात् । स्वरूपमात्रे वाच्ये स्वशब्देनैव चरितार्थता स्यात् । कथञ्चित् तन्मात्रे वाच्येऽपि हेतुत्वलक्षणेन तृतीयार्थे न तच्छक्तिमेव बाधयेत् । द्वितीयादीनां प्रातिपदिकाधिकार्थ एव विहितत्वात् । तस्य च ज्ञानोपाधिरूपत्वे स्वशब्दवैयर्थ्यं स्यात् । कुहकमत्र मायोपाधिकृतभ्रमपराभवः मायां व्युदस्य चिच्छक्त्या कैवल्य स्थित आत्मनीति श्रीमदर्जुनवचनात् । किन्तु यत्रेत्यनेन लब्धस्य परमेश्वरस्य चिन्मात्रेण स्वरूपांशेन सततानुभूयमानस्वाभेदमेवावलम्ब्य भ्रमाधिष्ठानत्वं स्वीकृतं न तु जीवस्य स्वाभेदमननांशेन । परमेश्वरस्य तु ध्यातुरपि ( ध्यातुमपि ) प्रार्थनीयतया स्वानुभवातीतत्वात्तदेकवस्तुत्वं व्याहन्येतेति विवेचनीयम् । अथ तत्तत् सर्वं घटयितुं तटस्थलक्षणं जन्माद्यस्य यत इति । न तु मरीचिकादौ जलादिवत् केवलमारोपितं स्वतस्त्वन्यत्र सिद्धं खिलत्वनादिपरम्परया तत्रैव यदारोपितत्वं तन्मात्रसिद्धत्वाद्भूयत एवास्य जन्मादीति गम्यते तद्दृष्टान्तेनैव जन्मादिसिद्धौ जन्माद्यस्य यत इत्यस्य पुनरुक्तत्वापातात् । ततोऽस्य जन्मादौ हेतुः अन्वयादितरतश्चार्थेष्विति । तत्र प्रथमोऽर्थस्तु अन्वयेन तस्यैव कारणत्वबोधकः व्यतिरेकेण तदकार्य्यस्यासत्त्वबोधको ज्ञेयः । अत्र व्यतिरेकपदेनार्थेतरक्षेपलब्धम् । तच्च खपुष्पादिरूपमिति तथा व्याख्यातम् । द्वितीयस्तृतीयश्च तस्य कारणत्वं विश्वस्य कार्य्यत्वं बोधयति । अत्र द्वितीये त्वर्थे शब्दः कार्य्यकारणपरः । कारणस्य स्वावस्थायां कार्य्यावस्थायाश्चानुवृत्तित्वम् । कार्य्याणान्तु परस्परं कारणावस्थायाश्च व्यावृत्तित्वं ज्ञेयम् । एवं शून्यवादारम्भवादौ परिहृतौ । तथात्र बहिर्मुखप्रवृत्त्यर्थं युक्तीः प्रदर्श्य अन्तर्मुखान् प्रति शास्त्रयोनित्वादिति न्यायेन श्रुतीर्दर्शयति तथा चेति । अत्र च यतो वा इमानि भूतानि इत्यादि वाक्यवद्व्यतिरेकोऽपि ज्ञेयः कथमसतः सज्जायेतेत्यादि । तत्र तस्य मरीचिकादृष्टान्तेन प्राप्तमचेतनत्वं स्पष्टमेव निवारयन् परमतं प्रधानञ्च प्रत्याचष्टे तदीक्षत्यादिना । अभिज्ञ इति । तत्रास्तु तावदचेतनत्वम् अभि सर्वतो भावेन च तज्ज्ञातृत्वं श्रूयते इत्यर्थः । तत्तत्सर्वविचारात्मकत्वादीक्षणस्य । ईक्षतेर्नाशब्दमितिन्यायमर्थः । परमतं प्रधानं विश्वकारणं न भवति न विद्यते शब्दः प्रमाणं यत्र तथाभूतं हि तत् । कुतोऽशब्दत्वं तस्य तत्राह ईक्षतेरिति । सच्छब्दवाच्यकारणव्यापाराभिधायित्वेन तत्रेक्षधातोः श्रवणात् । ईक्षणञ्च चेतन एव सम्भवति प्रधानं त्वचेतनमिति । तत्तु यत्र त्रिसर्गे आरोप्यते तद्वत्वचेतनं यत्त्वारोप-

क्रमसन्दर्भः।

कर्त्ता जीवः स खलु सर्वारोपकत्वाच्चेतनः सर्वज्ञश्च स्यात्। तस्य च बहुस्यामित्यादिवाक्यं स्वाज्ञानकल्पितत्वेन स्वप्नद्रष्टृव्यवत् स्वाभेदापेक्षयेत्याशङ्क्याह तर्हि किं जीवः स्यादिति। सिद्धान्तयति नेत्याहेति। परासिद्धज्ञानत्वेन सर्वज्ञत्वं सर्वस्रष्टृत्वञ्च न स्यात्। तस्मादन्तर्यामिश्रुत्युक्तंतत्सिद्धज्ञानत्वेनारोपणाकर्त्तृत्वमपि तत एव सिद्ध्यतीति कर्त्तृत्वमपि तस्यैव स्यादिति भावः। तत्रोदाहरणाभासेन विरिञ्चेः स्वतःसिद्धज्ञानत्वमाशङ्क्याह तर्हि किमिति। सिद्धान्तयति नेत्याह। तेन इतीति। तदेवं ज्ञानप्रदत्वेन मोक्षप्रदत्वमपि दर्शितम्। एवं जीवस्य तदज्ञानस्य च तस्मादत्यन्तभेदप्राप्तावपि सिद्धान्तितं सत्यमित्यनेनैव। तत्सत्तयैव सर्वसत्तास्वीकारात्। तदेवं सर्वसत्ताप्रदं सर्वाधिष्ठानं सर्वदोषास्पृष्टं स्वरूपासिद्धसर्वज्ञानादिसमवेतं सर्वकर्त्तृमोक्षदातृ च सत्यानन्तानन्दज्ञानस्वरूपं परं ध्येयमिति वाक्यार्थः। स्वतःसिद्धज्ञानादित्वं शारीरकभाष्यादौ चेक्षतेर्नाशब्दमित्यत्र स्वीकृतं प्रकृतिक्षोभात् पूर्वमीक्षणानुपपत्त्या। मन्त्रौ चेमावुदाहृतौ। अपाणिपादो जवनो गृहीता पश्यत्यचक्षुः स शृणोत्यकर्णः। स वेत्ति विश्वं न हि तस्य वेत्ता तमाहुरग्र्यं पुरुषं पुराणमिति। न तस्य कार्य्यं करणञ्च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते। परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेति च। अत्राद्वैतवादिनः समादधते। यदि ज्ञेयं सत्यं स्यात् तदा तस्य ज्ञातृत्वमपि तथा स्यात्। त्रिसर्गस्याज्ञानकल्पितत्वादज्ञातस्य सत्तासत्ताभ्यामनिर्वचनीयत्वादज्ञानिनो जीवस्य च तेनाज्ञानेनैव पृथक् प्रतीतत्वात् सत्यत्वं नास्त्येव ततो ज्ञातृत्वमपि तत्र नास्त्येव तथा शक्त्यन्तरमपीति। वैष्णवास्तु तदभ्युपगमवादेनैवं वदन्ति। तर्हि मिथ्यैवेदं जीवानां भातीत्यपि ज्ञानं तस्याव्यभिचारि स्यात्। येन च ज्ञानेन मृषा निरस्यते तस्य तु सत्यत्वमेव स्यात्। किञ्च विश्वकार्य्योन्यथानुपपत्त्या यथा परमकारणरूपं तदभ्युपगम्यते तथा तच्छक्तिरपि स्वाभाविक्येवाभ्युपगम्यते। कार्य्यविशेषोत्पत्तौ किंचित् करणत्वेनैव कारणतया वस्तुविशेषाङ्गीकारात् किञ्चित्करणत्वमेव स्वाभाविकशक्तिरिति। तदेवमज्ञानातिरिक्तस्वाभाविकज्ञानेन स्वगतविशेषत्वे प्राप्ते स्वाभाविकी ज्ञानबलक्रिया चेति प्रतिपादितम्। तदेव स्वरूपशक्तिरिति सैव सर्वं भगवत्त्वं साधयेत्। तेने ब्रह्म हृदेति व्यञ्जितमस्यैव महतो भूतस्य निश्वासितमेतदृग्वेद इत्यादिश्रुत्यन्तरम्। तस्य च निश्वासस्याप्राकृतत्वव्यञ्जकं नासदासीन्नो सदासीत् स आसीदिति श्रुत्यन्तरञ्च समुदितं सत्तस्याप्राकृतमूर्त्तिमत्त्वमपि व्यञ्जयति ततस्तन्निषेधस्तु प्राकृतपरिच्छिन्ननिषेधपरः एवं। यथोक्तं द्वितीयस्कन्धे वैकुण्ठवर्णने। न यत्र मायेति। दशमे च दर्शयामास लोकं स्वं गोपानां तमसः परमिति। अतएवात्मारामाणामपि तच्छक्तिवैभवानुभवे परमानन्दविशेषो जायते। आत्मारामाश्च मुनय इत्यादिभ्यः। अतो जीवानां तादृशशक्त्यैव तदीयरश्मिस्थानीयत्वेन नित्यसिद्धानां तन्मायावृत ज्ञानानां तज्ज्ञानासिद्धये स एव ध्येय इति। तं धीमहीत्यादिप्रमाणवचने गायत्रीशब्देन तत्सूचकतदव्यभिचारिधीमहिपदसम्वलिततदर्थ एवेष्यते। सर्वेषामपि मन्त्राणामादिरूपायास्तस्याः साक्षाल्लिखनानर्हत्वात्। तदर्थताच। जन्माद्यस्य यत इति प्रणवार्थः सृष्ट्यादिशक्तिमत्तत्त्ववाचित्वात्। यत्र त्रिसर्गो मृषेति व्याहृतित्रयार्थः। उभयत्रापि लोकत्रयस्य तदनन्यत्वेन विवक्षितत्वात्। स्वराडिति सवितृप्रकाशकपरमतेजोवाचि। तेने ब्रह्म हृदेतिबुद्धिवृत्तिप्रेरणाप्रार्थना सूचिता। तदेवं कृपया स्वाध्ययनाय बुद्धिवृत्तिं प्रेरयतादिति भावः। तच्च तेजः अन्तस्तद्धर्मोपदेशादित्यादिसंप्रतिपन्नं यन्मूर्त्तं तदनाद्यनन्तमूर्त्तिमद्ध्येयमिति। एवमग्निपुराणे गायत्र्यार्थः श्रीभगवानेवाभिमतः। तद्वचनानि तत्त्वसन्दर्भे दृश्यानि। अत्रैवाग्रे दर्शयितव्यानि। धर्मविस्तर इत्यत्र धर्मशब्दः परमधर्मपरः। धर्मः प्रोज्झितकैतवोऽत्र परम इत्यत्र प्रतिज्ञातत्वात्। स च भगवद्ध्यानादिलक्षण एवेति व्यक्तीभविष्यति। वृत्रासुरवधोपेतमिति तस्य परमभागवतत्वात्तद्वधरूपचरितं श्रीभागवतलक्षणत्वेन धृतम्। पुराणान्तरे वामनसंज्ञे। हयग्रीवब्रह्मविद्येति वृत्रासुरबधसाहचर्य्येण नारायणवर्मैवोच्यते। हयग्रीवशब्देन ह्यत्राश्वशिरा दधीचिरेव लभ्यते। तेनैव च प्रवर्त्तिता नारायणवर्माख्या ब्रह्मविद्या। तस्याश्वशिरस्त्वं षष्ठे। यद्वा अश्वशिरोनामेत्यत्र प्रसिद्धं नारायणवर्मणो ब्रह्मविद्यत्वञ्च। एतत् श्रुत्वा तथोवाच दध्यङ्ङाथर्वणस्तयोः। प्रवर्ग्यं ब्रह्मविद्याञ्च सत्कृतोऽसत्यशङ्कित इति टीकोत्थापितवचने चेति। एवं स्कान्दप्रभासखण्डे च। यत्राधिकृत्य गायत्रीमित्यादि। सारस्वतस्य कल्पस्य मध्ये ये स्युर्नरामराः। तद्वृत्तान्तोद्भवं लोके तच्च भागवतं स्मृतम्। लिखित्वा तच्चेत्यादि। अष्टादश सहस्राणीत्यादीति। श्रीमद्भागवतस्य श्रीमद्भगवत्प्रियत्वेन भागवताभीष्टत्वेन च परमसात्त्विकत्वमाह पद्मपुराणे च इति। तत्रैव च श्रीगौतमस्याम्बरीषं प्रति प्रश्नः। पुराणं त्वं भागवतं पठसे पुरतो हरेः। चरितं दैत्यराजस्य प्रह्लादस्यानुभूयत। तत्र वञ्जुलीमाहात्म्ये तस्य तस्मिन्नुपदेशः। रात्रौ तु जागरः कार्य्यः श्रोतव्या वैष्णवी कथा। गीता नामसहस्रञ्च पुराणं शुकभाषितम्। पठितव्यं प्रयत्नेन हरेः सन्तोषकारणमिति। स्कान्द प्रह्लादसंहितायां द्वारकामाहात्म्ये। श्रीमद्भागवतं भक्त्या पठते हरिसन्निधौ। जागरे तत्पदं याति कुलवृन्दसमन्वित इति। श्रीतत्त्ववादिधृते गारुडवचने च पूर्णः सोऽयमतिशयः। अर्थोऽयं ब्रह्मसूत्राणां भारतार्थविनिर्णयः। गायत्रीभाष्यरूपोऽसौ वेदार्थपरिबृंहितः। पुराणानां सामरूपः साक्षाद्भगवतोदितः। द्वादशस्कन्धयुक्तोऽयं शतविच्छेदसंयुतः। ग्रन्थोऽष्टादशसाहस्रः श्रीमद्भागवताभिध इति। ब्रह्मसूत्राणामर्थस्तेषामकृत्रिमभाष्यभूत इत्यर्थः। तस्मात्तद्भाष्यभूते स्वतःसिद्धे तस्मिन् सत्यर्वाचीनमन्यदन्यद्भाष्यं स्वस्वकपोलकल्पितं तदनुगतमेवादरणीयमिति गम्यते। भारतस्यार्थविनिर्णयो यत्र सः। भगवत्येव तात्पर्यात् तस्यापि। यद्वाभारतार्थस्य विनिर्णयो वेदार्थतुल्यत्वेन विनिर्णयो यत्रेति। गायत्रीभाष्यरूपोऽसाविति। अत्र द्वादशे ॐ नमस्त इत्यादि गद्येषु तदर्थत्वेन सूर्य्यः स्तुतः तत् परमात्मदृष्ट्यैव न तु स्वातन्त्र्येणेत्यदोषः। यथैवाग्रे श्रीशौनकवाक्यम्। ब्रूहि नः श्रद्दधानानां व्यूहं सूर्य्यात्मनो हरेरिति। न चास्य भर्गस्य सूर्य्यमण्डलमात्राधिष्ठानत्वं मन्त्रे वरेण्यशब्दे तात्र च ग्रन्थे परशब्देन पारमैश्वर्य्यपर्यन्ततायाः दर्शितत्वात्। तदेवमग्निपुराणेऽप्युक्तम् ध्यानेन पुरुषोऽयञ्च द्रष्टव्यः सूर्य्यमण्डले। सत्यं सदाशिवं ब्रह्म तद्विष्णोः परमं पदमिति। श्रीमद्भागवताभिध इति। भागवतत्वं भगवत्प्रतिपादकत्वम्। श्रीमत्त्वं भगवन्नामादेरिव तादृशस्वाभाविकशक्तिमत्त्वम्। नित्ययोगे मतुप्। अतः संप्रत्ततथैव निर्दिष्ट नीलोत्पलवत्प्रमाणत्वमेव बोधितम्। अन्यथा स्वविशुद्धविधेयांशसाद्दोषः स्यात्। अतएवोक्तं श्रीमद्भागवते महामुनिकृते इति। गारुडे च ग्रन्थोऽष्टादशसाहस्रः श्रीमद्भागवताभिध इति स्कान्दे च। श्रीमद्भागवतं भक्त्या पठते हरिसन्निधाविति। टीकाकृद्भिरपि श्रीमद्भागवताभिध इति

: क्रमसंदर्भः ।

अतः कश्चित् केवलभागवताख्यत्वन्तु सत्यभामा भामेतिवत् । पुराणानां सामरूप इति । वेदेषु सामवत् पुराणेषु श्रेष्ठ इत्यर्थः । साक्षात् भगवतोदित इति । कस्मै येन विभाषितोऽयमित्युपसंहारवाक्यानुसारेण ज्ञेयम् । शतविच्छेदसंयुत इति विस्तरभिया न विव्रियते । सम्वत् सरप्रदीपधृतस्कान्दवचने । तदेवं श्रीमद्भागवतं सर्वशास्त्रचक्रवर्त्तिपदमाप्तमिति स्थिते हेमसिंहासनारूढमिति तैर्व्याख्यातं तदेव युक्तम् । अतः श्रीमद्भागवतस्यैवाऽभ्यासावश्यकत्वं श्रेष्ठत्वञ्च स्कान्दे निर्णीतम् । शतशोऽथ सहस्रैश्च किमन्यैः शास्त्रसंग्रहैः । न यस्य तिष्ठते गेहे शास्त्रं भागवतं कलौ । कथं स वैष्णवो ज्ञेयः शास्त्रं भागवतं कलौ । गृहे न तिष्ठते यस्य स विप्रः श्वपचाधमः ॥ यत्र यत्र भवेद्विप्र शास्त्रं भागवतं कलौ । तत्र तत्र हरिर्याति त्रिदशैः सह नारद ॥ यः पठेत् प्रयतो नित्यं श्लोकं भागवतं मुने । अष्टादशपुराणानां फलं प्राप्नोति मानव इति । तदेवं परमार्थविवित्सुभिः श्रीभागवतमेव साम्प्रतं विचारणीयमिति स्थितम् । अतएव सत्स्वपि नानाशास्त्रे ष्वेतदेवोक्तम् । कलौ नष्टदृशामेष पुराणार्कोऽधुनोदित इति । अकतारूपकेण तद्विना नान्येषां सम्यग्वस्तुप्रकाशकत्वमिति प्रतिपद्यते । यस्यैव श्रीमद्भागवतस्य भाष्यभूतं श्रीहयशीर्षपञ्चरात्रे शास्त्रकथनप्रस्तावे गणितं तन्त्रन्तु भागवताभिधं तन्त्रम् । यस्य साक्षात् श्रीहनु-मद्भाष्य वासनाभाष्य सम्बन्धोक्तिविद्वत्कामधेनु-तत्त्वदीपिका-भावार्थदीपिका-परमहंसप्रिया-शुकहृदयादयो व्याख्याग्रन्थास्तथा मुक्ताफलहरिलीलाभक्ति रत्नावल्यादयो निबन्धाश्च विविधा एव तत्तन्मतप्रसिद्धमाहानुभावकृता विराजन्ते यदेवचहेमाद्रिग्रन्थस्य दानखण्डे पुराणदानप्रस्तावेमत्स्य पुराणीयतल्लक्षणधृत्या प्रशस्तम् । परिशेषखण्डस्य कालनिर्णये च कलियुगधर्मनिर्णये कलिं सभा-जयन्त्यार्थ्या इत्यादिकं यद्वाक्यत्वेनोत्थाप्य यत्प्रतिपाद्यधर्म एव कलावङ्गीकृतः । संवत्सरप्रदीपे च तत्कर्त्रा शतशोऽथ सहस्रैश्चे-त्यादिकं प्राग्दर्शितस्कान्दवचनजातमुत्थाप्य सर्वकलिदोषतः पाविऽयाय कतिचिच्छ्रीमद्भागवतवचनानि लेख्यानीति लिखितानि । अतएव सर्वगुणयुक्तत्वमस्यैव दृष्टं धर्मः प्रोज्झितकैतव इत्यादौ । वेदाः पुराणं काव्यञ्च प्रभुर्मित्रं प्रियेव च । बोधयन्तीति हि प्राहु-स्त्रिवृद्भागवतं स्मृतमिति मुक्ताफले हेमाद्रिकारवचने चेति । मत्स्यादीनां यत् पुराणाधिक्यं श्रूयते तत् त्वापेक्षिकमिति ।

अथ स्वव्याख्या । जन्माद्यस्येति । अत्र पूर्वार्द्धस्यार्थः । अर्थोऽयं ब्रह्मसूत्राणामिति गारुडोक्तेरस्य महापुराणस्य ब्रह्मसूत्रा-कृत्रिमभाष्यात्मकत्वात् प्रथमं तदुपादायैवावतारः । तत्र पूर्वमथातो ब्रह्मजिज्ञासेति व्याचष्टे तेजोवारिमृदामित्याद्यर्द्धेन । योज-नायां प्राथमिकत्वादस्य पूर्वत्वम् । अत्र ब्रह्मजिज्ञासेति व्याचष्टे परं धीमहीति । परं श्रीभगवन्तं धीमहि ध्यायेम । तदेवं मुक्तप्रग्रहया योगवृत्त्या बृहत्वात् ब्रह्म यत् सर्वात्मकं तद्वद्विश्च भवति तत् तु निजरश्म्यादिभ्यः सूर्य्य इव सर्वेभ्यः परमेव स्वतो भवतीति मूलरूप भगवत्प्रदर्शनाय परपदेन ब्रह्मपदं व्याख्यायते तच्चात्र भगवानेवेत्यभिमतं पुरुषस्य तदंशत्वात् निर्विशेषब्रह्मणो गुणादिहीनत्वात् उक्तं हि श्रीरामानुजाचार्य्यचरणैः । सर्वत्र बृहत्त्वगुणयोगेन हि ब्रह्मशब्दः प्रवृत्तः । बृहत्त्वञ्च स्वरूपेण गुणैश्च यत्रानाधिकातिशयः । सोऽस्य मुख्यार्थः । स च सर्वेश्वर एवेति । उक्तञ्च प्रचेतोभिः । न ह्यन्तो यद्विभूतीनां सोऽनन्त इतिगीयत इति । अतएव विविधमनोहरानन्ताकार-त्वेऽपि तत्तदाकाराश्रयपरमाद्भुतमुख्याकारत्वमपि तस्य व्यञ्जितम् । तदेवं मूर्त्तत्वे सिद्धे तेनैव परत्वेन तस्य विष्णवादिरूपकभग-वत्त्वमेव सिद्धं तस्यैव ब्रह्मशिवादिपरत्वेन दर्शितत्वात् । अत्र जिज्ञासेत्यस्य व्याख्या धीमहीति । यतस्तज्जिज्ञासायास्तात्पर्य्यं तद्ध्यान एव । तदुक्तमेकादशे स्वयं भगवता शब्दब्रह्मणि निष्णातो न निष्णायात् परे यदि । श्रमस्तस्य श्रमफलो ह्यधेनुमिव रक्षत इति । ततो धीमहीत्यनेन श्रीरामानुजमतं जिज्ञासापदं निदिध्यासनपरमेवेति स्वीयत्वे नाङ्गीकरोति श्रीभागवतनामा सर्ववेदादिसाररूपोऽयं ग्रन्थ इत्यायातम् । धीमहीति बहुवचनं कालदेशपरस्परास्थितस्य सर्वस्यापि तत्कर्त्तव्यताभिप्रायेण । अनन्तकोटिब्रह्माण्डान्तर्य्यामिणां पुरुषाणामंशिभूते भगवत्येव ध्यानस्य विधानात् । अनेनैकजीववादजीवनभूतो विवर्त्तवादोऽपि निरस्तः । ध्यायतिरपि भगवतो मूर्त्त-त्वमेव बोधयति ध्यानस्य मूर्त्त एवोत्कृष्टार्थत्वात् । सति च सुसाध्ये पुमर्थोपाये दुःसाध्यस्य पुरुषप्रवृत्त्या स्वत एवापकर्षात् तदुपासक-स्यैव युक्ततमत्वनिर्णयाच्च । तथाच श्रीगीतोपनिषदः । मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते । श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥ ये त्वक्षरमनिर्देश्यमव्यक्तं पर्य्युपासते । ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥ क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् । अव्यक्ता हि गतिर्दुःखंदेहवद्भिरवाप्यते इति ॥ इदमेव च विवृतं ब्रह्मणा । श्रेयःसृतिं भक्तिमुदस्य ते विभो क्लिश्यन्ति ये केवलबोधलब्धये । तेषामसौ क्लेशल एव शिष्यते नान्यद् यथा स्थूलतुषावघातिनामिति । अतएवास्य ध्येयस्य स्वयं भगवत्त्वमेव साधितं शिवादयश्च व्यावृत्ताः । तथा धीमहीति लिङा द्योतिता पृथगनुसन्धानबहिःप्रार्थना ध्यानोपलक्षितं भगवद्भजनमेव परमपुरुषार्थत्वेन व्यनक्ति । ततो भगवतस्तु तथात्वं स्वयमेव सुव्यक्तम् । ततश्च यथोक्तपरममनोहरमूर्त्तित्वमेव लक्ष्यते । तथाच साम्नि बृहद्वामं बृहत्पार्थिवं बृहदन्तरीक्षं बृहद्दिवं बृहद्वामं बृहद्भ्यो वाम वामेभ्यो वामामिति । तदेवं ब्रह्मजिज्ञासेति व्याख्यातम् अथात इत्यस्य व्याख्यामाह सत्यमिति । यतस्त-त्राथशब्द आनन्तर्य्ये अतःशब्दः पूर्ववृत्तस्य हेतुभावे वर्त्तते तस्मादर्थेति स्वाध्यायक्रमतः प्राक्प्राप्तकर्मकाण्डपूर्वमीमांसया सम्यक् कर्मज्ञानादनन्तरमित्यर्थः । अत इति तत्क्रमतः समनन्तरप्राप्तब्रह्मकाण्डे तूत्तरमीमांसया निर्णीयसम्यगर्थेऽधीतचरात् यत्किञ्चिदनुसंहि-तार्थात् कुतः कुतश्चिद्वाक्याद्धेतोरित्यर्थः । पूर्वमीमांसायाः प्रकृतार्थविरोधितर्कोपन्यासरूपपूर्वपक्षत्वेन उत्तरमीमांसात्मके सम्यगर्थ-निर्णायकसिद्धान्तानुकूलतर्कोपन्यासरूपोत्तरपक्षेऽस्मिन्नवश्यापेक्षत्वादविरुद्धांशेन सहायत्वात् कर्मणः शान्त्यादिलक्षणसत्त्वशुद्धिहेतु-त्वाच्च तदनन्तरमित्येव लभ्यम् । वाक्यानि चैतानि । तद् यथेह कर्मजितो लोकः क्षीयते एवमेवामुत्र पुण्यजितो लोकः क्षीयते । अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यकामां स्तेषां सर्वेषु लोकेषु कामचारो भवतीति न स पुनरावर्त्तत इति स आनन्त्याय कल्पत इति निरञ्जनः परमं साम्यमुपैतीति इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति चेति च । तदेतदुभय विवृतं श्रीरामानुजेन शारीरके । भीमांसापूर्वभागज्ञातस्य कर्मणोऽल्पास्थिरफलत्वं तदुपरितनभागावसेयस्य ब्रह्मज्ञानस्य त्वनन्ताक्षय्य-फलत्वं श्रूयते । अतः पूर्ववृत्तात् कर्मज्ञानादनन्तरं ब्रह्म ज्ञातव्यमित्युक्तं भवति । तदाह सर्वार्थवृत्तिकारो भगवान् बोधायनः । वृत्तात् कर्माधिगमादनन्तरं ब्रह्मविविदिषेति । एतदेव पुरञ्जनोपाख्याने च दक्षिणाग्रामकथायां पितृदेवप्रशब्दातिरुक्तौ व्यक्तमस्ति । तदेवं सम्यक् कर्मकाण्डज्ञानादनन्तरं ब्रह्मकाण्डगतेषु केषुचिद्वाक्येषु स्वर्गाद्यानन्दस्य वस्तुविचारेण दुःखरूपत्वव्यभिचारिसप्राकृतत्वज्ञानपूर्वकं [illegible]-

क्रमसन्दर्भः ।

स्वव्यभिचारिपरमानन्दत्वेन सत्यत्वज्ञानमेव ब्रह्मजिज्ञासायां हेतुरित्यथात इत्यस्यार्थे लब्धे तन्निर्गलितार्थमेवाह सत्यमिति सर्वसत्तादाव्यभिचारिसत्ताकमित्यर्थः । परमित्यनेतान्वयात । सत्यं ज्ञानमनन्तं ब्रह्म इत्यत्र श्रुतौ च ब्रह्मेत्यनेन तदेवमन्यस्य तदिच्छाधीनसत्ताकत्वेन व्यभिचारिसत्ताकत्वमायाति । तदेतद्व्यभिचारिसत्ताकमेव ध्यायन्तो वयम् इदानीं तु अव्यभिचारिसत्ताकं ध्यायेमेति भावः । अथ परत्वमेव व्यनक्ति धाम्नेति । धामशब्देनात्र प्रभाव उच्यते प्रकाशो वा गृहदेहत्विट्प्रभावा धामानीत्यमरादिनानार्थवर्गात् न तु स्वरूपम् । तथा कुहकशब्देनाव प्रतारणकृदुच्यते तच्च जीवस्वरूपावरणविक्षेपकारित्वादिना मायावैभवं ज्ञेयम् । तदुक्तं मायां व्युदस्य चिच्छक्त्येति । तस्या अपि शक्तेरसम्मुक्तत्वे स्वेनेत्यस्य वैयर्थ्यं स्यात् स्वस्वरूपेणेत्येव व्याख्याने तु स्वेनेत्यनेनैव चरितार्थता स्यात् । यथा कथञ्चित् तथा व्याख्यानेऽपि कुहकनिरसनलक्षणा शक्तिरेवापद्यते । सा च साधकतमतारूपा तृतीयया व्यक्तोत । एतेन मायातत्कार्यविलक्षणं यद्वस्तु तत् तस्य स्वरूपमिति स्वरूपलक्षणमपि गम्यम् । तच्च सत्यं ज्ञानमनन्तं ब्रह्मेति नित्यं विज्ञानमानन्दं ब्रह्मेति श्रुतिप्रसिद्धमेव एतत्श्रुतिलक्षकमेव च सत्यमिति विन्यस्तम् । तदेवं स्वरूपशक्तिश्च साक्षादेवोपक्रान्ता । अतः सुतरामेवास्य भगवत्त्वं स्पष्टम् । अथ सत्यत्वे युक्तिं दर्शयति यत्रेति । ब्रह्मत्वात् सर्वत्र स्थिते वासुदेवे भगवति यस्मिन् स्थितस्त्रयाणां गुणानां भूतेन्द्रियदेवतात्मको यस्यैवेशितुः सर्गोऽप्ययममृषा शुक्त्यादौ रजतादिकमिवारोपितो न भवति । किन्तु यतो वा इमानीति श्रुतिप्रसिद्धे ब्रह्मणि यत्र सर्वदा स्थितत्वात् संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशानिति न्यायेन यदेककर्तृत्वाच्च सत्य एव । तत्र दृष्टान्तेनाप्यमृषात्वं साधयति तेज आदीनां विनिमयः परस्परांशव्यत्ययः परस्परस्मिन्नंशेनावस्थितिरित्यर्थः । स यथा मृषा न भवति किन्तु यथैवेश्वरनिर्माणं तथेत्यर्थः । इमास्तिस्रो देवतास्त्रिवृदेकैका भवति । यदग्नेरोहितं रूपं तेजसस्तद्रूपं यत् शुक्लं तदपां यत् कृष्णं तदन्नस्येति श्रुतेः । तदेवमर्थस्यास्य श्रुतिमूलत्वात् कल्पनामूलस्त्वन्योऽर्थः स्वत एव परास्तः । तत्र च सामान्यतया निर्दिष्टानां तेज आदीनां विशेषत्वे संक्रमणं न शाब्दिकानां हृदयमध्यारोहति । यदि च तदेवामंस्यत तदा वाष्पादीनि मरीचिकादिषु यथेत्येवावक्ष्यत । किञ्च तन्मते ब्रह्मतस्त्रिसर्गस्य मुख्यं जन्म नास्ति किन्त्वारोप एव जन्मेत्युच्यते स पुनर्भ्रमादेव भवति भ्रमश्च सादृश्यावलम्बी सादृश्यन्तु कालभेदेनोभयमेवाधिष्ठानं करोति रजतेऽपि शुक्तिभ्रमसम्भवात् । न चैकात्मकं भ्रमाधिष्ठानं बह्वात्मकन्तु भ्रमकल्पितमित्यस्ति नियमः । मिथो मिलितेषु विदूरवर्त्तिधूमपर्वतवृक्षेष्वखण्डमेघभ्रमसम्भवात् । तदेवं प्रकृतेऽप्यनादित एव त्रिसर्गः प्रत्यक्षं प्रतीयते । ब्रह्म च चिन्मात्रतया स्वत एव स्फुरदस्ति । तस्मादनाद्यमानाक्रान्तस्य जीवस्य यथा स्वद्रूपतासादृश्येन ब्रह्मणि त्रिसर्गभ्रमः स्यात् तथा त्रिसर्गेऽपि ब्रह्मभ्रमः कथं न कदाचित् स्यात् । ततश्च ब्रह्मण एवाधिष्ठानत्वमित्यनिर्णये सर्वनाशप्रसङ्गः । ततश्च श्रुतिमूल एव व्याख्याने सिद्धे सोऽयमभिप्रायः यत्र हि यन्नास्ति किन्त्वन्यत्रैव दृश्यते तत्रैव तदारोपः सिद्धः । ततश्च वस्तुतस्तदयोगात् तत्र तत्सत्तया तत्सत्ता कर्तुं न शक्यत एव । त्रिसर्गस्य तु तच्छक्तिविशिष्टात् भगवतो मुख्यवृत्त्यैव जातत्वेन श्रुतत्वात् तद्व्यतिरेकेण व्यतिरेकात् तत्रैव सर्वात्मके सोऽस्ति । ततस्तस्मिन् न चारोपितश्च । आरोपस्तु तथापि धाम्नेत्यादिरीत्यैवाचिन्त्यशक्तित्वात् तेन लिप्तत्वाभावेऽपि तच्छङ्कारूप एव । तथा च एकदेशस्थितस्याग्नेर्ज्योत्स्ना विस्तारिणी यथेत्यनुसारेण तत्सत्तया तत्सत्ता भवति । ततो भगवतो मुख्यं सत्यत्वं त्रिसर्गस्य च न मृषात्वमिति । तथा श्रुतिः सत्यस्य सत्यमिति तथा प्राणो वै सत्यं तेषामेष सत्यमिति प्राणशब्दोदितानां स्थूलसूक्ष्मभूतानां व्यवहारतः सत्यत्वेनाधिगतानां मूलकारणभूतं परमसत्यं भगवन्तं दर्शयतीति । अथ तमेव तटस्थलक्षणेन च तथा व्यञ्जयन् विशदार्थतया ब्रह्मसूत्राणामेव विवृतिरियं संहितेति विबोधयिषया च तदनन्तरं सूत्रमेव प्रथममनुवदति जन्माद्यस्य यत इति । जन्मादीति सृष्टिस्थितिप्रलयं तद्गुणसंविज्ञानो बहुव्रीहिः । अस्य विश्वस्य ब्रह्मादिस्तम्बपर्यन्तानेककर्तृभोक्तृसंयुक्तस्य प्रतिनियतदेशकालनिमित्तक्रियाफलाश्रयस्य मनसाप्यचिन्त्यविविधविचित्ररचनारूपस्य यतो यस्मात् अचिन्त्यशक्त्या स्वयमुपादानरूपात् कर्त्रादिरूपाच्च जन्मादि तं परं धीमहीत्यन्वयः । अत्र विषयवाक्यञ्च भृगुर्वै वारुणिर्वरुणं पितरमुपससार अधीहि भगवो ब्रह्मेति आरभ्य यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद् ब्रह्मेति तत् तेजोऽसृजतेत्यादि च । जन्मादिकमिहोपलक्षणं न तु विशेषणं ततस्तद्ध्याने तन्न प्रविशति किन्तु शुद्ध एव सन्ध्येय इति । किञ्चात्र प्रागुक्तविशेषणविशिष्टविश्वजन्मादेस्तादृशहेतुत्वेन सर्वशक्तित्वं सत्यसङ्कल्पत्वं सर्वज्ञत्वं सर्वेश्वरत्वं च तस्य सूचितम् । यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः यः सर्वस्य वशीत्यादिश्रुतेः । तथा परत्वेन निरस्ताखिलहेयप्रत्यनीकस्वरूपत्वं ज्ञानाद्यनन्तकल्याणगुणत्वञ्च सूचितम् । न तस्य कार्यं करणञ्च विद्यत इत्यादिश्रुतेः । ये तु निर्विशेषं वस्तु जिज्ञास्यमिति वदन्ति तन्मते ब्रह्मजिज्ञासायां जन्माद्यस्य यत इत्यसङ्गतं स्यात् निरतिशयं बृहत् बृंहणञ्चेति निर्वचनात् तच्च ब्रह्म जगज्जन्मादिकारणमिति वचनाच्च । एवमुत्तरेष्वपि सूत्रेषु सूत्रोदाहृतश्रुतिगणो लक्षणान्वयदर्शनात् सूत्राणि सूत्रोदाहृतश्रुतयश्च नात्र प्रमाणम् । तर्कश्च साध्यधर्माव्यभिचारिसाधनधर्मान्वितवस्तुविषयत्वात् न निर्विशेषवस्तुनि प्रमाणम् । जगज्जन्मादिभ्रमो यतस्तद्ब्रह्मेति स्वोत्प्रेक्षापक्षे ते च न निर्विशेषवस्तुसिद्धिः भ्रममूलमज्ञानमज्ञानसाक्षि ब्रह्मेत्यभ्युपगमात् । साक्षित्वं हि प्रकाशैकरसतयोच्यते । प्रकाशत्वन्तु जडाद्व्यावर्त्तकं स्वस्य परस्य व्यवहारयोग्यतापादनस्वभावेन भवति । तथा सति सविशेषत्वम् । तदभावे प्रकाशतैव न स्यात् तुच्छतैव स्यात् । किञ्च तेजो वारिमृदामित्यनेनैव तेषां विवक्षितं सेत्स्यतीति जन्माद्यस्य यत इत्यप्रयोजकं स्यात् । अतस्तद्विशेषवत्त्वे लब्धे स च विशेषः शक्तिरूप एव । शक्तिश्चान्तरङ्गा बहिरङ्गा तटस्था चेति त्रिधा दर्शिता । तत्र विकारात्मकेषु जगज्जन्मादिषु साक्षाद्धेतुता बहिरङ्गाया एव स्यात् इति सा मायाख्या चोपक्रान्ता तटस्था च वयं धीमहीत्यनेन । अथ यद्यपि भगवतोऽशात् तदुपादानभूतप्रकृत्याख्यशक्तिविशिष्टात् पुरुषादेवास्य जन्मादि तथापि भगवत्येव तद्धेतुता पर्यवस्यति समुद्रैकदेशे यस्य जन्मादि तस्य समुद्रत एव जन्मादीतिवत् । तथोक्तं प्रकृतिर्यस्योपादानमाधारः पुरुषः परः । सतोऽभिव्यञ्जकः कालो ब्रह्म तत्त्रितयं त्वहमिति । तस्य भगवतो जन्माद्यस्य यत इत्यनेनापि मूलत्वमेव लक्ष्यते । यतो मूलस्य जगतो मूलशक्तेर्निधानरूपतादृशानन्तपरशक्तीनां निधानरूपोऽसावित्याश्लिष्यते तस्य परमकारणत्वाङ्गीकारात् । न च तस्य मूलत्वे सत्यन्यतो जन्मापतेत् अनवस्थापत्तेरेकस्यैवादित्वेनाङ्गीकारात् साङ्ख्यानामव्यक्तस्येव स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिप इति श्रुतिनिषेधात् अनादिसिद्धप्राकृतस्वभा-

क्रमसंदर्भः।

विकमूर्त्तित्वेन तस्य तत्प्रसिद्धेश्च। तदेवं मूर्त्तत्वे सिद्धे स च मूर्त्तो विष्णुनारायणादिसाक्षाद्रूपकः श्रीभगवानेव नान्यः। तथाच यतः
सर्वाणि भूतानि भवन्त्यादियुगागमे। यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये। इत्यादिकं तत्प्रतिपादकं सहस्रनामादौ तत्रैव तु यथोक्तम्
अतिर्देश्यवपुः श्रीमानिति। एवञ्च स्कान्दे स्रष्टा पाता च संहर्त्ता स एको हरिरीश्वरः। स्रष्टृत्वादिकमन्येषां दारुयोषावदुच्यते। एक-
देशक्रियावत्त्वान्न तु सर्वात्मनेष्यतिम्। सृष्ट्यादिकं समस्तन्तु विष्णोरेव परं भवेदिति। महोपनिषदि च। स ब्रह्मणा सृजति स
रुद्रेण विलापयतीत्यादिकम्। अतएव विवृतञ्च। निमित्तं परमीशस्य विश्वसर्गनिरोधयोः। हिरण्यगर्भः सर्वेश्च कालस्याऽरूपि-
णस्तवेति। तव यो रूपरहितः कालः कालंशक्तिस्तस्य निमित्तमात्रत्वमिति व्यधिकरण एव षष्ठ्यौ। तथा आद्योऽवतारः
पुरुषः परस्येत्यादि। यदंशतोऽस्य स्थितिजन्मनाशा इत्यादि च। तदेवमत्रापि तथाविधमूर्त्तिर्भगवानेवोपक्रान्तः। तदेवं तटस्थ-
लक्षणेन परं निर्धार्य्य तदेव लक्षणं ब्रह्मसूत्रे शास्त्रयोनित्वात् तत्तु समन्वयादित्येतत् सूत्रद्वयेन स्थापितमस्ति। तत्र पूर्वसूत्रस्यार्थः
कुतो ब्रह्मणो जगज्जन्मादिहेतुत्वं तत्राह शास्त्रं योनिर्ज्ञानकारणं यस्य तत्त्वात् यतो वा इमानीत्यादिशास्त्रप्रमाणकत्वादिति।
नात्र दर्शनान्तरवत् तर्कप्रमाणकत्वं तर्काप्रतिष्ठानादत्यन्तातीन्द्रियत्वेन प्रत्यक्षादिप्रमाणाविषयत्वात् ब्रह्मणश्च इति भावः। वैशेषिका-
णान्त्वविरोधाध्याये तर्का लोकवत्तु लीलाकैवल्यमित्यादिना निराकरिष्यन्ते। अत्र तर्कश्चैवं ईश्वरः कर्त्ता न भवति प्रयोजनशून्यत्वात्
मुक्तात्मवत् तनुभुवनादिकं जीवकर्त्तृकं कार्य्यत्वाद् घटवत्। विमतिविषयः कालो न लोकशून्यः कालत्वात् वर्त्तमानकालवदित्यादि।
तदेवं दर्शनान्तरानुगुण्येनेश्वरानुमानं दर्शनान्तरप्रातिकूल्यपराहतमिति शास्त्रैकप्रमाणकः परब्रह्मभूतः सर्वेश्वरः पुरुषोत्तमः। शास्त्रन्तु
सकलेतरप्रमाणपरिदृष्टसमस्तवस्तुविजातीयसार्वज्ञसत्यसंकल्पत्वादिमिश्रानवधिकातिशयापरिमितोदारविचित्रगुणसागरं निखिलहेय-
प्रत्यनीकस्वरूपं प्रतिपादयतीति न प्रमाणान्तरावसितवस्तुसाधर्म्यप्रयुक्तदोषगन्धः। अतएव स्वाभाविकानन्तानित्यमूर्त्तिमत्त्वमपि तस्य
सिद्ध्यति। अथोत्तरसूत्रस्यार्थः। ब्रह्मणः कथं शास्त्रप्रमाणकत्वं तत्राह तत्त्विति। तुशब्दः प्रसक्ताशङ्कानिवृत्त्यर्थः। तच्छास्त्रप्रमाण-
कत्वं ब्रह्मणः सम्भवत्येव कुतः समन्वयात्। अन्वयव्यतिरेकाभ्यामुपपादनं समन्वयस्तस्मात्। तत्रान्वयः सत्यं ज्ञानमनन्तं ब्रह्मेति
आनन्दो ब्रह्मेति एकमेवाद्वितीयं ब्रह्मेति तत् सत्यं स आत्मेति सदेव सौम्येदमग्र आसीदिति ब्रह्म वा इदमेकमेवाग्र आसीदिति आत्मा
वा इदमेक एवाग्र आसीदिति आत्मैवेदमग्र आसीत् पुरुषविध इति पुरुषो ह वै नारायण इति एको ह वै नारायण आसीदिति तदैक्षत
बहु स्यां प्रजायेयेति तस्माद् वा एतस्मादात्मनः आकाशः सम्भूत इति तत्तेजोऽसृजतेति यतो वा इमानि भूतानि जायन्त इति पुरुषो ह
वै नारायणोऽकामयत अथ नारायणादजोऽजायत यतः प्रजाः सर्वाणि भूतानि नारायणः परं ब्रह्मतत्त्वं नारायणः परं ऋतं सत्यं परं ब्रह्म
पुरुषं कृष्णपिङ्गलमित्यादिषु। अथ व्यतिरेकः कथमसतः सज्जायेतेति को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यादिति
एको ह वै नारायण आसीन्न ब्रह्मा न च शङ्कर इत्यादिषु। अन्येषाञ्च वाक्यानां समन्वयस्तत्रैव वक्ष्यते आनन्दमयोऽभ्यासादित्यादिना।
स चैवं परमानन्दस्वरूपत्वेनैव समन्वितो भवतीति तमुपलभ्यैव परमपुरुषार्थसिद्धेर्नप्रयोजनशून्यत्वमपि। तदेवं सूत्रद्वयार्थे स्थिते
तदेतद्व्याचष्टे अन्वयादितरश्चार्थेषु इति। अर्थेषु नानाविधेषु वेदवाक्यार्थेषु सत्सु अन्वयादन्वयमुखेन यतो यस्मादेकस्मादस्य जन्मादि
प्रतीयते तथा इतरतो व्यतिरेकमुखेन च यस्मादेवास्य तत् प्रतीयत इत्यर्थः। अतएव तस्य श्रुत्यन्वयव्यतिरेकदर्शितेन परमसुखरूप-
त्वेन परमपुरुषार्थत्वञ्च ध्वनितम्। एको ह वै नारायण आसीदित्यादिशास्त्रप्रमाणत्वेन प्राक्स्थापितरूपत्वञ्चेति। अथेक्षतेर्नाशब्दमिति
व्याचष्ट अभिज्ञ इति। तत्र सूत्रस्यार्थः। इदमाम्नायते छान्दोग्ये। सदेव सौम्येदमग्र आसीत् एकमेवाद्वितीयं ब्रह्म तदैक्षत बहु स्यां
प्रजायेयेति तत्तेजोऽसृजतेत्यादि। तत्र परोक्तं प्रधानमपि जगत्कारणत्वेनायाति। तच्च नेत्याह ईक्षतेरिति। यस्मिन् शब्द एव प्रमाणं
न भवति तदशब्दमानुमानिकं प्रधानमित्यर्थः। यतोऽशब्दं अतो न तदिह प्रतिपाद्यम्। कुतोऽशब्दत्वं तस्येत्याशङ्क्याह ईक्षतेः सच्छब्द-
वाच्यसम्बन्धिव्यापारविशेषाभिधायिनः ईक्षतेर्धातोः श्रवणात् तदैक्षतेति ईक्षणं चाचेतने प्रधाने न सम्भवेत्। अन्यत्र चेच्छापूर्विकैव
सृष्टिः स ईक्षत लोकान्नु सृजा इत्यादौ। ईक्षणञ्चात्र तदशेषसृज्यविचारात्मकत्वात् सर्वज्ञत्वमेव क्रोडीकरोति तदेतदाह अभिज्ञ इति।
ननु तदानीमेकमेवाद्वितीयमित्युक्तेस्तस्येक्षणसाधनं न सम्भवति तत्राह स्वराडिति। स्वस्वरूपेण एव तथा तथा राजत इति। न तस्य
कार्य्यं करणञ्च विद्यते इत्यादौ स्वाभाविकी ज्ञानबलक्रिया चेति श्रुतेः। एतेनेक्षणवन्मूर्त्तिमत्त्वमपि स्वाभाविकमित्यायातं निश्वसित-
स्याप्यग्रे दर्शयिष्यमाणत्वात्। तच्च यथोक्तमेवेति। अथ शास्त्रयोनित्वादित्यस्यार्थान्तरं व्याचष्टे तेन इति। तच्चार्थान्तरं यथा कथं तस्य
जगज्जन्मादिकर्त्तृत्वं कथं वा नान्यतन्त्रोक्तस्य प्रधानस्य न चान्यस्येति तत्राह शास्त्रस्य वेदलक्षणस्य योनिः कारणं तद्रूपत्वात्। एवं
वा अरे अस्य महतो भूतस्य निश्वसितमेतद् यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं सूत्राण्युपसूत्राणि खिलान्यु-
पखिलानि चेति श्रुतेः। शास्त्रं हि सर्वप्रमाणागोचरविधानन्तज्ञानमयं तस्य च कारणं ब्रह्मैव श्रूयते इति तदेव मुख्यं सर्वज्ञम्। तादृशं
सर्वज्ञत्वं विना च सर्वसृष्ट्यादिकमन्यस्य नापपद्यते इति प्रोक्तलक्षणं ब्रह्मैव जगत्कारणं न प्रधानं न च जीवान्तरमिति। एतदेव विवृ-
ण्याह तेने ब्रह्म हृदा य आदिकवय इति ब्रह्म वेदमादिकवये ब्रह्मणे ब्रह्माणं प्रति हृदा अन्तःकरणद्वारैव न तु वाग्द्वारा तेने आवि-
र्भावितवान्। अत्र बृहद्वाचकेन ब्रह्मपदेन सर्वज्ञानमयत्वं तस्य ज्ञापितम्। हृदेत्यनेनान्तर्यामित्वं सर्वशक्तित्वञ्च भगवतो ज्ञापितं
आदिकवय इत्यनेन तस्यापि शिक्षानिदानत्वात् शास्त्रयोनित्वञ्चेति। श्रुतिश्चात्र यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति
तस्मै तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये इति। अनेन च शयनलीलाव्यञ्जितनिश्वसितमयवेदो ब्रह्मादिविविधानुसरा-
श्रयः पद्मनाभस्तदादिमूर्त्तिकः श्रीभगवानेवाभिहितः। विवृतञ्चैतत् प्रचोदिता येन पुरा सरस्वतीत्यादिना। अथ तत्तु समन्वयादित्य-
स्यार्थान्तरम्। यथा शास्त्रयोनित्वे हेतुश्च दृश्यते इत्याह तत्त्विति। समन्वयोऽत्र सम्यक् सर्वतोमुखोऽन्वयो व्युत्पत्तिर्वेदार्थपरिज्ञानं
तस्मात् तत्तु ज्ञाननिदानत्वं निश्चीयत इति। जीवे सम्यग्ज्ञानमेव नास्ति प्रधानस्त्वचेतनमेवेति भावः। स वेत्ति विश्वं न च तस्य
वेत्ता इत्यादि श्रुतेः। तदेतस्य तदीयसम्यग्ज्ञानं व्यतिरेकमुखेन बोधयितु जीवानां सर्वेषामपि तदीयसम्यग्ज्ञानाभावमाह मुह्यन्तीति
सूरयः शेषादयोऽपि। यत् यत्र शब्दब्रह्मणि। तदेतत् विवृतं स्वयं भगवता किं विधत्ते किमाचष्टे किमनूद्य विकल्पयेत्। इत्यस्या

क्रमसंदर्भः ।

हृदयं लोके मान्योमद्वेद कश्चनेति । अनेन च साक्षाद् भगवानेवाभिहितः । तथा दशलक्षणार्थोऽप्यत्रैव दृश्यः । तत्र सर्गविसर्गस्थान-निरोधाः जन्माद्यस्य यत इत्यत्र । मन्वन्तरेशानुकथे च स्थानान्तर्गते । पोषणं तेन इत्यादौ । ऊतिर्मुह्यन्तीत्यादौ । मुक्तिर्जीवानामपि तत्सान्निध्ये सति कुहकनिरसनव्यञ्जकेन धाम्नेत्यादौ । आश्रयः परं सत्यमित्यत्र । स च स्वयं भगवत्त्वेन श्रीकृष्ण एवेति पूर्वोक्त-प्रकार एव व्यक्त इति । तदेवमस्मिन्नुपक्रमवाक्ये सर्वेषु पदवाक्यतात्पर्य्येषु तस्य ध्येयस्य सविशेषत्वं मूर्त्तिमत्त्वं श्रीभगवदाकारत्वञ्च व्यक्तम् । तच्च युक्तं स्वरूपवाक्यान्तरव्यक्तत्वात् । समस्तवेदस्तुत्यर्थे संगृह्यानुस्मारयति योऽस्योत्प्रेक्षक इति निमित्तकारणत्वेन । योऽस्योत्प्रेक्षक आदिमध्यनिधने योऽव्यक्तजीवेश्वरः यः सृष्ट्वेदमनुप्रविश्य ऋषिणा चक्रे पुरः शास्ति ताः । यं सम्पद्य जहात्यजामनु-शयी सुप्तः कुलायं यथा तं कैवल्यनिरस्तयोनिमभयं ध्यायेदजस्रं हरिमिति । अतो धर्मः प्रोज्झितेत्यादावनन्तरवाक्येऽपि किं वापरैरित्या-दिना तत्रैव तात्पर्य्यं दर्शितम् । तथोपसंहारवाक्याधीनार्थत्वादुपक्रमवाक्यस्य नातिक्रमणीयत्वमेव । कस्मै येन विभाषितोऽयमित्या-दिना दर्शितं तस्य तादृशविशेषवत्त्वादिकम् । यथैवात्मगृहीतिरितरवदुत्तरादित्यत्र शङ्करशारीरकस्यापरस्यां योजनायामुपक्रमोक्तस्य सच्छब्दवाच्यस्यात्ममुपसंहारस्थादात्मशब्दात् लभ्यते तद्वदिहापि चतुःश्लोकीवक्तुर्भगवत्त्वं दर्शितं श्रीव्याससमाधावपि तस्यैव ध्येयत्वम् । तदेव च स्वसुखनिभृतेत्यादि श्रीशुकहृदयानुगतमिति । यद्वा पुनश्च विष्णुपुराणीयभगवच्छब्दनिरुक्तिवत् साक्षाच्छ्रीकृष्णा-भिधेयत्वनापि योजयति जन्माद्यस्येति । नराकृति परं ब्रह्मेति पुराणवर्गात् । तस्मात् कृष्ण एव परो देवस्तं ध्यायेदिति श्रीगोपाल-तापनीश्रुतेश्च परं श्रीकृष्णं धीमहि । अस्य स्वरूपलक्षणमाह सत्यमिति । सत्यव्रतं सत्यपरं त्रिसत्यमित्यादौ सत्ये प्रतिष्ठितः कृष्णः सत्यमत्र प्रतिष्ठितम् । सत्यात् सत्यञ्च गोविन्दस्तस्मात् सत्यो हि नामतः । इत्युद्यमपर्वणि सञ्जयकृत श्रीकृष्णनाम्नां निरूक्तौ च तथाश्रुतत्वात् । एतेन तदाकारस्याव्यभिचारित्वं दर्शितम् । तटस्थलक्षणमाह धाम्ना स्वेनेत्यादि । स्वेन स्वस्वरूपेण धाम्ना श्रीमथुरा-ख्येन । सदा निरस्तं कुहकं मायाकार्य्यलक्षणं येन तम् । मथ्यते तु जगत् सर्वं ब्रह्मज्ञानेन येन वा । तत्सारभूतं यद्यस्यां मथुरा सा निगद्यत इति श्रीगोपालोत्तरतापनीप्रसिद्धेः । लीलामाह आद्यश्च नित्यमेव श्रीमदानकदुन्दुभिव्रजेन्द्रनन्दनतया श्रीमथुराद्वारका-गोकुलेषु विराजमानस्यैव स्वस्य कस्मैचिदर्थाय लोके प्रादुर्भावापेक्षया यतः श्रीमदानकदुन्दुभिगृहात् जन्म तस्मादूय इतरतश्च इतरत्र श्रीव्रजेश्वरगृहेऽपि अन्वयात् पुत्रभावतः तदनुगतत्वेनागच्छत् । उत्तरेणैव य इति पदेनान्वयः । यत इत्यनेन तस्मादिति स्वयमेव लभ्यते । कस्मादन्वयात् तत्राह अर्थेषु कंसवञ्चनादिषु तादृशभाववाद्भिः श्रीगोकुलवासिभिरेव सर्वानन्दकदम्बकादम्बिनीरूपा सा कापि लीला सिद्ध्यतीति तल्लक्षणेषु वा अर्थेषु अभिज्ञः । ततश्च स्वराट्स्वैर्गोकुलवासिभिरेव राजत इति तत्र तेषां प्रेमवशतामापन्नस्याप्यव्याह-तैश्वर्य्यमाह तेन इति । य आदिकवये ब्रह्मणे ब्रह्माणं विस्मापयितुं हृदा सङ्कल्पमात्रेणैव ब्रह्म सत्यज्ञानानन्तानन्दमात्रैकरसमूर्त्तिमयं वैभवं तेने विस्तारितवान् । यद्यतस्तथाविधलौकिकालौकिकतासमुच्चितलीलाहेतोः सूरयस्तद्भक्ता मुह्यन्ति प्रेमातिशयोदयेन वैवश्यमाप्नु-वन्ति । यदित्युत्तरेणाप्यन्वयात् । यद्यत एव तादृशलीलातः तेजोवारिमृदामपि यथा यथावद्विनिमयो भवति । तत्र तेजसश्चन्द्रादेर्वि-निमयो निस्तेजोवस्तुभिः सह धर्मपरीवर्त्तः । तच्छ्रीमुखादिरुचा चन्द्रादेर्निस्तेजस्त्वविधानात् निकटस्थनिस्तेजोवस्तुनः स्वभासा तेज-स्वितापादनाच्च । तथा वारि द्रवश्च कठिनं भवति वेणुवाद्येन । मृतपाषाणादिश्च द्रवतीति । यत्र श्रीकृष्णे त्रिसर्गः श्रीगोकुलमथुरा-द्वारकावैभव प्रकाशः अमृषा सत्य एवेति ।

अथ श्रीवृन्दावने तदीयस्वरूपशक्तिप्रादुर्भावाश्च व्रजदेव्यः । यथा ब्रह्मसंहितायाम् । आनन्दचिन्मयरसप्रतिभाविताभिस्ताभिर्य एव निजरूपतया कलाभिः । गोलोक एव निवसत्यखिलात्मभूतो गोविन्दमादिपुरुषं तमहं भजामीति । ताभिः श्रीगोपिकाभिः कलाभिः शक्तिभिः । निजरूपतया स्वीयतया । शक्तित्वञ्च तासां पूर्वोक्तोत्कर्षेण परमपूर्णप्रादुर्भावाणां सर्वासामपि लक्ष्मीसहस्रशतसम्भ्रम-सेव्यमानामिति श्रियः कान्ताः कान्तः परमपुरुष इति च गोप्यो लब्ध्वाच्युतं कान्तं श्रिय एकान्तवल्लभामिति च ज्ञापयति । गोप्य एव श्रियः कान्तं मनोहरम् एकान्तवल्लभं रहोरमणम् । एतदभिप्रायेणैव स्वायम्भुवागमेऽपि श्रीभूलीलाशब्दैस्तत्प्रेयसीत्रयमुपदिष्टम् । तस्माल्लक्ष्मीत्वेऽप्यासां कुरुपाण्डवन्यायेन नायं श्रियाऽङ्ग इत्यादौ लक्ष्मीतोऽप्युत्कर्षवर्णनं परमव्योमादिस्थिताभ्यस्तत्तन्नाम्ना एव प्रसिद्धाभ्यो लक्ष्मीभ्य आधिक्यविवक्षयेति मन्तव्यम् । श्रीवृन्दावनलक्ष्म्यस्त्वेता एवेति । तास्तु नित्यसिद्धा एव । आसां महत्त्वन्तु ह्लादिनीसार वृत्तिविशेषप्राधान्यात् तदुक्तमानन्दचिन्मयरसप्रतिभाविताभिरिति । आनन्दचिन्मयरसेनप्रेमरसविशेषेण भाविताभिस्तत्-प्राधानाभिरित्यर्थः अतएव तत्प्राचुर्य्यप्रकाशेनाचिन्त्यानन्तशक्तियुक्तस्य भगवतः श्रीकृष्णस्यापि तासु परमोल्लासप्रकाशो भवति येन ताभीरमणेच्छा जायते तथैवाह भगवानपि ता रात्रीरिति । न केवलमेतावन्मात्रं किन्त्वेताभिः समं परमप्रेमोल्लासावधित्वमवगम्यते तथाह त्रैलोक्यलक्ष्म्येकपदं वपुर्दधदिति व्यरोचताधिकं तातेति तत्रातिशुशुभे ताभिरिति च । अथ तासां नामानि श्रूयन्ते भविष्योत्तरे मल्लद्वादशीप्रसङ्गे श्रीकृष्णयुधिष्ठिरसंवादे । गोपीनामानि राजेन्द्रप्राधान्येन निबोध मे । गोपाली पालिका धन्या विशाखा ध्याननिष्ठिका । राधानुराधा सोमाभा तारका दशमी तथेति । तथेति दशम्यपि तारकानाम्न्यवत्यर्थः । स्कान्दे प्रह्लादसंहितायां द्वारकामाहात्म्ये श्रील-लितोवाचेत्यादिना ललिता श्यामला धन्या विशाखा राधा शैव्या पद्मा भद्रेत्येतान्यष्टैव गृहीतानि । अथ च वनिताशतकोटिभिरित्याग-मप्रसिद्धेरन्यान्यपि लोकशास्त्रयोरवगन्तव्यानि । अत्र शतकोटित्वान्यथानुपपत्त्यापि तासां तन्महाशक्तित्वमहालक्ष्मीत्वमेवावगम्यते तदेवं परममधुरप्रेमवृत्तिमयीषु तास्वपि तत्सारांशोद्रेकमयी श्रीराधिका तस्यामेव प्रेमोत्कर्षपरमावधित्वस्य दर्शितत्वात् यत्र च तत् प्रेमवैशिष्ट्यं तत्रैव प्रकाशाधिक्यमपि । अतएव श्रीवृन्दावने राधिकाया एव परमलक्ष्मीत्वम् । अतएव सतीष्वन्यासु तास्वपि मुख्यत्वाभिप्रायेणैव तस्या एव श्रीवृन्दावनाधिपत्येन नामग्रहणम् । पाद्मे च वृन्दावनाधिपत्यञ्च दत्तं तस्यै प्रतुष्यता । कृष्णेनान्यत्र देवी तु राधा वृन्दावने वने इति । अतएव विशेषतः श्रीराधायास्तादृशत्वं बृहद्गौतमीये तथाहि श्रीबलदेवं प्रति श्रीकृष्णवाक्यं सत्त्वं तत्त्व परत्वञ्च तत्त्वत्रयमहं किल । त्रितत्त्वरूपिणी सापि राधिका मम वल्लभा । प्रकृतेः पर एवाहं सापि मच्छक्तिरूपिणी । सात्त्विकं रूपमा-स्थाय पूर्णोऽहं ब्रह्म चित्परः ॥ ब्रह्मणा प्रार्थितः सम्यक् सम्भवामि युगे युगे । तया सार्द्धं त्वया सार्द्धं नाशायदैत्यान्दहामित्यादि ॥

क्रमसंदर्भः।

सत्यत्वं कार्यत्वं तत्त्वं कारणत्वं ततोऽपि परत्वं चेति यत् तत्त्वत्रयं तदहमित्यर्थः। तत्रैवाग्रे श्रीराधायाः देवी कृष्णमयी प्रोक्ता राधिका परदेवता सर्वलक्ष्मीमयी सर्वकान्तिः सम्मोहिनी परेति। ऋक्परिशिष्टश्रुतिश्च तथैवाह राधया माधवो देवो माधवेनैव राधिका। विभ्राजन्ते जनेष्वा इति विभ्राजन्तो विभ्राजते आ सर्वत इति श्रुतिपदार्थः। एतत् सर्वमभिप्रेत्य मूर्द्धन्यश्लोके तादृशोऽप्यर्थः सन्दधे जन्माद्यस्येति। यतोऽन्वयात् अन्वेति अनुगच्छति सदा निजपरमानन्दशक्तिरूपायां तस्यां श्रीराधायामासक्तो भवतीत्यन्वयः श्रीकृष्णस्तादृशाद् यस्मात् तथा इतरतः इतरस्याश्च तस्य सदा द्वितीयायाः श्रीराधाया एव यतो यस्या आद्यस्य आदिरसस्य जन्म प्रादुर्भावः यावेव आदिरसविद्यायाः परमनिधानमित्यर्थः। अतएव तयोरत्यद्भुतविलासमाधुरीधुरीणतामुद्दिशति। य अर्थेषु तत्तद्विलासकलापेषु अभिज्ञो विदग्धः या च स्वेन तथा तथाविधेन आत्मना राजते विलसतीति स्वराट् अतएव सर्वतोऽप्याश्चर्य्यरूपयोस्तयोर्वर्णने मम तत्कृपैव सामग्रीत्याह आदिकवये प्रथमं तल्लीलावर्णनमारभमाणाय मह्यं श्रीवेदव्यासाय हृदा अन्तःकरणद्वारैव ब्रह्म निजलीलाप्रतिपादकं शब्दब्रह्म यस्तेने आरम्भसमकालमेव युगपत् सर्वमिदं महापुराणं मम हृदि प्रकाशितवानित्यर्थः। एतच्च प्रथमस्य सप्तम एव व्यक्तम्। यद् यस्यां ब्रह्मादयोऽपि मुह्यन्ति स्वरूपसौन्दर्य्यगुणादिभिरत्यद्भुता; कथमिति निर्वक्तुमारब्धा निश्चेतुं न शक्नुवन्ति एवम्भूता सा यदि मयि कृपां नाकरिष्यत् तदा कथमाधवतादृशकृपस्यापि मम तैस्तैः पदैस्तत्पदवीमन्विच्छन्त्योऽग्रतोऽवलाः। बध्वाः पदैः सुपृक्तानि विलोक्यार्त्ताः समब्रुवन् इत्यादिना तस्या लीलावर्णनलेशोऽपि साद्गुणसिद्धिरसौ नाभविष्यदेवेति भावः। तयोराश्चर्य्यरूपत्वमेव व्यनक्ति तेजोवारिमृदामचेतनानामपि यथा येन प्रकारेण विनिमयः परस्परं स्वभावविपर्य्ययो भवति तथा यो विभ्राजत इति शेषः। वाक्यशेषश्च भावाविभूतत्वेन न वक्तुं शक्यवानिति गम्यते। तत्र तेजसश्चन्द्रादेस्तत्पदनखकान्तिविस्फारितादिना वारिमृदुवञ्चिस्तेजस्त्वधर्मावाप्तिर्वारिणो नद्यादेश्च वंशीवाद्यादिना रव्यादितेजोवदुच्छलताप्राप्तिः। पाषाणादेर्मृदुवच्च स्तम्भताप्राप्तिः। मृदश्च पाषाणादेस्तत्कान्तिकन्दलीच्छुरितत्वेन तेजोवदुज्ज्वलताप्राप्तिर्वंशीवाद्यादिना वारिवच्च द्रवताप्राप्तिरिति। तदेतत् सर्वं तस्य लीलावर्णने प्रसिद्धमेव। यत्र यस्याश्च विद्यमानायां त्रिधा सर्गः श्रीभूलीलेति शक्तित्रयीप्रादुर्भावोऽथवा द्वारकामथुरावृन्दावनानीतिस्थानत्रयगतशक्तिवर्गत्रयप्रादुर्भावो वृन्दावन एव रसव्यवहारेण सुहृदुदासीनप्रतिपक्षनायिकारूपत्रिभेदानां सर्वासामपि व्रजदेवीनामेव प्रादुर्भावो वा मृषा वृथैव। यस्याः सौन्दर्य्यादिगुणसम्पदा तास्ताः कृष्णे न किञ्चिदिव प्रयोजनमर्हन्तीत्यर्थः। तत धीमहीति यच्छब्दलब्धेन तच्छब्देनान्वयः। परमशक्तिशक्तिमत्त्वेनातिशयितमहाभावरसेन वा परस्परमभिन्नतां गतयोरनयोरैक्येनैव विवक्षितं तदिति। अतएव सामान्यतया परामर्शात् नपुंसकत्वञ्च। कथम्भूतं स्वेन धाम्ना स्वप्रभावेण सदा निरस्तं स्वलीलाप्रतिबन्धकानां कुहकं माया येन तत्। तथा सत्यं तादृशत्वेन नित्यसिद्धम्। यद्वा परस्परं विलासादिभिर्नवरतमानन्दसन्दोहदाने कृतसत्यमिव जातं तत्र निश्चलमित्यर्थः। अतएव परं अन्यत्र कुत्राप्यदृष्टगुणलीलादिभिः विश्वविस्मापकत्वात् सर्वतोऽप्युत्कृष्टम्। अत्र एकोऽपि धर्मो भिन्नवाचकतया वाक्ययोर्निर्दिष्ट इत्युभयसादृश्यावगमात् प्रतिवस्तूपमानामालङ्कारोऽयम्। इयञ्च मुहुरुपमितामिति मालाप्रतिवस्तूपमा। तेन तैस्तैर्मिथो योग्यतया निबद्धत्वात् समनामापि। एतदलङ्कारेण च अहो परस्पर परस्माद्‌यश्च मुहुरुपमिता ... तत् परमपि तन्मिथुनभूतं किमपि तत्त्वं मिथोगुणगणमाधुरीभिः समतामेव समवाप्तमिति सकलजीवजीवातुतमरसपीयूषधाराधाराधरतासम्पदा कस्मै वा निजचरणकमलविलासं न रोचयतीति स्वतःसम्भवि वस्तु व्यज्यते। तदाहुः प्रतिवस्तूपमा सा स्यात् वाक्ययोर्गम्यसाम्ययोः। एकोऽपि धर्मः सामान्यो यत्र निर्दिश्यते पृथगिति। इयं मालयापि दृश्यते इति च। एवं समं स्यादानुरूप्येण श्लाघा योग्यस्य योग्ययोः। कवेः प्रौढोक्तिसिद्धो वा तन्निबद्धस्य वेति षट्॥ षड्भिस्तैर्व्यज्यमानवस्तुन इति। तथा वस्तु वालंकृतिर्वापि विधार्थः संभवी स्वतः। कवेः प्रौढोक्तिसिद्धो वा तन्निबद्धस्य वेति षट्॥ अर्थशक्त्युद्भवो व्यङ्ग्यो याति द्वादशभेदतामिति। अतः सर्वतोऽपि सान्द्रानन्दचमत्कारक श्रीवृन्दावनेऽपि स्तु वस्त्वलङ्काररूपकः। तदेवं सन्दर्भचतुष्टयेन सम्बन्धो व्याख्यात परमाद्भुतप्रकाशः श्रीराधया युगलितः श्रीकृष्ण इति। तदुक्तं राधया माधवो देव इत्यादिना। तदेवं सन्दर्भचतुष्टयेन सम्बन्धो व्याख्यात तस्मिन्नपि सम्बन्धे श्रीराधामाधवरूपेणैव प्रादुर्भावः तस्य समन्वितः परमप्रकर्षः एतदर्थमेव व्यतानिषमिमाः सर्वा अपि परिपाटीरिति भूयः सम्बन्धः। गौरश्यामरुचोज्ज्वलाभिरमलैरक्ष्णोर्विलासोत्सवैर्नृत्यन्तीभिरशेषमादनकलावैदग्धदिग्धात्मभिः। अन्योन्यप्रियतासुधापरिमलस्तोमोन्मदाभिः सदा राधामाधवमाधुरीभिरभितश्चित्तं ममाक्रम्यताम्॥ १॥

---

सुबोधिनी।

॥ श्रीगणेशाय नमः॥

वन्दे श्रीकृष्णदेवं मुरनरकभिदं वेदवेदान्तवेद्यं लोके भक्तिप्रसिद्ध्यै यदुकुलजलधौ प्रादुरासीदपारः।
यस्यासीद्रूपमेवं त्रिभुवनतरणे भक्तिवच्च स्वतन्त्रं शास्त्ररूपं च लोके प्रकटयति मुदा यः स नो भूतिहेतुः॥ १॥
कर्त्ताऽऽज्ञः सकलस्य योनिगमभूः सर्वस्वरूपोऽपि सन् सर्वस्यापि विधारणो विजयते निर्दोष सर्वेश्वरः।
यो लीलाभिरनेकधापि तनुते रूपं निजं केवलः सोऽयं चाविमाहस्तु पूर्णगुणभूः कृष्णावतारः पतिः॥ २॥
श्रीमद्वल्लभविठ्ठलेशविलसद्वंशाब्धिपूर्णेन्दवे श्रीगोपीपतिवदनं सुमनाः सुब्रह्मामृतस्यन्दिने।
श्रीमल्लक्ष्मणभट्टसूरिरिति यन्नामाखिलाभीष्टदं तस्मै तातमहाशया यहरये कुर्मो नमः सिद्धये॥ ३॥
श्रीमद्भागवतागमः सुरतरुर्लोकैकफलत्वं गतो भाषाभेदवि भेदतस्त्रयमपि स्याद्भावितस्त्वं महत्।
भक्त्यंशफलताप्रमाणा सुदलैर्वल्कलैरथैपुनः स्कन्धैर्द्वादशभिर्युतः सुरतरुः शाखाद्विवद्वह्निय॥ ४॥
अर्थं तस्य विवेचितुं नहि विभुर्विश्वानराङ्कापते ... विधायमानुषं तनुं माव्यासवल्लीपतिः।
दत्वाऽऽज्ञांच कृपावलोकनपटुर्यस्मात्ततोऽहं मुदा गूढार्थं प्रकटीकरोमि बहुधा व्यासस्य विष्णोः प्रियं॥ ५॥

श्रीविश्वनाथचक्रवर्ती ।

निमित्तञ्च । तत्र प्रकृतेः तच्छक्तित्वात् शक्तिशक्तिमतोरभेदात् प्रकृतिद्वारकमेव तस्योपादानत्वम् । स्वरूपेण तु प्रकृत्यतीतत्वात् तस्य निर्विकारत्वञ्च । यथोक्तं भगवता । प्रकृतिर्यस्योपादानमाधारः पुरुषः परः । सतोऽभिव्यञ्जकः कालो ब्रह्म तत्रितयं त्वहमिति । प्रकृतेः स्वातन्त्र्येणोपादानत्वमेव शास्त्रसम्मतम् । तस्मात् परमेश्वरः सर्वज्ञ एव स्वातन्त्र्येण जगत्कारणमुच्यते । न तु जड़ा प्रकृतिरित्याह अर्थेषु मृज्यवस्तुमात्रेषु अभिज्ञो यस्तमित्यर्थः । अनेनेक्षतेर्नाशब्दमिति सूत्रार्थ उक्तः । स चायम् । प्रकान्त ब्रह्म जगत्कारणं भवति । कुतः । ईक्षतेः ईक्षणात् जगत्कारणत्वप्रतिपादकश्रुतिवाक्येषु तस्यैव विचारविशेषात्मकेक्षणश्रवणात् । अतो ब्रह्म नाशब्दम् । अशब्द-प्रमाणकं न भवति किन्तु शब्दप्रमाणकमेवेति । अत्र श्रुतयः । तदैक्षत बहु स्यामिति सदेव सौम्येदमग्र आसीदिति । आत्मा वा इदमेक एवाग्र आसीदिति । तस्माद्वा एतस्मादात्मन आकाशः सम्भूत इति । यतो वा इमानि भूतानि जायन्त इत्याद्याः । स्मृतिश्च । यतः सर्वाणि भूतानि भवन्त्यादियुगागमे । यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये इति । ननु तदानीं महदाद्यनुत्पत्तेस्तस्य ईक्षणादिसाधन न सम्भवतीत्यत आह स्वराट् स्वस्वरूपेणैव तथा तथा राजत इति । न तस्य कार्य्यं करणञ्च विद्यते इत्यादौ स्वाभाविकी ज्ञानबलक्रिया तीति श्रुतेः । ननु जगत्सृष्टौ ब्रह्मणः स्वातन्त्र्यमैश्वर्य्यं चावगम्यते । हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीदिति श्रुतेः । स एव ध्येयोऽस्त्वित्यत आह तेन इति । आदिकवये ब्रह्मणे यो ब्रह्म वेदं स्वतत्त्वं वा तेने प्रकाशयामास । अतो ब्रह्मणोऽपि पार-तन्त्र्यम् । ननु ब्रह्मणोऽन्यतो वेदाध्ययनाद्यप्रसिद्धं सत्यं तत्तु हृदा मनसैव तेने । प्रचोदिता येन पुरा सरस्वती वितन्वताजस्य सतीं स्मृतिं हृदि । स्वलक्षणा प्रादुरभूत् किलास्यत इति । किंवा सुदृष्टं हृदि मे तदेवेत्यादेः । अनेन बुद्धिवृत्तिप्रवर्त्तकत्वेन गायत्र्यर्थश्च दर्शितः । तदुक्तं मात्स्ये । यत्राधिकृत्य गायत्रीं वर्ण्यते धर्म्मविस्तरः । वृत्रासुरवधोपेतं तद्भागवतमिष्यते । पुराणान्तरे च । ग्रन्थो-ऽष्टादशसाहस्रो द्वादशस्कन्धसम्मितः । हयग्रीवब्रह्मविद्या यत्र वृत्रवधस्तथा । गायत्र्या च समारम्भस्तद्वै भागवतं विदुरिति । ननु सुप्तप्रतिबुद्धन्यायेन ब्रह्मा स्वयमेव वेदं तत्त्वं वा उपलभताम् इत्यत आह यत् यस्मिन् वेदे तदीये तत्त्वे वा सूरयोऽपि मुह्यन्ति अतस्त-स्मिन् ब्रह्मणः स्वतो न शक्तिः । एतेन नेतरोऽनुपपत्तेरिति सूत्रार्थो विवृतः । ननु धीमहीति ध्यानविषयत्वेन तस्य साकारत्वमभिप्रेतम् । आकाराणाञ्च त्रिगुणसृष्टत्वं तथात्वे चानित्यत्वं प्रसज्जेदित्यत आह तेजोवारिमृदां यथा विनिमयः अन्यस्मिन्नन्यावभासः । यथा अग्नौ तजसि वारिदमिति वारिणि स्थलमिति मृदि काचादौ च वारीदमिति बुद्धिः तथैव यत्र पूर्णचिन्मयाकारे त्रिसर्गः त्रिगुणसर्गोऽयमिति बुद्धिर्मृषा मिथ्यैवेत्यर्थः । तमेकं गोविन्दं सच्चिदानन्दविग्रहम् । वृन्दावनसुरभूरुहतलासीनमिति गोपालतापनीश्रुतेः । अर्द्धमात्रात्मको रामो ब्रह्मानन्दैकविग्रह इति रामतापन्याश्च । ऋतं सत्यं परं ब्रह्म पुरुषं नृकेशरिविग्रहमिति नृसिंहतापन्याश्च निर्दोषपूर्णगुणविग्रह आत्मतन्त्रो निश्चेतनात्मकशरीरगुणैश्च हीनः । आनन्दमात्रमुखपादसरोरुहादिरिति ध्यानविन्दूपनिषदश्च । नन्दव्रजजनानन्दी सच्चिदा-नन्दविग्रह इति ब्रह्माण्डपुराणात् । सर्वे नित्याः शाश्वताश्च देहास्तस्य परात्मनः । हानोपादानरहिता नैव प्रकृतिजाः क्वचिदिति महावाराहाच्च । स्वेच्छामयस्य न तु भूतमयस्येति च । बबन्ध प्राकृतं यथेति । त्वय्येव नित्यसुखबोधतनाविति । शब्दं ब्रह्म वपुर्दधदिति । सत्यज्ञानानन्तानन्दमात्रैकरसमूर्त्तय इत्यादि श्रीभागवतादपि तदाकारस्यामायिकत्वावगमात् । अनिन्द्रिया अनाहारा अनिष्पन्नाः सुगन्धिनः । एकान्तिनस्ते पुरुषाः श्वेतद्वीपनिवासिन इति नारायणीयात् । देहेन्द्रियासु हीनानां विकुण्ठपुरवासिनामिति सप्तम-स्कन्धाच्च । तदुक्तानामपि श्वेतद्वीपविकुण्ठपुरवासित्वेन साकारत्वे लब्धे अनिन्द्रिया इत्यादिभिर्मायिकाकारत्वनिषेधात् । तदाकारस्या-मायिकत्वे कः संशयः । ननु तदप्यत्र केचन विवदन्ते इत्यत आह धाम्नेति । धाम्ना स्वरूपशक्त्या स्वभक्तनिष्ठस्वानुभवप्रभावेण वा प्रतिपदसमुच्छलन् माधुर्य्यैश्वर्य्यभ्राजिश्रीविग्रहेण वा स्वेन असाधारणेन सदा कालत्रय एव निरस्ता कुहकाः कुतर्कनिष्ठा येन तम् । एतेन तर्काप्रतिष्ठानादिति सूत्रार्थः सूचितः । अत्र यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वामिति श्रुत्या स्वशब्देन तनोः स्वरूपभूतत्वे लब्धे तथा प्रकृतिक्षोभात् पूर्वमेव बहु स्यामिति स ईक्षतेत्यादिश्रुतिभिस्तदीयमनोनयनादेरमायिकत्वेवगमिते परास्य शक्ति-र्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेति श्रुत्या स्वाभाविकत्वे प्रकटमुक्ते अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत् । प्रकृतिभ्यः परं यच्च तदचिन्त्यस्य लक्षणमिति । अत्र न योजयेदिति लिङा परदारान् न गच्छेदितिवत् तत्र कुतर्कायोजनाया निषिद्धत्वे-ऽपि पतिष्यन्ति तदा पतन्तु तैरलं संलापेनेति । अथात्र शास्त्रे दशमस्य विशुद्ध्यर्थं नवानामिह लक्षणमिति दशमस्याश्रयतत्त्वस्यैवा-ङ्गित्वे तस्य च श्रीकृष्णरूप एव मुख्यत्वे तदसाधारणधर्मप्रस्तुतावश्यस्य प्रथमपद्यस्यौचिती भवत्यतस्तदेकपरस्य व्याख्यान्तरस्याव-काशः । तद्यथा । सत्यव्रतं सत्यपरमित्यादौ सत्यात्मकं त्वां शरणं प्रपन्ना इति श्रीकृष्णजन्मारम्भोक्तेः । सत्ये प्रतिष्ठितः कृष्णः सत्य-मत्र प्रतिष्ठितम् । सत्यात् सत्यञ्च गोविन्दस्तस्मात् सत्यो हि नामत इत्युद्यमपर्वणि सञ्जयकृतकृष्णनाम्नां निरुक्तेश्च सत्यं श्रीकृष्णं धीमहि नराकृति परं ब्रह्मेति ब्रह्माण्डपुराणात् । तस्मात् कृष्ण एव परो देवस्तं ध्यायेदिति श्रीगोपालतापनीश्रुतेश्च परम् । स्वेन धाम्ना श्रीमथुराख्येन सर्वत्र तदानीं कृपया दर्शितेन श्रीविग्रहेण च सदा निरस्तं कुहकं जीवानामविद्या येन तम् । मथ्यते तु जगत् सर्वं ब्रह्म-ज्ञानेन येन वा । तत् सारभूतं यद्यस्यां मथुरा सा निगद्यते । इति गोपालोत्तरतापनीप्रसिद्धेः । श्रवणात् कीर्त्तनाद्ध्यानात् पूयन्तेऽन्ते-ऽवसायिनः । तव ब्रह्ममयस्येश किमुतेक्षाभिमर्शिन इति दशमोक्तेश्च । गृहद्वीहत्विटप्रभावा धामानीत्यमरः । ननु त्वद्विग्रहस्य प्रापञ्चि-कलोकदृश्यत्वात् यद्यद्दृश्यं तदनित्यं घटवदिति न्यायेनानित्यत्वं प्रसज्जेदित्यत आह तेजोवारिमृदां त्रयाणां दृश्यभूतानां यथा यथावद् विनिमयः परस्परमिलनं यत्र तथाभूतस्त्रिसर्गस्त्रिगुणसृष्टो देही मृषा मिथ्यैव येन तत्त्रितयसृष्टस्तद्विग्रह उच्यते तेन मृषैवोक्तमित्यर्थः । प्रपञ्चातीतस्यापि तस्य यत् प्रापञ्चिकैरसुरैर्दर्शनं तत् खलु चित्रलीलासाधिकया तदिच्छया कुत्सितस्वरूपयैव पित्तदूषित-रसनैर्मत्स्यण्डिकाचर्वणमिव तन्माधुर्य्यानुभवहीनमेव । तदन्यैस्तु कुत्सकैस्तत्कृपाप्रभावात् तन्माधुर्य्यानुभवसहितमेव । यदुक्तम् । अन्ये च तन्मुखसरोजमुदारहासस्निग्धेक्षणं नृप पपुर्दृशिभिर्नृनार्य्यः । तेऽप्रः स्ववीक्षणविनष्टतमिस्रनृण्यः । क्षेमं त्रिलोकगुरुरर्थदृशञ्च यच्छन्नित्यतोऽदृश्यस्यापि तस्य दृश्यत्वं तत् कृपाया एव महैश्वर्यं ज्ञापयतीति ज्ञेयम् । अतएव भागवतामृतधृत नारायणाध्यात्म-[illegible]कोऽपि भगवानीक्ष्यते निजशक्तितः । तामृते परमानन्दं कः पश्येतामितं प्रभुमिति । तत्रत्या कारिका च । [illegible]

श्रीमधुसूदनसरस्वती ।

मविद्याख्यं यस्मिन् तत्तथा । तत्र हेतुः स्वेन धाम्नेति । अखण्डानन्दाद्वितीयचैतन्यरूपत्वात् इत्यर्थः । तथाच श्रुतिः—सदेव सोम्येदमग्र
आसीदेकमेवाद्वितीयमित्यादिरन्यथानुपपद्यमानैरेकैवाद्वितीयशब्दैरखण्डमेव वस्तु प्रतिपादयति । दृग्दृश्यसम्बन्धानुपपत्त्या कल्पितत्वेनैवा-
विद्यायाश्चैतन्यभास्यत्वानियमाच्च एतस्या एव च स्वपरसाधारणकल्पनामूलत्वान्नाविद्यान्तराभ्युपगमदोषः । उत्पत्त्यनङ्गीकारेण अस्तेश्च
नित्यत्वेन नात्माश्रयदोषः । अनादिभावत्वञ्चात्मनो नित्यत्व प्रयोजकं न भवति किन्तु परमार्थसत्यत्वम् । अविद्यायाः सदसद्विलक्षणत्वात्
ज्ञाननिवर्त्त्यत्वोपपत्तिः । तथाच मायातत्कार्य्यहीनः परमात्मा तदूपदलक्ष्यो दर्शितः । एतेनैव त्वम्पदलक्ष्योऽपि दर्शितः तस्यापि मायातत्कार्य्य
शरीरादिहीनत्वात् जाग्रत्स्वप्नसुषुप्तिसाक्षिणस्तद्धर्म्माभावात् । एवञ्च पदार्थज्ञानपूर्वकवाक्यार्थबोधे सति तदावृत्तिरूपं निदिध्यासनमुपपन्नम् ।
अथजन्माद्यस्य यत इत्यनेनानन्दरूपत्वं दर्शितम् आनन्दाद्ध्येव खल्विमानिभूतानि जायन्ते इत्यादिश्रुतेः अन्वयादित्यनेन सद्रूपत्वं नित्यत्वं
विभुत्वं च सर्वदेशकालान्वयबोधनात् स्वराडित्यनेन स्वप्रकाशज्ञानरूपत्वं धाम्नास्वेन निरस्तकुहकमित्यनेनाद्वितीयत्वं सत्यमित्यनेन पर-
मार्थत्वमिति । सत्यं ज्ञानमनन्तं ब्रह्म विज्ञानमानन्दं ब्रह्मेत्यादिवाक्यार्थो दर्शितः । अथ च त्वम्पदार्थोऽपि शक्यते अनेन श्लोकेन दर्शयितुं
श्लेषालङ्कारस्यात्यन्तचारुताहेतुत्वात् । तथाहि—यो जीवः अस्य देहेन्द्रियादेर्जन्मादिविकारजातम् अन्वयात् अनुगतवान् अविद्ययात्मन्या-
रोपितत्वात् तं परं सत्यं धीमहीति सम्बन्धः । अस्य कीदृशस्य—यतः गच्छतः सर्वदापरिणममानस्येत्यर्थः जन्मादि गच्छत इति वा । ननु
जातो देवदत्तो मृतो देवदत्त इति प्रतीतेः तद् यथा अग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे एत आत्मानो व्युच्चरन्तीति
श्रुतेश्च स्वत एव जन्मादिमान् जीवोऽस्तुनेत्याह इतरतश्चेति । जन्माद्ययोग्यत्वादित्यर्थः । तथाच श्रुतिः—न जायते म्रियते वा विपश्चि-
न्नायं कुतश्चिन्न बभूव कश्चित् इति अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे इत्याद्या स्मृतिश्च जीवस्य जन्मविनाशौ
वारयति । कृतहानाकृताभ्यागमादिदोषप्रसङ्गादुपाध्युत्पत्तिमात्रेणैव व्युच्चरन्तीत्यादिश्रुत्युपपत्तेस्तद्गुणसारत्वा(दि)त्यादिन्यायाच्चेति चका-
रार्थः । देहमिन्द्रियं मनः प्राणञ्च केचिदात्मत्वेन प्रतिपन्नास्तान् निराकरोति अर्थेष्वभिज्ञ इति । न हि भौतिकानां देहेन्द्रियप्राणमनसां
ज्ञातृत्वं सम्भवति घटादावपि तत्प्रसङ्गात् एतेषां चानित्यत्वात् आत्मनित्यत्वस्य च व्यवस्थापितत्वात् । एतेन विभुत्वमपि व्याख्यातम् ।
विभुत्वं हि मध्यमपरिमाणत्वेनोपपद्यमानं परमाणुत्वे वा परममहत्त्वे वा व्यवतिष्ठेत् एतेन देहाद्यतिरिक्तोऽपि देहपरिमाण एवात्मेति
क्षपणकपक्षो निरस्तः । तत्र परमाणुत्वे सकलशरीरव्यापिसुखदुःखानुपलम्भप्रसङ्गात् सकलदेहव्यापकोऽस्तु तर्हिदेहेन्द्रियातिरिक्तो
विभुरेवात्मा ज्ञानाश्रयो न तु ज्ञानरूप इति तत्राह स्वराडिति । स्वयमेव राजत इति स्वराट् स्वप्रकाशज्ञानरूपः न तु ज्ञानाश्रय इत्यर्थः ।
अत्रायं पुरुषः स्वयं ज्योतिर्भवतीत्यादि श्रुतेः सन्देहविपर्य्ययाद्यविषयत्वेन सर्वदा भासमानत्वात् स्वजन्मज्ञानाविषयत्वे च कर्तृकर्मविरोधात्
ज्ञोऽत एवेति न्यायात् ज्ञानरूप एवात्मेत्यर्थः । ननु जीवस्य स्वप्रकाशज्ञानरूपत्वे जन्मादिशून्यत्वे च ब्रह्मणो भेदकाभावात् स्वत एव च
ब्रह्माभिन्नत्वे शास्त्रारम्भो निरर्थकः ब्रह्मावबोधस्य सर्वदाविद्यमानत्वादित्यत आह तेने ब्रह्म हृदा य आदिकवये इति । हृदा मनसा तदु-
पाधिना तदात्म्यापन्नः सन् अब्रह्म ब्रह्मविपरीतं कर्तृत्वभोक्तृत्वादिलक्षणं संसारं सन्तरणरूपं विस्तारितवान् । तथाच श्रुतिः—स
समानः सन्नुभौ लोकावनुसञ्चरति ध्यायतीव लेलायतीव स धीः शब्दो भूत्वेत्याद्या सम्बन्धादसंसारिणोऽपि संसारितां दर्शयति । तथा
च तन्निवृत्तये ब्रह्मात्मतोपदेशो युक्त इत्यर्थः । संसारस्य मोक्षहेतुतां दर्शयति—आदिकवय इति । आदिभूतं कं सुखं ब्रह्मानन्दरूपो मोक्ष
इत्यर्थः । तस्य वयःप्राप्तिस्तदर्थम् अयवय-गताविति स्मरणात् निमित्तात् कर्मयोगे ( पां २ । ३ २६ वां ) चेयं सप्तमी चर्मणि द्वीपिनं
हन्तीतिवत् । न हि संसाराभावे श्रवणमननादिसाधनानुष्ठानं सम्भवति न च तदभावे तत्प्रज्ञानोदयः न च तमन्तरेण अनाद्यविद्या-
निवृत्तिरिति मोक्षार्थमेव संसारं विस्तारितवानित्यर्थः । तथाच श्रुतिः—रूपं रूपं प्रतिरूपो वभूव तदस्य रूपं प्रतिचक्षणायेति इन्द्रो
मायाभिः पुरुरूप ईयत इति च ब्रह्म वा इदमग्र आसीदिति आत्मानमेव वेदाहं ब्रह्मास्मीति तस्मात्तत् सर्वमभवदिति च संसारद्वारा
अविद्यानिवृत्तिरूपं मोक्षं दर्शयति । ननु तर्हि भवतु स्वप्रकाशज्ञानरूप आत्मा किन्तु नानन्दरूपः प्रतिशरीरं भिन्नश्चेति सांख्यमतं तत्राह
मुह्यन्ति यत् सूरय इति । यत् यत्र यस्मिन् जीवस्वरूपे सूरयः तार्किकाद्यपेक्षया सुधियोऽपि सांख्याः मुह्यन्ति भ्राम्यन्ति शुद्धस्वरूपं
जानन्तोऽपि आनन्दरूपत्वं प्रतिदेहमेकत्वं ब्रह्माभिन्नत्वं चाजानन्तः । तथाच श्रुतयः—एष एव परम आनन्द इति एको देवः सर्वभूतेषु
गूढ इति अयमात्मा ब्रह्मेति तादृग्रूपतां जीवस्य बोधयन्ति । तदेतत् प्रेयः पुत्रात् प्रेयो वित्तात् प्रेयोऽन्यस्मात् सर्वस्मादान्तरं यदयमात्मेति
श्रुत्यन्तराच्च परप्रेमास्पदत्वादानन्दरूपत्वम् । नानात्वे भोगव्यवस्थानुपपत्तेः प्रतिदेहमेकत्वम् । नहि विभूनामात्मनां सर्वदेहसम्बन्धित्वा-
विशेषे कर्मादिकमपि भोगनियामकं भवितुमर्हति अविशेषात् । एकात्मवादे तु तदन्तःकरणावच्छिन्नप्रदेशानां भिन्नत्वादुपपद्यत एव
व्यवस्था देहभेदादेव च प्रतिसन्धानाभावः । एवञ्च भेदकशून्यत्वात् ब्रह्माभिन्नत्वमपि सिद्धं लक्षणैक्यात् । एवं त्वम्पदवाच्यार्थं पूर्वा-
र्द्धेन प्रतिपाद्य तल्लक्ष्यमुत्तरार्द्धेन वक्तुमध्यारोपापवादन्यायेनारभते तेजोवारिमृदां यथा विनिमय इत्यादिना । यत्र आत्मनि त्रयाणां स्थूल-
सूक्ष्मकारणोपाधीनां जाग्रत्स्वप्नसुषुप्त्यवस्थाहेतूनां सर्गः संसर्गो मिथ्यैव न तु परमार्थतः स यत्तत्र किंचित् पश्यत्यनन्वागतस्तेन भवत्य-
सङ्गो ह्ययं पुरुषइत्यादिश्रुतिभ्यः साक्ष्यस्य साक्षिधर्मानुपपत्तेः भास्यस्य घटादेर्भासकदीपादिधर्मत्वादर्शनात् । मिथ्यात्वे दृष्टान्तः तेजो-
वारीति । वारिणि करकारूपे मृद्बुद्धिः । एवं काचादिरूपायां मृदि तेजोबुद्धिरित्युदाहार्य्यम् । तथाचेदमनुमानं सूचितम्—आत्मनि
जाग्रदादिबुद्धिर्मृषा तदभाववति तद्बुद्धित्वात् तेजसि वारिबुद्धिवत् । तदभाववत्त्वञ्चात्मनः श्रुतिस्मृतिन्यायैर्निश्चितमिति नासिद्धिः ।
एवं लक्षणैक्येन ब्रह्माभिन्नत्वं दर्शयति धाम्ना स्वेन सदा निरस्तकुहकमिति । एतदेव तत्पदार्थत्वम्पदार्थतदैक्यकथनद्वारेण शास्त्रस्य
विषयो दर्शितः । तत्र श्रवणमनननिदिध्यासनयोस्तृतीयञ्च निदिध्यासनमिह प्रतिपाद्यते मनननिदिध्यासनवतो विजातीयप्रत्ययनिवारणा-
स्य मनोनिग्रहद्वारा व्युत्पाद्यमानत्वात् । चतुर्लक्षणमीमांसारूपत्वञ्चास्य सूचितम् । तथाहि—पूर्वार्द्धेन जन्माद्यस्य यत इति न्यायः
साक्षादेव दर्शितः । अन्वयादित्यनेन तत्तु समन्वयादिति अर्थेष्वभिज्ञ इत्यनेन ईक्षतेर्नाशब्दमिति तेने ब्रह्म हृदेत्यादिना शास्त्रयोनित्वादिति ।
मुह्यन्ति यत् सूरय इत्यनेन एतेन सर्वे व्याख्याता व्याख्याता इत्यन्तो न्यायकलापः सूचित इति समन्वयाध्यायो व्याख्यातः तेजोवारि-
मृदामित्यादिना तदनन्यत्वमारम्भणशब्दादिभ्य इत्यादिन्यायसूचनादविरोधाध्यायार्थः धीमहीत्यनेन सह कार्य्यान्तरविधिपक्षेण तृतीयं

## श्रीमधुसूदनसरस्वती ।

तद्वतो विध्यादिविधित्यादिन्यायसूचनात् साधनाध्यायार्थः धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परमिति फलाध्यायार्थः अविद्यातत्कार्यनिवृत्त्युपलक्षितपरमानन्दरूपावशेषात् । एवं सति पारमहंसी संहितेति समाख्योपपद्यते परमहंसानां वेदान्तवाक्यार्थनिदिध्यासनरूपत्वादत्रत्योपाख्यानानां तत्तात्पर्यकत्वात् । एवं धायेमेति पदस्थाने धीमहीति छान्दसप्रयोगात् गायत्रीरूपत्वमस्याः सूचितम् । तत् सवितुर्वरेण्यमित्यस्यार्थः स्वराडित्यनेन सूचितः । भर्गो देवस्य धीमहीत्यस्यार्थः जन्माद्यस्य यत इत्यादिना सूचितः । धियो यो नः प्रचोदयादित्यस्यार्थस्तेने ब्रह्म हृदेत्यादिना सूचितः । तथाच गायत्रीवदनिशं जप्तव्यैषा संहितेति दर्शितम् । लक्षणञ्च श्रीभागवतस्य सूचितम् । तथाच मत्स्यपुराणे पुराणदानप्रस्तावे—यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः । वृत्रासुरवधोपेतं तद्भागवतं विदुरिति गायत्र्युपक्रमो लक्षणत्वेनोक्तः । एवञ्च सर्गादीन्यपि दशलक्षणान्यनेन श्लोकेन सूचितानि—जन्माद्यस्य यत इत्यनेन सर्गविसर्गस्थानानि तृतीय चतुर्थ पञ्चमस्कन्ध-व्युत्पाद्यानि सूचितानि । तेने ब्रह्म हृदा य आदिकवय इत्यनेन भक्तानुग्रहलक्षणं पोषणं षष्ठस्कन्धव्युत्पाद्यं सूचितम् । मुह्यन्ति यत् सूरय इत्यनेन कर्मवासनारूपा ऊतिः सप्तमस्कन्ध-व्युत्पाद्या सूचिता । मन्वन्तरेशानुकथे अष्टमनवम-स्कन्ध-प्रमेये स्थानमध्ये एवान्तर्भूते । तेजोवारिमृदां विनिमय इत्यनेन निरोधो दशमस्कन्धार्थो दर्शितः । धाम्ना स्वेन सदा निरस्तकुहकमित्यनेन मुक्तिरेकादशस्कन्धार्थो दर्शिता । सत्यं परमित्यनेनाश्रयो द्वादशस्कन्धार्थो दर्शितः । धीमहीत्यात्मनेपदोत्तमपुरुषप्रयोगादधिकारी प्रथमस्कन्धार्थः । तेनैव ध्यानोपलक्षितसाधनानुष्ठानरूपो द्वितीयस्कन्धार्थः । इति कृत्स्नभागवतार्थसूचनम् । तदेतद् व्याख्यानमौपनिषदाय रोचते ।

सात्वतास्तु वर्णयन्ति—पञ्चीकृतपञ्चमहाभूतोपहितं शुद्धचैतन्यं तदभिमानिनं विराडन्तर्यामिरूपम् ओतम् इत्यनिरुद्ध इति चाख्यायते । एवमपञ्चीकृतपञ्चमहाभूतोपहितं शुद्धचैतन्यं तदभिमानिहिरण्यगर्भान्तर्यामिरूपम् अनुज्ञात इति प्रद्युम्न इति चाख्यायते । एवं स्थूलसूक्ष्मभूतकारणीभूतं यन्मायात्मकम् अव्याकृतं तदुपहितं शुद्धचैतन्यं तन्निष्ठचिदाभासोपलक्षितम् अनुज्ञा इति सङ्कर्षण इति चाख्यायते। अनुपहितन्तु चैतन्यं सर्वानुस्यूतसन्मात्रं सर्वसाक्षिपरमानन्दघनम् अविकल्प इति वासुदेव इति चाख्यायते । सङ्कर्षणप्रद्युम्नानिरुद्धानामपि वासुदेवत्वं वर्त्तत एव । उपाधिकृतः केवलं नामविशेषः । एतच्च नृसिंहतापनीयोत्तरभागे व्याख्यायते—ओतानुज्ञातानुज्ञाविकल्पैः स्थूलसूक्ष्मबीजसाक्षिभिरिति बहुकृत्वोऽभ्यासेन । अत्र च वासुदेवः परमात्मा सङ्कर्षणो जीवः प्रद्युम्नस्तु मनः अनिरुद्धोऽहङ्कार इति पाञ्चरात्रिकप्रक्रिया नादरणीया तद्वचनविरोधात् श्रुतिविरोधाच्चेत्याद्युत्पत्त्यसम्भवादित्यधिकरणे व्याख्यातम् । केवलं परमात्मैवानुपहितो वासुदेवः कारणोपहितः सङ्कर्षणः सूक्ष्मभूतोपहितः प्रद्युम्नः स्थूलभूतोपहितोऽनिरुद्ध इति यथा व्याख्यानमेवादरणीयम् श्रौतत्वादुपपन्नत्वाच्च । एवं स्थिते श्लोकयोजना—परं सत्यं वासुदेवाख्यं वयं धीमहि उपास्महे । ध्यानमत्रोपासनरूपमेवाभिप्रेतं चतुर्व्यूहरचनाया उपासनार्थत्वात् । नन्वनुपहितस्य वासुदेवस्य बुद्धावनारोहात् कथमुपास्यत्वम् सत्यम्—अनिरुद्धादिरूपमप्यविवक्षितोपाधिसम्बन्धं वासुदेवात्मकमेव ओतकूपद्वारादिकमिवालक्षिततदुपाधिसम्बन्धमाकाशात्मकमेव विवक्षितोपाधिसम्बन्धे तु पृथग्व्यपदेशभेदं लभते न तु तावता वस्त्वन्यत्वं भवति । तथाच तद्द्वारा वासुदेवे मनोवृत्तिः कार्य्येति वक्तुमारभते जन्माद्यस्य यत इत्यादिना । अस्य जगतश्चतुर्दशभुवनरचनात्मकस्य ब्रह्माण्डस्य जन्मादिविकारजातं यतो भवति तं धीमहीति सम्बन्धः । तस्य जगद्विरचनयोग्यतामाह अर्थेष्वभिज्ञ इति । ब्रह्माण्डाभिमानिविराडपेक्षया वैलक्षण्यमाह स्वराडिति । ब्रह्माण्डावच्छिन्नचिदाभासो हि विराड्जीवः अयन्तु तद्बिम्बभूतस्तदन्तर्यामी स्वयमेव राजत इति स्वराट् विम्बभूतत्वेन अन्यानपेक्षत्वात् । एवमनिरुद्धमोत्रमुक्त्वा प्रद्युम्नमनुज्ञातमाह तेने ब्रह्म हृदा य आदिकवय इति । आदिकवये सूक्ष्मभूतावच्छिन्नचिदाभासाय हिरण्यगर्भसूत्रादिसंज्ञकाय जीवाय ब्रह्मवेदं तदन्तर्यामिरूपेण विम्बभूतो यस्तन्मनसैव तेने इति हिरण्यगर्भवैलक्षण्यं स्पष्टमेवोक्तम् । सङ्कर्षणरूपतामाह मुह्यन्ति यत् सूरय इति । यत्र त्रिगुणात्मकमायाप्रतिविम्बस्य जगत्कारणस्य विम्बभूते सर्वान्तर्यामिणि सङ्कर्षणाख्ये सूरयोऽपि भ्राम्यन्ति स्थूलसूक्ष्मप्रपञ्चद्वय भ्रान्त्या कल्पयन्ति प्रधानपरमाण्वादिरूपेण वा भ्राम्यन्ति । वासुदेवरूपतामाह तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषेति । त्रिविधः सर्गः त्रिसर्गः आध्यात्मिक आधिभौतिक आधिदैविकश्चेति स यत्र मृषा सर्वथा असन्नेवेत्यर्थः । अपह्नववचनो मृषाशब्दः । त्रयाणाम् अनिरुद्धप्रद्युम्नसङ्कर्षणोपाधीनां सर्गः संसर्गो यत्र मृषेति वा । तदेवमुपहितत्वेऽनुपहितत्वे स्वेन धाम्ना सदा निरस्तकुहकं निवृत्ताविद्यातत्कार्य्यविम्बभूतत्वेनोपाधितद्धर्मैरसंस्पृष्टम् अतएव परं सत्यं वासुदेवाख्यं ध्यायेमेति निर्गलितोऽर्थः । अत्रानिरुद्धपुरुषावतारो नारायणः प्रलयोदकशायी भुवनकमलमूलभूत इति सविस्तरं मूले एव व्यक्तीभविष्यति । इतरेषामपि रूपं वक्ष्यते विस्तरश्चास्य प्रक्रियायां मोक्षधर्मे नारायणीयोपाख्यान इति । तदेतद्व्याख्यानं पौराणिकाय रोचते ।

केवलभक्तिरसिकास्तु—केवलवासुदेवावतारश्रीकृष्णमात्रपरतया योजयन्ति । सङ्कर्षणप्रद्युम्नानिरुद्धानां स्वसमाख्ययैव पृथगवतीर्णत्वाद्वासुदेवावतार एव श्रीकृष्णः कार्ष्णीयाध्यात्माद्युपाख्यानेष्वपि तथैव प्रतिपाद्यते इहापि कृष्णस्तु भगवान् स्वयमिति । तस्मात्तत्परत्वेनैव सर्वाणि पदानि योजनीयानि ।—तं परं सत्यं वासुदेवात्मकं श्रीकृष्णं वयं ध्यायेम । तस्य सर्वप्रेमास्पदत्वेन ध्येयतामाह जन्माद्यस्य यत इति । यतः श्रीकृष्णात् यस्मिन् श्रीकृष्णे वा आद्यस्य रतिभावस्य प्रेमाख्यस्य जन्म भवति सर्वेषामिति शेषः । रतिभावस्य चाद्यत्वम्—रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा । जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिता इति भरतनाट्यपाठात् । सर्वप्राणिरतिविषयत्वंच परमानन्दरूपत्वात् । तथाच वक्ष्यति—त्रैलोक्यसौभगमिदंच निरीक्ष्य रूपं यद्गोद्विजद्रुममृगाः पुलकान्यबिभ्रन्निति । दुर्वाससा चाश्चर्यं सर्वप्राणिनां प्रियो भवेति वरो दत्त इति शान्तिपर्वणि दानधर्मेषु पठ्यते । प्रेमाख्यस्य रतिभावस्योत्पत्तौ कारणमाह अन्वयादितरतश्चेति । अन्वयः सन्निकर्षः इतरो विप्रकर्षस्ताभ्याम् । तथाच वक्ष्यति—गोपीनां परमानन्द आसीद्गोविन्ददर्शने । क्षणं युगशतमिव यासां येन विनाभवदिति । यर्ह्यम्बुजाक्षापससार भो भवान् कुरून् मधून् वाथ सुहृद्दिदृक्षया । तत्राब्दकोटिप्रतिमः क्षणोऽभवद्भाव [illegible] इति । तथा सन्निकर्षविप्रकर्षाभ्यां जायमानो रतिभावः स्थायी तद्विषयः श्रीकृष्णो भक्तिरसालम्बनं विभाव इत्यर्थः । विस्तरेण चैतद्वक्ष्यते । ननु तस्मिन् जायमानोऽपि प्रमा निरर्थकः तदज्ञानात् राजादिषु

श्रीमधुसूदनसरस्वती ।

प्रेमापरिज्ञानेन विपरीतकार्य्यस्यापि दर्शनादित्यत आह अर्थेष्वभिज्ञ इति । सर्वेष्वर्थेषु मनोवृत्त्यादिरूपेष्वपि सर्वप्रकारेणाभिज्ञः । एवञ्च सार्वज्ञ्याभावास्त्यज्ञानकृतं वैयर्थ्यम् । प्रेमपरिज्ञानेऽपि तदाश्रयजनोपकारासामर्थ्यमाशङ्क्याह स्वराडिति । स्वतन्त्रः सर्वशक्तिरित्यर्थः । शक्तिह्रासे हि पारतन्त्र्यं स्यात् । तथाच न असामर्थ्यकृतं वैयर्थ्यम् । ननु गोपबालकस्य कथं सर्वज्ञत्वं सर्वशक्तित्वं चेत्यत आह तेने ब्रह्म हृदा य आदिकवय इति । आदिकवये ब्रह्मणे वत्साहरणद्वारा स्वरूपजिज्ञासवे ब्रह्म निजरूपं सत्यज्ञानादिलक्षणं सर्वशक्तिच यस्तेने विस्तारितवान् प्रदर्शितवान् तदपि हृदा सङ्कल्पमात्रेणैवेत्यर्थः । तथाच वक्ष्यति—तत्रोद्वहत् पशुपवंशशिशुत्वनाट्यं ब्रह्माद्वयं परमनन्तमगाधबोधम् । वत्सान् सखीनिवपुरा परितो विचिन्वदेकं सपाणिकवलं परमेष्ठ्यचष्टेत्यादि । ननु ब्रह्मा स्वयमेव जानाति सर्वज्ञत्वात् किं तज्ज्ञापनेनेत्यत आह मुह्यन्ति यत् सूरय इति । यत् यत्र श्रीकृष्णस्वरूपे सूरयो ब्रह्मादयो मुह्यन्ति इदमित्थमिति निश्चयं कर्त्तुं न शक्नुवन्ति तन्मायायाः सर्वमोहकत्वात् । तथाच भगवतोक्तं गीतासु—नाहं प्रकाशः सर्वस्य योगमायासमावृतः । मूढोऽयं नाभिजानाति लोको मामजमव्ययमिति । ब्रह्मणो मोहे हेत्वन्तरं वदन् कारुणिकत्वं दर्शयति तेजोवारिमृदामित्यादिना । ब्रह्मणा वत्सेषु तत्पालकेषु तदुपकरणशिक्यादिषु च स्वसृष्टेषु भौतिकेष्वपहृतेषु यत्र श्रीकृष्णे त्रिसर्ग- त्रयाणां वत्सतत्पालकतदुपकरणानां सर्गः प्रादुर्भावो जात इति शेषः । तत्र दृष्टान्तः तेजोवारिमृदां विनिमयो यथेति । त्रिवृत्कृता भूतारब्धो यथा ब्रह्मणा कृतो वत्सतत्पालकतदुपकरणरूपः सर्गस्तथैव भगवता कृतः सच्चिदानन्दस्वरूपत्वेनाभौतिकोऽपि भौतिकवदृश्यत इत्यर्थः । तथाच वक्ष्यति—एवमेतेषु भेदेषु चिरं ध्यात्वा स आत्मभूः सत्याः के कतरे नेति ज्ञातुं नेष्टे कथंचनेति । तथाच के मया सृष्टा भौतिका के च भगवता सृष्टा अभौतिका इति निर्णयासामर्थ्ये च ब्रह्मणो मोहो युक्त इत्यर्थः । ननु भगवता किमित्यन्ये सृष्टाः ब्रह्मणा कृतानामेवानेतुं शक्यत्वादित्यत आह मृषेति । मर्षणं मृषा सहिष्णुतारूपा क्षमेत्यर्थः । मृष क्षमायामिति स्मरणात् । तथाच वक्ष्यति—ततः कृष्णो मुदं कर्त्तुं तन्मातॄणां च कस्य च । उभयायितमात्मानं चक्रे विश्वकृदीश्वर इति । तेषामानयने ब्रह्मणोऽसन्तोषस्तदन्येषां तत्तुल्यानां करणे तद्बन्धूनामिति विचार्य्य परमकारुणिकेन भगवता अन्य सृष्टा इत्यर्थः । ननु महामायेन ब्रह्मणा विहितां मायां कथं कृष्णो ज्ञातवान् ज्ञात्वा वा किमिति क्षान्तवान् एतादृशेऽपराधे कोपस्योचितत्वादित्याशङ्क्याह—धाम्ना स्वेन सदा निरस्तकुहकमिति । निरस्तं नितरां निराकृतं कुहकं कपटं ब्रह्मणा कृतं मोहनं तन्निमित्तकोपादिकंच येन इति तथा तम् । तत्र हेतुर्धाम्ना स्वेन सदेति । स्वरूपेण आत्मतत्त्वेन ईश्वररूपेण प्रभुत्वेन सर्वनियामकत्वेन सदनं सत् अवस्थानं स्वेन स्वतया धाम्ना तद्रूपेण प्रभावेणेत्यर्थः । तथाचान्तर्य्यामित्वात् परिज्ञानम् आत्मत्वाच्च क्रोधाभाव इति सर्वमनवद्यम् । एवंच सर्वप्रियत्वेन परमानन्दरूपः सर्वज्ञः सर्वशक्तिः सर्वमोहनः सर्वसुखप्रदः सर्वापराधसहिष्णुः सर्वात्मा परमकारुणिको विदग्धतरश्च श्रीकृष्णो भक्तिरसालम्बनत्वेन सम्पूर्णग्रन्थप्रतिपाद्य इति ध्वनितम् । विशेषणद्वारा विशेष्योपस्थापितश्चालङ्कारिकाय रोचतेतराम् । साक्षादनभिधानंच अतिरहस्यत्वात् । अर्थभेदः कथंचन प्रतिपत्तॄणां विचित्रप्रज्ञानां विनोदार्थं स्थलमतिविस्तरेण । भक्तिरसानुभवप्रकारश्च सर्वोऽप्यस्माभिर्भक्तिरसायने अभिहितः । अत्रापि कियान् वक्ष्यते ॥ १ ॥

---

श्रीराधामोहनतर्कवाचस्पति गोस्वामी भट्टाचार्य्यः ।

ॐ नमोनन्दसूनवे ॥ श्रीकृष्णचरणाम्भोजे परमानन्दामृताम्बुधौ । मनोमधुव्रतोनित्यं रमतां मलताङ्कितः ॥ श्रीकृष्णभावलुब्धेन राधामोहन शर्म्मणा । श्रीमद्भागवतस्यायं तत्वसारः प्रकाश्यते ॥ अथ द्वापरे ज्ञान वैकल्ये पुनर्ज्ञानवर्त्म प्रदर्शनाय ब्रह्मादिदैवतैरर्थितो भगवान् नारायणः व्यासत्वेनावततार । ततश्च वेदान् चतुर्धा विभज्यापि तज्ज्ञानशक्तिविहीना मन्दमतयोऽल्पायुषोलोकाः कलौ भविष्यन्ति इति निश्चित्य स्त्रीशूद्रद्विजबन्धूनां अपि निःश्रेयसाय भारतं पुराणान्तराणि च कृत्वा तत्रापि श्रीकृष्णगुणवर्णनमन्यधर्म्माद्यनुकीर्त्तितमिति चित्त प्रसत्ति मलभमानो वेदव्यासो नारदोपदेशतः श्रीकृष्णगुणवर्णन प्रधानं भागवताख्यं स्वकृतवेदान्तसूत्रव्याख्यानमयं प्रारिप्सुस्तत्प्रतिपाद्यम् परममङ्गलं ग्रन्थादौ निर्दिदेश जन्माद्यस्येतिपद्येन ॥ तथाच स्कान्दे । नारायणाद् विनिष्पन्नं ज्ञानं कृतयुगे स्थितं । किञ्चित्तदन्यथाजातं त्रेतायां द्वापरेऽखिलं । गौतमस्य ऋषेः शापात् ज्ञानेत्वज्ञानतां गते । संकीर्णबुद्धयोदेवा ब्रह्मरुद्रपुरस्सराः । शरण्यं शरणं जग्मुर्नारायणमनामयं । तैर्विज्ञापितकार्य्यस्तु भगवान् पुरुषोत्तमः । अवतीर्णो महायोगी सत्यवत्यां पराशरात् ॥ उत्सन्नान् भगवान् वेदानुज्जहार हरिःस्वयं । चतुर्धा व्यभजत्तांस्तु चतुर्विंशतिधा पुनः । शतधा चैकधा चैव तथैवच सहस्रधा । कृष्णो द्वादशधा चैवं पुनस्तस्यार्थवित्तये । चकार ब्रह्मसूत्राणि येषां सूत्रार्थमञ्जसा ॥ प्रथमे । स्त्रीशूद्रब्रह्मबन्धूनां त्रयीनश्रुतिगोचरा । कर्म्मश्रेयसि मूढानां श्रेय एव भवेदिह । इति भारतमाख्यानं कृपयामुनिनाकृतं । अथ भारतादिव्यपदेशेन कर्म्मकाण्डवेदार्थमादिश्य परमार्थसाधन ब्रह्मज्ञानसाधन प्रतिपादकं श्रीभागवतमहापुराणमाह जन्माद्यस्येत्यादिना । एतच्चाग्रे स्फुटीकृतं । भारतव्यपदेशेनह्याम्नायार्थः प्रदर्शितः । इत्यादिना धर्म्मकाण्डवेदार्थस्य बाहुल्येन प्रदर्शकत्वमुक्तं भारतस्य । भवतानुदितप्रायं यशो भगवतोऽमलं । येनैवासौ न तुष्येत मन्ये तद्दर्शनं खिलं । यथा धर्म्मादयश्चार्था मुनिवर्य्यानुकीर्त्तिताः । न तथा वासुदेवस्य महिमाह्यनुवर्णितः । न यद्वचश्चित्रपदं हरेर्यशो जगत् पवित्रं प्रगृणीत कर्हिचित् । तद्वायसं तीर्थमुशन्ति मानसा नयत्र हंसा निरमन्त्युशिक्क्षयाः ॥ तद्वाग्विसर्गो जनताघविप्लवो यस्मिन् प्रतिश्लोकमबद्धवत्यपि । नामान्यनन्तस्य यशोऽङ्कितानि यत् शृण्वन्ति गायन्ति गृणन्ति साधवः । नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरञ्जनं कुतः पुनः शश्वदभद्रमीश्वरे नचार्पितं कर्म्म तदप्यकारणं ॥ अतो महाभाग भवानमोघदृक् शुचिश्रवाः सत्यरतो धृतव्रतः । उरुक्रमस्याखिलबन्धमुक्तये समाधिनानुस्मर तद्विचेष्टितं । इति नारदोपदेशानन्तरं श्रीभागवताख्यमहापुराण प्रकटनादस्य परमार्थसाधनत्वं । तथाहि अनर्थोपशमं साक्षाद्भक्तियोगमधोक्षजे । लोकस्याजानतो व्यासश्चक्रे सात्वतसंहितां । यस्यां वै श्रूयमाणायां कृष्णे परमपूरुषे । भक्तिरुत्पद्यते पुंसां शोकमोहभयापहा । अत्र कृष्णभक्तेरुद्देश्यकथनेन परं श्रीमद्भागवतं परपदेन कृष्णएवोक्तः । एतेनाथातो ब्रह्मजिज्ञासेति

श्रीराधामोहनतर्कवाचस्पति गोस्वामी भट्टाचार्य्यः ।

सूत्रं व्याख्यातं । तत्राथशब्दानन्तर्य्यार्थत्वः । आनन्तर्य्यञ्च प्रागुक्तकर्म्मकाण्ड पूर्व्वमीमांसाधीन सम्यक्कर्म्मकाण्डज्ञानस्य । भारतादिकञ्च पूर्व्वमीमांसानुसारीति । अतः शब्दहेत्वर्थः । तद्यथेहकर्म्मजितोलोकः क्षीयते एवमेवामुत्रपुण्यजितोलोकः क्षीयते इत्यादितोवेदात् । कर्म्मफलस्यानित्यत्व वोधनात् । ब्रह्मविदाप्नोति परमिति तमेवविदित्वाति मृत्युमेतिनान्यः पन्थाविद्यतेऽयनायइति श्रुत्या ब्रह्मावगतेर्नित्यफलत्ववोधनाञ्च । कर्म्मज्ञानानन्तरं ब्रह्मजिज्ञासाइत्यर्थः । अत्र ब्रह्मणोजिज्ञासेति कर्म्मपर षष्ठीतत्पुरुषेण ब्रह्मजिज्ञास्यं ज्ञातुमिष्टमित्यर्थोलभ्यते ब्रह्मज्ञानस्य इष्टत्वेच ब्रह्मज्ञानमेव कार्य्यतयापर्य्यवस्यति । तथोक्तं समाधिनानुस्मरतद्विचेष्टितमिति तद्ब्रह्मविजिज्ञासस्वइति श्रुतौ विजिज्ञासस्वविजानीहि इत्यर्थः । ब्रह्मज्ञानस्यैवनिःश्रेयः साधनत्वेन विधेयत्वात् विज्ञायप्रज्ञां कुर्व्वीतइतिश्रुतेः । विज्ञानेच्छायाश्च विज्ञानेविधेयत्वावगमेनैवसम्पत्ते स्तस्या अभिधेयत्वाञ्च सन्प्रत्ययार्थोनविवक्षितः इति विज्ञानत्वं समाधिरूपं तस्यैव साक्षात्परमेश्वरज्ञानसाधनत्वात् अतएव रामानुजचरणैर्ब्रह्मजिज्ञासेत्यत्रजिज्ञासापदं निदिध्यासनपरमित्युक्तं अनेन च ग्रन्थेन व्यासंप्रतिनारदोपदेशेन कर्म्मकाण्डपरभारतादीना मनुपादेयत्वमस्यैवब्रह्मपरत्वेनोपादेयतेत्युक्त्या परमब्रह्म श्रीकृष्ण एव जिज्ञास्य इत्युक्तं । अथ पूर्व्वमीमांसाज्ञानानन्तर मेवोत्तरमीमांसया ब्रह्मजिज्ञास्यमित्येवाथातो ब्रह्मजिज्ञासाइत्यत्राथशब्देन वोधितं तन्नसङ्गतंभाति । प्रागनधीत धर्म्मशास्त्रस्यापि वेदान्तविचार प्रवृत्तेः । धर्म्मज्ञान ब्रह्मज्ञानयोः फलभेदाच्च । न च मोक्षविरोधि ऋणत्रयापकरणस्य ब्रह्मजिज्ञासायामपेक्षितत्वेन तत्रच देवर्णस्य यज्ञादिनिर्वर्त्यत्वात् यज्ञादेश्च पूर्व्वमीमांसार्थावधारण सम्पद्यत्वात् आनन्तर्य्यक्रमोविवक्षितः । तथाचश्रुतिः । जायमानोवै व्राह्मणस्त्रिभि ऋणै ऋणी जायते ब्रह्मचर्य्येनऋषिभ्यो यज्ञेनदेवेभ्यः प्रजयापितृभ्यः एष वा अनृणोयः पुत्रीय यज्वाब्रह्मचारीवासितेति । स्मृतिश्च । ऋणानित्रीण्यपाकृत्य मनोमोक्षेनिवेशयेत् । अनपाकृत्य मोक्षन्तु सेवमानोव्रजत्यध इति वाच्यं न यदिवा इथरथा ब्रह्मचर्य्यादेव प्रव्रजेत यदहरेवविरज्येत तदहरेवप्रव्रजेत । अथ पुनरव्रतीवाव्रतीवा किमर्थावयमध्यामहेकिमर्थावयं यक्ष्यामहे किं प्रजयाकरिष्यामः । याज्ञवल्क्यः प्रवव्राजये प्रजामीषिरेतेश्मशानानि भेजिरे येप्रजानेषिरेऽमृतत्वं भेजिरेइत्यादिश्रुत्याऋणापकरणं विनापि ब्रह्मविविदिषोः सन्यासविधानात् ऋणत्रयापकरण परश्रुत्यादीनामविविक्तविषयत्वात् । नचात्राथशब्दोमङ्गलार्थएव इति वाच्यं मङ्गलस्य ग्रन्थ समाप्ति प्रतिकूलविघ्नविनाशस्य ब्रह्मजिज्ञासाया मनपेक्षितत्वेनानन्वयात् । अर्थान्तरप्रयुक्तस्याथशब्दस्य एव मङ्गल रूपत्वात् । सिसृक्षोः परमाद्विष्णोः प्रथमं द्वौविनिःसृतौ । ओंकारश्चाथशब्दश्च तस्मात् प्राथमिकौक्रमात् । तद्धेतुत्वं वदश्चापि तृतीयोऽतउदाहृतः । अकारः सर्व्ववागात्मापरब्रह्माभिधायकः । तन्त्रौप्राणात्मकौप्रोक्तौ व्याप्तिस्थितिविधायकौ । अतश्चपूर्व्वमुख्याचार्य्याः सर्व्वत्रतेसतांमताः । अथातः शब्दयोरेवं वीर्य्यमाम्नायतत्वतः । सूत्रेषुतु महाप्राज्ञास्तावेवादौ प्रयुञ्जते । इति गारुडादितिचेदुच्यते । पूर्व्वमीमांसायां विहितस्य स्वर्गादिफलस्य परमपुरुषार्थः शङ्कायामुत्तरमीमांसायां स्वर्गादिफलस्यक्षयिष्णुत्वेन हेयत्वमापाद्य निःश्रेयससाधनत्वेन ब्रह्मज्ञानमेवोपादेयमितिनिर्णीतं तत्रच निरस्यज्ञानापेक्षत्वात् सिद्धान्तस्योति निरस्य स्वर्गादिफलक पूर्व्वमीमांसानन्तर्य्यं ब्रह्मजिज्ञासायामिति तथोक्तं वौधायने । वृत्तात्कर्म्माधिगमादनन्तरं ब्रह्मविविदिषेति । एवं तपसा किल्विषं हन्ति विद्ययामृतमश्नुते । ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्यकर्म्मणइति स्मृत्या कर्म्मणां दुरितनाशद्वाराचित्तशुद्धत्व सम्पादनेन ब्रह्मज्ञानोपकारकता इति । चित्तशुद्धिश्च । प्रशान्तचित्ताय जितेन्द्रियाय प्रक्षीणदोषाय यथोक्तकारिणे । गुणान्वितायानुगताय सर्व्वदा प्रदेयमेतत् सततं मुमुक्षवे । इत्याद्युक्त्या । तथाचाधिकार सम्पत्त्यर्थं पूर्व्वमीमांसापेक्षा एवञ्च कर्म्मचरिते चित्तशुद्ध्याद्यधिकारानन्तर्य्य मेवाथशब्दार्थः । तदुक्तं गारुडे । आनन्तर्य्येऽधिकारस्य मङ्गलार्थे तथैवच । अथशब्दस्त्वतः शब्दो हेत्वर्थे समुदीरितइति । अधिकारिणमाह भागवततन्त्रे । आब्रह्मस्तम्बपर्य्यन्तमसारञ्चाप्यनर्थकं । विज्ञायजातवैराग्योविष्णुपादैकसंश्रयः । सउत्तमाधिकारीस्यात् सन्न्यस्ताखिलकर्म्मवानिति । येषां कर्म्मजिज्ञासां विनापि चित्तशुद्धि स्तेषां प्राक्तन साधनं लक्ष्यतइति । ब्रह्मपदञ्च श्रीकृष्णपरं स्वयंरूपत्वेन तस्यैवनिर्णेयत्वादिति राजायंगच्छतीत्यत्र सपरिकर राजग्रहणवत् अत्रब्रह्मज्ञानशब्देन तत्साधनान्यपिलक्ष्यानीति । इत्थञ्चप्रकटित सूत्रार्थकनारदोपदेश तात्पर्य्यपर्य्यवसित भगवन्निदिध्यासनं स्वाचरित परमङ्गलमादौ शिष्यशिक्षार्थं निर्द्दिशति परं धीमहीति । परं निरतिशयतत्वं धीमहि ध्यायेम ध्यायतेर्लिङ्छान्दसं । वहुवचनं शिष्याभिप्रायं । अथातः शब्दतात् पर्य्यपर्य्यवसितंपरतत्वध्यानहेतुविशेषणमाह सत्यमिति । अव्यभिचारिसत्ताकं इत्यर्थः । सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुतेः । अत्र स्वामिचरणैर्व्याख्यातमेव स्वरूपतटस्थलक्षणाभ्यां उपलक्षयतीति स्वरूपं स्वमेवलक्षणं व्यावर्त्तकं * स्वरूपलक्षणम् तटस्थं यावल्लक्ष्यकालानवस्थितं विशेषणं तटस्थलक्षणमित्यर्थः यथा पृथिव्यादेर्गन्धादिकं उत्पत्तिकाले घटादौ प्रलयकाले परमाणौव्यभिचारेणातटस्थं । सत्यत्वेहेतुः यत्र यस्मिन् त्रिसर्गोऽमृषासत्यः प्रतीयते इतिशेषः । त्रयाणांमायागुणानां तमोरजः सत्वानां सर्गः कार्य्यः भूतेन्द्रिय देवतारूपइत्यर्थः । यत् सत्यतयामिथ्यासर्गोपिसत्यवत् प्रतीयते तं परं सत्यमित्यर्थः । सत्यतया प्रतीतिस्तुघटः सन्इत्यादिरूपान्यसत्यं सत्यत्वेन प्रतीयमानं मिथ्याप्रपञ्चाधिष्ठानत्वात् । यथा जलाधिष्ठानतेजइत्यनुमानेन सत्यत्वसिद्धिः । अथवा आरोपाधिकरणस्य ब्रह्मणः सत्यत्वं विनाआरोप्य मिथ्यासर्गस्यसत्यत्वेनप्रतीतिरनुपपन्नाइत्यनुपपत्ति ज्ञानेन ब्रह्मणः सत्यत्वसिद्धिः । अथवाघटः सन्नित्यादिप्रतीतिरधिष्ठान सत्तावलम्बिनी अधिष्ठानसत्तातिरिक्त सत्ताभाववति सदभेदविषयकत्वात् । तेजसिजलप्रतीतिवदित्यनुमानेन ब्रह्मणः सत्यत्वसिद्धिः पक्ष*धर्म्मतावलादिति । तेजोवारिमृदां यथाविनिमय इतिदृष्टान्तं व्याकरोति अन्यस्मिन् अन्यावभाषः आरोपः अयंविनिमयशब्दार्थः । ननुब्रह्मसत्तायाघटादिभानेन नीरूपस्यापि ब्रह्मणश्चाक्षुषापत्तिरित्यत त्रिधासत्तास्वीकार्य्या । तथाहि पारमार्थिकसत्ता व्यावहारिकसत्ता प्रातिभाषिकसत्तेति । तत्राद्याब्रह्मणः द्वितीयाघटादेः प्रपञ्चस्य तृतीयारज्जुसर्पादेः पारमार्थिकत्वञ्च ध्वंसप्रागभावाप्रतियोगित्वं । व्यावहारिकीचार्थक्रियोपयोगिनी वस्तुविचारेवाधिता अविद्याप्रयोज्याचेति । प्रातिभाषिकीच अधिष्ठानगता आरोप्य प्रतिभाषमाना । स्फटिकादौ सन्निहित जवालौहित्यवद् व्यवहारानुपयोगिनी आगन्तुकदोषप्रयुज्याचेति । आगन्तुकदोषाश्च काचकामलादयः शक्तिरूपादौ

* व्यावर्त्तकं—अभेदं ।

* पक्ष—आश्रय ।

श्रीराधामोहनतर्कवाचस्पति गोस्वामी भट्टाचार्य्यः ।

स्वप्नोपलब्धगजादीच निद्रादयःइति । घटादौचप्रातिभाषिकसत्तयैव सद्व्यवहारे जलाहरणादि व्यवहारानुपपत्तेः व्यावहारिक सत्तान्तरं स्वीकृतमित्यादिकं आलोच्य कल्पान्तरमाह । यद्वातस्यैव परमार्थसत्यत्व प्रतिपादनायतदितरस्यमिथ्यात्वमुक्तमिति । अत्र मिथ्यात्वं पारमार्थिकत्वावच्छिन्न प्रतियोगिताकसत्तात्यन्ताभाववत्वं । कार्य्यजातं मिथ्या ब्रह्मेतरत्वात् रज्जुसर्पवदित्यनुमानं सिद्धप्रपञ्चमिथ्यात्व ज्ञापनात् मिथ्यात्वप्रयोजक ब्रह्मेतरस्यब्रह्मण्यसत्वेनमिथ्याभावेनार्थायातं सत्यत्वमितिभावः । अथकालदेश परिच्छेदहेतुनैव मिथ्यात्वं प्रपञ्चस्यनिर्णीयं अस्यच* तदभावाद्मिथ्यात्वम् इति श्रुतिश्च सदेव सौम्येदमग्रआसीदेकमेवाद्वितीयं इत्युपक्रम्य ऐतदात्म्यमिदं सर्व्वं तत्सत्यं सआत्मा तत्त्वमसि श्वेतकेतो इत्युपसंहरन्ती । ब्रह्मणःसत्यं स्वगत स्वजातीयभेदशून्यत्वरूपमेकत्वं । स्वगतविजातीय भेदशून्यत्वरूपमद्वितीयत्वञ्च दर्शयित्वा ऐतदात्म्यमित्यनेन विश्वस्य ब्रह्मारोपितत्वं दर्शितवती । एवं वाचारम्भणं विकारनामधेयं मृत्तिकेत्येव सत्यं इति श्रुत्या वाचारम्भणत्वेनानृतत्वेनानृतत्वं दर्शितं । एवं जगतोमिथ्यात्वं . घटादिप्रतीतिरारोपरूपैव सदधिष्ठानमन्तरेणान सम्भवति निरधिष्ठानारोपाभावात् तदधिष्ठानस्यासत्वे अनवस्थानादित्यवश्यं प्रपञ्चाधिष्ठानं सदित्यङ्गीकार्य्यं । तस्यसत्यत्वं तत्स्वरूपमेव स्वनियतसत्ताकधर्म्मस्य स्वरूपानतिरेकात् । अतः सत्यत्वं स्वरूपलक्षणमित्युक्तं टीकायां । महसास्वप्रकाश ज्ञानेन कपटं मायावैभवं जन्मादीति जन्मआदिर्यस्यइतितद्गुणसम्विज्ञान वहुव्रीहिना जन्मस्थितिभङ्ग इत्युक्तं । भङ्गं प्रलयः । मूलेइतरतइतिइतरपदस्य जन्मादीत्यनेन यतइत्यनेनार्थेष्वित्यनेनचान्वयः । तत्रजन्मादीत्यस्य इतरपदार्थान्वयेषष्ठ्यर्थे प्रथमा इतरपदस्य च अत्यन्ताभावपरत्वं । तेषां जन्माद्यभावादित्यर्थः । अर्थेष्वित्यस्य इतरपदार्थान्वये पञ्चम्यर्थेसप्तमी । इतरपदस्य च भेदावच्छिन्नपरत्वं तसिलश्चपञ्चमी स्मारकत्वं तेनार्थेतरेभ्योऽकार्य्येभ्यः । यतइतस्य यस्य इति षष्ठ्यर्थे पञ्चमीअवधित्वविवक्षयासाध्वी । अन्यथाभेद प्रतियोगिवाचकपदएव पञ्चम्याइतरादिपदयोगेऽनुशिष्टत्वात् पञ्चम्यनुपपत्तेः । सार्व्वविभक्तिकस्तसिलिति सूत्रानुस्मरणेऽनर्थेषु अकार्य्येषु इत्यपिस्यात् । इत्थेञ्चाकार्य्ये जन्माद्यभाव प्रयोजकाभाव प्रतियोगित्वेसति कार्य्यान्वय प्रतियोगित्वं कार्य्यजनकतादिप्रयोजकं लब्धं । यत् तादृशकार्य्यान्वय प्रतियोगित्ववत् तत्जगदुत्पत्त्यादि जनकमितिव्याप्त्या जगदुत्पत्त्यादि कारणतया ब्रह्मसिद्धिरिति ज्ञापितं । ब्रह्मणो विवर्त्तोपादानत्वं नत्तपरिणामोपादानत्वं इतिवोधनाय सद्रूपेणेतिपूरितं । परिणामोपादानत्वं उपादानसत्ता समानसत्ताक कार्य्योत्पादः । विवर्त्तोपादानञ्च उपादानसत्ताविषयसत्ताक कार्य्योत्पादः । वस्तुतः जन्मादीत्यत्रादिपदेनैवजन्माद्यभावउपस्थाप्यते तस्य च इतरत इत्यनेनान्वयः । अर्थेषु सद्रूपेणान्वयात् । यतोस्यजन्मादिइत्येकोऽर्थः । अनर्थेभ्योयद्व्यतिरेकात् जन्माद्यभावइत्यपरोऽर्थः । तथाचधूमेनहेतुना यथाकारणस्यवह्नेरनुमानं तथाकार्य्येण जन्मादिहेतुना जगतिपक्षे किञ्चित् सदन्वयसाधने परिशेषात् ब्रह्मणः सिद्धिरित्यन्वयात् इत्यन्तेन सूचितं । इतरतइत्यनेन च खपुष्पादिकं किञ्चित् प्रतियोगिताकाभावप्रयुक्तव्यतिरेक प्रतियोगि जन्माद्यभावादित्यनुमानेन व्यतिरेक प्रतियोगितयाब्रह्मणः । सिद्धिरितिसूचितं । अत्र इतरतइत्येकपदोपस्थापितार्थानां अन्वयेव्युत्पत्तिविरोधः । अलीक खपुष्पादिभानविरोधश्चेत्यतोव्याख्यान्तरमाह टीकायां अनुवृत्तत्वात् इति । समन्वयादित्यस्यार्थः । अन्वयश्चयत्पदार्थे ब्रह्मणि अनुवृत्तत्वं व्यापकत्वं अनुसूयतत्वं भेदाप्रतियोगित्वं वा । तथाच जगद्व्यापकत्वात् ब्रह्मणस्तत्कारणत्वं अनुसूयतत्वञ्चजगतितत्सत्ताप्रदत्वात् । भेदाप्रतियोगित्वञ्च अत्र जगन्निष्ठभेदाप्रतियोगित्वं तत्रप्रमाणं सर्व्वं खल्विदं ब्रह्मेति श्रुतिः । जगतोब्रह्मस्वरूपत्वं ब्रह्मणोजगदुपादानत्वं विना न सम्भवति इतिजगत्कारणं ब्रह्मेति । नचब्रह्मनिष्ठभेदाप्रतियोगित्वेन ब्रह्मकारणत्वं ब्रह्मणःस्यादितिवाच्यं तदन्यत्वेसतितन्निष्ठभेदाप्रतियोगित्वस्यैव प्रयोजकत्वात् । वस्तुतस्तुजगतिब्रह्मभेदोवर्तते तदस्वीकारेजगतः सत्तापत्तिरतोवक्ष्यतिसतइदमुत्थितं सदितिचेन्नतुः तर्केहतमित्यादि । सर्व्वं खल्विदं ब्रह्मइत्यादिश्रुत्या ब्रह्मतादात्म्याध्यासेन जगतोब्रह्मविवर्त्तोपादानकत्वं वोध्यते । इत्थंचानुस्यूतत्वं व्यापकत्वं वा अनुवृत्तत्वं वोध्यं अनुसूयतत्वञ्चात्र भेदाप्रतियोगितयाभानाविषयत्वमिति । व्यतिरेकतइत्यस्यार्थमाह व्यावृत्तत्वात् इत्यस्येत्यनेनान्वयः व्यावृत्तत्वञ्चानुवृत्तत्वाभाव एवनच घटादिव्यावृत्तत्वं पटादावपीति घटादिकार्य्यत्वं पटादावपिस्यादितिवाच्यं तत्स्वरूपत्वेसति तद्व्यावृत्तस्य तत्कार्य्यता प्रयोजकत्वात् तत्स्वरूपमात्रस्य प्रयोजकत्वे स्वस्यापिस्वकार्य्यतापत्तेः । अत्र च यत इति पञ्चम्याःकारणत्वमेव प्रत्याय्यंततन्निरूपकमेवजन्मादौलभ्यते । ननुविश्वनिष्ठकार्य्यत्वमपीतिव्यावृत्तत्वात् इति अनन्वयापत्तिरित्यतः कल्पान्तरमाह टीकायां सावयवत्वादिति । एतच्चपूरितं अन्वयव्यतिरेक प्रयोज्यकांक्षानिवृत्तये । अन्वयः कदाचित्सत्वं व्यतिरेकः कदाचिदसत्वं । मूलेऽस्येत्यस्य पृथिव्यादेरित्यर्थः । तथाच पृथिव्यादिकं सहेतुकं जन्मादिकं कदाचित्कत्वात् घटादिवदित्यनुमानेन सहेतुकत्वसिद्धौ अन्यत्रवाधात् । ब्रह्मैवसिद्ध्यति इति अवतात्पर्य्यं अत्रार्थेष्वित्यन्वयःअभिज्ञइत्यनेनवोध्यः । ननु श्रुतिसाहाय्यरहितमनुमानं न कुत्रचित् निश्चयात् साधयेदर्थं प्रमाणान्तरमेव च । श्रुतिस्मृतिसहायस्ततप्रमाणान्तरमुत्तमं । प्रमाणपदवर्गच्छेनात्र कार्य्यविचारणेति कूर्म्मपुराणेन तर्काऽप्रतिष्ठानादिति सूत्रेण च तन्त्रस्यास्वतन्त्रयोक्तेरेतद्ग्रन्थस्यानुमानमात्र मूलकत्वऽप्रामाण्यशंकास्यादित्यतः श्रुतिः प्रमाणयति यतो वा इत्यादीः । ईक्षतेर्नाशब्दमितिन्यायाच्च इति सांख्यपरिकल्पित सत्वादिगुणत्रययुक्तं प्रधानं न जगत्कारणं ब्रह्मयतोऽशब्दं अशब्दत्वञ्च शब्दाप्रतिपाद्यं । शब्दश्चात्रयतो वा इमानि इत्यादि श्रुतिवाक्यं । तथाच यतो वा इत्यादि श्रुत्या प्रधानस्य जगत्कर्तृत्वावाधनात् न तस्य ब्रह्मत्वमिति । ननु तादृशश्रुत्यैवकथं न प्रधानस्य जगत्कर्त्तृत्ववाध्यते इत्यतआहईक्षतेः ईक्षणकर्तृत्वश्रवणात् स ऐक्षत वहुस्यामित्यादि जगत्कर्त्तृत्व प्रतीक्षणा कर्तृत्ववोधकश्रुतिघटितत्वादितियावत् । नचायं हेतुः शब्दनिष्ठः नतुप्रधाननिष्ठ इति स्वरूपासिद्ध इति वाच्यं ईक्षितृ जगत्कर्त्तृत्ववोधकत्वेनहेतुना प्रधानावाधकत्वसिद्धौ । तुल्यवित्तिवेद्यतया प्रधानेपि शब्दवोध्यत्वाभावः सिध्यतिइति । प्रधानस्यतादृशशब्दवाध्यत्वाभावः सिध्यतीति प्रधानस्यतादृशशब्दवोध्यत्वाभावे प्रयोजकञ्च जड़त्वेनेक्षणा कर्तृत्ववाधएव । विशेषश्चभाष्य तट्टीकादौच द्रष्टव्यः । जगतोमिथ्यात्वे प्रमाणाभावः । न च ब्रह्मभिन्नत्वमेवमाने भवन्मते ब्रह्मभिन्नत्वस्यैवासिद्धः । मिथ्याभिकरणाभेदाङ्गीकारेऽपि । भवन्मते जगतितद्वाधापरीहारात् । नचकालदेशपरिच्छेदहेतुनैवमिथ्यात्वं साध्यं अप्रयोजकत्वात् । न च रज्जुसर्पदृष्टान्त एव प्रयोजक इति वाच्यं । अयं सर्प इति रज्जुज्ञाने अन्यत्रासिद्धस्य सर्पादेरभेदोरज्ज्वादौ पुरोवर्त्तिनि दोषवशाद्भासते ।

* ब्रह्मणः ।

श्रीराधामोहनतर्कवाचस्पति गोस्वामी भट्टाचार्य्यः ।

ननुतत्र मिथ्या रज्ज्वारोपित सर्पादेर्भानं इति दृष्टान्तासिद्धेश्च किञ्चारोपोहि प्रसिद्धेवस्तुनि अन्यत्रप्रसिद्धस्य दोषवशाद्भवति जगतो-मिथ्यात्वे खपुष्पादितुल्यस्य तस्यारोपासम्भवः जगद्भानस्यारोपरूपत्वं रज्जुसर्पारोपवदर्थक्रियाकारित्वं घटादेर्नस्यात् । व्यवहारिक सत्वस्याङ्गीकारे तस्यमिथ्यात्वं न तेन व्यवहार सिद्धिः । तस्य सत्यत्वंच सिद्धे ब्रह्मातिरिक्तं इति । बुद्ध्याजीवोपाधेः सादित्वं प्राक्-तद्दृष्टादेरभावात् बुध्याद्युत्पादएवनस्यात् । नच युगपन्नसकलबुद्ध्यादिसृष्टिः स्वीक्रियते पित्राद्यदृष्टवशाच्च पुत्रादिजीवोपाधिजन्म-स्वीक्रियते इति वाच्यं । सदेवसौम्येदमग्रआसीदितिश्रुत्या अवान्तरप्रलये ब्रह्मातिरिक्तवस्तु मात्रस्यासत्व प्रतिपादनेनाविद्याया अभावात् । कुतः प्रपञ्चसर्ग इति सृष्टि सहकारिमायास्वभावोदृष्टादेस्तदानीं सत्तावश्यकतया सदेवेत्येवकारेण स्थूल प्रपञ्चस्यैवनिषेधात् । अविद्यालिङ्ग शरीरादीनां अनादित्वमङ्गीकार्य्यं । अनादित्वे च तेषां नित्यत्वमायाति अनादिभावस्यनित्यत्वनियमात् इतिद्वैतसिद्धः । साक्षितया सर्व्वत्र ब्रह्मावस्थानेन सर्व्वस्य ब्रह्मत्वमुक्तं श्रुत्यादाविति । इत्थञ्च प्रपञ्चस्यनश्वरत्व मेवनतुमित्थात्वमिति । सात्वतमतानु-सारेण श्रीमत् सन्दर्भ सम्मतव्याख्या लिख्यालिख्यते । यथाधीमहीति निर्व्विशेषवस्तुनोध्यानाशक्यतया मूर्त्तिमान् भगवान् एव परशब्दप्रतिपाद्यइति सूचितं । निर्व्विशेषस्यकथञ्चिद्ध्येयत्वेपि तद्ध्यानस्यवहुतरक्लेशसाध्यत्वात् फलस्यानतिशयत्वाच्च तत्र प्रेक्षावताम-प्रवृत्तेः । तथाच भगवद्गीतासु । मय्यावेश्यमनोयेमां नित्ययुक्ताउपासते । श्रद्धयापरयोपेता स्तेमेयुक्ततमामताः । येत्वक्षर मनिर्द्देश्यमव्यक्तं पर्य्युपासते । तेप्राप्नुवन्तिमामेवसर्व्वभूतहितेरताः । क्लेशोधिकतरस्तेषामव्यक्तासक्तचेतसां । अव्यक्ताहिगतिर्दुःखं देहवद्भिरवाप्यते । इति नैष्कर्म्म्यमप्यच्युतभाववर्जितमित्यनेन मूर्त्तभजनस्यैव नित्यत्वमुक्तं इति । तद्ध्यानेहेतुमाह सत्यमिति एतच्च प्रागुव्याख्यातं । परत्व-मेवव्यञ्जयति धाम्नास्वेनेति । धामशब्देन तेजोवाचिना स्वप्रकाशत्व साधर्म्म्येण स्वप्रकाशज्ञानमुच्यते तदात्मकेन स्वेनरूपेण निरस्तं कुहकं मोहविक्षेपादिकारितया मायायस्मादिति धामशब्देन ज्ञानमयी शक्तिरुच्यते मायां व्युदस्यचिच्छक्त्येत्युक्तेः । स्वेनेत्यनेनचिच्छक्ते-रंतरङ्गत्वं निरस्तकुहकमित्यनेन मायायावहिरङ्गत्वं दर्शितं । तेन मायागुणराहित्येन निर्गुणनिरञ्जनत्वादिक स्वरूपभूतगुणवत्वेन च सर्व्व-शक्तिमत्वादिकं यः सर्व्वज्ञः सर्व्ववित् यस्यज्ञानमयंतपः । यस्मादेतद्ब्रह्मनामरूपमन्नञ्चजायते । सर्व्वस्यवशीसर्व्वस्येशानः यः पृथिव्यां-तिष्ठन् पृथिव्याअन्तरालं सोऽकामयतवहुस्यां तत्तेजोऽसृजं सत्यंज्ञानमनन्तं ब्रह्मइत्यादि श्रुतेः । न तस्य कार्य्यंकरणञ्चविद्यते न तत् सम-श्चाभ्याधिकश्चदृश्यते । परास्यशक्तिर्विविधैवश्रूयते स्वाभाविकीज्ञानवलक्रियाचेतिश्रुतेश्च । ह्लादिनीसन्धिनीसम्वित्त्वय्येकासर्व्वसंश्रये । ह्लादतापकारीमिश्रात्वयिगुणवर्जिते इति विष्णुपुराणाच्च । सर्व्वविन्दतइति सर्व्ववित्सर्व्वशक्तिरित्यर्थः । तपऐश्वर्य्ये इति दिवादि-पठित धातुनिष्पन्नत्वात् तपःशब्देन ऐश्वर्य्यमुच्यते ज्ञानमयं इच्छाप्रधानं ज्ञानपदेनेच्छायामयट् प्रत्ययेन प्राधान्यस्याभिधानात् । अथवा-ज्ञानमयं चिच्छक्तिविलसितं इत्यर्थः । अथवा यस्यज्ञानं यद्गोचरज्ञानं तन्मयं तदात्मकंतपः । मायानिरसनलक्षणतपःसाधनं तमेवविदि-त्वातिमृत्युमेतिनान्यः पन्थेतिश्रुतेः । ब्रह्मवेदं सर्व्वस्यवशी सर्व्वनियन्तइत्यर्थः । अथवा धामशब्देनप्रभावउच्यते गृहदेहत्विट्प्रभावा-धामानीत्यमरात् । सत्यत्वयुक्तिमाह यत्रेति तत्सृष्ट्वातदेवानुप्राविशत् इति श्रुत्यावोधित जगत्कारणे अन्तर्य्यामितया सर्व्वत्रस्थिते यस्मिन्स्थितोयं त्रिसर्गोऽमृषासत्यः रज्जौसर्पादिवदारोपितो न भवति किन्तु सत्यएवअसत्यत्वे सत्कार्य्यत्वानुपपत्तेः । असतिप्रवेशा-सम्भवात् नियम्यत्वाधेयत्वयोरसम्भवाच्च । एवमसतः सत्कारणत्वाद्यनुपपत्तेः । सदेवब्रह्मकारणमन्तर्य्यामि जगदाधारइत्युन्नेयं । सतः सज्जायतेइतिनियमात् सदसतोस्तात्म्यानुपपत्तेः । सतोविवर्त्तः प्रपञ्चइत्यनुपादेयं तथाचोक्तं भगवद्गीतासु । नासतोविद्यते भावोनाभावोविद्यतेसतः । उभयोरपिदृष्टोन्तस्त्वनयोस्तत्वदर्शिभिः । इति । अत्रासतः सकाशात् न भाव न सदुत्पत्तिः । सतःसकाशात् न अभावः न असदुत्पत्तिः । तत्वदर्शिभिर्व्विवेचकैः अनयोरुभयोरन्तो याथार्थ्यं सत्यत्वरूपदृष्टः नत्वन्यैरित्यर्थः । सत्यस्य सत्यमिति प्राणावैसत्यं तेषामिश्रसत्यमिति च श्रुतेः । अथैनमाहुः सत्यकर्म्मेति सत्यं ह्येवेदं विश्वमसौसृजते इति श्रुतेश्च । तेषां प्राण शब्दोदित स्थूलसूक्ष्मभूतानां व्यवहारतः सत्यत्वेनावगतानां मूलकारणभूतं परम सत्यं ब्रह्मेतितदर्थः । परन्तु भगवतः सत्यत्वं नित्यतयामुख्यं प्रपञ्च सत्यत्वमागमापायितया गौणं । तेन प्रपञ्चो नश्वर इति अमृषात्वेपिमित्थात्व प्रवादइतितुवोध्यं । सत्यत्वे-दृष्टान्तः । तेजोवारिमृदां यथाविनिमयः परस्परांशव्यत्ययः परस्मिन्नवस्थितेः । तथाच श्रुतिः इमास्तिस्रोदेवतास्त्रिविदेवैकाभवति यदग्नेरोहितं रूपं तेजसः तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्येति । अथवा तेजोवारिमृदां यथा यथा वद्वानिमयः परस्परस्मिन् परस्परांश समाहारः स्थूलप्रपञ्चः यथावत् विनिमयः यत्रेतिवा । त्रिसर्गः त्रयाणां मायागुणानां कार्य्यरूपः अमृषासत्यः यत्र यस्मिन् शासितरिभवति तं सत्यं धीमहीत्यर्थः । यद्वा मृषामृषावत् नश्वरइत्यर्थः । तथाच ब्रह्मणः सत्यत्वं विनाशासनकर्त्तृत्वानुपपत्तिरिति । अत्रसूत्रद्वयं अक्षरमम्वरान्तधृतेः । साचप्रशासनादिति तत्रतस्यायमर्थः । अम्वरान्तस्य आकाश पर्य्यन्तस्य सर्व्वस्यधृतेर्धारणात् ब्रह्मै-वाक्षरं सत्यं तथाच श्रुतिः । एतस्मिन्नक्षरेगार्ग्यकोशततश्च प्रेतश्चइति । उत्रिधातु पृथिवी मुतद्यामेकोदधारभुवनानि विश्वभर्त्तासन् प्रियमाणोविभार्त्ति एकोदेवो वहुधानिविष्टइत्यादि । स्कन्दपुराणाच्च । पृथिव्यादि प्रकृत्यन्तं भूतं भव्यं भवच्चयत् । विष्णुरेकोविभर्त्तीदं नान्य-स्तस्मात् क्षमोधृतौ । साचधृति प्रशासनादित्याह द्वितीयसूत्रेणात्रश्रुतिरपि एतस्यवाक्षरस्य प्रशासने गार्गि सूर्य्याचन्द्रमसौविधृतौतिष्ठत इत्यादि धृतिः पतनाभावः । तेज आदितिसृणां समाहारमाह श्रुतिः सेयं देवतैक्षत हन्ताहमिमास्तिस्रोदेवता अनेन जीवेनात्मना अनुप्रविश्य नामरूपे व्याकरवाणितासां त्रिवृतं त्रिवृतमकैकांकरवाणीति । तिसृणां देवतानां तेजोऽवन्नात्मिकानां मध्ये एकैकां देवतां त्रिवृतं त्रिवृतं त्रिरूपांकरवाणीतिक्षणां परमामदेवताकृतधृतीचेत्यर्थः । त्रिवृत्करणञ्चतेजोऽवन्नानां एवाणामेकैकं द्विधाविभज्य पुनरेकैकभागस्य द्विधा-विभागद्दृशस्वस्वद्वितीयं स्थूलभागं परित्यज्यअन्यदीयस्थूलभागयोरेकैकभागस्ययोजनं । त्रिवृत्करणानांपञ्चीकरणमेवलक्षितं । परन्तु आकाशस्य सर्व्वावकाशतयावायोश्च सर्व्वचेष्टाहेतुत्वेन सर्व्वाविनाभूतत्वात् तस्यास्तेज आदिष्वन्तर्भावं सिद्धवत्त्वत्य । त्रिवृत-करणं श्रुतावुक्तमिति एतदेवतटस्थलक्षणविशेषणेन दृढयतिजन्माद्यस्य यत इति । अस्य विश्वस्य जन्मादि यत इति तत्परत्वमित्यर्थः । तथाचश्रुतिः । यतो वा इमानीत्यादि विश्वंसहेतुकं जन्मादि मवोधि जन्मादिमित्यादित्यनुमानमात्रप्रमाणं । ननु ईश्वरोनकर्त्ता प्रयोजन शून्य त्वात् मुक्तात्मवदित्यादि सत्प्रतिपक्षस्थापनेन परमेश्वरं जगत्कर्तृत्वानुमानं सन्दिग्धप्रामाण्यकं तथोक्तं तर्काप्रतिष्ठानादित्यादि सूत्रेणेति ।

श्रीराधामोहनतर्कवाचस्पति गोस्वामी भट्टाचार्य्यः।

शास्त्रमेव प्रधानं प्रमाणं वक्तव्यं तथोक्तं शास्त्रयोनित्वादिति सूत्रेणशास्त्रंयोनिःप्रमाणस्येति शास्त्रयोनिःतत्त्वात्। तत्र कथं शास्त्रयोनित्वमित्याशङ्क्यातत्तुसमन्वयादिति सूत्रान्तरमुक्तं तदर्थश्च ततशास्त्रयोनित्वंत्तुशब्दः प्रशक्ताशङ्कानिवृत्त्यर्थः समन्वयः अन्वयव्यतिरेकाभ्यामुपपादनं तस्मात्। तत्रान्वयेनउपपादनं सत्यंज्ञानमनन्तं ब्रह्मइत्यादिना व्यतिरेकेनोपपादनं कथमसतः सज्जायतेति। कोह्येवान्यात्कःप्राण्यात्यद्येष आकाशआनन्दोनस्यादित्यादिना प्रयोजनशून्यत्वेपि सृष्ट्यादिकर्त्तृत्वं श्रुतिष्वानन्दरूपताप्रतिपादने नैवसमाहितं तथोक्तम् नारायणसंहितायाम् सृष्ट्यादिकं हरेरेव प्रयोजनमपेक्षते कुरुतेकेवलानन्दाद्यथमत्तस्यैव नर्तनं यथेति तद् एव शास्त्रयोनित्वत् तत्तुत्वात् तत्तुसमन्वयादिति सूत्रद्वयार्थं प्रमाणत्वेनाह अन्वयादितरतश्चार्थेष्विति अर्थेषु नानाविधेषु वेदवाक्यार्थेषु सत्सुअन्वयात् अन्वयमुखेन व्यतिरेकतश्च व्यतिरेकमुखेन श्रुतिवाक्येन यतोस्यजन्मादि प्रतीयतेइत्यर्थः तथा च जन्मादीत्यनन्तरं प्रतीयते पूरणीयं। अथवा इतरहति सप्तम्यन्तं च अप्यर्थे तथा च इतरेषु अर्थेषु सत्स्वपि अन्वयात् सर्व्ववेदवाक्यानां तात्पर्य्यावधारणात् तत्र तयां वा इमानिभूतानि जायन्ते इत्यादि श्रुतीनां साक्षात्परत्वं अस्थूलमनन्वद्रस्वमित्यादिवाक्यानां निषेधावधित्वेन इन्द्रमुपासीतेत्यादिदेवतान्तरपराणामपि सर्व्वेषामंशीभूते तस्मिन् परमेश्वरे पर्य्यवसानेन येप्यन्यदेवताभक्त्तायजन्ते श्रद्धयान्विताः तेऽपिमामेव कौन्तेयायजन्त्यविधिपूर्वकम् इति भगवदुक्तेः श्रुत्यधाये च कथम् यथा भवन्तिभुविदतुपदानिनृणां इति। एवं क्रियापराणामपि वेदानां ज्ञानसाधने भगवत्परत्वं एवं जगत्कर्त्तृत्वादीनामन्यत्रबाधेन यत्र तात्पर्य्यावधारणादस्यविश्वस्यजगत्कर्त्तृत्वं निराकृतं। ननु ब्रह्मणि श्रुत्यन्वयोदर्शितः तत्कथं संगच्छते ब्रह्मणोनिर्गुणत्वात् वेदस्यसगुणपरत्वात्। अतएव श्रुतिरपि यतोवाचोनिवर्त्तन्ते अप्राप्यमनसासहइति। अशब्दमस्पर्शमरूपमित्यादिच। इत्यतआहस्वराट् स्वेषुस्वकीयेषुभक्तेषु राजतेप्रकाशतेइत्यर्थः। भक्त्याहमेकयाग्राह्यइत्युक्तेः। भक्तेक्षणीयत्वादेव श्रुतिगोचरत्वमिति तथा च श्रुतिः तत्वौपनिषदं पुरुषं पृच्छामिइति। सतं परं पुरिशयं पुरुषमीक्षते इति च। एते न ईक्षतेर्नाशब्दमिति व्याख्यातं। ब्रह्मोतिपक्षःपूरणीयः ब्रह्मणाशब्दं न शब्दागोचरं ईक्षतेः ईक्षणविषयत्वादिति तदर्थोदशब्दत्वञ्च अनन्तगुणत्वात् अभक्तज्ञानागोचरत्वाच्च। ननुहिरण्यगर्भादीनामस्तुजगत् कर्त्तृत्वमित्यतआह तेने ब्रह्महृदेति। आदिकवये ब्रह्मणोपिब्रह्मब्रह्मपरतयावेदं तेने उपादिदेश तं धीमहीत्यर्थः। एतेन जगत्कर्त्तृत्व वेदकर्त्तृबोधनेन हिरण्यगर्भस्य वेदोपदेश श्रवणेन च नहिहिरण्यगर्भस्य तत्वमितिफलितं। एष वेदस्य ब्रह्मबोधकत्वेन शास्त्रगम्यत्वरूप शास्त्रयोनित्वं प्राप्तं शास्त्रस्ययोनिः करणं इति व्युत्पत्तिलब्धं शास्त्रयोनित्वादिति शास्त्रस्यार्थान्तरं ब्रह्मतेने इत्यनेनोक्तवान्। सचोपदेशः हृदान्तःकरणद्वारैवनतुवाग्द्वारा एतेनान्तर्यामितया बुद्धिवृत्तिप्रेरकत्वम् उक्तं। तथा च श्रुतिः यो ब्रह्माणं विदधातीत्यादिः। अस्य महतोभूतस्यनिःश्वसित मेतदृग्वेदोऽजायतइत्यादि च। स्मृतिश्चप्रतिमन्वन्तरञ्चैषा श्रुतिरन्याविधीयते इति। निःश्वसितश्च निर्विशेषस्यासम्भवादतो मूर्त्तिमदेव वस्तुलक्ष्यमनुमानञ्चवेदः पौरुषेयम् वाक्यत्वादित्यादि। ननुवेदस्य ब्रह्मपरत्वे कथं क्रियामात्रपरत्वं जैमिनिप्रभृतयोवदंति इत्यतआह यत्सूरयोपिमुह्यन्ति यत्र अनेन श्लोकेनगायत्र्यर्थोदर्शितः। तथाहि जन्माद्यस्येत्यनेन सवितुरित्यस्यार्थः। परमित्यनेन वरेण्यमित्यस्यार्थः धाम्नास्वेनेत्यनेनभर्गइत्यस्यार्थः स्वराडित्यनेन देवस्येत्यस्यार्थः। तेने ब्रह्महृदेत्यनेनधियोयोनप्रचोदयादित्यस्यार्थः। प्रकटितः गायत्र्यां देवस्येति अभेदषष्ठीबोध्या। उक्तञ्चयत्राधिकृत्यगायत्रीमित्यादि ॥ १ ॥

---

भाषा टीका।

हम* उस परमार्थ सत्यक परतत्वको ध्यान करते है जिसकी सत्यतासे मिथ्या भूतभी मायाके गुण त्रयका यह सर्ग सत्य प्रतीत होता है। मिथ्या सर्ग की सत्यता मै यह दृष्टान्त है—जैसे मरीचि का*मै जलकी प्रतीति होती है और मृत्तिका के विकार काचादिक मै जलकी भ्रान्ति होती है। माया कार्य जगत् के आधार होनेपर भी वह अपने स्वरूप से निरस्त कुहुक है* ॥

जिससे* अन्वय और व्यतिरेक के द्वारा जगत् की सृष्टि स्थितिप्रलय होती हैं। ( इससे प्रकृति न समझना चाहिये क्योंकि वह ) अभिज्ञ है अर्थात् ज्ञान स्वरूप है ( प्रकृति जड़ है इसीसे जगत् कारण नही है तब जीव समझना चाहिये क्योकि ज्ञान मय है नही ) स्वराट् ( वह स्वत ! सिद्ध ज्ञान है—जीवतो परत ज्ञान वान् है तब ब्रह्मा होगा नही ) जिसने ब्रह्माको भी वेद पढाया है। ( ब्रह्मा का तो और से वेदाध्ययन प्रसिद्ध नही है ) जिसने मन से ही ब्रह्मा को वेदाध्ययन कराया है उसी पर तत्वको हम ध्यान करते हैं ॥

जिसकी सत्ता से जिसकी सत्ता होना ( अन्वय ) जिसके अभाव मै जिसका अभाव होना ( व्यतिरेक ) कहा जाता है। उदाहरण सूर्य्यकी सत्ता से धूपकी सत्ता होती है ( अन्वय ) सूर्यके अभाव मै धूप नही रहती है यह है ( व्यतिरेक )। जगत् का भी यही है ब्रह्म की सत्ता से जगत् की सत्ता है ब्रह्मके विना जगत् की कुछ सत्ता नही है ॥ १ ॥

---

* यहा ( हम ) से शिष्यों का अभिप्राय है।

* "ग्रीष्मके दिनो मै जब मध्यान्ह के सूर्यका प्रकाश प्रखर होता है तब वालुका मै जलकी सी तरंगें दिखाई देती है। उसे देखकर मृगों को जलकी प्रतीति होती है" उसे मृगतृष्णा वा ( मरीचिका ) कहते हैं

* सत्यता स्वरूप लक्षण है

* यह तटस्थ लक्षण है

# समर्पणम् ।

—*—*—*—

श्रीमद्वैष्णवादि सर्वसज्जन समाराधनीय पूज्यपादश्री-मद्वल्लभकुल तिलकायमानपण्डित कुलपति विद्योत्साह विवर्धक श्रीहरिभक्तिपरायण गोस्वामि श्री १०८ देवकी-नन्दनाचार्य महाराजानां करकमले इदमष्टटीकासमलं-कृतं श्रीमद्भागवतंहरिभक्त्या समर्पितमभूत् ॥

समर्पयिताचास्य प्रणतदासः

नित्यस्वरूपशर्मब्रह्मचारी

श्रीवृन्दावनम्

—*—

॥ श्रीः ॥

# भूमिका ।

हे श्रीभागवतरसमिलिन्दाः ।

अयतामवतंसतां सतां तत्रभवतां भवतां संप्रत्यसौ सुप्रवृत्तिः प्रवृत्तिः विहायेमांवाचंयमतां कलयन्तुचातिहर्षगुञ्जितानि जितानिशेतरध्वनीनि इह खलु जगति पुरा किल श्रीभागवतकल्पद्रुमतया परिणतं यत्रिभुवनसौभाग्यं निखिलब्रह्मार्षि देवर्षि राजर्षि विहितानुष्ठानसमुदायफलं वा तात्कालिकपरम भागवतजनेतरदुष्करानवकर चिरसुकृतसुकृतपटलंवा श्रवणमननिदिध्यासनशिक्षणद्वारा कलियुगजनोद्धाराय करुणावशंवदाचिन्त्यानन्तशक्तिसंपन्न जगन्महानाटकसूत्रधारभगवन्नन्दनन्दन प्रेरितभक्तिदेवीस्वरूपमेव वा यस्य च वीजं परम कारुणिकैर्निसर्गधीरैरपि लोकनिहितासयिणोत्वरलितैर्नित्ययुक्तैरपिनित्यमुक्तैर्महर्षि श्रीकृष्णद्वैपायनचरणैर्विज्ञानप्रदीपेन सततमतिगहने सततमतिगहने निगमकोषेऽद्वितीयतयाकेनापि चतुरवरेण गोपायितमपि प्रसह्यान्विष्य भवादृशांहिकृते शब्दब्रह्मणिप्ररोपितम् यदुद्भूतोऽयंद्रुमःसिक्तोऽपि तथैतन्महर्षिसंभवयाभगवत्याभारत्या नवरसैर्यथाविरतमद्यावधि वर्द्धमानो विविधावतारोत्साहीश्वर इवानेकरूपतां दधद्दर्शन पथमेत्युपासकानाम् । तथाहि यमिमं भवमहापारावार पारप्रायण परानौमतल्लिकेतिमत्वा श्रीश्रीधरस्वामिपादैर्भावार्थदीपिका कूपदण्डोनिरमायि रचिताच श्रीरामानुजस्वामिमतावलंवि श्रीवीरराघवाचार्यपादैरखिला भीष्टमञ्जूषेतिविचार्य भागवतचंद्रिकानामसुकुञ्चिका प्रकाशितश्च वैकुण्ठमहापथिंक सुलभ सरणिस्त्वियवगम्य श्रीविजयध्वज तीर्थपादैःपदरत्नावलीनाम व्याख्यानदीपः भवदारुण दवदहननिर्वापणक्षम मुदिरतल्लजइत्यवेक्ष्य विवरणपवमानः संचारितः श्रीमधुसूदनसरस्वतीपादैः प्राबन्धिचभावुकवर श्रीविश्वनाथचक्रवर्तिभिः प्रेमदुर्गपरिखेति प्रतीय सारार्थ दर्शिन्युडुपोपायः दुरारोहगोलोकारोहण शोभनसोपान परम्परेतिनिश्चित्य श्रीमहाकविजीव गोस्वामिपादैः क्रमसंदर्भावलम्बनयष्टिः समयोजि यस्यच प्रादुर्भूतानर्घ्यनीलमणिकुसुमकलितो दशमस्कधो बहिर्मुखजनदस्युनेत्रच्छाया परिहारायेव तोषिणयापेटिकयावृतः । यश्च मन्ये भगवदेकादशावतारोऽयमिति विद्वद्वरश्रीराधारमणदासगोस्वामिभिर्दीपिका दीपनदीपनदीपितः । श्रीवल्लभाचार्यपादास्तु भक्तचितचकोराचमनीयचन्द्रिकेतियंप्रतिपद्यसुबोधिनी राकामाविरकुर्वन् । योहिदृढार्गलमिव निरयद्वारस्य निकषोपलमिवसर्वसत्संप्रदायपुरटस्य दिनकृदिवाज्ञान तिमिरस्य क्षालनमहौषधमिव सर्वदुरितमलस्य यश्चवेदाद्योऽपिवेदान्तमयःप्रकृतिज्ञान सहितोऽपिविप्रकृतिज्ञानसहितः समाध्यापादनयुक्तोऽपि समाध्यापादनरहितः पूर्वमीमांसापरोऽप्यपूर्वमीमांसापर; परमाणुवादविद्विरुद्धोऽपि नीपरमाणुवादविदाविरुद्ध इत्थंसर्वदर्शनमयोऽपि न सर्वदर्शनमयः सोऽयंविलक्षणःकल्पतरुः यत्रतत्र कुसुमितचरोऽपिसांप्रतमङ्गोपाङ्ग सनाथोवृन्दावनेऽधियमुनाकूलं परमेश्वरकृपोदयैर्मदीयभागधेयैर्महोदारसहायमहाशयोत्साहैश्चिरतिरोहितग्रंन्थाविर्भावैश्चसह देवाक्षरमुद्रणमिषेण कुसुमितस्तदेतदीयां सौरभ संपत्तिमनुभवन्तु धयन्तुच मकरन्दमाधुरीममोघयन्तु च मन्मुद्रणायासंभवन्तः सफलीकृतश्चायं परिश्रम मुद्रणयंत्रप्रदानेन श्रीमद्देवकीनदनाचार्य वर्यैर्मुद्रणस्थलादि समस्तसाहाय्यप्रदानेन श्रीराधारमणचरणचंचरीक श्रीमद्गोस्वामि श्रीमधुसूदनाचार्यप्रभृतिसमस्तश्रीगोस्वामिवृंदेनच प्रसीदतुचानेन व्यापारेणसर्वान्तर्यामी भगवान् श्रीराधिकारमण इति ।

शोधकश्चास्य ग्रन्थरत्नस्य वृन्दावननिवासि पंडितश्रीलक्ष्मणाचार्यः ॥

वैक्रमेऽब्दे १९५५ मिते ।
माघासितपंचमीतिथौ ॥

प्रार्थयते ।
विनयभरभुग्नकन्धरो वृन्दावनस्थो ।
ब्रह्मचारिनित्यस्वरूपशर्मा ।

शम्

—:*:—

॥ श्री १०८ राधारमणोजयति ॥

# श्रीमद्भागवतम् ॥

———०(—*—)०———

## प्रथम स्कन्धः ।

### प्रथमाध्यायः ।

——०*०——

ॐ नमो भगवते वासुदेवाय ॥

**धर्मः प्रोज्झितकैतवोऽत्रपरमोनिर्मत्सराणांसतांवेद्यंवास्तवमत्रवस्तुशिवदंतापत्रयोन्मूलनं ।**

**श्रीमद्भागवतेमहामुनिकृतेकिंवापरैरीश्वरःसद्योहृद्यवरुध्यतेत्रकृतिभिःशुश्रूषुभिस्तत्क्षणात् ॥२॥**

श्रीधरस्वामी ।

इदानीं श्रोतृप्रवर्त्तनाय श्रीभागवतस्य कांडत्रय विषयेभ्यः सर्व्वशास्त्रेभ्य श्रैष्ठ्यं दर्शयति धर्म्म इति अत्र श्रीमति सुन्दरे भागवते परमो धर्म्मो निरूप्यते । परमत्वे हेतुः प्रकर्षेण उज्झितं कैतवं फलाभिसन्धि लक्षणं कपटं यस्मिन् सः । प्रशब्देन मोक्षाभिसन्धिरपि निरस्तः । केवलमीश्वराराधनलक्षणो धर्म्मः निरूप्यते । अधिकारितोपि धर्म्मस्य परमत्वमाह । निर्म्मत्सराणां परोत्कर्षासहनं मत्सरः तद्रहितानां सतां भूतानुकम्पिनां । एवं कर्म्मकांड विषयेभ्यः शास्त्रेभ्यः श्रैष्ठ्यमुक्तं ज्ञानकांडविषयेभ्योपिश्रैष्ठ्यमाह वेद्यमिति वास्तवं परमार्थभूतं वस्तु वेद्यम् नतु वैशेषिकाणामिव द्रव्यगुणादिरूपं। यद्वा वास्तव शब्देन वस्तुनोऽशो जीवः वस्तुनः शक्तिर्माया वस्तुनः कार्य्यं जगच्च तत् सर्व्वं वस्त्वेव न ततः पृथगिति वेद्यं अयत्नेनैव ज्ञातुं शक्य मित्यर्थः । ततः किमत आह शिवदं परम सुखदं । किञ्च आध्यात्मिकादि तापत्रयोन्मूलनञ्च । अनेन ज्ञानकांड विषयेभ्य श्रैष्ठ्यं दर्शितं । कर्तृतोपि श्रैष्ठ्यमाह महा मुनिः श्री नारायणः तेन प्रथमं संक्षेपतः कृते । देवताकांडगत श्रैष्ठ्यमाह परैः शास्त्रैः तदुक्त साधनैर्व्वा ईश्वरो हृदि किम्वा सद्यएवावरुध्यते स्थिरीक्रियते । वाशब्दः कटाक्षे । किन्तु बिलम्बेन कथञ्चिदेव अत्र तु शुश्रुषुभिः श्रोतुमिच्छुभिरेव तत्क्षणादेवावरुध्यते । ननु इद मेव तर्हि किमिति सर्व्वे न श्रृण्वन्ति तत्राह कृतिभिरिति श्रवणेच्छा तु पुण्यैर्विना नोत्पद्यत इत्यर्थः । तस्मादत्र कान्डत्रयार्थस्य च यथावत् प्रतिपादनादिदमेव सर्व्वशास्त्रेभ्यः श्रेष्ठं अतो नित्यमेतदेव श्रोतव्यमिति भावः ॥ २ ॥

————

दीपनी *

इदानीं मंगलाचरणानंतरं कांडत्रयविषयेभ्यः कांडत्रयं ज्ञान कर्मोपासना रूपं विषयः प्रवृत्युद्देश्यं प्रतिपाद्यं येषुतेभ्यः सर्व शास्त्रेभ्य ईश्वराराधनलक्षणः ईश्वरार्पित वर्णाश्रम धर्मः निर्मत्सराणा मिति विशेषणस्वारस्यात्सच्छब्देन भूतानुकंपिनामितिव्याख्यातं एवं निरुक्त धर्म वर्णन प्रकारेण कर्मकांड विषयेभ्य कर्मकांड मेव विषय: प्रतिपाद्यं येषुस्मृति शास्त्रेषुतेभ्यः, एवं ज्ञान कांड मेव विषयः प्रति-निरुक्त धर्म वर्णन ... पाद्यं येषुतेभ्योपि पूर्वार्धे कहहनुवेद यतावर जन्म लयो प्रसर मित्युक्त तुर्ज्ञेयस्य ब्रह्मणो ज्ञेयत्वापत्तिरतोयद्वेति वास्तवश्चजीव: वास्त-

* भावार्थ दीपिकायाः टिप्पणीयम् ।

वीच माया वास्तवं जगत् ऐषामेक भावो वास्तवं नपुंसकमनपुंसकेनेत्येकशेषः यथा शुक्लश्च शुक्लंच शुक्लमिती इतिवेद्यमितीति-शब्दस्याध्याहारः कथं भूतंतत्तापत्रयोन्मूलनं तत्खलु आध्यात्मिकं आधिभौतिकमाधिदैविकंच तत्राध्यात्मिकं द्विविधं शारीरं मानसंच वात पित्तश्लेमणां वैषम्य निमित्तं शारीरं काम क्रोध लोभ मोह भयेर्ष्या विषयविशेषादर्शननिबंधनं मानसं ततः तादृश ज्ञानात् अनेन तादृश ज्ञान कथनेन महामुनिशब्दस्य नारायण वाचकत्वे समुनिर्भूत्वा समर्चितयदिति श्रुतिः प्रमाणं ननुकांड त्रयाच्छ्रैष्ट्येन वेद् वाह्यत्वप्रतीति रत आह तस्मादिति कांडत्रय वैशिष्ट्यात् अत्र श्री मति भागवते ॥ २ ॥

---

श्रीवीरराघवः।

अथ विषय प्रयोजन संबंधाधिकारि रूपमनुबंध चतुष्टय माह द्वितीय श्लोकेन। धर्मः प्रोज्झित कैतव इत्यादिना विषयोनाम प्रधान प्रतिपाद्यवस्तुरूपः सचात्र धर्मः सोपिसाध्यःसिद्धश्चेति द्विविधः सिद्ध रूपे वस्तुनि धर्म शब्दप्रयोगो महाभारतेदृष्टःयथा येच वेदविदो विप्रायेचाध्यात्म विदोजनाः तेवदंति महात्मानं कृष्णं धर्मं सनातनं इति तथाभियुक्तैश्चालौकिकत्वे सतिश्रेयः साधनत्वं धर्म शब्द प्रवृत्ति निमित्तं मन्वानैः सिद्ध रूपेऽर्थे धर्मशब्दः प्रयुक्तः। द्रव्यक्रियागुणादीनां धर्मत्वंस्थापयिष्यते। तेषामैंद्रियकत्वेपिन तद्रूपेण धर्मतेति तत्र सिद्धधर्मः परमात्मा अमृतस्यैषसेतु रित्यादि शास्त्रेण तस्या लौकिकत्वे सतिश्रेयः साधनत्वावगमात् साध्यधर्मस्तु परमात्मा राधनात्मिका भक्तिः तत्र सतामित्यंतेन साध्य धर्म उच्यते वेद्य मित्यादिना तापत्रयोन्मूलनमित्यंतेन सिद्धर्मः। ईश्वर इत्यादि ना प्रयोजन मुच्यते तच्चापि द्विविधं व्यवहितमव्यवहितंचेति तत्रायन्नेनहृदीश्वरावस्थापन मव्यहितंफलं तापत्रयनिवृत्तिस्तुभगवदनु भवपरंपरया व्यवहितं फलं संबंधोपि द्विविधः साध्य साधन भाव रूपः प्रतिपाद्य प्रतिपादक भाव रूपश्चेति। तत्र प्रयोजनोक्त्या साध्य साधन भाव रूपः विषयोक्त्या प्रतिपाद्य प्रतिपादक भाव रूपश्चार्थो विवक्षितः। एवं सिसाधयिषु प्रतिपिपत्सुरूपोममुक्षुरधिकार्यर्थतोविवक्षितो वेदितव्यः। तत्र साध्य धर्म माह धर्म इति। अत्रास्मिन्पुराणे प्रोज्झितकैतवः परमो निर्मत्सराणां सतां धर्मः साध्यतयोच्यते इत्यर्थः। कैतवं बंचनं प्रोज्झितं नितरांत्यक्तं कैतवं यस्मिन् अनेन विप्रलिप्सामूलवाह्या गमोक्तचैत्यवंदनादिव्यावृत्तिः। निर्मत्सराणां सतामिति संबंध सामान्येषष्ठी। निर्मत्सराणां सतां संबंधी धर्मोत्र साध्य तपोच्यत इत्यर्थः। संबंधश्चानुष्ठेयानुष्ठान भाव रूपः निर्मत्सराणां सतां धर्म इत्यनेन वेदोक्ताभिचारादि व्यावृत्तिः अभिचारादयोहि मत्सरादिमतामनुष्ठेयाः। परमः सर्वोत्कृष्टः अनेन क्षुद्रफल प्रदकाम्य कर्मव्यावृत्तिः। यद्वा मत्सरशब्दः कामादीनां प्रदर्शनार्थः शमदमाद्युपेतानां मुमुक्षुणां धर्मः अनेनस्वर्गाद्यर्थ कर्मव्यावृत्तिः परमः सर्वेषामेव धर्माणां मुक्त मो वैष्णवो विधिरित्युक्त प्रकारेण भगवत्सन्तोषैकफलत्वात्परमः एवं साध्य धर्म रूपो विषय उक्तः अथैवंविधमोक्षैकप्रयोजनसाध्य धर्मसमाराध्यमेतत्पुराणवेद्यं परवृह्मात्मकं सिद्धधर्मरूपं विषय माह वेद्य मिति सता मित्येतत्काकाक्षिन्यायादत्रापि संबध्यते अत्रास्मि न्महामुनि कृते श्रीमद्भागवताख्ये पुराणे अन्वर्थमिदंनाम भगवतः स्वरूपरूपगुणविभूतिप्रतिपादकत्वेन भगवत इदं भागवतमिति व्युत्पत्तेः। सतां वेद्यं वस्तु वास्तवं शिवदंतापत्रयोन्मूलनं वास्तवत्वादि गुण विशिष्ट मित्यन्वयः महामुनिना श्रीवादरायणेन कृते मुनेर्महत्व मत्रासंभाव्यमानपौरूषेयदोषगंधापौरुषेयप्रत्यक्षः श्रुतिवाक्येन, सहोवाचव्यासः पाराशर्य इत्यनेनाप्ततमतयाश्रावितत्वरूपंविवक्षितं अनेनास्य पुराणस्य वक्तृवैलक्षण्यवत्वं सिद्धं अतएव प्रमाणतमत्वंच इतरदेवतानामसद्गुणारोपेण स्तोतव्यत्वात्तद्व्यावृत्यर्थं वास्तवमित्युक्तं। वस्तुनोभावो वास्तवंयुवादित्वा द्वायनांत युवादिभ्योणित्पण् ततोमत्वर्थीयोच् स्वाभाविकधर्मयुक्तमित्यर्थः शिव दं मंगलदं मोक्षानंदप्रदं अनेनेष्टप्रापकत्वमुक्तं तापत्रयोन्मूलनं आध्यात्मिकादि तापत्रयोछित्तिकरं अनेनानिष्टनिवर्त्तकत्वमुक्तं यद्वा वास्तवशब्देन शास्त्रांतराभ्युपेतावृह्मात्मक स्वतन्त्रप्रधानादेर्वैलक्षण्यमभिप्रेतं अवृह्मात्मकप्रधानादीनामप्रामाणिकत्वात् इतरविशेष-णद्वयेनक्षुद्रोपद्रव शतोपप्लुतपरिमित सुखप्रददेवतांतरव्यावृत्तिः एवं मोक्षसाधनधर्मस्तत्समाराध्य पर देवताचास्यप्रबंधस्य विषय इत्युक्तं यतएवेदमीदृशविशिष्टविषयकस्ततः एव न शास्त्रांतरैः प्रयोजन मस्तीत्याह किंवा परै रिति अपरैः शास्त्र जालैः किंवा न किंचिदपि प्रयोजन मस्तीत्यर्थः अथ प्रयोजन माह ईश्वर इत्यादिना शुश्रूषुभिः श्रवणेच्छामात्रवद्भि अतएव तत्क्षणात् कृतिभिर्द्धन्यैः सद्यः एतत्पुराण श्रवणानंतर मेव हृदीश्वरोवरुध्यते श्रुतिपथेन हृदयं प्रविशतीत्यर्थः यत्नेनाचित्तेविनिवेशयंतिन्यायेन दुर्ग्रहस्येश्वरस्याय-त्नेन हृद्यवस्थान मव्यवहितं फलं तापत्रय निवत्तिश्च भगवदनुभवपरंपरयाफलमित्युक्तं भवति। प्रयोजनेन साध्य साधनभाव रूपः विषयेण प्रतिपाद्य प्रतिपादक भाव रूपश्च संबंधोधिकारी चार्थ सिद्ध इति पुरस्ता देवोक्तं ॥ २ ॥

---

श्रीविजयध्वजः।

ननुजन्माद्यस्ययतइत्यनेनसकलपुराणार्थस्यसंक्षेपतोदर्शितत्वात्किमुत्तरश्लोकेनेत्यतोग्रंथारंभेमंगलाचरणाद्युक्त्यानारायणस्य प्रस्तुत त्वंनतुसाक्षाद्विषयत्वेन, विषयस्त्वन्य एवेति शंकानिरासार्थंविषयतत्साधनाधिकारिप्रयोजनानि द्वितीयश्लोके न दर्शयति धर्मइति ननुय-दिष्टसाधनत्वावोधकं प्रायस्तदेवप्रमाणतयोपादेयं अतः कथमस्यग्रंथस्येत्यतोवाह धर्मइति अत्रश्रीमद्भागवते प्रोज्झितकैतवः परमोधर्मः प्रतिपाद्यते अत्र श्रीमद्भागवतेनिर्मत्सराणांसतां वेद्यंवास्तवंशिवदंतापत्रयोन्मूलनं वस्तुप्रतिपाद्यते किंविशिष्टे महामुनिकृते अपरैः किंवा-शुश्रूषुभिः कृतिभिः अत्र श्रीमद्भागवते अभ्यस्यमानेईश्वरः सद्यस्तत्क्षणात् हृदिअवरुध्यतइत्येकान्वयः अत्रास्मिन् श्रीमद्भागवते, श्रीम-द्वनामश्रूयमाणरमणीयतयाऽर्थपर्यालोचनयाचास्येतरेभ्यः आधिक्यंतथाचोक्तं राजंतेतावदन्यानि पुराणानिसतांगणे यावन्नदृश्यतेसाक्षा च्छ्रीमद्भागवतं परमितिध्रियत अनेन अधः पतन् पुरुषइतिधर्मः धारयतीतिधरोभगवान्समीयते ज्ञायते अनेनेतिवा दधातिकर्तारं रमयति मनुतेहिनस्तिपापमिति वा भगवतः प्राप्तिसाधनभूतः ननुधर्मोन्यत्रापि प्रतिपाद्यत किमत्रैवेति तत्राह प्रोज्झितइति प्रोज्झितकैतवः कितव-स्यभावः कैतवंप्रकर्षेणोज्झितं कैतवंयेन सतथोक्तः कितवोनामलोकेमनस्यन्यदभिसंधायान्यदभिधत्ते अन्यदेवाभिचरति तद्वदत्रापि भग-

वत्प्रीतिमंतरेण स्वर्गादिफलंमनस्यनुसंधायभगवद्गुणप्रतिपादनलोलुपनिगमार्थं अन्यथावदन्स्वात्मनोदेहेंद्रियाणामीश्वराधिष्टितत्वमीश्वरनियम्यत्वं निगूहयहरेः कारयितृत्वंफलदातृत्वमपि अगणय्याहमेवेदं करिष्येऽर्थीसमर्थोविद्वानहमेवस्वतंत्रइतिबुद्ध्यावायुक्तः कितवः तेन क्रियमाणोधर्मकैतवइत्युच्यते अतोऽफलकामनयैवधर्मः कर्तव्यइत्ययमर्थोत्रप्रतिपाद्यत इत्यर्थः तत्कर्मयन्नबंधायसाविद्यायाविमुक्तय इतिश्री विष्णुपुराणे तर्ह्येतावतापूर्यत इतितत्राह परमइति यत्करोषियदश्नासियज्जुहोषिददासियत् यत्तपस्यसिकौंतेयतत्कुरुष्वमदर्पणमितिस्मृतेः भगवदर्पणतः परमोभवतीत्यर्थः किंचपरः परमात्मामीयते ऽनेनेत्येतदभिप्रायेणपरमइत्यभिधायि परोरिपरमात्मनोरित्यभिधानात् सपरः शत्रुः संसारः मीयतेप्रलीयतेइतिवा मीङ्हिंसायां प्रमीर्याहिंसाच संक्षपनमित्यभिधानं किंचयतोऽधिकतमः सुखहेतुर्भवतिसपरमोधर्मः सचभक्तियोगलक्षणएव तथाच भारते भीष्मयुधिष्ठिरसंवादे कोधर्मःसर्वधर्माणांभवतःपरमोमतइतिपृष्टे एषमेसर्वधर्माणां धर्मोधिकतमोमतः यद्भक्त्यापुंडरीकाक्षंस्तवैरर्चेन्नरः सदेति उक्तंच एतावानेवलोकेस्मिन् पुंसांधर्मःपरःस्मृतः भक्तियोगोभगवति तन्नामग्रहणादिभिः नृणामयंपरोधर्मः सर्वेषांसमुदाहृतः त्रिंशल्लक्षणवान्साक्षात्सर्वात्मायेनतुष्यतीतिस्वोक्तेः केषामधिकारः कश्चसाक्षाद्विषय इतितत्राह निर्मत्सराणामित्यादिनाभावप्रधानोनिर्देशः निर्गतंमात्सर्यंयेषांतेतथोक्ताः तेषांसतांप्रशस्तकर्मणांपुरुषाणां सतामपिक्वचित्कचिन्मात्सर्यस्यात्तन्नकर्तव्यं स्वोत्तमेष्वित्यतोनिर्मत्सराणामित्युक्तंज्ञेयं कृद्योगेषष्ठीतिसतामिति वेदनंज्ञानमेवनकर्मादिकमित्यतोवेद्यमित्युक्तं वास्तवंनित्यनिरस्तदोषंपूर्णगुणं वस्तुअप्रतिहतंनित्यंअप्रतिहतनित्यत्वेन वसनशीलत्वादित्यर्थः दुःखनिवृत्तिसुखप्राप्तिलक्षणस्यपुरुषार्थत्वात्तदभावात्किमनेनेतितत्राह शिवदमिति परमानंददातिच तापत्रयोन्मूलनं आध्यात्मिकादिसकलदुःखनिवर्तकंच वेत्ताविद्यस्यसर्वस्यमुनिःसद्भिरुदाहृतइत्यभिधानान्मुनयो ब्रह्मादयःतेभ्योप्यतिशयितसार्वज्ञान्महामुनिर्व्यासः साक्षान्नारायणः कृष्णद्वैपायनंव्यासंविद्धिनारायणं प्रभुमितिवचनं तेनकृतेप्रणीते ननुकिमितिईश्वरतुष्टिकरोभक्तियोगलक्षणोधर्मईश्वरश्चात्रप्रतिपाद्यो नधर्मादिरिति तत्राहकिंवेति भक्तियोगलक्षणधर्मस्यहरेरपरोक्षज्ञानमुत्पाद्यतत्प्रसादांतरंगसाधनत्वेनापवर्ग लक्षणानश्वरफलहेतुत्वाद्बहिर्मुखमनोरंजकत्वेन स्वर्गादि क्षयिष्णुवत्फलमुत्पाद्यसंसारावृत्तिहेतुत्वात् धर्मादिकथनैः किंवाप्रयोजनंनकिमपीत्यतः तानंतरेणभक्तियोगलक्षणधर्मस्तद्विषयईश्वरश्चात्रप्रतिपाद्यतइत्यर्थः ननुदृष्टफलप्रवृत्तिद्वाराऽदृष्टफलप्रवृत्तिदर्शनात् किमत्रदृष्टफलमितितत्राह ईश्वरइति अस्मिन् भागवतशास्त्रे सम्यगभ्यस्यमाने कृतिभिः शिक्षितबुद्धिभिःशुश्रूषुभिः मनोवाक्कर्मभिः गुर्वादिपरमपुरुषपरिचर्याकरणकुशलैः साधनसामग्र्युपेतैरेभिः ईश्वरःलक्ष्मीशादिचेतनगणाद्वरउत्तमः तत्प्रवर्तनशीलोवा परमात्माहृदिहृदयकमले सद्यःशीघ्रंतत्क्षणात्कालव्यवधानमंतरेण अवरुध्यते भक्तिशृंखलयाबद्धोदृश्यत इत्यर्थः अत्र सद्यः तत्क्षणशब्दावाधिकारिविशेषद्योतकतयाप्रयुक्तौयेसाधनसामग्रीमंतस्तेषां यस्मिन्क्षणेग्रंथोपक्रमस्तस्मिनक्षणएव भगवान्दृश्यते तदुक्तं शनकैर्भगवल्लोकान्नृलोकं पुनरागतइति येभविष्यत्साधनसंपत्ति संपादनयोग्या स्तेषामपि सद्यः साधनसामग्र्यांसत्यांदृश्यते यन्नियतंकालांतरभावितज्झटिति भवत्येवेतिच वक्तुंशक्यत्वाद्भक्तियोगलक्षणधर्मेश्वरौ विषतयानिर्मत्सरसदधिकारिभिः प्राप्तंनिर्दुःखपरमात्मानंदाख्यंप्रयोजनमित्येतात्त्रितयमत्र प्रतिपाद्यत इत्यभिप्रायेणात्रेतितित्रिशः कथितं ननुसगुणब्रह्मतत्तुष्टिकरः परमधर्मः निराकारं निर्गुणंब्रह्मचेति त्रितयाभिप्रायेणात्रेतितित्रित्वमिति कर्मदेवब्रह्मकांडार्थोप्यत्रैव निर्णीतइतिवा धर्मइतिकर्मकांडार्थः निर्मत्सराणांसतामिति देवताकांडार्थः देवतानामेवमात्सर्यराहित्येनमुख्यसत्वेनोत्तमाधिकारित्वाच्च वेद्यमितिब्रह्मकांडार्थः तस्मान्नारायणावतारेणसर्वज्ञतमेनकृष्णद्वैपायनेनाप्ततमेन प्रणीतत्वेन प्रमाणतमत्वादिदं श्रीमद्भागवतं सर्वमुमुक्षुभिर्निरंतरमभ्यसनीयमितिसिद्धं ॥ २ ॥

---

## क्रमसन्दर्भः ।

अथ वक्ष्यमाण शास्त्रस्य कर्म्म ज्ञान भक्तिप्रतिपादकेभ्यस्त्रिकांड विषयशास्त्रेभ्यो वैशिष्ट्यं दर्शयन् क्रमादुत्कर्षमाह धर्म्म इति । अत्र यस्तावद्धर्म्मःनिरूप्यते स खलु सवैपुंसांपरो धर्म्मो यतो भक्तिरधोक्षज इत्यादिकया अतःपुंभि र्द्विजश्रेष्ठा वर्णाश्रम विभागशः । स्वनुष्ठितस्य धर्म्मस्य संसिद्धिर्हरितोषणमित्यन्तया गीत्या, भगवत्सन्तोषणैकतात्पर्येण शुद्धभक्त्युत्पादनतयानिरूपणात्परम एव । यतः सोऽपि तदेक तात्पर्यात् प्रोज्झित कैतवः । प्रशब्देन सालोक्यादिसर्व्वप्रकारमोक्षाभिसन्धिरपिनिरस्तः । यत एवासौ तदेकतात्पर्य्यत्वेन निर्म्मत्सराणां फलकामुकस्यैव परोत्कर्षासहनं मत्सर स्तद्रहितानामेव तदुपलक्षणत्वेन पश्वालम्भने दयालूनामेवच सतां स्वधर्म्मे पराणां विधीयते । एवमीदृशं स्पष्टमनुक्तवतः कर्म्मशास्त्रादुपासनाशास्त्राच्चास्य तत्तत् प्रतिपादकांशेऽपि वैशिष्ट्यमुक्तमुभयत्रवै परम धर्म्मोत्पत्तेः । तदेवं साक्षाच्छ्रवणकीर्त्तनादिरूपस्य वार्त्तातु दूरत एव आस्तामिति भावः । अत्र ज्ञान शास्त्रेभ्योऽप्यस्य पूर्व्ववद्वैशिष्ट्यमाह वेद्यमिति । तै र्व्याख्यातं भगवद्भक्तिनिरपेक्षप्रायेषुतेषु प्रतिपादितमपि श्रेयःसृतिंभक्तिमुदस्येत्यादिन्यायेन वेद्यं निःश्रेयसं न भवतीति । वस्तुनस्तस्य सशक्तित्वमाह । तापत्रयं मायाकार्य्यमुन्मूलयति तन्मूलभूताविद्यापर्य्यन्तंखण्डयतीति स्वरूपशक्त्या । तथा शिवं परमानन्दं ददात्यनुभावयतीति च तयैवेत्यनेनेदं ज्ञाप्यते अन्यत्र मुक्तावनुभवमननेऽप्यपुरुषार्थत्वापातः स्यात् तन्मननादत्र तु वैशिष्ट्यमिति । न चास्य तत्तद्दुर्लभवस्तु साधनत्वे तादृश निरूपण सौष्ठवमेव कारणमपितु स्वरूपमपीत्याह । श्रीमद्भागवत इति भागवतत्वं भगवत् प्रतिपादकत्वं । श्रीमत्वं श्रीभगवन्नामादेरिव तादृशस्वाभाविकशक्तिमत्वं । नित्ययोगे मतुप् । अतएव समस्ततयैव निर्दिश्य नीलोत्पलादिवत्तन्नामत्वमेव वोधितमन्यथात्वाविमृष्टविधेयांशतादोषः स्यात् । अत उक्तं गारुडे । ग्रन्थोऽष्टादशसाहस्रः श्रीमद्भागवताभिध इति । श्रीमद्भागवतं भक्त्या पठते हरिसन्निधाविति । टीकाकृद्भिरपि । श्रीमद्भागवताभिधः सुरतरुरिति । अतः क्वचित् केवल भागवताख्यत्वं तु सत्यभामा भामेतिवत् । तादृशप्रभावत्वे कारणं परमश्रेष्ठकर्तृकत्वमप्याह । महामुनिः श्रीभगवान् तस्यैव परम विचारपारङ्गतत्वात् । महाप्रभावगणशिरोमणित्वाच्च । स मुनिर्भूत्वा समचिन्तयदिति श्रुतेः । तेन प्रथमं चतुःश्लोकीरूपेण संक्षेपतः प्रकाशिते । कस्मै येन विभाषितोऽयमित्याद्यनुसारेण सम्पूर्ण एव वा प्रकाशिते । तदेवं श्रैष्ठ्यजातमन्यत्रापिप्राय सम्भवतुनाम सर्व्वे ज्ञानशास्त्र परम ज्ञेय पुरुषार्थ शिरोमणि श्रीभगवत् साक्षात्कारस्त्वत्रैव सुलभ इति वदन् सर्व्वोर्द्ध्वप्रभावमाह किंवेति । अन्यैर्मोक्षपर्य्यन्तकामनारहितेश्वराराधनलक्षणधर्म्म ब्रह्मसाक्षात्कारादिभिरुक्तैरनुक्तैर्व्वा साधनैरत्र किंवा कियद्वा माहात्म्यमुपपन्नमित्यर्थः । यतो य ईश्वरः कृतिभिः कथञ्चित्तत्तत् साधनानुक्रमलब्धया भक्त्या कृतार्थैः सद्यस्तत्क्षणमेव व्याप्य हृदि स्थिरीक्रियते । स एवात्र

श्रोतुमिच्छद्भिरेव तत्क्षणमारभ्य सर्व्वदैवेति । तस्मादत् कान्डत्रय रहस्यस्य प्रव्यक्त प्रतिपादनादेर्विशेषत ईश्वराकर्षिविद्यारूपत्वाच्च इदमेव सर्व्वशास्त्रेभ्यः श्रेष्ठं । अतएवात्रेति पदस्य त्रिरुक्तिः कृता सा हि निर्द्धारणार्थेति अतएव नित्यमेतदेवसर्व्वै श्रोतव्यमितिभावः॥२॥

---

## सुबोधनी ।

धर्मोज्ञानंचसाधनं ॥ भगवदाविर्भावः साध्यः तदनुतत्रप्रवेशःफलं ॥एतत्सर्वं भागवतादेवभवतीति विशिष्टकल्पद्रुमत्वं विधिसंबंधोधर्म लक्षण वेदश्चप्रमाणं स यज्ञात्मकोधर्मः आचारोपिधर्मः पौराणिकः सत्यादयोपिधर्माः तपःप्रभृतयश्च श्रवणादयश्च तत्रयज्ञेषु पूर्वोक्त-न्यायेन अतद्धेतोरपि फलसाधनतयोक्तरूपेण स्वर्गादिपदभ्रमजननाद्वाकापट्यसंभवति आचारेपिशुद्धयशुद्धविधीयेते समानेष्वपिवस्तुष्वि-त्यादिन्यायेन प्रवृत्तिसंकोचार्थं गुणदोषौविधीयेते इतिकापट्यं सत्यादिष्वपिव्यवहारस्यसंनिपातत्वात् कापट्यं तपःप्रभृतिषुच कःक्षे-मांनिजपरयोः क्रियान्वार्थः स्वपरद्रुहाधर्मेण कर्षयंतः शरीरस्थं भूतग्राममचेतस इतिवाक्यात् कापट्यं सर्वत्र विहित निषेधात् कापट्य-प्रतीतिः न तथाश्रवणादिषु किंचित्कापट्यमस्ति तद्धर्मकर्तृष्वपिकापट्याभावः प्रशब्दार्थः प्रकर्षेणाकैतवं उज्जितं यस्मात् सश्रवणादिधर्मो भागवतएव परमश्चायं भगवद्धर्मत्वात् परोमीयतइति भगवत्साक्षात्कारहेतुत्वाद्वा परमः कर्तृवैशिष्ट्यादपिधर्मोत्कर्षमाहनिर्मत्सराणांसता मिति परोत्कर्षासहनं मत्सरोदोषः कृपालुत्वादिधर्मसंबंधोगुणः दोषाभावगुणयुक्ताः अस्यधर्मस्य संबंधिनइत्युकर्षःअन्यत्र मात्सर्योदयः स्पष्टएव ज्ञानमप्यत्रैवेत्याहवेद्य मित्यादि अत्र वास्तवं वस्तुवेद्यं यज्ञब्रह्मकालपुरुषा एव सर्वत्रवेद्याउक्ताः तेषामपिवस्तुस्वरूपोभगवानत्रैव वेद्यउक्तः तदेवहिवास्तवंरूपं सर्वेषां॥किंच॥ स्वप्रकाशस्यापि वेद्यता अत्रैवशास्त्रेसिद्धानान्यत्र ॥अन्यत्रवेद्यस्यावास्तवत्वं वस्तुनश्च वेद्यत्वमितिस्थितिः अविद्यावच्छिन्नयत्वंच भागवतेतु मुक्तानामधिकारःसर्वावेद्यस्यापि भगवतस्तदिच्छयाप्रागट्येवेद्यत्वं अन्यत्र पर्यवसित-बुद्धीनामेवताहशे अवास्तवत्वप्रतीतिः सर्वेषांवावास्तवं रूपंवेद्यमिति यज्ञादिषुकृतेषु ज्ञातेषुच नशांतपरमानंदावाप्तिः पारलौकिकत्वाच्चत-स्यफलस्य सांप्रतंदुःखानुभवश्च आत्मज्ञानोपिशांततापरं नपरमानंदस्तस्यैव परमानंदत्वं शास्त्रैर्विप्रतिषिद्धं भगवत्साक्षात्कारे तु अन्ततः सायुज्येवाशांतता परमानंदः तत्क्षणमेवतापत्रयस्योन्मूलनं तस्मादत्रैवफलंसाधनंचेति ज्ञानोत्कर्षः शब्दरसाभिज्ञानामपि इदमेवोत्कृष्टमि-त्याह श्रीमतिलक्ष्मीयुक्ते भागवतेदशरसयुक्त इतियावत् काव्येष्वप्येतच्छायारूपमस्ति तथापि निंदितत्वं कर्तृदोषात् तदत्रशंकितमपिने-त्याह महामुनिकृतइति वेदव्यासकृत इत्यर्थः समाधावनुभूयकृतत्वात् समाधिभावार्थं महामुनिकृतमित्युक्तं असाधारणमुपासनाकांडो-त्कर्षमाह मंत्रशास्त्रमुपासनाकांडः पंचरात्रंच तत्रमंत्रशास्त्रे देवतास्वाधीनाभवति परमेश्वररूपापंचरात्रेपि मंत्राधिष्ठानस्वरूपेणैवस्वाधी-नता तथास्थानाधिष्ठानेष्वपि साक्षात्पुराणपुरुषस्त्वत्रैवहृद्यवरुध्यते अतएवपरैर्भगवद्व्यतिरिक्तप्रतिपादितै र्भेदेनप्रतिपादितैर्वाकिंनाकिंचि-दपित्यर्थः वाशब्दस्त्वनादरे अत्रतु ईश्वरः कर्त्तुमकर्त्तुमन्यथाकर्त्तुंसमर्थः अदृष्टकालादिबाधकंपरिहृत्यकर्त्तुं अदृष्टादिकृतं दूरीकर्त्तुंच भ्रांते-ष्वपिभक्तेष्वन्यथाकर्तुंच समर्थईश्वर सद्यइति भागवतश्रवणमात्रेण हृदयारूढोभवति ॥ विचारचिंतनव्यतिरेकेणापि अत्रप्रतिपादकानां महापुरुषत्वात् तद्वाक्यंदुर्बोधमिति बोधनप्रकारमाह कृतिभिः शुश्रूभिरिति बुद्धेः कौशलंकृतित्वं उक्तबोधोपयोगिशुश्रूषातुकथनोपयोगिर्ना तदुभयसंपत्तौ तत्क्षणादेवावरुध्यतइत्यर्थः ॥ अथवाभागवतस्योत्कर्षमाह किंवापरैरिति भागवतस्यउत्कर्षहेतुभिः अन्यैरुक्तैरलंवेतच्चनादरे अर्थतः शब्दतः उत्कर्षप्रकाराबहवः संत्येव तथाप्ययमहानुत्कर्षः यद्भगवानेवसद्योहृद्यवरुध्यतेकैः अत्रशुश्रूषुभिः साश्रवणेच्छामहाभाग्यै-रेवेतयाह कृतिभिःकुशलैः भाषात्रय विरोधपरिहारेण पदवाक्ययोर्भगवत्परताहिज्ञातव्या अन्यथाश्रुतमप्यश्रुतं भवति तत्क्षणादिति तदानी-मेवभगवद्दर्थं प्रयत्नदर्शनात् तस्मात्सर्वोत्कृष्टं भागवतमिति वस्तुनिर्देशः ॥ २ ॥

---

## श्री विश्वनाथचक्रवर्त्ती ।

श्री भागवतस्य शास्त्र रूपत्वेन शास्त्राणांच जीवहिताहित प्रदर्शकत्वेन हिताहितयोश्चाधिकारिभेदाद्बादिभेदाच्च वैविध्ये सर्व्व मूलभूतहितस्य निश्चयाशक्ते र्विषीदतः श्रोतृनानन्दयन्नस्मादेव सर्व्वतोपि सार एव पदार्थः सर्व्वैरेव प्राप्तो भवतीति स्पष्टमाह धर्म्मइति । अत्र श्रीमति भागवते ईश्वर आश्रयतत्त्वं श्रीकृष्णः कृतिभि र्निर्मत्सरैरेव तत्पद्योक्तलक्षणाधिकारिभि रित्यर्थः श्रवणादिभिः सद्यएव हृदि अवरुध्यते वशीक्रियत इति प्रेमा सूचितः तस्य प्रेमैकवश्यत्वात् प्रणयरसनया धृताङ्घ्रि पद्म इति । न रोधयति मां योग इत्यादि-भ्यश्च । ततश्च तत्क्षणादेव शुश्रुषुभिरिति । तत्क्षणमारभ्य तेषां श्रवणेच्छाच भवेदिति श्रद्धातः पूर्व्वमेव श्रवणे प्रेमा भवेत् । किं पुनः श्रद्धायां सत्यामिति भावः । सकृदपि परिगीतं श्रद्धया हेलया वा भृगुवर नरमात्रं तारयेत् कृष्णनामेतिवत् । तथाद्युक्तमलौकिकपदार्थो नां शक्तेरचिन्त्यत्व प्रस्तावे । यत्र स्वल्पोऽपि सन्बन्धः सद्भियां भावजन्मन इति ईश्वरेमनः स्थिरीक्रियते इत्येव परमपुरुषार्थं उच्यते । अत्र तु ईश्वरो मनसि अवरुध्यते इति ततस्तन्निर्गमनासामर्थ्यं तच्चावरोधनं सद्यएव बिनापिश्रद्धयेति कापि श्रीकृष्णाकर्षणीयं महाविद्येति गम्यते । अत्र कृतिभिरिति सद्य इति पदाभ्यामकृतिभि स्त्वसद्यः किञ्चिद्विलम्वेनेति लभ्यते । भावुकाः पिवतेति संसारिणां करुणाया हेत्युक्तिभ्यामुभयेषामप्यत्राधिकारात् । श्लेषेण तस्य श्रीकृष्णस्य क्षणावुत्सवादूहेतो रिति प्रेममयेन हृदा अवरोधादेव तस्य परमानन्द उत्पद्यत इति तत्सुख तात्पर्य्येण प्रेम्णो लक्षणमप्युक्तं । अतः किंवापरैः शास्त्रै स्तदुक्त साधनै र्वा, न किमपि फलमित्यर्थः एवमस्य शास्त्रस्य प्रयोजनवैशिष्ट्यमुक्तं कर्त्तर्य्यपि वैशिष्ट्यमाह । महामुनिः श्रीभगवान् "समुनिर्भूत्वा समचिन्तयदिति" श्रुतेः । तेन कृते प्रथमं चतुः श्लोकीरूपेण संक्षेपतः प्रकाशिते कस्मै येन विभाषितोऽयमतुल इत्युक्तेस्ततः संपूर्णएव प्रकाशिते । श्रवणादिभिः किमत्र ज्ञायते इत्यपेक्षायामाह वेद्यमिति । वास्तवं आदिमध्यावसानेषु स्थिरं यद्वस्तु तन्निर्मत्सराणां वेद्यं विदितुं साक्षादनुभवितुं शक्यं तेन समत्स-राणान्तु श्रवणाद्यावृत्त्या मत्सरापगम एवेति तैरपि नात्र प्रयत्नाभावः कर्त्तव्यः तत्पक्षेपि वेद्यं वेदितुमर्हमित्यर्थलाभादितिभावः । तच्च भगवतः स्वरूपं नामरूप गुणादि वैकुंठादिधामानिच भक्ताश्च भक्तिश्चेति अन्यज्जगदादि सर्व्वमवास्तवमस्थिरं वस्त्वित्यर्थे लब्धे वै-कुंठादिजगदाद्यो र्वस्तुत्वेपि वास्तवत्वावास्तवत्वाभ्यां भेदश्च बोधितः । ततश्च मिथ्याभूतखपुष्पादिकमेवावस्तु इत्यायातं । वेद नेन

### श्रीविश्वनाथचक्रवर्त्ती ।

किं स्यात् तत्राह । शिवदं प्रेमवत्पार्षदत्वमित्यनुसंहितं फलं तापत्रयविनाशो मोक्ष इत्यननुसंहितं फलञ्च दर्शितं । अत्र किमनुष्ठेयामित्यपेक्षाया माह धर्म्म इति । प्रकर्षेण उज्झितं कैतवं फलाभिसन्धिलक्षणं कपटं यस्मिन् स इति सकामकर्म्मयोगो व्यावृत्तः । प्रशब्देन मोक्षाभिसन्धिरपि निरस्त इति निष्काम कर्म्म शमदमाद्यङ्ग ज्ञान योगाष्टाङ्गयोगाश्च व्यावृत्ताः । परम इति सर्व्वं श्रेष्ठत्वेन सर्व्वसुकरत्वेन फलप्राप्तावप्यहेयत्वेनच शुद्ध भक्तियोगएव उक्त इत्यभिधेयतत्त्वं विविष्य दर्शितं । स वै पुंसां परोधर्म्म इत्यग्रिमोक्तेरत्र पुंमात्रस्यैवाधिकारित्वं ज्ञेयं । तथा अत्रात्रेति पदस्य त्रिरुक्ति र्निर्द्धारणार्था । अत्रैवेश्वरोऽवरुध्यते नान्यत्र अत्रैव वास्तवं वस्तु वेद्यं नान्यत्र अत्रैव प्रोज्झितकैतवो धर्म्मो नान्यत्रेत्यन्ययोगव्यवच्छेदः । अत्रावरुध्यत एवेत्यादिरयोग व्यवच्छेदकश्च ज्ञेयः ॥ २ ॥

---

### सिद्धान्तप्रदीपः

श्रीसर्वेश्वरायनमः एवं मंगलमिषेण श्रीमद्भागवत विषयभूतस्य भगवतोलक्षणमुक्त्वाऽथश्रीमद्भागवतशास्त्रस्यविषयप्रयोजनसंबंधाधिकारीनन्यशास्त्रेभ्यः श्रैष्ठ्यंचाह ॥ धर्मइतिद्वाभ्यांश्लोकाभ्यांम ॥ श्रीमद्भागवते ॥ भगवत्स्वरूपगुणादिवर्णनरूपा श्रीर्विद्यतेयस्मिन्तच्छ्रीमत् ॥ भगवतइदं भागवतंतच्चतच्चतत् ॥ एवंविधेभगवच्छास्त्रे महामुनिकृते महामुनिनासर्ववेदार्थविदा भगवदवतारेण पाराशर्य्येणमयैवकृते ॥ कर्तृतोपिशास्त्रश्रैष्ठ्यकथनार्थमिदमुक्तं नतुस्वप्रशंसार्थम् ॥ परोत्कर्षासहनादिदोषवर्जितानांसताम् निर्मत्सराणाम् प्रोज्झितकैतवः प्रकर्षेणोज्झितंकैतवं फलाभिसंधिलक्षणं कपटंयस्मिन्सः परमोधर्मोभक्तिलक्षणोवेद्यः ॥ किंचात्रतापानामाध्यात्मिकाधिदैविकाधिभूतानामुन्मूलननिर्नाशकम् शिवदंमुक्तिदम् तापत्रयोपलक्षितकार्य्यकारणरूपप्रकृतिसंबंधातिक्रमपूर्वक भगवद्भावापत्तिलक्षणमोक्षप्रदं वस्तुलक्षणं श्रीकृष्णाख्यंतत्वंवेद्यम् ॥ किंचात्रवास्तवं वस्तुनस्तस्यैवसंबंधिचेतनाचेतनात्मकंपदार्थद्वयम् वेद्यम् ॥ तत्रचेतनः पदार्थः ज्ञानस्वरूपोज्ञानाश्रयः कर्तृत्वभोक्तृत्वादिधर्मवान् अणुपरिमाणकोवद्धमुक्तादिभेदवान्जीवः अचेतनपदार्थश्चप्राकृताप्राकृतकालभेदात्रिविधः ॥ एवंचिदचिद्ब्रह्माख्यं तत्वत्रयंवेद्यमित्यर्थः ॥ एवंकर्तृतोऽधिकारितोविषयतश्चशास्त्रश्रैष्ठ्यमुक्त्वा सद्य इष्टार्थप्रदत्वेनापितद्दर्शयति ॥ अत्रशुश्रूषुभिः श्रोतुमिच्छद्भिरेवपुण्यकृद्भिरीश्वरः श्रीकृष्णः सद्योहृद्यवरुध्यतेस्थिरीक्रियते ॥ परैःशास्त्रैस्तदुक्तसाधनैर्वाकिमवरुध्यते सद्योनेत्यर्थः ॥ किंचात्रपंचार्थोपि अनेनैवश्लोकेन प्रतिपादयितुंप्रतिज्ञाताः ॥ तथाहि ॥ वस्तूपास्योर्थः ॥ चेतनउपासकरूपोर्थः ॥ कृपाफलरूपोर्थो भगवद्भावापत्तिलक्षणामुक्तिः चतुर्थोभक्तिरसः पंचमोर्थोविरोधिः सचपरशब्देनसूचितः ॥ अन्यशास्त्राणितदुक्तसाधनानितदधिकारिणश्च भागवतधर्मतत्फलादौच विरोधिनइतिभावः ॥ तेचोक्तापूर्वाचार्य्येण ॥ उपास्यरूपंतदुपासकस्यच कृपाफलंभक्तिरसस्ततः ॥ परं विरोधिनोरूपमथैतदाप्तेर्ज्ञेयाइमेर्था अपिपंचसाधुभिरिति ॥ अपिविषयस्तत्वत्रयं पंचार्थाश्चवाच्यवाचकभावः संबंधः ॥ निर्मत्सरोधिकारीमुक्तिः प्रयोजनमितिसंक्षेपार्थः ॥ २ ॥

---

### भाषा टीका ।

जगत् में जितने शास्त्र हैं सब त्रिकांड विषयकहैं । अर्थात् कर्मकांड ज्ञानकांड और उपासनाकांड, कर्मकांड मे वेदसे लेकर कर्मयोग के समस्त ग्रंथ हैं । ज्ञानकांड मे उपनिषद् से लेकर वेदान्त के समस्त ग्रंथ हैं । उपासनाकांड मे श्रुतिरहस्य से लेकर पंचरात्र और भक्ति के समस्त ग्रंथ हैं । इन तीनो कांडों के समस्त ग्रन्थों से श्रीमद्भागवत की श्रेष्ठता इस श्लोक मे प्रतिपादन करते हैं ।

इस श्री भागवत में मत्सर ( दूसरों के गुणों मे दोष लगाना ) रहित साधु पुरुषों का वह परम धर्म वर्णित है कि जिस में और तुच्छ फलों की तौ क्या मुक्ति पर्यन्त की कामना नहीं की जाती है । इसी से यह कर्मकांड विषयक शास्त्रों से श्रेष्ठ है ॥ ज्ञानकांड के शास्त्रों से श्रेष्ठता का कारण यह है कि इस सैं वस्तु अर्थात् श्री भगवान का अंश जीव, उनकी शक्ति माया, और उनका कार्य जगत् इन तीनों की वास्तवता का ज्ञान होताहै अर्थात् इन तीनौ का श्रीभगवान से किस अंश मे अभेद और किस अंश मे भेदहै यह सब अचिन्त्यभेदाभेद तत्वअनायासमे ज्ञान होता है कि जिससे अध्यात्म आधिभूत और अधिदैव, इन तीनौ तापों का निर्मूलन होकर जीव को परम सुख होता है ॥ विशेष उत्तमता इसकी यह है कि जिस भांत ऋषियों के हृदय मैं प्रेरणाकर श्रीभगवान नै वेदादिकों को रचाहै इसको एसें नही रचाहै परंतु निज श्रीमुख से प्रकाश किया है ।

उपासनाकांड के ग्रंथों से श्रेष्ठता का यह कारण है कि ओर और ग्रंथों के कथित साधनों से बहुत दिन मे ओर बडी कठिनता से किसी भांत हृदय मे श्रीभगवान की स्फूर्ति होतीहै, पर इसके तौ सुननै की इच्छा होते ही श्रीभगवान हृदय मे अटल भाव से स्थिर किये जातेहैं कि जिससै और किसी साधन की अपेक्षा ही नही रहतीहै । यदि एसा उत्तम और सरल साधन यह है तौ सब इसे ही क्यों नही सुनते हैं ? 'सुनै कहां से इसके सुनने की इच्छा विना पूर्व जन्मों के सुकृत के होती ही नहीहै' ॥ २ ॥

---

निगमकल्पतरोर्गलितंफलंशुकमुखादमृतद्रवसंयुतम् ॥
पिवतभागवतंरसमालयंमुहुरहोरसिकाभुविभावुकाः ॥ ३ ॥

श्रीधरस्वामी ।

इदानीं तु न केवलं सर्व्वशास्त्रेभ्यः श्रेष्ठत्वादस्य श्रवणं विधीयते अपितु सर्व्वशास्त्रफलरूपमिदं अतः परमादरेण सेव्यमित्याह निगमेति । निगमो वेदः सएव कल्पतरुः सर्व्वपुरुषार्थोपायत्वात्, तस्य फलमिदं भागवतं नाम तत्तु वैकुंठगतं नारदेनानीयमह्यं दत्तं मयाच शुकस्यमुखे निहितं तच्च तन्मुखाद्भुवि गलितं शिष्यप्रशिष्यादिरूपपल्लवपरम्परया शनैरखण्डमेवावतीर्णं नतूच्च निपातेन स्फुटितमित्यर्थः । एतच्च भविष्यदपि भुतवन्निर्दिष्टं । अनागताख्यानेनैवास्य शास्त्रस्य प्रवृत्तेः । अतएवामृतरूपेण द्रवेण संयुतं । लोकेहि शुकमुखस्पृष्टं फलममृतमिव स्वादु भवतीति प्रसिद्धं । अत्र शुकोमुनिः । अमृतं परमानन्दः स एवद्रवोरसः । रसो वै स रसं ह्येवायं लब्ध्वानन्दी भवतीति श्रुतेः । अतः हे रसिकाः रसज्ञाः तत्रापि भावुकाः रसविशेषभावनाचतुराः अहो भुवि गलितमित्यलभ्यलाभोक्तिः । इदं भागवतं नाम फलं मुहुः पिवत । ननुत्वगष्ट्यादिकं विहाय फलाद्रसः पीयते कथं फलमेव पातव्यं तत्राह रसं रसरूपं अतस्त्वगष्ट्यादेर्हेयांशस्याभावात् फलमेव कृत्स्नं पिवत । अत्र च रसतादात्म्य विवक्षया रसवत्त्वस्याविवक्षितत्वात् अगुण वचनेऽपि रसशब्दे मतुपः प्राप्त्यभावात् तेन विनैव रसं फलमिति सामानाधिकरण्यं । अत्र फलमित्युक्ते पानासम्भवो हेयांशप्रसक्तिश्चभवेदिति तन्निवृत्त्यर्थं रसमित्युक्तं । रसमित्युक्तेपि गलितस्य रसस्य पातुमशक्यत्वात् फलमित्युक्तमिति द्रष्टव्यं । नच भागवतामृतपानं मोक्षेऽपि त्याज्यमित्याह आलयं लयोमोक्षः अभिविधावाकारः लयमभिवाप्य नहीदं स्वर्गादिसुखवन्मुक्तैरुपेक्ष्यते किन्तु सेव्यत एव । वक्ष्यति हि । आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे इत्यादि ॥ ३ ॥

---

दीपनी ।

इदानीमिति निगमेति । नितरां गमयति धर्म्मादिचतुर्विधपुरुषार्थ साधनानि वोधयतीति निगमो वेदः । वेदफलरुपत्वादस्य प्रमाणतमत्वमपि ध्वनितं । अनागताख्यानेनेति । यद्यप्येतद्ग्रन्थप्रणयनोपक्रमदशायामस्य शुकमुखाद्भुवि गलितत्वं न विद्यते तथापि व्यासस्य सर्व्वज्ञत्वाद् भविष्यद्यपि भूतवत् कृत्वा तेनैवमुक्तमिति भावः । अगुणवचनेऽपि अविशेषणेऽपीत्यर्थः । अत्र रसशब्दस्य विशेष्यत्वेऽपि रसवत्त्वे विवक्षाभावात् न तदुत्तरं मतुपः प्राप्तिरिति भावः । तेन विनैव मतुप्प्रत्ययं विनैव । सामानाधिकरण्यं विशेष्यविशेषणभावः ॥३॥

---

श्रीवीरराघवः ।

एवं विषय प्रयोजन कथनेपिप्रामाण्यनिश्चयं विनाश्रवणं नोपपद्यतइत्याशंक्यवेदांत मूलत्वं वदन् चेतनानभिमुखयति तृतीय श्लोकेन निगमकल्पतरोरित्यादिना हेरासिका रसज्ञाः भावुकाः भगवत्संशीलनपराः निगमोवेदः स एव कल्पतरुस्तस्यफलं फलरूपमिदं श्रीभागवतं पुराणं आलयमामरणंपुनःपुनःपिवत । निगमस्य कल्पतरुत्वनिरूपणं धर्मार्थकाममोक्षपुरुषार्थचतुष्टय तत्साधनाव बोधन द्वारा धर्मादिफलजनकत्वात्, भागवतस्यतत्फलत्व निरूपणं निगमसारांश रूपत्वात् खादतेत्यनुक्त्वा पिवतेति वदन्नेतत्सूचयति आम्रादिफलेष्विवानुपादेयांशस्त्वग्वीजादिरूपः कल्पतरुफले नास्ति किंतुकेवलंपेयः कृत्स्नोरसएवसन्नपित्वग्वीजादिरप्युपादेयं एवमस्मिन्नपि पुराणेनानुपादेयांशोविद्यतेऽपितुसर्वोऽप्युपादेयएवेति निगमद्रुमफलत्वंचास्यपुराणस्य स्वप्रधान प्रतिपाद्यनिरतिशयानंतब्रह्मानंद साधनभूतभक्तिद्वाराचगंतव्यं । एवममृतद्रवसंयुतमित्यादीन्यपि विशेषणानि निगम फलत्वं स्वर्गादितत्साधनाववोधिवेदपूर्वभागोप बृंहणात्मककल्पसूत्रादेरप्यस्तीतितद्व्युदासायाह अमृतद्रवसंयुतमिति । अमृतं मोक्षः मुक्तिः कैवल्य निर्वाणश्रेयोनिःश्रेयसामृतमिति मुक्त्यादिशब्दपर्यायत्वस्मरणात् । सएवद्रवः सारांशस्तेन संयुतं रसं रसवत् गुणवचनेभ्यो मतुपोलुगिष्ट इतिलुक् भगवदनुभवानन्दवदनेन भक्ति रूपत्वं सिद्धं भक्तिनाम स्नेहपूर्वमनुध्यानं भक्तिरित्यभिधीयत इति स्मरणात् प्रीति मद्भगवत्स्मरणं फलमत्र सम्यक्ज्ञानात्मकं विवक्षितं शुकमुखाद्गलितमत्युच्चस्थं फलं शुकाख्यपक्षि मुखपातितं सुग्रहंस्यात्तद्वदेव वृक्षशाखाग्रगतं ज्ञान फलं शुकमुख संबंधात्सुलभमित्यर्थः द्वासुपर्णासयुजासखाया समानं वृक्षपरिषस्वजात इति श्रुत्यनुसारेण वादरायणेः शुकाख्यपक्षिस्वरूपिण आलया दितिपाठे आमरणादित्यर्थः । निगमद्रुम फलत्वरूपणेन वेदमूलत्वं शुकमुखाद्गलित मित्यनेन केवल निवृत्त धर्म परायणास्वादितत्व प्रतीत्याशिष्टपरिगृहीतत्व मतएव प्रामाण्यं मुमुक्षु भिरतीवोपादेयत्वंचेत्यादिफलितं यद्यप्येतत्प्रबंध निर्माणोपक्रम दशायामस्य शुकमुखास्वादितत्वं न विद्यते तथापि भविष्यदभिप्रायेण त्रैकालज्ञस्य निर्मातुरेव मुक्तिः ॥ ३ ॥

---

श्रीविजयध्वजः ।

एवंज्ञातफलानामपिप्रेक्षावतांप्रशंसाविधिभ्यांभागवतशास्त्र श्रवणाभ्यासेक्षिप्रप्रवृत्तिःस्यादितिप्रशस्यविधत्ते निगमकल्पतरोरिति भुविभावुकारसिकाः यन्निगमकल्पतरोर्गलितंशुकमुखादमृतद्रवसंयुतंभागवतंफलंतस्यरसमालयंमुहुःपिबतेत्येकान्वयः मर्त्यलोकेभवनशीलाः सज्ञायूयंनिगमयतिनितरांज्ञापयत्यपेक्षिताशेषपुरुषार्थानितिनिगमोवेदःसएवकल्पतरुःकल्पितंसंकल्पितंभक्ताकांक्षितंतराति वितरातिददातीति

## विजयध्वजः

कल्पतरुः सुरपादपः उपसर्गः स्वयंधातुलीनमर्थंप्रकाशयतिनस्वतउत्पादयतीतिवृत्तिकारवचनदर्शनात्तरतिर्दानार्थोपिभवति विश्राणनंवितर-णांस्पर्शनंप्रतिपादनंइत्यभिधानाच्च तस्माद्व्यासनाम्नामेयागलितंप्रातितं शिवावतारस्यमतपुत्रस्यशुकनाम्नोमुनेर्मुखात्परीक्षितेप्रवचनादमृत-द्रवेणसंयुतंपूर्वमप्यमृतवतद्रवसंयुतं पश्चाच्छुकाचार्यमुखप्रवचनेनातीवद्रवीकृतमित्यर्थः तथाचपद्मपुराणेअंबरीषंप्रतिगौतमवचनं अंब-रीषशुकप्रोक्तंशृणुभागवतंसदा पठस्वस्वमुखेनापियदीच्छसिभवक्षयमिति भागवताख्यंफलंनिष्पन्नंपक्वमितियावत् तस्यफलस्यमधुरं रसंलिंगशरीरमोक्षपर्यंतंमुहुःपरावृत्यश्रवणांजलिपुटैःपिबतपानंकुरुतश्रवणादिनाऽस्वादयतेत्यर्थः अहोइतिवालानुन्मुखीकरोतिअस्यफल-स्यामृतरसास्वादसुखानुभवंपश्यतेतिरसशब्दस्यतिक्तादिषुषट्सुवृत्तावप्यमृतद्रवेत्यादिस्वोक्तेस्तदन्यथानुपपत्यामधुररसोग्राह्यः पानप्रारं-भसमयेऽतिमधुरएवायंरसःइतिवाअहोइति निगमकल्पःवेदाख्यकल्पवृक्षःकल्पःसुरपादपेपिसंप्रोक्तइतिवचनात्तमेवतारयतिप्रकाशयतीति-निगमकल्पतरुः तस्माच्छुकाचार्याननात्गलितंव्याख्यातंपरीक्षितेइतिशेषः अमृतंकैवल्यंतस्यद्रवोगतिःतयायुक्तंकैवल्यप्रापकमितियावत्रस-संपत्तेर्निवासस्थानं भागवतम्फलंपिबतेतिवाअत्रपिबतिर्भक्षणार्थः अनेकार्थत्वाद्धातूनां नचायमाचार्योक्तोर्थोनेत्यश्रद्धेयं चतुर्मुखमुखलेख बुद्धिगोचरापरिमितार्थभागवततात्पर्यार्थंकर्शयतां पूर्णमतीनामाचार्याणामप्ययंकश्चित्बुद्धिसमुद्रतरंगइतिनिश्चित्यवक्तुंशक्यत्वात् भुवि गलितमितिवा देवलोकेदेवैःपीयमानंसज्जनमनुजकृपयाभुविपातितमित्यर्थः ॥ ३ ॥

---

## क्रमसन्दर्भः ।

त्रिकांडतोऽपि श्रैष्ठ्यं तदीयावयवसारत्वनिर्देशेन दोषपरिहारपूर्व्वकं कारणान्तरं योजयन् पूर्व्वतोऽपि वैशिष्ट्यमाह निगमेति । हे भावुकाः परममङ्गलायना ये रसिका भगवत्प्रीतिरसज्ञा इत्यर्थः । ते यूयं वैकुण्ठात् क्रमेण भुवि पृथिव्यामेव गलितमवतीर्णं निगमकल्पतरोः सर्व्वफलोत्पत्तिभुवः शाखोपशाखाभिर्वैकुंठमप्यध्यारूढस्य वेदरूपतरोर्यत् खलु रसरुपं श्रीभागवताख्यं फलं तत् भुव्यपि स्थिता पिवत आस्वाद्यान्तर्गतं कुरुत श्रीभागवताख्यं यच्छास्त्रं तत् खलु रसवदपि रसैकमयभावविवक्षया रसशब्देननिर्दिष्टं भागवत शब्देनैव तस्य रसस्या-न्यदीयत्वं व्यावृत्तं । भागवतस्य तदीयत्वेनरसस्यापितदीयत्वाक्षेपात् शब्दश्लेषेण च भगवत् सम्बन्धि रसमिति गम्यते । स च रसो भगवत्प्रीति मयएव । यस्यां वै श्रूयमाणायामित्यादि फलश्रुतेः यन्मयत्वेनैव श्रीभगवति रसशब्दः श्रुतौप्रयुज्यते रसो वै स इति स एव च प्रशस्यते । रसं ह्येवायं लब्ध्वानन्दी भवतीति । अत्र रसिका इत्यनेन प्राचीनार्व्वाचीन संस्काराणामेव तद्विज्ञत्वं दर्शितं । गलितमित्यनेन रसस्य सुपाकिम-त्वेनाधिकस्वादुत्वमुक्त्वा शास्त्रपक्षे सुनिष्पन्नार्थत्वेनाधिकस्वादुत्वंदर्शितं रसमित्यनेन फलपक्षे हेयांशरहितत्वं दर्शितं । तथाभागवतमित्य-नेन सत्स्वपि फलान्तरेषु निगमस्य परमफलत्वेनोक्त्या तस्य परमपुरुषार्थत्वं दर्शितं । एवं तस्य रसात्मकस्य फलस्य स्वरुपतोऽपि वैशिष्ट्ये सति परमोत्कर्षबोधनार्थं वैशिष्ट्यान्तरमाह । शुकेति । अत्र फलपक्षे कल्पतरुवासित्वादलौकिकत्वेन शुकोऽप्यमृतमुखोभिप्रेयते । ततस्त-न्मुखं प्राप्य यथा तत्फलं विशेषतः स्वादु भवति तथा परमभागवतमुखंसंबन्धम् भगवद्गुणवर्णनमपि । तत स्तादृश परमभागवतवृन्द-महेन्द्र श्रीशुकदेव मुखसंबद्धं किमुतेति भावः अतएव परमस्वादु परमकाष्ठा प्राप्तत्वात् स्वतोऽन्यतश्च तृप्तिरपि न भविष्यतीत्यालयं मोक्षानन्दमप्यभिव्याप्य पिवतेत्युक्तं । तथाच वक्ष्यते । परिनिष्ठितोऽपीत्यादि । अनेनास्वाद्यान्तरवच्छेदं कालान्तरेप्यास्वादक वाहुल्येऽपि व्ययिष्यतीत्यपि दर्शितं । यद्वा तत्र तस्य रसस्य भगवत्प्रीतिमयत्वेऽपि द्वैविध्यं । तत्प्रीत्युपयुक्तत्वं तत्प्रीतिपरिणामत्वं चेति । यथोक्तं द्वादशे कथाइमास्ते कथिता महीयसां विताय लोकेषु यशः परेयुषां । विज्ञानवैराग्य विवक्षयाविभोर्वचो विभूती नेतुपारमार्थ्यं । यस्तूत्त-मश्लोकगुणानुवादः सङ्गीयतेऽभीक्ष्णममलङ्घ्नः तमेवनित्यं शृणुयादभीक्ष्णं कृष्णेऽमलां भक्तिमभीप्समान इति । ततः सामान्यतोरसत्व-मुक्त्वा विशेषतोऽप्याह । अमृतेति । अमृतंतल्लीलारसः । हरिलीलाकथाव्रातामृतानन्दितसत्सुरमिति द्वादशे श्रीभागवतविशेषणात् ली-लाकथारसनिषेवणमिति तसचैव रसत्वनिर्देशाच्च सत्सुरमिति सन्तोऽत्रात्मारामाः इत्थं सतां ब्रह्मसुखानुभूत्येत्यादिवत् । त एवसुरा अमृतमात्रस्वादित्वात् अत्रत्वमृत लीलारसस्य सारएवोच्यते । तस्मादेवं व्याख्येयं । यद्यपि प्रीतिमयरस एव श्रेयान् तथाप्य-स्त्यत्र विवेकः । रसानुभविनोह्यत्र द्विविधाः । पिवतेत्युपदेश्याः स्वतस्तदनुभविनोलीलापरिकराश्च । तत्र लीलापरिकरा एवरससारम-नुभवन्ति अन्तरङ्गत्वात् । परे तु यत्किञ्चिदेव । बहिरङ्गत्वात् । यद्यप्येवं तथापि तदनुभवमयरससारं स्वानुभवमयेन रसेनैकतया विभा-व्यपिवत । यतस्तादृश तया तादृश शुकमुखादगलितं प्रवाहरुपेण वहन्तमितयर्थः । तदेवं भगवत्प्रीतेः परमरसतापत्तिःशब्दोपात्तैव । अन्यत्रच । सर्व्ववेदान्तसारमित्यादौ तद्रसामृततृप्तस्येत्यादेः एवमेवाभिप्रेत्य भावुका इत्यत्र रसविशेष भावना चतुरा इति टीका । तथा स्मरन्मुकुन्दाङ्घ्रुपगूहनं पुनर्विहातुमिच्छेन्नरसग्रहोजन इत्यादि । अत्र वैकुण्ठस्थितकल्पतरुफलस्य रसमात्ररुपत्वञ्च यथा श्रीहयशी र्षपंचरात्रे पंचतत्वनिरूपणे । द्रव्यतत्वं शृणु ब्रह्मन् प्रवक्ष्यामि समासतः । सर्व्वभोगप्रदायत्र पादपाः कल्पपादपाः । गन्धरुपं स्वादुरुपं द्रव्यं पुष्पादिकञ्चयत् । हेयांशानामभावाच्च रसरुपं भवेच्चतत् । त्वग्वीजञ्चैव हेयांशं कठिनांशञ्चयद्भवेत् । सर्व्वंतद्भौतिकं विद्धिनह्य भूतमयं हि तत् । रसवद्भौतिकं द्रव्यमत्रस्याद्रसरुपकमिति । अत्र वैकुंठइति तत् प्रकरणलब्धं ॥ ३ ॥

---

## सुबोधिनी

काव्यवद्रूपक निरूपणेऽस्पष्टोर्थोभवति यद्यपि तथापि भागवते तथा कथनमनुचितं सर्ववेदसारोद्धारत्वात् रूपकादिकंतुबुद्धिपरिक-ल्पितं अतोवाच्यार्थ एववक्तव्यः तत्र प्रमेयस्याप्रसिद्धावपिएतद्वाक्यान्यथानुपपत्यातादृशं प्रमेय मस्तीतिवोद्धव्यं तत्र व्यापक वैकुंठे अक्ष-रात्मके प्रणववीजोवेदतरुरस्तिततः व्यासाख्यभगवदवतारे आदि नारायणावतारेवा सर्वजना ल्हादनायं मूर्तिभूतंदेवतात्मकंतस्यफल-

## सुवोधिनी

मानीतं तदत्र निरूप्यते मध्वादिवत् तत्र असौवाआदित्योदेवमध्विति स्वर्गस्थानां सूर्योमधुयथास्माकं सारघंतथास्वर्गे कल्पवृक्षवत् वैकुंठेपि वेदैकसमधिगम्येशब्दरसात्मकः कल्पवृक्षः नतुलक्षणा वेदस्योत्कर्षआर्थिकः नितरांगमयतिवृक्षवोधयतीतिपरमोपानिषत् निगमःस एवकल्पतरुः सर्वफलदानसमर्थः कल्पः सचासौतरुश्चेति कल्पतरुः निगमएवकल्पतरुः अतिपक्वंहिफलंगलति स्वतएवपतति आगमनस-मयेपतितं वाशकुंतमिवफलं समानीतमितिभावः शुकोव्यासपुत्रः मुक्तत्वादधिकारी पिताहिउत्कृष्टं पुत्रमुखे प्रयच्छतिफलंचविशेषतःतच्चर-सात्मकं निर्झरैर्जलमिवसर्वेन्द्रियैसंवर्द्धं प्रेमरसं जनयति तदेकीभूतं हृदये हृदइवतिष्ठति तत्र भागवतंसंश्लिष्टंसत् भक्तिरसालोडितं मु-खान्निः सरतीति शुकमुखं प्राप्यअमृतं मोक्षमपि द्रावयतिशिथिलंकरोतीति भक्तिरसः अमृतद्रवः तेनसंयुतं अनेनरसादप्युधिकरसउक्तः यदपि वृक्षोत्कर्षएवतादृशफलजननादायाति तथापि उत्कर्षहेतुः फलजननमिति प्रकृतोत्कर्षः अथवा शब्दात्मके वृक्षे शब्दात्मक मेवफलं स-र्ववेदार्थविचारे भगवध्दृदयएवफलितं निर्द्धारितार्थ प्रतिपादक शब्दराशिः "शुद्धाश्चसुखिन श्चैवं ब्रह्मविद्याविशारदाः भगवत्सेवने योग्या-नान्य इत्यर्थतः फलं अवमर्थो गोप्योपि भक्तचिंतया परवशस्य भगवतो हृदयादागत मिति गलितं अन्ये भगवद्रुपा अवताराअधिकारिणोवा अतोत्यंत विरक्ते शुके ग्रंथार्थः फलित अतस्तद्धृदये भक्तिरसः स्थितः भागवतंचस्थितं सुखान्निर्गमनसमये समानाधिकरण भक्त्यासह निर्गच्छतीति तथेत्यर्थः सम्पग्योगोहि यथाकथंचि च्छ्रवणोपि अधिकारि हृदये भक्त्यावेशात् पिवतेत्युपदेशः स्वाध्यायो ध्येतव्य इतिवत् वहिः स्थितस्य इन्द्रियादि द्वाराअंतःप्रवेशनं पानंतत् द्रवद्रव्यस्येति रसमित्युक्तं भागवतमिति ग्रंथनाम भगवसं वद्धमितिवा शब्दश्रवणे न अर्थज्ञानं नेतरं रसास्वाद नमति रिक्तमिव भवति सीत्कारेण तस्यपानात् तथाभागवतं पातव्यं नतुश्रवणमात्रं कर्त्तव्य मित्यर्थ त्वगस्था दिकन्तुनास्ति निर्वीजदाडिमादि वत् रसात्मकान्यपिका निचित्फलानि संति यथापृथिव्यादिरसाउम्दीथांताः तथा रसात्मकस्य भगवतो भागवतंरसः ततः स्पर्शनमात्र योग्यंनभवति किंतुपान योग्यमित्यर्थः अस्यरसस्य ब्रह्मतामाह आलयमिति सर्वाधारभूतं आसमंताल्ल योयस्मादिति सर्वप्रपंच लय हेतुभूतंवा आईषल्लयो मोक्षो यस्मादितिवा मोक्षेछांपरि त्यज्यतत्पातव्य मिति मुहुरितिव्यासस्य परवश त्वमापादयति अन्यथारसिकाः स्वयमेव पास्यंतीतिव्यर्थ वचनस्यात् मुहुः पानंवाविधीयतेरसज्ञानाय प्राकृतकर्णैरापानंतस्तद्रसास्वा-दनं नभवतीति वक्ष्यतिच परस्परत्वग्दुणवाद सीधुपीयूषनिर्यापितदेह धर्माइति अहोरसिका इत्याश्चर्येण संवोधनं भवतामेवार्थे अयं-रसः समानीत इति भूमौ भावुकाः भविष्णवः भावना चतुरावा विस्मृतेपि रसेभावनया रसाभि निवेशंकुर्वतीति मुहु पानंस भवति भुवि भाग्यवतांच वहुवचने नएकस्य रसाभिनिवेशोनभवतीति सूचितं एवं वीजमध्यभावफलरूपतामुक्त्वा श्रोतॄनभि मुखि कृत्यशास्त्र मारभते ॥ ३ ॥

---

## श्रीविश्वनाथ चक्रवर्त्ती।

एवमस्य शास्त्रशिरोमणेरीश्वरावरोधकत्वादिप्रभावमय मैश्वर्य्यमुक्त्वा माधुर्यञ्चाह निगमेति । निगमोवेदः स एव कल्पतरुः तस्य स्वाश्रितेभ्यो वांच्छित विविध पुरुषार्थ रूप फलदायित्वेऽपि तरुत्वात् यत् साहजिकं तदिदं भागवतं फलं । श्लेषेण भगवत्स्वामिकमिदं तेनैव स्वभक्तेभ्यो दत्तमिति तान् विना न कस्याप्यान्यस्यात्र सन्त्वारोपे शक्तिरिति भावः । गलितमिति वृक्षपक्वतया स्वयमेव पतितं न तु बलात् पातितमिति स्वादुसंपूर्णत्वं नचोच्च निपातनेन स्फूटितं नाप्यनति मधुरं चेत्याह शुकेति । परमोर्द्ध्वचूड़ातः श्रीनारायणात् ब्रह्मशाखायां ततोऽधस्तान्नारादशाखायां ततोऽधस्ताद्व्यासशाखायां ततः शुकमुखं प्राप्य आतपान्मध्विवअमृतद्रव संयुतं । शुकेनैव तेन स्वचञ्च्वा अमृतनिष्क्रमणार्थं द्वारमपि कृतं अथच तेन स्वादितत्वादतिमधुरं ततः सूतादिशाखातः शनैः शनैः पतनादखंडितं तेन गुरुप-रम्परां विना स्वबुद्धिवलेनास्वादने श्रीभागवतस्यखण्डितत्वे पानाशक्तिः सूचिता । ननु कथं फलमेव पातव्यमित्यत आह रसमिति । रसस्वरूपमेवेदं फलं नात्र त्वगष्ट्यादिर्हेयांशोऽस्तीति भावः । लयोमोक्षः सालोक्यादि जीवन्मुक्तत्वं वा तमभिव्याप्य तत्र तत्र भगवल्ली-ला गान प्रसिद्धेः । यद्वा लयः रसास्वादजनितः प्रलयोऽष्टमः सात्विक स्तत् पर्य्यन्तं पिवतेत्यनेन पानेस्तम्भाद्याः सात्विका भवन्तीति ज्ञेयं । तत्र प्रलये सति पानस्यास्पष्टत्वात् यद्यपि विरामस्तदपि पुनः प्रवोधे सति पुनरपि प्रलयपर्य्यन्तं पिवत नतु त्यजतेति मुहुरिति पदं। यद्वा मुहुरिति पीतस्यापि पुनः पाने स्वादाधिक्यमेवेत्यहो इत्यति विस्मये रसिकाः हे रसज्ञा इति भक्तानामेव जातरतित्वाद्रतेरेव स्थायिभावत्वात् स्थायिन एव रस्यमानत्वात् नात्र ज्ञानि कर्म्मियोगिनां कोपि दाय इति भावः । हे भावुका स्तत एव यूयमेव कुशलिनो अन्येऽमङ्गला एवेति भावः । भावका इति पाठेभावकत्वव्यापारवन्तः । तथाहि भावकत्व व्यापारेण भाव्यमानः स्थायी भुज्यते इति भट्टनायकमतं । अत्र श्लेषेण भगवतः स्वरूपं रस एव भवति । तथाहि तैत्तिरीयकोपनिषदि । ब्रह्मविदाप्नोति परमित्युक्त्वा ब्रह्मणः सका-शात् आकाशादि क्रमेणान्नमय विराट्पुरुषपर्य्यन्तां सृष्टिमुक्त्वा तस्य चान्तरन्तः क्रमेण तस्माद्वा एतस्मादन्य इत्यादिना अन्नमयप्राण-मयमनोमयविज्ञानमयानन्दमया आम्नायन्तेतेष्वपि आनन्दमयस्यैव आनन्दमयोऽभ्यासादित्यनेन ब्रह्मत्वं । मतभेदेच तत् पुच्छस्यैव आनन्द आत्मा ब्रह्मपुच्छं प्रतिष्ठेत्यनने ब्रह्मत्वं ब्रह्मण एव प्रतिष्ठात्वञ्च प्रतिपादितं । तदनन्तरञ्च रसो वै स रसं ह्येवायं लब्ध्वानन्दी भवतीति श्रूयते । तत्र श्रुतौ च स इत्यनेन प्रक्रान्तआनन्दमयोवाततत् पुच्छं ब्रह्म वा न परामृश्यते पृथक् पृथगुत्तरोत्तरार्थ प्रकर्ष प्रतिपा-दिकासु अन्नमयादि श्रुतिषु अन्ते तस्याः पाठात् प्रक्रमभङ्गापत्तेः । ततश्च तस्या अयमर्थः स प्रसिद्धो वै निश्चितं रसएव आनन्दमयात् तथा ब्रह्मतोपि आन्तरः प्रकृष्टः ब्रह्मणोहि प्रतिष्ठाहमित्यनेन श्रीकृष्णस्यैव ब्रह्मतः प्रकृष्टत्वं मल्लानामशनिरित्यत्र तस्मिन्नेव यौगपद्येन सर्व्वरसस्यसाक्षादुपलब्धेस्तस्य च शृङ्गारादि सर्व्वरस कदम्ब मूर्त्तिर्भगवांस्तदपि प्रायेण वभाविति श्रीस्वामिचरणानां व्याख्यानाच्चतस्यैव सर्वरस रुपत्वं चातः श्रीगीता श्रीभावगताभ्यामेव रसशब्देन श्रीकृष्णएव व्याख्यातः तमेवायं विज्ञानमयो लब्ध्वाआनन्दपरावधि काष्ठां प्राप्नोति सैषानन्दस्य मीमांसाभवतीति तदुत्तर श्रुत्या रसएव तस्मिन्नानन्दविचारपर्य्यवसानज्ञापनात् । यद्वाअयमानन्दमयोपि द्विजात्मजा मे युवयो र्दिदृक्षुणोति विस्मापनं स्वस्यंच सौभगर्द्धेरित्यादिभ्य स्तमेव लब्ध्वानन्दी भवतीति । ततश्च तं रसं श्रीकृष्णं फलं निगमकल्प-

## विश्वनाथ चक्रवर्त्ती ।

तरो स्तस्मात् सकाशात् गलितं न तु तत्र साक्षात् स्थितमिति । तदर्थं निगमो नान्वेष्टव्यः किन्तु शुकमुखमेवेत्याह शुकमुखादिति । फलमिदमति स्वादु ज्ञात्वा तत आकृष्य आनीय व्यासेन स्नेहात् स्वपुत्र मुखएव निहितमिति संभाव्यत इति भावः । किम्बा शुकमुखादिति हेतौ पञ्चमी येषामहं प्रिय आत्मेत्यादि शुकवाक्यप्रामाण्यात् । भुवि व्रजभुमावुत्पद्य हे भावुकाः रसिकाः स्त्रियः सत्यं भागवतं भगवत्स्वरुपभूतरसमाधुर्यं पिवत । यद्वा भगवतः श्रीकृष्णस्य रसं आलयं लयः श्लेष आलिङ्गनमिति यावत् तमभिव्याप्य । अमृतोऽनश्वरो योद्रवो मनोनयन द्रौत्यं तत् संयुक्तं यथास्यात् तथा पिवतेत्यधरपानं सुचितमिदमेव निगमकल्पतरोर्गलितं परिपक्वं फलमिति फलतो गोपीजनानुगतिमयी रागानुगाख्याभक्तिरादिष्टा । यतो निगमोपि तल्लोभादेव वृहद्वामनदृष्टां तादृशीं भक्तिं विधाय व्रजभुमावुत्पद्य शतसहस्रशो गोप्यो भूत्वा तदधरामृतरसं पपाविति । वेदस्तुतौ दृष्टमिति अतिरहस्योऽर्थः । ननुब्रह्मणोहि प्रतिष्ठाहमित्येतत्केचिदन्यथा व्याचक्षते सत्यं तदप्राकरणिकत्वात् कल्प्यत्वादयुक्तमेव मन्तव्यं किन्त्वेवमेव युक्तं । तथाहि । माञ्च योऽव्यभिचारेण भक्तियोगेन सेवते । स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥ ब्रह्मणोहि प्रतिष्ठाहममृतस्याव्ययस्य च । शाश्वतस्य च धर्म्मस्य सुखस्यैकान्तिकस्यचेति । अनयोरर्थः । ननु त्वद्भक्त्या कथं निर्गुणब्रह्मप्राप्तिः सा तु अद्वितीयतदेकानुभवेन भवेत् तत्राह ब्रह्मणोहीति । हि यस्मात् परम प्रतिष्ठात्वेन प्रसिद्धं श्रुतौ यद्ब्रह्म तस्याप्यहं प्रतिष्ठा प्रतिष्ठीयतेऽस्मिन्निति प्रतिष्ठा आश्रयः अन्नमयादिषु श्रुतिषु सर्व्वत्रैव प्रतिष्ठापदस्यतथार्थत्वात् । अतएवामृतस्य मोक्षस्याप्यहं प्रतिष्ठा तस्य लक्षणया स्वर्गादि परत्वं वारयति अव्यय स्येति तथा शाश्वतस्य साधनफलदशयोरपिस्थितस्य धर्म्मस्य भक्त्याख्यस्य अहं प्रतिष्ठा तथा तत्प्राप्यस्य ऐकान्तिकस्य सुखस्य प्रेम्नश्च प्रतिष्ठा अतः सर्व्वस्यापि मदधीनत्वात् कैवल्यकामनया कृतेन मद्भजनेन ब्रह्मणि लीयमानो ब्रह्मधर्म्ममपि प्राप्नोतीति । अत्र श्रीविष्णुपुराणमपि प्रमाणं । शुभाश्रयः सचित्तस्य सर्व्वगस्य तथात्मन इति । व्याख्यातञ्च तत्रापि श्रीस्वामिचरणैः । सर्व्वगस्यात्मनः परब्रह्मणोऽप्याश्रयः प्रतिष्ठा । तदुक्तं भगवता ब्रह्मणो हि प्रतिष्ठाहमिति । तथा विष्णुधर्म्मेऽपि नरकद्वादशीप्रसङ्गे । प्रकृतौ पुरुषे चैव ब्रह्मण्यपि च स प्रभुः । यथैक एव सर्व्वात्मा वासुदेवो व्यवस्तित इति । तत्रैव मासर्क्षपूजाप्रसङ्गे । यथाच्युतस्त्वं परतः परस्मात् स ब्रह्मभूतात्परतःपरात्मा । तथाच्युत त्वं कुरु वाञ्छितं तन्ममापदं चापहराप्रमेयेति । तथा हरिवंशेऽपि विप्रकुमारानयनप्रस्तावे अर्ज्जुनं प्रति श्रीभगवत्वाक्यं । तत् परं परमं ब्रह्म सर्व्वं विभजते जगत् । ममैव तद्घनं तेजो ज्ञातुमर्हसि भारतेति ॥ ब्रह्मसंहितापि । यस्य प्रभा प्रभवतो जगदण्डकोटिकोटिष्वशेषवसुधादिविभूतिभिन्नं । तद्ब्रह्म निष्कलमनन्तमशेषभूतं गोविन्दमादिपुरुषं तमहं भजामीति । अतएव श्रुतिश्च गोपालतापनी योऽसौ जाग्रत्स्वप्नसुषुप्तिमतीत्य तुर्य्यातीतो गोपालस्तस्मै वै नमो नम इति ॥ ३ ॥

---

## सिद्धान्तप्रदीपः ।

निगमकल्पतरुफलरूपत्वादस्यान्यशास्त्रेभ्यः श्रैष्ठ्यमाह ॥ निगमेति ॥ निगमोवेदः सएवकल्पतरुः ॥ तस्यशुकमुखाद्गलितमिदंफलम् ॥ सर्ववेदसारंश्रीमद्भागवताख्यंमहापुराणमित्यर्थः ॥ सर्ववेदेतिहासानां सारंसारं समुद्धृतमितिवक्ष्यमाणात् ॥ अखिलित्वसूचनार्थं फलमित्युक्तम् ॥ असारांशवार्जितत्वसूचनार्थंरसमित्युक्तम् अमृतेनमोक्षरूपेणद्रवेण रसेन प्रतिपादकतयासंयुतम् ॥ हे रसिकाः हे भक्तिरसास्वादकुशलाः॥ हेभावुकाः हेभावविशेषकुशलाः ॥ आलयंमोक्षमभिव्याप्यंपिवत मुमुक्ष्ववस्थामारभ्यमुक्तावस्थायामपिपिवतेत्यर्थः मुक्तावुपास्यो पासकस्वरूपभेदः ॥ सोऽश्नुते ॥ सर्वान्कामान्ब्रह्मणेत्यादिश्रुतिभिः ॥ प्रतिपादितएव॥ भुविगलितमित्यनेन वैकुंठादेवेदंमुमुक्षूपकारार्थंभगवताब्रह्मादिद्वाराप्रवर्तितामित्यस्यशास्त्रस्य वेदसार भूतस्यनित्यतासूच्यते ॥ ३ ॥

---

## भाषा टीका ।

अहो भावुक ! रसिक ! सज्जन गण ? यह वेदकल्प वृक्ष का रसमय फल श्रीभागवत पान कीजिये यह अमृत ब्रह्मधाम में था शुकदेवजी के मुख से पृथ्वी मे गिरगया है । जैसा कोई शुक पक्षी बड़े आमको चोंच मे लिये जाता हो और वह बोझ से गिरपडे इसी भांत श्रीशुकदेव मुनी ने अपने आनंद के लिये श्रीभागवत अध्ययन कियाथा. पर उस से इतना आनन्द बढा कि हृदय मे न समाया तब राजा परीक्षित को श्रवण कराकर पृथ्वी के जीवों को वह आनन्द दिया । फल मे गुठली और छिलका त्यागना पडता है पर यह फल रस रूपहै इस मे कुछ हेय अंश नहीं है । साधनदशा मे हरि पद लाभ का साधन भी यही है और सिद्ध दशा मै मुक्त पुरुषों का स्वभाव ही हरिगुण गान करने का होता है सुतरां यही सब समय में पेय हैं इसी को वार वार पान कीजियै ॥ ३ ॥

---

ॐनैमिषेनिमिषक्षेत्रेऋषयःशौनकादयः ॥
सत्रंस्वर्गायलोकायसहस्रसममासत ॥ ४ ॥

श्रीधरस्वामी।

तदेवमनेन श्लोकत्रयेन विशिष्टेष्टदेवतानुस्मरणपूर्वकं प्रारीप्सितस्य शास्त्रस्य विषयप्रयोजनादि वैशिष्ट्येन सुखसेव्यत्वेन च श्रोतृमभिमुखीकृत्य शास्त्रमारभते। ॐ नैमिशे इति। ब्रह्मणा विसृष्टस्य चक्रस्य मनोमयस्य नेमिः शीर्य्यते कुण्ठीभवति यत्रतन्नेमिशं नैमिशमेव नैमिशं तथाच वायवीये। एतन्मनोमयं चक्रं मया सृष्टं विसृज्यते। यत्रास्य शीर्य्यते नेमिः स देशस्तपसः शुभः। इत्युक्त्वासुर्य्यसङ्काशं चक्रं सृष्ट्वा मनोमयं। प्रणिपत्य महादेवं विससर्जपितामहः। तेऽपि हृष्टास्तदा विप्राः प्रणम्य जगतां प्रभुं। प्रययुस्तस्य चक्रस्य यत्र नेमिर्व्यशीर्य्यत। तद्वनं तेन विख्यातं नैमिशं मुनिपुजितमिति। नैमिष इति पाठेवराहपुराणोक्तं द्रष्टव्यं। तथाहि गौरमुखमृषिप्रतिभगवद्वाक्यं एवं कृत्वा ततोदेवो मुनिं गौरमुखंतदा। उवाच निमिषेणेदं निहतं दानवं बलं। अरण्येऽस्मिंस्ततस्त्वेतन्नैमिषारण्यसंज्ञितं। भविष्यति यथार्थं वै ब्राह्मणानां विशेषकमिति। अनिमिषः श्रीविष्णुः अलुप्त दृष्टित्वात् तस्य क्षेत्रे तथाचात्रैव शौनकादिवचनं क्षेत्रेऽस्मिन् वैष्णवे-वयमिति स्वर्गाय इति स्वः स्वर्गे गीयते इति स्वर्गायो हरिः सएव लोकः भक्तानां निवासस्थानं तस्मै तत्प्राप्तये इत्यर्थः। सहस्रं समाः सम्वत्सराः अनुष्ठानकाला यस्य तत् सत्रं सत्रसंज्ञकं कर्म्मोद्दिश्यआसत उपविविशुः। यद्वा आसत अकुर्व्वतेत्यर्थः आलभते निर्व्वपति उपयन्तीत्यादिवत् प्रत्ययोच्चारणमात्रार्थत्वेन आसते धात्वर्थस्यविवक्षितत्वात् ॥ ४ ॥

---

दीपनी ॥

ॐइति। ॐकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा। कण्ठं भित्वा विनिर्यातौ तस्मान्माङ्गलिकावुभावितिस्मरणादत्र प्रणवोपन्यासः शास्त्रारम्भे मङ्गलार्थः। अनेनास्य शास्त्रस्य प्रणवार्थविवृतिरुपत्वमपि सूचितम्। विस्तरोऽस्यान्यत्र (अस्माभिः प्रकाश्यमाने श्रीभागवत रहस्य सन्दर्भे) द्रष्टव्यः। आलभत इति। पशवालम्भनमालभते मासवापं निर्व्वपति कुशोपयमनम् उपयन्तीत्यादौ तिउर्थस्य कृत्यर्थमात्रस्य गृहणवदित्यर्थः। प्रत्ययोच्चारणमात्रार्थत्वेनोति। मुख्यधात्वर्थाविवक्षितत्वे दृष्टान्तः प्रकृतार्थान्वितस्वार्थान्वयवोधकत्वं प्रत्ययानामितिव्युत्पत्तिभङ्गोऽत्र स्वीक्रियते इतिभावः ॥४॥

---

वीरराघव;

तदेवमनुष्टितत्रिविधमंगलप्रदर्शितानुवंध चतुष्टयप्रामाण्योभगवान्वादरायणस्त्रैकालज्ञोऽस्य चिकीर्षितस्य वेदांतार्थोपवृंहणरूपस्य पुराणस्यपरीक्षिच्छौनकशुकसूतादि अष्टप्रतिवक्तृ प्रश्नोत्तरमुखेन भाविनीं प्रवृत्ति मालोच्य तत्र तेषां प्रश्नोत्तररूपान् श्लोकान् स्वयमेव तत्र तत्र निर्मित्सुस्तावदुपोद्घातरूपे ऽस्मिन्प्रथमस्कंधे प्रथमप्रष्टुः परीक्षितः प्रतिवक्तुः शुकस्यचैकत्रसमावेश प्रतिवक्तुः शुकस्य समागमं परीक्षितप्रश्नोद्योगहेतु प्रायोपवेशं तन्निमित्त विप्रशापंचविवक्षुः प्रायोपवेशात् प्राक्तनं जन्मावधिकं परीक्षितं वृतांतं ततः प्राक्तनंतत्पित्रादिवृतांतं तथैवतत्प्रबंधकर्त्तुः स्वस्यैवतन्निर्माणनिमित्त दर्शनसमागत देवर्षेश्चसंवादे तदाज्ञयैतत्प्रबंध निर्माणंच शौनकसूत प्रश्नोत्तरमुखेन विवक्षुस्तावच्छौनकादीनां प्रश्नप्रकारंवक्तुंतदुपोद्घातमाह ॥ नैमिषइति ॥ अत्रकेचिच्छौनकादि प्रश्नरूपाः श्लोकास्तदर्वाचीनैर्निर्मायात्रतत्रतत्र निवद्धापरीक्षिदादि प्रश्नादि रूपास्तुसूतेनेति वदंतितदसारं ॥ त्रैकालज्ञस्य प्रबंध प्रवक्तुरेवत न्निर्माणोपपत्तेः नहिसच्चिदानंद वल्लीप्रतर्दन विद्यादिषुश्वेतकेतुर्हारुणेयआहतदापितोवाच। भृगुर्वैवारुणि र्वरुणंपितरमुपससार अधीहिभगवोब्रह्मेति प्रतर्दनोहवैदैवोदासिरिंद्रस्य प्रियंधामोपजगामेत्यादीनां प्रश्नोत्तररूपाणां श्रौतवचसामाधुनिकत्वं वक्तुं युक्तमनुवेदेकर्त्तुरभावाद्वेदएव प्रश्नोत्तररूपेण प्रतिपादयिषितानर्थान्प्रतिपादयतिअत्रतुपौरुषेयेन्य कर्तृकाणामपि वचासांसंदर्भस्तत्र तत्रनद्दोषावह इतिचेत् एवमपिकृत्स्नं प्रवंधस्यैककर्तृकत्वासिद्धेः कृत्स्नस्य पुराणप्रपंचस्य प्रश्नोत्तर रूपत्वेन कानि ग्रन्थकर्तुर्वचांसिकानिचेतरेषामिति विभागस्या शक्यत्वाच्च तस्माद्यथोक्तमेवयुक्तं। शौनकआदि र्येषांतेमुनयः ब्रह्मणाविसृष्टस्य चक्रस्यनेमिः शीर्यतेकुंठीभवतियत्रतन्निमिषं तदेवनैमिषं तच्चवायुपुराणे प्रसिद्धं ॥ नैविशइति पाठेनिविशं अत्रमहर्षयइति निविशं तदेवनैविशं इत्यन्वर्थं नामनैविषाख्येनिमिषक्षेत्रे भगवत्सान्निध्यवतीतिभावः स्वर्गाय लोकाय स्वर्गोनिरतिशयानंदः तादृशोलोकः परंपदंतस्मैतत्प्राप्तये तत्साधनं सत्रं सहस्रसहस्रसंवत्सरमासतानुष्ठितवंतः स्वर्गोलोकोत्र परमपदमेवयथनंते स्वर्गेलोकेऽजय्येप्रतितिष्ठतीति स्वर्गेलोकेऽमृतत्वं भजंतइति श्रुत्यनुरोधेनास्य निर्देशात् ॥ अन्यथाशौनकादय इतिनघटते ॥ दशाश्वमेधी पुनरेति जन्मकृष्णप्रणामी न पुनर्भवायेतिवदतः ॥ परमभागवतस्य शौनकस्य प्रसिद्धस्वर्गाद्यार्थि त्वायोगात् ऋत्विजएवयत्र यजमानास्तत्सत्रं यद्वा सत्रशब्देन भगवद्गुणानुभवात्मकं ब्रह्मसत्रं विवक्षितं तथाच तल्लक्षणं वक्ष्यतिदशमेश्रुतिगीतायां तुल्यश्रुततपः शीलास्तुल्यस्वीयारि मध्यमाः अपिचक्रुः प्रवचनमेकं शुश्रूषवोपरे इति अतएवासीनादीर्घं सत्रेणेति वक्ष्यमाणोपपत्ति ॥ ४ ॥

---

श्रीविजयध्वजः ॥

ननुब्रह्मज्ञानेनवामुक्तिः प्रयागमरणेनवाअथवास्नानमात्रेणगोमत्यांकृष्णासन्निधावितिस्मृतेः प्रकारांतरेणापिपुरुषार्थःस्यात्किमनेनेत्यतो-मेनैवपुरुषार्थोनान्येनेतिख्यापनयास्यशिष्टपरिगृहीतत्वज्ञापनाय श्रोतृप्रवक्तृणांमहापुण्यफलवत्त्ववेदनायचशौनकादिमुनिवरसूतप्रश्नप्रतिव-चनरूपामाख्यायिकामाह नैमिषइति शौनकादयऋषयः अनिमिषक्षेत्रेनैमिषेस्वर्गायलोकायसहस्रसमंसत्रमासतेत्येकान्वयः शुनकस्यापत्यंशौ-नकः तदेवतस्यनामशौरिरितिवत् सआदिर्येषांतेतथोक्ताः ऋषयस्त्रिकालदर्शिनःमंत्रद्रष्टारोवाअनिमिषक्षेत्रेश्रीनरहर्यादिसुरवरसंनिधानावासे निमिषाऋषिसेव्यफलाःवृक्षविशेषाःतस्मिन्संतीतिनैमिषं चित्रकृन्निमिषोनेमिश्चचुलोयायुगच्छदइत्यभिधानात् विशिष्टक्षेत्रदर्शनायदेवप्रेरि-तस्यसुदर्शनस्यनेमिर्यस्मिन्विशीर्यतेतन्निमिषंतदेवनैमिषंइतियस्थित्यं निमिषनाम्नाऋषिणायत्रतपश्चीर्णंतत्संबंधाद्वानैमिषेतास्मिन्नमिषा-णाये स्वरतोविष्णुःतेनगतोलोकोवैकुंठाख्यःतस्मै सदानंदज्ञानमूर्तित्वात्स्वर्गोविष्णुःलोकआश्रयःतदर्थमितिवा स्वरितिविष्णुस्तंगमयतिप्रा-पयतिज्ञापयतीतिस्वर्गःलुकृप्रकाशनइतिधातोर्लोकःप्रकाशःज्ञानंविष्णुस्तीष्ठषंपुराणार्थमज्ञानार्थीमितवानतुमनःप्रीतिकरःस्वर्गोनरकस्तद्विप-र्ययइतिवुःखासंभिन्नदेवसेव्यदेशविशेषायेति तस्यनश्यत्वश्रुतेः सहस्रसमायास्मिस्तत्तथोक्तं वर्षसहस्रसमाप्यमित्यर्थः सतःसुजनान्त्राय-तइतिसतोब्रह्मणस्त्राणमस्येतिवासत्रंप्रशस्ततरकर्मसुश्रेष्ठमितिवा सत्रं बहुकर्तृकंयागविशेषंआसतउपाविशन् अदीक्षयन्नित्यर्थः ॥ ४ ॥

---

क्रमसंदर्भः ।

तत्रापि महापुराणस्यास्य प्रश्नोत्तराभ्यां श्रीकृष्णैकपरत्वं दर्शयितुमाह ॐ नैमिष इत्यादि टीकायामासतेत्यस्य व्याख्यान्तरेत्विदं ज्ञेयं । तत्तद्धात्वर्थ स्तत्र तत्र न सम्भवतीति धातुं विना च केवलप्रत्ययोच्चारणं न युज्यते इति प्रत्ययस्य तिवादेरर्थः प्रयोजनं यत्र तादृश तया धात्वर्थस्याविवक्षितत्वात् कृञर्थानुगत कर्त्तृवाचि प्रत्ययेन कृञर्थस्तु समप्यर्त इति ॥ ४ ॥ ॥ ५ ॥

---

सुबोधिनी ।

अत्र भागवतस्य परंपरागताः सप्तार्थाः कथार्थतोतिरिक्ताभवंति अतोनान्यटीकासुते निरूप्यंते तेहि निबंधेशास्त्रे स्कंधे प्रकरणेध्याये वाक्येपदेक्षरे एकार्थसप्तधाजानन्नविरोधेन मुच्यत ॥ इतिनिरूपिताः ॥ तत्रआनंदस्यहरेर्लीलाशास्त्रार्थः भक्तिजनिकाहि संहिता सृष्ट्या-दीनां लीलात्वेज्ञाते भक्तिर्भवतिनकार्यत्वेकौतुकाधिष्ठितेन अनायासत्वेन क्रियमाणं कर्मलीलातदाहिंमहत्वंनिर्दुष्टत्वंचभवति साच लीला-मुख्यादशविधा अत्रसर्गोविसर्गश्चेतिश्लोकेननिरूपिता साच तृतीयादि दशमस्कंधैर्निरूप्या श्रोतृवक्तृलक्षणं प्रथमे अंगनिरूपणं द्वितीये अतोद्वेगौणलीले एवं द्वादश तत्र प्रथमेस्कंधे अधिकारलीलानिरूप्यते हीनमध्यमोत्तमत्वतः भागवतार्थं ज्ञानप्रकारबोधनाय नहि-सर्वैरेकविधं भागवतं बुध्यते सूतशौनकाभ्यां बुद्धमेकविधं तथा नारदव्यासाभ्यामपरविधं ॥ तथा शुकपरीक्षिद्भ्यामुत्कृष्टं एवं त्रैविध्य-निरूपणेन यथाधिकारमर्थावबोधो भविष्यति तत्र प्रथमं हीनाधिकार उच्यते अध्याय त्रयेन प्रश्नोत्तराभ्यां प्रश्नएकविधः उत्तरंद्विविध-मिति तत्र श्लोकद्वयेन प्रश्नसंगतिमाह स्वरूपसंगतिभेदेन तत्र स्वरूपमाह नैमिषइति पुण्यतीर्थे पुण्यक्षेत्रे यज्ञादिभिः शुद्धाः यज्ञरूपभग-द्विधाः भगवत्प्रश्ने प्रथमाधिकारिणः स्वरूपतोधिकारिणः नेमिः शीर्यतइति नेमिषं नेमिषमेवनैमिषं प्रजापति सृष्टस्यमनोमयचक्रस्य ऋषीणां तपःस्थानज्ञापनार्थं यत्रास्यनेमिः शीर्यतइति पुण्याधिक्ययुक्तं नैमिषइतिपाठे यत्रनिमिषमात्रेण दानवबलं निहतमिति नैमिशं सर्वदोषनिवारकं तस्य क्षेत्रस्य विष्णुर्देवतेत्याह अनिमिषक्षेत्रइति अनिमिषो विष्णुस्तस्यक्षेत्रे दोषाभावगुणावुक्तौ ऋषयोमंत्रद्रष्टारः शौनकादय ॥ इतिप्रसिद्धाः ॥ ऋषिपरंपरायांसत्रं सहस्रसममितिनामयस्य सहस्रसंवत्सरे साध्ये, सत्रे समाना एव ऋत्विजध्वर्म्यादय-यज्ञकर्मकुर्वतितत्सत्रं तत्रपूर्वं सहस्रसंवत्सरे सत्रं अलौकिकभगवदाविर्भावोदयः विश्वसृजः प्रथमाः सत्रमासतत्यादौ तथात्रापि-सहस्रसमे आरब्धे भागवतरूपस्य भगवतआविर्भावोभविष्यतीति ज्ञात्वाऋषीणांसत्रारंभइत्यर्थः स्वर्गायभगवदानंदांशभूतः स्वर्गः लोका-स्मकस्तुमहानैशःसह्यत्रफलं नतुस्वर्गायतइति स्वर्गायोविष्णुः सचासौलोकश्चेति स्वर्गायवाएतानि लोकायहूयंतइति श्रुतिविरोधात् सच-सुखविशेषशरीरः देवविशेषोलोकरूपः देवेभ्योवैस्वर्गोलोक स्थिरोभवदित्यत्र तथा निर्णयात् सत्रे सर्वत्रआसतिरवक्लितवाची एवं तेषांस्वरूपोत्कर्षउक्तः संगतिमाह ॥ ४ ॥

---

श्रीविश्वनाथचक्रवर्त्ती ।

प्रणम्य श्रीगुरूं भूयः श्रीकृष्णं करुणार्णवं । लोकनाथं जगच्चक्षुः श्रीशुकं तमुपाश्रये ॥ १ ॥ तमश्छन्नदृशां ये नः कृते भावार्थदीपिका कृता कृपालवस्तेऽद्य श्रीधरस्वामिनो गतिः ॥ २ ॥ व्याख्या लेख्या तदीया या भक्तचित्तप्रमोदिनी । काचित् प्रभूनां काचित् तु श्रीमद्-गुरुकृपोदिता ॥ ३ ॥ तदेवं श्रोतृनभिमुखीकृत्य श्रीभागवतकथारम्भे पुनर्मङ्गलमाचरति ॐमिति । तदुक्तं । ॐकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कन्ठं भित्वा विनिर्यातौ तेन माङ्गलिकावुभाविति ॥ शास्त्रस्यास्य प्रणवार्थविवृतिरुपत्वं सूचयति नैमिश इति । ब्रह्मणा सृष्टस्य मनोमय चक्रस्य नेमिः शीर्य्यते यत्र तन्नेमिशं नेमिशमेव नैमिशं । तथाच वायवीये एतन्मनोमयं चक्रं मया सृष्टं विसृज्यते । यत्रास्य शीर्य्यते नेमिः स देशस्तपसः शुभः । इत्युक्त्वा सूर्य्यसंकाशं चक्रं सृष्ट्वा मनोमयं । प्रणिपत्य महादेवं विससर्ज पितामहः । तेऽपि हृष्टतरा विप्राः प्रणम्य जगतां प्रभुं । प्रययुस्तस्य चक्रस्य यत्र नेमिर्व्यशीर्य्यते । तद्वनं तेन विख्यातं नैमिशं मुनिपूजितमिति । विविधभक्ति वासनावतां जनानां मध्ये यस्य यस्य यत्र यत्रैव स्थले शाम्यत्वेगं मनः स्थिरोभवति तस्य तस्य तत्र तत्रैव श्रीमद्भागवता-

## श्रीविश्वनाथ चक्रवर्त्ती

र्थावगाहनेन स्वामीप्सितं सिध्यति इत्येतन्मात्र विवक्षया प्रथमत एव शास्त्रस्य नैमिश इत्यन्वर्थपदस्यन्यासो ज्ञेयः ॥ मूर्द्धन्य षकारान्त-पाठे वराहपूराणोक्तं द्रष्टव्यं तथाहि गौरमुखमृषिं प्रति भगवद्वाक्यं । एवं कृत्वा ततो देवो मुनिंगौरमुखं तदा । उवाच निमिषेणेदं निहतं दानवं वलं । अरण्येऽस्मिंस्ततस्त्वेतन्नैमिषारण्यसंज्ञितं । भविष्यति यथार्थं वै ब्राह्मणानां विशेषकमिति । अत्रापि पाठे यत्र कामादीन् शत्रून् शीघ्रमेव निहन्तु प्रभवेत् तत्रैव वसेदिति विवक्षितं । स्वर्गायेति प्रथमं शौनकादीनां सकामकर्म्मपरत्व मेवासीत् । रोमहर्षणसंगेन ततो नानापूराणादि शास्त्र श्रवण मननादिभिर्जिज्ञासुत्वमिति प्रसिद्धिः । ततश्च साधोरुग्रश्रवसः संगेन भक्तिरसेस्पृहा । यदुक्तं कर्म्म-ण्यस्मिन्ननाश्वासे धूमधूम्रात्मनां भवान् । आपाययति गोविन्दपादपद्मासवं मध्विति ततश्च जिज्ञासुत्वमपि शिथिली कुर्व्वतां तेषां भक्तौ प्रवेशे स्वर्गार्थकं सत्रं तच्च मिषमेवाभूत् । यदुक्तं कथायां सक्षणा हरेरिति एतच्च श्रीभागवतश्रोतृषु तेषु कर्म्मिषु कर्म्मनिष्ठा व्यवधानेन भक्तेः प्रभाव द्योतनं तथैव श्रीभागवतवक्तरि श्रीशुकदेवोपि परिनिष्ठितोपि नैर्गुण्य इत्यादिभि र्ब्रह्म परिनिष्ठा व्यवधानेनेति । यद्वा स्वः स्वर्गे गीयते इति स्वर्गायो हरिः उरूगाय इतिवत् तस्य लोको वैकुन्ठ स्तस्मै । अनिमिषो विष्णुः तस्य क्षेत्रेऽस्मिन् वैष्णवे वयमिति तेषामुक्तेः । सहस्रं समाः सम्वत्सराः अनुष्ठानकाला यस्य तत् सत्रसंज्ञं कर्म्मउद्दिश्य आसत उपविविशुः । यद्वा आसत अकुर्व्वत अग्निष्टोमीयपशोरालभनमालभते । अमावास्यायां पितृभ्यः श्राद्धं निर्व्वपति । अष्टवर्षायाः कन्यायाः पाणिग्रहणमुपयन्तीति वत् । धात्वर्थस्य वाधात् तत्सामान्य कृञर्थ एवात्रासधातु र्वर्त्तितः ॥ ४ ॥

---

## सिद्धान्तप्रदीपः

उक्तार्थं विस्तरतस्तत्तत्प्रश्नोत्तरैर्वक्तुंभगवान्वेदाचार्यः ॥ शास्त्रमाविःकरोति नैमिशेइति ॥ तपोवनपरीक्षार्थमृषिभिः प्रार्थितेन ब्रह्मणाविसृष्टस्यचक्रस्यनेमिः शीर्यतेकुंठीभवति यत्रतन्निमिशंतदेवनैमिशमिति वायुपुराणादवगंतव्यम् ॥ वाराहपुराणेतु उवाचनिमिषेणै-व निहतंदानवंबलम् ॥ अरण्येस्मिन् ततस्तेन नैमिषारण्यसंज्ञितमित्युक्तम् ॥ अनिमिषक्षेत्रेविष्णुक्षेत्रे सहस्रसमं सहस्रसंवत्सरनिष्पाद्यम् सत्रंकर्तारोवहवोयत्रहीज्यंतेवहवस्तस्था ॥ वहुभ्योदीयतेयत्रतत्सत्रमभिधीयतेइति ॥ एवंभूतंकर्मोदिश्यासतोपविविशुः ॥ कस्मैप्रयोजनाय-स्वर्गायलोकायस्वः स्वर्गलोकस्तत्रगीयतेइति स्वर्गायोभगवान् तल्लोकप्राप्तये यद्वा ये स्वर्गेलोकेऽमृतत्वंभजंते इतिश्रुतेः स्वर्गशब्दोभगवल्लो-कपरः तस्मैस्वर्गायलोकाय सच लोकः सत्यलोकादुपरिप्रोक्तोमुद्गलोपाख्याने ॥ ब्रह्मणःसदनादूर्द्धंतद्विष्णोः परमंपदम् शुद्धंसनातनं-ज्योतिः परंब्रह्मेतियद्विदुरिति ॥ जापकोपाख्यानेच एतेवैनिरयास्तातलोकस्यपरमात्मनः ॥ अभयंचानिमित्तंचनततक्लेशसमावृतम् द्वाभ्यां मुक्तंत्रिभि र्मुक्तमष्टाभि स्त्रिभि रेवचेत्यादि ॥ विस्तरस्तुवेदांतकौस्तुभेःद्रष्टव्यः ॥ ४ ॥

---

## भाषा टीका

श्रीवेदव्यासमुनी प्रथमश्लोकमें मंगलाचरण कर द्वितीय श्लोकमें ग्रंथके वर्णनीय परधर्म का उद्देश कर तृतीय श्लोकमें ग्रंथका स्वरूप निरूपण कर सूत शौनक संवादसे ग्रंथका आरंभ करतेहै

अनिमिष श्रीभगवानके क्षेत्र नैमिषारण्यमें ( ब्रह्माजीके मनोमय चक्र की नेमि जहाँ खिल गई थी ) शौनकादिक साठसहस्र ऋषि गण स्वर्गमें गीत कीर्ति श्रीहरि की प्राप्तिकेलिये सहस्रवत्सर का सत्रयज्ञ अनुष्ठान करतेथे ॥ ४ ॥

---

## श्रीधरस्वामी ।

प्रातःकाले हुता एव हुता अग्नयो यैः ते । अनेन नित्यनैमित्तिकहोमसाधकत्वं दर्शितं । इदं वक्ष्यमाणं आदरात् पप्रच्छुः ॥ ५ ॥

---

## दीपनी ।

वक्ष्यमाणस्य बुद्ध्या सन्निहितत्वादिदमानिर्देश इत्याचार्य्यशैली ॥ ५ ॥ ६ ॥

---

तएकदातुमुनयःप्रातर्हुतहुताग्नयः।*
सत्कृतंसूतमासीनंपप्रच्छुरिदमादरात् ॥ ५ ॥

ऋषयऊचुः

त्वयाखलुपुराणानिसेतिहासानिचानघ।
आख्यातान्यप्यधीतानिधर्मशास्त्राणियान्युत ॥ ६ ॥

श्रीवीरराघवः

तइति ॥ ते शौनकादयोमुनयः कदाचित्प्रातर्हुतहुताग्नयः हुतेत्यर्हार्थेक्तः ॥ हुतेनहोमार्हद्रव्येणपयःसर्पिरादिनासाधनेनहुताअग्नयः आहवनीयादयोयैस्तथाभूताः सत्कृतंयथोचितं बहुमतमासीनमुपविष्टंच सूतमिदंवक्ष्यमाणमादरादादरपूर्वकं पप्रच्छुः ॥ ५ ॥

प्रश्नमेवाह ॥ त्वयेत्यादिनायावदध्यायसमाप्ति तावद्युष्मत्प्रश्नोत्तरंवक्तुंनाहं समर्थइत्याशंकांनिराकुर्वतआहुः त्वयेति हे अनघशास्त्रार्थाज्ञाननिमित्तकर्मरूपपापरहितजाति प्रयुक्तावमत्वरूपाघरहितेतिवा ॥ त्वयेतिहाससहितानि सर्वपुराणानि उत अपिचयानि धर्मशास्त्राणि मानवादीनि तानि सर्वाण्यधीतान्याख्यातानिच ॥ ६ ॥

---

श्रीविजयध्वजः।

ये सत्रयागेदीक्षितास्तेमुनयः सर्वज्ञाअपिएकदाकस्मिंश्चित्काले स्वाश्रमंप्रत्यागतं सत्कृतंतद्योग्यसत्कारैः पूजितमासीनं सुखंपीठेउपविष्टंसूतं इदंस्वबुद्धिस्थितं पप्रच्छुः किंविशिष्टाः आदृताः विनीताः तेनापिपूजिताइतिवा हुतंहविरश्नातीतिहुताशनोग्निः प्रातःकालेहुतः हुताशनोयैस्तेतथोक्ताःहुतेनपयआदिद्रव्येण हुतोग्निर्यैस्तेहुतहुताग्नयइत्यसत् हुतशब्दस्यपयआदिष्वपाठात् तुर्लोकानुकंपाद्योतकः पृच्छतेर्द्विकर्मकत्वात् सूतमिदंपप्रच्छुरितिकर्मद्वयंयुज्यते ॥ ५ ॥

प्रशंसितःप्रवक्तासूतःस्वप्रश्नोत्तरंसंतुष्यसम्यग्वक्तीतिहृदिकृत्वाप्रष्टव्यार्थपृष्ठतःकृत्वातंप्रशंसंतिशौनकादयइत्याह त्वयाखल्विति अनघ "दुःखैनोव्यसनेष्वघम्" इत्यभिधानान्निरस्तसमस्तकार्यव्यसन ? त्वयासेतिहासानिभारतादीतिहाससहितानिपुराणानिचशब्दादुपपुराणानि अधीतानिवेदवत्पठितानिआख्यातानिव्याख्यातान्यपि यानिमनुयाज्ञवल्क्यादिप्रणीतानिधर्मशास्त्राणि तान्युतअपिअधीत्यव्याख्यातानीत्येकान्वयः ॥ ६ ॥

---

क्रमसन्दर्भः।

त्वयेति युग्मकम्। तत्त्वतो याथार्थ्येन। तत्तु गुह्यमिति चेत्तथापि वक्तव्यमित्याहुः ब्रूयुरिति ॥ ६ ॥ ७ ॥ ८ ॥

---

सुबोधिनी

उत्सर्गकालोयंदीक्षाकालोवानित्यनैमित्तिकसर्वहोमान् कृत्वाभगवत्कथाश्रवणार्थं सावकाशाजाताइत्याह प्रातर्हुतहुताग्नयइति एकदेतिहरिगाथोपगायनकालउक्तः तदैवसूतादीनामागमनंमुनयइति अलौकिकपरिज्ञानमुक्तं येनसूतपरिज्ञानंभवति तत्प्रसंगेअन्येषांप्रश्नव्यावृत्त्यर्थं तइतिप्रातरेवहुताएवाग्नयः पुनर्हुतायेषांतेप्रातर्हुतहुताग्नयः नचवेदविरोधः शंकनीयः तुशब्देनपक्षांतरस्वीकारात् तथाकरणेमननहेतुःकालगुणविशेषपरिज्ञानात् अतएवाग्रेवक्ष्यति कर्मण्यस्मिन्ननाश्वासइति सत्कारंसंभाषणादिना ब्रह्मासनदानेनवासूतः पौराणिकः उग्रश्रवाः ब्राह्मणानांसदसिअन्येषामनुप्रवेशनात् उत्थितस्यचपुनर्वैयग्यात्कथान्यूनभावाश्चतन्निराकरणायआसीनमित्युक्तं भगवत्कथारसाभिनिवेशादहमहमिकयासर्वैः पृष्टइतिबहुवचनं इदमितिवक्ष्यमाणंसूतस्यभगवदादरात्पप्रच्छुरादरेणवा सर्वत्रभगवत्कथायामांतरोभावोमुख्यः नतुवाक्यमात्रम् अत्रषट्प्रश्ना भगवद्विषयकाः कर्त्तव्याः षड्गुणत्वाद्भगवतः तदर्थंवक्तारमभिनंदंतित्रिभिः ॥ ५ ॥

खल्वितिस्तुतिव्यावृत्तिः पुराणान्याकरस्थानि मूलसंहिताचतुष्टयं वा ॥ इतिहासोभारतं ॥ चकारादन्याश्च कथाः प्रगाथादयः विद्योपजीवनंनकरोतीत्यनधेत्युक्तं आख्यातान्यप्यधीतानि पूर्वमधीत्यव्याख्यायपुनः पुनरधीतानीत्यर्थः तदैवनिःसंदेहः धर्मशास्त्राणिचाधीतानि "धर्मार्थकाममोक्षाख्याश्चत्वारोर्थामनीषिणां जीवेश्वरविचारेणाद्विधातेहि निरूपिताः" तत्रेश्वरविचारिताश्चत्वारो वेदाएव जीवविचारितास्तु स्मृतिषुधर्मः नीतिशास्त्रेअर्थः वात्स्यायनादिषुकामः सांख्यायनादिषुमोक्षः तत्रतावत्सर्वज्ञत्वं न भवति यावद्भगवच्छास्त्रापरिज्ञानं तदर्थमाह धर्मशास्त्राणीति उतयानि प्रसिद्धानि अर्थशास्त्रादीनि लौकिकानि वा सूतपारंपर्येण ज्ञातान्येवज्ञातानि नतु ब्राह्मणेर्ज्ञातानि इति शंकांवारयितुमाह ॥ ६ ॥

---

* हुत हुताशना इति विजयध्वज पाठः ५

यानिवेदविदांश्रेष्ठोभगवान्बादरायणः।
अन्येचमुनयःसूतपरावरविदोविदुः॥ ७॥
वेत्थत्वंसौम्यतत्सर्वंतत्त्वतस्तदनुग्रहात् । २
ब्रूयुःस्निग्धस्यशिष्यस्यगुरवोगुह्यमप्युत॥ ८॥

श्रीविश्वनाथ चक्रवर्ती।

हुता एव हुता अग्नयो यैस्ते ॥ ५ ॥
इतिहासो भारतादिः आख्यातानि व्याख्यातानि ॥ ६ ॥

सिद्धान्त प्रदीपः।

प्रातः कालेहुताएवहुता अग्नयोयैस्ते ॥ आसीनंस्वस्थम् ॥ ५ ॥ ॥ ६ ॥

भाषा टीका।

एकदिन प्रातः काल उन मुनिओंने नित्यहोम की अग्निमें यज्ञके निमित्त का होमकर यज्ञशाला के विस्तृत सभा मंडपमें विराजमान सूतजी का सत्कार कर आदर पूर्वक प्रश्न किया ॥ ५ ॥

हे अनघ ( निष्पाप ) सूत ! तुमनें इतिहास पुराणों को पढ़ा है ओर व्याख्यान भी कियाहै। धर्म शास्त्रों को भी पढा और वखानाहै ॥ ६ ॥

श्रीधरस्वामी।

विविदिषितान् अर्थान् प्रष्टुं सूतस्य सर्व्वशास्त्रज्ञानातिशयमाहुः त्वयेति त्रिभिः। इतिहासो महाभारतादिः तत्सहितानि । न केवलमधीतानि अपि तु आख्यातान्यपि व्याख्यातानि च उत अपि यानि धर्म्मशास्त्राणि तान्यपि ॥ ६ ॥

किञ्च यानीति। विदां विदुषां मध्ये श्रेष्ठो यानि वेद परावरे सगुणनिर्गुणे ब्रह्मणी विदन्तीति तथा ॥ ७ ॥

वेत्थ जानासि। सौम्य हे साधो। तेषामनुग्रहात्। तत्त्वतोज्ञाने हेतुमाहुर्ब्रूयुरिति। स्निग्धस्य शिष्यस्य प्रेमवतः उत एव रहस्यमपि ब्रूयुरेव॥८॥

दीपनी।

परावरेइति। परः त्रिलिङ्गः उत्तर इति अवरश्चरम इति च मेदिनी। अतएव श्रीश्रीधरस्वामिना ब्रह्मविशेषणत्वेन तदर्थमुक्तं सगुणनिर्गुणे ब्रह्मणी इति केचित् ॥ ७ ॥ २३ ॥

श्रीवीरराघवः।

कानितानिपुराणधर्मशास्त्राणीत्यतआहुः यानीति वेदाविदांस्वरूपतोनुष्ठानपर्यंतार्थतश्चवेदं विदंतीतितथा तेषांमध्येश्रेष्ठोभगवान् बादरायणः तथाविधाअन्येचमुनयः पराशरादयोमन्वादयश्च परावरविदः परंपरमात्म तत्त्वमवरंप्रकृति पुरुषतत्त्वंतद्विदः तत्त्वत्रययाथात्म्यविदः यानि पुराणानि धर्मशास्त्राणि चविदुस्तान्यधीतान्याख्यातानि चेतिपूर्वेणान्वयः वेदविच्छ्रेष्ठोवादरायणो ऽन्येचमुनयोयानिविदुरित्यनेनस्मृतीतिहासपुराणानां वेदमूलत्वं अतएवप्रामाण्यं चदर्शितम् ॥ ७ ॥

श्रीवीरराघवः।

नन्वपशूद्राधिकरणान्यायेनअनधिकृतशारीरकोऽहं इतिहासपुराणाध्ययनजापातप्रतीतिमान्कथं भवत्प्रश्नस्योत्तरं वक्तुंप्रभुरितीमां-शंकांवारयंतआहुः वेत्थेति हे सौम्यसदनुग्रहात्सतो व्यासस्यानुग्रहात् पुराणाद्यर्थरूपं वस्तुयथावद्वेत्सिनत्वापाततइति भावः सदनुग्रहा-दपि कथंशारीरकाध्ययननिर्णीतव्यं वस्तुतत्त्वमहंविद्यामित्यतआहुः ब्रूयुरिति स्निग्धस्यानुरक्तस्यत्वादृशस्य शिष्यस्य गुरवोबादरायणा-दयोगुह्यमपिब्रूयुः शारीरकमुखेनानुक्त्वा केवलमुपदिशेयुरितिभावः ॥ ८ ॥

श्रीविजयध्वजः।

तस्यज्ञानेयत्तांवदंतीत्याह यानीति। वेदविदांश्रेष्ठःबादरायणो भगवान्यानिवेद अन्येचपरापरविदःमुनयःतान्येवविदुः किंच तेमुनयोवे-दादन्यत्रयानिविदुःहेसौम्यत्वंतत्त्वतःतत्सर्वंवेत्थेत्येकान्वयः वेदवादरतानांवादिनामाश्रयत्वाद्बादरायणः बवयोःसावर्ण्यात् बादरायणसं-बंधियत्वादरंअयनंस्थानंयस्यसतथोक्तइतिवा परंब्रह्मअपरंब्रह्मविदंतीतिपरापरविदः अतीतानागतविदोवाहेसौम्यभक्तिज्ञानलक्षणासोमा-ई विद्कृताविति धातोःभगवान्यानिवेदचकार अन्येचमुनयोयानिचक्रुः तत्सर्वंजानासीतिवा गुरवःस्निग्धस्यस्नेहलक्षणभक्तिसंपन्नस्य-शिष्यस्यगुह्यमप्यतिगोप्यमपिब्रूयुरुतअपितत्संभावितामित्यन्वयः ब्रूयुरपिरेवेत्यर्थइतिवा ॥ ७ ॥ ॥ ८ ॥

सुबोधिनी।

धर्मार्थकामाःसूतपारंपर्येणापिज्ञायंते मोक्षशास्त्राणितुब्राह्मणैरेवतत्रसूतस्याज्ञानं संभवति तन्निवृत्त्यर्थमाह ॥ विदांश्रेष्ठोज्ञानिनांश्रेष्ठः यानि वेदेतिमोक्षशास्त्राणि सर्वाणिगृहीतानि ननुतानिकथंव्यासस्तस्मै कथयेदित्याशंक्याह ॥ भगवानिति भगवतः सर्वंसंभवतितथाप्यनधिकारि-णेकथमाहेत्याशंक्याह ॥ बादरायणइति ॥ अतितपसातदधिकारसंपादनशक्तिरुक्ता "नेह्यकस्मात्गुरोर्ज्ञानं शिक्षितंस्यात् सुपुष्कलमिति वाक्यादसार्वज्ञ्यमित्याशंक्याह अन्येचमुनयइति तेच मननशीलाज्ञानिनः अज्ञानादुपदेशइति नमंतव्यंयतः सूतः प्रसिद्धः इतिपुनः संबोधनं तर्हिकथमुपदेशइत्यतआह परावरविदोविदुरिति परेब्रह्मादयः अवरेअस्मदादयःभूतभविष्यत्कालावातान्जानंतीति ईश्वरेच्छा तथैवकाल-श्चतथेति बोधनार्थं तथावचनं फलितमाह ॥ ७ ॥

शिष्यगुणानाह ॥ सौम्येति हेशांतसेवादिगुणानां साधारण्येपि असुरत्वाच्छूद्रस्यकौर्यादयः संभवंति तदभावश्चेत् सिद्धा अन्येसद्-गुणाइतिभावः सूतेति संबोधनात् वेदव्यतिरिक्तमिति ज्ञातव्यं आपाततोज्ञानंवारयति तत्त्वतइति उपदेशेपि कथमनधिकारिणोज्ञान-मित्याशंक्याह तदनुग्रहादिति गुरूणामनुग्रहात् सर्वंभवतीत्यर्थः एवंसार्वज्ञ्यमुक्त्वाप्रथमतःफलंपृच्छंति तत्रतत्रेति ॥८॥

श्रीविश्वनाथ चक्रवर्त्ती।

विदां विदुषां परावरे सगुणनिर्गुणे ब्रह्मणी विदन्तीति ते ॥ ७ ॥

स्निग्धस्य गुरुविषयकस्नेहवतः शिष्यस्य गुरवो गुह्यमपि ब्रूयुरिति विधिलिङैवत्वयि स्निग्धे शिष्ये तेषामवश्यमेव रहस्यप्रकाश-कत्वं तव च सर्व्वरहस्यविज्ञत्वमवगम्यते । अतस्तानपि प्रति स्वं मतमेवोत्कृष्य ब्रुवतो मुनीन् अपहाय सर्व्वमतवक्ता त्वमेवास्माभिः पृच्छ्यसे इति भावः ॥ ८ ॥

सिद्धान्तप्रदीपः।

विदांमध्येश्रेष्ठः बादरायणो यानिवेदश्रेष्ठत्वेहेतुः भगवानिति द्वेब्रह्मणीवेदितव्येशब्दब्रह्मपरंचयत् ॥ शब्दब्रह्मणिनिस्नातः परंब्रह्माधि-गच्छतीति स्मृत्युक्तेब्रह्मणीविदंतीति परावरविदोऽन्येचयानिविदुः ॥ तानित्वयाआख्यातान्यप्यधीतानीति पूर्वेणान्वयः ॥ ७ ॥ ॥ ८ ॥

भाषा टीका।

वेद वेत्ताओं में श्रेष्ठ भगवान् बादरायण व्यासजी जिन ग्रंथों को जानते हैं एवं पर अवर के वेत्ता और और मुनी गण जिन ग्रंथों को जानतेहैं ॥ ७ ॥

१ परापरविदः इति विजयध्वज पाठः । ७ । २ सदनुग्रहात् इति वीरराघव पाठः ॥ ८ ॥

**तत्रतत्राञ्जसायुष्मन्भवतायद्विनिश्चितम् ।**
**पुंसामेकान्ततःश्रेयस्तन्नःशंसितुमर्हसि ॥ ९ ॥**

भाषा टीका

**हे सौम्य तुम उन्हीं मुनीगण के अनुग्रहसे उन समस्त ग्रन्थों का तत्व जानतेहो। क्यों कि गुरुजन अपने प्यारे शिष्यों को गुह्य ( गोपनीय ) तत्त्व भी समझा दिया करतेहैं ॥ ८ ॥**

श्रीधरस्वामी।

अञ्जसा प्रत्यार्जवेन एकान्ततः श्रेयः अव्यभिचारि श्रेयः साधनम् ॥ ९ ॥

---

श्रीवीरराघवः।

एवं तस्य प्रतिवचन सामर्थ्यमा विष्कृत्य प्रष्टव्यं पृछंति तत्रेति हेआयुष्मन्पुंसामे कांततो नियमेन निरतिशयं श्रेयोयत् यतः साधनाच्छ्रेयो भवेत्त द्भवता तत्र तत्र पुराणादिषुनिश्चितं निर्णीतंनोऽस्मभ्यं शंसितुंप्रस्तोतुमर्हसिएवमुक्तसाधनभूतो धर्मः पृष्टः किंनिरातिशयं श्रेयः कोवातत्साधनभूतो धर्म इति प्रश्नार्थः ॥ ९ ॥

---

श्रीविजयध्वजः।

इदानीमभिमतार्थमाहुरित्याह तत्रेति आयुष्मन्प्रशस्तायुष सूतभवतातत्र पुराणादिष्वंजसाऋजुमार्गेणयत्पुंसामेकांततःश्रेयोनिश्चितंतन्नःशंसितुमर्हसीत्यन्वयः ॥ ९ ॥

---

क्रमसंदर्भः।

पुंसां कलिभाविपर्य्यन्तपुरूषाणाम् ॥ ९ ॥

---

सुबोधिनी।

फलार्थं हिसाधनं मृग्यते अतः ।कफलं किमफलमिति भवति विचारणा अभ्युदयोनिःश्रेय सवाभवति फलं ॥ अन्यद्वा ॥ सर्वत्र दूषणान्यग्रेवक्ष्यंते अतः संदेहात्प्रश्नः तथापिप्रमाणवलंविचारेण निर्णयस्तदाह अंजसा प्रत्यार्जवेन आयुष्मन्नित्याशीर्भयाभावो वा सूच्यते॥ गुरूणामन्योन्यांविप्रतिपत्तावपि बहुगुरुत्वेन बुद्धि वैषद्यात् स्वतो निर्द्धारणं संभवतीत्याह भवतायद्विनिश्चितमिति पुंसांस्वतंत्राणां एकांततः श्रेयः कदापि सर्वान् प्रति श्रेयस्त्वं नत्यजतीत्यर्थः स्वर्गिणां पुत्रादिषुनश्रेयस्त्वं तथा मुक्तानां भुक्ताविति किमत्रैकांततः श्रेय इत्यर्थः तदस्मभ्यं शंसितु मर्हसि ॥ द्वितीयं प्रश्नमाह ॥ प्रायेणेति सार्द्धाभ्यां साधनविषयकोयंप्रश्नः स्वस्य ऋषित्वेन चिरजीवित्वात् तद्व्यतिरेकेणाह ॥ ९ ॥

---

श्रीविश्वनाथ चक्रवर्त्ती

तर्हि तत्तत् सर्व्वमेव ब्रवीमीति किं तत्राहुस्तत्रेति। आयुष्मन्निति। त्वया बहुकालं व्याप्य तान्यधीत्य विचारितानीतिभावः। अञ्जसा शीघ्रं। तत्र तत्र शास्त्रेष्वर्थबोधकवाक्येष्वित्यर्थः। एकान्ततः एकान्तेन सर्व्वथेत्यर्थः। यद्वा प्रथमान्तात्तसिः। एकं अद्वितीयञ्च तारतम्यगणनायामन्तर्भूतञ्च यतोऽन्यदधिकं श्रेयोनास्तीत्यर्थः। तच्च प्रेमैव न तु स्वर्गापवर्गादिकं ब्रह्मपरमात्मभगवत्सुमुख्यस्यभगवत्स्वरुपस्यापि वशीकारकत्वादित्यग्रिमग्रन्थे व्यक्तीभविष्यति ॥ ९ ॥

**प्रायेणाल्पायुषःसभ्यकलावस्मिन्युगेजनाः ।**
**मन्दाःसुमन्दमतयोमन्दभाग्याह्युपद्रुताः ॥ १० ॥**
**भूरीणिभूरिकर्माणिश्रोतव्यानिविभागशः ।**
**अतःसाधोऽत्रयत्सारंसमुद्धृत्यमनीषया ।**
**ब्रूहिनःश्रद्दधानानांयेनात्मासुप्रसीदति ॥ ११ ॥ ***

सिद्धांतप्रदीपः ।

अंजसा अनायासेन शास्त्रापीडनेन ॥ एकांततः श्रेयः अव्यभिचारिश्रेयः साधनंनोऽस्मभ्यं हे आयुष्मन्संशितुमर्हसिब्रूहीत्युपाय प्रश्नः ॥ ९ ॥
प्रश्नांतरं कर्तुं कर्तृकर्मणोरन्योन्यवैशम्यमाहुः प्रायेणेतिसार्द्धेन ॥ १० ॥
अतः कर्तृकर्मणोरन्योन्यानर्हत्वाद्धेतोः ॥ अत्र शास्त्रे सारम् सर्वशास्त्रनिष्पन्नं प्राप्यम् ॥ ब्रूहीति उपेयप्रश्नः ॥ ११ ॥

---

भाषा टीका ।

हे आयुष्मन् ! उन सव शास्त्रोंमें अञ्जसा अर्थात् विनाकिसी कष्ट कल्पना वा अर्थान्तर करनेके सरल अक्षरार्थ, ओर मनके निष्पक्ष भावसै तुमने जोकुछ मनुष्योंका एकान्त श्रेय ( परम पुरुषार्थ ) निश्चय कियाहो, वह हमसे कथन करना चाहिये ॥ ९ ॥

---

श्रीधरस्वामी ।

अन्येऽपि बहुना कालेन बहुशास्त्रश्रवणादिभिर्विनिश्चिन्वंतु नेत्याहुः प्रायेणेति । हे सभ्य हे साधो अस्मिन् युगे कलौ अल्पायुषा जनाः तत्रापि मन्दाः अलसाः तत्रापि सुमन्दमतयः तत्रापि मन्दभाग्याः विघ्नाकुलाः तत्राप्युपद्रुताः रोगादिभिः ॥ १० ॥
नच बहुशास्त्रश्रवणेऽपि तावतैव फलसिद्धिरित्याहुः भूरीणिकर्माण्यनुष्ठेयानि येषु तानि । समुद्धृत्ययथावदुद्धृत्य । येन उद्धृतवचनेन आत्मा बुद्धिः सुप्रसीदति सम्यगुपशाम्यति ॥ ११ ॥

---

श्रीवीरराघवः ।

अथ त्रिवर्गसाधनानामश्रोतव्यत्वं सूचयंतस्तन्निष्ठानां दौर्भाग्यंतैः श्रोतव्यानां बहुत्वंच वदंतः सर्वशास्त्रार्थसारभूतं मुक्तिसाधनमेव पृछंति प्रायेणेति सार्द्धाभ्याम् । सभ्यास्मिन्कलौ युगे जनामानवाः प्रायेणाल्पायुषः अनियतशतवर्षायुषः । अनेनकृतादि युगेष्विव यथेष्टं भोगानंतरं मुमुक्षोदयाऽसंभवउक्तः । मंदा मंदप्रकृतयः नितरांमंदबुद्धयःउपद्रुताः तापत्रय वर्गत्रय तृष्णाभ्यामितिशेषः सुमंद मतय इत्यनेन झटितिश्रेयस्तत्साधनानवगमः सूचितः । मंदा इत्यनेन श्रेयः साधनोपसंहाराऽसामर्थ्यं सूचितम् । उपद्रुता इत्यनेन कचिच्छ्रेयः साधनोद्योगस्यानेकांतराय विहतत्वम् । अतएव ते जना मंदभाग्या दुर्भगा इत्यर्थः ॥ १० ॥
हियस्मादुपद्रुता अतएव तैर्विभागशः स्वस्वापेक्षित धर्मादि साधन भेदेन श्रोतव्यानि भूरिकर्माण्यायासबहुलानि कर्माणि बहूनि संतीतिपौंडरीकवाजपेयादि भेदेन भूरीणि एकैकस्मिन्ननेकेति कर्त्तव्यता कलाप वत्वेन भूरि कर्माणीतियतएवमतोत्र श्रोतव्येषु मध्ये यत्सारमनिष्टनिवर्त्तकमिष्टप्रापकं सारं साधनं तन्मनीषया सूक्ष्मया धिया समुद्धृत्य दध्नो घृतमिवोद्धृत्य श्रद्दधानानां नोस्माकं ब्रूहि । सारं विशिषंतियेनेति । येन सारेणात्मा चित्तं संप्रसीदति रागादिभिरकलुषस्यात्तत्सारं ब्रूहीत्यन्वयः प्रायेणेत्यल्पायुरादिभिः प्रत्येकं संवध्यते प्रायेण मंदा इत्यादिनातेन "मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये" इति भगवद्वचनार्थः स्मारितः । येनात्मा संप्रसीदतीत्यनेनात्मप्रसादार्थमेवतावन्मुमुक्षुभिर्वर्तितव्यम् । सतिचात्म प्रसादे "प्रसादे सर्वदुःखानां हानिरस्योपजायते प्रसन्न चेतसोह्याशुबुद्धिः पर्यवतिष्ठति" इत्युक्तरीत्या दुःखहान्यादिरर्थादेव भवतीति सूचितम् । यद्वा येनसारभूतेनसाधनेनात्मासंप्रसीदतिप्रसन्नोभवतीत्यर्थःएवंच "किमलभ्यं भगवति सन्नेश्रीनिकेतन" इति वक्ष्यमाण रीत्या ततः सर्वंसंपद्यत एवेतिभावः भूरीणि श्रोतव्यानि विभागशः संति तत्रसारं ब्रूहीत्यनेन भूरिकर्माणि मश्रोतव्यानि प्रतीयंते । यद्यपि कर्माण्यपि फलद्वारा हानायस्व रूपेणोपादानायच श्रोतव्यान्येव ॥ अन्यथा सांसारिक फलनिर्वेदासंभवेनानिःश्रेयः साधनाववोध्याध्यात्म शास्त्र शुश्रूषाया एवासंभवात् परमात्मोपासनस्यानभिसंहित फलकर्मोपकार्यत्वज्ञानाभावप्रसंगाच्च तथाप्येक यैवोक्त्या सर्वाणि फलतस्त्याज्यान्यु पासनांगतया यथाशक्त्यानुष्ठेयान्येतावदेव श्रोतव्यंमुमुक्षुभि प्रायेणैवमुक्तम् ॥ ११ ॥

---

* ब्रूहिभद्रायभूतानामिति विजयध्वज श्रीवल्लभयोःसंमतःपाठः । ११ ।

### श्रीविजयध्वजः ।

ननुकिमितिसंक्षिप्यकथनंविस्तरेणाकिंनस्यादिदितितत्राह प्रायेणेति अस्मिन्कलौयुगेजनाःअल्पायुषः अतएवमर्त्याःमरणशीलामंदाः कर्मकरणशक्तिशून्याः सुमंदमतयःअत्यल्पप्रज्ञा मंदभाग्याः अल्पपुण्यभाजिनः कुष्ठभगंदरादिव्याधिभिरुपद्रुताः प्रायेणेतिप्रत्येकमभिसंबध्यते बहुलमेवंकाश्चिदेवोक्तार्थअन्यथास्यादित्यर्थेवर्ततेइत्यन्वयः ॥ १० ॥

अल्पायुष्यादिभिःअत्यंतदुर्बलानांश्रेयःसाधनशास्त्राणिहित्वाअर्थादिविषयानेकशास्त्रश्रवणेषु शक्तमित्याहुरित्याह भूरीणीति । विभागशः प्रत्येकंविभक्तानितथाभूतानिभूरीणिबहूनिभूरिकर्माणिव्यापारवंतिश्रोतव्यान्यर्थादिविषयशास्त्राणिसंतीतियदित्यन्वयः प्रश्नार्थंनिगमयति अतइति अतएवमर्थादिविषयशास्त्रज्ञानंदुःशकंश्रेयःपरिपंथिचआयुरादिकंचाल्पमतः साधोहीनजात्युत्पन्नत्वेपिनिर्दोष अत्रेषुशास्त्रेषुयत्सारंतन्मनीषयाबुद्ध्यासमुद्धृत्यइदमेवोपादेयमितिनःब्रूहि किमर्थंभूतानांभद्राययेनभवदुक्तसारश्रवणेनात्माहरिराशुप्रसीददाति अनुग्रहोन्मुखोभवतीत्येकान्वयः ॥ ११ ॥

### क्रमसंदर्भः ।

कलिपुरुषानेव वर्णयति । मन्दभाग्याः स्वल्पपुण्याः ॥ १० ॥
भूरीणीति साधकम् । श्रोतव्यानि शास्त्राणि । ब्रूहि भद्राय भूतानामिति क्वचित् पाठः ॥ ११ ॥

---

### सुबोधिनी ।

अनेन ऋषिव्यतिरिक्तानामयमुपाय इति गम्यते आद्यस्तुतेषां पुंसां न इति वासामानाधिकरण्यं अल्पमायुर्येषांते अल्पायुषः अनेन सहस्र समादयोनतेषां साधनमित्युक्तं प्रकृतानुपयोगात् अकथनमाशंक्याह सभ्य इति सभा मर्हतीतिसभ्यः "सभांवान प्रवेष्टव्यमिति धर्मबोधनाय संबोधनम् अत्यावश्यक महत्काल साध्य साधनत्वे अवक्तव्यत्वमाशंक्यकलिदोषेणै वाल्पायुष्ट्वंनस्वभावतःतथाच कलिदोष परिहारकेणताहशेन साधनेन आयुषोपि वृद्धिरित्यभि प्रायेणाह कलावस्मिन् युग इति । तस्यकलेः कालांतरत्वे इदानीमुपायस्यावक्तव्यत्वमाशंक्याह अस्मिन्निति युगपद्प्रयोगस्तत्रत्यानां पूज्यत्वाय सहज संसारित्वाभावायजना इति प्रादुर्भावादुत्कृष्टत्वम् एवं सहज दोषमुक्त्वा आगंतुक दोषमाह मंदा इत्यादिभिश्चतुर्भिर्विशेषणैः मंदा आलसाः आलस्यं चित्तजाड्यम् सुष्ठु मंदा मतिर्येषामिति ज्ञानेंद्रियदोषः मंदभग्या इति अदृष्टस्य कर्मेन्द्रियत्वाद्दोषः उपद्रुतारोगादिभिरिति चत्वारो दोषाः एवमागंतुक दोषा उक्ताः कालांतरेण व्यापृता इत्याह भूरीणीति ॥ १० ॥

अर्थवाद्योदोषः "नहिकश्चित् क्षणमपि जातु तिष्ठत्यकर्म कृदिति लौकिक कर्म व्यापृताः ततोपि विहित कर्म व्यापृताः तत्र प्रमाण विचारेप्रकरणशः धर्मादिशास्त्राणि ज्ञातव्यानितानिच भूरीणि कर्माणि येष्विति भूरिकर्माणि नच श्रवणमात्रेण कृतार्थता किंतु तदुक्तानिकर्माण्यपि कर्त्तव्यानि ततो महान् दोषो वाद्यः एवं त्रिदोष ग्रहाणा मुपायं कथयेत्याहुः अत इति प्रत्युप कारापेक्षाभावाय संबोधनं साधो इति परदुःखदूरी करणं साधोरावश्यकमिति भावः अन्यार्थमुक्तस्य प्रासंगिकस्य वा साधनस्य निराकारणायाह अत्रेति एतादृश दोषे अत्रापिबहूनि साधनानिचेत् यत्सारं तत् समुद्धृत्य वक्तव्यम्यत्तदोर्नित्य संबंधान्नाध्याहारदोषः यदिति प्रसिद्ध वा सारं पारंपर्य फल व्यभिचारादि दोष रहितम् एकवचनेन आसाधारण्यं सुगमत्वं चोक्तं प्रकरणेन विधयो वध्यंत इतिन्यायेन यद्यपि सर्वं प्रकरणेषु सुसंबद्धं तथापितत्तत् स्थानादुद्धृत्य वक्तव्यमित्याह समुद्धृत्येति प्रकरणेषु तद्धर्म शून्यत्वाभावायमनीषयेति बुद्ध्यैवोद्धरणं नकृतिततःमनस ईषा मनीषा मनश्चांचल्यनिवारिका बुद्धिः प्रार्थनायां प्राप्तकाले वा लोट् भद्रं कल्याणं त्रिविध दुःखाभाव पूर्वक महासुखावाप्तिः तद्भगवत्प्रसादादिति चेत्तत्राह येनात्मा सुप्रसीदतीति येनैव हेतुना आत्मा भगवान् सुप्रसीदति तर्हि तथैव कथयेत्यर्थः भूतानामिति पिशाचवर्ज्जीवानां परिभ्रमण बोधनेन दयासूचिता एवं फलसाधन प्रश्ने निरूपिते तत्राविर्भूतो भगवानेव फलसाधनं चेत्याशंक्य भगवद्वतारो लोकानामर्थे वेति संदेहात् अवतार प्रयोजनं पृच्छंति सूतजानासीति ॥ ११ ॥

---

### श्रीविश्वनाथ चक्रवर्त्ती ।

ननु मन्मुखात्तत्तत् सर्व्वं श्रुत्वा युष्मदादय एव श्रेयो निश्चिन्वन्तु तत्राहुः हे सभ्य देशकालपात्रज्ञ अस्मिन् कलौ प्रायेण जनाऽल्पायुष एव यदि कथञ्चिद्दीर्घायुषस्तर्हि मन्दाः परमार्थेष्वलसाः यदि केचिन्निरलसा अपि तर्हि निर्बुद्धयः यदि सुबुद्धयोऽपि स्युस्तदा मन्दभाग्याः तादृशसाधुसङ्गहीनाः यदि लब्धसुसङ्गा अपि तदा उपद्रुताः रोगाद्युपद्रववशात् तन्मुखात् श्रोतुं श्रुत्वा वा स्वश्रेयोनिश्चित्य तत्तदनुष्ठातुं नावकाशं लभन्त इति । यद्वा अल्पायुषस्तत्रापि मन्दा इत्यादि ॥ १० ॥

---

सूतजानासिभद्रंतेभगवान्सात्वतांपतिः।
देवक्यांवसुदेवस्यजातोयस्यचिकीर्षया॥ १२ ॥
तन्नःशुश्रूषमाणानामर्हस्यङ्गानुवर्णितुम्।
यस्यावतारोभूतानांक्षेमायचभवायच॥ १३ ॥

श्रीविश्वनाथ चक्रवर्त्ती।

तादृशस्य श्रेयसः साधनेषु मध्ये यन्मुख्यं कलिकालवर्त्तिभिर्जनैः सुशक्यञ्च तत् साधनं वदेति पृच्छन्ति। भूरीणि कर्म्माण्यनुष्ठेयानि यत्र तानि श्रोतव्यानि साधनानि तादृशसाधनप्रतिपादकानि शास्त्राणि वा। येनात्मा बुद्धिः प्रसीदति। तच्च श्रवणकीर्त्तनादिक मेवेत्यग्रे व्यक्तीभविष्यते ज्ञास्यते॥ ११ ॥

---

भाषा टीका।

हे सभ्य! इस कलिकालमें प्रायः मनुष्य अल्पायु हैं। इस अल्प आयुमें भी कुछ शास्त्रका अभ्यास कर सकतेहैं पर आलसी हैं। जिन को आलस नही वे मंद बुद्धि हैं कुछ समझ नहीं सकते. जो कुछ बुद्धि वालेहैं वे रोग शोक दारिद्र्य से व्याकुल हैं॥ १० ॥

और इस संसार में श्रोतव्य शास्त्र अनेक हैं और उन शास्त्रों के निर्दिष्ट कर्म भी विविध हैं। उन सवको पढ़ कर व गुरुमुख से सुनकर उनका सार निकालना वड़ा कठिन है अतः हे साधो! अपनी बुद्धिसे उन समस्त शास्त्रों का सार सार उद्धार कर श्रद्धा वान हम सब मुनियों से कहो। जिससे हमारे आत्मा को प्रसाद अर्थात् संतोष शांतिहोय॥ ११ ॥

---

श्रीधरस्वामी।

प्रश्नान्तरं सूतेति पञ्चभिः। भद्रं ते इत्येतत्सुखयेनाशीर्व्वादः। भगवान्निरतिशयैश्वर्य्यादिगुणः। सात्वतां सच्छब्देन सत्त्वमूर्त्तिर्भगवान् स उपास्यतयाविद्यते एषामिति सत्वन्तो भक्ताः स्वार्थेऽण् राक्षसवायसादिवत्। तस्य चाश्रवणमार्षम्। तदेवं सात्वदिति भवति तेषां पतिः पालकः। यस्यार्थविशेषस्यचिकीर्षया वसुदेवस्य भार्य्यायां देवक्यां जातः॥ १२ ॥

अङ्ग हे सूत तन्नोऽनुवर्णयितुमर्हसि। सामान्यतस्तावद्यस्यावतारो भूतानां क्षेमाय पालनाय भवाय समृद्धये॥ १३ ॥

---

श्रीवीरराघवः

एवं मुक्ति साधनं पृष्ट्वाऽथतदनुग्राहकेषु प्रधानतमं "श्रवणं कीर्तनं विष्णोःस्मरणमित्यादिषु प्रथमोपात्तं भगवच्चरित्र श्रवणं चिकीर्षवस्तत्रापि साधुपरित्राणायावतीर्णं समनंतरश्रीकृष्णावतार चरितं पृच्छंति। सूतइत्यादिषड्भिः। हेसूततुभ्यं भद्रंकल्याणमस्तु। सात्वतां भक्तानां पतिः पालयिताभगवान् वसुदेवस्य अपादानस्य संबंध विवक्षयाषष्ठी। वसुदेवात्तद्भार्यायां देवक्यां यस्य विकीर्षया यत्कर्म कर्तुमिच्छया जातोऽवतीर्णः। तत्सर्वंत्वंजानासीति॥ १२ ॥

तस्माद्वक्तुमर्हसीत्याहुः। तदिति। तच्छ्री कृष्णचरितं श्रोतु मिच्छतांनोस्माकं वर्णितुमंगहे सूतार्हसि। अर्हसीत्यनेन सदनुगृहीतः कार्त्स्नेन तच्चरित्र वेदीत्वं वक्तुं प्रभुरिति सूचितं महोपकर्तृत्वात्तदवतार चरित्रमवश्यं शुश्रूषितव्यमित्यभिप्रायेण तदवतारंविशिंषंति। यस्येति यस्य भगवतोऽवतारः। श्रीकृष्ण रूपः भूतानां विभवाय योगापर पर्याय इष्टोदयायक्षेमाय तत्पालनायच। भक्तानामित्यनुक्त्वा भूतानामिति वदतामयमभिप्रायः। शत्रूणामपि दमनपूर्वकमपवर्गदायित्वेन महोपकर्त्तेतिकिमुवक्तव्यं तदवतारो भूतानां योगक्षेमार्थ इति॥ १३ ॥

---

श्रीविजयध्वजः

सारश्चहरेःकृष्णावतारकथैवेत्याशयवंतःपुनराहुरित्याह सूतेति भोसूतजानासिसफलमितिशेषः तेतुभ्यंभद्रंमंगलमस्तु तेतवबिंबभूतंभद्रंसर्वमंगलंभगवंतंजानासीतिवा सात्वतांपतिर्भगवान् यस्यकार्यविशेषस्यचिकीर्षयावसुदेवस्यसकाशाद्देवक्यांजातः तद्वक्तव्य प्रकाशितः॥ १२ ॥

---

श्रीविजयध्वजः ।

यस्यावतारोभूतानांक्षेमायैहिकामुष्मिकसुखायविमर्चयामिवृद्धयभवति अंगहेवत्स तस्यकृष्णस्यतत्कार्यविशेषंचरित्रापरपर्यायंशुश्रूषमाणानामस्माकमनुवर्णितुंसम्यग्वक्तुमर्हसीत्येकान्वयः सात्वतामिति सत्[illegible]मेषामस्तीतिसत्वंतःतएवसात्वंतः प्रज्ञादित्वात्स्वार्थेअण्तस्यादर्शनंछांदसम् यद्वासातिःसौत्रोधातुःसुखार्थः वासरूपन्यायेनक्किपिसात् सखपरमात्मासएषामस्तीतिसात्वंतोभक्तास्तेषांपतिःमरुत्वतामितिवत्सात्वतामितिरूपसिद्धिः यद्वासात्वत[illegible]चिकृतेक्किप्चेति क्किपिचकृते णिचोलोपेअतोलो पेचसात्वतामितिरूपसिद्धिः सात्वतांपंचरात्रोकानुष्ठानकारिणांयादवानांवा ॥ १३ ॥

क्रमसन्दर्भः ।

सूतेत्यादि नवकं नानावतारावतारिष्वपि सत्सु महापुराणप्रारम्भ एव श्रीशौनकादीनां श्रीकृष्णैकतात्पर्यमिदम् यथा । अत्र पूर्व्वं सामान्यतोऽस्माभिरेकान्तश्रेयस्त्वेन सर्व्वशास्त्रसारत्वेन आत्मसुप्रसादहेतुत्वेन च यत् पृष्टं तदेतदेवास्माकं भाति यत् श्रीकृष्णलीलावर्णनमित्यभिप्रेत्याहुः सूतेति । भद्रं त इति श्रीकृष्णलीलाप्रश्नेन सह्लादरौत्सुक्येनाशीर्व्वादः । भगवान् स्वयमेवसम्पूर्णैश्वर्य्यादियुक्तः । सात्वतां सात्वतानां । नुड्भाव आर्षः । यादवानामित्यर्थः । जातो जगद्दृश्यो बभूव ॥ १२ ॥

सामान्यतस्तावत् यस्यावतारमात्रं क्षेमायेत्यादि ॥ १३ ॥

सुबोधिनी ।

इदंत्वति गूढ मितिको वेदनजानातीति संदेहात्पृछंति जानासीति मुख प्रसादंदृष्ट्वा जानातीति ज्ञात्वा हर्षेणाशीराहुः भद्रंत इति अस्त्वित्यर्थात् महति ज्ञानोपदेशे दक्षिणा त्वेषा श्रुतमास्ति देवक्यां जातः कृष्णो भगवानिति तत्रसंदेहः भगवतः षड्गुणैश्वर्य संपन्नस्य ब्रम्हणः कार्यकारणार्थं नदेह संबंधोपेक्षते जीवधर्मोस्तुब्रह्मणि नसंत्येवप्रादुर्भाव प्रकारस्तुजीवानामिवअतः संदेहः किंच सात्वतांपतिःसत्त्वैकनिष्ठाः सात्वंतः देवामुक्तावा तत्परित्यज्य मनुष्येषु कथमाविर्भावः पतित्वात्तेषां परित्यागोनुचितः किंचदेवाः मुक्ताः सनकादयो वातेपि ब्रम्हणो देहान्मनसोवा उत्पद्यंतेनस्त्रियां तत्रापिकस्यचित् कन्यायां देवक्यामिति देवकस्य कन्यादेवकी ॥ तथाच ॥ अप्सुनारायणावतारवन्न भवति तत्रापिविशेषः वसुदेवस्येति वसुदेवस्य भार्यापराधीना भगवदवतारे न भार्यादिविशेष संबंधः किन्तु संबंधमात्रमिति षष्ठी मात्र प्रयोगः अतस्तादृशस्य तादृशावतारे किंकार्यं तर्हितथान भविष्यतीत्याशंक्याहजातःकंसादिवधस्त्वन्यस्मादपि भवतीत्यभिप्रायः अतः यस्य चिकीर्षयाजातः तन्नः कथयेति संबंधः अनेन प्रासंगिकं प्रयोजनं निवारितं कालादि साध्यताच नन्वस्त्येव प्रयोजनं कारण दर्शनात् योगेनच तज्ज्ञानंतीत्याशंक्याहुः तन्नः शुश्रूषमाणानामिति ॥ १२ ॥

बहूनामस्माकं श्रवणेच्छापूरणायकथनीयं नहिश्रवणेच्छायोगे ननिवर्त्तते नवायोगः सर्वैः कर्त्तुशक्यते नवायोगेन भगवदीयः*पदार्थोज्ञातुंशक्यः श्रवणव्यतिरेकेण अतएवभगवद्वाक्यपरंपरयावा भगवन्मुखोक्तं गुरुमुखाच्छ्रुतम् अनुपश्चाद्वर्णयितुमर्हसि पठितस्य हि अनुवचनमावश्यकं मंत्रादावपि परमधिकारविशेषेतच्छुश्रूषमाणानांवक्तव्यमेव अंगेतिकोमलसंबोधनम् अंगत्वेनस्वाधीनत्वायअसाधारणंतुप्रयोजनं पृच्छ्यते साधारणं तु ज्ञायत इत्याहुः यस्यावतारइत्यादिसार्द्धैस्त्रिभिः तत्रप्रथममवतारद्वारारूप प्रयोजनमाह यस्येति यस्यसामान्यतोप्यवतरणंदेवतिर्यङ्नरादिषु अलौकिकतेजसः संक्रमणं भूतानां जातमात्राणां स्थावरजंगमानां क्षेमायऐहिकसर्वसुखायचकारात् सर्वदुःखनिवृत्तये भवायमोक्षायचकारादविद्यानिवृत्तये भूसत्तायामिति सन्मात्रत्वायेत्यथः "चितितन्मात्रेणतदात्मकत्वात्" ।४।४।६। इति चैतन्येअनुप्रवेशोवाचकारार्थः एवं सर्वेषामभ्युदयनिःश्रेयसार्थं भगवदवतारइत्युक्तम् उत्पत्स्यमानानांतुनाम्नापुरुषार्थसिद्धिरिति तन्माहात्म्यमाहआपन्नइति ॥ १३ ॥

श्रीविश्वनाथचक्रवर्त्ती ।

तच्च साधनसारं श्रवणकीर्त्तनादिकं श्रीकृष्णयशोविषयकमेव वाचयितुं पुनः पृच्छन्ति सूतेति । भद्रं त इत्यौत्सुक्येनाशीर्व्वादः । सन्तो भक्ता एव स्वविभुत्वेन वर्त्तन्ते यस्य स सत्वान् विष्णुः स एव भजनीयो येषामिति भक्ताविति सूत्रेणाण् । सात्वता वैष्णवास्तेषां पतिर्नुडभावस्त्वावर्षः । किम्बा सातिः सुखार्थः सौत्रो धातुर्हेतुमण्णायन्तः । अनुपसर्गाल्लिम्प ॥ ३ । ३ । १३८ ॥ इति सूत्रोकस्तस्माद्वासरूपन्यायेन क्किपि सात् परमात्मा स सेव्यतयाऽस्त्येषामिति मतुपि सात्वन्तो भक्तास्तेषां प्रतिरिति । वसुदेवस्य देवक्यां भार्य्यायां यस्य चिकीर्षया तच्च स्वयशः ख्यापनमेव तस्यैव नतु भूभारहरणादेश्चिकीर्षयेतिवस्तुतः सिद्धान्तसिद्धं "श्रवणस्मरणार्हाणि करिष्यन्निति कुन्तीवाक्यपर्यवसानात् तस्य जिज्ञासया किं फलमिति चेत् श्रुत्वा आत्मानं कृतार्थीकरिष्यामइत्याहुः यस्येति सार्द्धैस्त्रिभिः । यस्यावतार एव क्षेमाय मोक्षाय भवाय भूत्यै सम्पत्तये किं पुनः स इत्यर्थः ॥ १२ ॥ १३ ॥

* अयं पाठश्चिन्त्यः

आपन्नःसंसृतिंघोरांयन्नामविवशोगृणन् ।
ततःसद्योविमुच्येतयद्बिभेतिस्वयंभयम् ॥ १४ ॥　(१)
यत्पादसंश्रयाःसूतमुनयःप्रशमायनाः ।
सद्यःपुनन्त्युपस्पृष्टाःस्वर्धुन्यापोऽनुसेवया ॥ १५ ॥　(२)

सिद्धान्तप्रदीपः

सूतेति ॥ सात्वतांपतिः ॥ सात्वतंवैष्णवं शास्त्रं तदाचक्षते इति सात्वतस्तेषांपतिः । णिचिकिपिणिलोपेरूपम् ॥ १२ ॥
॥ तदिति ॥ यस्यचिकीर्षयाजातस्तद्वर्णयितुमर्हसीत्युपेय चिकीर्षितप्रश्नः ॥ ननुजन क्षेमादि चिकीर्षया जातइत्यत्रक्षेमादेरन्यथा सिद्ध-त्व मुक्त प्रश्नदार्ढ्यार्थमाहुः यस्येत्यादि ग्रथेन यस्यदेवक्यांजातस्ययः कश्चिदप्यवतारः। क्षेमायामुष्मिक सुखाय भवायैहिकसुखाय ।१३।

---

भाषा टीका ।

हे सूत ! तुम्हारा मंगल हो ! सात्वतों के पति श्री भगवान वसुदेवजी की भार्या देवकी के गर्भमें जिस इच्छासे अवतीर्ण हुए थे ? वह तुम जानतेहो ? ॥ १२ ॥
हे अंग ! जिन भगवान का अवतार जीव को क्षेम और मंगलके निमित्त है उनकी लीला कथा श्रवण करनेकी हमें वडी अभिलाषा-हैवह तुमको हमारे आगे वर्णन करना चाहिये ॥ १३ ॥

---

श्रीधरस्वामी ।

तत्प्रभावमनुवर्णयन्तस्तद्यशःश्रवणौत्सुक्यमाविष्कुर्वन्ति आपन्न इति त्रिभिः । संसृतिमापन्नः प्राप्तः विवशोऽपि । ततः संसृतेः अत्र हेतुः यद्यतोनाम्नः भयमपि स्वयं बिभेति ॥ १४ ॥
किञ्च यस्य पादौ संश्रायौ येषां अतएव प्रशमोऽयनं वर्त्म आश्रयो वा येषां ते मुनयः उपस्पृष्टाः सन्निधिमात्रेण सेविताः सद्यःपुनन्ति स्वर्धुनीगङ्गातस्याआपस्तु तत्पादान्निसृताः न तु तत्रैव तिष्ठन्ति अतस्तत्सम्बन्धेन पुनन्त्योऽपि अनुसेवया पुनन्ति तत्रापि न तु सद्य इति मुनीनामुत्कर्षोक्तिः ॥ १५ ॥

---

श्रीवीरराघवः ।

यतस्तन्नाम्नैवानिष्ट परिहारेष्ट प्रापण क्षममेवेत्यभिप्रायेण नाम प्रभाव माहुः आपन्न इति । घोरांगर्भजन्म जरामरणादि रूपां संसृति मापन्नः प्राप्तः पुमानूशत्रुरपि विवशः पारवश्येनापीत्यर्थः । यस्यश्रीकृष्णस्ययच्छब्दानाकोवा भगवतस्तस्येत्युत्तरत्रान्वयः नामगृणन्नुच्चरन्देहाऽवसान इतिशेषः । ततःसंसृतेः सद्यएव विमुच्येत मुक्तोभवेत् । कथं पारवश्येनाप्युच्चारण मात्रेणापि शत्रुरपि मुच्येतेत्यत्रोच्चारणं विशिंषति । यद्बिभेतिस्वयं भवइति यन्नामोच्चारणं प्रतिभवः संसारः स्वयंविभेति । भयमिति पाठेपि जन्म मरणादि भयहेतुत्वादूभव एवभयशब्देन विवक्षितः । देहावसान कालिक भगवन्नामोच्चारणस्याव्यवधानेन मुक्ति साधनत्वमितरकालिकस्यतु कर्मज्ञान योगादि वद्-भक्ति योगानुग्राहकत्वेन तद्द्वारेति विवेकः एतच्चषष्ठेऽजामिलोपाख्याने प्रपंचयिष्यते ॥ १४ ॥
आस्तां तावदवताराणां नाम माहात्म्यं तदीयानां माहात्म्यमेव वाङ्मनसागोचरमित्यभिप्रायेणाहुः यदिति । हेसूत यस्य भगवतः पादसंश्रयाः पादावेव प्राप्यत्वेन प्रापकत्वेनसंश्रयंत इति तथा । मुनयस्तत्पदारविंद मननशीलाः प्रशमायनाः शमदमादि गुणानामाश्र-याः तदीयाः स्पृष्टाः पादयोरिति शेषः पादस्पर्श मात्रेणापीति भावः सद्यएव पुनंतिस्पृष्टानितिशेषः एवंतत्पाद संबंधिन्याः स्वर्धुन्या-गंगाया आपोप्यनु सेवयास्नान पानादि रूपया सेवया पुनंति। स्वर्धुन्यापस्त्वनुसेवया पुनंति मुनयस्तदीयास्तूपस्पर्शमात्रेणापिपुनंतीतिके-चिद्व्याचक्षते। यथा स्वर्धुन्यापोनुसेवया पुनंति तथा मुनयोप्युपस्पृष्टाः पुनंतीति दृष्टांतो वाभिप्रेतः ॥१५॥

---

श्रीविजयध्वजः ॥

सात्त्वात्कृष्णचरितमेवानुवर्णनीयंनान्यद्यतस्तस्यवासुदेवादिनामोच्चारणादखिलबंधनिवृत्तिः तत्रकिंवक्तव्यंतच्चरितश्रवणमननाभ्यामित्याशयवंतआहुरित्याह आपन्नइति भवःसंसारः अहंकाररूपेणबंधकोरुद्रोवा यंप्रतिबिभेतिभयादपसृतोभवति यन्नामयस्यनाम-

(१) स्वयंभवः इति विजयध्वज वीरराघवयोः पाठः　(२) ऋषयःप्रशमायनाइति श्रीवल्लभपाठः ॥

### श्रीविजयध्वजः।

गृणान् उच्चारयन्विवशः बहुभ्यासात्घोरांसंसृतिमापन्नःपुरुषःततःघोरसंसारात्सद्यस्तदानीमेवविमुच्यतेतविशिष्टांमुक्तिमाप्नोति ॥ १४ ॥
किंच यत्पादसंश्रयाः यस्यपादावेवसंश्रयोयेषांतेतथोक्ताः प्रकृष्टःशमोभगवन्निष्ठैवायनमाश्रयोयेषांतेप्रशमायना मुनयः यैःप्राणि-भिरुपस्पृष्टास्तान्सद्यःपुनंतिपवित्रीकुर्वंति यत्पादसंश्रयादितिपाठे यच्चरणनिषेवणादात्मानंपुनंतीत्यर्थः तत्रनिदर्शनमनुसेवयाअनुसे-वनेननिषेवणेनउपस्पर्शनस्नानाचमनादिनास्वर्धुनीगंगेवयथालोकंपुनातितथेत्यन्वयः स्वर्धुन्यापइतिपाठेगंगाजलपरमाणवः चिरकालसेव-या मुनयःसद्यइतिशेषः ॥ १५ ॥

---

### क्रमसन्दर्भः।

विवशोऽपि विशेषेण पराधीनःसन्नपि। यस्य श्रीकृष्णस्य नाम। तस्य सर्वावतारित्वादवतारनाम्नामपि तत्रैव पर्य्यवसानात्। अत-एव साक्षाच्छ्रीकृष्णादपि तत्तन्नामप्रवृत्तिः प्रकारान्तरेण श्रूयते श्रीविष्णुपुराणे। तत्र त्वखिलानामेव भगवन्नाम्नां कारणान्यभवन्निति हि गद्यम्। तदिदञ्च वासुदेवदामोदरगोविन्द केशवादिनामवज्ज्ञेयम् ॥ १४ ॥
किञ्चयत्पादेति। यस्य श्रीकृष्णस्य पादौ सम्यगाश्रयौ येषाम्। अतएव प्रशमायनाः। शमोभगवन्निष्ठबुद्धिता। "शमो मन्निष्ठताबु-द्धेरिति स्वयं श्रीभगवद्वाक्यात्। स एव प्रकृष्टः प्रशमः। साक्षात्पूर्णभगवच्छ्रीकृष्णसम्बन्धित्वात् प्रशम एव अयनं वर्त्मआश्रयो येषां ते श्रीकृष्णलीलारसाकृष्टचित्ता मुनयः श्रीशुकदेवादयः सद्यः पुनन्ति सवासनपापेभ्यः शोधयन्ति। स्वर्धुनी गङ्गा तस्या आपस्तु "योऽसौ निरञ्जनो देवश्चित्स्वरूपी जनार्द्दनः। स एव द्रवरूपेण गङ्गाम्भो नात्र संशयः,, इति स्वयं तथाविधरूपा अपि साक्षाच्छ्रीवामन-देवचरणान्निःसृता अपि अनुसेवयासाक्षात् सेवाभ्यासेनैव तथा शोधयन्ति न सन्निधिमात्रेण सेवया साक्षात् सेवयापि न सद्य इति। तस्या अपि श्रीकृष्णमाश्रितानामुत्कर्षात्तस्योत्कर्षः। एवमेव ततस्तद्यशसोऽप्याधिक्यं वर्ण्यते। "तीर्थं चक्रे नृपोनं यदजनि यदुषु स्वःसरित् पादशौचामिति। टीका च। इतः पूर्व्वं स्वःसरिदेव सर्व्वतोऽधिकं तीर्थमित्यासीत् इदानीं तु यदुषु यदजनि जातं तीर्थं श्रीकृ-ष्णकीर्त्तिरूपमेतत् स्वःसरिद्रूपं पादशौचं तीर्थमूनमल्पं चक्रे इत्येषा ॥ १५ ॥

---

### सुबोधिनी

घोरां संसृतिं सर्पादियोनि भूतांमहाव्याध्यादि रूपांवाआपन्नः यस्य अवतारस्य नामविवशःपरवशः वेः कालस्य वशोवा गृणन्नुच्चरन्नेवततः सद्योविमुच्यते तत्राह अंतकाले कालस्याधिकारी भयनामा कश्चित् मृत्यु पाशेनसर्वानेवगृह्णाति यच्चतुर्थस्कंधे वक्ष्यतेसैनिका भयनाम्न इत्यत्र सद्यस्तस्यपाशान्मुच्यतइत्यर्थः ननुकथंसनामकथनमात्रेणपाशान्मुंचाति तत्राह यद्विभेति यस्मान्नाम्नोभयंस्वयं बिभेतिस्वरूप नाशेनबिभेति नतुवहिः पदार्थनाशेनएवंहि भगवन्नाममाहात्म्यंयत् श्रोतॄन् मुक्तान् करोति ततोभयमपि मुच्यते इत्यर्थः अथवास्वरूप भूतं भयमपिमुच्यतइत्यर्थः द्वैतदृष्टिर्गच्छति "द्वितीयाद्वैभयंभवतीतिश्रुतेः अतः अग्रेउत्पत्स्यमानानांनाम्नामुक्तिः ॥ १४ ॥
ननुनामोच्चारण सामर्थ्य रहितानां वृक्षपश्वादीनां कागतिरितिचेत्तत्राह यत्पादसंश्रयाइति ॥
भक्तस्पर्शनातेपि मुच्यंतइत्यर्थः यस्यभगवतः पादौसंश्रय भूतौयेषां भगवतः समाश्रयणं ज्ञानमार्गेपि भवति यथाचज्ञानिनां देहाध्या साभावात् तत्स्पर्शननमुक्तिः किंतुतदुपदेशेनेति तद्व्यावृत्त्यर्थं पादपदप्रयोगः पादसंश्रयणं भक्तिमार्ग एव गुरुत्वप्रकार व्यावृत्त्यर्थं समु-पसर्गः सूतेतिसंबोधनंपावित्र्यानुभवज्ञापनार्थं यथासूतोपिसन् महापुरुष कृपया ब्राह्मणैर्यज्ञादिष्वपि संव्यवहारं संभजते ऋषयो मंत्र द्रष्टारः प्रशमायनाः ज्ञानिनः प्रकृष्टः शमः अयनंयेषामितिते उभयेपि यत्पादसंश्रयाः पुनंतीति योजना अथवा पादसंश्रयाः ऋषयः प्रश-मायनाश्च भूत्वा ज्ञान कर्मणीति प्राप्य त्रितय संपन्नाः सर्वेपावित्र्यहेतवोभवंति स्वयंहिशुद्धाः संतः परान् पुनंति अतः स्वशुद्ध्यर्थं ज्ञान कर्मणी युक्तेनतु साक्षात्पावन संबंधस्तयोः उपस्पृष्टाः समीपेदेह संबंधमात्रेण पुनंतीत्यर्थः कालव्यवधानेनहि सर्वत्रपावनं दृष्टम् "त्रिःस्वा-ध्यायंवेदमधीयीतत्रिरात्रं वा सावित्रीं संवत्सरादेवात्मानं पुनीत" इत्यादिभिः मुनयइति पाठेपि मननं कर्मयोगोवा क्षौर्यादिना स्पर्शव्यावृत्त्य र्थं उपेति अग्रेण वा संबंधः तेषां तुदृष्ट्या दिनापि पावनं संभवति स्वर्धुन्यापो गंगाजलमनुसेवया पुनाति भगवत्सेवकानेवपुनातीत्यर्थः "प्रायश्चित्तानि चीर्णानीति वाक्यात् सद्यः पुनातिगांगेयमित्यपि नारायण संमुखी करण द्वारा पुनंति अथवा उपस्पृष्टाः स्वर्धुन्यापः सद्यः पुनंतीति दृष्टांतःनु इति वितर्केभगवद्भक्ताः गंगाच पुनंतोपि भगवत्सेवयापुनंति नान्यथेति वितर्कः आपाततः पावनंतुनात्र विवक्षितं पर-मपावनंतु माया स्पर्शाभावः॥ १५॥

---

### श्रीविश्वनाथ चक्रवर्त्ती।

ततः संसृतेः। अत्र घोरामिति विवश इति सद्य इति पदत्रयेण अजामिलादयः सूचिताः। यत् यतो नाम्नः एकस्मादपि स्वयं भयं स्वयं भगवानितिवन्मूलभूतं भयं महाकाल एव विभेति किं पुनर्मृत्युर्यमश्च किमुततमां यमदूता इति भावः ॥ १४ ॥

---

कोवाभगवतस्तस्यपुण्यश्लोकेड्यकर्म्मणः ।
शुद्धिकामोनशृणुयाद्यशःकलिमलापहम् ॥ १६ ॥
तस्यकर्म्माण्युदाराणिपरिगीतानिसूरिभिः ।
ब्रूहिनःश्रद्दधानानांलीलयादधतःकलाः ॥ १७ ॥

श्रीविश्वनाथ चक्रवर्त्ती ।

यत्पादावेव संश्रित्यैव वर्त्तमानाः सद्य इति स्मृतमात्रा एव पुनन्ति अविद्यामालिन्यानि शोधयन्ति किं पुनर्दृष्टाः स्पृष्टाः सेविता वेति व्याख्येयम् । "येषां संस्मरणात् पुंसः सद्यः शुद्धयन्ति वै गृहाः । किं पुनर्दर्शनस्पर्शपादशौचासनादिभिरित्यनेनैकार्थ्यप्राप्तेः । स्वर्धुन्याआप- इत्यत्रापि तस्याः सकाशाद्दूरदेशं नीता इत्येव व्याख्येयम् । "मुक्तिस्त्वद्दर्शनादेव न जाने स्नानजं फलमिति वाक्यार्थविरोधात् । किञ्च स्वर्धुन्या दर्शनादेव साधूनाञ्च स्मरणादपि मुक्तिरिति । तदपि साधूनामेवोत्कर्षो ज्ञेयः । ततश्च तास्तत्पादान्निसृता एव अतस्तत्स- म्बन्धेन पुनन्त्योऽपि उप उपरिस्पृष्टाः सत्यः पुनन्ति । नुर्विकल्पे सेवया प्रणत्यादिना वा आदृता वा स्वर्धुन्याप इति समासान्ताभावः आर्षः ॥ १५ ॥

---

सिद्धान्त प्रदीपः ।

संसृतिं संसार लक्षणाम् । ततः संसृतेर्विमुच्येत मुक्तो भवति ॥ १४ ॥ १५ १६ ॥

---

भाषा टीका ।

घोर संसार को आपन्न पुरुष विवश होकर श्री जिनका नाम ग्रहण करनेसे शीघ्रही मुक्त होजाता है । जिन भगवान से भय अर्थात् मृत्यु को भी भय होताहै ॥ १४ ॥

हे सूत ! प्रशमायन अर्थात् शांति निष्ठ मुनि गण जिन श्रीभगवान के चरण का आश्रय करने से गंगाजी से भी अधिक महिमा वाले होते हैं । क्योंकि गंगाजी तो बहुकाल सेवा करनेसे पवित्र करती हैं । और ये हरिजन दर्शन स्पर्शन लाभ से जीवों को पवित्र करते हैं ॥ १५ ॥

---

श्रीधरस्वामी ।

पुण्यश्लोकैरीड्यानि स्तव्यानि कर्म्माणि यस्य तस्य । यशः कलिमलापहं संसारदुःखोपशमनम् ॥ १६ ॥
प्रश्नान्तरं तस्येति । उदाराणि महान्ति विश्वसृष्ट्यादीनि । सूरिभिर्नारदादिभिः । कला ब्रह्मरुद्रादिमूर्त्तीः ॥ १७ ॥

---

श्रीवीरराघवः ।

उक्तेरन्यैश्चगुणैस्तंविशेषतस्तच्चरित्रमवश्यमात्मशुद्धिमिच्छद्भिः श्रोतव्यमित्यभिप्रायेणाहुःकोवेति । तस्योक्त विधस्यपुण्यस्य शृण्वतां वदतां चपुण्यावहः श्लोक्यतइति श्लोको यशोयस्य । अतएव सचासावीड्यंस्तुत्यं कर्म चरित्रं यस्य तस्य भगवतो यशः कलि- मलापहं कलिप्रयुक्त पापहंतृचित्तशुद्धिकामः कोवापुमान्न शृणुयात्सर्वो पिशृणुयादेवेत्यर्थः ॥ १६ ॥

अतोलीलया नतुकर्मणेतिभावः कलाः मूर्तीरवतारांतररूपाः दधतस्तस्योदाराणि विपुलानि सूरिभिर्नारदपराशरपाराशर्यादिभिःपरि- गीतानिच कर्माणि चरितानि श्रद्दधानानांनोऽस्मभ्यं ब्रूहीति लीलयेत्यनेनावताराणामकर्ममूलत्वमुक्तम् कलादधतइत्यनेन श्रीकृष्णस्या- वतारित्वप्रतीत्यापूर्णावारत्वं सूचितं तेनैवावतारांतर कथाप्रश्नश्च कृतइत्यर्थः ॥ १७ ॥

---

### श्रीविजयध्वजः ।

पुण्यश्लोकैर्ब्रह्मादिभिःईड्यंस्तुत्यंकर्मकंसवधादिचरितंयस्यसतथा पुण्यश्लोकश्चायमीड्यकर्मेतिवातस्यहरेःकलिमलापहंकालिनिमित्तमलंपापलक्षणमपहंतीतियशश्चरितापरपर्यायं शुद्धिकामः अंतःकरणनिर्मलतांकामयमानःकोवापुरुषःनश्रृणुयादित्येकान्वयः ॥ १६ ॥

नकेवलंकृष्णकथैववक्तव्यामत्स्याद्यवतारांतरकथापीत्याह तस्यकर्माणीति लीलयामत्स्यादिकलाःदधतःतस्यहरेःसूरिभिर्ब्रह्मादिभिः परिगीतान्युदाराण्यक्लिष्टान्युद्धतदोषाणिवाकर्माणिब्रूहीत्येकान्वयः ॥ १७ ॥

---

### क्रमसन्दर्भः ।

एतस्य दशमस्कन्धस्यैव संवादितां व्यनक्ति को वेति । शुद्धिकामोऽपि यतः कलियुगस्यापि मलापहं यस्मादेवं तस्मात् ॥ १६ ॥

तस्येति । उदाराणि परमानन्ददातॄणि जन्मादीनि । स्वयं परिपूर्णस्य लीलया अन्या अपि कलाः पुरुषादिलक्षणा दधतः तत्तदंशाज्ज्यादाय तस्यावतीर्णस्य सत इत्यर्थः ॥ १७ ॥

---

### सुबोधिनी ।

भगवद्यशः श्रवणे नास्माकं हृदयेस्वतः स्फुरितम् अतः सामान्यतोज्ञातं विशेषार्थं प्रश्नः यद्यपि भक्तिभावात् स्वतःपुरुषार्थत्वेनभगवद्यशः श्रवणं न भवति तथापि सन्मार्ग वर्तिनां शुद्धिरपेक्षत इति तदर्थं श्रवणं विशेषतः कलौदेशकाल द्रव्य कर्तृ मंत्र कर्मणांषरणामप्यशुद्धकरणात् स्वातंत्र्यव्यावृत्त्यर्थक इति वेत्यनादरे अश्रोतारो दैत्यांशानगण्यंत एवेति जीवानांस्वत उत्कृष्टा ब्राह्मणा एव शुद्धिः भगवत इत्युक्तं तस्येत्यवतीर्णस्य सुलभत्वाय लौकिकं प्रभुस्तोत्रवत् अनाद कर्तृकव्यावृत्त्यर्थमाह ॥ पुण्यश्लोकेड्य कर्मणइति पुण्याश्लोका कीर्तिर्येषां कीर्त्तन कर्तृणामपि कीर्तिर्यत्र सर्वान् पुनाति तत्रकिं वक्तव्यं कीर्तनस्य सर्वपावकत्वंतानपि पुनातीति वातेषांपाविव्यापेक्षानास्तीतिवा अनेन कीर्तिः पवित्रेष्वेव प्रतिष्ठितेति बोधितं कर्मसामान्य ग्रहणादुत्कर्षाधायक कर्मव्यतिरिक्तान्यपि कर्माणि पावनानीत्युक्तं पुण्यश्लोक वचनादेवंज्ञायते कीर्तिमद्भिः सहसंबंधः प्रायेण सर्वेषां भवति तेच भगवंतमेव कीर्त्तयंते अतो भगवत्कीर्ति श्रवणं सुलभमिति अत्र आपाततोपि शुद्धिः श्रवणेन तत्र शुद्धिकामः कथं न शृणुयात् आधारोत्कर्षाधायकसर्वलोकाल्हादकविसर्पिगुणः कीर्तिर्यशः कलौ सर्वेषां अपहतपाप्मत्वाभावान्नतैः कलिदोषनिवृत्तिः भगवतस्तु कालात्परत्वात्तत्कीर्तेरपितत्परत्वं अतः कलिदोष निवर्त्तकमिति ॥ १६ ॥

एवं प्रयोजन प्रश्नमाह ॥ तस्यकर्माणीति ॥

तादृशप्रयोजनस्यश्रुतस्यहृदयेसमागमनार्थंकर्माण्येव पृच्छंति तस्य कर्माणीति कर्मश्रवणेनसत्फलं भगवतादेयमित्यपिनास्ति अन्यानिचफलानिकर्मैवपात्रापात्र विवेचनव्यतिरेकेणैवअन्येभ्योपिबहुप्रयच्छंतीत्याह उदाराणीति उदारादिविशेषणानि नव्यावर्त्तकानि किंतुकर्मोद्देशेनोदारत्वादिविधीयते प्रथमत एव विशेष्यनिर्देशात् अवांतरफलप्राप्त्यर्थमुदारत्वनिर्देशः मुख्यं फलं भगवतएव तेषामज्ञानाभावमाह परिगीतानि सूरिभिरिति परितोगीतानीति सर्वतोदूरादूब्रह्मणःसम्भवः सूरिभिरित्यन्यथाकथनव्यावृत्तिः तर्हि शौनकादीनामपि सुलभत्वादकथनमित्याशक्याह श्रद्दधानानामिति श्रद्धयाहि पुनः पुनः श्रवणेच्छानिरूपिता कदाचिदपिरुच्यभावोनास्तीत्यभिप्रायेणाहुः लीलया दधतः कलाइति अनायासेनहर्षात् क्रियमाणा चेष्टालीला तयानूतनाएवकलाः प्रतिक्षणंध्रियंते भगवता यथातथा तत्कर्मणामपि चंद्रस्येव नूतनकलासंबंधात् कदाचिदपिनारुचिः इदंहिविशेषणं पूर्वोक्तनिर्वाहकम् ॥ १७ ॥

---

### श्रीविश्वनाथचक्रवर्ती

शुद्धिरात्मप्रसादः येनात्मा सुप्रसीदतीति पूर्व्वोक्तेः । यशः ब्रह्मरुद्रेन्द्रजयादिकं रासक्रीड़ादिकंचात्रासाधारणमेव ॥ १६ ॥

कर्म्माण्यवतारान्तरसाधारणान्यसुरवधादीनि । उदाराणि भक्ताभीष्टप्रदानि । कला अवतारान् दधत इति वर्त्तमानकालेन तदवताराणां नित्यत्वं तस्य च पूर्णत्वमायातम् ॥ १७ ॥

---

### सिद्धान्तप्रदीपः ।

प्रश्नांतरंतस्येति उदाराणिविश्वजन्मादीनि ॥ १७ ॥ प्रश्नांतरमथेति ॥ १८ ॥

---

अथाख्याहिहरेर्धीमन्नवतारकथाःशुभाः।
लीलाविदधतःस्वैरमीश्वरस्यात्ममायया॥ १८॥
वयन्तुनवितृप्यामउत्तमःश्लोकविक्रमे।
यच्छृण्वतांरसज्ञानांस्वादुस्वादुपदेपदे॥ १९॥

भाषा टीका।

आत्मशुद्धि की कामना करने वाला संसार मे ऐसा कौन है जोभगवान का उस कलि मल नाशन यशको श्रवण नकरै॥
नलयुधिष्ठरादिक पुण्यश्लोकगण जिनके कर्मों का स्तव किया करतेहैं उन भगवानके कलिकलुष विनाशन यशको आत्मशुद्धिकी कामना करनेवाला कौन न श्रवण करैगा॥ १६॥
जो भगवान अपनी लीला के द्वारा ब्रह्मा शिव आदिकरूप धारण करते हैं उनके नारदादिक सूरियों करकै गायेगये उदार कर्मों को श्रद्धावान् इनसब मुनियों के आगै वर्णन करौ॥ १७॥

---

श्रीधरस्वामी।

प्रश्नान्तरं अथेति। अवतारकथाः स्थित्यर्थमेव तत्तदवसरे ये मत्स्याद्यवताराः तदीयाः कथाः। स्वैरं लीलाः कुर्वतः॥ १८॥
श्रीकृष्णावतारप्रयोजनप्रश्नेनैव तच्चरितप्रश्नोऽपि जात एव तथाप्यौत्सुक्येन पुनरपि तच्चरितान्येव श्रोतुमिच्छन्तस्तत्रात्मनस्तृप्त्यभावमावेदयन्ति वयन्त्विति। योगयागादिषु तृप्ताः स्मः। उद्गच्छति तमो यस्मात् स उत्तमास्तथाभूतः श्लोकी यशो यस्य तस्य विक्रमे तु विशेषेण न तृप्यामः अलमिति न मन्यामहे। तत्र हेतुः यद्विक्रमणं शृण्वताम्। यद्वा अन्ये तु तृप्यन्तु नाम वयन्तुनेति तुशब्दस्यान्वयः। अयमर्थः। त्रिधा ह्यलं बुद्धिर्भवति उदरादिभरणेन वा रसाज्ञानेन वा स्वादुविशेषाभावाद्वा। तत्र शृण्वतामित्यनेन श्रोत्रस्याकाशत्वान्नभरणमित्युक्तम्। रसज्ञानामित्यनेन चाज्ञानतः पशुवत्तृप्तिर्निराकृता। इक्षुभक्षणवद्रसान्तराभावेन तृप्तिं निराकरोति पदे पदे प्रतिक्षणं स्वादुतोऽपि स्वादु॥ १९॥

---

श्रीवीरराघवः

लीलयेत्यनेनावताराणामकर्ममूलत्वमुक्तम्। अथावतारचेष्टितानामकर्ममूलत्वंवदंतः कात्स्र्न्येन तदवतार चरित्राणि पृछंति। अथेतिहे धीमन्नात्ममायया आत्मनः स्वस्यमायया आश्चर्यशक्ति युक्तेन। आश्चर्यत्वं मायाशब्द प्रवृत्तिनिमित्तं संकल्प रूपज्ञानेन वा "मायावयुनम् इति नैघंटुकाः "माययासततंवेत्ति प्राणिनां चशुभाशुभ मिति ज्ञानेऽभियुक्त प्रयोगः स्वैरं यथातथा लीलाश्चेष्टा विदधतः कुर्वत ईश्वरस्य सर्वनियंतुर्हरेराश्रित दुरितहरस्य भगवतःशुभाः शृण्वतांवदतांच शुभावहाः अवतार कथाः। अथकात्स्र्न्येनाख्यहि कथय।" मंगलानंतरारंभ प्रश्नकात्स्र्न्येष्वथो अथेतिनैघंटुकाः। आत्म माययास्वैरं लीलाविदधत इत्यनेन देवमनुष्यादि जातीयानामवतार चेष्टानामात्मीय संकल्प मूलत्वमकर्मवश्यत्वप्रयुक्तत्वंच सूचितम्॥ १८॥
नन्वाभीक्ष्ण्येन श्रुताएव भगवदवतार कथाभवद्भिरतस्ताःकिमर्थं पृच्छ्यंते तत्राहुः वयंयदुतमश्लोक चरितं शृण्वतामपि रसज्ञानां पदेपदे क्षणेक्षणे पुनः पुनर्वास्वादु रुचिजनकं भवति पूर्वपूर्वश्रवणापेक्षयोत्तर श्रवणेतीव रुचिकरमेव भवति इति श्रुतमपि पुनः पुनर्नवमेव भवतीतिभावः यद्यस्मात्पदेपदे स्वादुतःस्वादुतदुत्तमश्लोक विक्रमेन वितृप्याम इत्यन्वयः॥ १९॥

---

श्रीविजयध्वजः

तदेवास्माकंवर्णनीयमित्यभिप्रेत्याहुरित्याह अथेति यतएवंयच्छ्रद्धानानामस्माकंकलिमलापहमथतस्मादात्ममाययास्वरूपभूतेच्छयास्वैरंयथेष्टंलीलाःप्रलयजलविहारादिक्रीडाःविदधतईश्वरस्यस्वतंत्रस्यहरेः शुभाःमंगलाअवतारकथाः हेधीमन्नस्माकमाख्याहीत्येकान्वयः॥ १८॥
भवतांबहुशःश्रुतहरिकथानांकिमित्ययमुत्कंठाविशेषइत्यतउच्यते वयमिति वयमुत्तमश्लोकस्यहरेर्विक्रमैःश्रुतैर्नवितृप्यामः अन्येषांतृप्तिरस्तुवानास्माकमलंबुद्धिरित्येतस्मिन्नर्थेतुशब्दः यद्विक्रमजातंशृण्वतांरसविवेकविदुषांस्वादुस्वाद्वातिमधुरंभवतीत्येकान्वयः "रसोरागेविषेवीर्येतिक्तादौपारदेद्रव,, इति तद्विशेषज्ञावारसज्ञाः॥ १९॥

---

## क्रमसन्दर्भः

अथेति। श्रीकृष्णस्य तावन्मुख्यत्वेन कथय। अथ तदन्तरं आनुषङ्गिकतयैवेत्यर्थः। हरेः श्रीकृष्णस्य। प्रकरणबलात् अवताराः पुरुषावताराः गुणावताराः लीलावताराश्च तेषां कथाः लीलाः सृष्ट्यादिकर्म्मरूपाः भूभारहरणादिरूपाश्च। आत्ममायया निजेच्छारूपया शक्त्या। "आत्ममाया तदिच्छा स्याद्गुणमाया जडात्मिकेति महासंहितातः॥ १८॥

टीकायामिक्षुभक्षणवदिति। इक्षुभक्षणे यथा स्वादविशेषाभावो भवति तथानेत्यर्थः। भगवद्विक्रममात्रे तु न तृप्याम एव। तत्रापि "तीर्थं चक्रेनृपोनमित्याद्युक्तलक्षणस्य सर्व्वतोऽप्युत्तमश्लोकस्य श्रीकृष्णस्य विक्रमे विशेषेण न तृप्यामः॥ १९॥

---

## सुबोधिनी।

एवमेकोपक्रमेण प्रयोजन कर्मणी पृष्टे अथभिन्नोपक्रमेण अवतारकथां पृच्छन्ति ॥ अथाख्याहीति ॥ यद्यपि केचनअवताराः सत्सदुपाख्यान श्रवणोपक्रमेण सर्वेऽवताराः सविशेषाज्ञातव्याः अतऔत्सुक्यात् पृथक् पृष्टः अथेतिभिन्नोपक्रमेहरेरिति सामान्यतोवतारे परदुःख दूरीकरणं निमित्तमित्युक्तं अवतारस्वरूपस्य दुर्ज्ञेयत्वात् नसर्वजनानां तज्ज्ञानमिति विशेष संबोधनं धीमन्निति अवताराणांकथाः कथमवतारः कस्यावतारः कुत्रावतारइति ॥ चतुर्थोकथावक्तृश्रोतृप्रवर्त्तकानांशुभफलप्रदाः वस्तुतोपिशुभाः लोके पुत्रजन्म कथावत् यत्रापियेप्ववतारेषुस्वेच्छयालीलावताराः तेवक्तव्या इत्याहलीला विदधत इति स्वैरमिति मर्यादातिक्रमेणापितत्र हेतुरीश्वरस्येतिसर्वभवन सामर्थ्यं माया अन्यथाकरणनिर्वाहे दोषाभावेचहेतुत्वेन निर्दिष्टाआत्मेतिनान्येनज्ञातुमुल्लंघितुंवाशक्या ॥ १८ ॥

नन्वेवंविशेषेणसर्वार्थपरिज्ञानवतांकिंपुनः श्रवणेनेत्याशंक्याह वयंत्विति ॥ येपुनः भगवत्कथारूपानभिज्ञाः तेकियत्कालंश्रुत्वानिवर्तंते नह्यत्ररसज्ञानिवर्त्तते तस्माद्येनिवर्त्तते तेतृप्ताः संतस्तेनिवर्त्तंतांवयंतुपुनः नवितृप्यामएवकुतोनिवृत्ताभविष्यामः निवृत्तिस्त्रेधासंभवति इतोप्युत्कृष्टेरसांतरे संभवति अस्याप्यभावेवारसाज्ञानाद्वा तत्र आद्येनिराकरोति उत्तमश्लोकविक्रमइति उत्तमैर्मुक्तैः ब्रह्मानंदानुभव युक्तैरपि श्लोक्यतेभगवान् तद्यथातथेत्थं भूतगुणोहरिरित्यत्रवक्ष्यते तस्मान्न भगवत्कथारसादधिकोरसः कश्चिदस्ति ब्रह्मानंदरसोपिन्यूनइतिअनेनैव दुर्लभतापिनिवारिता तस्यचविशेषेण क्रमः पादविक्षेपो यत्रसपराक्रमः विशेषेणक्रियाशक्त्याविर्भावः सचपूर्णः सर्वत्रतस्मान्नदुर्लभता तृतीयंनिराकरोति यच्छृण्वतामिति रसज्ञानंच श्रवणादेवभवति यथाहिलोके सूपकारविद्यासुनेच्छानिवृत्तिः किंपुनर्मूर्तत्वादुदरपूरणेन निवृत्तिः तथाश्रवणेपि विशेषोप्युक्तः श्रवणेनगृहीतस्यामूर्तत्वात् किंच रसाभिज्ञाः सर्वथाततोननिवर्त्तंते रसस्यानिवर्त्तकत्वात् अस्य चरसस्यपरात्परत्वात् किंच ॥ स्वादुस्वादुपदेपदइति यथाधिकारमत्रहिरसाविर्भावः यथा यथाह्यज्ञानंनिवर्त्तते तथातथा भगवद्रसास्वादो भवतियथा यथाद्वारविमोके ऽन्नस्यप्रथमप्रयोगेहि अविद्यायाः पूर्णत्वात् अल्परसास्वादः ततः प्रथमश्रवणेकाचिदविद्यानिवृत्ताचेत्तदाद्वितीयेधिकोरसः एवमुत्तरत्रापिपरमोरसः सर्वथामुक्तानाम् ॥ किंच ॥ प्रथमंवाक्यसमुदायेभगवान्प्रतीतः पुनः प्रत्येकवाक्येषुततःपदेपिपद्यते ज्ञायतेऽनेनेतिपदंप्रकृतिः प्रत्ययश्चतेनअक्षरार्थत्वेनज्ञातोभगवानतिरसप्रदइत्यर्थः ॥ १९ ॥

---

## श्रीविश्वनाथ चक्रवर्त्ती।

शुभा अमायिकीर्विदधत इति वर्त्तमानकालेन लीलानां नित्यत्वम्। आत्ममायया योगमायया॥ १८॥

उत्तमः सर्व्वश्रेष्ठः श्लोको यशो यस्य सः। यद्वा। उत्तमैः श्लोक्यते कीर्त्त्यते इति तस्य विक्रमे तु विशेषेण न तृप्याम अलमिति न मन्यामहे। तेन यागयोगादिषु तृप्ताः स्म इतिभावः। यद्विक्रमणं शृण्वताम्। यद्वा। अन्येतृप्यन्तु नाम वयं तु नेति तुशब्दस्यान्वयः। अयमर्थः। त्रेधा ह्यलं बुद्धिर्भवति। उदरादिभरणेन वा रसाज्ञानेन वा स्वादविशेषाभावाद्वा। तत्र शृण्वतामित्यनेन श्रोत्रस्याकाशत्वात् धिक्रमस्य चामूर्त्तत्वात् न भरणम्। रसज्ञानामिति रसाज्ञानेन पशुवत्तृप्तिर्निराकृता। पदे पदे प्रतिसुप्तिङन्तमेव प्रतिक्षणमेव वा स्वादुतोऽपि स्वाद्विति चर्व्वितस्य इक्षुदण्डादेरिव न नीरसत्वेन हेयत्वं प्रत्युतातिस्वादुत्वेन परमोपादेयत्वमिति॥ १९॥

---

## सिद्धान्तप्रदीपः।

भगवद्गुणश्रवणेश्रद्धातिशयंभगवत्तत्त्वाभिज्ञत्वं भगवद्गुणश्रवणेप्राप्तावसरत्वंचाहुः क्रमाद्वयमित्यादिभिस्त्रिभिः श्लोकैः ॥ उत्तमश्लोकायशांसियस्यतस्यविक्रमेचरित्रे॥ १९॥

---

## भाषा टीका।

और हे धीमन्! जो भगवान् अपनी मायासे स्वैर लीलाओं को विधान करते हैं उनकी शुभ अवतार कथा वर्णन करो॥ १८॥

यह मतजानना कि ये कथा सुनते सुनते तृप्त होगये होंगे। हम लोग उत्तम श्लोक भगवान के विभव सुनने में कभी तृप्त नहीं हैं। क्यों कि रसिक श्रोताओं को पद पद में स्वादु स्वादु होता है॥ १९॥

---

कृतवान्किलकर्म्माणिसहरामेणकेशवः । [१]
अतिमर्त्यानिभगवान्गूढःकपटमानुषः ॥ २० ॥ [२]
कलिमागतमाज्ञायक्षेत्रेऽस्मिन्वैष्णवेवयम् ।
आसीनादीर्घसत्रेणकथायांसक्षणाहरेः ॥ २१ ॥

### श्रीधरस्वामी ।

अतः श्रीकृष्णचरितानि कथयेत्याशयेनाहुः कृतवानिति । अतिमर्त्यानि मर्त्यानतिक्रान्तानि गोवर्द्धनोद्धरणादीनि मनुष्येषु असम्भावितानीत्यर्थः ॥ २० ॥

ननु यजनाध्ययनादिव्यग्राणां कुत एव कथाश्रवणावकाशः स्यात्तत्राहुः कलिमागतं ज्ञात्वा तद्भिया विष्णुपदं गन्तुकामाः दीर्घसत्रेण निमित्तेनात्रासीनाः हरेः कथायां सक्षणाः लब्धावसराः ॥ २१ ॥

---

### श्रीवीरराघवः ।

युक्तं चैतदित्यभिप्रायेणाहुः कृतवानिति कपटमानवः छद्ममानवः मनुष्यवत्प्रतीयमान इत्यर्थः एवमपि भगवान्पूर्णषाड्गुण्यः तथापि गूढः तत्त्वतोयमीश्वर इति केनापिनज्ञातः केशवः "क इति ब्रह्मणोनाम ईशोहं सर्वदेहिनाम् । आवांत्वदंग संभूततौ तस्मात्केशवनामवानिति रुद्रनिरुक्त केशव पदपुष्कल प्रवृत्ति निमित्ताश्रयः श्रीकृष्णोबलराम सहितः अतिमर्त्यान्यति मानुषाणि मनुष्यैः कर्तुमशक्यानीति यावत् वीर्याणि चेष्टितानि कृतवानेवेति प्रसिद्धिः मानुषाणि हिकर्माणि सकृच्छ्रुतानि पुनः पुनः शुश्रूषां जनयेयुः भगवद्वीर्याण्यतिमानुषत्वाद्विलक्षण विशयत्वादेवस्वविषयां शुश्रूषामप्युत्तरोत्तराधिकां विलक्षिणां जनयंति तत्रकिमुवक्तव्यमित्यर्थः अतस्तत्रनवितृप्याम इतिभावः अतोभगवत्कर्म श्रवणेश्रद्धावतां नोतानि कथयेत्यर्थः ॥ २० ॥

ननुभगवद्वीर्याणि बहूनिमहताकालेन श्रोतव्यानिभवतां तुनित्यंतपश्चरतांकोऽवसर इत्याहुःकलिमिति । कलितपोविघ्नकरंकलियुगमागतं प्रवृत्तंविज्ञायालक्ष्यवयमुपायांतरेण कलिंजेतुमशक्ताहरेः कलिकृतदोषहरस्य भगवतः कथायांनिमित्त भूतायां कथाश्रवणार्थमित्यर्थः सक्षणाः सावसराः लब्धावसराइति यावत् अस्मिन्वैष्णवे विष्णोः संबंधिनितत्सान्निध्यवतिक्षेत्रेनैमिशाख्ये दीर्घसत्रेण सहस्रवत्सरपर्यतेनब्रह्मसत्रेण अध्ययनेनवसतीतिवद्धेत्वर्थे तृतीया दीर्घसत्रार्थमित्यर्थः आसीनाउपविष्टावयंभवामः ॥ २१ ॥

---

### श्रीविजयध्वजः ।

संप्रतिकृष्णावतारचरितश्रवणएवउत्कंठाविशेषइत्यभिप्रेत्याहुरित्याह कृतवानिति स्वमहिम्नागूढःकपटमानुषःकेशवोभगवान्रामेणसहयानिमर्त्यवीर्यमतिक्रम्यविद्यमानानिवीर्याणिपराक्रमलक्षणानिकृतवान्किलतान्यस्माकंब्रूहीत्येकान्वयः मानुषेष्वपिकंसुखंपटतिप्राप्नोतीतिकपटमानुषःइत्यर्थोपिग्राह्यइति ॥ २० ॥

दीर्घसत्रेदीक्षितानामस्माकंहरिकथाश्रवणावसरोस्तीत्याहुरित्याह कलिमागतमिति आगतंप्रविष्टंकलिमाज्ञायास्मिन्वैष्णवेक्षेत्रेदीर्घसत्रेणासीनाव्यापारांतरंविहायवयंहरेःकथायांकथाश्रवणेसक्षणाःसावसराइत्येकान्वयः ॥ २१ ॥

---

### क्रमसन्दर्भः ।

ननु कथम्वा मानुषः सन्नतिमर्त्यानि कृतवान् तत्राह कपटमानुषः । पार्थिवदेह विशेष एव मानुषशब्दः प्रतीतः तस्मात् कपटेनैवासौ तथा भातीत्यर्थः । वस्तुतस्तु नराकृतेरेव परब्रह्मत्वेनासत्यपि प्रसिद्धमानुषत्वे नराकृतिनरलीलत्वेन लब्धमप्रसिद्धमानुषत्वमस्त्येव । तत् पुनरैश्वर्याव्याघातकत्वान्न प्रत्याख्यायत इति भावः । अतएव स्यमन्तकाहरणे प्राकृतं पुरुषं मत्वेत्यनेन जाम्बवतोऽन्यथाज्ञानव्यञ्जकेन वाक्येन तस्य प्राकृतत्वं निषिध्यपुरुषत्वं स्थाप्यते । एवं "मायामनुष्यस्य वदस्व विद्वन्नित्यादिष्वपि ज्ञेयम् । यस्मात् कपटमानुषः तस्मादेव गूढः । स्वतस्तु तद्रूपतयैव भगवानिति ॥ २० ॥ २१ ॥ २२ ॥

---

१ वीर्याणीति श्रीवल्लभ वीरराघवयोः पाठः　　( २ ) कपटमानवइति वीरराघव सिद्धांतप्रदीपपाठः ।

## सुबोधिनी ।

किंच ॥ विशेषाकारेणकृष्णावतारकथाश्रोतव्येत्यभिप्रायेणाहकृतवानिति ॥ किलेतिप्रसिद्धेआश्चर्येणात्रप्रसिद्धिरुक्ताअवस्थासाधन विरहेपिवीर्यकरणात् अतः कृष्णावतारवीर्याणिकिलअलौकिकानि किंच एकत्रैकदाअविशेषेणावतारेणचबीर्याणिनाकियंतेअत्रतुरामेणास हेत्युभयरूपकरणमुक्तम् किंच सर्वेष्ववतारेषुब्रह्मेशयोर्नसुखदानंतयोरपिगुणाधिष्ठातृत्वेनस्पर्द्धादिसंभवात्तयोरर्थेहिताकरणात्तद्भक्तव धात्वतदत्रकिमपिनास्तीत्याहकेशवइति कश्चईशश्चकेशौकेशयोर्वमममृतंयस्मादितितयोरप्यानंददायीवीर्याणामुत्कर्षमाह अतिमर्त्यानीतिअति क्रांतमर्त्येयेभ्यइतिवीर्यश्रवणेहिपुनर्नमर्त्यशरीरसंबंधइत्यर्थः अथवामर्त्यमतिक्रांतानिआनंदमात्रकरपादमुखोदरादित्वात्तत्रहेतुर्भगवानिति नभगवदवतारइत्यर्थः तर्हिकथंशरीरप्रतीतिस्तत्राह गूढःकपटमानुषइतिअयंलोकोहिगुप्तः स्वसच्चिदानंदरूपतांनप्रकाशयतितत्रहेतुभूतंवि शेषणंकपटमानुषइतिकपटेनलोकानांबुद्धिमोहनप्रकारेणमानुषः तदेवरूपंमानुषरूपवत्प्रतिभासयतीत्यर्थः ॥ २० ॥

तस्मात्त्वयावक्तव्यमितिसिद्धेश्रवणेस्वाधिकारमाहुः द्वाभ्याम् ॥ कलिमागतमिति । कलौतुसर्वधर्माणांनिवृत्तिरितिसूतकेसावकाशइवक लौसावकाशाः धर्माधिकारेहिसतिधर्मत्यागभयात्वैयग्र्यंकरणंवासंभवतिमर्यादातिक्रमेपुनः पापबाहुल्यात्भगवत्कथारुचिरेवनिवृत्ताभव ति तस्मात्सर्वदोषनिवर्तकः कलिरिति तस्मिन्नागते कथायां सक्षणावैष्णवइतियत्रक्वचित् कथाश्रवणेदैत्यैर्बुद्धिनाशः संभतितदासर्वंन- श्येत् तन्निवृत्त्यर्थंक्षेत्रेस्मिन्नित्युक्तम् किंच सत्रवेदिरप्येषाततोपिनदैत्यसंबंधइति अस्मिन्नितिनिर्देशः कलिकालादेःस्मार्तत्वात्कथं वैदिक विचारेणानधिकार इत्याशंक्याह आसीनादीर्घसत्रेणेति तथाचदीक्षितानामन्यकर्मनिवृत्तिः श्रौतात्समाप्तौपुनःकर्मसंबंधात् दीर्घसत्रारंभः तस्मात्सर्वथा सावकाशाइत्याह कथायां सक्षणाइति यदिकथासमारभ्यते तदासहस्त्र संवत्सरमितः कालःक्षणायतइति क्षणपद प्रयोगः नसर्वत्र सक्षणाःकिंतुहरेः कथायामेव ॥ २१ ॥

---

## श्रीविश्वनाथचक्रवर्ती

विक्रममेव स्पष्टीकुर्व्वन्ति कृतवानिति । अतिमर्त्यानि नराकृतिपरब्रह्मत्वात् मर्त्योऽपि मर्त्यानतिक्रान्तानि गोवर्द्धनोद्धरणादीनि तात्का- लिकमनुष्येष्वसंभावितानीत्यर्थः । तदपि गूढः । तत्र हेतुः कपटमानुषः । कपटं भक्तहितार्थं ब्रह्मावेशादिना प्रार्थनलक्षणं मानुषेषु प्राकृ- तेषु जरासन्धादिषु यस्य । तथा कपटं प्रेमविलासार्थं धर्म्मोपदेशादिलक्षणं मानुषेषु वेणुनादाकृष्टगोपीकुलेष्वप्राकृतेषु यस्य सः गड्वा- दित्वात् सप्तम्याः परनिपातः । तेषां तेषां मायामोहनात् प्रेम्णा मोहनाच्चैवं कपटी नेश्वरोभविमतुर्हतीति प्रत्यायनादूगूढइत्यर्थः ॥ २० ॥

ननु याज्ञिकानां युष्माकमीदृशं कृष्णयशःश्रवणौत्सुक्यमतिचित्रं सत्यं सम्प्रतित्वस्माकं याज्ञिकत्वं प्रथामात्रमेव जातमितिजा- नीहीत्याहुः कलिमिति । सक्षणा लब्धावसराः सोत्सवा वा ॥ २१ ॥ कर्णधारो नाविकः ॥ २२ ॥

---

## सिद्धांतप्रदीपः ।

कउत्तमश्लोकइत्यपेक्षायामाहुः ॥ कृतवानिति ॥ भगवान् षडैश्वर्यवान्केशवः "कइति ब्रह्मणोनामईशोहं सर्वदेहिनाम् ॥ आवांतवांग- संभूतौतस्मात्केशवनामवानिति हरिवंशेशिवेनैवोक्तत्वात् ॥ ब्रह्मेशजनकः मरणधर्मानतिक्रांतानिवीर्याणिकृतवान् ॥ यःसउत्तमश्लोकः नन्वेवमितरेकुतोनजानंतीत्यतआहुः गूढः ॥ मायामोहितैर्दुर्ज्ञेयः । कुतः यतः कपटमानवः ॥ कपटानांमायाश्रितानां मानवः मनुष्यवत्प्रतीय- मानः ॥ वक्ष्यतिच"मायाश्रितानांनरदारकेणेति ॥ २० ॥ २१ ॥

---

## भाषा टीका ।

मनुष्य नाट्यमें गूढ श्री केशव भगवान नै श्रीवलदेवजी सहित जोसब अतिमानुष कर्म किये हैं वो हमारे आगै कथन करो ॥ २० ॥

हम समस्त मुनिगण कलियुग आया जानकर इस वैष्णव क्षेत्र में दीर्घ सत्र के उद्देश सै एकत्र होकर बैठेहैं । यज्ञतौ हमारा निमित्त मात्र है । हरि कथा श्रवण करने हीको यह अवसर हमनै निकाला है ॥ २१ ॥

---

## श्रीधरस्वामी ।

अस्मिंश्च समये त्वद्दर्शनमीश्वरेणैव सम्पादितमित्यभिनन्दन्ति त्वं न इति । कलिं निस्तरितुमिच्छतां अर्णवं निस्तितीर्षतां कर्णधा- रो नाविक इव ॥ २२ ॥

---

त्वंनःसन्दर्शितोधात्रादुस्तरंनिस्तितीर्षताम् ।
कलिंसत्त्वहरंपुंसांकर्णधारइवार्णवम् ॥ २२ ॥
ब्रूहियोगेश्वरेकृष्णेब्रह्मण्येधर्म्मवर्म्मणि । (१)
स्वांकाष्ठामधुनोपेतेधर्म्मःकंशरणंगतः ॥ २३ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्यां
प्रथमस्कन्धे नैमिशीयोपाख्याने ऋषिप्रश्नो नाम
प्रथमोऽध्यायः ॥ १ ॥

——:-*-:——

श्रीधरस्वामी ।

पुनः प्रश्नान्तरं ब्रूहीति । धर्म्मस्य वर्म्मणि कवचवद्रक्षके । स्वां काष्ठांमर्यादां स्वरूपमित्यर्थः । अस्यचोत्तरं कृष्णे स्वधामोपगते इत्यादिश्लोकः ॥ २३ ॥

इति श्रीमद्भागवतभावार्थदीपिकायां प्रथमस्कन्धे प्रथमोऽध्यायः ॥ १ ॥

---

श्रीवीरराघवः

किंच पुंसां सत्त्वहरंतप आदिसारहरमतएवदुस्तर मुपायांतरैस्तर्तुंजेतुमशक्यंकलिं निस्तितीर्षतांतर्तुमिच्छतांनोऽस्माकमर्णवं सागरं निस्तितीर्षतां जनानांकर्णधारइवत्वं धात्राईश्वरेणसंदर्शितः उपायत्वेनेतिशेषः दैववशादिदं संपन्नमितिभावः ॥ २२ ॥

स्वस्ववर्णाश्रमधर्मेणैवकलिंतरतः किंहरिकथा श्रवणेनेतिइमांशंकांनिराकुर्वंतः प्रश्नमुपसंहरंति । ब्रूहीति । ब्रह्मणिब्रह्मकुलेसाधुः ब्रह्मण्य; तस्मिन्धर्मवर्मणि धर्मस्यवर्मवत्कवचवत्पालके योगेश्वरेभक्तियोगाराध्ये श्रीकृष्णेऽधुनास्वां काष्ठामभियोगप्रकर्षस्वांदिशंवावैकुण्ठलोकमितियावत् । उपेतेगतेसतिधर्मः वर्णाश्रमानुकूलःकंकृष्णादन्यंकं शरणंरक्षितारंगतः गच्छेन्नकमपीत्यर्थः अधुनाधर्मगोप्तुरभावात् कलिनाभिभूतोधर्मस्तंजेतुमप्रभुः अतः केवलंकलिघ्नंभगवच्चरितमेवब्रूहिइत्यर्थः ॥ २३ ॥ इतिश्रीवत्सान्वयपयःपारावारराकासुधाकरस्य सर्वविद्यानिधिश्चक्रवर्तिनः श्रीशैलगुरोःसुतेनतच्चरणकमलपरिचर्याप्रसादिततत्सूक्तिसमधिगत श्रीभागवतार्थहृदयेनश्रीवैष्णवदासेन श्रीवीरराघवविदुषालिखितायां श्रीभागवतचंद्रिकायांश्रीमद्भागवतव्याख्यायांप्रथमस्कंधसमाख्यायांप्रथमोऽध्यायः ॥ १ ॥

---

श्रीविजयध्वजः ।

पुंसांसत्त्वगुणहरंदुस्तरंतर्तुमशक्यंकलिंनिस्तितीर्षतांनितरांतर्तुमिच्छतांनः हेसूतत्वंधात्रादैवेनसंदर्शितः कइव दुस्तरमर्णवंनिस्तितीर्षतांसांयात्रिकाणांकर्णधारइवकर्णधारःयूपकाग्रस्थायीपुरुषः ॥ २२ ॥

प्रश्नांतरंकुर्वंतीत्याह ब्रूहीति अधुनाधर्मरूपाणिकर्माणियस्यसःधर्मकर्मातस्मिन् ब्रह्मण्येब्राह्मणहितकारिणिअणिमाद्यष्टयोगेश्वरेभक्तिज्ञानलक्षणयोगेवायोगीश्वरेवा "कृषिर्भूवाचकःशब्दोणश्चनिर्वृतिवाचकःतयोरैक्यंपरंब्रह्मकृष्णइत्यभिधीयते,, इतिवचनात्सच्चिदानंदलक्षणेकृष्णेस्वांकाष्ठांगुणपूर्णस्वमूलरूपमुपेतेगतवतिसतिपूर्वनिर्दिष्टोधर्मःभक्तिज्ञानलक्षणःकंपुरुषंशरणंगतइतितमस्माकंब्रूहीत्येकान्वयःपुंसामेकांतइतिश्रेयःसाधनविषयः ॥ १ ॥ ब्रूहिभद्रायेतिप्रत्यगात्मविषयः ॥२॥ अर्हस्यंगानुवर्णितुमितिकृष्णावतारविषयः ॥ ३॥ ब्रूहिनःश्रद्दधानानामितियशोविषयः ॥ ४ ॥ अथाख्याहीत्यवतारांतरविषयः ॥ ५ ॥ ब्रूहियोगेश्वरइतिधर्मविषयः ॥ ६ ॥ एवंषट्प्रश्नाः ॥ २३ ॥

इतिश्रीमहाभागवतेप्रथमस्कंधेपदरत्नावल्यांटीकायांप्रथमोऽध्यायः ॥ १ ॥

---

क्रमसंदर्भः ।

ब्रूहीति । स्वां काष्ठां दिशं निजनित्यधामेत्यर्थः ॥ २३ ॥

इति श्रीमद्भागवतप्रथमस्कन्धस्य श्रीजीवगोस्वामिकृत क्रमसन्दर्भे प्रथमोऽध्यायः ॥ १ ॥

---

(१) धर्मकर्मणीति विजयध्वजपाठः

### सुबोधिनी

अत्रह्येकासामग्रीन्यूनासा भगवता संपादितेत्याह ॥ त्वंनःसंदर्शितइति धात्रासर्वकर्त्राभगवताब्रह्मणावा कथारसाभिज्ञेनत्वंचनः अस्मदीयःस्वाधीनस्वकथाभावेदुस्तरः कलिः दुःखेनतरस्तरणंयस्येति ननुकथाराहिताअपिकालितरिष्यंतिश्रुषयःकोभवत्सुविशेषइत्यतआह सत्त्वहरमितिविवेक धैर्यज्ञानहरं सत्त्वगुणगतेरजस्तमोभ्यांलयविक्षेपावेव अतस्तेषांसर्वस्वनशे न कलेस्तरणं भविष्यतीतिभावः अभीष्टकाले अभीष्टदेश संबंधाभावः कर्णधारराहितसमुद्रे तथाभक्त्यभावेकलौ ॥ २२ ॥

किंच धर्मेण सहपूर्ववयंस्थिताः वयंत्वत्रसमागताः कथायांनियुक्ताः धर्मस्यकावार्तेतिषष्ठं प्रश्नमाहुः ब्रूहियोगेश्वरइति ॥ एतच्चब्रूहिधर्मस्यहिग्लानौतद्रक्षार्थं सभगवानवतरति "यदायदाहिधर्मस्येतिवाक्यात् योगोपिधर्मरक्षकः "अयंहिपरमोधर्म" इतिवाक्यात् तस्यापीश्वरे कृष्णे ब्राह्मणाअपिधर्मं प्रतिपालयंति तत्योगावतारं ब्रह्मण्यरूपे भगवतिकृष्णेस्वां काष्ठांवैकुण्ठगते धर्मस्य संभावितशरणाभावात् भगवद्विषयकबुद्धेः धर्मकार्यरूपायाविद्यमानत्वात् धर्मोस्तीतिप्रतीतेः धर्मः कंशरणंगत इतिप्रश्नः ॥ २३ ॥

इतिश्रीभागवत सुबोधिन्यांलक्ष्मण भट्टात्मज श्रीवल्लभ
दीक्षितविरचितायांप्रथमस्कंधे प्रथमोऽध्यायः ॥ १ ॥

---

### श्रीविश्वनाथचक्रवर्ती

धर्म्मस्य वर्म्मणि कवचवद्रक्षके । तत्र हेतुः योगेश्वर इति सामर्थ्यं ब्रह्मण्य इति दयालुत्वम् । स्वां काष्ठां स्वीयां स्थितिं मर्य्यादाम् । सा च स्वाविर्भावात् सपादशतवर्षान्ते प्रापञ्चिकजनदृष्ट्यविषयता एव । काष्ठोत्कर्षे स्थितौ दिशीति मर्य्यादाधारणा स्थितिरिति चामरः ॥ २३ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् । प्रथमे प्रथमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ १ ॥

---

### सिद्धान्तप्रदीपः

नन्वहंभवद्भिः कुतोज्ञातइत्यतआहुः त्वमिति ॥ २२ ॥ प्रश्नांतरंब्रूहीति ॥ २३ ॥

इतिश्रीमद्भागवतेसिद्धांतप्रदीपेप्रथमस्कंधीयेप्रथमाध्यायार्थप्रकाशः ॥ १ ॥

---

### भाषा टीका ।

पुरुषों के धैर्य धर्म आदिक वल हरने वाले दुस्तर कलि के तरने की हमारी इच्छा है सो विधाता ही ने हमको तुम्हारा दर्शन करा दिया है । जैसै समुद्र के पार जानेवालों को अकस्मात् कर्ण धार ( जहाज का कंहारी ) मिलजाय ॥ २२ ॥

यहभी हमसै कहो कि परम ब्रह्मण्य धर्म के कवच के समान रक्षक योगेश्वर श्रीकृष्ण जब अंतर्धान होगये तब धर्म किस की शरण मैं गया ॥ २३ ॥

प्रथम अध्याय समाप्त ॥

—:-*-:—

# द्वितीयोऽध्यायः ।

—*—*—*—

श्रीव्यासउवाच ॥ इतिसंप्रश्नसंहृष्टोविप्राणांरौमहर्षणिः । (१)
प्रतिपूज्यवचस्तेषांप्रवक्तुमुपचक्रमे ॥ १ ॥

सूतउवाच ।

यंप्रव्रजन्तमनुपेतमपेतकृत्यंद्वैपायनोविरहकातरआजुहाव ।
पुत्रेतितन्मयतयातरवोऽभिनेदुस्तंसर्वभूतहृदयंमुनिमानतोऽस्मि ॥ २ ॥ (२)

## श्रीधरस्वामी ।

तदेवं प्रथमाध्याये षट् प्रश्ना मुनिभिः कृताः । द्वितीये तूत्तरं सूतश्चतुर्णामाह तेष्वथ ॥ १ ॥

विप्राणामिति । एवम्भूतैः सम्यक्प्रश्नैः सम्यक् हृष्टो रोमहर्षणस्य पुत्र उग्रश्रवाः तेषां वचः प्रतिपूज्य सत्कृत्य प्रवक्तुमुपक्रान्तवान् ॥ १ ॥

प्रवचनस्योपक्रमो नामात्र गुरुदेवतानमस्कार इति तमाह यमिति त्रिभिः । तत्र स्वगुरोः शुकस्यैश्वर्य्यं तच्चरितेनैव द्योतयन्नाह यं प्रव्रजन्तं सन्न्यस्य गच्छन्तमनुपेतं मामुपनयस्वेत्युपनयनार्थमनुपसन्नम् । यद्वा केनाप्यनुपेतमननुगतम् एकाकिनमित्यर्थः । तत्र हेतुः अपेतकृत्यं कृत्यशून्यं विरहात् कातरो भीतः पुत्र इति प्लुतेनाजुहाव आहूतवान् । दूराह्वाने प्लुते सत्यपि सन्धिरार्षः । तदा तन्मयतया शुकरूपतया तरवोऽभिनेदुः प्रत्युत्तरमुक्तवन्तः । पितुः स्नेहानुबन्धपरिहाराय यो वृक्षरूपेणोत्तरं दत्तवानित्यर्थः । तं मुनिमानतोऽस्मि । तन्मयतोपपादनाय विशेषणं सर्व्वभूतानां हृन्मनः अयते योगबलेन प्रविशतीति सर्व्वभूतहृदयस्तम् ॥ २ ॥

---

## दीपनी ।

पुंसामेकान्ततः श्रेयश्चावतारप्रयोजनम् ! तस्य कर्म्माण्यपि तथा चावतारकथा अपि । १ । कृष्णावतारचरितं धर्म्मः कं शरणं गतः । इत्येवं प्रथमेऽध्याये षट् प्रश्ना मुनिभिः कृताः ॥ २ ॥ इत्युदीची ॥ १ ॥ २ ॥ ३ ॥

---

## श्रीवीरराघवः ।

एवंसंपृष्टनिःश्रेयससाधनतदनुग्राहकप्राधान्यतमश्रीकृष्णचरित्रंसूतःशौनकादीनांप्रश्नानभिनंदयंस्तेषामुत्तररूपंश्रीभागवताख्यपुराणमाहेत्याहबादरायणः इतीति । अत्रश्रीसूतउवाच इतिसंप्रश्नसंपृष्टइतिकाचित्पाठोदृश्यतेसचासंगतः इतीत्यादिश्लोकस्यसूतोक्तित्वाभावात् यंप्रव्रजंतमित्यादिर्हिसूतोक्तिरतस्ततःप्रागेवसूतउवाचेतिपठितुंयुक्तमिहतुश्रीव्यासउवाचेति । इतीत्थंविप्राणांशौनकादीनांतैःप्रश्नैः संहृष्टोरौमहर्षणिः रोमहर्षणस्यापत्यंपुमान्सूतः तेषांविप्राणांवचः प्रश्नात्मकंवचः प्रतिपूज्याभिनंद्यप्रतिवक्तुंप्रतिवचनरूपंपुराणमिदंवक्तुंउपचक्रमेआरेभेविप्राणामित्यनेनसापेक्षस्यापिसंप्रश्नशब्दस्यनित्यसापेक्षत्वादार्षत्वाद्वासमासः तेषांविप्राणांवचः प्रतिपूज्येतिवान्वयः संप्रश्नसंहृष्टइतिपाठांतरंतदासमीचीनः प्रश्नोयस्यतस्मैप्रतिवचनायसंपृष्टंप्रत्युत्तरंवक्तुंहृष्टइत्यर्थः । यद्वा विप्राणामित्यस्यवचइत्यनेनैवान्वयः संशोभनाः प्रश्नायेषांतैः शौनकादिभिः संप्रष्टइत्यर्थः ॥ १ ॥

प्रश्नानामुत्तररूपमिदंपुराणंशुश्रावयिषुरन्यैरपिश्रावयितृभिरेवंकार्यमितिसूचयितुमेतत्पुराणप्रथमप्रवर्त्तकत्वरूपमहोपकर्तृत्वादरायणिरूपगुरुनमस्कार तच्चरणावरणात्मकं मंगलमाचरतिसूतः यंप्रव्रजंतमितिद्वाभ्यांद्वैपायनः श्रीव्यासः विरहकातरः सन्यंपुत्रेत्याजुहावाहूतवान् तदातन्मयतयातरवोभिनेदुःतंसर्वभूत हृदयंमुनिमानतोऽस्मीत्यन्वयः कथंभूतंप्रव्रजंतं देवपैत्रादीन्परित्यज्यव्रजंतम् । अनुपेतमुपेतरहितमसहायमित्यर्थः । अपेतंकृत्यंयस्यतंकर्त्तव्यांशरहितंनिष्पन्नब्रह्मोपासनत्वात्कृतकृत्यमितिभावःप्रव्रजंतमित्यनेन देहानुबंधित्यागउक्तः । अनेनममताराहित्यंफलितम् । अनुपेतमित्यनेनासहायत्वमुक्तम् अनेनदेहपोषकसहायांतर राहित्यंसूचितंतेनचदेहात्मभ्रमरूपाहंकारराहित्यंफलितम् । द्वैपायनोविरहकातरआजुहावेत्यनेन द्वैपायनादप्यतिशयितज्ञानवत्त्वंसूचितम् । यद्यपिपुत्रेत्यस्यदूराद्धानविषयवाक्यत्वात् दूराद्धूतेच ॥ ८ ।२ ।८४॥ इतिप्लुतत्वेसतिप्लुतप्रगृह्याअचिनित्यम् ६ ।१ । १२ ।५। इति प्रकृतिभावेचसतिसंधिर्दुर्लभस्तथापि "गुरोरनृत" ८ ।२ ।८६॥ इत्यत्रप्राचामितियोगंविभज्यसर्वस्यप्लुतस्यवैकल्पिकत्वाभ्युपगमात्॥ अग्नीत्प्रेषणेपरस्यच ।८ ।२ ।९२ इतिसूत्रेसर्वः प्लुतःसाहसमनिच्छता विभाषाकर्त्तव्यइति महाभाष्यकारोक्तेश्चप्लुताभावपक्षेसंधिःसुलभएवेतिबोध्यंसाहसंशास्त्रत्यागस्तदनिच्छता शास्त्रमनुरुंधानेनेत्यर्थइति

---

(२) अपिनेदुरितिविजयध्वजपाठः

(१) संप्रश्नसंपृष्ट इतिवीरराघवविजयध्वजयो पाठः

श्रीवीरराघवः

हरदत्तोव्याख्यादितिकोवित् । वस्तुतस्त्वितिशब्दस्यैववाक्यांततत्वेनपुत्रशब्देप्लुतप्रसंगएवनास्ति । अनुकार्यस्यपुत्रशब्दस्य संबोधनविषयत्वे पुत्रानुकरणस्यतस्यतदभावा चतन्मयतयेत्यत्रमयट्प्राचुर्ये संबंधमात्रे वातत्प्रचुरतया तत्संबंधितयावातरवोऽभिनेदुः शुकात्मकावयमित्येवं रूपेणप्रतिदध्वनुरित्यर्थः तत्प्राचुर्यंचतरूणां शुकेनव्याप्त्याधिष्ठितत्वादवगंतव्यम् संबंधमात्रेमयट्पक्षेऽपिज्ञानद्वाराधिष्ठेयंभावरूपएवसंबंधोवोध्यःस्वरूपेणतर्वधिष्ठातृत्वासंभवात् "एषोऽणुरात्मा आराग्रमात्रोह्यवरोपिदृष्ट" इत्यादिभिः श्रुतिभिर्जीवस्वरूपस्याणुत्वावगमात् । तत्स्वरूपेणानेकाधिष्ठातृत्वासंभवात् । यद्यपिधर्मभूतज्ञानस्यापि "सचानन्त्यायकल्पत" इत्यादि श्रुतिभिर्मुक्तिदशायामेवानंत्यमवगतं तथापिशुकस्यपरिनिष्पन्न ब्रह्मोपासनत्वेनमुक्ताना मिव निवृत्तज्ञानसंकोचक कर्मरूपावरणत्वादपरिच्छिन्नधर्मभूतज्ञानद्वाराऽनेकतर्वधिष्ठातृत्वमुक्तम् । यतएवतन्मतयातरवोभिनेदुरत एवसर्वभूतहृदयंसर्व भूतानांहृदयते गच्छतिज्ञानद्वाराव्याप्नोतीति सर्वभूतहृदयस्तम् । अयगताविति धातुः यद्वा सर्वभूतानांहृदयं यस्यज्ञानद्वारा व्याप्यंससर्वभूतहृदयस्तम् । यद्वा हृदयशब्देनधर्मभूतंज्ञानंलक्ष्यतेहृदयस्य ज्ञानसाहचर्यात् । सर्वभूतेषुहृदयंधर्मभूतंज्ञानमधिष्ठानं यस्यसतममुनिंस्वात्मपरमात्मयाथात्म्यमननशीलंश्रीशुकमिति विशेष्यमध्याहार्य्यम् । आनतइतिकर्त्तरिक्तः नमस्कृतवानस्मीत्यर्थः ॥ २ ॥

---

श्रीविजयध्वजः ।

शौनकादिविप्राणामितिपूर्वोक्तैःषड्भिःसमीचीनैःप्रश्नैःसम्यक्पृष्टःरोमहर्षणस्यअपत्यंरौमहर्षणिः सूतस्तेषांशौनकादीनांवचः प्रतिपूज्यप्रवक्तुंव्याख्यातुमुपचक्रमइत्येकान्वयः एतद्वचासवचनम् ॥ १ ॥

शौनकादिप्रश्नपरिहारतयाभागवतपुराणंव्याकर्तुकामः उरुश्रवाः स्वेष्टगुरुरुद्रावतारंश्रीशुकमुनिंप्रणमति यमिति विरहकातरःपुत्रवियोगेकातरःअधीरइवस्थितःसद्वैपायनोयदाप्रव्रजंतमनुपेतमपेतकृत्यंपुत्रेत्याजुहावतदातन्मयतयातरवोपिनेदुः अहंसर्वभूतहृदयंतं मुनिंसर्वज्ञमानतोस्मीत्येकान्वयः द्वीपोनदीमध्यप्रदेशःसअयनमालयःयस्यसः तथाद्वीपायनःसएवद्वैपायनः द्वीपस्यापत्यं द्वैपायनःनदीद्वीपेसमुत्पन्नत्वात्तदपत्यत्वनिर्देशऔपचारिकः तद्वत्पराशरसुतत्वमप्यौपचारिकमितिज्ञापयितुमेतदेवप्रसिद्धनामाकरोत् प्रव्रजंतंसर्वपरित्यागरूपमाश्रममाश्रयंततत्रकारणमाहअनुपेतंदेहाद्यभिमानशून्यंकेनापिसख्यारहितमेकाकिनामितिवानचोपनयनशून्योऽनुपेतःअनुपनीतस्यप्रव्रजनायोगात् नच प्रव्रजनंसंन्यासःकिंतर्हिप्रकर्षेणगमनमेवेतिवाच्यम् "यदहरेवविरजेत्तदहरेवप्रव्रजेदि" तिगौतमसूत्रविरोधात् अपगतंकृत्यंयस्मात्सोपेतकृत्यस्तं कृतकृत्यम् अपेतंनिराकृतंकृत्यंछेदनकर्मयेनसतथा अवाप्ताहिंसालक्षणाश्रमत्वात्तमितिवा पुत्रेतिदूरादाह्वानेप्लुताभावश्छांदसः सर्वगतत्वज्ञापनायवातन्मयतयाअहंकारात्मकरुद्रावतारशुकस्यव्याप्तिमत्तयावृक्षाअपिप्रतिशब्दंनेदुः किमुतशरीरिणइतिद्योतयितुमपिशब्दः सर्वभूतानांहृत्स्थानमयतेगच्छतीतिसर्वभूतहृदयःतं अहंकारतत्त्वाभिमानित्वेनसर्वत्रस्थितमित्यर्थः ॥ २ ॥

---

क्रमसन्दर्भः ।

( टीकायां षट् प्रश्ना इति । तत्र तत्राञ्जसा इत्यादिना सूत जानासीत्यन्तेन कृष्णावतारप्रयोजनकृष्णचरितयोः प्रश्नौ । वयन्त्वित्यादिद्वयं सूत जानासीत्येतत् प्रश्नस्यैवानुवादः । तत्रोभयत्रोत्तरम् । भावयत्येष सत्त्वेनेति लोकपालनं हि तच्चरित्रमपि । एवमेव हि प्रथमाध्याये टीकाप्रतिज्ञाताः षट्प्रश्ना उपपद्यन्ते । द्वितीयेऽध्याये चत्वारि उत्तराणि । चतुर्थस्य तत्प्रश्नोत्तरस्य तत्रान्यत्रादर्शनात् । तस्य कर्म्माणीत्यादिना विश्वसृष्ट्यादिलीलाप्रश्नः तस्योत्तरं स एवेदं ससर्जाग्रे इत्यादिना । अथाख्याहीत्यादिना अवतारकथाप्रश्नः । तस्योत्तरं तृतीयोऽध्यायः । ब्रूहि योगेश्वर इत्यादिना धर्म्माश्रयः प्रश्नः । तस्योत्तरं कृष्णे स्वधामोपगते इत्याद्यं तृतीयाध्यायपद्यमेव ॥ १ ॥

अथोपक्रमे स्वगुरुं नमस्कुर्व्वन् तत्प्रसादगुरुयं स्मरति द्वाभ्याम् । तत्र यमित्यत्र तन्मयतयेति तच्छब्देन तत्तादात्म्यापन्नः परमात्मोच्यते । स हि तदानींध्यानावेशेन प्राप्तसर्व्वान्तर्यामितादात्म्यः । दृष्टानुयान्तमित्यादिवक्ष्यमाणात् । यत एव तस्य तदुत्तरदानानुसन्धानराहित्ये सति तत्पक्षपातेनान्तर्य्यामिणैव स्वयं तरूणामपि द्वारा तदुत्तरं दत्तमिति । यद्वा न केवलं सर्व्वात्मब्रह्मनिष्ठत्वान्निरपेक्षेऽपि तस्मिन् पितेव स्निग्धो जातः अपि तु तरवोऽपि जाता इत्याह तन्मयतया तद्वत्स्नेहमयतया तरवोऽपि अभि तदाभिमुख्येन नेदुः । किमुतान्ये जीवा इत्यर्थः । एतच्च तत्प्रभावादेवेति ज्ञेयम् । अतएव सर्व्वभूतानां हृदयं यस्मिन् तम् । अनपेतमिति चित्सुखपाठान्तरम् ॥ २ ॥

---

सुबोधिनी ।

श्रीकृष्णायनमः ॥ कथाश्रवणमात्रेणमनोरथमहार्णवे । निमग्नान्सूतदानेनह्युजहारऋषीन्हरिः ॥ १ ॥ फलसाधनरूपाणांनिर्णयं क्रमेणामपि । त्रयाणांवक्ष्यतेऽध्यायेद्वितीयेऽन्यत्रशेषिणाम् ॥ २ ॥ प्रथममुत्तराणिवक्तुंदेवतागुरुनमस्कारमंगलमभिनंदनंच सूतः करोतीतिविन्यासआह ॥ इतिसंप्रश्नेति एवंपुरुषार्थपर्यवसायिभिः संप्रश्नैः सम्यग्विषयकैः प्रश्नैः सम्यगादरपूर्वकं पृष्टः विप्रैरिति प्रापूरणीविशेषेणवक्तारमात्मानंवाभक्त्यापूरयंतीतिविप्राः अवश्यंतेषांवचनेउत्तरंदेयमितिरौमहर्षणिः रोमहर्षणस्यापत्यं रौमहर्षणिः रोमसुसर्वदाहर्षणंयस्यतस्य सर्वदाभक्त्युद्रेकः तथैवायमितिज्ञापयतिप्रतिपूजनमभिनंदनंसामान्यतस्तदूग्रंथाद्बहिरितिज्ञातव्यम् ॥ १ ॥

## सुबोधिनी

क्रमानुरोधात्अग्रेत्वभिनंदनसामान्योत्तरत्वेनज्ञातव्यंप्रवक्तुमिदिस्वबुद्ध्यानिर्द्धारितार्थंभागवतंप्रवक्तुमुपक्रमेदेवतागुरुनमस्कारंच कृतवान्तत्रादौगुरुनमस्कारमाहद्वाभ्यांवैराग्यज्ञानाभ्यांतत्रप्रथमंवैराग्यमाहयंप्रव्रजंतमिति॥अत्रहियथाविरक्तस्तथातथाधिकारीतत्रशुकस्यपूर्वजन्मन्येवज्ञानसहितत्वाद्योग्यदेहार्थंविष्णोर्व्यासस्यसकाशाद्देहंप्राप्यउभयसंपत्तौसंगतनाशभयात्पूर्वसंस्कारस्यदृढत्वात्इदानीमनुपनीतएवप्रव्रजतिव्यासस्याधिकारित्वाद्देहादिधर्माः प्रवर्ततेवलिष्ठस्यहिभयाभावः वलंभगवतएवेतिकोपादिनागमनंवारयतिपुत्रेतिनिवारणेहेतुः अनुपेतमिति गमनेहेतुःअपेतकृत्यमितिकार्येविद्यमानेहिउपनयनं विष्णोःसकाशाज्जातस्यपुनः संस्कारोनापेक्षतेमोहेहेतुः द्वैपायनइतिद्विगताआपोयत्रतत्द्वीपमयनंजन्मस्थानंयस्ययमुनांतर्जलेतथोत्पन्नत्वात्पराशरध्यातभगवदवताराद्वासर्वसुस्थंनारदोपदेशात्पूर्वविस्मृतात्मत्वाद्विरहकातरः विरहेणकातरोदीनः पुत्रेतिआह्वानंकृतवान्प्रेम्णासन्नकंठत्वात्प्लुताभावस्ततः संधिः "ससर्वमभवदितिब्रह्मज्ञानेफलस्योक्तत्वात्सर्वभावः स्फुरतियोगेनप्रवेशोपिसंभवतिकर्तुः प्राधान्येपियच्छन्देनकर्मसंबंधात्तच्छब्देनकर्मैवोच्यतेयामिति॥ तन्मयतयाशुकमयतयाविष्णोः सकाशादुत्पन्नास्तरवः शुकोपिविष्णुर्वैवनस्पतइतिश्रुतेः एकोपादानकत्वात्तन्मयत्वमभिनंदनंप्रतिध्वानरूपम्॥ अथवा॥ "वाग्देव्योपाक्रमद्यज्ञायातिष्ठमानासावनस्पतीन्प्राविशत्सैशावाग्वनस्पतिषुवदतीतिश्रुतेः वृक्षेभ्यएवशब्दोत्पत्तिः तेषांकथनेहेतुंवदन्शुकस्यप्रभावमाह सर्वभूतहृदयमिति सर्वभूतानांहृत्अयतेप्रेरयतिप्रेरणार्थंगच्छतीतिसर्वभूतेषुहृदयंयस्येतिप्रेरणासामर्थ्यंवागतस्यतूष्णींभावंनिवारयतिमुनिमितिबृह्मात्मभावंविचारयंतमासर्वतोनतोऽस्मिसर्वत्रतस्यविद्यमानत्वात्॥ २॥

---

## श्रीविश्वनाथ चक्रवर्त्ती।

तत्र पुंसामेकान्ततः श्रेयस्तन्नः शंसितुमर्हसीति । सर्व्वशास्त्रसारं ब्रूहि नः श्रद्दधानानां येनात्मा संप्रसीदतीति । देवक्यां किमर्थं जातस्तन्नः शुश्रूषमाणानामर्हस्यङ्गानुवर्णितुमिति । तस्य कर्म्माणि ब्रूहि नः श्रद्दधानानां लीलया दधतः कला इति । अथाख्याहि हरेर्धीमन्नवतारकथाः शुभा इति । ब्रूहि योगेश्वरे कृष्णे धर्म्मः कं शरणं गत इति । षडेव प्रश्नाः । एतत् प्रत्युत्तरणायैव स प्रसङ्गानि श्रीभागवतमिति विवेचनीयम्।

द्वितीये त्वभिधेया श्रीभक्तिः प्रेमा प्रयोजनम् । विषयो भगवानत्रेत्यर्थत्रयनिरुपणम्॥ ०॥

रोमहर्षणस्य पुत्र उग्रश्रवाः॥ १॥

अत्रैवं सूतस्य परामर्शः । एतत्प्रश्नस्योत्तरं सर्व्वशास्त्रसारं किमपि वस्त्वहंब्रवीमि । तेन चेदेषामात्मा न प्रसीदेत् तर्हि किं भविष्यति येनात्मा सुप्रसीदतीत्युक्तत्वात् । ततश्च सारेष्वपि मध्ये यस्यात्मप्रसादकत्वं भव्यैर्निरूपितं सोऽन्वेषणीयः । तत्रापि केषाञ्चिन्मते- सांख्यस्यैव केषाञ्चिन्मीमांसादेः केषाञ्चिदुपनिषदामेव केषाञ्चित्तदर्थतात्पर्य्यनिर्णायकानां वेदान्तसूत्राणामेवात्मप्रसादकत्वमस्ति यद्यपि तदपि न तत् प्रत्येतव्यं तेषामपि मुख्यस्य तत्तत्सर्व्वमतविदुषोऽपि कृतवेदान्तसूत्रस्य श्रीकृष्णद्वैपायनस्यापि चित्ताप्रसाददृष्टेः । ततश्च यदाविर्भावेन तस्यापि आत्मा प्रसीदति स्म । परीक्षिन्महासदसि तस्थुषामेव तेषां सर्व्वसारवादिनां महाज्योतिषामग्रएव परीक्षयोत्तीर्णं शुद्धं जाम्बूनदमिवात्मप्रसादकत्वे निर्व्विवादमेव यत् स्थिरं व्यराजत तदेव श्रीभागवतं मम वक्तव्यमभूदिति । ततस्तद्वक्तारं श्रीशुकदेवं शरणं यामीति तं प्रणमति यमिति । प्रव्रजन्तं संन्यस्य गच्छन्तम् । अनुपेतं निकटमप्यप्राप्तम् । अपेतकृत्यमुपनयनादिरहितम्। हे पुत्र इति प्लुतेनाजुहाव । न केवलं परमनिरपेक्षेऽपि तस्मिंस्ततपितैव स्निग्धोऽभूदपि तु "येनार्चितो हरिस्तेन तर्पितानि जगन्त्यपि । रज्यन्ति जन्तवस्तत्र स्थावरा जङ्गमा अपीतिपाद्मोक्तेस्तरवोऽपीत्याह तन्मयतया शुकमयतया तरवोऽपि आभिमुख्येन हेतुना हे पुत्र इति प्रतिध्वनिमिषेण व्यासवदाजुहुवुः । यो हि यस्मिन्नासज्जति स तन्मय उच्यते । यथा स्त्रीमयः कामुकइति । ततश्च सर्व्वेषां भूतानां हृदयं मनो यस्मिंस्तम् । तेन सर्व्वमनोहरे भगवद्विग्रहे इव तस्मिन् स्नेहोऽयं न प्राकृतमोह इति । व्यासस्याप्यविवेकोऽयमिति दोषः पराहतः। यद्वा तदा तन्मयतया शुकरूपतया तरवोऽभिनेदु: प्रतिध्वनिमिषेण हे पुत्र इति प्रत्युत्तरं ददुः । यदि तवाहं पुत्रस्तदा त्वमपि मे पुत्र इत्यतः । "कस्य के पितृपुत्राद्या मोह एव हि कारणम् । इति तत्त्वमविज्ञाय किमिति मुह्यसीति व्यञ्जयामासुः। तन्मयत्वोपपादनाय विशेषणं सर्व्वभूतानां हृत् मनः अयते योगबलेन प्रविशतीति सर्व्वभूतहृदयस्तम् । तेन स एव ममाप्यन्तः प्रविश्यमन्मुखेनैव श्रीभागवतं वदतु। यो हि जडानपि वृक्षान् प्रविश्य प्रत्युत्तरेण पितरमपि समादधौ स एव चेतनं मां प्रविश्य श्रीभागवतेनैव एषां श्रोतृणामात्मानं प्रसादयत्विति प्रवचनकाले श्रीभागवतस्य वक्तान्योऽऽपि ध्यायेदिति विधिश्च सूचितः॥ २॥

---

## सिद्धान्तप्रदीपः।

उपायोपेयभगवच्चिकीर्षिततदुदारकर्मविषयाणांचतुर्णांप्रश्नानामुत्तरार्थोयमध्यायआरभ्यतइतीति इतिसंप्रश्नसंहृष्टः इत्येवमुक्तप्रकारैः षड्भिः विप्राणांसम्यक्प्रश्नेसम्यग्हृष्टः "रोमाणिहर्षयांचक्रेश्रोत्हृणांयः सुभाषितैः॥ कर्मणातेनकथितोरोमहर्षणइत्युत" ॥इत्युक्तलक्षणस्यरोमहर्षणस्यपुत्रः उग्रश्रवाः प्रश्नानांविस्तरत उत्तरभूतंश्रीमद्भागवतंशुश्रावयिषुः तेषांवचः मुनयः साधुष्टष्टोहमित्यनेनप्रतिपूज्यप्रवक्तुं "सवैपुंसांपरोधर्मः इत्याद्यध्यायद्वयेनसंक्षेपतः षण्णांप्रश्नानामुत्तरंवक्तुम् उपचक्रमेयंप्रव्रजंतमित्यादिभिस्त्रिभिः गुर्वादिनमस्काररूपमुपक्रमंकृतवानित्यर्थः॥ १॥

---

यः स्वानुभावमखिलश्रुतिसारमेकमध्यात्मदीपमतितितीर्षतांतमोऽन्धम् ।
संसारिणांकरुणयाहपुराणगुह्यम्तंव्याससूनुमुपयामिगुरुंमुनीनाम् ॥ ३ ॥
नारायणंनमस्कृत्यनरञ्चैवनरोत्तमम् । देवींसरस्वतींचैवततोजयमुदीरयेत् ॥ ४ ॥(१)

सिद्धांतप्रदीपः ।

तत्रस्वगुरुंप्रणमति ॥ यमिति यंप्रवृत्तकर्मत्यागित्वादपेतकृत्यम् अनुपेतम् एकाकिनम् प्रव्रजंतम् "अंधकारप्रवेष्टव्यंदीपोयत्नेनधार्यतामितिद्वैपायनोपदेशादेवप्रवृत्ति मार्गत्यक्त्वागच्छंतम् भागवतपुत्रस्यातिदुर्लभत्वाद्विरहकातरः द्वैपायनोभगवान् हेपुत्रेत्याजुहाव आहूतवान् यदातदातन्मयतयातरवोभिनेदुः शुकेतिव्यासेनोक्ते सतिभोरितिशुकेनप्रत्युत्तरेदत्तेद्रुमादयोपिभोरितिशुकवदभिनादंचक्रुरित्यर्थः एतन्मोक्षधर्मेद्रष्टव्यम् तंमुनिमानतोस्मि "यस्यदेवेपराभक्तिर्यथादेवेतथागुरौ तस्यैतेकथिताह्यर्थाः प्रकाशंतेमहात्मनः" इतिश्रुत्यर्थानुसारेण गुरोर्वासुदेवाभिन्नत्वमाह सर्वभूतहृदयमिति सर्वेषांब्रह्मादिस्तंबपर्यंतानांहृदिव्यापकतयाऽयतेगच्छतीतिसस्तस्य अय गतावित्यस्यरूपम् सर्वांतर्यामिणंवासुदेवमित्यर्थः आचार्यंमांविजानीयादिति वक्ष्यमाणाच्च ॥ २ ॥

---

भाषा टीका ।

व्यासजी बोले । रोमहर्षण सूतजी के पुत्र उग्रश्रवा ब्राह्मणों के इन प्रश्नों से आनंदित होकर उनके वचन की प्रशंसा कर मंगलाचरण करने वाले ॥ १ ॥

सूतजीबोले । जोश्रीशुकदेवजी जन्मलेतेहीउपनयनआदिक संस्कारोंकीकुछ अपेक्षानकर संन्यासीहोकरचले और व्यासजीउनकेपीछे-पीछे 'हेपुत्र' हेपुत्र पुकारतेचले. उससमयव्यासजीकेशोक निवारणकरनेको शुकदेवजीकी शक्तिसंचारसे वृक्षोंनेउत्तरदिया ऐसेयोग शक्तिसे प्राणीमात्रकेहृदयमें प्रवेशकरनियमन करनेवालेमुनिको मैं प्रणामकरताहूं ॥ २ ॥

---

श्रीधरस्वामी ।

तत्कृपालुतां दर्शयन्नाह यः स्वानुभावमिति । अन्धं गाढं तमः संसाराख्यम् अतितरितुमिच्छताम् । पुराणानां मध्ये गुह्यं गोप्यम् । तत्र हेतुत्वेन चत्वारि विशेषणानि । स्वः निजः असाधारणः अनुभावः प्रभावो यस्य तत् । अखिलश्रुतीनां सारम् । एकम् अद्वितीयम् अनुपममित्यर्थः । आत्मानं कार्य्यकारणसंघातमधिकृत्य वर्त्तमानम् आत्मतत्त्वमध्यात्मं तस्य दीपं साक्षात् प्रकाशकम् । उपयामि शरणं व्रजामि ॥ ३ ॥

जयन्त्यनेन संसारमिति जयो ग्रन्थस्तम् उदीरयेत् इति स्वयं तथोदीरयन् अन्यानपि पौराणिकाञ्छिक्षयति ॥ ४ ॥

---

दीपनी ।

( नरः भगवदवतारविशेषस्तम् । तस्य विशेषणं नरोत्तममिति ज्ञेयम् ॥ ४—५ ॥ )

---

श्रीवीरराघवः ।

यइति । यः करुणयापुराणगुह्यम् "विशेषणंविशेष्येणबहुलम् ॥ २।१।५७ ॥ इतिबहुलग्रहणात् विशेष्यस्यापिपुराणशब्दस्यपूर्वनिपातः गुह्यंपुराणं । पुराणगतंगुह्यमाहतंमुनीनामपिगुरुंव्याससूनुमुपयामिशरणंव्रजामि । पुराणंकथंभूतंस्वानुभावंस्वेनशुकेनानुभावकर्मणिघञ्प्रथममनुभूतमित्यर्थः अखिलानांसारोयस्मिन्प्रतिपाद्यस्सतथावेदपूर्वभागार्थभूतकर्मणामप्युत्तरत्रपुराणेभगवदाराधनरूपतायाश्चतत्रप्रतिपादनादखिलश्रुतिसारमित्युक्तम् एवंस्वतुल्याधिकपुराणांतररहितम् । अध्यात्मदीपम् । आत्मन्यधीत्यध्यात्ममितिविभक्त्यर्थेऽव्ययीभावः स्वात्मपरमात्मयाथात्म्यप्रकाशनेदीपतुल्यमित्यर्थः अतितितीर्षतांसंसृतिंतर्तुमिच्छारहितानामपिसंसारिणांतमोऽन्धम् तमः संसृतिरुचिजनकमज्ञानंमधर्यातीतितिरोधाययति निवर्त्तयतीतितथा ॥ ३ ॥

---

१ ग्रंथमुदीरयेदिति विजयध्वजपाठः

## श्रीवीरराघवः ।

एवंश्रावयितृभिरादौमहोपकर्तुर्बादरायणेननमस्कारात्मकंमंगलमनुष्ठेयमितिसूचितम् । नकेवलंबादरायणिरेवनमस्कार्यः अपितुअन्येपिना रायणादयइत्यभिप्रायेणाह । नारायणमिति । नारायणादीन्नमस्कृत्यततोजयमुदीरयेत्कथयेत्श्रावयेदितियावत् । जयमित्यस्यैवपुराणस्या न्यर्थंनामांतरम् अखिलदुरितजयाविनाभूतत्वाज्जयमिति । तत्रनरनारायणयोर्बदर्याश्रमवासिनोर्भगवदवतारभूतयोः "योवैभारतवर्षेऽस्मिन्क्षे मायस्वस्तयेनृणाम् । धर्मज्ञानसमोपेतआकल्पादास्थितस्तपः" । इतिवक्ष्यमाणरीत्याशिष्याचार्यरूपेणस्वानुष्ठानद्वाराखिलधर्मप्रवर्त्तकत्वेनना रदादिमुखेनाखिलाध्यात्मशास्त्रप्रवर्त्तकत्वेनचगुरूणामपिगुरुत्वेनमहोपकर्तृत्वात्तन्नमस्कृतिरवश्यंकार्येतिभावः वागधिष्ठातृदेवतात्वात् सर स्वतीनमस्कार्येत्यभिप्रायेणसरस्वतीमित्युक्तं देवस्यचतुर्मुखस्यस्त्रीदेवीतां "पुंयोगादाख्यायाम् ॥ ४।१।४८ ॥ इतिङीष् । अत्रसरस्वत्याश्चतुर्मु खसंबंधप्रत्यायकदेवीत्वविशेषणेन चतुर्मुखनमस्कृतिरपिकार्येतिसूचितम् । चतुर्मुखोहि अनिरुद्धाख्यभगवत्तुरीयव्यूहनाभिकमलसंभूतस्त पस्तोषितानिरुद्धोपदिष्टभागवतचतुःश्लोकींकृत्स्नैतत्पुराणनिदानभूतांनारदायोपदिदेशअतः सोपिमहानुपकर्तैवगुरुश्चेतिनमस्कार्यइत्यभि- प्रायः । अनेनैवानिरुद्धनारदयोरपि नमस्कार्यत्वमर्थसिद्धंवेदितव्यम् । अनिरुद्धाच्चतुःश्लोक्यधिगमोनारदायतदुपदेशश्चद्वितीयेस्पष्टीभवि- ष्यति । नारदाच्चतुःश्लोकीमधिगम्यकात्स्न्येनैतत्पुराणनिर्मातृत्वेनोपकर्तृतमत्वाद्व्यासोनमस्कार्यइत्यभिप्रायेणव्यासमित्युक्तम् । तत्रायं- क्रमोविवक्षितःतावन्नमस्कार्यः शुकस्ततोव्यासस्ततोनारदस्ततःसरस्वतीतद्वल्लभौततोऽनिरुद्धः ततश्चनरनारायणाविति ॥ ४ ॥

---

## श्रीविजयध्वजः

पुनरपिभक्त्युद्रेकात्तमेवप्रणमति यइति यःस्वानुभावंब्रह्मममाह उपादिशत् यश्चांधंतमः अंधत्वापादकमज्ञानंतितीर्षतांतर्तुमिच्छतांसं सारिणांजीवानांकरुणयाअखिलानांश्रुतीनामर्थज्ञापकतयासारमुत्तमम् अखिलस्यजगतःश्रुतेःश्रवणेंद्रियस्यसारंसुखदंवा एकंसकलपुराणो त्तमम् देहादीश्वरपर्यंततत्त्वानिदीपयतिप्रकाशयतीत्यध्यात्मदीपम् पुराणगुह्यंपुराणेषुगोप्यंपुराणस्यभगवतःसन्निधातुंयोग्यमितिवाभागव ताख्यंपुराणंममव्याचख्यौ मुनीनांगुरुंतंव्याससूनुंश्रीशुकमुपयामिशरणंगच्छामीत्येकान्वयः अखिलश्रुतीःसरतिगच्छातिविषयतयेत्यखिल श्रुतिसारः कर्मणयण्प्रत्ययःवेदार्थसारभूतमितिवा अध्यात्मंदेहः तत्रदीपवद्वर्तमानंपुराणेषुगोपितंस्वानुभावंममोपदिदेशेतिवा ॥ ३ ॥

इष्टदेवताशास्त्रगुर्वादीन्प्रणमति नारायणमिति नारायणंशास्त्रप्रतिपाद्यं तथातमेवशास्त्रकर्तृत्वाद्गुरुंव्यासंचनमस्कृत्य सकलभा ग्यात्मिकांश्रियंदेवींतथापरमगुरुंनरोत्तमंवायुंतथा विद्याभिमानिनींसरस्वतींतथोपसाधकंनरंशेषंप्रणम्यततस्तेषांप्रसादात्श्रीभागवताख्यं ग्रंथमुदीरयेव्याख्यास्ये भवत्प्रश्नपरिहारित्वेनेतिशेषइत्येकान्वयः ॥ श्रीभागवतादिसर्वशास्त्रप्रवक्तृश्रोतृभिस्तेअवश्यंनमस्कार्याइतिद्योत यितुमेवेत्युक्तिः ॥ ४ ॥

---

## क्रमसन्दर्भः ।

अतो य एवं साक्षाच्छ्रीकृष्णद्वैपायनेऽपि स्वपितर्यनुसन्धानरहित आसीत् स एव श्रीभगवल्लीलावर्णनमयश्रीमद्भागवतनामैतद्ग्रन्थावेशेनेदृशोऽपि जात इत्याह य इति । तदेतच्छ्रीसूतस्य शास्त्रोपक्रमाय श्रीगुरुप्रपत्तिरूपं वाक्यं स्वसुखनिभृतेत्यादिना तदुपसंहाराय तद्रूपेण वाक्येनैकीकृत्य व्याख्यायते । यः खलु "हित्वा स्वशिष्यान् पैलादीन् भगवान् बादरायणः । मह्यं पुत्राय शान्ताय परं गुह्यमिदं जगावित्याद्यनुसारेण पुराणगुह्यमिदं श्रीमद्भागवताख्यमाह गिरा प्रकाशयामास । तं तत्राभवद्भगवान् व्यासपुत्र इत्यस्य पूर्व्वोत्तरग्रघट्टानुसारेण मुनीनां गुरुमुपयामि शरणमाश्रये । कीदृशंतत् तत्राह किं वा परैरीश्वरइत्याद्यनुसारेणासाधारणप्रभावं । पुनः कीदृशं तत् तत्राह निगमकल्पतरोरित्याद्यनुसारेणाखिलश्रुतिसारं । पुनः कीदृशं तत्राह निम्नगानां यथा गङ्गेत्याद्यनुसारेण पुराणानां मुख्यं । पुनः कीदृशं तत्राह स्वसुखनिभृतचेता इत्याद्यनुसारेणात्मानं स्वचिरामधिकृत्य वर्त्तते यत् परमरहस्यमजितरुचिरलीलाख्यं तत्त्वं तस्य दीपं प्रकाशकं । नन्वेवं चेत् कथं तर्हि प्राकाशयत् तत्राह अन्धङ्करणं यत्तमः सर्व्वावरकमज्ञानं तत्तरितुमिच्छतां संसारिणां करुणया तेषु यत् कारुण्यं तद्वशतयेत्यर्थः । यद्यप्यजितरुचिरलीलारसरूपं रहस्यं न ते जानन्ति तथापि तत्पर्यन्तप्रकाशकं तत् प्रकाशयामासेत्यहो करुणाया वरिमा दृश्यतामिति भावः । सेयञ्च तस्य करुणा तल्लीलानुभवेन तत्स्वभावलाभाज्जाता । केवलारामत्वे "भजतोऽपि न वै केचिद्भजन्त्यभजतः कुतः । आत्मारामा ह्याप्तकामा अकृतज्ञा गुरुद्रुहः" इति श्रीभगवद्वाक्यविरोधादसौ न स्यादेवेति च ॥ ३ ॥

नारायणमित्यत्र शास्त्रस्यास्य नरनारायणावधिष्ठातृदेवते निर्दिष्टे । चकाराच्छ्रीकृष्णोऽस्य देवता सरस्वती शक्तिः । चकाराद्व्यास ऋषिः । व्यासमिति पाठेस्पष्ट एव । बीजं तु प्रणव एव ज्ञेयः ॐ नमेिश इत्युक्तत्वात् । छन्दोऽत्र गायत्री ज्ञेया तयैवारब्धत्वात् । तस्मात्ते नमस्या इति भावः ॥ ४ ॥

---

## सुबोधिनी ।

एवंप्रथमंज्ञानवैराग्येउक्त्वापश्चाद्भक्त्याभगवद्भजनेऽतीवविशेषमाह यःस्वानुभावमिति संगभयाद्विवृत्तम् चिरमननेभगवदावेशेसति

## सुबोधिनी ।

व्याससमीपागमनंभगवत्पाठश्चार्थाल्लक्ष्यतेतदनुभागवतरसाभिनिविष्टमुनिभ्यउपादिशतितदाहगुरुंमुनीनामितिविभागएवतस्यस्वरूपोत्कर्षोयच्च त्वारिविशेषणानिप्रमेयरूपतांप्रमाणरूपताम्आसाधारणसाधनोत्तमरूपतांप्रतिपादयंतिक्रमेणतत्रस्वानुभावंभागवतस्यभगवद्रूपत्वात्यथा भगवतः स्वः असाधारणोनुभावः सर्वभक्तेषुतथाभागवतस्यापितच्चितकेषु किंच॥अखिलश्रुतिसारंकर्मज्ञानकांडादिष्वपिप्रतिपादितस्यभक्ति शेषत्वकथनात्सर्वश्रुतितात्पर्यविषयभगवत्प्रतिपादनाच्चसर्वश्रुतिसारम् अखिलपदेनचदेवदैत्यादिषुप्रवृत्तायाःश्रुतेस्तदभिप्रायेणार्थकथने खिलत्वमापद्यतेतन्निर्वायतेआकरस्थितानांसर्ववेदानामर्थरसभूतामित्यर्थः एकमित्यसाधारणम् अन्यथाएतस्यापिरसांतरसंभावनास्यात्वहू नांतादृशानांनिर्द्धारणात्अध्यात्मदीपमितिवहिः संतिदीपाः वोधकाः पुरुषाश्चआत्मनिपुनर्विरलाः वाचावोधयत्येवनहितादृशोभागवतादन्यो पायोस्तिगुरूपदेशतपः साधनव्यतिरेकेणयेनसर्वेषामात्मसाक्षात्कारोभवेत्यथागृहेदीपेस्थापितेघटादीनांनगुर्वाद्यपेक्षातथाभागवतेसतिन काप्यपेक्षेत्यर्थः अंधंतमःअतितर्तुमिच्छताम्अध्यात्मदीपमितियोजनाआत्मानमधीतिआत्मसंवंधिसर्वपदार्थानांनकेवलंमुनिभ्यएवाहसंसारि णामपिकरुणयापरीक्षित्सभादिष्वपीत्यर्थः यथामलापाकरणवस्त्रादौमलनिवृत्तिः शुद्धिश्चभवतिशुभ्राणांतुकर्मयोग्यतैवतथासंसारिणां मुनीनांचविशेषइतिभावः मायाशुकव्यावृत्त्यर्थंव्याससूनुमितिउपयामिशरणंगच्छामिइदानीमेवसमीपेगत्वातद्वाक्यंश्रुत्वाकथयिष्यामीत्युप शब्दर्थः ॥ ३ ॥

असाधारणंमंगलमुक्त्वासर्वैः कर्त्तव्यंसाधारणंमंगलमाहनारायणमिति॥ "जयोनामपुराणादिकृष्णद्वैपायनेरितः अष्टादशपुराणानिभा रतंतत्प्रकीर्त्तितंनारायणोव्यासइतिवाच्यवक्तृस्वरूपकः एकएवपरोह्यात्माआदावंतेनिवेशितः उपसाधकोनरश्चोक्तश्चकारात्गुरुवानपिच्च वश्यमेवकारेणसूत्रात्माचनरोत्तमः देवीभाग्यात्मिकानृणांवाक्यरूपासरस्वतीसर्वेतेभगवद्रूपास्तस्मान्नम्याहितेसदा" व्यासेनक्रियमाणेतुन मस्कारेनव्यासपदप्रयोगः सरस्वतीसमीपेचकारः तद्वक्तारंवोधयतितस्मात्पाठद्वयमपिलोकेव्यवस्थयावोद्धव्यम् ॥ ४ ॥

---

## श्रीविश्वनाथ चक्रवर्त्ती ।

अस्मिन्नर्थे तस्य कृपालुत्वमेव हेतुरस्त्येव इत्याह य इति । संसारिणां करुणयाहेति । न केवलमयं परीक्षिदेव तारयितव्यः किन्त्व- न्येऽपि जनिष्यमाणाः संसारिणोऽनेनैव तरन्त्विति तदैव सर्व्वानर्व्वाचीनान् सस्मारैवेति भावः । अन्धं गाढं तमोऽविद्याम् अतिशयेन सुखे- नैव तरीतुमिच्छताम् । आत्मानि अधिष्ठितानि तत्त्वानि महदादीनि तेषां दीपं प्रकाशकमिति मुमुक्षूणामविवक्षयायोऽभुसंहितं फलमुक्तं शुद्धभ क्तानाञ्च अखिलानां श्रुतीनाम् उपनिषदां सारं श्लेषेण श्रुतीनां श्रवणानां श्रोत्रेन्द्रियस्य आस्वाद्यानां सारमिति । अतः पूर्व्वोक्तं निगमक- ल्पतरुफलत्वमेवास्य सूचितम् । अतएव स्वः शुक एवानुभावः रसोत्कर्षप्रभावज्ञापको यस्य तं स्वसुखनिभृतचेता इत्यत्र अजितरुचिरली- लाकृष्णसार इति हरेर्गुणाक्षिप्तमतिर्व्याख्यानं यदधीतवान् इत्यादिभ्यः । यद्वा । स्वस्यानुभावः प्रभावो यस्मात् तं । तद्व्याख्यानादेव शुकस्य सर्व्वमुनिभ्योऽप्युत्कर्षोऽभूदिति भावः । एकमनुपममद्वितीयमित्यर्थः । मुनीनां परीक्षित्सभोपविष्टानां नारदव्यासादीनामपीद- मश्रुतचरमिव जातमिति तानपि श्रीशुकदेव उपदिदेश देश्यमिति सन्दर्भः ॥ ३ ॥

गुरुं नत्वा देवतादीन् प्रणमति नारायणमिति । देशाधिकारित्वेन नरनारायणावस्याधिष्ठातृदेवते निर्द्दिष्टे । नरोत्तममिति । पुरुषोत्तमः श्रीकृष्णोऽस्य देवता सरस्वती शक्तिश्चकाराद्व्यास ऋषिः । व्यासमितिपाठे स्पष्टएव । वीजन्तुप्रणवो ज्ञेयः । छन्दोऽत्र प्राधान्येन गायत्र्येव ज्ञेयो तयैवारब्धत्वात् । तान्नमस्कृत्य जयेति क्रियापदमाक्षेपलब्धं श्रीकृष्णसम्बोधनकम् । उदीरयेदिति स्वयं तथोदीरयन्नन्यानपि पौराणिकानुपशिक्षयति । जयत्यनेन संसारमिति जयो ग्रन्थमिति वा । अत्र क्त्वाप्रत्ययेनैवानन्तर्य्ये सिद्धे तत इति कर्त्तृविशेषणं कप्र- त्ययान्तं ज्ञेयमिति केचित् ॥ ४ ॥

---

## सिद्धान्तप्रदीपः

यःसंसारिणांवुभुक्षूणांतमोधंसंसारमतितितीर्षतांमुमुक्षूणांमुनीनांमुक्तानांच ॥ आलयंपिवतेत्युक्तेश्चकरुणयापुराणगुह्यम् ॥ पुराणानांम ध्येगोप्यम् श्रीमद्भागवतमाह तमुपयापिशरणंव्रजामि पुराणगुह्यत्वेचत्वारिविशेषणानि स्वोनिजः सर्वोपकारकभूतोनुभावः प्रभावोयस्यतत् सर्ववेदार्थभूतभगवत्प्रतिपादकतयाश्रुतीनांसारम् एकमनुपमम् सर्वत्रहेतुमाह अध्यात्मदीपमिति आत्मनिजीवेवर्तमा नमध्यात्मम् यद्विज्ञानेनसर्वंविज्ञातंभवति यआत्मानितिष्ठन्नात्मनोंतरोयमात्मानंवेदेत्यादिश्रुत्यर्थभूतंभगवत्तत्त्वंतस्यप्रकाशकम् ॥ ३ ॥

श्लोकद्वयेनश्रीगुरुंप्रणम्येदानींहरिंनारदादींश्चप्रणमन् हर्यादीन्प्रणम्य शास्त्रमुदीरयेदित्यन्यंप्रत्युपादिशति नारायणमिति "अर्थेधर्मे चकामेचमोक्षेचभरतर्षभ यदिहास्तितदन्यत्रयन्नेहास्तिनतत्क्वचिदिति प्रथमपर्वोक्तेश्चतुर्वर्गप्रतिपादकस्यापिमहाभारतस्यपरमोविषयः परब्रह्मनारायणादिपदाभिधेयः श्रीकृष्णः तत्प्रणामार्थंतत्रास्य श्लोकस्य प्रतिपर्वपारः श्रीमद्भागवतस्यतुभगवत् स्वरूपगुणशक्त्यादि प्रधानस्य मोक्षैकप्रयोजनत्वादवश्यंतदुपक्रमादौभगवान्सर्ववेदेतिहासादिविषयोनमनीयः अतोनारायणंयद्वंदनवेदनादिनासर्वेषांवंदन वेदनादिसिद्धिस्तं जन्माद्यस्येत्यत्रोक्तलक्षणं शास्त्रविषयमुपास्यंनरंचतदंशभूतं तत्सखायंतदुपासनतच्छास्त्र श्रवणादावुपकर्तारम् अ न्यनरव्यावृत्त्यर्थमाह नरोत्तमम् सरस्वतींदेवींचभगवच्छक्तिविशेषभूतांभगवच्छास्त्र कथनश्रवणादावुक्तत्रींव्यासंचशास्त्राचार्यंनत्वनत्वै जयमुदीरयेत्कथयेत् महाभारतेतु जयोनामेति ह्यसोयमित्युक्तेस्तमुदीरयेदिहतुजयं श्रीमद्भागवतमितिभेदः ॥ ४ ॥

---

मुनयःसाधुपृष्टोऽहंभवद्भिर्लोकमङ्गलम्।
यत्कृतःकृष्णसंप्रश्नोयेनात्मासुप्रसीदति ॥ ५ ॥
सवैपुंसांपरोधर्म्मोयतोभक्तिरधोक्षजे।
अहैतुक्यप्रतिहताययात्मासुप्रसीदति ॥ ६ ॥ (१)

भाषा टीका।

जिन्होंने असाधारणप्रभाववाला. समस्तश्रुतिओंकासार.अद्वितीय और अंधतमकेपारजानेकी इच्छावाले संसारिओंको अध्यात्मतत्वके प्रकाशकरनेमें दीपककेसमगुह्य श्रीभागवतपुराणको जीवोंपरकृपाकर प्रकाशकियाहै, और जोसमस्तमुनिओंके गुरूहैं उनशुकदेवजीकी मैं शरणहूं ॥ ३ ॥

नारायण को नरोत्तमनर को देवी सरस्वती को और व्यासमुनी को प्रणाम कर जय ( जिससे संसार जीताजाय ऐसे ) ग्रंथ का आरंभ करें ॥ ४ ॥

श्रीधरस्वामी।

तेषां वचः प्रतिपूज्येति यदुक्तं तत् प्रतिपूजनं करोति हे मुनयः साधु यथा भवति तथाहं पृष्टः यतो लोकानां मङ्गलमेतत्। यतः कृष्णविषयः संप्रश्नः कृतः। सर्व्वशास्त्रार्थसारोद्धारप्रश्नस्यापि कृष्णे पर्यवसानादेवमुक्तम् ॥ ५ ॥

तत्र यत् प्रथमं पृष्टं सर्व्वशास्त्रसारमेकान्तिकं श्रेयो ब्रूहीति तत्रोत्तरं स वै इति। अयमर्थः। धर्म्मो द्विविधः प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च। तत्र यः स्वर्गाद्यर्थः प्रवृत्तिलक्षणः सोऽपरः। यतस्तु धर्म्मात् कृष्णे श्रवणादिलक्षणा भक्तिर्भवति स परो धर्म्मः स एवैकान्तिकं श्रेय इति। कथम्भूता अहैतुकी हेतुः फलाभिसन्धानं तद्रहिता। अप्रतिहता विघ्नैरनभिभूता ॥ ६ ॥

श्रीवीरराघवः।

तदेवं "मङ्गलाचारयुक्तानांनित्यंचप्रयतात्मनाम्। जपतांजुह्वतांनित्यंविनिपातोनविद्यत" इत्युक्तरीत्याकृतगुरुदेवतोपासनात्मकमंगलस्तावत्प्रश्नमभिनंदति। मुनयइतिहेमुनयःभवद्भिःसाधुयथाभवतितथालोकमंगलमितिप्रश्नसाधुत्वेहेतुः लोकमंगलविषयकत्वात्प्रश्नःकृतःमंलानांचमंगलमित्युक्तरीत्या निरतिशयःमंगलस्वरूपकृष्णविषयकसंप्रश्नःकृतस्ततोलोकमंगलमहंपृष्टइत्यर्थःकृष्णसंप्रश्नस्यलोकमंगलविषयत्वमेवोपपादयति येनकृष्णेनतद्विषयकप्रश्नेनवाहेतुनाचात्माचित्तंसुष्ठुप्रसन्नंभवति प्रश्नोत्तराभ्यांसस्वरूपगुणविभूतिः कृष्णोऽनुसंहितश्चित्तगतमालिन्यमपनयति चित्तप्रसादादेवलोकानां सर्वाणिमंगलानिसुलभान्येवेतिभावः ॥ ५ ॥

तत्रयत्तावत्पृष्टं "भवतायद्विनिश्चितंपुंसामेकांततःश्रेयस्तन्नःशंसितुमर्हसि" इतिकिंनिरतिशयंश्रेयःकोवातत्साधनभूतो धर्म्मश्रेष्ठ इतितत्रगर्भजरामरणाद्यनर्थरूपसंसृति निवृत्तिपूर्वकब्रह्मानं दानुभवात्मकोमोक्षएवनिरतिशयंश्रेयःतत्साधनभूतधर्मश्च परब्रह्मोपासनात्मिकाविजातीयप्रत्ययान्तराऽव्यवहिताप्रत्यक्षतापन्नाप्रीत्यात्मिका तद्भक्तिरेव "तन्निष्पत्तिश्चानाभिसंहितफलैर्वर्णाश्रमधर्मैर्ज्ञानयोगशमदमादिभि; सत्संगत्यादिप्रणाल्याचभगवद्गुणश्रवणादिरुचिजननद्वाराभवतीतिवक्तुंतावद्भक्तियोगानुग्राहकएववर्णाश्रमप्रयुक्तोधर्मः श्रेष्ठस्तदन्यस्त्वभिसंहितफलः पुनःसंसृतिहेतुत्वेनानर्थावह इत्याहसवाइतित्रिभिः यतोऽनभिसंहितफलाद्धर्माद्वर्णाश्रमानुगुणादनुष्ठितादधोक्षजेभक्तिर्भवतिसएवधर्मः परउत्कृष्टःभक्तिमपिविशिनष्टि अहैतुकीफलोपाधिरहिता अप्रतिहताअंतरायानुपहता अव्यवहितेतिपाठांतरंतदाविजातीयप्रत्ययांतराऽव्यवहिता ययाभक्त्याआत्मासुप्रसीदतिपूर्वाल्पभक्ति रुत्तरभक्तिप्रकर्षौपयिकमनोनैर्मल्यहेतुरित्यर्थः यद्वा ययात्मासुप्रसीदतिइत्यनेनप्रीत्यात्मकत्वमुच्यते अनुकूलज्ञानेनैवहिचित्तप्रसादः प्रतिकूलेनतुचित्तविक्षेपएवअनुकूलज्ञानमेवह्यानंदः सुखंप्रीतिश्चेतिपर्य्यायांतरैरुच्यते अव्यवहितेत्यनेनतैलधारावदविच्छिन्नस्मृतिसंतानरूपत्वमुक्तम् ॥ ६ ॥

श्रीविजयध्वजः।

संप्रतिसूतःशौनकादिप्रश्नसंहृष्टस्तत्प्रश्नंस्तौतीत्याह मुनयइति कृष्णविषयःसमीचीनःप्रश्नःकृतइतियद्यस्मात् अतोऽहंभवद्भिः साधुसर्वसाधनेषूत्तमसाधनंप्रतिपृष्टःनकेवलमुभयेषामस्माकंसाधु किंतुलोकंमंगलयतीति श्रवणमननाभ्यांकल्याणजनकत्वादित्यर्थः कुतःयेनकृष्णसंप्रश्नेनात्मापरमात्मामनोवाप्रसीदतितस्मादित्येकान्वयः ॥ ५ ॥

(१) अहैतुक्यव्यवहितेति विजयध्वज वीरराघवयोः पाठः

### श्रीविजयध्वजः

भगवद्भक्तिजनकत्वात् कृष्णसंप्रश्नएवपरमधर्मइत्याह सवाइति यतःकृष्णसंप्रश्नात् अधोक्षजेअहैतुकीअव्यवहिताभक्तिर्भवति पुंसांपरमधर्मःसवाइत्येकान्वयः अक्षजन्यज्ञानमधः कृत्वाऽतीत्यवर्ततइत्यधोक्षजः भगवत्प्रसादमंतरेणकाम्यफलहेतुशून्याहैतुकी विक्षेपादन्यप्रसंगादिव्यवधानशून्याऽव्यवहिता*नचान्योसावन्योहमस्मीतिनाविष्णुःकीर्तयेद्विष्णुमित्यादिश्रुतिस्मृतिनिषिद्धत्वात् भेदबुद्ध्य परपर्यायव्यवधानशून्येत्यर्थइति "व्यवधानंतिरोधानमथोच्यत" इत्यभिधानविरोधात् नचश्रुतिस्मृतिविरोधः अनयोःअन्यार्थत्वात् अविष्णुः नाष्णुर्यस्यसतथाअतद्भक्तइत्यर्थः अन्यःस्वतंत्रःअप्रतिहतेतिपाठेअस्खलितेत्यर्थः ययाभक्त्याआत्माआशुप्रसीदति समुद्धृत्यमनीषयेत्युक्तंदर्शयाति सइति सएवपरोधर्मःयतोधर्माद्धोक्षजेभक्तिर्भवतीतिवा ॥ ६ ॥

---

### क्रमसन्दर्भः ।

इतिसंप्रश्नसंहृष्ट इत्याद्यनन्तरं नारायणं नमस्कृत्य इत्याद्यन्तेन पुराणमुपक्रम्यैवाह मुनय इति । टीका च तेषां वचः प्रतिपूज्येति यदुक्तं तत् प्रतिपूजनं करोति हे मुनयः साधु यथा भवति तथाहं पृष्टः यतो लोकानां मङ्गलमेतत् यतः कृष्णविषयः संप्रश्नः कृतः सर्व्व-शास्त्रार्थसारोद्धारप्रश्नस्यापि श्रीकृष्णे पर्यवसानादेवमुक्तमित्येषा । यदिति । अतएवोत्तरेष्वपि पद्येषु अधोक्षजवासुदेवसात्वतांपतिकृ-ष्णशब्दास्तत् प्राधान्यविवक्षयैव पठिताः । अत्र श्रेयः प्रश्नस्याप्युत्तरं लोकमङ्गलमित्यनेनैव तावद्दत्तं भवति तथात्मसुप्रसादहेतोश्च येनात्मा सुप्रसीदतीत्यनेन । समिति क्वचित् पाठः ॥ ५ ॥

तदेवं सर्व्वशास्त्रसारस्य श्रीकृष्णाख्यस्वयंभगवदाविर्भावप्रश्नलक्षिततद्भक्तिलक्षणस्य श्रेयसः परमसर्व्वोत्तमत्वं बोधयितुं भगव-दाविर्भावमात्रस्य भक्तेः सर्व्वोत्तमश्रेयस्त्वमाह स वै इत्यादिना अतो वै कवय इत्यन्तेन ग्रन्थेन । यतो धर्म्मात् अधोक्षजे भक्तिः तत्कथा-श्रवणादिषु रुचिर्भवति । धर्म्मःस्वनुष्ठित इत्यादौव्यतिरेकेण दर्शयिष्यमाणत्वात् । स वै स एव । "स्वनुष्ठितस्य धर्म्मस्य संसिद्धिर्हरि-तोषणमिति वक्ष्यमाणरीत्या तत्सन्तोषणार्थमेव कुतो धर्म्मः परः सर्व्वतः श्रेष्ठः न निवृत्तिमात्रलक्षणोऽपि वैमुख्याविशेषात् । तथाच श्रीनारदवाक्यं नैष्कर्म्म्यमपीत्यादौ "कुतः पुनः शश्वदभद्रमीश्वरे न चार्पितं कर्म्म यदप्यकारणमिति । ततः स एवैकान्तिकं श्रेय इत्यर्थः। अनेन भक्तेस्तादृशधर्म्मतोऽप्यतिरिक्तत्वमुक्तम् । तस्या भक्तेः स्वरूपगुणमाह स्वतएव सुखरूपत्वादहैतुकी फलान्तरानुसन्धानरहिता अप्रतिहता तदुपरिसुखदपदार्थान्तराभावात् केनाप्यवबोधयितुमशक्या ( केनापि व्यवधातुमशक्या ) च ॥ ६ ॥

---

### सुबोधिनी ।

अभिनंदनंवदन्प्रश्नानांनिर्द्धारितार्थमाहमुनयइति ॥ फलंकृष्णएवसर्वप्राणिनामैहिकामुष्मिकफलदाताचसएवभुक्तिमुक्तीचलीलाअवताराश्चधर्मरक्षकश्चसएवअतः षण्णांप्रश्नानांसएवार्थः द्वितीयप्रश्नेद्वितीयंफलमेभ्यएवभवतिहेमुनयःनिर्द्धारितार्थाःयद्यपियदेवपृच्छयतेतत्रैवोत्तरंदेयंतथापिपृष्टमेवसाधुइदमेवहिलोकानांमंगलंयत्कृष्णः पृच्छ्यतेयेनचआत्माकृष्णः प्रसीदतिअंतः करणस्यापिभगवतस्तद्धर्माणांवाआवेशेप्रसादः इदंसामान्योत्तरंशास्त्रांतरश्रवणानंतरंमनननिदिध्यासनाभ्यांकार्यसिद्धिः अत्रतुसाप्रश्नैरेवेतिप्रश्नएवशास्त्रसमाप्तिः ॥ ५ ॥

इदानींफलसाधनेएकीकृत्यस्वाधिकारानुसारेणशास्त्रार्थंनिरूपयतिदशभिः भगवत्साक्षात्कारः फलंसाधनपारंपर्येप्रथमतोधर्मः अंतिमोभगवत्प्रसादः सचखंडशः सर्वत्रसाधनेषुवक्तव्यः तथासतिपरांतिमहाप्रसादसतिभगवानात्मानमाविः करोतितत्रभक्तिस्त्रिविधाज्ञानंचत्रिविधरुचिः श्रवणादिःप्रेमवतीभक्तिस्त्रिविधाआत्मज्ञानंतत्त्वज्ञानंभगवद्ध्यानंचेतित्रिविधंधर्मोवैराग्यंचसाधनंतत्परंपरायांयथायोग्यंविवेशनंनिरूप्यतेतत्रप्रथममेकांश्रृंखलामाह ॥ सवैपुंसामिति ॥ धर्मः साधनम् ॥ भक्तिफलंतत्रविहितश्रवणादीनांधर्मरूपाणांदृष्टप्रकारेणैवभक्तिसाधकत्वंस्नानादीनामदृष्टद्वारातत्रसाधनांतरानुप्रवेशेव्यभिचारोपिसंभवति अत्रप्रथमंस्नानादिधर्मनिर्द्धारः क्रियतेप्रमाणस्यतुल्यत्वेपिफलवलाद्विशेषः अतः वैनिश्चयेनपुंसांपरोधर्मःसःयतोभक्तिःश्रद्धालक्षणाभवतिस्वर्गादिसाधकत्वेतुधर्मत्वंसंदिग्धंपरत्वंवासचाग्रेविचारयिष्यतिधर्मस्वातंत्र्यंचसहायः कर्तृविशेषणत्वेनोक्तः पुंसामितिपरत्वंचविधीयतेव्यावर्तकमितिकेचित्अधः अक्षजंज्ञानंयस्मादितिइंद्रियाविषये इंद्रियविषयेहिकामादिभिरेवरुचिरुत्पद्यते किंधर्मेणधर्मादिपुरुषार्थोबलिष्ठः संचप्रतिबंधकानिदूरीकृत्यअपेक्षितानिसाधनानिचसंगृह्यपर्यवसायिफलंजनयतितत्ररुचिश्चेत्भगवतिसाधनत्वेनउपहतावादुः संगादिभिः तदापिनधर्मत्वंतदाहअहैतुक्यप्रतिहतेतिहेतुः फलाभिसंधानंप्रतिघातोरो-गादिभिः तस्यापिफलमाह आत्माअंतः करणसाक्षीभगवान्प्रसीदतिस्वपर्यवसानात् ॥ ६ ॥

---

### श्रीविश्वनाथचक्रवर्ती

तेषां वचः प्रतिपूज्येति यदुक्तं तत् करोति । हे मुनयः साधु पृष्टः कुतः यतो लोकमङ्गलमेवाहं पृष्टः तदेव कुतः यद्यस्मात् कृष्ण-

---

* अथयोन्यांदेवतामुपास्तेऽन्योसावन्योहमस्मीतिनसवेदयथापशुरितिबृहदारण्यकवाक्यम् ॥ तस्यैयंपरकीयव्याख्या ॥ यःकश्चित् अब्रह्मवित्स्वात्मनोव्यतिरिक्तांदेवतामन्योहमुपास्यदेवतायाःअन्योसौमत्तः उपासमीयोदेवःइत्येवंभेददृष्टयोपास्तेसउपासकःउपास्योपासकयोस्तत्त्वंनवेदेति ॥ तथाचात्रभेदज्ञाननिंदयातन्निषेधोऽभिमतइतिभावः ॥ स्मृतौविष्णुभिन्नस्यविष्णुकीर्तनकर्तृत्वाभिधानेन कर्तातद्भिन्नइतिसिध्यतीत्याशयः ॥

### श्रीविश्वनाथ चक्रवर्त्ती ।

विषयः सम्यक् प्रश्नः कृतः सर्व्वएव प्रश्नः श्रीकृष्णविषयः कुतोऽवसितस्तत्राह येन प्रश्नेनैव आत्मा प्रसीदतीति श्रीकृष्णस्यैव सद्य आत्मप्रसादकत्वमस्मदनुभवासिद्धामिति भावः ॥ ५ ॥

सर्व्वशास्त्रसारमैकान्तिकं श्रेयो ब्रूहीति प्रश्नद्वयस्योत्तरमाह स वै पुंसांपुम्मात्राणामेव धर्म्मः परः परमः श्रवणकीर्त्तनादिलक्षणः यदुक्तम् । "एतावानेव लोकेऽस्मिन् पुंसां धर्म्मः परः स्मृतः । भक्तियोगो भगवति तन्नामश्रवणादिभिः" । इत्यतः परशब्दविशेष्यो धर्म्मो भक्तियोग एव भवेदिति तथात्र मतुप्प्रत्ययेनैवकारेणचैतदन्यस्य परधर्म्मपदवाच्यत्वञ्च निषिद्धम् । यतो भक्तिः प्रेमलक्षणाभवेत् । अहैतुकी हेतुं विनैवोत्पद्यमाना इति सगुणा व्यावृत्ता । ननु महानयमपलापः क्रियते । मैवम् श्रवणकीर्त्तनादिरूपो यो धर्म्मः स भक्तिरेव साधननाम्नी सैव पाकदशायां प्रेमनाम्नी । ते द्वे अपि भक्तिशब्देनैवोच्येते । तदपि "भक्त्या संजातया भक्त्या विभ्रत्युत्पुलकां तनुमिति यतो भक्तिरधोक्षजे इत्यादिषु उत्तरस्या भक्तेः पूर्व्वा भक्तिः कारणं पक्वाम्रस्य कारणं आमाम्रमितिवत् स्वादभेदनिवन्धनमेव तस्य कारणत्वं वालवोधनार्थं काल्पनिकमेव न तु वास्तवम् । न ह्येकस्यैव पुरुषस्य बाल्ययौवनाद्यनेकावस्थावतो हेतुहेतुमद्भावस्तात्त्विक इति । घटपटौदनादिषु मृत्तण्डुलादीनां नामरूपलोप इवेति न तादृशत्वमत्र व्याख्यातुं शक्यमित्यवसेयम् । न च भक्तेः प्रसिद्धो हेतुः साधुसङ्ग एवास्तीति वाच्यम् । तस्यापि "आदौ श्रद्धा ततः साधुसङ्गोऽथ भजनक्रियेत्यादौ भक्तेर्द्वितीयभूमिकात्वेनोक्तत्वात् भक्तित्वमेव स्यान्महत्सेवया विप्रा इत्यग्रेऽपि तथाव्याख्यास्यमानत्वाच्च । किञ्च दानव्रततपोहोमादिर्निष्कामकर्म्मयोगश्च ज्ञानाङ्गभूतायाः सात्त्विक्या एव भक्तेः कथञ्चिद्धेतुर्भवति न तु निर्गुणायाः "यन्न योगेन सांख्येन दानव्रततपोऽध्वरैः । व्याख्यास्वाध्यायसन्न्यासैः प्राप्नुयाद्यत्नवानपीत्येकादशोक्तेः । न च निर्गुणाया भक्तेर्भगवत्कृपैव हेतुरिति वाच्यम् । तस्यापि हेतावन्विष्यमाणे अनवस्थानात् । न च सा निरुपाधिरेव केवलाहेतुरित्यपि वाच्यम् । तस्या असार्व्वत्रिकत्वेन भगवति वैषम्यप्रसक्तेः । किञ्च भक्तकृपैव हेतुरित्युक्ते न किञ्चिदसामञ्जस्यम् । उत्तमभक्तानां वैषम्याभावेऽपि "प्रेममैत्रीकृपोपेक्षा यः करोति स मध्यम" इति मध्यमभक्तलक्षणे वैषम्यस्य दर्शनात् । ततश्च भगवतो भक्ताधीनत्वात् भक्तकृपानुगामिनी भगवत्कृपा हेतुरिति सिद्धान्तः । ननु तर्हि कथं भक्तेरहैतुकत्वमभूत् । उच्यते । भगवत्कृपाया भक्तकृपान्तर्भूतत्वादुक्तकृपायाश्च भक्तसंगान्तर्भूतत्वादुक्तसंगस्य भक्त्यंगत्वादहैतुकत्वमेव सिद्धम् । किञ्च भक्तकृपाया हेतुर्भक्तस्यैव तस्य हृदयवर्त्तिनी भक्तिरेव तां विना कृपोदयसम्भवाभावात् । सर्व्वप्रकारेणापि भक्तेर्भक्तिरेव हेतुरिति निर्हेतुकत्वं सिद्धम् । भक्तिमते भक्तिभक्तभजनीयतत्कृपादीनां न पृथग्वस्तुत्वमिति भक्तेः स्वप्रकाशकत्वेन भक्तिप्रकाश्यत्वेऽपि भगवतः स्वप्रकाशकत्वं नानुपपन्नमिति । अप्रतिहता केनापि निवारयितुमशक्या । तथाहि तल्लक्षणे । "मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधाविति वक्ष्यते । उक्तञ्च श्रीरूपगोस्वामिचरणैः । "सर्व्वथा ध्वंसरहितं सत्यपि ध्वंसकारणे" इति । ज्ञानकर्म्मादिभिरनावृतेति वा । यया भक्त्या आत्मा मनः सम्यगेवप्रसीदतीति कामनामालिन्ये सति मनः प्रसादहेतुत्वासम्भवादस्या भक्तेर्निष्कामत्वं स्वत एवायातम् ॥ ६ ॥

---

### सिद्धांतप्रदीपः ।

हेमुनयः भवद्भिरहंसाधुयथाभवतितथापृष्टःयतःकृष्णसंप्रश्नःकृतःजातावेकवचनम् उपायादिप्रश्नानांसर्वेषांश्रीकृष्णेपर्यवसानादेकवचनम् येन प्रश्नेनभवतां प्रच्छकानांममवक्तुश्चकाकथालोकानां श्रोतृणामपिमंगलंस्यात् वक्ष्यतिच "वासुदेवकथाप्रश्नः पुरुषांस्त्रीन्पुनातिहि वक्तारंप्रच्छकंश्रोतॄन् तत्पादसलिलंयथेति येनात्माजीवः सुष्ठुप्रसन्नोभवति भगवद्गानभक्तिद्वारापरमानंदं प्राप्नोतीत्यर्थः ॥ ५ ॥

प्रथमप्रश्नस्योत्तरमाह सइति यतोऽधोक्षजेतत्कथाश्रवणादौरुच्युत्पादनद्वारा "भक्तिरेवैनंवर्द्धयति भक्तिरेवैनंदर्शयतिभक्तिवशः पुरुषः भक्तिरेवभूयसीत्यादिश्रुतिप्रोक्ताभक्तिर्भवेत्सयज्ञव्रततपस्तीर्थ वासमहत्सेवादिनानाविधो ऽनभिसंहितफलःधर्मःउपायइत्यर्थः स्वर्गाद्यभिसंधिपूर्वकस्य द्वैयत्वंवक्तुंधर्मंविशिनष्टिपरइति भक्तिंविशिनष्टि अहैतुकीअनभिसंहितफला यद्वा श्रीकृष्णकृपेतरहेतुरहिता अप्रतिहताविरोधिभिरनभिभूयमानाययापरमोपायभूतयाआत्माजीवः वक्ष्यमाणमुपेयंप्राप्यतद्भावापन्नः सन्प्रसीदतिप्रसन्नोभवति तदुक्तंमोक्षधर्मे "ज्ञात्वात्महर्षंहरिं वैवननिवर्ततितेऽव्ययाः । प्राप्यतत्परमंस्थानंमोदंतेक्षरमव्ययमिति ॥ ६ ॥

---

### भाषा टीका ।

हे मुनिजनों ! आपनै मुझसै साधु ( समीचीन-उत्तम ) प्रश्नकिया है । यह समस्त लोक का मंगल रूप है । क्योंकि आपनै कृष्ण विषयक प्रश्न किया है । जिससै आत्मा की प्रसन्नता होती है ॥ ५ ॥

पुरुषों का वही परम धर्म है जिससै अधोक्षज भगवान मै अहैतुकी ( जिसमै किसी फल की इच्छा नही हो ) और अप्रति हता ( जो किसी विघ्न से रुक नजाय ) भक्ति हो । जिस भक्ति सै आत्मा का प्रसाद होता है ॥ ६ ॥

---

**वासुदेवेभगवतिभक्तियोगःप्रयोजितः ।**
**जनयत्याशुवैराग्यंज्ञानञ्चयदहैतुकम् ॥ ७ ॥**
**धर्म्मःस्वनुष्ठितःपुसांविष्वक्सेनकथासुयः ।**　　(१)
**नोत्पादयेद्यदिरतिंश्रमएवहिकेवलम् ॥ ८ ॥**

### श्रीधरस्वामी ।

ननु "तमेतमात्मानं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा अनाशकेनेत्यादिश्रुतिभ्यो धर्म्मस्य ज्ञानाङ्गत्वं प्रसिद्धं तत्र कुतो भक्तिहेतुत्वमुच्यते सत्यम् । तत्तु भक्तिद्वारेणेत्याह वासुदेव इति । अहैतुकं शुष्कतर्काद्यगोचरम् औपनिषदमित्यर्थः ॥ ७ ॥

व्यतिरेकमाह धर्म्म इति । यो धर्म्म इति प्रसिद्धः स यदि विष्वक्सेनस्य कथासु रतिं नोत्पादयेत् तर्हि स्वनुष्ठितोऽपि सन् श्रमोज्ञेयः ननु मोक्षार्थस्यापि धर्म्मस्य श्रमत्वमस्त्येव अत आह केवलं विफलश्रम इत्यर्थः । नन्वस्तितत्रापि स्वर्गादिफलमित्याशङ्क्य एवकारेण निराकरोति क्षयिष्णुत्वान्न तत् फलमित्यर्थः । नन्वक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवतीत्यादिश्रुतेर्न तत्फलस्य क्षयिष्णुत्वमित्याशङ्क्य हिशब्देन साधयति । "तद्यथेह कर्म्मजितो लोकः क्षीयते एवमेवामुत्र पुण्यजितो लोकः क्षीयत" इति तर्कानुगृहीतया श्रुत्या क्षयिष्णुत्वप्रतिपादनात् ॥ ८ ॥

---

### दीपनी ।

यज्ञादीनां विशेषणमनाशकेनेति । कामानशनमनाशकं तेन निष्कामेनेति यावत् ॥ ७ ॥
विष्वक्सेनस्येति । विसूची व्यापिका सेना यस्य स विष्वक्सेनः भगवन्नारायणनामविशेष इति तस्येत्यर्थः ॥ ८ ॥

---

### श्रीवीरराघवः ।

नन्वव्यवहितेत्ययुक्तंशब्दादिविषयासक्तमनसाऽकामेनापिमध्येमध्येविषयांतरानुध्यानव्यवहितत्वप्रसंगादितिशंकांनिराकुर्वन्नुक्तभक्तेरेवविशेषणांतरमाह । वासुदेवइति । भगवतिषाड्गुण्यपरिपूर्णेवासुदेवेप्रयोजितोभक्तियोगः वैराग्यमाशुजनयाति । "सर्वत्रासौसमस्तंच वसत्यत्रैववैयतः । ततः सवासुदेवेतिविद्वद्भिःपरिगीयते" इतानिरुक्तवासुदेव शब्देनसर्वांतरात्मत्वंसर्वाधारत्वंभगवच्छब्देनषाड्गुण्यपूर्त्तिश्चोक्ता । सर्वांतरात्मकत्वेननिरतिशयत्वंलब्धम् । आत्मैवाहिनिरतिशयाप्रियः । एवमनेनपदद्वयेनशब्दादिलौकिकविषयेभ्योविलक्षणयमभिप्रेतम् । एवंचविषयस्यविलक्षणत्वादेवतदनुध्यानरूपोभक्तियोगः । शब्दादिविषयेष्वनासक्तिरूपंवैराग्यमाशुजनयाति । कस्मिंश्चिद्विषयेविलक्षणेअनुरागातिशयस्वविषयांतरवैतृष्ण्यावहत्वदर्शनात् । तस्माद्भक्तियोगनिष्ठमनसः शनैर्विषयांतरवैतृष्ण्यस्यार्थादेवोदयाद्विषयांतरानुध्यानाव्यवहितत्वंभक्तेः संपत्स्येतएवेतिभावः । तथायदहैतुकम् । "नाहंवेदैर्नतपसाइत्युक्तरीत्याभक्तिव्यतिरिक्तहेत्वंतरालभ्यंज्ञानंसाक्षात्कारात्मकंतच्चजनयति अनेनभक्तेः साक्षात्कारात्मकत्वंविशेषणमुक्तम् ॥ ७ ॥

तदेवंश्लोकद्वयेनोक्तविधभक्त्यनुग्राहकएवानभिसंहितफलवर्णाश्रमप्रयुक्तधर्मः श्रेष्ठइत्युक्तम्अथास्यधर्मस्यभगवद्गुणादिरुचिजननद्वाराभक्तियोगानुग्राहकत्वंवदन्नभिसंहितफलधर्मस्यश्रमफलकत्वमाह । धर्मइत्यकेनायः सम्यगनुष्ठितोऽपिधर्मःपुंसांविष्वक्सेनस्यभगवतःकथासुरतिंरुचिंयदिनोत्पादयेत्तर्हिसधर्मः केवलंश्रमएवश्रमफलकएवसंसृतिरूपानर्थावहएवेत्यर्थः रतिंनोत्पादयेदित्यनेनरत्येकप्रयोजनतयानुष्ठितोधर्मः परएेहिकामुष्मिकफलार्थस्तुश्रमफलकइतिप्रतीतेः फलानभिसंध्यभिसंधिभ्यांधर्मस्योत्कृष्टत्वापकृष्टत्वेवेदितव्ये ॥ ८ ॥

---

### श्रीविजयध्वजः ।

भक्तिरपिवैराग्यद्वारेणअपरोक्षज्ञानसाधनामित्याह वासुदेवइति वासुदेवेभगवतिप्रयोजितोभक्तियोगः वैराग्यंयदहैतुकंज्ञानंतच्चजनयतीत्येकान्वयः वसतिसर्वत्रस्वस्मिन्सर्वंवासयतीतिवावासुः क्रीडादिकरणाद्देवःवासुश्चासौदेवश्चेतिवासुदेवःतस्मिन् भक्तिलक्षणउपायः भक्तियोगः वैराग्यंविषयेष्वसारताबुद्धिं अकारवाच्यविष्णुप्रसादएवहेतुर्निमित्तंयस्यतत्तथोक्तं द्रव्यलाभादिहेतुसंबंधीन्द्रजालादिज्ञानं नभवतीतिवा ॥ ७ ॥

---

(१) कथाश्रयामिति विजयध्वज पाठः

### श्रीविजयध्वजः ।

ननुनित्यनैमित्तिकादिधर्माणांसत्त्वात्कथमस्यवपरमत्वमित्याशंक्य तेषामपिकृष्णकथारतिजनकतयातत्साधनत्वेनपरमत्वमित्याह धर्मइति यःपुरुषैः स्वनुष्ठितोधर्मःविष्वक्सेनकथाश्रयांरतिंनोत्पादयेत्तर्हिपुंसांसकेवलंश्रमएवहीत्येकान्वयः शास्त्रोक्तसदाचारद्रव्यदेशकालादिभिर्नियततयासुष्ठ्वनुष्ठितःयज्ञाग्निकीर्तितेविष्वक्सर्वतःअंचतिदैत्यसेनामितिविष्वक्सेनस्तस्यकथासुरतिं निरंतराभ्यासरूपां केवलं श्रमएवक्रियाकालेउत्तरकालेपिदुःखस्वरूपत्वादायासएवेत्यर्थः हिशब्देनानेवंवित्महत्पुण्यंकर्मकरोतितद्धास्यांततःक्षीयतइतिश्रुतिप्रसिद्धिं दर्शयति ॥ ८ ॥

---

### क्रमसन्दर्भः ।

जातायाञ्च तस्यां रुचिलक्षणायां भक्त्यां तयैव श्रवणादिलक्षणसाधनभक्तियोगः प्रवर्त्तितः स्यात् । ततश्च यस्यास्ति भक्तिर्भगवत्यकिञ्चनेत्याद्यनुसारेण भगवत्स्वरूपादिज्ञानं ततोऽन्यत्र वैराग्यञ्च तदनुगाम्येव स्यादित्याह वासुदेव इति । अहैतुकं ज्ञानम् आशु ईषत्तच्छ्रवणमात्रेण जनयति । ज्ञानञ्च यदहैतुकमिति पाठः क्वचित् ॥ ७ ॥

वासुदेवतोषणाभावेन यदि तत् कथासु तल्लीलावर्णनेषु रतिं रुचिं नोत्पादयेत् तदा श्रम एव स्यात् न तु फलम् । कथारुचेः सर्व्वश्रवाद्यत्वात् श्रेष्ठत्वाच्च सैवोक्ता । तदुपलक्षणत्वेन भजनान्तररुचिरप्युद्दिष्टा एवशब्देन प्रवृत्तिलक्षणकर्म्मफलस्य स्वर्गादेः क्षयिष्णुत्वम् । हिशब्देन तत्रैव "यथेह कर्म्मजितो लोकः क्षीयते" इति सोपपत्तिकश्रुतिप्रमाणत्वम् । "निर्णीते केवलमित्यमरकोषात् । केवलमित्यव्ययेन निवृत्तिमात्रलक्षणधर्म्मफलस्य ज्ञानस्यासाध्यत्वं सिद्धस्यापि नश्वरत्वं तत्रापि तेनैव हिशब्देन "यस्य देवे परा भक्तिरित्यादिश्रुतिप्रमाणत्वम् । "नैष्कर्म्म्यमप्यच्युतभाववर्जितमित्यादि श्रेयः सृतिं भक्तिमुदस्य ते विभो इत्यादि आरुह्य कृच्छ्रेण परं पदं ततः पतन्त्यधो नादृतयुष्मदङ्घ्रय" इत्यादिवचनप्रमाणत्वञ्च सूचितम् । श्लोकद्वयेन भक्तिर्निरपेक्षा ज्ञानवैराग्ये तु तत्सापेक्षेइति लभ्यते । तदेवं भक्तिफलत्वेनैव धर्म्मस्य साफल्यमुक्तम् ॥ ८ ॥

---

### सुबोधिनी ।

सुष्ठुभक्तेर्विषयत्वंप्रयोजनंचाह वासुदेवेइति ॥ शुद्धसत्त्वात्मकेअंतः करणेआविर्भूतोवासुदेवः सत्त्वंविशुद्धमितिवाक्यात्सचध्यानादिभेदेनउपहतावादुः संगादिभिः तदापिनधर्मत्वंदेवतांतरादिवलेनान्यापिभवतितद्व्यावृत्त्यर्थमाहभगवतीतिरुचिमात्रत्वनिराकरणायपरंपरासिद्ध्येयोगइतिभक्तिरेवयोगः प्रकर्षोहिदीर्घकालादरनैरंतर्यंतस्यपरमफलंभगवत्प्रसादः सर्वत्रानुवर्ततेअन्यदप्याहजनयतीति आशुशीघ्रं विषयेषुवैराग्यमात्मनिचज्ञानंतच्चाहैतुकं नानुमानगम्यंकिंतुसाक्षात्काररूपम् ॥ ७ ॥

एवंधर्मादिज्ञानांताएकापरंपरानिरूपिता तस्याअपिनिर्द्धारिकामन्यांपरंपरांवक्तुंधर्मस्यतदनुजननेवाधकमाहधर्मः स्वनुष्ठितइति ॥ धर्मः साधनंकथारुचिः साध्यातत्रस्वरूपोपकारीधर्मोऽग्रेवक्तव्यः अदृष्टद्वारोपकारिणांव्यभिचारसंभावनायाविद्यमानत्वात्निंदातिसम्यगनुष्ठितोपिस्नानादिधर्मः विष्वक्परितः सेनाआज्ञावायस्यअनेनरत्यभावेसर्वमन्यथाभवेदित्यत्रहेतुरुक्तः प्रासंगिकत्वाभावायसप्तमीवहुवचनंसामान्यत्वासवीर्यभावायकथेतियइतिधर्मस्यस्वरूपमाहश्रमएवहिकेवलमिति यथामल्लानांगात्रचालनाद्यभ्यासः तथास्नानाद्यभ्यासोऽपिएवअन्यव्यावृत्त्यर्थएवकारःतेननादृष्टमुत्पद्यतइत्यर्थःहियुक्तोऽयमर्थःफलव्यभिचारात्ननुश्रमेवलवृद्धिर्मल्लादिषुदृष्टातथात्रापिलौकिकंकिंचिद्भविष्यतीत्याशंक्याहकेवलमिति फलांतरस्यादर्शनात्प्रतिष्ठापिनसद्भिर्निरूप्यतेस्वर्गादीनांतुफलत्वमग्रेनिराकरिष्यतेएवंसाधारणधर्मस्यवैयर्थ्यमुक्तं पुत्रादिकामतयाक्रियमाणोधर्मोधर्मएवनभवतिफलस्याविद्याकार्यत्वेनदुःखरूपत्वात्किंतुभृत्यादिकृतिवन्नैमित्तिकमेवतत्रयजत्यादेरनुवादः चित्तशुद्ध्यभावेनाधिकाराभावादन्यथाकरणात्देवताधिष्ठानाभावात्क्रियायालौकिकत्वंफलंसाधनंचसामान्यतः पूर्वमेवप्रतीतंतथाचऔषधादिवत्तृतीययाकरणत्वमात्रंवोध्यतेयजतिस्तुव्यर्थः तस्मान्नधर्मत्वम् ॥ ८ ॥

---

### श्रीविश्वनाथ चक्रवर्त्ती ।

ननु स एव किमाकार आत्मप्रसाद इत्यपेक्षायां सर्व्वदुर्विषयवैमुख्यापादकभगवद्रूपगुणमाधुर्यानुभवज्ञानमय एवायमित्याह वासुदेव इति । प्रकर्षेण योजितः सम्बद्धः दास्यसख्यादिसम्बन्धयुक्तः कृत इति यावत् । श्लेषेण प्रयोजनीकृतः भक्तियोगस्य भक्तियोग एव प्रयोजनं नान्य इत्येव विचारित इत्यर्थः । जनयतीति ज्ञानवैराग्यार्थं पृथक् यत्नो भक्तैर्न कर्त्तव्य इतिभावः । आशु शीघ्रं तत्काल एवेत्यर्थः । यद्वक्ष्यते ।"भक्तिः परेशानुभवो विरक्तिरन्यत्र चैषत्रिक एककालः । प्रपद्यमानस्य यथाश्नतः स्युस्तुष्टिः पुष्टिः क्षुदपायोऽनुघासमिति । ननु तर्हि ज्ञानान्मोक्ष एव भावीतितत्राह अहैतुकम् । अन्नस्य हेतोर्वसति इतिवद्धेतुः प्रयोजनं तदत्र सायुज्यं तन्नाहैतीति तेन भगवद्रूपगुणमाधुर्य्यानुभवमयमेव ज्ञानमायातम् । एवमेव चतुर्थेऽपि वक्ष्यते । "वासुदेवे भगवति भक्तियोगः समाहितः । सध्रीचीनेन वैराग्यं ज्ञानञ्च जनयिष्यतीति । तत्र सध्रीचीन प्रकारः खलु मोक्षादिफलान्तराभिसन्धिराहित्यमेवेति व्याख्यास्यते । "सोऽचिरादेवराजर्षे स्यादच्युतकथाश्रयः । शृण्वतः श्रद्दधानस्य नित्यदास्यादधीयत" इत्यनन्तरवाक्ये तत्कारणञ्च स एव दृष्ट इति । एवञ्च भक्तेः कारणं प्रयोजनञ्च भक्तिरेवेति व्यवस्थितम् ॥ ७ ॥

---

धर्म्मस्यह्यापवर्ग्यस्यनार्थोऽर्थायोपकल्पते ।
नार्थस्यधर्म्मैकान्तस्यकामोलाभायहिस्मृतः ॥ ९ ॥
कामस्यनेन्द्रियप्रीतिर्लाभोजीवेतयावता ।
जीवस्यतत्त्वजिज्ञासानार्थोयश्चेहकर्म्मभिः ॥ १० ॥ (१)

श्रीविश्वनाथचक्रवर्त्ती

ननु वर्णाश्रमाचारलक्षणो धर्म्मः कथं न परस्तत्राह धर्म्म इति । यः पुंसां विप्रादीनां सुष्ठु अनुष्ठितो धर्म्मः स विष्वक्सेनकथासु-रतिं नोत्पादयेत् । "कर्म्मणापितृलोक" इति श्रुतेः कर्म्मणां रत्यनुत्पादकत्वञ्च । कर्म्मभिर्वात्रयीप्रोक्तैरित्यादौ न यत्रात्मप्रदो हरिरिति चतुर्थे नारदोक्तेरेव व्यक्तम् । यदि च रतिं नोत्पादयेत् तर्हि केवलं श्रम एव पितृलोकादेर्नश्वरत्वात् तस्मात् स्वधर्म्मं त्यक्त्वा श्रवणकी-र्त्तनादिलक्षणः पूर्व्वोक्तः परो धर्म्म एवानुष्ठेय इति भावः । यद्वा ननु च "अस्मिन् लोके वर्त्तमानः स्वधर्म्मस्थोऽनघः शुचिः । ज्ञानं विशु-द्धमाप्नोति मद्भक्तिंश्च यदृच्छयेति श्रीभगवदुक्तेर्निष्कामकर्म्मयोग एव भक्तेर्हेतुरस्ति तत् कथं भक्तिरहैतुकीत्युच्यते । सत्यम् । तत्र कर्म्म-योगस्य ज्ञानजनकत्वमिव न साक्षात् भक्तिजनकत्वं व्याख्यातुं शक्यं मध्ये यदृच्छयेति पदोपादानात् । ततश्च तत्र पुंसि भक्तेर्यदृच्छा स्वैरिता यदि स्याद्दैवादन्यनिरपेक्षएव शुद्धभक्तेः प्रवेशः स्यात् तदा तामपि स प्राप्नोतीति तत्रार्थः । "यदृच्छास्वैरितेत्यभिधानात् । कष्ट-कल्पनया व्याख्यानान्तरे भक्तेः स्वप्रकाशत्वं न सिद्ध्येदिति तदनादृतमित्यतो निष्कामोऽपि कर्म्मयोगो न भक्तेर्हेतुरित्याह धर्म्मइति । य इति । स वै पुंसां परो धर्म्म इति पद्योक्तात् परमधर्म्मादन्यो यो वर्णाश्रमाचारलक्षणः स्वनुष्ठितो निष्कामोऽपि धर्म्मो विष्वक्सेनकथा-सुरतिं प्रीतिं नोत्पादयेत् स केवलं श्रम एव । यदीति गर्हायां श्रमजनकत्वादुगर्हितइत्यर्थः । "यदि गर्हा विकल्पयोरिति मेदिनी । यद्वा असन्देहेऽपि सन्देहवचनं यदि वेदाः प्रमाणमितिवत् । "धत्ते पदं त्वमविता यदि विघ्नमूर्द्धनीत्यत्र यदीति शब्दो निश्चय इति श्रीस्वामि-चरणानां व्याख्यानाच्च । यद्वा ननु प्रसिद्धधर्म्मादपि कचित् हरिकथासुप्रीतिरुत्पद्यते इति श्रूयते । सत्यम् । तया विनाधर्म्म फलाप्राप्तेः सा खल्वौपाधिक्येव न तात्विकीत्याह धर्म्म इति । य इति । स प्रसिद्धो धर्म्मः काम्यो नित्यो वा विष्वक्सेनकथासु रतिं प्रीतिं यदि नोत्-पादयेत् तदा श्रम एव । अयमर्थः । यथा कर्षकाणां नृपे प्रीतिं कृषिरेवोत्पादयत्यन्यथा तस्याः फलाप्राप्तेरेवमेव धर्म्मोऽपि विष्वक्सेनक-थासु प्रीतिं विना स्वस्य वैफल्यदर्शनायैव तत्र त्ववेकिनां प्रीतिमुत्पादयेदेव स यद्यविवेकिनां नोत्पादयेत् तदा केवलं श्रम एव । यथा नृपे प्रीतिं विना कृषिफलस्यालाभात् श्रमएव तथैव हरौ भक्तिं विना प्रवृत्तनिवृत्तधर्म्मफलयोः स्वर्गादिज्ञानयोरलाभात् श्रमः । यदुक्तम् "कुतः पुनः शश्वदभद्रमीश्वरे न चार्पितं कर्म्म यदप्यकारणमिति । यथा च कृषौ प्रीत्यनुरोधादेव नृपे प्रीतिः न तु वस्तुतस्तथैव धर्म्मे प्रीत्यनुरोधादेव तत्कथासु प्रीतिर्न तु तत्र वस्तुत इति विवेचनीयम् । अतएव प्रह्लादेनोक्तम् । "नान्यथेहावयोरर्थो राजसेवकयोरिवेति ॥८॥

---

सिद्धान्तप्रदीपः।

त्यागएवहिसर्वेषांमोक्षसाधनमुत्तमम् । त्यजतैवहितज्ज्ञेयंत्यक्तुः प्रत्यक्परंपदमिति भालविश्रुतिप्रोक्तंसंसाराद्वैराग्यंजनयाति यद्हेतुकं भक्तीतरोत्पादकशून्यम् ऋतेज्ञानान्नमुक्तिः ब्रह्मविदाप्नोतिपरमित्यादि श्रुतिप्रोक्तंज्ञानंतच्च जनयति प्रथमउपायोधर्मस्ततोहरिकथाश्रवणा दिरूपाभक्तिः सावैराग्यमुत्पाद्यभगवत्साक्षात्कारज्ञानाकारतयाजायतइतिफलितोऽर्थः ॥ ७ ॥
विष्वक्सेनकथासु उक्तलक्षणाहरिभाक्तिसाधनरूपेषुहरिकथाश्रवणादिषुभाक्तिभेदेष्वित्यर्थः ॥ ८ ॥

---

भाषा टीका।

वासुदेव भगवान मै प्रयोजित भक्तियोग, शीघ्रही वैराग्य को उत्पन्न करता है और शुष्क तर्कादि शुन्य शुद्ध ज्ञान को भी उत्पन्न करताहै ॥ ७ ॥
मनुष्यों का भलिभांत अनुष्ठित भी धर्म यदि विष्वक्सेन भगवान की कथा मै रति न जन्मावै तौ वह निश्चय केवल श्रमहीं है । ८ ।

---

श्रीधरस्वामी।

तदेवं हरिभक्तिद्वारा तदितरवैराग्यात्मज्ञानपर्य्यन्तः परो धर्म्म इत्युक्तम् । अन्ये तु मन्यन्ते धर्म्मस्यार्थः फलं तस्य च कामः फलं तस्य चेन्द्रियप्रीतिः तत्प्रीतेश्च पुनरपि धर्म्मार्थादिपरम्परेति । यथाहुः "धर्म्मादर्थश्च कामश्च स किमर्थं न सेव्यते" इत्यादि तन्निराकरोति धर्म्मस्येति द्वाभ्याम् । आपवर्ग्यस्य उक्तन्यायेनापवर्गपर्य्यन्तस्य अर्थाय फलत्वाय अर्थो नोपकल्पते योग्यो न भवति । तथा अर्थस्याप्येव-म्भूतधर्म्माव्यभिचारिणः कामो लाभाय फलत्वाय न हि स्मृतो मुनिभिः ॥ ९ ॥

---

( १ ) जीवस्यातत्त्वजिज्ञासोरितिविजयध्वजपाठः

### श्रीधरस्वामी ।

कामस्य विषयभोगस्य इन्द्रियप्रीतिर्लाभः फलं न भवति किन्तु यावता जीवेततावानेव कामस्य लाभः जीवनपर्य्याप्त एव कामः सेव्य इत्यर्थः । जीवस्य जीवनस्य च पुनः कर्म्मभिर्धर्म्मानुष्ठानद्वारा य इह प्रसिद्धः स्वर्गादिः सोऽर्थो न भवति किन्तु तत्त्वजिज्ञासैव ॥ १० ॥

---

### दीपनी ।

आपवर्ग्यस्येति । निवृत्तिलक्षणो धर्म्म एव सेव्यः न तस्य फलमर्थ इति भावः ॥ ९ ॥ १० ॥ ११ ॥

---

### श्रीवीरराघवः

तदेवमनभिसंहितफलोभगवद्गुणश्रवणादिरुचिजननद्वाराभक्तियोगानुग्राहकएवधर्मः परोऽन्यस्तुश्रमफलकइत्युक्तम् । अथोक्तविधधर्मानुग्राह्यभगवद्भक्तियोगसाध्यमोक्षस्यैवनिरतिशयपुरुषार्थत्वमितिदर्शयितुंधर्मार्थकामानांस्वतः पुरुषार्थत्वंधर्मस्यार्थार्थत्वमर्थस्यकामार्थत्वंकामस्येंद्रियतृप्त्यर्थत्वमिंद्रियतृप्तेर्जीवनस्यपुनर्धर्मार्थत्वमित्यादिरूपांचक्रवत्परिवृत्तिंलौकिकाभिमतांचानिरस्य धर्मादीनामपिपरंपरया-निरतिशयपुरुषार्थरूपमोक्षसाधनभक्तियोगानुग्राहकत्वमाह । धर्मस्येतित्रिभिः । तत्रधर्मस्यफलमर्थः अर्थफलंकामः कामफलमिंद्रियतृप्तिरितिलौकिकानांमतम् तत्रधर्मफलत्वमर्थस्यनिरस्यतिधर्मस्येत्यर्धेन । आपवर्ग्यस्यापवर्गसाधनस्यअनभिसंहितफलत्वेसतिपरंपरयानिरातिशयपुरुषार्थरूपमोक्षसाधनीभविष्यतोधर्मस्यार्थायप्रयोजनायार्थः धनंनप्रकल्पतेधनंधर्मस्यफलंनभवतीत्यर्थः धर्मस्यार्थफलकत्वरूपलौकिकमतानुवादेनैवस्वतः पुरुषार्थत्वमपिनिरस्तंवेदितव्यम् । एवमुत्तरत्रापिद्रष्टव्यम् एकस्यैवदानयागादिरूपस्यधर्मस्यफलाभिसंध्यनभिसंधिरूपाकारभेदेनोत्कृष्टापकृष्टफलसाधनत्वेऽवगतेसतितत्रानभिसंहितफलत्वरूपाकारानादरेणसहेतरपुरुषार्थरूपार्थार्थत्ववादरूपंलौकिकानांमतमतीवानादरणीयमितिभावः अर्थकामस्यार्थफलत्वंनिरस्यति । नार्थस्येति । धर्मैकांतस्यधर्मैकप्रयोजनस्यार्थस्यवित्तस्यलाभायप्रयोजनाय कामोनस्मृतः । अर्थस्यप्रयोजनंनकामोभवतीत्यर्थः अत्रकामशब्देनकाम्यतेइतिकामइतिव्युत्पत्त्यान्नपानादिरुच्यते ॥ ९ ॥

अथकामस्येंद्रियतृप्तिफलकत्वंनिरस्यतिकामस्येतियावतान्नपानादिनाकामेनकाम्यमानेन वस्तुनाजीवतितावतोन्नादेर्भोग्यवस्तुनः लाभः फलंनेंद्रियतृप्तिः किन्तु देहधारणमेवान्नपानादिकामफलमित्यर्थः अथजीवनस्यपुनर्धर्मार्थत्वं निरस्यति । जीवस्यजीवनस्यप्रयोजनं तत्त्वजिज्ञासैवनतुइह लोके यः कर्मभिः साध्योधर्मः सोर्थ; प्रयोजनम् । अत्र धर्मार्थकामजीवनानां क्रमेणार्थकामेंद्रियतृप्तिधर्मार्थत्वं निरस्य तेषां क्रमेणापवर्गधर्मदेहधारणमात्रतत्त्वजिज्ञासार्थत्वोक्तेरयंभावः । सतिवित्तेतेनानभिसंहितफलं धर्मं संपाद्य तेन धर्मेणापवर्गसाधनभूतं भक्तियोगमुपकुर्यात् । सतितुकामेतेनदेहधारणमात्रोपयुक्तेन देहंधृत्वातेन देहेनभजनीयतत्त्वजिज्ञासाकार्येति ॥ १० ॥

---

### श्रीविजयध्वजः ।

ननुधर्मस्यभगवत्कथारत्यजनकत्वेकथंश्रमैकफलत्वंधर्मादर्थोऽर्थात्कामःकामात्सुखमित्यर्थशास्त्रादौप्रसिद्धेरितितत्राह धर्मस्येति अपवर्गोमोक्षःतत्साधनमापवर्ग्यं तस्यधर्मस्यइहार्थःकांचनादिद्रव्यमर्थायफलायनकल्पते हियस्मात्तस्माद्धरिकथारतिजनकत्वमेवफलमित्यर्थः धर्मएवएकांतोनियमेनफलंयस्यसधर्मैकांतः तस्यधर्मसाधनस्यार्थस्यकामो लाभायप्रयोजनायनस्मृतः विद्वद्भिरितिशेषः अत्रापिहिशब्दोहेतौ ॥ ९ ॥

कामस्येंद्रियप्रीतिर्लाभोनभवति तर्ह्यशनाच्छादनाद्यभावेक्षुधादिनामरणमेवस्यात्तत्राह जीवेतेति यावतार्थादिनाजीवतिशरीरयात्रानिर्वाहकोभवति तस्मादर्थशास्त्रादौप्रतिपादितक्रमोबहिर्मुखानामितिभावः ब्रह्मार्पणबुद्ध्याअकृतस्यकर्मणोभगवत्कथारतिसाधनत्वमित्याह जीवस्येति इहकर्मभिर्योर्थःभगवत्कथारतिलक्षणः सःअतत्त्वजिज्ञासोर्जीवस्यनभवति भगवत्तत्त्वमजानतः पुरुषस्यतदनर्पणबुद्ध्याकृतैः कर्मभिःफलमैहिकामुष्मिकंनस्यादितिभावः ॥ १० ॥

---

### क्रमसंदर्भः ।

तत्र यदन्ये मन्यन्ते धर्म्मस्यार्थः फलं तस्य कामः तस्य चेन्द्रियप्रीतिः तत्प्रीतेश्च पुनरपि धर्म्मादिपरम्परेति तच्चान्यथैवेत्याह द्वाभ्याम् । धर्म्मस्येति । आपवर्ग्यस्य यथा वर्णविधानमपवर्गश्च भवति योऽसौ भगवति सर्व्वात्मन्यनात्म्येऽनिरुक्तेऽनिलयने परमात्मनि वासुदेवेऽनन्यनिमित्तभक्तियोगलक्षणो नानागतिनिमित्ताविद्याग्रन्थिवन्धनद्वारेण यदा हि महापुरुषपुरुषप्रसङ्ग इति पञ्चमस्कन्धगद्यानुसारेण अपवर्गो भक्तिः । तथाच स्कान्दे रेवाखण्डे । "निश्चला त्वयि भक्तिर्यासैव मुक्तिर्जनार्द्दन । मुक्ता एव हि भक्तास्ते तव विष्णो

क्रमसंदर्भः।

यतो हरे" इति। तत उक्तरीत्या भक्तिसम्पादकस्येत्यर्थः ॥ ९ ॥

तदेवं तच्च ज्ञानं यस्या भक्तेरवान्तरफलमुक्तं सैव परमं फलमिति भावः ॥ १० ॥

---

सुबोधिनी।

ननुकामितंफलंपुरुषार्थः तत्साधकस्यकथंनधर्मत्वम् ॥ तत्राह ॥ धर्मस्येति ॥ "अर्थोभिधेयरैवस्तुप्रयोजननिवृत्तिष्वितिकोशात्अर्थशब्दस्य पंचार्थाः तत्रशब्दप्रकरणाभावान्नाभिधेयत्वमउपपदस्याभावान्ननिवृत्तित्वं ततोरैवस्तुप्रयोजनान्यवशिष्यंतेतत्रधनपशुपुत्रादयोरैरूपाःतेधर्मकार्यानभवंतिधर्मोहिचोदनालक्षणः तत्रलौकिकत्वेनविधिस्पर्शाभावान्नधर्मत्वम् अन्यथाभेषजपानादेरपिधर्मत्वंस्यात्तथाप्रतिग्रहस्यअपूर्वांशस्तुनास्त्येव ॥ किंच ॥ एतेहिवस्तुतोऽनर्थाः आत्मनाशकत्वात्तथाचयथाश्येनादयोनधर्माः तथाधनार्थाअपिसाधनधर्माः येपुनर्द्धर्माः ते नधनादिसाधकाइत्यर्थः तथानपरमार्थायस्यादित्याहआपवर्ग्यस्येतिअपवर्गसंबंधिनः अपवर्गपर्यंतंवाक्रियमाणस्यननुधर्मार्थकाममोक्षाश्चत्वारः पदार्थाः पूर्वपूर्वसाधनरूपाः तथाचधर्मः कथंनार्थायतत्राहनार्थस्येतिअदृष्टाददृष्टंहिबलवत्अर्थेनहिधर्मोदृश्यतेनहिधर्मेणार्थः धर्मएव एकः अंतः पर्यवसितंकार्ययस्येतितथाच येनकेनाप्युपायेनअर्थसंपाद्यधर्मः कर्त्तव्यः नतुधर्मेणार्थसंपादनंननुतर्हिअर्थः सर्वसाधकोस्तुकामस्यापितत्कार्यत्वेनदर्शनात्तत्राहकामोलाभायेतिकामोविषयसुखमिंद्रियविषयाधानंहिततत्तत्रविषयांशेनार्थोपयोगः रूपादीनामेवविषयत्वात्नचविषयादिरूपादिसंपादकः सिद्धानिरूपाणिअन्यस्यभवंतीतियद्विपरीतमायातम्अर्थप्राप्तेरूपादिगच्छतिगतेचार्थेरूपादिप्राप्तिरितिपरावृत्तावपिसाध्यसाधनताचेत्तत्रापिवैपरीत्यमुक्तंतथाचवस्तुव्यत्यासेचतत्अर्थेनार्थेचनकाम; नचविषयाएवअर्थरूपाः कामसाधकाइतिवाच्यम् लोकप्रसिद्ध्यभावात्अर्थसाधकस्यापिधर्मत्वापत्तेश्चलोकेसाहचर्यमात्रेणसाधकत्वप्रतीतिः कदर्यस्यार्थवतोऽपिकामाभावाच्चपश्वादीनामर्थाभाववतामपिकामदर्शनाच्चतथामस्करिणः तथाच "आत्मकामाप्तकामइतिश्रुतेः तथाचक्वचित्क्वचित्साहचर्यदर्शनेननसाधनभावइतिहिशब्दार्थः ॥ ९ ॥

किंच तुष्यतुदुर्जनइतिन्यायेनअर्थेनकामः साध्यतांसाकियान्कामः कीदृशश्चजीवनमात्रपर्यवसितश्चेत्सचआब्रह्मतृणस्तंवपर्यंतंस्वतःसिद्धोनार्थसाध्यः अर्थेंद्रियप्रीतिरूपः अनलत्वात्तस्यनपूर्त्तिरस्ति "नजातुकामः कामानामितिवचनात्अनुभवाच्चप्रवृत्तिस्तुभ्रांत्यातथाचकामोविषयभोगः इंद्रियप्रीतिहेतुर्नभवति लाभपदंदेहलीप्रदीपन्यायेनोभयत्रसंबध्यते तस्मात्क्रमः साधनपरंपरारूपः कामे नजीवनमर्थरूपंजीवनेधर्मः ज्ञानंचतेनचमोक्षइत्यभिप्रायेणाह जीवस्यतत्त्वजिज्ञासेतिजीवस्यजीवनस्यतत्त्वजिज्ञासातत्त्वविचारः इच्छापूरकज्ञानसाधकः जीवस्यतत्त्वजिज्ञासालाभइतिपूर्वेणसंबंधः कर्मभिः साध्यः यः कामोवाअर्थोवाधर्मस्तुनकेवलंकर्मसाध्यः किंतु श्रुतिबोधितकर्मसाध्यःतत्रापिइहकर्मभिःसाध्योनपुरुषार्थः संसारविषयकः योवादैवगत्याप्राप्तः सोपिनभवतीतिचकारार्थः ॥ १० ॥

---

श्रीविश्वनाथचक्रवर्त्ती।

किञ्चात्र लोके चतुर्विधा जनाः कर्म्मिणो ज्ञानिनो योगिनो भक्ताश्च। तत्र "धर्म्मादर्थश्च कामश्च स किमर्थं न सेव्यते" इति दृष्ट्या धर्म्मस्य अर्थः फलं अर्थस्य कामः कामस्य इन्द्रियप्रीतिः इन्द्रियप्रीतौ च सत्यां तदर्थं पुनरपि धर्म्मादिपरम्परा यथा कर्म्मिणां न तथा उत्तरेषां त्रयाणामित्याह धर्म्मस्य शमदमादेर्यमनियमादेः श्रवणकीर्त्तनादेश्च, अर्थः सर्व्वथा भवन्नपि अर्थाय फलत्वाय न कल्पते तमनुसन्धायतत्तद्प्रवृत्तेः। यतः आपवर्ग्यस्य अपवर्गप्रयोजनकस्य। तदस्य प्रयोजनमित्यर्थे स्वर्गादिभ्यो य इति स्वार्थिकाणन्तात् यप्रत्ययः। तेन अपवर्ग एव अनुसंहितं फलमिति भावः। ज्ञानियोगिनोर्मते अपवर्गो मोक्षः। भक्तमते प्रेमभक्तिः। यथावर्णविधानमपवर्गश्च भवति योऽसौ भगवति वासुदेवे अनन्यनिमित्तभक्तियोगलक्षणो नानागतिनिमित्ताविद्याग्रन्थिवन्धनद्वारेण यदा हि महापुरुष पुरुषप्रसङ्ग इति पञ्चमस्कन्धात् येनापवर्गाख्यमदभ्रबुद्धिरित्यादौ खगेन्द्रध्वजपादमूलमिति प्रथमस्कन्धाच्च। "निश्चला त्वयि भक्तिर्या सैव मुक्तिर्जनार्द्दन। मुक्ता एव हि भक्तास्ते तव विष्णो यतो हरे" इति स्कान्दरेवाखण्डाच्च। तथा अर्थस्य कामो लाभाय फलत्वाय न यतो धर्म्मैकान्तस्य धर्म्म एव अनुसंहितं फलमितिभावः। तथा ज्ञानियोगिनोः शमदमादियमनियमाद्यनुकूले कस्मिंश्चन धर्म्मविशेषे अर्थस्य विनियोगः। भक्तस्य तु भगवतो भागवतानां वा सेवायां स स्पष्ट एव ॥ ९ ॥

कामस्य विषयभोगस्य इन्द्रियप्रीतिर्लाभः फलं न भवति किन्तु यावता जीवेत तावानेव जीवनपर्य्याप्तः कामः सेव्यत इत्यर्थः। अत्र ज्ञानिनां योगिनां वार्थकामेन्द्रियप्रीतयो ज्ञानयोगयोरानुषङ्गिकफलानि कर्म्मफलत्वेनैव व्यपदिश्यन्ते। ज्ञानयोगयोस्तयोर्निष्कामकर्म्मपरिणामत्वादतो ज्ञानिनां योगिनाञ्च दृष्टे सुखदुःखे कर्म्मफले एवोच्येते। भक्तानां स्वर्थकामेन्द्रियप्रीतयो भक्तेरेवानुषङ्गिकफलानि। भक्तेः कर्म्मपरिणामत्वाभावात् न तेषां कर्म्मफलत्वव्यपदेशः। अतो भक्तानां दृष्टं सुखं भक्तिफलमेव। दुःखन्तु "यस्याहमनुगृह्णामि हरिष्ये तद्धनं शनैः। ततोऽधनं त्यजन्त्यस्य स्वजना दुःखदुःखितमित्यादिभगवद्वचनात् भगवदुत्थं भक्तापराधफलञ्चेति यथायोग्यं विवेचनीयम्। जीवस्य जीवनस्य तत्त्वजिज्ञासा फलं कर्म्मभिः पुनरप्यनुष्ठितैर्य इह प्रसिद्धः स्वर्गादिः स नैव ॥ १० ॥

---

वदंतितत्तत्त्वविदस्तत्त्वंयज्ज्ञानमद्वयम्।
ब्रह्मेतिपरमात्मेतिभगवानितिशब्द्यते ॥ ११ ॥
तच्छ्रद्दधानामुनयोज्ञानवैराग्ययुक्तया।
पश्यन्त्यात्मनिचात्मानंभक्त्याश्रुतगृहीतया ॥ १२ ॥ (१)

सिद्धांतप्रदीपः।

तदेवकर्मज्ञानवैराग्यभक्तिभेदाद्बहुविधउपायइत्युक्तम् इदानींतुजीवनफलं धर्मस्तत्फलमर्थस्तत्फलंकामस्तत्फलमिंद्रियप्रीतिः पुन र्जीवनंपुनस्तत्फलंधर्मइत्येवंचक्रवत्पौनःपुन्यंकेचिन्मन्यंते तन्निराकरोति धर्मस्येतिद्वाभ्याम् आपवर्ग्यस्योकरीत्यापवर्गसाधनस्यधर्म स्य अर्थःभोग्यपदार्थःस्वर्गादिः अर्थायफलत्वायनकल्पतेयोग्योनभवति धर्मैकांतस्यनियमेनधर्मसाधनस्य अर्थस्यकामःभोगःलाभायफल त्वायनहिस्मृतः ॥ ९ ॥

कामस्येंद्रियप्रीतिः लाभःफलंनकिंतुयावद्वाकामेनजीवेततावत् कामस्यलाभः जीवनंफलमित्यर्थः जीवस्यजीवनस्ययः कर्मभिः साध्यः सनार्थः फलंनभवति जीवनस्यधर्मद्वारास्वर्गादिः फलंनभवतीतियावत् किंतुतत्त्वजिज्ञासाफलंभवति तत्त्वजिज्ञासाशब्दस्यलक्षणया तत्त्व विचारवृत्तिः ॥ १० ॥

भाषा टीका।

अपवर्ग (मुक्ति) साधक धर्म का अर्थ (धन) मात्र फल नहीं है। और न धर्मार्थ धन का काम भोग मात्र फल है काम भोग का फल इन्द्रिय तृप्ति मात्र नहीं है किन्तु जीवन धारण है। और जीवन का फल तत्त्व ज्ञान प्राप्त करना है। जीवन का फल कर्म करना और उस का फल भोगना मात्र नहीं है ॥ ९ ॥ १० ॥

श्रीधरस्वामी।

ननु तत्त्वजिज्ञासा नाम धर्मजिज्ञासैवधर्म्म एव हि तत्त्वमिति केचित्। तत्राह वदन्तीति। तत्त्वविदस्तु तदेव तत्त्वं वदन्ति किं तत् यत् ज्ञानंनाम। अद्वयमिति क्षणिकविज्ञानपक्षं व्यावर्त्तयति। ननु तत्त्वविदोऽपि विगीतवचना एव। नैवम्। तस्यैव तत्त्वस्य नामान्तरैरभिधाना-द्दित्याह औपनिषदैर्ब्रह्मेति हैरण्यगर्भैः परमात्मेति सात्त्वतैर्भगवानिति शब्द्यते अभिधीयते ॥ ११ ॥

तच्च तत्त्वं सपरिकरया भक्त्या एव प्राप्यते इत्याह तच्चेत्यन्वयः। ज्ञानवैराग्ययुक्तयेत्यत्र ज्ञानं परोक्षं तच्च तत्त्वम् आत्मनि क्षेत्रज्ञे पश्यन्ति किं तत् आत्मानम् परमात्मानम्। श्रुतेन वेदान्तश्रवणेन गृहीतया प्राप्तया इति भक्तेर्दार्ढ्यमुक्तम् ॥ १२ ॥

दीपनी।

तदिति। तदित्यस्य एतत्पूर्वपद्यीयपरपादोक्तचकारेण अन्वय इत्यर्थः। (एवमत्र श्रद्दधाना इत्यनेन श्रद्धोक्ता सा तु वेदान्तवाक्येषु विश्वासः। ज्ञानं नित्यानित्यवस्तुविवेकः वैराग्यमिहामुत्रफलभोगविरागः एतद्युक्तया परमेश्वरानुरागलक्षणया भक्त्या जीवब्रह्मैक्यरूपं तत्त्वं साक्षाद्विन्दन्तीत्यर्थः) ॥ १२—२२

श्रीवीरराघवः।

जीवस्यप्रयोजनंतत्त्वजिज्ञासैवेत्युक्तम्। किंतत्त्वंयज्जिज्ञासितव्यमित्यतआह। वदंतीति। यज्ज्ञानंज्ञानस्वरूपंज्ञानगुणकंचअद्वयंस्वतुल्याभ्य धिकवस्त्वंतररहितमवयवभेदरहितंवाजात्यादिभेदरहितंवाब्रह्मपरमात्मभगवच्छब्दाभिहितंतदेवतत्त्वमितितत्त्वविदोवदंति। ब्रह्मपरमात्म भगवच्छब्दाः सामान्यविशेषशब्दाःप्रयुक्ताःएवंप्रयुंजानस्यसदाकाशादिशब्दाअपिकारणवाक्यगताभगवत्पराइत्यभिप्रायः ॥ ११ ॥

एवंपरंधर्मादित्रिवर्गस्यापिपरंपरया अपवर्गसाधनत्वप्रसंगाद्भजनीयस्वरूपंचोक्तम्। अथयाद्विवक्षितंमोक्षपरनिरतिशयश्रेयस्तत्सा-धनंतुभक्तिरेवतान्निरूपतिश्चवर्णाश्रमधर्मज्ञानयोगसमाधिभिरिरिततदुपपादयतितदित्यादिभिः सार्द्धैर्दशभिः। तत्तस्माद्भक्तियोगाद्ब्रह्म-करस्यैवधर्मस्यपरत्वात्त्रिवर्गस्यापिपरंपरयापवर्गार्थत्वादपवर्गातिरिक्तनिरतिशयपुरुषार्थाभावाच्चेत्यर्थः श्रुतयज्ञादिकर्मतस्यकर्तव्यतयाव-

(१) श्रुतिगृहीतयेति सुबोधिनी

श्रीवीरराघव०

॥ ११ ॥ देश्रुतत्वात्तेनगृहीतयाऽनुगृहीतयाज्ञानवैराग्याभ्यां युक्तयाभक्त्याआत्मनिजीवात्मन्यन्तरात्मतयास्थितंब्रह्मादिशब्दवाच्यंभगवंतंश्रद्धानाएते- एवंविधयाभक्त्यापश्यंति ॥ ज्ञानशब्देनप्रत्यगात्मयाथात्म्यज्ञानयोगोविवक्षितः वैराग्यंविषयांतरेषुवैतृष्ण्यंतेनशमदमादिसंग्रहः एभिरंगैरुप- कृतयाभक्त्याआत्मनिस्थितंपरमात्मानं पश्यंति साक्षात्कुर्वंतिइत्यनेनभक्तेरेव परमात्मदर्शनसमनंतरभाविमोक्षसाधनत्वमुक्तम् । कर्मयोगज्ञान- योगयोः शमादीनांच भक्तियोगानुग्राहकत्वं च "भिद्यते हृदयग्रंथिरिति श्रुत्यातदर्थानुवादिनावक्ष्यमाणश्लोकेन च मोक्षस्यदर्शनानंतरभा- वित्वमवगतम् एवंचभक्त्यापश्यंति इत्यस्यदर्शनरूपापन्नायाभक्तेरव्यवधानेन मोक्षसाधनत्वमित्यभिप्रायः ॥ १२ ॥

---

श्रीविजयध्वजः

ननु अतत्त्वजिज्ञासारित्युक्तं किं तत्त्वंयेनतद्वशस्यकर्मभिः पुरुषार्थानस्यादितितत्राह वदंतीति अद्वयमसमाधिकंज्ञानंज्ञानस्वरूपंदेशका- लादिषुबृंहितत्वात्सर्वांतर्यामित्वादैश्वर्यादिगुणवत्त्वात्ब्रह्मेतिपरमात्मेतिभगवानितिशब्द्यते ॥ ११ ॥

सत्तामात्रंतुयत्किंचित्सदसच्चाविशेषणम् । उभाभ्यांभाष्यतेसाक्षाद्भगवान्केवलःस्मृतः ॥ १२ ॥

यच्चसत्तामात्रंकेवलानंददेहमतएवयत्किंचिल्लोकविलक्षणंतत्तत्त्ववदंतीतित्रिकालेप्यनन्यथाभूतमेकविधंब्रुवते नब्रह्मणोज्ञानस्वरूपत्वंयु- क्तिमल्लोकेज्ञानस्यविषयापेक्षयोत्पत्तिविनाशधर्मदर्शनादस्यापितथात्वेनानित्यत्वप्रसंगादितितत्राह सदसदिति सत्कार्यमसत्कारणंच अवि- शेषणंनस्वनियतविशेषापादकंयस्येतिशेषःविषयापेक्षयाअनुत्पाद्यमितिउभाभ्यांसदसद्भ्यांभाष्यते मृत्स्रष्टृघटस्रष्टृमृज्ज्ञातृघटज्ञात्रित्याद्या- नंतकार्यकारणविशिष्टतयाव्यवह्रियते अतोभगवान्साक्षात्केवलःप्रकृतिसंबंधविधुरःस्मृतः ॥ यद्विषयज्ञानंभक्तियोगंजनयेत्तत्ब्रह्मकिंप्रमाण- गोचरःउतागोचरः गोचरश्चेद्घटादिवद्ब्रह्मत्वमगोचरश्चेन्नास्त्येवेत्याशंक्योभयदोषपरिहारायाह वदंतीति नवयंप्रमाणैरनुमिमीमहेनचैवता- वतानास्तिकिंतर्हि यत्ज्ञानमद्वयं ज्ञातृज्ञेयलक्षणरहितंतत्त्वविदस्तत्तत्त्वंजगदाकारेणविवर्ततइतिवदंतितदेववेदांतिभिर्ब्रह्मेतिपरमात्मेतिभग- वानितिशब्द्यतेतत्रायंविभागःबृहत्त्वात्ब्रह्मेतिवेदांतिनः परंकेवलमादानादिकर्तृत्वादात्मेतियोगिनःषड्गुणयुक्तत्वाद्भगवानितिपौराणिकाःत- त्रापिकिंतत्सत्यमितितत्राह सत्तेति तस्मादत्रसगुणंप्रमाणवेद्यंननिर्गुणमितिशास्त्रमर्थितमर्थ इतिकेचिद्व्याचक्षतेतदसारम् अत्रैवपूर्वापरवा- क्यार्थपर्यालोचनयास्वविरोधात् ॥ १२ ॥

---

क्रमसन्दर्भः ।

वदन्तीति तद्व्याख्यातम् । तत्र विगीतवचना इत्यत्र परस्परमिति शेषः । तत्त्वस्य नामान्तरैरभिधानादिति धर्मिणि सर्व्वेषामभ्रमात् धर्म्मे एव तु भ्रमादिति । यद्वा किं तत्त्वमित्यपेक्षायामाह वदन्तीति । ज्ञानं चिदेकरूपम् । अद्वयत्वं चास्यस्वयंसिद्धतादृशातादृशतत्त्वान्तरा- भावात् स्वशक्त्येकसहायत्वात् परमाश्रयं तं विना तासामसिद्धत्वाच्च । तत्त्वमिति परमपुरुषार्थताद्योतनया परमसुखरूपत्वं तस्य ज्ञानस्य बोध्यते । अतएव तस्य नित्यत्वञ्च दर्शितम् । अद्वयमिति तस्याखण्डत्वं निर्द्दिश्यान्यस्य तदनन्यत्वविवक्षया तच्छक्तित्वमेवाङ्गीकरोति । अत्र श्रीमद्भागवताख्य एव शास्त्रे क्वचिदन्यत्रापि तदेकं तत्त्वं त्रिधा शब्द्यते । क्वचिद्ब्रह्मेति क्वचित् परमात्मेति क्वचिद्भगवानिति च किन्त्वत्र श्रीव्याससमाधिलब्धाद्भेदात् जीव इति च शब्द्यते इति नोक्तमिति ज्ञेयम् । तत्र ब्रह्मभगवतोर्व्याख्यातयोः परमात्मा स्वयमेव व्याख्यातो भवतीति प्रथमतस्तावेव प्रस्तूयेते । मूलानुक्रमाद्वैशिष्ट्यद्योतनाय तथा विन्यासः । अयमर्थः । तदेकमेवाखण्डानन्दस्वरूपं तत्त्वं थुत्कृतपारमेष्ठ्यादिकानन्दसमुदायानां परमहंसानां साधनवशात् तत्तादात्म्यमापन्ने सत्यपि तदीयस्वरूपशक्तिवैचित्र्यांशग्रहणा- समर्थे चेतसि यथा सामान्यतो लक्षितं तथैव स्फुरदविविक्तशक्तिशक्तिमत्त्वभेदतयाप्रतिपाद्यमानं ब्रह्मेति शब्द्यते । अथ तदेव तत्त्वं स्वरू- पभूतयैव शक्त्या कमपि विशेषं धर्तुं परासामपि शक्तीनां मूलाश्रयरूपं तदनुभवानन्दसन्दोहान्तर्भावितताद्दृशब्रह्मानन्दानां भागवतपरम- हंसानां तथानुभवैकसाधकतमतदीयस्वरूपानन्दशक्तिविशेषात्मकभक्तिभावितेष्वन्तर्बहिरपीन्द्रियेषु परिस्फुरद्विविक्तताद्दृशशक्तिशक्ति- मत्त्वभेदेन प्रतिपाद्यमानं भगवानिति शब्द्यते इति । परमात्मा सुतरां व्याख्यातः । तत्र शक्तिवर्गलक्षणतद्धर्म्मातिरिक्तं केवलं ज्ञानं ब्रह्मेति शब्द्यते । अन्तर्यामित्वमयमायाशक्तिप्रचुरचिच्छक्त्यंशविशिष्टं परमात्मेति । परिपूर्णसर्व्वशक्तिविशिष्टं भगवानिति । एवमेवोक्तं श्रीजड़भरतेन । "ज्ञानं विशुद्धं परमात्ममेकमनन्तरं त्ववहिर्ब्रह्म सत्यम् । प्रत्यक् प्रशान्तं भगवच्छब्दसंज्ञं यद्वासुदेवं कवयो वदन्तीति । "तस्मै नमो भगवते ब्रह्मणे परमात्मन इत्यत्र वरुणकृतस्तुतौ टीका च । परमात्मने सर्व्वजीवनियन्त्रे इत्येषा । ध्रुवं प्रति श्रीमनुना च । "त्वं प्रत्यगात्मनि तदा भगवत्यनन्ते आनन्दमात्र उपपन्नसमस्तशक्ताविति । अत्रानन्दमात्रं विशेष्यं समस्ताः शक्तयो विशेषणानि विशि- ष्टो भगवानित्यायातम् । भगवच्छब्दार्थश्च श्रीविष्णुपुराणे प्रोक्तः । "ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः । भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिरिति ॥ ११ ॥

तच्च त्रिधाविर्भावयुक्तमेव तत्त्वं भक्त्यैव साक्षादपि क्रियत इत्याह तदिति । भक्त्या तत्कथादिरुचेरेव परावस्थारूपया प्रेमलक्षणया । तत् पूर्व्वोक्तं तत्त्वं आत्मनि शुद्धे चेतसि पश्यन्ति च । कीदृशं तत् आत्मानं स्वरूपाख्यजीवाख्यमायाख्यशक्तीनामाश्रयम् । ज्ञानवैराग्ययु- क्तया स्वात्मजाभ्यां ताभ्यां सेवितया । अतएव ते पृथक् च विशिष्टं च स्वेच्छया पश्यन्तीत्यायाति ॥ १२ ॥

तत्त्वजिज्ञासेत्यत्र संदेहः तत्त्वानां जिज्ञासा तत्त्वस्य वेति तत्त्वपदेऽपि संदेहः तस्य भावस्तत्त्वमनारोपितरूपं वा तस्य भाव इति पक्षे पूर्वोक्तस्याभावात् नर्किंचित्तत्त्वं स्यात् समुदायपक्षे अमूर्त्तज्ञानाविषयत्वेन सर्वमेव तत्त्वं स्यात् तत्त्वानां जिज्ञासेति सांख्यादिपरिकल्पितानां मध्ये एकस्यापि जिज्ञासा कठिना तत्त्वस्य जिज्ञासेति तु न सर्वेषामेकं तत्त्वमस्ति शास्त्राणामन्योन्यविरोधात् तस्मात्कथं तत्त्वजिज्ञासेत्याशंक्याह वदंतीति तत्तत्त्वविद इति॥ यद्यपि सर्वे स्वस्वशास्त्रे तत्त्वविद इति प्रसिद्धाः तथापि प्रमाणबलविचारेण वेदा नासर्वोऽपि जीवकत्वात् वेदार्थविदस्तत्त्वविद इति मंतव्यं ननु सर्वेऽपि वेदार्थविदः ऋषित्वात् सत्यं तथाप्यन्योन्यविरोधात् केचनैव तत्त्वविद इति वक्तव्यं तत्र येष्वक्षरमात्रेऽपि वेदेन विरोधः ते तत्त्वविद इति मंतव्यं नच ते न संत्येवेति मंतव्यं वेदस्य प्रमाणस्य विद्यमानत्वात् ते किं वदंतीत्यत आह यत्तत्त्वमद्वयं ज्ञानमिति द्वैतानिवर्त्तकं ज्ञानं सत्त्वमित्यर्थः तत्त्वज्ञानं मोक्ष इति सर्वजनीनत्वात् श्रुतिस्मृतिपुराणेषु तस्यैव नामभेद इत्याह क्रमेण ब्रह्मेति परमात्मेति भगवानिति शब्द्यत इति शब्दमात्रं भिद्यते न त्वर्थभेदोऽस्तीत्यर्थः॥ ११॥

तदेवं तत्त्वपर्यंतपदार्थानां स्वरूपं क्रमं चोक्त्वा फलितमाह तच्छ्रद्दधाना इति तत्तस्माद्धेतोः तद्रूपत्वात्त्रैवं क्रमः जीवस्य तत्त्वजिज्ञासाफलमुक्तं तच्च साक्षात्कारपर्यवसितं तत्र विचारसहितप्रमाणेन यद्यपि निर्विचिकित्सं शाब्दज्ञानं भवति तथाप्यंतःकरणदोषात् न साक्षात्कारः सिध्यतीति तदर्थं प्रथमं धर्मः ततोऽतःकरणशुद्धौ वेदादिसत्प्रमाणे श्रद्धा ततस्तदर्थस्य मननं ततो निदिध्यासनेन साक्षात्कारस्य वक्षानं ततो विषयेषु वैराग्यं ततः श्रवणादिसाधनभक्तिः ततः परमभक्तिः ततः सर्वत्र भगवत्साक्षात्कारः हृदि बहिरपीत्यर्थः। आत्मानं भगवंतमात्मरूपं तत्र यावत्साधनं साध्यस्थितिः तत्र ज्ञानवैराग्ययोः सहभावनिरूपणात् भाक्तिर्मुख्या तस्याः स्थितिहेतुमाह श्रुतिगृहीतेति श्रुत्या गृहीता भवति यथा यथा श्रवणं तथा तथा भक्तिस्थितिः ततः सर्वमिति॥ १२॥

---

श्रीविश्वनाथचक्रवर्त्ती।

तत्त्वमेव किं तत्राह वदन्तीति। यदद्वयं ज्ञानं तत् तत्त्वम्। ज्ञानमेव किं तत्राह ब्रह्मेति। शब्द्यते ब्रह्मेति पदेन यदुच्यते ज्ञानिभिस्तज्ज्ञानम्। तन्मते ज्ञानं निराकारं ज्ञातृज्ञेयादिविभागशून्यं चित्सामान्यं चिद्विशेषाणां भगवद्धामादीनां तदनन्यत्वमननात्। जीवमाययोस्तच्छक्तित्वेन तदैक्यादिदङ्कारास्पदस्य कार्यस्य विश्वस्य कारणमात्रात्मकत्वाददैतम्। तथा परमात्मेति योगिभिर्यदुच्यते तज्ज्ञानम्। एतन्मते परमात्मनश्चिदेकरूपत्वाज्ज्ञानमात्रत्वं ज्ञानमात्रत्वेऽपि साक्षित्वादेर्ज्ञानविशेषस्याश्रयत्वमपि। द्युमणिदीपादेर्ज्योतीरूपत्वेऽपि ज्योतिष्मत्त्वमिव नानुपपन्नम् "केचित् स्वदेहान्तर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तमित्यादेः साकारत्वञ्च मायायाः शक्तित्वान्मायिकानाञ्च तदन्यत्वाज्जीवस्य तद्विभिन्नांशत्वात् ततो द्वितीयत्वाभावादद्वयत्वम्। तथा भगवानिति भक्तैर्यदुच्यते तज्ज्ञानम्। एतन्मते पूर्ववज्ज्ञानमात्रत्वेऽपि भगशब्दवाच्यषडैश्वर्यस्यापि। अप्राकृतत्वेन चिन्मात्रत्वात् तद्रूपत्वम् यदुक्तं विष्णुपुराणे। "ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना॥ ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिरिति। तथैव द्विभुजत्वचतुर्भुजत्वादिविविधचिह्नाकारैर्बहिरन्तर्वर्त्तित्वेऽपि "नच्यवन्ते च यद्भक्ता महत्यां प्रलयापदीति स्कान्दादिवाक्यैः सदैव सेव्यसेवकसेवादिविभागेऽपि अद्वयत्वं पूर्ववत्तच्छक्तीनां चिदादीनां तद्विलासानां च वैकुण्ठादीनां तदभिन्नत्वमननात् ततोभिन्नत्वभावनैवाद्वयपदेन व्यावृत्ता। एवञ्च भगवतः सामान्यस्वरूपमात्रस्योपादेयत्वे ज्ञानिन्यधिकारिणि ब्रह्मेति अन्तर्यामित्वादिचित्रधर्म्मवत्त्वस्योपादाने योगिन्यधिकारिणि परमात्मेति। अचिन्त्यानन्तचिदानन्दमयस्वरूपरूपगुणलीलाद्यनेकधर्म्मवत्त्वस्य ग्रहणयोग्यतायां भक्तेऽधिकारिणि भगवानिति स एवैको भाति। "किञ्च यन्मित्रं परमानन्दं पूर्णं ब्रह्म सनातनमिति। कृष्णाय परमात्मने इति। मदीयं महिमानञ्च परं ब्रह्मेति शब्दितमिति। ब्रह्मणो हि प्रतिष्ठाहमिति। विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगदित्यादिवचनेभ्यस्तथा भगवदुपासकानां मोक्षप्राप्तेरपि दर्शनात् ब्रह्मपरमात्मोपासकानाञ्च प्रेमप्राप्त्यदर्शनाद्भगवत एव ब्रह्मत्वपरमात्मत्वे इत्यतो भगवत्त्वमेव मूलमिति द्रष्टव्यम्। अत्र ब्रह्मोपासकेभ्यो ज्ञानिभ्यः सकाशात् परमात्मोपासको योगी श्रेष्ठः। तेभ्यो योगिभ्योऽपि भगवदुपासकः श्रेष्ठ इति तारतम्यं गीतासु दृष्टम्। यथा "तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः। कर्म्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्ज्जुन। योगिनामपि सर्व्वेषां मद्गतेनान्तरात्मना। श्रद्धावान् भजते यो मां स मे युक्ततमो मत" इति। योगिनामिति पञ्चम्यर्थे षष्ठी श्रीरामानुजाचार्यचरणैर्व्याख्यातेति॥ ११॥

तत्प्राप्तिसाधनमाह। तज्ज्ञानं त्रिरूपं मुनयो मननशीला ज्ञानिनो योगिनो भक्ताश्च भक्त्या पश्यन्ति। तत्र ब्रह्मेति मते आत्मनि च तत्पदार्थे ईश्वरे आत्मानं त्वम्पदार्थं जीवं पश्यन्त्यनुभवन्ति। परमात्मेति मते आत्मन्यन्तर्हृदये आत्मानमन्तर्यामिनं पश्यन्ति ध्यानेनालोकयन्ति। भगवानिति मते आत्मनि मनसि चकाराद्बहिश्च स्फुरन्तम् आत्मानं भगवन्तं पश्यन्ति स्वलोचनाभ्यामेव तन्माधुर्यमास्वादयन्ति। भक्त्येति। आदौ गुरुमुखाच्छ्रुता पश्चाद्गृहीता तया। भगवद्विषयिण्यैव श्रवणकीर्त्तनादौ भक्तिशब्दस्य रूढेर्ब्रह्मोपासकैः परमात्मोपासकैश्च स्वस्वसाध्यसिद्ध्यर्थं भगवति भक्तिः कर्त्तव्यैव। ज्ञानवैराग्ययुक्तयेति ज्ञानवैराग्यपृथगेव तेषामुभयेषां साधने ज्ञेयं। भक्तमते भक्त्युत्थे एव ते भक्तेः प्रेमत्वव्यञ्जके ज्ञेये। "तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः। न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिहेति। शुद्धभक्तानां पृथक्तयोर्निषेधात्। अथवा। तच्च त्रिरूपम् ज्ञानं भक्तास्तु भक्त्यैवानुभवितुं शक्नुवन्तीत्याह। तच्छ्रद्दधानाः केचित् तत्त्रिरूपमप्यनुभावितुं साभिलाषा भवन्तीत्यर्थः। तदा भक्त्यैव पश्यन्ति। तेन ब्रह्मपरमात्मनोः साधने ज्ञानयोगौ भक्त्यैव सिद्धौ स्यातामिति भावः॥ १२॥

---

अतःपुंभिर्द्विजश्रेष्ठावर्णाश्रमविभागशः ।
स्वनुष्ठितस्यधर्मस्यसंसिद्धिर्हरितोषणम् ॥ १३ ॥
तस्मादेकेनमनसाभगवान्सात्वतांपतिः ।
श्रोतव्यःकीर्त्तितव्यश्चध्येयःपूज्यश्चनित्यदा ॥ १४ ॥

सिद्धान्तप्रदीपः ।

जीवनस्यफलंतत्त्वविचारएवेत्युक्तम् ॥ इदानींतत्त्वमपिचिंत्यते तत्रतावत्केचिदाहुरात्माजडइति । अन्येत्वाहुःक्षणिकः अपरेकर्मभोगमात्मानमाहुः केचिदाहुः परमात्मानास्तिनानात्मानः स्वतंत्राःसंतीति । केचित्प्रकृतिविकृतिभिन्नं पुष्करफलासवद्संगंनिर्धर्मकं पुरुषंवदंति तेसर्वेवेदबाह्याः । स्वकपोलकल्पितत्त्ववादिनः । श्रेयस्कामैर्मुमुक्षुभिर्दूरतोहेयाइत्याह वदंतीति । अत्रैकैकस्यविशेषणस्यपरपक्षनिरासकत्वात्वादितिशब्दावृत्तिः यत्रसनास्तितत्रापियोज्यः । तत्त्वविदस्तुयच्छब्द्यते शब्दैरनादिसिद्धैर्वेदैर्यदभिधीयते तत्तत्त्वंवदंति । "सर्वेवेदायत्पदमामनंतितंत्वौपनिषदं पुरुषं पृच्छामीति श्रुतेः । "वेदैश्चसर्वैरहमेववेद्यइतिस्मृतेः शास्त्रयोनित्वात् ॥१।१।३॥ इति सूत्राच्च । कथंभूतंतत्वंज्ञानम् ज्ञातृत्ववत्त्वेसतिज्ञानस्वरूपमितिवदंतिनतुजडम् अद्वयम् क्षणिकविज्ञानप्रवाहविपरीतमेकमनादिसिद्धज्ञानरूपमिति ब्रह्मेति बृहत्त्वस्तुभूतं वदंति नतुजीवकर्तृकंकर्मभोगम् । परमात्मेति सर्वेभ्योजीवेभ्योहि उत्कृष्टंवदंति । भगवानिति षाड्गुण्यसिंधुंवदंतिनपुनर्निर्धर्मकम् ॥ ११ ॥

तद्वेदैकसमधिगम्यंतत्त्वंज्ञानवैराग्ययुक्तया भक्त्यैवसाक्षात्क्रियतइत्याह । तच्छ्रद्दधानाइति ॥ १२ ॥

भाषा टीका ।

तत्त्ववेत्ताजन अद्वयज्ञान हीको तत्त्व कहते हैं । धर्म कर्मादिकों को नहीं । उस अद्वय ज्ञान तत्त्व के तीन नाम हैं ब्रह्म परमात्मा भगवान ॥ जोनिर्विशेष सत्ता मात्र स्फूर्ति होती हैं जैसी सूर्य की धूप उस को ज्ञान कांड में ब्रह्म कहते हैं ॥ जो माया साक्षी सर्वान्तर्यामी रूपसे स्फूर्ति होती है उसको योग मार्गादिक में परमात्मा कहते हैं ॥ जो सर्व रसमय षडैश्वर्य संपन्न दिव्य मंगल विग्रह रूप से स्फूर्ति होती है उसे भक्ति पथमें भगवान कहते हैं ॥ ११ ॥

श्रद्धावान् मुनिजन गुरु मुखसे शास्त्र श्रवण कर प्राप्त ज्ञान वैराग्य युक्त भक्ति के द्वारा उसपर तत्त्व को अपने में आप देखते हैं । १२ ।

श्रीधरस्वामी ।

श्रवणादिगृहीतधर्मस्य फलं भक्तिः नार्थकामादिकमितीममर्थमुपपाद्योपसंहरति, अत इति । हे द्विजश्रेष्ठा हरितोषणं हरेःप्रसादनं संसिद्धिः फलम् ॥ १३ ॥

यस्माच्च भक्तिहीनो धर्मः केवलं श्रम एव तस्माद्भक्तिप्रधान एवधर्मोऽनुष्ठेय इत्याह तस्मादिति । एकेन एकाग्रेण मनसा ॥ १४ ॥

श्रीवीरराघवः ।

श्रुतगृहीतयेत्यनेनवर्णाश्रमधर्मस्यभक्तियोगानुग्राहकत्वमुक्तं धर्मः स्वनुष्ठितः पुंसामित्यादिनाधर्मस्यभक्तियोगानुग्रहप्रकारउक्तः इदानीमन्यथापि तदनुग्रहप्रकारंदर्शयति अतइति । यतोभक्तेरेवसाक्षान्मुक्तिसाधनत्वमतो हे द्विजश्रेष्ठाः पुंभिर्वर्णाश्रमविभागशःस्वनुष्ठितस्येतिशेषः तद्वर्णाश्रमानुगुणस्येत्यर्थः वर्णादिभेदेनास्थितैः पुंभिरिति वा सम्यगनुष्ठितस्य पंचमहायज्ञादिरूपस्यसंसिद्धिः फलंहरितोषणमेव । अयंभावः स्वनुष्ठिताद्धर्माद्भक्तियोगप्रतिबंधनिवृत्त्यनुकूलसंकल्पहेतुर्हरितोषः ततश्चभक्तियोगसंपन्नप्रतिबंधपापक्षयस्ततोभक्तियोगनिष्पत्तिरिति यद्वाहरिस्तुष्यते येनानुध्यानेनतद्धरितोषणम् । तदेवधर्मस्यस्वनुष्ठितस्यसंसिद्धिः फलम् । भक्तियोगोत्पत्तिबंधनिरसनद्वाराहरितोषहेतुभक्तियोगनिष्पत्तिरेवधर्मस्यफलमित्यर्थः अन्यथा "धर्मेणपापमपनुदति अविद्ययामृत्युंतीर्त्वेत्यादिश्रुतेर्धर्मस्यभक्तियोगोत्पत्तिप्रतिबंधक पापनिरासकत्वं वदंत्याविरोधापत्तेः धर्मस्यैवहरितोषफलकत्वेभक्तेर्वैयर्थ्यापत्तेश्च । ननु "ज्ञानाग्निः सर्वकर्माणिभस्मसात्कुरुतेऽर्जुनेति भक्तियोगस्यैवसर्वदुरितनिवर्तकत्वस्मरणात् । भक्तियोगवद्धर्मस्यापिहरितोषहेतुत्वमेवयुक्तमिति चेच्छृणुप्रापकप्रतिबंधकं प्राप्तिप्रतिबंधकं चेतिद्विविधंदुरितम् । तत्रप्रापकस्यभक्तियोगस्ययदुत्पत्तिप्रतिबंधकंदुरितंतद्धर्मापनोद्यम् । एवंधर्मैर्निरस्तप्रतिबंधके भगवत्प्रापके भक्तियोगेनिष्पन्नेतेनयद्भगवत्प्राप्तिप्रतिबंधकं दुरितंतदपनोद्यतेतदभिप्रायकाणिज्ञानाग्निरित्यादीनि वचनानि ॥ १३ ॥

## श्रीवीरराघवः

एवंवर्णाश्रमधर्मस्यभक्तियोगोपकारस्तत्प्रकारश्च भक्तियोगप्रतिबंधनिरसनेनभगवद्गुणादिश्रवणरुचिजनकद्वारावेतिद्विधासंदर्शितः अथतुल्यन्यायतयाभगवद्गुणस्वरूपादिश्रवणादीनामपि भक्तियोगोपकारकत्वमुपकारप्रकारंच वक्तुं तेषामवश्यकर्त्तव्यतां तावदाह । तस्मादिति द्वाभ्यामतस्माद्धर्मस्यभक्तियोगानुग्राहकत्वतत्प्रकारप्रदर्शनादेवतुल्यन्यायतयाभगवद्भक्तियोगोपकारकत्वेनसात्वतां भक्तानां पतिर्भगवानेकेनैकाग्रेण मनसानित्यदा श्रोतव्यः कीर्त्तितव्यः ध्येयः स्मर्त्तव्यः पूज्यश्चध्यानमतश्श्रुतार्थप्रतिष्ठापनात्मकंमननापरपर्यायंस्मरणं विवक्षितम् । भक्त्यात्मकस्यश्रवणाद्यनंतरभावित्वंहिवक्ष्यते ॥ १४ ॥

---

## श्रीविजयध्वजः ।

तदाह तदिति एवमुक्तप्रकारेण ब्रह्मपरमात्माद्यनंतवैदिकादिपदवाच्यतयासगुणः सर्वजगत्कर्तापरमात्मैवतत्त्वमितियस्मात्तस्मान्मुनयोज्ञानिनः श्रद्दधानाः शास्त्रोक्तवस्तुगत्यास्तिक्यबुद्धियुक्तश्रुतिगृहीतयावेदांतश्रवणेनदृढगृहीतयातत्त्वज्ञानेनविषयवैराग्येणयुक्तयाभक्त्या तमेवात्मानंपरमात्मानमात्मनिह्रदिपश्यंतिचकारः "स्वात्मन्येवात्मानंपश्येदितिश्रुतिप्रसिद्धिद्योतकोनत्वात्मनिक्षेत्रज्ञेजीवेआत्मानंपरमात्मानं पश्यंतिपरमात्मनिक्षेत्रज्ञंचेतिसमुच्चयार्थः ॥ तस्माज्जगदाकारेणविवर्तितंततत्त्वमन्यन्निर्गुणमन्यत्तत्त्वमितिनार्थः ॥ १३ ॥

उपसंहरति अतइति हेद्विजश्रेष्ठाः संसिद्धिः फलम् ॥ १४ ॥

---

## क्रमसंदर्भः ।

तदेवं श्रुतगृहीतया मुनयः श्रद्दधाना इति पदत्रयेण तस्या एव भक्तेर्दौर्लभ्यं दर्शितम् । सद्गुरोः सकाशात् वेदान्ताद्यखिलशास्त्रार्थविचारश्रवणद्वारा यदि स्वावश्यकपरमकर्त्तव्यत्वेन ज्ञायते । पुनश्च "भगवान् ब्रह्म कार्त्स्न्येनत्रिरन्वीक्ष्य मनीषया । तदध्यवस्यत् कूटस्थो रतिरात्मन् यतो भवेदितिवद् यदि विपरीतभावनात्याजकौ मननयोग्यतामननाभिनिवेशौ स्यातां ततः श्रद्दधानैः सा भक्तिरुपासनद्वारा लभ्यत इति । अतः श्रुतिरपि तदर्थमागृह्णाति "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इति । अत्र निदिध्यासनमुपासनम् । दर्शनं साक्षात्कार उच्यते । सा चैवं दुर्लभा भक्तिः श्रीहरितोषणे प्रयुक्तात् स्वाभाविकधर्म्मादपि लभ्यते तस्माद्धरितोषणमेव तस्य परमं फलमित्याह अत इति । स्वनुष्ठितस्य बहुप्रयत्नेनाच्छिद्रमुपार्जितस्येति तुच्छे स्वर्गादिफले तत्प्रयोगोऽतीवायुक्त इति भावः ॥ १३ ॥

तस्मादिति तैर्व्याख्यातम् । तत्र भक्तिविहीन इति । भक्तिः श्रवणादिरुचिस्तद्विहीनस्तदनुत्पादक इत्यर्थः । तस्माद्भक्तिप्रधान इति भक्तिः श्रवणादिरुचिरित्यर्थः । यद्वा यद्येवं श्रीहरिसन्तोषकस्यापि धर्म्मस्य फलं श्रवणादिरुचिलक्षणा भक्तिरेव तत्प्रवर्त्तिताश्च ज्ञानवैराग्यादिगुणा इत्यायातम् । तदा साक्षात् श्रवणादिरूपा भक्तिरेव कर्त्तव्या किं तत्तदाग्रहेणेत्याह तस्मादिति । एकेन कर्म्माद्याग्रहशून्येन । श्रवणमत्र नामगुणादीनाम् । तथा कीर्त्तनञ्च ॥ १४ ॥

---

## सुबोधिनी ।

एवंद्वितीयप्रकारेणज्ञानमुक्तं तत्रद्वितीयेधर्मस्यसंबंधमाह अतः पुंभिरिति ॥ धर्मसामान्यस्यप्रथमेसाधनताउक्ता विशेषस्यतुद्वितीयेतत्सोभगवत्प्रसादव्यतिरेकेणानांतः करणशुद्धिर्नवारुचिः अतः धर्मस्यमुख्यंफलंभगवत्प्रसादः वीजसंस्कारसंस्कृताः कुर्वंतिधर्मपोषकभगवदिच्छयावाममैवकामोभूतानामितिवाक्यात् पुंभिरितिकर्मणिप्रयोगेणब्रह्मापितमनुष्ठानेनकर्मैवोपक्षीणंनकर्त्तेति तदेवाहिभगवत्प्रसादः अन्यथाकर्मणैवफलमिति द्विजश्रेष्ठाइतिद्विजेभ्यः श्रेष्ठाः त्रिजन्मानः अनेनभवद्भिः क्रियमाणेनकर्मणाभगवान् पुष्यतीतिसूचितंवर्णधर्माःशमदमादयः कालद्रव्ययशौचमौदार्यगुरुशुश्रूषादयआश्रमधर्माः शस्प्रत्ययेनचपरधर्मोनिवारितः तेनच "विधर्मःपरधर्मश्चेतिदोषोनिवारितः सम्यगनुष्ठानंकालादिभिःषड्भिः शुद्धेर्ज्ञात्वाऽनुष्ठानंसएववाधर्मः "अधर्मोत्यन्यथाभवेदिति वाक्यात् सम्यक्सिद्धिः फलम् ॥ १३ ॥

यद्यपि "धर्मोविश्वस्यजगतःप्रतिष्ठेत्यादिश्रुत्याबहूनिधर्मस्यफलानिसंतितथापिभगवान्सत्त्वेनपरितुष्यति तदासफलं नोचेत्धर्मोव्यर्थस्यर्थः आत्मार्थंहिसर्वंसर्वेषामात्माचभगवान् "येषांनतुष्टोभगवानिति वाक्यार्थोहिशब्देनसूचितः तत्रैवंसंदेहः बहव एववर्णाश्रमविभागेन धर्मान्कुर्वंतिनचतेषुभगवदिच्छाशास्त्रानुसारिणीभक्तिरुपलभ्यते अतोज्ञायतेभगवान्नपरितुष्टइति तथाचकर्मकरणदशायांव्यभिचारदर्शनात् कर्थंनिर्विचिकित्साप्रवृत्तिः अतः येषुधर्मेषुनव्यभिचारःते विशेषेणकर्त्तव्याइत्याह तस्मादिति ॥ यस्मादन्यत्रव्यभिचारोऽपिअतः श्रवणादिकमेवकर्त्तव्यमितिश्रवणादिकमपिधर्मः "शृणुयात् श्रावयेदितिविधिस्पर्शात् एकेनमनसेतिवैयग्र्याभावयुक्तेनश्रवणस्य यथानव्यभिचारः तथाग्रेवक्ष्यतिअन्यधर्मपरित्यागीयास्तूच्यतएकेनेति भगवानिति श्रवणादिविषयत्वंनजीवघुरःसरतयाकितत् साक्षाद्ब्रह्मणः तत्रापिवैष्णवशास्त्रानुसारेणायतदेवसूचयति सात्वतांपतिरिति शुद्धेसत्त्वेआविर्भूतः सत्त्वोभगवान् संवसंतेयेषांतेसात्वताः तत्र "बहुलंछंदसीतिकिक्लोपः तेषामलौकिकवार्त्तापतिः सर्वनिर्वाहकः स्वस्यापितथात्वेनकांचिच्चिंतितिभावः श्रवणादीनांसुलभत्वायवायतः स्वपतिः सर्वैरवश्रूयतेकीर्त्यतेचइदंचश्रवणादिकंधर्मरूपंप्रकरणात् द्वितीयस्कंधेतुभक्तिरूपोलक्ष्यतेभगवद्वाचकैः पदैर्वाक्यैश्चभगवान्तिधक्तितान्प्रर्थनिर्बो

यदनुध्यासिनायुक्ताःकर्म्मग्रन्थिनिबन्धनम् । (१)
छिन्दन्तिकोविदास्तस्यकोनकुर्यात्कथारतिम् ॥ १५ ॥

सुबोधिनी ।

रः श्रवणांशकितातपर्येनिर्द्धारवोधनंकीर्त्तनंतथाज्ञातानांवाखतएवोच्चारणम् उभयंसंगृहीतंचकारेण अन्योन्यनिर्वाहकत्वंचतत्रैवस्यते द्वंद्वयंवात्यैंद्रियसाध्यम् आंतरमाह ध्येयःपूज्यश्चेतिध्यानंभगवतिचित्तस्थिरीकरणं भगवन्मूर्त्तेरनुसंधानंवापूजावाह्यांतरभेदेनद्विधाचकारेण संगृहीता व्यासंगांतराभावायनित्यदेति तस्मादयमेवमुख्योधर्मः सर्वथाकर्त्तव्यःइति ॥ १४ ॥

---

श्रीविश्वनाथचक्रवर्ती

तदेवं धर्म्मः स्वनुष्ठित इत्यादिना कर्म्मणः श्रमत्वमेव ज्ञानयोगयोरपि "श्रेयः सृतिं भक्तिमुदस्य ते विभो इति । नैष्कर्म्यमप्यच्युतभाववर्ज्जितमिति । पुरेह भूमन् बहवोऽपि योगिन" इत्यादिभ्यो भक्त्या विना श्रमत्वमेव । भक्तेस्तु कर्म्मयोगज्ञानाद्यमिश्रितायाः एवं शुद्धाया आत्मप्रसादकत्वं प्रकरणातोऽवगतम् । तत्रैवं शङ्कते । ननु ज्ञानयोगयोरप्रवृत्तौ न काचिच्चिन्ता । कर्म्मणाम् तु नित्यानामकरणे महान् प्रत्यवायो दुर्गतिहेतुस्तत्र का वार्त्तेत्यत आह अतः पुंभिरिति । यत उक्तन्यायेनोत्कृष्टावपि ज्ञानयोगौ भक्त्यैव सिद्धौ भवेताम् भक्तिस्तु ताभ्यां विनापि स्वयं सिद्ध्यति । अतो हरितोषणं भक्त्यैव ज्ञातं चेत् तदा धर्म्मस्य संसिद्धिः । यो यत्नादनुष्ठितोऽपि कर्म्मिणां साङ्गोपाङ्गतया प्रायः सिद्धो न भवति सोऽपि भक्तिमताम् अननुष्ठितोऽपि सम्यगेव सिद्धो भवति । "यत्कर्म्मभिर्यत् तपसा ज्ञानवैराग्यतश्च यत्" इत्यादौ "सर्व्वं मद्भक्तियोगेन मद्भक्तोलभतेऽञ्जसेति श्रीभगवदुक्तेः । तेन कर्म्माकरणजनितप्रत्यवायो भक्तानां पराहतः । ननु यदि भक्त्या धर्म्मः संसिद्धस्तर्हि धर्म्मफलमपि तैर्लभ्यतां सत्यम् सकामत्वे सति लभ्यते एव निष्कामत्वे सति तेषां नैष्कर्म्यमेव भवति । तथाच श्रुतिर्गोपालतापनी । "भक्तिरस्य भजनं तदिहामुत्रोपाधिनैरास्येनामुष्मिन् मनः कल्पनमेतदेव नैष्कर्म्यम् । तदेवं "यथा तरोर्मूलनिषेचनेनेति न्यायेन भक्त्यैव धर्म्माः संसिद्धा एवातो भक्तानां कर्म्मण्यधिकार एव दूरीकृतो भगवतायदुक्तम् । "तावत् कर्म्माणि कुर्व्वीत न निर्विद्येत यावता । मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायत" इति । "धर्म्मान् संत्यज्य यः सर्व्वान् मां भजेत् स च सत्तम इति सर्व्वधर्म्मान् परित्यज्य मामेकं शरणं व्रजेति । ( तथा सति यथा तरोर्मूलनिषेचनेनेत्यादौ यथैव सर्व्वार्हणमच्युतेज्या इत्यत्र यथाच्युतपूजनमेव सर्व्वेषां देवपित्रादीनामर्हणरूपं भवति तद्वदत्र हरितोषणमेव स्वनुष्ठितधर्म्मस्य सम्यक् सिद्धिरूपं भवतीत्यर्थः । तथा चाच्युतस्य पूजने तोषणे च जाते देवपित्रादीनां पूजनरूपस्य स्वनुष्ठितधर्म्मस्य संसिद्धिः स्वयमेव जातेति भावः । एवमेव दृष्टान्तेऽपि तरोर्मूलनिषेचनेनैव शाखापल्लवादीनां सेचनम् स्वयमेव जातमिति ज्ञेयम् ) तदपि यत् प्राच्यादिभक्तानामनन्यानामपि कर्म्मिकुलसंघट्टगतत्वेनैव तदनुरोधवशादीषत् कर्म्मकरणं तत् कर्म्माकरणमेव तत्र श्रद्धाराहित्यात् । "अश्रद्धया हुतं दत्तं तपस्तप्तं कृतञ्च यत् । असदित्युच्यते पार्थ न च तत् प्रेत्य नेह चेति भगवदुक्तेः ॥ १३ ॥
यस्मादेवं तस्मादेकेन कर्म्मज्ञानाद्यनुतिष्ठासाशून्येन ॥ १४ ॥

---

सिद्धान्तप्रदीपः ।

अतः धर्मस्यापवर्ग्यत्वात् संसिद्धिःफलम् ॥ १३ ॥
यस्माद्धर्मस्यहरितोषणंफलंतस्मात् एकेनहरितोषणफलकधर्मप्रधानेन ॥ १४ ॥

---

भाषा टीका ।

अतः हे द्विजश्रेष्ठ शौनकादि महाशयों ! वर्णाश्रम विभाग से पुरुषोंके स्वनुष्ठित धर्म की यही सिद्धि है कि जो उनसे श्रीहरि भगवान का संतोष हो ॥ १३ ॥
इससे एकाग्रमन से सात्वतों के पति भगवान ही नित्य श्रोतव्य कीर्त्तितव्य ध्येय और पूज्य हैं ॥ १४ ॥

---

श्रीधरस्वामी ।

भक्तिविहीनो धर्म्मः केवलं श्रम इत्युक्तम् इदानीञ्च भक्तेर्मुक्तिफलत्वं प्रपञ्चयति यदिति । यस्य अनुध्या अनुध्यानं सैव असिः खड्गः तेन युक्ता विवेकिनः ग्रन्थिमहङ्कारं निवध्नाति यत् कर्म्म तत् छिन्दन्ति तस्य कथायां रतिं को न कुर्यात् ॥ १५ ॥

---

(१) यदनुध्यायिनः इतिविजयध्वज पाठः

**शुश्रूषोःश्रद्दधानस्यवासुदेवकथारुचिः ।**
**स्यान्महत्सेवयाविप्राःपुण्यतीर्थनिषेवणात् ॥ १६ ॥**

### श्रीधरस्वामी ।

ननु सत्यमेव कर्म्मनिर्मूलनी हरिकथारतिः तथापि तस्यां रुचिर्नोत्पद्यते किं कुर्म्मस्तत्राह शुश्रूषोरिति । पुण्यतीर्थनिषेवणादिभिः निष्पापस्य महत्सेवास्यात् तया च तद्धर्मश्रद्धा । ततः श्रवणेच्छा ततो रुचिः स्यादित्यर्थः ॥ १६ ॥

---

### श्रीवीरराघवः ।

यस्यभगवतोनुध्याअनुध्यानं भक्तिः सैवासिः खड्गस्तेनयुक्ताः सहिताःकोविदाः कुशलाः कर्मैवग्रंथिस्तद्रूपं निबंधनं बंधनं छिंदंति कर्मणोग्रंथित्वरूपणंग्रंथिवद्दुर्मोच्यत्वात् दुर्विमोच्येन कर्मणानिबध्यत इतिनिबंधनंकर्मायत्तः संसारस्तंछिंदंतिइतिवातस्यकथासुरतिं कोणपुमान्नकुर्यात्सर्वोपिकुर्यादेवेत्यर्थः। यस्यभक्तिरनर्थावहसंसृतिनिरासहेतुस्तस्य महोपकर्तुर्भक्तियोगस्यानुग्राहकतया तत्कथासुरतिंसर्वोऽपिजनः कुर्यादेवेत्यर्थः ॥ १५ ॥

यद्यपि धर्मः स्वनुष्ठितः पुंसामिति धर्मस्यवासुदेवकथारुचिजननद्वाराभक्तियोगानुग्राहकत्वोक्त्यैवकथारुचिजनकत्वमप्युक्तमेव भवति-तथापि न साक्षादेवधर्मः कथारति हेतुरपितुसत्संगादिद्वाराहेत्वंतरेणचेत्याह ॥ शुश्रूषोरिति श्रोतुमिच्छोः स्वधर्मनिरस्तशुश्रूषाप्रतिबंधकस्येत्यर्थः ॥ श्रद्धायुक्तस्य पुंसः वासुदेवकथायां रुचिः हे विप्राः महताम् सेवया पुण्यतीर्थानां गंगादीनाम् निषेवणाच्च भवति ॥ १६ ॥

---

### श्रीविजयध्वजः

कृष्णसंप्रश्नस्यपरमधर्मत्वंनिगमयति तस्मादिति यतःकृष्णसंप्रश्नस्यैवपरमधर्मत्वंतस्माद्धेतोः एकेनएकाग्रेण चकारौपरस्परसमुच्चयार्थे श्रवणादितत्तत्कालेकर्तव्यं नकचित्कालोवृथायापनीयइत्यस्मिन्नर्थेनित्यदाशब्दः ॥ १५ ॥

फलदर्शनंपुरोधायप्रवृत्तिदर्शनाच्छ्रवणादिनाकिंफलमितितत्राह यदिति यंभगवंतमनुसवनंनिरंतरंध्यातुंशीलमेषामितियदनुध्यायिनः युक्ताःमनोयोगयुक्ताः कर्मपाशेनानितरांबंधनंतत्राछिंदंति तस्यकथासुरतिंकोनकुर्यात् अतःश्रवणादिफलमपरोक्षज्ञानद्वारामुक्तिरेव ॥ १६ ॥

---

### क्रमसन्दर्भः ।

तत्र चान्तिमभूमिकापर्यन्तां सुगमां शैलीं वक्तुं धर्म्माविकल्पनिरपेक्षेण युक्तिमात्रेण तत्प्रथमभूमिकाम् श्रीहरिकथारुचिमुत्पादयन् तस्य गुणं स्मारयति यदिति । कोविदा विवेकिनः । युक्ताः संयतचित्ताः । यस्य हरेरनुध्या अनुध्यानं चिन्तनमात्रं सैवासिः खड्गः तेन ग्रन्थिम् नानादेहेष्वहङ्कारं निवध्नाति यत् तत् कर्म्म छिन्दन्ति । तस्यैवम्भूतस्य परमदुःखादुद्धर्त्तुः कथायां रतिं रुचिम् को न कुर्यात् ॥ १५ ॥

शुश्रूषोरिति तैर्व्याख्यातम् । तत्र पुण्यतीर्थनिषेवणादिभिरिति अयमप्येकोमार्गः स्यात् । ते पुनन्त्युरुकालेनेत्यादिना । सद्यः पुनन्त्युपस्पृष्टा इत्यादिना च । ऋजुमार्गोऽप्यस्ति अतएव यद्वा नन्वेवमपि तस्य कथारुचिर्मन्दभाग्यानां न जायत इत्याशङ्क्य तत्र सुगमोपायं वदन् तामारभ्य नैष्ठिकभक्तिपर्यन्तां भक्तिमुपदिशति पञ्चभिः । तत्र शुश्रूषोरिति । "भुवि पुरुपुण्यतीर्थसदनानृषयोविमदा" इत्याद्यनुसारेण प्रायस्तत्र महत्सङ्गो भवतीति तदीयटीकानुमत्या च पुण्यतीर्थनिषेवणाद्धेतोर्लब्धा यदृच्छया या महत्सेवा तया वासुदेवकथारुचिः स्यात् । कार्यान्तरेणापि तीर्थं भ्रमतो महतां प्रायस्तत्र भ्रमतां तिष्ठतां वा दर्शनस्पर्शनसम्भाषणादिलक्षणा सेवा स्वतएव संपद्यते तत्प्रभावेण तदीयाचरणे श्रद्धा भवति । ततः तदीयस्वाभाविकपरस्परभगवत्कथायां किमेते संकथयन्ति तत् शृणोमीति तदिच्छा जायते । ततश्च तच्छ्रवणेन तस्यां रुचिर्जायत इति क्रमः । तथाच महद्भ्य एव श्रुता झटिति कार्यकरीति भावः । तथा च श्रीकपिलदेववाक्यम् । "सतां प्रसङ्गान्मम वीर्यसंविदो भवन्ति हृत्कर्णरसायनाः कथाः । तज्जोषणादाश्वपवर्गवर्त्मनि श्रद्धा रतिर्भक्तिरनुक्रमिष्यतीति ॥ १६ ॥

---

### सुबोधिनी ।

ननुतथापिरत्यभावात्कथमेतत्सेत्स्यतीत्याशंक्याहयदनुध्यासिनेतिसर्वत्रालौकिकेषुपदार्थेषुमाहात्म्यश्रवणाद्रुचिरुत्पद्यतेतत्रभगवच्छास्त्रस्यप्रसिद्धत्वाद्वियोगादीनांप्रसङ्गत्वाद्भगवद्ध्यानंप्रसिद्धंतस्याप्येवंमाहात्म्यमंगभूतस्यापीत्यसिपदप्रयोगः यस्यानुध्यानंसैवासिः तत्रापि सेवनेभगवत्प्रादःकिंतुतेनैवयुक्ताः कर्मछिंदंतिकर्मसुविद्यमानेषुजन्मानुच्छेदात्तेषांवाभुक्तानामक्षयात्भोगेनवातत्क्षणेतद्दतुनापुनः कर्मसं-

**शृण्वतांस्वकथाःकृष्णाःपुण्यश्रवणकीर्त्तनः।**

**हृद्यन्तःस्थोह्यभद्राणिविधुनोतिसुहृत्सताम्॥ १७ ॥**

## सुबोधिनी

राजेनात्कर्मविच्छेदः कठिनःतदपिध्यानेनभगवतीति छिंदंतीत्युक्तंननुकिंकर्मच्छेदनमात्रेणजीवभावस्याविद्यमानत्वादित्याशंक्याहग्रंथिनिबंधनमितिग्रंथिरविद्ययाचिदचिद्ग्रंथिः मोहग्रंथिश्चतन्नितरांवध्नातीतिग्रंथिनिबंधनंपूर्ववासनारूपेणाविद्यमानस्यकर्मणैवदृढीकरणम्अतस्तद्भावेसोऽपिगमिष्यतीतिभावःघुनाक्षरन्यायंवारयतिबहुवचनम्अत्रहिनैपुण्यमपेक्ष्यतेअनुध्यानस्यान्यत्राविनियोगसंभवात्अतोयोगसिद्धिमनपेक्ष्यज्ञानेनाविद्यामेवनिवर्तयंतितेकोविदाः तत्रध्यानस्यस्वतोमाहात्म्यजनकत्वंनास्तिविषयध्यानस्यसुतरांबंधहेतुत्वात् अतोभगवन्माहात्म्येनैवतस्यतत्त्वमित्याह तस्येति तादृशस्येत्यर्थः यत्रतद्धर्मेणापिकार्यसिद्धिःतत्रयदाकथाभिः सएवचित्तेयुक्तोभवतीत्यभिप्रायेणाह कोनकुर्यादिति ॥ १५ ॥

अकर्त्तॄणांमाहात्म्यज्ञानाभावः एवंद्वितीयाभक्तिर्निरूपिता एवंज्ञानभक्तीमध्यमेनिरूप्यउत्तमेनिरूपयति शुश्रूषोरित्यादिसप्तभिः अत्रादृष्टफलमुख्यानिसाधनानिनिरूप्यंते येषुव्यभिचारशंकापि नास्तिवैराग्यंचहेतुः तत्रायंक्रमः आदौगृहत्यागेनतीर्थपर्यटनम् अन्यथागृहत्सेवाग्रामुद्वेगःस्यात्ततोमहत्संगः ततस्तेषांसेवाततोभगवत्कथाश्रवणंततःकथारुचिः ततः कथायांतेषुचश्रद्धाततःशुश्रूषेतिएवमेतादृशधर्मेणस्वरूपोपकारिण्याव्यभिचारिण्याशुश्रूषा उत्पद्यतेअत्र पूर्वपूर्वसाधनानांदृढत्वात् नोत्तरेषांनिवृत्तिः तादृशाधिकारोदुर्लभइति सूचितंशुद्धसत्त्वेत्याविर्भूतस्यश्रवणेसद्यश्चित्तप्रसादइति वासुदेवेत्युक्तम् अस्यांगीकारायमहत्पदप्रयोगः पुण्यरूपंतीर्थंपुण्यतीर्थंकुरुक्षेत्रंगंगाचतयोर्नितरांसेवनंदेववज्जलस्यसेवनम् ॥ १६ ॥

---

## श्रीविश्वनाथचक्रवर्त्ती।

ननु च "मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायत इति श्रद्धालुर्मे कथाः शृण्वन्निति जातश्रद्धो मत्कथास्वित्यादि भगवदुक्तेः कथायाम् श्रद्धावानेव भक्तावधिकारीत्यतः श्रद्धा कथं स्यादित्यत आह यदन्विति। यस्यानुध्यानमेवासिः खड्गस्तेन युक्ताः सहिताः जनाः ग्रन्थिनिबन्धनं ग्रन्थिरहङ्कारो निबध्यते येन तत् कर्म्म। यद्वा स्वसञ्चितधनेभ्यः पृथक्कृत्य किञ्चिन्मात्रमेकैकदिनभोगार्थं जनाः स्वग्रन्थौ निबध्नन्ति यथा तथैव ग्रन्थिनिबन्धनं वर्त्तमानजन्मभोग्यम् प्रारब्धं कर्म्म तदपि छिन्दन्ति तस्य कथायां रतिं प्रीतिं को न कुर्यादिति तत्कथायां प्रीतिरपि सहसा जायते किं पुनरधिकारव्यञ्जिका श्रद्धेति भावः ॥ १५ ॥

तदपि कथायाम् प्रीतेरेवाविर्भावे प्रकारं शृणुतेत्याह शुश्रूषोरिति। महत्सेवया यादृच्छिकमहत्कृपाजनितया महताम् सेवया श्रद्धानस्य जातश्रद्धस्य पुंसः पुण्यतीर्थं सद्गुरुस्तस्य निषेवणं चरणाश्रयणं स्यात्। "निपानागमयोस्तीर्थमृषिजुष्टजले गुरावित्यमरः। तस्माच्च शुश्रूषोस्तस्य वासुदेवकथासु रुचिः स्यादित्यन्वयः ॥ १६ ॥

---

## सिद्धान्तप्रदीपः।

अनुध्यासिनाध्यानखड्गेनकर्मछिंदंतिकथंभूतम् ग्रंथिनिबंधनंदेहादावात्मत्वबुद्ध्यादिरूपंग्रंथिनिबध्नातीतितत् ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥

---

## भाषा टीका।

जिन भगवान के ध्यान रूप खड्ग को लेकर चतुर जन कर्म ग्रंथि का छेदन करते हैं उन भगवान की कथा मै कौन रति न करैगा ॥ १५ ॥

( कर्म निर्हारिणी हरि कथा मै रति होने का उपाय यहहै )

पवित्र तीर्थों के सेवन करने सै महत संग होता है महत्सेवासै श्रद्धा होती है श्रद्धा सै श्रवण करने की इच्छा होती है तब वासुदेव की कथा मै रुचि होती है ॥ १७ ॥

---

## श्रीधरस्वामी।

ततश्च शृण्वतामिति पुण्ये श्रवणकीर्त्तने यस्य सः। सताम् सुहृत् हितकारी हृदि यान्यभद्राणि कामादिवासनाः तानि अन्तः स्थः हृदयस्थः सन् ॥ १७ ॥

नष्टप्रायेष्वभद्रेषुनित्यंभागवतसेवया।
भगवत्युत्तमःश्लोकेभक्तिर्भवतिनैष्ठिकी ॥ १८ ॥

श्रीधरस्वामी।

ततश्च नष्टप्रायेष्विति सर्व्वाभद्रनाशस्य ज्ञानोत्तरकालत्वात् प्रायग्रहणम्। भागवतानां भागवतशास्त्रस्यवा सेवया। नैष्ठिकी निश्चला विक्षेपकाभावात् ॥ १८ ॥

---

श्रीवीरराघवः।

श्रवणादीनां भक्तियोगोपकारप्रकारं दर्शयति शृण्वतामितिद्वाभ्याम् ॥ पुण्यं शृण्वतां कीर्त्तयतां च पुण्यावहं श्रवणं कीर्त्तनं च यस्य स कृष्णः स्वकथांशृण्वतां सतां साधूनां हृदयांतः स्थितः सन्नभद्राणि भक्तियोगोत्पत्तिप्रतिबंधकानि दुरितानि विधुनोति ॥ सुहृदिति हेतुगर्भमिदं सुहृत्त्वाद्धुनोतीत्यर्थः ॥ १७ ॥

ततः किमतआहनष्टप्रायेष्वितिनित्यम् भागवतानां सतांसेवयातत्सेवापूर्वकभगवद्गुणश्रवणेनेत्यर्थः अभद्रेषुनष्टप्रायेषु सत्सुउत्तमश्लोकेभगवति नैष्ठिकीदृढाभक्तिर्भवति ॥ नष्टप्रायेष्विति प्रायग्रहणेन भक्तियोगापनोद्यं प्राप्तिप्रतिबंधकमुत्तरपूर्वाघरूपं त्ववशिष्यतइति सूचितम् एवंतुल्यन्यायतयास्वधर्मेणाप्युपायोत्पत्तिप्रतिबंधकमात्रमेव निरस्यतइति सम्यगुक्तंप्राक् ॥ १८ ॥

---

श्रीविजयध्वजः।

हरिकथारतिःकेनस्यादितितत्राह शुश्रूषोरिति हेविप्राःशुश्रूषोर्गुर्वादिपरिचर्याशीलस्यवेदादिषुश्रद्दधानस्यमहतांसेवयापुण्यतीर्थानांभागवतादिसच्छास्त्राणांगंगादितीर्थानांच नितरांसेवनाच्चवासुदेवकथारतिःस्यादित्येकान्वयः ॥ १७ ॥
श्रवणफलमाह शृण्वतामिति सुहृदनिमित्तबंधुःपुण्येश्रवणकीर्तनेयस्यसतथा ॥ १८ ॥

---

क्रमसन्दर्भः।

कथाद्वारा अन्तः स्थो भावनापदवीं गतः सन्। हृदि अभद्राणि वासनाः ॥ १७ ॥
नष्टप्रायेषु न तु ज्ञानमिव सम्यक् नष्टेष्वेवेति भक्तेर्निरर्गलस्वभावत्वमुक्तम्। भक्तिरनुध्यानरूपा। नैष्ठिकी सन्ततैव भवति ॥ १८ ॥

---

सुबोधिनी

नन्ववहेलनंकथं चिदपिततः किमतआह शृण्वतामिति। एतादृशसाधनेनोत्पन्नायांशुश्रूषायां न श्रवणादिनिवृत्तिः कदाचिदिति शृण्वतामित्युक्तम्। स्वकथामिति। स्वरूपभूताःकथाः स्वीयकथात्वे भगवतः स्वतंत्रत्वान्नकार्यकारणसंभवति कथायांस्वस्यापिस्वतोमाहात्म्येतुतयैववशीकृतः सर्वंकुर्यादिति एतादृशकथाबाहुल्यं कृष्णावतारएवेति कृष्णइत्युक्तं भक्तियोगविधानार्थंचावतारः निरंतरमुत्पन्नानां पापानांनिवृत्तौनान्यदपेक्ष्यतेसाधनं किंतुश्रवणकीर्तनाभ्यामेवभवतीतिशुद्धं हृदयंभगवान्प्रविशतीत्यभिप्रायेणाहपुण्यश्रवणकीर्त्तनः श्रोतृवक्तृदोषैनश्रवणकीर्त्तने संबध्येतेअपहतपाप्मत्वात्तयोःततश्चश्रवणकीर्त्तनेउत्पद्यमाने पापसामानाधिकरण्येनोत्पद्येतेएव सूर्योदयसंभावनायामेवतमोनिवृत्तिवत् श्रवणसंभावनायामेवपापनिवृत्तिरित्यर्थः वहिः स्थितस्यअंतः कार्यकरणासंभवातइच्छामात्रेण तत्करणेलोकानांप्रतीत्यभावेन अभजनापत्तेर्हेष्टसंभवत्यदृष्टकल्पनायाः असंभवात्सर्वत्रस्थितस्यक्लेशाभावाच्चहृदयं तत्स्थितस्यक्लेशाभावाच्चहृदयंतत्स्थितएवकरोति हृदयेहिकेचनपदार्थावहिःस्थिता अपिभवंतिकेचनांतःस्थिताः तत्रयेषुविस्मरणसंभावनातेवहिः स्थिताःप्रकृतेभगवतः विस्मरणसंभावनापिनास्तीत्यंतस्थितइत्युक्तमतादृशस्यतथाकरणमुचितमितिभावः अभद्राणिकर्मादीनि पापस्यपूर्वमेवनिवृत्तत्वात्। विशेषेणधूननं शिथिलीकरणं यथाजलकर्दमलवत् पुनर्मेलनं न भवति तथेत्यर्थः तथाचास्मिन् पक्षेप्रथमश्रृङ्खलास्वसाध्याद्वितीयाभगवत्साध्यातदैवतृतीयाभवतीति क्रमेणबोध्यते कामादीनामशिथिलत्वे भक्तिर्नोत्पत्स्यतइति ननुभगवतएवंकरणेकोहेतुस्तत्राह। सुहृत्सतामिति सुहृत्सहकार्यकर्त्तामित्रमिति यावत् ॥ १७ ॥

---

तदारजस्तमोभावाःकामलोभादयश्चये ।
चेतएतैरनाविद्धंस्थितंसत्त्वेप्रसीदति ॥ १९ ॥
एवंप्रसन्नमनसोभगवद्भक्तियोगतः ।
भगवत्तत्त्वविज्ञानंमुक्तसङ्गस्यजायते ॥ २० ॥

सुबोधिनी ।

सुहृद्भिः श्रवणाद्युपदेशेन प्रथमपरंपरायां कृतायां द्वितीयां चेद्भगवान्नकुर्यात्तदामित्रत्वं भज्येतेति धुतेषुकामादिषुतत्स्याप्तदाह नष्टप्रायेष्विति । धुताएवकामादयोननाशिता इतिकश्चित् कचित्तेषां सत्त्वंप्रतीयते श्रवणे आग्रहइव प्रतिबंधेक्रोधएव तत्संबंधेलोभप्रभवेदि स्यादिवोधयितुंप्रायग्रहणं तथाच तेषांप्रतिबंधकत्वाभावात् भगवत्कथायानित्यम् श्रवणं भगवद्भक्तानांच सेवनं च नित्यं भवतीत्याह नित्यमिति पूर्वकथायाः श्रवणमेव इदानीं देववत्संभावनमिति सेवार्थः एवं कथायां क्रियमाणायां भगवतिप्रेमोत्पद्यत इत्याह भगवतीति अत्रसर्वत्रभगवच्छब्देन शुद्धंपरं ब्रह्मोच्यतेउत्तमःश्लोकइति उत्तमैःश्लोक्यतइति उत्तमावाश्लोकायस्येतिं साद्भिःकथयाचसहितेभक्तिर्भवती त्यर्थः;ततश्च जातायामपि भक्तौसंतः कथाश्चनत्यजंतइति भाव; महतापिबाधकेनाचलनंनिष्ठा निष्ठांप्राप्तानैष्ठिकी तथाहि कालाद्युपद्रवा नस्फुरिष्यंतीत्यर्थः ॥ १८ ॥

श्रीविश्वनाथचक्रवर्त्ती ।

ततश्च शृण्वतामिति क्रमेण श्रवणकीर्त्तने उक्ते । ततश्च हृदि यान्यभद्राणि पापानि तान्यन्तःस्थः सन् विधुनोतीतिस्मरणम् ॥ १७॥
भागवतानाम् वैष्णवानां भागवतस्य शास्त्रस्य च । नष्टप्रायेष्विति नामापराधलक्षणस्याभद्रस्य कश्चन कश्चन प्रबलो भागः क्षीणत्वं गच्छन् रतिपर्यन्तोऽपि भवतीति भावः । नैष्ठिकी निष्ठा चित्तैकाग्रयं ताम् प्राप्ता ॥ १८ ॥

भाषा टीका ।

सज्जनो के सुहृद पुण्य श्रवण कीर्तन कृष्ण कथा सुनने वालों के हृदय मै स्थित होते हैं । और उनके समस्त अभद्रों ( अमंगलों ) को नाश करते हैं ॥ १७ ॥
श्रीभागवत पुराण और भागवत जनो की नित्य सेवा करते करते जब प्रायः अभद्र नाश होते हैं तब उत्तम श्लोक भगवानमै नैष्ठिकी भक्ति होती है ॥ १८ ॥

श्रीधरस्वामी ।

रजश्च तमश्च ये च तत् प्रभवा भावाः कामादयः एतैरनाविद्धम् अनभिभूतम् । प्रसीदति उपशाम्यति ॥ १९ ॥
भगवद्भक्तियोगतः प्रसन्नमनसः अत एव मुक्तसङ्गस्य ॥ २० ॥

श्रीवीरराघवः

कथमभद्रेषुनष्टेष्वपिभक्तिर्भवतीत्यत्राह तदेति नृणांसततंमहत्सेवैवधर्मस्तस्मादभद्रेषुनष्टेषुतन्मूलाः चित्तविक्षेपावरणहेतवोरजस्त मसोर्भावाधर्माःकार्यभूताइतियावत्येकामलोभादयःसंति आदिशब्दग्राह्याःक्रोधमोहादयस्ते सर्वेनश्यंतिनष्टेषुचरजस्तमोभावेषुएतै रजस्तमोभावैरनाविद्धमविक्षिप्तमविमूढंचातएवसत्त्वेरजस्तमोभ्यामनभिभूते सत्त्वगुणेस्थितंसत्त्वप्रधानंसत्तास्थिरं सदितियावत्प्रसीदति प्रसन्नेचचेतसिनैष्ठिकीभक्तिरप्युद्भवतीतिभावः ॥ १९ ॥
तदेवाहएवमिति ॥ एवमुक्तरीत्याप्रसन्नंमनोयस्यतस्यविरक्तस्यपुंसः नैष्ठिकीभक्तिर्भवतीतिशेषः तस्माच्चभक्तियोगादूभगवत्तत्त्व विज्ञानंभगवत्स्वरूपगुणयाथात्म्यसाक्षात्कारात्मकंज्ञानंजायते इत्यइत्यनंतरोक्तेः तच्चज्ञानंपरभक्तेःफलम् "भक्त्यात्वनन्ययाशक्यअहमेवं विधोऽर्जुन ॥ ज्ञातुंद्रष्टुंचतत्त्वेनप्रवेष्टुंच परंतपेतिवचनात् ॥ २० ॥

### श्रीविजयध्वजः ।

सर्वामंगलनाशफलमाह नष्टेति लिंगशरीरभंगपर्यंतमभद्राणांसंभवात्प्रायेष्वित्युक्तं नैष्ठिकीअचला उत्तमःउद्गतदोषःश्लोकःकीर्ति-र्यस्यसतथोक्तःतस्मिन् ॥ १९ ॥

भक्तिफलमाहतदेति यदाहरावचलाभक्तिस्तदायेरजआदयोभावाः एतैरनाविद्धमसंसक्तंशुद्धसत्त्वेस्थितंवा बलज्ञानसमाहारवतिह रौस्थितंवाचेतःप्रसीदति सकलदोषविधुरतयानिरंतरंपरमात्मानंस्मरतीत्यर्थः रजस्तमोभ्यांभावउत्पत्तिर्येषांतेतथोक्ताः कामलोभादयः चकारात्प्रमादादयइतिवा ॥ २० ॥

---

### क्रमसंदर्भः ।

तदैव "त्रिभुवनविभवहेतवेऽप्यकुण्ठस्मृतिरित्याद्युक्तरीत्या सर्व्ववासनानाशात् चित्तं शुद्धसत्त्वमयं सत् भगवत्तत्त्वसाक्षात् कार-योग्यं भवतीत्याह तदेति ॥ १९ ॥

एवम् पूर्व्वोक्तप्रकारेण प्रसन्नमनसस्ततो मुक्तसङ्गस्य त्यक्तकामादिवासनस्य भक्तियोगतः पुनरपि क्रियमाणात् तस्मात् विज्ञानम् साक्षात् कारः मनसि वहिर्व्वा भावनाम् विनैवानुभवो यः स जायते ॥ २० ॥

---

### सुबोधिनी ।

एतावत्पर्यंतपुरुषप्रयत्नः अग्रिमस्त्वयमेवभवतीत्याह तदेतित्रिभिः ॥ तदातुचित्तस्यस्वरूपं नश्यति त्रिगुणात्मकं हितत् तथाच स्वस्व-कार्यगुणाः कुर्वंत्येव तथाच तद्धृदयंकदाचिदपिभगवदासक्तं न भवति यदापुनः रजस्तमसोः कारणभूतयोः सत्त्वताभवति यथास्पर्शम-णिस्पर्शेणताम्रलोहयोः सुवर्णता तथाच त्रिभिर्निर्मितं पात्रं सर्वंस्वर्णंभवति तथाभक्त्यास्पृष्टं चित्तं सर्वंसत्त्वंभवति रजस्तमोभावाः कामक्रोधादयः कामलोभादयश्चमिश्रत्वभावाः चकारान्मिश्रा अन्येपिभावाः ते तटस्थतयानिर्दिष्टा येचप्रसिद्धामोहादयस्तान् सर्वानुगत-गृहानिवनिर्दिशति अतएवनप्रथमार्थे क्रियासंबंधः ननुतेआगंतुकंप्राप्ताअपिपूर्ववासनयाकथं चित्तेननसंवध्यंते इत्यतआह चेतइति एतेहि सूत्ररूपाः मूलगुणव्यतिरेकेणानवेधनसमर्थाः अतएतैरनाविद्धं चित्तं स्थितंभवति तदालयावस्थांप्राप्नुवदपि चित्तं निरंतरोत्पन्नभक्त्यनु-रोधेनभूतसत्त्वनिमित्तं भगवदावेशेनप्रसीदति प्रसादोहितेनकार्यकर्त्तॄणां सर्वकार्यसिद्धि हेतुप्रकाशविशेषः ॥ १९ ॥

तेनयज्जातं तदाह एवमिति । एवंपूर्वोक्तप्रकारेण स्थिरसाधनपरं परयाप्रसन्नंमनोयस्यमनसः सत्त्वात्मकत्वे "सत्त्वात् संजायतेज्ञान-मिति सर्ववस्तूनांतत्त्वज्ञानं भवतिनतुभगवत्स्वरूपज्ञानंतस्य गुणातीतत्त्वेन गुणकार्यगम्यत्वाभावात् अतआह भगवद्भक्तियोगत इतिअंतःकरण प्रसादोभक्त्यर्थमेवभक्त्यैवतुभगवज्ज्ञानं "भक्त्यामामभिजानातीतिवाक्यात् तत्त्वपदेन यावानित्याद्यर्थः परिगृहीतः विपदेनकरतलामलक ज्ञानवत्ज्ञानविशेषो विवक्षितः अत्रसंन्यासोऽप्यंगत्वेनापेक्ष्यतइत्याह मुक्तसंगस्येति अंतर्वहिः संगनिवृत्तिः "विषयाविष्टचित्तानां विष्णवा वेशः सुदूरत"इतिन्यायेन परित्यागव्यतिरेकेण नभगवदावेशः अतोनसाक्षात्कारइतिसंन्यासस्यकारणत्वम् ॥ २० ॥

---

### श्रीविश्वनाथचक्रवर्ती ।

रजस्तमोभ्यां भाव उत्पत्तिर्येषां ते विक्षेपलयादयः । आदिशब्दात् क्रोधमोहमात्सर्याणि अनाविद्धम् अविकृतं भवति तेन विषये-ष्वरुच्या श्रवणकीर्त्तनादिषु स्वादुत्वभाणलक्षणा रुचिर्भवतीत्यायातम् । तेन पूर्व्वदशायां कामलोभाद्यैस्तीक्ष्णशरायितैराविद्धं चेतः कथं प्रसीदतु कथं वा कीर्त्तनादेः सम्यगास्वादं लभताम् न हि व्यथाजर्जरितस्याम्रादिकं सम्यक् रोचते इति भावः । ततश्च सत्त्वे शुद्धसत्त्वमूर्त्तौ भगवति स्थितम् आसक्तम् ॥ १९ ॥

एवमनेन प्रकारेणासक्तिपूर्व्वकं प्रतिक्षणं भगवतः कृष्णस्य भजनं कुर्व्वतः प्रसन्नमनसः उत्पन्नरतेरित्यर्थः रत्या विना सर्व्वथा विषयासंस्पर्शस्यानुत्पत्तेस्तेन विना च मनः प्रसादासम्भवादिति । ततश्च भगवति भक्तियोगः प्रेमातस्माच्च भगवतस्तत्त्वस्य स्वरूपगुण-लीलैश्वर्यमाधुर्यस्य विज्ञानमनुभवः इत्यनुसंहितम् भक्तेः फलमुक्तम् । "जनयत्याशु वैराग्यं ज्ञानञ्च यदहैतुकमिति यत् पूर्व्वमुक्तम् तदि-दमेव ज्ञेयम् । मुक्तसङ्गस्य उत्पन्नवैराग्यस्य ॥ २० ॥

---

### सिद्धांतप्रदीपः ।

येरजआदयः येचतज्जाः कामाद्याः एतैः अनाविद्धम् अनभिभूतंचेतोयदाभवति तदासत्त्वेस्थितंसत्प्रसीदति ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥

---

भिद्यतेहृदयग्रन्थिश्छिद्यन्तेसर्व्वसंशयाः ।
क्षीयन्तेचास्यकर्म्माणिदृष्टएवात्मनीश्वरे ॥ २१ ॥
अतोवैकवयोनित्यंभक्तिंपरमयामुदा ।
वासुदेवेभगवतिकुर्व्वन्त्यात्मप्रसादनीम् ॥ २२ ॥

भाषा टीका ।

तब रजो गुण तमो गुण के विकार काम लोभादि कों सैं चित्त विद्ध नही हो सक्ता है । सत्त्व गुण मैं स्थित होकर प्रसन्न होजाता है ॥ १९ ॥

इस भांत जब भगवान को भक्ति के योग सै मन प्रसन्न हो जाता है तब मुक्त संगजन को भगवान के तत्त्व का ज्ञान होजाता है।२०।

श्रीधरस्वामी ।

ज्ञानफलमाह भिद्यत इति । हृदयमेव ग्रन्थिः चिज्जडग्रन्थनरूपोऽहङ्कारः । अतएव सर्व्वे संशयाअसम्भावनादिरूपाः । कर्म्माण्यनारब्धफलानि । आत्मनि आत्मस्वरूपभूते ईश्वरेदृष्टे साक्षात् कृते सति । एवकारेण ज्ञानानन्तरमेवेति दर्शयति ॥ २१ ॥

अत्र सदाचारम् दर्शयन्नुपसंहरति अत इति । आत्मप्रसादनीं मनः शोधनीम् ॥ २२ ॥

श्रीवीरराघवः ।

एवंसाक्षात्कारपर्यंतभगवद्भक्तियोगसाध्यंफलमाह भिद्यतइति आत्मनिपरमात्मनीश्वरेभगवतिदृष्टएवदृष्टमात्रेसत्येवास्यद्रष्टुः पुंसःसर्वकर्माणिभगवत्प्राप्तिप्रतिबंधकानिउत्तरपूर्वाघरूपाणिक्षीयंतेनश्यंत्यतएवतन्मूलकाःसर्वसंशयाःनश्यंति सर्वशब्देनान्यथाज्ञानविपरीतज्ञानाज्ञानसंग्रहः ततस्तन्मूलकोहृदयग्रंथिवदनिर्मोच्योऽहंममाभिमानोभिद्यतेसमूला संसृतिर्निवर्ततेतन्निवृत्तौचब्रह्मप्राप्तिस्तदनुभवश्चायत्नसिद्धइतिभावः ॥ २१ ॥

उक्तार्थस्यानुष्ठानंदर्शयति अतइति यतोमोक्षएवनिरतिशयपुरुषार्थस्तत्साधनंतुभक्तिरेवातःकवयोनिरतिशयश्रेयस्तत्साधनाभिज्ञाः परमयामुदाभगवति वासुदेवेभक्तिमात्मप्रसादिनींकुर्वंति ॥ आत्मप्रसादिनींभक्तिंकुर्वंतीत्यनेनारब्धभक्तियोगस्यचित्तप्रादोपिशनैःशनैः भक्तियोगादेवभवतीतिसूचितम् ॥ २२ ॥

श्रीविजयध्वजः ।

निरंतरंहरिस्मरणफलमाह एवमिति भगवत्तत्त्वविज्ञानंस्वबिंबापरोक्षविज्ञानम् ॥ २१ ॥

अपरोक्षज्ञानफलमाह भिद्यतइति आत्मनिहृत्कमलकर्णिकामध्येस्वबिंबेसर्वेश्वरेदृष्टएव तस्मिन्क्षणएवहृदयग्रंथ्याख्यलिंगंमनोभिद्यते तस्मिन्भिन्नेसतिईश्वरादितत्त्वविषयाःसर्वसंशयाःछिद्यंते तेषुछिन्नेषुसत्सुपूर्वकृतपापकर्माणिक्षीयंते उत्तराणिनश्लिष्यंतइत्येकान्वयः संसारच्छेदनमेवापरोक्षज्ञानफलमितिभावः आत्मनिजीवेईश्वरेब्रह्मणिजीवेदृष्टेचेतिपरस्परभेदनिरासेनाहमेवब्रह्मेत्येवंदृष्टेव्यतिहारन्यासेन हृदयग्रंथिरहंकारःभिद्यतइतिकेचित्तदयुक्तं श्रुतिस्मृतिविरोधात् सत्यमात्मा सत्योजीवः द्वासुपर्णावित्यात्मनिभिदाबोधः भेदसृष्ट्वभिमानेनेतिभागवतज्ञानादद्वैतज्ञाननिषेधाच्च ॥ २२ ॥

क्रमसंदर्भः ।

तस्य च परमानन्दैकरूपत्वेन स्वतः फलरूपस्य साक्षात्कारस्यानुषङ्गिकं फलमाह भिद्यत इति । हृदयग्रन्थिरूपाधहङ्कारः । सर्व्वसंशयाश्छिद्यन्त इति श्रवणमननादिप्रधानानामपि तस्मिन् दृष्ट एव सर्व्वे संशयाः समाप्यन्त इत्यर्थः । तत्र श्रवणेन तावज्ज्ञेयगतासम्भावना छिद्यते । मननेन तद्गतविपरीतभावना । साक्षात्कारेणात्मयोग्यतागतसम्भावनाविपरीतभावने इति ज्ञेयम् । क्षीयन्ते तदिच्छामात्रेणैव तदाभासः किञ्चिदेव तेष्ववशिष्यत इत्यर्थः ॥ २१ ॥

अत्र प्रकरणार्थेसदाचारम् दर्शयन्नुपसंहरति अत इति । न केवलमेतावद्गुणत्वं तस्याः किञ्च परमया मुदेति कर्म्मानुष्ठानवत् साधनकाले साध्यकाले वा भक्त्यनुष्ठानं दुःखरूपं प्रत्युत सुखरूपमेवेत्यर्थः । अतएव नित्यम् साधकदशायां सिद्धदशायाञ्चैतावत् कुर्व्वन्तीत्युक्तम् ॥ २२ ॥

सत्त्वंरजस्तमइतिप्रकृतेर्गुणास्तैर्युक्तःपरःपुरुषएकइहास्यधत्ते ।
स्थित्यादयेहरिविरिञ्चिहरेतिसंज्ञाःश्रेयांसितत्रखलुसत्त्वतनोर्नृणांस्युः ॥ २३ ॥

सुबोधिनी।

एवंविज्ञानेजाते यत्फलंतदाह भिद्यतइति चिदचिद्ग्रंथिराविद्याकार्यंतत्ज्ञानेनानिवर्त्तते यस्मिन्ज्ञाते सर्वमिदं विज्ञातं भवतीति सर्ववस्तूनांयथार्थज्ञानेसर्वे संदेहा निवर्तंते मिथ्याज्ञान सलिलासिकतायामात्मभूमौकर्म बीजंप्ररोहति नतुतत्त्वज्ञानं निदाघनिष्पीत सलिलतयौषरायामितिकर्माण्यपिक्षीयंते एतत्सर्वेनयेनकेनापिप्रकारेण जातज्ञानकार्यं किंतु ब्रह्मात्मैक्यानुभवकार्यमित्याह दृष्टएवेति आत्मत्वेन भगवदनुभवेनान्यथेत्येवकारार्थः आत्मनोह्यनीश्वरत्वेनजाताः पदार्था ईश्वरत्वेनानिवर्त्तंते अन्यस्यैश्वर्यत्वे ज्ञातेऽपि नह्यन्यस्यैश्वरत्वात् ज्ञानंस्वस्यसंसारहेतुर्भवति ॥ २१ ॥
एवंसर्व प्रकरणार्थं निरूप्यकुत्र पुरुष प्रयत्नः पर्यवसितइति संदेहे प्रयत्न विषयमाह अतोवै कवयइति ॥ शुद्धेसत्वात्मके अंतः करणे आविर्भूते भगवति परम प्रेमकर्तव्यमिति प्रयत्न निष्कर्षः तेन भगवत्प्रसादः अंतः करणे भगवत्साक्षात्कारोवेतिफलंवै निश्चयेन स्वस्यैवंनिश्चयः कवयः शब्दतात्पर्याभिज्ञाः शब्दबल विवेकादेवमर्थप्रत्यय इतिभावः साधनस्यसुखात्मकत्वादपिसदा भक्तिंकुर्वंतिक्षणेक्षणे प्रतिक्षणं भगवदाविर्भावेन परमा मुद्बोत्पद्यते विषयस्तु सत्त्वगुणाविर्भूतः भक्तिश्चज्ञान जनिका प्रयत्न भक्तौ साधनत्वेनेति शब्दबलविवेकश्च इति प्रथमाधिकारः ॥ २२ ॥

---

श्रीविश्वनाथ चक्रवर्त्ती।

हृदयग्रन्थिरविद्या भिद्यत इति कर्म्मकर्त्तरि प्रयोगेणाविद्याध्वंसो भक्तानामननुसंहितं फलम्। एवमेव छिद्यन्ते सर्व्वसंशयाः असम्भावानादिरूपाः। आत्मनीति ईश्वर इत्यस्य विशेषणम्। यद्वा आत्मन्येव मनस्येव दृष्टे किम् पुनः साक्षाद्दृष्टे सतीति स्फूर्त्तिसाक्षात्कारावुक्तौ। "सतां कृपा महत्सेवा श्रद्धा गुरुपदाश्रयः। भजनेषु स्पृहाभक्तिरनर्थापगमस्ततः॥ निष्ठा रुचिरथासक्तीरतिः प्रेमाथ दर्शनम्। हरेर्माधुर्यानुभव इत्यर्थाः स्युश्चतुर्दश ॥ २१ ॥
परमया मुदेति साधनदशायामपि कष्टाभाव उक्तः ॥ २२ ॥

---

भाषा टीका।

जब अपने आत्मा मैं भगवान का दर्शन होजाता है तब इस के हृदय की गांठ खुल जाती है. सब संशय छिन्न होजाते हैं. सब कर्मों का क्षय होजाता है ॥ २१ ॥
इसीसैं कविजन नित्यही परम आनंद सैं, वासुदेव भगवान मैं आत्म प्रसादनी भक्ति करते हैं ॥ २२ ॥

---

श्रीधरस्वामी।

वासुदेवे भक्तिं कुर्व्वन्तीति भजनीयविशेषो दर्शितः तदेवोपपादयितुं ब्रह्मादीनां त्रयाणाम् एकात्मकत्वेऽपि वासुदेवस्याधिक्यमाह सत्त्वमिति। इह यद्यपि एक एव परः पुमान् अस्य विश्वस्य स्थित्यादये स्थितिसृष्टिलयार्थं संज्ञाः केवलं भिन्ना धत्ते। हरिविरिञ्चिहरा इति वक्तव्ये सन्धिरार्षः। तत्र तेषां मध्ये श्रेयांसि शुभफलानि सत्त्वतनोर्वासुदेवादेव स्युः ॥ २३ ॥

---

दीपनी।

सत्त्वमिति। ( सत्त्वं सत्वमिति च द्विविध एव शब्दः कोषादिषु प्रसिद्धः। ) अयम्भावः ब्रह्मविष्णुमहेशानां भेदस्तावन्नास्त्येव एकः परः पुरुष इत्युक्तेः। तथापि यत् सत्त्वतनोर्व्वासुदेवादेव श्रेयांसि स्युरित्युक्तम् तद्वस्तुतारतम्यान्न किन्तु गुणतारतम्यादेव। एवञ्च सत्त्वोपाधेर्ब्रह्मणो हरस्य च सेवया श्रेयांसि स्युरेवेति विचारितम् दशमस्कन्धे ( ८८ अध्याये ) हरिर्हि निर्गुणः साक्षादिति पञ्चमश्लोकटीकायाम् स्वामिपादैरिति व्याख्यालेशः ॥ २३ ॥

---

## श्रीवीरराघवः ।

ननुसृष्ट्यादिकारणेषु ब्रह्मरुद्रादिदेवेषु सत्सुकथं वासुदेवभक्तिरेव मोक्षोपायत्वेनोच्यत इतिशंकायामाह सत्त्वमित्यादिनायावदध्याय समाप्ति तत्रभगवान्वासुदेवहिरण्यगर्भरुद्राख्यजीवशरीरकतयास्वावतार रूपेणचजगत्सृष्टिस्थिति लयकारणभूतस्तत्रसाक्षा द्वासुदेवभक्तिरेवमोक्षोपायभूतातच्छरीरभूतहिरण्यगर्भादिभक्तिस्क "योयोयांयांतंनुभक्तइत्याद्युक्तरीत्यातत्तल्लोकादिप्राप्त्युपायः यद्यपि हिरण्यगर्भादिजीवशरीरकतयातद्रूपेणावस्थितः परमात्मैवतथापिकर्तृत्वभोक्तृत्वादिकं जीवगतमेवन परमात्मगतम् नहिशरीरगत धर्माणांशरीरिणिप्रसक्तिरित्ययमार्थोऽत्रप्रतिपाद्यतेसत्त्वमितिसत्त्वादयस्त्रयःप्रकृतेर्गुणाः प्रकृतेरितिसावधारणंविवक्षितंप्रकृतेरेव गुणानतु जीवस्येश्वरस्यवेत्यर्थः तैः सत्त्वादिभिर्युक्तः परःपुरुषःपरमपुरुषः योगोऽत्रशरीरात्मभावरूपोविवक्षितःएक सृष्टेःप्रागितिशेषः "सदेव सौम्येदमग्रआसीदित्यादिश्रुत्यनुरोधात् ॥ एकत्वंचकार्यदशा वस्थानामरूपविभागप्रयुक्त बद्धप्रतिसंबंधिनामरूपविभागाभाव प्रयुक्तविभागानर्हसूक्ष्मचिदचिच्छरीरकत्वं सृष्टेःप्राक्नाम रूपविभागा नर्हसूक्ष्मचिदचि च्छरीकतयै कएवसन्नित्यर्थः अस्यस्थूल चिदचिदात्मकस्यजगतः स्थित्यादयेस्थितिसृष्टिलयार्थम् स्थितिप्राथम्यं भगवत्प्राथम्य विवक्षया परमपुरुषएवब्रह्मरुद्ररूपेणतन्मध्ये स्वावताररूपेणस्थितिसृष्ट्यादिकृद्धरिविरिंचिहरेतिसंज्ञाब्रह्मविष्णुरुद्रसंज्ञाःइतिःप्रकारार्थः तेनरूपसंग्रहः हर्यादिरूपाणितद्वाचकानि हर्यादिनामानिचधत्ते बिभर्त्तितत्रसत्त्वंतनुः शरीरमधिष्ठेयं यस्यतस्मात्सत्वप्रवर्त्तकाद्विष्णोरेवनृणां भजतांश्रेयांसिज्ञाननिष्पत्ति भवनिवृत्तिपरप्राप्तिरूपाणिस्युः खलुसर्वकारणत्वात्सर्वस्मात्परत्वात्सम्यक्ज्ञानवर्द्धकसत्त्वप्रवर्त्तकत्वाच्चवासुदेव भक्तिरेवमोक्षप्रदेत्यर्थः नन्वेकएवहर्य्यादि संज्ञाधत्तेइत्यनेनहर्यादीनां परस्परंसंज्ञाभेद एवनवस्तुभेद इतिप्रतीत्या त्रयाणामैक्यमेवद्रष्टव्यंमतथाचश्रूयते "ब्रह्मा नारायणः शिवश्चनारायणइति स्मर्यतेच ब्रह्मानारायणाख्योसौकल्पादौ भगवान्यथा प्रजाःससर्जभगवान् ब्रह्मानारायणात्मकः ततःसभगवान्विष्णू रुद्ररूपधरोऽव्ययः । ततःकालाग्निरुद्रोसौभूत्वासर्वहरोहरिः सर्गस्थित्यंतकारिणीं ब्रह्मविष्णुशिवात्मिकाम् संज्ञां संयातिभगवानेकएवजनार्दनइति ॥ ततश्चवासुदेवस्य सर्वस्मात्परत्वंनोपपद्यते किंचैकएवहर्यादि संज्ञाधत्तइत्यनेननहर्यादिभ्यः परंतत्वमस्तीत्यवगम्यते युक्तंचैतत् अतएवबिष्णुर्मन्वादयःकालःयस्मिन् ब्रह्माविष्णुरुद्रेंद्राः सर्वेसंप्रसूयंतेतेनेदंपूर्णंपुरुषेणसर्वम् ततोयदुत्तरतरंतदरूपमनामयम्यएतद्विदुरमृतास्तेभवंतीति विष्णोरपिपरतत्त्वविभूतित्वंतत उत्पत्तिःपुरुषशब्दनिर्दिष्ट नारायणातिरिक्त तत्त्वस्यमोक्षहेतुत्वमित्यादिकंसर्वंश्रूयमाणंसंगच्छते ॥ किंचामृतस्यैषसेतुरिति सेतुवद्भगवतोऽन्यप्रापकत्वोक्तेश्च त्रिमूर्त्युत्तीर्णमेव सर्वे जगत्कारणमिति नारायणस्यनपरत्वंनापितद्भजनान्मुक्तिःकारणंतुध्येयमितिश्रुतिबिरोध प्रसंगादितिचेदत्रोच्यते ॥ नतावत्त्रिमूर्त्यैक्यमुपपन्नं नारायणाद्ब्रह्माजायते नारायणाद्रुद्रोजायते नारायणाद्द्वादशा दित्यारुद्रावसवः सर्वाणिछंदांसि नारायणादेवसमुपद्यंते ॥ एकोहवैनारा-यणआसीन्नब्रह्मानेशान एकोहवै नारायणआसीन्नब्रह्मानचशंकरः ॥ समुनिर्भूत्वा समार्चितयत्ततएते व्यजायंतबिश्वे हिरण्यगर्भोग्निर्य मवरुणरुद्रेंद्राः यन्नाभिपद्मादभवत्सहमहात्मा प्रजापतिःतत्रब्रह्मा चतुर्मुखोजायत सोग्रेभूतानां मृत्युमसृजत ॥ त्र्यक्षंत्रिशिरस्कंत्रिपादं खंडपरशुम् ॥ ब्रह्मणःपुत्राय ज्येष्ठाय ब्रह्मादक्षादयःकालस्तथैवाखिलजंतवःबिभूतयो हरेरेताजगतः सृष्टिहेतवः रुद्रः कालांतकाद्या श्चसमस्ताश्चैवजंतवःचतुर्बिधाश्चतेसर्वेजनार्दनविभूतयः॥ अद्योनारायणोदेवस्तस्माद्ब्रह्माततोभवः॥ परोनारायणोदेवस्तस्माज्जातश्चतुर्मुखः तस्माद्रुद्रोभवद्देवीकइतिब्रह्मणोनामईशोहंसर्वदेहिनाम् आवांत्वदंगसंभूतौतस्मात्केशवनामभाक् ॥ तवांतरात्माममचयेचान्येदेहिसं ज्ञिताः ॥ सर्वेषांसाक्षिभूतोऽसौनग्राह्यः केनचित्कचित् ॥ एतौद्वौविबुधश्रेष्ठौप्रसाद क्रोधजौस्मृतौ ॥ तदादर्शितपंथानौसृष्टिसंहारकारकौ ॥ सृष्टिंततःकरिष्यामित्वामाविश्यप्रजापते ॥ हरोहरतितद्वशःइत्यादि श्रुतिस्मृतिभ्यःब्रह्म बिष्णुरात्माभगवतोभवस्यामिततेजसः ॥ रुद्रयोः परमपुरुषसृज्यत्वतद्विभूतित्वतदवरत्वतत्प्रसादायत्तज्ञानवत्त्वतच्छरीरत्वादिधर्म्माणांतदैक्याविरुद्धानामवगतत्वात्ब्रह्मानारायणः शिवश्चनारायणइत्यादि सामानाधिकरण्यस्यचसृष्टिंततः करिष्यामित्वामाविश्यप्रजापते हरोहरतितद्वशइतिप्रमाणांतरानुगुण्येनांतरा त्मतयाआकृत्यधिकरणन्यायेनशरीरवाचिनां शरीरिपर्यंतत्वेनाप्युपपत्तेः ॥ बहुप्रमाणावगतभेदस्यनिर्बाहासंभवाच्च नापिनारायणादुत्ती र्णतत्त्वांत्तरमस्तिविश्वमेवेदंपुरुषस्तद्विश्वमुपजीवति ॥ पतिंविश्वस्यात्मेश्वरम् यमंतः समुद्रेकवयोवयंतिनतस्येशेकश्चनतस्यनाममहद्यशः ॥ अग्निरवमोदेवानांविष्णुःपरमः मत्तःपरतरंनान्यत्किंचिदस्तिधनंजय आभू परात्परंयन्महतोमहांतम् नतत्समश्चाभ्यधिकश्चदृश्यते तसंप्लवेप्राप्तेप्रलीनेप्रकृतौमहान् एकस्तिष्ठतिविश्वात्मासतुनारायणःस्मृतः नपरःपुंडरीकाक्षाद्दृश्यतेपुरुषर्षभः । परंहिपुण्डरीकाक्षान्नभूतो नभविष्यति नविष्णोःपरमोदेवोविद्यतेनृपसत्तम नवासुदेवात्परमस्तिदैवतम् नवासुदेवंप्रणिपत्यसीदति देशतःकालतोव्याप्तिर्मोक्षदत्वं तथैवच हरेर्विभूतिमात्रंतुकेवलंसंप्रभाषितम् नदेवःकेशवात्परः राजाधिराजःसर्वेषांविष्णुर्ब्रह्ममयोमहान् परःपराणांसकलानयत्रक्लेशा दयःसंतिपरावरेशइत्यादिभिर्बहुभिःप्रमाणैर्विष्णोः सर्वाधिकत्वप्रदर्शनपूर्वकंतदधिक देवतांतरनिषेधात् ब्रह्मविष्णुरुद्रेंद्रास्तेसर्वे संप्रसूयंतइत्यत्रतुविष्णोरुत्पत्तिरवताररूपास्वसंकल्पमूलोच्यतेनतुब्रह्मरुद्रादीनामिवकर्ममूला कारणवाक्येष्वेकस्यैवकृत्स्नजगत्कारण त्वावगमात् त्रयाणांसमुच्चित्यकारणत्वानुपपत्तेः कारणत्वोपास्यत्वबोधकवाक्यगतानांशिवशंभ्वादिसामान्यशब्दानांछागपशुन्यायेनावि-शेषवाचिनानारायणशब्दार्थपर्यवसानोपपत्तेः अचितःसर्वकारणत्वानुपपत्तेरीक्षणाद्यर्थबिरोधाच्चरुद्रादीनाम् अनपहतपाप्मावा अहमस्मी त्यादिनाकार्यत्वकर्मवश्यत्वादिश्रवणाद्वासुदेवादिपदवाच्यस्यकुत्रापिकर्म वश्यत्वाद्यश्रवणात् तदुत्पत्तेश्चअजायमानोबहुधाविजाय तइत्यवताररूपत्वश्रवणात् अजायमानइतिकर्मायत्तोत्पत्तिनिषेधाच्चकर्मकृतत्वस्यापोदितत्वाच्चेतरोत्पत्तेस्तथापवादकाभावाच्च ततोयदुत्तर तरमित्यनेनाकिमुच्यतेइतिचेदुच्यते त्रिमूर्त्तिमध्येरक्षकत्वेनावतीर्णस्य नारायणस्य अस्येशानाजगतोबिष्णुपत्नीत्यादिनावगतस्याद्भ्यः संभूतइत्यत्रपूर्वेनुवाकोक्तं महापुरुषत्वंवेदाहमेतमित्यनेनैववाक्येनप्रत्यभिज्ञाप्य तस्यश्रियःपतित्वमहापुरुषत्वादिश्रवणात्तमेवस र्वोत्तरंमहापुरुषंयस्मात्परं नापरमस्तिकिंचित्यस्मान्नाणीयोनज्यायोस्तिकश्चित्वृक्षइवस्तब्धोदिवितिष्ठत्येकस्तेनेदंपूर्णंपुरुषेणसर्वमिति प्रत्यभिज्ञाप्योपरिच सर्वाननशिरोग्रीवःसर्वभूतगुहाशयः सर्वव्यापीचभगवानितिसहस्रशीर्षत्वादिधर्मान्प्रत्यभिज्ञाप्यतयोर्वाक्य योर्ध्येयप्रयुक्तस्य ततोयदुत्तरतरमितिवाक्यस्यसंदंशन्यायेन नारायणपरत्वस्यावस्यकत्वात्ततइत्यस्यशब्दतोऽर्थतश्चप्रत्यभिज्ञापितद्वे तुपरामर्शत्वस्यैवन्याय्यत्वादन्यथायस्मात्पुरुषादपरं व्यतिरिक्तंपरमुत्कृष्टंनास्तीतिपूर्ववाक्येनोक्तम् पुरुषमवपरामृश्यतद्व्यतिरिक्तस्यो

### श्रीवीरराघवः

परत्वप्रतिपादनेपूर्वापरव्याघातप्रसंगाच्चततउक्तहेतुभ्यःयत्पुरुषशब्दवाच्यंतत्त्वंतदेवोत्तरं तत्त्वमितिअमृतस्यैषसेतुरित्यनेनापिविष्णोर्नत स्वांतरप्रापकत्वमुच्यते अपितुस्वप्राप्तौस्वयमेवहेतुरितिदिक् ॥२३॥

---

### श्रीविजयध्वजः

निगमयतिअतइति अतोनिःशेषदुःखनिवृत्त्यलंबुद्धिगोचरसुखानुभवलक्षणमोक्षाख्यपुरुषार्थलाभाद्धि कवयःपरमयामुदाआत्मप्रसादनीं भक्तिंवासुदेवेभगवतिकुर्वंतीत्येकान्वयः आत्मप्रसादनींमनसोनैर्मल्यापादनींविष्णुप्रसादजननींवा मुक्तामुक्ताश्चेत्युभयेऽपिहरौभक्तिंकुर्वंती त्येतस्मिन्नर्थेवैशब्दः ॥

उक्तश्रवणभक्त्यादिलभ्यमुक्तौकोऽधिकारीत्याशंक्यसात्त्विकप्रकृतिरेवतत्राधिकारीतिवक्तुंसत्त्वादिगुणांस्तदाश्रयांश्चाह सत्त्वमिति स त्त्वंरजस्तमइत्येतेत्रयोगुणाःजडप्रकृतेःस्वरूपभूताश्चित्प्रकृत्याभिमताः हरेर्जगदुत्पत्तौउपादानभूताःतैर्गुणैःस्वयमगुणःसन्नपितत्प्रवर्तकतया युक्तःपरःपुरुषोऽस्यजगतःस्थित्यादयेपालनसृष्टिसंहारान्कर्तुंहरिविरिंचहरेतिसंज्ञाःनामानिएकएवधत्ते विष्णुर्ब्रह्माशिवइतिसंज्ञावत्त्वेनावत रति तत्रसत्त्वगुणसंबंधविधुरोऽपिसत्त्वगुणप्रवर्तेननजगत्पालयन्विष्णुसंज्ञोहरिरनन्याधिष्ठिततयापृथगेवस्थितःचतुर्मुखस्थोब्रह्माख्योवि ष्णुःस्वयमरजाअपिरजोगुणमुपादानीकृत्यजगत्सृजन्नास्ते शिवाख्योविष्णुःस्वयमतमाअपितमोगुणप्रवर्तकतयाजगत्संहरन्शिवेतिष्ठति त त्सन्निधानविशेषादेवकमलासनवृषासनयोर्ब्रह्मशिवसंज्ञाः तस्माद्धरेरेवात्रिसंज्ञाः नतुलोकप्रसिद्धहरिब्रह्मशिवभेदनिरासेनसंज्ञाः तथात्वे 'ब्रह्मविष्णवीशरूपाणित्रीणिविष्णोर्महात्मनःब्रह्मणिब्रह्मरूपःसन्नित्यादिवामनपुराणविरोधात् एवंत्रयोऽपिगुणाविष्णवाश्रयास्तथापिसात्त्वि कराजसतामसशरीरिणांनृणांमध्येसत्त्वतनौसात्त्विकशरीरिणिदेवप्रकृतौजीवराशावेव श्रवणभक्त्यादिश्रेयांसिस्युर्नराजसतामसशरीरिषु मिश्रमनुष्येषुअसुरेषुचइत्येकान्वयः सत्त्वतनोर्विष्णोःकेवलंभवतीतिदर्शयितुंमूर्तित्रयस्वरूपमाह सत्त्वमिति सत्त्वादयः प्रकृतेर्गुणास्तैर्यु क्तएकःपरःपुरुषःहर्यादित्रिसंज्ञाधत्ते किमर्थंजगतःस्थितिसृष्टिभंगार्थं तत्रतेषांत्रयाणांमध्येसत्त्वगुणःतनुःशरीरंयस्यसःसत्त्वतनुः तस्मा द्विष्णोःश्रेयांसिस्युरितिवाणिनियुक्ताकेवलोनिर्गुणश्चेतिश्रुतिव्याकोपात् नचास्याःसर्वगुणराहित्यमर्थः सत्यंज्ञानमनंतंब्रह्मगुणाःसर्वेपिवे त्तव्याध्यातव्याश्चनसंशयः आनंदादयःप्रधानस्येतिस्मृतिसूत्रैर्ज्ञानादिगुणगणविधानात् अत्रापिसाक्षीचेताकेवलइत्यादिसाक्षित्वादिगुण प्रतीतेश्च तस्मात्सत्त्वादिगुणराहित्यमेवास्याअर्थइतिसंतोष्टव्यम् किंचहरिविरिंचहराइत्युक्तिंविहायहरेत्युक्तेःप्रमाणसिद्धःकश्चिदर्थविशे षोस्तीतिविज्ञायते सचसकलसुरवरपुरटमुकुटपटलकोटितटपरिघट्टितचरणकमलपरागैः श्रीमद्बादरायणांतेवासिप्रवरैःश्रीमदानंदतीर्थभ गवत्पादाचार्यैर्दर्शितइतिनोऽस्माभिरत्रप्रयतितव्यम् ॥ २३ ॥

---

### क्रमसन्दर्भः ।

तदेवं कर्म्मज्ञानवैराग्ययत्नपरित्यागेन भगवद्भक्तिरेव कर्त्तव्येति मतम् । कर्म्मविशेषरूपं देवतान्तरभजनमपि न कर्त्तव्यमित्याह सप्तभिः । तत्रान्येषाम् का वार्त्ता सत्यपि श्रीभगवत एव गुणावतारत्वे श्रीविष्णुवत् साक्षात् परब्रह्मत्वाभावात् सत्त्वमात्रोपकारकत्वा-भावाच्च । प्रत्युत रजस्तमोबृंहणत्वाच्च ब्रह्मशिवावपि श्रेयोऽर्थिभिर्नोपास्याविलाह सत्त्वमिति द्वाभ्याम् । इह यद्यप्येकएव पुमान् अस्य विश्वस्य स्थित्यादये स्थितिसृष्टिलयार्थं तैः सत्त्वादिभिर्युक्तः पृथक् पृथक् तत्तदधिष्ठाता तथापि परः तत्तदसंश्लिष्टः सन् हरिविरिञ्चि-हरेति संज्ञा भिन्ना धत्ते । तत्तद्रूपेणाविर्भवतीत्यर्थः । तथापि तत्र तेषां मध्ये श्रेयांसि धर्म्मार्थकाममोक्षभक्त्याख्यानि शुभफलानि सत्त्वत-नोरधिष्ठितसत्त्वशक्तेः श्रीविष्णोरेव स्युः । अयं भावः । उपाधिदृष्ट्या तौ द्वौ सेवमाने रजस्तमसोर्घोरमूढत्वात् भवन्तोऽपि धर्म्मार्थका-मा नातिसुखदा भवन्ति । तथोपाधित्यागेन सेवमाने भवन्नपि मोक्षो न साक्षान्न च झटिति किन्तु कथमपि परमात्मांश एवायमित्यनु सन्धानाभ्यासेनैव परमात्मन एव भवति । तत्र तत्र साक्षात् परमात्माकारेणाप्रकाशात् तस्मात्ताभ्यां श्रेयांसि न भवन्तीति । अथोपाधि-दृष्ट्यापि श्रीविष्णुं सेवमानेसत्त्वस्य शान्तत्वात् धर्म्मार्थकामाअपि सुखदाः । तत्रनिष्कामत्वेन तु तं सेवमाने सत्त्वात्संजायते ज्ञानमिति कैवल्यम् सात्त्विकम् ज्ञानमिति चोक्तेर्म्मोक्षश्च साक्षात् । अत उक्तम् स्कान्दे । "बन्धको भवपाशेनभवपाशाच्च मोचकः । कैवल्यदः परम् ब्रह्म विष्णुरेव सनातन,, इति । उपाधिपरित्यागेन तु पञ्चमः पुरुषार्थो भक्तिरेव भवति । तस्य परमात्माकारेणैव प्रकाशात् । तस्माच्छ्री-विष्णोरेव श्रेयांसि स्युरिति ॥ २३ ॥

---

### सुबोधिनी ।

तत्रविषये संदेहः कोयंनियमः सत्त्वमूर्त्तावेव भक्तिःकर्त्तव्येति रजस्तमोमूर्त्तावपि भक्तिकरणं ब्रह्मज्ञानसाधकं तथाचविष्णु भक्तिवच्छिववादि भक्तिरपि ज्ञानसाधिका ब्रह्मणस्तुल्यत्वादित्याशंक्य तत्रनिर्द्धारमाह पंचभिः सत्त्वमित्यादिभिः ब्रह्मणो विशेष त्वाभावेपि उपाधिवैशिष्ट्येनफल वैशिष्ट्यं नतुचैतन्य स्वरूपं भिद्यतेकेषां चिद्वैष्णवानां मतइवतेपि गुणानब्रह्मणः तथासति उक्तावच्च गुणाजनकत्वेन स्वरूपमपि विलक्षणं स्यात्कार्य बशात्तथापेक्षायांनदोषः एकस्यैवस्नानभोजनांतःपुरकार्यदर्शनात् ननुपुरुषस्त्रिगुणः

## सुबोधिनी ।

तस्माद्गुणप्रेरणया तत्तत्कार्यकरणं संभवतिप्रकृतेऽपितथाचेत् गुणांतरपरं परयाअनवस्थास्यात् ततःक्वचित्सहजोगुणसंबन्धोवक्तव्यः तथासति स्वरूपमपि भिद्येतेतिचेत् अत्रहिबहवोवादिनः पृथक २ निरूपयंति सांख्यास्तुनित्यसंबन्धं प्रकृतेराहुः अन्येतुनास्त्येव संबन्धः भ्रमादेवप्रतीयतइत्याहुः भागवत सिद्धांतेतु भगवतिसहजं कर्तृत्वं तत्रकिंचिद्रूपं प्रकृतिपुरुष विभेदेनद्विरूपत्वमापद्यते यथाभौतिक निर्माणेभूतापेक्षा तथाप्राकृतनिर्माणे करणत्वेनप्रकृत्यपेक्षानैतावता स्वरूपेदोषोवा संभवतीति एकएवपुरुषोऽस्य जगतः उत्पत्तिस्थिति प्रलयार्थे गुणत्रयमाददानः परएवपुरुषो ब्रह्मभूतः हरिविरंचि हरइति "सर्वोद्वंद्वोविभाषाएकवद्भवति,, इतिन्यायेन संज्ञात्रयंसंधत्तेत सुपांसुलुगिति लुग्वा इतिशब्दोवाद्वंद्वांते श्रूयमाणः सर्वत्राभिसंवध्यतेसंज्ञायाः स्वरूपमात्रत्वान्न प्रत्ययोत्पत्तिः यथादेवदत्तेति संज्ञा इतिशब्दः प्रकारार्थश्चतेन अन्यापिसंज्ञा एकस्यवह्वयः संतीत्यर्थः तथाद्वैतेगुणाः कार्यार्थकरणत्वेन गृहीताअपिनिरंतर ग्रहणादुपाधि रूपा जाताः तेनयद्भजनंतदुपाधावेवपर्यवसितं भवतीतिसत्त्वोपाधिरेवसेव्य इत्त्यभिप्रायेणाह श्रेयांसीतितत्रैवंनिर्णयः सेवकः सेव्यं यादृशंरूपं पश्यतिस्वस्यापितादृशंरूपं संपादयतिसाधनानिचतानि यद्यपिअपहतपाप्मानंभगवंतम् अन्यथाकर्त्तुंनशक्नुवंति तथापिजीव मन्यथाकुर्वंत्येव ततश्चयादृशेनरूपेण साधनेनवानान्यथाभावः तादृशरूपवानेवेश्वरः सेव्यःनाशंकाभावात्यदिपुनः सेवकस्य बुद्धि र्नोपाधिपर्यवसायिनी तत्रयत्रक्वचित्सेवायामपि नकाचित्चिंता यथाब्रह्मविदः तंयथायथोपासतइत्यत्र तथानिर्णयात् श्रेयांसिशुभफलानितत्रभजनीयरूपेषु खल्विवतिसंमतिः सोपपत्तिकासानिरूपिता सत्त्वतनोरिति ननुशब्दात् दृष्टोपाधित्वमुक्तंनृणांसाधारणजीवानां नियतानांतुतेन सहोपाधिरिति सर्वंसुस्थम्॥२३॥

---

## श्रीविश्वनाथचक्रवर्ती

एवं कर्म्मज्ञानादिकमतिक्रम्य भक्तेरेव यथाकर्त्तव्यत्वमुक्तम् । तथैव देवतान्तरोपासनामप्यपहाय भगवानेवोपास्य इत्युच्यते । स च भगवानेक एवापि क्रीडयावतरन्ननेकोऽपि भवति वहुमूर्त्यैकमूर्त्तिकमितिदशमात् । तस्यावताराद्विविधाः चिच्छक्त्या मायाशक्त्या च । चिच्छक्त्या मत्स्यकूर्मादयो भजनीया एव मायाशक्त्या च ये सत्त्वरजस्तमोभिर्विष्णुब्रह्मरुद्रास्तेषु विष्णुरेव भजनीय इत्याह सत्त्व-मिति । इह यद्यपि एक एव पुमान् आदिपुरुषः अस्य विश्वस्य स्थित्यादये स्थितिसृष्टिलयार्थं तैः सत्त्वादिभिर्युक्त एव हरिविरिञ्चिहरा इति संज्ञा धत्ते । सन्धिरार्षः । पर इति गुणैर्युक्तोऽपि अचिन्त्यशक्त्या तेभ्यो वहिः पृथगवस्थित्यैव तेषामस्पर्शनात् परः अयुक्त इत्यर्थः । तदपि श्रेयांसि भक्तानामभीष्टानि । तत्र तेषु मध्ये सत्त्वतनोः । "भेजिरे मुनयोऽथाग्रे भगवन्तमधोक्षजम् । सत्त्वं विशुद्धं क्षेमाय कल्पन्ते येऽनु तानिहेत्युत्तरश्लोकदृष्ट्या विशुद्धसत्त्वात्मकशरीरात् हरेरेव स्युः । "साक्षी चेताः केवलो निर्गुणश्चेति । सत्त्वादयो न सन्तीशे यत्र च प्राकृता गुणा इति हरिर्हि निर्गुणः साक्षात् पुरुषः प्रकृतेः पर,, इत्यादिश्रुतिस्मृतिविरोधात् । हरौ मायागुणस्य सत्त्वस्य युक्त-त्वेऽपि तस्ययोग एव । सत्त्वस्य प्रकाशरूपत्वादौदासीन्याच्च तेन सच्चिदानन्दवस्तुनो महाप्रकाशस्योपरागासंभवात् प्राकृतसत्त्वस्य न हि हरिशरीरारम्भकत्वम् । रजस्तमसोस्तु विक्षेपरूपत्वावरणरूपत्वाभ्यामुपकारकत्वापकारकत्वाभ्याञ्च ताभ्यामानन्दस्य विक्षिप्तत्वमा-वृतत्वमित्युपरागसंभवात् ब्रह्मरुद्रयोरजस्तमस्तनुत्वमेवेति तयोः सगुणत्वं हरेर्निर्गुणत्वञ्च युक्तिसिद्धमेव । निर्गुणत्वेऽपि प्राकृतसत्त्वस्य प्रकाशरूपेण तत्समीपवर्त्तितया तत्र स्थितत्वाद्विश्वपालनलक्षणस्तद्धर्म्मऔदासीन्येन हरौ प्रतीयते । न च तेन तस्य निर्गुणत्वम् व्याहतमिति वाच्यं संयोगसमवायसम्बन्धाभ्यां प्राकृतसत्त्वस्य तत्रासम्भवात् । सामीप्यसम्बन्धेनैव तत्र स्थितत्वादिति । स्वभक्तिज्ञानस्फूर्त्ति साक्षात्कारादिदानेनैवासत्त्वैव । स्वभक्तपालनं तु स्वरूपभूतस्य शुद्धसत्त्वस्य धर्मोज्ञेयः । किञ्चात्र । ब्रह्मणो हिरण्यगर्भत्वात् ॥ नेतरो-ऽनुपपत्तेः १।१।१७॥ इति न्यायेनतस्येश्वरत्वाभावात्जीवत्वेनतद्भातिरजसिपरमेश्वरस्ययोगात्तत्रावेशादेवावतारत्वम् यदुक्तम् ब्रह्मसंहि-तायाम् । "भास्वान् यथाश्मसकलेषु निजेषु तेजः स्वीयं कियत् प्रकटयत्यपि तद्वदत्र । ब्रह्मा य एव जगदण्डविधानकर्त्ता गोविन्दमादिपु-रुषं तमहं भजामि,, इति । शिवस्य तु जीवत्वाभावाद्गुणायुक्तेश्वरत्वमेव । यदुक्तं तत्रैव,'क्षीरम् यथा दधिविकारविशेषयोगात् संजायते न तु ततः पृथगस्ति हेतोः । यः शम्भुतामपि तथा समुपैति कार्याद्गोविन्दमादिपुरुषं तमहं भजामीत्यतो ब्रह्मशिवयोर्मध्येशिवस्येश्वर-त्वमिति केचिदाहुः । केचित्तुतैर्युक्त इति नियामकसम्बन्धेन संयोगसम्बन्धेन सामीप्यसम्बन्धेन च योगो ज्ञेयः । तत्र सत्त्वादीनां निया-मकसम्बन्धेन योगे सति पुरुषः स्वस्वरूपेण स्थितो निर्गुण एव भवति । रजसि तमसि च संयोगसम्बन्धेन योगे स एव पुरुषो ब्रह्मा रुद्रश्च सगुण एव भवति । सत्त्वे सामीप्यसंबन्धेन योगे स एव पुरुषो विष्णुः स्वरूपेण स्थितो निर्गुण एव भवतीत्याचक्षते । अतएव योगो नियामकतया गुणैः सम्बन्ध उच्यते । अतः स तैर्न युज्यते तत्र स्वांशः परस्य यः इति भागवतामृतकारिकार्थ उपपद्यत इति ॥२३॥

---

## सिद्धान्तप्रदीपः ।

नित्यंपरमयामुदावासुदेवेभक्तिंकुर्वंतीत्युक्तंतच्चवासुदेवस्य निःसमानाधिकत्वेसत्युपपद्येतेत्याकांक्षायांभगवतोनिःसमानाधिकत्वंदर्शयति सत्त्वमित्यादिना एकःसमानाधिकशून्यः परःपूर्णः सर्वज्ञः सर्वशक्तिःपुरुषः प्रकृत्याख्यशक्तिनियंता "एकमेवाद्वितीयंब्रह्मपरःपराणां सकलानयत्रक्लेशादयः संति परावरेशेपुरुषएवेदंसर्वंप्रधानक्षेत्रज्ञपतिर्गुणेशः सत्यकामः सत्यसंकल्पइत्यादिश्रुति प्रसिद्धः सवैकिलायंपुरुषः पुरातनोयएकआसीदविशेषआत्मनिवासुदेवात्परोब्रह्मन्नचान्यार्थोस्तितत्त्वतः इत्यादिनात्रैवप्रसिद्धः श्रीवासुदेवः सर्वचेतनाचेतनप्रवर्तकोविश्वस्सिसृक्षुः महदादिपृथिव्यंतंसर्वंविश्वंकेनापिस्वांशेनजीवेनस्रष्टुमशक्यंस्वयंसृष्ट्वापुनरस्यविश्वस्यांतरीयस्थित्यादयेस्थितिसृष्टिसंहारार्थम् येशक्तिभूतायाः प्रकृतेः सत्त्वंरजस्तमइतिगुणास्तैर्युक्तः स्वावतारेणस्वांशभूतक्षेत्रज्ञद्वयेनचतानधिष्ठायस्थितः हरिविरंचिहरेति संज्ञाः धत्तेविभर्ति संधिरार्षः तत्रसृष्ट्यर्थंस्वप्रसादविषयेनस्वशक्तिलेशोपबृंहितेनस्वांशभूतेनक्षेत्रज्ञविशेषेणरजोगुणयुक्तेनविरंचिरितिसं

पार्थिवाद्दारुणोधूमस्तस्मादग्निस्त्रयीमयः ।
तमसस्तुरजस्तस्मात्सत्त्वंयद्ब्रह्मदर्शनम् ॥ २४ ॥
भेजिरेमुनयोऽथाग्रेभगवन्तमधोक्षजम् ।
सत्त्वंविशुद्धंक्षेमायकल्पन्तेयेऽनुतानिह ॥ २५ ॥

### सिद्धांतप्रदीपः ।

ह्मांधत्ते तथैवसंहारार्थमपरेणाक्षेत्रज्ञेनस्वकीयसंहारशक्तिलेशोपबृंहितेनतमोगुणाधिष्ठात्राहरइतिसंज्ञांधत्ते तथाजीवानांविश्वपालनाधिकार योग्यतामदृष्ट्वास्वावतारेणास्थित्यर्थंसत्त्वगुणानियंतृतयाहरिरितिसंज्ञांधत्तेएवमर्कचंद्रेंद्राद्याअपिवासुदेवेनैवतत्तदधिकारेषुनियुक्ताइतिज्ञेयम् तथाचोक्तं विष्णुधर्मोत्तरे विष्णुपुराणे च "ब्रह्माशंभुस्तथैवार्कश्चंद्रमाश्चशतक्रतुः एवमाद्यास्तथैवान्येयुक्तावैष्णवतेजसा जगत्कार्यावसाने तुवियुज्यंतेचतेजसा नहिपालनसामर्थ्यमृतेसर्वेश्वरंहरिम् स्थितौस्थितंमहाप्राज्ञभवत्यन्यस्यकस्यचिदिति वक्ष्यतिच सृजामितन्नियुक्तो हंहरोहरंतितद्वशइति तत्रतेषुत्रिगुणाधिष्ठातृषुमध्येनृणांश्रेयांसितुसाधनसंपत्तिबंधनिवृत्तिपरमपदप्राप्तिरूपाणि सत्त्वतनोः सत्त्वनियंतुः सकाशादेवस्युः तस्यवासुदेवावतारत्वात् अतः सर्वकारणः सर्वशक्तिः सर्वज्ञः परमकारुणिकः समानातिशयशून्यः श्रीवासुदेवएव भजनीयः ॥ २३ ॥

---

### भाषा टीका ।

यद्यपि सत्त्व रज तम ये तीनों प्रकृति ( माया ) के गुण हैं और इन्ही को लेकर परम पुरुष भगवान जगत् की स्थिति ( पालन ) सृष्टि और लयके निमित्त. हरि ब्रह्मा और शिव का रूप धारण करते हैं. सुतरां तीनो एक ही हैं परंतु जीवों का श्रेयतो सत्त्व मूर्ति श्री हरि ही सें होता है ॥ २३ ॥

---

### श्रीधरस्वामी ।

उपाधिवैशिष्ट्येन फलवैशिष्ट्यं सदृष्टान्तमाहपार्थिवादिति। पार्थिवात्स्वतः प्रवृत्तिप्रकाशरहिताद्दारुणः काष्ठात्सकाशाद्धूमः प्रवृत्तिस्व भावस्त्रयीमयो वेदोक्तकर्मप्रचुरः । ईषत्कर्मप्रत्यासत्तेः । तस्मादप्यग्निस्त्रयीमयः । साक्षात्कर्मसाधनत्वात्।एवं तमसःसकाशाद्रजोब्रह्मदर्शनं ब्रह्म प्रकाशकम् । तुशब्देन लयात्मकात्तमसः सकाशाद्रजसः सोपाधिकज्ञानहेतुत्वेन किंचिद्ब्रह्मदर्शनप्रत्यासत्तिमात्रमुक्तं न तु सर्वथा तत्प्रका शकत्वं विक्षेपकत्वात् । यत्सत्त्वं तत्साक्षाद्ब्रह्मदर्शनम् । अतस्तद्गुणोपाधीनां ब्रह्मादीनामपि यथोत्तरं वैशिष्ट्यमिति भावः ॥ २४ ॥
वासुदेवभक्तौ पूर्वाचारं प्रमाणयति । भेजिर इति। अथातो हेतोरग्रे पुरा विशुद्धं सत्त्वं सत्त्वमूर्तिं भगवन्तमधोक्षजम् । अतो ये तान नुवर्तन्ते त इह संसारे क्षेमाय कल्पन्ते ॥ २५ ॥

---

### दीपनी ।

प्रवृत्तिप्रकाशरहितादिति । प्रवृत्तिः कर्मारम्भः तस्य हेतुः प्रकाशः दीप्तिः तद्रहितात् न हि केवलदारुसान्निध्ये होमप्रत्यासत्तिः । एवम् लयात्मके तमसि ब्रह्मज्ञानलेशोऽपि नास्ति । मथ्यमानाद्दारुणः सकाशात् धूममुत्पन्नं दृष्ट्वाग्न्युत्पत्त्याशंसया होमारम्भप्रत्यासत्तेः ईषदिति । एवं कर्म्मस्वभावे रजसि कर्म्मणा शुद्धस्य ब्रह्मज्ञानाशंसा रजसो विक्षेपकत्वात् न तथा सर्व्वदा ब्रह्मप्रकाशकत्वं किन्तु ईष-दिति । प्रकाशस्वभावे तु सत्त्वे साक्षात् ब्रह्मप्रकाशः यथा अग्नौ होमः इत्यर्थः । एतदुपाधिविषयविशेषः दशमस्कन्धीयाष्टाशीतितमा-ध्यायस्य पञ्चमश्लोकीयस्वामिकृतटीकायां द्रष्टव्यः ॥ २४—२७ ॥

---

### श्रीवीरराघवः ।

ननुप्रकृतिगुणत्वेनसमानेऽपिकथंसत्त्वंमोक्षहेतुः कथमितरौगुणौतदहेतूसर्वमपिमोक्षहेतुर्नवास्यादितिशंकायांदृष्टांतेनगुणानांवैषम्य मुपपादयतिपार्थिवादिति दारुणइतिपंचमी पार्थिवात्पृथिवीपरिणामरूपाद्दारुणः काष्ठात्तावद्धूमः उत्पद्यतेतस्माद्धूमादनंतरमित्यध्या-ह्रियतंधूमोह्यग्नेः पूर्वमुत्पद्यतेतस्माद्धूमादनं तरमग्निरुत्पद्यतेसचत्रयीमयः यथापार्थिवदारूत्पन्नत्वाविशेषेऽपिधूमो न प्रकाशकःनचस्वर्गी द्यौपयिकः अग्निस्तुप्रकाशकः त्रयीप्रतिपाद्यतारूपेणस्वर्ग प्रदश्चेतितयोर्दृष्टादृष्टकार्यवैषम्यसिद्धिः एवंसुषुप्तस्यपुरुषस्यतमो-गुणानंतरंरजः तदनंतरंमनसोनाविलत्वहेतुर्यत्सत्त्वं तदेवब्रह्मदर्शनसाधनमितिकार्यवैचित्र्योपपत्तिरित्यर्थः ॥२४॥

## श्रीवीरराघवः।

यतःसत्त्वस्यैव ब्रह्मदर्शनत्वंततश्चसत्त्वप्रवर्त्तकाद्विष्णोरेव नृणांश्रेयांस्यत एवसत्त्वतनुंविष्णुमेवमुनयोऽभजन्नित्याह ॥ भेजिरइति अथतस्मादग्रेपूर्वकालेमुनयः विशुद्धंरस्तमोभ्यामननुविद्धंसत्त्वंसत्त्वशरीर कंततप्रवर्त्तकंभगवंत मधोक्षजंभेजिरेउपासांचक्रिरेएवमिद्धतान्मुनीननुसृत्यसत्त्वतनुंभगवंतंयेजनाउपासतेइत्यर्थःतेक्षेमायकल्पंतेश्रेयोयुक्ताभवंतीत्यर्थः रजस्तमः प्रधानौब्रह्मरुद्रौभजंतस्तुनक्षेमायकल्पंतेपित्वंतवत्फलभाजोभवंतीतिमावः ॥२५॥

---

## श्रीविजयध्वजः।

ननुत्रयाणां गुणानां प्रकृतत्वादविशेषेणकथंसत्त्वस्यैवश्रेयः प्रतिहेतुत्वमित्याशंक्यसात्त्विकानामेवोत्तमत्वेनब्रह्मविद्या धिकारित्व प्रतिपादनायगुणत्रितये सत्त्वगुणस्योत्तमत्वंसोदाहरणमाह पार्थिवादिति अत्रोत्तमपदमध्याहृत्यव्याख्येयम्पार्थिवात्पृथिवीकार्याद्दारुणो वृक्षात् पार्थिवोधूमउत्तमः लोकोपकारकमेघरूपत्वात्तस्मात्धूमात् पार्थिवोग्निरुत्तमः कीदृशःत्रय्यांप्रतिपाद्यतइतित्रयीमयः सकलपदार्थप्रकाशकः अत्रयथावृक्षधूमाग्नीनांपार्थिवात्वऽविशेषेप्यग्निराधानेनसंस्कृतोविशिष्टपुरुषार्थसिद्धयेयाज्ञिकैरुत्तमत्वेनपूज्यते तथाप्राकृतात्तमसस्तमोगुणाद्रजोगुणउत्तमः तस्मात्सत्त्वंपरंब्रह्मादिसकलदेवतातत्त्वप्रकाशकः यद्यस्मात्सत्त्वगुणाद्ब्रह्मदर्शनंब्रह्मज्ञानं भवतीतिशेषः यत्सत्त्वंब्रह्मदर्शयत्यपरोक्षयतीति तस्मात्सात्त्विकाएव ब्रह्मज्ञानाधि कारिणइतिसिद्धम् अनेनचेतनानामपवर्गनरकतमः प्राप्तियोग्यानां त्रैविध्यंसूचितम् ॥ २४ ॥

उक्तार्थेशिष्टाचारंदर्शयतिभेजिरइति अथतस्मात्सात्त्विकानांउत्तमाधिकारत्वात्अग्रेपूर्वंमुनयो ज्ञानिनोब्रह्मादयोधोक्षजंभेजिरे तस्मादिह्गुणेषुविशुद्धंसत्त्वंक्षेमायमोक्षायकल्पते नेतरौतमोरजोगुणौभुक्तयेनकल्पेतेइत्येकान्वयः ॥ २५ ॥

---

## क्रमसंदर्भः।

अत्र तु यत् त्रयाणामभेदेवाक्येनोपजप्तमतयो विवदन्ते तत्रेद ब्रूमः । यद्यपि तारतम्यमिदमधिष्ठानगतमेव अधिष्ठाता तु परः पुरुष एक एवेति भेदासम्भवात् सत्यमेवाभेदवाक्यम् तथापि तस्य तत्र तत्र साक्षात्त्वासाक्षात्त्वभेदेन प्रकाशेन तारतम्यम् दुर्निवारमेवेति सदृष्टान्तमाह पार्थिवादिति। पार्थिवात् न तु धूमवदंशेनाग्नेयात् । तत एव वेदोक्तकर्म्मणः साक्षात् प्रवृत्तिप्रकाशरहितात् दारुणः यज्ञीयात् मन्थनकाष्ठात् सकाशात् अंशेनाग्नेयो धूमस्त्रयीमयः । पूर्व्वापेक्षया वेदोक्तकर्म्माधिक्याविर्भावास्पदम् । तस्मादपि स्वयमग्निस्त्रयीमयः । साक्षात्तदुक्तकर्म्माविर्भावास्पदम् । एवं काष्ठस्थानीयात् सत्त्वगुणविदूरात् तमसः सकाशात् धूमस्थानीयम् किञ्चित् सत्त्वसन्निहितम् रजोब्रह्मदर्शनम् । वेदोक्तकर्म्मस्थानीयस्य ब्रह्मणस्तु तत्तदवतारिणः पुरुषस्य प्रकाशद्वारम् । यदग्निस्थानीयम् सत्त्वं तत् साक्षाद्ब्रह्मणो दर्शनम् । साक्षादेव सम्यक् तत्तद्गुणरूपाविर्भावद्वारम् । अत्र दारुस्थानीयं तमः धूमस्थानीयं रजः अग्निस्थानीयं सत्त्वं त्रय्युक्तकर्म्मस्थानीयं ब्रह्म । पार्थिवादिति । यथा धूमोऽशेनाग्नेयो भवति दारु तु तथा नेति । तत्र स्वल्पं त्रयीमयत्वं भवति । एवं रजसः सत्त्वसन्निहितत्वं तथा तमसो नेति ब्रह्मसन्निहितत्वं स्वल्पं ज्ञेयम् । ततश्च त्रयुचक्तकर्म्म यथाग्नावेव साक्षात् प्रवर्त्तते नान्ययोस्तद्वत् परब्रह्मभूतो भगवानपि सत्त्व एवेत्यर्थः । अतो ब्रह्मशिवयोर्द्वयोरसाक्षात्त्वं श्रीविष्णोस्तु साक्षात्त्वं सिद्धमिति भावः । तथा च श्रीवामनपुराणे "ब्रह्मविष्ण्वीशरूपाणि त्रीणि विष्णोर्महात्मनः । ब्रह्मणि ब्रह्मरूपः स शिवरूपः शिवे स्थितः । पृथगेव स्थितो देवो विष्णुरूपी जनार्द्दन,, इति । श्रीदशमे च । शिवः शक्तियुतः शश्वत् त्रिलिङ्गो गुणसंवृत इत्यादौ हरिर्हि निर्गुणः साक्षात् पुरुषः प्रकृतेः परः । स सर्व्वदृगुपद्रष्टा तं भजन्निर्गुणो भवेदिति । अतएव श्रीविष्णोरेव परमपुरुषेण साक्षादभेदोक्तिः । सृजामि तन्नियुक्तोऽहमित्यादिना द्वितीये । तदुक्तम् स उ एव विष्णुरिति । श्रुतिश्च पुरुषो ह वै नारायणोऽकामयत अथ नारायणादजोऽजायत । यतः प्रजाः सर्व्वाणि भूतानि । नारायणः परम् ब्रह्म तत्त्वं नारायणः परम् । ऋतं सत्यम् परम् ब्रह्म पुरुषं कृष्णपिङ्गलमिति । एको नारायण आसीन्न ब्रह्मा न च शङ्करः । स मुनिर्भूत्वा समचिन्तयत् तत एवैते व्यजायन्त विश्वो हिरण्यगर्भोऽग्निर्व्वरुणरुद्रेन्द्रा इति च । एवं त्रिवेदी परीक्षायामपि श्रीविष्णोरेवाराध्यत्वं स्पष्टम् । एवं भगवदवतारानुक्रमणिकासूत्राणाम् भेदमङ्गीकृत्यैव केवलश्रीदत्तस्य गणना सोमदुर्वाससोस्त्वगणना । तदेवं श्रीविष्णोरेव सर्व्वोत्कर्षे स्थिते यदन्यत्र श्रीविष्णुशिवयोर्भेदे नरकः श्रूयते तदनैकान्तिकवैष्णवशास्त्रत्वादनैकान्तिकवैष्णवपरमेव । तद्विपरीतं हि श्रूयते पाद्मोत्तरखण्डादौ । यस्तु नारायणम् देवम् ब्रह्मरुद्रादिदैवतैः । समत्वेनैव वीक्षेत स पाषण्डी भवेद्ध्रुवमित्यादि । तथा च विष्णुधर्म्मोत्तरान्ते लिङ्गस्फोटनृसिंहोपाख्यानम् । विष्वक्सेननामा विप्रः कश्चिदेकान्तविष्णुभक्त आसीत् । तस्य पृथिवीं क्रमतो दैवात् केनचिद्ग्रामाध्यक्षपुत्रेण मिलनमभूत् । तयोः संकथा चेयम् । "देवकर्म्मण्यशक्तिर्मे तात पूजय शङ्करम् । देवतायतनम् गत्वा तत्र तात प्रतिष्ठितम् । लिङ्गमस्ति सुरेशस्य महादेवस्य निर्म्मलम् । एवमुक्तः प्रत्युवाच वयमेकान्तिनः श्रुताः । चतुरात्मा हरिः पूज्यः प्रादुर्भावगतोऽथवा । पूजयामश्च नैवान्यम् तस्मात्त्वं गच्छ माचिरमित्यादिका । ततो ग्रामाध्यक्षपुत्रे तस्य विष्वक्सेनस्य शिरश्छेत्तुमुद्यते तद्धस्तेन मृत्युमनभीप्सन् स इदम् विचारयामास । भवतुतत्रैव गच्छाम इति । ततो लिङ्गसमीपं गत्वा तस्मिन्नधिष्ठाने श्रीनृसिंहाय नम इति पुष्पाञ्जलौ विक्षिप्ते तत् श्रुत्वा पुनः शिरश्छेत्तुमुद्यतस्य तल्लिङ्गं स्फोटयित्वा निर्गतेन श्रीनृसिंहेन सपरिवारस्य ग्रामाध्यक्षपुत्रस्य शिरांसि च्छिन्नानीति । तदेतदुक्तम् स्कान्दे । शिवशास्त्रेषु तद्ग्राह्यं भगवच्छास्त्रयोगि यदिति । मोक्षधर्म्मे नारायणीयोपाख्याने । सांख्यञ्च योगश्च सनातने द्वे वेदाश्च सर्व्वे निखिलेऽपि राजन् । सर्व्वैः समस्तैर्ऋषिभिर्निरुक्तो नारायणो विश्वमिदम् पुराणमिति । महाभारते । यस्तु विष्णुम् परित्यज्य मोहादन्यमुपासते । स हेमराशिमुत्सृज्य पांशुमुष्टिं जिघृति ॥ अतएवोक्तम् श्रीनारदेन । आहरिआवास्मतम् तं परिपूर्णकामं स्वेनैव लाभेन समं प्रशान्तम् । विनोपसर्पत्यपरम् हि बालिशः श्वलाङ्गुलेनातितितर्त्ति सिन्धुम् ॥ आहरि-

क्रमसंदर्भः ।

खण्डे । हरिरेव सदा ध्येयो भवद्भिः सत्त्वसंस्थितैः । विष्णुमन्त्रं सदा विप्राः पठध्वं ध्यात केशवमिति । अत एव विष्णुमन्त्रजापकस्याधिक्यम् श्रीनृसिंहतापन्यां श्रुतौ । अनुपनीतशतमेकमेकेनोपनीतेन तत्समम् । उपनीतशतमेकमेकेन गृहस्थेन तत्समम् । गृहस्थशतमेकमेकेन वानप्रस्थेन तत्समम् । वानप्रस्थशतमेकमेकेन यतिना तत्समम् । यतीनां शतम् पूर्णमेकेन रुद्रजापकेनतत्समम् रुद्रजायक शतमेकमेकेनाथर्व्वाङ्गिरसशिखाध्यापकेन तत्समम् । अथर्व्वाङ्गिरसशिखाध्यापकशतमेकमेकेन मन्त्रराजाध्यापकेन तत्सममिति । मन्त्रराजश्च श्रीनृसिंहमन्त्र एव । अतएवोक्तम् वाराहे । जन्मान्तरसहस्रेषु समाराध्य वृषध्वजम् । वैष्णवत्वं लभेद्धीमान् सर्व्वपापक्षये सतीति । यत्तु श्रीभागवत एव । त्रयाणामेकभावानाम् यो न पश्यति वै भिदाम् । सर्व्वभूतात्मनां ब्रह्मन् स शान्तिमधिगच्छतीत्यादि । तत् खलु श्रीविष्णोः सकाशात् अन्यास्वातन्त्र्यापेक्षयैव । तदुक्तं श्रीब्रह्मणा । सृजामि तन्नियुक्तोऽहं हरो हरति तद्वशः । विश्वं पुरुषरूपेण परिपाति त्रिशक्तिधृगिति । श्रीशङ्कर्षणे च । ब्रह्माभवोऽहमपि यस्य कलाः कलाया इति । यत्पादनिःसृतसरित्प्रवरोदकेन तीर्थेन मूर्द्ध्न्यधिकृतेन शिवः शिवोऽभूदिति च एतदभिप्रेत्यैवाक्तं पाद्मेऽपि । शिवस्य श्रीविष्णोर्य इह गुणनामादिसकलं धिया भिन्नं पश्येत् स खलु हरिनामाहितकर इति । अत्र श्रीविष्णुनेति तृतीयाया अनिर्द्देशादत्रैव श्रीशब्ददानाच्च श्रीमतः सर्व्वशक्तियुक्तविष्णोः सर्व्वव्यापकत्वेन तदाश्रितस्तस्माद्धः शिवस्य गुणनामादिसकलम् धिया भिन्नं स्वतन्त्रं पश्येदित्यर्थः । अतो मार्कण्डेयं प्रति श्रीशिववाक्यञ्चेदमेव । न ते मय्यच्युतेऽजे च भिदामण्वपि चक्षते । नात्मनश्च परस्यापिं तद्युष्मान् वयमीमहि । तत्तेभ्योऽपि सर्व्वत्र समदृष्टिभ्यो वयम् युष्मानेव ईमहि प्रियत्वेन जानीम इति । अथ भागवता यूयं प्रियाःस्थ भगवान् यथा । न मद्भागवतानाञ्च प्रेयानन्योऽस्थि कर्हिचिदिति चतुर्थे तस्यैवोक्तेः । अतएव तत्पूर्व्वम् । नैवेच्छत्याशिषः क्वापि ब्रह्मर्षिर्मोक्षमप्युत । भक्तिं परां भगवति लब्धवान् पुरुषेऽव्यय इति श्रीशिवोक्तमहिमभक्त्या भगवति समाधिस्थस्य तस्य देव्यै महिमदर्शनार्थं हृदि च्छलेन स्वयम् शिवे प्रविष्टे विरतिर्जाता । यथोक्तं किमिदम् कुत एवेति समाधेर्व्विरतो मुनिरिति । तच्चान्यथा न सम्भवतीति । श्रुतौ च श्रीविष्णोरेव सर्व्वोत्कर्ष उक्तः यम् कामये तमुग्रं कृणोमि तम् ब्रह्माणम् तं सुधामित्यादिना । तस्मात्तदीयत्वेनैव ब्रह्मरुद्रभजने न दोषः । स आदिदेवो भजतां परो गुरुरिति । वैष्णवानां यथा शम्भुरित्याद्यङ्गीकारात् । यथानुष्ठितं श्रीप्रह्लादेन । ततः सम्पूज्य शिरसा ववन्दे परमेष्ठिनम् । भवं प्रजापतीन् देवान् प्रह्लादो भगवत्कला इति । श्रीयुधिष्ठिरेण च । क्रतुराजेन गोविन्द राजसूयेन पावनीः । यक्षे विभूतीर्भवतस्तत् सम्पादयनः प्रभो इति । स्वतन्त्रत्वेन भजने भृगुशापो दुरत्ययः । यथा चतुर्थे । भृगुः प्रत्यसृजच्छापं ब्रह्मदण्डं दुरत्ययम् । भवव्रतधरा ये च ये च तान् समनुव्रताः । पाषण्डिनस्ते भवन्तु सच्छास्त्रपरिपन्थिन इत्यादि । वेदविहितमेवात्र भवव्रतमनूद्यते । अन्यविहितत्वे पाषण्डित्वाविधानायोगः स्यात् पूर्व्वत एव पाषण्डित्वसिद्धेः । तस्मात् स्वतन्त्रत्वेनैवोपासनायामयं दोषः । यतश्च तत्रैव तेन श्रीजनार्दनस्यैव वेदमूलत्वमुक्तम् । एष एव हि लोकानाम् शिवः पन्थाः सनातनः । यं पूर्व्वे चानुसन्तस्थुर्यत् प्रमाणम् जनार्द्दन इति । एष वेदलक्षणः । यत् प्रमाणं यत्र मूलमित्यर्थः । स्वतन्त्रोपासनायाम् तत्प्राप्तिः श्रीगीतोपनिषत्स्वेव निषिद्धा । येऽप्यन्यदेवता भक्ता यजन्ते श्रद्धयान्विताः । तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्व्वकम् ॥ अहं हि सर्व्वयज्ञानां भोक्ता च प्रभुरेव च । न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥ यान्ति देवव्रता देवान् पितॄन् यान्ति पितृव्रताः । भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि मामिति । अवज्ञादिकन्तु सर्व्वथा परिहरणीयम् । यथा पाद्मे । हरिरेव सदाराध्यः । सर्व्वदेवेश्वरेश्वरः । इतरे ब्रह्मरुद्राद्या नावज्ञेयाः कदाचन ॥ श्रीभगवद्वाक्यञ्च । यो माम् समर्च्चयेन्नित्यमेकान्तं भावमास्थितः । विनिन्दन् देवमीशानं स याति नरकं ध्रुवम् ॥ गौतमीये च । गोपालं पूजयेद्यस्तु निन्दयेदन्यदेवताम् अस्तु तावत् परो धर्म्मः पूर्व्वधर्म्मो विनश्यति । हयशीर्षा माम् पथि देवहेलननादिति श्रीनारायणवर्म्मणि तदागः प्रायश्चित्तम् चतुर्थे नन्दीश्वरशापश्च संसरन्त्विह ये चामुमनुसर्व्वावमानिनमिति । अत्र विशेषजिज्ञासा चेत् परमात्मभक्तिसन्दर्भौ द्रष्टव्यौ । तदुक्तं ब्रह्मसंहितायाम् भास्वान् यथाश्मसकलेषु निजेषु तेजःस्वीयं कियत् प्रकटयत्यपि तद्वदत्र । ब्रह्मा य एव जगदण्डविधानकर्त्ता गोविन्दमादिपुरुषं तमहं भजामीति । दीपार्च्चिरेव हि दशान्तरमभ्युपेत्य दीपायते विवृतहेतुसमानधर्म्मा । यस्तादृगेव हि च विष्णुतया विभाति गोविन्दमादिपुरुषं तमहं भजामीति । क्षीरं यथा दधिविकारेत्यादि । न च दधिदृष्टान्तेन विकारित्वमायाति "तस्य श्रुतेस्तु शब्दमूलत्वादिति न्यायेन मुहुः परिहृतत्वात् । यथोक्तं यत उदयास्तमयौ विकृतेर्मृदि वा विकृतादिति । दृष्टान्तत्रयेण तु क्रमेणेदं लभ्यते । सूर्यकान्तस्थानीये ब्रह्मोपाधौ सूर्य्यस्येव तस्य किञ्चित्प्रकाशः । दधिस्थानीये शम्भूपाधौ क्षीरस्थानीयस्य न तादृगपि प्रकाशः । दशान्तरस्थानीये विष्णूपाधौ तु पूर्ण एव प्रकाशः ॥ २४ ॥

देवतान्तरपरित्यागेनापि भगवद्भक्तौ सदाचारं प्रमाणयति—भेजिर इति । सत्त्वं विशुद्धं विशुद्धसत्त्वात्मकमूर्त्तिम् । भगवन्तं प्राकृतसत्त्वातीतञ्च । तस्य विवृतं भगवत्सन्दर्भे सप्तदशाधिकशततमवाक्यामाभ्य द्रष्टव्यम् ॥ २५ ॥

---

सुबोधिनी

आयमर्थोगूढइति दृष्टांतमाहपार्थिवादिति ॥ प्रकाशापेक्षिणोहितेजोभूय्यतेतत्राप्यग्निसाध्येष्वाग्निः सचलोकेदारुप्रतिष्ठितः तानिपुनः पृथिवीप्रकृतिकानितेषांपूर्वरूपंपृथिवीसंबंधः वृक्षरूपइतियावत् तत्र छेदनेनशोषेणवाकाष्ठ ताजलाशकत्वेनधूमजनकत्वं तेजोंशेनाग्निजनकत्वमिति तत्राप्यलैकिकाहवनीयादिदेवतासंबंधे वेदप्रतिपाद्यत्वंतत्रलोकेकालां तराग्नीच्छायांसार्द्धभूसंबद्धकाष्ठसंग्रहः ततः पार्थिवशब्देनोक्तं तस्मादपिधूमःशुक्लः ततोपिलोकांतरेप्रकाशार्थं त्रयीमयस्ततः पूर्वरूपं मृत्पिण्डसमानकाष्ठताअंतिममाहवनीयइति अथवाजलेध्यारमात्रत्वंदातुः संपादयतिधूमःशोषणंपाकमग्निः एवंघटस्यमोनापकार संपादकत्वंतेजसएवोपाधिवैलक्षण्यात्तथाब्रह्मणोपि तमसालौकिकभोगसंपादकत्वं रजसाकर्मसत्त्वेनज्ञानमिति यद्ब्रह्मेतिपूर्वोक्तरूप ताउक्तायद्ब्रह्मतमसः तस्माद्ब्रह्मरजः तदुन्नंततोपिसत्त्वंतत्सुखानरूपमेवेतिदर्शनमनुभवः अदूरविप्रकर्षेणयतदुक्तमित्यर्थः अनेनसोपहितंकार्यमापिविलक्षणं जनयतीत्यक्तं पूर्वश्लोकेजीवपुरः सरेणश्रेविर्ष्यंतिरूपितमनेनतुब्रह्मपुरः सरेणेतिविशेषः ॥ २४ ॥

## सुबोधिनी

अत्रसदाचारं प्रमाणयतिभेजिरेइति ॥ आत्मार्थभजनेभगवंतमेव भेजिरेइत्यात्मने पदात्बहुवचनादाचार दार्ढ्यंकर्तृदोषाभावमाहमुन यइतिमननपर्यंतं पदार्थानुष्ठानेनसत्त्वमुक्तम् अथेत्यज्ञानदशायांभजनं निवारितंमुनयोभूत्वा पश्चाद्भजंतइत्यर्थः अग्रेसत्ययुगेपुरातनयुग इत्यादिवाक्यात्ब्रह्मरूपतामलौकिकरूपतांचाहपदद्वयेन भगवंतमधोक्षजमिति उपाधेर्मुख्यताप्रतिपादनार्थंसत्त्वमितिसामानाधिका-रण्येन प्रतिपादनंविशुद्धमिति ब्रह्मादिषुविद्यमानसत्त्वनिवृत्तिः तेषांकिंफलंजातमितिजिज्ञासायां किंतुतेषांफलंवक्तव्यंतत्सेवका अपिमुच्यंतइत्याह कल्पंतइतिताननुयेतत् सेवकायेतन्मार्गवर्त्तिनोवाते पिक्षेमायस्वरूपानंदायकल्प्यंतइत्यर्थः तत्रापिइहैवनभवांतरे तस्माच्छीशुद्धफल साधकत्वात् सत्त्वरूपमेवसेव्यमित्युक्तम् ॥ २५ ॥

---

## श्रीविश्वनाथचक्रवर्त्ती।

आवरणविक्षेपप्रकाशधर्म्मणां तमोरजःसत्त्वनां यथोत्तरं श्रैष्ठ्यं तथासत्त्वस्य शुद्धसत्त्वे प्रातिकूल्याभावञ्च सदृष्टान्तमाह। पार्थिवात् स्ववृत्तिप्रकाशप्रवृत्तिरहितात् धूमः प्रवृत्तिस्वभावः श्रेष्ठस्तस्मादप्यग्निः प्रवृत्तिप्रकाशधर्म्मकः वेदोक्तकर्म्मसाधनत्वात्त्रयीमयः। एवं तमसो लयात्मकात् रजो विक्षेपकं श्रेष्ठम्। तस्मादपि सत्त्वं लयविक्षेपशून्यं ब्रह्मदर्शनम्। सत्त्वात् संजायते ज्ञानमित्यादेः शुद्धसत्त्वे तस्य प्रातिकूल्याभावेनोपरागाभाव उक्तः। तेन ब्रह्मदर्शने तस्य व्यवधायकत्वाभाव एव साधकत्वमौपचारिकं भक्त्या विना ब्रह्मदर्शनासम्भव इत्यग्रिमग्रन्थे प्रतिपादनात्। एवञ्च अनन्दो ब्रह्मणो रूपमिति परमेश्वरस्यानन्दरूपत्वात्। माया परैत्यभिमुखे च विलज्जमाना इत्यादेर्मायागुणानां रजःसत्त्वतमसां परमेश्वरस्पर्शे स्वतः सामर्थ्याभावात् परमेश्वरेणैव स्वेच्छया तत्स्पर्शे स्वीकृतेऽपि ब्रह्मणि विक्षेपविशिष्टो विष्णौ प्रकाशविशिष्टः शिवे आवरणविशिष्ट आनन्द इत्यत आनन्दस्य प्रकाशयुक्तत्वे न क्षतिरिति विष्णुरेवोपास्य इति विवेकः। अत्र दारुणि शुद्धतेजस उपलब्धेर्धूमे तु तदनुपलब्धेर्धूमस्थानीयाद्रजसः सकाशात् दारुस्थानीयं तमः श्रेष्ठं तत्कार्य्यसुषुप्तावपि केवलात्मानुभवादिति रजस्तमोगुणवतोर्ब्रह्मरुद्रयोर्मध्ये रुद्र एव श्रेष्ठ इति केचिदाहुः। अतो भगवदवतारत्वे त्रयाणां साम्यम् गुणोपरागानुपरा-गाभ्यामसाम्यञ्चेत्यभेदभेदप्रतिपादकानि पौराणिकवाक्यानि सङ्गमनीयानि। अत्र असङ्गोह्ययम् पुरुष इति श्रुतेः। परमात्मा जीवात्मा च यद्यपि स्वरूपतो गुणसङ्गरहित एव भवति तदपि परमात्मनश्चिन्महोदधित्वात् परमेश्वरत्वात् स्वातन्त्र्यात् स्वैरलीलत्वाच्च। स्वेच्छयैव स्वकर्तृकेण गुणस्पर्शेन शम्भुत्वे सति गुणकार्यक्रोधादिमत्वेऽप्यात्मारामत्वमसंसारित्वं स्वाज्ञानापचयश्च भवति। जीवात्मनस्तु चित्कणत्वादल्पप्रकाशकत्वादीशितव्यत्वादस्वातन्त्र्यादल्पबलत्वाच्च गुणकर्तृक एव तत्स्पर्शे सति स्वज्ञानलोपः संसारश्च भवतीति विवेचनीयम् ॥ २४ ॥

अथ अत एव विशुद्धं सत्वं स्वरूपभूता चिच्छक्तिरेव तन्मयम् विद्याविद्याभ्यां भिन्न इति गोपालतापनी श्रुतेः। छायातपौ यत्र न गृध्रपक्षाविति स्मृतेश्च। सत्यज्ञानानन्तानन्दमात्रैकरसमूर्त्तय इति दशमाच्च। विष्णुवपुषो मायातीतत्वात् मायाशक्तिवृत्तिविद्यैव विशुद्धसत्त्वशब्दवाच्येति न व्याख्येयम्। ये तान् मुनीननुवर्त्तन्ते ते इह संसारे मोक्षाय कल्पन्ते ॥ २५ ॥

---

## सिद्धांतप्रदीपः।

रजस्तमोऽधिष्ठातृभ्यांसत्त्वाधिष्ठातुः वासुदेवावतारतयोश्रयः प्रदत्वेनश्रैष्ठ्यमुक्तमिदानींरजस्तमोभ्यां सत्त्वस्यश्रेयोद्वारत्वेनश्रैष्ठ्यमाह पार्थिवादित्यादिना पार्थिवात् पृथिवीविकारात् दारुणःकाष्ठात् धूमोऽग्निप्रत्यायकस्तस्मादग्निःश्रेष्ठः यतस्त्रयीमयऋक्यजुः सामोक्तकर्मप्रचुरः एवंतमसस्तुरजस्तस्मात्सत्त्वंश्रेष्ठंयद्यमस्माद्धेतोः सत्त्वंब्रह्मदर्शनंब्रह्मसाक्षात्कारद्वारभूतम् ॥ २४ ॥

अथशब्दोहेत्वर्थः अतोहेतोः सत्त्वाधिष्ठातुः सत्त्वस्यचश्रेष्ठत्वात् अग्रेयेमुनयः सनकप्रभृतयः तेसत्त्वंसत्त्वनियंतारंविशुद्धंविशेषतः शुद्धंप्राकृतदोषास्पृष्टमधोक्षजंभगवंतम् भेजिरेउपासांचक्रिरे इह येतान्मुनीननुतदनुवार्त्तिनः क्षेमायमोक्षायकल्पंते ॥ २५ ॥

---

## भाषा टीका।

इस विषय को दृष्टान्तसै समझाते हैं ॥

पार्थिव ( पृथवी के विकार अर्थात् जड़ ) काष्ठसै कि जिसमै न प्रवृत्ति है न प्रकाश है धूम अर्थात् धूंआ उत्तम है क्योंकि उस मैं प्रवृत्तिहै ओर उसमैं भी त्रयी मय अर्थात् वैदिक कर्म प्रधान अग्नि श्रेष्ठहै क्योंकि उसमै प्रवृत्ति और प्रकाश दोनोही है। इसीभांत काष्ठ के समान तमो गुणसै धूमको समान रजोगुण श्रेष्ठ है और उस सै भी अग्नि के समान प्रकाशक साक्षात् ब्रह्म दर्शन सत्त्वगुण श्रेष्ठ है। सुतरां इसी भांत शिव ब्रह्मा और बिष्णुको क्रमशः श्रेष्ठ जानना चाहिये ॥ १४ ॥

इसी कारण सै आगैसै मुनिजन सब, अधोक्षज ( इन्द्रिय जन्यसै ऊपरहै ) ज्ञान जिनका शुद्धसत्त्वमय भगवान का भजन करते आते हैं। अवभी जोजन उन मुनियों का अनुसरण करते हैं क्षेमको प्राप्त होते हैं ॥२५॥

---

मुमुक्षवोघोररूपान् हित्वा भूतपतीनथ ।
नारायणकलाः शान्ता भजन्ति ह्यनसूयवः ॥ २६ ॥
रजस्तमःप्रकृतयः समशीला भजन्ति वै ।
पितृभूतप्रजेशादीन् श्रियैश्वर्य्यप्रजेप्सवः ॥ २७ ॥

श्रीधरस्वामी ।

नन्वन्यानपि केचिद्भजन्तो दृश्यन्ते । सत्यम् । मुमुक्षवस्त्वन्यान्न भजन्ति किंतु सकामा एवेत्याह । मुमुक्षव इति द्वाभ्याम् । भूतपतीनिति पितृप्रजेशादीनामुपलक्षणम् । अनसूयवो देवतान्तरानिन्दकाः सन्तः ॥ २६
रजस्तमसी प्रकृतिः स्वभावो येषाम् ते अतएव पितृभूतादिभिः समं शीलं येषाम् ते । श्रिया सह ऐश्वर्यञ्च प्रजाश्चेप्सन्तीति -तथा ते ॥ २७ ॥

---

श्रीवीरराघवः ।

ननुकेचिद्ब्रह्मरुद्राद्युपासका अपिदृश्यंतेसर्वेऽपि विष्णुमेवकिंनभजंतइतिशंकायामुपासकानां स्वस्वगुणानुसारेणोपास्यदेवताविषयकोपासनायां रुचिर्जायतइत्याह मुमुक्षवइतिद्वाभ्याम् मुमुक्षवः सत्त्वगुणप्रधानाःअनसूयवः घोररूपान्भूतपतीन्रुद्रादींस्तमःप्रधानान्हित्वाशांताः शुद्धसत्त्वप्रवर्त्तका नारायणस्यकलाअवतारान् भजंतिअनसूयवइत्यनेनविष्णुभक्तानां देवतांतरेषुतदुपासकेषुचासूयाराहित्यंदेवतांतरभक्तानांतु विष्णौतत्परेषुचासूयावत्त्वंचास्तीतिसूचितम् ॥ २६ ॥
रजस्तमःस्वभावास्तुजनाः समसीलान्रजस्तमःस्वभावान्पितृभूतेशान्रुद्रादीन्प्रजेशान्हिरण्यगर्भादीन्आदिशब्देन संकीर्णा देवताः सरस्वतीप्रभृतीश्च "प्रेतान्भूतपतींश्चान्ये यजंतेतामसाजना" इत्युक्तान्भजंतिकथंभूताःश्रीमच्चैश्वर्यमाधिपत्यंचप्रजाःपुत्रादयश्चताईप्सिताआप्तुमिच्छंतीतितथाभूताः अनेनविष्णुभक्तानामनन्यप्रयोजनत्वमनंतस्थिरफलप्राप्तिरन्येषात्वंतवत्फलप्राप्तिश्चेतिसूचितम् ॥ २७ ॥

---

श्रीविजयध्वजः

इदानीमपिसदाचारंदर्शयति मुमुक्षवइति ब्रह्मादिपरमसात्त्विकावासुदेवंभेजिरइति यस्मादथतस्मादसूयादिदोषरहितादुस्तरसंसारान्मुमुक्षवःवर्त्तमानभविष्यत्सात्त्विकाअपिघोररूपान्राजसतामसान्भूतपतीन्रुद्रादीन्हित्वा शांता;परिपूर्णसुखात्मिकाः वासुदेवकलाः भगवन्मूर्तीः संप्रतिभजंतिभजिष्यंतिहिचेत्येकान्वयः ॥ २६ ॥
इदानींप्रसंगात्तामसराजससेव्यानाह रजइति श्रियैश्वर्यप्रजेप्सवः रजस्तमःप्रकृतयःपुरुषाःसमशीलान्पितृभूतप्रजेशादीन्भजंतीत्येकान्वयः"निर्दोषंहिसमंब्रह्मेतिवचनात् समंब्रह्मतच्छीलान् सेवकस्ययच्छीलंसेव्यस्यापितच्छीलमस्तीतिवासमशीलान् । श्रीकामःप्रजेशानैश्वर्यकामःभूतपतीन्प्रजाकामःपितॄन्श्रियंचऐश्वर्यंचप्रजांचप्राप्तुमिच्छंतःश्रियैश्वर्यप्रजेप्सवः ॥ २७ ॥

---

क्रमसंदर्भः ।

नन्वन्यान् भैरवादीन् देवानपि केचिद्भजन्तो दृश्यन्ते । सत्यम् । यतस्ते सकामाः किन्तु मुमुक्षवोऽप्यन्यान्न भजन्ते किमुत तद्भक्तैकपुरुषार्था इत्याह मुमुक्षव इति ॥ २६ ॥
ननु कामलाभोऽपि लक्ष्मीपतिभजने भवत्येव तर्हि कथमन्यांस्ते भजन्ते तत्राह रज इति । रजस्तमः प्रकृतित्वेनैव पित्रादिभिः समम् शीलं येषाम् । समशीलत्वादेव तद्भजने प्रवृत्तिरित्यर्थः ॥ २७ ॥

---

सुबोधिनी

इदानींरजस्तमसोः सेवकभजनफलानां भेदेनस्वरूपंवक्तुंसत्त्वस्यस्वरूपमनुवदतिमुमुक्षवइति ॥ अथकालप्राधान्यात् सत्ययुगे सत्त्वस्यभजनमस्तुनामकथं त्रेतादिषुतद्भजनमित्याशंक्याहसत्त्वस्यफलंमोक्षः सज्ञानसाध्यः ज्ञानंचशांतात:करणसाध्यंभजनीयंचरूपंध्येयंतेनघोररूपध्यानेनाचित्तमपितथाभवतिअतः अभेदेपिसत्त्वमूर्त्तेरपिघोराणिरूपाणिपरित्यज्य घोररूपांश्चपूर्वंमोक्षसाधनत्वे कुलाचारेणश्रद्धयावाप्राप्तंराजसादिभजनंगुणानां स्वरूपज्ञानानंतरंपरित्यज्य अथभिन्नक्रमेणब्रह्मांडांतर्वर्त्तित्वात्पुरुषरूपनारायणकलाः

वासुदेवपरा वेदा वासुदेवपरा मखाः ।
वासुदेवपरा योगा वासुदेवपराः क्रियाः ॥ २८ ॥
वासुदेवपरं ज्ञानं वासुदेवपरं तपः ।
वासुदेवपरोधर्म्मो वासुदेवपरा गतिः ॥ २९ ॥

## सुबोधिनी

धर्मावताराः ज्ञानक्रियाशक्तिरूपाःमत्स्याद्यवतारान् रामादिरूपांतरेषुदुष्टबुद्धिं रहिताभजंतइत्यर्थः भेदंभक्तिमार्गभजनंकिंतुजीवानांस्वपुरुषार्थसिद्धयेधर्ममार्गेणतथासतिसर्वथानिःसंदिग्धमेवभजंतेनन्नृसिंहादिरूपं भक्तिमार्गेसुविषयस्यप्राधान्यात्प्रयोजनस्य दुर्बलत्वात्सर्वाण्येवरूपाणिभजनीयानि ॥२६॥

रूपांतरेभजनसामाग्रयाः स्वरूपमाहरजस्तमइति ॥ शरीरगुणस्वभावभेदेनगुणास्त्रिविधाः तत्रस्वाभाविकाअनुल्लंघनीयाःशरीररूपामौढ्यदशायामेवबलिष्ठाः धर्मरूपास्तुसंगशास्त्रैर्वर्धंतेचतत्रये विवेकिनोपिसच्छास्त्रंसत्संगंज्ञात्वापि स्वभावतोराजसास्तामसाश्चतादृशानेवभजंतेभजनंहि सख्यपर्यवसायितच्चसमानरूपएवभजंतीति समानशीलानेवभजंतइतिनिश्चयार्थः तयोःपरिकरोपितादृशइतिज्ञापयितुंपितरोभूतानिप्रजाश्चतेषामीशाः कालशिवब्रह्मरूपाः तेआदिभूतायेषांतान्क्षुद्रदेवान्भजंते तत्रश्राद्धादिनापितृभजनेशक्तिभजनेचधनप्राप्तिः फलमईश्वरभजनेत्वैश्वर्यप्राप्तिः प्रजेशभजनेप्रजायाःतत्रापिसेवाप्राप्तिस्तुदुर्लभादातृणांतामसत्वात् ॥ २७ ॥

---

## श्रीविश्वनाथचक्रवर्त्ती ।

भूतपतीनिति पितृप्रजेशादीनामप्युपलक्षणम् । अनसूयवः तत्तद्देवानिन्दकाः ॥ २६ ॥
प्रकृतिः स्वभावः अतएव पितृभूतादिभिः समम् शीलं येषां ते श्रियेति सहार्थे तृतीया ॥ २७ ॥

---

## सिद्धांतप्रदीपः ।

लोकेवेदेचवासुदेवोपासकः ब्रह्मरुद्राद्युपासकाश्चदृश्यंतेतत्राधिकारिभेदाद्व्यवस्थामाह मुमुक्षवइत्यादिद्वाभ्याम् भूतपतीन् रुद्रादीन् बहुवचनेनपितृप्रजेशादीनांग्रहणम् ॥ २६ ॥
समशीलाः पितृभूतपत्यादिभिः समंशीलंयेषांते ॥ २७ ॥

---

## भाषा टीका ।

इसीसे मुमुक्षु ( मुक्ति की वाछा करने वाले ) जन, घोर रूप वाले भूतपतिओं को छोड़कर नारायण की शान्त कला ( मूर्ति ) ओं का भजन करते हैं ॥ २६ ॥
जिनकी रजोगुण तमोगुण की प्रकृति है वे पुरुष,अपने समान स्वभाव वाले राजस तामस भूत पितर प्रजापति आदि देवताओं का भजन करते हैं,क्योंकि उनको धन पुत्र ऐश्वर्यकी कामना रहती है ॥ २७ ॥

---

## श्रीधरस्वामी ।

अतो मोक्षप्रदत्वाद्वासुदेव एव भजनीय इत्युक्तं सर्वशास्त्रतात्पर्यगोचरत्वादपीत्याह द्वाभ्याम् । वासुदेवः परस्तात्पर्यगोचरो येषां ते । ननु वेदा मखपरा दृश्यन्ते इत्याशङ्क्य तेऽपि तदाराधनार्थत्वात्तत्परा एवेत्युक्तम् । योगायोगशास्त्राणि तेषामप्यासनप्राणायामादिक्रियापरत्वमाशङ्क्य तासामपि तत्प्राप्त्युपायत्वात्तत्परत्वमुक्तम् । ज्ञानं ज्ञानशास्त्रम् । ननु तज्ज्ञान परमेवेत्याशङ्क्य ज्ञानस्यापि तत्परत्वमुक्तम् तपोऽत्र ज्ञानम् । धर्म्मो धर्म्मशास्त्रं दानव्रतादिविषयम् । ननु तत् स्वर्गादिपरमित्याशङ्क्य गम्यते इति गतिः स्वर्गादिफलम् । सापि तदानन्दांशरूपत्वात् तत्परैवेत्युक्तम् । यद्वा वेदा इत्यत्रैव तन्मूलत्वात् सर्व्वाणिशास्त्राणि वासुदेवपराणीत्युक्तम् । ननु तेषाम् मखयोगक्रियादिनानार्थपरत्वान्न तदेकपरत्वमित्याशङ्क्य मखादीनामपि तत्परत्वमुक्तमिति द्रष्टव्यम् ॥ २८—२९ ॥

---

दीपनी ।

वासुदेव इति । वसति भूतेषु अन्तर्यामितया इति वासुः दीव्यति द्योतते न क्वापि सज्जते इति देवः । स चासौ स चेति सर्व्वत्र नियामकतया तिष्ठन्नपि क्वापि न सक्त इत्यर्थः । यद्वा वसन्त्यत्र भूतानीति वासुः स च देवः सर्व्वाधिष्ठातमपि नोपसज्जते । यद्वा वसुदेवे शुद्धसत्त्वे प्रकाशते इति वासुदेवः शैषिकश्चाग् । वक्ष्यति हि चतुर्थस्कन्धे ( ३ अ० २३ श्लो० ) सत्त्वं विशुद्धम् वसुदेवशब्दितं यदीयते तत्र पुमानपावृत इति व्याख्यालेशः ॥ २८—२९ ॥

---

श्रीवीरराघवः ।

अथ"सर्वेवेदायत्पदमामनंतितपांसिसर्वाणिचयद्वदंति । इष्टापूर्त्तंबहुधाजातंजायमानं विश्वंबिभर्त्तिभुवनस्यनाभिःतदेवाग्निस्तद्वायुस्तत्सूर्यस्तदुचंद्रमाः वेदैश्चसर्वैरहमेववेद्यः योयोयांयांतनुंभक्तइत्युक्तरीत्याभागद्वयात्मकवेदवेद्यश्चतुर्मुखरुद्रादिशरीरकस्तदंतर्यामितयांतवच्छ्रियैश्वर्यादिफलदश्च वासुदेवएवेत्यभिप्रायेणाहवासुदेवपराइतिद्वाभ्याम् वेदाःपूर्वोत्तरभागद्वयात्मका वेदाःवासुदेवपराःवासुदेवःपरस्तात्पर्यभूमिर्येषांतथाभूताः नन्वग्न्यादिदेवतोद्देश्यकयागदानहोमादिकर्मप्रतिपादकपूर्वभागस्यकथंवासुदेवपरत्वमित्यतआह वासुदेवपरामखाइति मखाअग्न्यादिदेवतापूजात्मकायागादयोवासुदेवपराः वासुदेवःपरःप्रधानतयाआराध्य एषांतथाभूताःअग्न्यादिशरीरकतयातद्रूपोवासुदेवएव मखैराराध्यइत्यर्थः केवलमग्न्यादिदेवतापूज्यमात्रत्वाभिमानेनयेमखाननुतिष्ठंतितेषामपि तत्समीहितंफलंतैरविज्ञातोपिवासुदेवोग्न्याद्यंतर्यामितयाराधितःप्रयच्छतीतिभावःएवमाराधितोंतवत्फलंप्रयच्छतीतिभावःतथाचचोक्तम् "अहंहिसर्वयज्ञानांभोक्ताचप्रभुरेवच नतुमामभिजानंतितत्त्वेनातश्च्यवंतित,,इति एवंतुल्यन्यायतयावेदांतेषु क्वचित्कचित्कालाग्निरुद्रोपनिषत्प्रतर्दनविद्यादिषु रुद्रेंद्राद्युपासनात्मकायोगाअपि रुद्रादिशरीरकवासुदेवविषयाइत्याह वासुदेवपरायोगाइतिवासुदेवः परोविषयोयेषांतइत्यर्थः प्रायशोवेदांतेषुविहितायोगावासुदेवविषयाएव श्रूयंतेकंचिदापाततोरुद्रादिविषयत्वेनप्रतीयमना अपितत्तत्प्रकरणगतैर्लिंगैः रुद्रादिष्वसंभाव्यमानैस्तच्छरीरकवासुदेवविषयत्वेनैवनिश्चीयंतइतिभावः एवंनिखिलनिगमवेद्योवासुदेव एवेत्युक्तम्अथतत्पूर्वभागोपबृंहणात्मकतन्मूलकस्मृत्यादिप्रतिपाद्यः स्मार्त्तक्रियाराध्यश्च सएवेत्याह । वासुदेवपराः क्रियाइतिक्रियाः स्मार्त्यः श्रौतीनांतुमखा इत्युक्तत्वात्पूर्ववदर्थः ॥ २८ ॥

अथ वेदांतार्थोपबृंहणार्थतयाप्रवृत्तकपिलाद्यागमोक्तप्रकृतिपुरुषविषयकज्ञानमपि प्रकृतिपुरुषशरीरकपरमात्मविषयकमेवेत्याह वासुदेवपरंज्ञानमिति ज्ञानं प्रकृतिपुरुषविषयकं वासुदेवविषयकंविशेषणबुद्धिशब्दयोर्विशेष्यपर्यंतत्वादित्यर्थः । कपिलादिभिस्तुतथानबुद्धमितिभावःतथावेदांतार्थोपबृंहणपरंमन्वादिस्मृत्युक्तकृच्छ्रचांद्रायणानशनादितपश्चवासुदेवाराधनरूपमित्याह वासुदेवपरंतपइति । किंवहुनासर्वेवैदिकाःस्मार्त्ताश्चधर्मास्तत्प्राप्यागतयश्च वासुदेवाधीनाइत्याह वासुदेवपरोधर्मोवासुदेवपरागतिरिति ॥ २९ ॥

---

श्रीविजयध्वजः ।

सकलशास्त्रतात्पर्यपर्यालोचनयासकलैरवश्यंसेव्यःश्रीनारायणएवेत्याभिप्रेत्याह वासुदेवपराइति अत्रवेदावासुदेवपराइत्यादिप्रतिपादमन्वेतव्यम् वासुदेवगुणोत्कर्षप्रतिपादनतात्पर्यवंतः मखाः संसारमदखनंतीतिनाशयंतीतिमखाःअग्निष्टोमादयःवासुदेवोद्देश्याः नान्योद्देश्याः योगाःअष्टांगाः वासुदेवविषयाःश्रुतिस्मृतिविहितसंध्योपासनादिकाःक्रियाः ॥ २८ ॥

ज्ञानम् औपनिषदं तपःकृच्छ्रचांद्रायणादिकायक्लेशः धर्मोदानादिः गम्यतइति गतिःफलंपरलोकः अनेनहरेरखिलऋग्वेदादिशास्त्रमुख्यविषयत्वेनसर्वोत्तमत्वमुक्तम् ॥ २९ ॥

---

क्रमसंदर्भः ।

अतो वासुदेव एव भजनीय इत्युक्तम् । सर्व्वशास्त्रतात्पर्यञ्च तत्रैवेत्याह द्वाभ्याम् । अत्र योगादीनां कथञ्चिद्भक्तिसचिवत्वेनैव तत्परत्वं मुख्यं द्रष्टव्यम् । वेदानाञ्च कर्मकाण्डगतानामेव ज्ञेयम् । केषाञ्चित् साक्षाद्भक्तिपरत्वमपि दृश्यत इति । "यस्य देवे परा भक्ति-र्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः इत्यादेः ॥ २८—२९ ॥

---

सुबोधिनी ।

एवंसत्त्वमूर्त्तौभजनंसोपपत्तिकमुपपाद्य तत्रैवसर्वप्रमाणानांसाधनानांचतत्रैवपरिसमाप्तिरित्याह ॥ वासुदेवपरावेदाइतिश्लोकद्वयेन प्रथमाधिकारेसर्वगुणमयमितिज्ञानंमुख्यंयुक्तेः प्राधान्यात्अतः सत्त्वपरत्वंसर्वेषामितितत्रवेदाः सात्त्विकंप्रमाणंयज्ञाश्चसात्त्विकाःयोगाःस्नानादिक्रियाश्चज्ञानंतपः आचारःस्वर्गश्चसात्त्विकः अन्यप्राधान्यप्रतिपादकानितुशास्त्राणिनप्रमाणानि किंतुराजसानितामसानियंवंसाधनान्यपिएवंसर्वसात्त्विकभावः कर्त्तव्यइतिप्रथमाधिकारः एतएवमध्यमाधिकारकरणे अन्यथावक्तव्याः ॥

## सुबोधिनी।

उत्तमाधिकारेचसर्वेषामेषांचमंतः करणशोधकत्वात्सत्वपरत्वं सुखफलत्वाच्चसुखस्यसात्विकत्वाद्गुणत्वांत; करणोस्फुरितब्रह्मानंद स्यापिसात्विकत्वंसर्वाणि पंचशास्त्राणिश्रुतिसांख्ययोगपशुपतिवैष्णवाख्यानिमुख्यानिअंगभूतंचधर्मशास्त्रं सर्वेषांतत्वेदंवैष्णवंशास्त्रंपशुप तिमंतंतुपरमतोपन्यासेनोक्तम् अपेक्षितरूपेणप्रमाणां नतुसर्वथातत्रयावदन्येषांत्रयाणां धर्मशास्त्रस्यचनैकवाक्यतातावत् वैष्णवशा स्त्रस्यदार्ढ्यमित्येक वाक्यतानिरूप्यतेतत्रप्रथमं वेदवेदार्थोयज्ञश्चतथासांख्यंतदुक्तंपरमसा धनंतपश्चधर्मशास्त्रं तदुक्तंचगतिश्चतदेतत्सर्वं वासुदेवपरमित्यर्थः ॥ २८—२९ ॥

---

## श्रीविश्वनाथचक्रवर्ती

ननु वेदैरेव पित्रादयो भजनीयत्वेनोच्यन्ते तेषां को दोषस्तत्राह। वासुदेव एव परस्तात्पर्यगोचरो येषाम् ते"कालेन नष्टा प्रलये वाणीयं वेदसंज्ञिता । मयादौ ब्रह्मणे प्रोक्ता धर्म्मो यस्याम् मदात्मक" इति । किम् विधत्ते किमाचष्टे इत्यतो माम् विधत्तेऽभिधत्ते मामित्यादि भगवदुक्तेस्ते वेदतात्पर्यमबुद्ध्वैव पित्रादीन् भजन्तीति भावः ननु वेदानां मखयोगादिपरत्वम् तत्र तत्र प्रकटं दृश्यते। सत्यम् "स्वं लोकम् न विदुस्ते वै यत्र देवो जनार्दनः। आहुर्धूम्रधियो वेदम् सकर्म्मकमतद्विद"इति श्रीनारदोक्तेर्मखयोगादौ वेदस्य तात्पर्याभा- वात् धर्म्मो यस्यां मदात्मक इति श्रीभगवदुक्तेः।"तेपुस्तपस्ते जुहुवुः सस्नुरार्या ब्रह्मानूचुर्नाम गृणन्ति ये ते"इति श्रीदेवहूत्युक्तेः।"यथा तरोर्मूलनिषेचनेनेति नारदोक्तेश्च वासुदेव एव तात्पर्य्यावगमाच्च सर्व्ववेदार्थः केवला भगवद्भक्तिरेवेति । यद्वा मखस्य वासुदेवभुजाद्य- ङ्गविभूतीन्द्रादिदेवताराधनमयत्वेन वासुदेवपरत्वमादिभरतचरिते प्रसिद्धम् । योगस्यापि भगवद्ध्यानादिपरत्वं कापिलेये प्रसिद्धम्। कर्म्मणामपि तत्समर्पणम् विना फलासिद्धेस्तत्परत्वम् ॥ २८ ॥

ज्ञानतपसोर्ब्रह्मपरत्वमेव कर्म्मयोगस्य पूर्व्वश्लोकोक्तेः धर्म्मपदेन परमधर्म्मः श्रवणकीर्त्तनादिर्गतिस्तत्प्राप्यप्रेमापवर्गादिस्तयोस्तु वासुदेवपरत्वमेव ॥ २९ ॥

---

## सिद्धांतप्रदीपः।

पुंसामेकांततः श्रेयस्तन्नः शंसितुमर्हसीत्युपायप्रश्नेकृते उपायाकांक्षायांसत्यामतः साधोऽत्रयत्सारंसमुद्धृत्यमनीषया ब्रूहिनःश्रद्दधाना नामित्युपेयाकांक्षापूरणार्थंसर्वशास्त्रसारंब्रूहीतिप्रश्नः कृतस्तत्रोत्तरमाह वासुदेवपरावेदाइति वासुदेवःपरोमुख्योविषयोयेषांतेवासुदेवपराः "सर्वेवेदायत्पदमामनंतीतिश्रुतेः वेदैश्चसर्वैरहमेववेद्यइति श्रीमुखवचनाच्च पूर्वोक्तःसपरिकरोभक्तियोगउपायः सर्वशास्त्रसारंवासुदेवतत्वं तदेवोपेयमितिभावः वेदानांनानार्थपरत्वमाशंक्यवेदोक्तरीत्यैवसर्वश्रुतीनांवासुदेवेसमन्वयमाह वासुदेवपरामखाः मखायज्ञाः विवित्सो त्पादनद्वारावासुदेवपराः"तमेवमात्मानं ब्राह्मणाविविदिशंति यज्ञेनदानेनतपसानाशकेनेतिश्रुतेः योगाः इंद्रियसंयमादयः वासुदेवपरा एव "यदापंचावतिष्ठंतेज्ञानानिमनसासह बुद्धिश्चनविचेष्टतेतामाहुःपरमांगतिमिति श्रुतिप्रोक्ताः समनस्केंद्रियबुद्ध्यादिसंयमोवासुदेवध्या नार्थः बहुवचनेन"यदहरेवविरजेत्तदहरेवपरिव्रजेदितिश्रुत्युक्तः वैराग्ययोगोगृह्यते क्रियाः सर्वाः वेदोक्ताः वासुदेवपराः "यत्करोषियद् श्नासियज्जुहोसिददासियत् यत्तपस्यसिकौंतेयतत्कुरुष्वमदर्पणमिति श्रीमुखोक्तेः ॥ २८ ॥

ज्ञानंज्ञानप्रधानमुपनिषद्रहस्यम् वासुदेवपरमेव तपःतीर्थवासदेहशोषणव्रतनियमादिरूपंवासुदेवपरमेव धर्मःस्वस्ववर्णाश्रमधर्मः वा- सुदेवपरः गतिरर्चिरादिमार्गरूपावासुदेवपराएव ॥ २९ ॥

---

## भाषा टीका।

वासुदेव ही मोक्ष दाता हैं उससे मुमुक्षुओं को उनका ही भजन करना चाहिये. यहतो सिद्ध कर चुके. अब समस्त शास्त्रों का तात्पर्य भी वासुदेव ही हैं इससे भी वेही भजनीय हैं यह स्थापन करते हैं।—

समस्त वेदों का तात्पर्य वासुदेव ही हैं " वेदों मैंतो अग्निष्टोम वाजपेय आदि यज्ञों का वर्णन है " यज्ञ भी सब वासुदेव पर हैं क्यों कि उनहीं के आराधन रूप हैं। योग शास्त्रभी वासुदेव पर है "योगशास्त्र मैं तो आसन प्राणायाम आदि क्रिया है " क्रिया भी वासुदेव पर है क्योंकि उनकी प्राप्ति का उपाय है। ज्ञान शास्त्रभी वासुदेव पर है। तपभी वासुदेव पर है। धर्मशास्त्र भी वासुदेव पर है " धर्म शास्त्र मै तौ दान व्रत आदिका प्रतिपादन है " दान व्रत आदि कि गति भी वासुदेव ही हैं ॥ २८ ॥

जगत् की सृष्टि स्थिति प्रलयका कारण, और जो जगत् मैं प्रवेश कर नियमन करता है उसी का सब शास्त्र प्रति पादन करते हैं. सब वासुदेव पर क्यों होंगे? वह वासुदेव ही है। उसी विभु और अगुण अर्थात् प्राकृत गुण रहित भगवान ने अपनी गुणमयी, कार्य कारण रूपा माया से आगे इस जगत् को सृजा है ॥ २९ ॥

---

स एवेदं ससर्जाग्रे भगवानात्ममायया ।
सदसद्रूपया चासौ गुणमय्याऽगुणोविभुः ॥ ३० ॥
तया विलसितेष्वेषु गुणेषु गुणवानिव ।
अन्तःप्रविष्ट आभाति विज्ञानेन विजृंभितः ॥ ३१ ॥

श्रीधरस्वामी ।

ननु जगत्सर्गप्रवेशनियमादिलीलायुक्ते वस्तुनि सर्व्वशास्त्रसमन्वयो दृश्यते कथं वासुदेवपरत्वं सर्व्वस्य । तत्राह स एवेति चतुर्भिः एतैरेव श्लोकैस्तस्य कर्म्माण्युदाराणि ब्रूहि इति प्रश्नस्योत्तरम् । सदसद्रूपया कार्यकारणात्मिकया । अगुणश्चेत्यन्वयः । स्वतो निर्गुणोऽपि सन्नित्यर्थः ॥ ३० ॥

भगवतो जगत्कारणत्वमुक्तम् प्रवेशनियमलक्षणां लीलामाह तयेति । विलसितेषु उद्भूतेषु गुणेषु आकाशादिषु अन्तः प्रविष्टःसन् । गुणवानिव मदधीना एते गुणा इत्यभिमानवानिव । न तु वस्तुतस्तथा । यतो विज्ञानेन चिच्छक्त्या विजृम्भित अत्यूर्जितः ॥ ३१ ॥

दीपनी ।

प्रश्नस्य पूर्व्वाध्यायान्तर्गतसप्तदशश्लोकोकस्य उत्तरं भवतीति शेषः ॥ ३०—३१ ।

श्रीवीरराघवः ।

कथंवेदादीनावासुदेवपरत्वमित्याशंकायां"तदात्मानंस्वयमकुरुतेत्युक्तरीत्यासूक्ष्म चिदचिद्विशिष्टंस्वात्मानंजगद्रूपेणपरिणमय्यतत्तद्रूपेणवासुदेवस्यैवावस्थानाद्वासुदेवात्मकंविनावस्त्वभावादित्याह सइतिद्वाभ्याम् अग्रेसृष्टेःप्राक्सएववासुदेवएवनामरूपविभागानर्हसूक्ष्मचिदचिच्छरीरकतयावस्थितइत्यर्थःएवकारेणतच्छब्दपरामृष्टभगद्वाचकवासुदेवशब्दावयवार्थेनचेदंलब्धम् ।यद्वाइदंपरिदृश्यमानंजगदग्रेसृष्टेःप्राक्सएवासीदित्यध्याहारः । "सदेवसौम्येदमग्रआसीदितिस्थानप्रमाणात् । एवंचेदमित्यनेननामरूपविभागभिन्नंजगन्निर्दिश्यतस्य वासुदेवरूपेणावस्थानोक्त्यावियदादिवस्त्वंतरव्यावर्त्तकैवकारप्रयोगेणच"प्रकृतिपुरुषंचैवविद्ध्यनादीउभावपीतिस्मृत्यनुरोधाच्चअन्यथान कर्मविभागादितिचेन्नानादित्वादित्युक्तन्यायेनाकृताभ्यागमकृतविप्रणाशादिदोष प्रसंगाच्चसूक्ष्मचिदचिद्विशिष्टंचलब्धम् । सृष्टेःप्रागेवमवस्थितोभगवानात्मनःस्वस्यमाययास्वशरीरभूतयागुण मय्यासत्त्वादिगुणप्रचुरतयासदसद्रूपयामहदादिपृथिव्यंतकार्यकारणरूपेणपरिणममाणयाविभुर्व्यापकः सदसद्रूपेप्यंतरात्मतयानुप्रविष्टइत्यर्थः । अथागुणःव्याप्यतद्गुणैरस्पृष्टइदंजगत्ससर्ज ॥ ३० ॥

एवंसमष्टिव्यष्ट्यवस्थांचिदंतर्यामितयातत्कारणतयाच तद्रूपेणावस्थानमुक्तम् । अथोभयावस्थप्रकृतिसंसृष्टजीवशरीरकतयातदंतरात्मतयातद्रूपेण वासुदेवस्यैवावस्थितिमाह तयेति । तयात्ममाययाविलसितेषु रचितेषु एषुपरिदृश्यमानेषु गुणशब्दोलाक्षणिकः गुणकार्यभूतशब्दादिस्तंबपर्यंतेष्वित्यर्थः विज्ञानेनजीवेन "विज्ञानंयज्ञंतनुतेयआत्मनितिष्ठन्यो विज्ञानेतिष्ठन्नितिश्रुतिप्रयोगात् तेन विजृम्भितः विशिष्टतच्छरीरकइत्यर्थः । "यस्य विज्ञानं शरीरम्,, इतिश्रुतेः यद्वा विज्ञानरूपेण विजृंभितःभाष्यमाणःतच्छरीरतयातदंतरात्मतयाचतद्रूपेणप्रकाशमानइत्यर्थः । अंतःप्रविष्टःजीवद्वारादेवादि । शरीरेष्वनुप्रविष्टःगुणवानिवसाक्षाद्देवादिशरीरतच्छरीरकजीवगतधर्मवानिवाभाति इवशब्दस्यायमभिप्रायः । "काठिन्यवान्यो विभर्तिनृसिंहरूपीभगवांश्चेतइत्यत्र काठिन्यश्चेत्यादिवच्छरीरभूतजीवेहेयसंबंधः । नतुशरीरिणि वासुदेवेइति । तथातस्यैकस्यैव देवादिशरीरभेदेनानेकधावस्थितिश्चेति ॥ ३१ ॥

श्रीविजयध्वजः ।

अत्रहेतुमाहसएवेति यःसर्ववेदांतादिमुख्यविषयः परमसात्त्विकब्रह्मादीष्टदेवता वासुदेवः सोसावेवागुणःसत्त्वादिगुणविधुरः मुख्यकारणंवा विभुर्व्याप्तःभगवान्नारायणः अग्रेसृष्टेःपूर्वमात्ममाययास्वेच्छयानिमित्त कारणरूपयासदसद्रूपया व्यक्ताव्यक्तरूपया गुणमय्यासत्त्वादिगुणात्मिकजडप्रकृत्योपादानकारणरूपयाचेदंजगत्ससर्जेत्येकान्वयःअतोविष्णुरेवसत्यजगत्स्रष्टृत्वात्सर्वोत्तमइत्यर्थः३०

नियंतृत्वमपितदेकनिष्ठमित्याह तयेतिसहरिःतयासदसद्रूपया विलसितेषुभूतभौतिकदेहेंद्रियाद्यात्मना परिणतेष्वेषुगुणेषुअंतःप्रविष्टोगुणवानूजीवइवाभातिअज्ञानामितिशेषः कुतःविज्ञानेनविजृंभितः विज्ञानपूर्णः इदंहेतुगर्भविशेषणंनानाकर्मविपाकिनांजीवानां विज्ञानाभावादस्यपरिपूर्णत्वात्तेननियम्यत्वंतेषामितिभावः ॥ ३१ ॥

## क्रमसन्दर्भः ।

( तदेवं तद्भजनस्यैवाभिधेयत्वम् दर्शयित्वा पूर्व्वोक्तम् सर्व्वशास्त्रसमन्वयमेव स्थापयति स एवेदमिति । ) ननु भवतु स्वयम् भग-
वतो वासुदेवस्य तादृशत्वं गुणावतारस्य विष्णोः किमायातमित्याशङ्क्य तत्पर्यन्तानामन्येषामपि तदभिन्नत्वं दर्शयितुं प्रकरणति स
एवेति पञ्चभिः । इदं महदादिविरिञ्चिपर्यन्तम् । एवम् प्रवेशादिकापि उत्तरश्लोकेषु द्रष्टव्या । तत्र स एवेति महत्स्रष्टा तदभिन्नत्वेन
दर्शितः ॥ ३० ॥
तयेत्यण्डसंस्थितः पुरुषः ॥ ३१ ॥

---

## सुबोधिनी ।

एवंसोपपत्तिकंफलसाधनस्वरूपं निर्णीतंतृतीयंकृष्णावतारप्रयोजनप्रश्नंप्रथमाधिकारात् अवतारतुल्येनात्रानुक्त्वापश्चादवतारे
ष्वेवकथयिष्यतितिततश्चचतुर्थः प्रश्नः तस्यकर्माणीतितत्रोत्तरमाहसएवेदमितिपंचभिः सृष्टिप्रवेशनानात्वभोगरक्षारूपाः पंचलीलाःक्रमेण
पंचभिःप्रतिपाद्याः सगुणनिर्गुणयोर्भेदाभावायसएवेति सृष्टिस्त्वगुणादेवगुणत्रयेणापिसृष्टिः रजोमिश्रितेनतत्तमोमिश्रितेनत्रयेणापि
संहारः तथासत्त्वमिश्रितेनपालनमितिशुद्धास्त्वधिष्ठातृदेवताशरीररूपाः इदंजगत्दृश्यस्यसर्वस्यापिजगतः कार्यत्वंनत्वाकाशादेर्नित्यते-
तिअग्रेप्रथमम् "एतस्माज्जायतेप्राणोमनः सर्वेंद्रियाणिचखंवायुर्ज्योतिरापः पृथिवीविश्वस्यधारिणीति श्रुत्यासाक्षात्सर्वकारणंप्रथमासृष्टिः
अन्येपिसृष्टिभेदाः संतितेनिबंधेनिरूपिताः भगवानितिवैष्णवशास्त्रेएवेयंप्रथमासृष्टिः वैदिकेतुस्वधर्मत्वशक्तिकालकर्मस्वभावानां
सृष्टिः प्रथमा । अतोऽनंतगुणपूर्णएवभगवान्स्वस्यमायया शक्त्यासर्वभवनसामर्थ्यरूपया इदमात्मभूतंजगत्सृष्टवान् मायास्वरूपमाह
सदसद्रूपयेति साह्युच्चनीचसर्वप्रतिकृतिरूपातस्यामात्मानंसंयोज्यप्रकटीकुर्वन्जगद्रूपेणजायते एवंसतिसुगमासृष्टिर्भवति सुवर्ण
काराणांप्रतिमादि निर्माणवत् साहिभगवन्निकटेतिष्ठति निद्रापिशक्तिःसाजीवंभगवत्समीपेनयाति तन्नमायापर्यंतंगमनेस्वप्नः भगवत्
पर्यंतंगमनेसुषुप्तिः पुनश्चसायथास्थानमानयति विद्यातुभगवत्समीपमेवनयति नानयतिएवमनंताः शक्तयोभगवतः वेदेतुमायासा
धनराहित्येनैवस्वतएवात्मानंजगद्रूपंकरोतीत्युच्युते घटितपूरणपात्रभेदवद्वैदिकपौराणिकजगतोर्भेदः व्यलीकपक्षेस्कनप्रामाणिकः
चकारादन्येपिसृष्टिप्रकाराः सूच्यंते असाविति भगवद्धर्मनिरूपणेनहृदयेस्फुरितंभगवंतंबहिः पश्यन्निवांगुल्यानिर्दिशति । स्वस्यानंत
गुणस्पर्शेणतादृशाकृतिरूपागुणमयीभवति । तेषामुत्तममध्यमनिकृष्टभेदेनत्रिराशित्वात्सत्त्वरजस्तमोगुण वाच्यता । अस्याः पुनःस्प-
र्शेणभगवतिगुणाकृतित्वम् अतःअगुणः प्राकृतगुणरहितः कथंस्वसंबंधेनैवमायायागुणवत्त्वम् । कथंवामायायांप्रविष्टोपिजगद्रूपेणजातो-
प्यगुणस्तत्राह विभुरितिसर्वसमर्थइत्यर्थः ॥ ३० ॥

एवंसद्रूपेणजगत्सृष्टिमुक्त्वाआनंदरूपेणांतर्यामिसृष्टिमाह तयेति तयामाययाआकारसमर्पणेनविलसितेषुचित्रेषुदेवादिदेहेषुभूतेषुचगु-
णेषुयेषु परिदृश्यमानेषुगुणवानिवतेषां तेषांतत्रैवप्रवर्त्तनात् खदिरांगाररक्तिमेव अंतःप्रविष्टःसएवाभाति अयोगोलकनिविष्टाग्नि
वत् बहिरपिस्फुरति आसमंताद्भातिचिज्जडांशयोर्ज्ञानशक्तितिरोभावोस्तितद्वदत्रापिभविष्यतीत्याशंक्याहविज्ञानेन विजृंभितइतिअत्रांतर्या
मिणः सर्वज्ञस्यजीवंसर्वत्रप्रेरयतः तद्विधज्ञानवतः कार्यवेशेनस्फुरणमिवविजृंभातद्वानित्यर्थः ॥ ३१ ॥

---

## श्रीविश्वनाथचक्रवर्त्ती ।

किञ्च ये पितृभूतप्रजेशादयो भजनीयास्तेषामपि स्रष्टा वासुदेव एवेति स एव सेवार्ह इत्याह स एवेति । सदसद्रूपया कार्यकारणा-
त्मिकया । स्वयंत्वगुणः ॥ ३० ॥
सृज्यानां तेषाम् स एवान्तर्यामीत्याह त्रिभिः । गुणेषु गुणोपाधिकजीवेषु तया मायया विलासविषयीकृतेषु गुणवानिव गुणसंस-
र्गवानिव भाति न तु तथा यतो विज्ञानेन चिच्छक्त्या विजृम्भितः अत्यूर्जितः ॥ ३१ ॥

---

## सिद्धान्तप्रदीपः ।

अथतस्यकर्माण्युदाराणिगृहीतिप्रश्नस्योत्तरमाह सएवेतिचतुर्भिःसएववासुदेवः विभुः असौममह्यादिभासमानः आत्ममाययास्वश-
क्तिभूतया सदसद्रूपयास्थूलसूक्ष्मरूपया गुणमय्यासत्त्वादिगुणप्रचुरया अगुणस्तद्गुणास्पृष्टस्वरूपः इदं चिदचिद्रूपमग्रेससर्ज सूक्ष्म-
चिदचिच्छक्तिरेकएवविभुर्देशकालवस्तुपरिच्छेदशून्यः सजातीयविजातीयभेदशून्यः अचिच्छक्तिंसूक्ष्मरूपांमहदादिस्तम्बपर्यंतस्थूलाका-
रतयासृष्टिसमयेप्रसार्यचिच्छक्तिंजीवाख्यांदेवमनुष्यादि नानादेहरूपायांस्थूलावस्थापन्नायांप्रकृतौयथाकर्मसंस्था एवंविश्वंशक्तिद्वयात्म-
कंससर्ज शक्तिद्वयस्यशक्तित्वेनभिन्नत्वेपिशक्तिमद्भिन्नस्थितिप्रवृत्त्यसंभवाच्छक्तिमतोऽभिन्नत्वंज्ञेयमेवं सतिशक्तिमतोजगदुपादानकार-
णत्वान्निर्गुणत्वं वर्तते जगत्कर्तृत्वेन स्वाभाविकगुणवत्त्वं चोपपद्यते इति ॥ ३० ॥
एवंभगवतः विश्वरचनात्मकंकर्मदर्शयित्वा प्रवेशलक्षणं कर्मदर्शयति । तयेति । तयागुणमय्याविलसितेषुरचितेषु गुणकार्येषु मह-
दादिस्तंबपर्यंतेषु भगवान्विज्ञानेन ज्ञानस्वरूपेणस्वांशेन जीवेनस्वकृतपुण्यापुण्यकर्मफलभोगाय विजृम्भितः प्रवर्त्तितः यद्वा विज्ञानेन
जीवकर्मफलदानायस्वसंकल्पेन विजृम्भितः प्रवर्त्तितः अतः प्रविष्टः गुणवानिव वैषम्यनैर्घृण्यलक्षणलौकिकगुणयुक्तइव आभाति-
प्रतीयते नतुवैषम्यनैर्घृण्यवान् । तत्तत्कर्मसापेक्षत्वात् ॥ ३१ ॥

---

यथा ह्यवहितोवह्निर्दारुष्वेकः स्वयोनिषु ।
नानेव भाति विश्वात्मा भूतेषु च तथा पुमान् ॥ ३२ ॥
असौ गुणमयैर्भावैर्भूतसूक्ष्मेन्द्रियात्मभिः ।
स्वनिर्म्मितेषु निर्व्विष्टोभुङ्क्ते भूतेषु तद्गुणान् ॥ ३३ ॥

### भाषा टीका ।

उसी माया से उत्पन्न आकाश आदिक गुणों में प्रविष्ट होकर गुणवान् से प्रतीत होते हैं. वास्तव में स्वयं विज्ञान मय चिच्छक्ति से पूर्ण हैं ॥ ३० ॥

श्रीभगवान् तिससदसद्रूप माया करके प्रकाशमान इन गुणों में भीतर प्रवेश होकर गुणवाले के सदृश प्रकाश होते हैं वस्तुतः अनुभव रूप ज्ञान से विशेष प्रकाशित हैं ॥ ३१ ॥

---

### श्रीधरस्वामी ।

बहुरूपत्वलीलामाह यथेति । स्वयोनिषु स्वाभिव्यञ्जकेषु । अवहितो निहितः । विश्वात्मा पुमान् परमेश्वरः । भूतेषु प्राणिषु । अन्तर्यामिणोऽपि प्रतियोगिनानात्वेन नानात्वमिवोच्यते । क्षेत्रज्ञरूपेण वा ॥ ३२ ॥

भोगरूपां लीलामाह असाविति । असौ हरिः भूतसूक्ष्माणि च इन्द्रियाणि च आत्मा मनश्च तैः स्वयं निर्म्मितेषु भूतेषु चतुर्विधेषु इति भोगे स्वातन्त्र्यं द्योत्यते । तद्गुणान् तत्तदनुरूपान् विषयान् इच्छया भुङ्क्ते भोजयतीति णिजर्थो वा ज्ञेयः । पालयतीति वा । तदात्वात्मनेपदमार्षे भुजोऽनवने ॥ १।३।६६ ॥ इति स्मरणात् ॥ ३३ ॥

---

### दीपनी

प्रतियोगिनानात्वेन उपाधिनानात्वेनेति पूर्व्वाचार्याः ॥ ३२ ॥

भुजोऽनवने इति पाणिनीयव्याकरणस्य प्रथमाध्यायीयतृतीयपादस्य षट्षष्टितमं सूत्रम् ॥ ३३ ॥

---

### श्रीवीरराघवः

एतदेवदृष्टांतमुखेनोपपादयति। यथेति । अभिव्यक्तिस्थानमात्रं योनिशब्देनोक्तम् नतुतदु पादानंनहिप्रकृतिर्जीवस्योपादानं नवावन्हेर्दारुपादानं किन्तु निमित्तम् ।"अग्नेरापः अद्भ्यः पृथ्वीतिहि सृष्टिक्रमः यथादारुभ्योवन्हिरवहितः व्यतिरिक्तं एवावसन्स्वयोनिषु स्वाभिव्यक्तिस्थलेषु दारुषु नानेकधेवभाति ज्वलति अग्नित्वस्यैकरूपत्वेऽपितार्णपार्णशाखादिभेदवान् भातिएवंप्रकृतिपरिणामरूपदेहेष्वभिव्यक्तोजीवोज्ञानानंदरूपत्वेनैकरूपोऽपिदेवोऽहंमनुष्योऽहमिति देवादिभेदभिन्नोभातीत्यर्थः। पुमूशब्दोजीववाचीतच्छरीरपरमात्मपर्यंतः पुमान् विश्वात्मा जीवशरीरकः सर्वेश्वरएकएवदेवादिरूपेण नानाभातीत्यर्थः दारुषुभूतेष्वितिदृष्टांतदार्ष्टांतिकयोरधिष्ठेयबहुत्वोक्त्या यथाह्रस्वत्वस्थूलत्ववक्रत्वादिभेदश्चदारुगतएवनाग्निगतः तथादेवत्वाज्ञत्वदुःखित्वादिभेदोऽपिनविश्वात्मगतः किन्तु देवादिशरीरद्वारुभेदस्तद्गततच्छरीरकजीवगतइति सूचितम् । वन्हिर्विश्वात्मेत्येकत्वनिर्देशेनाग्निवद्विश्वात्मनोऽपि सर्वत्रावस्थितस्यस्वरूपतः स्वभावतोवानावस्थांतरापत्तिरिति सूचितम्। इयांस्तुविशेषः दारुष्वग्निः साक्षादभिव्यक्तोनानाभातिदार्ष्टांतिके जीवद्वारादेवादिरूपेणनानाभाति इतिजीवविशिष्टदेवादिशरीराणामेवाधिष्ठेयत्वात् ॥ ३२ ॥

यथाविश्वात्मनःस्वशरीरभूतप्रकृतिपुरुषद्वारादेवादिरूपेण नानाभानमेवंसुखःदुःखादिभोक्तृत्वंतन्निमित्तकर्तृत्वंचस्वशरीरभूतजीवद्वारैवस्वतस्कतदुभयरहितइत्याह ॥ असाविति असौविश्वात्मागुणमयैः सत्वादिगुणपरिणामरूपत्वेनतत्प्रचुरैर्भूतसूक्ष्मादिरूपैर्भावैः पदार्थैस्तत्रभूतानिपृथिव्यादीनिसूक्ष्माणि गंधादीनीद्रियाणिश्रोत्रादीनिज्ञानेंद्रियाणि वागादीनिकर्मेन्द्रियाणि पादादीनिचात्मांतःकरणंजीवोवाएभिःस्वेनैवकर्त्रानिर्मितेषुभूतेषुदेवादिषुनिर्विष्टः जीवद्वारानुप्रविष्टः तद्गुणान्पृथिव्यादिभूतगुणान्गंधादीन्विषयान्भुंक्ते जीवद्वाराविषयान्भुंक्तेनतुस्वतइत्यर्थः भोक्तृत्वसमव्याप्तंकर्तृत्वमप्यत्र विवक्षितंजीवद्वारापुण्यापुण्यरूपाणि कर्माणिचकरोतीत्यर्थः ॥ अत्रविश्वात्मेस्युच्यमानंभोक्तृत्वंकर्तृत्वंचप्रयोजककर्तृत्वंविवक्षितम् ॥ ३३ ॥

---

### श्रीविजयध्वजः ।

नचस्थानभेदादद्वयस्यहरेर्भेदाशंकाकार्येत्याह यथेतियथैकोवन्हिःस्वयोनिषुस्वस्यव्यक्तिस्थानेषु दारुषुव्यवहितः भूतानामदृश्य-तयास्थितः नानेवभातिमथनादिनेतिशेषः दारूणामानंत्यात्तथैकोविश्वात्माविश्वव्याप्तः पुमान्भूतेषुप्रविष्टोनानेवभाति नतुनाना "नेहनानास्तिकिंचनेतिश्रुतेः अग्नेःकश्चिद्विशेषसंभवोपिनास्यकाश्चिद्विशेषइतिइवशब्दार्थः ॥ ३२ ॥

नचदुर्भगशरीरेषुप्रविष्टस्यजीववत्दुःखभोगः संभाव्यतइत्याह असाविति असौपरमात्मासत्त्वादिगुणमयैः सत्त्वादिगुणविकारैःभूत सूक्ष्मेंद्रियात्मभिः पंचमहाभूतपंचतन्मात्रादशेंद्रियमनोभिर्भावैः तत्त्वैरुपादानरूपैःस्वनिर्मितेषुस्वेनतत्त्वेषुप्रविष्टेनाविरचितेषुसुतेषुनिर्विष्टः योगैश्वर्यादसंगतयाप्रविष्टस्तद्गुणानानंदादीनेवभुंक्ते नतुदोषनिमित्तदुःखादीन् तस्माद्दुर्भगशरीरस्थत्वेऽपिनदुःखादिभोगस्तस्यस्वातं त्र्यादित्यर्थः ॥ ३३ ॥

---

### क्रमसंदर्भः ।

यथेति । सर्व्वभूतस्थः पुरुषः ॥ ३२ ॥
असाविति तत्तल्लीलावान् ॥ ३३ ॥

---

### सुवोधिनी ।

एवमन्तर्यामिभावंनिरूप्यजीवभावंनिरूपयन्नानात्वलीलामाह यथेतिअवस्थितेरितिकाशकृत्स्नः॥१।४।२२॥ इतिवत् केनचिद्रूपेणावस्थितोभगवानेवजीवइति तद्रूपमुच्यतेदारुषुयथावन्हिस्तथाभूतभौतिकेषुजीवः सचैकः उपाधिव्यतिरेकेणस्वतोवैलक्षण्याभावात् यथामथनव्यतिरेकेणकाष्ठेष्वग्निर्नप्रतीयते तथायोगव्यतिरेकेणांतःकरणेजीवः यथाकरचरणाद्यवयवाः शरीरेभ्योनभिद्यंते तथामहाकाष्ठेसर्वत्रैकएव विद्यमानोमथनस्थानेपूद्गच्छति तथाप्रतीयतेचभेदः सचनप्रामाणिकः महाकाष्ठेएकस्यैववन्हेः सिद्धत्वात्तथाकाष्ठबहुत्वेप्यनुमंतव्यमएवंस र्वेषुदेहेषुसर्वेषुभूतेषुचतिरोहितः समवस्थितःसजीवइतिहिशब्दार्थः किंच यत्रहिआविर्भवति तत्र तिष्ठतीतिनिश्चितं योगेनज्ञानेनवाऽयंसर्वत्रआविर्भवति अतस्तानिभूतानियानिरूपाणि तेष्वेकएववन्हिर्नानाप्रतीयतइत्यर्थः किंच विश्वात्माचायंविश्वस्यैकमेवहिस्वरूपंएकवचनप्रयोगात्तस्यात्माकथमनेकोभवेत् उपाधिभेदात् भेदइवप्रतीयतेचकाराद्भौतिकेषु किंच पुमानयंब्रह्मांडविग्रहः स्वराट्पुरुषएकएवसर्वत्रब्रह्मांडे तस्यचावयवभूतानिमध्यस्थानिभूतानिभौतिकानिच तेषांभेदप्रतीतावपिपुरुषोनभिद्यते यथाकरचरणादिषुनानाभेदप्रतीतावपिअधिष्ठातु र्भेदः तथासर्वत्रब्रह्मांडेपुरुषस्येति ॥ ३२ ॥

एकएव सर्वत्रगुप्तोनानेव प्रतीयमानो जीवइत्युक्तंभवति । तद्रूपेणैवभोगलीलेत्याह । असाविति चतुर्विधाहिसदृशसृष्टिः अंतःकरण-मिन्द्रियाणि तन्मात्राणिभूतानिचेति । तानित्रिगुणात्मकानि । गुणमयत्वकथनात् स्वांशरूपतानिरूपिता । तैर्निर्मित्तेषु देवतीर्यङ्नरा-दिषु भूतेषुनितरांविष्टः अनध्यासेनस्थितोभुंक्ते । विषयानात्मसात्करोति भोगमुत्तरत्रस्पष्टीकरिष्यामः । एतावताभोगसृष्टिभेदउक्तो-भवति । साक्षात्सृष्टेः पूर्वंनिरूपणात् मायाकरणकत्वाच्चापि हेतुभूतादीनां करणत्वंकर्तृत्वंस्वस्मिन्निर्मितेषु स्वार्थंवानिर्मितेषु स्वेनवानि-र्मितेष्वितिगुणास्त्रयः । तत्रसात्त्विकमंतःकरणम् । सात्त्विकराजसानींद्रियाणि । राजसतामसानि तन्मात्राणितामसानिभूतानिचेति । धर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्ध्यर्थंचतुर्द्धाभेदः । देहेनधर्मः तन्मात्रैरर्थः इंद्रियैः कामः अंतःकरणेनमोक्षइति । तत्रजीवस्यैकत्रमुख्यतयास्थितोअन्येह्यंगभावम् प्राप्नुवंति । अतएवतद्गुणान् चतुर्विधपुरुषार्थरूपान्भुंक्तइत्युक्तम् ॥ ३३ ॥

---

### श्रीविश्वनाथचक्रवर्ती ।

अवहितः सदास्थितो यथा तथा विश्वात्मा अन्तर्यामी भूतेषु प्राणिषु । यदि तेष्वेवाग्निर्मथनेन प्रकटीकृतः स्यात् तदा तान्येव दारूणि दहति एवमेव श्रवणादिभिः साधनैः साक्षात् कृतः परमात्मा मायिकमुपाधिम् जीवस्य दूरीकरोतीति ध्वनिः ॥ ३२ ॥

असौ विश्वात्मा भूतसूक्ष्माणि विषयाश्च इन्द्रियाणि च आत्मा मनश्च तैर्गुणमयैर्भावैः स्वनिर्म्मितेषु देवतिर्यगादिषु भूतेषु निर्विष्टः प्रविष्टः सन् तद्गुणान् तदनुरूपान् विषयान् वैषयिकसुखानि भुङ्क्ते इति जीवानां भोक्तृत्वमन्तर्यामिणा विना न सिद्ध्यतीति वा जीवस्य तदीयतटस्थशक्तिद्वारा जीवद्वारा स्वयमन्तर्यामी भुङ्क्ते इति प्रयुज्यते । भोजयति जीवानिति णिजर्थो वा ज्ञेयः ॥ ३३ ॥

---

### सिद्धान्तप्रदीपः ।

अथप्रेरणारूपंकर्मभगवतोदर्शयति यथेति आर्द्रशुष्कोत्तमा धमादिषुस्वयोनिषुस्वाभिव्यक्तिस्थानेषुदारुषु वन्हिरेकएव अवहितः समास्थितः नानेवभाति तत्तत्काष्ठस्वभावानुसारेणसर्वप्रतापकोपि अल्पानल्पश्लाघ्याश्लाघ्यतयानानेवभाति नतुनानातथाविश्वात्मासर्वात्मा पुमान् परमपुरुषः भूतेषुस्थावरजंगमेषु इन्यदंत्रादिषु एकएवप्रेरकतयासमास्थितः तत्तत्कर्मानुगुण्यात् अन्योन्यविषमप्रेरकतयानानेवप्रतीयतेनतुनानेत्यर्थः ॥ ३२ ॥

भावयत्येष सत्त्वेन लोकान् वै लोकभावनः । (१)
लीलावतारानुरतोदेवतिर्यङ्नरादिषु ॥ ३४ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्यां प्रथमस्कन्धे नैमिषीयोपाख्याने श्रीभगवदनुभाववर्णनं-नाम द्वितीयोऽध्यायः ॥ २ ॥

—:-*-:—

सिद्धान्तप्रदीपः ।

अथस्वभक्तवशवर्तिनोवासुदेवस्यस्वभक्तार्पितपदार्थभोगरूपंकर्मदर्शयति असाविति असौविश्वात्मा भूतसूक्ष्मेंद्रियात्मभिः भूतसूक्ष्माणिचसमनस्कानिवागादीनियानींद्रियाणिचजीवरूपा आत्मानश्चतैःगुणमयैः सत्त्वादिगुणप्रचुरैः जीवानामपिगुणमयोभयदेह योगात्तन्मयत्त्वमुपचर्यते एवंविधैश्चिदचिद्रूपैर्भावैः स्वेनभगवतानिर्मितेषु भू ेषुब्रह्मादिस्तंवपर्यंतेषुनिर्विष्टः तद्गुणान्भुंक्ते"अहंहिसर्वयज्ञानांभोक्ताचप्रभुरेवच पत्रंपुष्पंफलंतोयंयोमेभक्त्याप्रयच्छति तदहंभक्त्युपहृतमश्नामिप्रयतात्मन"इति श्रीमुखोक्तेः ॥ ३३ ॥

भाषा टीका ।

बहुरूप लीला कहते हैं जैसे अपने प्रकाश निमित्त कारण अनेक काष्ठोंमे छिपाहुआ अग्नि एकही अनेकसा प्रतीत होता है तैसेही अनेक जीवोंमे व्यापक परमपुरुष भी अनेक से प्रतीत होते हैं ॥ ३२ ॥

भोगरूप लीला कहते हैं यह परमात्मा त्रिगुण विकार जो पंचभूतों की सूक्ष्म अवस्था औ ज्ञानेंद्रिय कर्मेंद्रिय मन इनकरके स्वयं बनाये शरीरों मे प्रवेश होकर तिन विषयों को भोग करते हैं ॥ ३३ ॥

श्रीधरस्वामी ।

इदानीं सूत जानासीति प्रश्नस्योत्तरमाह । भावयति पालयति । एतत्तु सर्व्वावतारसाधारण प्रयोजनं विशेषतः श्रीकृष्णावतारस्य कुन्तीस्तुतौ वक्ष्यते । लोकभावनः लोककर्त्ता । देवादिषु ये लीलावतारास्तेषु अनुरतः अनुरक्तः ॥ ३४ ॥

इति श्रीमद्भागवतभावार्थदीपिकायां प्रथमस्कन्धे द्वितीयोऽध्यायः ॥ २ ॥

दीपनी ।

भावयतीति श्लोकेन सूत जानासीति द्वादशादिश्लोकोक्तप्रश्नद्वयस्योत्तरमुक्तमिति ज्ञेयम् । श्रीकृष्णावतारप्रयोजनकथनेन तन्मूलकतचरितप्रश्नस्याप्युत्तरकथनसिद्धेरिति ॥ ३४ ॥

श्रीवीरराघवः ।

॥ यद्वा ॥ सत्त्वंरजस्तमइतिप्रकृतेर्गुणाः स्युरित्यादिनासर्वेकारणात्परम पुरुषादेवोपास्यमानाच्छ्रेयोसिकारणत्वेनोपास्यत्वमोक्षप्रदत्वादीनां"कारणंतुध्येयअमृतस्यैषसेतुरित्यादिप्रमाणैरेकनिष्ठत्वावगमात् ननुब्रह्मरुद्रादिभ्यः तेषांकर्मवश्यत्वसुखदुःखादिभोक्तृत्वादिनोपासकतुल्यत्वादितिसूचितम् ॥ अथतदुपपादनायसर्वजीवानांपरमपुरुषसृष्टकर्मानुगुणाकरणकलेवरादिसंबंधतत्प्रयुक्तकर्तृत्वभोक्तृत्वमेषांकर्मवश्यत्वप्रयुक्तत्वेनौपाधिकत्वंस्वभावतस्तु ज्ञानैकाकारत्वंचेत्याह ॥ सएवेत्यादिचतुर्भिः यथोक्तएवार्थःतयेतितयाललिआत्ममाययाविलसितेषुरचितेषुएषुगुणेषुगुणकार्येषु ब्रह्मादिशरीरेष्वंतःप्रविष्टोजीवइतिशेषः पुमानित्यस्योत्तरश्लोकादपकर्षेणघाविज्ञानेन स्वधर्मभूतज्ञानेनविजृंभितः देहमात्मत्वेनाभिमन्यमानइत्यर्थः गुणावानिवदेवत्वादिधर्मवानिवाभाति देवोहं मनुष्योहंकृशोहं स्थूलोहमित्यभिमन्यतइत्यर्थः इवशब्देनवस्तुतोदेहविलक्षणस्तद्गतधर्मैरस्पृष्टएवेतिसूच्यते ॥ ३० ॥

१ भावयत्येषइति लीलावतारानुगत इति च विजयध्वजः ॥

## श्रीवीरराघवः

तदेवदृष्टांतेनोपपादयति यथेति यथैकएववन्हिःस्वयोनिषुस्वाभिव्यक्तिस्थानेषुतृणपर्णादिष्वभिव्यक्तोनानेवभाति तार्णत्वपार्ण- त्वादिभेदेनभाति इवशब्देनवस्तुतोवन्हित्वेनरूपेणैक रूपएवएवंविश्वात्माविश्वस्याचेतनजातस्यात्मा पुमान्जीवोपिभूतेषुदेवादि शरीरेषुनानेवभातिदेवोहंमनुष्योहमित्यादिरूपेण नानाभातिवस्तुतोज्ञानैकाकारेणैकरूपएवेत्यर्थः ॥ पुमानितिजात्यभिप्रायकएकत्वनि र्देशः "एकोव्रीहिः सुसंपन्नःसुपुष्टंकुरुतेप्रजाइत्यत्रव्रीहिशब्दवत्एवंचजीवैकत्वभ्रमोनकार्यः ॥ दृष्टांतेपिवन्हित्वेनैकेपिनव्यक्तिभेदोभिप्रेतः नचैवमेकैकस्यजीवस्यदेवादिशरीरस्थस्य युगपज्ञानाप्रतिभानाभावइतिवाच्यम् ऐकैकएवजीवःक्रमेणदेवमनुष्यादिशरीराण्युपाददानः देवोहंमनुष्योहमित्याभातीत्येवमभिप्रायात् नहिदृष्टांतेपितार्णस्यवन्हेःपार्णत्वेनभानमस्ति ॥ ख ॥

असौजीवःगुणमयैः सत्त्वादिगुणत्रयात्मकभगवन्मायापरिणामरूपैः पृथिव्यादिभूतगंधादितन्मात्राज्ञानेंद्रियकर्मेंद्रियांतः करणै र्भावैःपदार्थैः स्वनिर्मितेषुस्वकर्मानुसारेण निर्मितेषुभूतेषुदेवादिशरीरेषु निविष्टःगुणान्शब्दादिविषयान् भुंकेतन्निमित्तानिकर्माणिच पुण्यापुण्यरूपाणिकरोतीतिचाविवक्षितंवेदितव्यम् यद्वातयाविलसितेष्वित्यादिभिः केवलंपरमात्मैवप्रतिपाद्यतेतदाविज्ञानेनेत्यस्यसंकल्प- रूपज्ञानेनेत्यर्थःपुमान्परमपुरुषः गुणान्भुंकेइत्यस्यलीलारसरूपान्गुणान्भुंक्तेइत्यर्थः ॥ ग ॥

तदेवंपुंसामेकांततः श्रेयस्तन्नःसंसितुमर्हसीत्यस्योत्तरमुक्तम् ॥ सूतजानासिभद्रंतेइत्यादिना श्रीकृष्णावरंतच्चरित्रंतदितरावतारतच्चरि- त्रादिकंचपृष्टंतत्रश्रीकृष्णावतारंतच्चरित्रादिकंविशिष्यदशमैकादशस्कंधाभ्यांसर्वावतारांस्तच्चरीत्राणिचाविशिष्यतत्रतत्रतृतीयादिषुविव- क्षुस्तावत्समासतः सर्वावतारसाधरणंप्रयोजनमाह भावयतीति एषसर्वेश्वरोलोककस्त्रष्टृत्वेनलोकान्भावायत्कर्मवश्यांश्चेतनानुज्जी वयितुंसत्त्वेनोपलक्षितः शुद्धसत्त्वमूर्त्तिःतिर्यङ्नरसुरादिषुलीलावतारेष्वनुरतोभवातिभावयतीतिपाठेलोक भावनोलोकस्त्रष्टाएवसर्वेश्वरः तिर्यगादिषुमत्स्यादिषुमध्येयेलीलाया अवतारास्तेष्वनुरतः लीलावतारैर्भक्तेष्वनुरतोवासत्त्वेनलोकान् भावयतित्रायतिसाधुपरित्राणायम- त्स्याद्यवतारंधत्तइत्यर्थः ॥ ३४ ॥

इतिप्रथमेटीकायां द्वितीयः ॥ २ ॥

---

## श्रीविजयध्वजः ।

उत्तराध्यायेअथाख्याहीतिप्रश्नंपरिहरिष्यन्तदर्थंसंक्षेपतोदर्शयतिभावयन्निति लोकभावनःजगदुत्पादकःसत्त्वेनगुणेनइतरगुणानभिभू यलोकान्भावयन्पालनेनवर्धयन्नेषपरपुरुषस्तिर्यङ्नरसुरादिषुतिर्यग्वराहादिजातिषुनरेषुमनुष्येषुदेवेषुआदिशब्दात्स्तंभादिषुलीलावतारानु गतोभवतीतिविशेषणान्वयःलीलयैवावतारान्अनुगच्छति । नतुपूर्वकर्मणा योयोवतारोजगदवनादावनुकूलःस्यात्तंतमवतारंगृह्णातीत्य स्मिन्नर्थेअनुशब्दः ॥ ३५ ॥

इतिश्रीभागवतेप्रथमस्कंधेटीकायांद्वितीयोऽध्यायः ॥ २ ॥

---

## क्रमसन्दर्भः ।

भावयतीति विष्णुरिति ज्ञेयम् । एतेन पूर्वोक्तेषु ब्रह्मत्वादिषु त्रिषु परमात्मत्वं दर्शितम् । अन्ये द्वे दर्शयिष्येते ॥ ३४ ॥

इतिश्री मद्भागवतप्रथमस्कन्धस्य श्रीजीवगोस्वामिकृत क्रमसन्दर्भे द्वितीयोऽध्यायः ॥ २ ॥

---

## सुबोधिनी

एवं भोगलक्षणलीलामुपपाद्यतत्सिद्ध्येपालनलक्षणांलीलामाह । भावयतीति । भावयति पालयति एष एव जीवरूपेण अभिन्नः पाल- नेसत्त्वगुणएकएवकरणं लोकान्भुवनजनरूपान् अथवा । सत्त्वेनभावयति । सत्त्वयुक्तान्करोतीत्यर्थः । उभयत्रहेतुमाह । लीलावतारानु- रतइति । अवतारैर्दैत्यानां बधंविधायसर्वलोकान् पालयति । अवतारैश्चरित्राणि विधायसर्वान् लोकान् सत्त्वयुक्तान् करोतिमुक्तये । ननु सत्त्वमात्रेणकथंमुक्तिः अवतारैर्वाकथं पालनं । तत्राह । लोकभावनइति । लोकैर्भावनं यस्येतिमुक्तिप्रकारः । अवताराणामविद्यमान- दशायामपि भावनैवसर्वानिष्टनिवृत्तेः पालनमित्यर्थः । अथवालोकान् भावयतीति । सर्वदालोकानांचिंतया । तेषामेवदुःखनिवारणाय अवतारान्कृत्वापालयतीत्यर्थः । ननुकथंतमः प्रकृतिषुलीलेत्यत्र आह । अनुरतइति । यथाजीवास्तत्रतत्ररताः रतिव्यतिरेकेण तादृशश- रीराभावात् । तदनुस्वयमपिरतइत्यर्थः । देवादयः सत्त्वादिभेदाः आदिशब्देनमिश्रभेदाः अनेनायुक्तेष्वपि सर्वेषुभगवदवतारोज्ञातव्यः । वक्ष्यतिच । अवताराह्यसंख्येयाइति देवेषुवामनः तिर्यक्षुमत्स्यादयः नरेषुरामादयः मिश्रेषु नृसिंहादयइति ॥ ३४ ॥

इतिश्री भागवते सुबोधिन्यां श्रीलक्ष्मणभट्टात्मज श्रीवल्लभदीक्षित विरचितायां
प्रथमस्कन्धे द्वितीयाध्याय विवरणम् ॥ २ ॥

---

श्रीविश्वनाथ चक्रवर्ती।

एवमन्तर्यामिणः प्रतियोगिनानात्वेन नानात्वमौपाधिकमुक्तम्। भगवतस्तु विनैवोपाधिम् नित्यैव लीलया स्वरूपेणैव नानात्वमाह। भावयति पालयतीति। यद्वा लोकान् भागवत- स्वप्रेमयुक्तान् करोतीति सर्व्वावतारसाधारणप्रयोजनम्। लोकभावनः यतो लोककर्त्ता ॥ ३४ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।
द्वितीयः प्रथमेऽध्यायः सङ्गतः सङ्गतः सताम् ॥ २ ॥

---

सिद्धांतप्रदीपः।

अथसूतजानासिभद्रंते भगवान्सात्वतांपतिः देवक्यांवसुदेवस्यजातोयस्यचिकीर्षयेति प्रश्नस्योत्तरमाहभावायतीति लोकभावनः लोकान्भावयति। उत्पादयतीति सतथासर्वलोककारणभूतः "यदायदाहिधर्मस्यग्लानिर्भवतिभारत अभ्युत्थानमधर्मस्यतदात्मानंसृजाम्यहं परित्राणायसाधूनांविनाशायचदुष्कृतामिति श्रीमुखवचनात् देवतीर्यङ्नरादिष्वाविर्भावस्थानेषुसत्त्वेन नियम्यगुणेनोपलक्षितः लीलावतारानुरतः लीलावतारैर्वामनवराहादिरूपैरनुरतस्तत्तत्कालेधर्मत्राणार्थमुद्यतोभवतियः। एवंभवद्भिर्देवक्यांवसुदेवस्यजातोयस्यचिकीर्षयेतियस्यचिकीर्षितं पृष्टंसभगवान् लोकान्भावयतिस्मदेवक्यांजातः सन्निति शेषः॥ तत्रकांश्चित्पुत्रत्वादिनासुखयतिस्मकांश्चिज्ज्ञानैश्वर्यदानेनपालयतिस्म कांश्चिदसुरादिभ्यः कांश्चित्संसारभयात् नानाशास्त्रार्थोपदेशेन पालयतिस्मविस्तरस्तुदेवक्यामाविर्भावप्रयोजनंकुंतीस्तुतौद्रष्टव्यम् ॥ ३४ ॥

इतिश्रीमद्भागवतसिद्धांतसिद्धांतप्रदीपेप्रथमस्कंधीयेद्वितीयाध्यायार्थप्रकाशः ॥ २ ॥

---

भाषा टीका।

सब लोकों के कर्त्ता यह भगवान् देवता मनुष्य तिर्यग्योनियों मे लीला के अवतारों मे अनुरक्त होकर सत्त्व गुण से सब जीवों को पालन करते हैं ॥ ३४ ॥

इति प्रथम स्कंध का दुसरा अध्याय ॥ २ ॥

—:-*-:—

## तृतीयोऽध्यायः ।

---

सूत उवाच । जगृहे पौरुषं रूपं भगवान् महदादिभिः ।
सम्भूतं षोडशकलमादौ लोकसिसृक्षया ॥ १ ॥
यस्याम्भसि शयानस्य योगनिद्रां वितन्वतः ।
नाभिह्रदाम्बुजादासीद्ब्रह्मा विश्वसृजाम्पतिः ॥ २ ॥

### श्रीधरस्वामी ।

अवतारकथाप्रश्ने तृतीये तूत्तराभिधा । पुरुषाद्यवतारोक्त्या तच्चचारित्र्यवर्णनैः ॥ ० ॥

यदुक्तं अथाख्याहि हरेर्धीमन्नवतारकथाः शुभा इति तदुत्तरत्वेनावतारानुक्रमिष्यन् प्रथमं पुरुषावतारमाह जगृहे इति पञ्चभिः । महदादिभिर्महदहङ्कारपञ्चतन्मात्रैः सम्भूतं सुनिष्पन्नम् एकादशेन्द्रियाणि पञ्चमहाभूतानि इति षोडशकला अंशा यस्मिन् तत् । यद्यपि भगवद्विग्रहो नैवम्भूतः तथापि विराड्जीवान्तर्यामिणो भगवतो विराड्रूपेण उपासनार्थमेवमुक्तमिति द्रष्टव्यम् ॥ १ ॥

कोऽसौ भगवानित्यपेक्षायां तं विशिनष्टि यस्येति । यस्याम्भसि एकार्णवे शयानस्य विश्रान्तस्य तत्र योगः समाधिस्तद्रूपां निद्रां विस्तारयतः नाभिरेव ह्रदः तस्मिन् यदम्बुजं तस्मात् सकाशात् ब्रह्मा आसीत् अभूत् । पाद्मे कल्पे स पौरुषं रूपं जगृहे ॥ २ ॥

---

### दीपनी ।

अथाख्याहीति पूर्वाध्यायस्य अष्टाविंशश्लोकः ॥ १—८ ॥

---

### श्रीवीरराघवः ।

तदेवंप्रथमेध्यायेप्रश्नःकृतः द्वितीयेतुसर्वप्रवर्त्तकभगवद्भक्तेरेवमोक्ष प्रदत्वाद्भगवदीयप्रबंधएवश्रोतव्य इतिस्थापितमवतारप्रयोजनं चोपक्षिप्तम् ॥ अथभगवदवतारविशेषंतच्चरितानि विस्तरेणोपरिविवक्षतासूतेनभगवतोनेकेवताराः संतिइतिप्रतिपाद्यतेतृतीयाध्यायेजगृहे इत्यादिनाअवताराश्चद्विविधाः अनुप्रवेशावताराःस्वेनरूपेणावताराश्चेति अकर्महेतुत्वाविशेषादुभयत्रावतारशब्दप्रयोगः कृतःद्विविधान पितान्वक्तुंतदनुयोगित्वेन प्रथमंचेतनमिश्रंप्रकृतिप्राकृतजातमेकंशुद्धसत्त्वमयमपरं चेतिरूपद्वयंभगवतोस्तीतिविवक्षन्पूर्वं प्रकृतिप्राकृतात्मरूपपरिग्रहमाह ॥ जगृहइतिपुरुषाः क्षेत्रज्ञास्तत्संबंधिपौरुषंतन्मिश्रमित्यर्थः एकादशेंद्रियपंचभूतात्मकः षोडशकलायस्मिंस्तत्तथामहदादिभिः संभूतंरूपमण्डकारणं समष्टितत्त्वजातमिहरूपशब्देन विवक्षितंसमुदायस्यमहदादिभिः संभूतमित्युक्तंलोकसिसृक्षयाजगृहे ब्रह्मांडतदंवर्तिकार्यजातासिसृक्षयारूपं जगृहेइत्यर्थः ॥ १ ॥

अथस्वासाधारणंरूपमाहयस्येतिप्रथमस्येतिशब्दस्ययोर्थःसतद्वाइतितच्छब्देनपरामृश्यतेद्वितीयंतुयस्येतिपदंचतुर्मुखपरंचतुर्मुखशरीराद्दिदेवमनुष्यादिसृष्टिः पुराणांतरेषुद्दष्टायस्यावयवसंस्थानैर्यच्छरीरावयवपरिणामैर्देवमनुष्यादि लोकविस्तरः सब्रह्माविश्वसृजांमरीच्यादीनांपतिः यस्यांभसिशयानस्ययोगनिद्रांवितन्वतः अनिरुद्धस्यनाभिह्रदांबुजादासीत्तद्भगवतोरूपमूर्जितं विशुद्धंसत्त्वंशुद्धसत्त्वमयमिति श्लोकद्वयस्यैकवाक्यम् तस्यरूपस्यज्ञानद्दश्यमपरिच्छेद्यत्वंसर्वावतारनिदानत्वंचाहयस्याभसीतिसार्द्धेन यद्वाजगृहइत्यादिश्लोकानामेवमर्थः अजडेष्वनुप्रवेशरूपेणचद्विविधावतारेतत्र प्रथमस्यदेवादिष्वनुप्रवेशरूपत्वात्तत्रवक्तव्यस्वभावात्स्वेनरूपेणावतारोपयोगिदिव्य मंगलविग्रहयोगउच्यतेयस्यानिरुद्धस्यावयवसंस्थानैः शरीरभूतंप्रकृत्येकदेशपरिणामैर्लोकविस्तरः कल्पितस्तस्यभगवतोरूपंशुद्धसत्त्वमयमूर्जितमुत्कृष्टमित्यर्थः ॥ ३ ॥

---

### श्रीविजयध्वजः ।

भावयन्नेषसत्त्वेनेतिद्वितीयाध्यायांतेसूचितानवतारान्कथयितुंप्रथमतःपरमपुरुषाख्यभगवदभिव्यक्तिप्रकारमाह जगृहइति ॥ भगवानादौलोकसिसृक्षयामहदादिभिःसंभूतंषोडशकलंपौरुषंरूपंजगृहइत्येकान्वयः प्रलयकालीनस्वगूहकतमः पानेनपरमपुरुषाख्यंनिजंरूपमाविश्चक्रे । नतुविराड्रूपंमहदादिभिःप्रलयकालेस्वोदरनिविष्टैर्महदहंकारादिसप्तप्रकृतिविकृतिभिः शरीरस्थानीयादिभिःसंभूतंसहितं कला

### श्रीविजयध्वजः

श्चपंचभूतानिज्ञानकर्मेंद्रियाणिच पंचपंचमनश्चेतिषोडशोकामहर्षिभिरितिषोडशकलाअंतर्गतायास्मिन्निति तत् षोडशकलम्। "यस्मिन्नेताः षोडशकलाःप्रभवंतीतिश्रुतेःप्राणादिषोडशकलासहितंवा ॥ सिसृक्षयासृष्टीच्छया। यःप्राक्जगत्संहृत्यसूक्ष्मरूपतयास्वोदरेनिवेश्य प्रलयोदकेश्रीपर्यंकेश्रीभुजांतर्गतः प्रकृतिमयतमसानिगूढःस्थितःसएवपरमपुरुषः पुनरुत्पत्तिकाले स्वगूहकंतमःपीत्वाऽऽत्मानंप्रकाशितवानित्येतदेवात्रपुरुषरूपग्रहणमभिप्रेतं रामकृष्णादिवल्लोकव्यक्त्यभिप्रायोपीत्युक्तंभवति ॥ १ ॥

एवंस्वगूहकतमःपानेनप्रकाशितः परमपुरुषःमहदादितत्त्वान्युत्पाद्यतैर्ब्रह्मांडंसृष्ट्वातदंडांतःप्रविश्यांतरुदकेशेषपर्यंकशायीनाभेर्लोकात्मकंपद्मंनिर्माय पद्मनाभनामाभूत्वातस्मात्पद्माच्चतुर्मुखमस्राक्षीदित्याह यस्येति अंभसिशयानस्ययोगनिद्रांवितन्वतः यस्यभगवतःनाभिहृदांबुजाद्विश्वसृजांदक्षादीनांपतिर्ब्रह्माआसीत् ॥ २ ॥

### क्रमसंदर्भः।

ननु पूर्व्वं ब्रह्मादितया त्रिधैव तत्त्वमेकमुक्तम्। तत्र ब्रह्मणः किम् लक्षणं भगवत्परमात्मनोर्वा तत्र तत्र विशेषः कश्चिद् वा किमस्तीति श्रीशौनकादिप्रश्नमाशङ्क्य ब्रह्मेति परमात्मेत्यत्र यो भगवान् निर्दिष्टः स एवेदमित्यादौ च यस्यैवाविर्भावा महत्स्रष्ट्रादयो विष्णुपर्यन्ता निर्दिष्टाः स भगवान् स्वयं श्रीकृष्ण एवेति पूर्व्वदर्शितशौनकाद्यभीष्टनिजाभिमतस्थापनाय परमात्मनो विशेषानुवादपूर्व्वकम् दर्शयितुं तत्प्रसङ्गेनान्यानवतारान् कथयितुं तत्रैव ब्रह्म च निर्देष्टुमारभते जगृह इति। यः श्रीभगवान् पूर्णषडैश्वर्यत्वेन पूर्व्वं निर्दिष्टः स एव पौरुषं रूपं पुरुषत्वेनाम्नायते यद्रूपं तदेवादौ सर्गारम्भे जगृहे प्राकृतप्रलये स्वस्मिन् लीनं सत् प्रकटतया स्वीकृतवात्। किमर्थम् तत्राह लोकसिसृक्षया। तस्मिन्नेव लीनानां लोकानाम् समष्टिव्यष्ट्युपाधिजीवानाम् सिसृक्षया प्रादुर्भावनार्थमित्यर्थः। कीदृशं सत् तद्रूपं लीनमासीत्तत्राह महदादिभिः सम्भूतं मिलितम्। अन्तर्भूतमहदादितत्त्वमित्यर्थः। "सम्भूयाम्भोधिमभ्येति महानद्या नगापगेत्यादौ हि सम्भवतिर्म्मिलनार्थः। तत्र हि महदादीनि लीनान्यासन्निति। तदेवं "विष्णोस्तु त्रीणि रूपाणि पुरुषाख्यान्यथो विदुः। एकन्तु महतः स्रष्टृ द्वितीयं त्वण्डसंस्थितम्। तृतीयं सर्व्वभूतस्थं तानि ज्ञात्वा विमुच्यते" इति। नारदीयतन्त्रादौ महत्स्रष्टृत्वेन प्रथमं पुरुषाख्यम् रूपं यत् श्रूयते ( तस्मिन्नाविरभूल्लिङ्गे महाविष्णुर्जगत्पतिरित्यादि। नारायणः स भगवानापस्तस्मात् सनातनात्। आविरासन् कारणार्णोनिधिः सङ्कर्षणात्मकः। योगनिद्राम् गतस्तस्मिन् सहस्रांशुः स्वयम् महानित्यादि ) यश्च ब्रह्मसंहितादौ कारणार्णवशायिसङ्कर्षणत्वेन श्रूयते। तदेव जगृह इति प्रतिपादितम्। पुनः कीदृशम् तद्रूपं तत्राह षोडशकलं तत्सृष्ट्युपयोगिपूर्णशक्ति इत्यर्थः। तदेवं यस्तद्रूपं जगृहे स भगवान्। यत्तु तेन गृहीतं तत्तु स्वसृज्यानामाश्रयत्वात् परमात्मेति पर्यवसितम् ॥ १ ॥

तस्य पुरुषरूपस्य विसर्गनिदानत्वमपि प्रतिपादयितुमाह सार्धेन। यस्याम्भसि शयानस्येति। यस्य पुरुषरूपस्य द्वितीयेन व्यूहेन ब्रह्माण्डं प्रविश्य अम्भसि गर्भोदके शयानस्येत्यादि योज्यम्। अत्र टीकायाम् पाद्म इत्यत्र ब्राह्म इति वाच्यम् ( पुरुषावयवैर्लोकरचनोक्तेः ) ॥ २ ॥

---

### सुबोधिनी।

निरूपिताःपंचलीलाः फलसाधननिर्णये तृतीयेत्ववशिष्टानामवतारार्थधर्मिणाम् ( १ ) कृष्णावतारकार्यार्थंनसूतोज्ञातवान्स्फुटम् अतः साधारणंप्रोक्तंनिर्णयश्चतथाधिकः ( २ ) षट्प्रश्नपूरणंतेनवस्तुतः पंचपूरणम् अथाख्याहिहरेर्धीमन्निति पृथक्कृतयावतारप्रश्नात् अध्यायांतरेणावतारानाहजगृहेइतिषड्विंशत्या। अवतरणमवतारः व्यापिवैकुंठात्भगतः प्रपंचसमागमनंतत्रयद्यप्यक्षरकालकर्मस्वभावावतरणमस्ति तथापितेषुद्वैतरूपतावर्त्तत इतिनावतारत्वंलीलाविदधतः स्वैरमितिप्रश्नेविशेषकथनाद्वा नहि तेषुस्वेच्छास्तिभूतलीलाद्विविधासाक्षात्परंपराभेदेनभौतिकलीलापिद्विविधाब्रह्मांडं निर्मायानिर्मायचनिर्माणपक्षेपि यथादशरथपुत्रेषुकश्चिदवतारः कश्चिन्नतथाविश्वसृजांगर्भोविराट् कदाचित्ब्रह्मशरीरंकदाचिज्जीवशरीरं तत्रब्रह्मशरीरपक्षेतत्रत्यानांमुक्तिः सुलभाअतःप्रथमंपुरुषावतारत्वमाह पंचभिः अत्रतादृशाधिकारिजीवस्याभावात् स्वयमेवपुरुषोजातः विष्णोस्तुत्रीणिरूपाणिपुरुषाख्यानीत्यपिएतादृश विषयंपुरुषशब्दस्त्रेधाव्युत्पद्यतेपुरिवसतीति पुरमुषतीतिपुराआस्तइतिच पुरासइति आकारेऽव्यत्ययोबहुलमित्युकारः अस्मिन्पक्षेनशरीरसंबंधः प्रथमपक्षेनसंप्रसारणषत्वेउषदाहइति प्रथमेजीवोऽपिभवतिद्वितीयतृतीययोस्तु भगवानेवभवति तत्रद्वितीयमाह तप्रायः पिंडेग्निरिवअडजत्वादंतरेव सर्वनिर्माणंसर्वस्यापिमुक्तिदानार्थमितिअस्यब्रह्मांडस्यपुरुषाकृति रूपत्वंनपुरुषत्वंममायतनमुत्तमामितिवचनात् शुद्धसत्त्वात्मत्वंशरीरमिव पुरुषरूपंतत्त्वैर्निर्मितंस्वयंगृहीतवान् अधिकारिव्यावृत्त्यर्थंभगवानिति अण्डुवीजब्रह्मांडवैलक्षण्यायाहमहदादिभिरिति महदहंकारपंचतन्मात्राभिः सप्तभिः एकादशेंद्रियाणिपंचमहाभूतानिचषोडशकलाः एवंप्राकृतिकोगणस्त्रयोविंशः अस्यांसृष्टौप्रकृतिपुरुषौस्वयमेवअतोनार्किंचिदवशिष्टमियंहि आद्यासृष्टिः द्वितीयादिसृष्टावधिकारिपुरुषार्थंब्रह्मांडदेहः परिगृहीतः ॥ १ ॥

ननुकानुपपत्तिः कीदृशस्यकर्तृत्वमित्यतआहयस्यांभसीति ॥ नेदंदैनंदिनप्रलयशयनं किंतुवैष्णवतंत्रोक्तंचतुर्मूर्तिसृष्टिहेतु भूतनारायणशयनंतदुक्तम् आसीदुदारगुणवारिधिरित्यादौ सहिस्वोदरस्थान्जीवान्निर्मिमीतेतत्रोदरात्सर्वथावाहिर्निगमनेसायुज्यसृष्टिवदयुक्तंस्यात् अतोब्रह्मांडरूपंद्वितीयंकोशमुत्पाद्यतत्रसर्वान्सृजतिनन्वस्यशयनपरित्यागेनसृष्टिकरणे महान्क्लेशइत्याशंक्यशयानादेवसर्वंजातमित्याह अंभसिशयानस्येति भगवान्शयानएवस्थितः अंभसीतिशीतलकोमलत्वेशय्यायाः सूचिते ननुशयनंतामसरूपविस्मरणंमायायाभगवतोवासमीपगमनंतत्कथंभगवति संभवतीत्याशंक्याह योगनिद्रामितिनहिभगवान्शेतेवस्तुतः अस्तिचयोगभूतानिद्राकाचिच्छक्तिःसाहिजीवानांक्लेशनाशिनीस्वसमीपंचानयतिगुह्यंचप्रकटीकरोतितामल्पभूतांस्वरूपेप्रसार्यमहतींकार्यक्षमांच सृष्ट्युपपोगायकरोतीत्यर्थः

## सुबोधिनी ।

तदर्थंप्रयतमानैरेवसृष्टिः क्रियतइतिभावः तथाभगवत्यपिजातमित्याह नाभिहृदांबुजादितिउदरस्थजगज्ज्ञापनायनाभिपदंपंकजाशोषाय- हृदः अंबुजंचत्रैलोक्यात्मकंतेनभगवतो माहात्म्यमपिसूचितं प्रथमकार्यत्वात्ब्रह्मशब्दवाच्यएवकर्तृत्वेनस्वातंत्र्यख्यानायपरंपुल्लिंगनिर्देशः ततोमरीच्यादयोपिजाताःतेषामयमाज्ञापकश्चजातइत्याह विश्वसृजांपतिरितिपतिशब्देन अनुल्लंघ्यातस्याज्ञेतिसूचितम् अनेनहिशयना- देवसर्वलोकाउत्पन्नाइत्युक्तम् ॥ २ ॥

---

## श्रीविश्वनाथचक्रवर्त्ती ।

अवतारकथा ब्रूहीत्यस्योत्तरतयोच्यते । भगवान् जन्मकर्म्मभ्यां तृतीयेऽनेकमूर्त्तिमान् ॥ ० ॥ पूर्व्वाध्यायान्ते लीलावतारानुरत इत्यु- क्तम् । तत्र कास्तस्य लीलाः के वा अवतारा इत्यपेक्षायां प्रथमं पुरुषावतारमाह जगृहे इति पञ्चभिः । पौरुषं पुरुषाकारं पुरुषसंज्ञं वा । ननु जगृहे इति चेदुच्यते तर्हि तद्रूपं पूर्व्वम् नासीदित्यवगत्या तद्रूपस्यानित्यत्वं प्रसक्तमित्यत आह सम्यग्भूतं परमसत्यम् पूर्व्वपूर्व्व- मपि सदैव स्वरूपेण स्थितमेव । तत् जगृहे लोकसृष्ट्यर्थमुपादत्ते ग्रहणस्य विद्यमानवस्तुविषयत्वात् । घटस्याविद्यमानत्वे घटं जग्रा- हेति प्रयोगादर्शनाच्चराजा सेनान्यम् दिग्विजिगीषयास्वसङ्गे जग्राहेतिवत् । "युक्ते क्ष्मादावृते भूतं प्राण्यतीतेसमे त्रिष्वित्यमरः उत्तरत्रापि स एव प्रथमं देव इत्यादौ सर्व्वत्र सम्भूतमिति पदमनुवर्त्तनीयम् । महदादिभिर्महत्तत्त्वाहङ्कारादिभिर्लोकानाम् समष्टिव्यष्टीनाम् भुव- नानां वा या स्रष्टु मिच्छा तया षोडशैव कला यस्मिन्निति राकाचन्द्रमिव मत्स्यकूर्म्माद्यवतारानपेक्ष्य परिपूर्णमित्यर्थः । "कला तु षो- डशो भाग" इत्यभिधानात् । अत्र योऽयं भगवान् स परव्योमाधिनाथः । तेन गृहीतंयत् षोडशकलं रूपम् स महाविष्णुः प्रकृतीक्षणकर्त्ता- सङ्कर्षणांशः कारणार्णवशायी प्रथमः पुरुषो भागवतामृतोक्तयुक्त्या ज्ञेयः ॥ १ ॥

यस्य पुरुषस्य अम्भसि स्वरोमकूपस्थब्रह्माण्डान्तरे एकैकप्रकाशेन प्रविश्य स्वसृष्टे गर्भोदे शयानस्य योगः समाधिस्तद्रूपां निद्राम् विस्तारयतः । यस्य नाभिहृदाम्बुजस्य अवयवानां संस्थानैः प्रदेशविशेषैर्लोकाविस्तरः पातालादिसत्यान्तभुवनविन्यासः । इत्ययम् पद्मनाभः प्रद्युम्नांशो गर्भोदशायी द्वितीयो ज्ञेयः । यस्तु पूर्व्वाध्याये हरिविरिञ्चिहरेति संज्ञा इत्यत्र हरिरिति पठितः स क्षीरोदशायी अनिरुद्धांशस्तृतीयः पुरुषो ज्ञेय इति पुरुषत्रयम् । अत्र प्रथमः प्रकृतेरन्तर्यामी । द्वितीयः समष्टिविराजः । तृतीयो व्यष्टीनामिति । त्रय एवांशेनान्तर्यामिणः । तदुक्तं । 'एकन्तु महतः स्रष्टृ द्वितीयं त्वण्डसंस्थितम् । तृतीयं सर्व्वभूतस्थं तानि ज्ञात्वा विमुच्यत इति । एवञ्चै- तत्प्रकरणव्यञ्जिता महाविष्णोर्लीलाकथापरिपाटी चेयम् । यदैव तस्य पुनरपि प्रदेशविशेषे शयनेच्छा अजनिष्ट तदा कारणार्णवे शयान एव स्वनिश्वासनिष्क्रमणे प्रथमक्षणे स्वशक्तिं मायामैक्षिष्ट । तया च तदिङ्गितज्ञया तदिच्छाबलाल्लब्धसामर्थ्यया महत्तत्वादि- तत्त्वानि स्वत एव निष्काश्य ब्रह्माण्डं तैः सृष्ट्वा स्वप्रभुर्विज्ञाप्यते स्म हे नाथ शयितुमागच्छेति । ततोऽसौ तत्र गत्वा निमेषमात्रं शयित्वा यदैव पुनरागतवान् तदैव तद्ब्रह्माण्डं शयनमन्दिरं निर्म्माल्यमिव माययैव स दूरीचकार । पुनरपि नवीनमन्दिरे तं शाययितुमेवञ्च ब्रह्मणः परार्द्धद्वयं गच्छति स्म । यदुक्तं तृतीये निमेष उपचर्यत इति ॥ २ ॥

---

## सिद्धान्तप्रदीपः ।

अथाख्याहिहरेर्धीमन्नवतारकथाः शुभाइत्यस्योत्तरमाह जगृहेइत्यादिनाभगवान्स्वाभाविकैश्वर्यादिगुणवान् महदादिभिः संभूतं- संजातम् षोडशकलम् एकादशेंद्रियाणिपंचमहाभूतानिषोडशकलाः अंशाःयस्मिन् तत् पौरुषंपुरुषाः क्षेत्रज्ञास्ततसंबंधिनिखिलबद्धजी वालयम् पुरुषस्यस्वावतारस्यानियम्यंवा समष्टिकार्यात्मकंव्यष्ट्युपादानभूतम् रूपम् लोकसिसृक्षयाजगृहे तस्यहिपुरुषावतारस्यशरी- रत्रयंज्ञेयम् तत्रैकंसूक्ष्मं अतःपरंयदव्यक्तमितिवक्ष्यमाणम् द्वितीयंविराडाख्यम् तृतीयमप्राकृतम् तस्यचपुरुषनारायणानिरुद्धादीनिना- मानिविराट्शरीरेवर्तमानत्वात्सएववैराजइत्युच्यते शरीरतद्वतोरभेदविवक्षयाविराडित्युच्यते एतत्सर्वं द्वितीयस्कंधे स्फुटीभाविष्यति । १ ।

ततएवब्रह्मोत्पत्तिमाह यस्येति तदुक्तंमोक्षधर्मेश्रीमुखेन तपोयज्ञश्चस्रष्टाचपुराणः पुरुषोविराट् अनिरुद्धइतिप्रोक्तोलोकानांप्रभवा- व्ययम् ब्रह्मेतिरात्रिक्षयेप्राप्तेतस्यह्यमिततेजसः प्रसादात्प्रादुरभवत्पद्मंपद्मनिभेक्षण ततोब्रह्मासमभवादित्यादि ॥ २ ॥

---

## भाषा टीका ।

सूतजी बोले भगवान ने प्रथम लोक सृष्टि इच्छा से महान् अहंकार पंच तन्मात्रों से बना हुआ ग्यारा इंद्रिय पंच महाभूत इन सो- रह अंशों वाळा पौरुष रूप को धारण किया ॥ १ ॥

सो कौन हैं सो कहते हैं जिनके एक समुद्र में शयन के समय तथा योग निद्रा विस्तार के समय मे नाभि रूप हृदमे उत्पन्न कम- ल में से प्रजापतिन के पति ब्रह्मा उत्पन्नहोते भये ॥ २ ॥

---

**यस्यावयवसंस्थानैः कल्पितोलोकविस्तरः ।**
**तद् वै भगवतोरूपं विशुद्धं सत्त्वमूर्जितम् ॥ ३ ॥**
**पश्यन्त्यदोरूपमदभ्रचक्षुषा सहस्रपादोरुभुजाननाद्भुतम् ।**
**सहस्रमूर्द्धश्रवणाक्षिनासिकं सहस्रमौल्यम्वरकुण्डलोल्लसत् ॥ ४ ॥**

श्रीधरस्वामी ।

कीदृशं रूपं जगृहे तदाह यस्येति । ननु कीदृशो विग्रहस्तस्य योऽम्भसिशेते स्म । तदाह । तत्तस्य भगवतो रूपं तु विशुद्धं रजआद्यसम्भिन्नम् अतएवोर्ज्जितं निरतिशयं सत्त्वम् ॥ ३ ॥

एतच्च योगिनां प्रत्यक्षमित्याह पश्यन्तीति । अदभ्रम् अनल्पं ज्ञानात्मकं यच्चक्षुस्तेन । सहस्रम् अपरिमितानि यानि पादादीनि तैरद्भुतम् । सहस्रं मूर्द्धादयो यस्मिन् तत् । सहस्रं यानि मौल्यादीनि तैरुल्लसत् शोभमानम् ॥ ४ ॥

श्रीवीरराघवः ।

पश्यंतीतिअतएतदानिरुद्धाख्यं रूपमदभ्रचक्षुषाऽनलपज्ञानेनमनसापश्यंति "मनसातुविशुद्धेनदृश्यतेत्वग्र्ययाबुद्ध्यासूक्ष्मयासूक्ष्मदर्शिभिरित्याद्युक्तरीत्यायोगपरिशुद्धमनसापश्यंतीत्यर्थः प्रत्येकंसहस्त्रसंख्याकैः पादादिभिरद्भुतंतथाप्रत्येकंसहस्त्रंमूर्द्धादयोयस्मिंस्ततत-श्रवणेश्रोत्रेसहस्रेणमौलिभिः किरिटैरंबरैर्वस्त्रैश्चकुंडललैश्चोपशोभमानंरूपंभवतीति ॥ ४ ॥

श्रीविजयध्वजः ।

सएवपुनर्ब्रह्मांडेनाख्याआसीदंतरिक्षमित्यादिनाअंतरिक्षादिलोककल्पकावयववान्पुरुषाख्योवततारेत्यभिप्रेत्याह यस्येति पातालमित्यादिलोकाविस्तरःचतुर्दशभुवनविस्तरःयस्यपुरुषनाम्नाअवतीर्णस्यावयवसंस्थानैश्चरणाद्यवयवविन्यासैः कलिपतःतदुत्पन्नत्वेनतदाधारत्वेनाविद्वद्भिर्निरूपितःनतुतदात्मत्वेनसच्चिदानंदरसब्रह्मचैतन्यमविद्यादर्पणेप्रतिबिंबितंसजीवइत्यभिधीयते तदेवब्रह्मवशीकृतमायमीश्वरइति तत्रसच्चिदानंदब्रह्मलक्षणपुरुषोभगवानीश्वरःपौरुषंरूपंजगृहेपौरुषंविराट्रूपंस्वमाययाकलिपतंमहदहंकारादिभिःसंभूतमुत्पन्नमतएव पंचभूतादिषोडशकलोपेतं किमर्थं अनेनलोकासिसृक्षया कोसौभगवानित्यपेक्षायामाह यस्येति स्वमायापरिणतभूतसूक्ष्मेषुशयानस्य-तत्तद्रूपेणव्याप्तस्ययोगनिद्रांजगत्कारणमायाशक्तिवितन्वतोविस्तारयतःसृष्टौप्रेरयतोयस्य नाभिहृदांबुजात्पंचीकृतभूतनिष्पन्नलोकपद्मात् ब्रह्माऽसीद्यस्यब्रह्मोत्पादकजगत्पद्मस्यावयवविन्यासैःपद्मदलायमानैर्लोकविस्तारःकलिपतः । नवस्तुतःसत्यः । तद्भगवतस्त्रैलोक्यात्मकंप्रथमंरूपमितिकेचित्तद्दूयति तदिति भगवतस्तद्रूपंपुरुषादिरूपत्रयंविशुद्धंनिर्दोषम्ऊर्जितम्उद्रिक्तंसत्त्वंसंपूर्णबलज्ञानादिसर्वगुणसमूहं वा-इतिपदेनपरकृतापव्याख्यानस्यप्रमाणविरोधंचदर्शयति "निरनिष्ठोनिरवद्यइतिश्रुतेर्नित्यनिरस्ताविद्याविलासस्यब्रह्मणोविद्यादर्पणेप्रतिबिंबीभूयजीवत्वंनघटते । नहिनित्यनिर्मुक्तशिरोवेदनोलीलयाकदाचित्तद्वान्स्यामितिकामयते पंचीकरणमपिस्वकलपनामंतरेणनप्रमाणपदवीमध्यास्तेअतउपेक्षणीयमेतन्मतम् ॥ ३ ॥

इतोपितन्मतमयुक्तमित्याह पश्यंतीति अदभ्रचक्षुषःपूर्णज्ञाना ब्रह्मादयः अदोरूपत्रयंपश्यंति कीदृशंसहस्रशब्दोऽनंतत्ववाचीप्रत्येकमाभिसंबध्यते सहस्रंपादाऊरवश्चभुजाश्चआननानिचसहस्रपादोरुभुजाननानितैरद्भुतं सहस्रंमूर्धश्रवणाक्षिनासिकायस्मिन्तत्तथोक्तं सहस्रमौल्यंबरकुंडलैरुल्लसच्छोभमानं निरस्ताऽविद्यैरुत्तमाधिकारिभिर्ब्रह्मादिभिरपरोक्षतयादृष्टत्वान्नैतद्रूपत्रयंमायाकलिपतमिति भावः॥ ४ ॥

क्रमसंदर्भः ।

व्यक्तत्वं प्राकट्यम् प्रद्युम्नादिति शेषःसूतेन त्वभेदाविवक्षया प्रद्युम्नः पृथङ्नोक्तः । विष्णोस्तु त्रीणि रूपाणीतिवत् सेयं प्रक्रिया द्वितीयस्कन्धस्य षष्ठे दृश्यते यथा । स एष आद्यः पुरुष इत्यादि पद्ये टीका । स एष आद्यो भगवान् यः पुरुषावातारः सन् सृष्ट्यादिकं करोतीत्येषा । एवमाद्योऽवतारः पुरुषः परस्येतस्य च टीका । परस्य भूम्नः । पुरुषः प्रकृतिप्रवर्त्तकः । यस्य सहस्रशीर्षेत्याद्युक्तो लीलाविग्रहः स आद्योऽवतार इत्येषा । तथा तृतीयस्य विंशे दैवेनेत्यादिकं सोऽन्विष्यन्तं सटीकमेवप्रकरणमत्रानुसन्धेयम् । तस्माद्विराट्त्वेन तद्रूपम् न व्याख्यातं तस्माच्च वासुदेवस्थानीयो भगवान् पुरुषादन्य एवेत्यायातम । अथ तस्य रूपद्वयस्य सामान्यत एकत्वेन स्वरूपमाह तदिति । तत् श्रीभगवतः पौरुषं रूपम् । वै प्रसिद्धौ । विशुद्धोर्ज्जितसत्त्वादिभिर्व्यक्तत्वात् शक्तिस्वरूपयोरभेदाच्च तद्रूपमेवेत्यर्थः । उक्तञ्च द्वितीयम् पुरुषव्यूहमधिकृत्य स्वरूपत्वं तद्रूपस्य । नातः परं परम यद्भवतः स्वरूपमित्यत्र । विशुद्धं जाड्यांशेनापि रहितम् स्वरूपशक्तिवृत्तित्वात् ऊर्ज्जितं सर्व्वतो बलवत् परमानन्दरूपत्वात् । को ह्येवान्यात् कः प्राण्याद् यदेष आकाश आनन्दो न स्यादिति श्रुतेः । तस्मात् साक्षाद्भगवद्रूपे तु कैमुत्यमेवायातम् ॥ ३ ॥

## क्रमसन्दर्भः ।

तदेवम् पुरुषस्य द्विधा स्थानकर्म्मणी उक्त्वा स्वरूपवदाकारत्वैकप्रकारमाह पश्यन्तीति । अदः पौरुषं रूपम् । अदभ्रचक्षुषा भक्त्याख्येन । "पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्ययेत्युक्तेः । "भक्तिरेवैनं नयतिभक्तिरेवैनं दर्शयतीत्यादिश्रुतेश्च । तत्रप्रथमपुरुषस्यसहस्रपादादित्वं परमात्मसन्दर्भे व्यञ्जितम् । तृतीयस्य चतुर्थे तु द्वितीयम् पुरुषव्यूहमुपलक्ष्य वेणुभुजाङ्घ्रिपाङ्घ्रेरिति दोर्दण्डसहस्रशाखमिति किरीटसाहस्रहिरण्यशृङ्गमिति च । तथा नवमस्य चतुर्दशे सहस्रशिरसः पुंसो नाभिह्रदसरोरुहात् । जातस्यासीत् सुतो धातुरत्रिः पितृसमोगुणैरिति ॥ ४ ॥

---

## सुबोधिनी ।

तेषांस्थानंवक्तुंलोकशब्दस्यभुवनवाचित्वात्तेषांजडत्वेनस्वतोजननाभावात् निद्रितस्यतज्जननमित्याशंक्यपुरुषशरीर स्थूलावयवाएवतथाविधाजाताइत्याह यस्यावयवसंस्थानैरिति ॥ सचयुक्त्यामध्येभावेतिष्ठतीतिज्ञायते वस्तुतस्तुजीवात्मकः सर्वकार्येषुनिविष्टइति अयमूर्द्ध्वगोलोदेहः यैर्यैर्यथायथास्थितैर्यैर्यैर्लोकास्तानग्रेवक्ष्यति पातालमेतस्यहिपादमूलमित्यादिभिः शरीरेलोकनिर्माणेलोकानामनित्यत्वमाशंक्यनिराकरोतिविस्तरइति एवंभुवनजननिर्माणेनावतारप्रयोजन मुक्त्वाब्रह्मांडांतरवत् इदमपिकेवलंजडमित्याशंक्यपूर्वोक्तमवताररूपमुपसंहारार्थमनुवदतितद्वैभगवतइतितत्पूर्वोक्तंब्रह्मांडरूपमुक्तो पपत्तिर्वैशब्देनोच्यतेतद्भगवतएवरूपंनान्यत्किंचिदित्यर्थः ननुभगवतः प्राकृतंरूपमेवनास्तिशुद्धसत्त्वात्मकमेवभवति तत्कथंब्रह्मांडस्यदेहत्वमतआह विशुद्धंसत्त्वमितिशुद्धसत्त्वात्मकमेवेदंशरीरमित्यर्थः ऊर्जितमितिनशांतं किंतुसर्वकार्यकरणोन्मुखमित्यर्थः हर्षेणोत्फुल्लताऊर्जः तद्रजोगुणव्यतिरेकेणापिभगवदावेशेनभवति ॥ ३ ॥

ननुब्रह्मांडस्यपरिग्रहः करणत्वेनापिसंभवतितत्कथमेकांततो देहत्वमित्याशंक्याहपश्यंतीति ॥ योगिनांयोगजधर्मसाक्षात्कारएव भगवदवतारत्वेप्रमाणं प्राकृतचक्षुषाभगवतः प्रतिकृतिरूपत्वेनवेदप्रतिपाद्यस्यसंबंधेशरीरमपि विश्वतश्चक्षुरितिश्रुतिप्रतिपादितरूपवत्ध्येयंजातमित्याहसहस्रपादोरुभुजाननाद्भुतमितिसहस्रमित्यपरिमित नामअनेकवक्त्रनयनमितिगीता प्रतिपादितरूपवत्सहस्रपादोरुभुजाननैःअत्यद्भुतमअत्रक्रियाशक्तिप्रधानानिचत्वार्यंगानिनिरूपितानिगतिश्चसृष्टिजननं गतिश्चपरिभाषणमितिज्ञान प्रधानान्याहसहस्रमूर्द्धश्रवणाक्षिनासिकमिति सहस्रंमूर्द्धसुश्रवणेआक्षिणीनासिकेच यस्यश्रीण्येवद्धिदैवत्यानिज्ञानांगानिप्रसिद्धानि नवाहिरासनेंद्रियं त्वांतरमेवआननपदेनैवसंगृहीतंत्वचोननात्व परिकरमाहसहस्रमौल्यंवरकुण्डलोल्लसदितिसहस्रंमौलयः मुकुटानिअंबराणिकुंडलानिचतैरुल्लसदतिशोभायुक्तमित्यर्थः परिकराणामवरोहप्रकारेणप्रतीतत्वाद्यथाक्रमंनिर्देशः ॥ ४ ॥

---

## श्रीविश्वनाथचक्रवर्ती

तन्मूर्त्तीनामप्राकृतत्वमाह । विशुद्धं रजआद्यमिश्रम् अतएवोर्जितं श्रेष्ठम् अप्राकृतं सच्चिदानन्दघनमित्यर्थः ॥ ३ ॥
एतच्च भक्त्या सिद्धानां प्रत्यक्षमित्याह पश्यन्तीति । अदभ्रमनल्पम् अप्राकृतं यच्चक्षुस्तेन ॥ ४ ॥

---

## सिद्धांतप्रदीपः ।

यस्यस्थूलशरीरावयवसंस्थानैः लोकविस्तरः कल्पितः यद्विशुद्धमप्राकृतंतत्तुभगवतोमुख्यंरूपम् ॥ ३ ॥
अदभ्रचक्षुषाअनल्पज्ञानेनसहस्रेणप्रत्येकमनंतैः पादादिभिरद्भुतम् सहस्रंप्रत्येकंमूर्द्धादयोयस्मिन्तत् प्रत्येकंसहस्रेणमौल्यादिभिरुल्लसत्शोभमानम् ॥ ४ ॥ ५ ॥

---

## भाषा टीका ।

जिन भगवान के अवयव संस्थानसैं ( कर चरणादिकों सैं पृथवी अंतरीक्ष आदिक लोकों का विस्तार कल्पना कियागया है वही ऊर्जित सत्य सम उनका विशुद्ध ( मायाऽस्पृष्ट ) रूपहै ॥ ३ ॥
पूर्णज्ञान मय चक्षु सैं, योगिजन उस रूपको देखतेहैं । वहरूप सहस्रों चरण सहस्रों जानु सहस्रों उरू सहस्रों मूर्द्धा सहस्रों श्रवण सहस्रों नेत्र सहस्रों नासिका सहस्रों मुकुट वस्त्र और कुण्डलोंसैं परम अद्भुत है ॥ ४ ॥

---

एतन्नानावताराणान्निधानम्बीजमव्ययम् ।
यस्यांशांशेन सृज्यन्ते देवतिर्य्यङ्नरादयः ॥ ५ ॥
सएव प्रथमन्देवः कौमारं सर्गमास्थितः ।
चचार दुश्चरं ब्रह्मा ब्रह्मचर्य्यमखण्डितम् ॥ ६ ॥
द्वितीयन्तु भवायास्य रसातलगताम्महीम् ।
उद्धरिष्यन्नुपादत्त यज्ञेशः सौकरं वपुः ॥ ७ ॥
तृतीयमृषिसर्गञ्च देवर्षित्वमुपेत्य सः ।
तन्त्रं सात्वतमाचष्ट नैष्कर्म्म्यं कर्म्मणां यतः ॥ ८ ॥

श्रीधरस्वामी ।

एतत्तु कूटस्थं न त्वन्यावतारवदाविर्भावतिरोभाववदित्याह । एतदिति । एतदादि नारायणरूपम् । निधीयतेऽस्मिन्निति निधानम् कार्यावसाने प्रवेशस्थानमित्यर्थः । बीजमुद्गमस्थानम् । बीजत्वेऽपि नान्यबीजतुल्यं किंत्वव्ययम् । न केवलमवताराणामेव बीजं किंतु सर्वप्राणिनामपीत्याह । यस्यांशो ब्रह्मा तस्यांशो मरीच्यादिस्तेन ॥ ५ ॥

सनत्कुमाराद्यवतारं तच्चरित्रं चाऽऽह । स एवेति । कौमार आर्षः प्राजापत्यो मानव इत्यादीनि सर्गविशेषनामानि । यः पौरुषं रूपं जगृहे स एव देवः कौमाराख्यं सर्गमास्थितः सन् ब्रह्मा ब्राह्मणो भूत्वा ब्रह्मचर्यं चचार । प्रथमद्वितीयादिशब्दा निर्देशमात्रविवक्षया ॥ ६ ॥

वराहावतारमाह । द्वितीयमिति । अस्य विश्वस्य भवायोद्भवाय महीमुद्धरिष्यन्निति कर्मोक्तिः । एवं सर्वत्रावतारस्तत्कर्म चोक्तमित्यनुसंधेयम् ॥ ७ ॥

नारदावतारमाह । तृतीयमिति । ऋषिसर्गमुपेत्य । तत्र च देवर्षित्वमुपेत्येत्यर्थः । सात्वतं वैष्णवं तन्त्रं पञ्चरात्रागममाचष्टोक्तवान् । यतस्तन्त्रात् । निर्गतं कर्मत्वं बन्धहेतुत्वं येभ्यस्तानि निष्कर्माणि तेषां भावो नैष्कर्म्यम् । कर्मणामेव मोचकत्वं यतो भवति तदाचष्टेत्यर्थः ॥ ८ ॥

---

श्रीवीरराघवः

एतदानिरुद्धाख्यंरूपंनानाविधानामवताराणां निदानंमूलकारणंबीजंकृत्स्नजगद्बीजभूतं कृत्स्नजगत्सृष्टृचतुर्मुखोत्पत्तिस्थानत्वादितिभावः अव्ययमपक्षयविकाररहितमनेनाप्राकृतत्वमुक्तंयस्येतियस्यभगवतोनिरुद्धस्यांशांशेनशरीरभूतचिदचित्तत्त्वैकदेशेनदेवादयःसृज्यंते ५ सदेवःपरमपुरुषएवब्रह्माचतुर्मुखशरीरकः सन्प्रथमंकौमारंसर्गंसनत्कुमारादिसर्गमास्थितः सनकादिरूपेणावतीर्णइत्यर्थः अखंडितंनिर्विघ्नंब्रह्मचर्य्यमूर्ध्वरेतस्कत्वोपेतंभगवदुपासनं चकारतेचकुमाराः प्रथमावताररूपाः प्रथममितिविशेषणाद्द्वितीयमित्यनंतरोक्तेश्चइमेचकुमाराअनुप्रवेशावताररूपाःतथाचतुर्मुखोपिब्रह्मरूपधरः"ब्रह्मानारायणात्मक" इत्यादिभिःसृष्ट्यादिकालेतदात्मकतयायोगिभिश्चिंत्यत्ववचनात्भगवताशौनकेनच"आब्रह्मस्तंबपर्यंताजगदंतर्व्यवस्थिताः प्राणिनःकर्मजनितसंसारवशवर्त्तिनः यतस्ततोनतेध्यानेध्यानिनामुपकारकाः अविद्यांतर्गताःसर्वेतेहिसंसारगोचराः पश्चादुद्भूतबोधास्तेध्यानेनैवोपकारकाः नैसर्गिकोनवैबोधस्तेषामप्यन्यतोयत"इति चतुर्मुखसनकादीनांजगदंतर्वर्तिनामविद्यावेष्टितत्वेनशुभाश्रयत्वानर्हतामुक्त्वाबद्धानामेवसतांपश्चाद्योगेनोद्भूतबोधानां स्वस्वरूपापन्नानांचस्वतः शुद्धिविरहेणामुमुक्षूपास्यत्वनिषेधात् "सृष्टिंततः करिष्यामित्वामाविश्यप्रजापत"इति श्रीजन्मरहस्यवचनैकार्थ्याच्चतदेवंचतुर्मुखसनकादयः भगवदनुप्रवेशावतारः प्रथमश्चेत्युक्तंभवतिब्रह्मचर्यंचचारेत्यवतारप्रयोजन मुक्तमेवमुत्तरत्रापिद्रष्टव्यम् ॥ ६ ॥

अथवाराहावतारमाह द्वितीयंत्विति अस्यजगतः भवायाभ्युदयायरसातलगतां महींपृथ्वीमुद्धरिष्यन्यज्ञेशोभगवान् द्वितीयंसौकरंवाराहंवपुरादत्तजगृहेवराहोद्वितीयावतारइत्यर्थः अयंचस्वेनरूपेणावतारः यज्ञेशइत्यनेनयज्ञाराध्यत्वतत्फलदत्वयोः कथनात्तच्छरीरकत्वायुक्तःवपुरुपादत्तेतिवपुर्मात्रपरिग्रहोक्तेः अस्यभवायेतिकेवलसाधुपरित्राणार्थत्वसूचनाच्च ॥ ७ ॥

नारदावतारमाहतृतीयमिति तृतीयंवपुरुपादानमृषिसर्गः ऋषिरूपजन्मेत्यर्थः तत्रतृतीयेवतारेसभगवान्देवर्षित्वंनारदरूपमापन्नःनारदाख्यंजीवमनुप्रविश्येत्यर्थः सात्वतंतंत्रंपंचरात्रशास्त्रमाचष्टावोचत्प्रवर्त्तयामासेत्यर्थः तंत्रंविशिनष्टियतस्तंत्रात्कर्मणांनिवृत्तिधर्मवतांनैष्कर्म्यंनिवृत्तिधर्मविरहंप्रवृत्तिधर्माणामकर्तव्यतावगम्यतइति ॥ ८ ॥

---

श्रीविजयध्वजः ।

प्रयाणांरूपाणांमध्येपद्मनाभाख्यंरूपमवतारकारणमित्याह एतदिति यत्क्षीरार्णवशायिपद्मनाभाभिधंरूपं एतन्मत्स्यादिनानावताराणांबीजंव्यंजकं निधानमंअततोत्रसर्वावतारानिधीयंतेएकीक्रियंतइति नव्येतीत्यव्ययं यस्यपद्मनाभस्यांशांशेनसामर्थ्यैकदेशेनदेवादयः सृज्यंते सएपद्मनाभएवसर्वावतारहेतुरित्यर्थः ॥ ५ ॥

सएवपद्मनाभोदेवःप्रथमंस्वस्मादेवकौमारमूसनत्कुमाराभिधमवतारम् आस्थितः ब्रह्माबृंहितःस्वतःपूर्णोविशिष्टजनशिक्षणायान्यैर्दुश्चरब्रह्मचर्यमखंडितमप्रतिहतंयथाभवतितथाचचारेत्यर्थः सनत्कुमारोन्यःसनकादिषुपठितः ॥ ६ ॥

रसातलगतांमहीमुद्धरिष्यनुद्धर्तुकामोयज्ञेशः श्रीनारायणोऽस्यजगतःभवायतुस्थित्यर्थमेव सौकरंसूकरस्यवराहस्याविद्यमानंवपुरुपादत्तेत्यन्वयः ॥ ७ ॥

ऋषिषुसर्गोभिव्यक्तिर्यस्यसतथोक्तः ऋषीणांस्वभावोयस्यसतंतृतीयंमहिदासाभिधावतारमुपेत्यदेवर्षित्वंचोपेत्यसभगवांस्तत्रावतारेसात्वतंपंचरात्रंनामग्रंथविशेषमाचष्टव्याचख्यौनारदादेरितिशेषः यतःसात्वततंत्रोक्तानुष्ठानात्कर्मणांनैष्कर्म्यंमोक्षसाधनत्वंस्यादित्यन्वयः "सर्गःस्वभावनिर्मोकनिश्चयाध्यायसृष्टिष्वित्यभिधानं श्रुत्यादिप्रसिद्धिद्योतकेनवैशब्देनदेवर्षित्वंनारदत्वमुपेत्येत्यपव्याख्यानमपहास्तितमितिज्ञातव्यं भोशौनकादयःतृतीयमृषिसर्गेवित्तेतिवा तदवतारप्रयोजनमाह देवर्षित्वमिति ॥ ८ ॥

---

क्रमसन्दर्भः ।

तत्र श्रीभगवन्तं सुष्ठु स्पष्टीकर्त्तुं गर्भोदकस्थस्य द्वितीयस्य पुरुषव्यूहस्य नानावतारित्वं विवृणोति एतदिति । एतद्ब्रह्माण्डस्थमित्यर्थः । निधानम् सागराणां समुद्र इव सदैवाश्रयः अतएवाव्ययम् अनपक्षयम् । बीजम् उद्गमस्थानम् ॥ ५ ॥

अथ प्राचुर्य्येण तदवतारान् कथयन् तदैक्यविवक्षया तदंशांशिनामप्याविर्भावमात्रं गणयति विंशत्या । तत्र स एवेति । योऽम्भसि शयानो यश्च सहस्रपादादिरूपः स एव पुरुषाख्यो देवः । एते चांशकलाः पुंसः इत्युपसंहारस्यापि संवादात् । कौमारं चतुःसनरूपम् ॥ ६—७ ॥

तृतीयमिति । ऋषिसर्गमुपेत्य तत्रापि देवर्षित्वं श्रीनारदत्वमुपेत्य कर्म्मणां कर्म्माकारेणापि सतां श्रीभगवद्धर्मोणां यतस्तन्त्रात् नैष्कर्म्यं कर्म्मबन्धमोचकत्वेन कर्म्मभ्यो निर्गतत्वं तेभ्योऽभिन्नत्वं प्रतीयत इति शेषः ॥ ८—९ ॥

---

सुबोधिनी

ननु "वाचंधेनुमुपासीतेतिवत् उपासनाप्रकारेणभगवद्रूपत्वेन जगतोध्यानसंभवात्कथमेकांततोवतार इत्याशंक्याह एतन्नानावताराणामिति अयमर्थः अवताराणांमूलंभगवान्मूलावतरणं वा तत्रतरवनिर्मितत्वान्नभगवान् तद्यद्यवताररूपमपिनभवेत् अवताराणांमूलमपिनभवेत् अवतारोत्कर्षश्चअतः पुरुषस्यावतारत्वेनसंदेहः नानावताराणांमत्स्यादीनां निधीयतेऽस्मिन्निति निधानंस्थानंबीजमुद्गमेहेतुः तच्चाविनाशिकंदवदंकुरोत्पत्तौननश्यतीत्यर्थः अवतारप्रयोजनंसूतितं विस्तारयतियस्यांशांशेनेति अंशोब्रह्मातस्यमरीच्यादिः जघनाद्योवादेवादयः सात्त्विकादिप्रधानाः ॥ ५ ॥

एवंपुरुषावतारमुक्त्वा तत्प्रकृतिरूपान्तदंशसृष्टावप्यवतारानाह सएवेत्याद्येकविंशश्लोकैः सर्वत्रावतारनामप्रयोजनंचोच्यते अवतरणरूपस्यतुल्यत्वेन आवेशावतारयोरविशेषेणनिरूपणं "स्वरूपशरीरेषुब्रह्मणः संक्रमः स्मृतः अशुद्धशुद्धभेदेनशरीराणामतो द्विधा" कार्यकालेसंक्रमणमावेशः सर्वदापरंतत्रनिर्णयोवैष्णवतंत्रेनिरूपितः "क्रियाशक्त्याज्ञानशक्त्याचावतारंकरोत्यजः वाराहादिस्वरूपेषुबलकार्यंजनार्दनः दत्तव्यासादिरूपेषुज्ञानकार्यंतथाप्रभुः मत्स्यकूर्मवराहाश्चसिंहवामनभार्गवाः राघवः कृष्णबुद्धौचकृष्णद्वैपायनस्तथा कपिलोदत्तऋषभः शिशुमारोरुचेः सुतः नारायणोहरिः कृष्णस्तापसोमनुरेवच महिदासस्तथाहंसःस्त्रीरूपोहयशीर्षवान् तथैववडवावक्त्रः कल्कीधन्वंतरिःप्रभुः इत्याद्याःकेवलोविष्णुर्नविशेषोतकश्चन श्रीब्रह्मरुद्रशेषाश्चकवींद्रःकामएवच कामपुत्रोनिरुद्धश्चसूर्यश्चंद्रोबृहस्पतिः धर्मएषांतथाभार्यादक्षाद्यामनवस्तथा मनुपुत्राश्चऋषयोनारदः पर्वतस्तथा कश्यपः सनकाद्याश्चब्रह्माद्याश्चैवदेवताः भरतः कार्तवीर्यश्चवैनाद्याश्चक्रवर्तिनः गयश्चलक्ष्मणाद्याश्चत्रयोरोहिणिनंदनाः प्रद्युम्नोरौक्मिणेयश्चतत्पुत्राश्चानिरुद्धकः नरःफाल्गुनइत्याद्याविशेषावशिनोहरेः इहोक्तिरविशेषेणसामान्यतइतिस्फुटम्" प्रथमंब्रह्मणः सनकादयउत्पन्नाः तथावेशस्तस्यप्रयोजनंब्रह्मचर्यमितिनहि जीवस्यब्रह्मचर्यत्वंसंभवतिइंद्रियवत्त्वात्यथाहिक्षुदग्निराविर्भूतः सोढुमशक्यः एवंबीजाधारकामाग्निरपि तत्रयथाजलपानंतथास्त्रीप्रेक्षणादियथान्नतृप्तिस्तथास्त्रियारेतोनिवृत्तिः तत्रमनसास्त्रीनामस्मरणेनरेतोधारणं ब्रह्मचर्यंभगवदावेशेनैवभवतीति प्रथमंसनत्कुमारः सएवदेवोनारायणः कौमारंसनत्कुमाररूपंस्त्रीभिर्जलरूपैः बीजेवृद्धेयौवनंभवतितदभावात्तेषुसर्वदाकौमारमेवकुत्सितोभारोयस्मादितिदुश्चरणमितिलोकेस्यचरणमप्रसिद्धम् अखंडितंयथाभवतितथाअस्यहिप्रतिक्षणंनाशसंभवः ॥ ६ ॥

स्वर्गादौजगन्निर्माणेअस्यप्रपंचस्यभूयस्त्वंनभवेदिति वराहेणभूम्युद्धरणंद्वितीयम् एषामवताराणांविचारोद्वितीयस्कंधेकरिष्यतेअत्रतूद्देशमात्रेणनिरूपणम् आदिवराहकल्पेनिर्मिताभूमिः वराहकल्पेउद्धृतातदाह रसातलगतामिति विरोधपरिहारंचाग्रेवक्ष्यामः उद्धारंकरिष्यन् शौकरंवपुरुपादत्तनायंपुरुषावतारः किंतु यज्ञाधिष्ठातृधर्म रूपभगवदवतारः क्रियायास्तन्मूलकत्वात् अयंमन्युरूपः क्षत्रिये प्रतिष्ठित इति द्वितीयत्वम् ॥ ७ ॥

---

तुर्य्ये धर्म्मकलासर्गे नरनारायणावृषी।
भूत्वात्मोपशमोपेतमकरोद् दुश्चरं तपः॥ ९॥

सुबोधिनी

नारदेहिभगवदावेशः ऋषयोहिमंत्रद्रष्टारः तेचकर्मागभूताइति तृतीयत्वं द्रव्य देवतामन्त्रभेदेनवास पुरुषएवप्रथमतो ऋषिसर्गमुपेत्यतत्रावतारकार्यमपश्यन्ततो देवर्षित्वमुपेत्यनारदेआवेशंप्राप्यसात्वतं वैष्णवंतंत्रंपंचरात्ररूपम् आचष्टभगवत्परिचर्यानिरूपणंनभगवद्व्यतिरेकेणान्यशक्यमितिकर्मणां प्ररोहनाशास्तेनेतिपरिचर्यायां सर्वाणिकर्माणिअंगभावंभजंतेपरिचर्यायाभगवद्भाकित्वेनभगवत्त्वे सर्वेषामेवनैष्कर्म्यम् ॥ ८ ॥

---

श्रीविश्वनाथ चक्रवर्त्ती।

षोडशकलत्वेन यत् पूर्णत्वमुक्तं तद्दर्शयति एतदिति । वीजत्वेऽपि नान्यवीजतुल्यं किन्तुनिधानं निधिराशीभूतमित्यर्थः। वक्ष्यमाणा अवतारा एतस्यांशादिति भावः। न व्येतीत्यव्ययं नित्यम् यस्यांशो ब्रह्मा तस्यांशो मरीच्यादिस्तेनेति। देवादयो विभूतय उक्ताः॥ ५॥

सनत्कुमाराद्यवतारं तच्चरितं चाह स एवेति । यस्यांशांशेन देवादयः सृज्यन्ते स एव पद्मनाभ इत्यर्थः। कौमारं सर्गमाश्रितः कुमारेषु प्रादुर्भावं प्राप्तः सन् ब्रह्मा ब्राह्मणो भूत्वा ब्रह्मचर्यं चचार स्वयमाचरन् लोकेषु प्रचारयामासेत्यर्थः। प्रथमद्वितीयादिशब्दा निर्देशमात्रापेक्षया॥ ६॥

भवाय क्षेमाय। उद्धरिष्यन्निति कर्म्मोक्तिः। एवं सर्व्वत्रावतारस्ततत्कर्म्मचोक्तमित्यनुसन्धेयम्॥ ७॥

ऋषिषु सर्गं प्रादुर्भावम् उपेत्य तत्र च देवर्षित्वं नारदत्वमुपेत्येत्यर्थः। सात्वतं पञ्चरात्रागमं। यतस्तन्त्रात् कर्म्मणां तत्रोक्तानाम् नैष्कर्म्यं कर्म्मबन्धमोचकत्वम्॥ ८॥

---

सिद्धांतप्रदीपः।

श्रीकुमारावतारमाह सएवेति सएवभगवान्कौमारंसर्गंप्रादुर्भावमास्थितः ब्रह्माब्राह्मणोभूत्वा अखंडितंदुश्चरंनैष्ठिकंब्रह्मचर्यंसंप्रदायप्रवृत्त्यर्थंचचार एतेनावतारप्रयोजनमप्युक्तम् एवमुत्तरत्रापिद्रष्टव्यम् प्रथमद्वितीयादिशब्दाः निर्देशमात्रापेक्षया॥ ६॥

अथवराहावतारमाह द्वितीयमिति अस्यजगतः भवायउद्भवाय उपादत्तजगृहे॥ ७॥

नारदावतारमाह तृतीयमिति सःभगवान्तृतीयम् ऋषिसर्गम्ऋषिजन्म उपादत्त तत्रदेवर्षित्वमुपेत्ययतस्तंत्रात् कर्मणांनिवृत्तलक्षणानाम् नैष्कर्म्यंक्षायते निर्गतंकर्मसंसारहेतुत्वंयेभ्यस्तानिनिष्कर्माणितद्भावोनैष्कर्म्यम् तत्तंत्रंसात्वतंवैष्णवम् अवोचत्॥ ८॥

---

भाषा टीका।

यह रूप नाना अवतारों का निधान अर्थात् लयस्थान है और अव्यय वीज है कि जिसके अंशांशों से देवता तीर्यक् और मनुष्यादिकों कि सृष्टि होती है॥ ५॥

वही देव प्रथम कौमार सर्ग का आश्रय कर ब्राह्मण रूप धरकर सनत्कुमार सनातन सनक सनंदन चार रूप में अवतीर्ण हुए। और अखण्ड ब्रह्मचर्य आचरण किया॥ ६॥

द्वितिय*अवतार में इस जगत् के मंगल के अर्थ रसातल में डूबी हुई पृथवी को उद्धार करनेकेअर्थवाराह रूप धारण किया॥ ७॥

तृतीय ऋषि सर्ग में देवऋषि नारद रूप धारण कर सात्वततंत्र श्रीनारद पंचरात्र का उपदेशदिया कि जिस तंत्र के अनुसार कृत कर्म, नैष्कर्म्य अर्थात् मुक्ति के साधन होते हैं। कर्म यद्यपि बंधन है परंतु भक्त्यंग होने से वेही मुक्ति के साधन होजाते हैं॥ ८॥

---

श्रीधरस्वामी।

नरनारायणावतारमाह। तुर्ये इति। तुर्ये चतुर्थेऽवतारे। धर्मस्यकला अंशः भार्येत्यर्थः। "अर्धो वा एष आत्मनो यत्पत्नी" इतिश्रुतेः। तस्याः सर्गे। ऋषी भूत्वेत्येकावतारत्वं दर्शयति॥ ९॥

---

पञ्चमः कपिलो नाम सिद्धेशः कालविप्लुतम्।
प्रोवाचासुरये सांख्यं तत्त्वग्रामविनिर्णयम्॥ १०॥
षष्ठे अत्रेरपत्यत्वं वृतः प्राप्तोऽनसूयया।
आन्वीक्षिकीमलर्काय प्रह्लादादिभ्य ऊचिवान्॥ ११॥
ततः सप्तम आकूत्यां रुचेर्यज्ञोऽभ्यजायत।
स यामाद्यैः सुरगणैरपात् स्वायम्भुवान्तरम्॥ १२॥

श्रीधरस्वामी।

कपिलावतारमाह। पञ्चम इति। आसुरये तन्नाम्ने ब्राह्मणाय। तत्त्वानां ग्रामस्य सङ्घस्य विनिर्णयो यस्मिन् शास्त्रे तत्साङ्ख्यम् १०
दत्तात्रेयावतारमाह षष्ठमिति। अत्रेरपत्यत्वं तेनैव वृतः सन् प्राप्तः अत्रेरपत्यमभिकांक्षते आह तुष्ट इति वक्ष्यमाणत्वात्। कथं प्राप्तः अनसूयया मत्सदृशापत्यमिषेण मामेवापत्यं वृतवानिति दोषदृष्टिमकुर्व्वन् इत्यर्थः। आन्वीक्षिकीमात्मविद्याम्। प्रह्लादादिभ्यश्च आदिपदात् यदुहैहयाद्या गृह्यन्ते॥ ११॥
यज्ञावतारमाह। स यज्ञः यामाद्यैः स्वस्यैव पुत्रा यामा नाम देवाः तदाद्यैः सह स्वायम्भुवं मन्वन्तरं पालितवान् तदा स्वयमिन्द्रोऽभूदित्यर्थः॥ १२॥

---

दीपनी।

भार्य्येति। धर्म्मस्य भार्य्यायाम् मूर्त्तिनाम्न्यामिति शेषः॥ ९॥
आसुरिस्तावत् तत्रभवतः कपिलदेवस्य आद्यशिष्य इतीश्वरकृष्णीयसांङ्ख्यकारिकायां सुस्पष्टम्॥ १०॥
अत्रेरपत्यमिति द्वितीयस्कन्धीयसप्तमाध्यायस्य चतुर्थश्लोकः। अन्वीक्षते आत्मा इत्यन्वीक्षातामधिकृत्य कृताम्। तामेवाह स्वामिपादः आत्मविद्यामिति॥ ११—१२॥

---

श्रीवीरराघवः

तुर्यइति धर्मकलासर्गेधर्मात्पितुः कलासर्गेदेहजन्मरूपेतूर्येचतुर्थावतारे नरनारायणाख्यावृषी भूत्वाआत्मोपशम इंद्रियनिग्रहःतेनोपेतंदुश्चरमइतरैश्चर्तुमशक्यंतपश्चकार॥ ९॥
पंचमइति पंचमोवतारः कपिलोनामकपिलाख्यः सिद्धानामात्मयाथात्म्यानुसंधानयोगेन सिद्धानांस्वस्वरूपापन्नानामीशः कालेनप्रवर्त्तयितृरहितेनकालेनविप्लुतंतिरोहितंसांख्यं कथंभूतंतत्त्वानांप्रकृतिमहदादीनां ग्रामस्यकलापस्यविनिर्णयो याथात्म्यनिर्णयोयस्मात्तथाभूतमासुरयेप्रोवाचआसुरिर्नामसिद्धेषु प्रधानस्तस्मै॥ १०॥
षष्ठमिति अत्रेःप्रजापतेरपत्यत्वंप्रतिवृतः ममपुत्रोभवेत्यत्रिणावृतइत्यर्थः अनसूययाऽत्रेर्भार्यया प्राप्तः तस्य पुत्रोदत्तात्रेयाख्यो भूत्वेत्यर्थः अलर्कायप्रह्लादादिभ्यश्चान्वीक्षिकीमध्यात्मविद्यामूचिवान्तंषष्ठमवतारं विद्यादितियत्तच्छब्दाध्याहारेणान्वयः षष्ठं-षष्ठरूपंत्विति वा॥ ११॥
ततइति। ततःसप्तमेऽवतारेरुचेस्तद्भार्यायामाकूत्यांअभ्यजायत सचयज्ञइतिप्रसिद्धः सयज्ञःयामआद्योयेषांतैः सुरगणैः सहस्वायंभुवमन्वंतरमपात्पालयामास॥ १२॥

---

श्रीविजयध्वजः।

भोःशौनकादयःतुरीयंचतुर्थंशृणुत कथंसपद्मनाभःधर्मनाम्निभगवतिकलासर्गेस्वांशावतारेनाम्नानरनारायणावृषीभूत्वा अज्ञलोकदृष्ट्यात्मनोंतःकरणस्यउपशमेनाधिकशांत्याउपेतंयुक्तम् अन्यैःकर्तुमशक्यंतपःअकरोदित्येकान्वयः अत्रकलासर्गइत्युक्त्यानारायणस्यावतारत्वंनदेतुविशेषावेशइतिज्ञातव्यं तुर्यइतिकेचित्पठंति तत्रतुर्येचतुर्थेधर्मकलासर्गइतिसुगमोन्वयः॥ ९॥
पंचमोवतारोपिकापिलोनामेत्यन्वयः ससिद्धेशःकपिलःकालबलेनतिरोहितंतत्त्वानांचतुर्विंशतिसंख्याकानांग्रामःसमूहःतस्यविशेषेणनिर्णयोभगवत्परत्वेनयस्मिंस्तत्तथोक्तम्। सांख्यंभगवज्ज्ञानप्रतिपादनपरंवेदार्थपरिबृंहितंनाम्नाआसुरयेसच्छिष्यायप्रोवाचेतिपञ्चमान्वयः अत्राज्ञलोकप्रसिद्धसांख्यशास्त्रप्रणेताकपिलःतच्छिष्यःआसुरिश्चान्यएवेतिसतांसंप्रदायः॥ १०॥

### श्रीविजयध्वजः ।

षः षष्ठनामः अनसूयया आत्रेपत्न्यावृतः अत्रेर्ऋषेरनसुयायामपत्यत्वंप्राप्तः आन्वीक्षिकीतत्त्वविद्यामलर्कायप्रह्लादादिभ्यश्चोचिवान् तम-वतारंषष्ठंविद्धि ॥ ११ ॥

ततःसपप्तनामःसप्तमोरुचेःआकूत्यांपत्न्यांयज्ञोऽभ्यजायतजातःसयज्ञोनाम्नायामाआद्यायेषांतेतथातैः सुरगणैःसहस्वायंभुवमन्वंतरम-पात्अरक्षदित्यन्वयः प्रतिमन्वंतरंदेवानांनामभेदाद्यामाद्दत्युक्तम् ॥ १२ ॥

---

### क्रमसन्दर्भः ।

पञ्चम इति । आसुरिनाम्ने विप्राय ॥ १० ॥

षष्ठमिति । अत्रिणा तत्सदृशपुत्रोत्पत्तिमात्रं प्रकटं याचितमिति चतुर्थस्कन्धाद्यभिप्रायः । एतद्वाक्येनानसूयया तु कदाचित् साक्षादेव श्रीमदीश्वरस्यैव पुत्रभावो वृतोऽस्तीति लभ्यते । उक्तञ्च ब्रह्माण्डपुराणे पतिव्रतोपाख्याने । "अनसूयाब्रवीन्नत्वा देवान् ब्रह्मे-शकेशवान् । यूयं यदि प्रसन्ना मे वरार्हा यदि वाप्यहम् । प्रसादाभिमुखाः सर्व्वे मम पुत्रत्वमेष्यथेति श्रीविष्णोरेवावतारोऽयम् ॥ ११ ॥ ॥ १२ ॥ १३ ॥ १४ ॥

---

### सुबोधिनी

नरनारायणयोश्चतुर्थाश्रमधर्मप्रतिपादकत्वेनतुरीयत्वम् अथवाब्रह्मचर्ययज्ञभगवत्परिचर्योपशमाः क्रमेणाश्रमधर्माः धर्मकराः श्रद्धादयः तासांसर्गेजातेपश्चान्मूर्तौ भूतधर्मरूपामूर्त्तिः धर्मस्तुवेदमूलइतिमूर्त्याऋषिरूपेणाविर्भूतौपारमहंस्यधर्मोद्विविधइतिसहस्र कवचवधार्थमित्यन्यत्रनारायणावतारः नरेआवेशः तयोस्तपोज्ञानसहितमित्याह आत्मोपशममितिआत्मनः उपशमःशांतिःज्ञानंज्ञानसाध्या ज्ञासर्वेत्रहितपः क्रोधसहितःशांतिसहितस्तुलोकेदुर्लभइतिदुश्चरमित्युक्तम् ॥ ९ ॥

सांख्यस्यवेदानंतरभावित्वात् श्रमानंतरत्वेनपंचमत्वम् पूर्वंहिपुराणेषुसांख्यंसिद्धंतत्पुराणानामप्रचारात्योगादिभिः सांकर्याच्च संन्यासस्यचांगभूतस्याभावात्सांख्यं कालेनविप्लुतंपुनःकालविप्लवशंकांवारयतिसिद्धेशइति सिद्धियुक्ताःसिद्धाःतेषांमनः सिद्धै-घनप्लुतंभविष्यतीतिभावः आसुरिऋषिःइदंज्ञानंस्त्रीशूद्रसाधारणमितिप्रवर्त्तकस्यताद्दशंनामसंख्याहि पदार्थानामसांकर्यप्रतिपादिकाभवति साधर्म्यवैधर्म्यरूपातस्याः फलमाहतत्त्वग्रामविनिर्णयमिति तत्त्वानांसमूहस्यविशेषेणनिर्णायकम् ॥ १० ॥

योगस्यषष्ठत्वात्तत्प्रवर्तकमाह षष्ठमिति । अनसूयामत्सादृश्यव्याजेनमामेववृतवतीतीर्ष्याभावेनमात्रावाआन्वीक्षिकीयोगपुरः सरात्मविद्याअलर्कोराजासहिराजसः तत्रशास्त्रपरिनिष्ठायाः संदिग्धत्वात्प्रह्लादादिभ्यउक्तवान्प्रह्लादस्तुस्पष्टः ॥ ११ ॥

एवंब्राह्मणानांषाड्विधत्वमुक्तम् षट्कर्माणिब्राह्मणेप्रसिद्धानित्रीणिक्षत्रियेतदर्थंश्रीनाहयज्ञऋषभपृथुरूपान्शत्रुजयःधर्मनिष्ठाप्रजापालनं चेतित्रिषुप्रतिष्ठितम् अतोभिन्नप्रक्रमंवक्तुंततइत्याह आकूतिर्मनुकन्या सचयज्ञः रुचेर्जातोपिपुत्रिकापुत्रः यज्ञोहिब्राह्मणैः क्रियमाणः क्षत्रियेफलतितथासोपियामाद्यैः प्रथममन्वंतरदेवादिभिश्चतुर्विधैःसमंतपसिस्थितमनुरक्षांविधायतदंतरंपालितवानितिअवतारप्रयोजनं प्रियव्रतादयस्तुकल्पांतरेराजानः प्रथममसमर्थाइत्यग्रेउपपादयिष्यते ॥ १२ ॥

---

### श्रीविश्वनाथ चक्रवर्त्ती ।

तुर्ये चतुर्थेऽवतारे धर्मस्य कला अंशः भार्येत्यर्थः । "अर्द्धो वा एष आत्मनो यत्पत्नीति श्रुतेः । तस्यां सर्गे प्रादुर्भावे ऋषी भूत्वेति द्वाभ्यामेकावतारम् दर्शयति ॥ ९ ॥

आसुरये तन्नाम्ने ब्राह्मणाय ॥ १० ॥

अनसूयया अत्रेः पत्न्या वृतः सन्नपत्यत्वं प्राप्तः । यदुक्तम् ब्रह्माण्डपुराणे पतिव्रतोपाख्याने । "अनसूयाब्रवीन्नत्वा देवान् ब्रह्मेशकेश-वान् । यूयं यदि प्रसन्ना मे वरार्हा यदि चाप्यहम् । प्रसादाभिमुखाः सर्व्वे मम पुत्रत्वमेष्यथेति । आन्विक्षिकीमात्मविद्याम् प्रह्लादा-दिभ्यश्च ॥ ११ ॥

स यज्ञः यामाद्यैः स्वस्यैव पुत्रा यामा नाम देवास्तदाद्यैः सह स्वायंभुवं मन्वन्तरं पालितवान् तदा स्वयमिन्द्रोऽभूदित्यर्थः ॥ १२ ॥

---

### सिद्धांतप्रदीपः ।

नरनारायणावतारमाह तुर्येइति धर्मकलासर्गेतपोलक्षणाधर्मभागार्थसर्गे ॥ ९ ॥

कपिलावतारमाह पंचमइति आसुरयेशिष्याय हेयसांख्यप्रवर्तकोन्यइत्याकरेस्थितम् ॥ १० ॥

दत्तात्रेयावतारमाह ममपुत्रोभवेत्यनसूययावृतः सन् तद्भर्तुरत्रेरपत्यत्वंषष्ठंजन्मप्राप्तः आन्वीक्षिकीम् अध्यात्मविद्याम् ॥ ११ ॥

यज्ञावतारमाह ततइति सप्तमेऽवतारे सभगवान् यामःआद्यायेषांतैः सहस्वायंभुवंमन्वंतरम् अपात्पालयामास ॥ १२ ॥

अष्टमे मेरुदेव्यान्तु नाभेर्जात उरुक्रमः ।
दर्शयन् वर्त्म धीराणां सर्व्वाश्रमनमस्कृतम् ॥ १३ ॥
ऋषिभिर्याचितो भेजे नवमं पार्थिवं वपुः ।
दुग्धेमामोषधीर्विप्रास्तेनायं स उशत्तमः ॥ १४ ॥ (१)
रूपं स जगृहे मात्स्यं चाक्षुषोदधिसंप्लवे ।
नाव्यारोप्य महीमय्यामपाद्वैवस्वतं मनुम् ॥ १५ ॥
सुरासुराणामुदधिं मथ्नतां मन्दराचलम् ।
दध्रे कमठरूपेण पृष्ठ एकादशे विभुः ॥ १६ ॥

भाषा टीका ।

चतुर्थ धर्म की कला अर्थात् अंश रूपापत्नी मे नर नारायण ऋषि होकर उपशम मय दुश्चर तप किया ॥ ९ ॥
पञ्चम, कपिलनाम सिद्धेश होकर आसुरि ऋषि को काल विप्लुत तत्त्वग्रामनिर्णायक सांख्यशास्त्र, का उपदेश किया ॥ १० ॥
अत्रिऋषिने अपत्य रूपसे वरे भगवान, दोष दृष्टिकर षष्ठ दत्तात्रेयनामसे अवतीर्ण हुए । और अलर्क राजा प्रल्हादादिकों को आत्मविद्या का उपदेश किया ॥ ११ ॥
सप्तम रुचि प्रजा पतिकी आकूती पत्नी मे यज्ञ रूपसे अवतीर्ण हुए । याम नामक देवगण को लेकर स्वायं भुव मन्वंतरमे इनहीकर त्रिलोकी की रक्षाकी ॥ १२ ॥

---

श्रीधरस्वामी ।

ऋषभावतारमाह । सर्व्वाश्रमनमस्कृतम् अन्त्याश्रमं पारमहंस्यम् वर्त्म धीराणां दर्शयन् नाभेः आग्नीध्रपुत्रात् ऋषभो जातः ॥ १३ ॥
पृथोरवतारमाह । पार्थिवं वपुः राजदेहं पृथुरूपम् । पार्थवमिति पाठे पृथोरिदं पार्थवम् । ओषधीरित्युपलक्षणम् । इमां पृथ्वीम् सर्व्वाणि वस्तूनि दुग्ध अदुग्ध । अडागमाभावस्त्वार्षः । हे विप्राः तेन पृथ्वीदोहनेन सोऽयमवतार उशत्तमः कमनीयतमः वशकान्ताविति अस्मात् ॥ १४ ॥
मत्स्यावतारमाह । चाक्षुषमन्वन्तरे य उदधिसंप्लवस्तस्मिन् । यद्यपि मन्वन्तरावसाने प्रलयो नास्ति तथापि केनचित् कौतुकेन सत्यव्रताय माया दर्शिता यथा अकाण्डे मार्कण्डेयाय इति द्रष्टव्यम् । महीमय्याम् नावि नौकारूपायां मह्यामित्यर्थः । अपात् रक्षितवान् । वैवस्वतमिति भाविनी संज्ञा ॥ १५ ॥
कूर्म्मावतारमाह । कमठः कूर्म्मस्तद्रूपेण एकादशे अवतारे विभुर्दध्रे दधार ॥ १६ ॥

---

दीपनी ।

ऋषभेति । द्वितीयस्कन्धीयसप्तमाध्यायस्य दशमश्लोके द्रष्टव्यः ॥ १३—१४ ॥
अकाण्डे इति । असमये इत्यर्थः । एतद्विशेषश्च द्वादशस्कन्धे नवमाध्याये द्रष्टव्यः ॥ १५—१७ ॥

---

श्रीवीरराघवः

अष्टमेऽवतारेउरुक्रमोभगवान्नाभेः स्वायंभुवपौत्रस्यभार्यायांमेरुदेव्यांजातः सचऋषभाख्यः धीराणांयोगीश्वराणांवर्त्मानुष्ठेयंधर्ममार्गंदर्शयन्दर्शयितुंजातइत्यर्थः वर्त्मविशिनष्टि सर्वैराश्रमैराश्रमस्थैर्नमस्कृतं पूजितम्आश्रमधर्मवर्त्मभ्यउत्कृष्टमितिभावः ॥ १३ ॥
ऋषिभिरितिहुंकारैर्वेनंहतवद्भिः ऋषिभिर्याचितः जगत्पालनार्थंयाचितोभगवान्नवमं पार्थिवंपृथोः संबंधिवपुर्भेजेप्राप्तः अंशेनानुप्रविष्टंपृथ्व्याख्यजीवानुप्रवेशेनपृथुरूपेणावतीर्णइत्यर्थः हेविप्राः शौनकादयःसइमांपृथ्वींगोरूपंधृतवतीम्ओषधीर्दुग्धदुदोहअडभावआर्षः यतोऽदुग्धतेनकारणेनसपृथुरुशत्तमः सर्वेषामिष्टतमोवभूवेत्यर्थः ॥ १४ ॥
रूपमितिचाक्षुषांतरंचाक्षुषमन्वंतरंतत्रयः संप्लवः प्रलयः तस्मिन्सभगवान्मात्स्यंदशमंरूपंजगृहे । अवतारप्रयोजनमाह नावीतिवैवस्वतंमनुंवैवस्वतमनुरूपेणजनिष्यमाणंसत्यव्रतं महीमय्यांपृथ्वीरूपायांनाव्यारोप्यापाद्ररक्ष ॥ १५ ॥
एकादशेऽवतारेविभुर्भगवान्सुरासुराणामुदधिममृतार्थंमथ्नतांसतां कमठरूपेणपृष्ठेमंदराख्यमचलंदध्रेधृतवान् ॥ १६ ॥

---

(१) पार्थवमितिदुग्धवानितिच विजयध्वजः ॥

श्रीविजयध्वजः

यउरुक्रमःनाभेराग्नीध्रपुत्रात्मेरुदेव्यांपत्न्यांजातः सर्वाश्रमनमस्कृतंधीराणांविधारतांनावर्त्मपारमहंस्याश्रमंदर्शयन्बभूवस्यसोऽष्टमोऽवतारःनशुक्रशोणितमिश्रतयास्यजननं किंतुद्वारमात्रमित्यस्मिन्नर्थेतुशब्दः ॥ १३ ॥

ऋषिभिःप्रार्थितःपद्मनाभःनवमावतारंपार्थिवंपृथुचक्रवर्तिशरीराविशंरं पर्भेजे हेविप्राःज्ञानिनः गोरूपिण्याःभुव ओषधीःक्षीरात्मिका दुग्धवान्इतियेनतेनकर्मणाऽयंभगवानुशत्तमःसत्यकामेषुश्रेष्ठः शश्चायां चकद्योद्दोह् कर्मणोऽमानुषत्वंद्योतयति ॥ १४ ॥

समगवान् चाक्षुषांतरसंप्लवे चाक्षुषमन्वंतरप्रलये मात्स्यं त्स्यस्यविद्यमानंरूपंजगृहे किंचमहीमय्यांनावि तरीस्थानीयभूमौवैवस्वतंमनुमारोप्यापादित्यन्वयः ॥ १५ ॥

सुरासुराणामुदधिंसमुद्रंप्रमथ्नतांयोभगवान् पातालमाविशंतंमंदरंपर्वतंकूर्मरूपेण पृष्ठेदध्रेबभारेत्येकान्वयः तमवतारमेकादशंविदुरिति ॥ १६ ॥

---

क्रमसंदर्भः ।

रूपमिति । चाक्षुषमन्वन्तरे तदन्ते यं उदधिसंप्लवस्तस्मिन् । वैवस्वत इति भाविनी संज्ञा सत्यव्रतस्य । प्रतिमन्वन्तरावसानेऽपि प्रलयः श्रूयते विष्णुधर्म्मोत्तरे प्रथमकाण्डे । "मन्वन्तरे परिक्षीणे कीदृशी द्विज जायते" इत्यादि श्रीवज्रप्रश्नस्य मन्वन्तरे परिक्षीणेइत्यादि श्रीमार्कण्डेयदत्तोत्तरे । "ऊर्म्मिमाली महावेगः सर्व्वमावृत्य तिष्ठति । भूर्लोकमाश्रितम् सर्व्वं तदा नश्यति यादव । न विनश्यन्ति राजेन्द्र विश्रुताः कुलपर्व्वताः । नौर्भूत्वा तु मही देवीत्यादि । एवमेव मन्वन्तरेषु संहार इत्यादि प्रकरणम् श्रीहरिवंशे तदीयटीकासु च स्पष्टमेव। अतश्चाक्षुषेत्युपलक्षणमेव ज्ञेयम् ॥ १५ ॥ १६ ॥

---

सुबोधिनी

स्वस्थेहिदेशकालेसर्वाश्रमधर्माइतियज्ञानंतर ऋषभकथापूर्वोक्तक्रमस्योत्तरत्वविवक्षितत्वादष्टमादिपदप्रयोगः। मेरुदेवीमेरुदुहितामातृपुत्रत्वंवारयितुंतुशब्दः प्रतिपक्षशंकाभावार्थंवा अयंतुगुणावतारस्यविष्णोरवतारस्तदाह उरुक्रमइतिऋषभ निरूपितसन्यासधर्मेमुख्यंधैर्यसाध्यं साधनम् अंत्याश्रमत्वाच्च सर्वाश्रमनमकृतमएषाहिपराकाष्ठानिवृत्तिमार्गे नत्वन्याश्रमित्वेनपाषंडत्वसंभावनेतिनमस्कृतंपृथुस्त्वावेशीपृथोः सर्वधिवपुरितिवचनाच्च अयंपुमानवसइतिवचनात् श्रेयःप्रजापालनमेवराज्ञामितिवचनात्सर्वात्मकत्वाच्चभगवतः सर्वहितकारीधर्मःऋषभधर्मादप्युत्तमइतिपृथोर्नवमत्वम् ॥ १३ ॥

ननुकथंवेदनादवतारः तत्राहः ऋषिभिर्याचितइति तत्रापिनसाक्षात्किंतुपृथुशरीरेदुग्धाअदुग्धदोग्धावा अलौकिकत्वार्थेछांदसपदप्रयोगःइमामोषधीरितिद्विकर्मत्वंकर्मद्वयस्याप्यभीष्टत्वात्एवंसर्वेषु द्विकर्मकेषुबोद्धव्यं विशेषणपूरकाइतिसंबोधनेभवद्भिरेवबहुदोहनेनसर्वपूरितमितिज्ञापितंदोहनमेवावतारकार्यंनजीवसाध्यमितितेनायंसः तेनहेतुनापृथुर्नारायणइत्यर्थः विशेषमाहउशत्तमः एवंसर्वोपकारःअवांतरेष्वपिदुर्लभइतिअतिकमनीयइत्यर्थः ॥ १४ ॥

एवंक्षत्रियभावेनावतारं निरूप्यवैश्यभावेनचतुष्टयमाहरूपमित्यादित्रिभिः । वचनेनकार्यसिद्धिर्वैश्यतासत्यानृतंतुवाणिज्यमितिवचनाद्वेकंवंचकमपरंतविपरीतंच चाक्षुषमन्वंतरानंतरंप्रलयोपाधितइति मायिकत्वंकेचिदाहुः वस्तुतस्तुस्वायंभुवादीनांक्रमानियमेननप्रतिकल्पंचतुर्दशत्वमधिकारिणांमुक्तिसंभवात्तस्माच्चाक्षुषएवकदाचिच्चतुर्दशो भवतिकल्पेषुसात्त्विकादिविभेदान्मुख्यस्यप्राथम्यं सात्त्विकानिचत्वारिइतरयोः पंचपंचअतोबहुवाक्यानुरोधात्उपपत्तिसंभवाच्च नप्रलयस्यमायिकत्वंमार्कंडेय दृष्टस्यतुतत्रैवस्फुटंप्रति पादितामित्यदोषः पृथिव्यादेवरूपत्वात्नौकारूपतापिभवति सचमन्वंतरांतरेविवस्वतउत्पन्नएव अस्मिन्मन्वंतरेऽधिकारीभवतिअतोनमायि कत्वंभक्तपरिपालनमवतारधर्मः वैवस्वतमनुरितिभाविनीसंज्ञा ॥ १५ ॥

कापट्येनैवामृतप्रयत्नार्थंप्रवृत्तेः कूर्मस्यापिवंचकाहितकारित्वादत्रप्रवेशः पूर्वकल्पस्थत्वान्मत्स्यस्यनक्रमोवाधकःवचनाधिक्यात्एकादशत्वएवमुत्तरत्रापिउदधिमथ्नतां सुरासुराणांसंबंधिमथनसाधनंमंदराचलंधृतवान् कमठः कच्छपः पृष्ठेनधारणमवतारसाध्यंजलंह्यनाधारेनतुपृष्ठस्यापि कठत्वात् कथंधारणं संभवतितत्राहविभुरिति ॥ १६ ॥

---

श्रीविश्वनाथचक्रवर्ती ।

नाभेराग्नीध्रपुत्रादृषभो जातः ॥ १३ ॥

पार्थिवं वपुः राजदेहं पृथुरूपम् । पार्थवमिति पाठे पृथुसम्बन्धि । ओषधिरित्युपलक्षणम् इमाम् पृथ्वीम् सर्व्वाणि वस्तूनि दुग्ध अदुग्ध । अङ्ग गमामाय अर्थः । तेन हेतुना सोऽयमवतार उशत्तमः कमनीयतमः वशकान्तावित्येतस्मात् ॥ १४ ॥

चाक्षुषे मन्वन्तरे य उदधिसंप्लवस्तस्मिन् । चाक्षुषान्तरसंप्लव इति च पाठः महीमय्याम् नावि नौकारूपायां मह्यामित्यर्थः । अपात रक्षितवान् । वैवस्वत इति भाविनी संज्ञा । यद्यपि मन्वन्तरावसाने प्रलयो नास्ति तथापि केनचित् कौतुकेन सत्यव्रताय माया दर्शिता

धान्वन्तरं द्वादशमन्त्रयोदशममेवच।
अपाययत् सुरानन्यान्मोहिन्या मोहयन् स्त्रिया॥ १७॥
चतुर्द्दशं नारसिंहं विभ्रद्दैत्येन्द्र मूर्ज्जितम्।
ददार करजैर्वक्षस्येरकांकटकृद्यथा॥ १८॥
पञ्चदशं वामनकं कृत्वागादध्वरं वलेः।
पदत्रयं याचमानः प्रत्यादित्सुस्त्रिविष्टपम्॥ १९॥
अवतारे षोडशमे पश्यन् ब्रह्मद्रुहोनृपान्।
त्रिःसप्तकृत्वः कुपितोनिःक्षत्रामकरोन्महीम्॥ २०॥

श्रीविश्वनाथचक्रवर्त्ती।

यथा मार्कण्डेयायेति श्रीधरस्वामिपादाः। विष्णुधर्म्मोत्तरे तु। "मन्वन्तरे परीक्षीणे कीदृशी द्विज जायते" इत्यादिवज्रप्रश्नान्ते मार्कण्डेयोत्तरम्। उर्म्मिमाली महावेगः सर्व्वमावृत्य तिष्ठति। भूर्लोकमाश्रितं सर्व्वं तदा नश्यति यादव। न विनश्यन्ति राजेन्द्र विश्रुताः कुलपर्व्वताः। नौर्भूत्वा तु महीदेवीत्यादिः। एवमेव मन्वन्तरे तु संहार इत्यादि प्रकरणमतएव भागवतामृते प्रतिमन्वन्तरान्त एव प्रलय उक्तः। श्रीहरिवंशे तदीयटीकासु च। तदप्यत्र चाक्षुष एवोक्तः सत्यव्रतस्य मनोर्मत्स्यदेवपरमभक्तत्वाद्भक्तोत्कर्षादेव भगवत्प्रादुर्भावस्याप्युत्कर्षात् भक्तेच्छोपात्तदेहायेत्यादिभिर्युक्तिसिद्धात् सर्व्वमन्वन्तराण्येवोपलक्षयति॥ १५॥
सुरासुराणाममृतोत्पादनार्थमिति शेषः। कमठरूपेण कच्छपरूपेण॥ १६॥

सिद्धान्तप्रदीपः।

ऋषभावतारमाह अष्टमइति सर्वाश्रमनमस्कृतम् सर्वाश्रमेभ्यः उत्कृष्टम् पारमहंस्यंवर्त्म॥ १३॥
पृथ्ववतारमाह पार्थिवंवपुः राजशरीरम् भेजेप्राप्तः इमांपृथिवीम् ओषधीः दुग्धअडभावआर्षः तेनपृथिवीदोहनेन उशत्तमः कमनीयतमः १४
सदेवोमात्स्यंरूपंजगृहे एकीभूतत्त्वाच्चक्षुषाग्राह्याः चाक्षुषाउदधयः तैः संप्लवः प्रलयस्तस्मिन् "आसीदतीतकल्पान्तेब्राह्मोनैमित्तिकोलयइतिवक्ष्यमाणो वैवस्वतम् तद्रूपेणजनिष्यमाणम् सत्यव्रतम् अपात् रक्षितवान्॥ १५॥
कमठरूपेणकूर्मरूपेणादभ्रेदधार॥ १६॥

भाषा टीका।

अष्टम, नाभि राजा की पत्नी मेरु देवी मै ऋषभ रूपसे अवतीर्ण हुए। और समस्त आश्रमोको धैयधीरों का मार्ग पारमहंस्य आश्रम का आचरण किया॥ १३॥
ऋषियों की प्रार्थनासे 'नवम' अवतारमै पृथुरूप धर कर इस पृथवी रूपागौसे औषधि धान्यादिकों का दोहनकिया। हे विप्र गण! इसीसै यह अवतार वड़ा सुन्दर है॥ १४॥
चाक्षुष मन्वंतर मै जब समुद्रों के बढनेसे प्रलय होगयाथा तव भगवानने मत्स्य रूप ग्रहणकर वैवस्वत को पृथवी रूपनौकामें बैठाकर उसकी रक्षाकी॥ १५॥
एकादश कूर्म अवतार है कि जबसुर असुर समुद्र मथन करतेथे और मंदराचल डूब गयाथा तबउसको पीठपर धारणकियाथा॥ १६॥

श्रीधरस्वामी।

धन्वन्तर्यवतारमाह। धान्वन्तरं धन्वन्तरिरूपम्। द्वादशमादिप्रयोगस्त्वार्षः। त्रयोदशमेव रूपम् तच्चरितेन सह दर्शयति अपाययदिति। अत्र सुधामित्यध्याहारः। मोहिन्या स्त्रिया रूपेण अन्यानसुरान् मोहयन् धन्वन्तरिरूपेणामृतमानीय मोहिन्या अपाययदित्यर्थः॥ १७॥
नृसिंहावतारमाह। नारसिंहं रूपं विभ्रत्। एरका अग्रन्थितृणविशेषः॥ १८॥
वामनावतारमाह। दुष्टानां मदं वामनयतीति वामनकं रूपं ह्रस्वं वा। प्रत्यादित्सुः तस्मादाच्छिद्य ग्रहीतुमिच्छुः॥ १९॥
परशुरामावतारमाह अवतार इति। त्रिः त्रिगुणं यथा भवति तथा सप्तकृत्वः सप्तवारान् एकविंशतिवारान् इत्यर्थः॥ २०॥

दीपनी ।

( कटकृदिति । कटः पुंसिकिलिञ्जक इत्यमरः । ततकृततृणविशेषेणास्तरणनिर्म्मातेत्यर्थः ) १८ ॥
( पदत्रयमिति । अत्र पदशब्देन छलः पदं स्थानं पृथिव्यादिपादपरिमितभूमिश्च इति व्याख्या ज्ञेयः ) १९—२७ ॥

---

श्रीवीरराघवः ।

द्वादशमंवपुस्कधान्वंतरंधान्वंतराख्यजीवानु प्रवेशरूपमित्यर्थः त्रयोदशमंरूपंतुयन्मोहिन्याख्ययाऽन्यानसुरान्मोहयन्सुरानमृतमपाययत् तदेवमोहिनी रूपंत्रयोदशमित्यर्थः ॥ १७ ॥

नारसिंहं चतुर्दशंरूपंबिभ्रदूर्जितंवलिष्ठंदैत्येंद्रंहिरण्यकशिपुंवक्षसिकरजैर्नखैर्ददार यथाकटकृदास्तरणकृदेरकांस्तदर्थंतृणविशेषान्विदारयातितद्वत् ॥ १८ ॥

वामनकंवामनाख्यंपंचदशंवपुः कृत्वाभूत्वाबलेरध्वरंयज्ञवाटमगाज्जगाम प्रयोजनमाहत्रिविष्टपंप्रत्यादित्सुराहृत्येंद्रायदातुमिच्छुः पदत्रयंपदत्रयव्याजेनत्रिलोकींयाचमानः याचिष्यमाणोऽध्वरमगादित्यन्वयः ॥ १९ ॥

षोडशमेऽवतारेभार्गवरामाख्योनृपान्कार्त वीर्यादीन्ब्रह्मद्रुहः ब्रह्मकुलद्रोहकान्नृपान्कुपितः त्रिसप्तकृत्वःएकविंशतिवारंमहींनिःक्षत्रां क्षत्रबीजरहितामकरोत् ॥ २० ॥

---

श्रीविजयध्वजः ।

द्वादशमवतारंधान्वंतरंधन्वंतर्याख्यरूपंसंबंधिनंविदुः सहरिर्यस्मिन्अवतारेमोहिन्यामोहकशक्तिमत्यास्त्रियास्त्रीमूर्त्याऽन्यानसुरान्मोहयन्सुधामपाययत्तं त्रयोदशममेवविदुरित्येकान्वयः चशब्दोमोहयन्नित्युक्त्यामायामयंतद्रूपमितिशंकानिरासार्थः ॥ १७ ॥

नरसिंहसंबंधिविग्रहंबिभ्रत्सभगवान्करजैर्नखैरूर्जितंहिरण्यकशिपुम् ऊरौअंकेनिपात्यतथाददार यथाकटकृत्तृणास्तरणकर्ता एरकान्दीर्घाकारांस्तृणविशेषान्ददारदारयाति तमवतारंचतुर्दशंविदुरित्येकान्वयः ॥ १८ ॥

त्रिविष्टपंत्रैलोक्यंप्रत्यादित्सुःबलेराच्छिद्यइंद्रायदेदातुकामःतदर्थंबलिपदत्रयंयाचमानः सपद्मनाभःपंचदशमवतारंवामनसंबंधिनंकृत्वाबलेरध्वरंयज्ञमगादित्यन्वयः ॥ १९ ॥

षोडशमेअवतारेसभगवान्जमदग्निसुतो भूत्वाब्रह्मद्रुहः ब्रह्मद्रोहिणोनृपान्यच्छन्घ्नन्त्रिः सप्तकृत्वःएकविंशतिवारं महींनिःक्षत्रियां क्षत्रियजातिरहितामकरोदित्येकान्वयः । कुपिताकारंदर्शयन्नतुकुपितः । नहिईश्वरस्यकोपः संभवत्यशक्तस्यसः कामःक्रोधस्तथालोभस्तस्मादेतत्त्रयंत्यजेदितिहेयत्वात्तस्येति ॥ २० ॥

---

क्रमसंदर्भः ।

धान्वन्तरमिति । बिभ्रदित्युत्तरेणान्वयः । द्वादशम् धान्वन्तरं रूपं बिभ्रत् । त्रयोदशञ्च मोहिनीरूपं बिभ्रत् सुरानपाययत् सुधामिति शेषः केन रूपेण मोहिन्या स्त्रिया तद्रूपेणेत्यर्थः । किम् कुर्व्वन् अन्यानसुरान् मोहयन् धन्वन्तरिरूपेण सुधाञ्चोपहरन्निति शेषः । अजितस्यावतारा एते त्रयः ॥ १७ ॥ १८ ॥

पञ्चदशमिति । कृत्वा प्रकटयन् ॥ १९ ॥

अवतार इति । अवतारे श्रीपरशुरामाभिधे ॥ २० ॥

---

सुबोधिनी ।

एकस्यद्विरूपमाहधान्वंतरमिति । अत्रमादेशश्छांदसः द्वादशेमातीतिवाधन्वंतरिपदेनैव आयुर्वेदप्रवर्त्तनादेःस्पष्टत्वात् प्रकृतेत्वस्यार्थकथनात्नावतारप्रयोजनमित्युक्तंधान्वंतरमेवत्रयोदशम्एवंचशब्दौसंदेहविरोधनिवारकौ धान्वंतररूपंधन्वंतरेः संबंधिदेवकर्तृकपानकर्मत्वादमृतस्यनभगवत्कार्यमितिप्रयोजक कर्त्तरिसुरापयकर्तृत्वेनोक्ताः अर्थादमृतमत्रत्रयोदशस्यै वचरित्रमुच्यतेअपाययदितिअन्यानसुरान्स्त्रियाकरणभूतयाअमोहयदितिच अयमभिप्रायः नहिभगवान्स्त्रीरूपेणसर्वैर्दृश्यते सुरैर्भगवद्रूपेणैवदृश्यते राहुसूचनाच्चअतोवस्तुतोधन्वंतरिरूपमेव आकृत्यंतरबोधनंतुसामर्थ्यात् अमृतहस्तस्यनिर्गतस्यविच्छेदेनास्यरूपस्यदर्शनात् त्रयोदशत्वम् ॥ १७ ॥

एवंचतुष्टयंनिरूप्यपुनरन्येनोत्कृष्ट प्रकारेणपरंपरांनिरूपयितुं नारायणवतन्नारसिंहंनिरूपयातिपुष्टिमार्गीयमिति पूर्वस्माद्विशेषः पूर्वस्यक्रमस्यविवक्षितत्वाच्चतुर्दशत्वं नरसिंहसंबंधिनारसिंहरूपं द्विरूपत्वेनालौकिकत्वात्पुष्टित्वम् अत्रहिभक्तिरेवमुख्यायतःस्वीयमपि पूर्वस्यक्रमस्यविवक्षितत्वाच्चतुर्दशत्वं ... दैत्येंद्रंहत्वादैत्यंचइंद्रपदेनाबध्यताचसूचितावधेहेतुरूर्जितमितिकरजैर्नखैः ऊरावितिब्रह्मवाक्यसत्यकरणार्थमएरका हत्वातदीयंपालितवान्दैत्येंद्रंहत्वादैत्यंचइंद्रपदेनाबध्यताचसूचिता कटतृणविशेषः नखैर्दारणेदृष्टांतः कटकृद्यथेतिलोकहितार्थंतद्धरतिसूचितम् ॥ १८ ॥

ततः सप्तदशे जातः सत्यवत्यां पराशरात् ।
चक्रे वेदतरोः शाखा दृष्ट्वा पुंसोऽल्पमेधसः ॥ २१ ॥
नरदेवत्वमापन्नः सुरकार्य्यचिकीर्षया ।
समुद्रनिग्रहादीनि चक्रे वीर्य्याण्यतः परम् ॥ २२ ॥

सुबोधिनी ।

पर्वमाकिमार्गेनवावतारानूकथयन्प्रथमंप्रह्लादरक्षको नृसिंहोमुख्यइतिमूलत्वेनकथितः ततोब्रह्मभावेनत्रयः त्रयश्चक्षत्रभावेनएको वैश्यभावेनपुनरग्रिमस्यमूलरूपमेकेनेतिनवधानिरूपणं भक्तिरनवच्छिन्नाननिवर्त्ततइति सायुज्यसेवारंभवत् कलेरग्रिमारंभइतिहेतुः कश्यपाददित्यांजातोवामनेनरूपेणब्रह्मचारी पंचदशः । अवामनोपिवामनकरूपंकृत्वाबलेरध्वरमगादिति भक्तहितार्थंस्वस्यधर्मस्यचान्यथाकरणंपूर्वस्माद्विशेषः प्रत्यादानंदत्तस्यपुनर्ग्रहणमइहपरमात्मनः पदत्रयंगमनेकामितोर्थ उत्तरार्द्धेनिरूपितःचरित्रंतुगमनमेव ॥ १९ ॥

क्षत्रियायांजातंपरशुरामरूपंषोडशम् । सप्तधाजननेतिबीजत्वंजातंपुनर्ब्राह्मणादुत्पन्नाःसमृद्धाःपुनः सप्तधाएवमेकविंशतिधानिःक्षत्रियापृथिवीकृतापितृवधस्यनिमित्तत्वेपिब्रह्मरक्षैवहेतुः ॥ २० ॥

---

श्रीविश्वनाथचक्रवर्त्ती

धान्वन्तरं धन्वन्तर्यवतारस्वरूपं द्वादशमं भवतीत्यन्वयः । सुधाकलसानयनं चास्य कर्म्म ज्ञेयम् । द्वादशमादि प्रयोगस्त्वार्षः । त्रयोदशमं रूपं बिभ्रत् सुरानपाययत् सुधामिति शेषः । केन रूपेण मोहिन्या स्त्रिया अन्यानसुरान् मोहयन् ॥ १७ ॥

एरका निर्ग्रन्थितृणविशेषः ॥ १८ ॥

प्रत्यादित्सुस्तस्मादाच्छिद्य ग्रहीतुमिच्छुः ॥ १९ ॥

सप्तकृत्वः सप्तवारान् । कीदृशान् त्रिः त्रिगुणितान् । अत्र सप्तकृत्व इति कृत्वसुचाभिहिताया अभ्यावृत्तिक्रियायाः पुनरभ्यावृत्तिगणनेन सुच् प्रत्ययः ॥ २० ॥

---

सिद्धांतप्रदीपः ।

नारसिंहरूपंबिभ्रत् दैत्येंद्रम् हिरण्यकशिपुम् एरकानिर्ग्रंथिस्तृणजातिः ॥ १७ ॥ १८ ॥

वामनावतारमाह वामनकम् ह्रस्वंरूपंकृत्वा प्रत्यादित्सुः आदातुमिच्छुः ॥ १९ ॥

परशुरामावतारमाह अवतारे इति ॥ २० ॥

---

भाषा टीका ।

द्वादश अवतार धन्वंतरि है कि जो अमृत का कलसलेकर समुद्र से निकले थे और त्रयोदश मोहनी अवतार है किजो सुंदरस्त्री रूपसे असुरों को मोहकर सुरगण को अमृतपान कराया ॥ १७ ॥

चतुर्दश, नृसिंह रूप धारण कर परम प्रबल दैत्यको नखों से विदारणकिया जैसा चटाई बनानेवाला एरका ( जिसमै बीचमै गांठनहीं होती ) तृण को विदीर्ण करता है तैसै ॥ १८ ॥

पंचदश, वामन रूप बनाकर बलिराजाके यज्ञमै गये और स्वर्ग पर्यंत लेने के इच्छासै तीनपाम पृथवी याचनाकी ॥ १९ ॥

षोडश अवतार मै, क्षत्रियों को ब्रह्मद्रोही देखकर परशुराम जीने कोपकर इस पृथवी को इकीसबेर निःक्षत्रिया क्षत्रियशून्यकी ॥ २० ॥

---

श्रीधरस्वामी ।

व्यासावतारमाह । तत इति । अल्पमेधसोऽल्पप्रज्ञान्पुंसो दृष्ट्वा तदनुग्रहार्थं शाखाश्चक्रे ॥ २१ ॥

रामावतारमाह । नरेति । नरदेवत्वं राघवरूपेण प्राप्तः सन् । अतः परमष्टादशे ॥ २२ ॥

एकोनविंशे विंशतिमे वृष्णिषु प्राप्य जन्मनी ।
रामकृष्णाविति भुवोभगवानहरद्भरम् ॥ २३ ॥
ततः कलौ संप्रवृत्ते संमोहाय सुरद्विषाम् ।
बुद्धोनाम्नाञ्जनसुतः कीकटेषु भविष्यति ॥ २४ ॥

श्रीधरस्वामी ।

रामकृष्णावतारमाह । एकोनेति । विंशतितम इति वक्तव्ये तकारलोपश्छन्दोऽनुरोधेन । रामकृष्णावित्येवं नामनी जन्मनीप्राप्य ॥ २३ ॥
बुद्धावतारमाह । तत इति । अञ्जनस्यसुतः । जिनसुत इति पाठे जिनोऽपि स एव । कीकटेषु मध्ये गयाप्रदेशे ॥ २४ ॥

---

श्रीवीरराघवः ।

ततः सप्तदशेऽवतारेपराशरात्सत्यवत्यांजातोबादरायणइतिप्रसिद्धः अल्पमेधसःकृत्स्नवेदतदर्थावगमोपयुक्तबुद्धिशून्यान्पुंसःपुरुषान्
दृष्ट्वावेदएवतरुस्तस्यशाखाश्चक्रेऋग्यजुः सामादिभेदेनतदवांतरभेदेनचविभक्तवानित्यर्थः ॥ २१ ॥
नरदेवत्वमितिअतःपरमष्टादशेऽवतारेसुरकार्यंरावणवधरूपंकर्तुमिच्छयानरदेवत्वंक्षत्रियत्वंप्राप्तः श्रीरामरूपेणावतीर्णइत्यर्थः समुद्र
विषयकोनिग्रहः आदिर्येषांतानिवीर्याणिकर्माणिचक्रे ॥ २२ ॥
एकोनविंशेविंशतिमेचावतारे भगवान्वृष्णिषुयादवेषुरामकृष्णावितिजन्मनीरामः बलरामःकृष्णश्चेतिद्वेजन्मनीप्रादुर्भावरूपे प्राप्यभु-
वोभारमहरत् रामस्त्वेकोनविंशःकृष्णस्तुविंशतितमोवतारइत्यर्थः ॥ २३ ॥
ततःकलौयुगेसंप्रवृत्तेसतिसुरद्विषामीर्हितानामसुराणांवासंमोहनार्थंभगवान् कीकटेषुजिनस्यसुतोभविष्यतिनाम्नाबुद्ध इति प्रसिद्धः
अयमेव विंशोवतारः ॥ २४ ॥

---

श्रीविजयध्वजः

ततःसहरिः सप्तदशेऽवतारेपराशरात्सत्यवत्यांजातोऽल्पमेधसः अल्पप्रज्ञान्पुरुषान्दृष्ट्वा वेदतरोःशाखाश्चक्रेकृतवान्रामावतारात्पूर्वं
व्यासावतारस्त्वंज्ञेयम् ॥ २१ ॥
अतःपरंसप्तदशात्परंपश्चादष्टादशावतारेदेवकार्यकरणेच्छयानरदेवत्वंराजत्वंप्राप्तः समुद्रनिग्रहादीनिसेतुबंधनपूर्वाणिवीरकर्माणि
कृतवानित्येकान्वयः ॥ २२ ॥
सभगवानेकोनविंशेविंशतितमेऽवतारेवृष्णिषुनाम्नारामकृष्णावितिजन्मनीप्राप्यभुवो भरमसुरपृतनालक्षणमहरदित्येकान्वयः जन्मनी-
इतिद्विवचनाद्बलभद्रेविशेषावेशोज्ञातव्यः ॥ २३ ॥
ततःकलौयुगेसंप्रवृत्तेसति सुरद्विषांत्रिपुरवासिनांदैत्यानामयोग्यानांवेदमार्गेप्रवर्त्तमानानांमोहायनाम्नाबुद्धः कीकटेषुमगधविषयेषु
जिनसुतः जिनेनसुतत्वेनवृतः भविष्यतीत्यन्वयः ॥ २४ ॥

---

क्रमसन्दर्भः ।

ततः सप्तदश इति स्पष्टम् ॥ २१ ॥
नरदेवत्वमिति । अस्य स्कान्दे श्रीरामगीतायां विश्वरूपं दर्शयतो ब्रह्मविष्णुरुद्रकृतस्तुतिः श्रूयते ॥ २२ ॥
एकोनविंश इति । भगवानिति साक्षात् श्रीभगवत एवाविर्भावोऽयं न तु पुरुषसंज्ञस्यानिरुद्धस्येति विशेषप्रतिपत्त्यर्थं तत्र तस्य सा-
क्षाद्रूपत्वात् श्रीकृष्णरूपेण निजांशरूपत्वाद्रामरूपेणापि भारहारित्वं भगवत एवेत्युभयत्रापि भगवानहरद्भरमिति श्लिष्टमेव । अतो राम-
स्याप्यनिरुद्धावतारत्वं प्रत्याख्यातम् । श्रीकृष्णस्य वासुदेवत्वात् श्रीरामस्य च सङ्कर्षणरूपत्वात् युक्तमेव च तदिति ॥ २३ ॥ २४ ॥ २५ ॥

---

सुबोधिनी ।

ततःउपरिचरवसोः मत्स्यगर्भाज्जातायांदासीकन्यायांतथापराशराज्जातो वेदव्यासः सप्तदशः प्रकृतेतृतीयः वेदस्यतत्त्वंपूर्वंनिरूपितं
अनंतमूर्त्तेर्यज्ञस्यब्रह्मशिरसः एकामूर्तिर्यावतावेदभागेनप्रतिपाद्यते साएकाशाखासएवमन्याश्चयद्यपि ब्राह्मणेनसर्वोवेदः पठनीयस्तथापि
प्रमेयबलमालंब्य एकैवमूर्तिःसर्वामूर्त्तयः[illegible]इत्यर्थः २१

**अथासौ युगसन्ध्यायां दस्युप्रायेषु राजसु ।**
**जनिता विष्णुयशसो नाम्ना कल्किर्जगत्पतिः ॥ २५ ॥**
**अवतारा ह्यसंख्येया हरेः सत्त्वनिधेर्द्विजाः ।**
**यथाविदासिनः कुल्याः सरसः स्युः सहस्रशः ॥ २६ ॥**

### सुबोधिनी ।

भिन्नप्रक्रमार्थैरघुनाथादिरूपत्रयंवक्तुं ततःपरमित्युक्तमक्षत्रियभावोत्रविवक्षितः । यद्यपिसोमसूर्यभावेनद्विविधः तथापिसोमस्यवृद्धिक्षयरूपत्वेनद्विरूपत्वात्त्रेधानिरूपणंनरदेवत्वंराजत्वं सुरकार्यंरावणवधः अवतारचरित्रंसमुद्रनिग्रहः । तथामरुस्थलीकरणंपरशुरामजयः बालिवधश्चेत्यादिशब्दार्थः ॥ २२ ॥

अतःपरमष्टादशेवलरामेआवेशःकृष्णावतारः । एकोनविंशेविंशतिमे । अत्रतकारलोपःछांदसःवस्तुतः सोमस्यैकत्वादेकश्लोकेन निरूपणंवार्ष्णेयइतियक्तव्ये अत्रादयास्तद्राजाइतितद्राजसंज्ञायां तद्राजस्यवहुषु ॥ २ । ४ । ६२ ॥ इति प्रत्ययलोपेवृष्णिावित्युक्तम् । अत्रहिचतुर्णामवताराणांकृष्णरूपंस्थानं नारायणांशस्यकेशस्यसुतपावृष्णिप्रसन्नस्य भगवतश्चतत्रैकमेवरूपंवहुवृष्णिषुप्राप्तिरूपत्वेनविवक्षितंवलरामस्त्वेकएवएवंपंचावताराः जन्मद्वयंतदुक्तंवृष्णिषुप्राप्यजन्मनीइतिततश्चलोकेनामद्वयं प्रसिद्धमित्याहरामकृष्णावितिजन्मविशेषणांकार्यंतुभगवतैव कृतमित्याहभगवानहरद्भरमितिभूभारहरणम् अवतारकार्यंसामान्यतोलोकप्रसिद्धम् ॥ २३ ॥

भिन्नप्रक्रमार्थकलौसम्यक्प्रवृत्तेतद्धर्मप्रचारेजाते सुरद्विषांदैत्यराक्षसानांवैदिकेषूत्पन्नानांवेदत्यजनार्थंकीकटदेशेषुजिनस्यअजिनस्यवासुतोवुद्धोजातइत्यर्थः ॥ २४ ॥

---

### श्रीविश्वनाथचक्रवर्ती ।

अल्पमेधसोऽल्पप्रज्ञान् । चक्रे व्यासः ॥ २१ ॥

नरदेवत्वं श्रीरामत्वं समुद्रनिग्रहादीनि समुद्रनिग्रहस्यैवाद्यापि सेतुबन्धरूपेण दृश्यमानत्वात् तत्रैव च महैश्वर्याविष्काराच्च तस्यैव प्राधान्येन निर्देशः ॥ २२ ॥

विंशतितम इति वक्तव्ये तकारलोपश्छन्दोऽनुरोधेन । रामकृष्णाविति नामभ्यामित्यर्थः । जन्मनी प्रादुर्भावद्वयम् प्राप्येत्यर्थः ॥२३॥
अञ्जनसुतोऽजिनसुतश्चेति पाठद्वयम् । कीकटेषु मध्ये गयाप्रदेशे ॥ २४ ॥

---

### सिद्धान्तप्रदीपः ।

श्रीमद्वेदव्यासावतारमाह ॥ ततइति ॥ २१ ॥
श्रीद्रामावतारमाह ॥ नरदेवत्वमिति ॥ २२ ॥
एकोनविंशेविंशतितमे अवतारे रामकृष्णावित्येवं जन्मनीप्राप्यभुवोभरमहरत्वरामःएकोनविंशः श्रीकृष्णःविंशतितमःअवतारः॥ २३ ॥
एकविंशः अवतारःकीकटेषु अजिनस्यसुतः नाम्नावुद्धोभविष्यति ॥ २४ ॥

---

### भाषा टीका ।

सप्तदश अवतारमै पराशर ऋषीसै सत्यवती मैअवतीर्णहो पुरुषों को अल्प बुद्धि देखकर वेदरूप वृक्षकी शाखाविभागकिया ॥२१॥
देवताओंके कार्य सिद्ध करनेकी इच्छाकर नरदेव रूपअर्थात् श्रीराम रूपधरकर समुद्र बंधन आदिक आतिमानुष कर्मकिये ॥ २२ ॥
ऊन विंश और विंश अवतार मै यदुवंश मै राम ( बलदेवजी ) कृष्ण रूपसै प्रकट होकर भगवान नै भूमिकाभारहरणकिया ॥२३॥
जब कलियुग प्रवृत्त होजायगा तब देवरूपी दैत्यों को मोह करने को कीकट देश मै जिन के ( अथवा अंजन के ) पुत्र बुधनाम सै अवतीर्ण होंगे ॥ २४ ॥

---

### श्रीधरस्वामी ।

कल्क्यवतारमाह । अथेति । युगसंध्यायाम् । कलेरन्ते विष्णुयशसो ब्राह्मणात्सकाशाज्जनिता जनिष्यते ॥ २५ ॥

ऋषयोमनवोदेवा मनुपुत्रा महौजसः ।
कलाः सर्वे हरेरेव सप्रजापतयः स्मृताः ॥ २७ ॥
एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम् ।
इन्द्रारिव्याकुलं लोकं मृडयन्ति युगे युगे ॥ २८ ॥

श्रीधरस्वामी ।

अनुक्तसर्वसंग्रहार्थमाह । अवतारा इति । असंख्येयत्वे दृष्टान्तः । यथेति । अविदासिनः अपक्षयशून्यात् । दसु उपक्षय इत्यस्मात् सरसः सकाशात्कुल्याः क्षुद्रप्रवाहाः ॥ २६ ॥

विभूतीराह । ऋषय इति ॥ २७ ॥

तत्रविशेषमाह । एते चेति । पुंसः परमेश्वरस्य केचिदंशाः केचित्कलाविभूतयश्च । तत्र मत्स्यादीनामवतारत्वेनसर्वज्ञत्वसर्वशक्तिमत्त्वेऽपियथोपयोगमेवज्ञानक्रियाशक्त्याविष्करणम् । कुमारनारदादिष्वाधिकारिकेषु यथोपयोगमंशकलावेशः । तेषुकुमारादिषु ज्ञानावेशः पृथ्वादिषु शक्त्यावेशः कृष्णस्तुभगवान्साक्षान्नारायण एव । आविष्कृतसर्वशक्तित्वात् । सर्वेषां प्रयोजनमाह । इन्द्रारयो दैत्यास्तैर्व्याकुलमुपद्रुतं लोकं मृडयन्ति सुखिनं कुर्वन्ति ॥ २८ ॥

---

दीपनी ।

एते चांशकला इति । तथा च ब्रह्मसंहितायाम् । रामादिमूर्त्तिषु कलानियमेन तिष्ठन् नानावतारमकरोद् भुवनेषु किन्तु । कृष्णः स्वयं समभवत् परमः पुमान् यो गोविन्दमादिपुरुषं तमहं भजामि । इति व्याख्यालेशः ॥ २८—३१ ॥

---

श्रीवीरराघवः ।

अथासौजगत्पतिःभगवान्युगयोः कलिकृतयुगयोः संध्यायांसंधौराजसुदस्युप्रायेषुचौरप्रायेषुकेवलमधर्मबहुलेषुसत्सुतद्धधार्थंविष्णुयशसोजनिता विष्णुयशसः पुत्ररूपेणावतरिष्यतिसचनाम्नाकल्किरिति प्रसेत्स्यति ॥ २५ ॥

दिङ्मात्रमेतद्दर्शितमित्यभिप्रायेणाहअवताराइतिहेद्विजाः सत्त्वनिधेः शुद्धसत्त्वमूर्त्तेर्भगवतोऽनिरुद्धादेतेऽवताराअन्येप्यसंख्येयाःस्युः प्रवर्त्तंते यथाअविदासिनोऽशोष्यात्सरसः सहस्रशःकुल्याःस्युः स्पंदंतेतद्वत् कुल्याःक्षुद्रनद्यः ॥ २६

केतइत्यतआहऋषयः इतिऋषयोमंत्रद्रष्टारोवशिष्ठादयो मुनयःकेवलस्वात्मपरमात्मयाथात्म्यमननशीलाः शुकादयः देवाइंद्रादयःमनुपुत्राःप्रियव्रतादयः महौजसः महाप्रभावाः सप्रजापतयः दक्षादिभिः सहिताः प्रजापतयश्चेत्यर्थः तएतेसर्वेहरेरेवकलाः स्मृताःभगवदंशेनैवसंभूताइत्यर्थः तथाचोक्तंभगवता "यद्यद्विभूतिमत्सत्त्वंश्रीमदूर्जितमेववा तत्तदेवावगच्छत्वंममतेजोंऽशसंभवमिति ॥ २७ ॥

( श्रीकृष्णायनमः ) ॥ एतद्वचनार्थमेवाहएतइतिएतेऋषिप्रभृतयस्तुपुंसोऽनिरुद्धाख्यस्यांशकलाःअंशांशसंभूताः कृष्णस्तुभगवान्स्वयमितिश्रीकृष्णस्यपूर्णावतारत्वमुक्तम् उदाहृतभगवद्वचनेन विभूत्यादिमतांजंतूनांममत्वेनानिर्दिष्टश्रीकृष्णस्य तेजोंशसंभवत्वंश्रीकृष्णस्य पूर्णत्वंस्थापितम् अत्रापिभगवानित्यनेनपूर्णषाड्गुण्यत्वमवगतम् यद्वाअत्रैतदित्यनेनपूर्वोक्तेषुहिरण्यगर्भसनकादिषुकेषांचिद्वराहनारायणमत्स्यकूर्ममोहिनीनृसिंहवामन श्रीरामावताराणांपूर्णानांसत्त्वेपि छत्रिन्यायेनसर्वेप्यवताराः परामृश्यंतेतत्रपूर्णत्वंनामषाड्गुण्यपूर्णत्वेनरूपेणसाक्षादवतीर्णत्वम् अंशांशसंभूतत्वंनामतत्तज्जीवांतरात्मतयावस्थितस्यषाड्गुण्यपूर्णस्यभगवतःकेनाप्यैश्वर्यवीर्यादिगुणलेशेनजीवद्वाराविर्भूतेनविशिष्टतयासंजातत्वं निरंशस्यब्रह्मस्वरूपस्यैकदेशभेदेनाविर्भावासंभवात् ननुधर्मिस्वरूपैकदेशवाचिनोंशशब्दस्यकथंगुणपरत्वमितिचेन्न अपृथक्सिद्धविशेषणस्याप्यंशशब्दवाच्यत्वाद्विशिष्टवस्त्वेकदेशत्वस्यैवांशपदप्रवृत्तिनिमित्तत्वाद्विशिष्टवस्त्वेकदेशत्वंचविशेषणविशेष्ययोरेकदेशतयाद्वयोरप्यविशिष्टंवाराहाद्यवताराणांपूर्णत्वंतुतत्तत्पुराणादिभ्यप्रावगंतव्यं सर्वावतारसाधारणप्रयोजनमुपसंहरतिइंद्रेतिइंद्रारिभिरसुरादिभिर्व्याकुलमुपद्रुतंलोकंयुगेयुगेप्रतियुगंमृडयंति ॥ २८ ॥

---

श्रीविजयध्वजः

अथबुद्धावतारादनंतरमसौजगत्पतिः पद्मनाभोयुगसंध्यायांप्राप्तायाराजसुदस्युप्रायेषुबहुलंचोरेषुसत्सु नाम्नाकल्किनाम्नाविष्णुयशसोविप्राज्जनितोत्पत्स्यतीत्येकान्वयः ॥ २५ ॥

हरेरवताराणामनंतत्वादनंतपुरुषायुषापिसमापयितुंनास्माकंशक्तिरस्तीत्यभिप्रेत्याह अवताराइति । हेद्विजाः सत्त्वनिधेर्बलज्ञानादिमहागुणनिधानस्यहरेरवताराअसंख्येयाःहियस्मात्तस्मात्प्राधान्यतः संख्याताः [illegible] यथेति

श्रीविजयध्वजः

यथाविदासिनउन्नतस्थलातभिन्नाद्वीसरसः सहस्रशः कुल्याः क्षुद्रमेव स्युरिति । इदमिदमतनिपर्ययाकेनतुयोगिनः । क्षुद्रनदीनांतेः संख्येयत्वेपिनहरेरवताराः संख्यातुंशक्यंतस्यवोधुरुवववारार्थमितिज्ञातव्यम् ॥ २६ ॥

इदानींप्रातिविंवांशानाह ऋषयइतिमनुपुत्राः प्रियव्रतादयः । प्रजापतिभिर्दक्षादिभिः सहिताएतेऋष्यादयः हरेः कलाः मिश्रांशाः स्मृतिषुउक्ताः ॥ २७ ॥

तर्हिकेस्वरूपांशाइतितत्राह एतइति सएवप्रथममित्यारभ्याथासावित्यंतेनप्रोक्ताएतेशेषशायिनः परमपुरुषस्यस्वांशकलाः स्वरूपांशावताराः नतत्रांशांशिनांभेदःप्रतिविंवांशवत् किमुक्तंभवति कृष्णोमेघश्यामःशेषशायीमूलरूपीपद्मनाभोभगवान्स्वयंतु स्वयमेव नशाखिशाखावत्भेदाभेदोपीतिभावइत्याह इन्द्रारिभिर्दैत्यैर्व्याकुलंजनंतत्स्थानंचयुगेयुगअवतीर्यमृडयंतिरक्षंतीत्यन्वयः ॥ २८ ॥

---

क्रमसन्दर्भः ।

अथ श्रीहयग्रीव-हरि-हंस-पृश्निगर्भ-विभु-सत्यसेन-वैकुण्ठाजित-सार्व्वभौम-विष्वक्सेन-धर्म्मसेतु-सुधाम-योगेश्वर-बृहद्भान्वादीनां शुक्लादीनाञ्चानुक्तानां संग्रहार्थमाह अवतारा इति । हरेरवतारा असंख्येयाः सहस्रशः सम्भवन्ति । हि प्रसिद्धौ । असंख्येयत्वे हेतुः । सत्त्वनिधेः सत्त्वस्य स्वप्रादुर्भावशक्तेः सेवधिरूपस्य । तत्रैव दृष्टान्तः यथेति । अविदासिनः उपक्षयशून्यात् सरसः सकाशात् कुल्यास्तत्स्वभावकृता निर्वारा अविदासिन्यः सहस्रशः सम्भवन्तीत्यर्थः । अत्र ये अंशावतारास्तेषु चैष विशेषो ज्ञेयः । श्रीकुमारनारदादिष्वाधिकारिकेषु ज्ञानभक्तिशक्त्यंशावेशः । श्रीपृथ्वादिषु क्रियाशक्त्यंशावेशः । क्वचित्तु स्वयमेवावेशः तेषां भगवानेवाहमिति वचनात् । अथ श्रीमत्स्यदेवादिषु साक्षादंशत्वमेव । तत्र चांशत्वं नाम साक्षाद्भगवत्त्वेऽप्यव्यभिचारितादृशतादिच्छावशात् सर्व्वदैवैकदेशतयैवाभिव्यक्तशक्त्यादिकत्वमिति ज्ञेयम् । तथैवोदाहरिष्यते । रामादिमूर्त्तिषु कलानियमेन तिष्ठन्नानावतारमकरोदित्यादि ॥ २६ ॥

अथ विभूतीराह ऋषय इति । कलाः विभूतयः अल्पशक्तेः प्रकाशाद्विभूतित्वं महाशक्तेस्त्वावेशत्वमिति भेदः ॥ २७ ॥

तदेवं परमात्मानं साङ्गमेव निर्द्धार्य प्रोक्तानुवादपूर्व्वकं श्रीभगवन्तमप्याकारेण निर्द्धारयति एत इति । एते चांशकला इत्येव पाठः स्वामिसम्मतः । ऊननवतितमे तथा टीकायां दर्शनात् । ततश्च एते पूर्व्वोक्ताः चशब्दादनुक्ताश्च प्रथममुद्दिष्टस्य पुंसः पुरुषस्य अंशकलाः केचित् अंशाः स्वयमेवांशाः साक्षादंशत्वेनांशांशत्वेन द्विविधाः । केचिदंशाविष्टत्वादंशाः । केचित्तु कला विभूतयः । इह यो विंशतितमावतारत्वेन कथितः स कृष्णस्तु भगवान् एष एव पुरुषस्याप्यवतारी भगवानित्यर्थः । अत्र "अनुवादमनुक्त्वैव न विधेयमुदीरयेदिति दर्शनात् श्रीकृष्णस्यैव भगवत्त्वलक्षणो धर्म्मः साध्यते न तु भगवतः श्रीकृष्णत्वमित्यायातम् । ततश्च श्रीकृष्णस्यैव भगवत्त्वलक्षणधर्म्मित्वे सिद्धे मूलत्वमेव सिद्ध्यति न तु ततः प्रादुर्भूतत्वम् । एतदेव व्यनक्ति स्वयमिति । तत्र च स्वयमेव भगवान् न तु भगवतः प्रादुर्भूततया न तु वा भगवत्ताध्यासेनेत्यर्थः । न चावतारप्रकरणे पठित इति संशयः । पौर्व्वापर्ये पूर्व्वदौर्व्बल्यं प्रकृतिवदिति न्यायात् । यथा अग्निष्टोमे यद्युद्गाता विच्छिद्याददक्षिणेन यजेत यदि प्रतिहर्त्ता सर्व्वस्वदक्षिणेनेति श्रुतेः । तयोश्च कदाचिद्द्वयोरपि विच्छेदे प्राप्ते विरुद्धयोः प्रायश्चित्तयोः समुच्चयासम्भवे च परमेव प्रायश्चित्तं सिद्धान्तितं तद्वदिहापीति । अथवा कृष्णस्तु भगवान् स्वयमिति श्रुत्या प्रकरणस्य बाधः । यथा शङ्करशारीरकभाष्ये । "श्रुत्यादिबलीयस्त्वाच्च न बाधइति सूत्रे ते हैते विद्याचित एवेति श्रुतिर्मनश्चिदादीनामग्नीनां प्रकरणप्राप्तं क्रियानुप्रवेशलक्षणमस्वातन्त्र्यं बाधित्वा विद्यात्वेनैव स्वातन्त्र्यं स्थापयति तद्वदिहापीति । अत एतत्प्रकरणेऽप्यन्यत्र कश्चिदपि भगवच्छब्दमकृत्वा तत्रैव भगवानिति भगवानहरन्दरामिति कृतवान् । ततश्चास्यावतारेषु गणना तु स्वयं भगवानप्यसौ स्वरूपस्थ एव । निजपरिजनवृन्दानामानन्दविशेषचमत्काराय किमपि माधुर्य्यं निजजन्मादिलीलया पुष्णन् कदाचित् सकललोकदृश्यो भवतीत्यपेक्षयैवेत्यागतम् । यथोक्तं ब्रह्मसंहितायाम् । रामादिमूर्त्तिषु कलानियमेन तिष्ठन्नानावतारमकरोद्भुवनेषु किन्तु । कृष्णः स्वयं समभवत् परमः पुमान् यो गोविन्दमादिपुरुषं तमहं भजामीति । अवतारश्च प्राकृतवैभवेऽवतरणमिति कृष्णसाहचर्य्येण रामस्यापि पुरुषांशत्वात्तयोः ज्ञेयः । अत्र तुशब्दोंऽशकलाभ्यः पुंसश्च सकाशात् भगवतो वैलक्षण्यं बोधयति । यद्वा अनेन तुशब्देन सावधारणा श्रुतिरियं प्रतीयते । ततश्च सावधारणा श्रुतिर्ब्बलवतीति न्यायेन श्रुत्यैव श्रुतमप्यन्येषां महानारायणादीनां स्वयं भगवत्त्वं गुणीभूतमापद्यते । एवं पुंस इति भगवानिति च प्रथममुपक्रमोद्दिष्टस्य तस्य शब्दद्वयस्य तत्सहोदरेण तेनैव चशब्देन प्रतिनिर्द्देशात् तावेव खल्वेताविति स्मारयति । उद्देशप्रतिनिर्द्देशयोः प्रतीतिस्थगिततानिरसनाय विद्वद्भिरेक एव शब्दः प्रयुज्यते तत्समो वा । यथा ज्योतिष्टोमाधिकारे वसन्ते ज्योतिषा यजेतेत्यत्र ज्योतिःशब्दो ज्योतिष्टोमविषयो भवतीति । इन्द्रारीति पद्यार्द्धं त्वत्र नान्वेति । तुशब्देन वाक्यस्य भेदनात् । तच्च तावतैवाकांक्षापरिपूर्त्तेः एकवाक्यत्वे तु चशब्द एवाकरिष्यत । ततश्चेन्द्रारीत्यत्र अर्थात् त एव पूर्व्वोक्ता मृडयन्तीत्यायाति । अत्र विशेषजिज्ञासायां कृष्णसन्दर्भो दृश्यः । तत्तत्प्रसङ्गे च दर्शयिष्यते ॥ २८ ॥

---

सुबोधिनी ।

अथेतिमहान्भिन्नक्रमः कूर्मप्रारभ्यबुद्धांतनपुरुषस्यावताराः कल्कीतुपुरुषस्यावतारइत्याह असावितिअत्रकूर्मः आदिकूर्मस्यधन्वंतरिविष्णोः नृसिंहः कालस्यवामनोविष्णोर्वैश्वानरस्यपरशुरामः संकर्षणस्यबलरामः व्यासोविष्णोर्ज्ञानस्यवासुदेवस्यरामः चतुर्णांकृष्णः वासुदेवस्यबुद्धइतियुगसन्ध्यायांजाता धासमयात्वाचानिसत्यैवराजानः भूमिश्चशून्यप्रायातथापि विद्यमानाअपिराजानोदस्यवः प्रायग्रहणा

[illegible]

## सुबोधिनी ।

विष्णुभक्तिप्रतिपादकब्राह्मणसंगेनकेनचिदतथात्वमितिअतएवविष्णुयशानामशंभलग्रामवैष्णवस्तस्यपत्न्यांभविष्यतीत्यर्थः जगत्पतिरित्य वतारप्रयोजनं जगतःक्षीणत्वात् पुनरुद्भवकर्त्तेत्यर्थः ॥ २५ ॥

अवतारणामेतावत्त्वंनिवारयति अवतारा इति ॥ सत्त्वनिधेरितिहेतुः पालनोद्भवादेरावश्यकसत्त्वाद्विजाग्रतिसंमत्यर्थसंबोधनंवहुकाल स्थित्वात् अवतारणांस्वरूपमाह यथाविदासिनइति अविदासिनः अक्षयजलस्यकुल्याः क्षुद्रप्रवाहादक्षिणादेशेप्रसिद्धाः ॥ २६ ॥

सर्वेषांसामान्यतःस्वरूपंप्रकृतिफलंचाहऋषयइतिद्वाभ्याम् ऋषयः अर्यमादयः मनवः स्वायंभुवादयः देवाः वस्वादयः मनुपुत्राः प्रियव्रतादयः महौजसः अन्येप्यतिवीर्यवंतः एतेसर्वेसत्त्वमूर्त्तेर्भगवतोविष्णोरिरक्षिपोः कलाधर्माविशिनइति अर्थः प्रजापतयो मरीच्यादयः चकारेणान्य संबंधंवारयतिस्मृताइतिप्रमाणं पूर्वोक्ताः कुमारादयस्तुकेचनअंशाः केचनकलाः तेचावतारावेशभेदेननिरूपिताः चकारादनुक्ताअपिपुंसो नारायणस्यब्रह्मांडमूर्त्तेः अंशाः कलाश्चकृष्णोतितथात्वंसामान्यतः प्राप्तंतुशब्देनव्यावर्त्तयतियस्यांशाः पुरुषादयः सभगवान्कृष्णइत्यर्थः सामान्यतः प्रयोजनमाहइन्द्रेतिइंद्रारयोदैत्याःतैर्व्याकुलंजगन्मृडयंतिसुखयंतिप्रतियुगंचैतेऽवताराः प्रतिकल्पंचतुर्दशमन्वंतराणीवअसंख्या तानामुक्तत्वात् यथाप्रयोजनं सर्वत्रावताराइतिबोद्धव्यम् ॥ २७ ॥ २८ ॥

---

## श्रीविश्वनाथचक्रवर्त्ती ।

विष्णुयशसो ब्राह्मणात् सकाशात् ॥ २५ ॥

हयग्रीवहंसाद्यनुक्तसर्व्वसंग्रहार्थमाह अवतारा इति । असंख्येयत्वे हेतुः सत्त्वानां शुद्धसत्त्वचिदानन्दानां निधेः सेवधिरूपस्य । तत्र दृष्टान्तः यथेति । अविदासिनः उपक्षयशून्यात् । दसु उपक्षय इत्यस्मात् सरसः सकाशात् कुल्यास्ततत्स्वभावकृता निर्वाराः अविदासिन्यः सहस्रशः स्युः असंख्याता इति श्लेषेणैते पुरुषाद्या एवावताराः ख्याताः अन्ये तु न सम्यक् ख्याता वर्त्तन्ते एवेति ज्ञाप्यते । यदुक्तं प्रह्लादेन ।"इत्थं नृतिर्यगृषिदेवझषावतारैर्लोकान् विभावयसि हंसि जगत्प्रतीपान् । धर्म्मं महापुरुष पासि युगानुवृत्तं छन्नः कलौ यदभवस्त्रियुगोऽथ सत्वमिति छन्नत्वादेवासंख्यात इत्यर्थः ॥ २६ ॥

अवतारानुक्त्वा विभूतीराह ऋषय इति ॥ २७ ॥

नन्वेषांसर्व्वेषां तुल्यत्वमेववा अस्ति वा तारतम्यमित्यपेक्षायामाह एते चेति । एते पूर्व्वोक्ताः चशब्दादनुक्ताश्च पुंसः प्रथमनिर्दिष्टस्य पुरुषस्य अंशकलाः । केचिदंशाः मत्स्यकूर्म्मवराहाद्याः । केचित् कलाः कुमारनारदादयः आवेशाः । यदुक्तं भागवतामृते । "ज्ञानशक्त्यादिकलया यत्राविष्टो जनार्द्दनः । त आवेशा निगद्यन्ते जीवा एव महत्तमाः । वैकुण्ठेऽपि यथा शेषो नारदः सनकादय" इति । तथा पाद्मे । आविष्टोऽभूत् कुमारेषु नारदे च हरिर्विभुः । तथा तत्रैव । आविवेश पृथुं देवः शङ्खी चक्री चतुर्भुज इति । एतत्ते कथितं देवि जामदग्न्यस्य महात्मनः । शक्त्यावेशावतारस्य चरितं शार्ङ्गिणः प्रभोरिति । कलेरन्ते च संप्राप्ते कल्किनं ब्रह्मवादिनम् । अनुप्रविश्य कुरुते वासुदेवो जगत्स्थितिमिति । तत्र कुमारनारदादिषु ज्ञानभक्तिशक्त्यंशावेशः । पृथ्वादिषु क्रियाशक्त्यंशावेशः । ते चावेशा महाशक्त्या अल्पशक्त्या चेति द्विविधाः । प्रथमाः कुमारनारदाद्याः अवतारशब्देनोच्यन्ते । द्वितीया मरीचिमन्वाद्याः विभूतिशब्देनेति भेदो ज्ञेयः । इह यो विशिष्टतमावतारत्वेन कथितः स कृष्णस्तु भगवान् न त्वंशः न चांशी पुरुषः किन्तु भगवान् । जगृहे पौरुषं रूपं भगवान् महदादिभिरिति धर्म्मः पद्योक्तो यः पुरुषस्यावतारी भगवान् स एवेत्यर्थः ।"अनुवादमनुक्त्वैव न विधेयमुदीरयेदिति दर्शनात् कृष्णस्यैव भगवत्त्वलक्षणो धर्म्मः साध्यते न तु भगवतः कृष्णत्वं तेन कृष्ण एव भगवान् मूलभूत इति । एतदेव पुनः स्पष्टीकुर्व्वन्नाह स्वयमिति । तेन पुरुषावतारिणो भगवतो महानारायणादपि कृष्णस्योत्कर्षः साधितः । अत एव छान्दोग्ये पञ्चमप्रपाठके ।"ज्यायांश्च पुरुषः सर्व्वं खल्विदं ब्रह्म, यत् प्राणा आदित्या इत्याद्युक्त्वा पश्चादुपसंहृतं कृष्णाय देवकीपुत्रायेत्यादिना तेनात्र पुरुषादिभ्योऽपि श्रेष्ठो देवकीपुत्र एव ज्ञेयः । तदप्यवतारमध्ये तस्य गणनम् । भूर्लोकस्थमथुरादिधामविलासित्वान्नरलीलत्वात् प्रापञ्चिकलोकेषु करुणाधिक्यादाविर्भावतिरोभावाभ्याञ्च । तथा च गोपालतापिनी श्रुतिः ।"स होवाचाजयोनिरवताराणां मध्ये श्रेष्ठोऽवतारः को भविता येन लोकास्तुष्यन्ति देवास्तुष्टा भवन्ति । यं स्मृत्वा मुक्ता अस्मात् संसारात् तरन्तीति । ननु"तत्रांशेनावतीर्णस्य विष्णोर्वीर्य्याणि शंस न इति । दिष्ट्याम्ब ते कुक्षिगतः परः पुमानंशेन साक्षाद्भगवान् भवाय न"इति । ताविमौ वै भगवतो हरेरंशाविहागताविल्यादि बहुवाक्यविरोधे कृष्णस्तु भगवान् स्वयमित्येकेनैव वाक्येन कृष्णस्य पूर्णत्वं कथं व्यवतिष्ठताम् । अत्रोच्यते । श्रीभागवतशास्त्रारम्भे जन्मगुह्याध्यायोऽयं सर्व्वभगवदवतारवाक्यानां सूचकत्वात् सूत्रम् । तत्र चैते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयमिति परिभाषा सूत्रम् । यत्र यत्रावताराः श्रूयन्ते तत्रान्यान् पुरुषांशत्वेन जानीयात् कृष्णन्तु स्वयं भगवत्त्वेनेति । प्रतिज्ञारूपमिदं सर्व्वत्रोपतिष्ठते । परिभाषा ह्येकदेशस्था सकलं शास्त्रमभिप्रकाशयति यथा वेश्म प्रदीप इति प्राञ्चः । सा च शास्त्रे सकृदेव पठ्यते नत्वभ्यासेनेति वाक्यानां कोटिरपि अनेनैकेनापि महाराजचक्रवर्त्तिनेव शासनीया भवेदित्येतद्विरुद्धायमानानां तेषां वाक्यानामेतदनुगुणार्थतैव तत्र तत्र व्याख्येया । किञ्च तेषां वाक्यानां प्राकरणिकत्वेन दुर्व्वलत्वात् अस्य तु श्रुतिरूपत्वेन प्राबल्यात् । श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षादिति १ न्यायेन तान्येवार्थान्तरतया संगमनीयानि । न तु तदनुरोधेनैतदित्यतः श्रीधरस्वामिपादैरपि तत्र तत्र तथैव समाहितमिति । ननु मत्स्यकूर्म्माद्यवताराणां कृष्णस्य च द्विभुजत्वचतुर्भुजत्वबालत्वकिशोरत्वाद्याकाराणाञ्च सर्व्वेषां नित्यत्वश्रवणात् अनेकेश्वरत्वप्रसक्तिः । मैवम् । बहुमूर्त्त्येकमूर्त्तिकमिति दशमाद्यथा एकस्यैव जीवस्य कालभेदेनाल्पशक्तिकबहुशक्तिकानन्तनश्वरस्वभिन्नविग्रहधारित्वं प्रतीयते । एवमेकस्यैवेश्वरस्य सर्व्वव्यापकस्याचिन्त्यशक्त्या यौगपद्येनैवानन्तनित्यस्वाभिन्नविग्रहधारित्वम् । जीवानामनन्तानामानन्त्यम् ईश्वरस्यैकस्यैवानन्त्यमिति जीवदृष्ट्यैव तद्विलक्षणा ईश्वरश्च प्रत्येतव्य इति । नन्वानन्दमात्रस्य चिद्वस्तुनो व्यापकस्य परमेश्वरस्य किं नामांशित्वमंशत्वं वा परि-

श्रीविश्वनाथचक्रवर्ती।

च्छिन्नस्यैव वस्तुनो भागविभागादिसम्भवात्। यदुक्तं महावाराहे।"सर्व्वे नित्याः शाश्वताश्च देहास्तस्य परात्मनः। हानोपादानरहिता नैव प्रकृतिजाः क्वचित्। परमानन्दसन्दोहाज्ञानमात्राश्च सर्व्वतः। सर्व्वे सर्व्वे गुणैः पूर्णाः सर्व्वदोषविवर्जिता" इति। सत्यम्। तदपि तस्य माधुर्य्यैश्वर्य्यकारुण्यादिशक्ति प्राकट्यतारतम्येनैवांशत्वपूर्णत्वव्यवस्था आविर्भावितयथाप्रयोजनाल्पशक्तित्वमंशत्वम्। यदुक्तं भागवतामृते। शक्तेर्व्यक्तिस्तथाव्यक्तिस्तारतम्यस्य कारणमिति। शक्तिः समापि पुर्य्योदिदाहे दीपाग्निपुञ्जयोः। शीताद्यार्तिक्षये चाग्निपुञ्जादेव सुखा भवेदिति। एवञ्च पूर्णत्वांशत्वाभ्यामुत्कर्षापकर्षौ महानुभावमुनीनामप्यनुभवसिद्धौ ज्ञेयौ। यथा तृतीये।"आसीनमुर्व्व्यां भगवन्तमाद्यं सङ्कर्षणं देवमकुण्ठधिष्ण्यम्। विवित्सवस्तत्त्वमतः परस्य कुमारमुख्या मुनयोऽन्वपृच्छन्। स्वमेव धिष्ण्यं वहु मानयन्तं यद्वासुदेवाभिधमामनन्तीति। अतश्चिद्वस्तुनः परमेश्वरस्यांशांशित्वभेदो न विरुद्धः। यदुक्तं वाराहे।"स्वांशश्चाथ विभिन्नांश इति द्वेधांश इष्यते"इत्यादि। तत्र मत्स्यादीनामवतारत्वेन सर्व्वज्ञत्वसर्व्वशक्तित्वेऽपि यथोपयोगमेव ज्ञानक्रियाशक्त्याविष्करणम्। कुमारनारदादिष्वाधिकारिकेषु यथोपयोगमंशकलावेशः। इति श्रीधरस्वामिपादाः। अत्र प्राचां कारिकाः।"नृसिंहो जामदग्न्यश्च कल्की पुरुष एव च भगवत्त्वे च तत्रादेरैश्वर्य्यस्य प्रकाशकाः। नारदोऽथ तथा व्यासो वराहो बुद्ध एव च। धर्म्माणामेव वैविध्यादमी धर्म्मप्रदर्शकाः। रामो धन्वन्तरिर्यज्ञः पृथुः कीर्त्तिप्रदर्शिनः। वलरामो मोहिनी च वामनः श्रीप्रधानकाः। श्रीरत्र सौन्दर्य्यम्। दत्तात्रेयश्च मत्स्यश्च कुमारः कपिलस्तथा। ज्ञानप्रदर्शका एते विज्ञातव्या मनीषिभिः। नारायणो नरश्चेति कूर्म्मश्च ऋषभस्तथा। वैरागदर्शिनो ज्ञेयास्तत्तत्कर्म्मानुसारतः। कृष्णः पूर्णषडैश्वर्य्यमाधुर्य्याणां महोदधिः। अन्तर्भूतसमस्तावतारो निखिलशक्तिमानिति। सर्व्वेषां साधारणप्रयोजनमाह। इन्द्रारयोऽसुरास्तैस्तन्मतैश्च व्याकुलमुपद्रुतं लोकं मृडयन्ति सुखिनं कुर्व्वन्ति। युगे युगे तत्तत्समये ॥ २८ ॥

---

सिद्धांतप्रदीपः।

कल्क्यवतारमाह अथेति युगसंध्यायाम् युगस्यकलेः युगस्यसंध्यायामादौशास्ताभविष्यतिकलेर्भगवात्युगांते इतिवक्ष्यमाणाव कलेरंतेतथाचकलिकृतयोः संध्रावित्यर्थः विष्णुयशसः ब्राह्मणात्सकाशात् जनिताजनिष्यते दस्युप्रायेषुबधार्हेषुसत्सु ॥ २५ ॥

विदाशोऽपक्षयस्तद्रहितात्सरसः सकाशात् ॥ २६ ॥

विभूतीराह ऋषयइति ऋषयः भृगुवशिष्ठादयः मनवःस्वायंभुवप्रभृतयः देवावासवादयः मनुपुत्राःप्रियव्रतेक्ष्वाकुप्रभृतयः महौजसः शिवादयःसप्रजापतयःव्रह्मकश्यपदक्षादिभिःसहिताः एतेसर्वेहरेरेवकलाः "यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेववा तत्तदेवावगच्छत्वंममतेजोंशसंभवमिति श्रीमद्भगद्वचनाच्च ॥ २७ ॥

एतेपुंसःपुरुषावतारस्य अंशकलाः छत्रिणोयांतीतिन्यायेन केचिदंशाः केचित्कलाः केचिद्विभूतयः केचित्स्वरूपावताराइतिवोध्यम् कृष्णस्तुभगवान्स्वयमित्यन्वयःजगृहेपौरुषंरूपंभगवानितिप्रागुक्तोयस्यपुरुषोप्यवतारःसभगवान्श्रीकृष्णइत्यर्थः महत्स्रष्टुरपिपुरुषस्यश्रीकृष्णावतारत्वंतवत्तः पुमान्समधिगस्ययास्यवीर्यंधत्तेमहांतमिवगर्भममोघवीर्यः सोयंतयानुगतआत्मनआंडकोशंहैमंससर्जवहिरावरणैरुपेतमित्येकादशेप्रसिद्धमेव"शुद्धेमहाविभूत्याख्येपरव्रह्मणिवर्त्तते मैत्रेयभगवच्छब्दःसर्वकारणकारणे इत्येवंश्रीपराशरादिभिर्व्याख्यातःस्वयंभगवान्निनिनिखिलेभ्यः परःव्रह्मनारायणवासुदेवादिशब्दाभिधेयः श्रीकृष्णइतिभावः मत्तः परतरंनान्यदिति श्रीमुखोक्तेश्च सर्वेषांप्रयोजनमाह मृडयंतीतिसुखिनंकुर्वंति ॥ २८ ॥

---

भाषा टीका।

कलियुग की संध्या अर्थात् शेष काल मै जब राजा सब दस्यु प्राय होजायगें तब विष्णुयशा ब्राह्मण के यहां जगत्पति कल्की नाम से अवतीर्ण होंगे ॥ २५ ॥

हे शौनकादि द्विजगण! सत्वनिधि भगवान के असंख्य अवतार हैं जैसा सजीवन सरोवर से हजारों छोटी छोटी धारा निकला करती हैं ॥ २६ ॥

ऋषि मनु देवता महौजस मनु पुत्र और प्रजापति ये सबही श्री हरि की कला हैं ॥ २७ ॥

यह सब पूर्वोक्त ऋषि मन्वादिक अनिरुद्ध पुरुषके अंश औ कला रूप हैं श्रीकृष्णतो स्वयं भगवान् हैं यह सब अवतार युगयुगमें दैत्यों करके व्याकुल लोकको सुखी करते हैं ॥ २८ ॥

---

जन्मगुह्यं भगवतोयएतत् प्रयतोनरः।
सायं प्रातर्गृणन् भक्त्या दुःखग्रामाद्विमुच्यते ॥ २९ ॥
एतद्रूपं भगवतोह्यरूपस्य चिदात्मनः।
मायागुणैर्विरचितं महदादिभिरात्मनि ॥ ३० ॥
यथा नभसि मेघौघोरेणुर्वा पार्थिवोऽनिले।
एवं द्रष्टरि दृश्यत्वमारोपितमबुद्धिभिः ॥ ३१ ॥
अतः परं यदव्यक्तमव्यूढगुणबृंहितम्।
अदृष्टाश्रुतवस्तुत्वात् स जीवोयत् पुनर्भवः ॥ ३२ ॥

### श्रीधरस्वामी।

एतत्कीर्तनफलमाह। जन्मेति। गुह्यमतिरहस्यं जन्म। प्रयतः शुचिः सन्। दुःखग्रामात्संसारात् ॥ २९ ॥

विमुच्यत इति यदुक्तं तत्र कथं देहद्वयसंबन्धे सति तद्विमुक्तिरित्याशङ्क्य देहद्वयसंबन्धस्य भगवन्मायोत्थाविद्याविलसितत्वादेतच्चरणादिजनितविद्यया तन्निवृत्तिरुपपद्यत इत्याशयेनाऽऽह। एतदिति पञ्चभिः। अरूपस्य चिदेकरसस्यात्मनो जीवस्यैतत्स्थूलं रूपं शरीरं भगवतो या माया तस्या गुणैर्महदादिरूपैर्विरचितम्। क्व। आत्मनिआत्मस्थाने शरीरं कृतमित्यर्थः ॥ ३० ॥

कथमित्यपेक्षायां स्वरूपावरणेन तदध्यासत इति सदृष्टान्तमाह। यथेति। यथा वाय्वाश्रितो मेघौघो नभस्याकाशेऽबुद्धिभिरज्ञैरारोपितः। यथावा पार्थिवो रेणुस्तद्गतं धूसरत्वाद्यनिले। एवं द्रष्टर्यात्मनि दृश्यत्वं दृश्यत्वादिधर्मकं शरीरमारोपितमित्यर्थ ॥ ३१ ॥

किंच। अतः स्थूलाद्रूपात्परमन्यदपि रूपमारोपितमित्यनुषङ्गः। कथंभूतं तत्। यदव्यक्तं सूक्ष्मम्। तत्र हेतुः। अव्यूढगुणव्यूहितम् व्यूहः करचरणादिपरिणामः। तथा अव्यूढा अपरिणता ये गुणास्तैर्व्यूहितं रचितम्। आकारविशेषरहितत्वादव्यक्तमित्यर्थः। एतदेव कुतस्तत्राह। अदृष्टाश्रुतवस्तुत्वात्। यच्चाऽऽकारविशेषवद्वस्तु तदस्मदादिवद्दृश्यते। श्रूतये वा इन्द्रादिवत्। इदं तु न तथा। तर्हि तस्य सत्त्वे किं प्रमाणं तत्राऽऽह। सजीवो जीवोपाधिः। 'जीवो जीवेन निर्मुक्तो' 'जीवो जीवं विहाय' इत्यादौ जीवोपाधौ लिङ्गदेहे जीवशब्द प्रयोगात्। जीवोपाधितया कल्प्यत इत्यर्थः। ननुस्थूलमेव भोगायतनत्वाज्जीवस्योपाधिरस्तु किमन्यकल्पनयेत्यत आह। यद्यस्मात्सूक्ष्मात्पुनर्भवः पुनर्जन्म। उत्क्रान्तिगत्यागतीनांतेन विनाऽसंभवादिति भावः ॥ ३२ ॥

---

### दीपनी।

जीवो जीवेनेति एकादशस्कन्धीयपञ्चविंशाध्यायस्य षट्त्रिंशश्लोकः ॥ उत्क्रान्तिगत्येति। उत्क्रान्तिगतिर्देहत्यागः तथा गतीनां देहान्तराणाम् असम्भवात् स्थूलस्य ध्वस्तत्वात्। गम्यन्ते प्राप्यन्ते इति गतयः। इति व्याख्यालेशः ॥ ३२। ३३ ॥

---

### श्रीवीरराघवः

अवतारकीर्त्तनादिफलमाहजन्मगुह्यमिति यःकश्चिन्नरोभगवतः एतज्जन्मगुह्यमवताररहस्यम् सायंप्रातः समाहितचित्तोभक्त्या गृणन्कीर्त्तयन्दुःख जाताद्विमुच्यतेसंसारान्मुक्तोभवतीत्यर्थः जन्मगुह्यमित्यनेनभगवज्जन्म न जीवजन्मवत्कर्ममूलमपितुस्वसंकल्प-मूलमित्यभिप्रेतम् ॥ २९ ॥

तदेवदर्शयिष्यन्रूपप्रसंगान्नकेवल मवतीर्णमेवरामकृष्णाद्याख्यं भगवतोरूपमपितुपरिदृश्यमानंप्रकृति गुणवैषम्यमूलमहदादिकृतं जगदपितद्रूपमित्याहएतद्रूपमितिचिदात्मनः ज्ञानस्वरूपस्यातएवारूपस्यामूर्त्तस्वरूपस्यभगवतः मायागुणैर्गुणपरिणामरूपैर्महदादिभि रात्मन्याधारभूतेस्वस्मिन्नेतत्परिदृश्यमानंजगदात्मकंरूपंचिदचित्त्वम् आत्मनीत्यनेन रूपशब्देनचजगतोभगवद्रूपत्वमुपपादितंशरीरस्या त्मनोधार्यत्वानियमात् ॥ ३० ॥

एवंजगदंतर्गतदेवमनुष्यादिशरीराणामपि भगवद्रूपत्वेसतिजीवानां केवलंदेवोहंमनुष्योहमित्यभिमानिनोभ्रमएवेत्याहयथेतियथामे घस्समूहानभस्याकाशेऽबुद्धिभिराकाशयाथात्म्याविद्भिरारोपितायथाच पृथिव्याः संबंधीरेणुर्धूलिरनिलेतद्याथात्म्याविद्भिरारोपितएवम-बुद्धिभिःप्रत्यगात्मयाथात्म्याविद्भिर्द्रष्टरिजीवेदृश्यत्वमारोपितंदेवादिशरीरजातमहं ममाभिमानविषयत्वेनारोपितमित्यर्थःअतोनदेवादि शरीरजातंजीवस्वरूपमितिभावः यद्यपिदेवादिशरीरस्यतदभिमानिजीवेनधार्यत्वात्तं प्रतिरूपत्वमस्त्येवतथापि"यआत्मनितिष्ठन्नस्या-त्माशरीरमित्याद्युक्तरीत्याजीवस्यापिपरमपुरुषधार्यत्वान्मुख्यधारकत्वंपरमात्मनिष्ठमेवेति तंप्रत्येयदेवाद्यचेतनजातं मुख्यंरूपंदेहात्मनो

## श्रीवीरराघवः

रुभयोरपिपरमपुरुषधार्यत्वज्ञानंब्रह्मरूपंप्रकृतिपुरुषयोरब्रह्मात्मकत्वज्ञानं प्रकृत्यादौचात्माभिमानः स्वातंत्र्याभिमानः प्रकृतेः प्रसंगादात्मैकधार्यत्वाभिमानश्चावुद्धिकृतइत्यभिप्रायः ॥ ३१ ॥

ननुदृश्यधर्मस्तास्मिन्नारोपितश्चेत्सजीवः कीदृशइत्यत्राह अतइतिअतः अचिदात्मकदृश्यप्रपंचात्परंविलक्षणंतत्त्वंसजीवः परत्वमेव दर्शयितुंविशिनष्टिअव्यक्तंवाह्येंद्रियैर्द्रष्टुमशक्यं कुतइत्यपेक्षायांहेतुरदृष्टाश्रुतवस्कत्वादिति तत्रहेतुमाहअव्यूढगुणबृंहितमितिव्यूढैर्गुणैर्बहुधाविभक्तैर्गुणैर्बृंहितंस्थूलीकृतंयन्नभवतितदव्यूढगुणबृंहितम् अनेनाचिद्व्यावृत्तिः कारणदशायामस्थूलमचेतनंकार्यदशायांहिव्यूढैर्गुणैःसत्त्वादिभिश्चान्वितंस्थूलीभवतिनतथेत्यर्थः अतएवादृष्टाश्रुतवस्कत्वात्तदन्यार्थत्वात्तत्रदृष्टंकार्यावस्थितमाचिद्द्रव्यंश्रुतंतुकारणावस्थम् 'अचेतनापरार्थाचानित्यासततविक्रियेत्यादिशास्त्रैःश्रुतंतदुभयविलक्षणवस्तुत्वादव्यक्तम् 'अव्यक्तोयमचिंत्योयमविकार्योयमुच्यतइतिहिभगवतागीयते एवंभूतंयद्वस्तुसजीवःयःपुनर्भवः प्रकृतिसंगात्पुनः पुनर्जन्मभागित्यर्थः यत्पुनरितिपाठेयतोयत् संबंधात्पुनर्भवस्ततः परमित्यन्वयः ॥ ३२ ॥

---

## श्रीविजयध्वजः।

फलमाह जन्मेति प्रयतःप्रकर्षेणनिर्जितेंद्रियग्रामोयोनरोजन एवमुक्तप्रकारेण जन्मरहस्यंसायंप्रातर्भक्त्यागृणन्पठन्सांसारिकदुःखसमूहात्मुच्यतइत्यन्वयः ॥ २९ ॥

इदानींप्रतिमारूपमाह एतदिति मायागुणैःप्रकृतिविकारैः महदहंकारादिभिरुपादानकारणैः आत्मनिसर्वगतेहरिणाविरचितमेतत् जडंब्रह्मांडमरूपस्यप्रकृतिविकृतिरूपरहितस्यचिदात्मनः केवलज्ञानस्वरूपस्यभगवतोरूपंप्रतिमास्थानीयंहिहेतोर्यस्माज्जडंतस्मात्प्रतिमैव नसाक्षात्स्वरूपंचिदेकरूपस्यभगवतोमायाकल्पितसत्त्वादिगुणैर्महदाद्याकारेणपरिणतैरेतत्प्रतीयमानं विराट्रूपमात्मनिचिद्रूपेकल्पितम् अतएवतन्मिथ्याअतस्मिंस्तद्बुद्धेरितियैःकैश्चिदुच्यते तन्नयुक्तं प्रमाणविरोधादित्यस्मिन्नर्थेवाहिः ॥ ३० ॥

प्रतिमात्वकल्पनामंतरेणसाक्षाद्रूपत्वं किंनस्यादित्याशंक्यसाभ्रांतिरितिसोदाहरणमाह यथेति यथामेघौघानभस्यारोपितामेघौघान् दृष्ट्वायमाकाशइतिकल्पयंतिविवेकशून्याः यथाअनिलेवायौपार्थिवोरेणुरारोपितः वायुनोद्धूयमानमूर्ध्वमुखंरेणुंदृष्ट्वाऽयंवायुरिति आकाशवाय्वोश्चाक्षुषत्वाभावाद्भ्रांतिरेवसा एवंद्रष्टरिसर्वगेभगवतिप्रतिमांदृष्ट्वामनुष्यदृष्टयगोचरेअबुद्धिभिरज्ञैर्भ्रांत्यादृश्यत्वंजडरूपत्वमारोपितंकल्पितंतस्मात्तद्भ्रांतमतोनसाक्षाद्रूपं प्रतिमैवेतिभावः ॥ ३१ ॥

एवंहरेर्वासुदेवादिपरमंरूपंब्रह्मांडाख्यंप्रतिमारूपंचनिरूप्यजैवंरूपमाह अतइति यज्जैवंरूपमतउक्तयोःजडेश्वररूपयोः परंयदव्यक्तंसूक्ष्ममव्यूढगुणबृंहितम्अनादिकालात्कदाचिदप्यनपगतसत्त्वरजस्तमोगुणपूर्णपश्चाददृष्टाश्रुतवस्तुत्वादश्रुतामतानुपासितान परोक्षितपरमात्मस्वरूपत्वात्पुनःपुनर्भवः उत्पत्तिर्यस्यसतथोक्तः पुनः पुनर्जायमानोम्रियमाणश्चसजीवः तस्मान्निर्विवादमीश्वरवशंजैवंरूपमितिभावः अतःकार्यरूपात् परंव्यतिरिक्तंयदव्यक्तंयदनभिव्यक्तंरूपादिव्यक्ति कारणसाधनैः शून्यमव्यूढमनभिव्यक्तंगुणानांबृंहितंकार्यंयस्मिन्तदव्यूढगुणबृंहितम्अतएव अदृष्टाश्रुतवस्तुतस्मादव्यक्तंसप्रसिद्धोजीवोयद्यस्मात्पुनर्भवतीतिपुनर्भवः देहादिप्रपंचलक्षणः संसारोयस्माद्भवतीतिचतत्कारणमितियद्व्याख्यानं तददृष्टाश्रुतवस्तुत्वादितिहेत्वभिधानंविरुध्यतेतस्मिन्पक्षेयददृष्टादिविशेषणैर्विशिष्टंतद्वस्तुमूलकारणमितिवक्तव्यं प्रकृतानुपयुक्तंचअत्रदेवादिप्रपंचस्यमिथ्यावाचिपदंप्रक्षेप्यमतोयत्किंचिदेतत् ॥ ३२ ॥

---

## क्रमसंदर्भः।

जन्मेति। स्पष्टम् ॥ २९ ॥ तदेवमेतानि साक्षाद्रूपाण्याविष्टरूपाणि चोपदिश्य उपासनार्थं शास्त्रेण भगवत्यारोपितं रूपमुपादिशति एतद्रूपमिति। अरूपस्य प्राकृतरूपासम्वद्धस्य मायागुणैर्विरचितमेवैतज्जगदाकारं रूपम्। तच्चात्मनि जीव एव विरचितं तत्सम्वन्धतयैव कल्पितं न तु परमेश्वरसम्वन्धतयेत्यर्थः। असङ्गादनासङ्गाच्चेति भावः ॥ ३० ॥

तर्हि कथं तस्यैतद्रूपमित्युक्तम्। पातालमेतस्य हि पादमूलमित्यादिना च तथा वर्णयितव्यम्। उच्यते अज्ञदृष्ट्यपेक्षया तदुपासनार्थं तदध्यासेनैवेत्याह यथेति ॥ ३१ ॥

तस्य यथा स्थूलं रूपं तथा सूक्ष्ममपीत्याह अतः परमिति। अतः स्थूलाद्रूपात् परम् अन्यदपि यदव्यक्तं सूक्ष्मं तस्य रूपम्। सूक्ष्मत्वे हेतुः अदृष्टेति। अदृष्टत्वाददृष्टमित्यन्यतोऽप्यश्रुतत्वाच्चेत्यर्थः। तत्र हेतुः। अव्यूढेति। अस्पष्टशब्दादिगुणमित्यर्थः। यद्यस्मादेव रूपाद्धेतोः यदंशावेशेनेत्यर्थः। स जीवोऽपि पुनर्भवो भवति पुनः पुनर्जन्मादिकं लभत इत्यर्थः। तदपि मायागुणैर्विरचितमिति पूर्व्वेणानुषङ्गः। पूर्व्ववदुपासनार्थमेवेदं रूपमारोपितमिति भावः। वक्ष्यते च "अमुनी भगवद्रूपे मया ते ह्यनुवर्णिते। उभे अपि न गृह्णन्ति माया-सृष्टे विपश्चित" इति ॥ ३२ ॥

---

## सुबोधिनी

कृष्णावतारप्रयोजनंनोक्तमितिस्वस्याज्ञानदोषंनिवारयन्नवताराणां दुर्ज्ञेयत्वमाह जन्मगुह्यंभगवतइतिभगवतः कृष्णस्यजन्मगुह्यंगोप्यंनप्रकटतयावक्तव्यामित्यर्थः । तर्हिकथंनिस्तारइत्याशंक्याह यएतदिति एतदवताररूपंसामान्यतोऽस्मदुक्तंप्रयतः सावधानःशुचिःशुद्धः सायंप्रातर्भक्त्यास्तोत्रपाठंकुर्वन्दुःखग्रामात्दुःखसमूहाद्विशेषेणमुच्यते । जन्मरहस्यज्ञानाभावेपिकेवलंजन्मकीर्तनमात्रेणापिसर्वदुःखनिवृत्तिरित्यर्थः । श्रद्धयागृहणन्मुच्यतएव ॥ २९ ॥

एवंपुरुषावतारंस्वांशावतारैः सपरिकरंनिरूप्यतस्यविचारमाह एतद्रूपमित्यादिपंचभिः एतद्रूपंब्रह्मांडात्मकंभगवतोरूपंपूर्णब्रह्मणएवसत्योपहितस्यसत्यरूपंशरीरव्यतिरेकेणात्मनोन्यत्रवृत्तिलाभाभावात्"अरूपवदेवहितत्प्रधानत्वात् ३ । २ । १४ ।इतिन्यायेनब्रह्मणिस्वतोरूपंनास्तितत्रहेतुः चिदात्मनइतिजडमेवहिरूपंभवति चैतन्यमात्रस्यामूर्त्तत्वस्यहिरूपाभावादितिहिशब्दार्थः । तर्हिकथंब्रह्मांडशरीरत्वमुक्तं मायागुणै र्विरचितमितिवैष्णवतंत्रेआधिदैविकस्य शक्तिर्मायातस्याएवत्रयोगुणाःसत्त्वरजस्तमांसितैरेवमहदादयोजाताःतैः स्वशरीरएव तच्छरीरंनिष्पादितम् इदंहिभगवच्छरीरमत्रभगवान्समाहितोभजनीयोभविष्यतीतिततश्चमहदादि कृपयाभगवानत्रसंहितःआविर्भूतस्तप्तायोगोलकेवन्हिरिवातिष्ठतीतिवोद्धव्यम् ३० ननुजडरूपेकथमस्मिन्ब्रह्मप्रतीतिःतथासतिनचेतनत्वंप्रतयितेततश्चदृश्यत्वाज्जडत्वाच्चनभगवदावेशोत्रास्तीतिकथमिदंशरीरंतत्राहयथानभसीति अयंहिद्रष्टादेवदत्तवद्भगवान्सर्वंपश्यतियद्यपिशरीरमपिदृश्यंतथापिद्रष्ट्राव्याप्तमितितद्व्यतिरिक्तस्यैवदृश्यत्वप्रतीतिर्लोके । तत्रयेमहांतस्तेसर्वत्रब्रह्मांडेऽयोगोलकेवन्हिमिवभगवंतंपश्यंति येपुनर्मूढास्तेतस्मिन्द्रष्टरिदृश्यत्वमारोपयंति ॥ ३० ॥

ननुकथमन्यस्मिन्नन्यधर्माध्यारोपइत्याशंक्याह । दृष्टांतं । यथानभसिमेघौघइति वस्कतस्त्वाकाशोऽदृश्यः ततश्चतदाधारत्वेनकथं मेघादृश्याभवेयुः । येषामपिमतेदृश्यस्तेषामपिमतेनाकाशेमेघाः किन्तुवायावेव तत्रयथान्यत्रस्थितानामन्यत्रप्रतीतिः अत्रविशिष्टप्रतीतिरारोपितेनसहतथानास्तीति दृष्टांतांतरमाह । रेणुर्वापार्थिवोऽनिलइति यथावात्यादौतद्विशिष्टरेणुप्रतीतिः ततोभ्रांताःवात्याइतिरेणुं मन्यंतेवस्तुतस्तुपार्थिवोरेणुः ॥ ३१ ॥

एवंप्रपंचेजडबुद्धिर्भ्रांताभगवद्बुद्धिर्मुख्येतिनिरूप्यजीवेऽपिभगवद्बुद्धिरेवमुख्यानजीवबुद्धिरितिनिरूपयतिअतःपरमितिअतोब्रह्मांडविग्रहात्सूक्ष्मंसर्वेंद्रियागोचरम्अव्यक्तापरपर्यायंकरचरणाद्याकारेणापरिणतैर्गुणैःस्वाभाविकैर्व्याप्तम् अस्तीतिसंबंधःतत्किमित्याकांक्षायांस जीवएवजीवजडभगवद्व्यतिरेकेणचतुर्थपदार्थस्याभावात्ननुतथापिजीवत्वंकुतः अतआहअदृष्टाश्रुतवस्कत्वादिति यदितज्जडंस्यात्दृश्यं स्यात्यदिवाभवगद्रूपंस्यात्वेदादौश्रुतंस्यात् । नवानिः स्वभावंशशशृंगवत्वस्कत्वात् तस्मात्पारिशेष्याज्जीवएवकेचनतंजीवोपाधिमन्यंतेतथाप्राप्तविवेकेनभगवद्व्यतिरिक्तस्यजीवस्याभावात्कस्योपाधिःस्यात्तस्माज्जीवएवसः किंचयस्मात्पुनर्भव; पुराणेलोकेचैवं प्रतीयते पूर्वमयंदेवःस्थितः इदानींमनुष्यत्वमापन्नइति अतः पुनर्भवान्यथानुपपत्त्याभगवदुपाधिः सूक्ष्मोजीवः कश्चिदस्तीतिमंतव्यम् ॥ ३२ ॥

---

## श्रीविश्वनाथ चक्रवर्त्ती ।

एतत् कीर्त्तनफलमाह जन्मेति । गुह्यमतिरहस्यं यो गृणन् कीर्त्तयन् भवेत् ॥ २९ ॥

ननु पातालमेतस्य हि पादमूलमित्यादिना द्वितीयस्कन्धादौ योऽयं विराड्रूपी भगवान् प्रथममुपास्यत्वेनोक्तः स कथमवतारमध्ये न गणितस्तत्राह । एतत् समष्टिव्यष्टिविराडात्मकं जगच्चिदात्मनश्चिन्मयविग्रहस्य अतएवारूपस्य प्राकृतरूपरहितस्य भगवतो रूपं स्थूलं शरीरं किन्तु मायागुणैर्महत्तत्त्वादिभिः पृथिव्यन्तैस्तत्त्वैर्विरचितम् आत्मनि स्वस्मिन्नेतदन्तर्यामिन्यधिष्ठाने स्थितमित्यर्थः । अतो विशुद्धसत्त्वरूपमत्स्यकुर्म्माद्यवतारमध्ये मायिकरूपी विराडेष न पठित इति भावः ॥ ३० ॥

कस्मिन् किमिवेत्यत आह । यथा नभसि आकाशे मेघसमूहः । अनिले च पृथ्वीविकारो रेणुस्तथैव आत्मनि एतद्विराड् रूपमिति पूर्व्वेणैवान्वयः । तेन मञ्चस्थः पुरुषो यथा मञ्च उच्यते तथा भगवति स्थितो विराडपि भगवानुच्यते इत्यर्थः । एवमेवाधिष्ठितधर्म्मो दृश्यत्वमपि द्रष्टरि भगवत्यदृश्येऽपि आरोपितमित्यर्थः । अबुद्धिभिः अल्पबुद्धिभिः । यथा अदृश्ययोरपि नभोऽनिलयोर्नीलं नभ इति धूसरोऽनिल इति मेघरेणुधर्म्मौ नीलिमधूसरत्वलक्षणं दृश्यत्वमारोपितं ततश्च भगवानयं विराट् दृश्यः प्रथमदशास्थैर्योगिभिराराध्य इत्युपपन्नम् ॥ ३१ ॥

तथा स्थूलं रूपं भगवद्रूपत्वेनोक्तमपि योगिभिरुपास्यमपि मायागुणैर्विरचितं तथैव सूक्ष्ममपि रूपम् अमुनी भगवद्रूपे इत्यनेन भगवद्रूपत्वेन प्रयुक्तमपि कर्णौ दिशः श्रोत्रममुष्य शब्द इति । सर्व्वात्मनोऽन्तःकरणं गिरित्रमित्याद्युक्तेर्योगिभिरुपास्यमपि मायिकमेवेत्याह । अतः स्थूलादन्यत् अव्यक्तं सूक्ष्मम् । तत्र हेतुः । अव्यूढाः करचरणादित्वेनापरिणता ये गुणास्तैर्बृंहितं रचितम् आकारविशेषराहितमित्यर्थः । एतदेव अदृष्टाश्रुतवस्तुत्वात् । यच्चाकारविशेषवद्वस्तु तदस्मदादिवद्दृश्यते श्रूयते वा इन्द्रादिवत् इदन्तु न तथा । ननु तस्य सत्त्वे किं प्रमाणं तत्राह । स जीवः जीवोपाधिः ।" जीवो जीवेन निर्मुक्तो जीवो जीवं विहाय चेत्यादौ जीवोपाधौ लिङ्गदेहे जीवशब्दप्रयोगात् जीवोपाधितया कल्प्यत इत्यर्थः । ननु स्थूलमेव भोगायतनत्वात् जीवस्योपाधिरस्तु किमन्यकल्पनया इत्यत आह । यद्यस्मात् सूक्ष्मात् पुनर्भवः पुनः पुनर्जन्म उत्क्रान्तिगत्यागतीनां तेन विना असम्भवादिति भावः । तेन च समष्टिव्यष्टिविराजां जीवत्वात्तत्स्थूलसूक्ष्मयोरूपयोर्मायिकत्वात् तत्र चेश्वरत्वमारोपितमेव न तु साहजिकमिति भावः । यदुक्तम् ।"विराट् हिरण्यगर्भश्च कारणं चेत्युपाधयः । ईशस्य यत्त्रिभिर्हीनं तुरीयं तत् प्रचक्षत"इति। अत्रापि वक्ष्यते। "अमुनी भगवद्रूपे मया ते ह्यनुवर्णिते। उभे अपि न गृह्णन्ति मायासृष्टे विपश्चित"इति ॥ ३२ ॥

---

**यत्रेमे सदसद्रूपे प्रतिषिद्धे स्वसंविदा ।**
**अविद्ययात्मनि कृते इति तद्ब्रह्मदर्शनम् ॥ ३३ ॥**
**यद्येषोपरता देवी माया वैशारदी मतिः ।**
**सम्पन्नएवेति विदुर्महिम्नि स्वे महीयते ॥ ३४ ॥**

### सिद्धान्तप्रदीपः ।

अवतारकीर्तनादिफलमाहजन्मेति जन्मेतिकर्मोपलक्षणम् उक्तप्रकारंजन्मकर्मरहस्यमित्यर्थः गृणन्नित्युपलक्षणंजन्मकर्मगुह्यश्रवण मननादेः दुःखग्रामात्संसाराद्विमुच्यतेमुक्तोभवति उक्तंच श्रीमुखेनापि "जन्मकर्मचमेदिव्यमेवंयोवेत्तितत्त्वतः त्यक्त्वादेहंपुनर्जन्मनैति मामेतिसोऽर्जुनेति ॥ २९ ॥

अथैवंदर्शितस्यभगवज्जन्मकर्मरहस्यस्यवेदगुह्यत्वं कविज्ञेयत्वंचवक्ष्यन्प्रसंगाज्जीवबंधमोक्षप्रकारमाह पंचभिःश्लोकैः ननुजन्मगुह्यं गृणन् योदुःखग्रामाद्विमुच्यतेतस्यतावत्बंधः कथमस्तीत्यतआह एतद्रूपमिति चिदात्मनः जीवस्यएतद्रूपम् इदंस्थूलंशरीरम् भगवतः प्रकृतिगुणैर्महदादिभिर्विरचितम् आत्मनितत्स्थानेकृतम् अनादिकर्मवश्येनजीवेन आत्मतयास्वीकृतमितिफलितोऽर्थः ३० ॥

नन्वनात्मात्मतयाकथंस्वीकृतइत्यतआह यथेति वाय्वाश्रितोपिमेघः यथाअबुद्धिभिर्नभसिआरोपितः यथावाअनिलेवायुस्थानेपार्थिवो रेणुःरेणुसंघः आरोपितःएवमज्ञानादेवाऽबुद्धिभिर्द्रष्टरिदृश्यविलक्षणेजीवेदृश्यत्वंशरीरत्वम् आरोपितम् ॥ ३१ ॥

अतः इतिअतःस्थूलशरीरात्परमुत्कृष्टम् अधिककालस्थायि अव्यक्तमसूक्ष्मम् अव्यूढैः सूक्ष्मैर्गुणैः गुणकार्यैः एकादशेंद्रियपंचतन्मात्रैर्बृंहितम् रचितम् यत्येनानुवर्त्तमानेनपुनर्भवः पुनःपुनर्जन्मभवति तदपिसजीवइत्यबुद्धिभिः स्थूलदेहपरित्यागग्रहणांतराले आत्मत्वेनारोपितमिति पूर्वेणैवान्वयः तत्रहेतुमाह इतरेतरपृथक्तयाऽदृष्टाश्रुतानिवस्तूनि आत्मानात्मपरमात्मस्वरूपाणियैस्ते अदृष्टाश्रुतवस्तवस्तेषांभावस्तत्त्वं तस्माददृष्टाश्रुतवस्तुत्वादित्यर्थः एतेनयेषांदेहदेहिज्ञानंनास्तितेषां परमात्मज्ञानंनास्तीतिकिमुवक्तव्यम् किंचानेनोभय शरीरमूलभूतायास्त्रिगुणायाः प्रकृतेः संगश्चोक्तः तदित्थंतत्त्वत्रयाविवेकादनादि मायापरियुक्तरूपत्वाज्जीवात्मनोबंध-इतिफलितोऽर्थः ॥ ३२ ॥

---

### भाषा टीका ।

जो नर सावधान होकर यह भगवान का गुप्त जन्म को सायंकाल मे प्रातः कालमें पाठ करताहै सो दुःख समूहसे छूटजाताहै २९।

यह रूप चैतन्य स्वरूप प्राकृत रूपरहित भगवान ने महदादिक माया गुणों से अपने स्वरूप मे स्वयं हीरचा है ॥ ३० ॥

जैसे आकाश मे मेघ समूह और पवन मे पृथिवी का रेणु आरोपित किया हो तैसे द्रष्टात्मा के विषय मे अज्ञानी पुरुषों ने दृश्यत्व आरोपित किया है ॥ ३१ ॥

इस अचिद्रूप देहादिक से भिन्न इंद्रियों से अप्रकट अदृष्ट अश्रुत बस्तु के होने से बहुधा विभक्त गुणों से स्थूलकिया हुआ जो न होय जिसका फिर २ जन्म होता रहता है सोही जीवतत्व है ॥ ३२ ॥

---

### श्रीधरस्वामी ।

तदेवमुपाधिद्वयमुक्त्वा तदपवादेन जीवस्य ब्रह्मतामाह । यत्रेति । यत्रयदाइमे स्थूलसूक्ष्मे रूपे स्वसंविदा श्रवणमननादिभक्त्या स्वरूप सम्यग्ज्ञानेनप्रतिषिद्धे भवतः । ज्ञानेन प्रतिषेधार्हत्वे तमेव हेतुमाह । अविद्ययाऽऽत्मनि कृते कल्पिते इति । हेतोः । तद्ब्रह्म । तदा जीवो ब्रह्मैव भवतीत्यर्थः । कथंभूतम् । दर्शनं ज्ञानैकस्वरूपम् ॥ ३३ ॥

तथाऽपि भगवन्मायायाः संसृतिकारणभूताया विद्यमानत्वात्कथं ब्रह्मता तत्राऽऽह ॥ यदीति । यदीत्यसंदेहे संदेहवचनम् । 'यदि वेदाः प्रमाणंस्युः' इतिवत् । वैशारदी विशारदः सर्वज्ञ ईश्वरस्तदीया देवी संसारचक्रेण क्रीडन्ती एषा माया यद्युपरता भवति किमित्युपरता भवेत्तत्राऽऽह । मतिर्विद्या । अयं भावः । यावदेषाऽविद्यात्मनाऽऽवरणविक्षेपौ करोति तावन्नोपरमति । यदा तु सैव विद्या रूपेण परिणतातदा सदसद्रूपं जीवोपाधिं दग्ध्वा निरिन्धनाग्निवत्स्वयमेवोपरमेदिति । तदासंपन्नो ब्रह्मस्वरूपं प्राप्त एवेति हिविदुस्तत्त्वज्ञाः किमतः । यद्येवं स्वे महिम्नि परमानंदस्वरूपे महीयते पूज्यते विराजत इत्यर्थः ॥ ३४ ॥

यथा जीवस्य जन्मादि माया, एवमीश्वरस्यापि जन्मादि मायेत्याह । एवमिति । अकर्तुः कर्माणि । अजनस्य जन्मानि । हृत्पतेरन्तर्यामिणः ॥ ३५ ॥

तर्हि जीवादीश्वरस्य को विशेषः । स्वातन्त्र्यमेव विशेष इत्याह । स वा इति । षाड्गुणिकमिन्द्रियषड्वर्गविषयं जिघ्रति दूरादेव गन्धवद् गृह्णाति नतु सज्जत इत्यर्थः । कुतः । षड्गुणेशः षडिन्द्रियनियन्ता ॥ ३६ ॥

---

**एवं जन्मानि कर्म्माणिह्यकर्त्तुरजनस्य च ।**
**वर्णयन्तिस्म कवयोवेदगुह्यानि हृत्पतेः ॥ ३५ ॥**
**स वा इदं विश्वममोघलीलः सृजत्यवत्यत्ति न सज्जतेऽस्मिन् ।**
**भूतेषु चान्तर्हित आत्मतन्त्रः षाड्वर्गिकं जिघ्रति षड् गुणेशः ॥ ३६ ॥**

दीपनी ।

**किमिति किं रूपेणेत्यर्थः । विद्येति विद्यारूपा सतीत्यर्थः ॥ ३४ । ३५ ॥**
**इन्द्रियषड्वर्गः ज्ञानेन्द्रियपञ्चकं मनश्चेति ॥ ३६—४३ ॥**

---

श्रीवीरराघवः ।

तर्हिकेनोपायेनप्रकृतिमूलसंज्ञकपुनर्भवस्यनिवृत्तिः । कीदृशंवानिवृत्तपुनर्भवंजीवरूपमित्यत्राह यत्रेतिद्वाभ्याम्सदसच्छब्दौकार्यकारणपरौ"असद्वाइदमग्रआसीत्ततोवैसदजायत"इतिप्रयोगात्कारणावस्थाचप्रलयदशाततश्चायमर्थः यत्रात्मनीमेऽचिद्गतसदसद्रूपेउत्पत्तिविनाशावित्यर्थः अविद्ययाऽज्ञानेनात्मनिकृतेआरोपिते च तस्मिन्नात्मनिस्वसंविदा स्वशरीरकपरमात्मविषयसम्यग्ज्ञानेनप्रतिषिद्धौनिवृत्तेभवतः अनेनस्वसंविदेवपुनर्भवनिवृत्तिहेतुरितिदर्शितम् इतिशब्दःप्रकारवाचीइत्येवंविधंस्वसंविन्निवृत्तोत्पत्तिविनाशमित्यर्थः अतएवदर्शनंज्ञानं प्रकृतिसंगवियुक्तकेवलपरिशुद्धात्मस्वरूपज्ञानंयत्तद्ब्रह्मगुणतोबृहत्वाद्ब्रह्मशब्दवाच्यमसुक्तात्मस्वरूपं"ब्रह्मभूयायकल्पते'ब्रह्मणोहिप्रतिष्ठाहमितिमुक्तात्मन्यपिब्रह्मशब्दप्रयोगोदृश्यते ॥ ३३ ॥

॥ यदीति ॥ यदियदाएषावैशारदीमहदादिकार्यमुखेनविपुलाएषामायातन्मूलामतिरभिमतिः देहात्माभिमानादिरूपाचोपरतानिवृत्ताभवति उपरतिरत्रसंबंधविरहः "नित्यासततविक्रियागौरनाद्यंतवतीतिमाया शब्दवाच्यायाः प्रकृतेर्नित्यत्वावगमेनविनाशायोगात्एवेत्यस्यतदेत्यादितद्वैवसंपन्नेपरमात्मप्राप्तचाअभिव्यक्तेस्वेस्वकीयेमहिम्निगुणाष्टकरूपेमुक्तैश्वर्यात्मके महिम्निमहीयतेमहपूजायांमहशब्दादाचारक्यजंतात्कर्मण्यात्मनेपदंस्वकीयमहिमलब्ध्याहेतुनापरमव्योमवासिभिर्बहुमतोभवतीतिविदुःमुक्तात्मस्वरूपयाथात्म्यविदः यद्वा संपन्नइति प्रथमांततयाछेदःस्वमहिम्निमुक्तैश्वर्येसंपन्नःतल्लब्ध्यासमृद्धः महीयतइतिनिरवशेषत्वेनप्रकृतिसंबंधतत्कार्यनिवृत्तावाविर्भूतगुणाष्टकयुक्तःपरब्रह्मानुभवन्परमव्योमनिवासिभिर्बहुमतोवतिष्ठतेइत्यर्थः अपहतपाप्मत्वादिगुणाष्टकमहिम्नि "प्रकाश्यंतेनजन्यंत"इत्यादिशास्त्रेभ्यःस्वाभाविकत्वावगमात्स्वेमहिम्नीत्युक्तंभवति ॥ ३४ ॥

तदेवंप्रसक्तानुप्रसक्ततयाजीवस्वरूपंस्थितम्अथपरमप्रस्कतस्यभगवज्जन्मनोविलक्षणत्वमाह । एवमितिअजनस्यजीववत्कर्मायत्तजननरहितस्याकर्त्तुस्तद्वदेवपुण्यपापात्मककर्मरहितस्यहृत्पतेः हृदयकमलमध्यावस्थानेनपातिसर्वाणिभूतानिनियमयतीतिहृत्पतिः तस्यसर्वांतरात्मनोभगवतः एवमुक्तविधानिजन्मानिकर्माणिकवयोवेदगुह्यानिवर्णयंतिकवयोज्ञानाधिकाः"नमुह्यान्चितयन्कविरितिप्रयोगात्वेदगुह्यानिवेदरहस्यानिवर्णयंति"अजायमानोबहुधाविजायते तस्यधीराःपरिजानंतियोनिमित्यादिहिवेदतात्पर्यविषयविभागप्रदर्शन पूर्वकंयादृशानिभावयतितादृशानिवर्णयंति तत्राजायमानइत्यनेनजीवस्ययाकर्मायत्तोत्पत्तिः सेश्वरस्यप्रतिषिध्यतेबहुधाविजायतइत्यनेनाकर्मायत्तास्वसंकल्पमूलाचोत्पत्तिर्बोध्यते नहिंस्याद्भूतानिपशुमालभेतेत्यादिवद्विधिनिषेधयोर्भिन्नविषयत्वावश्यंभावात्तयोरेकविषयत्वे पूर्वोत्तरव्याघातापत्तेः एवमुत्सर्गापवादसामान्यविशेषन्यायादिभिर्निर्णेतव्यमिममर्थंकवयएवजानंतीत्यभिप्रायेणोक्तंतस्यधीराः परिजानंतियोनिमितितस्यप्रस्कतस्यभगवतोयोनिमधिष्ठेयंशरीरंधीराः परिजानंतिअकर्मायत्तत्वस्वेच्छोपात्तत्वाजहत्स्वभावत्वादिरूपेणधीराएवजानंतीत्यर्थः अकर्त्तुःकर्माणिवेदगुह्यानिइत्यनेनकर्मविधिनिषेधवादिन्यो "निष्क्रियंनिष्कलंयस्यचैतत्कर्मसवैवेदितव्य"इत्यादिश्रुत्योरपिकविभिर्निर्णेतव्योविषयविभागोद्रष्टव्यःइतिसूचितम्इदंसगुणनिर्गुणसशरीराशरीर विकाराविकारजीवब्रह्मभेदाभेदश्रुतिविषयविभागस्याप्युपलक्षणम् एवंचजन्मकर्मगुणशरीरविकारभेदप्रतिपादकानांवेदांतवाक्यानां तत्प्रतिषेधपरैर्वाक्यैर्बाध्यत्वंमृषावादिभिरुक्तमनादरणीयमितिभावःतथाचोक्तंवात्स्यैर्वरदगुरुभिः"यद्ब्रह्मणोगुणशरीरविकारभेदकर्मादिगोचरविधिः प्रतिषेधवाचः अन्योन्यभिन्नविशयानविरोधगंधमर्हति तन्नविश्रयः प्रतिषेधवाच्या"इतिअकर्त्तुःकर्माणिवेदगुह्यानिइत्यनेनभगवच्चेष्टितानांजगद्व्यापार रूपाणांजीवचेष्टितसजातीयतयाचिंतयितुमशक्यानिकिंतुतद्वैजात्यंनवेदादेवावगंतव्यानितथैवचकविभिरपिवर्णयंतइतिचोक्तं कवयोवर्णयंतीत्यनेनकवीनांभगवज्जन्मकर्मयाथात्म्यवेदनमूलकतद्वर्णयितृत्वोक्त्याकुबुद्धीनांभगवज्जन्मकर्मादियाथात्म्यावेदित्वंचसूचितमिति ॥ ३५ ॥

तदेवोपपादयितुंतावद्भगवतस्तच्चेष्टितस्यजीवतच्चेष्टिताभ्यांवैजात्यंदर्शयति सवाइतिसवैभगवानमोघलीलः अमोघावितथालीलायस्यसः इदंपरिदृश्यमानंचिदचिदात्मकंजगत्सृजत्यवतिरक्षतिअत्तिसंहरतिनचास्मिन् जगतिसज्जते चलीलाशब्देनजगद्व्यापारस्यलीलात्वमुक्तम् अनेनप्राचीनकर्मवासनानुगुणप्रवृत्तबुद्ध्यनुगुणकेवलसुखदुःखाद्यर्थजीवकर्मव्यावृत्तिः अमोघपदेननिर्विघ्नसमाप्ति वदताप्यनेकांतरायोपहतजीवकर्मवैजात्यमुक्तंसमुदायेनजीववैजात्यंविश्वंसृजत्यवत्यत्तीत्यनेनसर्गादिकर्मणः कृत्स्नजगद्विषयकत्वोक्त्यानल्पत्वमवगतम् अनेनाल्पजीवव्यावृत्तिः अस्मिन्नसज्जतइतिसंगनिषेधेनसंगहेतुकरागद्वेषादिराहित्यंलब्धंतेनवैषम्यनैर्घृण्याभावः एवंचजीवव्यावृत्तिः किंचभूतेषुचिदचिदात्मकेषु"नहिंस्याद्भूतानीत्यादाविवात्रभूतशब्दोऽचेतनसंसृष्टचेतनवाचीअंतर्हितःअंतरात्मतयावस्थितोऽपिभूतैरविज्ञात इत्यर्थःजीवस्त्वनुमापकैर्लक्षणैर्विज्ञायतइतिततोव्यावृत्तिः आत्मतंत्रःस्वतंत्रःजीवस्तुकालकर्मदैवादिपरतंत्रः षड्गुणेशःज्ञानशक्तिबलैश्वर्यवीर्यतेजसांषण्णांगुणानामीशः अधिपतिराश्रयइतियावत्जीवस्तुतद्विपरीतगुणाश्रयः षाड्वर्गिकंषडिंद्रियवेद्यंशब्दादिकंभुंक्ते तेनलीलारसमनुभवतिजीवस्तुकर्मवश्यःसुख्यतिदुःख्यतिमुह्यतिचेतिभावः ॥ ३६ ॥

### श्रीविजयध्वजः ।

जीवस्यैवंविधानादिबंधनिवर्तकंब्रह्मज्ञानमेवनकर्मादिकामित्यभिप्रेत्याह यत्रेति यत्रपरमात्मनिसदसद्रूपेव्यक्ताव्यक्तमितिप्रकृतिप्राकृतरूपेस्वसंविदास्वरूपज्ञानेनप्रतिषिद्धेअनादितएवनिवृत्ते अविद्ययाअज्ञानेनआत्मनिजीवेकृतेइतियद्दर्शनंज्ञानंतद्ब्रह्मज्ञानंसंसारनिवर्तकमितिशेषइत्येकान्वयः ॥ ३३ ॥

कंठोक्त्याऽऽह यदिति यदिसम्यगपरोक्षज्ञानोदयसाध्योत्तमप्रसादरूपैषा विशारदस्यहरेर्विद्यमाना देवीद्योतमानामातिर्ज्ञानरूपा मायेच्छा अपरोक्षज्ञानदानेननैनंजीवंसंसारयामीत्युपरतातस्मान्निवृत्तार्तार्हितंजीवंसंपन्नएवेतिपरंब्रह्मप्राप्तएवेतिविदुःकिंच स्वस्वरूपेज्ञानानंदाद्यात्मकेमहिम्निस्थितःस्वावरमुक्तजनैर्महीयतेपूज्यतइत्यन्वयः महीयतइत्युक्त्याएषाकार्यकारणलक्षणप्रपंचविवर्तरूपादेवस्यविष्णोःसंबंधिनीमायावैशारदीविघटमानसंसाररूपामतिर्बुद्धिर्येद्युपरतातदास्वात्मरूपंब्रह्मसंपन्नंतदैक्यमापन्नंविदुरित्येतन्निरस्तं भेदनिष्ठत्वात्पूजकभावस्येति भावः ॥ ३४ ॥

हरेरेवंविधावतारकर्मभिराप्तकामत्वेनप्रयोजनाभावेपिजीवानांप्रयोजनमस्तीत्याह एवमितिअनन्याधीनकर्तृत्वात्फलोद्देशाभावाद्वाऽकर्तुरजनस्यजनविलक्षणस्यवाहृत्पतेःमनःप्रेरकस्यविष्णोरेवंविधानित्रेद गुह्यानिउपनिषत्प्रतिपाद्यानिजन्मानिकर्माणिचकवयःसंसारमोक्षायवर्णयंतिस्म हिशब्देनहरेःसाकल्येनक्रियाराहित्यंप्रतिषेधतिअन्यथोत्तरश्लोकविरोधादित्येकान्वयः तस्माज्जीवानांसंसारमोक्षएवभगवदवतारपराक्रमप्रयोजनमित्यर्थः ॥ ३५ ॥

फलाभिसंध्यभावादकर्तृत्वंनकर्तृत्वाभावादितियत्तत्स्पष्टमाह सवाइति अमोघलीलः सत्यकामलक्षणक्रीडः सपद्मनाभएवइदंविश्वंसृजतिअवतिरक्षति अत्तिसंहरति नरुद्रादिः तथाप्यस्मिन्जगतिनसज्जतेलौकिककर्तृवत्फलासक्तोनभवति अतोऽकर्ता नतुकर्तृत्वाभावात् अभोक्तृत्वमपिदुःखाभोगादेव नतुभोगाभावात् सुखभोक्तृत्वसंभवादित्यभिप्रेत्याहभूतेष्विति पंचभूतैःसंभूयोत्पन्नत्वात्भूतेषुशरीरेष्वंतर्हितःमनः श्रोत्रादिषडिंद्रियवर्गग्राह्यशब्दादिविशयसारंजिघ्रतिभुंक्तेनतुदुःखादिकं कुतःआत्मतंत्रः नहिस्वतंत्रस्यदुःखादनंघटते। इतोपिनेत्याह षडिति षड्गुणेशः षडिंद्रियविषयेशः अतश्चसारभुक् तस्मादभोक्तृत्वंनामदुःखाभोगएवनतुभोक्तृत्वाभावादित्यर्थः ॥ आत्मतंत्रइत्यनेनविशेषणेनईश्वरएवदेहेप्रविष्टोजीवोभवति नान्यइत्यर्थः सवाइदमित्यनेनसमर्थ्यतइत्येतत्दूषितं नहिसुखमेवस्याद्दुःखमप्येवपिनस्यादितिकर्तुंसमर्थईश्वरः सुखदुःखपात्रीभूतंजीवत्वमभिकांक्षतिईश्वरत्वविरोधात् ॥ ३६ ॥

---

### क्रमसन्दर्भः ।

अथ जीवस्वरूपे भगवत्स्वरूपे च तत्सम्बन्धं वारयति पूर्व्वाध्यायोक्तं ब्रह्म च लक्षयति यत्रेति द्वाभ्याम् । यत्र यस्मिन् दर्शने स्थूलसूक्ष्मे रूपे शरीरे स्वसंविदा जीवात्मनः स्वरूपज्ञानेन प्रतिषिद्धे भवतः । केन प्रकारेण वस्तुत आत्मनि ते नस्त एव किन्त्वाविद्ययैवात्मनि कृते अध्यस्ते इति एतत्प्रकारेणेत्यर्थः । तद्ब्रह्मदर्शनमिति यत्तदोरन्वयः । ब्रह्मणो दर्शनं साक्षात्कारः । यत्र स्वसंविदेत्युक्त्या जीवस्वरूपज्ञानमपि तदाश्रयमेव भवतीति तथा केवलस्वसंविदा ते निषिद्धे न भवत इति च ज्ञापितम् । ततश्च जीवत एवाविद्याकल्पितमायाकार्य्यसम्बन्धमिथ्यात्वज्ञापकजीवस्वरूपसाक्षात्करणतादात्म्यापन्नब्रह्मसाक्षात्कारो जीवन्मुक्तिविशेष इत्यर्थः । ईदृशमेव तन्मुक्तिलक्षणं श्रीकापिलेये मुक्ताश्रयमित्यादि चतुष्टये दर्शितम् । तस्मादस्य प्रारब्धकर्म्ममात्राणामनभिनिवेशेनैव भोगः । एवमेवोक्तं "तत्र को मोहः कः शोकः एकत्वमनुपश्यत" इति ॥ ३३ ॥

अथान्तिमां ब्रह्मसाक्षात्कारलक्षणां मुक्तिमाह यदीति । एषा जीवन्मुक्तिदशायां स्थिता । विशारदेन परमेश्वरेण दत्ता । देवी द्योतमाना मतिर्व्विद्या तद्रूपा माया स्वरूपशक्तिवृत्तिभूतविद्याविर्भावद्वारलक्षणा सत्त्वमयी मायावृत्तिः सा यदि उपरता निवृत्ता भवति तदा व्यवधानाभासस्यापि राहित्यात् सम्पन्नो लब्धब्रह्मानन्दसम्पत्तिरेवेति विदुर्मुनयः । ततश्च तत्सम्पत्तिलाभात् स्वे महिम्नि स्वरूपसम्पत्तावपि महीयते पूज्यते प्रकृष्टप्रकाशो भवतीत्यर्थः ॥ ३४ ॥

एवं भगवत्त्वं दर्शयित्वा ब्रह्मत्वं दर्शितम् । ननु ब्रह्मानुभवेनैव यदि मुक्तिः स्यात्तर्हि कथं जन्मगुह्यमित्यादिना तत्कीर्त्तनमात्रेण संसारविमोक्ष उक्तस्तत्राह एवमिति । यथैवाव्यवहितपूर्व्वोक्ताविद्यामायोपरतावेव ब्रह्मानुभवसम्पत्ती भवतः । एवं प्राकृतजन्मकर्म्मरहितस्य हृत्पतेः सर्व्वबुद्ध्यगोचरस्य जन्मानि कर्म्माणि च कवयो वर्णयन्ति । तत्तदुपरतावेव तज्जन्मकर्म्मानुभवसम्पत्ती साधकानां भवतः इति मन्यन्त इत्यर्थः । सम्पत्तिरत्र साक्षाल्लब्धिः । अतएव वेदगुह्यानीति । तथोक्तं श्रीभगवता । "जन्म कर्म्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः । त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्ज्जुनेति । तथैव तेषु श्रीशुकदेवादीनामपि ब्रह्मनिष्ठापरित्यागेनापि रागतः प्रवृत्तिर्व्वर्णयिष्यते द्वादशे स्वसुखनिभृतचेता इत्यादौ । अतो ब्रह्मवत्तन्निदिध्यासनेनैव संसारदुःखोपक्षयः स्यात्तदनुभवसम्पत्ती च भवत इत्यर्थः । पृथगर्थस्त्वेवमित्यस्य व्यवहितवाक्यार्थेनान्वयायोगात् कष्टाय सम्पद्यते चेति ॥ ३५ ॥

अथ प्राकृतासङ्गरहितस्यानन्दैकलीलत्वमाह स इति । षड्भिरैश्वर्य्यादिभिर्गुणैर्भगाख्यैरीष्टे यः स षड्गुणेशः षाड्वर्गिकं जिघ्रति तेषु नानाभेदत्वाद्वर्गात्मकेषु चरति । यद्भक्तानां भक्तिसुखम् । यद्वा "तत्तेऽर्हत्तम नमस्तुतिकर्म्म पूजाकर्म्मस्मृतिश्चरणयोः श्रवणं कथायाम् । संसेवया त्वयि विनेति षडङ्गया किं भक्तिं जनः परमहंसगतौ लभेतेति श्रीमत्प्रह्लादसम्मत्या षडङ्गवर्गसंसेवातः संजातं यत् प्रेमभक्तिसुखं तदेव जिघ्रति अन्विष्य आस्वादयतीत्यर्थः । ततश्च न चास्येति तादृशतल्लीलानभिज्ञानां कुमनीषित्वे स वेदेति तादृशतल्लीलातत्त्वस्य भक्त्येकानुभवनीयत्वे सङ्गमनीयम् । अतएव अथेह धन्या इत्यादीनि सुष्ठु सङ्गतानि स्युः ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥

---

## सुबोधिनी ।

किमतोयद्येवंतत्राहयत्रेमेइतिइवस्कतस्कसर्वोभगवानेवनजीवोनापिजडःप्रतीतिस्त्वाविद्यकी । यदापुनःस्वस्मिन्नेवाधिष्ठानेइमे स्थूलसूक्ष्मेब्रह्मानुभवेनप्रतिषिद्धेभवतश्चेत् प्रतिषेधेहेतुमाहअविद्ययात्मनिकृतेइति ब्रह्मानुभवव्यतिरेकेणात्मनिकृतेआत्मस्थानेतत्प्रतायितइत्यर्थः इतिशब्दोहेतौतत्तदैवब्रह्मदर्शनं ब्रह्मानुभवोभवतीर्थः सर्वत्रब्रह्मप्रतीतिस्तिष्ठति जडजीवप्रतीतिर्गच्छतीतिभावः ॥ ३३ ॥

किंतात्रताकदावाप्रतीतिरेवागच्छतीतितत् द्वयंनिरूपयातियद्येषेति एषामायाभगवतोविशारदस्यसंबंधिनी देवीदेवतारूपापूर्वावस्था-चेदुपरताभवतितथापितस्यानेतिस्वभावत्वंभवेत् किंतुसामतिरूपाभवातियदाप्रकृतिरूपाभवति तदामायानिवृत्तिरूपामतिरिति विशेषः तदाऽयंजीवः स्वेमहिम्निसंपन्नएवस्वरूपंप्राप्तइवमहीयते स्वाराज्यंकरोतीत्यर्थः एवंसर्वेहरिरित्येतदर्थंसपरिकरः पुरुषावतारोनिरूपितःएवमन्यत्रापिकृष्णेपुरुषोत्तमेजन्मकर्मनिरूपणंतस्यभगवत्तत्त्वज्ञानार्थमेवेत्यर्थः ॥ ३४ ॥

एवंभिति ननुउपदेशातिदेशयोः कोविशेषइत्यतआह अजनस्यजन्मानिअकर्त्तुःकर्माणीति विरुद्धधर्माश्रयत्वेनमाहात्म्यंविशेषः "एतावानस्यमहिमेतिवचनात्एवमेवहिकवयोवर्णयंतिविरुद्धधर्माश्रयत्वेनमाहात्म्यंविशेषः ननुकथंप्रतीतिराविरोधेनतत्राहवेदगुह्यानीतिवेदेपि गोप्यानिश्रांतानांविरुद्धवत्प्रतीत्यर्थंतथावचनंवस्तुतस्तुसर्वं भवनसमर्थंब्रह्मणिविरोधएवनास्तिकिंचहृत्पतेः सर्वेषांहृदयानांसएवप्रेरकः तत्रयथाअनेकविधंप्रेरयातितथाऽनेकविधोभवतीत्यर्थः ॥ ३५ ॥

कथंवर्णयंतिकावातस्यलीलाकिंस्वरूपंकथंज्ञायतेइत्याकांक्षायामाहसवाइदमितित्रिभिः । अथवासूतजानासीत्यस्यवाउत्तरंसपुरुषोत्तमः वैनिश्चयेनकालादीनांतत्प्रेर्यत्वातइदंविश्वमिति प्रपंचेभेदोनिवारितः अक्षरकालकर्मस्वभावप्रकृतिपुरुषैः क्रियतेजगदितियत् बहुधानिरूपितंतद्वस्तुतोभगवानेवकरोतितत्रहेतुः अमोघलीलइतिकेवलमक्षरादिभिः कृतस्वतंत्रस्यभगवतइच्छाभावेसतिक्रियाव्यर्थास्यात् कार्यव्यावृत्तत्वेनसम्यक्स्फुरणाभावाच्चभगवतस्तुलीलासाजगतो भोग्यत्वात्व्रीहीणिवासृजत्यवत्यत्तिलक्षणाकथनात् अन्येषांकर्मकरत्वेनाप्रयोजकत्वमुक्तंजीवानामपितथात्वेनवैलक्षण्यमाहनसज्जतइतितत्कृतगुणमोषमाहषडितियः संगः तन्नास्तितत्रप्रमाणमिवकथयन्नस्मिन्नितिनिर्दिशातितेपुस्वांशभूतेषुजीवेषुचनसंगः जीवजडयोरनासक्तिरुक्तानुसर्वत्रकार्यकारणयोर्दर्शनात् भगवतश्चादर्शनात्कथंभगवान्करोतिदृष्टेभवतिअदृष्टकल्पनायाअन्याय्यत्वाच्च तत्राह अंतर्हितआत्मतंत्रइतिअंतर्हितत्वाददर्शनम् आत्मतंत्रत्वान्नदृष्टसंभवः दृष्टानांपर-तंत्रत्वात्ननुसर्वत्रांतर्हितः अनुप्रविष्टश्चेत्करोतितदाभोगेदोषःजीवैः सहभोगात्प्रथमतएववाभोगेभुज्यमानानामभावत्वापत्तिः इत्याशंक्याहषाड्वार्गिकंजिघ्रतिभोगोहींद्रियसाध्यः इंद्रियाणितुधर्मानेवगृह्णंतिनधर्मिणः ततकेवलानांग्रहणंजीवैरशक्यमिंद्रियाणांचक्षणमात्रंधर्मैकदेशसंबंधः तथाच विषयाणांभोगः भगवत्साध्यएवजिघ्रतीतिधर्माणामेवग्रहणंलोकेकेवल धर्मग्रहणंघ्राणएवेत्युक्तंषरणामिंद्रियाणांपंचपर्वाविद्याव्याप्तत्वेनप्रत्येकंपंचरूपत्वात् पंचविधत्वंवर्गत्वंतथाचत्रिंशद्भेदाभवंतिअष्टाविंशति भेदोनिःस्वयंभक्तिश्चेतितेषांरसान्स्वयमेवानुभवतीत्यर्थः ज्ञानसहितानांरूपादीनांनजीवंप्रतिसर्वभावेनात्म समर्पणंकिंत्वेकदेशेनकथंचिदेवनतथाभगवद्भक्तिरित्याहषड्-गुणेशइतिईशत्वेननियामकत्वंचोक्तम्इत्यत्यंतसूक्ष्मेक्षिकयापदार्थोनिरूपितः ॥ ३६ ॥

---

## श्रीविश्वनाथचक्रवर्ती

नन्वेवं चेदिदं सर्व्वं वस्तुतो मायादर्शनमेव ब्रह्मदर्शनं किं तदित्याकाङ्क्षायामाह । यत्र भगवति इमे सदसद्रूपे उक्तलक्षणे मायिके स्थूलसूक्ष्मरूपे प्रतिषिद्धे भवतः तेनामायिकन्तु रूपं तस्य न प्रतिषिद्धमिति भावः । केन स्वेषां भक्तानां संविदा अनुभवेन । ते कथं भगवति न स्त इत्यत आह । अविद्यया आत्मनि जीवे एवकृते अध्यस्ते न त्वीश्वरे । यदुक्तम् । "देहाहङ्करणाद्देहाध्यासो जीवे ह्यविद्यया । न तथा जगदध्यासः परमात्मनि युज्यते" इति । तत् ततश्च तस्य ब्रह्मणो दर्शनं साक्षात्कारः स्यात् । यद्येषा माया देवी उपरता स्यात् तथा वैशारदी विशारदो भक्तानां हिते निपुणो भगवानेव तदीया मतिर्मामयं पश्यत्विति कृपामयी तदिच्छा यदि प्रवृत्ता स्यात् तदैव नान्यथा । "यमेवैष वृणुतेतेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वामिति श्रुतेः । यद्वा वैशारदी भगवद्विषयिणी मतिः पुरुषस्य स्यात् ३३

सम्पन्न एव तन्मतिमानेव पुरुषः सम्पन्नोऽन्यस्तु दरिद्र इत्यर्थः । विदुस्तत्त्वज्ञाः । स्वे महिम्नि स्वीये माहात्म्ये वर्त्तमानः स महीयते पूज्यते । अन्यथा स्वमाहात्म्याद्भ्रष्टः स निन्द्यत इति भावः ॥ ३४ ॥

एवमनेनोक्तलक्षणप्रकारेण मायिकशरीरद्वयप्रतिषेधेनेत्यर्थः । अजनस्य जन्मानि । "अजायमानो बहुधाभिजायत" इति श्रुतेः । अकर्त्तुः कर्म्माणि । "न चास्यकार्य्यं करणञ्च विद्यते" इत्यादौ स्वाभाविकी ज्ञानबलक्रिया चेति श्रुतेः । ननु जीवस्यापि वस्तुतोऽजनस्यैवाकर्त्तुरेव जन्मानि कर्म्माणि दृश्यन्ते । सत्यम् । तस्य तानि मायासम्बन्धेन अस्य तु तानि मायाप्रतिषेधेनेत्येष एव भेद इत्याह । वेदेषु वेदैर्व्वा गुह्यानि रहस्यत्वेन परमोपादेयत्वेन च संवृत्य स्थापितानि तात्त्विकानि । जीवस्य तु तानि मायिकत्वेन हेयान्यवास्तवानीत्यर्थः । यदुक्तं गीतोपनिषदा । "जन्म कर्म्म च मे दिव्यमेवं यो वेत्ति तत्त्वत" इति । हृत्पतेरन्तर्यामिणः अतोविराड्रूपस्यैवम्भूतत्वाभावादवतारमध्ये तस्य न गणनेति प्रकरणार्थः ॥ ३५ ॥

भगवतस्त्वन्यान्यपिततो वैलक्षण्यानि बहूनि सन्ति तत्र प्रथमं निरङ्कुशमैश्वर्य्यमाह स वा इति । षाड्वर्गिकामिंद्रियषड्वर्गविषयं जिघ्रति दूरादेव गन्धवद्गृह्णाति न तु सज्जत इत्यर्थः । कुतः षड्गुणेशः षडिन्द्रियनियन्ता । यद्वा षड्भिर्गुणैर्भगशब्दवाच्यैरैश्वर्य्याद्यैरीशः अतः षडैश्वर्य्यवर्गोत्थं सुखमनुभवति ॥ ३६ ॥

---

नचास्य कश्चिन्निपुरोन धातुरवैति जन्तुः कुमनीष ऊतीः । (१)
नामानि रूपाणि मनोवचोभिः संतन्वतो नटचर्य्यामिवाज्ञः ॥ ३७ ॥
स वेद धातुः पदवीं परस्य दुरन्तवीर्य्यस्य रथाङ्गपाणेः ।
योऽमायया सन्ततयानुवृत्त्या भजेत तत्पादसरोजगन्धम् ॥ ३८ ॥
अथेह धन्या भगवन्त इत्थं यद्वासुदेवेऽखिललोकनाथे ।
कुर्व्वन्ति सर्व्वात्मकमात्मभावं न यत्र भूयः परिवर्त्त उग्रः ॥ ३९ ॥
इदं भागवतं नाम पुराणं ब्रह्मसम्मितम् ।
उत्तमःश्लोकचरितं चकार भगवानृषिः ।
निःश्रेयसाय लोकस्य धन्यं स्वस्त्ययनं महत् ॥ ४० ॥

सिद्धांतप्रदीपः ।

मोक्षप्रकारमाहयत्रेतिद्वाभ्याम् यत्रयस्मिन् कालेजन्मनिवा भगवज्जन्मकर्मकथन श्रवणविषयेइत्यर्थः यत्रभगवज्जन्मकर्मकथन श्रवण मननादि नास्वस्योपास्यभूतस्ययद्विज्ञानेनसर्वविज्ञानं भवतीत्येवंभूतस्यसंयिज्ज्ञानंस्यात् तेनज्ञानेनपूर्व मविद्ययाअज्ञानेन आत्मनिकृते आत्मत्वेनस्वीकृते इमेसदसद्रूपेस्थूल सूक्ष्मरूपेप्रतिषिद्धे आनात्मत्वेननिवारितेभगवतः चिदचिच्छक्तिमद्ब्रह्मज्ञानेनैवात्मानात्मज्ञानोदया त्तदाइति इत्येवंप्रकारेणतद्ब्रह्मदर्शनंभवति तत्परब्रह्मज्ञानंभवति ॥ ३३ ॥

यदियदैवएषाकार्यकारणात्मिकादेवस्यशक्तिरूपामायाउपरतास्यात् । तदैववैशारदीमतिः विशारदः सर्वज्ञः परमपुरुषस्तद्विषयगामतिः । ध्रुवास्मृतिर्भवति तदनंतरंचप्रारब्धकर्मक्षयेसतिप्रकृतिसंबंधवियुक्तः । अपहतपाप्मत्वादिगुणसंपन्नः एवभवति । तदास्वेमहिम्नि भगवद्भावापत्तिलक्षणेमहीयते । पूज्यतेपरमधामवासिभिः सत्कृतोभवतीत्यर्थः । महपूजायामित्यस्यरूपम् इति इत्येतत्सर्वतत्त्वज्ञाविदुः । एवंवद्धस्यभगवज्जन्मकर्मरहस्यकथनश्रवणादिनामुक्तिर्भवतीति प्रासंगिकप्रकरणार्थः । तदुक्तं भगवतापूर्वाचार्येण "ज्ञानस्वरूपंचहरेरधीनंशरीरसंयोगवियोगयोग्यम् । अणुंहिजीवंप्रतिदेहभिन्नंज्ञातृत्ववंतंयदनंतमाहुः ।" अनादिमायापरियुक्तरूपं त्वेनंविदुर्वैभगवत्प्रसादादिति ॥ ३४ ॥

प्रासंगिकंसमाप्यप्रकृतंसमापयन् स्वमतेबहुकविसंमतिं दर्शयति । एवमिति इत्पतेरंतर्यामिवासुदेवस्य अजनस्य देहेजाते आत्मानंजातंमन्यतेसजनः जीवः तद्भिन्नस्यस्वात्मयाथात्म्यज्ञानपूर्वाणिस्वेच्छकानिजन्मानि अकर्तुःकर्मवश्यतयाशुभाशुभकर्मकर्ताजीवस्तद्भिन्नस्यकर्माणिचवेदगुह्यानि । "अजायमानोबहुधाव्यजायतयस्यचैतत्कर्मसवेदितव्य" इत्यादिवेदगोप्यतयास्थितानि । जगृहेपौरुषंरूपमित्यादिनाजन्मगुह्यंभगवतो यएतत्प्रयतोनरःसायंप्रातर्गृणन्भक्त्या दुःखग्रामाद्विमुच्यतइत्यंततोजीवजन्मकर्मविसदृशानिमयावर्णितानि । यथाएव मन्येपिकवयः क्रांतदर्शिनोवर्णयंतीत्यन्वयः ॥ ३५ ॥

भगवतोजन्मकर्मरहस्यकथनश्रवणादिनाजीवः संसाराद्विमुच्यतेइतिभगवदुत्कर्षउक्तः । अथनिखिलजगज्जन्मादिहेतुत्वेनासंगत्वस्वतंत्रत्वादिनापुनरुत्कर्षःकोमुच्यते कश्चनेत्याकांक्षायांबद्धं मुमुक्षुंचेतिजीवद्वैविध्यंम्चाह । सवैइतित्रिभिः षाड्वर्गिकमिंद्रियषड्कवेद्यम् । जिघ्रति भुंक्ते यतः षडिंद्रियेशः । यद्वाज्ञानशक्तिबलैश्वर्यतेजओजसामीशः ॥ ३६ ॥

भाषा टीका ।

जिस ज्ञानदशा मे यह अचेतन गत कारण कार्या वस्था मे उत्पत्ति विनाश रूप दोनो भाव अपने अज्ञान से आत्मामे कल्पित किये हुये निवृत्त होजाते हैं वही मुक्तात्मा का दर्शन है ॥ ३३ ॥

जव यह सर्वज्ञ ईश्वरकी शक्ति क्रीडा करने वाली माया निवृत्त होकर मति दिव्यज्ञान रूप होजाती है तव वह पुरुष कृतार्थ होकर अपने दिव्य स्वरूप मे पूजित होता है यह वात तत्त्व ज्ञानी पुरुष जानते हैं ॥ ३४ ॥

इस प्रकार से अंतर्यामि अकर्ता के कर्म तथा अजन्मा के जन्म जो वेदों मे भी गुप्त हैं तिनको दिव्यज्ञानी वर्णन करते हैं ॥ ३५ ॥

सोई परमात्मा अव्यर्थ लीलावाले इस संसार कों सृजते हैं रक्षा करते हैं संहार करते हैं तौभी इसमे लिप्त नहीं होते हैं प्राणियों के अंतर्यामी स्वतंत्र होने से श्रोत्रादिक छैइंद्रियों के नियंता होने से छैविषयों को दूरही से ग्रहण करते हैं ॥ ३६ ॥

श्रीधरस्वामी ।

ननु किमीश्वरस्य सृष्ट्यादिकर्म्मभिः विषयभोगैर्वा तत्राह न चेति । धातुः जगद्विधातुः ईश्वरस्य ऊतीः लीलाः कुमनीषः कुबुद्धिः निपुणेन तर्कादिकौशलेन न अवैति न जानाति । मनसा रूपाणि वचसा नामानि । सन्तन्वतः सम्यक् विस्तारयतः । वचोभिरिति बहुवचनं श्रुत्यभिप्रायेण । मनोवचोभिः सहेति वा ॥ ३७ ॥

(१) निपुणं विधातुः ऊतिमितिच विजयध्वजः ॥

### श्रीधरस्वामी ।

भक्तस्तु कथञ्चिज्जानातीत्याह स वेदेति । अमायया अकुटिलभावेन सन्ततया निरन्तरया अनुवृत्त्या आनुकूल्येन भजेत ॥ ३८ ॥

भक्तिमार्गे प्रवृत्तानृषीनभिनन्दति अथेति । यतो भक्त एव भगवत्तत्त्वम् जानाति अथ अतो भगवन्तः सर्व्वज्ञाः भवन्तो धन्याः कृतार्थाः । कुतो यद् यस्मात् इत्थं प्रश्नैः वासुदेवे आत्मभावं मनोवृत्तिं कुर्व्वन्ति । सर्व्वात्मकमैकान्तिकम् । यत्र यस्मिन् भावे सति भूयः परिवर्त्तो जन्ममरणाद्यावर्त्तो न भवति ॥ ३९ ॥

सूत किमेतत् शास्त्रम् अपूर्व्वं कथयसि तत्राह इदमिति । ब्रह्मसम्मितं सर्व्ववेदतुल्यम् । उत्तमः श्लोकस्य चरितं यस्मिन् तत् ऋषिर्व्यासः ॥ ४० ॥

---

### श्रीवीरराघवः

नेति यतएवमतएवास्यमनसासंकल्पेनवचोभिर्वेदात्मकैश्चनामानिदेवमनुष्यादिनामानिरूपाणिदेवादिरूपाणिचनटचर्यामिववितन्वतः
दधतोधातुरीश्वरस्योतीर्गतीःअवतेर्गतिश्चार्थःपदवीःप्रकारानितियावत्निपुणेनभावप्रधनोनिर्देशः नैपुण्येनापिजंतुःनावैतिनावगच्छतिअनव-
गतौहेतुंवदन्जंतुंविशिनष्टिकुत्सितामनीषाबुद्धिर्यस्यशब्दादिविषयासक्तबुद्धिरज्ञःअहंममाभिमानाभ्यांस्वात्मपरमात्मयाथात्म्यानभिज्ञः मनो
वचोभिर्नामानिरूपाणिचवितन्वतइत्यत्रमनसासंकल्पेनरूपसृष्टिर्वेदवचोभिर्नामकल्पनमितिविवेकः "नामरूपंचभूतानांकृत्यानांचप्रपंचनम्
वेदशब्देभ्यएवादौदेवादीनांचकारस"इतिवचनात्नटचर्यामिवेति चिदचिद्गतदोषराहित्यंविवक्षितंयद्वानटचर्यामिवनटोयथाविचित्रवेषा-
नुपादत्ते तद्वद्रूपाणिमत्स्यकूर्मादीनितन्नामानिचसंतन्वतः विभ्रतोऽस्यधातुर्जगत्स्रष्टुरीश्वरस्योतीर्गतीर्जंतुर्मनसावचोभिश्चनिपुणेनतत्रनैपु-
ण्येनचनावैतीत्यर्थः अत्रपक्षेनटचर्यामिवेतिदृष्टांतेनेदंविवक्षितम् नटस्यानेकवेषपरिग्रहेऽपियथास्वस्वभावात्यागः वेषाणांचेष्टामूलत्वं
चर्याणांश्चलीलात्वंतद्वदस्यापीतिकुमनीषोऽज्ञोजंतुर्नावैतीत्यनेनशब्दादिषुविरक्तःस्वात्मपरमात्मयाथात्म्यमननशीलस्त्ववैत्येवेतिसूचितं ॥३७॥

तदेवाह सइति यःपुमानमाययामायागुणकामादिरहितया संततयाअनुस्यूतयादुरंतवीर्यस्यापारवीर्यस्यरथांगपाणेरनुवृत्त्यासेवयात-
स्यरथांगपाणेः पादसरोजगंधंभजेतानुभवेत् सधातुरथांगपाणेःपदवींविद्जानातितथाचोक्तंभगवता "भक्त्यात्वनन्ययाशक्यअहमेवंविधो
ऽर्जुन ज्ञातुंद्रष्टुंचतत्त्वेनप्रवेष्टुंचपरंतपेति ॥ ३८ ॥

एवंमयोपपादितंभगवदवतारादिरहस्यममायिकाविच्छिन्नभगवद्भक्तियोगनिष्ठावंतोजानंत्येवात्रनाविप्रतिपत्तिरितिसूचितमश्रोतॄणांशौ
नकादीनांकृतार्थतांसहेतुकामाविःकरोति अथेति भगवंतइतिसंबोधनंयूयमित्यध्याहारः यद्वाहेमुनयः भगवंतःपूज्याभवंतःधन्याःकृतार्थाः
कुतःहियस्मादिहलोकेऽखिललोकनाथेवासुदेवे सर्वात्मकंसर्वप्रकारकंकरणत्रयेणापीत्यर्थः सर्वात्मकइतिपाठेसर्वस्यात्मनिसर्वशरीरकेवे
तिवासुदेवविशेषणम्आत्मभावंभावःयोगः आत्मनोभावः आत्मकर्तृकःसर्वात्मनइतिपाठे आत्मनामनसायोभावोभक्तिस्तंकुर्वंतितत्तोधन्या
इत्यर्थः कथंभक्तियोगमात्रकर्तृकत्वेनधन्यतेत्यपेक्षायामात्मभावंविशिनष्टि यत्रयस्मिन्नात्मभावेउग्रः गर्भजन्मजरामरणादिदुःखहेतुत्वेन
घोरःपरिवर्त्तःसंसारपरिवृत्तिर्भूयोनभवति ॥ ३९ ॥

तदेवंपुंसामेकांततः श्रेयस्तन्नःशंसितुमर्हसीत्यादीनांशौनकादिप्रश्नानां संग्रहेणोत्तराण्यभिधायाथैतच्छुश्रावयिषितभागवताख्यपुरा-
णमुखेनतान्येवविस्तरतः प्रतिपिपादयिषुस्तावदेतत्पुराणनिर्माणप्रकारंनिर्मातुर्बादरायणस्यनिर्माणप्रवृत्तिनिमित्तंनिर्मितस्यपुनःशुकंप्रत्य
ध्यायनंतेनाधीतस्यराज्ञेश्रावणंचसहेतुकंप्रष्टुमवसरप्रदानायभगवान्बादरायणस्तदिदंपुराणंनिर्मायपुत्रमध्याप्यतन्मुखेनप्रवर्त्तयामासतद-
हंतत्तन्मुखेनाधिगतमिदंपुराणंवः श्रावयिष्यामीत्याहसूतःइदमितिइदंभागवतमितिप्रसिद्धंपुराणंब्रह्मसंमितंब्रह्मवेदस्तेनसंमितंसमीकृतंवेद
तुल्यमित्यर्थःयद्वाब्रह्मपरंब्रह्मतत्सम्यक्मीयतेऽनेनेति ब्रह्मसंमितंबाहुलकात्करणेक्तःपरंब्रह्मप्रमापकमित्यर्थःयद्वासम्यक्मीयतेप्रमीयतइति-
कर्मण्येवक्तःब्रह्मसमितंयस्मात्तद्ब्रह्मसंमितम्संपूर्वादिणगतावित्यस्माद्वाकर्मणिक्तः"ङमोह्रस्वादचिङमुण्नित्यम् ॥ ८ । ३ । ३२ ॥इतिङमुडा
गमः ब्रह्मसस्यागितमवगतंयेनयस्माद्वातद्ब्रह्मसमितंतत्रहेतुंवदन्विशिनष्टिउत्तमश्लोकस्यभगवतश्चरितं चरितप्रतिपादकंप्रतिपाद्यप्रतिपादक
योरभेदविवक्षयोत्तमश्लोकचरितमित्युक्तम्एवंविधंपुराणंभगवान्नृषिर्निखिलनिगमद्रष्टाव्यासश्चकार ॥ ४० ॥

---

### श्रीविजयध्वजः ।

एवंविधमिथ्याज्ञानीतत्स्वरूपाज्ञानाद्भगवद्भजनादावनधिकारीत्याह नचेति वचोभिःसंकीर्तनयोग्यानिनामानि मनोभिःस्मरणयोग्या-
निरूपाणि सम्यक्तन्वतःविस्तारयतःमनोवचोभिर्नामरूपात्मकंप्रपंचंसृजतोवा सतांनिपुणंभद्रंविधातुःअस्यहरेःमतिमभिप्रायंगतिंवा क-
श्चिदपिनावैतिनजानाति कीदृशःकुमनीषःमिथ्याज्ञानी जंतुःकृमिसदृशः जंतुरितिपुनर्जायमानोम्रियमाणःमिश्रबुद्धिःसंसारी कुमनीषइ-
ति कुत्सितंप्रमाणविरुद्धंसर्वंमिथ्यात्वंमनसामन्यते नतुयुक्त्यावक्तुंशक्नोतीत्यद्वैतवादीवा कथमिवनटस्यांगुल्याद्यभिनयाविशेषाज्ञोनट-
चर्याभरतादिकथात्मिकांयथानजानातितथायामितिभावः ॥ ३७ ॥

तर्हिकीदृशोवेदेतितत्राह सइति योवेदप्रामाणिकःअमाययाअव्याजेन इदमखिलंमायाकल्पितमनिर्वाच्यंनभवतीतिभावेनवासंततया-
निरंतरयाप्रवाहरूपयाअनुवृत्त्यासेवया हृत्कमलमध्यनिवासिनस्तस्यपादसरोजयोर्गंधंभजेत अत्रैवास्वाद्यमप्रमनाभवेत् सपुरुषः दुरंत-
वीर्यस्यअसंख्यातपराक्रमस्य परस्यपूर्णस्य धातुःपोषणादिकर्तुः रथांगपाणेःश्रीनारायणस्य पदवींमार्गंस्वरूपस्थितिंवेदेत्येकान्वयः
धातुरित्युक्तेचतुर्मुखोपिस्यादित्यतःपरस्येति चतुर्मुखपरत्वमप्यक्षरस्यास्तिअतोरथांगपाणेरिति तस्माद्भागवताएवभगवदपरोक्षंलभंते-
नेतरइतिसिद्धम् ॥ ३८ ॥

### श्रीविजयध्वजः

भागवताअपिभवादृशाएवेत्याशयवानाह अथेति हेभगवंतःपूजावंतःभाग्यवंतोवा यत्रयस्मिन्भगवत्यात्मभावेस्वामिभृत्यभावेक्रियमाणेसतिभूयःपुनःउंरुद्रमपिग्रसतीतिउग्रःक्रूरःपरिवर्तःसंसारःमरणंवानस्यात् तस्मिन्नखिललोकनाथेसर्वात्मकेसर्वांतर्यामिणिवासुदेवेइत्थं-मुक्तप्रकारेणात्मभावंकुर्वंतीतियत्यस्मात् अथतस्मादिहचेतनराशौयूयंधन्यानिरपेक्षगुणपूर्णाःकृतकृत्याइत्येकान्वयः यत्रयस्मिन्नात्म-भावेक्रियमाणेपरिवर्तोनस्यात् तमात्मभावमितिवा ॥ ३९ ॥

धर्मःकंशरणंगतइतिप्रश्नंपरिहरति इदमित्यादिना ऋषिःसर्वज्ञोव्यासोभगवान्ब्रह्मणावेदेनसंमितंतुलितम्उत्तमश्लोकस्यहरेश्चरितानि-यस्मिन्संतितत्तथोक्तम् इदंबुद्धिस्थंभागवतंपुराणंचकार ॥ ४० ॥

---

### क्रमसंदर्भः ।

तल्लीलामयत्वादेवास्य पुराणस्य सर्व्वशास्त्रसारत्वमाह इदमिति सार्द्धकम् । ब्रह्मसम्मितमिति । नराकृतिपरब्रह्मणा श्रीकृष्णेन तुल्यातिमि वा । कृष्णे स्वधामोपगते इत्यादि वक्ष्यमाणत्वात् । धन्यं सर्व्वपुरुषार्थावहम् । अतएव स्वस्त्ययनं सर्व्वमङ्गलावहम् । महत् सर्व्वतः श्रेष्ठञ्च ॥ ४० ॥

---

### सुबोधिनी

वस्तुतस्तुनसम्यक्ज्ञायतएवेत्याह नचास्येति अयमभिप्रायः सर्वरसास्वादनंभगवतउक्तंतेचरसाउत्कृष्टाः अपकृष्टाः स्वतःआधारतःअधिकारिभेदेनचभवंतितेचभगवताअनुभूयंतेनवेतिसंदेहः सर्ववस्तुषुरसरूपेणभगवतएवप्रविष्टत्वात्नस्वात्मानंप्रतिउत्कृष्टता-अपकृष्टतावासर्वरूपताचद्वितीयापिकोटिः चकारात्प्रमाणांतरस्यापिनिवृत्तिः एवंनिरूपणेनभक्त्याभगवदाविर्भावात्पश्यन्नाह यस्येति कृष्णस्यकश्चिदितिब्रह्मापिनिपुणेनापिप्रमाणकरणेनतत्रहेतुः धातुरितिउत्पादकोहिभगवान्तदुपादानकोपलंभकःकस्मैप्रयोजनायकथंसृ-ष्टवानितिकथमन्योविजानीयात्क्रमितुल्यःऊहापोहकौशल्यरहितः भगवतोपिनस्वाभाविकाःक्रियाःकिंतुऊतीः निपातप्रयोगश्चावांतरभेदापरिज्ञानायसर्वथाज्ञानहेतुःमनोवचोभिःसहनामानिवेदानुरूपाणिसहन्विषयान् संतन्वतोविस्तारयतः "चतुर्भिश्चमहारोगैर्व्याप्ताऊतीर्नजानते नटवच्चापिकरणमन्यथाप्रतिभासनात्„ प्रमाणबलेनहिपरिज्ञानंप्रमाणव्यामोहार्थमेवनटप्रवृत्तिरित्याहनटचर्यामितिसुतरामज्ञः पुष्टिमार्गानभिज्ञइत्यर्थः ॥ ३८ ॥

तर्हिकथंनिस्तारइत्याह सवेदेतिधातुरितिपूर्ववत्सतुनज्ञातएवअज्ञायमानस्वरूपत्वात्कार्यंतुलौकिकंतन्मार्गपरिज्ञानेसमागमनंबुध्वासह-भावात्कार्याणांतत्त्वंज्ञायतेइतितस्यगतिर्मार्गोज्ञातव्यःलौकिकवैदिकप्रमाणाज्ञानभावेहेतुमाह परस्येतिसर्वप्रमाणात्दूरेवर्त्तमानस्येत्यर्थःकदाचिदशक्तावलपचलनेतत्रत्यैर्ज्ञायेतेत्याशंक्याहदुरंतवीर्यस्येतिदुष्टः अंतोयस्यवीर्यस्यपराक्रमोनसमाप्यतएवकदाचिदपिसमाप्तिश्चेत्प्रलयएवेतिदुरंतताप्रलयानंतरंतुज्ञातैवनास्तीतिभावः किंचकालस्यैवपरिज्ञानंसंभवतितच्चकालचक्रंपाणौयस्यकाल मपिस्थिरीकृत्यातिष्ठतिअथवासर्वमेवजगद्रथः तस्याप्यधश्चक्रंतत्पाणौयस्येतिहस्तचालनेनचलति हस्ताधारश्चसकथंशकटस्थैर्ज्ञातुं शक्यतेअतोभगवदनुवृत्तिरेवज्ञा-नहेतुरित्याहयोमाययेतिदीर्घकालाद्दरनैरंतर्यसेवायांमायाभावोप्ययं सर्वोहिलौकिकोवैदिकश्चमाययाभगवंतंभजतेएवंहिकृतेअयमस्मभ्यमिदमिहदास्यतीतिबुद्ध्याभगवतः सकाशात्पदार्थानग्रहीतुंभगवद्वञ्चनार्थप्रयत्नकरणात्भगवांस्तुततोपिचतुरः अतोमायात्याज्यास्वमुक्तिविचारेमाययेतिपर्यायः संततानिरंतराअनुपश्चाद्वृत्तिरितिगतिपश्चाद्ववोक्तिः दीर्घकालादरैर्बोधितौचरणपरिज्ञानंहिमार्गज्ञानेहेतुः तदेवपंकजंतस्यगंधःभगवतः शयनेपादसंवाहनेऊर्द्ध्वमुखस्यचरणस्यआघ्राणेगंधोनुभूयतेतथायेषांहृदयेभगवान्स्वच्छंदंशेतेवाहिरिंद्रियाणिचगंधेनाकृष्टानितत्रैवप्रविशंतिसचभगवन्मार्गंजानातीतिज्ञानपक्षः भक्तिपक्षेतुतस्यचरणेभक्तिमार्गः सचंशुद्धेविशदेऽतः करणेआविर्भूतंस-रोजंतत्रगंधः संतः प्रेमवातस्यभजनंनिरंतरानुवृत्तिरिति ॥ ३८ ॥

एवंप्रासंगिकमुक्त्वाभिन्नोपक्रमेणप्रस्तुतमाह अथेति प्रश्नेनैवज्ञायतेभवंतोभगवन्निष्ठाइति इहसंसारेभगवंतोभवंतः योयच्छन्दःसएवसइतिवचनात् धन्याइतिधनंभगवद्भक्तिर्ज्ञानंवाअर्हंतीतिधन्याः इत्थमितिर्हीनमपिसंबोध्यअनवसरमवसरीकृत्यतन्मुखादपि परमादरेणश्रवणेनैवंप्रकारः वासुदेवइतिदेवतांतराभजनंनिरूपितम् अखिललोकनाथइतितस्यसर्वैश्वर्यंचज्ञात्वा वेदांतवेद्यतांच एवंमाहात्म्यज्ञानार्थं सुदृढंस्नेहार्थंचविशेषणद्वयमुक्त्वारुच्यर्थमात्मपदं प्रयुज्यभावंदेवत्वेनरतिंकुर्वंति यतःअतोधन्याइतिपूर्वेणसं-बंधःअस्यफलंपुनः कालसंसारचक्रेमहावर्त्तरूपेपुनः पतनाभावः एतद्देहावसानपर्यंतं यथाभवतुतथेतिपुनः शब्दार्थः अनादराभावायेत्यग्रइति ॥ ३९ ॥

कुतइदमुद्धृतमित्याकांक्षायामाह इदंभागवतमिति भगवतः सर्वसंबंधिभागवतंनामेतिप्रसिद्धंपुरातनंपुराणमितिजातिशब्दोवावेदेनसम्यङ्मितंमतांतरैर्विनात्रवेदाविप्रतिषेधः वस्तुनिरूपणार्थप्रासंगिककथापिपुरुषोत्तमकथैवेत्याह उत्तमश्लोकचरितमितिउत्तमश्लोकस्यचरितंयत्रसर्वज्ञानेनभगवान्वेदव्यासः अनुभूयआह ॥ ४० ॥

---

### श्रीविश्वनाथ चक्रवर्त्ती ।

ज्ञानाद्यगम्यत्वमाह न चेति । निपुणेन ज्ञानयोगादिनैपुण्येन उतीर्लीलाः नामानि रूपाणि मनोवचोवृत्तिभिर्नावैति मनोवचसोरगम्यत्वादिति भावः । कुमनीष इति जन्तुरिति यो हि भक्तिहीनो ज्ञानी नामरूपवद्वस्तुमात्रमेव मिथ्येत्याचष्टे तं प्रत्ययमाक्षेपः । सन्तन्वतः

तदिदं ग्राहयामास सुतमात्मवतां वरम् ।
सर्व्ववेदेतिहासानां सारं सारं समुद्धृतम् ॥ ४१ ॥
स तु संश्रावयामास महाराजं परीक्षितम् ।
प्रायोपविष्टं गङ्गायां परीतं परमर्षिभिः ॥ ४२ ॥
कृष्णेस्वधामोपगते धर्म्मज्ञानादिभिः सह ।
कलौ नष्टदृशामेषः पुराणार्कोऽधुनोदितः ॥ ४३ ॥

### श्रीविश्वनाथचक्रवर्त्ती ।

अवतीर्यावतीर्य कृपया तानि विस्तारयतः । अज्ञाने दृष्टान्तः । नटस्य चर्य्यी पाणयादिभिरभिनीयमानस्य गीतपदार्थस्य चन्द्रकमलादे-र्नामरूपादि प्रदर्शनां यथा अज्ञो नावैति । अतो नास्वादं लभते ततश्च रसममूलकं ब्रूते विज्ञः सभ्यस्तु सकलसहृदयसाक्षिकं रसं साक्षा-देवानुभवतीत्यर्थः ॥ ३७ ॥ भक्तिगम्यत्वमाह स वेदेति ॥ ३८ ॥

भक्तिविहीना वयमेवाक्षेपविषयीभूता भवामेति विषीदतः शौनकादीनाह अथेहेति । भगवन्तः सर्व्वज्ञाः ।"वेत्ति विद्यामविद्याञ्च स वाच्यो भगवानिति वैष्णवनिरुक्तेः । सर्व्वात्मकमैकान्तिकम् आत्मनो मनसो भावं यत्र सति परिवर्त्तो जन्ममरणाद्यावर्त्तः ॥ ३९ ॥

सूत किमिदमपूर्व्वमश्रुतचरं शास्त्रं कथयसीति तत्राह इदमिति । ब्रह्म श्रीकृष्णास्तत्तुल्यम् । ऋषिर्व्यासः ॥ ४० ॥

---

### सिद्धान्तप्रदीपः ।

नामानिरूपाणिमनोवचोभिः संतन्वतः मनसासंकल्पेनवैवचोभिर्वेदरूपैः । नामानिदेवमनुष्यादिपदानि । रूपाणिपदार्थभूतानि देव-मनुष्यादिशरीराणिविस्तारयतः ऊतीर्गतीः पदवीरित्यर्थः कुत्सितामनीषाविषयप्रवणाबुद्धिर्यस्यसनिपुणेनतर्कादिकौशलेनापिनावैति । नावगच्छति नटचर्याम् अज्ञइवभगवत्पदव्यनभिज्ञानां नित्यवद्धानां जीवानां तज्जन्मादिरहस्यश्रवणाद्यसंभवात्संसाराद्विमुक्तिर्नास्तीति-भावः ॥ ३७ ॥

मुमुक्षुस्तुकथंचिदवगच्छतीत्याह । स इति अमाययादंभादिदोषशून्ययासंततयानिरंतरया अनुवृत्या ॥ ३८ ॥

भवंतस्तु मुमुक्षवइतिमुनीनभिनंदति । अथेति । हेभगवंतः इहलोके भवंतः धन्याःकृतार्थाः । तत्रहेतुमाह यदिति । यतः इत्थंप्रश्नश-ब्देन भगवदनन्यविषयेन वासुदेवे आत्मभावंचित्तैकाग्रचं सर्वात्मकम् संपूर्णम् कुर्वंति यत्रयस्मिन्भावेसति । उग्रोदुःसहः भूयः विपुलः परिवर्तः जन्ममरणप्रवाहः नभवति ॥ ३९ ॥

अथ"ब्रूहियोगेश्वरेकृष्णेब्रह्मण्येधर्मवर्मणि स्वांकाष्ठामधुनोपेतेधर्मः कंशरणंगत"इति । षष्ठस्यप्रश्नस्यसर्वशास्त्रोत्तममिदंश्रीमद्भागवतं-पुराणंधर्मः शरणंगतइत्युत्तरंदर्शयन् षण्णांप्रश्नानां विस्तरतः प्रत्युत्तराणिप्रतिपिपादयिषुः श्रीमद्भागवतंश्रावयिष्यामीतिचप्रतिजानन्सं-क्षेपतः प्रतिवचनार्थंकाध्यायद्वयार्थमुपसंहरति इदमित्याद्यध्यायशेषेण ब्रह्मसंमितंवेदतुल्यम् । यद्वा परंब्रह्मसम्यक् मीयतेयत्रतद्ब्रह्मसं-मितम् कर्मणिक्तः ॥ ४० ॥ ४१ ॥

---

### भाषा टीका ।

संकल्प रूप मन से औ वेद रूप वचन से नाम औ रूपोंको विस्तार करते भये इस विधातापरमात्मा के लीलाओं को कुबुद्धि वाला पुरुष चतुराईसे भी नहीं जान सकता है जैसे नटकी लीलाको अज्ञानी नहीं जानता है ॥ ३७ ॥

उस महा पराक्रमी चक्रपाणि विधातापरमात्मा के मार्गको वह पुरुष जान सकता है जो निष्कपट निरंतर सेवासे उनके चरण क-मल गंधकों भजेगा ॥ ३८ ॥

इस हेतुसे हे पूज्य मुनिवरों आपलोग धन्य हौ जोकि सकल संसार के स्वामी वासुदेव के विषय मे सब प्रकार से प्रेमको लगाते हौ जिस प्रेम के होने से फिर कठोर संसार नहीं होता है ॥ ३९ ॥

यह भागवत नामक पुराण वेद के तुल्य है उत्तम श्लोक नारायण का चरित्रहै तिसको परम ऋषि वेदव्यासजीने वनाया है जवि के लिये धन कल्याण कारक उत्तम है ॥ ४० ॥

---

### श्रीधरस्वामी ।

तत्संप्रदायप्रवृत्तिमाह तदिदमिति । सुतं शुकम् आत्मवतां धीराणां मुख्यम् ॥ ४१ ॥
प्रायेण मृत्युपर्यन्तानशनेन उपविष्टमिति परमवैराग्योक्तिः ॥ ४२ ॥ ४३ ॥

तत्र कीर्त्तयतो विप्रा विप्रर्षेर्भूरितेजसः ।
अहञ्चाध्यगमं तत्र निविष्टस्तदनुग्रहात् ।
सोऽहं वः श्रावयिष्यामि यथाधीतं यथामति ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्यां
प्रथमस्कन्धे नैमिषीयोपाख्याने जन्मगुह्यं नाम
तृतीयोऽध्यायः ॥ ३ ॥

—:-*-:—

श्रीधरस्वामी ।

हे विप्राः विप्रर्षेः सकाशात् अध्यगमं ज्ञातवानस्मि । तत्र कीर्त्तयतः तत्र निविष्ट इति चान्वयभेदेन तत्र पदावृत्तिरदोषः । यथाधीतं न तु स्वमतिविलसितम् । तत्र तु यथामति स्वमत्यनुसारेण संक्षेपतः कथितं विस्तरेण श्रावयिष्यामि ॥ ४४ ॥
इतिश्री मद्भागवतभावार्थदीपिकायां प्रथमस्कन्धे तृतीयोऽध्यायः ॥ ३ ॥

---

दीपनी ।

संक्षेपत इति । संक्षेपव्याख्यया सह कथितं मूलं बाहुल्यव्याख्यानेन सह श्रावयिष्यामीत्यर्थः ॥ ४४ ॥

---

श्रीवीरराघवः

किमर्थंलोकस्य शृण्वतोजनस्य निःश्रेयसार्थंतदेवदर्शयितुं विशिनष्टिधन्यंसम्यग्ज्ञानजननद्वाराकृतार्थत्वावहं स्वस्त्ययनंमंगलास्पदम् । "पवित्राणांपवित्रंयोमंगलानांचमगलम्" इत्युक्तरीत्यानिरतिशयमंगलावहं भगवत्स्वरूपरूपादिप्रतिपादकत्वेन मंगलास्पदमित्यर्थः । तदुक्तविधमिदंपुराणमात्मवतांज्ञानिनांश्रेष्ठंसुतं श्रीशुकंग्राहयामासाध्यापयामास ॥ ४१ ॥

पुराणमेवविशिनष्टि । सर्वेषांपूर्वोत्तरभागात्मकानां वेदानां इतिहासानांच सारं सारं समुद्धतम् एतत्पुराणरूपेणेति शेषः सारं सारांशः समीचीनन्यायैः परिष्कृतोऽर्थइति यावत् सारं सारं समुद्धृतमित्यनेन वेदेतिहासादिसिद्धस्यार्थशरीरस्यक्रमविशेष निवेशनंवेदाद्यर्थपरिष्करणंच व्यासबुद्ध्यधीनमवगम्यते सत्वधीतैतत्पुराणः शुकस्तुपरीक्षितं महाराजमिदं संश्रावयामासश्रृणोतेः शब्दकर्मणोण्यंतेकर्तुः परीक्षितः णौगतिबुद्धीतिकर्मसंज्ञायां द्वितीयाएवंग्राहयामास सुतमित्यत्रापि तत्रग्रहेरपिशब्दकर्मकत्वात् ॥ ४२ ॥

परीक्षितं कथंभूतं गंगायां प्रायोपविष्टमनशनव्रतदीक्षितमृषिभिः परीतंपरिवेष्टितं तत्र परीक्षितः संनिधौ भूरितेजसोविप्रर्षेः शुकस्य कीर्त्तयतः श्रावयतः सतः हे विप्राः ॥ ४३ ॥

अहमितितत्रनिविष्टोऽहंतदनुग्रहाच्छुकानुग्रहादध्यगममधिगतवानस्मिपुराणमितिशेषः । गमेर्लृदित्वादङिअध्यगमामितिरूपं सतदनुग्रहादधिगतैतत्पुराणोऽहं च यथाधीतं यद्वा अधीतमिति भावेक्तः यथाध्ययनमध्ययनमनतिक्रम्याध्ययनानुसारेणेत्यर्थः यथामतिश्रावयिष्यामि यथामतीत्यनेनपुराणस्य दुरवबोधत्वंसूच्यते ॥ ४४ ॥

पुराणंस्तौति कृष्णइतिकृष्णे भगवति धर्मज्ञानादिभिः सहस्वधामस्वलोकंगतवति सत्यतएवकलौयुगे नष्टदृशां नष्टप्रज्ञानां जनानां दृष्टिप्रदानक्षमएवपुराणरूपोऽर्कः सूर्योऽधुनोदितः यथारात्रौनष्टदृष्टीनामर्कोदये सतिदृष्टिः स्वविषयग्रहणसमर्थाभवत्येवंरात्रिरूपेकलौनष्टप्रज्ञानां पुनरेतत्पुराणार्कोदयेन प्राज्ञावर्त्तत इत्यर्थः ॥ ४५ ॥
इतिश्री प्रथमे तृतीयः ॥ ३ ॥

---

श्रीविजयध्वजः ।

किमर्थंलोकस्यनिःश्रेयसायमोक्षाय धन्यंपुष्टिकरं स्वस्त्ययनंसर्वमंगलानामालयम् अर्थतःशब्दतोऽपिमहत् यदेवंविधंतादिदंसव्यासआत्मवतांवरंवशीकृतमनसांवरंसुतंशुकंग्राहयामास ॥ ४१ ॥

कुतएतदेवाग्राहयदिदितत्राह सर्वेति वेदादिसर्वशास्त्रोत्तमत्वादिदमेवग्राहितमितिभावःसतुशुकःपरमऋषिभिःपरीतंसमन्वितंगंगायांप्रायोपविष्टमनशनव्रतमाचरंतंपरीक्षितंनाममहाराजंचक्रवर्तिनंश्रावयामास ॥ ४२ । ४३ ॥

श्रीविजयध्वजः ।

किञ्च अहंच हेविप्राःतदनुग्रहात्तत्रगंगायांतदंतिकेनिविष्टःयोग्यस्थानेउपविष्टः भूरितेजसः क्षात्रसामर्थ्योपेतस्यब्रह्मापरोक्षज्ञानवतोवा तस्यराजर्षेरर्थेकीर्तयतः शुकादध्यगमंपठितवानस्मि योऽहंतत्राध्यगमं सोऽहंतत्रेत्यादिप्रश्नपरिहाराय सर्ववेदेतिहासादिसारत्वेनभगवता-कृतं श्रीभागवतंयुष्माकंश्रावयिष्यामि यथापठितंयथाप्रज्ञमित्येकान्वयः ॥ ४४ ॥

यत्पृष्टंधर्मःकंशरणंगतइतितत्रोत्तरं धर्मज्ञानादिभिःसहकृष्णेस्वधामवैकुंठंप्राप्तेसतिकलियुगेनष्टज्ञानानांपुंसांसर्वसद्धर्मप्रकाशकश्रीभा-गवतपुराणार्कोऽमुनावेदव्यासेनउदितःउदयंप्रापितःतस्मात्सधर्मःसच्छास्त्रैर्ज्ञानसद्धर्मप्रवर्तकंतमेवव्यासरूपिणंकृष्णंशरणंगतइतिभावः४५

इतिश्रीभागवतेमहापुराणेप्रथमस्कंधेटीकायांतृतीयोऽध्यायः ॥ ३ ॥

---

क्रमसंदर्भः ।

तदिदं तल्लीलामयं महापुराणं ब्रह्मानुभविगुरुणा श्रीशुकेनाप्युपादेयत्वेन गृहीतमित्येव जन्मानि कर्म्माणीत्यस्योदाहरणत्वेनाह त-दिदमिति । वक्ष्यते च परिनिष्ठितोऽपीत्यादि । हित्वा स्वशिष्यान् पैलादीनित्यादि च । तस्मात्तज्जन्मकर्म्मलीलामयंनानेन दुःखग्रामाद्विमु-च्यत इत्येतावन्मात्रं किं वक्तव्यम् । किन्तु तद्विधानामपि परमपुरुषार्थ इति भावः । अतएवाह सर्व्ववेदेतिहासानां समुद्धृतो यःसारः सारस्तद्रूपमिति ॥ ४१ ॥ ४२ ॥

तदिदं पुराणं न तु शास्त्रान्तरतुल्यं किन्तु श्रीकृष्णप्रतिनिधिरूपमेवेत्याह कृष्ण इति । स्वस्य कृष्णरूपस्य धाम नित्यलीलास्थान-मुपगते सति श्रीकृष्णे तत्र च धर्मःप्रोज्झितकैतवोऽत्रेति नैष्कर्म्यमप्यच्युतभाववर्जितमिति चानुसृत्य परमप्रकृष्टतया अवगतैः भगवद्धर्म्मैर्भगवज्ज्ञानादिभिरपि सह स्वधामोपगते सति कलौ नष्टदृशां तादृशधर्म्मज्ञानविवेकरहितानां कृते तदिदं पुराणमेवार्कः । ननु शास्त्रान्तरवद्दीपस्थानीयं यत्तथाविधोऽयं पुराणार्क उदितः । तादृशधर्मज्ञानादिप्रकाशनात्तत्प्रतिनिधिरूपेणाविर्बभूव । अर्कवत्तत्-प्रेरिततयैवेति भावः ॥ ४३ ॥ ४४ ॥

इतिश्रीमद्भागवतप्रथमस्कन्धस्य श्रीजीवगोस्वामिकृत क्रमसन्दर्भे तृतीयोऽध्यायः ॥ ३ ॥

---

सुबोधिनी ।

ग्रंथप्रवृत्तिःसर्वमुक्त्येधनप्राप्तिः कल्याणंचलक्ष्म्याः समागतायाः भकायाः श्रवणात्महदितिवस्तुतो गुणतोऽर्थतश्चस्वस्यज्ञानार्थपरं-परामाहव्यासः शुकंवेदवत्पाठितवान्गोप्यत्वायसुतमितिजितेंद्रियताज्ञानंचाह्लांगंतस्योत्कर्षंभागवतंफलतीत्यर्थपरंपरामाह आत्म-वतांवरमिति प्रमाणांतरचिंतानकर्त्तव्येत्याह त्रैवर्णिकाणामुद्धारार्थंवेदः स्त्रीशूद्राणामितिहासः उभयसारोद्धारत्वात्सर्वोद्धारकम्परंपरा माह सर्वेति ॥ ४१ ॥ प्रायोमरणपर्यंतमन्ननिवृत्तिः गंगायामितिदेशोत्कर्षः परमर्षिभिरितिसत्संगः ॥ ४२ ॥

स्वस्यप्राप्तिप्रकारमाहतत्रेति विप्राइतिसंबोधनेनसर्वपूरकत्वात्शुकः प्रथमंपूरितवान्अधुनापुनः स्मरणेनभवंतः पूरयंतीतिलौकिक त्वाभावायऋषिरितिअसंदिग्धमर्थकथनायोत्तरत्रप्रकाशनायचभूरितेजसइतिभूरितेजोज्ञानप्रकाशोयस्यब्रह्मवित्त्वेनतेजोविशेषोवासर्वज्ञत्वाय ततः सर्वतोमुखं भागवतंजातमित्याह अहंचेतिसर्वएवाधीतवंतः अहंचतत्रउपदेशसभायांप्रसंगान्नश्रुतंकिंतुशुकानुग्रहात्तत्रोपविश्यअनु-ग्रहंप्राप्यतत्रनिविष्टः सोऽहमुपदेशात्प्राप्तं भागवतंवोयुष्मान् अध्ययनमननिक्रम्यतन्मध्येयथामति स्वबुद्ध्यनुसारेण अनेनगर्वपरिहारः-उक्तादप्यधिकोऽर्थोस्यास्तीतिज्ञाप्यते ॥ ४३ ॥ ४४ ॥

धर्मः कंशरणंगतइतिषष्ठ प्रश्नस्योत्तरमाहकृष्णइति धर्मस्कभगवतैवसहगतः स्थितेशरणचिन्ता कलिरंधकारतुल्यस्तेनपिहितदृष्टी-नांनत्वंधानांस्वतोदुष्टानांपुनधर्मादिज्ञापनार्थंपुराणरूपोर्कोऽधुनोदितः स्थितएवलोकेप्रकटीभूतइत्यर्थः ॥ ४५ ॥

इतिश्रीभागवतसुबोधिन्यांश्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां
प्रथमस्कंधेतृतीयाध्यायविवरणम् ॥ ३ ॥

---

श्रीविश्वनाथचक्रवर्त्ती ।

दधिमथनादुद्धृतं नवनीतमिव यद्वेदादीनां सारं सारं वस्तु तदेवेदं श्रीभागवताख्यं स्नेहेन सुतं शुकं ग्राहयामास वेदादिदधिमथन-श्रमं च सफलीचकारेति भावः । आत्मवतां वरमिति तादृशोऽपि सुतः स्वादाधिक्येनैवेदं लोभाद्गृह्णाति स्मेति भावः ॥ ४१ ॥

प्रायोपविष्टं प्रायो मृत्युपर्यन्तानशनं तं व्याप्य कृतोपवेशं गोदोहमास्त इतिवत् । "प्रायो मरणानशने मृत्यौ बाहुल्यतुल्ययोरिति मेदिनी ॥ ४२ ॥

किं बहुना यद्युष्माभिः पृष्टं धर्म्मः कं शरणं गत इति तदिदमेव बुद्ध्यस्वेत्याह कृष्णे इति । स्वधाम्नो द्वारकातः सकाशात् उपस-मीपं प्रभासं गते धर्मज्ञानादिभिः षड्भिरैश्वर्यैः सह तत्रान्तर्दधाने सतीत्यर्थः । तल्लीलाया भक्तक्षोभकारित्वात् स्पष्टतयानुक्तिः ।

श्रीविश्वनाथचक्रवर्त्ती ।

नष्टदृशां लुप्तज्ञानानां जनानाम् । अत्र हक्पदेन तत्र चैकदेशान्ते दृष्टिः प्रनष्टा तमसि प्रविष्टेति प्रयुक्तेन कृष्णस्य सूर्यत्वं मथुराया उदयशैलत्वं प्रभासस्य अस्ताचलत्वं शिष्टानां चक्रवाकत्वं दुष्टानां नीहारत्वं पापानां तमस्त्वं भक्तानां कमलवनत्वञ्च बोधितम् । अतस्तृतीये । कृष्णद्युमणि निम्लोचे इति सूर्यतया स्पष्टोक्तिः । एष पुराणार्क इति कृष्ण सूर्येऽस्तमिते सति पुराणसूर्योऽयमुदित इति सूर्यस्य प्रतिमूर्त्तिः सूर्य एव भवेदिति भावः ॥ ४३ ॥

तत्र सभायां कीर्त्तयतो विप्रर्षेः शुकदेवात् सकाशात् अध्यगमम् इदं शास्त्रमधिगतवानस्मि । तस्यानुग्रहमवाप्य तत्र सभैकदेशे निविष्ट एतां वक्ष्यत्यसौ सूत इति द्वादशोक्तेः । यथाधीतं न तु स्वकपोलकल्पितं तत्रापि यथामति स्वबुद्ध्या यावदवधृतं तावदेव सर्व्व-मर्थजातं तु स एव शुकदेवो वेदेति भावः ॥ ४४ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
तृतीयः प्रथमेऽध्यायः सङ्गतः सङ्गतः सताम् ॥ ३ ॥

---

सिद्धान्तप्रदीपः ।

सुतंश्रीशुकम् ॥ ४२ ॥ प्रायोपविष्टम् परमवैराग्यसूचकेनमृत्युपर्यंतानशनेनोपविष्टम् ॥ ४३ ॥ ४४ ॥

पुराणार्कः इति । अन्येषुयुगेषुहार्दतमोनिर्नाशकः वेदार्क आसीत् अधुनेदानींकलौतुतद्दोषबाहुल्येननष्टदृशां नष्टप्रज्ञानां वेदार्थ-ज्ञानाभावात् । तन्मुखार्थप्रकाशकः पुराणरूपोऽर्कउदितः ॥ ४५ ॥

इतिश्रीमद्भागवतसिद्धांतप्रदीपे प्रथमस्कन्धे तृतीयाध्यायार्थप्रकाशः ॥ ३ ॥

---

भाषा टीका ।

सर्व वेद इतिहासों का सार सार निकाले हुये इस भागवत कों आत्म वेत्ताओं मे श्रेष्ठ अपने पुत्र शुकदेवजी कों ग्रहण कराया ॥४१॥ तिन शुकदेवजी ने गंगाके तटपर अनशन व्रत धारण किये हुये परम ऋषियों करके वेष्टित महाराज परीक्षितजी कों श्रवण कराया ४२ हे विप्रो तहां परम महातेजस्वी विप्रर्षि श्रीशुकदेवजी के कीर्तन करते समयमे मैनेभी तिनके अनुग्रह से तहां बैठकर अध्ययन किया ४३ सो मेरी जैसी बुद्धि है और जेसे मै पढा हों तैसा आप कों सुना ओंगा ॥ ४४ ॥

श्रीकृष्ण भगवान् जब धर्म ज्ञानादिकों के सहित स्वधाम कों पधारे तब कलियुग मे अज्ञानी पुरुषों के लिये यह पुराण रूप सूर्य उदय किया है ॥ ४५ ॥

इति प्रथमस्कंध का तृतीयाध्याय ॥ ३ ॥

—*—

## चतुर्थोऽध्यायः ।

इति ब्रुवाणं संस्तूय मुनीनां दीर्घसत्रिणाम् ।
वृद्धः कुलपतिः सूतं बह्वृचः शौनकोऽब्रवीत् ॥ १ ॥

शौनक उवाच

सूत सूत महाभाग वद नो वदतांवर ।
कथां भागवतीं पुण्यां यदाह भगवाञ्छुकः ॥ २ ॥
कस्मित् युगे प्रवृत्तेयं स्थाने वा केन हेतुना ।
कुतः सञ्चोदितः कृष्णः कृतवान् संहितां मुनिः ॥ ३
तस्य पुत्रो महायोगी समदृङ्निर्विकल्पकः ।
एकान्तमतिरुन्निद्रो गूढो मूढ इवेयते ॥ ४ ॥

### श्रीधरस्वामी ।

तुर्ये भागवतारम्भकारणत्वेन वर्ण्यते । व्यासस्यापरितोषस्तु तपः प्रवचनादिभिः ॥ ० ॥

इत्येवं प्रसन्नतया श्रावयिष्यामि इति ब्रुवाणम् । मुनीनां बहूनां मध्ये एकेन वक्तव्ये यो वृद्धः वृद्धेष्वपि बहुषु यः कुलपतिः गणमुख्यः तेष्वपि बहुषु यो बह्वृचः ऋग्वेदी तेन वक्तव्यम् । अत एवम्भूतत्वात् शौनकोऽब्रवीत् ॥ १ ॥

यत् यां कथामाह ॥ २ ॥ कस्मिन् वा स्थाने । केन हेतुनेति महाभारतादिधर्म्मशास्त्राणि कृतवतः पुनरेतत्संहिताकरणे किं कारणमित्यर्थः । कुत इति सार्व्वविभक्तिकस्तसिः केन प्रवर्त्तित इत्यर्थः । कृष्णो व्यासः ॥ ३ ॥

यदुक्तं स तु संश्रावयामासेति तत् शुकस्य व्याख्यानादिकं कथं घटितमिति प्रष्टुम् तस्यासङ्गोदासीनतामाह तस्येति द्वाभ्याम् । समदृक् समं ब्रह्म पश्यति । अतो निर्विकल्पकः निरस्तभेदः । किञ्च एकस्मिन्नेव अन्तः समाप्तिर्यस्यास्तथाभूता मतिर्यस्य सः । यतः उन्निद्रः मायाशयनादुद्बुद्धः "या निशा सर्व्वभूतानां तस्यामित्यादिस्मृतेः । अतएव गूढः अप्रकटः मूढः इव प्रतीयते ॥ ४ ॥

---

### दीपनी ।

कुलपतिरिति । ऋषीणां गणेषु मुख्यः कुलपतिरित्युच्यते । तल्लक्षणं यथा । मुनीनां दशसाहस्रं योऽन्नदानादिपोषणात् । अध्यापयति विप्रर्षिरसौ कुलपतिः स्मृतः ॥ १ ॥ २ ॥

( इयं संहिता । तत्र "संहिता श्रुतिजीविकेति शब्दरत्नावलिः ॥ ३ ॥ ) स त्विति पूर्व्वाध्यायस्य ४२ श्लोकः ॥ ४ ॥

---

### श्रीवीरराघवः ।

इत्थंलब्धासरःशौनकःपृच्छतीत्याहव्यासः इतीतिअत्रव्यासउवाचेतिपठ्यतेयुक्तंचैतत् कृत्स्नप्रबंधस्यव्यासोऽक्तिरूपत्वेऽपिपरीक्षिच्छुकशौनकसूतप्रश्नोत्तररूपेणप्रणीतत्वात्तत्रतत्रपरीक्षिदादि प्रश्नोत्तरत्वज्ञापनाथराजोवाचशुकउवाचेत्यादीनांपाठेऽपि यत्रशौनकसूतकृतप्रश्नोत्तरप्रकारानुकाररूपाः श्लोकाद्वयंतेतेषांसर्वेषामादौ शौनकसूतप्रश्नोत्तरत्वज्ञापनायतेषांव्यासोक्तित्वज्ञापनायचतदादौव्यासउवाचेत्यस्यपाठावश्यंभावात्कचित्तदभावेऽप्यर्थतस्तस्यविवक्षितत्वाच्छौनकादेरर्वाचीनस्यानियतप्रष्टृतरादेरभावादेवामुकउवाचेतिपाठायोगात् ॥ एतेनात्रैवव्यासउवाचेतिपठ्यतेनकाप्यन्यत्रास्मिन्पुराणेतत्रमूलंमृग्यामितिकेषांचिदाशंकाप्रत्युक्ता इतीत्थंब्रुवाणंसूतंसंस्तूयदीर्घसत्रिणांब्रह्मसत्रेणदीक्षितानांमुनीनांकुलस्यसमूहस्यपतिःकुलशब्दस्यनित्यसापेक्षत्वाद्देवदत्तस्यगुरुकुलमित्यादाविवसमासः वृद्धः ज्ञानेनवयसाचवृद्धःबह्वृचःऋग्वेदीशौनकोऽब्रवीत् ॥ १ ॥

तदेवाहसूतसूतेत्यादिभिर्द्वादशभिः हेसूतसूतआदरात्संभ्रमाद्वाद्विरुक्तिः हेमहाभागभाग्यवन्भाग्यमत्र निखिलतत्त्वज्ञानित्वरूपंहेवदतांवरभागवतींश्रीमद्भागवतपुराणप्रतिपाद्यां कथांनोस्मभ्यंवदभागवतींविशिनष्टियद्भागवतं भगवान्शुकआहपरीक्षितइतिशेषःवृत्तस्यापिभागवतस्यबुद्ध्यानिष्कृष्टस्ययदित्यनेनपरामर्षः ॥ २ ॥

एवंसामान्यतःपृष्ट्वाविशेषतः पृच्छाति कस्मिन्निति इयंभागवतीकथाकस्मिन्युगेप्रवृत्ताइत्येकः प्रश्नःकस्मिन्स्थानेइत्यपरः केनहेतुनेतितृतीयः कुत कस्माद्धेतोः केनपुंसासंचोदितः कृष्णोमुनिर्द्वैपायनः इमांसंहितांभागवतरूपांकृतवानितिचतुर्थः ॥ ३ ॥

यदुक्तंसतुसश्रावयामासमहाराजपरीक्षितमितितदघटमानद्दवाभिप्रेत्यतद्धेतुभूतैर्विशेषणैःशुकंविशिनष्टितस्येत्यादिभिःपंचभिः तस्यकृष्णस्यमुनेः पुत्रःशुकोमहायोगीश्रेष्ठः श्रेष्ठत्वमवाहसमदृक्सर्वदेवमनुष्यादिशरीरजातंप्रधानपरिणामरूपत्वेनपरात्वेनचजीववर्गेज्ञाने

## श्रीवीरराघवः ।

काकारत्वेनसर्वत्रानुस्यूतंपरमात्मानंसत्यज्ञानादिकल्याणगुणाकरत्वेनचेत्येवंरूपंसमंपश्यतीतिसमदृक् एवंसमविधमेवसमदर्शित्वं "विद्याविनयसंपन्नेब्राह्मणेगविहस्तिनि शुनिचैवश्वपाकेचपंडिताः समदर्शिनः" इत्यादावप्यधीयते निर्विकल्पकःभेदानुसंधानरहितः देहगतविकल्पानांदेवमनुष्यत्वादीनामात्मनिनारोपयिता यद्वा अब्रह्मात्मकस्वतंत्रवस्तुरहितःएकांतमतिः एकांताऽव्यभिचारिणीनिश्चितेतियावत् मतिर्भगवतियस्यतथाभूतः उन्निद्रः जागरूकः "यानिशासर्वभूतानांतस्यांजागर्तिसंयमीत्युक्तविधजागरूकइत्यर्थः गूढःस्वमाहात्म्यानाविष्कारशीलः मूढोऽज्ञइवेयतेदृश्यतइत्यर्थः ॥ ४ ॥

---

## श्रीविजयध्वजः ।

सोऽहंवःश्रावयिष्यामीतिसूतेनोक्तोऽपिशौनकः श्रीभागवतश्रवणेश्रद्धालुत्वदर्शनायविशेषप्रश्नायसूतमाह इतीति दीर्घसत्रिणांदीर्घकालीनंसत्रमेषामस्तीतितेषांमध्येज्ञानवयोवृद्धःऋषिकुलाचाररक्षकःबह्वृचःऋग्वेदेषुनिष्णातःशौनकः इतिब्रुवाणंसूतंसंस्तूयसूतमब्रवीदित्यन्वयः ॥ १ ॥

महाभाग भाग्ययुक्त सूतसूतेतितात्पर्योद्विरुक्तिः एकत्रपुण्यकर्मवासनेतिवा शुकोभगवान्पूजावान्पुनातीतिपुण्यांयांभागवतींकथांआह परीक्षितइतिशेषः हेवदतांवर तांकथांनोस्माकंवदेत्यन्वयः ॥ २ ॥

विशेषप्रश्नंदर्शयति कस्मिन्निति चतुर्णांयुगानांमध्येकस्मिन्नियंप्रवृत्ताकस्मिन्वास्थानेदेशेकेनवाकारणेनकस्माद्धेतोःसंचोदितःकृष्णद्वैपायनइमांसंहितांकृतवानित्यन्वयः ॥ ३ ॥

शुकःपरीक्षितंश्रावयामासेतित्वद्वचनमनुपपन्नमेवकेनापिश्रीशुकावगमनस्यासुलभत्वादित्याशयवानाह तस्येति तस्यव्यासस्यपुत्रःशुकःमहायोगीमहाज्ञानीमहाध्यानीवाअतएवसर्वदेशकालवस्तुषुज्ञानादिसर्वगुणैः सममेकप्रकारंब्रह्मपश्यतीतिसमदृक् मयाश्रियासहवर्ततइतिवासमं अतएवनिर्विकल्पकःइदंमदीयंततूतदीयमितिभेदबुद्धिमपहायसर्वमीश्वराधीनमितिस्थितः अतएवएकएवांतःएकांतःतस्मिन्हरौमनसःसंततगतिर्यस्यसतथा अतएवोद्गतानिद्राअज्ञानादिदोषपरंपरायस्मात्सतथा भस्मनावगूढःमूढइवअज्ञइवईयतेदृश्यतेअज्ञेनेतिशेषः तस्मात्तद्दर्शनमसुलभमितिमन्यइत्यन्वयः ॥ ४ ॥

---

## सुबोधिनी ।

तुर्येभागवतारंभकारणत्वेनवर्ण्यते व्यासस्यापरितोषस्तत्तपःप्रवचनादिभिः ( क )
एवंभागवतार्थस्यानिर्द्धारःस्वाधिकारतः त्रिभिःकृतोद्वितीयेतुत्रिभिस्त्याज्यसमान्वितः ( ख )
मध्याधिकारेयच्छास्त्रंतदत्रविनिरूप्यते नारदस्याधिकारित्वाच्छ्रोतुश्चिताकुलत्वतः ( ग )
तत्राध्यायेचतुर्थेतुव्यासचिंतानिरूप्यते उत्तमप्रक्रियापश्चाद्वक्तुर्हेतुनिरूपणात् ( घ )

पूर्वप्रकरणेस्वाधिकारानुसारेणशास्त्रार्थोनिरूपितः तत्रमूलत्वेनभागवतमुक्तम् यस्मिन्भागवतेश्रुतेसूतस्यायंशास्त्रार्थः प्रतिभातःतदेवास्माभिरपिश्रोतव्यमित्यभिप्रायेणशौनकः सूतंपृच्छतीत्याह व्यासउवाच इति ( ङ )

इतिब्रुवाणमितिसर्वत्रहिवक्तुर्वाक्यसमाप्त्यनंतरंश्रोतुःप्रश्नः अत्युत्कंठेत्विहासमाप्तावेवप्रश्नइत्याह ब्रुवाणमितिसंभावनमात्रेणपृष्टे अमलेशास्त्रार्थेनिरूपितेवक्तरिमहत्याश्रद्धयासम्यक् स्तोत्रंकृतवंतइत्याह संस्तूयेति संस्तवनंग्रंथाद्बहिःपूर्वमाकांक्षायाः प्राबल्यात् सर्वैरेवपृष्टं अधुनार्किंचिदुत्कृष्टमध्यर्धसहस्रसंवत्सरेचभगवदवतारनिश्चयात्तदर्थमेवच सत्रारंभात्कोलाहले सम्यक् श्रवणं न भविष्यतीति सर्वेषु शृण्वत्सु तत्संबंधी देवतास्वरूपाभिज्ञः शौनकः पृच्छतीत्यर्थः । वृद्धो ज्ञानवृद्धः कुलस्य ऋषिकुलस्य पतिर्नियामकः बुद्धेर्निर्द्धारो ज्ञानवृद्धे भवति उत्तरत्र प्रचारार्थं वचनविश्वासः कुलाचार्ये भवतीति वृद्धः कुलपतिरिति पदद्वयेन ज्ञापितम् ॥ १ ॥

चतुर्द्धा ह्यत्र प्रश्नः । भागवतविषयकः कर्तृविषयको वक्तृविषयकः श्रोतृविषयकश्चेति । तत्र प्रथममाह । सूत सूतेति आदरे वीप्सा । तव तु महाभाग्यं यद्भागवतं श्रुतवानसीति महाभागेति संबोधनम् । नः अस्मभ्यं न श्रोतृत्वमात्रमस्मासु किंतु अस्मभ्यं भागवतं देयमिति चतुर्थीप्रयोगः । वदतां मध्ये श्रेष्ठ निर्द्धारणान्न समासः । वदतां मध्ये त्वमेव श्रेष्ठः । यस्यां कथायां श्रुतायां त्वयैव शास्त्रार्थो निरूपितस्तामेव कथां वद । पुण्यां धर्मरूपां विहितत्वाद्भागवत् । श्रद्धाधिक्ये हेतुः यद्यस्मात् कारणात् भगवान् शुक आह । शुक इति मुक्तः । भगवानिति पूर्णगुणः ॥ २ ॥

द्वितीयं प्रश्नमाह । कस्मिन् युगइति । कर्तुः परिकरापेक्षत्वात् कर्तृप्रश्ने परिकराणामपि प्रश्नः कालदेशहेतवो हि परिकराः प्रयोजक कर्ता च त्रिषु प्रवृत्तेयमिति संबंधः । कस्मिन् युगे इयं प्रवृत्ता कस्मिन् वा स्थाने केन वा हेतुना यथाऽत्रचित्तवैयग्र्यं तदभावो हेतुः । केन वा प्रेरितो भवतु । कुतो वा हेतोः प्रेरितः प्रवृत्तौत्रयः प्रश्नाः करणे चैकः मुनिरिति मननप्रतिबंधिकायाः संहितायाः कथंकरणम् ३ ॥

तृतीयमाह पंचभिः । तस्य पुत्रइति । वक्तृत्वेन पृष्टत्वात् नाध्येतृत्वनिमित्तसंदेहा इहोच्यंते ते चाग्रे वक्तव्याः । महायोगी समाधिस्थः प्रथमं योगो दुःखदोपि भवति । प्रवृद्धस्तु सुखदः । तादृशस्य कथाकथनमयुक्तमिति भावः । किंचसमदृक् ब्रह्मविदित्यर्थः । उच्चावच बुद्धिसाध्यं च प्रवचनम् । किंच । निर्विकल्पकः । सांख्यप्रोक्तज्ञानसक्तिसिद्धः निर्गता विकल्पाः प्राकृता यस्य । किंच एकांतमतिः विरक्तः एकांते मतिर्यस्य । किंच उन्निद्रः उद्गता निद्रा यस्येति स्वप्नदृष्टारिष्टनिवृत्त्यपेक्षारहितोऽपि । किंच गूढः संगाद्दूरमुद्विजमानः । अतएव च लोके अप्रसिद्धः किंतु मूढ इव ईयते ज्ञायते ॥ ४ ॥

दृष्ट्वानुयान्तमृषिमात्मजमप्यनग्नं देव्योह्रिया परिदधुर्नसुतस्यचित्रम् ।
तद्वीक्ष्यपृच्छतिमुनौजगदुस्तवास्ति स्त्रीपुम्भिदानतुसुतस्यविविक्तदृष्टेः ॥ ५ ॥
कथमालक्षितः पौरैः संप्राप्तः कुरुजाङ्गलान् ।
उन्मत्तमूकजडवद्विचरन् गजसाह्वये ॥ ६ ॥
कथं वा पाण्डवेयस्य राजर्षेर्मुनिना सह ।
संवादः समभूत्तात यत्रैषा सात्त्वती श्रुतिः ॥ ७ ॥

श्रीविश्वनाथ चक्रवर्त्ती ।

तुर्येऽस्य शास्त्रवर्यस्य वक्तुः श्रोतुश्च सर्व्वतः । श्रेष्ठ्यं व्यासाप्रसादश्च कथ्यते यद्विनैव हि ॥ ० ॥
वृद्धो वयसा कुलपतिरिति कुलेन च वह्वृच इति वेदाभ्यासोत्थेन ज्ञानेन चेति शौनक एव प्रश्नकर्त्तृत्वेन तैर्व्यवस्थापित इतिभावः १
सूत सूतेति हर्षेण द्विरुक्तिः । यत् याम ॥ २ ॥
कुत इति सार्व्वविभक्तिकस्तसिः केनेत्यर्थः । कृष्णो व्यासः ॥ ३ ॥
निर्व्विकल्पकः निर्भेदज्ञानवान् । एकस्मिन्नेवान्तः समाप्तिर्यस्याः सा मतिर्यस्यसः । निद्रा अविद्या तस्याः सकाशादुद्गतः । "या निशा सर्व्वभूतानां तस्यां जागर्त्ति संयमीति स्मृतेः । ईयते प्रतीयते ॥ ४ ॥

---

सिद्धान्तप्रदीपः ।

वः श्रावयिष्यामीति ब्रुवाणम् । वह्वृचः ऋग्वेदी ॥ १ ॥
यत् याम ! शुक आह परीक्षिते इति शेषः । तांनोवदेत्यन्वयः ॥ २ ॥
कस्मिन् युगे । संहिताप्रवृत्ता कस्मिन्स्थाने केनहेतुनाकुतः । केनसंचोदितः कृष्णः श्रीव्यासः संहिताकृतवानित्यन्वयः कुतः । इति सार्वविभक्तिकस्तसिः ॥ ३ ॥
सतुसंश्रावयामासहहाराजं परीक्षितमित्युक्तम् । तत्र शुकस्यव्याख्यानादिकमघटमानमिवाभिप्रेत्याह । तस्येति तस्यव्यासस्यपुत्रः शुकः चिदचिद्रूपमिदंविश्वमेकस्यैवानंतशक्तेः कार्यंनात्र किंचिदुपेक्षणीयमादरणीयं वेति समंपश्यतीतिसमदृक् । अतएवकार्यस्यशरीरेशाभिन्नत्वेपिकारणाव्यतिरिक्तस्थिति प्रवृत्त्याद्यभावाद्ब्रह्माभिन्नत्वेसाति ब्रह्मैवेदंसर्वमितिविज्ञानान्निर्विकल्पकोभेदानुसंधानरहितः । स्वार्थेकः एकांताभगवद्ध्याननिष्ठामतिर्यस्यसः एकांतमतिः अतएव उन्निद्रः जागरूकः "यानिशासर्वभूतानां तस्यांजागर्तिसंयमीति स्मृतेः गूढः गुप्तविद्यः । अतएव मूढ इवेयते प्रतीयते ॥ ४ ॥

---

भाषा टीका ।

व्यास जी बोले ऐसे बोलते भये सूत जी को सुंदर स्तुति करके दीर्घ काल तक यज्ञ करने को बैठे हुये मुनियों के मध्य मे वृद्धसब के मुख्य ऋग्वेदी श्री शौनकजी बोलते भये ॥ १ ॥
हे सूतजी हे बडभागी हे वक्ताओं मे श्रेष्ठ जिस पुण्यभागवती कथा को शुक भगवानने कहा है ताको हमसे कहो ॥ २ ॥
किस युगमे किस स्थान मे किस हेतु से वह कथा प्रवृत्त भई किसके कहने से व्यास मुनि जीने इससंहिताको किया है ॥ ३ ॥
उन व्यास जीके पुत्र तो महा योगी सम दृष्टि वाले भेद दृष्टि रहित एकांत मतिवाले संसार निद्रासे रहित गुप्त हैं और मूढ सरीके अज्ञानियों को मालूम होते हैं ॥ ४ ॥

---

श्रीधरस्वामी ।

निर्व्विकल्पकत्वम् प्रपञ्चयति दृष्ट्वेति । आत्मजं शुकं प्रव्रजन्तम् अनुयान्तम् अनुगच्छन्तम् ऋषिं व्यासम् अनग्नमपि दृष्ट्वा जले क्रीडन्त्यो देव्यः अप्सरसः ह्रिया लज्जया परिदधुः वस्त्रपरिधानं कृतवत्यः । अनग्नमपीत्यनेनार्थात् तत्सुतो नग्न इत्युक्तम् । नग्नस्य पुरतो गच्छतः सुतस्य तु ह्रिया न परिदधुः । तच्चित्रम् वीक्ष्य । इयं स्त्री अयम् पुमानिति भिदा भेदस्तवास्ति सुतस्य पुनर्भेदमतिर्नास्ति । विविक्ता पूता दृष्टिर्यस्य ॥ ५ ॥
एवम्भूतोऽसौ कथमालक्षितः ज्ञातः । कुरवो जङ्गलाश्च देशविशेषाः तान् संप्राप्तः प्रथमम् । ततो गजसाह्वये विचरन् गजेन सहित आह्वयो नाम यस्य तस्मिन् हस्तिनापुरे हस्ती नाम राजा तेन निर्म्मितत्वात् ॥ ६ ॥

**स गोदोहनमात्रं हि गृहेषु गृहमेधिनाम् ।**
**अवेक्षते महाभागस्तीर्थीकुर्व्वंस्तदाश्रमम् ॥ ८ ॥**

### श्रीधरस्वामी ।

एवम्भूतेन मुनिना सह । यत्र संवादे एषा सात्वती भागवती श्रुतिः संहिता ॥ ७ ॥

एतद्व्याख्यानं बहुकालावस्थानापेक्षम् तस्य त्वेकत्रावस्थानं दुर्लभमित्याह स इति । गोदोहनमात्रकालं प्रतीक्षते तदपि न भिक्षार्थम् किन्तु तेषामाश्रमं गृहं तीर्थीकुर्व्वन् पवित्रीकुर्व्वन् । तस्मादेवम्भूतोऽत्र वक्तेत्याश्चर्यम् ॥ ८ ॥

---

### दीपनी ।

देव्यः अप्सरस इति । देवीशब्देन अप्सराजातेर्ग्रहणं कथमिति चेत् पश्यन्तु तावत्—तस्याम् क्रीडन्त्यभिरतास्ते चैवाप्सरसाम् गणा" इति महाभारतीयशान्तिपर्व्वणि ३५३ अध्यायवचनम् ॥ ५—७ ॥

गोदोहनकालो मुहूर्त्ताष्टमभागः पञ्चदशकलात्मकः स्मृत्यादौ प्रसिद्धः ॥ ८ ॥ ९ ॥

---

### श्रीवीरराघवः

तस्यज्ञानाधिक्यमेव व्यंजयितुंकंचिदितिहासमाहदृष्ट्वेत्यनेनकदाचित्कचिद्देवस्त्रियः नग्नाजलेविहरंत्यः पुरतोगच्छंतंशुकमालोक्यवासांसिनपरिदधुस्ततःपृष्ठतः आयांतंव्यासमालोक्यतुह्रियापरिदधुः तदिदंचित्रमवलोक्यश्रीव्यासेपृच्छतिशुकमवलोक्यापिवासांसिकिंनपरिधत्थमांत्वत्रलोक्यपरिधत्थेतितदाताऊचुः तवतुस्त्रीपुरुषविवेकोस्तितवसुतस्यतुपरमात्मनिष्ठैकमनसस्तद्व्यतिरिक्तज्ञानाभावेनस्त्रीपुंविभागोनास्ति अतस्तमवलोक्यापिलज्जारहितानपरिदधीमोतिसोऽयमत्रोच्यते आत्मजमनुयांतमनग्नमपिऋर्षिव्यासंदृष्ट्वादेव्योदेवानांस्त्रियः ह्रियालज्जयापरिदधुः वासांसीतिशेषः सुतस्यनग्नस्यापिदर्शनेनपरिदधुः तद्विचित्रंवीक्ष्यमुनौ व्यासेपृच्छतिसति जगदुःदेव्यइत्यनुषंगःकिमितितवस्त्रीपुंभिदास्त्रीपुंभेदोस्तित्वत्सुतस्यतुनास्तितत्रहेतुःविविक्तेप्रकृतिपुरुषविलक्षणेपरमात्मन्येवंदृष्टिर्यस्यतथाभूतत्वात्तद्दर्शनेनापिनास्माकंलज्जावभूवेति ॥ ५ ॥

एवंभूतः सदाकुरून् जांगलांश्चउन्मत्तवन्मूढवज्जडवच्च विचरन्कथंवागजसाह्वयेहास्तिनाख्येपुरेसंप्राप्तः कथंचपौरैर्जनैरालक्षितः ॥६॥

कथंवापांडवेयस्यराजर्षेः परिक्षितोमुनिनाशुकेनसहसंवादः संवभूवसंवादंविशिनष्टि यत्रसंवादेएषासात्वतीसातयतिसुखयतीतिसात्परमात्मासातेःसुखार्थात्सौत्राद्धातोर्हेतुमरायंताद्वासरूपाविधिना"अनुपसर्गाल्लिंपविंद ॥ ३ । १ । १३८ ॥ इत्यादिनाशप्रत्ययांभावपक्षोक्किपिसादितिव्युत्पत्तेः सप्रतिपाद्यतयास्तीतिसात्वतीमतुप्युगित्वान्ङीषुश्रुतिःश्रुतितुल्याप्रवृत्ता ॥ ७ ॥

संवादस्यासंभावनांव्यंजयन्नाहसइति समहायोगीशुकः गृहमेधिनांगृहाश्रमिणांगृहेषुगोदोहनमात्रंयावताकालेनगौर्दुह्यतेतावंतंकालमवेक्षते प्रतीक्ष्यमाणस्तिष्ठतिनत्वधिकमित्यर्थः विरक्तत्वादितिभावः कथमवेक्षतेतेषांगृहमेधिनामाश्रमं तीर्थीकुर्वन्पवित्रीकर्तुमित्यर्थः ॥ ८ ॥

---

### श्रीविजयध्वजः

कुरुजांगलंकुरुविषयंप्राप्तः गजसाह्वयेहस्तिनापुरेक्वचिदुन्मत्तवत्क्वचिन्मूकवत्क्वचिज्जडवद्विचरन्मुनिः पुरवासिभिःकथमालक्षितः शुकत्वेनेतिशेषः पौरैरपियज्ज्ञानंदुःशकंकिंपुनरंतःपुरनिवासिभिः ॥ ५ ॥

किंचपरीक्षितः तद्दर्शनानंतरकालीनस्तेनसहसंवादः सुतरामसुलभइत्याशयवानाह कथंवेति यत्रययोः संवादेसात्वतोहरेस्तत्संबंधिनीसात्वतीश्रुतिर्वर्ततेतादृशःसंवादः पांडवेयस्यराजर्षेःपरीक्षितः तेनमुनिनासहकथंवा समभूत्नकथमपिघटतइत्येकान्वयः ॥ ६ ॥

इतोपितस्यतेनसहसंवादोदुर्घटइत्याशयवानाहसति तदाश्रमंतेषांगृहस्थानांसतांगृहंतीर्थीकुर्वन् स्वपादक्रमणेनपवित्रीकुर्वन्महाभागः गृहमेधिनांगृहंगत्वापाणिभिक्षामाचरन् गोदोहनमात्रं ततोनाधिकम्अवाङ्मुखतयैकमनास्तिष्ठतिपरमन्यतो यातिह्रियस्मात्तद्दर्शनमसुलभमित्येकान्वयः ॥ ७ ॥

किंचहेसूतसुज्ञाः अभिमन्युसुतंपरीक्षितं भागवतश्रेष्ठंप्राहुः किमितितत्राह तस्येतितस्येति तस्यपरीक्षितःमहाश्चर्यंश्रोतृणामितिशेषः जन्मकलिवंधनादीनिकर्माणिचअस्माकंगृणीहीत्यन्वयः ॥ ८ ॥

---

### क्रमसंदर्भः ।

दृष्ट्वेत्यादौ मध्यनग्नत्वस्यापरिधाने हेतुत्वं तेन मर्यादावत्त्वस्य लक्षितत्वात्रिकटागमनदृष्टिक्षेपाद्यसम्भावनया तासाम् युक्तम् । सुते तु नग्नत्वस्य तद्वैपरीत्येन परिधाने हेतुत्वं युक्तमिति यद्यपि स्यात्तथापि यन्मद्दर्शने परिदधुर्न तु तद्दर्शने तच्चित्रम् । तस्मादमुम् न ददृशुरिति निश्चित्याप्युत्कण्ठया कथञ्चिद्ददृशुरेवेति सम्भाव्य तासामपलापखण्डनार्थं दर्शनमेव भङ्ग्या निश्चित्य पृच्छति सतीत्यर्थः ॥ ५ ॥ ६ ॥　　श्रुतिर्व्वेदसारः ॥ ७ ॥

अवेक्षते प्रारब्धाभासेन न तु तत्राप्यावेशेनेति ज्ञेयम् । स्त्रीपुंभिदाज्ञानस्याप्यभावात् । अत एव तीर्थीकुर्व्वन्निति स्वभावतः एव ॥ ८ ॥ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥

---

### सुबोधिनी ।

किंच सर्वदा असंप्रज्ञातसमाधिस्थः बहिःसंवेदरहित इति वक्तुमुपाख्यानमाह । दृष्ट्वाऽनुयांतमिति । अत्र ह्येवं कथा । क्वचित्सरोवरे नग्नाप्सरसः स्नांति तत्र नग्नं शुकंपुत्रमनुयांतं व्यासं दृष्ट्वा वस्त्राणि पर्यधुः । ततो व्यासस्य संदेहोजातः । कथं मां वृद्धमनग्नं दृष्ट्वा वस्त्राणि परिदधति पुत्रं तरुणं नग्नं दृष्ट्वा नेति संदेहात्ताः पृष्टवान् । तासामुत्तरं तवास्ति स्त्रीपुंभिदा न तु सुतस्येति । यद्यपि शाब्दं ज्ञानं वेदव्यासस्य निर्विचिकित्सं स्वरूपज्ञानं च तथाऽपि बहिःसंवेदनमस्ति । अधिकारित्वात् । पुत्रस्य तु नित्यारूढसमाधित्वान्न बहिः संवेदनमस्ति । तदाह । विविक्तदृष्टेरिति । विविक्ता अनात्मस्पर्शरहिता दृष्टिर्यस्येति । एवमष्टगुणानां भगवत्कथाबाधकानां विद्यमान त्वात् कथं कथाप्रवचनमिति । यद्यपि प्रव्राजकधर्मकरणात् "कीटवत्पर्यटेन्महीमिति" वाक्यात् समाधेरुत्थितः कैश्चिद्दृष्टः प्रार्थितो निर्विघ्नेनकथांकथयतीति न मंतव्यम् ।५। लोकानां ज्ञापकधर्मो महानयमिति नास्मिन्विद्यतइत्याह । कथमालक्षित इति । कुरुजांगलान् हस्तिनापुरदेशं आसमंताच्छुकोऽयमिति । पौरैरितिपुरवासाद्बुद्धिर्वका भवति । ज्ञानं हि त्रेधा भवति । बहिः स्थैर्यादिनाःवचनेन सदाचारेण च । तन्नितयं नास्तीत्याह । उन्मत्तमूकजडवदिति । गजेन समानः आह्वयो नाम यस्य तद्गजसाह्वयं नगर नामनिरुक्त्या तत्रत्या मत्ता इति लक्ष्यंते । अतएव ज्ञानभयाभावात्तीर्थविशेषत्वात् शुकस्य परिभ्रमणम् ॥ ६ ॥

अस्तु वा नगरे केषांचित् ज्ञानं तथाऽपि राज्ञा सह संवादः अनुचितः । राज्ञो राजर्षित्वात् अनाचारिषु श्रद्धाभावः । शुकस्य च मुनित्वात् सर्वज्ञत्वेन संवादसंभावनायां गमनाभावः । स च संबंधो बहुकालसाध्यः तदाह । यत्रैषा सात्वती श्रुतिः वैष्णवो वेदः ॥ ७ ॥

अस्तु वा तथापि गोदोहनकालादधिककाले गृहस्थगृहे संन्यासिनो वासोऽनुचितः । सोऽपि वासो न रागात् । तथासति रागपूर्त्यर्थं चिरकालमपि वासः संभाव्यते किंतु गृहस्थानामाश्रमं तीर्थीकुर्वन् । गृहमेधा बुद्धिः अतिप्रवृत्तिनिष्ठा तथातेषामेव चाग्रे संन्यासः तथासति पूर्वं दोषस्य विद्यमानत्वात् नाधिकारः संगदोषाच्च । अतः परमहंसैः गृहस्थाश्रमः अतीर्थोऽपि तीर्थीक्रियते ततो दोषद्वयं गच्छतीत्याह । स गोदोहनमात्रमिति । यथा हि गौर्धर्मदोहार्थं तावत्कालं निर्बंधं सहते तथा जगन्मित्रैरपि सोढव्यमिति हिशब्दार्थः । इयमवस्था महाभाग्येन प्राप्यतइति महाभागइति विशेषणम् ॥ ८ ॥

---

### श्रीविश्वनाथचक्रवर्ती ।

निर्विकल्पकत्वं प्रमाणयति दृष्ट्वेति । आत्मजं शुकं प्रव्रज्य यान्तम् अनुयान्तम् ऋषिं व्यासम् अनग्नमपि दृष्ट्वा देव्यो जलक्रीडनादुत्थिता लज्जया परिदधुः स्वस्ववस्त्राणीत्यर्थः न तु सुतस्य शुकस्य दर्शने इत्यर्थः । तच्चित्रम् अतो युवानं तत्रापि नग्नं तत्रापि सर्व्वत्र स्पष्टं विलोकयन्तं मत्पुत्रं वीक्ष्य एता न लज्जिताः मां तु वृद्धं सवसनं इतो युवतयः खेलन्तीति तद्दिशि दृशमप्यददानं विलोक्य लज्जन्ते स्म । तदिमा एव आर्जवेन कारणम् पृच्छामीति मुनौ पृच्छति सति जगदुः इयं स्त्री अयम् पुमानिति तव स्त्रीपुंभिदा अस्ति न तु तव सुतस्य । ननु कथमेतज्ज्ञानं तत्राहुः । विविक्ता पूता दृष्टिर्यस्य तस्येति । वयं युवतिजनाः कलाभिज्ञाः स्त्रीपुंसयोर्नयनदर्शनेनैव तदन्तस्तत्त्वं सर्व्वं ज्ञातुं प्रभवाम इति भावः ॥ ५ ॥

कुरुजाङ्गलान् देशविशेषान् । गजेन सह आह्वयो नाम यस्य तस्मिन् हस्तिनापुरे विचरन् ॥ ६ ॥

पाण्डवेयस्य परीक्षितः । मुनिना शुकेन । श्रुतिः संहिता ॥ ७ ॥

शुकस्य तेन सह बहुकालावस्थितिरेतद्व्याख्यानुरोधेनैव संभवेन्नान्यथेत्याह । स गोदोहनमात्रं कालं भिक्षामिषेण प्रतीक्षते वस्तुतस्तु तेषामाश्रमं तीर्थीकुर्व्वन् । तत्रत्यजीवमात्रेभ्योऽपि सद्गतिं प्रदातुमिति भावः ॥ ८ ॥

---

### सिद्धांतप्रदीपः ।

तस्यसमदर्शित्वेन निर्विकल्पत्वंदर्शयति । दृष्ट्वेति "धर्मपुत्रनिसेवस्वसुतीक्ष्णौचहिमातपौ । क्षुत्पिपासेचवायुंचजयनित्यं जितेन्द्रिय" इत्येवंविधैः श्रीमद्व्यासवाक्यै देवप्रव्रजंतम् । आत्मजंशुकम् अनुयांतम् अनुगच्छतम् ऋषिम् व्यासंतु अनग्नमपिदृष्ट्वा नद्यांक्रीडंत्यो देव्यः ह्रियापरिदधुः । वासांसीतिशेषः नत्वात्मजंदृष्ट्वा परिदधुः तदसंगत्वंचित्रमद्भुतम् पुत्रस्यवीक्ष्य किमस्य स्त्रीपुंभिदास्तितवेतिमुनौ

अभिमन्युसुतं सूत प्राहुर्भागवतोत्तमम् ।
तस्य जन्म महाश्चर्य्यं कर्म्माणि च गृणीहि नः ॥ ९ ॥
स सम्राट् कस्य वा हेतोः पाण्डूनां मानवर्द्धनः ।
प्रायोपविष्टो गङ्गायामनादृत्याधिराट्श्रियम् ॥ १० ॥
नमन्ति यत्पादनिकेतमात्मनः शिवाय हानीय धनानि शत्रवः ।
कथं स वीरः श्रियमङ्ग दुस्त्यजां युवैषतोत्स्रष्टुमहो सहासुभिः ॥ ११ ॥
शिवाय लोकस्य भवाय भूतये य उत्तमःश्लोकपरायणा जनाः ।
जीवन्ति नात्मार्थमसौ पराश्रयं मुमोच निर्व्विद्य कुतःकलेवरम् ॥ १२ ॥

सिद्धान्तप्रदीपः ।

श्रीव्यासेपृच्छतिसतिविविक्तेदृष्टिः विविक्तजगद्विलक्षणोब्रह्मणिदृष्टिर्यस्यतस्यतवसुतस्यपुंभिदानास्तीति देव्यः जगदुरित्यन्वयः ॥ ५ ॥
एवंभूतः कुरुजांगलान्देशान्प्राप्तः गजसाह्वये हस्तिनापुरे उन्मत्तमूकजडवत् विचरन्पौरैः कथमालक्षितः ज्ञातः ॥ ६ ॥
आसक्तस्यविरक्तेनसंवादो दुर्घटइत्याह । कथमिति राजर्षेः परीक्षितः एवंभूतेन मुनिनासहकथं संवादः संवभूव । यत्र संवादे श्रुतिः तत्तुल्या सातयति सुखयतीति सात्भगवान्सातेः सौत्रस्यएयं तस्यकिंपिरूपम् सविषयतयास्या अस्तीतिसात्वती एषा संहिताप्रवृत्ता॥७॥
स्थायिनो यायिनासंवादोदुर्घटइत्यभिप्रायेणाह । सइति गोदोहनमात्रम् यावताकालेनगौर्दुह्यते तावंतकालम् तीर्थीकुर्वन्पविद्वीकुर्वन् ॥ ८ ॥

---

भाषा टीका ।

एक समय मे श्री शुकदेव जी नग्नही आगे चले जातेथे पीछे से वेदव्यास जी वस्त्र पहर कर जाते थे तब किसी सरोवर मे देव स्त्री नग्न स्नान करती थीं शुकदेव जीको देख कर उन्हों ने वस्त्र नहीं पहरे व्यास जीको देखकर लज्जा से बस्त्र पहरे वह आश्चर्यदेख कर व्यासजीने जब पूछा तबउन स्त्रियों ने कहा कि आपको स्त्री पुरुष का भेद ज्ञानहै शुद्ध दृष्टिवाले तुम्हारे पुत्र शुकदेवजीकोनहीं है॥५॥
ऐसे शुकदेवजी जब कुरु जांगल देश मे आये तब पुरवासियों ने उनको कैसे जाना जो पागल गूंगा विकल सरीके हस्तिनापुर ( दिल्ली ) मे विचरते थे ॥ ६ ॥
परीक्षित राजर्षिका वह मुनिके साथ कैसे संवाद भया जहां कि यह सनातनी श्रुति रूपकथा भई ॥ ७ ॥
वह मुनि तो महा भाग्यवान् हैं गृहस्थों के गृह मे उनके स्थान कों पवित्र करने के अर्थ गउ दुहने के काल पर्यंतही-प्रतीक्षा करते हैं ॥ ८ ॥

---

श्रीधरस्वामी ।

श्रोतुस्तु चरितमतीवाश्चर्यम् !! अतः कथयेत्याह,अभिमन्युसुतं सूत इति पञ्चभिः गृणीहि कथय ॥ ९ ॥
सम्राट् चक्रवर्त्ती । वेति वितर्के । कस्य वा हेतोः कस्मात् कारणात् । अधिराट् किंवन्तः अधिराजां श्रियं सम्पदमनादृत्य ॥ १० ॥
यस्य पादनिकेतं चरणपीठम् । ह स्फुटम् । धनान्यानीय शत्रवो नमन्ति । अङ्ग हे सूत । युवा तरुण एव । ऐषत ऐच्छत् । अत्रार्षमात्मनेपदम् । असुभिः प्राणैः सह ॥ ११ ॥
विरक्तस्य किं धनादिभिरिति चेत्तत्राह शिवायेति । लोकस्य शिवाय सुखाय भवाय समृद्धये भूतये ऐश्वर्याय च ते जीवन्ति न तु आत्मार्थम् । एवं सति असौ राजा निर्विद्य विरज्यापि परेषामाश्रयं कलेवरं कुतो हेतोर्मुमोच नहि परोपजीवनं स्वयं त्यक्तुमुचितमित्यर्थः ॥ १२ ॥

---

दीपनी ।

( प्रायोपविष्ट इति । प्रायेण मरणपर्यन्तानशनेनेति । परन्तु अयनम् आयः प्रकृष्टः आयः प्रायो मरणं भावे घञ्प्रत्ययः । मरणार्थमुपविष्ट इत्यर्थः । इति बुधरञ्जनी ) ॥ १० ॥ १३ ॥

श्रीवीरराघवः।

अन्वयश्च पृच्छति अभिमन्युसुतामिति हेसूतअभिमन्योः सुतंपरीक्षितंमहाभागवतंप्राहुः अतस्तस्यमहाश्चर्यजन्मकर्माणिचनोस्माकं-गृहणीहिकथय ॥ ९ ॥

सइति पांडवानांपांडुवंशजानांमानंप्राशस्त्यंवर्द्धयतीतिवर्द्धनःनंदादित्वात्कर्तरिल्युः सम्राट्सार्वभौमःसपरीक्षित्कस्यहेतोःकस्माद्धेतोर् धिराट्श्रियमधिराज्यसंपदमनादृत्यगंगायांप्रायोपविष्टः ॥ १० ॥

नमंतीति शत्रवः आत्मनः स्वस्यशिवायात्मनांयोगक्षेमायधनान्यानीयादायसमर्प्येत्यर्थः यस्यपरीक्षितः पादनिकेतंपादपीठंनमंति हेत्याश्चार्येसवीरः परीक्षिद्युवासन्नपिदुस्त्यजांश्रियमधिराट्श्रियमसुभिः प्राणैःसहोत्स्रष्टुंत्यक्तुमैषतैच्छत् अहोअत्याश्चर्यमेतत् ॥ ११ ॥

ननुमहाभागवतंप्राहुरितित्वयैवोक्तत्वाद्भागवतानांच देहतदनुबंधिषुविरक्तेः स्वाभाविकत्वाच्चनेदमाश्चर्यमित्यतआह शिवायेतियद्यपि भागवतताविरक्तास्तथापिउत्तमश्लोकोभगवानेवपरमयनंप्राप्यः प्रापकश्चाधारश्चयेषांतेजनाभागवतानात्मार्थेजीवंतिकिंतुलोकस्यशिवायमंग-लायभूतयेश्रियैभवायतस्याउत्तरोत्तरोदयायचजीवंति एवंपराश्रयंपरैर्लोकैः शिवाद्यर्थमाश्रयणीयपरोपकारकमित्यर्थः कलेवरंकुतोहेतोर्नि र्विग्रहेयंमत्वामुमोचतत्याज ॥ १२ ॥

---

श्रीविजयध्वजः

तस्यवैराग्यहेतुंपृच्छति ससम्राडिति पांडवानामभिमानवर्धनः ससम्राट्अप्रतिहताज्ञश्चक्रवर्तीकस्यवाहेतोराधिराट्श्रियंचक्रवर्तिसंप-द्लक्ष्मीमनादृत्यतृणवत्कृत्वा गंगायांप्रायोपविष्टोभूदित्यन्वयः ॥ १० ॥

एवंविधश्रीसंगत्यागेमहत्कारणेनभवितव्यंतत्किमित्याशंक्याह नमंतीति शत्रवःमंडलपतयःआत्मनःशिवायस्वकल्याणायधनानिचा-नीययस्यपरीक्षितःपदयोर्निकेतंपीठाख्यस्थानंनमंतीत्यन्वयः अंगसूत सधीरःअसुभिःसहदुस्त्यजांश्रियं अधिराजसंज्ञामुत्स्रष्टुंहातुंइयेष-ऐच्छदहोआश्चर्यमेतदतोमहताहेतुनाभवितव्यंतत्किमितिभावः ॥ ११ ॥

पुनरपितदेवपृच्छति शिवायेति येउत्तमश्लोकपरायणाजनाः तेलोकस्यशिवादिप्राप्तयेजीवंतिनस्वार्थंजीवंतीत्यन्वयः तस्मात्परार्थै-कजीवनोऽसौकस्मात्कारणात्परामुत्कृष्टांश्रियंनिर्विद्यविरज्यकलेवरंदेहंमुमोचेत्यन्वयः ॥ १२ ॥

इहास्यामवस्थायां प्रश्नराशौयत्किंचित्प्रश्नरूपंपृष्टस्त्वंतत्सर्वंकिंचनेत्यनुवर्तीकृत्यसम्यगाचक्ष्व कुतः छांदसाद्वेदविषयादन्यत्रपुराणा-दौवाचांविषयेज्ञातंनिष्णातंमन्यइतियस्मात्तस्मादित्यन्वयः ॥ १३ ॥

---

सुबोधिनी

श्रोतुः प्रश्नमाह चतुर्भिः। अभिमन्युसुतमिति। "पितृनाम्ना महत्त्वं हि मातृनाम्नातुहीनता। इति सर्वत्र बोद्धव्यंश्रीमद्भागवतेऽपि च" अभितः परितो ( सर्वतो ) मन्युर्यस्य नतवंतः क्षत्रियस्य चायं धर्मः। अंतः क्रोधाभावाच्च वैष्णवः। सूतेति संबोधनं वृत्तांतपरिज्ञानाय। लोकवृत्तपरित्यागेन भगवदेकपरायणो महाभागवतः। "विसृजति हृदयं न यस्येति" वा प्राहुरिति सर्वलोकप्रसिद्धः। पूर्वमेव तादृशस्य भागवतेन यो विशेषस्तत्परिज्ञानाय पूर्वं विशेषं पृच्छंति। तस्य जन्मेति महदाश्चर्यं यत्र मृतस्य गर्भात्पतितस्य पुनर्जीवनमिति भारतादिष्वेवमेव कथा कलिनिग्रहादीनि कर्माणि ॥ ९ ॥

वैष्णवस्य प्रायोऽनुचित इत्यभिप्रायेणाह। स इति। परीक्षिति लौकिकोऽप्युत्कर्षोऽस्ति। सम्राट् चक्रवर्ती। पांडूनामपि मानं वर्द्धयति। पांडवप्रतिष्ठया नास्य प्रतिष्ठा किंतु विपरीतेत्यर्थः। गंगयैव च सर्वपुरुषार्थसिद्धिः किं गंगायां प्रायोपवेशनेन। पराजयस्त्वसंभावित एव यतः अधिका राज्ञामपि श्रीर्गृहे यस्य वर्त्तते तामप्यनादृत्य। एवं लोकवैष्णवाभ्यां प्रायोऽनुचितः ॥ १० ॥

किंच लज्जा तु सर्वतो महती। विशेषतः स्वेषु तत्कथं राज्ञां मध्ये प्रायोपवेशनमित्यभिप्रायेणाह। नमंतीति। पादयोर्निकेतं पादपीठं पादुके वा। सर्वत्र देशेष्वस्य सिंहासने गत्वा स्वापराधमार्जनार्थं धनानि आनीय हेत्याश्चर्ये शत्रवोऽपि नमंपि। आत्मनः शिवायेति। देशस्तु पूर्वमेवापहृतः स्वयं च संकटे पतिताः पुनः स्वदेशप्राप्त्यर्थं धनानि प्रयच्छंतीत्यर्थः। असमर्थस्तस्य पुरुषार्थो न भवतीति न मंतव्यम् यतो वीरः। वीररसस्य विद्यमानत्वात्। वीरस्य हि प्रायोपवेशेन मरणं लज्जाकरं भवति। किंच धनाद्यर्थं प्रायश्चित्तार्थं वा लोके प्रायोपवेशनं सिद्धं तत्सार्वभौमश्रियास्त्यागविषयत्वात् धनार्थं न भवति। तदर्थत्वे च कथं श्रियं त्यक्तवानिति। तत्रापि प्राणैः सह को वा मोक्ष्यति। लोके हि प्राणापेक्षयाऽपि धनं दुस्त्यजम् तस्करादिषु निर्णयात्। तत्रापि यूनः इच्छामात्रमपि दुर्लभं किं पुनः करणं। सत्यवार्त्तायामहोइत्याश्चर्यम् ॥ ११ ॥

प्रायश्चित्तादिना तु परलोकसाधनार्थं वैष्णवस्य प्रायोपवेशनं न भवति किंतु जीवनमेवेत्याह। शिवायेति। प्रमादान्महापातकसंबंधेऽपि वैष्णवस्य न देहत्याग उचितः। तेषांस्वतः सेवासामर्थ्याभावेऽपि तान् दृष्ट्वा लोकानां करणं संभवति अतस्तेषां जीवनमेव सर्वेषां शिवाय भवति। शिवं शांतं सुखं भवः उद्भवः लोके पुत्रपौत्राद्यभिवृद्धिः। "अमोघवीर्या हि नृपा" इति वाक्यात्। भूतये ऐश्वर्याय। अणिमाद्यष्टैश्वर्यं भगवत्सेवायां प्रासंगिकं "महापुरुषपूजाया" इति वचनात्। अतः सर्वेषां पुरुषार्थसाधकस्य देहस्य त्यागोऽनुचितः। निर्वेदेन देहादिपरित्यागोभूतहितार्थः। "अभयमभयं भूतेभ्य" इतिवचनात्। तच्च वैष्णवानां विपरीतमित्यभिप्रायेणाह। पराश्रयं निर्विद्येति। निर्वेदहेतुरेव परित्यक्तव्यो न तु कलेवरम्। कस्यचिदेवहि धर्मस्य हेतुत्वं कले च अव्यक्तमधुरे वरामिति नामनिरुक्त्या अव्यक्तरसाविर्भावे हेतुरितिप्रतिभाति। स च भक्तिरसः अन्यस्य लोकवेदयोः प्रसिद्धत्वात्। अतो भक्तिरसाविर्भावकं शरीरं कथं त्यक्तवानित्यर्थः ॥ १२ ॥

सूत उवाच

तत्सर्व्वं नः समाचक्ष्व पृष्टोयदिह किञ्चन ।
मन्ये त्वां विषये वाचां स्नातमन्यत्र छान्दसात् ॥ १३ ॥
द्वापरे समनुप्राप्ते तृतीयेयुगपर्य्यये ।
जातः पराशराद्योगी वासव्यां कलया हरेः ॥ १४ ॥
स कदाचित् सरस्वत्या उपस्पृश्य जलं शुचि ।
विविक्त एक आसीन उदिते रविमण्डले ॥ १५ ॥
परावरज्ञः स ऋषिः कालेनाव्यक्तरंहसा ।
युगधर्म्मव्यतिकरं प्राप्तं भुवि युगे युगे ॥ १६ ॥

श्रीविश्वनाथचक्रवर्त्ती

गृणीहि कथय ॥ ९ ॥　　अधिकृत्य राजन्तीत्यधिराजो युधिष्ठिराद्यास्तेषामपि श्रियं प्राप्तामनादृत्य ॥ १० ॥
पादनिकेतं पादपीठम् । ह स्फुटम् युवा न तु वृद्धः । ऐषत ऐच्छत् । असुभिः प्राणैरपि सह ॥ ११ ॥
लोकस्य शिवाय मङ्गलाय । तदेव द्विधाभूतं विवृणोति । भवाय भवः संसारस्तन्निवृत्त्यै मशकाय धूम इतिवत् । यद्वा भवं संहर्त्तुं क्रियार्थोपपदस्येत्यादिना चतुर्थी । भूतये सम्पत्त्यै । पराश्रयं परेषामुपकारि । न हि परोपजीव्यम् वस्तु निर्विद्यापि त्यक्तुमुचितमिति भावः ॥ १२ ॥

---

सिद्धान्तप्रदीपः ।

नोस्माकम् गृणीहिकथय ॥ ९ ॥　　सम्राट् । सार्वभौमः गंगायांकस्मात्प्रायोपविष्टः ॥ १० ॥
युवैवतरुणएवकथंकस्मात्असुभिः प्राणैः सहश्रियम् उत्स्रष्टुम् ऐषतऐच्छत् ॥ १२ ॥
शिवायकल्याणाय भूतयेऐश्वर्याय भवाय ऐश्वर्यस्योत्तरोत्तरोदयाय ॥ १२ ॥

---

भाषा टीका ।

हे सूतजी अभिमन्यु के पुत्र परीक्षितजी कों महात्मा लोक भागवतों मे उत्तम कहते हैं उनके महाआश्चर्य रूप जन्म तथा कर्मों को हमसे कथन करो ॥ ९ ॥
पांडवों के मानके वढानेवाले वह संपूर्ण पृथिवी के राजा किस कारण से राजा धिराज लक्ष्मी कों अनादर करके गंगाजी के किनारे मरण पर्यंत उपवासव्रत कों धारण किये ॥ १० ॥
जिनके चरण पादुका को शत्रुलोग भी अपने कल्याण के वास्ते धनों कों लाकर नमस्कार करते हैं वह वीरराजा युवा होकर हे सूत अत्यंत दुस्त्यज लक्ष्मी को प्राणों के सहित कैसे छोडने कों इच्छा किया अहो आश्चर्य है ॥ ११ ॥
जो भगवान के आश्रित पुरुष हैं वे तो लोकके सुख के लिये समृद्धिके लिये ऐश्वर्यकेलिये जीते हैं अपने लिये नहींऐसे परोपकारी शरीरकों विरक्त होकर क्यों त्याग किया ॥ १२ ॥

---

श्रीधरस्वामी ।

यत् किञ्चन पृष्टोऽसि तत् सर्व्वं नोऽस्मभ्यं समाचक्ष्व । यद्यस्मात् वाचां विषये गिरां गोचरे अर्थे स्नातं पारङ्गतं त्वां मन्ये छान्दसादन्यत्र वैदिकाद्व्यतिरेकेण अत्रैवर्णिकत्वात् ॥ १३ ॥
कस्मिन् युगे इत्यादिप्रश्नानां व्यासजन्मकथनपूर्व्वकमुत्तरमाह द्वापरे समनुप्राप्ते इति । कदेत्यपेक्षायामाह तृतीये युगस्य पर्य्यये परिवर्त्ते । वासव्यां उपरिचरस्य वसोर्वीर्याज्जातायां सत्यवत्यां योगी ज्ञानी व्यासो जातः ॥ १४ ॥
जलमुपस्पृश्य जले स्नानादिकं कृत्वेत्यर्थः । आसीनो वभूवेति शेषः । विविक्ते देशे इत्यादि चित्तैकाग्र्यार्थमुक्तम् । अनेन वदरिकाश्रमम् स्थानं सूचितम् ॥ १५ ॥
तत्र च स ऋषिर्युगधर्म्मव्यतिकरादिकं वीक्ष्य सर्व्ववर्णाश्रमाणां यद्धितं तत् दध्याविति तृतीयेनान्वयः । परावरज्ञः अतीतानागतवित् । अव्यक्तं रंहोवेगो यस्य तेन कालेन युगधर्म्माणां व्यतिकरं सङ्करं प्राप्तम् वीक्ष्य । तथा भुवि युगे युगे ॥ १६ ॥

दीपनी ।

( तृतीय इति । तृतीयत्वं कलिमादाय वैपरीत्येन गणनया त्रेतायुगावसाने इत्यर्थः । इति व्याख्यालेशः । ) परिवर्त्ते समाप्तिकाले सन्धावित्यर्थः । इति बुधरञ्जनी ॥ १४—२१ ॥

---

श्रीवीरराघवः

प्रश्नमुपसंहरतितदिति नोस्माभिःपृष्टस्त्वंतदेतत्पृष्टंसर्वंसम्यगाचक्ष्वाख्याहि यदपिकिंचनापृष्टमस्तितदपिसमाचक्ष्व यदसीतिपाठेयद्यस्मात्पृष्टस्त्वंततः पृष्टंतदेतत्सर्वमन्यदपिकिंचित्समाचक्ष्वत्वामन्यत्रछांदसाद्वेदवाक्यं विनावाचामितिहास पुराणादिरूपाणांविषयेस्नातंपारंगतमधिकृतंवामन्येवेदवाक्यव्यतिरिक्तेतिहासपुराणादि श्रवणे त्वामेवाधिकारिणंव्यासानुग्रहात्रोमहर्षणसुतंमन्यइत्यर्थः ॥ १३ ॥

एवमापृष्टःसूतः कस्मिन्युगेप्रवृत्तेयमित्यादिप्रश्नान्प्रतिविवक्षुस्तावत्तदुपोद्घातरूपंजन्मप्रभृत्येतत्पुराणोद्योगावधिकं श्रीव्यासचरित्रंत तदनुप्रयुक्तंश्रीनारदवृत्तांतंचाहद्वापरइत्यादिनायावत्षष्ठाध्यायसमाप्ति द्वापरेयुगेसमनुप्राप्तेतत्रापितृतीयेऽस्ययुगस्यपर्यायेऽवसानेपराशराद्वसोर्वासव्यामुपरिचरवसुवीर्यजातायांसत्यवत्यांहरेः कलयांशेनयोगीश्रीव्यासोजातःजज्ञे ॥ १४ ॥

सव्यासःकदाचित्सरस्वत्यांनद्यांशुचिपवित्रंजलमुपस्पृश्याचम्येदंनित्यकर्मोपलक्षणं रविमण्डलेउदितेसतिएकोऽसहायः विविक्तेनिर्जनेदेशेआसीनउपविवेश ॥ १५ ॥

ऋषिर्निखिलनिगमद्रष्टापरावरज्ञः प्रकृतिपुरुषेश्वररूपोत्कृष्टापकृष्टतत्त्वयाथात्म्यदर्शीसव्यासः अव्यक्तरंहःवेगोयस्यतेनदुर्निरीक्ष्यवेगेन कालेनहेतुनाभुविभूलोकेप्रतियुगंप्राप्तंधर्मव्यतिकरं धर्मव्यत्यासंकृतादियुगक्रमेणप्राप्तं धर्मस्यवृद्धिह्रासादिकमित्यर्थः ॥ १६ ॥

---

श्रीविजयध्वजः ।

कस्मिन्युगेइतिप्रश्नंपरिहरति द्वापरइति कृतयुगापेक्षयातृतीयेद्वापरेयुगेतेयुगपर्यवसानेसमनुप्राप्तेसतिहरेः कलयांशेनपराशरात्पराकृतःशरोहिंसायेनसतथोक्तः तस्माद्वासव्यांवसोरुपरिचरस्यपुत्र्यांसत्यवत्यांयोगीनित्यज्ञानीनाम्नाव्यासोजातोऽवतीर्णोऽतोद्वापरेयुगपर्यवसाने भागवतप्रवृत्तिरितिभावः ॥ १३ ॥

अवतारप्रयोजनमाह सकदाचिदिति सव्यासोभगवान्शुचिःशुद्धः कदाचित्सरस्वत्यानद्याजलमुपस्पृश्यसंध्याक्रियादिकंनिर्वर्त्यपश्चाद्रविमंडलेउदितेसतितत्तटेविविक्तेएकांतेस्वाश्रमएवासीनएकाकी ॥ १५ ॥

परावरज्ञःकालत्रयज्ञानीसः सर्वतःसारःसर्वोत्तमः ऋषिकुलावतीर्णः परावरज्ञत्वेहेतुर्वा त्रिकालदर्शित्वाद्वा अव्यक्तरंहसाअनभिव्यक्तवेगेनभुवियुगेयुगेप्राप्तं युगधर्मव्यतिकरंयुगधर्मसांकर्यम् ॥ १६ ॥

तथातत्कृतंकालकृतंभौतिकानांभूतकार्याणांभावानांपदार्थानांशक्तिह्रासंचातएवजनांश्चाश्रद्दधानान् तात्पर्यशून्यान्निःसत्त्वान्निरुत्साहान्दुष्टामेधायेषांतेदुर्मेधास्तान्धारणाशक्तिशून्यान्वा एधशब्दवदयमप्यकारांतः ह्रसितायुषः अल्पायुषः ॥ १७ ॥

---

क्रमसंदर्भः ।

छान्दसादिति वेदपुराणयोर्ब्राह्मणपरिव्राजकवद्भेदाभेदव्यवस्थयोक्तम् । माध्यन्दिनश्रुतौ च वेदपुराणेतिहासानामपौरुषेयत्वेनाभेदनिर्द्देशः कृतः । यथा "एवं वा अरेऽस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्व्वेदः सामवेदोऽथर्व्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषद" इत्यादिना । ब्रह्मयज्ञाध्ययनेऽपि विनियोगो दृश्यतेऽमीषाम् । यद्ब्राह्मणानीतिहासपुराणानीति । अनेन च प्रणवादिमयं छन्दः सवर्णं यद्वाक्यमत्रास्ति तत्रापि तस्याधिकारित्वं दर्शितम् । किन्त्वत्र कश्चिदुच्चारो भेदको गम्यः । यः खलु स्वरप्लुतादिवैशिष्ट्यमयो वैदिकस्तदभावात् । न चैवं सूताधिकारात् पुराणादीनां न्यूनत्वमाशङ्क्यम् । सकलनिगमवल्लीसत्फले श्रीभगवन्नाम्नि सर्व्वेषामधिकारात् सर्व्वयज्ञाद्यधिकश्रीभगवद्भक्त्यन्तरवत् । श्रीभागवते तु आत्मारामशिरोमणेः श्रीशुकस्यापि सर्व्वस्ववदावेशात् ॥ १३ ॥

युगस्य तस्य द्वापराख्यस्य तृतीये पर्यये युगत्रयमन्यदतिक्रम्यातिक्रम्य वैवस्वतमन्वन्तरादितस्तृतीय आगमने सतीत्यर्थः "पर्ययोऽतिक्रमस्तस्मिन्नतिपात उपात्यय "इत्यमरः ॥ १४ ॥

स इत्यस्य टीकायां बदरिकाश्रमस्थानं सूचितमिति सरस्वत्यास्तत्र श्रवणात् । शम्याप्राश इत्येव तु तस्य नाम वक्ष्यते ॥ १५ ॥ परावरज्ञ इति त्रिकम् ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥

---

सुबोधिनी ।

एवं प्रश्नचतुष्टयमुक्त्वोपसंहरति । तत्सर्वमिति । उत्तरोत्तरप्रश्नेऽपि पूर्वस्य न दौर्बल्यम् । तदाह । सर्वमिति । ननु भागवतार्थेऽस्माकं परिचयः नान्यत्रेति न वक्तव्यमित्याह । मन्य इति । अत्रैवार्वाचीनत्वाद्वेदे परं न परिचयः । तदाह । अन्यत्र छांदसादिति ॥ १३ ॥

## सुबोधिनी ।

प्रथमप्रश्नस्य स्कंधांतरेषूत्तरं तृतीयचतुर्थयोरुत्तमप्रकरणेअतोहेतुभूतत्वाद्द्वितीय प्रश्नस्योत्तरमाह । द्वापरइति । भागवतनिर्माणा र्थमेव मुख्यतया तस्यावतार इति प्रथमं जन्माह ब्रह्मकल्पस्य प्रथममन्वंतरस्य तृतीययुगपर्यावृत्तौ व्यासस्य जन्म । प्रथमं युगपर्यायो- ज्ञानस्यससाधनस्य कालः । द्वितीयः कर्मणः । तृतीयस्तु भक्तेः । तथापि धर्माणां बाधकत्वात् कृते त्रेतायां च न जन्म किंतु धर्मस्य द्विपरतायां संदेहे सर्वेषामेव संदेहःसंशब्दार्थः। पराशरस्य भक्तत्वं पुराणांतरेष्वेवं सिद्धम् । मार्कंडेयनमस्कारे वयोवृद्धवचनात् । उप- रिचरवसोः पुत्री वासवी मत्स्यगर्भे जाताऽपि बीजधर्मयुक्तैव । अवतारप्रयोजनं योगीति योगः प्रवर्त्तनीयः । तत्रापि हरेः कलया । सर्व दुःखदूरीकर्तुर्ज्ञानकलया । योगस्तु भक्तियोगः । ज्ञानस्य त्ववतारादेव तस्यापि फलं भक्तिः प्रयोजनं एवंभक्तिप्रवर्त्तनार्थमेवावतार इत्युक्तं भवति ॥ १४ ॥

तस्य प्रासंगिकमाह । स कदाचिदिति । सभक्त्यर्थमवतीर्ण एव कदाचिन्मार्गत्रय नाशे सति स्वस्यापि ज्ञानविस्मरणे सरस्वत्याः शुचि जलमुपस्पृश्य तेन प्रवुद्धसार्वज्ञः पापपराजितमिव न भवतीत्याह । शुचीति अनेन ज्ञानकलायां धर्मांशा एवाभिव्यक्ताः ततः स्वा- वतारप्रयोजनं विचारयन् सर्वेषां हितार्थे धर्ममपश्यदित्याह । विविक्तइत्यारभ्य कृपया मुनिना कृतमित्यंतम् । विविक्ते एकांते मनःस्थै- र्यार्थमेतत् । तदा एकः आसीनः । भौतिकदैविकात्मीयदोषत्रयाभाव उक्तः । उदिते रविमंडलइतिआवश्यककर्मकालाभाव उक्तः पुण्य- नक्षत्रस्य कालगुणानां च ज्ञापकं वा ॥ १५ ॥

परे कालादयः अवरे अस्मदादयः करिष्यमाणेऽर्थे कालादीनां प्रतिबंधकाभवं प्राणिनां तथाऽदृष्टं च ज्ञातवानित्यर्थः । एतदनंतरं- स ऋषिर्जातः । धर्मांशस्यैव प्रकटत्वात् । कालोहि महानधिकारी भगवतः सर्वकर्ता सर्वनियंता च । एवं सति व्यर्थः प्रयासोऽन्येषामिति कालनियंतुर्भगवतोऽवतार इतिज्ञापयितुं कालकृतमुपद्रवं प्रथमत आह । कालेनाव्यक्तेनाक्षरेण रंहो वेगो यस्येति अव्यक्ते वा प्रकृतौ रंहो वेगो यस्येति प्रकृतिप्रभृतीनांकालाधीनत्वमुक्तं अक्षरसंमतिर्वा । अव्यक्तो रंहो यस्येति वेति प्रतिक्रियाऽकरणार्थे हेतुरुक्तः । एतावता भगवद्व्यतिरिक्ताः तदधीनास्तदनुगुणावेति निरूपितं । फलितमाह । युगधर्मेति । चतुर्युगानां धर्माः तपोयज्ञस्वाध्यायदानादयः तेषां व्यति करो नाशः । अनधिकारिषु वा प्रवृत्तिः । सच व्यतिकरो नाकस्मिकः किंतु नियतः भुव्येव न स्वर्गे नाकस्मिकं किंतु युगे युगे प्राप्तम् ॥ १६ ॥

---

## श्रीविश्वनाथचक्रवर्ती ।

स्नातं पारगं वक्तुमतिसमर्थमित्यर्थः । छान्दसात् वैदिकाद्वाक्यादन्यत्र तत्रानधिकारादित्यर्थः । न चैवं सुताधिकाराद्वेदेभ्योऽस्य शास्त्रस्य न्यूनत्वमाशङ्क्यं सकलनिगमवल्लीसत्फले श्रीभगवन्नाम्नि सर्व्वेषामधिकारात् । निगमकल्पतरोः फलमित्यखिलश्रुतिसारमि त्यत्रैवोक्तेः ॥ १३ ॥

कस्मिन् युग इत्यादि प्रश्नानामुत्तरं वक्तुं व्यासजन्मकर्म्माण्यपि संक्षेपेणाह द्वापर इति । युगानां सत्यादीनां बहूनां पर्य्ययोऽतिक्रमो- यत्र तस्मिन् ।"पर्य्ययोऽतिक्रमस्तस्मिन्नतिपात उपात्यय" इत्यमरः । बहुयुगादिक्रमे यद्द्वापरं तस्मिन् । तच्च कृष्णावतारसम्बन्ध्येव ज्ञेयम् । तदवतारश्च वैवस्वतमन्वन्तरयिाष्टाविंशतितमे द्वापरे व्याख्यास्यते । कीदृशे तृतीये सन्ध्यारूपयुगरूपसन्ध्यांशरूपाणीति सर्व्वयु- गानि त्रिरूपाणि भवन्त्यतस्तृतीये सन्ध्यांशरूपे । वासव्याम् उपरिचरस्य वसोर्वीर्य्याज्जातायां सत्यवत्याम् ॥ १४ ॥

उपस्पृश्य आचम्य सर्व्ववर्णाश्रमाणां यद्धितं तद्ध्याविति चतुर्थेनान्वयः ॥ १५ ॥

परावरज्ञः अतीतानागतविज्ञः युगधर्म्माणां व्यतिकरं कालेन नाशम् ॥ १६ ॥

---

## सिद्धान्तप्रदीपः ।

नोस्माभिर्यत्किंचित्प्रष्टोऽसितत्सर्वंसमाचक्ष्वसर्वमाख्याहियतः छांदसात् वैदिकवाक्यात् अन्यत्रवाचाम् इतिहासादिरूपाणाम् विषय- प्रतिभाद्यर्थेस्नातंकृतसमाधित्वांमन्ये ॥ १३ ॥

कस्मिन्युगेप्रवृत्तेयमित्यादिप्रश्ननानामुत्तरंवक्तुंतावद्व्यासजन्मादिकमाहद्वापरेइति द्वापरे "अष्टाविंशेमवितीत्वंद्वापरेमत्स्ययोनिषु" इति हरिवंशे सत्यवतीजन्मस्मरणात्तत्रैवअष्टावतारानुक्त्वा "नवमोद्वापरेविष्णुरष्टाविंशेपुराभवत् वेदव्यासस्तथाजज्ञेजातुकर्ण्यपुरस्कृत" इति श्रीवेदव्यासजन्मस्मरणाच्चसमनुप्राप्तेसम्यगनुपश्चाद्गतेसति तृतीयेयुगपर्यये युगस्यद्वापरस्यत्रेतानंतरः दिव्यसंवत्सरशतद्वयात्मकः प्रथम: पर्ययः द्विसहस्रदिव्यसंवत्सरात्मकोद्वितीयः पर्ययः दिव्यसंवत्सरशतद्वयात्मकः चरमभागः तृतीयः पर्ययः संध्यांशलक्षणः सन्निहितः कालस्तस्मिन् "पुनस्तिष्येचसंप्राप्तेकुरवोनामभारताः भविष्यंतिमहात्मानोराजानः प्रथिताभुवि तेषांस्वतः प्रसूतानांकुलभेदो भविष्यति- परस्परविनाशार्थंत्वामृतेद्विजसत्तम तत्राप्यनेकधावेदान्भेत्स्यसेतपसान्वितः कृष्णेयुगेचसंप्राप्तेकृष्णवर्णोभविष्यसीति मोक्षधर्मोक्तः । वासव्यांवसुकन्यायाम् ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥

---

# कृतज्ञता प्रकाशः ।

———):*:(———

सुविदितमस्तुविद्वद्वराणामिदं श्रीमद्भागवतमष्टटीका समलंकृतं पूर्वं मुद्रण समये विघ्नितमपि पुनर्हस्तावलंबनदानेन वंगदेशांतर्गत तडाश भूपति श्रीराधाविनोद सेवा परायण श्रीराधासरस्तीर निवासि परम भागवत राजर्षि श्रीयुक्त वनमाली राय बहादुर वर्येण १५००) मुद्राप्रदानेन मुद्रणे प्रचालित मिति तस्य कृतज्ञतां प्रकाशयामः सराजा भगवत्कृपया भक्त श्चिरंजीवोच भूयादिति ।

प्रकाशकः संपादकः ॥

श्री नित्यस्वरूप ब्रह्मचारी ॥

भौतिकानान्तु भावानां शक्तिह्रासश्च तत्कृतम् ।
अश्रद्दधानान् निःसत्त्वान् दुर्म्मेधान् ह्रसितायुषः ॥ १७ ॥
दुर्भगांश्च जनान् वीक्ष्य मुनिर्दिव्येन चक्षुषा ।
सर्व्ववर्णाश्रमाणां यद्दध्यौ हितममोघदृक् ॥ १८ ॥
चातुर्होत्रं मर्म्मशुद्धं प्रजानां वीक्ष्य वैदिकम् ।
व्यदधाद् यज्ञसन्तत्यै वेदमेकं चतुर्व्विधम् ॥ १९ ॥
ऋग्यजुःसामाथर्व्वाख्या वेदाश्चत्वार उद्धृताः ।
इतिहासपुराणञ्च पञ्चमोवेद उच्यते ॥ २० ॥

भाषा टीका ।

इसविषयमे तुमने जोकुछ पूछाहै सो सव हमसेकहो आप को वेदों से विना और सव शास्त्रों में परिपूर्ण हम जानते हैं ॥ १३ ॥
सत्ययुग के अपेक्षा से तीसरा पर्यव सान द्वापर युगके प्राप्त होने पर श्रीहरिके अंशसे वासवी (सत्यवती ) के गर्भ मे पराशरजीसे श्रीव्यासजी उत्पन्न भये ॥ १४ ॥
वह श्रीवेदव्यासजी सूर्यमंडल के उदय के समय मे सरस्वती का पवित्र जलसे आचमन करके एकांतमे वैठेथे तव ॥ १५ ॥
भूत भविष्यत् के ज्ञानी वह मुनि नहीं जानाजाता है वेग जिसका ऐसे काल भगवान् से युग २ मेधर्मों का विपर्यय भाव पृथिवी मे प्राप्त भया देखकर ॥ १६ ॥

---

श्रीधरस्वामी ।

भौतिकानां भावानां शरीरादीनाम् । तत्कृतं कालकृतम् । निःसत्त्वान् धैर्य्यशून्यान् । दुर्मेधान् मन्दमतीन् । ( ह्रसितायुषः ह्रसितमा-युस्तेजो येषां तान् ) ॥ १७ ॥ अमोघदृक् सर्व्वज्ञानसम्पन्नः ॥ १८ ॥
ततश्च होत्रोपलक्षिताश्चत्वार ऋत्विजश्चतुर्होतारः तैरनुष्ठेयं कर्म्मचातुर्होत्रम् । शुद्धं शुद्धिकरम् । यज्ञसन्तत्यै यज्ञानामवि-च्छेदाय ॥ १९ ॥
चातुर्विध्यमेवाह ऋगिति । उद्धृताः पृथक्कृताः ॥ २० ॥

---

श्रीवीरराघवः ।

तथातत्कृतंधर्मकृतंभौतिकानामाकाशादिभूतपरिणामरूपाणां देवादिशरीराणांभूतानांतत्सृष्टानां जीवानांच शक्तिह्रासंशक्तिक्षयं-
चतथाजनानभिवीक्ष्यकथंभूतानश्रद्दधानान् श्रद्धामकुर्वाणान्स्वस्ववर्णाश्रमानुगुणधर्मानुष्ठानविषयकत्वरारहितान्निःसत्त्वान् दुर्वला-
न्सत्यामपिश्रद्धायां दुर्वलान्सत्त्यपिसत्त्वेदुर्मेधान्ह्रसितंसंकुचितमायुर्येषांताननुष्ठानोपयुक्तज्ञानायूरहितान् ॥ १७ ॥
अतएवदुर्भगान्भाग्यहीनान्मुनिःपरमात्म॰॰॰त्म्यमननशीलः अतएवामोघदृगवितथसंकल्पः दिव्येनचक्षुषायोगपरिशुद्धेनमनसा-
सर्वेषांवर्णानामाश्रमाणांचहितंदध्यौचिंतितवान्चिंतापूर्वकं चकारेत्यर्थः ॥ १८ ॥
तदेवाह प्रजानांत्रैवर्णिकानांसंवंधितयाश्रेयः साधनतयाऽनुष्ठेयंवैदिकंवेदपूर्वभागवोध्यमतएव विशुद्धंभ्रमविप्रलंभादिपुरुषदोषा-
स्पृष्टविधिबोधितं चातुर्होत्रंचातुर्होत्रशब्दवाच्यमंत्रप्रकाश्यं कर्मवीक्ष्यप्रजानामनुष्ठेयमालोच्यतावद्यज्ञानांसंततयैकर्त्तव्ययज्ञकलापादिवि-
षयकबोधार्थंतद्वेदंपूर्वमेकरूपेणावस्थितवेदमृग्यजुःसामाथर्वभेदेनचतुर्विधंविदधेव्यभांक्षीत् ॥ १९ ॥
चातुर्विध्येनविधानमेवदर्शयति ऋगितिऋगाद्याश्चत्वारोवेदादुद्धृताः मिश्रीभूतवेदराशेरुद्धृत्यसंनिवेशविशेषेणायोजिताः इत्यर्थःतथा
इतिहासःपुराणानिचउद्धृतानीत्यनुषंगः कालेनविप्लुतानिमत्स्यादिपुराणानीतिहासाश्चोद्धृताइत्यर्थःइतिहासंपुराणानिचविशिनष्टिपंचमो-
वेदउच्यतेपंचमवेदत्वेनप्रसिद्धंतइत्यर्थः ॥ २० ॥

---

श्रीविजयध्वजः ।

दुष्टभाग्यान्वीक्ष्यमुनिर्मौनवान्दिव्येनचक्षुषाअपरोक्षज्ञानेनसर्वाश्रमाणांयद्धितंतच्चिरंदध्यौचिंतितवानित्येकान्वयः सर्वज्ञस्यचिरध्या-
नमज्ञदृष्ट्यपेक्षयादुष्टमोहनायचेतिज्ञातव्यम् अमोघदृक्अवंध्यज्ञानः ॥ १७ ॥

### श्रीविजयध्वजः

किंहितमपश्यदितितत्राह चातुर्होत्रमितिचत्वारोहोतारोहोत्रध्वर्यूद्गातृब्रह्माणोयस्मिंस्तत्तथोक्तंदशहोत्रादिचातुर्होत्रपर्यंतैर्मंत्रैःप्रकाश्यंवाअग्निष्टोमादिकंकर्मप्रजानांवैदिकीनांशुद्धंशुद्धिकरं रागादिवर्जितंवा वीक्ष्ययज्ञसंतत्यैअग्निष्टोमादियज्ञपरंपराप्रवर्तनायएकमाविभक्तंवेदमृगादिभेदेनचतुर्विधंव्यदधादित्येकान्वयः आदिमध्यावसानेषुहरिस्मृत्यातत्पूज्यत्वेनाक्रियमाणंकर्मप्रजानांज्ञानद्वाराशुद्धिकरमपश्यदितिभावः ॥ १९ ॥

कथंविभक्ताइतितत्राह ऋगिति वेदव्यासेनमूलवेदसमुद्रात् ऋग्यजुःसामाथर्वाख्याश्चत्वारोवेदाःउद्धृताःनतुकृताःतदर्थज्ञानायकृतम् इतिहासपुराणंचवेदार्थावेदकत्वात्पंचमोवेदइत्युच्यतेपंचमोवेदइत्युक्तेइतिहासादीनांशब्दतोरचनंनत्वर्थतःतस्यनित्यत्यादितिज्ञातव्यम् १९

तत्रतेषांवेदानांमध्येऋग्वेदप्रवर्तकःपैलोभूदितिप्रत्येकमन्वयः जैमिनस्यापत्यंजैमिनिःसामगायतिशिष्येषुगमयतिप्रवर्तयतीतिवासामगः कविःसूक्ष्मज्ञानी ततोजैमिनेरनंतरमेकःप्रधानःवैशंपायनएवयजुर्वेदानांनिष्णातःप्रवर्तकतयेतिशेषः एवशब्देनसूर्यादन्यःप्रतिषिध्यतेनतुसूर्यस्तथासतिवक्ष्यमाणविरोधात् ॥ २० ॥

---

### क्रमसंदर्भः ।

इतिहासेति । तथा च साम्नि कौथुमीयशाखायां छान्दोग्योपनिषदि ऋग्वेदं भगवोअध्येमि यजुर्व्वेदं सामवेदमाथर्व्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदमित्यादि । अन्यत्र च वेदानध्यापयामास महाभारतपञ्चमानिति । अन्यथा पञ्चमत्वं नावकल्पेत समजातीयत्वात्संख्यायाः ॥ तृतीयस्कंधेचवक्ष्यते ॥ "इति हासपुराणानिपंचमंवेदमीश्वरः सर्वेभ्यएववक्त्रेभ्यः समृजे सर्वदर्शन" इति पञ्चमत्वे कारणं वायुपुराणे सूतवाक्यम्—एक आसीद्यजुर्व्वेदस्तं चतुर्द्धाव्यकल्पयत् । चातुर्होत्रमभूत्तस्मिन् तेन यज्ञमकल्पयत् ॥ आध्वर्यवं यजुर्भिस्तु ऋग्भिर्होत्रं तथैव च । उद्गात्रं सामभिश्चैव ब्रह्मत्वं चाप्यथर्व्वभिः ॥ आख्यानैश्चाप्युपाख्यानैर्गाथाभिर्द्विजसत्तमाः पुराणसंहितां चक्रे पुराणार्थविशारदः । यच्छिष्टन्तु यजुर्व्वेद इति शास्त्रार्थनिर्णयः ॥ इति । स्कान्दमाग्नेयमित्यादिसमाख्यास्तु प्रवचननिवन्धनाः काठकादिवत् ॥ २० ॥

---

### सुवोधिनी ।

कालेन धर्मनाशमुक्त्वा पदार्थनाशमप्याह । भौतिकानामिति । भौतिकानामस्मदादीनां चकाराद्भूतानां शक्तिः । स्वाध्यायादीनां कृषिवृष्ट्यादीनां वा तत्कृतम् । कालकृतं कर्तृदोषानाह । अश्रद्धधानानिति । सर्वत्र श्रद्धारहितान् । सत्त्वं बलं विवेको वा । दुर्मेधान् बुद्धिरहितान् । चित्तमनोबुद्धिनाशा उक्ताः । अंतःकरणेष्वहंकार एव पुष्ट इत्यर्थः अतएव आयुषोऽप्यपचयइत्याह ॥ १७

कर्मणा हि भाग्यमुत्पद्यते तत्कालादीनां शुद्धितारतम्येन महाभाग्यजनकत्वं द्वापरादौ तु षण्णां दुष्टत्वात् दुर्भाग्यत्वम् । एतत्सर्वं न तर्कितम् किंत्वार्षज्ञानेन प्रमितं तथासत्युपायज्ञानं भवतीत्यर्थः । पाखंडधर्माः स्वतएवोत्पद्यंतइति तद्व्यावृत्त्यर्थमाह । सर्ववर्णाश्रमाणामिति । चकारात् अवांतरदेशादिधर्माः । अनेन वर्णाश्रमदेशव्यतिरिक्ताः धर्माः पाखंडा इतिनिरूपितम् । तेषामपाखंडानामिदं दध्यौ । सत्यसंकल्पात् हितं स्फुरतीत्यत आह । अमोघदृगिति ॥ १८ ॥

यज्ञ एव सर्ववर्णाश्रमहितकर इत्याह । आर्षज्ञानत्वान्न युक्तिरपेक्षते । युक्तिस्तु आधिदैविकः कालो वा भौतिककालकृतदोषदूरीकरणसमर्थः । अथवा कालनियामको विष्णुः । तदुभयात्मकत्वाद्यज्ञस्य स च श्रौतो विष्णुः प्रमाणांतराच्च वेदो बलिष्ठः सर्ववेदैकवाक्यतां वक्तुं तस्य स्वरूपमाह । चत्वारो होतारो यत्रेति । ते गणनायका होतृशब्देनोच्यंते । अध्वर्युप्रभृतयः अथवा दश होता चतुर्होता पंचहोता षड्ढोता सप्तहोतेति चतुर्होतारः ते अग्निहोत्रादीनां मूलमिति । चातुर्होत्रमग्निहोत्रादिपंचकं यत्कर्म कर्मेतिनामधेयम् । तद्धि ससाधनं नित्यमिति कालास्पर्शाच्छुद्धं । प्रकर्षेण जातानां । तत्र वेदः प्रमाणमित्याह । वैदिकमिति । तेषां यज्ञानां विस्तारार्थं वेदं चतुर्धा कृतवानित्याह । व्यदधादिति । अकुशरतया निरूपणात् बुद्धिसौकर्येण यज्ञसंततिः अभिन्नेष्वंशभेदव्यवस्थया वा ॥ १९ ॥

तान् भेदानाह । ऋग्यजुः सामाथर्वाख्या इति । ऋग्वेदेन होता करोति यजुर्वेदेनाध्वर्युः सामवेदेनोद्गाता चतुर्थेन ब्रह्मा । तत्तत्कर्मप्रतिपादकानां मंत्राणां ब्राह्मणानां च खंडा उद्धृता वेदशब्दवाच्या जाताः तेषामपेक्षितधर्मप्रतिपादकः पंचमो वेदः इतिहासपुराणाख्यः ॥ २० ॥

---

### श्रीविश्वनाथचक्रवर्त्ती ।

भौतिकानां भावानां शरीरादीनां । तत्कृतं कालकृतम् । निःसत्त्वान् रजस्तमोमयान् ॥ १७ ॥ १८ ॥

ततश्च ज्ञानयोगभक्तययोग्यानां सर्व्वासाम् प्रजानां कर्म्मैव शुद्धं शुद्धिकरम् । कीदृशं होता उद्गाता अध्वर्युर्ब्रह्मेति चत्वारोऽपि होतारस्तन्निमित्तं चातुर्होत्रम् । यज्ञानां सन्तत्यै अविच्छेदाय ॥ १९ ॥ २० ॥ २१ ॥

तत्रर्ग्वेदधरः पैलः सामगो जैमिनिःकविः ।
वैशम्पायन एवैको निष्णातो यजुषामुत ॥ २१ ॥
अथर्वांगिरासामासीत् सुमन्तुर्दारुणोमुनिः ।
इतिहासपुराणानां पिता मे रोमहर्षणः ॥ २२ ॥
त एत ऋषयो वेदं स्वं स्वं व्यस्यन्ननेकधा ।
शिष्यैः प्रशिष्यैस्तच्छिष्यैर्वेदास्तेशाखिनोऽभवन् ॥ २३ ॥
त एव वेदा दुर्मेधैर्धार्य्यन्ते पुरुषैर्यथा ।
एवञ्चकार भगवान् व्यासः कृपणवत्सलः ॥ २४ ॥

सिद्धान्तप्रदीपः ।

सर्ववर्णाश्रमाणांयद्धितंतद्ध्यौइत्युक्तम् । तत्रत्रैवर्णिकहिताचरणमाह चातुर्होत्रमिति । प्रजानां त्रैवर्णिकानांसंबंधिवैदिकम् । चातुर्होत्रम् । चातुर्होतृसंज्ञकाः "चितिस्रुक्चितमाज्यमित्यादयोमंत्रास्तत्पूर्वकम् अग्निहोत्रादिसोमांतम् प्रवृत्तंकर्म वीक्ष्य आलोच्य यज्ञसंतत्यै यज्ञानामविच्छेदाय । "योवै वेदांश्चप्रहिणोतीति श्रुतेः । अनादिसिद्धाएवसर्वेवेदाः पूर्वमिश्रिताः आसन् । तमेकंसर्वसमुदायभूतं वेदंचतुर्विधंव्यदधात् व्यभांक्षीत् ॥ १९ ॥

चातुर्विध्यमाह । ऋगिति त्रैवर्णिकानामन्येषांचहिताय । इतिहासः पुराणानिचउद्धृतानि । तेषांसमुदायः पञ्चमोवेदइत्युच्यते। तत्रायंविवेकः महाभारतः प्राचीनएवकालविप्लुतः "सूर्याचन्द्रमसौधातायथापूर्वमकल्पयदितिवदुद्धृतः । एवं पुराणान्यपीतिसंक्षेपः ॥ २० ॥

---

भाषा टीका ।

और उसी कालका किया हुआ शरीरादिकों का भूतों का शक्ति ह्रासकों देखकर विना श्रद्धा वाले विना धैर्य वाले दुर्बुद्धि अल्पायु वाले ॥ १७ ॥

दुर्भाग्य वाले मनुष्यों को दिव्य चक्षुसे देखकर दिव्यदृष्टि वाले मुनि सर्व वर्ण आश्रमों के हितका चिंता करते भये ॥ १८ ॥
प्रजाओं के लिये चतुर्होत्र वैदिक कर्मकों सुंदर जानकर यज्ञों के विस्तार के वास्ते एक वेदकों चार प्रकार से विधान किये ॥ १९ ॥
ऋक् यजुर साम अथर्व नामक चार वेद उद्धार किये इतिहास और पुराण यह पंचम वेद कहाजाता है ॥ २० ॥

---

श्रीधरस्वामी ।

निष्णातः पारम् गतः ॥ २१ ॥ दारुणः अथर्वोक्ताभिचारादि प्रवृत्तेः ॥ २२ ॥
शाखाविभागमाह त एत इति । व्यस्यन् विभक्तवन्तः ॥ २३ ॥
वेदविभागप्रयोजनमाह त इति । ये पूर्वमतिमेधाविभिर्धार्यन्ते त एव ॥ २४ ॥

---

दीपनी ।

( अथर्वाङ्गिरसामित्यस्यार्थः अथर्वणामिति । निष्णात इति पूर्वेणान्वयः । अथर्ववेदोक्तमन्त्रेषु निष्णात आसीदित्यर्थः । गङ्गाधरभूधर इत्यादिवदत्र कर्मणः शेषत्वविवक्षायां षष्ठीति विवेकः ॥ ) दारुणः भयानक इत्यर्थः ( इतिहासपुराणानामिति । अत्रापि पूर्ववत् निष्णात इत्यनुषञ्जनीयः । ननु अध्येतव्यं न चान्येन ब्राह्मणं क्षत्रियं विनेत्यादिपुराणवचनात् कथं सूतस्याध्यापनाधिकारः पाठकत्वेनाधिकारो वेति चेन्मैवं तस्य भगवदवतारविशेषत्वात् । तथाहि कूर्मपुराणीयत्रयोदशाध्यायवचनानि—वेणपुत्रस्य वितते पुरा पैतामहे मखे सूतः पौराणिको जज्ञे मायारूपः स्वयं हरिः ॥ प्रवक्ता सर्वशास्त्राणां धर्मज्ञो गुणवत्सलः । तं मां वित्त मुनिश्रेष्ठाः पूर्वोद्भूतं सनातनम् । एतस्मिन्नन्तरे व्यासः कृष्णद्वैपायनः स्वयम् । श्रावयामास सम्प्रीत्या पुराणं पुरुषोत्तमः ॥ मदन्वये च ये सूताः सम्भूता वेदवर्जिताः । तेषां पुराणवक्तृत्वम् वृत्तिरासीदाज्ञया इत्यादीनि । ) ॥ २२—२३ ॥

### श्रीवीरराघवः।

तत्रऋगादीनांमध्येऋग्वेदधरः पैलःअध्ययनपूर्वकमृग्वेदंपैलोमुनिर्दधारेत्यर्थः कविर्विद्वान्जैमिनिस्तु सामगःअध्ययनपूर्वकमृगाश्र-राणिसामानिजगावित्यर्थःवैशंपायनएकएवऋषिर्यजुषांनिष्णातः पारंगतः मतः स्मृतःअवांतरभेदा- भिप्रायेणयजुषामित्युक्तम् ॥ २१ ॥

एवमथर्वांगिरसामित्यत्रापितेषांनिष्णातः दरुणोपत्यंदारुणःसुमंतुर्नाममुनिरासीत् अथर्वाख्यानांगिरांसितेषामितिहासानांपुराणानांच निष्णातस्तत्कमेममसूतस्यपितालोमहर्षणः ॥ २२ ॥

सर्वएवैतेभगवतोव्यासस्यानुग्रहादेवनिष्णाताबभूवुरित्यर्थतोद्रष्टव्यम् ततस्तएतेपैलादयःस्वंस्वंवेदंशिष्यैः प्रशिष्यैःशिष्याणामपिशि ष्यैस्तेषामपिशिष्यैश्चशिष्यादिद्वारेत्यर्थः अनेकधाव्यस्यन् व्यभांक्षुरित्यर्थः ततस्तेवेदाः शाखिनोऽभवन् व्यस्तशाखाअभवंस्तत्रऋग्वेदएक विंशतिशाखाभेदंप्राप्तः यजुर्वेदस्तुएकाशतधासामवेदस्तुसहस्रधा आथर्वणस्तुनवधेतिविवेकः ॥ २३ ॥

किमर्थमेवमात्मनाशिष्यादिमुखेनचव्यभांक्षीदित्यपेक्षायांप्रयोजनंदर्शयन्व्यासनामनिर्वक्तितइति दुर्मेधैरल्पप्रज्ञैःपुरुषैस्तएतेवेदायथा धार्यंतेयथासंनिवेशितेषुधार्यंतेएवंतथाचकारभगवान् श्रीव्यासस्तत्रहेतुः कृपणेषुवत्सलःवात्सल्ययुक्तःयतोवेदान्व्यस्यत्व्यभांक्षीदतएव व्यासइतिप्रसिद्धोबभूवेतिभावः ॥ २४ ॥

---

### श्रीविजयध्वजः।

वारुणोवरुणपुत्रःसुमंतुर्नाममुनिरथर्वांगिरसाम्अथर्ववेदानांप्रवर्तकआसीत् मेपितारोमहर्षणःइतिहासपुराणानांप्रवर्तकः ॥ २१ ॥

भगवदाज्ञाप्रवर्तकंचतुर्णांवेदानांशाखोपशाखाभेदेनऋषिकृतविभागमाह तएवेतितएवपैलादयःऋषयःस्वंस्वंवेदमनेकधाव्यस्यन्व्यभ-जन्नित्यन्वयः तेवेदाःशिष्यप्रशिष्यादिभिःशाखिनःतन्नामपूर्वशाखावंतोभवन्नित्यन्वयः ॥ २२ ॥

व्यासनामनिर्वचनायाह तएवेति दुर्मेधैःअल्पप्रज्ञैःपुरुषैःतएववेदायथाधार्यंतेपठिताःअवधृतार्थाःक्रियंतेएवंतथाशिष्यप्रशिष्यादिभिः शाखोपशाखाभेदेनव्यवस्यत्चकार तस्मात्व्यासइति किमर्थमितितत्राह कृपणवत्सलःदीनजनस्निग्धः ॥ २३ ॥

एवंभगवद्भक्तानांत्रैवर्णिकानांवैदिककर्मानुष्ठानेनशुद्धांतःकरणानामधोक्षजोपासनाजनितज्ञानेनमुक्तिः स्यादितिव्यासेनस्थापितंतदनधि-कारिणांस्त्रीशूद्रादीनांहरिभजनंकुत्रोक्तमुपायेनेत्याकांक्षायामाह । स्त्रीशूद्रेति । वेदोक्तकर्माख्यश्रेयसिपुरुषार्थसाधनेमूढानामतएवानधि-कारिणांस्त्रीशूद्रद्विजाधमानांत्रयीत्रयोवेदाःश्रोतुंनयोग्याः इतितस्मादतएवंमयाकरिष्यमाणभारतादिशास्त्रोक्तविधिनाइहजनेश्रेयोभवेदिति-कृपयामुनिनासर्वज्ञेनव्यासेनभारताख्यानंकृतमित्यन्वयःअत्रैतत्प्रमेयमवगंतव्यम् स्त्रीशूद्रादिकृपयाभगवताभारताख्यानस्यकृतत्वात्तेषामेव-तत्राधिकारोनान्येषामितिशंकामाभूत्"इतिहासपुराणाभ्यांवेदंसमुपबृंहयेदितिवचनात्ब्राह्मणादीनामपिवेदार्थपरिज्ञानायभारताद्यभ्यास-स्यआवश्यकत्वेनोक्तत्वादुभयत्राधिकारोयुज्यते तेषांस्त्रीशूद्रादीनांतुगत्यंतराभावात्तदुक्तानुष्ठानेनमुक्तिरितिभावः ॥ २४ ॥

---

### क्रमसंदर्भः।

एक एवेति पैपलादिष्वप्यन्वितम् ॥ २१ ॥
अथर्वाङ्गिरसामाथर्वणाम् ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ १९ ॥

---

### सुबोधिनी।

भिन्नेष्वंशप्रतिष्ठापनार्थमाह । तत्रेति । अत्र तु क्रमो मंत्राणामिति न विरोधः । पैलादयः ऋषयः ॥ २१ ॥

सुमंतुर्दारुण इति आभिचारिकबाहुल्यादिति केचित् । वस्तुतस्तु स्वाभाविकदुष्टत्वात् अग्रे यज्ञेषु तस्याप्रवेश इति । तथाऽपि पाठने हेतुः । मुनिरिति । इतिहासपुराणानां सर्वाधिकाराय रोमहर्षण उक्तः ॥ २२ ॥

तैः पञ्चभिरपि स्वांशः खंडशो बहुधा व्यस्त इत्याह । तएतइति । ऋषित्वात्खंडशो व्यासे न दोषः । शाखानां शाखित्वं । बहुधाव्य-स्ताऽप्येका शाखा धारणेऽशक्या जातेत्याह । तएवेति दुर्मेधैः बुद्धिरहितैरपि यथा यथावत् अर्थज्ञानाभावेऽपि लक्षणैः समानादिभिः बहुकालाभ्यासेन कथंचिद्धार्यंतइत्यर्थः । अवांतरमुपसंहरति । एवमिति । मूर्खसंधारणपर्यंतमेवं कृतवान् । तत्र हेतुः भगवानिति । भग-वतः तथैवेच्छा यन्मूर्खपर्यवसानं भविष्यतीति । तर्हि न कर्त्तव्यम् स्यात् अव्रतानर्थज्ञधारणे वेदानां निर्वीर्यत्वप्रसंग इत्यतआह । व्यास इति व्यासत्वात्कृतवानित्यर्थः । तथाऽपि महतोऽधिकारिणोऽपि नान्यथाकरणमुचितमित्यत आह । कृपणवत्सल इति । अपहतपाप्मत्वा-त्स्वाध्यायस्य तावन्मात्रेणापि कृतार्थता भविष्यतीति प्रजासु दयया कृतवानित्यर्थः ॥ २३ ॥ २४ ॥

---

### श्रीविश्वनाथ चक्रवर्त्ती।

दारुणः अभिचारादि प्रवृत्तेः ॥ २२ ॥ व्यस्यत् विभक्तवान्सः ॥ २३ ॥ २४ ॥

स्त्रीशूद्रद्विजबंधूनां त्रयी न श्रुतिगोचरा ।
कर्मश्रेयसि मूढानां श्रेय एवं भवेदिह ।
इति भारतमाख्यानं कृपया मुनिना कृतम् ॥ २५ ॥
एवं प्रवृत्तस्य सदा भूतानां श्रेयसि द्विजाः ।
सर्वात्मकेनापि यदा नातुष्यद्धृदयं ततः ॥ २६ ॥
नातिप्रसीदद्धृदयः सरस्वत्यास्तटे शुचौ ।
वितर्कयन् विविक्तस्थ इति प्रोवाच धर्मवित् ॥ २७ ॥
धृतव्रतेन हि मया छंदांसि गुरवोऽग्नयः ।
मानिता निर्व्यलीकेन गृहीतं चानुशासनम् ॥ २८ ॥

### सिद्धान्तप्रदीपः ।

यजुषामिति बहुवचनंस्वगतप्रकरणभेदाभिप्रायम् अथर्वांगिरसामिति बहुवचनंपूर्ववत् अथर्वसंज्ञकानि अंगिरसादृष्टानि । आंगिरां-सिप्रकरणानितेषाम् ॥ २१ ॥ २२ ॥
ते पैलादयः व्यस्यन् विभक्तवंतः तेचवेदाः पैलप्रभृतिशिष्याद्यैर्व्यस्ताः । शाखिनोऽभवन् । तत्र ऋग्वेदेएकविंशतिशाखाः यजुर्वेदए-कोत्तरशतसंख्याकाः सामवेदेचसहस्रसंख्याकाः अथर्वणेतुनवैवशाखाः इतिविवेकः ॥ २३ ॥ दुर्मेधैर्मंदप्रज्ञैः ॥ २४ ॥

---

### भाषा टीका ।

तहां ऋग्वेद के ग्रहण करने वाले पैलऋषि भये सामगान करनेवाले कवि जैमिनि भये एक वैशंपायन यजुर्वेदमें प्रवीण होतेभये २१
क्रूर सुमंतुमुनि अथर्ववेद के अध्येता भये हमारे पिता रोमहर्षणजी इतिहास पुराणों के वक्ता होते भये ॥ २२ ॥
इनसब ऋषियों ने अपने २ वेदों को अनेक प्रकार विभाग किया उनके शिष्य प्रशिष्यों से वे वेद नाना शाखा वाले होगये ॥ २३ ॥
वेही वेद जैसे दुर्बुद्धि पुरुषों से धारण किये जांय तैसे दीनोंके दयालु भगवान् श्रीवेदव्यासजी ने करदिया ॥ २४ ॥

---

### श्रीधरस्वामी ।

किञ्च स्त्रीशूद्रेति । द्विजवन्धवस्त्रैवर्णिकेष्वधमाः तेषां कर्म्मरूपे श्रेयसि श्रेयः साधने । एवं भवेत् अनेनैव प्रकारेण श्रेयो भवत्विति ॥ २५ ॥
भूतानां श्रेयसि हिते । सर्व्वात्मकेनापि ( अनेकोद्देशवतापि ) कर्म्मणा ॥ २६ ॥
नाति प्रसीदत् हृदयं यस्य सः । चित्ताप्रसक्तौ हेतुं वितर्कयन् इदमुवाच स्वगतम् ॥ २७ ॥
मानिताः पूजिताः ॥ २८ ॥ २९ ॥

---

### श्रीवीरराघवः

एवंकृतवतापिमुनिनाव्यासेनस्त्रीणांशूद्राणांचाद्विजबंधूनांत्रैवर्णिकाभासानांच श्रुतिगोचराश्रवणविषयः त्रयीऋगादिभिन्नोवेदः
नभवतिअध्ययनस्योपनयनांगकत्वादुपनयनस्यचत्रै वर्णिकादित्वात्स्त्रीशूद्रादीनांवेदाध्यायनयोग्यतानास्ति अतएव कर्मश्रेयसिवैदिक-
कर्मसाध्येश्रेयसि मूढानांपुरुषार्थचतुष्टयतत्साधनविषयक ज्ञानविधुराणामन्यथाश्रेयोनभवे दित्थंतुभवेदिति- हेतुमालोचयता ॥२५ ॥
कृपयाभारतमाख्यानंकृतंहेद्विजाएवंसर्वात्मकेनप्रकारेणापिभूतानां लोकानांश्रेयसिनिमित्तेसदाप्रवृत्त स्यापिवादरायणस्यहृदयं मनो-
यदानातुष्यन्नजहर्ष ततस्तदानातीवप्रसीदत्प्रसन्नंहृदयंयस्यतथाभूतः शुचौपरिशुद्धेसरस्वत्यास्तटेविविक्तेनिर्जनेदेशेस्थितःवितर्कयन्नसं-
तोषहेतुः कोवेतिविचारयन्धर्मविद्बादरायणइदंस्वगतंवक्ष्यमाणमुवाचच ॥ २६॥ २७ ॥
तदेवाह धृतव्रतेनेत्यादिचतुर्भिः धृतंव्रतंछंदोगुर्वग्निसेवोपयुक्तं येनतेनमयाछंदांसिछंदोधिदैवतानिगुरवोऽग्नयोनिर्व्यलीकेननिष्कपट
भावेनमानिताबहुमानि ताःपूजिताइतियावत्छंदआदीनामनुशासनंगृहीतंकृतंच ॥ २८ ॥

---

श्रीविजयध्वजः

केनहतुनाकुतः संचोदितइति प्रश्नंपरिहरिष्यन् प्रायः कृतावतारकार्यस्यदुर्जनान् मोहयतो व्यासस्य लोकानुकरणप्रकारमाह एवमित्यादिना हे द्विजाः भूतानांसदाश्रेयसिनित्यमुक्तिसाधने एवंप्रवृत्तस्यापियदाह्वदयंसर्वात्मकेननातुष्यत मेममोवतारप्रयोजनेन सर्वप्रकारेणालमित्यलंबुद्धिनापततस्तदा ॥ २५ ॥

धर्मज्ञानीनातिप्रसन्नहृदयः अवतारप्रयोजनानलंबुद्धिमान् सरस्वत्यास्तटे तत्रापि शुचौदेशे विविक्तस्थएकांतेतिष्ठन् लोकदृष्ट्याऽनलंबुद्धिकारणंकिंचेतिविविधं तर्कयन् विचारयन्निदंवक्ष्यमाणमेवात्मानं प्रत्युवाचेत्यन्वयः ॥ २६ ॥

धृतव्रतेनलौकिकाचारोपेक्षयावेदव्रतधारणवतामयानिर्व्यलीकेन निर्व्याजेनचेतसेतिशेषः छंदांसिवेदाः । गुरवोऽध्यापकाः त्रेताग्नयः मानिताः सत्कृताः अनुशासनमाज्ञाचगृहीता हिशब्देनविप्रादिभिर्वेदव्रतादिवैदिककर्मावश्यंकर्तव्यमिति दर्शयति ॥ २७ ॥

यत्र भारतेस्त्रीशूद्रादिभिरपि त्रैवर्णिकैरुतानुष्ठेयोधर्मोदृश्यते । तस्यभारतस्यकरणेनाम्नायार्थः वेदादिसंप्रत्ययार्थः प्रदर्शितोहि । तत्र किंचिदुर्वरितंनाहृतीत्यर्थः ॥ २८ ॥

---

सुबोधिनी ।

अन्येषामुपायमाहस्त्रीशूद्रद्विजवंधूनामिति । यज्ञद्वारा हि वेदे स्त्रीणामुपयोगः अवीरवतीनां तु तदभावात् त्रैवर्णिकस्त्रीणामपि वेद श्रवणनिषेधः शूद्राः स्वतंत्राः नतु सेवकाः त्रैवर्णिकयाज्ञिकसेवकानां तदन्नभक्षणेन वेदार्थोपयोगिना मापाततोवेदश्रवणस्यावश्यकत्वात् द्विजबंधवः कुंडगोलकाः संस्कारहिताश्च । तेषामपि श्रुतिश्रवणे नाधिकारः । गोचरशब्दस्तु नियतपुल्लिंगः ! केचन गोचरेति छांदसत्वात् पठंति । कर्मश्रेयसिकर्मसाध्येश्रेयसि पुत्रस्वर्गादौ मूढानाम् साधनज्ञानरहितानाम् । एवं मनसिविचारितेन प्रकारेण इह अस्मिन्नेवार्थे यद्यपि अलौकिकप्रकारेण वेदसाध्यं फलमपि अलौकिकमिति नान्येन तत्सिद्धिः अथाप्यर्द्धलौकिकन्यायेन भट्टेष्विवपुराणेऽप्यर्द्धलौकिकन्यायेन वा भारतादिना कार्यं सेत्स्यतीति भावः । एवमभिप्रेत्य यत्कृतवान् तदाह । इति भारतमिति । भरतवंशोत्पन्नानां संबंधि भारतम् । आख्यानमितिवचनात् । न केवलं ग्रंथनाम किंत्वन्यार्थंतेन भारतश्रवणात् मायामोहाभावाद्धर्मादीनां तत्त्वावगतिःसुगमेतिमननानादवगम्यपरदुःखप्रहाणेच्छया कृतमित्यर्थः ॥ २५ ॥

एवं व्यासस्य परोपकारलक्षणो धर्मो महान् वेदव्यासे सिद्धः । धर्मस्य चान्तःकरणपरितोषः फलम् । तदभावे धर्मः श्रम इति पूर्वमुक्तम् । अत्र दुःखहेतुरिति वक्तुम् पूर्वोक्तस्मारणार्थं द्विजा इति संबोधनम् अधीतावधारणं हि द्विजधर्मः । किंच केवलं धर्मव्यभिचारेऽपि ज्ञानसहितस्य न तथात्वम् । इह तु तादृशोऽपि नांतःकरणसुखजनको जातइत्याह । सर्वात्मकेनापीति । सर्वत्र आत्मायेन तत्सर्वात्मकंज्ञानं अथवा दयावत् अन्ये प्रकाराः सर्वे कृताः सर्वप्रकारेणापिधर्मेणेत्यर्थः ॥ २६ ॥

अधिकारित्वात्फलाभावो जात इत्याह । नातिप्रसीदद्धृदय इति । धर्मोत्स्वस्यापि फलाभावे कथमन्यस्य भविष्यतीति सर्वनाशादप्रसादः । भगवदिच्छा काचिन्दयथा वर्त्ततइतिज्ञानावतारत्वेन ज्ञात्वा किंचित् प्रसीदद्धृदयो जातः नत्वत्यंतं प्रसीदद्धृदय इति पूर्ववत् ज्ञानोदयो भविष्यतीतिसरस्वत्यास्तटइत्युक्तम् । शुचाविति पापसंबंधाभाव उक्तः । एवं शुद्धदेशे स्वार्थं चितायां तर्केणकश्चिन्निर्धोर उत्पन्न इत्याह । वितर्कयन्निति । विविक्तस्थः एकांतस्थो महाधिकारित्वात् । इदं वक्ष्यमाणं । धर्मवित् धर्मस्याव्यभिचारिसाधनत्वं जानातीत्यर्थः ॥ २७ ॥

तत्र प्रथमं धर्ममाह । धृतव्रतेनेतिद्वाभ्याम् । ब्रह्मचर्यव्रतानिवेदव्रतानि च धृतानि येन छंदासि वेदाः तेषां सन्माननं तदुक्तार्थस्य ज्ञात्वाऽनुष्ठानं गुरवोऽपि प्रसादिताः । अग्नयः सुहुताः । एतदेव सन्माननं व्यलीकं कपटम् ईश्वरवल्लोकप्रवर्त्तनार्थं पाखंडिवद्वंचनार्थं वा । अनुशासनमध्यापनम् ॥ २८ ॥

---

श्रीविश्वनाथचक्रवर्ती ।

द्विजवन्धवः त्रैवर्णिकेषु हीनाः । कर्म्मरूपे श्रेयसि श्रेयः साधने ॥ २५ ॥ सर्व्वात्मकेन सर्व्वात्मना स्वार्थे कः ॥ २६ ॥
अतिशयेन न प्रसीदद्धृदयं यस्य सः । चित्ताप्रसत्तौ हेतुं वितर्कयन् उवाच स्वगतम् ॥ २७ ॥ २८ ॥ २९ ॥

---

सिद्धांतप्रदीपः ।

स्त्रीशूद्रद्विजवंधूनांत्रयी श्रुतिगोचरानभवति अतएवकर्मश्रेयसिवेदोक्तकर्म हेतुकेकल्याणे मूढानामिहलोके एवं महाभारतादिप्रतिपादितेन धर्मेणश्रेयोभवेदिति । कृपयामुनिनाभारताख्यानम् कृतम् । उपलक्षणंचैतत्पुराणानाम् ॥ २५ ॥
सर्वात्मकेनापि संपूर्णेनापियत्नेन भूतानांश्रेयसिसदाप्रवृत्तस्य यदाहृदयंनातुष्यत् नजहर्षततस्तदनंतरंनातिप्रसीदद्धृदयः इदमुवाचेत्युत्तरेणान्वयः ॥ २६ ॥
नातिप्रसीदद्धृदयः नातिप्रसीदत् प्रसन्नंहृदयंयस्यतथाभूतः सन् असंतोषहेतुंवितर्कयन् इदंवक्ष्यमाणमुवाच ॥ २७ ॥
निर्व्यलीकेननिष्कपटभावेनमानिताः पूजिताः ॥ २८ ॥

भारतव्यपदेशेन ह्याम्नायार्थश्च दर्शितः ।
दृश्यते यत्र धर्मादिः स्त्रीशूद्रादिभिरप्युत ॥ २९ ॥
अथापि बत मे दैह्यो ह्यात्मा चैवात्मना विभुः ।
असंपन्न इवाभाति ब्रह्मवर्चस्यसत्तमः ॥ ७० ॥
किम्वा भागवता धर्म्मा न प्रायेण निरूपिताः ।
प्रियाः परमहंसानां त एव ह्यच्युतप्रियाः ॥ ३१ ॥
तस्यैवं खिलमात्मानं मन्यमानस्य खिद्यतः ।
कृष्णस्य नारदोऽभ्यागादाश्रमं प्रागुदाहृतम् ॥ ३२ ॥
तमभिज्ञाय सहसा प्रत्युत्थायागतं मुनिः ।
पूजयामास विधिवन्नारदं सुरपूजितम् ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्यां प्रथमस्कन्धे नारदागमनं नाम
चतुर्थोऽध्यायः ॥ ४ ॥

—:-*-:—

भाषा टीका ।

स्त्री शूद्रद्विजाधम इनोंके कर्णगोचर वेद नहीं होसके हैंकर्म रूपि साधन मे मोंहित इनोंका कल्याण इस प्रकार सेहोगा इस हेतुसे श्रीव्यासमुनि ने भारत आख्यान कों रचना किया ॥ २९ ॥
हे द्विजो इस प्रकार से प्राणियों के हितमे सदा सब प्रकार से प्रवृत्त होने परभी जब हृदय संतोष न भया तवतो ॥ २६ ॥
अत्यंत मनको खिन्न कियेहुये सरस्वती के पवित्र किनारे पर एकांत मे विचार करते हुये धर्मज्ञ व्यासजी यह बोले ॥ २७ ॥
मैंने नियमों को धारण करके वेद गुरु अग्नि इनोंका निष्कपट से मान्य किया है और इनोंकी आज्ञा कों भी ग्रहण किया ॥ २८ ॥

श्रीधरस्वामी ।

दैह्यो देहे भवः आत्मा जीवः वस्तुतो विभुः परिपूर्ण एव आत्मना स्वेन रूपेण असम्पन्नः तादात्म्यमप्राप्त इवाभाति । ब्रह्मवर्चसं ब्रह्मणः श्रवणाध्यापनोत्कर्षजं तेजः तत्र साधवो ब्रह्मवर्चस्याः तेषु सत्तमः अतिश्रेष्ठोऽपि । यद्वा न केवलमसम्पन्न इवाभाति प्रत्युत ब्रह्मवर्चसी ब्रह्मवर्चसवानपि असत्तम इवाभाति । ब्रह्मवर्चस्युशत्तम इति पाठे कमनीयतमोऽपि ॥ ३० ॥
असम्पत्तौ हेतुं स्वयमेवाशङ्कते किम्वेति । प्रायेण भूयस्त्वेन । हि यस्मात् त एव धर्म्माः अच्युतस्य प्रियाः ॥ ३१ ॥
खिलं न्यूनम् । खिद्यतः खेदं प्राप्नुवतः । कृष्णस्य व्यासस्य । प्रागुदाहृतं सरस्वतीतीरस्थम् ॥ ३२ ॥
तं नारदमागतमभिज्ञाय सहसा प्रत्युत्थाय विधिवत् पूजयामासेति ॥ ३३ ॥
इति श्रीमद्भागवतभावार्थदीपिकायां प्रथमस्कन्धे चतुर्थोऽध्यायः ॥ ४ ॥

श्रीवीरराघवः

किंचभारतव्यपदेशेनभारतव्याजेनाम्नायानांवेदानामर्थश्चदर्शितः भारतंविशिनष्टियत्रभारतेस्त्रीशूद्रादिभिरपि धर्मो दृश्यतेस्वसापेक्षितश्रेयःसाधनः स्वानुरूपोधर्मोदृश्यतेऽवगम्यते ॥ २९ ॥
अथाप्येवंसतिवतेतिखेदेमेममदैह्यः देहस्था विभुः प्रभुरात्माप्रत्यगात्माआत्मनांतः करणेनसह यद्वा दैह्योविभुरात्मांतः करणमात्मना-स्वयंब्रह्मवर्चसिकृतस्वाध्यायनिमित्ततेजसिसमासांतविधेरनित्यत्वात् 'ह्महस्तिभ्यांवर्चसः' ॥५।४।७८॥ इत्यजभावः उशत्तमः शुद्धतमोप्यसंपन्नइवासमृद्ध इवाभातिअसत्तमइतिपाठेब्रह्मवर्चस्यरहितइवाभातियथाऽसत्तमः असज्जनतमइवाभातितद्वत् ॥ ३० ॥
प्रायशोमयाननिरूपिताः ततोवासौकिमसंतोषः परिशेष्या एवंवितर्क्यसूक्ष्मदर्शित्वादसंतोषहेतुमुत्प्रेक्षतेकिंवेतियतोभागवत धर्माः

श्रीवीरराघवः।

दयमेवभागवतधर्मानिरूपणमेवासंतोषहेतुर्भवितुमर्हतीत्यभिप्रायेणानिरूपणस्यासंतोषहेतुत्वमुपपादयति प्रियाइति सर्वांतरात्मनिभगवतिप्रीतेसतिहि तत्प्रियाम्यस्यमनसस्तोषः सच भगवान्भागवतेषुतुष्टेषु सत्सुस्वयंतुष्यति तेषांचसंतोषहेतवस्तएव-भागवतधर्माएवतदनिरूपणादुचितएवासंतोषइतिभावः प्रायेणेत्यनेनकचित् कचिदेवभारतेभागवतधर्मनिरूपणामितिसूचितम् ॥ ३१ ॥

एवमित्थमात्मानंखिलंन्यूनंमन्यमानस्यातएवखिद्यतस्तस्यकृष्णस्य व्यासस्यप्रागुदाहृतंपूर्वमुक्तसरस्वतीतीरस्याश्रमंप्रतिनारदोऽभ्यागादभ्यागच्छत् ॥ ३२ ॥

तमागतमभिज्ञाय चिन्हैर्नारदमुनिं ज्ञात्वासहसात्वरयाविधिवत्पूजयामासकथं भूतंसुरैःपूजितंपूज्यमानं "मतिबुद्धिपूजार्थेभ्यश्च ॥३।२।१८॥ इतिवर्तमानेक्तः ॥ ३३ ॥

इतिप्रथमे चतुर्थः ॥ ४ ॥

---

श्रीविजयध्वजः।

अथापिभारतकृत्याआम्नायार्थप्रदर्शनानंतरमपिदैह्योदेहरूपआत्माआत्मनास्वतएव विभुर्व्याप्तोमेममात्माअवतारप्रयोजनासंपत्त्याअसंपन्नोऽप्राप्तप्रयोजनइवाभाति कीदृशःब्रह्मवर्चस्विसत्तमःवृत्ताध्ययनसंपन्नानांमध्येश्रेष्ठइत्यन्वयः ब्रह्मवर्चस्यसत्तमइतिपाठेप्ययमेवार्थः ॥ २९ ॥

प्रायइदमेवानलंबुद्धौकारणमाह किंवेति भागवताधर्माःप्रायेणाननिरूपिताःकिंचभारतेनिरूपिताःअपिपुनःशास्त्रांतरेणनिरूपणीयाइत्यतःप्रायेणेत्युक्तं किंविशिष्टाःपरमहंसानांप्रियाः ततःकिं तेपरमहंसाएवाच्युतप्रियाहियस्मादसंपन्नइवाभातीतिभावः ॥ ३० ॥

केनचित्प्रेरितएवमहापुरुषःस्वकार्येप्रवर्ततइतिन्यायात्भागवतकृतिरेवालंबुद्धिहेतुरितिनिश्चयवानपिनारदप्रेरितः भागवतमकार्षीदितिनारदस्यलोकेमहतीकीर्तिःस्यादितिभक्तवत्सलत्वान्नारदागमनमाकांक्षमाणंव्यासंप्रतितदागमनमाह तस्येति खिन्नम्अनलंबुद्धिमात्मानंमतः-खिद्यतःखिद्यमानस्यअनलंबुद्धिगतस्य ॥ ३१ ॥

अभिज्ञायसंज्ञापूर्वकंविज्ञायसहसाकालक्षेपमंतरेण सरस्वतीतीरवर्तिस्वाश्रमस्थितोभागवतधर्मज्ञापनहेतोर्नारदेनचोदितःश्रीकृष्णोभागवतसंहितामकरोदितिशौनकप्रश्नपरिहारः ॥ ३२ ॥

इतिश्रीभागवतेप्रथमस्कंधेटीकायांचतुर्थोऽध्यायः ॥ ४ ॥

---

क्रमसंदर्भः।

विभुः स्वतः ज्ञानादिसम्पन्नोऽपि आत्मना भगवता असम्पन्न इव तद्धेतुकसम्पत्तिविशेषमप्राप्त इवाभाति । यो हि वक्ष्यते श्रीनारदेन इमं स्वनिगममित्यन्तेन ग्रन्थेन । उशत्तम इतिपाठे ब्रह्मवर्चसीति ज्ञेयम् ॥ ३० ॥

स्वयमपि तथैवाह प्रिया इति ॥ ३१ ॥ ३२ ॥ ३३ ॥

इति श्रीमद्भागवतप्रथमस्कन्धस्य श्रीजीवगोस्वामिकृत क्रमसन्दर्भे चतुर्थोऽध्यायः ॥ ४ ॥

---

सुबोधिनी।

भारतकरणं च धर्मार्थमेवेत्याह । भारतव्यपदेशेनेति । वस्तुतःकल्पसूत्रवत् वेदार्थप्रतिपादकएवइतिहासवाचकशब्दकरणं तु व्याजमात्रम् । तदाह । भारतइति व्यपदेशमात्रम् अन्यथा शूद्रादीनामाधिकारो न स्यादिति हिशब्दार्थः । आम्नाये दृष्टांतार्थमुक्तोधर्मः लौकिकोऽत्र प्रयुक्तोनतुयज्ञादिः धन्वन्निव प्रपाऽसीत्यादौ यथा । अतएव वेदे प्रतिपादितधर्मो न शूद्रादिभिर्ज्ञातुंशक्यः अत्र तु शक्य इत्याह । दृश्यतइति । उपदेशव्यतिरेकेणापि ज्ञायतइत्यर्थः ॥ २९ ॥

एवं धर्मान्निरूप्य तेषां फलव्यभिचारमाह । अथापीति । धर्मकरणे प्रयाससमरणात् । बतेति । नित्यानामुपाधिभेदात् भेदं मन्यते ब्राह्मणदेहएव आत्मनो ब्राह्मणोऽहमितिबुद्धिः न देहांतरे । मानसश्च योगी भवति । अन्नमयत्वात् । नैयायिकवद्वा मनसो भेदः । अध्यासेन वा भेदः अग्निवत्संक्रमणेन वा । तदाह । दैह्यो ह्यात्मा तेनैव देहाभिमानिना न संतुष्यति । चकारान्मानसश्च । यथा देहाभिमानी दैहिकान् विषयान् प्राप्य तुष्यति तथांतःकरणाभिमानी तद्विषयान् तत्र विषयाभावं निवारयति । विभुरिति । सर्वसमर्थोऽयमात्मा । असंपन्न इव । प्राप्यापि सर्वविषयानसंपन्नः । इवेति कदाचित् कदाचित्तथा स्फुरणात् । स्वस्मिन्विरुद्धधर्मावभासमाह । ब्रह्मवर्चस्व्यसत्तम इति । वस्तुतो ब्रह्मवर्चस्वी प्रतीतिरसत्तम इति । पाठांतरे तु ब्रह्मवर्चस्येन सत्तमः ब्राह्मणानां हि ब्रह्मवर्चस्यमेव फलम् । तत्संपत्तावप्यसंपन्न एवेति वा विरोधः ॥ ३० ॥ कार्ये सति कारणस्यावश्यकत्वात्कारणजिज्ञासायां योगजधर्मेणस्फुरितं कारणमाह । किंवेति । भागवताः प्रमाणतः साधनतः फलतश्च भगवत्संबंधिनः । ते अनुष्ठिता अपि न निरूपिताः अधिकारो हि निरूपणे । सर्वे धर्मा निरूपिताः सर्वेषां न परमहंसानां । यद्यपितुर्याश्रमधर्मा निरूपिताः अवधूतधर्माश्च तथाऽपि ते न तेषां प्रियाः क्लेशभूयस्त्वेऽल्पसारत्वात् । नन्वानुशासनिके तेऽपि निरूपिताः । ततआह । प्रायेणेति । भागवता धर्मास्तु स्वतंत्राः ते ह्यन्यशेषेण निरूपिता न निरूपिता एव । आनुशासनिके हि कालादिशेषत्वेन निरूपिताः परमस्य हंसाः परमहंसाः परमाश्चते हंसाश्चेत्यत्रापि परमत्वं भगवदीयत्वेनैव । परमहंसत्वसाधका एवान्ये धर्माः सिद्धे पुनः परमहंसत्वे भगवद्धर्मा एव प्रियाः । परमात्मत्वाद्भगवतः गंगादर्शनान्तरं यथा गंगादेवतादिह-

सुबोधिनी ।

ज्ञातथात्मज्ञानानंतरं परमात्मदिदृक्षा साधर्मैरेवसंपद्यतइति ननु तथापिकोऽयमत्याग्रहस्तत्राह तएवाहिअच्युतप्रियाइति तएवधर्मा एवहीति आत्मपर्यवसानात् । यदितेपरमहंसास्तदापारंपर्योद्दीपाता भगवतो भगवदीयानांच प्रियाइत्यर्थःपाखंडनिवृत्त्येस्त्वाश्रमपदप्रयोगः मुख्येसंप्रत्ययइतिच ॥ ३० ॥ ३१ ॥

एताद्दशेविषयेनारदस्याधिकारात्कथमागतइत्याह तस्येति खिलंन्यूनंस्वतएवभगवद्धर्मनिरूपणेतुपूर्वोक्तभारतादेरस्यचविरोधात् विरुद्धवक्तृत्वेनाप्रामाण्यंस्यात् अतः खिद्यतानारदवचनात्तुतथाकथनेनविरोधः कृष्णस्येतिवाच्यनाम्नोत्तमवक्तृत्वंबोधयति अथवाकृष्णस्यनारदइतिप्रागुदाहृतंसरस्वतीतटे ॥ ३३ ॥

साकांक्षस्यकृत्यमाहतमभिज्ञायेति ॥ नारदेतिस्वकार्यसाधकइतिवासहसेति अनभ्युत्थानकालेपिमुनिः अकालाभ्युत्थानयोर्गुणदोषद्रष्टा विधिवत्गुरुजनपूजायांयोविधिः अथवाविधिमिवनारदस्यब्रह्मपूजेवशुद्धसात्विका नामपिकिंचिज्ज्ञेयमस्ति अतएवदेवैर्नारदपूजनम् अतए वस्वस्यापीतिनात्रालौकिकंकिंचित् ॥ ३३ ॥

इतिश्रीभागवतसुबोधिन्यांश्रीवल्लभदीक्षितविरचितायां प्रथमस्कंधविवरणे चतुर्थोध्यायविवरणम् ॥ ४ ॥

---

श्रीविश्वनाथचक्रवर्ती

देही देहस्थः आत्मना स्वरूपेण विभुस्तपोज्ञानादिभिः परिपूर्णोऽपि असम्पन्न इव अपूर्ण इव । न केवलमसम्पन्न इव किन्तु ब्रह्मवर्चसे वेदश्रवणाध्यापनोत्कर्षजं तेजस्तद्वानपि असत्तम इव । उशत्तम इति पाठे कमनीयतमोऽपि । तथा समासांताभावे मत्वर्थीयविन् प्रत्ययेन ब्रह्मवर्चस्वी असत्तम इति उशत्तम इत्याभ्यां वकारवत्संयोगेन पाठद्वयम् ॥ ३० ॥

असम्पत्तौ हेतुं स्वयमेवाशङ्कते किम्वेति । प्रायेण भूयस्त्वेन । त एव परमहंसा एव । अत्र भागवतधर्म्मपदेन ज्ञानं व्याख्यातुं न शक्यते किन्तु भक्तिरेव नामान्यनन्तस्य यशोऽङ्कितानीति भवतानुदितप्रायं यशो भगवतोऽमलमित्यादेः । ततश्च परमहंसपदेन भक्ता एवोच्यन्ते नतु ज्ञानिनः । अतः पारमहंसी संहितेयं श्रीभागवतामिति ज्ञानिभिरत्र स्वत्वं नारोपणीयम् ॥ ३१ ॥

खिलं न्यूनम् । कृष्णस्य व्यासस्य आश्रमं प्रागुदाहृतं सरस्वतीतटस्थम् । अत्र भगवदवतारत्वादसम्भाविनाप्यसर्व्वज्ञताचित्ताप्रसादौ व्यासस्य स्वयं भगवता श्रीकृष्णेनैव स्वसदृशस्य सर्व्वशास्त्रशिरोमणेः श्रीभागवतस्य प्रादुर्भावार्थमेव बलादुपपादितावित्यवसीयते । यथा ब्रह्ममोहनप्रस्तावे स्वलीलासौन्दर्य्यार्थं बलदेवस्यापि असर्व्वज्ञता कल्पिता । नारदोपदेशात् प्रादुर्भूते च सति यस्मिन् सर्व्वे मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसेति । किम्वा योगेन सांख्येन न्यासस्वाध्याययोरपि । किम्वा श्रेयोभिरन्यैश्च न यत्रात्मप्रदो हरिरिति वाक्याभ्यां सर्व्वपुरुषार्थमुख्यो मोक्षोऽपि भक्त्यैव लभ्यते नतु साधनान्तरेणेति सर्व्वशास्त्रविलक्षणोऽर्थः सर्व्वैरेव दृष्टो भवतीति ज्ञेयम् ॥ ३२ ॥

विधिवत् विधिं ब्रह्माणमिव । इव वत् वा च सादृश्ये इत्यभिधानम् । अत्र वत्शब्देन सह समासः ॥ ३३ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
चतुर्थः प्रथमेऽध्यायः सङ्गतः सङ्गतः सताम् ॥ ४ ॥

---

सिद्धान्तप्रदीपः ।

भारतव्यपदेशेन भारतव्याजेनयत्रभारते स्त्रीशूद्रादिभिः स्त्रीशूद्रद्विजबंधुभिरपि धर्मादि धर्मार्थकाममोक्षंदृश्यते ॥ २९ ॥

वर्ततेतिखेदे अहोकष्टम् देह्योदेहस्थोविभुः ब्रह्मवर्चसिशब्दब्रह्मश्रवणाध्ययनोत्कर्षजेतेजसि उशत्तमःकमनीयतमोपि आत्मनास्वयम् संपन्नः असमृद्धइवाभाति ब्रह्महस्तिभ्यांवर्चसइत्यजभावः समासांतविधेरनित्यत्वात् ॥ ३० ॥

असंतोषहेतुंस्वयमेवशंकामुखेनाह किंवेति ॥ ३१ ॥ खिलम् न्यूनम् ॥ ३२ ॥

इतिश्रीमद्भागवत सिद्धांतप्रदीपे प्रथमस्कंधीये चतुर्थाध्यायार्थप्रकाशः ॥ ४ ॥

---

भाषा टीका ।

और भारत के निमित्त से वेदका अर्थकों भी दिखाया है जिस भारत मे स्त्री शूद्रादिक भी धर्मादिकों को स्वयं देखसकते हैं ॥ २९ ॥
हैसाहे तौभी हमारा देह वाला आत्मा ब्रह्मतेज वालों मे श्रेष्ठ है तौभी मनके सहित असंतुष्टसा मालूम होता है ॥ ३० ॥
अथवा हमने प्रायकरके भागवत धर्मोंका निरूपण नहीं किया जोकि धर्म परमहंसों के प्रिय हैं वे अच्युत भगवान्के प्रिय हैं ॥ ३१ ॥
इस प्रकार व्यासजी के शोच करते तथा अपने कों दुखी मानते समय मे पूर्वोक्त आश्रम कों श्रीनारदजी आते भये ॥ ३२ ॥
वह मुनि व्यासजी उन नारदजी कों आये जान शीघ्रही उठकर देवतों के पूज्य नारदजी को विधि पूर्वक पूजा करते भये ॥ ३३ ॥

इति प्रथम स्कंधका चतुर्थ अध्याय ॥ ४ ॥

—:—*—:—

## पञ्चमोऽध्यायः ।

सूतउवाच । अथ तं सुखमासीनमुपासीनं बृहच्छ्रवाः ।
देवर्षिः प्राह विप्रर्षिं वीणापाणिः स्मयन्निव ॥ १ ॥

नारद उवाच पाराशर्य्य महाभाग भवतः कच्चिदात्मना ।
परितुष्यति शारीर आत्मा मानस एव वा ॥ २ ॥
जिज्ञासितं सुसम्पन्नमपि ते महदद्भुतम् ।
कृतवान् भारतं यस्त्वं सर्व्वार्थपरिबृंहितम् ॥ ३ ॥
जिज्ञासितमधीतञ्च ब्रह्म यत्तत् सनातनम् ।
तथापि शोचस्यात्मानमकृतार्थ इव प्रभो ॥ ४ ॥

### श्रीधरस्वामी ।

पञ्चमे सर्व्वधर्म्मेभ्यो हरिकीर्त्तनगौरवम् ।
व्यासचित्तप्रसादाय नारदेनोपदिश्यते ॥ ०॥

उप समीपे आसीनं विप्रर्षिं ( व्यासम् ) बृहच्छ्रवाः महायशाः । स्मयन् ईषद्धसन् । इवेत्यनेन मुखप्रसत्तिर्द्योत्यते । यद्वा इवेत्यनधिकारार्थम् अहो महानपि मुह्यतीति स्मयमानः ॥ १ ॥

शारीरः शरीराभिमानी आत्मा आत्मना तेन शरीरेण कच्चित् किं परितुष्यति मानस आत्मा मनोऽभिमानी तेन मनसा परितुष्यति कच्चिन्नो वा ॥ २ ॥

ते जिज्ञासितं ज्ञातुमिष्टं धर्म्मादि यत् तत् सर्व्वं सुसम्पन्नं सम्यग्ज्ञातम् । अपिशब्दादनुष्ठितञ्चेत्यर्थः । अयीति पाठे सम्बोधनम् । सुसम्पन्नत्वे हेतुः महदद्भुतमित्यादि । सर्व्वैरर्थैर्धर्म्मादिभिः परिबृंहितं परिपूर्णम् ॥ ३ ॥

किञ्च यत् सनातनं नित्यं परं ब्रह्म तच्च त्वया जिज्ञासितं विचारितम् अधीतम् अधिगतम् प्राप्तञ्चेत्यर्थः । अथापि शोचसि तत् किमर्थमिति शेषः ॥ ४ ॥

---

### दीपनी ।

महदद्भुतमित्यादि । महद्ग्रन्थतः अद्भुतमर्थतः ॥ ३—१० ॥

---

### श्रीवीरराघवः ।

अथयथावत्पूजानंतरं सुखमासीनः बृहच्छ्रवःकीर्त्तिर्यस्यवीणापाणौयस्य सदेवर्षिर्नारदः स्मयन्निवस्वाज्ञयाआसीनमुपविष्टं विप्रर्षिंव्यासंप्राह ॥ १

तदेवाहपाराशर्येतित्रिभिःअसंतोषमालक्ष्याहकच्चिदिति इष्टप्रश्नेहेपाराशर्यहेमहाभागभवतःस्वात्मनास्वयंशारीरआत्माक्षेत्रज्ञःमानसःमनःसंबंधीमनः करणकः समनस्कइतियावत्परितुष्यत्येवहिकाच्चित् ॥ २ ॥

तेत्वयाजिज्ञासितंज्ञातुमिष्टंसर्वंसुसंपन्नमपिअपिशब्दः प्रश्नद्योतकः ज्ञातमेवहीत्यर्थः पद्गतौगत्यर्थाबुद्ध्यर्थाःउपबृंहितंयेनतदितिवा अतएवमहद्विपुलमत्यद्भुतंशब्दतोऽर्थश्चाचित्रंभारतं कृतवानतःसुसंपन्नंजिज्ञामितिभावः ॥ ३ ॥

किंचजिज्ञासितमितियत् सनातनमनादिनिधनाविच्छिन्नसंप्रदायंब्रह्मवेदस्तमधीतं जिज्ञासितंचसनर्थस्त्वाविवक्षितः विचारितमितिवापूर्वोत्तरमीमांसयोः प्रणायनप्रणयनाभ्यामितिभावः तथाप्येवंकृतकृत्योपित्वमकृतार्थः अकृतकृत्यइवहेप्रभोशोचसिशोचन्निवलक्ष्यसइत्यर्थः ॥ ४ ॥

---

### श्रीविजयध्वजः ।

अथार्ध्यपाद्यादिसमर्हणानंतरंसुखमुपविष्टोविस्तृतकीर्तिःवीणामहतीनामपाणौयस्यसतथोक्तः मंदस्मितंकुर्वन्निवप्रसन्नवदनोदेवर्षिःसमीपउपविष्टंतंविप्रर्षिंव्यासंप्राहेत्येकान्वयः ॥ १ ॥

श्रीविजयध्वजः

विज्ञातभगवदभिप्रायःतदनुकारणानुगुणानुकारणवान्नारदोनित्यकुशलंतस्यसंजानन्नपितदनुवदन्निवकुशलंपृच्छतीत्याह पाराशर्येति महाभागऐश्वर्याद्यनंतभाग्यनिधे पाराशर्यपराशरपुत्र भगवतःशारीरःमानसोवाशरीररूपोवाभेदाभावादेवमुक्तिः आत्मावतारप्रयोजनंकृत्वाआत्मनास्वतएवपरितुष्यतिकच्चित्स्वतंत्रतयाकृतावतारकार्यत्वात्परितुष्यतीत्येवकारार्थः ॥ २ ॥

कुतइतितत्राह जिज्ञासितामित्यादि यस्त्वंधर्मादिसर्वपुरुषार्थबृंहितंपूर्णंभारतंकृतवांस्तेत्वयासुसंपन्नंसुखपूर्णमद्भुतंसर्वस्मादाश्चर्यतमं अत्तारुद्रो यस्माद्भवतितदद्भुतंवा महद्देशतःकालतोगुणतश्चापरिच्छिन्नंब्रह्माजिज्ञासितंविचारितं अपिचशब्दौवक्ष्यमाणसमुच्चये शब्दतोर्थतोपिमहत् अद्भुतंगहनं व्यवहारेश्वनेशास्त्रेवस्तुहेतुनिवृत्तिंष्वितिवचनात्तन्न्यायेनार्थशब्दस्यद्विरावृत्त्यासर्वशास्त्रार्थपरिबृंहितंकृतवानितियस्मात्तस्मात्तेनलोकानांज्ञातुमिष्टंसुष्ठुसुपूर्णमभूदितिवा ॥ ३ ॥

किंचयश्चोपाध्यायपरंपरयाभवताधीतंसनातनंनित्यंवेदात्मकंशब्दब्रह्मतदपिजिज्ञासितंविचारितं तस्मात्कृतावतारकार्योपिततएवनातुष्टिकारणंपश्यामीत्यर्थः तथाप्येवमपिकृतावतारकार्योपिअकृतावतारप्रयोजनइवात्मानंशोचसिप्रकाशयसिहेप्रभोप्रभूतज्ञानेत्यन्वयः ॥ ४ ॥

---

क्रमसंदर्भः ।

कृतवान् भारतमित्यस्य यद्विरोधि मात्स्ये श्रूयते "अष्टादशपुराणानि कृत्वा सत्यवतीसुतः । भारताख्यानमखिलं चक्रे तदुपबृंहितमिति । तत्र स संहितां भागवतीं कृत्वानुकम्य चात्मजम् । शुकमध्यापयामास निवृत्तिनिरतं मुनिमिति सप्तमाध्यायवाक्येन समाधानम् दृश्यते । प्रथमतः सामान्यतया कृत्वा नारदोपदेशानन्तरम् अनुक्रम्य तत्सन्मत्यानुक्रमेण विशेषतः कृत्वेति ह्यत्रार्थः भवतइति । यशोवर्णनाभावमयेन ब्रह्मज्ञानेनापि खिलमिति भगवदाख्यपूर्णतत्त्वाविर्भावाभावात् ॥ ३—८ ॥

---

सुबोधिनी ।

चतुर्थेसर्वधर्माणांसंदेहोविनिरूपितः निरूप्यतेभक्तिमार्गेपंचमेतस्यनिर्णयः उत्कर्षणंमध्यमत्वात् दृष्टांतस्यप्रदर्शनम् आदावंतेनिर्णया र्थहेतुत्वाद्दुस्तरस्याहि पूर्वाध्यायांतेनारदः पूजितइत्युक्तं तत्रप्रतिपूजनादिकमकृत्वाभिन्नप्रक्रमेणपृच्छति अथेति तंपूर्वोक्तधर्मवंतमुत्तर परिज्ञानात्निर्भयः सुखमासीनः उत्तरप्रश्नार्थमुपासीनंमहतोन्यूनताप्रश्नः साधारणस्यनघटतइत्याहबृहच्छ्रवाः बृहत्कीर्त्तित्वादुक्त विश्वा सार्थवादेवर्क्षिः देवानामपिदेवप्रतिपादकमंत्रद्रष्टासह्यलौकिकोभवतिविप्रर्षिंपश्चिमबुद्धीनामुपायवक्तारंसर्वपूरकाणां पूरकंवाभागवत धर्माणामुत्तमत्वंख्यापयन्निति वीणापाणिः स्वावसरंप्राप्यऊर्जितोविकसन्मुखःलोकेहसन्निव ॥ १ ॥

इष्टामहानपिमुह्यतीतिमिच्छतोमूलमपिनष्टमित्याभिप्रायेणस्वाभाविकंकुशलंपृच्छतिपाराशर्यइति पराशरस्त्वतिवैष्णवस्तत्पुत्रःकथंभगवन्मार्गेसंदिग्धइतिपितृनाम्नासंबोधनेनतदुद्बोधितंसमर्थस्याधिकारेभगवन्मार्गबोधनसंभवात् कृतार्थत्वमाहहेमहाभागेतिकच्चिदितिकोमलप्रश्नेशारीरआत्माआत्मनाभवतः स्वेनवाभवतःइतितुसमुदायः विषयाप्राप्तौतुस्वेनैवापरितोषः भगवतातुअनेनअलौकिकमलौकिकंवानिमित्तंपृष्टंभवतिएवंमानसः एवशब्देनपूर्वरूपेगौणतासूचिता ॥ २ ॥

उत्तरार्थंतत्कृतंपूर्वपक्षेनाभिनंदतिजिज्ञासितमिति विचारितंसर्वलोकहिताचरणंसुष्ठुसंपन्नमेककृत्यैवआकल्पकरणासिद्धेः अपीत्याश्चर्येभगवतोपिप्रत्येककृत्यपेक्षातवतुतदपिनास्तीत्याह इतितेमहदद्भुलमितिइतीतिसमाप्तौ अद्भुतस्यैवमहत्त्वंसंपत्तिमेवाहकृतवानितिएकंहिशास्त्रमेकपुरुषार्थप्रतिपादकं भारतंतुधर्मादिचतुष्टयप्रतिपादकमित्याह सर्वैर्धर्मादिपुरुषार्थैः परितःसाधनसहितैः बृंहितंसंवद्धमित्यर्थः ॥ ३ ॥

स्वाभाविकधर्मैर्विशेषमाह जिज्ञासितमिति ब्रह्मपरब्रह्मवेदश्चतत्रैकंजिज्ञासितमपरमधीतंचकारादध्यापितंधर्मश्चजैमिनेरपितदुक्तार्थपरिबंधनात् अथवा प्रथमजिज्ञासाब्रह्मविषयिणी द्वितीयावेदस्य यत्तदितिअतिप्रसिद्धंसनातनमविकृतंब्रह्मशब्देनबृहत्त्वमेवोक्तं फलविपर्ययेणादूषयतितथापीति "तरतिशोकमात्मविदितिश्रुतेः अनीहयाशोचतिमुह्यमानइतिच ज्ञानधर्मसंपत्तौशोकाभावः श्रुतिसिद्धः सच्चानुभवेनवाध्यते नचायंशोकोलौकिकइत्याह अकृतार्थइवेति यथाजिज्ञास्यद्वयाभावेअसिद्धपुरुषार्थस्यशोकः तथासंपन्नदशायामपीति अत्रोत्तरकथनसामर्थ्यंतवास्तीत्यतआहप्रभोइति ॥ ४ ॥

---

श्रीविश्वनाथचक्रवर्त्ती ।

पञ्चमे ज्ञानकर्म्मादिवैयर्थ्यमुपपादयन् ।
भक्तिं कीर्त्तनमुख्याङ्गां नारदस्तमुपादिशत् ॥ ० ॥

उपासीनमातिथ्यार्थमासनार्घ्यपाद्यादिभिः उपासनां कुर्व्वन्तमेवाह । स्मयन्निव ओष्ठाधराभ्यां स्मितं निष्क्रमन्निव सर्व्वज्ञतया तं प्रत्यन्तः प्रसादं नानाप्रश्नकौतुकार्थमवहित्थया गोपयितुमशक्नुवन्नित्यर्थः ॥ १ ॥

शारीरःशरीराभिमानी आत्मा आत्मना तेन शरीरेण किं तुष्यति । मानस आत्मा मनोऽभिमानी तेन मनसा कच्चिदिति प्रश्ने किम् परितुष्यति नो वा । पाराशर्येति महाभागेत्याभ्यां पैतृकस्त्रीयमहाप्रभाववतो भवतोऽपि कोऽयं विषाद इति विस्मयो व्यञ्जितः ॥ २ ॥

व्यास उवाच अस्त्येव मे सर्व्वमिदं त्वयोक्तं तथापि नात्मा परितुष्यते मे।
तन्मूलमव्यक्तमगाधबोधं पृच्छाम हे त्वात्मभवात्मभूतम् ॥ ५॥
स वै भवान् वेद समस्तगुह्यमुपासितो यत् पुरुषः पुराणः।
परावरेशो मनसैव विश्वं सृजत्यवत्यत्ति गुणैरसङ्गः ॥ ६ ॥
त्वं पर्य्यटन्नर्क इव त्रिलोकीमन्तश्चरोवायुरिवात्मसाक्षी।
परावरे ब्रह्मणि धर्म्मतोव्रतैः स्नातस्य मे न्यूनमलं विचक्ष्व ॥ ७॥

नारद उवाच भवतानुदितप्रायं यशो भगवतोऽमलम्।
येनैवासौ न तुष्येत मन्ये तद्दर्शनं खिलम् ॥ ८ ॥

### विश्वनाथ चक्रवर्त्ती।

न च तव शास्त्रज्ञानं किञ्चिदपेक्षितव्यं तदलब्धिमूलकोऽयं विषाद इति वाच्यम्। यतो जिज्ञासितमित्यादि ॥ ३ ॥

न चानुभवज्ञानमपेक्षितव्यम् इत्यपि वाच्यम्। यतः सनातनं नित्यं ब्रह्मव्यापकं निर्विशेषस्वरूपं यत्तदपि जिज्ञासितं वेदान्तसूत्रकरणैर्विचारितम्। न केवलं जिज्ञासितमेव अपि तु अधीतमवगतमनुभवगोचरीकृतमित्यर्थः। अत्र अधीतम् अधिगतं प्राप्तमित्यर्थ इति श्रीस्वामिचरणाः ॥ ४ ॥

---

### सिद्धान्तप्रदीपः।

अथेति पूजानंतरम् सुखमासीनः वृहच्छ्रवाः वृहत्कीर्तिः अहोपरोपकारायमहांतएवयतंतीतिहर्षेणस्मयन्निव देवर्षिर्भगवान्नारदः उपसमीपेआसीनम् विप्रर्षिं श्रीव्यासंप्राह ॥ १ ॥

शारीरः शरीराधिष्ठातामानसोमनोनियंताऽऽत्माऽऽत्मनास्वतः परितुष्यतिकच्चिदितीष्टप्रश्ने ॥ २ ॥

तेजिज्ञासितम् ज्ञातुमिष्टम् सुसंपन्नंगत्यर्थस्यपदगताविल्यस्य ज्ञानार्थत्वात् सुष्ठुज्ञातम् यत्यतः महदद्भुतम् शब्दार्थाभ्यांविचित्रम्। सर्वार्थपरिबृंहितम्। "धर्मेचार्थेचकामेच मोक्षेचभरतर्षभ। यदिहास्तितदन्यत्र यन्नेहास्तिनतत्क्वचिदिति तत्रैवोक्तेः सर्वैःसांगोपांगैः धर्मादिभिरर्थैः परिबृंहितं पूर्णम् ॥ ३ ॥

यत्सनातनं ब्रह्मवेदरूपम्। तत्त्वयाशब्दतो ऽधीतमर्थतश्चजिज्ञासितम् ॥ ४ ॥

---

### भाषा टीका।

सूतजी बोले सुखपूर्वक आसन पर बैठे भये बडे यशस्वी नारदजी हाथमे वीणाकों लिये हसते हुये समीप बैठे भये व्यासजी से बोलते भये ॥ १ ॥

नारदजी बोले हे पराशर पुत्र महा भाग्यवन् क्या आपके मनके सहित शारीर अथवा मानस आत्मा संतुष्ट होता है कि नहीं। २।

आपके जानने का इष्टभी संपूर्ण होगया जिन आपने सब अर्थों करके युक्त महान् अद्भुत भारत कों रचना किया ॥ ३ ॥

जो सनातन ब्रह्म तत्त्व सोभी तुमने विचारा और जानातौभी अकृतार्थ के सरीके आप अपनी आत्मा कों शोचते हो ॥ ४ ॥

---

### श्रीधरस्वामी।

आत्मा शारीरो मानसश्च। तन्मूलं तस्यापरितोषस्य कारणम्। अव्यक्तम् अस्फुटम्। हे नारद त्वा त्वां पृच्छाम। आत्मभवो ब्रह्मा तस्यात्मनो देहादुद्भूतम् अतएवागाधोऽतिगम्भीरो बोधो यस्य तं ( त्वाम् ) ॥ ५ ॥

अगाधबोधतां प्रपञ्चयन्नाह स वा इति द्वाभ्याम्। सर्व्वगुह्यज्ञाने हेतुः। यद्यस्मात् पुराणः पुरुषः उपासितस्त्वया। कथम्भूतः परावरेशः कार्य्यकारणनियन्तामनसैव संकल्पमात्रेण गुणैः कृत्वा विश्वं सृजतीत्यादि ॥ ६ ॥

किञ्च त्वं त्रिलोकीं पर्य्यटन्नर्क इव सर्व्वदर्शी। योगबलेन प्राणवायुरिव सर्व्वप्राणिनामन्तश्चरः सन्नात्मसाक्षी बुद्धिवृत्तिज्ञः। अतः परे ब्रह्मणि धर्म्मतो योगेन निष्णातस्य। तदुक्तं याज्ञवल्क्येन—इज्याचारदयाहिंसादानस्वाध्यायकर्म्मणाम्। अयन्तु परमो धर्म्मो यद्योगेनात्मदर्शनम्। अवरे च ब्रह्मणि वेदाख्ये व्रतैः स्वाध्यायनियमैः निष्णातस्य मे अलम् अत्यर्थं यत् न्यूनं तद्विचक्ष्व वितर्कय ॥ ७ ॥

अनुदितप्रायम् अनुक्तप्रायम्। भगवद्यशो विना येनैव धर्म्मादिज्ञानेन असौ भगवान् न तुष्येत तदेव दर्शनं ज्ञानं खिलम् न्यूनम् मन्येऽहम् ॥ ८

### श्रीवीरराघवः ।

एवमापृष्टआहव्यासः ॥ अस्तीत्यादिभिस्त्रिभिः त्वयोक्तंसर्वमिदंजिज्ञासितंसुसंपन्नमित्यादिनोक्तम् ममास्त्येवतथापिममात्मान-परितुष्यते तस्यासंतोषस्यमूलंनिमित्तमव्यक्तंनमयाज्ञातमतस्त्वामेवागाधबोधमपारज्ञानंसर्वज्ञमितियावत् आत्मभवोब्रह्मातस्यात्मनः शरीरादुत्संगाद्वुद्भूतंपृच्छामहे ॥ ५ ॥
नाहंजानामीतिमावोचइत्यभिप्रायेणाह सवाइति सर्वैज्ञानिनामग्रणीर्भगवान्समस्तंगुह्यंदेहिनामंतर्गतंवेदजानाति कुतःयद्यस्मात्त्वयापुराणः पुरुषःसर्वजगत्कारणभूतः सर्वज्ञः परमपुरुषउपासितः कथंपरमपुरुषोपासनमात्रेणाहंजानीयामित्यत्राह परावरेशः परेब्रह्मादयोऽवरेयस्मा त्सचासावीशःसर्वनियंताभगवान्मनसैवसंकल्पमात्रेणैवविश्वंसृजत्यवत्यत्तिसंहरतिच अथापिगुणैः सत्त्वादिभिर्नसज्जतेइत्यसंगः स्वसं-कल्पकृतजगदुदयविभवलयलीलस्य सर्वनियंतुः सर्वप्राण्यंतर्गतवस्तुवेदित्वाद्यथाक्रतुरस्मिन्लोकेपुरुषोभवतीतिन्यायेनेश्वरवत्सर्वमुक्त प्रायस्त्वमपिजानास्येवेतिभावः ॥ ६ ॥

एतदेवोपपादयन्नसंतोषनिमित्तंवदेत्याह त्वमिति त्वमर्कः सूर्यइवत्रिलोकीं पर्यटन्वहिष्ठवस्तुद्रष्टावायुरिवांतश्चरः ज्ञानव्याप्त्याचासर्वे-षामंतश्चरन्नात्मसाक्षी आत्मनोंतःकरणस्य साक्षीद्रष्टाद्यद्रतार्थवेदीत्यर्थः। अतः परंचावरंचतयोः समाहारस्तस्मिन्ब्रह्मणिपरे ब्रह्मणितदा-वेदके वेदाख्ये ब्रह्मणि च विषये धर्मतोनिवृत्तिधर्मैः व्रतैः कांडव्रतादिभिश्चस्नातस्यपारंगतस्य समाप्तधर्मव्रतस्येत्यर्थः । ममन्यूनमसंतोष-पमलंविचक्ष्वन्यूनशब्दस्तद्धेतावुपचाराद्वर्त्ततेन्यूनहेतुंविचक्ष्वचक्षिदर्शनेपि वर्त्ततेपश्यालोचयेत्यर्थः। अलंद्रष्टुं समर्थस्त्वम् यद्वा न्यून-मिति भावप्रधानोनिर्देशः अलमधिकं न्यूनम् न्यूनत्वंविचक्ष्व अथवा चक्षिर्भाषणार्थएवन्यूनताहेतुंविचक्ष्वेत्यर्थः इत्थंप्रचोदितआह भगवान्नारदःयावदध्यायसमाप्ति ॥ ७ ॥

किंवा भागवताधर्मानप्रायेण निरूपिता इतितदुत्प्रेक्षितमेवतावदसंतोषहेतुमाह भवतेतिद्वाभ्याम् अमलंश्रृण्वतां वदतांचाखिलदुरि-तापहं भगवतोयशः भवतानुदितप्रायं प्रायेणावर्णितमित्यर्थः । प्रायग्रहणेनभारतेप्रासंगिकतया ऽप्राधान्येनभगवद्यशः क्वचित्क्वचिदुदि-तंनतुकृत्स्नप्रबंधानुस्यूतत्वेन प्राधान्येन चोदितमिति सूच्यते येन भगवद्यशोऽननुवर्णितेनैवासौतवात्मानतुष्येत असौतवात्माभगवान्वान-तुष्येत भगवदपरितोषेऽपि सतितन्निश्चयस्यं त्वदीयमंतः करणमपिनतुष्यत्येवेतिभावः । यद्वा येनैवकारणेननतुष्येतासौतवात्माभगवान्वा-तत्कारणं किमिति चेत्खिलंन्यूनंतद्दर्शनमेव भगवद्दर्शनमेव भगवत्स्वरूपगुणविभूतियाथात्म्यज्ञानपूर्वकं प्राधान्येन तद्वर्णनाभावएवेतिम-न्यइत्यर्थः ॥ ८ ॥

---

### श्रीविजयध्वजः ।

एवंनारदेनपृष्टोऽपरिमितज्ञानस्वरूपोपिअज्ञवत् दुष्टजनमोहनायतत्कारणंतमेवपृच्छतीत्याह अस्त्येवेति हेनारद त्वयोक्तमिदंसर्वंमेअ-स्त्येव नकिंचिदवशिष्टमस्ति तथापिमेआत्मासनःनपरितुष्यतेनालंबुद्धिंप्राप्नोति तुष्यतीतिवक्तव्येतुष्यतइतिप्रयोगात् अज्ञजनमोहनार्थमे-वहरिणाप्रश्नःक्रियते नाज्ञानादितिमहान्विशेषोविज्ञायते आत्मनोविष्णोर्भवतीत्यात्मभवोब्रह्मातस्यात्मनःशरीरादुद्भूतउत्पन्नआत्मभवा-त्मभूतब्रह्मपुत्रइत्यर्थः आत्मनिभवतीतिवा त्वेति त्वामव्यक्तंसूक्ष्मंतस्यापरितोषस्यमूलंकारणंपृच्छामहे अल्पज्ञश्चेत्प्रश्नोत्तरंकथंब्रूयादि-तितत्राह अगाधेति अपरिमितज्ञानंप्रश्नोत्तरवचनसमर्थमित्यर्थः अत्रापिसमित्युपसर्गमंतरेणपृच्छतेरात्मनेपदप्रयोगेणनारदस्यज्ञानंचुलु-कजलपरिमितंव्यासज्ञानंप्रलयसमुद्रवदपरिमितमितितात्पर्यंशब्दज्ञैरेवज्ञायते आत्मभुवात्मभूतमितिकेचित्पठंतितत्रोवङादेशश्छांदसः।५।

नारदस्यस्वात्मानलंबुद्धिहेतुवेदनकारणंवक्तीत्याह सवाइति योगुणैर्विरचितशरीरगतसुखदुःखफलसंगरहितोविश्वंमनसैवस्वतंत्रसा-धनांतरनिरपेक्षतयासृजत्यवतिसंहरतिसपरावरेशोमुक्तामुक्तप्रपंचयोरीशइतिपरावरेशः जगदुत्पत्तेःपुराप्यस्तीतिपुराणः पुरमणतीति-वा पुरूणिकर्मफलानिसनोतिददातीतिपुरुषःउपासितइतिअतःभवान्समस्तगुह्यंवेदेत्येकान्वयः एतदुक्तंभवति चतुर्मुखप्रियपुत्रत्वात्तवैव-सर्वजगत्सृष्ट्यादिकर्तृभगवदुपासकत्वेनसर्वज्ञत्वात्तत्प्रसादादस्मदनलंबुद्धिहेतुवेदनमस्तीति ॥ ६ ॥

तवभगवत्प्रसादेनजनितापरोक्षज्ञानेनसर्वत्राव्याहतगतिकर्मणाचयोगप्रभावेनसर्वप्राणिशरीरांतश्चरणेनचानलंबुद्धिहेतुवित्त्वमित्याह त्वमिति त्रिलोकींपर्यटन्अर्कइवत्रिलोक्यां अव्याहतगतिःसर्वप्राण्यंतश्चरोवायुरिवात्मसाक्षीसर्वजीवबुद्धिवर्तिवृत्तज्ञःत्वं परब्रह्मणितथाअव-रेतत्प्रतिपादकवेदाख्यशब्दब्रह्मणि धर्मतोवेदोक्तभगवद्धर्मानुष्ठानेनतदधिकारोपपादकवेदव्रतादिभिश्चानुष्ठापितैःलोकमोहायचमयानुष्ठितैः स्नातस्यकृतकृत्यस्यमेअवतारप्रयोजनंन्यूनंनितरामुर्वरितमलंयथाभवतितथाविचक्ष्वविशिष्टतयाब्रूहीत्येकान्वयः ॥ ७ ॥

नारदोपिसर्वज्ञस्यव्यासस्यहृदिस्थिताभिप्रायंविद्वान्तत्प्रसादमादित्सुरवतारप्रयोजनंवक्तीत्याह भवतेति हेव्यासभवताभगवतोहरे-रमलंयशोऽनुदितप्रायंबहुत्वेननप्रतिपादितंयेनानुदितेनयशःप्रतिपादकशास्त्रेणासौभवतआत्मानैवतुष्येत अहंतस्ययशसःप्रतिपादकंशास्त्रं-खिलमुर्वरितंमन्यइत्यन्वयः ॥ ८ ॥

---

### सुबोधिनी ।

प्रमाणबलविचारकाणांनात्रोत्तरस्फूर्त्तिरित्याह अस्त्येवेति साधनस्यफलव्यभिचारयन्मूलंतद्व्यक्तंनप्रकटोलोकवेदयोरसिद्धत्वात् अतः अगाधबोधंत्वांपृच्छामहे अगाधंप्रमाणागम्यं तत्रापिप्रमेयबलाद्बोधः तदाह आत्मभवात्मभूतमितिआत्मानारायणः तद्भवोब्रह्मात-स्यात्मनोदेहाज्जातम् आत्मभिर्वातंसवाधनवा हेभगवदवतारआत्मवित् "ब्रह्मविद्ब्रह्मैवभवतीतिश्रुतेः आत्मैवजातः असाधनसंबंधोवासूचितः

सुबोधिनी।

भगवत्सेवकंवाभूतानिविष्णोः सुरपूजितानीतिवाक्यात् ॥ ५॥

तस्यप्रमेयबलमाहसर्वैभवानिति वेदानांसमस्तंगुह्यंभवानितिवाउभयत्रापिहेतुः उपासितइतिपुराणत्वमुत्तमत्वायतेनपुरुषोत्तमःसेवितइतिकालादिनिरपेक्षःसेव्यसामर्थ्यंन सेवकसामर्थ्यंवक्तुंभगवद्गुणानाहपरेतिसर्वेश्वरत्वंसर्वकर्तृत्वंचचिंतनमात्रेणगुणाः ॥ ६॥

नारदस्यस्वतोऽपिसामर्थ्यहेतुमाह। पर्यटन्निति। बहिरंतः सर्वपरिज्ञानार्थं इष्टांतद्वयमपेक्षितरूपंचक्रियया सर्वलोकगमनं योगेनांतः प्रवेशः ज्ञानेन सर्वसाक्षित्वम् एवं सार्द्धश्लोकेनभक्त्यादिभिः सर्वसामर्थ्यप्रतिपाद्यस्वसंदेहंपृच्छति परावरेब्रह्मणीति परंवेदांतप्रतिपाद्यम् अपरं वेदः तत्र क्रमेणैवधर्मतः यज्ञादिकरणात् ब्रह्मणि निष्णातः तदुभयनिष्णातस्ययन्मूलं तद्विचारयआपाततोविचारितं नभविष्यतीत्याह अलमिति ॥ ७॥

नारदस्तुविचारितमेव वर्त्ततइति सिद्धवत्कारेणाह। अग्निहोत्रसुवर्णश्रीज्ञानसद्भावेऽपि यथादीपसूर्यादिव्यतिरेकेणनबहिः प्रकाशः तथाभगवद्यशोव्यतिरेकेणांतः प्रकाशः भगवदीयास्तुधर्मा नज्ञानादिभिः प्रकाश्याः तेचमहांतोवहवश्चयद्विषयंव्याप्यातिष्ठति सचविषयो नज्ञानादिभिः प्रकाश्यते यद्यपि भारते भगवद्यशः प्रतिपादनंगीतायांच विशेषतः तथापि इतरशेषत्वेन प्रतिपादनात् व्यामोहकलीलात्वेपि हृदयेतथैवावेशात् पूर्वकांडशेषत्वेनोत्तरकांडनिरूपणेन वेदांतैः स्वातंत्र्येणब्रह्मप्रतिपादनं तथाभगवद्यशोऽपि गीतादौतदेवाह। अमलंयशस्तेनैवांतःकरणदोषाभावः तद्व्यतिरेकेणापि सर्वं भविष्यतीति ज्ञानेखिलता ॥ ८॥

---

श्रीविश्वनाथचक्रवर्त्ती।

तस्यापरितोषस्य मूलं कारणम् अव्यक्तमस्माभिर्दुर्ज्ञेयं त्वां वयं पृच्छाम। अत्र हे इति सम्बोधनेन न चाहमपि न जानामीति वाच्यम्। यत आत्मभवो ब्रह्मा तस्यात्मनो देहात् भूतं जातमिति पैतृकप्रभावः अगाधबोध इति स्वीयश्च प्रभावस्तज्ज्ञाने कारणमस्त्येवेति भावः ॥ ५॥

त्वया यत् पुराणः पुरुष उपासितः तेन पराशरपुत्रत्वेन महाभागत्वेन चतुर्वेदज्ञत्वेन ब्रह्मानुभवित्वेन च त्वयाहमुक्तस्त्वं तु ब्रह्मणः पुत्रोऽगाधबोधः सर्व्वज्ञो भगवदुपासक इति मत्तः सर्व्वथैवातितरामेव विशिष्ट इति भावः। परावरेश इत्यादिविशेषणकः स वै निश्चितं भवानेव भगवदवतारत्वात्। अतो भवान् समस्तानां समस्तञ्च गुह्यं वेद ॥ ६॥

सर्व्वलोकहितार्थमेव पुराणपुरुषस्त्वद्रूपेणावतीर्णस्तन्ममाद्यहितं कुरुष्वेत्याह। त्रिलोकीं पर्य्यटन् अर्क इव सर्व्वदर्शी। वायुरिवान्तश्चरः। आत्मेव साक्षी बुद्धिवृत्तिज्ञः। अतः परे ब्रह्मणि धर्म्मतः योगेन निष्णातस्य। तदुक्तं याज्ञवल्क्येन—इज्याचारदमाहिंसादानस्वाध्यायकर्म्मणाम्। अयन्तु परमो धर्म्मो यद्योगेनात्मदर्शनमिति। अवरे च ब्रह्मणि वेदाख्ये व्रतैः स्वाध्यायनियमैः निष्णातस्य अलमत्यर्थं यन्न्यूनं तद्विचक्ष्व वितर्कय ॥ ७॥

अनुदितप्रायम् अनुक्तप्रायम्। भगवतो यशः सर्व्वस्वरूपेभ्यो भगवत्स्वरूपस्योत्कर्षः सर्व्वोत्कर्षद्योतिनी तस्य लीला भक्तिश्च। ननु मया ब्रह्ममीमांसाशास्त्रं वेदान्तदर्शनं कृतं तत्राह येनेति। तद्दर्शनं दर्शनशास्त्रमपि खिलं न्यूनमेव मन्ये। तद्दर्शनकर्त्तुरेव तवापि चित्ताप्रसादश्चेत् तर्हि अधीत्याधीत्य तद्दर्शनाभ्यासिनामपि कथं चित्तं प्रसीदत्वित्यत्र भवानेव प्रमाणमिति भावः ॥ ८॥

---

सिद्धान्तप्रदीपः।

हे इति। हे नारद तत्तस्यापरितोषस्यमूल हेतुंत्वात्वाम ॥ ५॥

यद्यस्मात् त्वयापुरुषः उपासितः मनसैवसंकल्पेनैव ॥ ६॥

त्वमर्कइवत्रिलोकींपर्यटन् आत्मसाक्षी शरीररूपात्मद्रष्टावाह्येंद्रियवृत्तिद्रष्टेत्यर्थः वायुरिवांतश्चरः सन् आत्मसाक्षी। अंतःकरणवृत्तिद्रष्टा परेब्रह्मणि धर्मतः निवृत्ति धर्मतः अवरेशब्दब्रह्मणिव्रतैः तदध्ययनार्थकैर्नियमैः स्नातस्यकृतावगाहनस्यमे अलंअत्यर्थंन्यूनम् आचक्ष्व ममतपोव्रतज्ञानप्रयत्नादिषु अपूर्णंयदस्तितदालोचय ॥ ७॥

भवताभगवतः अमलम् श्रावयितॄणां श्रोतॄणांचमलघ्नम् यश अनुदित प्रायमवर्णितप्रायम्। येनैवभगवद्यशोवर्णनमंतरेण दर्शनेन असौतवात्मानतुष्येततत्तेदर्शनं ज्ञानंखिलमपूर्णंमन्ये ॥ ८॥

---

भाषा टीका।

व्यासजी बोले आपने जो बात कहा सो सब हमारे है तथापि हमारा आत्मा परितुष्ट नहीं होता है तिसका कारण अ प्रगट है सो अति गंभीर बुद्धि वाले ब्रह्मा के पुत्र आपको मै पूछता हौं ॥ ५॥

सो आप सब गुप्त बातोंको जानते हो जिस कारण आपने पुराण पुरुष परमात्मा का उपासना किया है जो परमात्मा कार्य कारण के नियामक गुणोंसे पृथक् होकर मनही से संसार को रचते हैं पालते हैं संहार करते हैं ॥ ६॥

आप सूर्य के तुल्य तीनो लोकों मे घूमते भये वायुके तुल्य सबके अंतःकरण मे बीचरते साक्षी हौ ब्रह्म औ वेदमे धर्मसे व्रतसे प्रवीण जो मै तिस मेरे कों जोकुछ कमती हो सो संपूर्ण कहो ॥ ७॥

नारदजी बोले आपने प्राय करके भगवानका निर्मल यशका कथन नहीं किया है जिससे वह भगवान् संतुष्ट नहोय वह ज्ञान न्यून ही है ॥ ८॥

यथा धर्म्मादयश्चार्था मुनिवर्य्यानुकीर्त्तिताः ।
न तथा वासुदेवस्य महिमा ह्यनुवर्णितः ॥ ९ ॥
न यद्वचश्चित्रपदं हरेर्यशो जगत्पवित्रं प्रगृणीत कर्हिचित् ।
तद्वायसं तीर्थमुशन्ति मानसा न यत्र हंसा निरमन्त्युशिक्क्षयाः ॥ १० ॥
तद्वाग्विसर्गो जनताघविप्लवो यस्मिन् प्रतिश्लोकमबद्धवत्यपि ।
नामान्यनन्तस्य यशोऽङ्कितानि यत् शृण्वन्ति गायन्ति गृणन्ति साधवः ॥ ११ ॥
नैष्कर्म्म्यमप्यच्युतभाववर्ज्जितं न शोभते ज्ञानमलं निरञ्जनम् ।
कुतः पुनः शश्वदभद्रमीश्वरे न चार्पितं कर्म्म यदप्यकारणम् ॥ १२ ॥

श्रीधरस्वामी ।

ननु भगवद्यश एव तत्र तत्रानुवर्णितं तत्राह यथेति । चशब्दाद्धर्म्मादिसाधनानि च । तथा धर्म्मादिवत् प्राधान्येन वासुदेवस्य महिमा न ह्युक्त इत्यर्थः ॥ ९ ॥

वासुदेवव्यतिरिक्तान्यविषयज्ञानवदेवान्यविषयं वाक्चातुर्य्यञ्च खिलमेवेत्याह नेति । चित्रपदमपि यद्वचो हरेर्यशो न प्रगृणीत तद्वायसं तीर्थं काकतुल्यानां कामिनां रतिस्थानम् उशन्ति मन्यन्ते । कुतः मानसाः सत्त्वप्रधाने मनसि वर्त्तमाना हंसा यतयो यत्र न निरमन्ति कर्हिचिदपि नितरां न रमन्ते । उशिक्क्षया उशिक् कमनीयं ब्रह्म क्षयो निवासो येषां ते । यथा प्रसिद्धा हंसा मानससरसि चरन्तः कमनीयपद्मषण्डनिवासाः त्यक्तविचित्रान्नादियुक्ते उच्छिष्टगर्त्ते काकक्रीडास्थाने न रमन्ते इति श्लेषः ॥ १० ॥

विनापि पदचातुर्य्यं भगवद्यशः प्रधानं वचः पवित्रमित्याह तद्वाग्विसर्ग इति । स चासौ वाग्विसर्गश्च वाचः प्रयोगः जनता जनसमूहस्तस्य अघं विप्लावयति नाशयतीति तथा । यस्मिन् वाग्विसर्गे अवद्धवत्यपि अपशब्दादियुक्तेऽपि प्रतिश्लोकम् अनन्तस्य यशसा अङ्कितानि नामानि भवन्ति । तत्र हेतुः यत् यानि नामानि साधवो महान्तः वक्तरि सति शृण्वन्ति श्रोतरि सति गृणन्ति अन्यदा तु स्वयमेव गायन्ति कीर्त्तयन्तीति ॥ ११ ॥

भक्तिहीनं कर्म्म तावत् शून्यमेवेति कैमुत्तिकन्यायेन दर्शयति नैष्कर्म्म्यमिति । निष्कर्म्म ब्रह्म तदेकाकारत्वान्निष्कर्म्मतारूपं नैष्कर्म्म्यम् । अज्यते अनेन इत्यञ्जनमुपाधिस्तन्निवर्त्तकं निरञ्जनम् । एवम्भूतमपि ज्ञानम् अच्युते भावो भक्तिस्तद्वर्ज्जितं चेदलमत्यर्थं न शोभते सम्यक् अपरोक्षाय न कल्पते इत्यर्थः । तदा शश्वत् साधनकाले फलकाले च अभद्रं दुःखरूपं यत् काम्यं कर्म्म यदप्यकारणमकाम्यं तच्चेति चकारस्यान्वयः तदपि कर्म्म ईश्वरे नार्पितं चेत् कुतः पुनः शोभते वहिर्मुखत्वेन सत्त्वशोधकत्वाभावात् ॥ १२ ॥

---

दीपनी ।

जनतेति । तस्य समूहः ( पा० व्या० ४ । २ । ३७ सू० ) इत्यधिकारे ग्रामजनबन्धुभ्यस्तल् ( पा० व्या० ४ । २ । ४३ ) इति सूत्रेण जनशब्दात् समूहार्थे तल्प्रत्ययो वोद्धव्यः ॥ ११ ॥

नैष्कर्म्यमिति । निष्कर्मणो मोक्षस्य साधनं वा नैष्कर्म्यम् । अज्यत इति । अज्यते म्रक्ष्यते इत्यर्थः ॥ १२—१४ ॥

---

श्रीवीरराघवः

प्रायशब्दाभिप्रेतंव्यनक्ति यथेतिहेमुनिवर्यधर्मादयोधर्मार्थकामादयोर्थाः पुरुषार्थाः यथाससाधनैरनुकीर्त्तिताभारतेइतिशेषः तथावासुदेवस्यमहिमातेत्वयानानुवर्णितः ॥ ९ ॥

एवंतदुत्प्रेक्षितमेवासंतोषहेतुंदृढीकृत्याथप्रियाः परमहंसानांतएवह्यच्युतप्रियाइतितदुत्प्रेक्षितमेवदृढीकर्त्तुंभागवतधर्मप्रतिपादकस्य प्रबंधस्य परमहंसैरनादरणीत्वमित्याह नेति तच्चित्राणिपदानियस्मिन् अथवैचित्र्यस्याप्युलक्षणमेतदेवंविधमपियद्वचः वाक्यंप्रबंधइतियावत् पवित्रंश्रृण्वतांवदतांचपवित्रत्वापादकंहरेर्यशः क्वचिदपिनप्रगृहीतनोपाददीतचेन्नप्रगृणीतेतिपाठेनवदेतचेत्प्रबंधयितृगतंवदनंप्रबंधेआरोप्यनप्रगृणीतेत्युक्तम् यद्वा यच्चित्रपदमपिवचस्तत्रहरेर्यशोनप्रगृणीतचेत्प्रबंधकर्त्तेतिशेषः तद्वाचः प्रबंधंवायसंतीर्थमुशंतिवायसतीर्थंतुल्यमिच्छंतितीर्थविशिषन्निच्छाफलमाह यत्रवायसेतीर्थेमानसाहंसाउशिक्क्षयाः कमनीयनिवासाः ननिरमंतिमानसाख्यसरोवरकमनीयनिवासस्थानविहारिणोमानसहंसायथावायसंतीर्थमुच्छिष्टयान्नादिपुरथ्योदकयुक्तं क्षेत्रंवायससंचारयोग्यमुशंतिमन्यंतइति यावत् यत्रननिरमंतिनानितरांरमंतेक्षणमात्रमपिनतत्रावतिष्ठंतइत्यर्थः तथोशिक्कमनीयंनिरतिशयप्रियंब्रह्मैवक्षयआश्रयोयेषांमानसाः मनसइमेमानसाब्रह्मानंदानुभाविकाहंसाविशुद्धांतःकरणाः परमहंसाइतियावत्तद्वचः वायसंतीर्थमुशंतिवायसतुल्यानांकामुकानामनुभवयोग्यंमन्यंतेयत्रनिरमंतिनाद्रियंतेनतत्रकर्णंदत्वाश्रृण्वंतीत्यर्थः उशिक्क्षयेतिपाठेउशब्दोऽवधारणपरप्ररणयपित्यर्थः ॥ १० ॥

### श्रीवीरराघवः ।

तदेवंभगवद्यशोऽनंकितप्रबंधस्य शब्दतोऽर्थतश्चित्रपदस्यापिभागवतानुपादेयत्वमुक्तम् अथतदंकितस्य वैचित्र्यरहितस्या पिप्रत्युतश ब्दतोऽर्थतश्चदुष्टस्याप्यतीवतदुपादेयत्वमाह तदिति प्रतिश्लोकमवद्धवत्यपिशब्दतोऽर्थतश्चदोषवत्यपियस्मिन्प्रबंधेऽनंतस्य भगवतोयशसां- कितानिचिह्नितानिभगवद्गुणप्रत्यायकानिनामानिनारायणवासुदेवकृष्णादिनामगनिदृश्यंतेइतिशेषः तद्वाग्विसर्गः सवाक्सृष्टिरूपः प्रबंधः जनताजनानांसमूहः "ग्रामजनबंधुभ्यस्तल् ॥४।२।४३॥ इतिसमूहार्थेतल्प्रत्ययः तलंतंस्त्रियामितिस्त्रीत्वंतस्याअघंपापंविप्लवयतिनाशयतीति विप्लवः अंतर्भावितण्यर्थात् प्लवेः पचादित्वादच् यद्वा भावेऋदोरप् ॥३।३।५७॥ इत्यप्जनतायाअघस्य विप्लवोनाशोयस्मात्स तथाअतएव भागवताउपाददतइतिवदन् विशिनष्टियच्छृण्वंतिइतियद्वाग्विसर्गंसाधवः शृण्वंतिश्रावयितृसद्भावेगृणंतिकथयंतिश्रोतृसद्भावेतदुभया- भावेकेवलंस्वयंगायंति सामान्याभिप्रायेणयत्तदितिनपुंसकनिर्देशः शब्ददोषोनामानुपस्थाप्यार्थाभिप्रायेणप्रयोगः यथास्वइत्यस्यज्ञाति- धनाभिप्रायेणप्रयोगः अर्थदोषोनामानुपस्थापकशब्दोपस्थाप्यत्वंयथात्मात्मीययोः स्वशब्दोपस्थाप्यत्वंतदेवंत्रिवर्गतत्साधनप्रतिपादकंप्र- बंधंभागवतानुपादेयंनिंदित्वाभगवद्यशः प्रतिपादकस्यैवतदुपादेयत्वमुक्तम् ॥ ११ ॥

ननुधर्मादितत्साधनानामपिपुरुषाभिलषितत्वेनहितत्वात्तन्निरूपणमप्यर्थवदेवेत्याशंकायांविषमिश्रपयः प्रशंसातुल्यंतन्निरूपणमित्य- भिप्रायेणैश्वर्यकैवल्यतत्साधनानांपुरुषार्थत्वतत्साधनत्वंप्रतिक्षिपति नैष्कर्म्यमितिनिर्गतंकर्मणोनिष्कर्मनिष्कर्मैवनैष्कर्म्यंस्वार्थेष्यञ्कर्मणो- वहिर्भूतंकर्मेतरदात्मयाथात्म्योपासनात्मकज्ञानमित्यर्थः तन्निरंजनंरागद्वेषाद्यंजनरहितंरागादिभिरनुपप्लुतमप्यच्युतस्य भगवतोभावेन- भक्तियोगेनवर्जितंचेद्ज्ञानानांमध्येमलवर्द्धीनमतएवनशोभते यद्वा नैष्मर्म्यंनिरंजनंज्ञानमप्यच्युतभाववर्जितंचेन्नालंशोभतेनातीवशोभतइत्य- र्थः "सर्वेच्यवनधर्माणः प्रतिबुद्धस्क्तमोक्षभागितिकेवलिनोऽपिपुनः च्यवनधर्मोक्तिस्तावत्कैवल्यस्यनपुरुषार्थत्वंनापितत्साधनयोगस्य पुरु- षार्थसाधनत्वमितिभावः यतोनैष्कर्म्यज्ञानयोगमेवनशोभतेकुतः पुनः तत्कर्मशोभतेकिंयत्तत्कर्मईश्वरेनचार्पितमनर्पितमभिसंहितार्थका- मादिफलमच्युत भाववर्जितंचेत्यर्थः अतएवशश्वत्सदाफलानुभवदशायामनुष्ठानदशायांचाभद्रंदुःखंयस्मिंस्तदनुष्ठानदशायामभद्रव- त्त्वंकायक्लेशाद्यावहत्वेनदुष्टमेवफलदशायामपिपुनः पतनभयशंकयाऽभद्रवत्त्वमवगंतव्यम् यदप्यकारणंनिष्कामकर्माप्यच्युतभाववर्जितं- चेन्नशोभते अयमर्थः ज्ञानयोगः कर्मयोगश्च भगवद्भक्तिवर्जितोनशोभतेकाम्यंकर्मनशोभतेइतिकैमुत्यन्यायसिद्धमिति ॥ १२ ॥

---

### श्रीविजयध्वजः ।

भारतादिशास्त्रेषुहरियशसोबहुदितत्वात्कथंखिलंमन्यइत्युच्यतइतितत्राह यथेति हेमुनिवर्यसर्वज्ञतम मुनिभिःव्रियतइतिवा मुनि- वरप्राप्यइतिवामुनिवर्यधर्मादयःपुरुषार्थाः यथानुवर्णितास्तथावासुदेवस्यमहिमानानुवर्णितोहियस्मात्तस्मादनुवर्णनीयः धर्मादीनाम- ल्पकथनेनापिपूर्तिःस्यान्नतथावासुदेवस्यमहिम्नोभारतादावतिकथितस्यापि सतांतत्रतात्पर्यातिशयात्फलाधिक्याच्च नहिसूर्योदयमाकांक्ष- माणस्यखद्योतोदयेनेच्छानिवर्ततइत्येतदर्थंहिशब्देनाह द्वितीयोहिशब्दोहेत्वर्थः ॥ ९ ॥

धर्मादीनामल्पकथनेनकथंपूर्तिःस्यादितितत्राह नेति यद्वचोजगत्पावनकरंहरेर्यशोनगृणातिकर्हिचिदपिनप्रतिपादयेत्तच्चित्रपदमपिचि- त्राणिपदानियस्मिंस्तत्तथोक्तं तत्वचःशास्त्रंनभवतीत्यर्थः कुतःतद्वायसंवयोमात्रानुजीवितार्थंशास्त्रमुशंतिइच्छंति यत्रकाकोच्छिष्टतीर्थे- मानसाःप्रेक्षावंतः मानसाख्यसरोविहारिणोवाहंसाःपरमहंसाः धवलपक्षावाजलपयोविवेककारिणः मिमंक्षयाविचारलक्षणस्नानेच्छया- नन्यपतन्ननिपतंति नप्रविशंतीतियथातथायत्रयस्मिन्तीर्थेमानसाःब्रह्मणोमनसोजाताःसनकादयःहंसाःनिर्लेपाइतिवा तस्मात्सज्जनाना- दरणीयत्वेनधर्मादीनामल्पकथनेनपूर्तिरितिभावः विरमंत्युशिक्क्षयाउशिक्शुद्धंक्षयंस्थानंयेषांतेतथोक्ताः शुद्धंब्रह्मतदेवक्षयोयेषांतेतथो- क्ताइतिवेतिपठित्वाकेचिद्व्याचक्षतेततश्चित्यम् ॥ १० ॥

वासुदेवमहिम्नोऽतिकथितस्यापिकथंनपूर्तिरितितत्राह सवागिति यस्मिन्निबंधेप्रतिश्लोकमपशब्दाद्यबद्धवत्यपिशाब्दिकैर्जुगुप्सिते देशकालगुणैरनंतस्यहरेःपारिजातहरणाद्यात्मकयशोलांछितानिनारायणादिनामानिसंति साधवःपरमभागवताः शुकादयोयच्छृण्वंति गायंतिगृणंति सःजनतायाःजनसमूहस्याघंपापंविप्लावयतिनाशयतीतिजनताघविप्लवःवाचांविसर्गः विशिष्टरचनाविशेषइत्येकान्वयः य- स्मिन्सतिप्रशस्तानिअनंतस्यनामानिसाधवःशृण्वंतीतियत्यस्मात्तस्मात्सएववाग्विसर्गइतिवा ॥ जनतापापविनाशहेतुत्वात् सज्जनगृ- हीतत्वाच्चवासुदेवमाहात्म्यप्रतिपादकमेवशास्त्रं नान्यदतस्तदेवशास्त्रप्रणेतृभीरचनीयमितिभावः ॥ ११ ॥

नकेवलंवासुदेवमहिमद्योतकयशोंकविधुरशास्त्ररचनमेवमोघंकिंतुहरिभक्तिविरहितानिर्निमित्तज्ञानकर्मणीआपिनिष्फलेएवेति विज्ञापय- तीत्याह नैष्कर्म्यमिति नैष्कर्म्यंस्वतोनिष्कर्मणोमुक्तेःसाधनम् अलंनिरंजनंविषयसंमार्जनमलरहितम् अत्यंतविरक्तिमद्वेदार्थविषयपरोक्षज्ञान- मप्यच्युतभाववर्जितंभगवद्भक्तिरहितं हरावच्युततयानिरंतरभावनयामनोयोजनेनरहितंवानशोभते अधिकारिणोभीष्टफलंनप्रकाशयतिबं- धकतयाशश्वत्सर्वदाअभद्रममंगलमीश्वरेहरौनचार्पितंकर्मनशोभतइतिकुतः पुनःकिमुवक्तव्यंयद्यप्यकारणंफलकामनादिविधुरंतथापीत्यर्थः शश्वदभद्रमनुष्ठानकालेफलकालेवामंगलंयत्काम्यंकर्मनशोभतइतिकुतःपुनःयदप्यकारणंनित्यंकर्मैहरौनार्पितंचेतन्नशोभत इतिकिंवक्तव्य- मितिवा अच्युतभाववर्जितमित्यनेनापरोक्षज्ञानस्यभक्तिसाध्यत्वात्परोक्षोपपदमेवात्रज्ञानंविवक्षितमितिज्ञायते ॥ १२ ॥

## क्रमसन्दर्भः ।

तथा तद्वदपि ॥ ९ ॥

यत्र तत्सम्बंधमात्रं नास्ति तत् पुनरतिनिन्दितमित्याह न यद्वच इति । कर्हिचित् कुत्रचिदपि न प्रकर्षेण केनाप्यंशेन गृणीत ॥ १० ॥

तदेवं व्यतिरेकेण तद्यशः स्तुत्वा अन्वयेनापि स्तौति । स वाचां प्रयोगो जनपरम्पराया अपि अघविप्लवो यस्मात् तथाविधः । कीदृशोऽपि यस्मिन् श्लोकं श्लोकं वर्णनं वर्णनं प्रति अवद्धवत्यपि तत्तत्छ्लोकमात्रयत्किंचित्प्रतीतिसंकेतादित्वादसम्यगर्थबोधकेऽपि तस्य यशोवर्णनलेशसंयोजितानि नाममात्राणि सन्ति न तु वर्णनचातुर्य्याणि तादृशोऽपि । अहो तस्य नामाभासमात्रसिद्धजनताघविप्लवमात्रत्वं कियन्नाम माहात्म्यं यत्तादृशकाजिष्ठवाग्विसर्गमयमपि यशः साधवः पूर्व्वोक्तप्रोज्झितकैतवा अपि भक्ताः परमानन्दावेशात् विविधतयानुशीलयन्तीत्याह यच्छृण्वन्तीति ॥ ११ ॥

तदेवं हरियशोवर्णनोपलक्षितभक्तितो ब्रह्मज्ञानस्यापिन्यूनत्वे सकामनिष्कामकर्म्मन्यूनत्वं किमुतेत्याह नैष्कर्म्म्यमिति द्वैः ॥ १२ ॥ १३ ॥ १४ ॥

---

## सुबोधिनी ।

सर्वेषामेवभूतानांपितामातासमाधवः तमेवशरणंयातशरण्यंकौरवर्षभाः अच्युताच्युतमामैवंव्याहरामित्रकर्षण पांडवानां भवान्नाथो भवंतंचाश्रितावयं करिष्येवचनंतवेत्यादिश्लोकसहस्रैः स्वातंत्र्येणभगवद्यशसःप्रतिपादनात्कथमुच्यतेनुदितप्रायमितितत्राहयथेति सत्यंप्रतिपादितं तथापिप्रकरणाभावात्प्रकरणेनविधयोवध्यंत इतिन्यायात् तत्रत्यानांतच्छेषत्वं आनुशासनिकेपिभगवद्धर्माणांधर्मत्वे नप्रतिपादनंनयशस्त्वेनतदाह धर्मार्थकाममोक्षायथाप्रकरणभेदेनप्रतिपादिताः नतथाभगवन्महिमाप्रकरणभेदेनप्रतिपादितइत्यर्थः ॥ ९ ॥

ननुप्रतिपादकानांकथंनफलसाधकत्वंतत्राह नतद्वचश्चित्रपदमिति कीदृशमत्रफलंमृग्यते अंतःकरणप्रसादः परमानंदश्चेतिचेत्नतस्येदंतीर्थंकिंतुकाव्यवत् शृंगारादिरसाविष्टानांकामिनामाश्चर्यरसजन कत्वं काकानामिवोच्छिष्टगर्त्तः प्रमाणवलंदुर्वलमिति वक्तुमाह चित्रपदमितिअर्थमितिअर्थविशेषाभावेपदाचित्रताहीनत्वबोधिकाशब्दाचित्रं वाच्यचित्रमव्यंग्यंत्ववरंस्मृतमितिवाक्यात्विषपत्रैर्भोजनवच्चतत्रत्यंप्रमेयंनहरिरूपंकिंतूत्कृष्टत्वेनप्रतिपादितं तदाह हरेर्यशइतिजगत्पवित्र मितिसाधारणानांहि भारतंपावित्र्यजनकंनपतितानांनवाशुकादितुल्यानां तेननसर्वाकांक्षापूरकं इदंतुजगत एवपवित्रं वचइतिशब्दमात्रं तेनसामरागादीनामपिनिवृत्तिः कर्हिचिदिति मुख्यगौणलक्षणा प्रकरणादिभेदेषु एकस्मिन्नप्यंशे भगवत्प्रतिपादनेनदोषः इतिसूचितं ॥ तत्काकवत् पदार्थप्रतिपादकं वायसंतीर्थं काकतीर्थ मितियावत्वायसावृद्धाः काकाःलोकेचतुराश्च तथाकामिनोराजपुत्रादयः नत्वन्येषां काकानांचनततोधिकदोषनिवृत्तिः नवातादृशगर्त्तनिर्मातुः ततश्चननिवृत्तिः हंसत्वाच्च तस्यउशंतिवदंतिमानसाइति मनस्येवतिष्ठंतिनदेहादौदेहहितकरंचभारतंच अहंचइतिब्रह्मात्मबुद्धिः तद्युक्ताः परोक्षेणहंसाइत्युच्यंते क्षीरनीरविवेकिनश्चसहजसिद्धमपिसंश्लेषंत्याजयंतिनतुसंश्लेषजनकेरमंते पुंसांकिलैकांत धियामितिवाक्यात्भगवच्चरित्रंतादृशेउशिक्कमनीयंक्षयेनिवासस्थानं येषां यथायथाकमनीयता स्वरूपतोज्ञानतश्च तथातथाहंसनिवासत्वं ततोयुक्तितःदृष्टांताच्चनान्यथाकरणं तथापिभगवद्विषयकत्वात् ॥ १० ॥

पूर्वोक्तविपरीतमस्मदादीनांवचनमित्याहतद्वागिति सचासौवाग्विसर्गश्चसइतिप्रासिद्ध्य भक्तकृतः भाषागीतगोविंदादिरपिजनतायाः प्राणिमात्रस्यअघविशेषेणप्लावयतिसर्वथात्रशब्दवलमप्रयोजकमित्याह यस्मिन्निति यस्मिन्वाग्विसर्गे भाषाग्रंथश्लोकेषु व्याकरणदुष्टस्यप्रयोगः अवद्धस्तानार्थंवाअर्द्धप्रयोगःअभ्युपगमेन वामूर्खहृदयेतत्रहेतुः नामान्यनंतस्येति एकस्मिन्नप्यर्थे वहूनिनामानिप्रयुज्यंते यथात्रिभवनात्मभवनेत्यादि सर्वतोनंतस्य अनंतान्येवनामानिभवंतिनकेवलंसंज्ञाप्रतिपादकानि किन्तुयशसाअंकितानिश्रवणेहेतुः यस्मिन्यस्माद्वावक्तरिसाति शृण्वंतिश्रोतरिसतिगायंतिअन्यथाचगृणंति एतच्चपूर्वोक्तहंसादिसतांकृत्यंभगवत्संबंधिनां धर्माणां भगवतासह अभेदात् यत्रकचिदवतीर्णोभगवान् यथासेव्यते ताथ क्व चिद पिस्थितानिनामानिश्रूयंते इत्यर्थवलम्॥ ११ ॥

एवंशब्देषुभगवच्छब्दाएवोत्तमाः नान्यइतिनिरूपितं इदानीमर्थेविचारः क्रियतेतत्रज्ञानंस्वरूपतः फलतश्चमहत् तैथायज्ञादितथैवाचारः तथान्येधर्मादयः एतेभगवताभगवदीयैश्च सहस्वरूपतः फलसमानाआहोस्विन्नति भवतिविचारणा तत्रप्रथमंज्ञानंनिंदति नैष्कर्म्यमिति भक्तिसहितज्ञानादौफलसिद्धेर्भवतिसंदेहः किंभक्तेः फलंज्ञानस्येतिवा तदर्थंकेवलनिर्णयउच्यते अच्युतभक्तिरहितंज्ञानंसांख्यंवैदिकं वा भक्त्यानलंकृतत्वान्नशोभते ज्ञानस्यशोभयातद्वत्शोभाभवति अज्ञाननिवृत्तिश्चदीपवत्सुवर्णपुत्तलिकाप्यनलंकृतानशोभते यद्यपिनिरीश्वरसांख्यमते ईश्वराभावादेवभक्तिर्नास्ति निरूप्येर्थेश्रद्धामात्रंसेश्वरेपिगुणएवेश्वरः वैदिकेपियजमानादि देवतावेशा भावेलौकिकत्वात् सर्वापेक्षायाश्चोक्तत्वात्अंतःकरणशुद्ध्यर्थंभक्तिरपेक्षते साचभगवच्छास्त्रानुसारिण्येवनिर्गतमंजनंयस्मादितिअविद्यानिवर्तकंनिरुपाधिकंवा किंवहुनासर्वेषुशास्त्रेषुयत् ज्ञानमुक्तंतस्यस्वरूपोपकारिणीवाभक्तिरिति भक्त्यभावस्वरूपंफलंवान सिध्येदित्यर्थः कर्मापिभक्तिसापेक्षमित्याह किंपुनरिति तत्रकर्म विविधं कामनयाक्रियमाणंज्ञानांगईश्वराराधनलक्षणंच तत्राद्येभक्त्यपेक्षानियतातदाहशश्वदभद्रमिति साधनकालेफलकालेचक्लेशरूपत्वात् भक्त्यभावेनपुरुषार्थरूपंस्यात् द्वितीयेभगवतिसमर्पणव्यतिरेकेणज्ञानांगतैवनास्तिसमर्पणमेवभक्तिः भक्तिसाध्यंवातदाह नचार्पितंकर्मेति नचभगवतिअर्पितंकर्मभवतीत्यर्थः चकारादीश्वरार्थंवाक्रियमाणंयदपिअत्रकरणंपंचरात्रोक्तं तस्यलौकिककर्मवत् संसारकारणत्वाभावात् तस्मात्सर्वकर्मसुभक्तिः सहकारिणी ॥ १२ ॥

---

श्रीविश्वनाथचक्रवर्त्ती ।

ननु पुराणेषु पाद्मादिषु भगवद्यशो वर्णितमेवेति तत्राह यथेति । चकारोऽप्यर्थे । धर्म्मादयोऽपि वासुदेवमहिमतोऽतिनिकृष्टा अपि यथा अर्था अनुकीर्त्तिताः पुरुषार्थत्वेनोक्ताः तथा वासुदेवस्य महिमा न वर्णितः पुरुषार्थशिरोमणिरपि पुरुषार्थत्वेनापि न वर्णितः वर्णितोऽपि भूरिशस्तत्र तत्र तन्महिमा अन्ततो मोक्षसाधनत्वेनोक्तः । अतोऽत्यादरणीयस्य वस्तुनः आदराभावश्चित्तस्याप्रसाद-मपि किं न करोत्विति भावः । ननु अन्यत्र पुण्यतीर्थेषु मुक्तिरेव महाफलम् मुक्तेः प्राप्त्यै हरेर्भक्तिर्मधुरायाञ्च लभ्यत इति ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति । समः सर्व्वेषु भूतेषु मद्भक्तिं लभते परामित्यादिभिस्तत्र तत्र क्वचिन्मोक्षोपर्य्यपि भक्तिरुक्तेत्यत आह अन्विति । अन्वनु पौनःपुन्येन न वर्णितः आनन्दमयोऽभ्यासादित्यत्र अभ्यासस्यैव शास्त्रतात्पर्य्यज्ञापकत्वेनोक्त-त्वात् । अतो भगवन्महिम्न एव फलत्वेनोत्कर्षे पौनःपुन्येन स्पष्टतया यदा वर्णयिष्यसि तदैव ते चित्तप्रसादो भावीति भावः ॥ ९ ॥

वासुदेवमहिमवर्णनाभावे कविकृतिमात्रस्यैव जुगुप्सिततवमेवाह न यदिति । यद्वचः कर्त्तृ चित्राणि गुणालंकारयुक्तानि पदानि यत्र तत् श्लेषेण चित्रस्य विस्मयस्य स्थानमपि हरेर्यशो न प्रगृणीत कीदृशं । जगदपि पवित्रयतीति तत् स्वश्रोतृवक्त्राधारात्मकं सर्व्वं जगदपि पुनाति किं पुनः स्वमिति । जीवनतुल्येन तद्‌यशसा विना कविवचोऽलंकारादियुक्तं मृतशरीरमिवापवित्रं भवतीति भावः । तद्वायसं तीर्थम् उच्छिष्टविचित्रान्नादियुक्तं गर्तविशेषं काकतुल्यानां कामिनामभिलषणीयत्वात् उशन्ति मन्यन्ते । कुतः मानसा मानससरोवरस्था हंसाः पक्षे मानसा हरेर्मनसि स्थिता भक्ता यत्र न नितरां रमन्ते न सर्व्वथैव रमन्त इत्यर्थः । साधवो हृदयं मह्यं साधूनां हृदयं त्वहम् इति भगवदुक्तेः । यद्वा मानं तद्वचस आदरम् अरमणात् स्यन्ति नाशयन्ति । यद्वा मानसाः सनकादय इत्युशन्तीत्यस्य कर्त्तृपदम् । यतः उशिक् कमनीयं सरो भगवद्धाम च क्षयो निवासो येषां ते । अत्र वचःशब्देन वाक्ये अभिधीयमाने नाभागो नभगापत्यं यं ततं भ्रातरः कविम् । यविष्ठं व्यभजन् दायं ब्रह्मचारिणमागतमित्यादीनां श्रीभागवतीयानामपि पृथग्वाक्यानां वायसतीर्थत्वं प्रसज्येत । शास्त्रेऽभिधीयमाने व्यासादिकृतेषु पुराणादिषु न कुत्रापि हरियशः सामान्याभाव इति न कस्यापि वायसतीर्थत्वं स्यात् तस्मात् कलिमलसंहतिकालनोऽखिलेशो हरिरितरत्र न गीयते ह्यभीक्ष्णम् । इह तु पुनर्भ-गवानशेषमूर्त्तिः परिपठितोऽनुपदं कथाप्रसङ्गैरिति । द्वादशोक्तेरत्र वचःशब्देनोत्तरत्र वाग्विसर्गपदेन च कथाप्रसङ्ग एवोच्यते । एवञ्च सति अत्रत्यानि सर्वाण्येवोपाख्यानानि हरियशोऽलंकृतान्येव । अन्यत्र पुराणादौ बहून्येवाख्यानानि हरियशोरहितानि वायसतीर्थान्येवेति सङ्गतिः ॥ १० ॥

व्यतिरेकेणोक्त्वा अन्वयेनाह तद्वागिति । स चासौ वाग्विसर्गो वाचः प्रयोगश्चेति स जनतायाः जनसमूहस्याघं विप्लावयति नाशयतीति स प्रतिश्लोकमबद्धवत्यपि बंधोऽपिगाढः शिथिलो वा क्वापि श्लोके यत्र नास्ति किं पुनरलंकारादिरित्यर्थः । अप-शब्दवत्यपीति स्वामिचरणाः । तथाभूतेऽपि यत्र वाग्विसर्गे उपाख्याने नामानि सन्ति । किंच यद्यदेवोपाख्यानं शृण्वन्ति श्रुत्वापि पुनर्गायन्ति गीत्वापि पुनर्गृणन्ति न तु तृप्यन्तीति भावः । यद्वा वक्तरि सति शृण्वन्ति श्रोतरि सति गृणन्ति अन्यदा स्वयं गायन्ति ॥ ११ ॥

न केवलं वचोमात्रमेव भक्तिरहितं व्यर्थम् अपितु श्रौतवचसापि प्रतिपाद्यमपरोक्षं ज्ञानमपि भक्तिरहितं व्यर्थं किमुत परोक्षं ज्ञानं किमुत तरां निष्कामकर्म्म किमुततमां सकामकर्म्म व्यर्थमित्याह नैष्कर्म्यमिति । अच्युते भावश्चिदानन्द विग्रहत्वभावनया या भक्ति स्तद्वर्जितं चेज्ज्ञानं न शोभते । तेनतस्मिन् मायाशवलतालक्षणापकर्षभावनया भक्तिसत्त्वेऽपि मोक्षसाधकं न भवतीत्यर्थः । कीदृशम् अलम् अतिशयेन निरञ्जनम् अञ्जनमुपाधिरविद्या तद्रहितमपरोक्षमपि किं पुनः परोक्षमित्यर्थः । न च वाच्यमुपाध्यभावे मोक्षस्यासम्भावना नास्तीति । भगवतोऽचिन्त्यशक्त्या नष्टस्याप्युपाधेः पुनःपुनः प्ररोहात् । तथाहि वासनाभाष्यधृतं परिशिष्ट-वचनम्—जीवन्मुक्ता अपि पुनर्बंधनं यान्ति कर्म्मभिः । यद्यचिन्त्यमहाशक्तौ भगवत्यपराधिन इति । तत्रैवान्यत्र च—जीवन्मुक्ताः प्रपद्यन्ते क्वचित् संसारवासनाम् । योगिनो न विलिप्यन्ते कर्म्मभिर्भगवत्परा इति । तथा ज्ञानाग्निः सर्व्वकर्म्माणि भस्मसात् कुरुतेऽर्ज्जुनेति ज्ञानकार्य्यं नैष्कर्म्यमपि न शोभते । तथाहि रथयात्राप्रसङ्गे विष्णुभक्तिचन्द्रोदयधृतं पुराणान्तरवचनम्—नानुव्रजति यो मोहाद्व्रजन्तं जगदीश्वरम् ज्ञानाग्निदग्धकर्म्मापि स भवेद्ब्रह्मराक्षस इति । अतएवाग्रे वक्ष्यते—आरुह्य कृच्छ्रेण परं पदं ततः पतन्त्यधोऽनादृतयुष्मदङ्घ्रय इति । ज्ञानस्याप्यच्युतभाववर्जितत्वे तस्मिन् भगवति मायामयत्वभावनादिलक्षणोऽपराधो दुर्निवार एव । एवञ्च यदि तादृशभक्तिहीनं ज्ञानमपि विफलं तदा कुतः पुनः शश्वत् फलकाले साधनकाले अभद्रं दुःखरूपं कर्म्म प्रवृत्तिपरं यदप्यकारणं निवृत्तिपरञ्च कर्म्म ईश्वरे अनर्पितं सत् न शोभते साफल्याय न भवतीति ॥ १२ ॥

---

सिद्धांत प्रदीपः ॥

ननु भगवान्वासुदेवश्चवयर्यैतेत्रसनातनद्धतिप्रतिज्ञापूर्वकंभगवद्गुणस्वरूपादिवा महाभारते वर्णितमेव कथं मसद्दर्शनमपूर्णमि त्यतआह यथेति ॥ ९ ॥

## सिद्धांतप्रदीपः

वासुदेवेतरविषयंवचोपिखिलमेवेत्याह नेति चित्राणिपदानि यस्मिन् तच्चित्रपदमपियद्वचः जगतः पवित्रत्वापादकम् हरेर्यशः नप्रगृणीत नवदेत् । तत्वायसंतीर्थवायसगुणयुकामांकामिनांरतिस्थानं मानसावासुदेवमननप्रवणोमनसिस्थिताः उशिक्क्षयाः उशिक्कमनीयं प्रसिद्धमानसाख्यसरोवरोपमंभगवद्यशः प्रतिपादकंशास्त्रंक्षयोरमणस्थानं येषां ते हंसाविवेकिनः । उ उश्वंतिमन्यंते अतएव यन्नरथ्यांबुगर्तोपमेकाकोपमजनप्रियेभगवद्यशोऽप्रतिपादकेवचसि कर्हिचिदपिननिरमंति नितरांनरमंते ॥ १० ॥

वासुदेवेतरप्रतिपादकंवचश्चित्रपदमपिविवेक्यनुपादेयमित्युक्तंवासुदेवप्रधानंतुपदचातुर्यवर्जितमपिमहतादरेणतेषामुपादेयमित्याह तदितिसः वाचोविसर्गःजनताघविप्लवःजनतायाजनसमूहस्यअघंपापंविप्लावयतीतितथा । जनताघविप्लवत्वेहेतुमाह । यस्मिन्निति यस्मिन्प्रतिश्लोकमवद्धवत्यापिदोषयुक्तेपिवाग्विसर्गेअनंतस्यनामानिसंतिअतोयत्यंवाग्विसर्गमसाधवःगुर्वादिभ्यःशृण्वंतिशिष्यादिभ्योगृणंति कथयंतिस्वयंगायंति च ॥ ११ ॥

यथा धर्मादयश्चार्थामुनिवर्य्यानुकीर्तिताः इत्यनेनधर्मादिषुमुमुक्षुजनापेक्षया अरुचिरुक्ता तत्रशतसाहस्र्यांसंहितायांयोधर्मःप्रोक्तः काम्योहिस्त्रःसहिविशेषतोऽरुचिहेतुःसभागवतैर्मुमुक्षुभिरनुपादेयःयश्चानिष्कामोपिभगवद्भाववर्जितःसोप्यसम्यगेवयश्चकापिलपतंजालिमतानुसारिभगवद्भाववर्जितंज्ञानंमोक्षधर्मादौदर्शितंतदप्यसंगतमेव यच्चभागवतजनानुग्रहकामेनभगवद्गीतानुसारेणोक्तम्।मुद्गलोपाख्यानादिषु भृगुभारद्वाजादिसंवादेषु वार्ष्णेयाध्यात्मादिप्रकरणेषुकर्मज्ञानवैराग्यभक्तिरहस्यंतत्सर्वंपरमादरेणोपादेयमित्याशयेनाहनैष्कर्म्यमिति निर्गतानिकर्माणियतस्तन्निष्कर्मतदेवनैष्कर्म्यंस्वार्थेष्यञ् । निरंजनंरागद्वेषादिदोषशून्यमेवं अच्युतस्यभावेनयोगेनवर्जितंचेत् अलमत्यंतंनशोभते तदाशश्वदभद्रंसदैवोपक्रमकाले अनुष्ठानकालेफलकालेचदुःखावहंनचसर्वंकर्मवैगुण्यापह ईश्वरेर्पितंयत्कर्म काम्यंतत्कुतःपुनःशोभते । यदप्यकारणमकाम्यंतदप्यच्युतभाववर्जितंचेन्नशोभते । भगवद्भाववर्जितोज्ञानयोगोनिष्कामकर्मयोगश्च यदानशोभते तदाकाम्यंकर्मभगवद्भाववर्जितंनशोभते इतिकिमुवक्तव्यम् ॥ १२ ॥

---

## भाषा टीका ।

हे मुनिवर्य आपने जैसे धर्म अर्थ कामादिकों का प्राधान्य से वर्णन कियाहै । और उनके साधनोका वर्णन किया है एसा वासुदेव की महिमा का वर्णन नही किया है ॥ ९ ॥

चित्र विचित्र पद विन्यास मय भी वचन हो और उस मै जगत् पवित्र करनेवाला भगवान का यश वर्णन न हो तौ वह वायस तीर्थ अर्थात् अमेध्य उच्छिष्ट मय गर्तके समान है. जिस मै कामी जनकही क्रीडा करते हैं। ब्रह्मनिलय परम हंस जन कभी उस मै रमण नही करते हैं ॥ १० ॥

वो वाणी की रचना जनों के पाप की नाश करती है जिस मै चाहै प्रति श्लोक मै अशुद्ध भी हो परंतु अनंत भगवानके यश सै अंकित नाम हो, जिनको साधुजन श्रवण करते है, गान करते है, और कीर्तन करते हैं ॥ ११ ॥

नैष्कर्म्य अर्थात् ब्रह्मतादात्म्य का कारण होने सै कर्म रहित और निरुपाधि ज्ञानभी अच्युत भक्ति वर्जित हो तौ शोभित नही होता है. तब साधन और फल दोनो मे दुःखमय कर्म श्रीभगवानके अर्पण किये बिना कब उत्तम हो सकता है ॥ १२ ॥

---

**अथोमहाभागभवानमोघदृक्शुचिश्रवाः सत्यरतो धृतव्रतः ।**
**उरुक्रमस्याखिलवन्धमुक्तयेसमाधिनानुस्मरतद्विचेष्टितम् ॥ १३ ॥**
**ततोन्यथा किंचनयद्विवक्षतः पृथग्दृशस्तत्कृतरूपनामभिः ।**
**नकर्हिचित्क्वापिचदुः स्थितामतिर्लभेतवाताहतनौरिवास्पदम् ॥ १४ ॥**
**जुगप्सितंधर्मकृतेनुशासतः स्वभावरक्तस्यमहान्व्यतिक्रमः ॥**
**यद्वाक्यतोधर्मइतीतरः स्थितोनमन्यतेतस्यनिवारणंजनः ॥ १५ ॥**

श्रीधरस्वामी ।

तदेवं भक्तिशून्यानि ज्ञानवाक्चातुर्य्यकर्म्मकौशलानि व्यर्थान्येव यतः अतो हरेश्चरितमेवानुवर्णयेत्याह अथो इति । अथो अतः कारणात् । अमोघा यथार्था दृक् धीर्यस्य । शुचि शुद्धं श्रवो यस्य । सत्ये रतः । धृतानि व्रतानि येन स भवान् एवं महागुणस्तावत् । अत उरुक्रमस्य विविधं चेष्टितं लीलां समाधिना चित्तैकाग्र्येण अखिलस्यबंधस्य मुक्तये त्वमनुस्मर स्मृत्वा वर्णयेत्यर्थः एतच्च वाक्यांतरामिति मध्यमपुरुषप्रयोगो नानुपपन्नः ॥ १३ ॥

विपक्षेदोषान्तरमाह ततउरुक्रमविचेष्टितात्पृगग्दृशःअतएवान्यथाप्रकारान्तरेणयत्किंचिदर्थान्तरंविवक्षतःतयाविवक्षयाकृतैःस्फुरितैःरूपैर्नामभिश्चवक्तव्यत्वेनैवोपस्थितैःदुःस्थिताअनवस्थितातस्तमितिःकदाचित्क्वापि बिषयेआस्पदंस्थानं नलभेत वातेनाहता।आघूर्णिता नौरिव । तदुक्तंगीतासु व्यवसायात्मिका बुद्धिरेकेहकुरुनन्दन । वहुशाखाह्यनन्ताश्चबुद्धयोऽव्यवसायिनामित्यादि ॥ १४ ॥

तदेवंहरियशोविनाभारतादिषुक्तंधर्मादिबर्णनम्अकिञ्चित्कर मित्युक्तंप्रत्युतविरुद्धमेव जातमित्याह । जुगुप्सितंनिन्द्यंकाम्यकर्मादि स्वभावतएवरक्तस्य तत्ररागिणः पुरुषस्यधर्मकृतेधर्मार्थम् अनुशासतस्तव महानयंव्यतिक्रमः अन्यायः। कुतइत्यत आह । यस्यवाक्यतोऽयमेव मुख्योधर्मइति स्थितः इतरः प्राकृतोजनः तस्यकाम्यकर्मादेः अन्येन तत्त्वज्ञेनक्रियमाणं निवारणंस्वयमेववात्वयाक्रियमाणं यद्वा “नकर्मणानप्रजयाधनेनत्यागेनैकेऽमृतत्वमानशुरित्यादिश्रुत्याक्रियमाणं निवारणं यथार्थमेतदितिन मन्यतेकिन्तुप्रवृत्तिमार्गा नधिकृतविषयं तदितिकल्पयति। तदुक्तंमतांतरोपन्यासेभट्टैः तत्रैवंशक्यतेवक्तुंयेऽन्धपङ्ग्वादयोनराः गृहस्थत्वंनशक्यंते कर्तुंतेषामयंविधिः ॥ नैष्ठिकब्रह्मचर्यं वा परिव्राजकतापिवा । तैरवश्यंगृहीतव्यातेनादावेतदुच्यते इत्यादि ॥ १५ ॥

---

दीपनी ।

न कर्म्मणेति । कैवल्योपनिषदि चतुर्थब्राह्मणम् । तत्र धनेनेत्यत्र पूर्ववैनकारस्यानुषङ्गः । एके महात्मानः आनशुः आनशिरे प्राप्ताः । इति श्रीमच्छंकरानंदस्वामी ॥ १५ ॥ १६ ॥

---

॥ श्री बीरराघवः

तदेवंलोकहितार्थं प्रवृत्तस्यतवकेवलत्रिवर्गतत्साधननिरूपणमनुचितमित्युक्तंभवतियतः त्रैवर्गिककर्मणोऽनर्थगर्भत्वमतस्त्वमखिलानिष्टपरिहारेणप्रायेणभगवद्भक्तियोगनिष्पादकतच्चेष्टितज्ञानजनकं प्रबंधंकुर्वित्याहअहोइतिहेमहाभागभगमत्रभगवदंशभूतत्वमखिलनिगमद्रष्टृत्वंचभवान्सत्यरतः सत्यंभूतहितंतस्मिन्रतः नकेवलंसत्यरतएवापित्वमोघदृक्सत्यमूलममोघमवितथंपश्यतीतितथाभूतहिताचरणायवद्धदीक्षइत्यर्थः कथमेवमहोभाग्यंज्ञायतेइत्यतोविशिनष्टिशुचिश्रवाः शुचिविशुद्धंश्रवः लोकहितार्थमवतीर्णोव्यासः इत्येवंविधाप्रथायस्य सः हेतुगर्भाण्येतानिविशेषणानिएवंविधस्यानर्थगर्भत्रैवर्गिकनिरूपणमनुचितमितिभावः उक्तविधस्त्वमुरुक्रमस्यउरवःविपुलाःक्रमाःपादविन्यासाःत्रिलोकेयस्यतस्यभगवतोयद्विचेष्टितंतदेवनृणामखिलानांबंधानांगर्भजन्ममरणादिरूपाणांमुक्तयेबंधेभ्योमुक्तयेवासमाधिनाअनुस्मरसम्यगालोचनपूर्वकंप्रवधानेत्यर्थः ॥ १५ ॥

### श्री वीरराघवः ॥

एवं चेत्त्वदात्मन्यसंतोषेनिवर्तेतनान्यथेत्याह अतइति अतोन्यथोरुक्रमचेष्टाकथनादन्यथावैपरीत्येनतत्कृतरूपनामभिः पृथग्दृशः पृथग्भूतान्संबंधरहितानर्थान् विवक्षतः वर्णयतस्तवातएवदुःस्थितामतिःकदाचिदपिक्वचिदपियत्किंचिदप्यास्पदमव्याकुलतामितियावन्नलभतेप्रत्युतव्याकुलैवभवतीत्यर्थःयद्वाततोऽन्यथायत्किंचनविवक्षसेचेन्नानाविधार्थदर्शिनस्तेमतिः क्वापितत्कृतरूपनामभिः कृतइतिभावेक्तः कर्मेत्यर्थः तस्योरुक्रमस्यकर्मरूपनामभिः हेतुभिरास्पदंप्रतिष्ठांनलभंतवुद्धेरव्याकुलत्वंनामभगवत्कर्मरूपनामगोचरत्वंतन्नसिध्यतीत्यर्थः यथावातेनवायुनाहतोत्पथंनीतानौरास्पदंनलभतेतद्वत् यद्वाऽतः उरुक्रमादन्यथासत्त्वेनउरुक्रमानात्मकत्वेनाब्रह्मात्मकस्वतंत्रवस्तुत्वेनेतियावत् यत्किंचनवस्तुविवक्षतः वर्णयितुमिच्छतः अतएवतत्कृतैरुरुक्रमकृतैर्देवमनुष्यादि रूपनामभिर्हेतुभिः पृथग्दृशः पृथग्दृष्टेस्तवातएवदुःस्थितामतिः क्वापिकर्हिचिदप्यास्पदंनलभेतयत्किंचनविवक्षितंचेत्तदुरुक्रमात्मकतयातद्विभूतित्वेनैव वर्णयेश्चेत्तवमतिः सुस्थासत्यास्पदंलभेत ॥ अतद्रात्मकतयास्वतंत्रवस्तुत्वेनवर्णयितु मुद्युक्तंचेत्तर्ह्यतएवपृथग्दृष्टेस्तवदुःस्थितासतीमतिरास्पदंनलभेतइत्यर्थः ॥ प्राधान्येनोरुक्रमचेष्टितं वर्णनीयंतत्प्रसंगादपियत्किंचिद्वस्तुवर्णयितुमिष्टंतदपितद्विभूतितयैववर्णनीयमेवंचेन्मतिरव्या कुलान्यथातुव्याकुलाभवतीतिभावः ॥ १४

भूतहिताचरणार्थंप्रवृत्तस्त्वमहितमेवकृतवानसीत्याह जुगुप्सितमिति स्वभावरक्तस्येत्यस्यार्थकामयोरित्यादिरर्थकामयोः स्वभावतएव- रक्तस्यजनस्यधर्मकृतेर्थकाम साधनधर्मार्थमनुशासतः भारतनिर्माणद्वारावोधयतस्त वायंमहान्व्यतिक्रमः चिकीर्षितविपरीतानुष्ठानरूप आपतितः भूतहितंचिकीर्षितमधुनातद्विपरीतमेवकृतमित्ययंमहान्व्यतिक्रमइत्यर्थः अतइदंजुगुप्सितंनिंदितंकृतंस्वभावतएवार्थकामपारवश्य मूलकृतापत्रयाभिहतंजनंप्रतिपुनरर्थकाम साधनमेवानुतिष्ठेत्यनु शासनंनिंदितमितिभावः ननुमयैवमनुशासनेकृतेपिस्वरुच्यनुसाराल्लो- कोनिःश्रेयससाधनएवप्रवर्तेत भारतेपिक्वचिदर्थ कामयोर्हेयत्वेनोक्तत्वान्नदोषश्चेत्यतआहयद्वाक्यतइति ॥ परः कृत्स्नवेदीतरस्ततोर्वाचीनोऽकृत्स्नविज्जनःयस्यतववाक्या दर्थकामसाधनमेवधर्मइतिस्थितः अर्थकामावेवनिरतिशयपुरुषार्थौ तत्साधनमेवनिरतिशयधर्मइत्यध्यवसाय युक्तः तस्यत्रिवर्गस्यनिवारणं नमन्यतेत्वयात्रिवर्गस्यविस्तरेण प्रतिपादितत्वात्त्रिवर्गस्य निवारणंत्वदभिप्रेतमितिजनोनजानातीत्यर्थः ॥१५॥

---

### श्रीविजयध्वजः ।

अधुनालंबुद्धिहेतुंविज्ञापयतीत्याह अतइति हेमहाभागअपरिमितभाग्यनिधेउक्तप्रकारेणकर्मज्ञानयोर्हरिभक्तिरहितयोर्निष्फलत्वाद्धर्मादीनामल्पकथनेनापिपूर्तिर्भगवन्महिम्नातिकथितेनाप्यपूर्तिरेवेति यतःसाक्षाच्छुचिश्रवाःविष्णुरेवातएवसत्येनिर्दुःखानंदानुभवेरतःशरणागतपालनादिधृतंव्रतंयेनसतथा अतएवामोघज्ञानोतएवभवान्पूज्यस्त्वंसकलसज्जनसंसारबंधनविध्वंसनायउरुक्रमस्यबहुपराक्रमस्यतवयज्जगत्सृष्टिपालनादिविशिष्टचेष्टितंतत्समाधिना दर्शनगुह्यसमाधिभेदेनत्रिधाभिन्नानांभाषाणांमध्येयथास्थितवस्तुकथनलक्षणायासमाधिभाषयानुस्मरभगवन्महिमप्रतिपादकश्रीभागवताख्यग्रंथंकुरुतेनकृतावतारप्रयोजनालंबुद्धिर्भविष्यतीतिभावःअखिलधर्मगुप्तयेइतिपाठे स नस्त भागवतधर्मरक्षणायेत्यर्थः ॥ १३ ॥

केवलधर्मादिविषयशास्त्रकृत्यानर्थोपिभवतीतिज्ञापयतीत्याहअतोन्यथेति अतएवभगवन्महिम्नोन्यथाविरुद्धतयायद्धर्मादिपुरुषार्थंकथनायविवक्षितंतत्किंचनयत्किंचिन्नपुरुषार्थोपयोगि कुतस्तत्कृतरूपनामभिस्तस्मिन्ग्रंथेधर्मादिफलत्वेनप्रतिपादितस्वर्गादिगतलावण्यादिरूपमदनकलिकेत्यादिनामवत्पदार्थैःपृथग्दृशस्तेममसुखहेतवइतिवस्त्वयथार्थज्ञानिनोरागादिदोदुष्टत्वेनदुःस्थितामतिः कर्हिचित्क्वापिकस्मिंश्चिद्विषयेपिससुद्रेवातेनवायुना आहताविघटितानौस्तरीवास्पदमाश्रयंनलभेतेत्येकान्वयः तस्मात्केवलधर्मादिविषयशास्त्रकृतिरनर्थकारीतिभावः । अतोन्यथाश्रीभागवतकृतिमंतरेणयत्किंचनग्रंथकरणंविवक्षितंतद्ग्रन्थतत्कल्पितरूपनामभिर्मुग्धस्येतिवा । चशब्दान्नरकपातफलमेवस्यादिति सूचयति ॥ १४ ॥

नकेवलमनर्थकार्येवभवेदन्येषांनिंदिताधर्मकारीचेतिज्ञापयति जुगुप्सितमिति स्वतएवप्रवृत्तिधर्मादिषुरागिणोऽज्ञस्यप्रवृत्तिधर्मादिकृतेनुशासनंकुर्वितिप्रेरणंजुगुप्सितंत्वाहशैरितिशेषःनकेवलंनिंदितंकिंतुमहान्व्यतिक्रमःवृक्षादधःपाति तस्य दंडेनताडनवन्निः सीमोऽन्यायः कुतः स्वयत्प्रमाणंकुरुतइतिन्यायाद्यद्वाक्यतोधर्मइतितस्यजनस्यइतरास्थितोजनोनिवारणंनमन्यतेइत्यन्वयः यस्यभवादृशस्यवचनाद्धर्मोयमित्यनुतिष्ठतस्तस्यप्रवृत्तिमार्गस्थितस्यजनस्येतरस्मिन्निवृत्तिमार्गस्थितःजनःशुकादिर्नायंधर्मःनचरेतातिनिवारणंनकरोति तस्मात्तादृशग्रंथकृतिरनपेक्षितेतिभावःयद्वाक्यतइति यस्यभवादृशस्यश्रेष्ठस्यवाक्यतो वचनात् प्रतीतएवधर्मःमुख्यपुरुषार्थहेतुरितियदुत्तरोजनःअधिकारीस्थितःविश्वस्तस्तस्यजनस्यकुमार्गप्रवर्तमानस्यानिवारणंसः नमन्यतेचेत्तस्यश्रेष्ठस्यमहान्व्यतिक्रमः अन्यायोयतः अतोजुगुप्सितमितिसंबंधः कुमार्गसक्ताःस्वस्मिन्विश्वस्ताश्चेत्तस्मात्तेवारणीयाएवनपुनःप्रवर्तनीया इतिक्षपालोधर्मएवेतिभावः ॥ १५ ॥

---

## सुबोधिनी ।

यतोभक्तिव्यतिरेकेणज्ञानंकर्मवानफलसाधकंअतआवश्यकत्वाल्लाघवाच्चमुख्यतयाभक्तिरेवोपदेष्टव्यासाचश्रवणरूपाप्रथमंश्रवणसापेक्षावा अतः श्रोतव्यविषयत्वेनभगवच्चरित्रं भक्तिमार्गानुसारियोगजधर्मेणास्मृत्वाकथयेत्याहअतोमहाभागइति यद्यपिअस्माभिर्ज्ञायते तथाप्यधि कारामावात् वक्तुंनशक्यतेतवत्वेताहशाधिकारइतिमहाभागेतिसंबोधनं मनसामावितोर्थः कदाचिदन्यथाभविष्यतीतिनशंकाकर्तव्या यतोभवानमोघदृक्अमोघादृष्टिर्यस्येतिनापित्वयुक्तमन्यैर्नांगीकर्त्तव्यमितिशंकनीयमित्यभिप्रायेणाहशुचिश्रवा इतिशुचिः पवित्रंश्रवः कीर्ति र्यस्येतिलोकेप्यादरणीयंरूपमेतदेव किंच तत्राप्येतदेवाभीष्टमित्याह सत्यरतइतिसत्येरतःभगवद्धर्मव्यतिरेकेणअन्येषामसत्यत्वात् किंच । यथाव्रताचरणंधर्महेतुःतथाभगवच्चरित्रश्रवणमपित्यभिप्रायेणाह धृतव्रतइतिधृतानिव्रतानिस्वाध्यायादीनियेनभगवद्धर्मस्फुरणेवाहेतुःनचता दृशधर्माभगवतिनसंतीतिर्मतव्यंयतोयमुरुक्रमः उरुआधिकः क्रमःपादविक्षेपोयस्यवामनस्यक्रमात् एकेनपदासर्वलोकाक्रमणमित्यग्रेविस्तार यिष्यामः सचकालनियामकभगवच्चरित्रावेशादेवभवतीत्याहसर्वेहिजीवाः स्वभावतोवद्धाः कालपाशेनतेषांबंधननिवृत्तिर्महानुपकारः साचकालनियामकभगवच्चरित्रावेशादेवभवतीत्याह अखिलबंधमुक्तय इतिलोकवेदयोरप्रसिद्धत्वात् उपायांतरमाह समाधिनेति भगवाने वस्वयंसर्वोच्चारकः स्फुरिष्यतिअनुपश्चात्त्वयापिस्मर्त्तव्यं विशेषचेष्टितभक्तिजनकंनतुव्यामोहकंतस्यापिव्यामोहकत्वेजातिविशेषचेष्टि तत्वमेव ॥ १३ ॥

विपरीतेबाधकमाह ततोन्यथेति अभिधेयापर्यवसानं हिसर्ववस्तुषुमरीचिकावन्नियतत्वाभावात्भगवतोगुणानामनंतत्वेपिनियतत्वम् अतः कार्यं समाप्तिशंकया प्रथमत एव तन्नारंभणीयं किंच विचारदशायामपिदुःखात्मकत्वात् तद्विचारिकाबुद्धिरपि दुःखिता भवति । तदाह । अन्यथेति । ततः भगवच्चरित्रात् यद्यपि सर्वमेव भगवच्चरित्रत्वेनानिरूपणात् तत्त्वेपिन तथात्व मित्याह । अन्येति किंच नेत्यव्यय समुदायः यत्किंचिदित्यर्थः अनादरणीयमितिवाक्यसमाप्तिः तदनूद्यदूषयतियद्विवक्षतइतिवचनानंतरंममैवदुःखंभविष्यतीति किंवक्तव्यंतद्वक्तुमिच्छतएवभवतितत्रहेतुःपृथग्दृशःभगवत्त्वेनस्तोत्रेणतत्पर्यवसानाभावात् भिन्नतयानिरूपणमावश्यकं तथाचभगवद्धर्मा स्फुरणादन्यत्रोत्कर्षाभावात्अविद्यमानविवक्षायांबुद्धिर्दुःस्थाभवति ॥ किंच ॥ तत्कृतानिपृथग्दर्शनकृतानिपदार्थांतरस्यरूपनामानिभगवत्कृ- तानिततश्चसिद्धत्वाभावात् स्वयंकृत्वास्वयंनिरूपणेस्वयमेवपर्यवसानमतिर्कर्हिचिदपिकस्मिंश्चित्कालेकस्मिंश्चिद्देशेचबुद्धिरास्पदंनलभेत सर्वस्यापिबुद्धिकृतत्वात् अन्यदन्यस्यास्पदंभवति अब्रह्मत्वेनस्वाश्रयाभावाच्चदुःस्थितादुष्टतयावस्थिता सदोषोवायुवत्सर्वतारिकांबु द्धिनौकामिवनाभीष्टदेशंप्रापयतीत्याहवाताहतेतिआहताघूर्णितापवमपर्यवसानेनबुद्धिदुःखदातृत्वेनचअन्यन्नवक्तव्यमित्युक्तम् ॥ १४ ॥

इदानींप्रतारकशास्त्रवत्अन्यकथनंपापहेतुरित्याह ॥ जुगुप्सितमिति ॥ यथाअपेयपानादिकंधर्मइतिवोधकस्यनरकपातस्तथादेहादिष्वा- त्माध्यासंकृत्वातन्निर्वाहार्थंयतनीयमितिवक्तुर्नरकपातः तनुदुष्टत्वात्स्वतएवलोकोनप्रवर्त्ततेकिंकथनेनानिष्टंस्यादित्यतआहस्वभावरक्तस्य अनुरक्तोगुणान्ब्रूतेविरक्तोदूषणान्यपीतिन्यायात्रागेविद्यमानेनदोषस्फूर्तिःतस्यचास्वाभाविकत्वेज्ञातेकदाचिन्नप्रवर्त्ततापिधर्मत्वेपिज्ञाते क दाचिदपिननिवर्त्ततेतिभगवदाज्ञोल्लंघनरूपोमहान्व्यतिक्रमः कूपेंधपातनंनेवनन्वन्योनिवारयतुतथाचफलभावान्नातिक्रमोभविष्यतीत्यतआ हयद्वाक्यतइतिइतरःस्वतोविचाराक्षमःपुरातनचक्रविश्वासात्धर्मोयमितिनिश्चितबुद्धिःअन्येनअस्मदादिनाक्रियमाणंनिषेधंनमन्यतेयतोज ननधर्माजनन एवाभिरतःबहुधाश्रुत्वापिनिषेधऊर्ध्वरेतसांप्रशंसेतितथाचभट्टाःयेंधपंग्वादयोनरागार्हस्थ्यानर्हाःतेसन्यासाद्यधिकारिणइति विकल्पोवाउभयंब्राह्मणमितिवत् ॥ १५ ॥

---

## क्रमसन्दर्भः ।

तदेवं हरियशोगौणीकृत्य भारतादिषूक्तंजुगुप्सितकाम्यकर्मादिवर्णनप्राचुर्यंलोकानांतदेकनिष्ठत्वायजातमित्याहजुगुप्सितमितिस्व- भावरक्तस्यअनादिविषयवासनयास्वभावतएवकामनापरस्यपुरुषस्यधर्मकृतेभगवद्धर्मपर्यंतस्य निष्कामस्यधर्मस्यकृतेभगवद्धर्मेमेवतत्रपर्य वसाययितु मनुनिरंतरमेवानिंद्यंकाम्यं कर्मशासतः उपदिशतोनतुवेदेप्रवर्तनार्थंतत्प्ररोचनयायत्किंचिदनूद्यमुहुरपवदतःकस्यचिदन्यस्यापि महान्व्यतिक्रमोवेदतात्पर्योल्लंघनेनान्यायःस्यात्भवतःस्यादितितुकथंब्रवाणीतिभावः ननुवेदेपिताहशकाम्यकर्मकथनस्यनिरंतरतादृश्यते तत्राहयद्वाक्यतइतियस्यत्वद्विधस्यवाक्यतोदुरूहरुवेदार्थनिर्णायकाद्वाक्याद्वचनमात्रात्किमुतब्रह्मलोकप्रसिद्धशतकोटिविस्तरपुराणेतिहा सतःस्वेच्छयायेनसंगृहीतात्तत्तद्वाक्यादितरोजनस्तदेवकर्तव्यमितिपरामृशन्स्थितोयत्रनिश्चलःस्यात् तस्यतद्विधस्यनिवारणमन्यथाव क्तृतयाचिंतनंतवस्वल्पतमवाक्येनान्यस्यप्रभुरतमवाक्येनापिनमन्येतयस्मात्त्वशिष्याणामपिजैमिन्यादीनाम्अन्यथाप्रपत्तिर्दृश्यतेतस्मात्प्रवृत्तं धर्मपरित्यज्यनिवृत्ततर्षैरुपगीयमानादित्यादिरीत्यासर्वेषांसर्वापच्छमकंकाम्यं च यद्भगवद्यशस्तदेववर्णयतामितिभावः अतोनबुद्धिभेदंजन यदज्ञानांकर्मसंज्ञनाम् जोषयेत्सर्वकर्माणिविद्वान्युक्तःसमाचरन्नितिश्रीगीतावाक्यंतुज्ञानाद्युपदेष्टृविषयमेवनतुभगवद्धर्मेमहिमज्ञत्वादशवि षयंतदुक्तंश्रीमदजितेन स्वयंनिश्रेयसंविद्वान्नवक्त्यज्ञायकर्महि नरातिरोगिणाऽपथ्यंवांछतोपिभिषक्तमइतितादृशयदेशोसर्वेषामेवपर विश्वासास्पदत्वादितिभावः ॥ १५ ॥

---

श्रीविश्वनाथचक्रवर्त्ती ।

सत्यं तर्ह्यच्युते भाव एव सर्व्वोत्कृष्टत्वेन तवाभिमतः स च तन्नामलीलाकीर्त्तनश्रवणादिभिरेव भवति तत्र नाम रामकृष्णेत्यादि प्रसिद्धमेव लीला कीदृशी तवाभिमता तामुपदिशेत्यपेक्षायामाह अथो इति । अमोघदृक् अव्यर्थज्ञानः शुचि शुद्धं श्रवो यशो यस्य तथाभूतो भवान् भवति । अतः सत्ये रतो दृढव्रतश्च सन् अखिलानां जनानाम् अखिलस्य बंधस्य वा विमुक्तये तस्य विविधं चेष्टितं लीलां समाधिना चित्तैकाग्र्येण स्मर । लीला हि भक्तिमति शुद्धे चित्ते स्वयमेव स्फुरति तस्याः स्वप्रकाशत्वादनंतत्वादतिरहस्यत्वादन्यथा केनापि वक्तुं ग्रहीतुं चाशक्यत्वादिति भावः । स्मृत्वा च वर्णय । तदैवामोघदृक्त्वं शुद्धयशस्त्वम् अन्यथा नैवेति भावः । यद्वा अमोघे दृशौ नेत्रे यस्य शुचिनी श्रवसी कर्णौ यस्येति काचित् लीला नेत्राभ्यां दृष्टा काचित् कर्णाभ्यां श्रुता च तथा सत्यरत इति धृतव्रत इति आसक्तिनिश्चयसूचिताभ्यां मनोबुद्धिभ्यामपि काचिदतिरहस्या अदृष्टश्रुताप्यवकलितैव सा सा सम्प्रति चित्तैकाग्र्येण स्मर्य्यतां स्मृत्वा च वर्ण्यताम् । अत्रानुस्मरेति मध्यमपुरुषो वाक्यभेदात् ॥ १३ ॥

अन्वयेनोक्त्वा व्यतिरेकेणाह तत इति । तत उरुक्रमचेष्टितात् अन्यथा यत् किञ्चनापि किं पुनर्बहु विवक्षतः वक्तुमिच्छतोऽपि किं पुनर्व्वदतः वदतोऽपि किं पुनस्तन्मुखात् श्रुत्वा तदनुतिष्ठतः । सर्व्वत्र हेतुः पृथग्दृशः तच्चेष्टितात् पृथग्वस्तुन्येव दृक् दृष्टिस्तात्पर्य्यं यस्य तस्य अतस्तत्कृतैः रूपैर्निरूपणीयैरर्थैर्नामभिस्तद्वाचकैः शब्दैश्च दुःस्थिता अनवस्थिता मतिः । कदाचिदपि काले क्वापि देशे । आस्पदं स्थानम् । वाताहतनौरिवेति वातेन घूर्णयित्वा नानास्थानं नीत्वा आहता व्याहता अन्ततो निमज्जते एव यथा तथा तैर्ज्ञानकर्म्मकाव्यकौशलादिभिरिति ॥ १४ ॥

ननु मया भगवद्यश एव ग्राहयितुं भारतादिशास्त्रं कृतम् । किंतु कामिलोकानां भगवद्भक्तिमनिच्छूनां शास्त्रे प्रवर्त्तनार्थमेव प्रथमं ग्राम्यसुखप्रक्षेपो दत्तः । न तु मे तत्र तात्पर्य्यम् । मुनिर्विवक्षुर्भगवद्गुणानां सखापि ते भारतमाह कृष्णः । यस्मिन्नृणां ग्राम्यसुखानुवादैर्मतिर्गृहीतानु हरेः कथायामिति विदुरोक्तिरेव प्रमाणमिति चेत् । सत्यम् उपकारे प्रवृत्तात् त्वत्त एव लोकानामपकार एवाभूदित्याह जुगुप्सितमिति । धर्म्मकृते विदुरोक्तन्यायेन भगवद्धर्म्मग्रहणार्थमेव जुगुप्सितम् अनुशासतः काम्यधर्म्मानुपदिशतस्त्वत्तः सकाशादेव स्वभावरक्तस्य विषयेषूत्पन्नित एव रागिणो लोकस्य महान् व्यतिक्रमः उपप्लवो जातः । कुत इत्यत आह यद्वाक्यतो वेदव्यासवाक्यतो धर्म्म इति इतरः प्राकृतो जनः देवान् पितॄन् समभ्यर्च्य खादन् मांसं न दोषभागित्यादि विधावेव स्थितः तस्य धर्म्मस्य निवारणं सर्व्वधर्म्मान् परित्यज्य मामेकं शरणं व्रजेत्यादिवाक्येन क्रियमाणं न मन्यते किंतु प्रवृत्तिमार्गानधिकृतविषयमेतद्वाक्यमिति कल्पयति । तदुक्तं मतान्तरोपन्यासे भट्टैः—तत्रैवं शक्यते वक्तुं येऽन्ये पङ्ग्वादयो नराः गृहस्थत्वं न शक्यन्ते कर्त्तुं तेषामयं विधिः ॥ नैष्ठिकं ब्रह्मचर्य्यं वा परिव्राजकताथ वा । तैरवश्यं ग्रहीतव्या तेनादावेतदुच्यते इत्यादि ॥ १५ ॥

---

सिद्धांतप्रदीपः

यतोभगवदीयानिज्ञानकर्मवाक्चातुर्याणिमुमुक्षूपकारकाणि अथोअतःकारणात् उरुक्रमस्यउरवः बहुविस्तृताः क्रमाः चरणविन्यासायस्यतस्ययत् विचेष्टितंचरित्रम् चरित्रप्रतिपादकंपुराणमितियावत् अखिलानांमुमुक्षूणांबंधविमुक्तयेतत् समाधिनात्वमनुस्मरतन्निर्माणार्थमितिशेषः ननुतत्रममकाशक्तिरित्यतआह हेमहाभाग भवानमोघदृगस्ति अमोघदृक् शुचिशुद्धंश्रवोयस्यसशुचिश्रवाःसत्येब्रह्मणिरतः सत्यरतः धृतानिलोकहितावहानिव्रतानियेनसधृतव्रतः एवंभूतस्यतवकिमसाध्यमितिभावः ॥ १३ ॥

भगवद्विविधचेष्टितबोधकपुराणनिर्वाणंतवात्माऽसंतोषापहंमयोपदिष्टमन्यथातुत्वदात्माऽसंतोषनिवृत्तिर्नास्तीत्याह अतइति अत उरुक्रमचरित्रबोधकपुराणप्रकाशनात् पृथग्दृशः अन्यदृष्टेः अन्यथोक्तोपायाद्वैपरीत्येन आत्मासंतोषनिवर्तकंयत्किंचनार्थांतरंविवक्षतः वर्णयतस्तव तत्कृतरूपनामभिः तयाविवक्षयाकृतैः संकल्पितैः रूपैर्नामभिश्चदुःस्थिताः अविषयेप्रवृत्ताव्यामोहितासती मतिः कर्हिचित्कदाचिदपिकचित्कस्मिंश्चिदपिविषये आस्पदंस्थानंनलभेत वाताहतनौरिव ॥ १४ ॥

तद्वमूर्ध्वबाहुर्विरौम्येतन्नकश्चिन्मेशृणोतिवै धर्मादर्थश्चकामश्चसकस्मान्नसेव्यते इत्याद्याग्रहेणभारतादिषुधर्मादिप्रतिपादनमनुचितमेवेत्युक्तंतन्मुमुक्षून्प्रत्यनुचितमस्तुबुभुक्षजनोपकारार्थंतुकथंचिदुचितंभवतु द्वौमासौतुभवत्तृप्तिर्मत्स्यैः पितृगणस्यह त्रीन्मासानाविकेनैव चातुर्मास्यंशशेनतु आजेनमासान्प्रीयंतेपंचैवपितरोनृप वराहेनतुषण्मासान्सप्तवैशाकुनेनतु मासानष्टौपार्षतेनरौरवेननवैवतु गवयस्यतुमांसेन तृप्तिमासान्दशैवतु मांसेनैकादशप्रीतिः पितॄणांमाहिषेणतु गव्येनदत्तेश्राद्धेतुसंवत्सरमिहोच्यते श्राद्धकल्पे जुगुप्सितस्वभावरक्तस्यजीवस्य धर्म कृतेपितृपोषणाख्यधर्मार्थम् अनुशासतोभवतः महान्व्यतिक्रमः ननुमदानांस्वाभाविकप्रवृत्तिनिवृत्त्योर्नियमार्थमिदमुक्तं पुनःस्वदुपदेशेन तन्निवारणंशक्यमतआह यदिति यद्यस्यतववाक्यतः इतरः लौकिकोजनः धर्मोयमिति दृढविश्वासेनस्थितः तस्यहिंसस्यकर्मणः साङ्गः क्रियमाणंनिवारणंनमन्यते ॥ १५ ॥

---

विचक्षणोऽस्यार्हतिवेदितुंविभोरनंतपारस्यनिवृत्तितःसुखम्

प्रवर्तमानस्य गुणैरनात्मनस्ततोभवान्दर्शयचेष्टितंविभो॥ १६ ॥

त्यक्त्वास्वधर्मंचरणांबुजंहरेर्भजन्नपक्वोथपतेत्ततोयदि ।

यत्रक्ववाभद्रमभूदमुष्यकिंकोवार्थ आप्तोभजतांस्वधर्मतः ॥ १७ ॥

तस्यैवहेतोः प्रयतेतकोविदोनलभ्यतेयद्भ्रमतामुपर्यधः ।

तल्लभ्यतेदुःखवदन्यतः सुखंकालेनसर्वत्रगभीररंहसा ॥ १८ ॥

नवैजनोजातुकथंचनाव्रजेन्मुकुंदसेव्यन्यवदंगसंसृतिम् ।

स्मरन्मुकुंदांघ्र्युपगूहनंपुनर्विहातुमिच्छेन्नरसग्रहोयतः ॥ १९ ॥

इदंहिविश्वंभगवानिवेतरोयतोजगत्स्थाननिरोधसंभवाः ।

तद्धिस्वयंवेदभवांस्तथापिवैप्रादेशमात्रंभवतः प्रदर्शितम् ॥ २० ॥

भाषा टीका ।

अतएव हे महाभाग ? आपस्वयं अव्यर्थज्ञानात्म हैं पवित्रयशयुक्त हैं सत्य मे अनुरत और धृत व्रत हैं। आप समाधिद्वारा उरुक्रम भगवान् की लीलाओं को स्मरण कीजिये और समस्त जीवों के बंधन मुक्त होने के लिये उनहीं लीलाओं को वर्णन कीजिये ॥ १३ ॥

क्योंकि भगवान की लीलाओं को छोडकर जो और कुछ वर्णन करना चाहता है उस प्रथग्दर्शी की बुद्धि वर्णनीय विषयके रूप और नाम से चंचल होकर कहीं भी स्थिर नहीं होती है तीव्र पवन मे कंपित नौका के समान सर्वथा अस्थिर होजाती है ॥ १४ ॥

श्री भगबान के यशके अतिरिक्त धर्म का वर्णन अकिंचित् कर हीनहीं है. बिरुद्ध फल भी करता है। जुगुप्सित काम्य कर्ममे स्वभाव सेही जीवकाअनुराग है। उसी कर्म को धर्मकह कर जो आपने उपदेश किया है यह बडा अन्याय है तुमारे ही वाक्यसे काम्यकर्मादिकोंको मुख्य धर्म मानकर जीव अब न तुम्हारे किये निवारण को मानता है। न और किसी तत्वज्ञ का निवारण मानता है ॥ १५ ॥

---

श्रीधरस्वामी ।

ननु यद्येवं प्रवृत्तिमार्गो निन्द्यते तर्हि निवृत्तिमार्गे सर्व्वक्रियात्यागेनैव पारमेश्वरसुखस्वरूपानुभूतिः किं तद्यशःकथनेनापि तत्राह विचक्षणोऽतिनिपुणः कश्चिदेव निवृत्तितः सर्व्वक्रियानिवृत्त्या अस्य विभोः सुखं निर्व्विकल्पकसुखात्मकं स्वरूपं वेदितुं ज्ञातुमर्हति। न पुनरविचक्षणः प्रवृत्तिस्वभावः विभुत्वे हेतुः न अन्तः कालतः पारञ्च देशतो यस्य तस्य विभोश्चेष्टितं ततः कारणात् हे विभो अनात्मनो देहाद्यभिमानिनः अतएव गुणैः सत्त्वादिभिःप्रवर्त्तमानस्य जनस्य दर्शय। भवानिति त्वमित्यर्थः। भवन्निति पाठे तु सम्बोधनम् ॥ १६ ॥

एवं तावत् काम्यकर्म्मादेरनर्थहेतुत्वात् तं विहाय हरेर्लीलैव वर्णनीयेत्युक्तम् । इदानीन्तु नित्यनैमित्तिकस्वधर्म्मनिष्ठामपि अनादृत्य केवलं हरिभक्तिरेव उपदेष्टव्येत्याशयेनाह त्यक्त्वेति । ननु स्वधर्म्मत्यागेन भजन् भक्तिपरि पाकेण यदि कृतार्थो भवेत् तदा न काचिच्चिन्ता। यदि पुनरपक्व एव म्रियेत ततो भ्रश्येद्वा तदा च स्वधर्म्मत्यागनिमित्तोऽनर्थः स्यादित्याशंक्याह । ततो भजनात् पतेत् कथञ्चित् भ्रश्येत् म्रियेत वा यदि तदापि भक्तिरसिकस्य कर्म्मानधिकारात् नानर्थशंका। अङ्गीकृत्याप्याह वाशब्दः कटाक्षे। यत्र क्व वा नीचयोनावपि अमुष्य भक्ति रसिकस्य अभद्रमभूत् किं नाभूदेवेत्यर्थः । भक्तिवासनासद्भावादिति भावः । अभजद्भिः केवलं स्वधर्म्मतः को वार्थः आप्तः प्राप्तः अभजतामिति षष्ठी तु सम्बंधमात्रविवक्षया ॥ १७ ॥

## श्रीधरस्वामी ।

ननु स्वधर्ममात्रादपि कर्म्मणा पितृलोक इति श्रुतेः पितृलोकप्राप्तिः फलमस्त्येव तत्राह तस्येति । कोविदो विवेकी तस्यैव हेतोस्तदर्थं यत्नं कुर्य्यात् यत् उपरि ब्रह्मपर्य्यन्तम् अधः स्थावरपर्य्यंतश्च भ्रमद्भिर्जीवैर्न लभ्यते । षष्ठी तु पूर्व्ववत् । भगवद्भक्ति सुखार्थमेव प्रयतेत तस्य दुर्लभत्वादित्यर्थः । तत्तु विषयसुखमन्यत एव प्राचीनस्वकर्म्मणा सर्व्वत्र नरकादावपि लभ्यते । दुःखवत् यथा दुःखं प्रयत्नं विनापि लभ्यते तद्वत् । तदुक्तम्—अप्रार्थितानि दुःखानि यथैवायान्ति देहिनाम् । सुखान्यपि तथा मन्ये दैवमत्राऽतिरिच्यते इति ॥ १८ ॥

यदुक्तं यत्र क्व वाऽभद्रमभूदिति तदुपपादयति न वै इति । मुकुन्दसेवी जनः जातु कदाचित् कथञ्चन कुयोनिं गतोऽपि संसृतिं नाम्रजेत् नाविशेत् । अङ्ग अहो । अन्यवत् केवलकर्म्मनिष्ठवत् इति वैधर्म्म्ये दृष्टांतः । कुत इत्यत आह । मुकुंदाङ्घ्रे रुपगूहन-मालिङ्गनं पुनः स्मरन् विहातुं नेच्छेत् । यतोऽयं जनो रसग्रहः रसेन रसनीयेन गृह्यते वशीक्रियते । यद्वा रसे रसनीये ग्रह आग्रहो यस्य । तदुक्तं भगवता—यतते च ततो भूयः संसिद्धौ कुरुनंदन पूर्व्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि स इति ॥ १९ ॥

तदेवं भगवल्लीलां प्राधान्येनानुवर्णय इत्युक्तं तत्र को भगवान् का च तस्य लीला इत्यपेक्षायामाह । इदं विश्वं भगवानेव स तु अस्माद्विश्वस्मादितरः ईश्वरात् प्रपञ्चो न पृथक् ईश्वरस्तु प्रपञ्चात् पृथगित्यर्थः तत्र हेतुः यतो भगवतो हेतोर्जगतः स्थित्यादयो भवन्ति । अनेनैव लीला अपि दर्शिता यद्वा इदं विश्वं भगवान् इतर इव यः स जीवोऽपि भगवान् चेतनाचेतनप्रपञ्चस्तद्व्यतिरेकेण नास्ति स एवैकस्तत्त्वमित्यर्थः हिशब्देन सर्व्वं खल्विदं ब्रह्मेत्यादिश्रुतिप्रमाणं सूचितम् । तद्धि स्वयमेव भवान् वेद । प्रादेशमात्र-मेकदेशमात्रम् आचार्य्यवान् पुरुषो वेदेत्यादिश्रुत्यर्थसम्पादनाय प्रदर्शितम् ॥ २० ॥

---

## दीपनी ।

अङ्ग अहो इति । अङ्ग सम्बोधने हर्षे सम्भ्रमासूययोरपीति मेदिनी ॥ १९ ॥

भगवानेवेति । अत्रत्य एवशब्दः खलु मूलोक्त इवशब्दस्यार्थभूतः ॥ २० ॥ २१ ॥

---

## श्री वीरराघवः ॥

नन्वकृत्स्नविज्ञानोनज्ञानातुतामकृत्स्नवित्तुममाभिप्रायंजानात्येवेत्यतआह विचक्षणइति यदृष्यस्यविभोर्भगवतःअनंतपारस्यकर्मणिरीहितंअपारंचेष्टितंविचक्षणःनिपुणबुद्धिर्निवृत्तिधर्मरतः निवृत्तिधर्मनिष्ठतयासुखंयथातथावेदितुमर्हतिनिवृत्तिधर्मनिष्ठोभगवद्वैभवाभिज्ञोद्गुर्लभ इतिभावः तथापिगुणैः रजआदिगुणमूलकैरागादिभिः प्रवर्त्तमानस्यानात्मनः आत्मज्ञानरहितस्यजनस्यविभोश्चेष्टितंदर्शयप्रबंधनिर्माणेनवर्णयेत्यर्थः शासनंनामाज्ञातज्ञापनरूपंतत्रार्थकामयोः कचिदपिहेयत्वानुकाववपिविचक्षणोजनोजानात्येवअतस्तंप्रतिकञ्चिदप्यर्थकामयोर्हेयत्वज्ञापनंव्यर्थमेव अविचक्षणंत्वदभिप्रायानभिज्ञंप्रत्यपितद्व्यर्थमेवातोविचक्षणजनस्यापिसुखप्रतिपत्तये अर्थकामयोर्हेयत्वं भगवच्चेष्टितज्ञानस्य निरतिशयपुरुषार्थसाधनत्वंचविपुलप्रबंधनिर्माणेनदर्शयेतिभावः ॥ १६ ॥

यदुक्तंकुतः पुनः शश्वदभद्रमीश्वरेनचार्पितंकर्मेति कर्मणोऽभद्रगर्भत्वंभगवद्भक्तियोगस्यशश्वद्भद्रगर्भत्वंच तदुभयमुपपादयति ॥ त्यक्त्वेति पतेदितिशरीरपातोक्तिः ईश्वरेनचार्पितं स्वधर्मंस्वसमीहितफलसाधनंधर्मंत्यक्त्वाहरेश्चरणांबुजंभजन्भजमानोयःसन्नपक्वः अपक्वकषायःपतेन्म्रियतेयदि अमुष्ययत्रक्वापिकिमभद्रंभविष्यतिनाकिंचिदपीत्यर्थः नहिकल्याणकृत्कश्चिद्दुर्गतिंतातगच्छतिप्राप्यपुण्यकृतांलोकानुषित्वाशाश्वतीः समाः शुचीनांश्रीमतांगेहेयोगभ्रष्टोभिजायते अथवायोगिनामेवकुलेभवतिधीमतामिति भगवदुक्तेरितिभावः अभजतामितिच्छेदः हरेश्चरणांबुजमभजतांस्वधर्मस्थानांस्वधर्मंतश्चति सार्वविभक्तिकस्तसिः स्वधर्मंभजतां स्वधर्ममनुतिष्ठतांकर्तरिषष्ठीयंकोवार्थः आप्तः प्राप्तः नकोपीत्यर्थः तेतंभुक्त्वास्वर्गलोकं विशालंक्षीणेपुण्येमर्त्यलोकंविशंतीति भगवदुक्तेरितिभावः अंतवदेवास्यतद्भवतितद्यथेह कर्मचितोलोकः क्षीयते एवमेवामुत्रपुण्यचितोलोकः क्षीयतेप्लवाह्येतेअदृढायज्ञरूपा इत्यादिश्रुतेश्चेतिभावः ॥ १७ ॥

एवंभगवद्भक्तिस्वधर्मयोः शश्वद्भद्रगर्भाभद्रगर्भत्वे प्रतिपादितेऽथतत्फलयोरुपायांतरेणाऽयत्नलभ्यत्वेवदन्नुपायांतरेण्यस्तुसुखसाधनोपयुक्तमेवभूतहितंकार्यमित्याहतस्यैवेति उपरिब्रह्मलोकादिष्वधः पातालादिषुभ्रमतांजीवानां यत्परमानुभवात्मकं नलभ्यतेतस्यैवहेतोरस्तु

श्रीवीरराघवः ।

खसाधनोपयुक्तोपायदर्शनार्थमेवकोविदोनि पुणबुद्धिस्तादृशोयतेतएवंचेद्भूतहितकारित्वंनान्यथेतिभावः तत्सुखंवैषयिकसुखंतुसर्वत्रउपर्य- धश्चगमीरंहसाबुलंक्ष्यवेगेनकर्मणाप्युपलक्षणमिदंभ्रमतामित्यनुषंगः कालेनतदुद्बोधेनप्राचीनेनकर्मणाचभ्रमतांजायमानानां जनानामित्य र्थः अन्यतदुपायांतरादेवकालकर्मादिरूपाल्लभ्यतेदुःखवद्यथादुःखंतद्वत् अप्रार्थितमपिदुःखंकालकर्मादिहेत्वंतरेणैवभवतितद्वद्वैषयिकसुखम- पीत्यर्थः यद्वाभक्तिसाध्यनैश्रेयससुखस्याभूतपूर्वत्वदुःखासंभिन्नत्वज्ञापनायभक्तिव्यतिरिक्तोपायांरसाध्यस्यसर्वस्यापिदुःखमिश्रत्वमाहर्तादि ति अन्यतअनभिसंहितफलवर्णाश्रमधर्मोपकृतभगवद्भक्तिव्यतिरिक्तो पायाद्य त्सुखंमहताकालेनसर्वत्रलभ्यतेतदुःखवत्दुःखमिश्रमेवदुःखासं खवदुभिन्नंतुप्रागुक्तोपायादेवेत्यर्थः ॥ १८ ॥

यत्रक्वचाभद्रमभूदमुष्यकिमितिकाक्कासूचित मभिप्रायंसिंहावलोकनन्यायेनविवृणोति नवाइति अंगहेबादरायणमुकुंदसेवीमुकुंदभक्तो- जनः कदाचिदपीकथंचिदपिसंसृतिंनाव्रजेत्किंतुततोमुच्येतैवेत्यर्थः इदंनिष्पन्नभक्तियोगनिष्ठपुरुषाभिप्रायकंतस्यतावदेवचिरंयावन्नविमोक्ष्ये- अथसंपत्स्यइतिश्रुतेःअनिष्पन्नभक्तियोगोपिजनःअन्यवत्केवलकाम्यकर्मिवन्नसंसृतिंव्रजेत्नहिकल्याणकृत्कश्चिदित्याद्युक्तरीत्याकर्मिविलक्ष- णामेवप्राप्नोतीतिभावः तदेवविशदयतिस्मरन्निति मुकुंदां घ्र्युपगूहनंगुहसंवरणइतिधातुःमुकुंदांघ्र्योः संवरणंसम्यग्वरणंप्रपदनमितियाव त्तत्स्मरन्यौर्वदैहिकंस्मरन्नित्यर्थः तत्पुनर्विहातुंत्यक्तुंनेच्छत् कुतः यतोमुकुंदसेवीजनः रसग्रहः रसोवैसः रसंह्येवायंलब्ध्वानंदीभवती त्युक्तरीत्यानिरतिशयानंदात्मक रसरूप परमात्मानंगृहीतवानित्यर्थःतथाचोक्तंभगवता तत्रतंबुद्धिसंयोगंलभतेपौर्वदैहिकं यततेचततोभूयः संसिद्धौकुरुनंदन पूर्वाभ्यासेनतेनैवाह्रियते ह्यवशोपिसइत्यादिना ॥ १९ ॥

ननुकेतेभगवद्गुणायेमयावर्णनीयाइत्यपेक्षायांतेषामानं त्यान्नमयोपदेष्टुंशाकल्येन त्वयावर्णयितुंवाशक्याः किंतुसंग्रहेणतान्दर्शया मीत्याह इदमिति यतोयस्माज्जगत्स्थितिसंहारसर्गाः प्रवर्त्तंतेसभगवानिदंविश्वं एवमितरइवेतरएववायथेवेवैवमितिवशब्दस्याप्येवशब्द पर्यायत्वानुशासनात् विश्वाभिन्नोपिविश्वविलक्षणइत्यर्थः यतइति जन्माद्यस्ययतइत्यत्रेवहेतौपंचमीभगवानिदमित्यनेनसर्वंखल्विदंब्रह्मत ज्जलानितिश्रुत्यर्थोभिप्रेतः एवंजगदुपादानत्वजगन्निमित्तत्वतदुभयाक्षिप्तसर्वशक्तित्वंउपादानकारणाक्षिप्तसर्वांतरात्मत्वचिदचिद्विशिष्टत्व तन्मूलकजगदभिन्नजगद्विशेष्यत्वतमूलकतद्विलक्षणत्वकारणत्वाक्षिप्तोपास्यत्वमोक्षप्रदत्वादयोगुणाः सामर्थ्यादत्रफलिताः एवमादय- स्त्वयावर्णनीयाइतिभावः तद्धिउक्तगुणादिजातंभवान्स्वयमात्मनावेदतथापिमयाभवतः प्रादेशमात्रंप्रदेश एवप्रादेशः स्वार्थे णप्रादेशमात्रं गुणानामेकदेशमात्रमेवप्रदर्शितम् यद्यपिजगदुपादातत्वादीनांभगवद्गु णानामानंत्यंभवान्जानात्येवतथापिपृष्टेनमयादिङ्मात्रंप्रदर्शितमि- त्यर्थः ॥ २० ॥

---

श्रीविजयध्वजः ।

समाधिभाषात्मकग्रंथेधिकार्यभावादुपरम्यतइतिनवक्तव्यमितिविज्ञापयति विचक्षणइतिनिवृत्तितोगुणैःप्रवर्तमानस्यानात्मनोस्यानं तपारस्यविभोःसुखंविचक्षणोवेदितुमर्हतियस्मात्ततोभवान्पूज्यस्त्वंविभोश्चेष्टितंदर्शयेत्येकान्वयः अनुष्ठितनिवृत्ति धर्मोतसत्त्वादिगुणैर्जगत्सृ ष्ट्यादौप्रवर्तमानस्यानात्मनः अस्वामिकार्यस्यजीवस्य अपरिमितमूर्तेर्विभोर्भगवतः सकाशात्यद्भविष्यत्सुखंभवति तत्सुखंविचक्षणोविशि ष्टाचार्यः सात्त्विकप्रकृतिर्ज्ञातुंयोग्य इतियस्मात्तस्माद्विभोः सर्वगस्यहरेश्चरितंसमाधिभाषात्मकग्रंथकरणेनज्ञापयेत्यतोधिकार्यभावान्नो परंतव्यमितिभावः अनात्मनोबुद्ध्यादेर्गुणैः सत्त्वादिभिः शब्दादिषुप्रवर्तमानस्यजनस्यसुखायविभोश्चेष्टितंदर्शयेतिवा ॥ १६ ॥

इतोपिप्रवृत्तिधर्मोपदेशान्निवृत्तिधर्मोपदेशोवरीयानित्याह त्यक्त्वेति अथस्वधर्मंत्यक्त्वाहरेश्चरणांबुजंभजंस्ततः यद्यपक्वः पतेत्तदाअमुष्य यत्रक्वचाभद्रमभूत् स्वधर्मंभजतांकोवाअर्थआप्तएवेत्येकान्वयः भगवद्विषयस्वधर्मानुष्ठानात्मकप्रवृत्तिधर्मंत्यक्त्वानिवृत्तिधर्मविधायकशा स्त्रोक्ताचारैः हरेः पादपद्मसेवनामानः पुरुषस्तस्मादनधिगतापरोक्षज्ञानादिस्तत्फलपरिपाकोरागाद्यंतरायविहतः स्खलेत्तथाप्यमुष्यपुंसःकिं प्रभवतिधर्मात्मेत्यादिप्रमाणाद्यत्रक्वाजन्मांतरेश्रीमदादिकुलोद्भूतस्यनिवृत्तिधर्मात्मकंभद्रमेष्यतुनिश्चितंयत्तदतीतत्वेनसरणयतइतिवचनाद्भू द्भविष्यत्येव केवलंप्रवृत्तिधर्मंभजतामनुतिष्ठतांअस्खलनेपिधर्मादिषुकोवापुरुषार्थआप्तोनकोपीतिभावः तस्मान्निवृत्तिधर्मविधायकशा स्त्रंभवान्करोत्वितिप्रार्थये ॥ १७ ॥

तस्माद्विवेकिनाप्रवृत्तिधर्मंविहायनिवृत्तिधर्मएवानुष्ठेयइत्याह तस्येति कोविदस्तस्यैवहेतोःप्रयतेत उपर्यधोभ्रमतांयन्नलभ्यते गभीरंरंह साकालेनान्यतःसर्वत्रअदुःखवत्सुखंलभ्यतइत्येकान्वयः अनंतपारस्येतिहरेर्मुख्यप्रसादलभ्यंयत्सुखमुक्तंतस्यैवहेतोर्नान्यस्य तत्सुखहेतु निवृत्तिधर्माख्यसाधनस्यार्थे प्रयत्नंकुर्याद्यत्सुखंभूस्वर्गादिषुप्रवर्तमानानांप्रवृत्तिधर्माणांपुरुषाणां नसुलभंनिरंतरंनिवृत्तिधर्मसेवमानानाम्य क्वयेगेनानेकजन्मपरिमितेनकालेनान्यतःसर्वदेवभ्योत्यंतभिन्नाद्धरेः सर्वदेशकालेषुनिर्दुःखस्वरूपसुखमभिव्यज्यतेतस्मान्निवृत्तिधर्मएवश्रेयानि तिभावः यथापापिनांप्रयत्नमंतरेणदुःखंलभ्यतेतथानिवृत्तिधर्माणामपिसाधनसामग्रींविनानिरायासेनसुखंलभ्यतइत्यस्मिन्नर्थेदुःखवदिति- दृष्टांतोवा स्वर्गादौभ्रमतांयत्सुखंनलभ्यतेविवेकीतस्यैवसुखस्यहेतोः प्रयतेत एवशब्दव्यावर्त्यमाहतदिति अन्यतोविषयभोगात्यद्दुःखोपेतंसुखं तद्गभीररंहसाकालेतसर्वत्रलभ्यते तस्मात्तादृशसुखार्थंनयतनीयं किंतुतद्व्यपितत्कस्यानित्यस्यकेवलस्यस्वरूपसुखस्येतिवा ॥ १८ ॥

## सुबोधिनी

सर्वोत्पत्तिनिमित्तकारणत्वात्तत्रोच्यतेकालसाध्यएवकर्मस्वभावयोःप्रवृत्तिःनाकालसाध्ये॥किंच॥अदृष्टंनामपूर्वजन्मनिकृतकर्मणोवांतरव्यापाररूपधर्माधर्मलक्षणंतत्कस्यकर्मणःकिंभगवत्प्रीतिहेतोरहेतोर्वाआद्यस्तुनादृष्टंजनयतिदृष्टेनैवभगवत्प्रीतिजननात्फलविपर्ययस्त्वसंगतः॥ नापिप्रीतिहेतोःअफलत्वेनतदर्थंनव्यापारजननंसंभवति ॥किंच॥ कर्मणांप्ररोहैकस्वभावत्वात्जन्मनोनांतिमत्वसाधकत्वम्अंतिमेचजन्मनिभगवद्भक्तिःभगवत्प्रसादैकलभ्यत्वात्सएषसाधोचरमोभवानामितिवाक्यात्जातकेपिधर्मरूपसेवायाएवफलत्वेनशुभग्रहैर्ज्ञायमानत्वंतस्मादनन्यसिद्धत्वाद्भगवद्भक्त्यावेवयत्नःकर्तव्यःनचलौकिकसुखदुःखाभावार्थेयतनीयंकालेनैवतात्सिद्धेःदुःखवत्अतो देहप्राप्तावेवतद्भोगस्यासिद्धत्वात्स्वस्यपिष्टपेषणमित्याहतल्लभ्यतइतिअन्यतःपितृपुत्रभार्यादिभ्यःतेषामपिप्रेरकःकालःसचकालकृतिसाध्योनभवतिनचदेशःस्वतंत्रतयासाधनंतस्यापिकालाधीनत्वात्तुल्यत्वेपिनियतसहभावात् तदाह सर्वत्रेतिप्रतीकाराकरणार्थमाहगभीररंहसेतितस्माद्भजनार्थंप्रयत्नःकर्तव्यः । १८ ।

तत्रतर्कमाह नवैजनोजात्विति ननुवैकुंठगतानामपिजयविजयादीनांपुनरागमनश्रवणात्ननैकांततोभक्तिःफलसाधनंभगवतोप्ययतरणात्तत्संगेनावतारसंभवाच्चपराधीनत्वेनापराधसंभवाच्चतस्माद्धर्मवद्भक्तिरपिनोत्कृष्टफलेति तत्राह नवैजनोजात्वितिअंगीकृत्यापिपरिहारःवस्तुतस्तुजयविजययोःधर्ममार्गानुसारेणकृत्रिमवैकुंठप्राप्तिःअतएवतत्रैववर्णनायांयेनिमित्तनिमित्तेनधर्मेणाराधयन्हारिंवैकुंठःकल्पितोयेनेतिचभगवतासहत्वागमनंपरमानंदत्वात्फलमेवसाधारणानामपिभागवतानांभगवत्सेवकसेवकानांदूषणमंगीकृत्यापिपरिहारउच्यते यथाभरतादिः यतोमुकुंदसेवीसंवभ्येमोक्षदातुःसेवकःअन्यवत् यथासत्यवादीब्राह्मणःतत्रहेतुःस्मरन्नितिवाक्शरीरभक्त्यभावेपिकामुकस्यकामिनीस्मरमिवपरमानंदरूपचरणालिंगनंपूर्वजन्मनिजातंमधुनास्मरन्यतोरसग्रहःरसेनग्रहणंयस्यसतथोक्तःभगवत्कृपाभावेपिमार्गस्यैवबलिष्ठतातदाहयतइति १९

एवंसोपपत्तिकंभगवन्मार्गस्योत्कृष्टत्वंप्रतिपाद्यभगवतोदुर्लभत्वेतच्चरित्रस्यभूयस्त्वकथनंचानुपपन्नमितिकोवाभगवानित्याकांक्षापूरणायआचार्यवान्पुरुषोवेदेतिचशास्त्रार्थत्वायचभगवंतंनिरूपयतिइदंहिविश्वमिति । भगवत्स्वरूपंचरित्रंचनिरूपणीयंतत्द्वयंभेदेननिरूपणीयंतथासतिचरित्रस्यानात्मत्वेननतद्भावनायांसंसारःस्यात्अतोद्वयमभेदेननिरूपयतिइदंहिविश्वंभगवान् विश्वमनूद्यभगवत्त्वंविधीयतेतथासतिसर्वत्रभगवद्दृष्टिश्चेत्कृतार्थोभवतीतिकार्यंभगवत्त्वेननिरूपितंसर्वंखल्विदंब्रह्मतज्जलानितिश्रुतिर्हिशब्देनसूचिताउत्तममध्यमाधमाधिकारभेदेनत्रिधात्रनिरूपणंकर्तव्यंतत्रोत्तमेनिरूपितंमध्यमेत्वेवंइदंविश्वंभगवानिवनतुभगवान्तेनात्रसन्माननादिकंकर्तव्यंनासक्तिरपितिनिकृष्टेतुइदंविश्वंभगवानितरःअस्मादन्यःअतःप्रपंचदर्शीबहिर्मुखोभ्रष्टोभवतीतिएवंसर्वत्रप्रकारत्रयेणनिरूपणीयंनन्वेकस्यजगतःकथंत्रिरूपत्वंतत्राहयतोजगत्स्थानिरोधसंभवाइतितत्रजगतः स्थितिर्भगवत्येवेतिभगवानेवजगतीतिस्वाधारत्वाद्भगवतःभगवानेवजगत्मध्यमेतुभगवतः सकाशाज्जगदुद्भवःतेनकार्यकारणयोस्तादात्म्यात्कार्यात्मनाभेदः कारणात्मनाअभेदइतिभेदसहिष्णुरभेदस्तादात्म्यमितिवचनात्जगत्भगवानिवेतिमूढेतुभगवतःप्रलयकर्तृत्वान्नाशप्रतियोगिजगत्भगवांश्चसदातनइतीतरः किंच पूर्वंभगवच्चरित्रंनिरूपितमइदंहिविश्वंभगवानितरइतिब्रह्मणोभगवंतंनिरूपयतियतोजगत्स्थाननिरोधसंभवाइतिजन्माद्यस्ययतइतिलक्षणंनिरूपितंभवतिएवमर्थभेदमात्रकारिभेदंचसंक्षेपतोनिरूप्यपुनस्तस्यविवरणंनकर्तव्यमित्याहतद्धिस्वयंवेदभवानितितत्पूर्वोक्तंस्वयमेवभवान्वेदनगुर्वपेक्षाअजगत्स्वसंभवानित्यर्थः अतएवभवान्वेदतर्हिब्रह्मणउपदेशोनिष्फलइत्यतआहतथापिबैप्रादेशमात्रमितितथापिब्रह्मत्वेपिप्रमाणवलात्वेनिश्चयेनगुरूपदेशः अपेक्ष्यतेतत्रलौकिकपरिभाषायथाआदेशप्रदर्शितेतद्धिगुणादिरूपंहस्तादिकंजानातितथाजगत्कर्तृत्वज्ञातेसर्वस्वरूपंज्ञातंभवतिअथवाप्रकर्षेणआदेशःउपदेशः तन्मात्रंगूढतयाशास्त्रार्थं निरूपणंभवदर्थंप्रकर्षेणादर्शितंअनेनगूढमेवस्पष्टमेवप्रदर्शनीयमित्युपदेशः ॥ २० ॥

---

क्रमसन्दर्भः ।

पूर्व्वमभिप्रेतं यच्चोवर्णितमेव स्पष्टमुपदिशति विचक्षण इति । विचक्षणो भवान् इत्यन्वयः । हे विभो यतो विचक्षणो भवान् सर्व्वतो निवृत्तिपूर्व्वकमस्य विभोः श्रीभगवतः सम्बन्धि सुखं भक्तिरूपं वेदितुमर्हति योग्यो भवति ततो हेतोरनात्मनः पारमार्थिकबुद्धिहीनस्य अतएव गुणैर्विषयैस्तत्सुखेन प्रवर्त्तमानस्यापि जनस्य कृते तस्य चेष्टितं लीलामेव त्वं वर्णय निवृत्ततर्षैरुपगीयमानाद्भवौषधाच्छ्रोत्रमनोऽभिरामादिति तस्याख्यनायासेन तत्सुखप्राप्त्यु पपत्तेः । ततो निवृत्तानां तु सुखमेव तदुद्भूतं सर्वदिति भावः । भवान्निति पाठे सम्बोधनम् ततश्च विचक्षणो यो भवति स एव सर्व्वविषयनिवृत्त्या भजनान्तरेण यदस्य भक्तिरूपं सुखं तद्वेदितुमर्हति । अतो यद्यपि स संहितां भागवतीं कृत्वानुकस्य चात्मजम् । शुकमध्यापयामास निवृत्तिनिरतं मुनिमिति तथा हित्वा स्वाशिष्यान् पैलादीन् भगवान् बादरायणः । मह्यं पुत्राय शान्ताय परं गुह्यमिदं जगाविति तस्यैव मुख्याधिकारित्वमुक्तं तथापि निवृत्ततर्षैरित्यादि न्यायेन गुणैः प्रवर्त्तमानस्यापि हिताय तस्य चाप्यतमेव वर्णयेत्यादि पूर्ववत् ॥ १६ ॥

क्रमसन्दर्भः ।

अधुना स्वधर्म्मं परित्यागेऽपि दोषं परिहरति त्यक्त्वेति । अयमर्थः । स्वधर्म्मं त्यक्त्वायोभजन्स्यात् अमुष्याभद्रं तावन्नभवत्येव देवर्षि भूताप्तनृणामित्यादेः । तत्रयदि भगवत् प्राप्त्ययोग्यः स्यात् आयुः क्षयेण । चित्रकेतुवत् अपराधेन वादेहान्तरंप्राप्नुयात् । भरतवत् तस्मिन्ने वदेहेऽपिवाअन्याविघ्नः स्यात् । तदातदूभक्त्यभावसमयेऽपियः स्वधर्म्मत्यागस्तेनापिनाभद्रं भवेत् । भक्तिवासनायास्त्वनुच्छित्तिधर्म्मक-त्वात् ततश्चयत्रक्वाप्यवस्थयां तस्याभद्रंनस्यादेव । अभक्तानान्तुको वा अर्थः सततमव्यभिचारी स्यादिति ॥ १७ ॥

तस्यैव हेतोरिति । कर्म्मणा योऽर्थः आप्यते स पुनरर्थाभास एव नार्थ इति भावः । लभ्यत इति । तस्मादैहिकार्थं सुतरां कर्म न कर्त्तव्यमिति भावः । कालोऽत्र प्राचीनकर्म्मभोगावसरः ॥ १८ ॥

तर्हि किं संसारध्वंस एव पुरुषार्थ इत्याशंक्य तत्राप्यस्ति वैशिष्ट्यमित्याह स्मरन्निति । यस्तु तद्भक्तिरसग्रहः स पुनरित्यन्वयः वक्ष्यते च—त्रिभुवनविभवहेतवेऽप्यकुण्ठस्मृतिरजितात्मसुरादिभिर्विमृग्यात् । न चलति भगवत् पदारविन्दाल्लवनिमिषार्द्धमपि स वैष्णवाग्र्य इति । न पारमेष्ठ्यं न महेन्द्रधिष्ण्यमित्यादि ॥ १९ ॥

ननु सर्व्वं खल्विदं ब्रह्मेति श्रूयते । ब्रह्म च भगवदेकरूपमेव । ततः कथं भगवत एतादृशत्वं तत्राह इदं हीति । हि यस्मादिदं विश्वं भगवानिव ननु भगवानेव स्यात् यतोऽसौ विश्वस्मादितरो विलक्षणः । कथं विश्वं भगवानिव कथं वा भगवान् विश्वस्मादि-तरस्तत्राह यत इति । विश्वस्य तत्कार्य्यरूपत्वात् केनचिदंशेनैव तद्रूपत्वं निरूप्यते । भगवतस्तु तत्कारणत्वात् परत्वम् । न तत्समश्चाभ्यधिकश्च दृश्यते इदि श्रुत्यन्तरात् । तत्र सर्व्वज्ञस्यापि भवतः सम्प्रति अपरितोष एवायं प्रमाणमित्याह तद्धीति । मया तु यत्किंचिदेवोपदिश्यत इत्याह तथापीति । तदेवमपि परमात्मसन्दर्भे यदन्यथा व्याख्यातं तत्तु नातिद्दष्टमिति मन्तव्यम् ॥ २० ॥

---

श्रीविश्वनाथचक्रवर्त्ती ।

किञ्च तदपि त्वं धर्मान्तरं विनिन्द्य भगवद्यश एव वर्णयेत्याह विचक्षण इति । इतरः प्राकृतो विवेक शून्योजनः स्थितइत्युक्तम् विचक्षणः विवेकीजनस्तु अस्यविभोः सुखं निवृत्तितः तदितरग्राम्य सुख निवृत्त्या वेदितु मर्हति । तत्र हेतुरनन्त पारस्य न अन्तः कालतः एव मेव पारश्च प्रमाणतो यस्य तस्य । तेन सान्तादल्प प्रमाणाश्च विषय सुखान्निवृत्य अनन्तमपार प्रमाणञ्च विभोः सुखं विदित्वा तदर्थं भक्तिकर्तुमर्हतीति भावः । ततश्च विचक्षण जनस्य भक्तौ प्रवृत्ति मालोक्य । यद् यदा चरति श्रेष्ठस्तत्तदेवे तरोजन । इतिन्यायेना विचक्षणोऽपि तत्रैव प्रवर्तते इत्यतस्तदर्थमपि भगवच्चरित्रं वर्णयेत्याह । गुणैः प्रवर्त्तमानस्य अतएवानात्मनो बुद्धि विवेक शून्यस्य जनस्य बन्धविमुक्तये चेष्टितं लीलांवर्णय । हे विभो तत्र समर्थ यतोऽसावपि सर्वतो निवृत्य शुद्धां भक्ति कृत्वा तदीयं सुखं लभतामिति भावः । यद्वा एवमवतारणी-यम् । ननु यदि निवारणं जनेन मन्यते तर्हि धुनापि त्वदुपदेशे नाप्यारब्धेन तत्तत् सर्व मत निवर्त्तक भक्तिमात्र प्रवर्त्तकेन शास्त्रेणालम् नैवम् न ह्यस्मिन् जगति सर्व एवा विवेकिनो विवेकिनोऽपि संतीत्याह विचक्षण इति । विभोः कथम्भूतस्य अनंत पारस्य । तत्रकालतोऽ न्ताभाव माह प्रकर्षेण धुनापि वर्तमानस्य तेन तस्य तच्चेष्टितस्य भूत पूर्वमात्र त्वं न ज्ञेयमिति भावः प्रमाणतोऽन्ताभावमाह । गुणैः स-त्वादिभि र्न भवत्यात्मा देहो यस्य चिदानन्द मय विग्रहस्येत्यर्थः नहियत चिद्वस्तु केनापि प्रमातु शक्यत इतिभावः ॥ १६॥

ननु न बुद्धिभेदं जनयेदज्ञानां कर्मसंगिनाम् । जोषयेत्सर्वकर्माणि विद्वान्युक्तः समाचरन्निति श्रीगीतोपनिषद्वाक्येनकर्मत्याजनंनिषिद्धम् सत्यम् । तद्वज्ञानोपदेष्टृविषयमेवज्ञानस्यान्तः करण शुद्ध्यधीनत्वात्तच्छुद्धे स्तुनिष्कामकर्माधीनत्वात् भक्ते स्तुस्वतः प्राबल्यादन्तः करणशुद्धि पर्यन्तानपेक्षकत्वात्तन्नभक्त्युपदेष्टृविषयम् । यदुक्तं श्रीमदजितेनस्वयंनिःश्रेयसंविद्वान्नवक्त्यज्ञायकर्महि । नरातिरोगिणोऽपथ्यंवांछतोऽपि भिषक्तमहति । तस्मात्सर्वधर्मान् परित्यज्यमामेकंशरणंव्रजेति धर्मान्संत्यज्ययः सर्वान्मांभजेत् सचसत्तम इत्यादिभगवद्वाक्यबला-श्रित्यनैमित्तिकस्वधर्मनिष्ठायाअपित्याजनयैवकेवलैवहरिभक्तिरुपदेष्टव्येत्याशयेनाहत्यक्त्वेति । क्त्वाप्रत्ययेनभजनारम्भदशायामपि कर्मा नुष्ठानंनिषिद्धम् । स्वधर्मंत्यक्त्वायोभजन्स्यादमुष्यामद्रंतावन्नभवेद्देवर्षिभूताप्तनृणांपितृणामित्यादेः । यदिपुनरपक्वोभगवत्प्राप्त्ययो ग्योम्रियेतजीवन्नेववाकथञ्चिदन्यासक्तस्ततोभजनात्कुपथ्यास्तया वा पतेत्तदपि कर्मत्यागनिमित्तमभद्रं न भवेदेवभक्तिवासनायास्त्वनु च्छित्तिधर्मकत्वात्सूक्ष्मरूपेण तदापिसत्वात्कर्मानधिकारादित्याहयत्रक्ववाजन्मनिकिमभद्रम् अभूत्राभूदेव वा शब्दस्य कटाक्षार्थं क-त्वात् तुष्यतु दुर्जन इति न्यायेनैव पाताभ्युपगमः नतुवस्तुतः पातस्तद्धेतुकं न चयोनित्वञ्च । नह्यंगोपक्रमेध्वंसो मद्धर्मस्योद्धवाण्वपीति श्री भगवद्वाक्यादमोघ भक्तयै कुरस्यावश्य भाव्य पत्र पुष्प फलादित्वा दिति भावः । अत्रभवेदित्यनुक्त्वा भूत निर्देशो वादिनः प्रत्याक्षेपं सूचयति अभजताम् अभजद्भि स्तुस्वधर्मतः कोवा अर्थ आप्तोतकोऽपीत्यर्थ ॥ १७ ॥

श्री विश्वनाथचक्रवर्त्ती ।

ननु कर्म्मणा पितृलोक इति अपाम सोमममृता अभूमेत्यादयः श्रुतयोऽदृष्टस्वर्गादिसुखे तथा कापिवाणिज्यादयो दृष्टे च सुखे जनान् प्रवर्त्तयन्ते तत्तत् सुखमनपेक्ष्य स्वधर्म्मं त्यक्त्वा कथंभक्तौ जनाः प्रवर्त्तन्तामिति चेत् । सत्यम् । कोविदस्तु नैव तैः प्रतारितः स्यादित्यत आह तस्यैवेति । कोविदो विवेकी तस्यैव हेतोः प्रयतेत प्रयत्नं कुर्य्यात्; यद्वस्तु उपरि ब्रह्मपर्य्यन्तम् अधः स्थावरपर्य्यन्तञ्च भ्रमतां भ्रमद्भिर्जीवैर्न लभ्यते । तत्तु विषयसुखम् अन्यतः प्राचीनकर्म्मत एव सर्व्वत्र नारकशूकरजन्मादावपि लभ्यते । तदुक्तम् अप्रार्थितानि दुःखानि यथैवायान्ति देहिनाम् । सुखान्यपि तथा मन्ये दैन्यमत्रातिरिच्यते इति ॥ १८ ॥

यदुक्तं यत्र क वाऽभद्रमिति तदुपपादयति न वै इति । मुकुंदसेवी जनः जातु कदाचिदपि कथञ्चन दुरभिनिवेशादिवशादपि अन्यवत् कर्म्मिजनादिवत् कर्म्मफलभोगमयीं संसृतिं नाव्रजेत् । किंतु भगवदुत्थशुभाशुभभोगमयीमेवेत्यर्थः । तस्य भगवदुत्थशुभाशुभफलभोगवत्वात् तदुत्थशुभाशुभयोः कर्म्मजन्यत्वाभावादिति भावः । त्वदवगमी न वेत्ति भवदुत्थशुभाशुभयोर्गुणविगुणान्वयानिति श्रुत्युक्तेः न कर्म्म बंधनं जन्म वैष्णवानाञ्च विद्यते इति पाद्मोक्तेश्च । ततश्च पूर्व्वाभ्यासादेव मुकुंदस्याङ्घ्र्योरुपगूहनं मनसा परिष्वङ्गं स्मरन् पुनस्त्यक्तुं न इच्छेत् अत्राङ्घ्री स्मरन्नित्यनुक्त्वा तदुपगूहनमिति पुनरिति पदाभ्यां एकद्वित्रिवारं स्वेच्छयैव दुरभिनिवेशवशाद्भजनं त्यक्त्वापि कियतः समयादनन्तरं स्वपूर्व्वापरदशयोस्तत्स्मरणसुखमस्मरणदुःखञ्च स्मृत्वा कृतानुतापो हंत हंत दुर्बुद्धिरहं किमकरवं भवतु नाम अतःपरं तु न प्रभोर्भजनं हास्यामीति पुनरपि भजनमारभत एवेत्यर्थः । अत्र विजह्यादित्यनुक्त्वा विहातुं नेच्छेदित्यनेन तस्य गर्व्वराहित्यं सूचितं भजनं न हास्यामीतीच्छामात्रं मया क्रियते तन्निर्व्वाहस्त्वीश्वरस्यैव पाणाविति तदाशयः । तत्र हेतुः । रसे ग्रह आग्रहो यस्य रस एव ग्रह इव यं न त्यजतीति वा । अयमर्थः । भजनमेव निष्ठारुच्यासक्त्यन्ते रतिदशायां साक्षादेव रसो भवेदतो भजनस्य प्रथमारंभदिनेऽपि प्रच्छन्नतया रसांशत्वमस्त्येव ॥ यदुक्तं—भक्तिः परेशानुभवो विरक्तिरित्यत्र तुष्टिः पुष्टिः क्षुदपायोऽनुघासमिति ॥ स च स्वादविशेषो भक्तेन दुस्त्यजस्तेन च मुक्त इति ॥ ततश्च भजनस्याविच्छेदे उत्पद्यमाने भजनीयस्य मुकुन्दस्याचिरादेव प्राप्तिरित्यत्र कः सन्देह इति भावः ॥ १९ ॥

एवं भक्तिमुपदिश्य भजनीयेश्वरस्यैतावदेव ज्ञानं भक्तैः प्रथममपेक्षितव्यमिति तदुपदिशति ॥ इदं दृश्यमानं विश्वं भगवानिव सदिव चेतनमिव आनन्दरूपमिव न तु साक्षात् सच्चिदानंदरूपो भगवानेवेत्यर्थः । भगवतः सत्त्वादीनां सार्व्वकालिकत्वात् विश्वस्य सत्त्वादीनाञ्च कैञ्चित्कालिकत्वादिदिति भावः । यतोऽसौ भगवानितरः अस्माद्विश्वस्मादन्यः । कथं विश्वं भगवानिव कथं विश्वस्मादितरस्तत्राह यत इति । यस्मान्मायाशक्तिमतो भगवतः सकाशाज्जगतः स्थानानिरोधसंभवा इति विश्वस्य तत्कार्य्यरूपत्वात् केनचिदंशेनैव तद्रूपत्वं निरूप्यते भगवतस्तत्कारणत्वात् तदितरत्वमित्यतः सर्व्वं खल्विदं ब्रह्मेत्यादिश्रुतिभिरपि ब्रह्मकार्य्यत्वादेव अस्य ब्रह्मत्वातिदेशो ज्ञाप्यते । तत् सर्व्वं भवान् भगवतोऽवतारत्वात् स्वयं वेद । तदप्याचार्य्यवान् पुरुषो वेदेति न्यायेन प्रादेशमात्रं दिङ्मात्रं कोटिपरार्द्धादप्यधिकप्रमाणस्य भगवतस्तदीयाया भक्तेस्तदैश्वर्यज्ञानस्य च प्रादेशमात्रं दशांगुलमात्रं प्रदर्शितम् । प्रादेशतालगोकर्णास्तर्जन्यादियुते तते इत्यमरः ॥ २० ॥

---

## सिद्धांतप्रदीपः

ननुवेदेरामायणेचैवभारतेपंचरात्रके आदावंतेचमध्येचहरिः सर्वत्रगीयते इतिवचनात्सर्वत्रहरिचेष्टितंवेदितव्यंनचवाच्यंकर्मादिषु प्रवृत्तेनहरिचेष्टितंतत्रस्थितमपिकुतोवेदितुंशक्यमतोनिवृत्तिमार्गप्रदर्शनपूर्वकंहरिचेष्टितंपुराणंवक्तव्यमिति नकर्मणानप्रजयानधनेन त्यागेनैकेनामृतत्वमानशुरित्यादिश्रुतेः द्विविधाब्राह्मणाराजन्धर्मश्चद्विविधःस्मृतः प्रवृत्ताश्चनिवृत्ताश्चनिवृत्तोस्मिप्रतिग्राहादित्यादिस्मृतेश्च निवृत्तिमार्गेण गमात्चेष्टितस्यतत्रतत्रद्रष्टव्यत्वाच्चतत्राह विचक्षणइति अस्यविभोर्विचेष्टितमुक्तश्रुतिस्मृतिगम्यात् निवृत्तितोनिवृत्तिमार्गात् सुखंयथाभवति तथावेदितुंविचक्षणः कश्चिदधिकारी अर्हतिनत्वनात्मा अतःअनात्मनः अकृतबुद्धेः त्वंचेष्टितंदर्शय भगवच्चेष्टितबोधकंशास्त्रंदर्शयेतिभावः ॥ १६ ॥

एवंतावद्भगवद्भक्तिवर्जितंकर्मादि सर्वमशोभनमतोभगवच्चेष्टितंदर्शयेत्युक्तंसंप्रत्येतद्दार्ढ्यायकर्मनिरपेक्षहरि भजनस्यायथा वदनुष्ठितस्यापिभद्रप्रदत्वं हरिभजननिरपेक्षस्यकर्मणोनिरर्थकत्वंचाह श्रीमन्नारदः त्यक्त्वेति अभजतामभजद्भिः ॥ १७ ॥

ननु कर्मणापितृलोकइति श्रुतिः कर्मफलमाह कथमुच्यते कोवार्थआप्तोभजतांस्वधर्मतइत्यत्रहरिभजननिरतिशयनित्यप्राप्तब्रह्मानंदफलकंकर्मफलंतुस्वर्गादिसातिशयमनित्यंदेवास्तुलभंचेत्याशयेनाह तस्यैवेति भ्रमतांभ्रमद्भिः तत्कर्मफलसुखं अन्यतोदैवतः कथंभूतं तत्सुखं दुःखवत् बहुदुःखयुक्तमतउक्तंभगवता येहिसंस्पर्शजाभोगादुःखयोनयएवते आद्यंतवंतः कौंतेयनतेषुरमतेबुधइति ॥ १८ ॥

भजनफलमुपर्यधोभ्रमद्भिरपिप्रयत्नलभ्यतेतान्निरतिशयानंतानंदरूपं कर्मफलंतुदुःखोदर्कमित्युक्तं तदेवप्रपंचयति नेति अन्यः कर्मनिष्ठः सहिकर्मफलभोगानंतरं संसृतिजन्ममरणप्रवाहरूपांपुनः प्राप्नोतिगत्वाचांद्रमसंलोकंसोमपापुनरेष्यतीतिवचनात् आब्रह्मभुवनाल्लोकाः

## सिद्धांतप्रदीपः ।

पुनरावर्तिनोऽर्जुनइति भगवद्वचनाच्च तद्वत्मुकुंदसेवीतुमुकुंदंप्राप्यनैवनिश्चयेनजातुकदाचिदपिकथंचनकेनापिप्रकारेणसंसृतिंनाव्रजेत् मामुपेत्यतुकौंतेयपुनर्जन्मनविद्यतेइति भगवद्वचनात् मुकुंदांघ्र्युपगूहनमालिंगनंस्मरन्स्वयंविहातुंनेच्छेत् यतः कारणात् पुनश्चरसेनरसमूर्तिनामुकुंदेनापिगृह्यते ॥ १९ ॥

ननुकोमुकुंदोयः सेव्योयत्सेवीसंसारंनव्रजति कश्चतेनस्वसेवकस्यसंसारस्यचसंबंधइत्यतआह इदमिति यतः उपादाननिमित्तरूपात् जगत्स्थाननिरोधसंभवाः सभगवान्मुकुंदःसेव्यः कारणंतुध्येयमितिश्रुतेःजगत्कारणाव्यतिरिक्तमुपास्यंनास्तीतिभावः तेनसहचिदचिदात्मकस्यसर्वस्यवस्तुजातस्यसंबंधमाह इदंकार्यरूपंचिदचिदात्मकंविश्वंतदुपलक्षितंकालादिकंच भगवानेवछंदोनुरोधेनैकारस्थानेद्वकारः ननु भगवतः परिणामित्वंप्रसज्येतइत्यतआह स्वरूपतोविश्वेतरः भिन्नः तदेवंचेतनाचेतनयोर्ब्रह्मणासहभेदाभेदः संबंधः "अंशोनानाव्यपदेशादन्यथाचापिदाशकितवादित्वमधीयतएके उभयव्यपदेशादहिकुंडलवत्,, इत्यादिसूत्रेभ्यः विस्तरस्तुवेदांतकौस्तुभेद्रष्टव्यः तदेतत्पूर्वोक्तं सर्वंभवानपिवेदतथापिप्रादेशमात्रमेकदेशमात्रंप्रदर्शितम् ॥ २० ॥

---

## भाषा टीका ।

शास्त्रोक्त वर्णाश्रमाचार रूप अपने निज धर्मको त्याग कर हरिचरणारविन्द का भजन करता पुरुष यदि हरि भजन में असिद्ध होकर भी पतित हो जाय ( अर्थात् भजन के पथसे भ्रष्ट होजाय तो चाहे इस जन्म में चाहे जन्मांतर में कहीं क्यों नहीं क्या उसका कुछ अमङ्गल हो सक्ता है ? कमीनहींतब हरि भजन छोड कर निज धर्म के निमित्त व्यग्र पुरुषों को क्या पुरुषार्थ प्राप्त होता है ॥ १७ ॥

चतुर पुरुष उस वस्तुके लिये यत्नकरै कि जो ब्रह्मासे आदि लेकर तृणपर्यन्त ऊंचे नीचे शरीरों में भ्रमने वाले जीवोंको नहीं प्राप्त होता है। ऐन्द्रियक सुखकेलिये प्रयत्न नहीं करना चाहिये क्योंकि वह गंभीर वेगकालके द्वारा विनाही उद्योगके मिलताहै जैसाकि दुःख अर्थात् दुःखके लिये कोई भी यत्ननहीं करता और वह विनाही यत्नके आजाताहै । इसी भांत ऐन्द्रियकसुखभी बिना प्रयासके मिलजाताहै ॥ १८ ॥

और हे व्यासजी मुकुन्द सेवीजन औरों के समान कभीभी संसार को नहीं प्राप्त होताहै क्योंकि वह मुकुन्द भगवानकेचरणकमल के उपगमन के सुखको स्मरणकर उस चरणारविंद को छोड नहीं सकता है क्योंकि जीवका स्वभाव ही रस ग्राही है ॥ १९ ॥

यह समस्त विश्व भगवान काही स्वरूप है और भगवान इस विश्व से भिन्न हैं । जिन भगवान हीसे इस जगत का स्थितिनिरोध और सम्भव होता है । आप यद्यपि यह सब तत्त्व जानते हैं तथापि गुरु मुखसे श्रवण बिना स्फूर्ति नहीं होतीहै इसलिये यह आदेश मात्र अर्थात् निदर्शन मात्र आपको दिखाया गया है ॥ २० ॥

---

**त्वमात्मनात्मानमवेह्यमोघदृक्परस्यपुंसः परमात्मनःकलाम् ।**
**अजंप्रजातंजगतः शिवायतन्महानुभावाभ्युदयोधिगण्यताम् ॥ २१ ॥**
**इदंहिपुंसस्तपसः श्रुतस्यवास्विष्टस्यपूर्त्तस्यचबुद्धिदत्तयोः ।**
**अविच्युतोर्थः कविभिर्निरूपितोयउत्तमश्लोकगुणानुवर्णनम् ॥ २२ ॥**

### श्रीधर स्वामी

न च तवाचार्यापेक्षापिईश्वरावतारत्वादित्याह त्वमिति । हे अमोघदृक्त्वमात्मनास्वयंआत्मानम जमेवसन्तंजगतःशिवायप्रजातमवेहि कुतःपरस्यपुंसःकलामंशभूतम् । तत् तस्मात्महानुभावस्यहरेःअभ्युदयःपराक्रमोऽधिअधिकंगण्यतांनिरूप्यताम् ॥ २१ ॥

अनेनैवतपआदिसर्वंतव सफलं स्यादित्याह इदमिति । श्रुतादयोभावेनिष्ठाः । इदमेवहितपःश्रवणादेरविच्युतःनित्यःअर्थःफलम् किं तत्उत्तमः श्लोकस्यगुणानुवर्णनमितियत् ॥ २२ ॥

---

### दीपनी ।

( स्विष्टस्य शोभनयज्ञस्येत्यर्थः । सूक्तस्य सामान्यतः शोभनोक्तेर्वेदाङ्गात्मक विशेषोक्तेर्वेति । बुद्धदत्तयोः ज्ञानदानयोरित्यर्थः ॥ २२-३४॥

---

### श्री वीरराघवः ॥

नाहंजानामीतिमावोचइतिवक्तुंत्वमात्मानं भगवदंशसंजातंजानीहीत्याहत्वमिति अमोघदृक्अमोघंसत्यं सर्वंयथावत्पश्यतीत्यमोघदृक्त्वं परस्यपुंसः परमपुरुषस्यकलामंशमजंकर्मो यत्तोत्पत्तिरहितमथापिजगतः शिवायहितायस्वेच्छयाजातमात्मानमात्मनास्वयमेवावेहिकलाशब्दस्यनित्यस्त्रीत्वात्स्त्रीपुंसयोरपिविशेषणविशेष्यभावउपपत्तेःयतोऽमोघदृग्भगवदंशसंभूतःतस्मादेवंभूतेनत्वयामहानुभावस्यभगवतोभ्युदयः जन्मकर्मगुणादीनामप्युपलक्षणमिदंजन्मकर्मगुणादिरधिगण्यतांकथ्यतांप्रबध्यतामितियावत् एवंचेत्कृतकृत्यस्यतवात्मन्यसंतोषोनिःशेषंनिवर्त्ततइतिभावः ॥ २१ ॥

ननुमहानुभावाभ्युदयाधिगणनमात्रेणकथंकृतकृत्यत्वंकथंतरामसंतोषनिवृत्तिश्चेत्यतआहइदमितिउत्तमश्लोकस्यगुणानामनुवर्णनमितियत्तदिदमेवकृतार्थीभवितुमिच्छतःपुंसःसंबंधिनांतपआदीनामविच्युतश्च्यवनरहितःप्रतिहतिरहितोर्थः। प्रयोजनंकविभिर्निरतिशयप्रयोजनयाथात्म्यविद्भिर्निरूपितःअत्रतपोऽनशनादिमंत्रजपोवाश्रुतमध्ययनंस्विष्टम्यागादिपूर्तंवापीकूपतटाकखननादिबुद्धिःज्ञानंदत्तंदानं भाष्यादेरतिविस्तृतत्वात्तत्रसारग्रहणंजलधिमथनात्सुधाकल्पमविचक्षणैर्दुष्करंतस्मात्मुमुक्षूणामतीवसेव्यंसारमर्थजातंसंकल्प्यदर्शयएतावत्कर्तव्यमित्युक्तंभवति । उत्तमश्लोकगुणानुवर्णनमित्यनुवर्णनश्रवणस्याप्युपलक्षणंतपआदीननुतिष्ठतःपुंसोयद्युत्तमश्लोकगुणानुवर्णनश्रवणयोरुचिर्जायतेतदेवतेषांसाफल्यमन्यथातुतपआदीनांवैयर्थ्यमेवेत्युक्तम् ॥ २२ ॥

---

### श्री विजयध्वजः

तद्धिस्वयमेवदेत्युक्तंविविच्यविज्ञापयति त्वमिति हेअमोघदृक्त्वमजमात्मानंपरमात्मनःपरस्यपुंसः कलांजगतःशिवायप्रजातमात्मानाऽवेहीत्यन्वयःआदानादिकर्तुःपरमपुरुषस्यांशमवतीर्णंस्वतएवपरोपदेशमंतरेणजानासि अत्रलोट्लडर्थे अन्यथाऽमोघदृक्त्वमेवानुपपन्नंस्यात् तद्धिस्वयंवेदेतिचविरुद्धंस्यात्तन्महानुभावाभ्युदयःतस्यतवमहासामर्थ्यलक्षणचरितोदयस्त्रिलोकहितायगण्यतां प्राधान्येनसंख्याय कथ्यताम् तेनजगतःशिवंभवती त्यभिप्रायः ॥ २१ ॥

भगवन्महिमाभ्युदयवर्णनात्कथंजगतःशिवंस्यादितितत्राह इदमिति यदुत्तमश्लोकस्यहरेर्गुणानुवर्णनंइदंहिपुंसस्तपआदेरपरोक्षज्ञानद्वारामोक्षसाधनत्वात्कविभिरविनष्टफलात्मकोर्थोनिरूपितः हिशब्दोवधारणेहेतौवा तपःकायक्लेशलक्षणं श्रुतंशास्त्रश्रवणंस्विष्टंउत्तमकल्पतयायजनं सूक्तमध्ययनं बुद्धंज्ञातं दत्तंदानं एवंहरिमहिमानुवर्णनेनसर्वस्याशिवसंभवात्तदेवत्वयाकर्तव्यमितिभावः ॥ २२ ॥

---

## सुबोधिनी

किंच स्वावतारप्रयोजनंजानीहि किमर्थमवतीर्णोऽसि । भगवान्स्वयमवतीर्य सर्वभक्तोद्धारार्थं स्वात्मख्यापनार्थंस्वांशज्ञानकलारूपं भगवंत मवतारितवान् । अतश्चरित्राकथने तवावतारो निष्प्रयोजन इति भगवदिच्छया चांतःकरणविषादः अतो भगवदाज्ञां परिपालय स्वजन्म साफल्यं चेत्याह । त्वमात्मनात्मानमिति । त्वमात्मानं परस्य पुंसः कलामवेहि । जीवस्य ब्रह्मोपदेशवत् अयमुपदेश इति निराकर्तुमाह । कलामिति । साधनं च तव स्वरूपमेव ज्ञातं स्वरूपं तथा ज्ञापयिष्यतीत्यर्थः तत्र सामर्थ्यमाह अमोघदृगिति ननु सर्वे जीवाः भगवदंशकलाः कोऽयं मयि विशेषस्तत्राह परस्य पुंसः पुरुषोत्तमस्य अन्येत्वक्षरस्य पुरुषस्य वा नन्वक्षरपुरुषयोरपि भगवत्त्वात्को विशेषस्तत्राह परमात्मन इति परमश्चासावात्मा चेति गंगाजलद्रवतयोरिवात्मपरमात्मनोः स्वरूपमिति भावः तर्हि कथंममोत्पत्तिस्तत्राह अजं प्रजातमिति । अनुत्पन्न एव त्वं आनंदमात्रकरपादमुखोदरादिर्व्यासरूपेणावतीर्णः अतः सर्वस्यापि जगतः शांतसुखाय महानुभावस्य भगवतः अभ्युदयः चरित्रं अधिकं गण्यताम । उद्देशमात्रेणोच्यताम्अस्य भगवतश्चरित्रंभक्तसंबंधिसंबंधिष्वपिपरममनुभावंसंभावयतीतिमहानुभावः । तस्याभ्युदयःपरमोत्सवःतस्याधिक्यंज्ञानादिभ्यःअवाङ्मनोगोचरत्वादिदमित्थतया निरूपणमशक्यम्अतः उद्देशमात्रं कर्त्तव्यमिति ॥ २१ ॥

ननु धर्मसहितं चरित्रमुपदेष्टव्यं केवलं वेतिशंकायामाह । इदं हीति । इदं चरित्रश्रवणं तपआदिभिस्तुल्यं फलतः स्वरूपतः साधनतश्च भगवत्त्वात् । सर्वस्यापि तानि भगवानिति तत्र धर्मविशेषो वर्णाश्रमेषु प्रतिष्ठितः तत्र तपः वानप्रस्थेषु सन्यासिषु वा श्रुतं श्रवणं वेदांतानां तत्सन्यासिषु । स्विष्टं गृहस्थे सुक्तमध्ययनं ब्रह्मचारिषु क्षत्रियवैश्ययोः बुद्धिदाने एवं सर्वेधर्मैर्यभविति तानि च अविच्युतोऽर्थः न विच्युतः अर्थोयेन । शास्त्रसिद्धावपि लोकसिद्धिर्न भविष्यतीत्यत आह । कविभिरिति नितरामितियुक्तिसहितम् उत्तमश्लोकगुणानुवर्णनमनूद्याविच्युतार्थत्वंविधीयते । अत एकेनैव सर्वसिद्धेर्न तेषां पृथक्करणं नाप्यकरणमिति सिद्धांतः निषिद्धं तु न कर्त्तव्यम् ॥ २२ ॥

---

## क्रमसंदर्भः ।

तदेव विशिष्याह त्वमिति । हे अमोघदृक्त्वमात्मना स्वयमात्मानं स्वंपरस्यपुंसः कलामंशभूतमवेहि अनुसंधेहि पुनश्चजगतः शिवायाधुनैव श्री कृष्ण रूपेण यश्चाजोऽपि प्रजातस्तमवेहि । तदेतद्द्वयंज्ञात्वा महानु भावस्य सर्वावतारा वतारिवृन्देभ्योऽपि दर्शित प्रभावस्य तस्य श्री कृष्णस्यैव अभ्युदयो लीला अधि अधिकं गणयतांविरूप्यताम् । स्वयमीश्वरोऽपि भवान् निजाज्ञानरूपां मायां न प्रकट यत्विति-भावः ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥

---

## विश्वनाथ चक्रवर्ती ।

स्वयं वेदेति यदुक्तं तदुपपादयति त्वमिति । हे अमोघज्ञान तत् तस्मात् महानुभावस्य हरेरभ्युदयः परम मंगलंयशः अधि अधिकं गणयतां निरूप्यताम् ॥ २१ ॥

तदेवं धर्मान् परित्यज्य भक्त्यैव कृतार्थो भवती त्युक्तम् इदानीं कस्यचित् भक्तस्य केषु चिद्धर्मेषु यदिस्पृहा स्यात् तदाते धर्मा अपि भक्त्यैव भवन्ती त्याह इदंहीति । पुंसस्तप आदीनाम् अविच्युतोऽव्यभिचारी अर्थो हेतुः इदं उत्तमः श्लोक गुणानु वर्णनमेव निरूपितः । अर्थो विषयार्थनयोर्धनकारणवस्तुषु । अभिधेयेच शब्दानां निवृत्तौच प्रयोजने इतिमेदिनी । यत् कर्मभिर्यत् तपसा इत्यादि भगवद्वाक्याद्भक्त्या तप आदि फलानामपि सिद्धिर्भवेत् किं पुनस्तेषाम् । स्मर्त्तव्यः सततं विष्णु र्विस्मर्तव्यो नजातुचित् । सर्वेविधि निषेधाः स्युरेतयो रेव किंकराः इत्यादि वाक्यतः सर्वेषामपि धर्माणां किं पुनस्तप आदि मात्राणामिति यद्वा तपस इति तपः श्रुतादिविधायक श्रुति वाक्यानां भगवद्भक्ति विधान एवतात् पर्यात् हरिकीर्त्तन मेवा विच्युतोऽर्थोऽभिधेयः । धर्मोयस्यां मदात्मक इति भगवदुक्तेः सर्वशास्त्र वाक्यानां श्री भगवत्येव तात् पर्यमिति श्री मधुसूदन सरस्वती व्याख्यानाच्च ॥ २२ ॥

---

## सिद्धान्तप्रदीपः

तद्धि स्वयंवेदभवानित्यत्रहेतुमाह त्वमितिहे अमोघदृक्परमात्मनः कलामजमात्मानंजगतः शिवायकल्याणायप्रजातमवेहि तस्यैप्रयोजनायजगतः कल्याणायमहानुभावाभ्युदयःपरमात्मनःपराक्रमः अधिगणयताम्अधिकंनिरूप्यताम् ॥ २१ ॥

अहंपुरातीतभवेऽभवंमुनेदास्यास्तुकस्याश्चनवेदवादिनाम् ।
निरूपितोवालकएवयोगिनांशुश्रूषणेप्रावृषिनिर्विविक्षताम् ॥ २३ ॥
तेमय्यपेताखिलचापलेर्भकेदांतेऽधृतक्रीडनकेऽनुवर्तिनि ।
चक्रुः कृपांयदयपितुल्यदर्शनाः शुश्रूषमाणेमुनयोऽल्पभाषिणि ॥ २४ ॥

### सिद्धांतप्रदीपः ।

हरिपराक्रमश्रवणेनजगतःकल्याणंभवतीतिदर्शितंमच्युततद्वर्णयितुरपितपआदिसर्वसफलंस्यादित्याह इदमिति अविच्युतः अस्खलित अर्थः फलम् ॥ २२ ॥

---

### भाषा टीका ।

हे अमोघ दृक् ? आप अपनेको परम पुरुष परमात्माकी कला जानों अजन्मा होकर भी जगत के मंगल के निमित्त तुमने जन्म लियाहै अतएव महानुभाव भगवानके अभ्युदय अर्थात् लीला गुणों के उत्कर्ष को वर्णन कीजिये ॥ २१ ॥

पुरुष के तपका श्रुत अर्थात् वदादि शास्त्रों के श्रवण का स्विष्ट अर्थात् यथा विहित यज्ञादि कर्म का सूक्त अर्थात् अच्छी उक्तिका बुद्धिका और दानका अविच्युत अर्थ कवियोंने यही निरूपण कियाहै कि जो उत्तम श्लोक भगवानके गुणोंका वर्णन कियाजाय ॥ २२ ॥

---

### श्रीधर स्वामी

सत्संगतोहरिकथाश्रवणादिफलंस्ववृत्तान्तेनप्रपञ्चयति अहमिति अहंपुरापूर्वकल्पेअतीतभवेपूर्वजन्मनिवेदवादिनांदास्याःसकाशात्अभवंजातोऽस्मि । निरूपितःनियुक्तःक्व योगिनांशुश्रूषणेप्रावृषिवर्षोपलक्षितचातुर्मास्येनिर्विविक्षांनिवेशमेकत्रवासंकर्तुमिच्छताम् ॥ २३ ॥

अपेतानिअखिलानिचापलानियस्मात्तस्मिन्दान्तेनियतेन्द्रिये । अधृतक्रीडनकेत्यक्तक्रीडासाधनकेअनुवर्तिनिअनुकूले ॥ २४ ॥

---

### श्रीवीरराघवः

ननुभगवद्गुणवर्णनादेरपितपआदितसत्क्रियारूपत्वंनस्वतःपुरुषाराधनत्वादविच्युतार्थत्वमस्येतिचेत्तत्प्रतिवक्तुंतत्रदृष्टांततयास्वस्यपौर्वदैहिकंवृत्तांतमाह अहमित्यदिनायावत्समाप्ति हेमुनेपुरापूर्वस्मिन्कल्पेऽतीतभवेजन्मन्यहंकस्याश्चिद्वेदवादिनांदास्याअभवंपुत्रआसमित्यर्थः वेदवादिनांगृहेषुप्रावृषिवर्षतौनिर्विविक्षतांनितरांवेष्टुंप्रवेष्टुमिच्छतांचातुर्मास्यदाक्षांप्रवेष्टुमिच्छतांयोगिनांसंन्यासिनां शुश्रूषणेनिमित्तेशुश्रूषणार्थंवालकएवसन्नहं वेद वादिभिर्निरूपितःनियोजितोस्मात्यर्थः ॥ २३ ॥

ततःकिमतआह तेमयीतियद्यपितेयोगिनस्तुल्यदर्शनाःसमदर्शिनस्तथापिमयिकृपांचक्रुःकृपाकरणेहेतुंवदन्मांविशिनष्टिअर्भकेबालेऽथाप्यपेतत्यक्तमखिलंचापलंनैद्ययादिकंयेनअधृतक्रीडनकेइतिच्छेदःअधृतान्यपरिगृहीतानिक्रीडनकानिबालक्रीडासाधनानिभावेवाल्युक्रीडायेन अनुवर्तिनिअनुकूलेशुश्रूषमाणेतदनुशासनश्रुश्रूषापूर्वकसेवांकुर्वत्यल्पभाषिणिमितभाषिणि ॥ २४ ॥

---

### श्री विजयध्वजः

इदानींहरिकथाश्रवणादिशिवकरमितिवक्तुंस्वातीतजन्मकथनपूर्वकंस्वस्यभागवतसंगतिप्रकारमाह अहमिति पुराशब्दस्यातीतकालसामान्यवाचित्वेननिश्चयानुदयात्तदर्थमतीतेत्युक्तं अनंतरातीतजन्मनीत्यर्थः तुशब्दस्तरदासीजातिवैशिष्ट्यद्योतनार्थः योगिनांसंन्यासिनां कप्रत्ययःप्रशंसायां लौल्यादिदोषरहितोवालःप्रावृषिवर्षाकालेनिर्विविक्षतांएकत्रस्थितिमिच्छताम् ॥ २३ ॥

शिष्यगुणानतेषांप्रवृत्तिमाह तइति निरस्तसमस्तचंचलस्वभावेजिह्वादीन्द्रियनिग्रहवति अतएवनिरस्तबालक्रीडासाधनेअनुकूलवर्तिनि परिचरति अत्यल्पबालविग्रहधारिणिमयितेयोगिनोऽनुग्रहलक्षणांकृपांचक्रुरित्यन्वयः किंविशिष्टास्तुल्यदर्शनाः यद्यपितुल्यंगुणक्रियारूपैःसमंब्रह्मपश्यंतःयथास्थितवस्तुदर्शिनोवातथापीतिशेषः ॥ २४ ॥

---

## सुबोधिनी ।

एवं सामान्यत उपदेशमुक्त्वा आदिसाधनमारभ्य फलपर्यंतं पदार्थानां क्रमं वक्तुं निदर्शनेन स्वचरित्रमाह सप्तदशभिः । अहमिति । अतिहीनस्यात्युत्कृष्टपदप्राप्तिरस्मिन्नेव मार्गे न मार्गांतरइति शापेनशूद्रत्वं प्राप्तस्य देवर्षित्वं निरूप्यते । अतीतभवे पूर्वजन्मनि नैकट्यभ्रमव्यावृत्त्यर्थं पुरेति । एतज्जन्मनोऽजरामरत्वख्यापनाय । मुनइत्युक्तविश्वासाय संवादात् । पितृनाम न गृहीतं तदानीमज्ञानात् पितुर्हीनत्वख्यापनाय वस्तुतस्तुब्राह्मणाः । अन्यथा अनुमोदनादिकं न संभवति कस्याश्चिदप्रसिद्धायाः अन्यथाआदरः संभवेत्ततो बंधः । अनेनास्मिन्मार्गे यथा यथा निरादरत्वं तथा तथा कार्यसिद्धिरिति । वेदवादिनः श्रोत्रियाः । अनेन भगवन्मार्गापरिज्ञानमुक्तम् । आश्रमिणांसंन्यासिनामयं धर्मः यन्मासाष्टकं कीटवत्पर्यटनं विधाय आषाढ्यां यत्र गच्छंति तत्र ब्राह्मणनिर्मितविविक्तस्थाने तिष्ठंतीति । तथा दैव योगान्नारदस्थितिगृहे प्रार्थनया ब्रह्मणानुज्ञया भाविसनकादयश्चत्वारः परमहंसाः स्थिताः । अपृथग्धर्मशीलत्वाच्चतुर्णांसंगः । योगनिष्ठा श्च । अतः सेवापेक्षा । तेषां शुश्रूषणार्थं ब्राह्मणैरेवाहं निरूपितस्त्वमेतेषामेव सेवां कुरु नान्यत्किंचिदिति नियुक्तः मत्स्वरूपमज्ञात्वाऽपि बालक एव नियुक्तः योगिनांशुश्रूषार्थं "स्थास्यामश्चतुरोमासानिति,, मासचतुष्टयमेकत्रैव नितरां वासमिच्छताम् । एवमेकेन सत्संगश्च उक्तः सेवार्थं सत्संग इति प्रथमं साधनम् ॥ २३ ॥

ततस्तेषांकृपामाह । ते मयीतिसत्सेवकयोर्गुणदोषाभावा अत्र निरूप्यंते । सतां गुणत्रयं कृपालुत्वं ब्रह्मविद्या मननं चेति धर्मोज्ञानं साधनं चोक्तम् । अग्रे साधन कथनं ज्ञानानुवृत्तये । सेवकस्यदोषाभावास्त्रयः गुणाश्चत्वारः । चपलतादोषः । तद्देहेंद्रियांतः करणानां प्रयत्नदार्ढ्याभावात् चपलतादोषः सहजः स आदौ दृढ प्रयत्नेन निवारणीयः । तदाह । अपेतानि अखिलानि चापलानि यस्मादिति । अर्भकत्वंदीनत्व बोधको गुणः । तदनु दोषाभावद्वयमाह । दांते अधृतक्रीडनके इति । इन्द्रियाणां विषयाकांक्षाराहित्यकरणंदमः । नधृतानि क्रीडनकानियेन इन्द्रियकालकृतौ नियतौ दोषौ विषयसंबंधः क्रीडासाधनपरिग्रहश्च । तदभावे सर्वदोषनिवृत्तिः । ततोंतरंग गुणमाह । अनुवर्तिनीति । एवं स्वतः पंचसु संपन्नेषु तेषां परदुःखप्रहाणेच्छाजाता । परदुःखं दृष्ट्वा दुःखितस्य कारुणिकस्य तन्निदानोच्छेदने तृष्णा भवतीति । नन्वेतद्ब्रह्मविदोऽनुचितं तत्राह । यद्यपि तुल्यदर्शना इति । निर्दोषं हि समं ब्रह्म तुल्यशब्दवाच्यम् । ब्रह्मज्ञानकृतं वा । स्वपरयोः सुखदुःख समत्वज्ञानं तुल्यं तस्य दर्शनं येषामिति परदुःखं दृष्ट्वा तत्प्रहाणेच्छैव जाता । न ज्ञानमन्यथा जातमित्यर्थः । दुर्बलत्वादिच्छामूलभूतज्ञानस्य । ननु कार्यक्षमा कृपा न भविष्यति बाधकज्ञानस्य विद्यमानत्वादत आह शुश्रूषमाण इति । सेवायाः सेच्छायाः सेव्यवश्यत्वं सर्वजनीनम् । नन्वनपेक्षायाः कथं वश्यताहेतुत्वं तत्राह । मुनय इति । मननबाधकनिवर्तिका सेवाऽपेक्ष्यतएव सेवायां सांसर्गिको दोषो बहुभाषणं अभाषणं वा । तदुभयनिवर्तिको गुणः अल्पभाषणम् । अनेन निर्दुष्टा सेवा द्वितीयं साधनमिति ॥ २४ ॥

---

## श्रीविश्वनाथचक्रवर्त्ती ।

यादृच्छिकी भगवद्भक्तकृपैव शुद्धाया उक्तलक्षणाया भक्तेर्हेतुर्नान्यत्तपआदिकमिति वक्तुं स्वपूर्ववृत्तान्तमाह अहमिति । पुरा पूर्वकल्पे अतीतभवे पूर्वजन्मनि वेदवादिनां कस्याश्चन दास्याः सकाशादभवं जातोऽस्मि । प्रावृषि वर्षाकाले निर्विविक्षतां निर्वेशं एकत्र वासं कर्तु मिच्छतां योगिनां तत्रान्वहं कृष्णकथाः प्रगायतामित्यग्रे वक्ष्यमाणत्वाद्भक्तियोगवतां शुश्रूषणे निरूपितः नियुक्तोऽस्मि ॥ २३ ॥

दान्ते नियतेन्द्रिये । अधृत क्रीडनके बाल्योचित क्रीडनमप्य कुर्वति । यद्यपि ते तुल्य दर्शनाः सुशीलेषु दुःशीलेषु च सत् कुर्वत्सु तिरस्कुर्वत्सु च सदाचारेषु असदाचारेषु च जगज्जनेषु यद्यपि समदृश्यः कोवा तेषा मनुग्राह्यः कोवा निग्राह्य स्तदपि मयि कृपांचक्रुः सर्वत्र साम्येऽपि महत्सु भरत प्रल्हादादिषु कृपाया वैषम्य दर्शनादितिभावः । अत्र मतसौ शील्यानु वृत्त्यादिक मनपेक्ष्यैव प्रथमं कृपां चक्रुः ततश्च तत् कृपाजन्य सौशील्यानु वृत्त्यादिकं पुनरपितेषां कृपातिशय स्यैव कारण मभूदिति तेषां निरुपाधिकरुणत्व मवश्यमेव व्याख्येयम् । ते यद्यपितुल्यदर्शनास्तदपिअचापल्यादिगुणविशिष्टे मयिकृपांश्चक्रुरितिव्याख्यानेगुणदोष दर्शनप्रसक्त्या तेषां तुल्यदर्शनत्व व्याहन्येत प्रथम कृपायाश्च निरुपाधित्वं नस्यादिति तथा व्याख्यायेम् । कृपाहि द्विधा गुणमयी निर्गुणाच तत्राद्यासर्वेषां सांसारिकाणामपि सर्वेषु गुणोपाधिका यथा संभवं भवेत् गुणापाये तदपायश्च दोषे द्वेषादयश्च । द्वितीयातु निस्तीर्ण संसाराणां तादृशानां परम भक्ति मतां निरुपाधिकैव सर्वत्र साम्येन मायिकं कमपि गुण मनपेक्ष्य । गिरियो मुमुक्षुस्तोयं काचिन्न मुमुक्षुः शिवम् । यथा ज्ञानामृत काले ज्ञानिनोददते न वेति शुकोक्त न्यायेन कदाचित् कमपिजनं विषयी करोति । साक्षन्तः करणस्य गुण कृताया: कठोरताया भगद्भक्त्यैव ध्वंसे सति तयैव द्रवी भाव मापादिते तत्रैवान्तः करणे आविर्भवेत् यदुक्तं रुचिभिश्चित्तमासृणय कृदसौ भाव उच्यते इति । एवं सतां कृपा महत्सेवा श्रद्धा गुरु पदाश्रय इति भूमिकाच तुष्टयं सूचितम् ॥ २४ ॥

---

## सिद्धांतप्रदीपः ।

[illegible] श्रवणादिनैवकल्याणंभवतीतिस्ववृत्तांतनदर्शयातिभगवान्नारदः अहमिति । पुरापूर्वकल्पे अतीतभवेपूर्वजन्मनिदास्याः तत्संगलब्धेनहरिकथाश्रवणादिनैवकल्याणं [illegible] सकाशादभवम् तदानिर्विविक्षतांनिर्वेशंकर्तुमिच्छतांयोगिनांभक्तियोगादिनिष्ठानां मोक्षधर्मे आचार्यांमोक्षशास्त्रस्येत्यादिनाप्रसिद्धानांछांदोग्यादौ सनत्कुमारकल्पादौ चतास्वगुरुत्वेनप्रसिद्धानांस्वशिष्यशापाक्रांतमुक्तुमागतानाम् गृहस्वामिभिर्वेदवादिभिर्निरूपितोऽस्मि ॥२३॥२४॥

---

१ २
उच्छिष्टलेपाननुमोदितोद्विजैः सकृत्स्मभुंजेतदपास्तकिल्बिषः ।
एवंप्रवृत्तस्यविशुद्धचेतसस्तद्धर्मएवाभिरुचिः प्रजायते ॥ २५ ॥
तत्रान्वहंकृष्णकथाः प्रगायतामनुग्रहेणाशृणवंमनोहराः ॥
ताः श्रद्धयामेऽनुपदंविशृण्वतः प्रियश्रवस्यंगममा भवद्रतिः ॥ २६ ॥

भाषा टीका ।

हे मुने पहले कल्प में अतीत जन्म में वेदवादी ब्राह्मणों की किसी दासी से उत्पन्नहुआ था, और उस ने मुझ बालक ही को चातुर्मास्य में एकत्र निवास करने वाले योगियों की शुश्रूषा में निरूपण करदिया ॥ २३ ॥

यद्यपि वे मुनि तुल्य दर्शी थे तथापि मुझपर कृपा की क्योंकि मैं शुश्रूषा करता था. चंचलता से अपेत था बालक तौ था पर दान्त था खिलौनाओं से नहीं खेलता था उन मुनियों का अनुवर्ती था और अल्प भाषण करता था ॥ २४ ॥

---

श्रीधरस्वामी ।

उच्छिष्टस्य लेपान् भिक्षापात्रलग्नान् तैर्द्विजैरनुज्ञातः सन् भुञ्जे स्म । तेन भोजनेन अपास्तकिल्बिषो जातोऽस्मि । तेषां धर्मे परमेश्वर भजने एव आत्मनो मनसः रुचिः प्रजायते स्मेत्यनुषङ्गः ॥ २५ ॥

अशृणवं श्रुतवानस्मि । मे श्रद्धया ममैव स्वतःसिद्धया न त्वन्येन वलाज्जनितया अतो ममेत्यस्यापौनरुक्त्यम् । अनुपदं प्रतिपदम् । प्रियं श्रवो यशो यस्य तस्मिन् ॥ २६ ॥

---

श्रीवीरराघवः ।

कृपाफलंवदन्नात्मानंविशिनष्टिउच्छिष्टेति । द्विजैर्योगिभि रनुमोदितःतैर्दत्तानुच्छिष्टलेपान्भुक्त्वा वशिष्टान्नादीन्सकृद्भुंजेस्मभुक्तवानस्मितेनभोजनेनापास्तानिकिल्बिषाणिभागवतधर्मरुचिप्रतिबंधकानियस्यतथाभूतआसंएवंभागवतशुश्रूषणेप्रवृत्तस्यातएवविशुद्धंभागवतधर्मरुचिप्रतिबंधरहितंचेतोयस्यतस्यप्रमतद्धर्मएवात्मन्यंतःकरणेरुचिःप्रजायतेप्राजायत ॥ २५ ॥

तत्रात्मरुचौजातायांसत्यामन्वहमनुदिनंकृष्णस्यभगवतःकथाःस्यप्रगायतांकथयतांयोगिनामनुग्रहेणमनोहराःमनोज्ञाःकथाःअशृणवंश्रुतवानस्मिताः कृष्णकथाअनुसवनंत्रिकालंश्रद्धया विशृण्वतोमम अंगहेव्यासप्रियंश्रोतॄणांप्रीत्यावहंश्रवःकीर्तिर्यस्यतस्मिन्भगवतिरतिरनुरागोऽबद्धभूव ॥ २६ ॥

---

श्रीविजयध्वजः ।

कितरुछुषाकर्मोतितत्राह उच्छिष्टेति ब्रह्मकुलोद्भवानामेवचतुर्थाश्रमइति प्रकाशनायद्विजैरितिकथितं । उच्छिष्टपात्रोद्धरणेगोमयोदकेनमार्जनंवातत्स्थलेलेपनंतत्रानुज्ञातः नहिशूद्रस्यतदनुज्ञानाभावेउच्छिष्टस्पर्शनंसुतरांतद्भक्षणंवाशक्यं-लिप्यंतेउपदिश्यंतेसिध्यंतेप्राणाएतैरितिलेपाओदनास्तद्भक्ताःउच्छिष्टानामोदनानामदत्तंप्रत्यनुज्ञातस्यतिवा अनेनस्वशरीरयात्रानिर्वाहमाह तदनुवर्तित्वंस्पष्टमाह सकृदिति चशब्दएवार्थे यतयः सकृदेवभुंजतेतथाहमपिसकृदेवभुंजे तत्फलमाह तदिति तेनकर्मणासकृद्भोजनेनअपास्तंनिरस्तंकिल्बिषंपापंयस्यस तथा ततःकिमभूदितितत्राह एवमिति एवमुक्तप्रकारेणप्रवर्तमानस्याविशेषेणशुद्धांतःकरणस्यतेषांपरमहंसानांधर्मेविषयवैराग्यलक्षणेभगवत्कथाश्रवणाद्यभ्यासलक्षणेवा अभिरुचिरुत्कंठाप्रजायतेइत्यन्वयः संततानुवृत्तिसूचनायलट्प्रयोगः ॥ २५ ॥

अभिरुच्याकिंजातमितितत्राह तत्रेति तत्रतत्सकाशेमनोहराःकृष्णकथाअनुदिनंप्रातःसवनादनंतरंप्रगायतांकीर्तयतांपरमहंसानांअनुग्रहलक्षणानुग्रहेणअशृणवमित्यन्वयः अंगश्रीवेदव्यास तदाश्रद्धयानुसवंत्रिसंध्यमपिताःकथाविशृण्वतोमे मतिःध्यानलक्षणोपासनाप्रियश्रवसिपरममंगलकीर्तौहरावभवदित्यन्वयः ॥ २६ ॥

---

१ लेपाद्यनु = २ सकृच इति विजयध्वज सिद्धांतप्रदीपयोः पाठः ॥

सुबोधिनी ॥

ततो यज्जातं तदाह । उच्छिष्टेति । पापनाशस्तद्धर्मरुचिश्च ततोऽप्यंतरंगं साधनम् । उच्छिष्टं भोजनशेषः । लेपः पात्र्यां लग्नमध्ये चतुर्णां तानेकीकृत्य सकृद्भक्षणं पापक्षयसाधनम् । ननु " न शूद्राय मतिं दद्यान्नोच्छिष्टं न हविष्कृतमित्यादि " मनुवाक्यैर्निषिद्धमुच्छिष्टादिदानं कथं कृतवंतस्तत्राह । अनुमोदित इति । तस्यैवेयमिच्छा उत्पन्ना शुद्धसत्त्वांशसा महापुरुषोच्छिष्टेनातिपवित्रेणात्मानं पावयिष्यामीति तत उच्छिष्टं दृष्ट्वा मोदो जातस्तत्र प्रार्थनायामनुमोदनमात्रं कृतं न तु स्वयमुधम्य दत्तमिति । न चायं सर्वथा शूद्रः ब्रह्मबीजत्वात् गृहस्थानांचायं धर्मः तत्रापि साधारणेषु सेवाच पुष्टिमार्गे सस्नेहा कृपाफलं चैतत् यथौषधेनाजीर्णनिवृत्तिस्तथाऽन्नमयस्य देहस्य उच्छिष्टान्नसाधितदेहेन दोषसंतानानिवृत्ति रित्यर्थः तदाह तदपास्तकिल्बष इति उच्छिष्टभोजनैकनियमेनापि दोषनिवृत्तिर्लोकसिद्धेति स्मेत्युक्तम् । रोचकद्रव्येणारुचिनिवृत्ताविव सद्धर्मरुचिप्रतिबंधकदोषनिवृत्तौ स्वत एव रुचिजातेत्याह । एवं इति । प्रवृत्तस्येति निरंतरकरणमुक्तम् । नियमेन चित्तं शुद्धं जातमित्याह । विशुद्धचेतस इति । तेषां धर्मः अपरिग्रहसंगनिवृत्तिभगवच्चिंतनादिः । तत्र प्रेरणान्यतिरेकेण आत्मन एव रुचिरुत्पन्ना सा च शुद्धिं प्राप्तेत्यर्थः । अस्य न्यायसिद्धत्वकथनाय लट्प्रयोगः ॥ २५ ॥

एवमांतरं दोषाभावं गुणं चोक्त्वा बहिर्गुणमाह । तत्रेति । अन्वहमित्यशृणवमित्यनेन संबध्यते । परमहंसानां वा नित्योऽयं धर्म इति ख्यापयितुम् । कृष्णपदात्परमहंसा अप्येते भक्ता इति ज्ञापितम् । गानं प्रेमाधिक्यात् । प्रकृष्टज्ञानं तद्भावेन । अनुग्रहेणेत्याज्ञया श्रवणं बोध्यते न तु प्रासंगिकम् कथासनोरमपदाभ्यां अर्थमभिप्रायं ते बोधयंतीति लक्ष्यते । निर्बंधेन श्रवणाभावायाह । मनोरमा इति मनसो रमणं यासु । एवमेका श्रवणभक्तिः सिद्धा । तस्या नारदत्वपर्यंतं फलम् । ततः कीर्तनमिति । सांप्रतं तु कीर्तनम् । एवमग्रे स्मरणादिवृद्धौ तावद्भिः कल्पैः नवविधसाधनभक्तौ सिद्धायां प्रेम्णा भगवत्सायुज्यं भवतीति शास्त्रार्थः । तत्र श्रवणफलमाह । ताः श्रद्धयेति । श्रवणादीनां नादृष्टद्वारा फलसाधकत्वम् । किंतु स्वरूपेणैव । फलं च भगवद्याथार्थ्यज्ञानम् । तदेव हि कीर्त्तने अधिकारः । उत्तरस्यादिना हि पूर्वस्यावसानम् । अतः श्रवणस्य नैरंतर्यं कर्त्तव्यम् । तदाह । ताः कथाः अत्यादरेण । अनुपदमिति पदार्थाक्षरार्धसहितेन वाक्येन हि श्रवणम् । ततो भगवति रुचिः परं श्रवणद्वारा । तदाह प्रियश्रवसीति । प्रियं श्रवः श्रवणं कीर्तिर्वा यस्य । अंगेति कोमलामंत्रणमप्रतारणाय । प्रमाणबलं परित्यज्य इंद्रियाणां स्वाभाविकविषयग्रहणं रुचिः ॥ २६ ॥

---

क्रमसन्दर्भः ।

तत्रेति । कृष्णकथाः श्रीनन्दनन्दनस्य जन्मादिलीलाः । यच्छृण्वतोऽपैत्यरतिर्वितृष्णेत्यादेः प्रियं सर्व्वेषां प्रीतिविषयं श्रवः कीर्त्तिर्यस्य ॥ २६ ॥

---

श्रीविश्वनाथचक्रवर्त्ती ।

ततश्च उच्छिष्टस्य लेपान् तेषां भोजनपात्रे लग्नान् ओदनान् सकृदेकवारं भुंजे स्म । कीदृशः द्विजैस्तैस्तदर्थं मया प्रार्थितैरनुमोदितः दत्तानुज्ञः तेनैव अपास्तानि विनष्टानि किल्बिषाणि भक्तिप्रतिबंधका अनर्था यस्य सः ततश्च नित्यमेव भुक्ततदुच्छिष्टस्य मम श्रवणकीर्त्तनस्मरणात्मिका भक्तिस्तायासेनैवाभवदित्याह । एवं प्रवृत्तस्यान्यस्यापि जनस्य भक्तानामुच्छिष्टं यो भुङ्क्ते तस्य तेषामेव धर्मे श्रवणकीर्त्तनादावात्मनो मनसो रुचिः प्रकर्षेणावश्यमेव जायते । एवं भजनेषु स्पृहा भक्तिरनर्थापगमस्ततः निष्ठा रुचिरिति पञ्च भूमिका अनेन श्लोकार्थेन सूचिता ज्ञेयाः ॥ २५ ॥

ताः श्रद्धयेति श्रद्धापदेनासक्तिरिति षष्ठी भूमिका । अनुपदं प्रतिक्षणं प्रतिसुप्तिङन्तं पदं वा । मे मम प्रियं श्रवो यशो यस्य तस्मिन् प्रियश्रवसि कृष्णे मम रतिरभूदित्यतो ममेत्यस्यापौनरुक्त्यम् । कृष्णे रतिरित्येकादशी ॥ २६ ॥

---

सिद्धांतप्रदीपः ।

ततेन उच्छिष्टलेपादिना तद्धर्मभक्तियोगादौ ॥ २५ ॥

अनुसवम् त्रिकालम् प्रियश्रवसि वासुदेवे ॥ २६ ॥

---

भाषा टीका ।

उन द्विजोंकी आज्ञासे उनके उच्छिष्ट लेपको एक वेर भोजन करता था उसी से मेरा समस्त किल्बिष नाश होगया था इसी प्रकार प्रवृत्त और विशुद्ध चित्त होने से उसी धर्म में अपनी रुची होगई ॥ २५ ॥

वहां प्रतिदिन कृष्ण कथा गान करते हुए ऋषियों के अनुग्रह से मैं भी मनोहर कृष्ण कथा सुनता था श्रद्धा पूर्वक प्रति पद सुनते सुनते प्रिय श्रवा भगवान में मेरी श्री रुचा हो गई ॥ २६ ॥

तस्मिंस्तदा लब्धरुचेर्महामुने प्रियश्रवस्यस्खलिता मतिर्मम ।
ययाहमेतत्सदसत्स्वमायया पश्ये मयि ब्रह्मणि कल्पितंपरे ॥ २७ ॥
इत्थं शरत्प्रावृषिकावृतू हरेर्विशृण्वतो मेऽनुसवं यशोऽमलं ।
संकीर्त्यमानं मुनिभिर्महात्मभिर्भक्तिः प्रवृत्तात्मरजस्तमोपहा ॥ २८ ॥

श्रीधरस्वामी ।

तस्मिन् भगवति लब्धरुचेर्मम अस्खलिता अप्रतिहता मतिरभवदित्यनुषङ्गः । यया मत्या परे प्रपञ्चातीते ब्रह्मरूपे मयि सदसत् स्थूलं सूक्ष्मञ्च एतच्छरीरं स्वमायया स्वाविद्यया कल्पितं न तु वस्तुतोऽस्तीति तत्क्षणमेव पश्ये पश्यामि ॥ २७ ॥

एवं शुद्धे त्वम्पदार्थे ज्ञाते देहादिकृतविक्षेपनिवृत्तेस्तत्कारणभूतरजस्तमोनिवर्तिका दृढा भक्तिर्जातेत्याह इत्थमिति । हरेर्यशः । अनुसवं त्रिकालम् ॥ २८ ॥

---

श्रीवीरराघवः

तदातस्मिन्प्रियश्रवसिवद्धारुचिर्येनतस्यममहेमहामतेप्रियश्रवसिमतिरस्खलितास्थिरावभूव अस्खलितांमतिंविशिनष्टि ययामत्या परे ब्रह्मणिपरब्रह्मधार्येमयिवर्तमानमेतत्सदसत्कार्यकारणात्मकंजगत्स्वमाययास्वसंबंधिन्याप्रकृत्याकल्पितंनिष्पादितंनतुस्वतइत्यर्थः पश्येदृष्टवा नस्मि"तद्यथारेषुनेमिरर्पितानाभावराअर्पिताएवमेवैताभूतमात्राः प्रज्ञामात्रास्वर्पिताःप्रज्ञामात्राःप्राणेर्पिताः जीवभूतांमहाबाहोययेदंधार्यते जगत् "इत्युक्तप्रकारेणप्रकृतिश्चेतनधार्याचेतनःपरमात्म धार्यइतिदेहात्मभेदमात्मपरमात्मसंबंधंचज्ञातवानस्मीत्यर्थः ॥ २७ ॥

इत्थंशरत्प्रावृषिकौशरत्प्रावृषौऋतूअनुसवममलंमहात्मभिर्मुनिभिःसंकीर्त्यमानंहरेर्यशोविशृण्वतोममात्मनियेरजस्तमसीतयोरपहंत्री भक्तिःप्रवृत्तावभूव ॥ २८ ॥

---

विजयध्वजः

अखंडस्मरणोपासनाफलमाह तस्मिन्निति रागाद्यवद्यैरनुपहतत्वा दस्खलितानिरंतरंस्थिरतयाऽखंडोपासनमभवदित्यन्वयः अहंय-याऽखंडोपासनयाएतत्सदसत्कार्यकारणात्मकंजगन्मयिस्थितेबिंबभूतेब्रह्मणिपूर्णेहरौतत्सृष्टंतत्पालितंतत्संहृतंचेतिपश्ये कथंभूतंस्वमाययास्वेच्छयामदनुग्रहाभिमुख्यायत्रस्थीयतामितिकल्पितंसंकल्पितमित्यन्वयः ॥ ब्रह्मण्यध्यस्तंजगत्पश्यइत्यर्गीकारेमिथ्याज्ञानित्वंप्रसज्जते नहिशुक्त्यध्यस्तरजतंपश्यन्यथार्थज्ञानीभवति किंतुनेदंरजतंशुक्तिरेवेतिपश्यंस्तथानेदंजगत्किंतुब्रह्मैवेति नचात्रतथेत्यलमतिप्रसंगेन ॥ २७ ॥

भक्त्युपासनयोरन्योन्यनिमित्तकभावोस्तीत्यभिप्रेत्याह इत्थमिति इत्थमुक्तप्रकारेणमुनिभिःसम्यक्कीर्त्यमानममलंहरेर्यशअनुसवंनेशरत्प्रावृषिकावृतूविशेषेणशृण्वतोममहरौतदितरविरागवती आत्मनोमनसोरजोगुणतमोगुणनिमित्तरागाद्यन्यथाज्ञानादिदोषहरणमहत्त्वज्ञान लक्षणाभक्तिःप्रवृत्ताभूदित्यन्वयः ॥ २८ ॥

---

सुबोधिनी

ततः किमत आह । तस्मिन्निति । रुच्या हि भगवदनुभवार्थं यत्नो लोकसिद्धः । स च यत्नो ज्ञानात्मक इति तदाह रुचेः फलस्य कालांतरत्वं व्यावर्तयति । तदेति । रुचेर्दृढत्वायलब्धेति महामुने इति संबोधनं कृचिमत्योर्नियमार्थं प्रोषितभर्तृकावदभिध्यानमत्र मतिः शास्त्रतो वा याथार्थ्यज्ञानम् । तत्र स्खलनं विषयांतरानुसंधानं संदेहो वा तदुभयं नास्तीत्यस्खलिता । तत्रापि श्रवणपुरःसरेणेति प्रिय-श्रवसीत्युक्तम् । "योयच्छ्रद्धः स एव सः " इति वाक्यात् परमश्रद्धायामुत्पन्नायां सफलरुचिरूपायां तत्त्वमावश्यकमिति तदाह । यया-ऽहमिति । प्रथमाधिकारार्थमाह । यया मत्या अहमेव ब्रह्म मय्येवसकलं जातं परे मायया परिकल्पितम् । एतत्स्थूलसूक्ष्मं शरीरं जगच्च मायया पूर्वोक्तया । अस्य जगतः प्रतीतिमात्रस्य अहं ब्रह्माधिकरणं मायाकरणमिति ज्ञातवानित्यर्थः । प्रपंचव्यतिरिक्ततया ब्रह्मात्मा-नुभवो जात इति यावत् ॥ २७ ॥

एवं भगवद्भावमापन्नस्य निरंतरमनुवर्तमानश्रवणेन ज्ञानभक्त्योः परमस्नेहो जात इत्याह इत्थमिति । श्रवणस्य भेदांतरपरि-संतीति तन्निवृत्त्यर्थमित्थमिति शरत्प्रावृषिकावृतू मासचतुष्टयं पंचकं वा । देहादिक्लेशस्यास्फुरणमाह । हरेरिति विशेषणं शृण्वत इति श्रवणानुवृत्तिः न यतः कुतश्चित् तथा सति निरंगत्वात् फलं न साधयेत् । अतो मुनिभिर्महात्मभिः संकीर्त्यमानमिति । मुनिभि-रिति स्वफले श्रवणवत् मननं ज्ञानसाधनम् । कीर्तनानुवृत्त्यर्थं महात्मभिरिति । " महात्मानस्तु मां पार्थेति " श्लोकद्वयार्थोऽत्रानु-संधेयः । सा भक्तिः स्पर्शमणिरूपा जातेत्याह । आत्मरजस्तमोपहेति अंतःकरणंवस्तुवेद्यरूपं जातमित्यर्थः ॥ २८ ॥

---

तस्यैवं मेऽनुरक्तस्यप्रश्रितस्यहतैनसः ।
श्रद्दधानस्यबालस्यदांतस्यानुचरस्यच ॥ २९ ॥
ज्ञानं गुह्यतमं यतत्साक्षाद्भगवतोदितं ।
अन्ववोचन् गमिष्यंतः कृपया दीनवत्सलाः ॥ ३० ॥

क्रमसन्दर्भः ।

ततश्च स्वस्मिन् भगवति चापरमार्थारोपस्य मृषात्वदर्शकः परमपरमार्थतदीयस्वरूपरूपगुणचिन्तनावेशो जात इत्याह तस्मिन्निति द्वाभ्याम् यया मत्याहमेतत् सदसद्व्यष्टिसमष्ट्यात्मकं यज्जगत् तद्व्यष्ट्यंशं मयि जीवरूपे स्वविषयकभगवन्मायया कल्पितं पश्ये । परे ब्रह्मणि तु समष्ट्यात्मकं तया कल्पितं पश्ये ज्ञातवानस्मि । तत्र तत्सम्बंधः पुनर्मम नास्फुरदेवेत्यर्थः ॥ २७ ॥

ततः किं वृत्तमित्याशंक्याह इत्थमिति । या पूर्व्वोक्ता रजस्तमोऽपहा मतिरूपा भक्तिः सैव प्रवृत्ता । नदीव प्रकर्षेण मुहुर्वर्त्तमाना भूदित्यर्थः ॥ २८ ॥

श्रीविश्वनाथचक्रवर्त्ती ।

लब्धरुचेर्लब्धास्वादविशेषस्य स्खलनशून्या मतिरभूत । स्वमायया हेतुनामयि वर्त्तमानं यदेतत् स्थूलं सूक्ष्मञ्च शरीरं तत् यया मत्या परे ब्रह्मणि श्रीकृष्णे विषये एव कल्पितं पश्ये पश्यामि । कल्पितं क्लृप्तीकृतं स्थापितमिति यावत् । तथाहि स्थूलं शरीरं भगवज्जलकलसवहनदण्डवत्प्रणामादौ न तु स्वीये व्यावहारिके कापि कृत्ये । सूक्ष्मं श्रवणनयनमनोबुद्ध्यादिकं तदीयगुणरूपमाधुर्य्यास्वादादावेव कल्पितं नतु वैषयिके कापि स्वभोग्ये वस्तुनि इति । पश्ये इति यत् पूर्व्वं बह्वायासेनापि भगवति क्लृप्तं नासीत् तदैव मनोनयनादिकं रतौ जातायां स्वं स्वं बहुकालाभ्यस्तमपि विषयं त्यक्त्वा तत्रैव क्लृप्तमिति साक्षादनुभवामीत्यर्थः ॥ २७ ॥

ऋतुद्वयं व्याप्य । अनुसवं प्रतिसमयम् । भक्तिः प्रेमा । आत्मनां जीवमात्राणामपि रजस्तमसी अपहंतीति सा । तदा तां भगवद्भक्तिं दृष्टवतामन्येषामपि रजस्तमसोर्नाशोऽभूदित्यर्थः भूमिकेयं द्वादशी । ततो दर्शनसाक्षान्माधुर्य्यानुभवावुत्तराध्याये वक्ष्येते ॥ २८ ॥

सिद्धान्तप्रदीपः

अस्खलिताऽविचलाममतिर्बभूव ययामत्यामपिध्यातरिविस्फुरमाणेपरेध्येयेब्रह्मणिजगत्कारणेभगवति एतत्सदसत् स्थूलसूक्ष्मात्मकम् स्वमाययास्वकीययाप्रकृत्याभगवच्छक्त्याकल्पितंनिष्पादितं पश्येदृष्टवानस्मि ॥ २७ ॥ ॥ २८ ॥

भाषाटीका ।

हे महा मुने उन भगवान में जब मैं लब्ध रुची हुआ तब प्रिय श्रवा भगवान में मेरी अस्खलिता मती होगई कि जिसके कारण से इस समस्त सद सत जगत को अपने में और परब्रह्म स्वरूप में माया कल्पित देखता हूँ ॥ २७ ॥

इस प्रकार वर्षा और शरद् ऋतू में त्रिकाल महात्मा मुनि गणों के कीर्तित हरि भगवान के निर्म्मल यश सुनते सुनते आत्मा के र जो गुण तमो गुण को नाश करने वाली भक्ती मुझको प्राप्त होगई ॥ २८ ॥

श्रीधरस्वामी ।

तस्यैवमिति । तस्य ज्ञातशुद्धत्वम्पदार्थस्य दृढभक्तिमतो मे । प्रश्रितस्य विनीतस्य ॥ २९ ॥

गुह्यतममिति ॥ साधनभूतधर्म्मतत्त्वज्ञानं गुह्यम् । तत्साध्यं विविक्तात्मज्ञानं गुह्यतरम् । भगवतोदितं भागवतशास्त्रम् । अन्ववोचन् उपादिष्टवंतः ॥ ३० ॥

तदेव ज्ञानं पूर्व्वोक्तत्वम्पदार्थज्ञानाद्विविक्तं दर्शयति येनैवेति । अविदं ज्ञातवानहम् ॥ ३१ ॥

तत्साधनं धर्म्मरहस्यंच सूचितमित्याह एतमिति । तापत्रयस्य आध्यात्मिकादेश्चिकित्सितं भेषजं तन्निवर्त्तकं सत्यसाधकमिति यावत् । किं तत् । भगवति भावितं समर्पितं यत् कर्म्म तत् कथम्भूते भगवति ईश्वरे सर्व्वनियन्तरि एवमपि च ब्रह्मणि अप्रच्युत पूर्णरूपे ॥ ३२ ॥

येनैवाहं भगवतो वासुदेवस्य वेधसः ।
मायानुभावमविदं येन गच्छंति तत्पदं ॥ ३१ ॥
एतत्संसूचितं ब्रह्मन् स्तापत्रय चिकित्सितं ॥
यदीश्वरेभगवतिकर्मब्रह्मणिभावितं ॥ ३२ ॥

श्रीवीरराघवः

तस्यप्रवृत्तभक्तेरनुरक्तस्यबालस्यापिप्रश्रितस्यावि·ीतस्यहतमेनः पापंयस्यश्रद्धायुक्तस्यदांतस्यजितेंद्रियस्यानुचरस्यानुधार्तेनोमेम-ह्यम् ॥ २९ ॥

यद्भगवतासाक्षादुदितंज्ञानंतद्ग्रामिष्यंतःगंतुमुद्यतादीनवत्सलाःयेगिनःकृपयाऽनवोचश्नुपादिदिशुरित्यर्थः ॥ ३० ॥

ज्ञानंविशिनष्टि येनज्ञानेनाहंभगवतोवेधसः विश्वविधातुर्वासुदेवस्यमायानुभावंत्रिगुणात्मिकप्रकृतिमहिमानमविदंज्ञातवानस्मिअनेनवि विरोधिस्वरूपज्ञानमुक्तंयेनचज्ञानेनतस्यवासुदेवस्यपरंस्थानंगच्छंतिअनेनप्राप्यप्रापकविषयज्ञानमुक्तंअर्थपंचकज्ञानमुपादीदिशुरितिफलितं॥३१

तदेवंस्वपूर्वजन्मवृत्ततदृष्टांतेनभगवद्गुणश्रवणादेस्तद्भक्तियोगसाधनत्वमुक्तं भक्तियोगस्यशश्वद्ब्रह्मभर्तत्वंपूर्वमेवप्रतिपादितं धर्मकृतेऽनुशासतःस्वमावरक्तस्येत्यनेनत्रैवर्गिककर्ममूलकतापत्रयाभिहतजनोद्देशेनपुनस्त्रैवर्गिकधर्मानुशासनंतापत्रयनिमित्तधर्मार्थत्वेननिंदितमित्युक्तं तेनेश्वरेनचार्पितंकर्मेत्यनेनचानाभिसंहिताफलस्यकर्मणोभक्तियोगनिष्पादनद्वारातापत्रयनिवृत्तिहेतुत्वंवदंस्त्रैवर्गिकस्यकर्मणः पुनःपुनःतापत्रयहेतुत्वमेवसदृष्टांतमुपपादयति । एतदितित्रिभिःहेब्रह्मंस्तापत्रयचिकीत्सितंतापत्रयप्रतीकारमित्यर्थःतदेतदेवसंसूचितंश्रुतिस्मृत्यादिभिरितिशेषःकिंयत्ब्रह्मणिईश्वरेभगवतिभावितंसमर्पितंकर्मेतिईश्वरार्पितंकर्मैवतापत्रयचिकित्सितमितिसूचितमित्यर्थः"धर्मेणपापमपनुदतिअविद्ययामृत्युंतीर्त्वेत्यादिकाश्रुतिःस्मृतिश्च"यज्ञदानतपःकर्मपावनानिमनीषिणांइत्यादिकातापत्रयंहिपापमूलकंअनभिसंहितफलेनकर्मणापापेनिवृत्तिभक्तियोगनिष्पत्तिद्वारातापत्रयंनिवर्त्ततइतिश्रुतिस्मृतिभिःसूच्यते ॥ ३२ ॥

---

श्रीविजयध्वजः ।

ननुसद्गुरूपदेशमंतरेणकेवलंयशःश्रवणेनैवकथंज्ञानोदयइतिचेत्तत्राह तस्येति ॥ २९ ॥

गमिष्यंतश्चतुर्मास्यानंतरम् ॥ ३० ॥॥ ३१ ॥

एतन्मयोक्तंज्ञानंतापत्रयात्मकसंसारनिवर्तकौषधंसमीचीनंसूचितंलोकस्येतिशेषःतस्मादेतादृशंज्ञानमेवापाद्यमितिभावःतर्हिकर्मकरणं व्यर्थमितितत्राह यदीति यायजूकैःक्रियमाणमग्निष्टोमादितदपियदिब्रह्मणिअपरिच्छिन्नगुणेईश्वरेईशादपिपरेहरौभावितमर्पितंतर्हिज्ञानमुत्पद्यते तेनतापत्रयचिकित्सितं एदुक्तंभवति ब्रह्मार्पणबुद्ध्याक्रियमाणेनकर्मणाशुद्धांतः करणस्यविषयविरक्तिद्वाराभगवतितीव्रयाभक्त्याजनितापरोक्षज्ञानेनतापत्रयात्मकः संसारोनिवर्ततइति यत्ब्रह्मणिभावितंयत्कर्मतदेतत्तापत्रयचिकित्सितंसंसूचितमित्येकान्वयो-वा ॥ ३२ ॥

---

क्रमसंदर्भः ।

तस्येति युग्मकम् । एतदनन्तरं परमरहस्यमन्यदप्युपदिदिशुरित्याह ज्ञानमिति । ज्ञानविज्ञानादिसम्वलितं चतुःश्लोकीरूपमित्यर्थः । तस्य रहस्याख्यभक्त्येकतात्पर्यत्वादिति भावः । साक्षाद्भगवतोदितमिति पुरा मया प्रोक्तमजायेत्यादिकं स्मारयति । गुह्यतमं ब्रह्मज्ञानादपि रहस्यतम ॥ २९ ॥ ३० ॥

अविदं हेयत्वेन ज्ञातवानस्मि । स्वमते मायाशब्दस्य चिच्छक्तियाचित्वे तूपादेयत्वेन । तत्पदं तस्य चरणारविन्दं गच्छन्ति परमप्रीत्या साक्षात् कुर्व्वंति । इमं स्वानिगममित्यादिवक्ष्यमाणात् श्रीनारदत्वप्राप्तौ तत्फलपराकाष्ठादर्शनाच्च ॥ ३१ ॥

तदेवं स्वचरितद्वारा सर्व्वनिरपेक्षमहद्द्वारकश्रीभगवद्यशःश्रवणमेव परमश्रेयस्त्वेनोक्तम् । तत्र यत् पूर्व्वम् इदं हि पुंसस्तपसः श्रुतस्येत्यादिना तपआदिजन्यमुत्तमःश्लोकगुणानुवर्णनमुक्तं तत्तु तस्य तदासक्तानां तद्द्वाराविर्भावित्वमेवेति ज्ञापितम् । अथ तस्य तदप्युपपादयितुं सामान्यतस्तावन्निर्विघ्नपरमतत्वाविर्भावे समर्पितस्य कर्म्मणो माहात्म्यमाह एतदिति त्रिभिः । संसूचितं शास्त्रैः । ईश्वरः परमात्मा तस्मिन् वा भगवति वा ब्रह्मणि वेत्यर्थः ॥ ३२ ॥ ३३ ॥

---

### श्रीविश्वनाथचक्रवर्त्ती ।

तस्यैवम्भूतस्य मे मम उत्पन्नप्रेमभक्तेः । साक्षाद्भगवता देवकीनंदनेन उदितम् । ज्ञायतेऽनेनेति ज्ञानं ज्ञानशास्त्रम् । तच्च केवलज्ञानप्रधानात् भक्तिमिश्रज्ञानप्रधानं शास्त्रं गुह्यम् । ततोऽपि ज्ञानमिश्रभक्तिप्रधानं गुह्यतरम् । ततोऽपि केवलभक्तिप्रधानं गुह्यतमम् । यदुद्धवं ब्रह्माणञ्च प्रति श्रीभागवतम् अर्ज्जुनं प्रति श्रीगीतामिधञ्च । गमिष्यंतः श्वो वयं यास्याम इति विभाव्य अन्ववोचन् उपदिष्टवन्तः ॥ २९ ॥ ३० ॥

येनैव श्रीभागवतेन भगवतो मायायाश्चिच्छक्तेरैश्वर्य्यमाधुर्य्यज्ञानस्य कृपाशक्तेस्त्रिगुणमायाशक्तेश्च अनुभावं कार्य्यं प्रभावं वा अविदं ज्ञातवानस्मि । त्रिगुणात्मिकाथ ज्ञानञ्च विष्णुशक्तिस्तथैव च । मायाशब्देन भण्यंते शब्दतत्त्वार्थवेदिभिरिति शब्दमहोदधिः। माया च वयुनं ज्ञानमिति निघण्टुः । मायास्याच्छाम्बरीबुद्ध्योरिति त्रिकाण्डशेषः माया दम्भे कृपायाञ्चेति विश्वः । अतएव स्वरूपभूतया नित्यशक्त्या मायाख्यया युतः । अतो मायामयं विष्णुं प्रवदन्ति सनातनमिति माध्वभाष्य प्रमाणिता श्रुतिश्च । एवमग्रिमेष्वपि ग्रन्थेषु मायाशब्देन यथासम्भवं चिच्छक्तित्रिगुणशक्त्यादयो वाचनीयाः ॥ ३१ ॥

एवञ्च शुद्धां निर्गुणां भक्तिं मयि प्रेमपर्य्यतां प्रवर्त्यअनुभाव्य च भक्तेः साक्षाद्वाचकं भगवदुक्तं श्री भागवतशास्त्रञ्चोपदिश्य ज्ञानकारणं ज्ञानञ्च मोक्षप्रयोजनकमजिज्ञासवेऽपि मह्यं सम्प्रति बालस्यास्य वयोवृद्धावायत्यां कदाचित् जिज्ञासा जनिष्यते वेति विभाव्य नैरपेक्षार्थं भङ्ग्या ज्ञापितमित्याह एतदिति । संसूचितं न तु साक्षादुक्तं मत्प्रयोजनाभावादितिभावः । किंतत् तापत्रयस्याध्यात्मिकादेः चिकित्सितं भेषजं निवर्त्तकम् । तदेव किंयत् स्वस्वभावानुसारेण ईश्वरे परमात्मनि वा भगवति षडैश्वर्य्यवति वा ब्रह्मणि तदीयनिर्विशेषस्वरूपे वा कर्म्म भावितं समर्पितम् ॥ ३२ ॥

---

### सिद्धान्तप्रदीपः

प्रश्रितस्याविनीतस्य ॥ २९ ॥

यत्साक्षाद्भगवतोदितंगुह्यंपुराणगुह्यं सूक्ष्मंश्रीभागवतंतेभ्योयोगिभ्यः उपदिष्टम् ज्ञानंतदर्थज्ञानम् तत् तदेवसंप्रदायप्राप्तम् अन्ववोचन् उपदिदिशुः ॥ ३० ॥

येनैवअर्थतःस्वरूपतश्चमुनिभ्यःप्राप्तेनसूक्ष्मभागवतेनवेधसोनिखिलविधातुर्वासुदेवस्यमायानुभावम् माययाप्रकृत्यास्वशक्तिभूतयाविश्वसृष्टिनाशादिकौशलात्मकमनुभावम् अविदमज्ञातवानस्मि एवंदेवर्षेभगवदवताराणांश्रीव्यासादीनामप्युपदेष्टु रस्योपदेष्टॄन्सनकादीन् देवर्षिगुरून् वेदप्रसिद्धान् विहायप्राकृतायोगिनस्तदुपदेष्टारोनकल्पनीयाः उपस्थितपरित्यागेऽनुपस्थितस्वीकारेचमानाभावात् ॥ ३२ ॥

किंच एतदपिसंसूचितम् तैर्योगिभिरितिशेषः किंतत्यद्भगवतिभावितंसमर्पितंकर्मतत्तापत्रयचिकित्सितम् आध्यात्मिकादिदुःखप्रतिकारकमिति ॥ ३२ ॥

---

### भाषा टीका ।

ऐसे अनुरागी विनीत निष्पाप श्रद्धावान दान्त बालक और अनुचर को ॥ २९ ॥

जाने के समय दीन वत्सल मुनियों ने कृपाकर वह ज्ञान मुझको उपदेश किया जो परम गुरु साक्षात् श्री भगवान ने कहा है ॥३०॥

जिस ज्ञान से मैं भगवान् वासुदेव ज्ञान स्वरूप की माया का अनुभाव इस सब जगत को जानगया और जिस ज्ञान से उनके पद की प्राप्ति होती है ॥ ३१ ॥

हे ब्रह्मन् यही तापत्रयका चिकित्सित आपको सूचित किया कि जो ईश्वर भगवान ब्रह्म में कर्म भावन किया जाय ( अर्थात समर्पण किया जाय ) ॥ ३२ ॥

---

### श्रीधरस्वामी ।

ननु संसारहेतोः कर्म्मणः कथं तापत्रयनिवर्त्तकत्वं सामग्रीभेदेन घटत इति सदृष्टान्तमाह आमय इति आमयः रोगः येन घृतादिना जायते तदेव केवलमामयकारणभूतं द्रव्यं तम् आमयं न पुनाति न निवर्त्तयतीत्यर्थः किंतु चिकित्सितं द्रव्यान्तरेर्भावितं सत् पुनातिएवयथा ॥ ३३ ॥

आमयो यश्चभूतानां जायते येनसुव्रत ।
तदेव ह्यामयं द्रव्यं न पुनाति चिकित्सितम् ॥ ३३ ॥
एवं नृणां क्रियायोगाः सर्वे संसृति हेतवः ।
त एवात्मविनाशाय कल्पंते कल्पिताः परे ॥ ३४ ॥
यदत्र क्रियते कर्म भगवत्परितोषणम् ।
ज्ञानं यत्तदधीनं हि भक्तियोगसमन्वितम् ॥ ३५ ॥
कुर्वाणा यत्र कर्माणि भगवाच्छिक्षयासकृत् ।
गृणांति गुणनामानि कृष्णस्यानुस्मरंतिच ॥ ३६ ॥

श्रीधरस्वामी ।

आत्मविनाशाय कर्म्म निवृत्तये कल्पन्ते समर्था भवन्ति । परे ईश्वरे कल्पिता अर्पिताः संतः । अत्र च प्रथमं महत्सेवा ततस्तत्कृपा ततस्तद्धर्म्मश्रद्धा ततो भगवत्कथाश्रवणं ततो भगवति रतिः तया च देहद्वय विवेकान्मज्ञानं ततो दृढा भक्तिः ततो भगवत्तत्त्वज्ञानं ततस्तत्कृपया सर्व्वज्ञत्वादिभगवद्गुणाविर्भावः इति क्रमो दर्शितः ॥ ३४ ॥

ननु च ज्ञानेनाज्ञानप्राप्तकर्म्मनाशः तच्च ज्ञानं भक्तियोगाद्भवति कथं कर्म्मणा कर्म्मनाशः स्यात् तत्राह यदिति ॥ ३५ ॥

भगवदर्पणेन क्रियमाणं कर्म भक्तियोगं जनयतीति सदा चारेण दर्शयति कुर्वाणा इति । यत्र यदा भगवतः शिक्षया कर्माणि कुर्वाणाभवन्ति तदा श्री कृष्णस्य गुणनामानि गृणन्ति अनुस्मरंति च कृष्णमित्यर्थः । इयंहि भगवच्छिक्षा "यत् करोषि यदश्नासि यज्जुहोषि ददासियत् । यत् तपस्यसिकौंतेय तत् कुरुष्व मदर्पणमिति ॥ ३६ ॥

---

दीपनी ।

यदितीति । अत्र कर्म्मभूमौ भगवदर्पणेन भगवत्परितोषणं भगवत्प्रीतिकरं यत्कर्म्म क्रियते यद्भक्तियोगसमन्वितं ज्ञानं तत् तदधीनं तस्य कर्म्मणः अधीनं हीत्यर्थः ॥ ३५ ॥ ३७ ॥

---

श्रीवीरराघवः

त्रैवर्गिककर्मणस्तापत्रयहेतुत्वंवक्तुंतावद्दृष्टांतमाह । आमयइति यद्यप्युदाहृतश्रुतिस्मृतिवचोभिःपापस्यैवतापत्रयमूलत्वंसूचितंतथापि त्रैवर्णिककर्मणोऽततोऽनिष्टावहत्वेनपापवदनिष्टसाधनत्वात्तदपितापत्रयनिमित्तमेवहेसुव्रतयथायेनापथ्यान्नादिनाभूतानांयआमयोरोगो जायतेतदामयकारणंद्रव्यंचिकित्सितमपिप्रतीकारत्वेनसेवितमप्यामयंनपुनातिनशोधयतिचिकित्सितोपिव्याधिरपथ्यादिनापुनर्वर्द्धतइत्यर्थः चिकित्सितमित्यामयविशेषणंवाआमयकारणेनचिकित्सितंप्रतिकृतमप्यामयंव्याधितदामयकारणंद्रव्यंनपुनातीत्यर्थः ॥ ३३ ॥

दृष्टांतेनाभिमतमर्थंदार्ष्टांतिकेनुगमयति एवमिति एवमपथ्यान्नादेरामयकारणवन्नृणांसर्वेक्रियायोगाअनभिसंहितफलकर्मव्यतिरिक्ताः सर्वेत्रैवर्गिकाःक्रियायोगाःसंसृतेर्हेतवःअतएवपरस्मिन्नात्मन्यकल्पिताःअसमर्पिताआत्मविनाशायकल्पंतेआत्मनः अंततःस्थावरत्वरूपाविनाशायकल्पंतेसंपन्नाभवंति ॥ ३४ ॥

तर्हिपरस्मिन्कल्पिताःक्रियायोगाःकिंवासाक्षान्निःश्रेयसहेतवःनभक्तियोगनिष्पादनद्वारेत्याह यदिति भगवान्परितुष्यतेभक्तियोगोत्पत्तिप्रतिबंधकनिरसनोपयुक्तपरितोषयुक्तोभवति येनतदाराधनरूपेणकर्मणातद्भगवत्परितोषणंयत्कर्मात्रलोकेक्रियते अनुक्रियतइतिपाठे अनुस्यूततयाऽशरीरपातंक्रियतेतदधीनंतत्कर्माधीनंतन्निष्पाद्यमेवभक्तियोगसमन्वितंज्ञानमत्र ध्यानसाध्यदर्शनात्मकंविवक्षितं" भक्त्यात्वनन्ययाशक्यअहमेवंविधोर्जुन ज्ञातुंद्रष्टुंचतत्त्वेनप्रवेष्टुंचपरंतपेत्युक्तत्वात् ॥ ३५ ॥

नकेवलभगवत्परितोषणात्मककर्मैवभक्तियोगानुग्राहकमपितुभगवद्गुणश्रवणादिकमपीत्याह।कुर्वाणाइति भगवच्छिक्षया "यत्करोषि यदश्नासियज्जुहोसिमयिसर्वाणिकर्माणिसंन्यस्येत्याद्युक्तभगवच्छिक्षयाअसकृत्कर्माणिवर्णाश्रमानुरूपाणिकुर्वाणा कृष्णस्यभगवतःगुणाश्रमानिचकल्याणगुणप्रकाशकानिनामानिगायंतिअनुस्मरंतिचनामानिगृणंतिगुणाननुस्मरंतिचेत्यर्थःभक्तियोगनिष्पत्तिकामाइतिकर्तृपदमध्याहर्तव्यं यथाभगवच्छिक्षयाऽसकृत्कृतानिकर्माणिभक्तियोगानुग्राहकाणितथागुणानामनुस्मरणादिकमपीतिभावः ॥ ३६ ॥

---

श्रीविजयध्वजः ।

ननुकर्मणांबंधस्वभावात्कथंतापत्रयभैषज्यमितितत्राह आमयइति सुखमेवव्रतंयेनसतथातस्यसंबुद्धिः हेसुव्रत सत्यसंकल्पादिव्रतोपेतेतिवा येनद्रव्येणभूतानामामयंआमयः श्लेष्माद्योजायतेतदेवामयकारणंद्रव्यंचिकित्सितमौषधीकृतंतद्रोगलक्षणंपुनातिपरिहरतिहि तदिदमनुभवसिद्धमितिहिशब्दार्थः एवकारस्तुतस्यप्राधान्यद्योतनार्थः नतुद्रव्यांतरनिषेधार्थः कुतः औषधीकरणायद्रव्यांतरसंयोगदर्शनाच्चशब्दउपमार्थःसयथा ॥ ३३ ॥

एवंतथानृणांसंसारिणांक्रियालक्षणायोगाउपायाःस्वतः संसारहेतवःतएवक्रियायोगाः परेपूर्णेब्रह्मणिकल्पिताः आत्मविनाशाय अर्पिताः । अनेकजन्मसंचितदुष्कर्मस्वरूपनाशायकल्पंतेतस्मात्केवलंकर्मबंधकंब्रह्मार्पणेनौषधीकृतंभक्तिज्ञानद्वारासंसाराख्यरोगनिवर्तकमितिभावः ३४

ज्ञानद्वाराकर्मणोमोचकत्वमाह यदिति अत्रकर्मभूमौभगवदर्पणेनभगवत्परितोषणंयत्कर्मजीवैःक्रियतेयद्भक्तियोगसमन्वितं परोक्षापरोक्षोपपदंज्ञानंतज्ज्ञानं तस्यकर्मणोधीनंहि कर्मणाज्ञानमातनोति ज्ञानेनामृतीभवति अथामृतानिकर्माणीतिश्रुतेः कर्मणाज्ञानंजायतेहियस्मात्तस्मात्कर्म ज्ञानद्वाराबंधनिवर्तकमितिभावः अत्राग्निष्टोमादिकर्मसुयत्कर्मभगवत्परितोषणमितिवा ॥ ३५ ॥

कथंकारंकर्मणाज्ञानमुत्पद्यतइतितत्राह। कुर्वाणाइतियत्रयस्ययजमानस्यार्थेयस्मिन्यज्ञेहवनादीनिकर्माणिकुर्वाणावैदिकाऋत्विगादयः "स्मर्तव्यःसततंविष्णुर्विस्मर्तव्योनजातुचिदितिभगवच्छिक्षयाऽसकृन्निरंतरंआदिमध्यावसानेषुवाकृष्णस्यगुणान्स्मरंतिनामानिगृणंति ३६

---

सुबोधिनी

अत्र हि भगवदावेशव्यतिरेकेणाविर्भावा न भविष्यंतीति तेषां कृपया तज्जातमित्याह । तस्यैवमिति द्वाभ्याम् पूर्वजातसाधनानां वासुदेवपर्यंतं अनुवृत्तिः कारणमिति ताननुवदति । अनुरक्तस्येति । अनुवृत्तिपर्यंतानि गृहीतानि । शुश्रूषालक्षणो विनयः भिन्नप्रक्रमेणेति पृथगुक्तः तथापापनिवृत्तिः अत्युपकारित्वादीनत्वस्यपृथगुक्तिः । अनुक्तसर्वसमुच्चयार्थं चकारः । अनुवादे क्रमापेक्षाऽभावाद्विपर्ययेण कथनं न दोषः ॥ २९ ॥

अस्ति किंचिज्ज्ञानं सर्ववेदांतप्रतिपाद्यं पंचरात्राद्यागमैश्च गुरूपदेशेन च यदभिव्यज्यते । यथा कं ब्रह्म खं ब्रह्मेत्युपाख्याने यस्मिन् ज्ञाते पुमान् ब्रह्मविद्भवति सर्वज्ञस्तेजस्वी च । ततोऽपि महोपनिषत्प्रतिपाद्यं देवगुह्यत्वाद्गुह्यतरं ततोऽपि पुरुषोत्तमप्रतिपाद्यं "भक्त्या मामभिजानातीति,, रूपं यस्मिन्ननुसंहिते भगवदाविर्भावो भवत्येव तद्गुह्यतमम् । साक्षाद्भगवता कृष्णेनोक्तम् । यत्तदिति । विशेषतोऽवक्तव्यम् । तेषामपि हृदयेभगवदिच्छया उपदेशार्थमागतम् । अनु पश्चादवोचन् । एतस्यपरमकाष्ठात्वज्ञापनायाह । गम्यत इति । एतत्कथने प्रश्नांतरं साधनांतरं च नास्तीत्याह । कृपयेति । तत्रापि हेतुः । दीनवत्सला इति । वत्सं लातीति वत्सलो ग्राहकः स्नेहः तद्वान्त्रा । पिता पुत्रइव दीनेषु तद्वदित्यर्थः ॥ ३० ॥

ततस्तत्र किं जातं तद्वक्तव्यमित्याकांक्षायामाह । येनैवाहमिति । भगवतो वासुदेवस्येनिहृदये विद्यमानस्यैव । अहो इत्याश्चर्यं विद्यमानः प्रकाशमान एव न स्फुरतीति मायानुभावः । लेखनदशाऽनुसंधेया । येन गच्छंति तत्पदमिति क्रममात्रेण हेतुनान तु तत्र कश्चन व्यापारोऽमुष्य इति भावः ॥ ३१ ॥

एवं भगवत्पदप्राप्तिपर्यंतं पदार्था निरूपितास्तत्रैवं संदेहः "ते मय्यपेताखिलचापलेऽर्भके,, इत्यादिसाधनानि कुतो भवंतीति कर्मकालादीनां प्रतिबंधकत्वात् । तत्र कालस्य प्रतिबंधकत्वाभावाय उपायमाह । एतदिति । कथारत्यभावे अशनादयः प्रतिबंधका दृष्टाः कर्तं चादृष्टद्वारा तद्द्वारा हेतुःकालः तत्र प्रथमं दृष्टप्रतिबंधको दूरीकर्त्तव्यः स च तापत्रयात्मकः "एतैरुपद्रुत इति,, वचनात् । तत्र यद्यपितत्संगेन कथा साधनत्वेनोक्ता तथापि बहुसापेक्षत्वात्सैव न भविष्यति स्वतंत्रमेकं साधनमाह । एतत् वक्ष्यमाणम् । सम्यक् सूचितं न स्पष्टतयोक्तं नापि संदिग्धम् । तस्य परिज्ञानं तव भविष्यतीत्यभिप्रायेणाह । हे ब्रह्मन् । तापत्रयनिराकरणार्थं चिकित्सितम् । यथा विष सर्वनाशकमपि सर्वरोगनिवर्तकत्वेन द्रव्यांतरैर्भावनया चिकित्स्यते तथा कर्मापि सर्वनाशकं सर्वदोषनिवृत्तये भगवद्रूपेण चिकित्स्यतइत्याह । यदीश्वरइति । प्रभुरूपेणषडैश्वर्यसंपन्ने उत्कृष्टैःपदार्थैः सुदूरे ब्रह्मणि अपापंडे वेदांतवेद्ये कर्म भावितं योजितमित्यर्थः । भावनयाप्रापितं वा ॥ ३२॥

तत्रैव विशेषमाह । आमय इति । येनैव कर्मणा नाशः शंकनीयः तदेव भगवति भावनीयमिति । आमयः कफपित्तादिः येन मापादितः सुव्रतेति संबोधनात् तादृशं तु तव नास्तीति तव महद्भाग्यमिति प्रशंसा । तदेव चिकित्सितं आमयद्रव्यं न किं तु अन्यदपि द्रव्यांतरं पूर्वभक्षितं पुनाति अतो येनैव कर्मणा बंधस्तदेव कर्म भगवति भावितं पुरुषं पुनातीत्यर्थः ॥ ३३ ॥

ननु पूर्वकृतकर्मणां बाधकानां विद्यमानत्वात्तैस्तापत्रयजननाच्च किमग्रिमेण साधितेनेति तत्राह । एवं नृणामिति । यथा भगवति समर्पितेन कर्मणा तापत्रयनाशः एवमेव पूर्वकर्मणामपि भगवति समर्पणात्पूर्वस्वरूपनाशे सति तापाद्यनुत्पादकत्वात् नृणामिति कर्माधिकारो द्योतितः । सर्वे पुण्यजनका अपि संसृतिहेतवः जननमरणहेतवः । तएव सर्वे योगाः परे कल्पिताः समर्पिता आत्मविनाशाय कल्पते यथा प्रज्वलितेऽग्नौ तृणादि । कुतस्तस्य तापजनकत्वमित्यर्थः । एवं स्वाभाविकानां लौकिकानां संसारहेतुभूतकर्मणां कृतानां क्रियमाणानां च विनियोग उक्तः ॥ ३४ ॥

## सुबोधिनी

अधुनाविहितानां भगवत्प्रीत्यर्थं क्रियमाणानांकिंफलमित्याकांक्षायामाह यदत्रेति यत्रः स्वधीतंगुर वः प्रसादिता,, इत्यत्र भगवत्प्रसादहेतुत्वेन प्रार्थनात् नियतफलत्वाच्च एकस्य तूभमयत्वे संयोगपृथक्त्वन्यायेनदध्यादिवदुभयसाधकं स्या त्तथासति संसारः । पूर्वोक्तालुभयरूपत्वात् । तत्रोच्यते । अत्र निर्णये यत्कर्म भगवत्परितोषणं क्रियते भगवत्परितोषार्थं क्रियते तेन कर्मणा भगवदूभक्तिज्ञाने उत्पद्येते । "ततो ज्ञानाग्निः सर्वकर्माणीति,, न्यायेन सर्वकर्मक्षयः इत्यभिप्रायेणाह । ज्ञानं यत्प्रसिद्धं भक्तियोग समन्वितं तत् तदधीनं तादृशकर्माऽधीनं हीति "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् इति न्यायः सूचितः ॥ ३५ ॥

ननु पंचरात्रोक्तकर्मणां भगवदाज्ञया अर्जुनादीभिः कृतानां युद्धादीनां च का गतिस्तत्राह । कुर्वाणा यत्रेति । यत्र कर्मनिर्णये विषये वा भगवच्छिक्षया कुर्वाणा भवंति तत्कर्म भक्तिजनकं भवतीत्याह । तदा ते पुरुषाः असकृद्वारंवारं कृष्णस्य गुणानामानि पांडवरक्षकद्रौ पदीलज्जानिवारकगोवर्धनोद्धरणेत्यादीनिगृणंति । अनु पश्चात्स्मरंति च कृष्णम् । अतस्तेषां कीर्तनस्मरणभक्तिहेतुत्वात् सर्वोत्कृष्टमे व तत्कर्म । न तेन संसारशंकाऽपीत्यर्थः ॥ ३६ ॥

---

## क्रमसन्दर्भः ।

एवमिति । आत्मशब्दोऽत्रकर्म जातिपरः ॥ ३४ ॥

अथ भगवत् परितोषणात्मकस्य तस्य माहात्म्यं विशेषत आह यदत्रेति । भक्तियोगः कीर्त्तन स्मरणादि रूपः तत्समन्वितं तेनसम- वेतं यज्ज्ञानं भागवतं तदपि तदधीनं तदव्यभि चारिफल मित्यर्थः ॥ ३५ ॥

कथं तत्राह कुर्वाणा इति । भगवच्छिक्षया यत् करोषि यदश्नासीत्यादि कथा यत्र भगवत् सन्तोषणे निमित्ते कर्मण्यपि कुर्वाणा- स्तादृश रुचि स्वाभाव्येनासकृत गृणन्तीत्यादि । श्री शौनकादि वदिति भावः ॥ ३६ ॥

---

## विश्वनाथचक्रवर्ती

ननु संसारहेतोःकर्म्मणःकथंतापत्रयानिवर्तकत्वम् सत्यम् सामग्रीभेदेन घटतइतिसदृष्टान्तमाहद्वाभ्याम् यआमयोरोगःयेनघृतादि नाजायते तदेवघृतादि द्रव्यं चिकित्सितमौषधान्तरवासितं सत्आमयंनपुनातिनरक्षतिनाशयतीतियावत् पुनातिरत्र रक्षणार्थं को ज्ञेयः ॥ ३३ ॥

क्रियायोगाः कर्मयोगाः सर्वेनित्याःकाम्याःनैमित्तिकाश्चनिष्कामाःपरमेश्वरेकल्पिताःसमर्पिताः सन्तः आत्मविनाशायकर्म्मनिवृत्तयै कल्पंते समर्थाभवन्ति ॥ ३४ ॥

तदेवेश्वरार्पितंकर्म्मसत्त्वशोधकत्वात्ज्ञानसाधनंभवतीत्याह भगवदर्पितत्वात् भगवत् परितोषणंनिष्कामंयत्कर्म्मतदधीनंज्ञानंतज्ज न्यत्वादित्यर्थः कीदृशंयद्भक्तियोगसमन्वितम् अन्यस्यभक्तिरहितस्यज्ञानस्यतुमोक्षसाधकत्वाशक्तेःनैष्कर्म्यमप्यच्युतभाववर्जितमित्यादि नातिरस्कारएवदृष्टः ॥ ३५ ॥

एवंभक्तिमिश्रेणकर्म्मणाभक्तिमिश्रंज्ञानंमोक्षसाधनंभवतीतिउक्तम् इदानींभक्तिमिश्रानिष्कामकर्मवतांतादृशभक्तसंगभाग्येनकेषांचित् कदाचित्कर्म्ममिश्राभक्तिरपिभवेदित्याह कुर्वाणाइतियत्रभक्तिमिश्रकर्म्मणिस्थिताअकस्माद्भक्तसंगभाग्येनभगवच्छिक्षयाकर्म्माणिकुर्वा णाःसन्तःकेचित्कृष्णस्यगुणनामानिगृणन्तिस्मरन्तिचकीर्तनस्मरणाद्यात्मिकांभक्तिंकुर्वन्तीत्यर्थः भगवच्छिक्षाचयम् "यत्करोषियद- श्नासियज्जुहोषिददासियत् यत्तपस्यसिकौन्तेयतत्कुरुष्वमदर्पणमिति शिक्षायाश्चास्याभक्तिप्रकरणपठितत्वात्नकर्म्मविषयतयाव्या- ख्यायुक्ता कर्म्मिणोहिकर्म्मवैफल्याभावार्थंवैदिकमेवकर्म्मार्पयन्ति भक्तास्तुभगवत्स्वामिकत्वेनैवात्मानंजानंतःस्वकर्तव्यंवैदिकंलौकिकं दैहिकञ्चकर्मस्वप्रभुप्रवर्त्यमानंप्रतियन्तःसर्वमेवतस्मित्समर्पयन्तीतिमहान्भेदः अतएवात्रयदश्नासीत्युपन्यस्तम् एवमेवतत्रश्रीरामानु जाचार्य्यचरणैरपिव्याख्यातम् अत्रकुर्वाणाइति वर्त्तमाननिर्देशात्भक्तिंकुर्वंतित्याख्यातक्रियायामुख्यत्वाच्चसंकर्मयोगसहिताभक्तिरि- यतोभक्तेरस्याःकर्म्ममिश्रताज्ञेयाकर्म्ममिश्रयाभक्त्यासाध्याज्ञानमिश्रातयाचसाध्यामुक्तिः सहिताभगवद्रतिःशान्तभक्तिनाम्नीआत्मारामा श्चमुनयइत्यादौज्ञेया ॥ ३६ ॥

---

## सिद्धांतप्रदीपः ।

कर्मणैवसंसारः भगवतिसमर्पितंतुकर्मसंसारनिवर्तकमितिसदृष्टांतमाह द्वाभ्याम् तत्रदृष्टांतमाह आमयइति येनद्रव्येण यआ- मयोजायतेतद्द्रव्यंतमामयंनपुनातिननिवर्तयति । चिकित्सितद्रव्यांतरेणमिश्रितंतुपुनात्येव ॥ ३३ ॥

तथाकर्मणैवसंसारःभगवतिसमर्पितंतुकर्मसंसारंनिवर्तयत्येवेत्याह एवमिति परेपरमात्मनि कल्पिताः समर्पिताः आत्मविनाशाय अविद्याकर्मसंज्ञान्यातृतीयाशक्तिरिष्यते इत्येवंभूतस्यात्मनःकर्मप्रवाहरूपाविद्यारूपस्यनाशायद्वानयेकल्पंतेसमर्थाभवंति ॥ ३४ ॥

ओंनमोभगवतेतुभ्यंवासुदेवायधीमहि ।
प्रद्युम्नायानिरुद्धायनमः संकर्षणायच ॥ ३७ ॥
इतिमूर्त्यभिधानेनमंत्रमूर्तिममूर्तिकम् ।
यजतेयज्ञपुरुषंससम्यग्दर्शनः पुमान् ॥ ३८ ॥
इमंस्वनिगमं[1]ब्रह्मन्नवेत्यमदनुष्ठितम् ।
अदान्मेज्ञानमैश्वर्यंस्वस्मिन्भावंचकेशवः ॥ ३९ ॥
त्वमप्यदभ्रश्रुतविश्रुतंविभोः समाप्यतेयेनविदांबुभुत्सितम् ।
प्रख्याहिदुःखैर्मुहुरर्दितात्मनांसंक्लेशनिर्वाणमुशंतिनान्यथा ॥ ४० ॥

सिद्धांतप्रदीपः

उपादेयंसाधनचतुष्कंसंक्षिप्यदर्शयति। यदिति अत्रसाधनापेक्षायांयद्भगवत्परितोषणम् भगवान्परितुष्यतेयेनतत्कर्मक्रियतेस्वीक्रियतेतत्त्वैहिकामुष्मिकभोगसाधनम् अनेनमर्मवैराग्यात्मकंसाधनद्वयमुक्तम् यत्तदधीनंभगवदधीनंभगवद्विषयकंतज्ज्ञानंभक्तियोगसमन्वितं क्रियतेइतिचसाधनद्वयमुक्तम् ॥ ३५ ॥

एतदेवशिष्टाचारकथनेनदर्शयति। कुर्वाणाइति यत्रयस्मिन्कालेशास्त्रप्रसिद्धाःशिष्टाः"यत्करोषियदश्नासियज्जुहोषिददासियत्। यत्तपस्यसिकौंतेयतत्कुरुष्वमदर्पणमिति भगवच्छिक्षयाकर्माणिकुर्वाणाः कृष्णस्यगुणानामानिगृणंतिगायंतिकृष्णमनुस्मरंतिध्यानेतत्साक्षात्कारंकुर्वंति ॥ ३६ ॥

---

भाषा टीका ।

हे सुव्रत जो घृतादि गुरुपाक द्रव्य जीवों के आमादिक रोगों को उत्पन्न करता है क्या वही चिकित्सा के योग से उसी रोग को निवृत्त नहीं करता है ॥ ३३ ॥

इसी प्रकार मनुष्यों के समस्त क्रिया योग संसार बंधन के हेतु हैं । वेही यदि परपुरुष भगवान के अर्पण किये जांय तो आत्मविनाश ( अर्थात् जीवोपाधि लिंग शरीर के विनाश ) पूर्वकसंसार मुक्ति के कारण होते हैं ॥ ३४ ॥

यहां जो कुछ कर्म्म कियाजाता है भगवान के परितोष का हेतु होता है और भक्ति योग समन्वित ज्ञान भी तदधीन होता है ॥ ३५ ॥
यत्करोषि यदश्नासि　　तत्कुरुष्वमदर्पणम् इस भगवान की शिक्षा के अनुसार जो कर्म करते हैं वे वार वार श्रीकृष्ण के गुण औरनामों को कीर्त्तन करते हैं और स्मरण करते हैं ॥ ३६ ॥

---

श्रीधरस्वामी ।

कीर्त्तनस्मरणरूपभक्तिहेतुत्वमुक्तम् । ज्ञानहेतुत्वमाह द्वाभ्याम् । ॐ नमः इति । नमो धीमहि मनसा नमनं कुर्वीमहि ॥ ३७ ॥
अमूर्तिकं मंत्रोक्तव्यतिरिक्तमूर्तिशून्यम् । यजते पूजयति । स पुमान् सम्यग्दर्शनो भवति ॥ ३८ ॥

एवञ्च कृतवति मयि हरिः स्वलक्षणं ज्ञानादिकं दत्तवानित्याह । इमं स्वनिगमं स्वोपदेशं मदनुष्ठितं मयानुष्ठितम् अवेत्य ज्ञात्वा । भावं प्रीतिञ्च ॥ ३९ ॥
अतस्त्वमप्येवं कुर्व्वित्याह त्वमिति । अदभ्रं अनल्पं श्रुतं यस्य हे अदभ्रश्रुत विभोर्विश्रुतं यशः प्रख्याहि कथय । येन विश्रुतेन बुधेन विदां विदुषां बुभुत्सितं बोद्धुमिच्छा समाप्यते तत् । यतो दुःखैः पीडितात्मनां संक्लेशशांतिं प्रकारांतरेण न मन्यन्ते ॥ ४० ॥

इति श्रीमद्भागवतभावार्थदीपिकायां प्रथमस्कंधे पञ्चमोऽध्यायः ॥ ५ ॥

---

[1] स्वधर्मनियममिति विजयध्वजपाठः

दीपनी।

मुत्तर्यभिधानेनेति। मुर्तिवाचकेन मंत्रेणेत्यर्थः ॥ ३८ ॥ ४० ॥

---

श्रीवीरराघवः

इतिइत्थममूर्तिकंकर्मवश्यप्राकृतमूर्तिरहितंमंत्रमूर्तिमोमित्याद्युक्तमंत्र प्रकाश्यामूर्तिरप्राकृता अकर्ममूलाखेच्छोपात्ताचयस्यतंमंत्रशरीरकं-वाभिध्यायन् ओमादिनामान्यनुगृणंश्चयज्ञाराध्यंपरमपुरुषंयोयजतेस्वधर्मेणाराधयतिसएवपुमान्सम्यग्दर्शनः "ज्ञानीत्वात्मैवमेमतमित्युक्त विधेधिकारीत्यर्थः ॥ ३८ ॥

एवं यजतामाशुभक्तियोगोनिष्पद्यते इत्यभिप्रायेणात्मानंदृष्टांतयति इममिति हेब्रह्मन्मदनुष्ठितमिमंस्वस्यभगवतोनिगममनुशासनमवे-त्यदृष्टाकेशवः स्वस्मिन्भावंभक्तितत्साध्यंदर्शनात्मकंज्ञानमैश्वर्यंचदेवर्षित्वोचितमदाद्दावित्यर्थः ॥ ३९ ॥

उत्तरमुपसंहरति। त्वमिति हेअदभ्रश्रुतानल्पकीर्तेत्वंविभोर्भगवतोविश्रुतंयशः प्रख्याहि प्रबध्नीहियेनविश्रुतप्रख्यानेन विदांबोद्धृणांबुभु-त्सितंबोद्धुमिष्टंसमाप्यते आपूर्यतेननिरवशिष्यतइतियावत् यच्छ्रुतस्यजिज्ञासितव्यंनावशिष्यतेतथाविधमाख्यानंकुर्वित्यर्थः। किंचदुःखौघै-भिस्तापैर्मुहुर्मुहुरर्दितः पीडितः आत्मामनोयेषांतेषांक्लेशनिर्वाणंक्लेशाआध्यात्मिकादयस्तेनिर्वाप्यंतेऽपनोद्यंतेयेन अन्वर्थंपायांतरेणातुन-निर्वाप्यंते तथाविधंयथोशंतिअतीवाद्रियंते तादृशंप्रख्याहीत्यन्वयः ॥ ४० ॥

इतिश्रीवीरराघवीयेप्रथमेपंचमः ॥ ५ ॥

---

श्री विजयध्वजः

योयजमानःस्वयंचनित्यमोंनमोभगवतइत्यादिमूर्त्यभिधानेनमूर्तिवाचकेनमंत्रेणमंत्रप्रतिपाद्यमूर्तिम् अमूर्तिकंप्रकृतिवैकृतिविग्रहविधुरंवासु-देवादिरूपंयज्ञपुरुषं "चत्वारिशृंगात्रयोअस्यपादा" इत्यादिऋक्प्रतिपाद्याकारंभगवंतंउदिश्ययजतेसपुमान्यजमानःपरोक्षापरोक्षज्ञानवान्भवति तेचऋत्विगादयःसम्यग्दर्शनाः समीचीनशास्त्रविज्ञानाःसर्वज्ञाश्चसम्यग्भगवंतंदर्शयंतिज्ञापयंतीतिसम्यग्दर्शनाःसर्वेषांहरिपरायणत्वात् ॐसर्वगुणपूर्णसर्वजनरंजकेतिवाओमित्येवंरूप भगवतेषड्गुणपूर्णायतुभ्यंनमः सर्वत्रवसतिदीव्यतीतिवासुदेवः इलज्ञानरूपत्वाद्दैत्यनिरसन शीलत्वातक्रीडाशीलत्वाद्वातस्मैधीमहिस्मरेम प्रकृष्टंद्युम्नंहिरण्यमेवरूपंयस्यसः प्रद्युम्नः "हिरण्यश्मश्रुर्हिरण्यकेशआप्रणखात्सर्व एव सुवर्ण" इतिश्रुतेः तस्मै नकेनापिनिरुद्धइत्यनिरुद्धः अतोमुख्यप्राणः सोस्यास्तीत्यनीतेनानित्तामुख्यप्राण प्रसादवतापुरुषेणारुद्धः वशीकृत इतिवाअनिरुधःसंसारमुक्तास्तान्दधातिधारयतिपोषयतीतिवा अनिरुद्धस्तमुख्यंनामधत्तइतिवा "तस्योदितिनामोतिश्रुतेःतस्मैसम्यक्पापक र्षणशीलत्वात्संकर्षणः समीचीनकरंसनोतिददातिइतिवातस्मै चशब्दःप्रत्येकंपृथक्मंत्रत्वद्योतनार्थः इतिशब्दःप्रभृतिवचनः तस्मादृत्वि गादिभिर्ध्यायंयजमानाभगवंतमीजानाज्ञानवंतोभवंतीतिभावः ॥ ३७ ॥ ३८ ॥

स्वानुभवसिद्धमेतदितिविज्ञापयति इममिति केशवःमदनुष्ठितमिमंस्वधर्मनियममवेत्यऐश्वर्यमीश्वराविषयंज्ञानंस्वस्मिन्भावं भक्तिंच-मेमह्यं अदादित्यन्वयः ॥ ३९ ॥

इदानीमवतारप्रयोजनालंबुद्धिकरणविज्ञापनमुपसंहरति त्वमिति हेअदभ्रश्रुत "श्रोताभंतेत्यादेःसंपूर्णश्रोतृत्वादिगुणसंपन्न त्वमी श्वरोपिपेश्वर्यादिगुणसंपन्नत्वेनाकृत्यार्थविधुरोपि सज्जनवात्सल्यादेव येनतत्कीर्तिमभंधकरणेनविदुषांविदंतीतिविदोज्ञानलाभकामाः तेषांवाविचारकाणांवाबुभुत्सितंज्ञातुमिष्टंसमाप्यतेसंपूर्णंभवति तादृशंश्रीभागवतलक्षणंविभोःसमर्थस्यभगवतविश्रुतं यश प्रख्याहिप्रख्याप येत्यन्वयः तस्मादन्येषांभागवतकरणशक्त्यभावात्तत्कृतिरेवालंबुद्धिकारणमितिभावः ॥ ४० ॥

इतिश्रीभागवतेप्रथमस्कंधेविजयध्वजटीकायांपंचमोध्याय ॥ ५ ॥

---

क्रमसन्दर्भः।

अथ पञ्चरात्रवक्तुः श्रीनारायणादेतज्जन्मनि लब्धं सम्प्रदायं मंत्रञ्चोपदिशति ॐ नम इति। चतुर्व्यूहात्मको भगवानेवात्र देवता। तत्र श्री वासुदेवसङ्कर्षणौ वामदक्षिणयोर्मध्यतो ज्ञेयौ। प्रद्युम्नः सङ्कर्षणस्य दक्षिणे। अनिरुद्धो वासुदेवस्य वामे। सङ्कर्षणा-दिक्रमविपर्ययेण निर्देशस्तु श्री कृष्णचतुर्व्यूहत्वं बोधयति तत्पुत्रपौत्रत्वेन प्रद्युम्नानिरुद्धयोस्तत्रिकटपाठात् ॥ ३७ ॥

### क्रमसन्दर्भः

मंत्रमूर्त्तिं तदुक्तमूर्त्तिं तथाप्यमूर्त्तिकं प्राकृतमूर्त्तिरहितम् । यज्ञपुरुषं पूजायां ध्येयाकारमित्यर्थः । दर्शनस्य सम्यक्त्वं श्रीभगवदाविर्भावात् ननु ब्रह्मदर्शनवत् खिलत्वमिति ॥ ३८ ॥

स्वनिगमं निजांतरंगपरमवेदरूपम् । प्रथमतो ज्ञानं स्वानुभवं ततः ऐश्वर्य्यं स्वाणिमादिरूपं ततस्तत्रानासक्तौ भावं स्वमहाप्रेमाणञ्च ॥ ३९ ॥

यस्मादेवं मम तदेतत्पर्य्यंतं सर्व्वं तद्गुणश्रवणनिदानकं तच्छ्रवणमेव तपआदीनां परमं फलं तस्मात्त्वमपीति ॥ ४० ॥

इति श्रीमद्भागवतप्रथमस्कन्धस्य श्रीजीवगोस्वामिकृतक्रमसन्दर्भे पञ्चमोऽध्यायः ॥ ५ ॥

---

### सुबोधिनी

यानितुपुनः पंचरात्रेमंत्राराधन प्रकारेणपुरश्चरणादीनिकर्माणितेषांनिर्णयमाह द्वाभ्याम् नमोभगवतइति इयंहिभगवद्गायत्री नारदोपास्या अत्रचतुर्मूर्तीनाम भिधानैधीमहीत्यर्थश्चतुर्मूर्तीर्ध्येयेमतस्यफलं चतुर्मूर्तिःतदपिनभोगार्थं किंतु नमनार्थंतदपिनपरोक्षतया-किंतुप्रत्यक्षतयाचतूरूपस्यापि चतूरूपमपिभगवानित्यर्थः चकारादन्यान्यपिरूपाणिसंगृहीतानिहयग्रीवादीनि ॥ ३७ ॥

अस्यागायत्र्याविनियोगमाह एवंरूपेणमूर्त्यभिधानेनमूर्तिवाचकेन मंत्रेणाकरणेनमंत्रमूर्तिः शरीरंयस्यमंत्रार्थरूपममूर्तिकं मंत्रोक्तव्यतिरिक्तप्राकृत मूर्तिरहितंयज्ञपुरुषंयज्ञरूपं पुरुषंवायोयजते जपहोमादिनासम्यक्दर्शनोभवति भगवंतंसाक्षात्करोतीत्यर्थः ॥ ३८ ॥

अत्रफलंमयानुभूतमिति संदेहाभावायाहइमंस्वनिगममिति स्वस्यनिगमोवेदः आज्ञेतियावत्साआज्ञामयाकृतायथोक्तः पंचरात्रमार्गानुष्ठितः पूर्वकल्पएवतदामह्यंज्ञानं दत्तवान्ऐश्वर्यंचभक्तिंचयथाब्रह्मशिवयोः तदाह केशवइतिकेशयोर्वसुखंयस्मादिति ॥ ३९ ॥

एवंसर्वेषांकर्मणांनिर्णयउक्तः इतिसर्वमुपपाद्यउपसंहरन्नतिद्वारितमुपदेशमाहत्वमपीति यथामयातस्याज्ञापरिपालितातथात्वमपिपरिपालयआज्ञापरिपालन सामर्थ्यंसिद्धवत्कारेणाहअदभ्रश्रुतइति अनल्पंवेदादीनांश्रवणंयस्येतिविभोः विश्रुतंकीर्तिः चरित्रमितियावत्यश्चरित्रस्यमाहात्म्यमाहयेनविश्रुतनवेदांतज्ञानिनांबुभुत्सितंभगवत्स्वरूपज्ञानेच्छासमाप्यते "यावत्यरचास्मियादृशइतिबुभुत्सावापरमभाकिंजन यित्वानर्जानातितस्मात्तदाख्याहि किंच निस्तारार्थंसर्वैर्यत्नः कर्त्तव्यः संक्लेशाभिभूतैः कर्तुमशक्यइतिक्लेशनिवृत्त्यर्थंचाख्याहि आख्यानेनैवदुःखैर्मुहुरर्दितानांसंक्लेश निवारण मुशंतिसर्वेप्रमाणविदः अत्रउपायांतरंनास्तिक्लिष्टानांक्लेशनाशकंतदाह नान्यथेति ॥ ४० ॥

इतिश्री भागवत सुबोधिन्यां श्री मल्लक्ष्मण भट्टात्मज श्री मद्वल्लभदीक्षितविरचितायांप्रमस्कंध विवरणेपंचमाध्यायविवरणम् ॥ ५ ॥

---

### श्रीविश्वनाथचक्रवर्त्ती ।

तदेवं भक्तिरहितानां ज्ञानकर्म्मादीनां नैष्कर्म्यमित्यादिना निन्दया सर्व्वथा हेयत्वमुक्त्वा त्यक्त्वा स्वधर्म्ममित्यादिश्लोकत्रय्या परमोपादेयां शुद्धां निर्गुणांभक्तिं स्तुत्वा अहं पुरातीतभवे इत्यादिश्लोकषट्केन तस्या एव भक्तेराविर्भावप्रकारं प्रेमपर्य्यन्तां वृद्धिञ्चोक्त्वा अधिकारिविशेषे पुनरुपादेयं भक्तिमिश्रं ज्ञानं ततोऽधिकां कर्म्ममिश्रां भक्तिञ्चोक्त्वा इदानीं ब्रूयुः स्निग्धस्यशिष्यस्य गुरवो गुह्यमप्युत इत्युक्तेः श्री गुरुभ्यः प्राप्तं स्वमंत्रमपि तमुपदिदिक्षुस्तत्र श्रद्धामुत्पादयन्नाह द्वाभ्याम । ॐ नम इति । त्रयस्त्रिंशदक्षरात्मको मंत्रः । चतुर्व्यूहात्मको भगवानत्र देवता । सङ्कर्षणादिक्रमाविपर्य्ययेण निर्द्देशस्तु श्रीकृष्णचतुर्व्यूहत्वं बोधयति तत्पुत्रपौत्रत्वेन प्रद्युम्नानिरुद्धयोस्तन्निकटपाठात् । यद्वा । प्रद्युम्नानिरुद्धसङ्कर्षणानां क्रमेण सृष्टिस्थितिसं हारकारणत्वात् तथोक्तिः । नमो धीमहि नमस्कारं ध्यायेम मनसा नमनं कुर्व्वीमहीत्यर्थः ॥ ३७ ॥

इति मूर्त्तीनां वासुदेवादीनाम् अभिधानेन नामचतुष्टयेन यजते पञ्चरात्रोक्तविधिना वासुदेवाय नमः प्रद्युम्नाय नम इत्येवं षोडशोपचारैर्यः पूजयते । मंत्रमूर्त्तिं मंत्रध्यानोक्तमूर्त्तिं मंत्रेणैव जपितेनाविर्भवति मूर्त्तिः शरीरं यस्येति वा । अमूर्त्तिकं प्राकृतमूर्त्तिरहितम् अकठिनकृपार्द्रमितिवा मूर्त्तिः काठिन्यकाययोरित्यमरः यज्ञपुरुषंयजनीयंपुरुषम् सम्यग्दर्शनः तद्दृष्ट्वाअन्येऽपिकृतार्था भवन्तीत्यर्थः यद्वा दर्शनंज्ञानंयद्वादृश्यतेअनेनेतिदर्शनंशास्त्रंतदेवशास्त्रंभक्तिप्रतिपादकंपञ्चरात्रादि सम्यक्धन्यमात्मप्रसादकत्वात् नतुयेनैवासौनतुष्येत मन्येतद्दर्शनंखिलमित्युक्तलक्षणंभक्तिरहितशास्त्र मिवखिलमित्यर्थः ततश्चकृतवेदान्तदर्शनस्यापितस्यायमात्मानलेपरितुष्टः ममतुकृतपञ्चरात्रशास्त्रस्यात्मासदाप्रसन्नएवेतिभावः ॥ ३८ ॥

### श्रीविश्वनाथचक्रवर्ती

स्वनिगमंनिजान्तरंगवेदोक्तम् ज्ञानंप्रथमतःस्वानुभवंततऐश्वर्यंस्वाणिमादिरूपंततस्तत्रममानासक्तिमभिप्रेत्यभार्वस्वमहाप्रेमाणाश्च अदात् ततश्चमह्यमपीमंमन्त्रंकृपयोपदिशेतिप्रार्थितेनश्रीनारदेनव्यासस्तमेवमन्त्रमुपादिष्टइतिसुधीभिर्बोद्धव्यम् ॥ ३९॥

हेअदभ्रश्रुतअनल्पवेदशास्त्रहेसर्वज्ञेत्यर्थः विभोर्विश्रुतंयशःप्रख्याहिकथय येनाविश्रुतेनयुखेनविदांविदुषांबुभुत्सितंयोद्धुमिच्छासमाप्यते तद्यशोऽमृतास्वादनिमग्नानांसदातदेकभक्तिमतांज्ञानायस्पृहैवनभवेदित्यर्थः अन्यथाप्रकारान्तरेणदुःखैः पीडितानांजीवानांक्लेशशान्तिन उशन्तिनमन्यन्तेविवेकिनः ॥ ४० ॥

इतिसारार्थदर्शिन्यांहर्षिण्यांभक्तचेतसाम् । प्रथमेपञ्चमोऽध्यायःसंगतः संगतः सताम् ॥ ५॥

---

### सिद्धांतप्रदीपः

नतिपूर्वकंमुख्यं भगवत्प्राप्त्युपायंध्यानंयजनंचदर्शनंचउत्तमाधिकारिणांस्तौति द्वाभ्यात् वासुदेवायभगवतेनमः प्रद्युम्नायअनिरुद्धाय संकर्षणायचनमः भगवन्तुभ्यंत्वदर्थंत्वांधीमहिध्यायेम ॥ ३७ ॥

इतीति इत्थंमूर्त्यभिधानेन अमूर्तिकंप्राकृतमूर्तिशून्यम् मंत्रमूर्तिकम् मंत्रः वाच्यवाचकयोरभेदात् वासुदेवादिनाममंत्रवाच्यामूर्तिर्यस्यसमंत्रमूर्तिकोऽप्राकृतमूर्तिः तंयज्ञपुरुषंयोयजतेससम्यग्दर्शनः ॥ ३८ ॥

एवंनतिपूर्वकध्यानयजनपराणां भगवतोदर्शनंभक्तिश्चप्राकृतदेहवियोग पूर्वकाप्राकृतदेहप्राप्तिश्च भवतीतिस्ववृत्तांतकथनेनसूचयति हे ब्रह्मन् स्वनिगमंस्वोपदेशंमयानुष्ठितमवेत्यावधार्यकेशवः ब्रह्मशिवजनकः ज्ञानेस्वस्मिन्भावंभक्तिम् ऐश्वर्य्यं अप्राकृतदेहादिकमप्रिमाध्या श्चवश्यमाणमदात् ॥ ३९ ॥

हेअदभ्रश्रुतहेविपुलकीर्ते त्वमपिविभोःविश्रुतंयशः प्रख्याहि श्रीभागवतनिबंधेनकथय येनविश्रुतप्रबंधेनविदांबुभुत्सितंबोद्धुमिच्छा समाप्यते यद्यत अन्यथा दुःखैर्मुहुरर्दितात्मनांक्लेशनिर्वाणंन उशंतिनममन्यंते ॥ ४० ॥

---

### भाषाटीका

हम श्री भगवान वासुदेव को नमस्कार ध्यान करते हैं प्रद्युम्न जी को अनिरुद्धजी को संकर्षण को नमः ॥ ३७ ॥

इस मूर्तियों के अभिधान से अमूर्नि अर्थात् प्राकृत मूर्ति रहित और मंत्र मूर्ती यज्ञ पुरुष भगवान् को जो यजन करता है वही पुरुष सम्यग्दर्शन अर्थात् पूर्ण ज्ञानवान् होता है ॥ ३८ ॥

हे ब्रह्मन् इसी स्व निगम अर्थात् अपनी आज्ञा को मुझ से अनुष्ठान की हुई जानकर केशव भगवान ने मुझको ज्ञान और ऐश्वर्य और अपने में भाव भक्ति दी ॥ ३९ ॥

हे अद् भ्रश्रुत ? व्यासजी तुम भी विभु श्री भगवान् के विश्रुत अर्थात् प्रगट यश को प्रख्यान करो कि जिससे ज्ञानी पुरुषों की समस्त बोध इच्छा पूर्ण होती है और जिस यशकीर्तन को बारम्बार दुःखों से अर्दित जीवों के संक्लेश का निवारण होता है । क्योंकि बिना भगवत् यश कीर्तन के और किसी प्रकार भी जीव का कष्ट निवृत्त नहीं होता ॥ ४० ॥

प्रथम स्कंध की पंचम अध्याय ॥५॥

## षष्ठोऽध्यायः ।

सूतउवाच एवंनिशम्यभगवान्देवर्षेर्जन्मकर्मच ।
भूयः पप्रच्छतंब्रह्मन्व्यासः सत्यवतीसुतः ॥ १ ॥

श्रीव्यासउवाच भिक्षुभिर्विप्रवसितेविज्ञानादेष्टृभिस्तव ।
वर्तमानोवयस्याद्येततः किमकरोद्भवान् ॥ २ ॥

स्वायंभुवकयावृत्त्यावर्तितंतेपरंवयः ।
कथंचेदमुदस्राक्षीः कालेप्राप्तेकलेवरम् ॥ ३ ॥

प्राक्कल्पविषयामेतांस्मृतिंतेसुरसत्तम ।
नह्येषव्यवधात्कालएषसर्वनिराकृतिः ॥ ४ ॥

### श्रीधरस्वामी ।

व्यासस्य प्रत्ययार्थंच षष्ठे प्राग्जन्म सम्भवम् । स्वभाग्यं नारदः प्राह कृष्णसंकीर्त्तनोद्भवम् ॥ १ ॥

स्वयमपि तथा चिकीर्षुर्गुरूपदेशांतरभावि तच्चरितंपृच्छतिभिक्षुभिरिति त्रिभिः विप्रवासितेदूरदेशगमनेकृतेसति । विज्ञानस्यादेष्टृभिः उपदेशकर्तृभिः ॥ २ ॥

हेस्वायम्भुवतेत्वयापरंवयः उत्तरमायुः ( कथं ) वर्त्तितंनीतम् । इदमितिदासीपुत्रभूतंकलेवरं ( कथम् ) उदस्राक्षीः उत्सृष्टवानसि ॥ ३ ॥

एषकल्पान्तलक्षणः कालः तेस्मृतिंकथंनव्यवधात्नखण्डितवान् । अडागमाभावस्त्वार्षः । हियतएषकालः सर्वस्यनिराकृतिः अपलापोयस्मात्सः ॥ ४ ॥

---

### दीपनी ।

० ॥ १ ॥ ६ ॥

---

### श्रीवीरराघवः ।

अन्वयोचनूगमिष्यंतःकृपयादीनवत्सलाइत्युक्तंततउपरितनंदेवार्षिवृत्तांतंजिज्ञासुः पृच्छतित्यासइत्याहसूतः एवमिति इत्थंवर्णितंदेवर्षेर्जन्मकर्मचपौर्वदेहिकंनिशम्यसत्यवत्याः सुतोभगवान्श्रीव्यासःतंदेवर्षिंहेब्रह्मन्शौनकभूयःपुनः पप्रच्छ ॥ १ ॥

प्रश्नमेवाहभिक्षुभिरितित्रिभिः तेतवविज्ञानादेष्टृभिर्विज्ञानोपदेष्टृभिः भिक्षुभिः संन्यासिभिर्विप्रवसितेचातुर्मास्यांतेऽन्यत्रगतेसतिततः पश्चाद्भवानाद्येवयसिवर्त्तमानः किंकृतवान् ॥ २ ॥

हेस्वायंभुवतेत्वयापरंवयः भिक्षुविप्रवासप्रभृतिवयः कयावृत्त्यावर्त्तितंनीतंकथंवाप्राप्तकालइदंकलेवरमुदस्राक्षीरुत्सृष्टवानसिप्राक्कालीयमपिकलेवरंवृत्तांतकथनमुखेनप्रसक्तत्वादिदमितिसंन्निहितत्तयापरामृश्यते ॥ ३ ॥

हेमुनिसत्तमप्राक्कल्पविषयांपूर्वकल्पीयामेतांभिक्षूपदेशप्राप्तांभगवत्स्मृतिमेषकालोनव्यवधान्नतिरोहितवान् अडभावआर्षः आगमशास्त्रस्यानित्यत्वाद्धानव्यवधात्किमितिप्रश्नोविवक्षितःव्यवधायकत्वसूचनायकालोविशिनष्टि एषकालः सर्वनिराकृतिः सर्वविनाशकः ॥ ४ ॥

---

### श्री विजयध्वजः

इदंव्यासनारदसंवादोपाख्यानंसूतः शौकादिभ्योऽब्रवीदितिविज्ञापयितुमाह एवमिति हे ब्रह्मन् सत्यवतीसुतोव्यासः देवर्षेर्जन्मकर्म
च एवंश्रुत्वापुनरपितंनारदंपप्रच्छेत्यकान्वयः ॥ १ ॥

नारद स्नेहपाशात्तद्यशःख्यापनायचसर्वज्ञोपिव्यासस्तद्वयःशेषवृत्तिंपृच्छति भिक्षुभिरिति तवविशिष्टज्ञानोपदेष्टृभिर्भिक्षुभिर्ज्ञानाभिक्षादानशीलैर्विप्रवसितेदेशांतरंगते आद्येबाल्येवयसिवर्तमानोभवान्तदनन्तरंकिमकरोदित्येकान्वयः ॥ २ ॥

तदेवविविच्यपृच्छति स्वायंभुवेति स्वयंभुवोब्रह्मणः पुत्रतेतव परंज्ञानोपदेशोत्तरकालीनंवयः कयावृत्त्यावर्तितं मरणकालेप्राप्तेइदंशरीरंवाउदस्राक्षीरुत्सृष्टवानसीत्येकान्वयः ॥ ३ ॥

सर्वेषांपूर्वजन्मसंज्ञादीनांनिराकृतिर्निराकरणंयस्मात्सर्वनिराकृतिरेषकालः सुरसत्तमज्ञानिश्रेष्ठ तवातीतब्रह्मकल्पविषयामेतांस्मरणशक्तिंनैवव्यवधात्तिरोहितांनैवाकरोत् आश्चर्यमेतदित्यस्मिन्नर्थेहिशब्दः एवकारस्त्ववधारणार्थः ॥ ४ ॥

---

### क्रमसंदर्भः

विशेषज्ञानार्थंभूयः पप्रच्छ ॥ १ ॥
भिक्षुभिर्विप्रवासितेभिक्षूणांविशेषेणप्रवासेजातेसतीत्यर्थः ॥ २ ॥
इदंसम्प्रतिवर्ण्यमानम् ॥ ३ । ४ । ५ । ६ । ७ । ८ । ९ ।१० । ११ । १२ । १३ । १४ ॥

---

### सुबोधिनी

मध्यमेनाधिकारेणपदार्थाविनिरूपिताः । श्रवणस्यफलंचांतर्दर्शनरूपं प्रदर्शितम् १ षष्ठेतुवाह्यतस्यैवकीर्त्तनावधिवर्ण्यते । वाह्याभावेत्वांतरस्य व्यर्थतेतिनिरूप्यते २ पूर्वाध्यायांतेअदान्मेज्ञानमैश्वर्यमित्युक्तंतत्रसंदेहःश्रवणमेवनिरूपितमवांतरज्ञानंच किंतदानीमेवभगवतापैश्वर्यंदत्तंकालांतरेवेतिश्रोतव्यविषयनिरूपकस्यफलकथनार्थं भवतिविचारणा अतःपृच्छतीत्याहएवमिति । नारदोक्तौयथार्थत्वमित्यवगतौहेतुमाह भगवानिति असंभावितत्वंनिराकरोतिदेवर्षेरिति हेब्रह्मन्शौनक भूयःप्रश्नस्तूष्णींभावात् आदराधिक्येज्ञातएवविशेष कथनात्भगवत्कृपयाएताव-ज्ज्ञातमितिकथितेपिपुनः प्रश्नः अनतिप्रयोजनंपृच्छतीतिचसत्यवतीसुतइत्युक्तम् ॥ १ ॥

प्रश्नमाहत्रिभिःभिक्षुभिरिति प्रकृतिशरीरत्यागज्ञाननाशाभावः ब्रह्मविदोनकिंचित्कर्त्तव्यमिति योगेनैवशरीरत्यागोमोक्षइतिकालस्त्वन तिक्रमणीयइतिपृष्टः ॥ २ ॥

स्वायंभुवेतीदानींतनसंबोधनंवृत्तिजीविकाशरीरनिर्वाहिकाकथमितियोगादिप्रकाराः वार्थविशेषेपुनारित्यर्थः कालेप्राप्तेअप्राप्तेवेतिप्रश्नः इदमितिबुद्ध्यापुरःस्थितंवेतिपाठेऽत्यनादरः कालजन्यंकालोगृह्णातीतिवाआहकालइति ॥ ३ ॥

एतांस्मृतिंसंस्कारनाशेनपूर्वकल्पविषयेभ्यः व्यवहितांकथंनक्षयंकृतवान्तदाइयंस्मृतिः शब्दमूलास्यात्इदानींतुप्रत्यक्षमूलेतिदेवानां भक्तानामपिसतांस्मृतिंकालोनाशयतितवतुनेत्याश्चर्येणसंबोधनंअल्पस्याप्येतदभावाभावएवकारः कार्यदर्शनाधुक्ताहिशब्दार्थः कालसाक्षात्स्वयंचप्रत्यक्षसिद्धंभगवत्त्वात्कालंसाक्षात्कृत्वाहएषइति ॥ ४ ॥

---

### श्रीविश्वनाथचक्रवर्त्ती

षष्ठेगत्वावनंकृष्णदर्शनंतद्वचः श्रुतिः । तद्वत्ताचिन्मयतनोर्नारदेनाभिरुच्यते ॥ १ ॥
विप्रवासितेतस्मात्प्रवासतोविच्युतेसंप्रसारणाभावआर्षः । किमकरोदितित्वच्छिष्योऽहमपितथाचिकीर्षामीतिभावः ॥ २ ॥
इदंदासीपुत्रभूतंकलेवरंकथम्उत्सृष्टवानासि ॥ ३ ॥
नव्यवधात्व्यवधायनखण्डितवान्अडागमाभावआर्षः । निराकृतिर्विनाशः ॥ ४ ॥

---

### सिद्धांतप्रदीपः

विप्रवासितेचातुर्मास्यांतेऽन्यत्रगमनेकृते ॥ २ ॥
परंवयः गुरुवियोगोत्तरवर्तिवयः उदस्राक्षीरुत्सृष्टवानसि ॥ ३ ॥
नव्यवधात् नतिरोहितवान्अडभावआर्षः ॥ ४ ॥

---

### भाषाटीका

सूतजी बोले हे शौनकजी इसप्रकार से नारदजी के जन्म तथा कर्म को सुनकर सत्यवती के पुत्र श्री व्यास जी फिर भी पूछते भये ॥ १
व्यास उवाच । तुमको विज्ञान उपदेश करने वाले भिक्षुजन चले गये । तब बालक अवस्था में थे आपने क्या किया ॥ २ ॥
हे स्वायं भुव ! किस वृत्तिसे आपकी सब परमवयव्यतीत हुई । और किस प्रकार से काल प्राप्त होने पर आपने इस कलेवर का उत्सर्ग किया ॥ ३ ॥
हे सुर सत्तम ! समस्त वस्तुओं के नाश कर देने वाले इस काल ने आपकी पूर्वकल्प विषयक स्मृतिको क्यो नहीं नाश किया ॥ ४ ॥

---

### श्रीधरस्वामी ।

अकारषंकृतवानहम् । रेफषकारयोर्विश्लेषश्छन्दोऽनुरोधेन ॥ ५ ॥
तत्रतावत्तांकिंचित्कालंतत्रैवआवृत्तिहयन्तितोन्यवसमित्याहएकेतित्रिभिः । एकएवाहमात्मजो यस्याः सायोषिदितिमूढेतिचस्नेहानु बन्धहेतुः ॥ ६ ॥
किंकरोत्यस्यार्थंप्रपञ्चयतिसेति । अस्वतंत्रासाअतोनकल्पानसमर्थाआसीत् । दारुमयीयोषेत्यतिपारवश्येदृष्टान्तः ॥ ७ ॥
तदेवसास्तेहअहंचदिगादिष्वनभिज्ञः अतस्तत्रैवन्यवसमित्याह अहमितिस्मिन्ब्रह्मकुलेतस्याःमातुः स्नेहानुबन्धस्यापेक्षयाकन्नविदेशतिप्रतीक्षयेत्यर्थः ऊषिवान्उषितवान् । पञ्चहायनः पञ्चवर्षः ॥ ८ ॥

एकदानिर्गतांगेहाद्दुहंतींनिशिगांपथि ।
सर्पोदशत्पदास्पृष्टः कृपणांकालचोदितः ॥ ९ ॥
तदातदहमीशस्यभक्तानांसमभीप्सितः ।
अनुग्रहंमन्यमानः प्रातिष्ठंदिशमुत्तराम् ॥ १० ॥
स्फीतान्जनपदांस्तत्रपुरग्रामव्रजाकरान् ।
खेटखर्वटवाटींश्चवनान्युपवनानिच ॥ ११ ॥
चित्रधातुविचित्राद्रीनिभभग्नभुजद्रुमान् ।
जलाशयान्शिवजलान्नलिनीः सुरसेविताः ॥ १२ ॥

श्री विश्वनाथचक्रवर्ती ।

अकारषमितिरेफषकारविश्लेषः छन्दोऽनुरोधेन । यदुक्तमऊर्द्ध्वरेफाविकलन्तेछन्दोभंगभयादिहेति ॥ ५ ॥
एकोऽहमेवात्मजोयस्याः सा ॥ ६ ॥
अस्वतन्त्राअतोनकल्पानसमर्था ॥ ७ ॥
तदपेक्षयाततकर्त्रींकायाअपेक्षातयासामांनत्यजतीत्यहमप्यवसामित्यर्थः ॥ ८ ॥

---

सिद्धांतप्रदीपः

अकार्षम् कृतवानहम् ॥ ५ । ६ । ७ ॥
ऊषिवान् वासंकृतवान् ॥ ८ ॥

---

भाषा टीका ।

नारद उवाच ! मुझे विज्ञान उपदेश करने वाले भिक्षुजन चले गये तब आद्य अवस्था में वर्तमान भी मैं था पर मैंने यह किया ॥ ५ ॥
मेरी मा स्त्री स्वभाव ही से मूढ थी और दासी थी मैं उसका एक मात्र पुत्र था मुझ अनन्य गति बालक मैं उसने बडा स्नेह किया ६
वह मेरे योग क्षेम ( अप्राप्त का पालना प्राप्त का पालन ) की इच्छा करती थी परंतु परतंत्र होनेके कारण असमर्थथी क्योंकि यह
समस्त जगत् ईश्वर के वश है जैसे नचाने वाले के आधीन काठकी पुतली नाचती है ॥ ७ ॥
मैं भी माता के स्नेहानुबंध की अपेक्षा से उसी ब्रह्म कुल में रहा क्योंकि पांच वर्ष का बालक था और देशकाल दिशा कुछ नहीं
जानता था ॥ ८ ॥

श्रीधरस्वामी

गेहान्निर्गतांगांदुहंतींहेतौशतृप्रत्ययः दोग्धुं ( दोहयितुं ) निर्गतामित्यर्थः । पदापादेनआस्पृष्टः ईषदाक्रान्तः अदशत्अखादत् ॥ ९ ॥
तत्मातुर्मरणम् । शंकल्याणमभीप्सतः ईशस्यानुग्रहंमन्यमानः प्रातिष्ठंप्रस्थितोऽस्मि ॥ १० ॥

स्फीतान्जनपदादीनतियातः सन्महाविपिनमद्राक्षमितिचतुर्थेनान्वयः । जनपदादिषुनानागुणदोषयुक्तेषुसमदृष्टिः सन्गतोऽहमिति तात्पर्यार्थः स्फीतान्समृद्धान्जनपदान्देशान् । तत्रतस्यांदिशि । पुरग्रामव्रजाकरान्तत्रपुराणिराजधान्यः । ग्रामाभृगुप्रोक्ताः विप्राश्चविप्रभृत्याश्चयत्रचैववसन्तितं सतुग्रामइतिप्रोक्तः शूद्राणांवासएवचेति । व्रजागोकुलानिआकरारत्नाद्युत्पत्तिस्थनानितान्खेटाः कर्षकग्रामाः । खर्वटागिरितटग्रामाः भृगुप्रोक्तावा एकतोयत्रतुग्रामोनगरंचैकतः स्थितम् । मिश्रन्तुखर्वटंनामनदीगिरिसमाश्रयमिति । वाट्यः पूगपुष्पादीनां वाटिकास्ताः वनानिस्वतः सिद्धवृक्षाणांसमूहाः । उपवनानिरोपितवृक्षाणांसमूहाःतानिच ॥ ११ ॥
चित्रैर्धातुभिः सुवर्णरजताद्यैः विचित्रानद्रींश्च । इभैर्भग्नाभुजाः शाखायेषामतेद्रुमायेषुतान् । शिवानिभद्राणिजलानियेषांतान् । नलिनीः सरसीः ॥ १२ ॥

---

दीपनी

नलिनीः पद्मयुक्तदेशाः कुमुदिन्यांनलिन्यान्तुविसिनीपद्मिनीमुखाइत्यमरकोषाभिधानात्तानित्यर्थः । अतएवतस्यार्थः सरसीतिस्वामी तत्रसरसीः सरोवरान्बृहज्जलाशयानितियावत् ॥ १२ ॥

---

### श्रीवीरराघवः

एवंस्थितेकदाचिन्निशिगेहान्निर्गतांगांदुहंतींदोग्धुंप्रवृत्तांकृपणांममातरंपथिमार्गेपदापादेनस्पृष्टः कालचोदितः कालशरीरकेणादेवेन चोदितः सर्पः अदृशद्दंशतसाऽम्रियतेत्यर्थतोद्रष्टव्यम् ॥ ९ ॥

तदाहं तन्मरणंभक्तानांशंसुखमभीप्सतः कामयमानस्येशस्यभगवतोनुग्रहरूपंमन्यमानउत्तरांदिशंप्रतिप्रातिष्ठंप्रस्थितवानस्मि ॥ १०॥

तत्रप्रस्थानेस्फीतान्समृद्धान्जनपदान्देशान् क्षितीयांतानामतियातइत्युपरिष्टादन्वयः पुराणिपट्टणानिग्रामान्हट्टरहितान्व्रजान्गोपाल निवासान्आकरान्रत्नाद्युत्पत्तिस्थानानिखेटान्कृषीवलग्रामान्खर्वटान्निषादादिग्रामान्वाटीःपुष्पवाटिकाःवनान्यरण्यरूपाणिउपवनानिकृ त्रिमवनानिच ॥ ११ ॥

तथाचित्रैर्नानाविधैर्धातुभिर्गैरिकादिभिर्विचित्रान्नदीपर्वतान् इभैर्गजैर्भग्नाः विच्छिन्नाभुजाः शाखायेषांतान्द्रुमान्शिवानिविशुद्धा निजलानियेषु तान्जलाशयान्सरांसितथासुरैः सेविताः क्रीडिताः नलिनीयाकरान्कथंभूताः चित्रानानाविधाः खनायेषांतैः पत्ररथैः पत्राणितद्रूपात्मकाः पक्षारथारथवत्गमनसाधनानियेषांतैरित्यर्थः पक्षिभिः संकुलाद्यतिशेषः भ्रमद्भिर्भ्रमरैःश्रीःशोभायासांताः ॥ १२ ॥

---

### श्रीविजयध्वजः

कियंतंकालमवात्सीदिति प्रश्नस्यमातृमरणपर्यंतमवात्समिति परिहारमभिप्रेत्याह एकदेति स्पृशउपतापइतिधातोः आक्रमणेनतप्तः गांगोमतल्लिकाम् अदशत्अभक्षयत् कालेनमृत्युनाचोदितःप्रेरितः ॥ ९ ॥

सोहंतदामातुरंत्यकर्मकृत्वा तन्मरणंभक्तानामभीष्टमीशस्यानुग्रहं मन्यमानउत्तरांदिशंप्रातिष्ठमित्यन्वयः ॥ १० ॥

एकएवसहायरहितः अहंतत्रोत्तरस्यांदिशिदेशान्समेतानतीत्ययातइतिचतुर्थश्लोकेनान्वयः व्यालाश्चदुष्टगजाश्चउलूकाश्चशिवाः शृ गालयश्चव्यालोलूकशिवाः तासामजिरंक्रीडास्थानंप्रतिभयाकारंमृत्युमाह्वयदिवास्थितमतएव घोरमहदपरविपिनमद्राक्षमित्येकान्वयः सर्वर्तुसंपत्त्यास्फीतान्समृद्धान् पुराणिग्रामाश्चव्रजाश्चआकराश्चपुरग्रामव्रजाकराः पुरंराजाश्रयः ग्रामोबहुजनाकीर्णः गोपालानांगवां-चनिवासस्थानंव्रजः रत्नाद्युत्पत्तिस्थानमाकरः खेटान्मृगयोपजीवनप्रदेशान् पट्टनानिवाट्यश्चतास्तथोक्ताःस्ताः पट्टनवाटीः जलस्थ-लायतिस्थिताराजधानीपट्टनं पुष्पोपजीविनांनिवासस्थानंवाटी वृक्षसमुदायोवनम् आरोपितवृक्षसमुदायउपवनम् ॥ ११ ॥

इभैर्गजैर्भग्नाभुजद्रुमाभूर्जवृक्षायेषुतेतथोक्ताः "भूर्जपत्रभुजोभूर्जेमृदुत्वक्चर्ममाल्लिकावि" तियादवः इभभग्नाः भुजाः शाखायेषांतेतथो-क्ताःइभभग्नभुजद्रुमायेषुतेतथोक्ताइतिवा तान् विचित्रधातुभिः नानाविधगैरिकहरितालादिभिःचित्राआश्चर्यरूपाअद्रयः गिरयः तान् शि-वजलान्गुरुत्वादिदोषरहितान्जलाशयान् सरोवरादिजलाधारान् देवनिषेवितानलिनीः पुष्करिणीः ॥ १२ ॥

---

### सुबोधिनी

भगवतापिकिंचित्विवेकार्थंप्रतिबंधःस्थापितःजातेतुविवेकेतद्दूरीकृतवानित्याहएकदेति यदासर्वेपिगृहस्थाःस्वस्वकार्येव्यावृत्तागेहान्निर्ग तामितिगृहान्निर्द्धरणक्लेशोपिनिवारितःशुद्धिश्चगोस्पर्शेदुहंतीमितिसर्वसत्क्रियाव्यावृत्तत्वंपथिस्थितःसर्पः भगवत्प्रेरणयासमागतः भग-वत्कृतत्वज्ञापनायपदास्पृष्टइतितस्याअपराधउक्तः वस्तुतस्तस्याअपिनदोषःनवातस्येत्याहकालचोदितइतिकालादयोभगवदिच्छानुसारे णकार्यकर्तारः ॥ ९ ॥

मयापिसभगवदुपकारःइतिज्ञातवानतथैवकृतमित्याह तदातदहमीशस्येति सर्वदाहिभगवान्भक्तानामेवकल्याणमीष्टेतथापिकदाचित्प्र तिबंधकानामप्यात्मत्वात्नदूरीकरोतियदितदपिकुर्यात्तदामहाननुग्रहोयमितिज्ञात्वाचिकीर्षितेनविलम्बः कर्तव्यइत्यभिप्रायेणाहअनुग्रहंमन्य मानइतिउत्तरामिति "एषावैदेवमनुष्याणांशांतादिगि" तिश्रुतेः ॥ १० ॥

भगवत्कृतेनप्रतिबंधइतिज्ञापयितुंभूजलद्रुमातिक्रममाह स्फीतानितिसार्धद्वाभ्याम् तत्रैकेनभूमिविशेषानाहस्फीतान्सस्यादियुक्तान्ज नपदान्मालवादीन्पुरान्नगरान्स्थूलान्ग्रामाःसूक्ष्मावासाःव्रजागवांस्थानानिआकरालवणादीनांखेटाःकृषीवलग्रामाःखर्वटाअन्नहीनाग्राम एकतोनदी अपरतः तादृशाः वाटीः पुष्पादिवाट्यः वनानिमध्यस्थानानिसहजानिउपवनानिआरोपितवृक्षाणांचकारात्खलादीनि ॥ ११ ॥

वृक्षसहितपर्वतानामतिक्रममाहचित्रधातुविति चित्रैर्धातुभिः विचित्रानद्रीन्तेषामेवविशेषणमइभैर्भग्नाभुजायेषांतादृशाद्रुमायेषामि तिगमनार्थंनिमित्तउक्तेविश्राममनिमित्तानिजलान्याहजलाशयान्महापुष्करिणीः तासामेवविशेषणंशिवजलान्शीतलंरोगाद्यनुत्पादकजलं शिवंनलिनीःकमलादियुक्तदेवखाताः सुरसेविताः देवालयादिसहिताः ॥ १२ ॥

---

### श्रीविश्वनाथ चक्रवर्ती

दुहन्तींदोग्धुम् ॥ ९ ॥

तन्मातुर्मरणमीशस्यमय्यनुग्रहं मन्यमानः प्रातिष्ठम् अकृततत्साम्परायिकविधिरेवगतवान्परस्मैपदमार्षम् ॥ १० ॥

चित्रस्वनैः पत्ररथैर्विभ्रमद्भ्रमराश्रियः ।
नलवेणुशरस्तंवकुशकीचकगह्वरम् ॥ १३ ॥
एकएवातियातोऽहमद्राक्षंविपिनंमहत् ।
घोरंप्रतिभयाकारंव्यालोलूकाशिवाजिरम् ॥ १४ ॥
परिश्रांतेंद्रियात्माहंतृट्परीतोबुभुक्षितः ।
स्नात्वापीत्वाह्रदेनद्याउपस्पृष्टोगतश्रमः ॥ १५ ॥
तस्मिन्निर्मनुजेऽरण्येपिप्पलोपस्थआश्रितः ।
आत्मनात्मानमात्मस्थंयथाश्रुतमचिंतयम् ॥ १६ ॥

### श्रीविश्वनाथचक्रवर्ती

जनपदादीनतियातः सन्महद्विपिनमद्राक्षमितिचतुर्थेनान्वयः । तत्रपुराणिराजधान्यः ग्रामाभृगुप्रोक्ताः । विप्राश्चविप्रभृत्याश्चयत्रचैव वसन्तिते । सतुग्रामइतिप्रोक्तः शूद्राणांवासएवचेतिव्रजागोकुलानि । आकरारत्नाद्युत्पत्तिस्थानानि । खेटाः कर्षकग्रामाः । खर्वटागिरितट ग्रामाभृगुप्रोक्तावा । एकतोयत्रतुग्रामोनगरश्चैकतः स्थितम् । मिश्रन्तुखर्वटंनामनदीगिरिसमाश्रयमिति । वाट्यः पूगपुष्पवाटिकाः । वनानिस्वतः सिद्धवृक्षसमूहाः उपवनानिरोपितवृक्षसंघाः ॥ ११ ॥

चित्रैर्धातुभिः सुवर्णरजताद्यैर्विचित्रान्अद्रीन् । इभैर्भग्नाभुजाः शाखायेषांतेद्रुमायेषुतान् । नलिनीः सरसीः ॥ १२ ॥

---

### सिद्धांतप्रदीपः

गांदुहंतींहेतौशतागेहान्निशिगांदोग्धुंनिर्गताम् पदास्पृष्टः पादेनास्पृष्टः ॥ ९ ॥

शंसुखमभीप्सतः कामयमानस्य तन्मातृमरणम् अहमनुग्रहं मन्यमानः प्रातिष्ठम् ॥ १० ॥

स्फीतान्समृद्धान् जनपदान्देशान् तत्रतेषुजनपदेषु पुरग्रामव्रजाकरान् पुराणिपट्टणानि ग्रामान्हट्ट शून्यान्विप्रादिनिवासान् व्रजान्गोपनिवासान् आकरान् रत्नाद्यालयान्खेटान् कर्षकनिवासान् खर्वटान् निषादादिनिवासान् वाटीः पुष्पाढ्याः वनानि अरण्यरूपाणि उपवनानि कृत्रिमाणिवृक्षस्थानानि ॥ ११ ॥

नलिनीः सरसीः ॥ १२ ॥

---

### भाषाटीका

एक दिन मेरी मा रात्रिको घर से बाहर गोदोहन के निमित्त गई थी कि काल प्रेरित सर्प पर उसका पादस्पर्शहुआ और उस बिचारी को सर्पने डस लिया ॥ ९ ॥

मैंने उस समय उसको भक्तों के कल्याण कामना करने वाले भगवान का अनुग्रह मानकर उत्तर दिशा को प्रस्थान किया ॥१०॥

वहां विस्तृत जन पद ( देश ) पुर ( राजधानी ) ग्राम ( गाम ) व्रज ( गौ के स्थान ) आकर ( खान खोदने वालों के निवास ) खेट ( खिसिद्रों के निवास ) खर्वट ( नदीतट और पर्वतों के पड़ाव ) वाटी ( वाड़ी ) वन उपवन ॥ ११ ॥

चित्र धातुओं से विचित्र पर्वत हाथियों के भंग किये शाखा प्रशाखा युक्त वृक्ष, पवित्र जल जलाशय देवगण सेवित नलनी ( सरसी ) ॥ १२ ॥

---

### श्रीधरस्वामी ।

चित्राःस्वनायेषांतैः पत्ररथैः पक्षिभिः तथादभ्रमुद्भैरितस्ततोविभ्रमद्भिर्भ्रमरैः श्रीःशोभायासांताः नलिनीअतियातः अतिक्रम्यगतः सन् महद्विपिनंवनमद्राक्षम् । कीदृशंनलवेणुशरस्तम्बैः कीचकैश्चगह्वरंदुर्गमम् । तत्रवेणुजातयएवविपुलान्तरगर्भाः कीचकाः घोरंदुःसहम् प्रतिभयाकारंभयंकररूपम्व्यालादीनामजिरंक्रीडास्थानम् ॥ १३ । १४ ॥

परिश्रांतानीन्द्रियाणिआत्मादेहश्चयस्य । तृषापरीतोव्याप्तः । उपस्पृष्टआचान्तः ॥ १५ ॥

पिप्पलोपस्थेअश्वत्थमूलेआश्रितउपविष्टः । आत्मनाबुद्ध्याआत्मस्थंहृदिस्थम्आत्मानंपरमात्मानम् ॥ १६ ॥

---

दीपिनी

कीचकाः सच्छिद्रवंशाःतथाचरघौ"सकीचकैर्मारुतपूर्णरन्ध्रैः कूजद्भिरापादितवंशकृत्यमिति ॥ १३ ॥ १४ ॥

---

श्रीवीरराघवः ।

अतियातोऽतिक्रांतः एकोऽसहायएवाहंनलादिभिर्गह्वरंमहद्विपिनंवनमद्राक्षंदृष्टवानस्मितत्रनलोग्रंथिपर्णोवेणवःस्थलवंशाः सशब्दाः कीचकाःसूक्ष्माः सच्छिद्राः शरस्तंबाः अश्ववालाःकुशाःप्रसिद्धाः विपिनमेवाविशिनष्टिघोरमुग्रंदुःप्रवेशमतएवव्यालानांदुष्टगजानामजगराख्यसर्पाणांवाउलूकानांशृगालविशेषाणां चत्वरंक्रीडास्थानमतीवप्रतिभयाकारंप्रतिमुखगच्छतांभयापादकम् ॥ १३ । १४ ॥

तत्राहंपरिश्रांतानींद्रियाणयात्मादेहश्चयस्यतृषापिपासयापरीतःव्याप्तः बुभुक्षितःक्षुधितश्चनद्याहृदेस्नात्वोपस्पृष्टः कर्मरिक्तःआचांतः पीत्वाजलमितिशेषः गतः श्रमोयस्यतथाभूतः ॥ १५ ॥

तस्मिन्निर्मनुष्येऽरण्येविपुलस्याश्वत्थस्योपस्थेमूलेआश्रितउपविष्टःआत्मस्थंजीवात्मनिस्थितंहृदयकमलस्थंवाआत्मानंपरमात्मानमात्मनामनसाऽर्चितयंध्यातवानस्मि ॥ १६ ॥

---

श्रीविजयध्वजः

चित्रस्वनैर्नानाविधस्वरमधुरैः पत्ररथैः पक्षिभिः सहविभ्रमंतः इतस्ततश्चलंतः भ्रमराभृंगाः विभ्रमद्भ्रमराः विभ्रमद्भ्रमराणांश्रीः शोभासमृद्धिर्वायासुतास्तथोकास्ताः शराणांस्तंबा शरस्तंबाः नलानिचवेणवश्चशरस्तंबाश्च कुशाश्चतेतथोक्ताःतैर्गह्वरः निबिडोऽरण्यविशेषः वायुनाऽद्भूतस्वतः स्वनाः वेणवः कीचकाउच्यंते ॥ १३ ॥ १४ ॥

तृषापरीतः पानीयपानेच्छुः बुभुक्षितो अन्नकामः अतएवपरिश्रांतेंद्रियदेहोहं तत्रमहारण्येनद्याह्रदेउपस्पृष्टः कृतपादप्रक्षालनादिकः-स्नात्वातर्पणादिसकलाः क्रियाः विधायस्वादूदकंपीत्वातेनहेतुनागतश्रमोऽपगतालस्योभूत्वा ॥ १५ ॥

मनुष्यसंच.ररहितेऽरण्येपिप्पलोपस्थेअश्वत्थमूलेआश्रितः स्वस्तिकासनउपविष्टः समाहिताचित्तोभूत्वाआत्मनाविषयेभ्यः आहृतेनमनसाहृदिसंस्थितमात्मानं प्रत्यगात्मानंयथापरमहंसेभ्यः श्रुतंतथाअर्चितयमित्येकान्वयः ॥ १६ ॥

---

क्रमसंदर्भः

परिश्रान्तेतियुग्मकम् ॥ १५ ॥ १६ ॥

---

सुबोधिनी

आश्चर्यरसायाह चित्रः स्वनोयेषांतादृशैःपक्षिभिः सहविशेषभ्रमणयुक्तानांभ्रमराणांश्रियोयासुएवमनूद्यतेषामतिक्रमणमाहनलवेणुशराणांस्तंवाः कुशाः कीचकाः सरंध्राः स्थूलावेणवःस्तैर्गह्वरंमहद्वनम् ॥ १३ ॥

एकएवातियातोहंकियद्देशातिक्रमोऽत्रविवक्षितः अथवापूर्वोक्तानामेवातिक्रमःपूर्वोक्तानतियातोहंपूर्वंपथिकाअन्येस्थिताःतत्रतत्रघोरंमहद्विपिनंतुएकएवअद्राक्षंतस्यभयजनकत्वंविपिनममभयंजातमित्याशयेनाहघोरंव्याघ्रविदारितमांसादिभिःभयस्यापिप्रतिभयजनकः आकारोयस्यव्याघ्रादयोपिततोभीताभवंतीत्यर्थःमध्येअवृक्षदेशोपिभयानकइत्याहव्यालोलूकशिवाजिरंव्यालाः सर्पाः उलूकाः दिवाभीताः शिवाःशृगालाः तेषामंगणत्वेनतद्भक्षितमांसादियुक्तंपूर्वंभगवार्चितनेनगतस्याप्यतिभयानकदर्शनात् ॥ १४ ॥

बहिर्मुखत्वेजातेपरिश्रांतेन्द्रियात्मापरितःश्रांतानिइंद्रियाणिआत्मादेहश्चयस्यतथातृट्परीतः बुभुक्षितश्चजातःकस्याश्चिन्नद्याः पार्वत्याः कुण्डभूतोह्रदः सवृक्षादिनाशीतलोभवतितत्रस्नात्वाचपीत्वाचपुनरात्मार्चितनार्थमुपस्पृष्टःआचम्यचिंतनमात्रेणैवांतः करणक्लेशनिवृत्तिः देहेंद्रियाणांचस्नानपानादिना ॥ १५ ॥

एवंसावधानोभूत्वामनुष्यसंबंधाभावमात्रेणकोलाहलपापादिसंबंधाभावात्उत्तमदेशारण्येतत्रापिपिप्पलोपस्थेआस्थितः आश्रितः पश्चाद्वारेणवृक्षस्पर्शात्आत्मानमर्चितयम्कोहमितितथाचतस्मिन्नात्मत्वेनज्ञातेकेनाहमेतादृशोभासइत्याकाक्षायांस्वेनैवस्वप्रकाशेनैवआत्मनाएवंस्वप्रकाशात्मज्ञानानंतरंपुनर्गूढोपदेशस्मरणेनयस्याहमात्मापीठभूतःसकोयमितिजिज्ञासायांआत्मन्येवप्रकाशमानंभगवद्रूपंदृष्टवान्सातुचिंतनीयामानसीमूर्तिः यथाश्रुतमितिवचनात् तल्लब्ध्वाचिंतायामारब्धायांभक्तिरुत्पन्नातस्यामुत्पन्नायांचरणांभोजध्यानमारब्धम् ॥ १६

---

श्रीविश्वनाथचक्रवर्ती

कीदृशी: पत्ररथैः पक्षिभिर्हेतुभूतैर्विभ्रमद्भिः मधुकृद्भिः इतस्ततश्चलद्भिर्भ्रमरैः श्रीः शोभायासांताः अतियातः अतिक्रम्ययातः स्वनलादिभिर्गह्वरंविपिनमद्राक्षमित्यन्वयः । स्तम्बोगुच्छस्तृणादिनः वेणवःकीचकास्तेस्युर्येस्वनंत्यनिलोद्धताइत्यमरः घोरंदुष्प्रेक्ष्यम् । यतः प्रतिभयाकारंभयंकररूपम् । व्यालादीनामजिरंक्रीडास्थानमतेषुतेषुवहुविस्मयास्पदेषुभीत्यास्पदेषुचदृष्टेष्वपिनमेविस्मयोनापिभीतिरभूत्मन्मनसस्तदाभगवन्माधुर्यमात्राविष्टत्वादितिभावः ॥ १३ । १४ । १५ ॥

ध्यायतश्चरणांभोजंभावनिर्जितचेतसा ।
औत्कण्ठ्याश्रुकलाक्षस्यहृद्यासीन्मेशनैर्हरिः ॥ १७ ॥
प्रेमातिभरनिर्भिन्नपुलकांगोतिनिर्वृतः ।
आनंदसंप्लवेलीनोनापश्यमुभयंमुने ॥ १८ ॥
रूपंभगवतोयत्तन्मनः कांतंशुचापहम् ।
अपश्यन्सहसोत्तस्थेवैक्लव्याद्दुर्मनाइव ॥ १९ ॥
दिदृक्षुस्तदहंभूयः प्रणिधायमनोहृदि ।
वीक्ष्यमाणोपिनापश्यमवितृप्तइवातुरः ॥ २० ॥

श्रीविश्वनाथचक्रवर्त्ती ।

पिप्पलोपस्थेअश्वत्थमूलेआश्रितःआविष्टः । आत्मनाबुद्धयाआत्मस्थमुत्पन्नप्रेमत्वान्मनस्याविच्छेदेनैवकृतवासमात्मानंपरमात्मानम् । तथापियथाश्रुतंमन्त्रोपदिष्टध्यानमनतिक्रम्यअचिन्तयम् ॥ १६ ॥

---

सिद्धांतप्रदीपः

कथंभूतानलिनीःपत्ररथैः पक्षिभिरुपलक्षिताः विभ्रमद्भिर्भ्रमरैः श्रीःशोभायासांताः स्फीतान्जनपदादीन्नलिन्यंतान्भावान्अतियातःसन् विपिनमद्राक्षमित्यनेनान्वयः कथंभूतंविपिनम् नलादिभिर्गव्हरम् दुर्गमम् तत्रविपुलांतरालगर्भः वेणुभेदः कीचकः ॥ १३ ॥
प्रतिभयाकारम् भयंकररूपम् व्यालादीनामजिरंक्रीडास्थानम् व्यालोदुष्टगजः सर्पोवा "व्यालोदुष्टगजेसर्पेइतिमेदिनीकरकोशात् ॥१४॥
नद्यास्तद्विपिनगतायाः ॥ १५ ॥
आत्मानंपरमात्मानम् आत्मनिहृदि आत्मनाचेतसाअचिंतयम् ध्यातवान् ॥ १६ ॥

---

भाषाटीका

विचित्र स्वन वाले पक्षी और भ्रमरों से शोभित सरोवरी, नल ( नरसल ) वेणु सरकंडों के स्तंभ और कुश कीचकों के गव्हरों को ॥ १२ ॥
अकेले ही अतिक्रम कर मैंने एक बडा विपिन देखा कि जो बडा भयंकर और घोर था और व्याल उल्लूक शिवाओं का क्रीडा स्थान था ॥ १३ ॥
मेरा शरीर और सब इंद्रिये परिश्रांत थी मैं तृषा और क्षुधा से व्याकुल था नदी के ह्रद में स्नान आचमन कर जलपान कर गतश्रम हुआ ॥ १४ ॥
उस मनुष्य शून्यवन में पीपल के नीचे बैठकर अपने आप यथाश्रुत आत्मा का चिंतन करने लगा ॥ १५ ॥

---

श्रीधरस्वामी ।

भावेनभक्त्यानिर्जितंवशीकृतंयच्चेतस्तेनऔत्कण्ठेयनाश्रुकलायुक्तेअक्षिणीयस्य ॥ १७ ॥
प्रेमणोऽतिभरेणनिर्भिन्नपुलकानिअंगानियस्य । आनन्दानांसंप्लवेमहापूरेपरमानन्दे । उभयमआत्मानंपरञ्च ॥ १८ ॥
मनसःकान्तमभीष्टम् । शचाशोकस्तामपहन्तीतितथातत् उत्तस्थेउत्थितवानस्मि ॥ १९ ॥
हृदिमनःप्रणिधायस्थिरीकृत्य । अवितृप्तोऽहमआतुरइवअभवामितिशेषः ॥ २० ॥

---

दीपिनी

महापूरेमहाप्रवाहेइत्यर्थः ॥ १८ ॥ २१ ॥

---

श्रीवीरराघवः ।

भावनिर्जितेनाभ्यासवशीकृतेनचेतसाचरणांभोजंध्यायतः चिंतयतः औत्कंठ्यात्प्रेमपूर्वकानुध्यानाद्धेतोरश्रूणामानंदजनेत्रजलानांकलाबिंदवोययोस्तेअक्षिणीयस्यतस्यमेममहृदिशनैः हरिरासीदाविरासीत् ॥ १७ ॥
तदाप्रेमाधिक्येनहेतुनानिर्भिन्ना अभिव्यक्ताः पुलकारोमांचायस्मिंस्तदंगंशरीरंतस्यस्स अतीवनिर्वृतः सुखितः आनंदसप्लवे आनंदप्रवहेलीनोमग्नः हेमुनेउभयंदेहमात्मानंचनापश्यंनदृष्टवानास्मि ॥ १८ ॥

### श्रीवीरराघवः ।

यदाविर्भूतंमनः कांतमनसोतीव प्रियमतएवशुचापहंशुचायाः शोकस्यापहंतृ भगवतोरूपंतत्पुनरपश्यन्वैक्लव्यात्तद्दर्शनकृतादधाप्त्यां दुःखितमनाः सहसाआशूत्तस्थावुत्थितवानस्मिकैवल्यादितिपाठांतरम् ॥ १९ ॥

तदाऽसहायत्वात्तद्रूपंभूयः पुनः द्रष्टुमिच्छुरहंहृदिमनः प्रणिधाय।स्थिरीकृत्यवीक्ष्यमाणश्चितयन्नपिनापश्यमतएवातुरइवविषयातुरइवा वितृप्तोऽभवमिति ॥ २० ॥

---

### श्रीविजयध्वजः

यथाश्रुतमर्चितयामित्येतद्दर्शयितुंजाग्रदाद्यवस्थास्वरूपंनिरूपयति स्वप्नइति स्वप्नाद्यवस्थाआत्मनः परमात्मनः एकाशादात्मनो-जीवस्योत्पद्यंतेइत्यन्वयः तंत्रेणोपात्तत्वादात्मशब्दस्यद्विरावृत्तिः कर्तव्या जीवमनः स्थितमायाख्यदृष्टश्रुतवस्तुसंस्कारोपादानकोजाग्र-त्पदार्थसदृशकरितुरगाद्यनेकपदार्थदृष्टिरूपः स्वप्नः सर्वेन्द्रियोपरतिरूपत्वात्स्वप्नजागरित विषयग्रहणरहिताशय्यापरपर्यायासुषुप्तिः नामरूपक्रियासुवृत्तिर्यस्यसतथोक्तः आभासः प्रत्ययः नामरूपक्रियाविषयप्रत्ययोजाग्रत् एतदवस्थात्रय कारणंब्रह्मनमृदादिवत्कार्या-नुस्यूतं किंतुततोविलक्षणंतदित्यभिप्रेत्याह संविदिति समीचीनाप्रकृतिप्राकृतमिश्ररहिताविज्ञानं यस्यतत्तथोक्तं सम्यक्निर्दोषमात्मा-नंवेत्तीति संवित् "तदात्मानमेववेदाहंब्रह्मास्मी"तिश्रुतेः शास्त्रंसर्वनियंतृ पद्यतइतिपदंपरममुत्तमंप्राप्तव्योत्तम् एवंजाग्रदाद्यवस्थाकर्तृत्वे-नात्मादिभ्योत्यंतेपकारकंविशिष्ट ज्ञानघनंसर्वानर्यामि प्राप्तव्योत्तमंतुर्यंब्रह्मस्वरूपंश्रुतंतदेवाचिंतयमितिभावः ॥ १७ ॥

एतदेवविविच्यदर्शयति नेति चित्रमाश्चर्यरूपं चित्रमविमिश्रमज्ञानात्मकंवा चित्तंचेतनंजीवंत्रायतइतिवा चित्ज्ञानंतनोतिरातिज्ञानि-नांवहुलीकरोतितदन्येषांददातिगुरुमुखेनेतिवा चित्तरतंवा "सहिसर्वमनोवृत्तिप्रेरकः समुदाहृत"इतिस्मृतेः चिनोतीतिचित् चेतास्रष्टाब्रह्मा ततरतिअतीत्यवर्तते चिनोतिसृजतिरमयतिवा तस्मादुत्तममितिवा भगवदैश्वर्यादिगुणसामग्रीमत्पदंरूपंहरेरितिशेषः तत्ततंव्याप्तंभग-वतः हरेः पदंवाएवंविधंतत्प्रकृत्यादिसंबंधविधुरत्वादिंद्रियार्थं जाग्रदवस्थांनानुगच्छेन्नस्वप्नावस्थांनसुषुप्त्यवस्थां चिंतितोर्थोमनोरथ-इत्यभिधानात् नमनोरथमतएवननिरोधंमरणमनुगच्छेदित्यस्यप्रत्येकमन्वयः चशब्दोमिथः समुच्चयार्थे ॥ १८ ॥

ननुकालतोपिस्वप्नाद्युत्पत्तिदर्शनात्तत्कर्तृत्वंहरेः कथमित्याशंक्यसकलप्रपंचकर्तृत्वेनमुख्यकर्तृत्वात्तदंतःपातिस्वप्नाद्यवस्थाकर्तृत्वंकिं वक्तव्यमित्याभिप्रेत्यप्रपंचसृष्ट्यादिकर्तृत्वमाह । सइति । सृष्ट्यग्रेसएकोभगवानासीदित्यवांतरान्वयः । सपुनःसिसृक्षुःअंतर्यामितयाअव तारैश्चक्रीडिष्यन् क्रीडितुमिच्छन्नात्मनः स्वस्माखोदरात्ब्रह्मादिपरमाणुपर्यंतमिदंजगत्सृष्ट्वा अंतर्यामितयाप्रविश्य प्रादुर्भावैश्चविहृत्यपुनश्च तज्जग्ध्वासंहृत्यप्रलयेकेवल एकाकी उदास्ते जीवप्रवृत्तिप्रत्युदासीनोवर्ततइत्यन्वयः जग्ध्वाउदास्तइतिसंध्यभावः प्रकृत्यादिसाधनांतरम-तरेणापिस्रष्टुंशक्तइतिमाहात्म्यंद्योतयितुं सृष्टिस्थितिसंहारकर्तृत्वमेवनज्ञानादिकर्तृत्वंचास्तीति ॥ १९ ॥

इदानीमुपासितफलमाह ध्यायतइति भावेनभक्त्यानिर्वृतंपरमानंदमाप्तंचेतोयस्यसतथातस्याउत्कंठायाः जातानामश्रूणांबाष्पाणांकला भिर्विंदुभिर्युक्तेअक्षिणीयस्यसतथातस्य शनैरव्यग्रेणस्वचरणकमलंध्यायतोमेहृदिहरिरासीत्प्रत्यक्षोभूदित्येकान्वयः ॥ २० ॥

---

### क्रमसंदर्भः

ध्यायतइति । शनैः सौरङ्गादिक्रमेणइद्यासीत्स्वयमेवाविर्भूतवान् ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥

---

### सुबोधिनी

ततश्चरणांभोजंभक्त्यानिर्जितचेतसाध्यायतोभक्त्यानंदः पूर्णोजातः तेनप्रेमौत्कंठ्यात्आनंदाश्रुप्रभृतयोजाताः ततअत्युत्कंठ्याश्रुकलाक्ष स्यहृदयेसर्वथावहिर्दर्शनाभावेचिंतनानुवृत्त्यर्थंभगवान्शनैराविरासीत् ॥ १७ ॥

मानसकल्पितमूर्त्तौअभ्यंतराद्भगवदाविर्भावेमानसाविर्भूतयोरैक्यंज्ञातंतदाह । प्रेमातिभरेति । भयंहिभगवत्साक्षात्कारः एवमेवब्रह्म साक्षात्कारोपियथागंगाजलेदेवतारूपायागंगायाध्याने क्रियमाणेसाक्षाद्भगवत्पद्याविर्भवति तथासर्वेषामात्मनामात्मभूतेआत्मस्थेभगवति ध्यायमानेसाक्षाद्भगवतआविर्भावश्चेत्स्वतः तत्रस्थिरीभूतेप्रवेशः सायुज्यंयथाजलस्यदेवतायांप्रवेशेनदीशुष्यातियथाजीवोब्रह्मसंपद्यतेएव माविर्भूतेभगवतिसांनिध्यात्परमप्रेम्णः अतितरांमहापूरः सांनिध्यक्षणानामुत्तरेअत्युत्कृष्टत्वात्तेनपूरेणनिर्भिन्नाः पुलकाः रोमांचाः तस्य रोमकूपद्वारावहिर्निगतइत्यर्थः एवंसर्वांगेआनंदेपूर्णेपरमानिर्वृतिर्जाताशांतानंदमयोजातइत्यर्थः सचपुनरानंदसंप्लवेगंगातएवोद्धृतकलशजलं पुनर्गंगायांप्रक्षिप्तंसत्गंगैवभवतितथा आनंदसंप्लवेलीनः तदाआत्मानं भगवंतंचउभयंनापश्यंहेमुनेइतिसंबोधनंसम्वादार्थंकदाचिन्मुनीना मेवंभावः आनंदचैतन्यभावः प्रविष्टः न चिच्चेनस्फुरितइत्यर्थः ॥ १८ ॥

ततोभगवदिच्छयाभगवतितिरोभूतेस्वस्याप्यानंदांशेतिरोभूतेमानस्यपिमूर्तिस्तिरोभूतावलवत्याह्याभिभवात् तदाभगवतोरूपंमनसोभर्तृत्वे नप्रकाशमानंसर्वदुःखनाशकमपश्यन्कचिदितोगतइतिवुद्ध्यासहसोत्तस्थौउत्थितवानस्मितन्वतः पदार्थस्यकुतोवहिर्गमनसंभावनातआह वैक्लव्यात्विक्लवतयानस्फुरितमित्यर्थः विकलताहिसर्वविस्मारिका । किंच । दुर्मनाइवजातः दुर्गतमनोयस्ययथासर्वस्वनाशेसर्वस्वाविष्ट चित्तंनष्टमिवभवतितथाभगवन्मूर्त्तौतस्याचित्तजातमितिदृष्टत्वं । पुनः कियत्कालसमाधानंज्ञातवान्भगवानाविर्भूतः इतितेनचैतत्सर्वंज्ञा तमिति ॥ १९ ॥

### सुबोधिनी ।

ततः सावधानोभूत्वापुनर्भगवद्दर्शनार्थध्यानमारब्धवानित्याहदिदृक्षुस्तदहंभूयइति । तद्भगवत्स्वरूपमाविर्भूतंदिदृक्षुःतत्रभगवद्ध्यानमेव साधनीमीतज्ञात्वापुनर्मनोहृदिभगवत्मूर्त्तिव्याप्तेस्थिरीकृतवान्ततोमानसींमूर्त्तिपश्यन्नपिनभगवंतंदृष्टवान्तदाह । वीक्ष्यमाणोपिनापश्यमितितदासंतापउत्पन्नइत्याह अवितृप्तइवातुरइतियथात्वातुरः ज्वरादिरोगवान् कदाचितद्राक्षादिकेदत्ते अवितृप्तः सत्पुनः प्रार्थनायांन प्राप्नोतितत‌श्चरसाभिविष्टोमहदुःखंप्राप्नोतिनाहिज्वरितस्यबह्वीद्राक्षातुपथ्यायाकिंतुरोचिकामार्गस्य संवादेनसत्यत्वज्ञानात् भगवदाविर्भावा ध्यकाचितृप्तिर्जातैवभुक्तवांतवत्तथापिनविशेषेणातृप्तः ॥ २० ॥

---

### श्रीविश्वनाथ चक्रवर्त्ती

भावनिर्जितेनप्रेमवशीकृतेनचेतसामनसाहृदिमनस्येवध्यायतोममहरिः शनैः क्रमेणासीत्आगत्याग्रेवभूव । यद्वाशनैरितिप्रथमंहृद्याविर्भूवततोहृद्वृत्तिषुतिसृषु नासिका श्रोत्र चक्षुः ष्वपिस्वांग सौरभ्य नूपुर सौस्वर्य श्रीमुख सौन्दर्य ग्राहणार्थमाविर्वभूव । कीदृशस्यमम औत्कंठयेनअश्रूणिकलयतो धारयतोऽक्षिणीयस्यतस्य ॥ १७ ॥

प्रेम्णोऽतिभरेण अत्याधिक्येननिर्भिन्नानिअभिन्नानिपुलकयुक्तानिचअंगानियस्यसः । प्रेमरूपाएयेवसर्वाण्यंगानितदानीमभूवन्नित्यर्थः । यद्वानिःशेषेणाभिन्नानिविदीर्णानीववोदुमसामर्थ्यादेवेतिभावः । आनन्द संप्लवेलीनोलब्धानन्दीमूर्च्छ इत्यर्थः ! उभयम्आत्मानंपरञ्चनापश्यम् ॥ १८ ॥

पुनश्चसहसैव तद्रूपम्अपश्यन्उत्तस्थे व्युत्थितोऽस्मि । यथाप्राप्तच्युतनिधिर्जनोदुर्मनाभवातितथैवेत्यर्थः ॥ १९ ॥

प्रणिधायस्थिरीकृत्य ॥ २० ॥

---

### सिद्धांतप्रदीपः

भावेनहरिभक्तियोगेननिर्जितं यतस्ततोनिवार्यचरणांभोजेस्थापितंयच्चेतस्तेन ॥ १७ ॥

ततः किंवृत्तमित्यत्राह प्रेम्णोऽतिभरेणाधिक्येननिर्भिन्नाः पुलकायेषुतानि अंगानियस्यसःनिर्वृतः अत्यंतसुखसंपन्नः आनंदसंप्लवेलीनः उत्तरोत्तरशतसंख्ययानंदवल्यांपठितानामानंदानांप्लवोऽवधिभूतपूरःतस्मिन्लीनः सन्नुभयंध्यातृध्येययुग्मंनापश्यम् नदृष्टवानस्मि ॥ १८ ॥

तदनंतरंकिंवृत्तमित्यत्राह यत्पूर्वंदृष्टंभगवतोऽसाधारणंरूपंहिरण्यश्मश्रुहिरण्यकेश इत्यादिश्रुतिप्रोक्तंमनसोऽतीवहृष्टंशुचंशोकमपध्नंतीति शुचापहं तदपश्यन् वैक्लव्याद्धाष्टर्यात् दुर्मनाइवोत्तस्थावुत्थितोस्मि ॥ १९ ॥

ततः किंवृत्तमित्यत्राह स्तन्यामृतपानतः अवितृप्तइव यथावालः तथारूपदर्शनादवितृप्तोऽतएवातुरः सन्भूयः दिदृक्षुः द्रष्टुमिच्छुः मनोहृदिप्रणिधायस्थिरीकृत्यवीक्ष्यमाणोपिनापश्यं नदृष्टवानस्मि ॥ २० ॥

---

### भाषाटीका

भाव भक्ति से निर्जित चित्त से जब मै श्री भगवान के चरण कमलों का ध्यान करने लगा और उत्कंठा से अश्रुओं की कला नेत्रों में बहने लगी तब मेरे हृदय में शनैः श्री भगवान का उदय हुआ. ॥ १७ ॥

प्रेम के अतिभर से मेरा शरीर रोमांचित होनेपर मैं परम सुखी हुआ आनंद के संप्लव में डूब गया मुझे इस लोक परलोक अपने पराये की कुछ खबर न रही ॥ १८ ॥

फिर मनः कान्त शोकहारी भगवान के उस रूप को जिसको मैं ध्यान में देखता था सहसा न देखकर बिकलता से दुःखित मन होकर उठ खड़ा हुआ ॥ १९ ॥

फिर मैं उस रूप के देखने की इच्छा कर हृदय में मन को प्रणिधान कर देखने का यत्न करता था पर न देखकर तब मैं बड़ा अवितृप्त होकर आतुरसा हो गया ॥ २० ॥

---

### श्रीधरस्वामी

गिरामगोचरःसंवेदनस्याविषयभूतईश्वरः ॥ २१ ॥

हन्तेतिसानुकम्पसम्बोधने । माद्रष्टुंनाअर्हतिनअर्हति । यतोऽविपक्वाअदग्धाःकषायामलाःकामादयोयेषांतेषांकुयोगिनाम्अनिध्यन्नयोगानाम् ॥ २२ ॥

कुतस्तर्हिदृष्टोऽसितत्राह । सकृद्दर्शितंमयेतियत्एतत् कामायमयिअनुरागाय । त्वत्कामेनकिमित्यतआह । मत्कामःपुमान् । हृच्छयान्कामान् ॥ २३ ॥

एवंयतन्तंविजने मामाहागोचरोगिराम् ।
गम्भीरश्लक्ष्णयावाचाशुचः प्रशमयन्निव ॥ २१ ॥
हन्तास्मिन् जन्मनिभवान् मामाद्रष्टुमिहार्हति ।
अविपक्ककषायाणां दुर्दर्शोऽहंकुयोगिनाम् ॥ २२ ॥
सकृद्यद्दर्शितं रूपमेतत् कामायतेऽनघ ।
मत्कामःशनकैः साधुः सर्वान् मुञ्चति हृच्छयान् ॥ २३ ॥
सत्सेवयादीर्घयापि जातामयिदृढामतिः ।
हित्वावद्यमिमं लोकं गन्तामज्जनतामसि ॥ २४ ॥
मतिर्मयि निबद्धेयंनविपद्येतकर्हिचित् ।
प्रजासर्गनिरोधेऽपिस्मृतिश्चमदनुग्रहात् ॥ २५ ॥

श्रीधरस्वामी ।

अदीर्घयापिसतांसेवया । अवद्यमनिंद्यम् । लोकंदेहम् । मज्जनतांमत्पार्षदतांगन्तासि ॥ २४ ॥
प्रजानांसर्गेसृष्टौनिरोधेसंहारेऽपिप्रजासर्गस्यनिरोधइतिवा ॥ २५ ॥

---

दीपिनी ।

कुयोगिनामिति कुशब्दोऽयमीषदर्थेनतुकुत्सायाम् । ईषद्योगयुक्तानांतत्कालयोगप्रवृत्तानामित्यर्थः । योगमार्गप्रवृत्तस्यकुत्सायाअभावा-
दितिव्याख्यालेशः ॥ २२ - २५ ॥

---

श्रीवीरराघवः ।

एवंद्रष्टुंपुनः पुनः यतंतंयत्नंकुर्वंतंमामुद्दिश्यगिरामगोचरः यद्वाचोननिवर्त्ततेइत्युक्तरीत्यावागविषयः अपरिच्छेद्यत्वादितिभावः अदृश्यः
सन्नितितात्पर्यंभगवानितिविशेष्यमध्याहर्त्तव्यंगगनेगंभीरयावाचाशुचः शोकान्प्रशमयन्निवाह ॥ २१ ॥
उक्तमेवाहहंतेतिचतुर्भिः इहलोकेऽस्मिन्जन्मनिभवान्मांद्रष्टुमार्हतिनार्हतीतिमाशब्दोयंनञ्पर्यायः अतोमाङिलुङितिलुङभावः दर्शना
नर्हत्वेहेतुंवदन्नात्मानंविशिनष्टि अविपक्वोऽविनष्टःकषायःदर्शनप्रतिबंधकःपुण्यपापात्मकःकषायःकषायवद्दुरपनेयःकर्मोपाधिर्येषांतेषांकुयो
गिनामहंदुर्दर्शोदुःखेनापिद्रष्टुमशक्यः ॥ २२ ॥
तर्हिसकृत्कथंदृष्टोऽसीत्यत्राहसकृदिति।हेअनघसकृद्रूपमदीयंदर्शितंमितियत्तत्त्वमत्कामायमद्विषयकादिदृक्षायै एतत्कामायतेइतिपाठांत
रंतत्रतेतुभ्यंसकृद्दर्शितंरूपमेतत्कामायद्रष्टुमितिशेषः निवृत्तप्रेरणात्स्वार्थणिजंतात्कर्महेतुमाणि चणिचश्चेतिवैकल्पिकंपरस्मैपदंकिंकाममा
त्रेणोत्यतआहमत्कामःमांद्रष्टुंकामयमानःसाधुचरितःपुमान्शनैःसर्वान्हृच्छयान्हृद्वर्तान्रागादिदोषान्मुंचतिनिरस्यति ॥ २६ ॥
यतस्तेतवादीर्घयाऽल्पकालिकयैवसतांसेवयामयिदृढामतिः जातातस्मादिममवद्यंलोक्यतइतिलोकोदेहस्तंशूद्रदेहमित्यर्थःहित्वात्य
क्त्वामज्जनतांमद्भृत्यतांगतागमिष्यसिकल्पांतरइतिशेषः ॥ २४ ॥
यदनुग्रहाद्धेतोःकर्हिचित्प्रजासर्गनिरोधेप्रलयकालेपितवमयिनिबद्धानिश्चितेयंमतिःस्मृतिश्च नविपद्येतननश्येतकर्हि चिन्मयिनिबद्धा-
मतिः प्रजासर्गनिरोधेमपि स्मृतिश्चनविपद्येतेयिवान्वयः ॥ २५ ॥

---

श्रीविजयध्वजः

प्रेम्णातिशयितभावेनानिर्भिन्नः समुल्लसन्जातः पुलकः रोमांचः प्रेमातिभरनिर्भिन्नपुलकोऽयस्यसतथा आनंदसम्प्लवेसुखप्रल-
योद्रेकमग्नोहं तमेवापश्यमुभयंद्वितीयंसमाधिकंवानापश्यंसर्वोत्तमत्वादित्यन्वयः ॥ २१ ॥
ततःपरंकिमभूदितितत्राह रूपमिति मनःकांतमनोहरंहरेर्यद्रूपमद्राक्षंतत्सहसाअपश्यन्चक्षाणोदुर्मनाः दुःखितांतःकरणःमुक्तिप्रा-
तः ... स्थावुदतिष्ठमित्यन्वयः ॥ २२ ॥
न कैवल्यान्मोक्षादिवोत्तस्थावुदतिष्ठमित्यन्वयः
पुनःहरेरूपंदिदृक्षुःहृदिमनःप्रणिधायस्थितःआतुरोरोगीवावितृप्तःअसंतुष्टोवीक्षमाणोऽप्यहंनापश्यमित्यन्वयः ॥ २३ ॥

### श्रीविजयध्वजः ।

हरेर्भक्तिवात्सल्यमाश्चर्यमितिदर्शयति एवमिति गिरांवाचामगोचरोऽविषयोऽद्दश्योगंभीरयाअगाधयाश्लक्ष्णयामधुरयावाचामानसीः शुचः प्रशमयन्निव नष्टाःकुर्वन्निवस्थितोहरिरेवंविजनेजनसंचाररहितेद्रष्टुंयतमानमाहेत्येकान्वयः ॥ २४ ॥

किमाहहरिरितितत्राह हंतेति हंतविस्मये भवानिहभूलोकेअस्मिन्जन्मनिशूद्रयोनौमांद्रष्टुंनार्हति कुतः कषेणभोगेनायतेगच्छतीतिकषायःपापं असुकपापफलानां कुयोगिनांजन्मनाऽनभिज्ञानेनवाकुत्सितःयोगोध्यानादिकएषामस्तीतिकुयोगिनः ॥ तेषांपुंसांदुर्दर्शः द्रष्टुमशक्यः ॥ २५ ॥

---

### क्रमसन्दर्भः ।

हन्तेति । भक्तिः प्रवृत्तात्मरजस्तमोऽपहा इत्युक्तत्वात् कषायेऽत्र सात्त्विको वनवासाद्याग्रहः । वनंतु सात्त्विको वासोग्रामोराजसउच्यते । तामसंद्यूतसदनं मन्निकेतन्तु निर्गुणमित्युक्तेः । उत्कण्ठावर्धनार्थञ्चेदम् ॥ २२ ॥

तथैवाहसकृदिति । येनकषायाअपि नश्यन्तीत्याह मत्काम इति । हृच्छयान् अन्यवासनाः ॥ २३ ॥

मतिरिति अस्खलितामतिरिति स्वयमुक्ता या सैव । मतेः फलमाह हित्वेति ॥ २४ ॥

ननु पद्यन्तरा एवसा नश्येत् तर्हि किं कर्त्तव्यं तत्राह मतिर्मयीति । मतिरिति किं वक्तव्यं स्मृतिश्चैतज्जन्मविषया ॥ २५ ॥ २६ ॥

---

### सुबोधिनी ।

तथापियत्नंनत्यक्तवान्इत्याह।एवंयतंतमिति।विजनइतिमनुष्यांतरवाक्यसंभावनाभावःकोयंसइत्याकांक्षायामाह अगोचरोगिरामिति"यतोवाचोनिवर्त्तत"इतिश्रुतेः ततृस्थावरंब्रह्मभगवच्छास्त्रसिद्धमितितस्यवाक्यमाहगंभीरश्लक्ष्णयावाचागंभीरत्वेननप्रतिध्वनिः श्लक्ष्णत्वान्नाकाशपुरुषस्यवाणीतस्य शोकोयं किमयाभ्रमात्किंचिदनुभूतं आहोस्वित्स्वप्नइतितथासतिनशास्त्रंप्रमाणमितिमहत्तद्दुःखंदिदृक्षाकृतंचएवंनानाविधाःशुचःताः प्रश मयन्निवअस्तित्वेनशमनंमग्रेएवसंभविष्यतिइदानींनास्ती तिचतस्मादाहशमयन्निवेति ॥ २१ ॥

भगवद्वाक्यमाह।हंतास्मिन्निति हंतेतिस्नेहेनदुःखितस्यसंबोधनम् अस्मिन्जन्मनिमांद्रष्टुंभवान्नार्हतिनवाइहेति अन्यथामरणपर्यंतमत्रैवतिष्ठेत् अतोवैकुंठेन्यत्रवाजन्मांतरे भविष्यतिइहादर्शनेहेतुः अवियककषायाणांनविशेषेणपक्वारागादयोयेषाम्इदानींभक्तिज्ञानादेरुद्गमात्आभिभूतास्तिरोहितास्तिष्ठंतिपुनः कालांतरेनिमित्तांतरमासाद्यप्रबुद्धाभविष्यंतिअतस्तेषांपाकोमृग्यतइति"कषायपक्तिः कर्माणीतिश्रुतेः पाचककर्माणिकर्त्तव्यानीत्यर्थः अपक्वेपिकषायेसाधनेष्ववतिनिर्वंधश्चेत् कदाचित्दुःखेनद्रष्टुंशक्येतापितदाहदुर्दर्शइतिकुयोगिनामितिअतरायैर्विहतानांतस्पान्नकषायपाकपूर्वासिद्धिः ॥ २२ ॥

सकृद्दर्शनंतुप्रमेयवलादित्याह।सकृद्यद्दर्शितंरूपमिति यदिदंरूपंसकृत्दर्शितंतत्तेकामोत्पत्त्यर्थंतद्गतेच्छाविशेषार्थंयेनकामेननात्रस्थातुंनशक्नुयात्कामनायांकिंस्याच्चदाह।मत्कामइतिमायिकामःशनकैरितिकामद्वारायथायथाहंप्रविष्टः तथातथाकामान्मुंचतीति।किंचप्रथमतः सर्वानेवहृच्छयान्रागादीन्मुंचति ॥ २३ ॥

साधुर्भवतिसाधुभिरेवप्राप्यत्वात्रागादिभिश्चसाधुत्वापगमात्ततः सत्सेवयेतिसाधनंतुतवनिष्पन्नंयतःअदीर्घयापिसत्सेवयामयिदृढामतिर्जातातर्हिकानुपपत्तिस्त

तर्हिकिंसाधनंकर्त्तव्यमित्याकांक्षायामाह नन्वेतत्प्ररोहत्वादाग्रिमोपि देहस्तादृशोभविष्यतीति । तत्राह । मज्जनतामसज्जनः

आहाहित्वावद्यमितिदेहस्तुदुष्टः तस्मिन्नपगतेभविष्यति

सेवकः तत्तामज्जनताअसेवकोऽपिसेवकशरीरंप्राश्यसि ॥ २४ ॥

ननुतदाशरीरांतरे ज्ञानादिसाधनाभावात् कथंतवदर्शनं । तत्राह । मतिर्मयिनिबद्धेयमिति इदमेवज्ञानंतदाप्यनुवर्त्तिष्यतेनाशशंकानास्त्येवमयिनितरांसंबद्धत्वात् यथामत्सायुज्येजीवानामविद्ययानतिरोभावः तथाज्ञानादीनामपिमदज्ञानमिवतदपिभविष्यतीत्यनुग्रहस्तदाहकर्हिचिदितिबाधककालद्वयमनूद्यनिषेधतिप्रजासर्गनिरोधेपीतिअपरंचवरमाहस्मृतिश्चेति सर्वपदार्थानांपूर्वानुभूतानांस्मरणंचनविपद्यतेतयर्थः अतेनसर्वदासावधानोभवतिएतावदत्रासिद्धंकषायपाकः कर्त्तव्यः अंतरायैरनुपहतश्चभवेत् अन्यत्तुमयैवकृतंमयिकामः विषयेष्वकामः एतद्देहावसानएवमत्पार्षदशरीर प्राप्तिः ज्ञानानाशः सर्वपदार्थस्मरणंच तत्र निर्विघ्नेनकषायपा कोपायस्त्वयाशीघ्रमेवकर्त्तव्यइतिसिद्धम् ॥ २५ ॥

---

### श्रीविश्वनाथचक्रवर्त्ती ।

गिराम्अगोचरः"यतोवाचोनिवर्त्तते"इतिश्रुतेःसर्वैरेववचनगोचरीकर्त्तुमशक्योऽपिभगवान्माम्आह । स्वीयवचनसौरस्यैश्वर्यश्रवणाभ्यांमामनुभावयायास।एवंनारदस्यवैधभक्तिमत्त्वाद्भगवत्सौरभ्यसौन्दर्यसौस्वर्याणांत्रयाणामेवमाधुर्याणामनुभवःसाधकदेहेअन्येषांसर्वेषांतुतन्माधुर्याणांसिद्धदेहेएवभावीज्ञेयः । शुचस्तदर्शनोद्भूतदुःखशोकान्प्रशमयन्दूरीकुर्वन् । अत्राविद्यागौतकण्ठचवलः प्रेम्णा सर्व्वथातृष्यभदधर्म्मत्वात्इवशब्दः ॥ २१ ॥

किमाहेत्यतआह । हन्तेतिसानुकम्पसम्बोधनम् । अस्मिनजन्मनिसाधकदेहेमाइतिमांद्रष्टुंनार्हसि । नविपक्वा नदग्धाः कषायामलाकादयोयेषांकुयोगिनाम्अहंदुर्दर्शः अद्रष्टयतुभ्यंतुदर्शनदत्तमेवेतित्वंतुकुयोगीनभवसीतिभावः ॥ २२ ॥

श्रीविश्वनाथचक्रवर्त्ती

तर्हिहाहापुनरप्येकवारंदर्शनंदेहीत्यतआहसकृदिति । एतदेकवारदर्शनम् । तेकामायत्वन्मनोरथं साधयितुं योग्यमित्यर्थः नतुमुहुर्दर्शनम् औत्कण्ठ्यस्यानतिवृद्धत्वात्प्रेम्णोऽप्यनतिवृद्धेस्तस्यतारुण्यं नस्यादितिभावः । अतएवजातप्रेम्णोभक्तायसाधकदेहेएकवारमेवदर्शनं ददामीतिममनियमः । यथासाधकदेहेबालभूतःप्रेमावियोगौत्कण्ठ्येनलब्धातिवृद्धिःसिद्धदेहेतरुणःसन्स्वाधारंभक्तंमुहुरपिमांदर्शयतिसाक्षात्सेवयतिचेतिस्वभक्तमनोरथपूर्तिप्रकारमहमेवजानामिनतुमे स्वभक्तइतिभावः । मत्कामः योहिमांकामयतेमात्रंमद्दर्शनालाभेऽपीत्यर्थः हृच्छयान् विषयवासनाः । अत्रापिसर्वान्मोक्ष्यासिद्धच्छयानित्यनुक्तेर्नारदंप्रतिनेदंवाक्यंकिन्तुस्वभक्तेःस्वभावंतंज्ञापयामासेत्येवात्रतत्त्वम् । सर्वमिदंदैन्यवर्द्धनार्थमित्येके ॥ २३ ॥

अदीर्घयाअल्पयापि । अवद्यंनिन्द्यलोकंसांसारिकजनावासंत्रिभुवनभेवत्यक्त्वामज्जनतांमत्पार्षदत्वंगन्तासि ॥ २४ ॥

नविपद्येतयतोमयिनिबद्धामायिवद्धास्थापिताप्रेम्णैवेत्यर्थः । ममनित्यत्वात्मतिरपिनित्यैवेत्यर्थः ॥ २५ ॥

---

सिद्धान्तप्रदीपः ।

अगोचरोगिरामिति"सर्वेवेदायत्पदमामनंतिवेदैश्चसर्वैरहमेववेद्य"इत्यादिश्रुतिस्मृतिभ्यांवेदविषयएवइयत्तानवच्छिन्नत्वाद्वाचामविषयो हरिः एवंभूयोभूयोयतंतमांगंभीरयाश्लक्ष्णयावाचाशुचः शोकान्शमयन्निवाह ॥ २१ ॥

तद्देवदर्शयतिहंतेतिचतुर्भिः हंतेतिवात्सल्यसूचकेसंबोधने मार्हति नार्हति अविपक्वकषायाणामदग्धदर्शन प्रतिबंधककर्मणाम् कुयोगिनामपक्वयोगानाम् दुर्दर्शः दुर्घटदर्शनः ॥ २२ ॥

कथंतर्हिसकृद्भवतारूपंदर्शितमत्राह सकृदिति मेमयासकृद्यद्रूपंदर्शितंतदेतत्कामाय एतस्मिन्नेवरूपेरुच्युत्पादाय ॥ २३ ॥

सदिति " याहित्वंशूद्रतासाशुनष्टश्रीः कृतहेलनः तावद्दास्यामहंजज्ञेतत्रापिब्रह्मवादिनामिति „ विश्वसृक् शापरूपमवद्यमहसंपांचभौतिकंदेहंचहित्वाअप्राकृतदेहभावरूपांमज्जनतांमत्पार्षदतांलोकमभीष्टं चगंतासि तदानींतनोदेहस्त्ववद्योनभवति तदापिसत्सेवायां वासुदेवेदृढायांमतौसर्वपरित्यागपूर्वकभगवद्ध्यानेभगवद्दर्शनेचहेतुत्वेनभगवतोऽतिप्रियत्वात् अन्यथा " अहोवतश्वपचोऽतोगरीयान्यज्जिह्वाग्रेवर्ततेनामतुभ्यम् अहंभक्तपराधीनोह्यस्वतंत्रइवद्विज" इत्यादिवक्ष्यमाणस्यसर्वस्यग्रंथस्यवैयर्थ्यंस्यात् "अपिचेत्सुदुराचारोभजतेमामनन्यभाक् साधुरेवसमन्तव्यःसम्यग्व्यवसितोहिस„इतिस्ववचनविरोधश्चस्यात् ॥ २४ ॥

नविपद्येतनविनश्येत् ॥ २५ ॥

---

भाषाटीका

इस प्रकार निर्जन वन में यत्न करत भये मुझसे वाणीके अगोचर परमेश्वर गंभीर मधुर वचनसे शोकोंको नाश करतेहुये बोले ॥२१॥

हन्त ! आप मुझे इस जन्म में नहीं देख सके हैं । क्योंकि अविपक्व कषाय कुयोगियों को मैं दुर्दर्श हूं ॥ २२ ॥

हे अनघ ! एक बेर जो तुझको रूप दिखाया था वह तेरी कामना वृद्धि के निमित्त था. मेरी कामना जिसको होती है वह साधू शनैः शनैः और समस्त वासनाओं को छोड देता है ॥ २३ ॥

दीर्घ काल की सत्पुरुषों की सेवा से तेरी मुझ में दृढ मति हो गई है । अब इस निंद्य देह को छोडकर तू मेरा जन ( परिकर ) होगा ॥ २४ ॥

यह मुझ में निबद्ध तेरी मति कभी भी नाश न होगी यहां तक कि प्रजाओं की सृष्टि और प्रलय में भी और मेरे अनुग्रह से यह सब स्मृति भी तुझ को रहेगी ॥ २५ ॥

---

श्रीधरस्वामी ।

तत्प्रसिद्धंमहद्भूतम् "अस्यमहतोभूतस्यनिश्वसितमेतद्यदृग्वेद" इत्यादिश्रुतेःकीदृशमईश्वरंसर्वनियन्तृ । नभसिलिंगंमूर्तिर्यस्यतत्रभौलिंगम् । सन्निहितमपिनलिंग्यत इत्यलिंगम् तस्मैअदृष्टायअवनामप्रणाममविदधेकृतवानहम् । तेनानुकम्पितःसन् ॥ २६ ॥

अनन्तस्यनामानिपठन्निवानवरतंगृणन् । हतत्रपःत्यक्तलज्जः । विमत्सरोजातोऽस्मीतिशेषः ॥ २७ ॥

( कालेस्वावसरेकालोमृत्युःप्रादुरभूत् आविर्बभूवअकस्मात्प्रादुर्भावेदृष्टांतः तडित्विद्युदिवेति । सौदामनीतिविशेषणंस्फुटत्वप्रदर्शनार्थम् । सुदामामालातत्रभवासौदामनीमालाकारेत्यर्थः । यद्वासुदामापर्वतः तेनैकदिगितिसूत्रेणअणस्फटिकमयपर्वतप्रांतभागभवाहिविद्युदतिस्फुटाभवतितद्वदित्यर्थः । यद्वातडित् अन्तिकइत्यर्थः " तडिदन्तिकवज्रयोरितिनैरुक्तस्मरणात् ॥ २८ ॥

प्रयुज्यमाने इत्यस्यार्थमर्थः । हित्वावद्यमिमं लोकं गन्तामज्जनतामसीति या भागवती भगवत्पार्षदरूपा शुद्धा सत्त्वमयी तनुः प्रतिश्रुता तां प्रति भगवता मयि प्रयुज्यमाने नीयमाने आरब्धं यत् कर्म्म तत् निर्व्वाणं समाप्तं यस्य आरब्धकर्म्मणो निर्व्वाणमिव निर्व्वाणं यस्येति वा स पञ्चभूतात्मको देहो न्यपतत् । अनेन पार्षदतनूनामकर्म्मारब्धत्वं शुद्धत्वं नित्यत्वञ्च सूचितं भवति ॥ २९ ॥

---

एतावदुक्त्वोपरराम तन्महद्भूतं नभोलिंगमलिंगमीश्वरम् ।
अहं च तस्मै महतां महीयसे शीर्ष्णावनामं विदधेनुकंपितः ॥ २६ ॥
नामान्यनंतस्य हतत्रपः पठन् गुह्यानि भद्राणि कृतानि च स्मरन् ।
गां पर्यटंस्तुष्टमना गतस्पृहः कालं प्रतीक्षन्विमदो विमत्सरः ॥ २७ ॥
एवं कृष्णमतेर्ब्रह्मन्नसक्तस्यामलात्मनः ।
कालः प्रादुरभूत्काले तडित्सौदामनी यथा ॥ २८ ॥
प्रयुज्यमाने मयि तां शुद्धां भागवतीं तनुम् ।
आरब्धकर्मनिर्वाणो न्यपतत्पांचभौतिकः ॥ २९ ॥

## दीपिनी

महद्भूतमिति भगवन्नामप्रथमैकवचनम् । तत्र प्रमाणम् अस्य महतो भूतस्येत्यादि श्रुतिः । अस्येत्यादि कर्तरि षष्ठी । महतोऽनवच्छिन्नस्य पर-
मात्मनः प्रकृतस्य भूतस्य ईश्वरस्येति यावत् । निश्वसितं निश्वासवदप्रयत्नेनैव जातमित्यर्थः ॥ २६ - २७ ॥
तेनैकदिक्इति सूत्रं पाणिनीयव्याकरणस्य चतुर्थाध्यायीय तृतीयपादे द्वादशाधिकशततमम् । सुदाम्ना अद्रिणा एकदिक् सौदामनी इति तस्य
भट्टोजिदीक्षितकृता वृत्तिः । यद्वेति । अस्मिन् पक्षे ताडेत् सौदामनीत्यत्र सप्तमीतत्पुरुषसमासो ज्ञेयः । नैरुक्तेति वैदिकमन्त्राणामर्थज्ञापको भगव
दूयास्कमुनिविरचितो वेदांगशास्त्रविशेषो निरुक्तस्तत्रत्यं वचनं नैरुक्तमिति तस्य स्मरणादित्यर्थः ॥ २८ - २९ ॥

---

## श्री वीरराघवः ।

आलिंगं कर्मदेहरहितं नभोलिंगमाकाशशरीरकमीश्वरं सर्वनियंतृ ऐश्वरमिति पाठे ईश्वरशब्दवाच्यम् तन्महत्सर्वव्यापकं भूतं स्वाधीनसमाधि
करहितं महद्ब्रह्म "तस्य ह वा एतस्य महतो भूतस्य निः श्वसितमि"ति श्रुतेः एतावदुक्त्वा विरराम तूर्ष्णीमास ततो महसां तेजस्विनामपि महीयसे
तस्मै महते भूताय तेनानुकंपितोऽहमवनामं प्रणामं विदधे कृतवानस्मि ॥ २६ ॥
ततोऽनंतस्य भगवतो नामान्यहं गतलज्जः पठन् भद्राणि लोकानां मंगलावहानि गुह्यानि वेदगुह्यानि जन्मानि कर्माणि च स्मरन् गां भूमिं पर्यटन्
तुष्टमना यस्य गता स्पृहा शब्दादिविषया यस्य विगतो मत्सरो भूतविषयको यस्य विगतः मदो देहपारवश्यरूपो यस्य सः अपदक्षति पाठे निकेतः
कालं देहावसानकालं प्रतीक्षन्नासमिति क्रियापदमध्याहार्यं यावत्कल्पावसानं जीवितवानस्मीत्यर्थः ॥ २७ ॥
हे ब्रह्मन् कृष्णे भगवत्येव मतिर्यस्य अत एवामलो विशुद्धः आत्मा मनो यस्य अत एव शब्दादि विषयेष्वसक्तस्य मम काले देहारंभक प्रारब्धावसा
नकाले कालः मृत्युकालः प्रादुरभूदुपस्थितो बभूव मृत्युकालस्य क्षणिकत्वद्योतनाय दृष्टांतमाह सौदामिनी सुदाम्नः पर्वतस्यादूरभवा सौदामिनी
चातुरर्थिकोऽण् अश्मादिप्रकृति भावनांतत्वात् ङीप् सौदमिनीत्यपि पाठः ॥ २८ ॥
तदा तां प्रसिद्धां सर्वजीवलयाधारभूतामित्यर्थः शुद्धामप्राकृतां भागवतीमनिरुद्धाख्यां तनुं प्रति मयि प्रयुज्यमाने संश्लिष्यमाणे लयं प्राप्तुमुद्यु
क्ते सतीत्यर्थः आरब्धकर्म निर्वाणः तद्देहावस्थितिनिमित्तस्य प्रारब्धकर्मणः निर्वाणमवसानं यस्य सः पांचभौतिको देहो न्यपतत् ॥ २९ ॥

---

## श्रीविजयध्वजः ।

तर्हि किमिति दर्शितमिति तत्राह सकृदिति अनघ सांसारिकदुःखरहित तेतव कामाय अथ कदा नु पश्येयमित्युत्कंठायै । तया किं फलम्
भूदिति तत्राह मत्काम इति मद्भक्तः पुरुषः क्रमेण सर्वान् हृच्छयान् प्राकृतान् कामान् साधु मुंचतीत्यन्वयः ॥ २६ ॥
परमहंससेवाफलमाह सदिति दीर्घया बहुकालीनया सतां परमहंसानां सेवया परिचर्यया मयि दृढा मतिः मननलक्षणा भक्तिर्जाता वै यस्मा
दतः अवद्यं दोषरूपशूद्रजातित्वादि मलोकं देहं हित्वा पश्चात् ब्रह्मपुत्रत्वेन जातस्त्वं मज्जनतां मम जनतां परमभागवतत्वं गतासीत्यन्वयः ॥ २७ ॥
मयि निबद्धा इयं मतिः कदाचिदपि न विपद्येत न नश्येत् प्रजानां सर्गः सृष्टिः निरोधः संहारः एतयोः स्मृतिनाशकयोः स्मृतिर्जातिस्मरणात्
किंश्चन विपद्येत कस्मान्मदनुग्रहात् अनेन भगवद्भक्तसंगोभिमतफलद इत्युक्तं भवति ॥ २८ ॥
ईश्वरमीशनशीलं सकलजनप्रवर्तनशक्तिमत् अलिंगं जडशरीररहितं रुद्रादन्यद्वा ईश्वरमित्युक्त्या भूतविग्रहवान् हर इति शंकानिरासार्थं वा
आलिंगमित्युक्तं नभः लिंगगमकं दृष्टांतत्वेन यस्य तत्तथोक्तम् आकाशवत्सर्वगमित्यर्थः तन्महद्भूतं ब्रह्म एतावदुक्त्वा विरराम तेनानुकंपितः कृपा
पात्रीकृतः अहं च महतां महीयसे तस्मै महाभूताय शीर्ष्णा शिरसा अवनामं नमस्कारं विदधे कृतवानित्यन्वयः ॥ २९ ॥

---

क्रमसन्दर्भः।

गुह्यानि गोप्यानि यानि भद्राणि सर्व्वोत्तमानि कृतानि प्रेयस्यादिभिः सह प्रेमपरिपाटीमयलीलास्तानि तु यथाधिकारं स्मरन्नेव नतु प्रकाशयन्। तत एव तुष्टमनाःस्पृहान्तरशून्यश्च सन् पूर्व्वत एव तु विमदो विमत्सरश्च सन् केवलं कालं तत्कृपावसरं प्रतीक्षमाणोऽहं बभूवेति शेषः॥ २७॥

कालस्तत्कृपावसरः प्रादुरभूत् यथा वृष्टिप्रतिबन्धकावग्रहक्षये तडित्सौदामिनीति। गोवलीवर्दन्यायेन चानधिकार्थमिदम्॥ २८॥

भागवतींभगवदंगज्योतिरंशरूपाम्। शुद्धांप्रकृतिस्पर्शशून्याम्। न्यपतादितिप्राक्तनलिंमशरीरभंगोऽपिलाक्षितःतादृशभगवदिष्टेप्रारब्ध कर्मपर्यंतमेवतत्रास्थितेः। इत्थमेवटीकावअनेनपार्षदतनूनामित्यादि॥ २९॥

---

सुबोधिनी।

एतावत् अग्रेउपायमनुक्त्वैवअनुकंपयैवस्वतः स्फुरिष्यतीतिपूर्वोक्तमात्रमुक्त्वाविररामप्रामाण्यार्थंवक्तारंविशिनष्टिविशेषतः अज्ञानाच्च पुंसकपदप्रयोगः तदित्यनुवादः महद्भूतमिति"अस्यमहतोभूतस्यनिः श्वसितमि"तिवेदोद्गममूलभूतंप्रामाण्यार्थमेवमहंजातमितिआकाश-पुरुषंव्यावर्त्तयतिनमोलिंगमिति आकाशंतुभगवतअनुमापकंप्रथमकार्यत्वात् तथाकथनेवाहेतुः यतस्तत्कार्यमपितथाकथयतीति अलिंगंनहि भगवाननुमानगम्यः आत्मत्वेनप्रत्यक्षत्वात् अतिरिक्तरूपेपुनर्व्याप्त्यादीनांभगवन्नियामकत्वंतदाह ईश्वरमितिअन्यथाकरणसामर्थ्यात्नहेतु वन्ह्यादिरिवभगवान्सिद्ध्यतीत्यर्थः एवंसर्वप्रमाणातीतः सर्वत्रप्रमाणमित्युक्तंमयापितदुक्तंकृतमित्याह अहंचेति तत्रनिर्विघ्नार्थंभगवंतं नमस्करोतितस्मैपूर्वपरिचयात् ईश्वरफलदानपक्षेपियथाफलंप्रयच्छेत् तदर्थमुक्तं। ननुनमस्कारमात्रेणतत्कथंकुर्यात्तत्राह। महतांमहीयस इतिअतिमहतितावदेवकर्त्तव्यमितिवहिःशब्दश्रवणात्वहिःस्थितोभगवानितिवहिः शीर्ष्णावनामंसाष्टांगनमस्कारंकृतवान् युक्तंचैतत्यतो भगवान्महतींकृपांकृतवान्तदाह अनुकंपितइति॥ २६॥

कषायपाकसाधनंकरोमीत्याह नामानीति कषायास्त्रिविधाः साक्षाद्रागादयस्तामसाः तेषामपिवासनारूपाराजसाः अविद्यारूपाः तेचक्रमात्कर्मणाभक्त्याज्ञानेनचनाश्यंतेतत्रचाधिकाराः पृथक्पृथक्अतोनैकेननैकदाकर्त्तुशक्याः तस्मादेतेषांत्रयाणामेकोनुकल्पः कर्त्तव्यः तद्भगवत्कृपयासत्स्फुरितंतत्कृतवान् "चक्रांकितस्यनामानिसदासर्वत्रकीर्त्तयेदि"तिवाक्यात् नामसुनदेशकालयोरपेक्षाएकवचननामनाव र्त्तनीयंब्रह्मविदःसर्वैरेवरूपैर्भगवत्सेवनस्यश्रुतिसिद्धत्वात्एकनाम्नआवृत्तौरूपविशेषस्येतिनसर्वैःसर्वत्ररक्षास्यात्श्रोतुर्वक्तुश्चपरिच्छेदबुद्धिः पाषंडताशंकापिस्यात्तत्रहेतुमाह अनंतस्येति अनंतरूपस्यतथासत्यनंताएवभगवद्धर्माः नामसुस्मृताभवंति अलौकिकंहिलोकमध्येकुर्वन् गुसंकरोतिलोकोपहासभियादेहकुलांतःकरणधर्म्मैश्चलज्जाभवतिविहितत्वेपिलोकोपहासात् तथासतिलोकवुद्ध्यानभगवतिशुद्धोभावोभवे त्अतस्तान्त्याजयतिहतत्रपइतिहत्वानपुनर्जीवनंक्रियाकर्ममध्ये अधिकारिपदात्नामोच्चारणएवहतत्रपत्वंस्वाधीतानामर्थानुष्ठानपूर्वकमुच्चै रुच्चारणंपठनंशतृप्रत्ययेनानिरंतरताचोक्ताचित्तस्यचंचलत्वात्तस्यभिन्नमवलंवनमाहगुह्यानीतियानिचरित्राणिगुह्यानिलोकेस्पष्टतयावक्तुम युक्तानिपुष्टयाकृतानिद्रौपद्यर्ज्जुनादिषुशयनस्थानादिषुशयनस्थानादीनिभद्राणिमनोहरादीनिस्वस्यावंधकानिकृतानिचेतिस्पष्टतयाकृतानि अथवाकृतानिकरिष्यमाणानिचभगवत्कृपयातत्स्फुरणं शरीरकृत्यमाहगांपर्यटन्निति अत्यंतसंयोगेद्वितीया गोशब्दाद्गोसेवावद्धर्मजनकत्वं परितः अटनम् अनेनऋजुतयाएकमार्गेणदेशातिक्रमोनिवारितःएकमंगंसाधनसाधनत्वेनोक्त्वापंचांगानिफलसाधनत्वेनाह। तुष्टमना इत्यादि भूमिपर्यटनंयद्यन्यार्थंस्यात्तदामनसोनतावन्मात्रेणपरितोषः स्यात्अतस्तुष्टमनाभवेत् पर्यटनमेवफलत्वेनजानीयात् यद्यपितथापर्यटनेनलौ किकालौकिकानिफलानिभवंतितथापितेषुस्पृहानकर्त्तव्यातदाहनन्वपरिच्छिन्नानिकर्माणिकर्त्तुमशक्यानि अतएवद्वितीयाध्यायेकर्मभेदोनिरू पितः तत्रपरिच्छेदकःदेशःकालोवाभवतिततश्चापरिच्छेदकदेशकालसंवंधे किंकुर्यादित्यतआहकालंप्रतीक्षन्नितिशतृप्रत्ययेन आदितआरभ्य कालप्रतीक्ष्याकर्त्तव्याततः शरीररक्षादिसाधनाभावे वाधकेवानांतःकरणेक्लेशोभवतिदैवगत्यासन्मानेनप्राप्तेपिगर्वोनकर्त्तव्यः नहिपूजनेन तस्यमहत्त्वं प्रत्युततद्वाधकं"जनेनाभिमतोयोगीयोगासिद्धिंनविंदती"तिवाक्यात् विषयाप्राप्तौनवामत्सरःकर्त्तव्यः प्रत्युतकालसाधकत्वेनतेषा मुपकारोमंतव्यःनवाविपरीतोमत्सरःकर्त्तव्यःअवाधक विषयप्रापकेषुभगवदाज्ञानिर्वाहकत्वात् निषिद्धप्रापकेषुतु वाधकवत्सहनम्॥ २७॥

एवंषडंगसहितंनामोच्चारणपूर्वकं भूपर्यटनंकषायपाकेहेतुः तस्यकिंदृष्टद्वाराअदृष्टद्वारावाकषाय पाकहेतुत्वमित्याकांक्षायामाह। एवं कृष्णमतेरिति। एवंपर्यटने कृष्णेमतिर्भवति। तदैवविषयेष्वसंगः यदाकृष्णोरोचते तदैवविषयानरोचंतेब्रह्मन्नितिसंवोधनमपिसंवादाय कृष्णस्यमत्याविषयासंगेजातेतदैवांतःकरणंशुद्धंजातंतदैवकषायाः पक्वाइत्यर्थः पाकार्थमेवशरीरस्यरक्षितत्वात् पक्वेचकषायेशरीरस्यप्रयो जनांतराभावात्तद्ग्रहणायकालः प्रादुरभूत्कालेशरीरप्रारम्भकादृष्टसमाप्तौ शापसमाप्तौवाउत्तरत्रशासंवंधःकालेवर्षाकालेतडिदितिशी-घ्रमितिकेचित्सौदामिनीवसुदामापर्वतस्तज्जाताताडित् सौदामिनीत्येकंवापदं तडिदिवपीतइत्यादावेकदेशप्रयोगःयथाप्रथमतएवस्तनयित्नु दृष्टौविद्युत् तथाशरीरनाशकरोगाद्यपेक्षयाकालोजीवप्रणेताप्रथमतएवप्रादुर्भूतइत्यर्थः॥ २८॥

ततः किंवृत्तंतदाह प्रयुज्यमानइति देहवियोगक्लेशोनज्ञातोऽतएवप्रथमतएवभगवत्संवंधीशुद्धसत्त्वपरिणामरूपोदेहः उपस्थितःकालेन-चाहृतत्रशीघ्रमेवनीतः तस्मिन्मयिनीयमानेकियद्दूरंशरीरमभ्युद्गतंविमानसंमुखतयापरंभौतिकत्वाद्गुरुत्वेन पंचभूतानिक्रमेणावैकुंठगमाद्रा न्यपतत् ननुयोगेब्रह्मसंपत्तावपिशरीरंतिष्ठतिकथमिदंपतितंतत्राहआरब्धकर्मनिर्वाणइतियेनकर्मणाइदंशरीरमारब्धंतस्यनिर्वाणः समाप्ति र्यस्यनिर्वाणशब्देनकर्मापिमुक्तंपरंपराजनकत्वाभावात्वरादिकंतुआरंभककर्मरूपंभवतितस्यचसमाप्ति देहग्रहणमात्रेणवदेहस्तुब्रह्मांडपर्य वसानेतद्व्यावृत्त्यर्थंभौतिकइति॥ २९॥

---

## श्रीविश्वनाथचक्रवर्त्ती ।

महद्भूतमितिक्लीबलिंगंभगन्नाम "अस्यमहतोभूतस्यनिश्वसितमेतद्यदृग्वेद" इत्यादिश्रुतेः । तेनयस्यनिश्वसितमेववचत्वासेवेदास्तस्य वचनंततोऽप्यतिप्रमाणमितिभावः । ईश्वरम्आतीनिकृष्टायदासीपुत्रायापिमह्यंतथावरप्रदानंयतद्दमापितस्यैकमीश्वरत्वमितिभावः । नभसि-आकाशेएवलिंगंचिन्हंश्रीमुखवचनरूपंयस्यतत् । यतोनालिंग्यतेनलक्ष्यतेचक्षुर्भ्यामदृष्टत्वादलिंगम् ॥ २६ ॥

कृतानिचरित्राणि । कालंप्रतीक्षन्सकालोमेकदाभविष्यतियत्रतत्पार्षदतांयास्यामीति । भगवत्पार्षदोभविष्यामिकोऽन्यवराकोमत्स-मद्दत्येवंमदमत्सरौममनाभूताम् ॥ २७ ॥

काले ममस्थूलदेहभंगसमयेकालः प्रादुरभूत् । यंकालंप्रतीक्षमाणः पूर्वंचिरादभूवंसइत्यर्थः । राज्ञोगमनसमयेतस्यागमनसमयइतिवत् बुद्धिर्हिभागवतीअभेदेऽपिभेदंजनयतीत्यनुन्यासः । कालयोस्तयोरकस्माद्युगपदेवाधाराधेयत्वेनप्रादुर्भावेदृष्टान्तः तडिदिति । विद्युति सौदामिनीयथा । एकस्यांसौदामिन्यांतदैवान्यासौदामिनीकदाचिद्यथाभवतितथैवममपाञ्चभौतिकदेहभंगकालेएवशुद्धपार्षददेहप्राप्तिका-लोऽभूदित्यर्थः ॥ २८ ॥

तांपूर्व्वोक्तांहित्वावद्यमिमंलोकंगन्तामज्जनतामर्सातिभगवता प्रतिश्रुतांशुद्धांशुद्धसत्त्वमयींयतोभागवतींनतुमायिकींतनुंप्रतिमयिप्रयुज्यमानेभगवतैवनीयमानेसतिममपाञ्चभौतिकोदेहोन्यपतत् । गोषुदुह्यमानासुगतइतिदोहनगमनयोरिवमम भौतिकदेहत्यागचिन्मयदेहप्राप्त्यो स्तुल्यकालत्वमेवा भूदित्यर्थः हित्वावद्यमिमंलोकमिति भगवदुक्तौक्त्वाप्रत्ययस्तुल्यकालेएव । यदुक्तंकाचित्तुल्यकाले ऽपिउपविश्यभुं क्तेज्ञात्वाकृत्य पततिचक्षुः संमील्यहसतिमुखंव्यादाय स्वपितीत्यादिकमुपसंख्येयमिति भाषावृत्तौ । अनेनपार्षदतनूनाम कर्म्मारब्धत्वं शुद्धत्त्वंनित्यत्वमित्यादिसूचितमिति श्रीधरस्वामिचरणाः । अप्रारब्धानां कर्म्मणांतापकत्वादग्नितुल्यानां निर्वाणोनाशोयत्रसइतियदु ब्रीहिणानकेवलं तदानीमेव प्रारब्धनाशइतिलभ्यतेदेहपातात् पूर्व्वकालेऽपि तन्नांशेतत्प्रयोगसिद्धेः । नचजातप्रेम्णो भक्तस्यापिप्रार ब्धं तिष्ठतीतिशुद्धभक्तानां मतंसाधनदशायामेवतन्नाशात् । यद्वक्ष्यतेप्रियव्रतकथायां—नैवंविधः पुरुषकारउरुक्रमस्यपुंसांतदङ्घ्रिरज साजितषड्गुणानाम् । चित्रंविदूरविगतः सकृदाददीतयन्नामधेयमधुनासजहातितन्वामिति । अस्यार्थः एवंविधंपौरुषंनचित्रंचित्रंखल्वे तदेव । किंतदित्यतआह । विदूरविगतोऽन्त्यजोऽपियन्नामधेयंसकृदाददीत यः सः अधुनानामग्रहणसमकाले एवतन्वंतनुंजहाति । अत्र नामग्रहणसमकाले तनुत्यागादर्शनात् तन्वारम्भकं प्रारब्धकर्मैवतनुशब्देनलभ्यते इत्येकेप्राहुः अपरेतुभक्तिसम्पर्कात् स्पर्शमणिन्यायेनात्रि गुणमयीतनुरेवत्रिगुणातीताभवतिध्रुवादौतथादर्शनात् अत्रतस्यास्त्रैगुण्यत्यागएवतनुत्यागउच्यते । एतच्चरासारम्भेजहुर्गुणमयंदेहमित्य त्रप्रपञ्चयिष्यतेकचित्तुमतान्तरोत्खाताभावार्थं स्वभक्तानांदेहत्यागोऽपि भगवतादर्श्यतइत्याहुः । यथाजातप्रेमणोऽपिनारदस्यदेहत्यागस्त दापिप्रारब्धकर्मनाशोभक्त्यारम्भेएवव्याख्येयः । यदुक्तंश्रीरूपगोस्वामिचरणैः यद्ब्रह्मसाक्षात्कृतिनिष्ठयापिविनाशमायातिविनाभोगैः । अपैतिनामस्मरणेनतत्तेप्रारब्धकर्मेतिविरौतिवेदइति । प्रारब्धनाशेएवदेहपातइत्यभिप्रायेप्रारब्धकर्मनिर्वाणोन्यपतत्पांचभौतिकइतिसप्तम्य न्तमेवपदंप्रयुज्यतेइत्यवधेयम् । तद्प्रयुज्यबहुब्रीहिप्रयोगेणभक्तानांप्रारब्धकर्मनिर्वाणाधिकरणीभूतएषदेहःपतेन्नतुततोऽन्यइतिज्ञापितम् ॥ २९ ॥

---

## सिद्धान्तप्रदीपः ।

"अस्यमहतोभूतस्यनिश्वसितमेतदृग्वेद" इतिश्रुतिप्रसिद्धंयत्तन्महद्भूतंब्रह्मनभोलिङ्गंनभसिहृद्याकाशे "अंगुष्ठमात्रपुरुषंमध्ये आत्मनितिष्ठती"तिश्रुतेःनभोगतेसूर्येवा "सएषआदित्येहिरण्मयःपुरुषोदृश्यते" इतिश्रुतेःलिंगंमूर्त्तिर्यस्यतत्अलिगम्प्राकृतमूर्तिवर्जितम्ईश्वरःसर्वानियंतृ एतावदुक्त्वाविररामतूष्णींबभूव अहंचतेनानुकंपितोऽनुगृहीतोवनामंतस्मैप्रणामंविदधेकृतवान् ॥ २६ ॥

ततःकिंवृत्तमित्यपेक्षायामाह नामानीति गतामज्जनतामसीतिभगवत्प्रोक्तंकालंप्रतीक्षन्नामादेः पाठादिकुर्वन् विमत्सरआसम् ॥ २७ ॥

कृष्णामतस्तद्भक्तस्य असक्तस्य संसाराद्विरक्तस्य कालेप्रारब्धकर्मावसानसमयेकालोमृत्युःप्रादुरभूत् आविर्बभूवअकस्मान्मृत्यूपस्थितौदृष्टांतमाह सौदामिनीतडित् यथासुदाम्नोगिरेः प्रांतेभवाविद्युदिव ॥ २८ ॥

शुद्धांसर्वदोषवर्जितांभागवतींभगवत्पार्षदरूपामप्राकृतां नित्यांतनुमाविः कर्तुंभगवतामयिप्रयुज्यमानेप्रारब्धकर्मणो निर्वाणमवसानं यस्यसपांचभौतिकोन्यपतत् । अयमर्थः नित्यशरीरवान् सात्त्वततंत्रकर्त्ताश्रीनारदः । केनापिकौतुकेनगंधर्वशरीरंविभ्रद्द्विजशापवशात्त्यक्त्वा दासीपुत्रत्वंप्राप्तस्तद्धित्वास्वकीयांतनुमाविश्चकार ॥ २९ ॥

---

## भाषाटीका ।

वह नभोलिंग अलिंग महाभूत ईश्वर इतना कहकर ऊपर तक हो गया मैंने भी उसका अनुग्रह प्राप्त हो कर बडों के भी बडे ईश्वर को माथे से प्रणाम की ॥ २६ ॥

( तदनंतर ) मैं निलज्ज होकर भद्र और गुह्य अनंत के नामों को पढता. और उनके कर्मों को स्मरण करता सन्तुष्ट मनसे पृथिवी पर्यटन करने लगा, मुझको कुछ भी स्पृहा न रही मैं मदमत्सर रहित हो कर अपने काल की प्रतिक्षा करने लगा ॥ २७ ॥

हे ब्रह्मन् यों कृष्ण में मेरी मति थी कहीं मेरी आसक्ति नथी अमल मन था समय पाकर सौदामनी विद्युत् के समान मेरा काल आ पहुंचा ॥ २८ ॥

जब शुद्ध भागवती तनु मुझ पर प्रयोग की गई अर्थात् दिव्य चिन्मय पार्षद शरीर जब मुझको मिला तब प्रारब्ध कर्मों से मिला मेरा पांच भौतिक प्राकृत शरीर गिर गया, अर्थात् नष्ट हो गया ॥ २९ ॥

---

कल्पांतइदमादायशयानेऽभस्युदन्वतः ।
शिशयिषोरनुप्राणंविविशेंऽतरहंविभोः ॥ ३० ॥
सहस्रयुगपर्यंतउत्थायेदंसिसृक्षतः ।
मरीचिमिश्राऋषयः प्राणेभ्योऽहंचजज्ञिरे ॥ ३१ ॥
अंतर्वहिश्चलोकांस्त्रीन्पर्येम्यस्कंदितव्रतः ।
अनुग्रहान्महाविष्णोरविघातगतिः क्वचित् ॥ ३२ ॥

श्रीधरस्वामी ।

इदं त्रैलोक्यम् आदाय उपसंहृत्य उदन्वत एकार्णवस्य अम्भसि शयाने श्री नारायणे शिशयिषोः शयनं कर्त्तुमिच्छोर्विभोर्ब्रह्मणः अन्तर्म्मध्यम् अनुप्राणं निश्वासेन सह विविशे प्रविष्टोऽहम् । "ततोऽवतीर्य्य विश्वात्मा देहमाविश्य चक्रिणः । अवाप वैष्णवीं निद्रामेकीभूयाथ विष्णुने" ति कूर्म्मोक्तेः । स्वायने अम्भसीति पाठे स्वायने स्वस्याश्रये अम्भसि । शिशयिषोर्ब्रह्मण इति श्रीनारायणे नाभेदविवक्षयोक्तमिति गमयितव्यम् ॥ ३० ॥

प्राणेभ्य इन्द्रियेभ्यः अहं मरीचिमिश्रास्तन्मुखा ऋषयश्च जज्ञिरे ॥ ३१ ॥

ये कर्म्मिणस्ते वहिर्न यान्ति तपआदिभिर्ब्रह्मलोकं गतास्त्वन्तर्न यान्ति । अहन्तु महाविष्णोरनुग्रहात् अखण्डितब्रह्मचर्य्यव्रतः सन्नन्तर्व्वहिश्च पर्य्येमि पर्य्यटामि । क्वचिदपि अविघाता अप्रतिहता गतिर्यस्य सः ॥ ३२ ॥

श्रीवीरराघवः ।

एवंप्राकृतीयशरीरपातावधिवृत्तांतः कथितः अथतदुपरितनवृत्तांतमाहकल्पांतइत्यादिना । तदाकल्पांतेइदंजगदादायस्वस्मिन्प्रविलाप्यउदन्वतः प्रलयार्णवस्यांभसिशयानेऽनिरुद्धाख्येभगवतिशिशयिषोस्तन्नाभिपद्मेशिशयिषोर्विभोश्चतुर्मुखस्यांतः प्राणमनुविविशेऽनुप्रविष्टवानस्मिसनर्थस्त्वविवक्षितः ॥ ३० ॥

सहस्रयुगावसानउत्थायनाभिकमलादितिशेषः इदंव्यष्ट्यात्मकंजगत्सिसृक्षोश्चतुर्मुखस्यप्राणेभ्यः प्राणादिभ्यःमरीचिमिश्राऋषयोवशिष्ठादयःअहंनारदश्चजज्ञिरेउद्बभूवुः अहंचजज्ञइतिपुरुषविपरिणामेनान्वयः ॥ ३१ ॥

ततोमहाविष्णोरनुग्रहात्क्वचिदप्यविघाताऽप्रतिहतागतिर्यस्यास्कंदितमखंडितंव्रतंब्रह्मचर्यंयस्यसोऽहंत्रिलोकानंतर्वहिश्चपर्यमिपरितः संचरामि ॥ ३२ ॥

श्रीविजयध्वजः ।

गतत्रपः लज्जारहितःअनन्तस्यहरेःकृतानिकर्माणिविक्रमलक्षणानिगांभूमिंतुष्टमनाः यदृच्छालाभेनालंवुद्धिमान् गतस्पृहः परवस्तुस्पृहारहितः । पटगतावितिधातोः पटोगतिःनविद्यतेगतिरीश्वरादन्योयस्यसोऽपटःअनन्यगतिरित्यर्थः असंगतोविरक्तइतिवा कंथादिप्रावरणरहितोवा अआअंअःपुराणर्षिरितिवाक्यात्अइतिसंबोधनंवा हेव्यास पटःसमर्थः । अपटोनिकेतरहितइतिकेचित्तच्चिंत्यंविमत्सरः विगतमात्सर्यः एवंविधोहंमरणकालंप्रतीक्षमाणोऽभवमितिशेषः ॥ ३० ॥

कृष्णेपरमानंदबलात्मकेहरौमतिर्यस्यसतथातस्यकालः मरणाख्यः प्रावृट्कालेप्राप्तेसौदामिन्याख्या विद्युद्यथासहसापद्यतेतथेत्यर्थः तडिद्दीप्तशतह्रदासौदामिन्यैरावतीचतह्रदेप्यभिमंत्रणमितिवचनात्कुरुपांडववत्पृथगुक्तिर्युज्यतइतिभावः ॥ ३१ ॥

मयिशुद्धांनिर्दोषांभागवतींतनुंहरिमूर्तिमेवंप्रयुंजानेध्यायतिसातिफलदानायप्रारब्धकर्माविनाशवान्पंचभिर्भूतैर्निर्मितोदेहोन्यपतादित्यन्वयः ॥ ३२ ॥

क्रमसन्दर्भः ।

विविशे इत्यादि लीलयैवेति ज्ञेयम् ॥ ३० ॥

सहस्रयुगेति । युगशब्दोऽत्र चतुर्य्युगपरः । जज्ञिमहे इति वक्तव्ये जज्ञिरे इति आर्षम् । मरीचिमिश्रा इत्यस्यायं भावः—यथा मरीच्यादीनां ब्राह्मकल्पादनुवृत्तानां सम्प्रति सुप्तप्रबुद्धतैव जन्मोच्यते तथेति ज्ञेयम् । अत्रेदं विवेचनीयम्—सर्व्वेषु वैकुण्ठेषु सर्व्वेषु कालेषु च श्रीनारदस्य नित्यता श्रूयते इति यद्यपितन्न घटते तथापि नित्यश्रीनारदसारूप्यादिकं प्राप्तं महाभागधेयं जीवविशेषमवलम्ब्य घटत इति ॥ ३१ ॥

अस्कन्दितव्रतः निश्चलभगवद्भक्तिनियमः । क्वचित् वैकुण्ठादावपि ॥ ३२ ॥

## सुबोधिनी ।

तर्हि ब्रह्मणः सकाशात् कथमुत्पत्तिस्तदाह । कल्पांतइतिद्वाभ्याम् । यदाकल्पांतो भवति तदा सर्वं स्वकृतमुररीकृत्य नारायणः शेते ब्रह्माऽपि नाभिद्वारा उदरं प्रविशति ततो नारायणेन सहैक्यं प्राप्यशेते सहस्रयुगपर्यंतं तदा नित्यत्वादस्मच्छरीरस्य शयनार्थमहमपि ब्रह्मणो नासापुटवायुना सह अंतः प्रविष्टः । वायोरेव गमनाऽऽगमने अहं तु तत्रैव स्थितः । प्रविष्टधारणसामर्थ्यमाह । विभोरिति ॥ ३० ॥

अंतः स्थितस्यकालः सहस्रयुगपर्यंतम् । तदा राजसकल्पे भगवान् तिरोहितः ब्रह्मातु निर्गतः निर्गत्य शयनादुत्थाय इदं जगत्पूर्ववत् स्रष्टुमियेष तदा सिसृक्षतस्तस्य अवयवेभ्यः मरीचिमुख्या ऋषयः अहं च जज्ञिरे तत्र "उत्संगान्नारदो जज्ञे" इतिवचनात् भगवतो भक्तत्वादयमुत्संगे स्थापितः । ततः प्रजापतावंतः प्रविष्टत्वात् ब्रह्मणः प्राणरूपेभ्यो भगवदंशेभ्यस्तत्तत्स्थाने स्थितेभ्यो जाता इत्यर्थः ॥ ३१ ॥

सा कृपा जातेऽपि तथैवानुवर्त्ततइत्याह । अंतर्वहिरिति । यथा वालकः पुत्रः गृहमध्ये वहिरपि परिभ्रमति तथा ब्रह्मांडांतर्वहिश्चत्रिलोक्या वांतर्वहिश्च साधारणन्यायेन वाहः परिभ्रमणे वा संभवत्यंतारित्युक्तम् । द्वितीया त्वत्यंतसंयोगे । ननुकिमेतावता अचेतनानां वाय्वादीनामपि तथात्वात् अस्कंदितव्रत इति नस्कंदितं भगवद्दर्शनलक्षणं व्रतं यस्येति भगवतः सर्वत्र विद्यमानत्वादेशविशेषाविवक्षायां भक्तैः सर्वत्र दर्शनं कर्त्तव्यम् ततश्च यत्रैव भगवंतं न पश्येत् तत एव व्रतहानिर्भवेत् अतो मम सर्वत्र परिभ्रमणेन भगवद्दर्शनान्न व्रतहानिरित्यर्थः । ननु मशकादि हृदयेऽपि भगवतो विद्यमानत्वात् कथं तादृशेषु तव गतिरिति तत्राह । अनुग्रहान्महाविष्णोरिति । व्यापकस्तु देशकालपरिच्छिन्नः महाविष्णुस्तु वस्त्वपरिच्छिन्नोऽपि तस्यानुग्रहोऽपि तादृश एव अतः न विद्यते विघातो यस्याः तादृशी गतिर्यस्येति । क्वचिदपीत्यर्थे क्वचित् ॥ ३२ ॥

---

## श्रीविश्वनाथचक्रवर्त्ती ।

... नित्यतनुत्वे कथमस्मिन् कल्पे स्वायम्भुवे "उत्सङ्गान्नारदो" जज्ञे इति ब्रह्मणः सकाशात् तव जन्मप्रसिद्धिः । सत्यम् । नित्यतनोरेव भगवतो लीलाविशेषार्थं देवक्यादिगर्भे प्रवेश इव ममापि ब्रह्मपुत्रत्वलीलार्थं पूर्व्वकल्पान्त एव ब्रह्मशरीरे प्रवेशोऽभूदित्याह कल्पान्त इति । इदं त्रैलोक्यमादाय उपसंहृत्य उदन्वतः एकार्णवस्याम्भसि शयाने श्रीनारायणे शिशयिषोः शयनं कर्त्तुमिच्छोर्विभोर्ब्रह्मणः अन्तर्मध्यम् अनुप्राणं विविशे प्रविष्टोऽहम् । "ततोऽवतीर्य्य विश्वात्मा देहमाविश्य चक्रिणः । अवाप वैष्णवीं निद्रामेकीभूयाथ विष्णुने" ति कूर्म्मोक्तेः । स्वायनेऽम्भसीति पाठे स्वस्याधिकरणेऽम्भसीति नारायणेनाभेदविवक्षयेति मन्तव्यम् ॥ ३० ॥

सहस्रयुगस्य पर्य्यन्ते परिसमाप्तौ पूर्व्वकल्पान्ते एतत्कल्पादावित्यर्थः ! मरीचिमिश्रा मरीच्याद्याः । प्राणेभ्यः । इन्द्रियेभ्यः । जज्ञिमहे इति वक्तव्ये जज्ञिरे इत्यार्षम् ॥ ३१ ॥

न च मरीच्यादयः प्राकृताः स्वस्वकर्म्मपतिताः इवाहं क्वापि कर्म्मणि नापि सनकाद्या इव ज्ञानेऽपि नियुक्तः । किन्त्वहं प्रवृत्तिनिवृत्ति धर्म्मातीतो हरिं भजन्नेव स्वच्छन्देन वर्त्ते इत्याह अन्तरिति ये कर्म्मिणस्ते वहिर्न यान्ति अशक्तेः तप आदिभि ब्रह्मलोकं गता अन्तर्नयान्ति कर्म्मवन्धभीतेः । अहन्तु अखण्डितस्वभक्तिनिष्ठः सन्नन्तर्वहिश्च पर्य्येमि पर्य्यटामि । यद्वा वहिं ब्रह्माण्डात् महावैकुण्ठादपि अत एवोक्तं नारसिंहे । "सनकाद्या निवृत्ताख्ये तेच धर्म्मे नियोजिताः प्रवृत्ताख्ये मरीच्याद्या मुक्त्वैकं नारदं मुनिमिति ॥ ३२ ॥

---

## सिद्धांतप्रदीपः

कल्पांतेचतुर्मुखाहरंते उदन्वतएकावस्थांभासि इदंत्रैलोक्यमादायस्वस्मिन्प्रविलाप्यशयानेपुरुषावतारेशिशयिषोर्विभोःशयनं कर्तुमिच्छो ब्रह्मणोंऽतर्मध्यम् अनुप्राणंप्राणमनु अहमपिविविशेप्रविष्टवान् विभुत्वंतस्यसमष्टिशरीराभिप्रायम् कल्पांतेब्रह्मणोहरौ प्रवेशउक्तोहरिवंशे "ब्रह्माणमग्रतः कृत्वाप्रभवंविश्वतोमुखम् सर्वेदेवगणाश्चैवत्रयस्त्रिशाश्चछंदजाः प्रविशंतिमहायोगिं हरिंनारायणं प्रभुमि"-ति ॥ ३० ॥

सहस्रयुगपर्यंतेसहस्रयुगसंख्यक राज्यवसाने उत्थायेदंत्रैलोक्यंसिसृक्षतः पद्मजस्यप्राणेभ्यः इंद्रियेभ्योऽहंमरीचिमुख्याः ऋषयश्चजाज्ञिरेउद्बभूवुः ॥ ३१ ॥

अस्कंदितमस्खलितंब्रह्मचर्यंयस्यसःपर्येमिपर्यटामि ॥ ३२ ॥

---

## भाषाटीका

( प्रलय का भी समय था ) इस समस्त जगत् को अपने में लेकर प्रलय काल के समुद्र में शयन करते हुये नारायण के अंग में ब्रह्मा जी के श्वास के साथ मैं भी प्रविष्ट हो गया ॥ ३० ॥

सहस्र युग परिमित काल शयन करने के अनंतर उठकर जब ब्रह्मा जी इस जगत् को सृजना चाहते थे तब उनकी इंद्रियों से मरीचि प्रमुख ऋषिगण और मैं उत्पन्न हुआ ॥ ३१

मैं महा विष्णु के अनुग्रह से अखंड ब्रह्मचर्य व्रत त्रिलोकी में और त्रिलोकी के बाहर भी विचरता हूं कहीं भी मेरी गति का विघात नहीं है ॥ ३२ ॥

---

देवदत्तामिमांवीणांस्वरब्रह्मविभूषिताम् ।
मूर्च्छयित्वाहरिकथांगायमानश्चराम्यहम् ॥ ३३ ॥
प्रगायतः स्ववीर्याणितीर्थपादः प्रियश्रवाः ।
आहूतइवमेशीघ्रंदर्शनंयातिचेतसि ॥ ३४ ॥
एतद्ध्यातुरचित्तानांमात्रास्पर्शेच्छयामुहुः ।
भवसिंधुप्लवोदृष्टोहरिचर्यानुवर्णनम् ॥ ३५ ॥
यमादिभिर्योगपथैः कामलोभहतोमुहुः ।
मुकुंदसेवयायद्वत्तथात्माद्धानशाम्यति ॥ ३६ ॥

### श्रीधरस्वामी

किमिति पर्यटसिइतिईश्वराज्ञयालोकमङ्गलार्थमित्याहचतुर्भिः। देवेनईश्वरेणादत्ताम् स्वराः निषादर्षभगान्धारषड्जमध्यमधैवताः पंचमश्च इतिसप्तएवब्रह्मब्रह्माभिव्यंजकत्वात् तेनविभूषितांस्वतःसिद्धसप्तस्वरामित्यर्थः मूर्च्छयित्वामूर्च्छनालापवतींकृत्वा ॥ ३३ ॥

स्वप्रयोजनमाहप्रगायत इति ॥ ३४ ॥

परप्रयोजनमाह एतद्धीति । मात्राविषयास्तेषांस्पर्शाभोगास्तेषामिच्छयाआतुराणिचित्तानियेषांतेषांहरिचर्यानुवर्णनंयत् एतदेवभवसिन्धोःप्लवःपोतःनकेवलंश्रुतिप्रामाण्येनकिन्तुअन्वयव्यतिरेकाभ्यांदृष्टएवेत्यर्थः ॥ ३५ ॥

एतदेवेत्युक्तमवधारणमनुभवेन दृढयति । यमादिभिस्तथा न शाम्यतियद्वत् ( यथा ) मुकुन्दसेवया अद्धासाक्षात् आत्मामनः शाम्यति । कथञ्चिन्मुकुन्दसेवामात्रेणशाम्यतिकिंपुनस्तद्गुणवर्णनेनेतिभावः ॥ ३६ ॥

---

### श्रीवीरराघवः ।

देवेनभगवताब्रह्मणावादत्तांस्वरानिषादर्षभगांधारषड्जमध्यमधैवतपंचमाख्याः सप्तएवब्रह्मतेनविभूषितां स्वरैः सन्निधापितेनब्रह्मणा भगवताविभूषितामिमांपाणिस्थां वीणांमूर्च्छयित्वावादयित्वा मूर्च्छावीणादिवादनं"वादनेमूर्च्छनामतेतिवैजयंतीकोशात् हरिकथांगायमानोहमेवंचरामि ॥ ३३ ॥

प्रियंभक्तानांप्रीत्यावहंश्रवः यशोयस्यतीर्थौपवित्रौगंगादितीर्थाश्रयौवापादौयस्यतीर्थंपादेयस्येतिवा सभगवान्स्ववीर्याणियशांसिप्रगायतोममचेतस्याहूतइवशीघ्रंदर्शनंयातिदृष्टोभवतीत्यर्थः ॥ ३४ ॥

तदेवमापृष्टंयथावदनुवर्ण्यार्थसर्वथात्वंहरिचारित्राण्येवानुवर्णयेत्यभिप्रायेणतापत्रयातुरजनानांभगवद्गुणवर्णनानुश्रवणांतरेणतापत्रयविघातकंनोपायांतरमस्तीत्याहएतदितिद्वाभ्याम् असकृन्मात्रास्पर्शेच्छयामात्राः शब्दादिविषयास्तासांस्पर्शेच्छयानुभवतृष्णयाआतुरं पीडितंचित्तंयेषांजनानांभवसिंधोः प्लवः पूरःसहियस्मात्कारणाद्दृष्टोदृष्टोभवातितदेवाकिंहरिचर्यायाअनुवर्णनमिति ॥ ३५ ॥

मुहुःकामलोभाभ्यांहतआत्मामनः यद्वद्यथामुकुंदसेवयागुणानुश्रवणादिरूपयाऽद्धास्फुटंशाम्यतिकामादिरहितोभवतितथाययथातथायमादिभिर्योगमार्गैर्नशाम्यति ॥ ३६ ॥

---

### श्रीविजयध्वजः ।

हरिंध्यायन्मुक्तस्त्वंकंलोकंगतइतितत्राह कल्पांतइति।अहंकल्पावसानेस्वसृष्टमिदंविश्वमादायस्वोदरेनिवेश्यउदन्वतोऽम्भसिशेषपर्यंकेशयानेहरौशिशयिषौः शयितुमिच्छोर्विरिंचस्यअंतरनुप्राणमतगच्छच्छ्वासमनुविवेशप्रविष्टवानस्मीत्यन्वयः ॥ ३३ ॥

सहस्रयुगपर्यंतेचतुर्युगसहस्रपरिमितस्वनिशावसानं विष्णोरुत्थायोत्पाद्यमिदंसिसृक्षतोविरिंचस्यांकादहंजज्ञे मरीच्यत्रिमुख्याऋषयश्चतस्यप्राणेभ्योजज्ञिरइत्येकान्वयः ॥ ३४ ॥

विष्णुनाम्नायजमानादपिमहतो विष्णोरनुग्रहादप्रतिहतगमनो ऽस्खलितब्रह्मचर्यादिव्रतोहंत्रीन्लोकानंतर्बहिश्चपर्येमिपर्यटामीत्येकान्वयः ॥ ३५ ॥

तदेवाह । देवतिस्वरब्रह्मविभूषितांसप्तस्वरलक्षणवेदेनालंकृतांनाम्नादेवदत्तामिमांवीणांमूर्च्छयित्वास्वराणामारोहणावरोहणक्रमोमूर्च्छामूर्च्छनांगतिंकारयित्वाहरिकथां गायमानोऽहंचरामीत्यन्वयः ॥ ३६ ॥

---

## क्रमसन्दर्भः ।

देवः श्रीकृष्णएव । लिंगपुराणेउपरिभागेतेनैवतस्य स्वयंवीणाग्राहणंहिप्रसिद्धम्स्वराणां ब्रह्मत्वमत्रतस्यां वीणायांविन्यस्ता नांतेषांसहसाश्रीकृष्णस्फोरकताशक्तेः । साचस्वरब्रह्मणिनिर्भातहृषीकेशपदाम्बुजामितितद्विधानुभावात् । देवदत्तामितिकृतोपकारितायाः स्मर्य्यमाणत्वेनतमनुसन्धायैवतदुक्तेः ॥ ३३ ॥

श्रीभगवतः प्रियश्रवस्त्वंनामअतः सर्व्वेषांसुखमेवभवतात् नेतरदितिदयामात्रापेक्षयानतुस्वप्रतिष्ठेच्छयेतिविवेचनीयम्अत्रयद्रूपेणवी णाग्राहितातद्रूपेणैवचेतसिदर्शनंस्वारस्यलब्धम् ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३८ ॥ ३९ ॥

इतिश्रीमद्भागवतप्रथमस्कन्धस्यश्रीजीवगोस्वामिकृतक्रमसन्दर्भेषष्ठोऽध्यायः ॥ ६ ॥

---

## सुबोधिनी ।

एवं सत्संगेन श्रवणमारभ्य सर्वत्र भगवद्दर्शनपर्यंतमेका श्रवणभक्तिरुक्ता । द्वितीया भगवत्कृपया समारब्धेत्याह देवदत्तामिति । भक्तिमार्गे दैवकृतोऽपि विघ्नः कदाचित्संभाव्येतेतिशंकानिवृत्त्यर्थंकीर्त्तनांगभूतां वीणां दत्तवंत इति देवदत्ता श्रुतिपूरिका हि सातत्रांगु-ल्यादिचालनप्रयासोऽपि निवारितः । स्वरब्रह्मेति स्वराः षड्जादयः नादब्रह्मात्मकत्वात् तदेव ब्रह्म तेनविशेषेणभूषितां तादृशीं मूर्च्छना संगीतशास्त्रसिद्धा तां प्रापयित्वा तथा सति रसाऽऽविर्भावात् अश्रांतं संकीर्तनं भवतीति तथा कृत्वा हरिकथां गायमानश्चरामि । परिभ्र-मणं तु कीर्त्तनेऽप्यंगम् ॥ ३३

ननु पूर्वस्मात् कोऽत्र विशेषो जातस्तत्राह ! प्रगायत इति पूर्वंयद्दर्शनार्थं भूयान् यत्नः कृतः सइदानीं स्वत एव भवति । तत्र हेतुः प्र-गायत इति । यस्तु स्ववीर्याणि प्रकर्षेण गायति तस्याग्रे वीर्यास्फुरणं मा भवत्विति स्वयमेवतत्स्फुरणार्थं विषयांतरसंचाराभावाय शी घ्रं चित्ते समायाति । ननु श्रोतुरभावात् अनंगं कीर्त्तनं कथं फलायेति तत्राह । तीर्थपाद इति । तीर्थानि संतः पादे यस्य सर्वे हि संतः सा युज्यं प्राप्ता भगवत्पादे वर्तंते अन्येऽपि भक्तिवशात् । तादृशो हि भक्तिगुणः । पादं च हृदि स्थापयित्वा गायतीति सतां श्रोतॄणां विद्यमान-त्वात् कीर्त्तनं नांगविकलम् । ननुकथमेवं । भगवान् सर्वां सामग्रीं संपादयतीति तत्राह । प्रियश्रवा इति । प्रियं श्रवः कीर्त्तिर्यस्य तत्संपा दनार्थं सर्वं संपादयतीति भावः । अग्रे वीर्यास्फुरणे भगवतः स्मरणमाह्वानमिव संजातं प्रियत्वादाह्वाने च समागमनम् ॥ ३४ ॥

एवं कीर्तनं सपरिकरं निरूप्य सर्वत्र लोके तत्सिद्ध्यर्थं तद्विषयवर्णनं त्वयाकर्तव्यमित्याभिप्रायेण कीर्त्तनमनुवादेन स्थिरीकरोति । एतद्धीति मात्रास्पर्शेच्छया आतुरचित्तानां हरिचर्यानुवर्णनमेव भवसिंधुप्लवः दृष्टः । एतदिति स्वक्रियमाणसमानम् हीति पूर्वोक्ता हेतव उक्ताः । मां मायां त्रायंतइति मात्रा विषयाः तेषामपि स्पर्शमात्रम् । शब्दव्यंग्येन च महापातकत्वं सूचितम् । हरिचर्यानुवर्णने तेषां श्र-वणं भविष्यति । अन्यथा महारोगस्य संजातत्वात् क्वापि परलोकसाधने नप्रवृत्तिः । प्रवृत्तावपि तस्य रोगजनकत्वं ज्वरमध्ये भक्षितप-थ्यादेरिव । श्रवणस्य तु न मात्रासाधकत्वं प्राप्ते पि विषये इच्छाया निवृत्तत्वात् मुहुरित्युक्तम् । अयं च सुखेनैव संसारतारको मयैव दृ ष्टः । साधनतामनूद्य रूपमाह । हरिचर्यानुवर्णनमिति ॥ ३५ ॥

तस्य दृष्टोपायत्वं वदन् साधनानामतथात्वमाह । यमादिभिरिति । चित्तसाधनार्थमेवयोगः प्रवृत्तः "योगश्चित्तवृत्तिनिरोधः" यो० १।२। इति तथापि स्वस्थे चित्ते तत्संभवः प्राणिनां त्वंतःकरणं मृतमास्तिकामेन ज्वालितो लोभेन प्लावितः तस्य हि मृतसंजीविकया विद्यया जीवनं भवति यमादयश्च योगमार्गास्तत्र यश्चलितुं शक्तस्तस्येष्टसिद्धिः । मुहुश्चायं हत इति कामलोभपरवशत्वम् । उभयोर्बीजभंतः क्रोधादेर्व हिरिति तयोर्ग्रहणम् । संसारमग्नानां मोक्षदातृत्वात् मृतसंजीवकत्वं मुकुंदत्वम् । सेवा तु रोगनिवर्तिका । श्रवणेन च अंतः प्रविशतिभ भगवान् तत्र चित्तं सेवां भावयति अतः श्रवणप्रकरणे पि सेवोक्ता । यद्यपि भगवदाश्रितो योगोऽपि क्रमेण तथा करोति सेवा त्वद्धा साक्षात् । योगसेवापेक्षया पि योगेशसे वाया उत्तमत्वात् । आत्मेति सजातीयस्य शीघ्रशामकत्वमिति अंतःकरणस्यात्मपदप्रयोगः ॥ ३६

---

## श्रीविश्वनाथचक्रवर्त्ती ।

स्वर्गापवर्गविलक्षणात्मव्वैरन्यैर्दुर्लभाममभोगसामग्रीतुसदासर्व्वत्रेत्याहद्वाभ्याम् । देवेनश्रीकृष्णेनदत्तांलिंगपुराणेतेनैवस्वयंतस्यवीणा ग्राहणंहिप्रसिद्धम् । स्वराःषड्जादयःएवब्रह्मस्फोरकत्वाद्ब्रह्म । मूर्च्छयित्वामूर्च्छनावलवतींकृत्वा ॥ ३३ ॥

प्रियश्रवाइतिस्वयशः प्रियत्वाद्यत्र यत्र यशोगानंतत्रायाति तीर्थपादइतियत्रायातितत्तीर्थंभवतिआहूतइवआह्वानंविनापीतिभगव-तोभक्तिवश्यत्वमुक्तम् ॥ ३४ ॥

प्रकरणार्थमुपसंहरतिएतदिति । मात्राविषयास्तेषांस्पर्शाभोगास्तदिच्छयाव्याकुलचित्तानांयोभवसिन्धुस्तस्य प्लवः पोतः दृष्टः मया-साक्षात्प्रत्यक्षीकृतः नात्रप्रमाणापेक्षेतिभावः । एतदेवकिंहरिचरितस्यानुवर्णनम् अत्र सर्वैव बहुगायाअपिभक्तेः कीर्त्तनस्यमुख्यत्वात् कीर्त्तनोपलक्षिता सर्वैवभक्तिर्ज्ञेया ॥ ३५ ॥

भक्तिसद्भावे एवनिस्तारइतिनिर्द्धारेऽपियथाकेवलयाभक्त्याआत्मासाक्षाच्छाम्यतिनतथाभक्तिमिश्रैर्योगज्ञानादिभिरित्याह । यमादिभि स्तथानशाम्यतियद्वन्मुकुन्दसेवयाअद्धासाक्षादेव । अत्रपुरेहभूमन्नित्यादिनानैष्कर्म्यमित्यादिनाचयोगादीनांभक्तिराहित्यैवैयर्थ्यंज्ञकिमिदं

सर्वंतादिदमाख्यानंयत्पृष्टोऽहंत्वयानघ ।
जन्मकर्मरहस्यंमेभवतश्चात्मतोषणम् ॥ ३७ ॥
सूतउवाच ॥ एवंसंभाष्यभगवान्नारदोवासवीसुतम् ।
आमंत्र्यवीणांरणयन्ययौयादृच्छिकोमुनिः ॥ ३८ ॥
अहोदेवर्षिर्धन्योऽयंयत्कीर्तिंशार्ङ्गधन्वनः ।
गायन्माद्यन्निदंतंत्र्यारमयत्यातुरंजगत् ॥ ३९ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्यां
प्रथमस्कन्धे व्यासनारद-संवादो नाम षष्ठोऽध्यायः ॥ ६ ॥

श्रीविश्वनाथचक्रवर्त्ती ।

रेव यमादिभिरिति लभ्यते। ततस्तैरात्मा यद्यपि शाम्यति तदपि यदूवन्मुकुन्दसेवया यमादिविनाभूततत्वात् केवलयेत्यर्थः। अत्र भवतानुदित प्रायमित्यादिना तथात्माद्धा नशाम्यतीत्यन्तेन ग्रन्थेन भक्तेरेव निस्तारोपायत्वेनोक्तत्वेऽपि तस्या स्त्रैविध्यं दृश्यते केवलत्वं प्राधान्यं गुणभावश्च। त्यक्त्वा स्वधर्म्ममित्यादिषु। अहं पुरातीत भव इत्यादिषु च केवलत्वम्। कुर्व्वाणा यत्र कर्म्माणि भगवच्छिक्षया सकृत्। गृणन्ति गुणनामानि कृष्णस्यानुस्मरन्तिचेत्यादिषु प्राधान्यम्। यदत्र क्रियते कर्म्म भगवत् परितोषणम्। ज्ञानं यत्तदधीनं हि भक्तियोगसमन्वितमित्यत्र गुणभावः। तत्र केवलत्वे निष्कामाधिकारिणां भक्तिरनन्या शुद्धा निर्गुणा उत्तमा अकिञ्चनेत्यादि नाम्नी प्रेमफला भवति प्राधान्ये कर्म्ममिश्रा ज्ञानमिश्रा योगमिश्रेत्यादि नाम्नी भक्तिः शान्ताधिकारिणां रतिफला कस्यचिन्मोक्षफलापि भवति दास्यादि भाववत् साधुसङ्गवशात् कस्यचित् दास्याद्यभिलाषिणो भक्ते रति प्राधान्ये सत्यैश्वर्य्य प्रधान दास्यादि भावप्रदा प्रेमफलापि भवति। गुणभावेतु स्वीयं नाम फलं चाप्रकाशयन्ती कर्म्म ज्ञान योगादीनां तया विना प्रति स्वफलं सम्यक् साधयितुमसमर्थानां तत्र साहाय्यमात्रं कुर्व्वती स्वयं तटस्थेव भवति। ततश्च भक्तिमिश्रं कर्म्म ज्ञानं योगश्च मोक्षं साधयतीत्यतोऽत्र शास्त्रे भक्तिर्द्विविधैव॥ केवला प्रधानीभूता चेत्येतत् सर्व्वं नारदेनोपदिष्टो व्यासो द्वादशसु स्कंधेषु प्रपञ्चयिष्यतीति ज्ञेयम् ॥ ३६ ॥

---

सिद्धांतप्रदीपः

स्वरब्रह्मविभूषिताम् "स्वतोरंजयति श्रोतुश्चित्तंसस्वरउच्यत"इतिस्वरः निषादर्षभगांधारषड्जमध्यम धैवतपंचमभेदःसएवब्रह्मतेनविभूषिताम् स्वतः स्वराभिव्यंजवादनेमूर्छनाचेतिवैजयंतीकोशात्वादयित्वा ॥ ३३ ॥ ३७॥

---

भाषाटीका

भगवान की दी हुई उस स्वर ब्रह्म भूषिता वीणा को मूर्च्छना आलाप युक्त कर हरि कथा गान करता हुआ मैं विचरता हूं ॥ ३२ ॥

तीर्थ पाद प्रियश्रवा भगवान के वीर्य को जब मैं गान करता हूं तब पुकार कर बुलाये के समान शीघ्र ही वह मेरे चित्त में आकर दर्शन देते हैं ॥ ३३ ॥

विषयों के भोग की लालसा से मुहुर्मुहु आतुर चित्त पुरुषों के इस दुरन्त भवसागर से पार जाने का यही एक मात्र प्लव ( बेडा ) देखा गया है कि जो श्री हरि भगवान की लीलाओं का वर्णन करना ॥ ३४ ॥

काम लोभादिकों से मुहुर्मुहु उपद्रुत चित्त यम नियमादिक योग पथ से वैसा शुद्ध नहीं होता है जैसा साक्षात् मुकुन्द सेवा से शान्त होता है ॥ ३५ ॥

---

श्रीधरस्वामी ।

भवतोमनःपरितोषकारणञ्चव्याख्यातम् ॥ ३७ ॥
आमन्त्र्यअनुज्ञाय । यादृच्छिकः स्वप्रयोजनसङ्कल्पशून्यः ॥ ३८ ॥
हरिकथागायकभाग्यंश्लाघतेअहोइति । माद्यन् हृष्यन् । तन्त्र्यावीणया ॥ ३९ ॥
इतिश्रीमद्भागवतभावार्थदीपिकायांप्रथमस्कन्धेषष्ठोऽध्यायः ॥ ६ ॥

श्रीवीरराघवः ।

प्रश्नस्योत्तरमुपसंहरतिसर्वमिति । इमनघत्वयाहंयत्प्रति पृष्टस्तदेतत्सर्वमाख्यातमित्यन्वयः ॥ ३७ ॥

व्यासनारदसंवादमुपसंहरति सूतःएवमिति एवमित्थंसंभाष्यभगवन्नारदोमुनिः वासवीसुतमुपरिचरवसुवीर्यजायाः सत्यवत्याःसुतं व्यासमामंत्र्यापृच्छ्यवीणांरणयन्याहच्छिकः स्वेच्छानुचारीययौ ॥ ३८ ॥

देवर्षिस्तौतिअहो इतिधन्यत्वंस्वस्यपरस्यचसुखापादकत्वंतदेवाहयोदेवर्षिः शार्ङ्गधन्वनोभगवतः कीर्तिंगायंस्तंत्र्यावीणयामाद्यन्मदं-प्राप्नुवन्स्वयंवीणास्वनजहर्षमग्नः सन्नित्यर्थः आतुरंतापत्रयातुरंजगदपिरमयतिसुखयति ॥ ३९ ॥

इति श्रीवीरराघवटीकायां प्रथमेषष्ठोऽध्यायः ॥ ६ ॥

---

श्रीविजयध्वजः ।

तीर्थंगंगाख्यंपादेयस्यसतीर्थपात्तस्यवीर्याणिचरितलक्षणानिप्रकृष्टंगायतः चशब्दएवार्थे एवमुपासकस्यैवममचेतासिप्रियश्रवाः भगवान्आहूतइवशीघ्रमविलंबितंदर्शनंयातिअपरोक्षोभवतीत्यन्वयः ॥ ३७ ॥

हरिचर्यानुवर्णनंसमाधिभाषयाभगवच्चरितवर्णनंयत्तदेतत्मुहुर्मात्रास्पर्शेच्छयातत्प्राप्तिनिमित्तमातुरचित्तानांक्लिष्टमनसांपुंसांभवसिंधुप्लवः संसारसागरतरीविशेषः दृष्टः साक्ष्यादिप्रमाणैरितिशेषः इतियस्मात्तस्मात्सात्विकाहितायसैववर्णनीयेतिभावः ॥ ३८ ॥

तर्हियमादियोगानुष्ठानविधानंव्यर्थमितितत्राह यमादिभिरिति मुकुंदकथासेवयायथात्मजीवोऽजस्राशाम्यनिभगवन्निष्ठबुद्धिमान्भवति तथाकामलोभाभ्यांवैरिभ्यांहतः पीडितोनुष्ठितैर्योगमार्गैर्यमादिभिरद्धानशाम्यति तस्माद्धरिकथासेवैवसंसारतरीत्येकान्वयः ॥ ३९ ॥

उपसंहरति सर्वमिति अतीतजन्मविषत्वाद्रहस्यंममजन्मकर्मप्रत्यहंत्वयापृष्टः तदिदंसर्वमाख्यातंतुभ्यमितिशेषः । कीदृशंनित्यसंतुष्टस्यतवापिभवतः आत्मनोमनस्तोषणंतुष्टिजनकं भवतआख्यातमितिवा चशब्दः जन्मकर्मणोः समुच्चये श्रोतृणामात्मनांजीवानांतृप्तिजनकमितिवा ॥ ४० ॥

सूतः व्यासनारदसंवादंशौनकादीन्ब्रूतइत्याह एवमिति वासवीसुतंसत्यवत्याः पुत्रंव्यासंएवंपूर्वोक्तप्रकारेणसंभाष्यउक्त्वागच्छामीति आमंत्र्य आज्ञांगृहीत्वावीणांरणयन्ध्वनयन्ययौ याहच्छिकः अतर्कितदृगमनागमनः यतिर्निर्जितेंद्रियग्रामः ॥ ४१ ॥

शार्ङ्गधन्वनोहरेः कीर्तिंमाध्व्यामधुरयागिरातंत्र्यावीणयागायन् आतुरंक्लिष्टंजगद्रमयतियः सोयंदेवर्षिर्नारदः धन्यः कृतकृत्यः अहो आश्चर्यमेतत् शूद्रयोनेरप्येतादृशमाहात्म्यमभूदिति नारंज्ञानंददातीतिनारदः अरदोदोषदोनभवतीतिवा आरवदंगारकवदायु खंडकोनभवतीतिवा दोअवखंडने ॥ ४२ ॥

इतिश्रीभागवतेप्रथमस्कंधेविजयध्वजटीकायांषष्ठोध्यायः ॥ ६ ॥

---

सुबोधिनी ।

इतोऽपि किंचिद्रहस्यं भविष्यतीत्याशंक्योपसंहरति । सर्वं तदिति । स्वत एव नारदो महानिति लोके प्रसिद्धिः मया त्वेतावान् क्लेशोऽनुभूत इति रहस्यम् तवापि चित्तोद्वेगे हेतुरुक्तः । सर्वत्र भगवान् हेतुरिति कथने हेतुः आत्मतोषणमिति । भगवत्प्रीतिहेतुरंतः सुखजनकं वा ॥ ३७ ॥

नारदस्याऽद्यापि साधनपरत्वमितिख्यापयितुमाह । एवमिति । भगवानिति प्रत्युपकारानपेक्षा । वासवीसुतमिति अनुगमनाद्यभावात् पूर्वोक्तं संभाषणशेषत्वेनानूद्य आमंत्र्य गच्छामीत्युक्त्वा भक्तिमार्ग एव मार्ग इति ख्यापयितुं वीणां रणयन् ययौ । याहच्छिक इति पुनरागमनसंभावनाऽभावः । मुनित्वात् कार्यं सर्वं कृत्वागतः ॥ ३८ ॥

गते तु तस्मिन् अस्यापि हृदये भक्तिमार्गः समागत इत्यभिप्रायेण नारदवर्णनमाह । अहो इति । देवर्षिरिति दृष्टफलसिद्धिः । गायन्माद्यन्निति स्वतंत्रभक्तिः । अयमेव परोपकार इति ज्ञातवान् तदाह । रमयतीति ॥ ३९ ॥

इति श्रीभागवत सुबोधिन्यां श्रीलक्ष्मणभट्टात्मज श्रीवल्लभदीक्षितविरचितायांप्रथमस्कंधेषष्ठोऽध्यायः ॥ ६ ॥

---

श्रीविश्वनाथचक्रवर्त्ती ।

सर्व्वं भक्तेराविर्भावप्रकारो वृद्धिः फलं तद्वतो जनस्य चेष्टा प्रारब्धकर्म्मनाशः साधकदेहत्यागप्रकारोऽकर्म्मारब्धचिन्मयदेहप्राप्तिश्च । रहस्यं वेदान्तदर्शिभिरप्यगम्यम् ॥ ३७ ॥

आमन्त्र्य अनुज्ञाप्य । यदृच्छया चरतीति याहच्छिकः हेतुशून्य गमनादिक्रिय इत्यर्थः । तेन च भक्तिर्याहच्छिकी भक्तोऽपि याहच्छिकस्तत्सङ्गोऽपि व्यासस्य याहच्छिकइति भक्तिमतस्य याहच्छिकत्रयी जीवातुः ॥ ३८ ॥

अतो विस्मयं प्रकाशयन्नाह अहो इति तन्त्र्या वीणया ॥ ३९ ॥

इति सारार्थदर्शिन्यां हर्षिन्यां भक्त चेतसाम् । षष्ठोऽयं प्रथमेऽध्यायः सङ्गतः सङ्गतः सताम् ॥ ६ ॥

शौनक उवाच ॥ निर्गतेनारदेसूतभगवन्वादरायणः।
श्रुतवांस्तदभिप्रेतंततः किमकरोद्विभुः ॥ १ ॥
सूत उवाच ॥ ब्रह्मनद्यांसरस्वत्यामाश्रमः पश्चिमेतटे।
सम्याप्रासइतिप्रोक्तऋषीणांसत्रवर्द्धनः ॥ २ ॥
तस्मिन्स्वआश्रमेव्यासोवदरीषंडमंडिते।
आसीनोऽपउपस्पृश्यप्रणिदध्यौमनः स्वयम् ॥ ३ ॥
भक्तियोगेनमनसिसम्यक्प्रणिहितेऽमले।
अपश्यत्पुरुषंपूर्णंमायांचतदुपाश्रयाम् ॥ ४ ॥

सिद्धांतप्रदीपः।

यादृच्छिकः कृष्णेतरवस्तवनाशक्त्यायदृच्छाचारि ॥ ३८ ॥
माद्यन् कृष्णावेशेनद्रष्यन् ॥ ३९ ॥

इति श्रीसनत्कुमारसंततिप्रवर्त्तक भगवन्निंबार्कचरणाचितकशुकसुधीप्रणीतेश्रीमद्भागवतसिद्धांतप्रसीपे प्रथमस्कंधीये षष्ठाध्यायार्थप्रकाशः ॥ ६ ॥

---

भाषाटीका।

हे अनघ तुमने जो कुछ मुझ से पूछा वह मैंने यह अपना जन्म कर्म्म रहस्य सब आख्यान किया और तुह्मारे मनके संतोष का कारण भी कहा ॥ ३६ ॥

( सूतोवाच ) भगवान नारद जी वासवी सुत व्यासजी से यह संभाषण कर और पूंछकर जैसे आये थे वैसे ही चले गये क्योंकि इनका विचरण प्रयोजन शून्य केवल परोपकार के निमित्त है ॥ ३७ ॥

अहो ? ये देवर्षि परम धन्य हैं कि जो शार्ङ्ग धन्वा भगवान की कीर्ति को गान करते और आनंदित होते वीणा बजाकर इस आतुर जगत को रमण कराते हैं ॥ ३८ ॥

प्रथम स्कंध की छटी अध्याय ॥ ६ ॥

---

श्रीधरस्वामी

अथ भागवत श्रोतुर्जन्मवक्तुं परीक्षितः। सुप्तवालवधाद्द्रोणेर्दण्डः सप्तम उच्यते ॥ ० ॥

तस्य नारदस्य अभिप्रेतं श्रुतवान् सन् ॥ १ ॥

ब्रह्मनद्यां ब्रह्मदैवत्यायां ब्राह्मणैरन्वितायां वासत्रं कर्म वर्द्धयीतितथा ॥ २ ॥

वदरीनांषण्डेन समूहेन मण्डिते। मनः प्रणिदध्यौ स्थिरीचकार समाधिं नानु स्मरति नारदोपदिष्टं ध्यानं कृतवानित्यर्थः॥ ३ ॥

प्रणिहिते निश्चले अत्रहेतुः भक्ति योगेन अमले पूर्वं प्रथम पुरुषमीश्वर मपश्यत्। पूर्णमिति वा पाठः। तदपा श्रयाम् ईश्वरा श्रयांतद्धीनां मायाञ्चापश्यत् ॥ ४ ॥

---

दीपिनी।

॥ ० ॥ १ ॥
( शम्याप्राश इति पाठे शमीभिः आ सर्वतः प्राश्यते व्याप्यते वेष्ट्यते वा असौ शम्याप्राशः। इति व्याख्यालेशः ॥ २ ॥ )
समाधिनेति पञ्चमाध्यायस्य त्रयोदशश्लोकः ॥ ३—५ ॥

---

श्रीवीरराघवः।

वासवीसुतमामंत्र्यनारदोयया वित्युक्तंततउपरितनंव्यासवृत्तांतपृच्छतिशौनकःनिर्गतइति हेसूतलदभिप्रेतंकिंवाभागवताख्यमानप्रायेण-निरूपिताइत्युत्प्रेक्षितमेवनारदस्याभिप्रेतंश्रुतवान्भगवान्मुनिर्बादरायणोनारदेनिर्गतेसतिकिमकरोत् ॥ १ ॥

### श्रीवीरराघवः ।

इत्थमापृष्टआहसूतः ब्रह्मनद्यादिभिःसप्तभिःब्रह्मनद्यांब्रह्मर्षिभिः सेवितायांनद्यांसरस्वत्याख्यायांपश्चिमेतटेशम्याप्रासइति प्रसिद्धोव्या सस्याश्रमः सर्वर्षीणांसत्रवर्द्धनः सत्राणिवर्द्धंतेस्मिन्निितितथा ॥ २ ॥

तस्मिन्वदरीणांवृक्षाणांखंडैर्मंडिते आश्रमेशम्याप्रासेव्यासोऽपउपस्पृश्याचम्यस्वयमात्मनामनः प्रणिदध्यौविषयांतरेभ्यः प्रत्याहृत्या-मस्थमकरोदित्यर्थः ॥ ३ ॥

भगवद्भक्तियोगेनामलेमनसिसम्यक्प्रणिहितेसमाहिते पूर्वंतावत्पुरुषंपरमपुरुषमपश्यत् ततस्तदपाश्रयांपुरुषापाश्रयांतदाधेयांत-च्छरीरभूतामितियावत्मायामपश्यत् ॥ ४ ॥

---

### श्रीविजयध्वजः ।

भगवतकारणापदेशेनभवगतिभक्ति स्तन्माहात्म्यंचप्रतिपाद्यतेस्मिन्नध्याये निर्गतइति तदूअभिप्रेतंभागवतकरणंतस्यनारदस्यवा ततो नारदनिर्गमनानंतरम्॥ १ ॥

लकुटीकृतशम्यानामयज्ञीयतरुशाखापतितस्थलेकृतशालांतर्यज्ञकरणात्शम्याप्रासइतिलोकेरूढिः सत्रंवर्धयति अधिकफलंकरोतीति सत्रवर्धनः ॥ २ ॥

ऋष्युपयोगयोग्यफलबदरीवृक्षसमूहालंकृतेऋषिसामान्याश्रमे अतीतानागतवर्तमानानंतकोटिब्रह्मांडबाह्याभ्यंतरवर्त्यपरिमितपदार्थान शेषविशेषैः सहकरतलामलकवत्सततमपरोक्षीकुर्वताश्चिरंमनः प्रणिधानमसुरजनमोहनायेतिबोद्धव्यम् ॥ ३ ॥

ध्यानेनकिंलब्धमभूदितितत्राह भक्तीति भक्तियोगेनसम्यगेकाग्रतयाहरौप्रणिहितेसम्यक्स्थापिते अमलेरागादिदोषरहितेसतांपुरुषाणां मनसिप्रत्यक्षीभवंतंपूर्णं देशतः कालतोगुणतश्चापरिच्छिन्नंपुरुषंपरमात्मानं जीवानांसंसारकरीं मायांबंधकशक्तिंचतदपाश्रयांतस्यहरेरधी नामपश्यदित्येकान्वयः प्रकृतिपुरुषौविविक्ततयाद्रष्टुंलोकानांमनसिसम्यक्प्रणिहितेसतिशक्यावित्यपश्यदितिवाएतदभिप्रायेणतदपाश्रया मित्युक्तं ततोपगत्याश्रित्यस्थितां स्थातुमीक्षापथेमुयेतिवक्ष्यति ॥ ४ ॥

---

### क्रमसन्दर्भः ।

॥ ० ॥ १ ॥ २ ॥ ३ ॥

भक्ति योगेन प्रेम्णा अस्त्येव मंगभजतां भगवान्मुकुन्दो मुक्तिं ददाति कर्हिचित्स्मनः भक्तियोगमित्यादौ भक्त्या संजातया भक्त्येत्या-दौच प्रसिद्धेः । प्रणिहिते समाहिते । समाधिनानुस्मरतद्विचेष्टितामिति तं प्रति नारदोपदेशात् । पूर्ण पदस्य मुक्त प्रग्रहया वृत्त्या भगवानिति शब्दोऽयं तथा पुरुषइत्ययि निरूपाधिश्च वर्त्तते वासुदेवेऽखिलानीति पाद्मोत्तर खण्ड वचनावष्टम्भम्भेन । तथा काम कामो यजेत् सोमम कामः पुरुषं परं । अकामः सर्व कामोवेत्यादौ यजेत पुरुषं परमित्यस्य वाक्यद्वयस्य पूर्व वाक्ये पुरुषं परं । प्रकृत्ये कोपाधि उत्तर वाक्ये पुरुषं पूर्णं निरूपाधिमिति टीकानुसारेण पूर्ण पुरुषोऽत्रस्वयं भगवानेवोच्यते । पूर्वमिति पाठे पूर्व मेवाहमिहासमिति तत्पुरुषत्वमिति श्रौतनिर्वचन विशेषपुरस्कारेणास एवोच्यते । तमपश्यच्छ्री वेदव्यास इति स्वरूप शक्ति मन्तमेवेत्यंतत् स्वयमेवलब्धं । पूर्णचन्द्रमपश्यदि त्युक्ते कान्तिमन्त मपश्यादिति हिलम्यतएवावक्ष्यते च त्वमाद्यः पुरुषः ससाक्षा दीश्वरः प्रकृतेःपरः । मायां व्युदस्य चिच्छक्त्या कैवल्ये स्थित आत्मनीति । अतएव मायाञ्च तदपा श्रयामित्यनेन तास्मिन् अप अपकृष्ट आश्रयो यस्याः निलीयस्थिततत्वादिति मायायान स्वरूप भूतत्वमित्यपि लभ्यते । वक्षते चमाया परेत्यभिमुखेच बिलज्जमानेति स्वरूपशाक्तिरिय मत्रैव व्यक्तीभविष्यति अनर्थोपशमं साक्षादित्थ-नेन । आत्मारामश्चमुनय इत्तनेनच । पूर्वत्राहिभक्तिः योगप्रभावः खल्वसौभायाभिभावकतयास्वरूपशक्तिवृत्तित्वेनैवगम्यते । परत्रतेचगुणा ब्रह्मनंदस्याप्युपरिचरतयास्वरूपं शक्तेः परमवृत्तितामेवार्हन्ति । मायाधिष्ठातृपुरुषस्तुतदंशत्वेन ब्रह्मचतदीयन्निर्विशेषाविर्भाव रूपत्वेन तदन्तरभावेनापृथग्दृष्टत्वात्पृथङ्नोक्त इतिज्ञेयम् । तदेतच्चतृतीयद्वितीयसंदर्भयोः प्रतिपादितमस्ति । अतोऽत्रपूर्वत्रदेवसम्बधित्वं निर्द्धा रितम् ॥ ७ ॥

---

### सुबोधिनी ।

एवंत्रिभिर्मध्यमस्य स्वातं त्र्येण निरूपणात् । नारदव्यास संवाद निरूप्यात्थोत्तमाभिधा ॥ १ ॥
त्रयोदशभिरध्यायैः साधकोयं प्रजापतिः । स्वतंत्र उत्तमस्यैव साधकोयं निरूप्यते ॥ २ ॥
द्वादशां तश्च सहितो ह्यधिकारो निरूप्यते । हेतुः षड्भिराक्तिश्च तथा स्वातं अमंतिके ॥ ३ ॥

हेतुस्तुद्विविधःप्रोक्तः सन्निधामतःविशेषःपंचधाप्रोक्तः सप्तमेत्रितयंजगौ अत्रह्यन्यतमोधिकारो निरूपणाय स्वतंत्रतयाश्रवणकीर्तन रूपःसचहेतुर्वैराग्याभ्यां सहितउत्तमो भवति हेतुर्भगवान्महताक्लेशेन भागवतश्रोतारं पालितवान्यस्तुसर्वोत्तमः सर्वमृग्यः सर्वेषामुक्ति दातासर्वेषांज्ञानदःसर्वेषां सर्वदुःखनिवृत्ति पूर्वक भक्तिप्रदःभक्तमनोरथपूरकश्चसत्वयमुधम्यमहता यत्नेनपालयतिसमूलतः भागवत श्रवणाधिकारी एवं षड्भिरध्यायै निरूप्यते यस्याधिकारो निरूपणीयः । प्रथमंसानिरूपणीयः तंद्धक्ताचअतः सप्तमे अध्याये भागवते

सुबोधिनी ।

त्पासिप्रवृत्तीभक्तानांमनोरथपूरणं च निरूप्यते तत्रप्रथमंशौनकः भागवतोत्पत्तिप्रश्नमाह भगवानिति सहजशक्तिः बादरायण इति आगंतु कतपः शक्तिः वदरफलेनवर्त्तमानः बादरायणः तदभिप्रायं भगवद्गुणानांयाथात्म्यप्रतिपादक ग्रंथकरणम् ॥ १ ॥

नारदवचनानंतरंभगवदिच्छानिर्द्धारार्थं समाधिंकृतवान्तत्रशुद्धेदेशेभगवदाविर्भावः शुद्धञ्चदेवयजनामिति व्यासनिवासस्थानस्यदेव यजनत्वमाह । ब्रह्मनद्यामिति । सामीप्येसप्तमीब्रह्मदैवत्यांसरस्वत्यामिति तत्रैववेदादिविद्यास्फूर्त्तिः सहसापश्चिमेतटेइतिपुरतोनदीदेवय जनेभवतिपुरोहाविश्वतद्देवयजनम् ।किंच । शम्याप्रास्यतेअस्मिन्निति शम्याप्रासः "तदग्नेःप्रियंधामभवतितद्दैवाग्निः स्वस्थानात् आशाम्यायता शादपक्षायतियदिपरस्तरामपक्षायेदितिवा शम्याप्रास्यतेअस्मादितिवातस्यस्थानस्यबलमाह ऋषीणांसत्रंवर्द्धयतीति ॥ २ ॥

देवयजनत्वंनिरूप्यतत्रव्यासस्य समाधिमाहतस्मिन्निति । स्वाश्रमइति अपराधीनत्वेननिर्भयचित्तप्रसादहेतौ व्यासइत्यधिकारीवदरीखंड इतिपाठः बदरीअमृतदरी परमानंददायिनी तस्यखंडः समूहः खंडोवातेनचमंडिते अनेनतपः स्थानंमोक्षस्थानं च तदितिसूचितंभवति तस्मिन्नासीनः सर्वदेवताप्रसादायचाचमनं "यन्निराचामतितेनऋचःप्रीणाती" तिश्रुतेः योगेन साधितंमनः तदुक्तमार्गव्यतिरेकेण स्वतंत्रतया यदत्रभगवताऽभीष्टंतत्स्फुरिष्यतीति बुद्ध्यास्वयंमनः स्थिरीकृतवान् ॥ ३ ॥

तदासमाधिभाषाविषयाः पदार्थाः स्फुरिताइतितान् वर्णयितुंप्रथमंतदाधारंवर्णयति भक्तियोगेनेति । वायुवशात्स्थिरीभूतश्चेन्नारदवत् स्फूर्त्तिरितितदाह । भक्तियोगेनेतिनिःकामत्वादमलेतत्रयद्दृष्टवान् तदाह अपश्यदितिद्वयेनसाकारं ब्रह्मशुद्धंहिमायातच्छक्तिरूपमातया सर्वत्रसंमोहः साक्षाद्भक्तिश्चमोचिकेति पूर्णपुरुषंपुरुषोत्तमं जीवराशिभिराकीर्णब्रह्मांडकोटिभिर्वामायांचापश्यत् भगवदेकशरणाम् ॥ ४ ॥

श्रीविश्वनाथचक्रवर्त्ती ।

सप्तमे सर्व्वशास्त्रार्थं समाधौ व्यास ऐक्षत । ब्रह्मास्त्रस्योपसंहारो द्रौणेर्दण्डश्च कथ्यते ॥ ० ॥ ० ॥ १ ॥

ब्रह्मनद्यां वेदानां विप्राणां तपसां परमेश्वरस्य वा सम्बन्धिन्यां नद्याम् । "वेदस्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापति" रित्यमरः ॥ २

मनः मनसा प्रणिदध्याविति "समाधिनानुस्मर तद्विचेष्टितामिति नारदोपदेशात् ॥ ३ ॥

प्रणिहिते निश्चले । अत्र हेतुः भक्तियोगेनामले । पुरुषं पुरुषाकारम् । पूर्णं श्रीकृष्णमित्यर्थः कृष्णे परमपुरुषे इत्यग्रिमोक्तेः । पूर्व्वमितिपाठे "पूर्व्वमेवाहमिहासमिति तत्पुरुषस्य पुरुषत्वमि" ति प्रौढनिर्व्वचन विशेष पुरस्कारेण च स एवोच्यते । पूर्णमिति पदेन तस्य स्वरूपभूतां चिच्छक्तिम् अंशकलावतारान् पूर्त्तिलिंगेन ब्रह्म च अपश्यदिति गम्यते । पूर्णचन्द्रमपश्यदित्युक्ते चन्द्रस्य कान्तेरंशकलानाञ्च पूर्त्तेश्च दर्शनं स्वत एव भवेदित्यर्थः । किन्तु तस्य वहिरंगायाः शक्तेर्मायायास्तद्विपरीतधर्म्मवत्यास्तद्दर्शने दर्शनं न भवतीति तां पृथगुल्लिखति मायां चेति । तस्य अप अपरः पश्चिमभाग एव आश्रयो यस्यास्तां "विलज्जमानया यस्य स्थातु- मीक्षापथेऽमुये "त्यनेन तस्या भगवत्पृष्ठदेशाश्रयत्वेनोक्तेः ॥ ४ ॥

सिद्धांतप्रदीपः ।

ततः किंवृत्तमिति पृच्छतिशौनकःनिर्गतेइति ॥ १ ॥

ब्रह्मनद्याम् ब्राह्मणसेवितायाम् सर्वकर्मवर्द्धतेऽस्मिन्सतथा ॥ १ ॥

वदरीणांषंडेनसमूहेनमंडितेमनःप्राणिदध्यौस्थिरीकृतवान् ॥ ३ ॥

हरिभक्तियोगेनामलेऽतएवसम्यक् समाहितेमनसि पूर्णपुरुषंपरमात्मानमपश्यत् परमात्मनोलक्षणमुक्तंपूर्वाचार्येण "स्वभावतोपास्त समस्तदोषमशेषकल्याणगुणैकराशिम् व्यूहांगिनंब्रह्मपरंवरेण्यंध्यायेमकृष्णंकमलेक्षणंहरिम" ति तदुपाश्रयांतच्छक्तिभूतांमायांचापश्यत् साचाप्युक्तापूर्वाचार्येण मायाप्रधानादिपदप्रवाच्यंशुक्लादिभेदैश्चसमर्पितंचेति ॥ ४ ॥

भाषाटीका

( शौनक उवाच ) हे सूत ! नारद के गमन के अनंतर, उनका अभिप्राय सुनकर, विभुभगवान् वादरायण ने क्या किया ॥ १ ॥

( सूत उवाच ) ब्रह्म नदी सरस्वती के पश्चिम तट पर ऋषियों के सत्र कर्म का वर्द्धन करने वाला शम्याप्रास नाम आश्रम है ॥२॥

बदरी वृक्षों के समूह से मंडित उस अपने आश्रम में बैठे व्यास जी ने उपस्पर्श ( जला चमन ) कर स्वयं मन को प्रणिधान किया ॥ ३ ॥

भक्ति योग के द्वारा सम्यक् स्थिरी कृत अमल मन में पूर्ण पुरुष श्री भगवान को देखा, और तब तदाश्रय ( तदधीना वहिरंगा ) माया शक्ति को देखा ॥ ४ ॥

यया सम्मोहितो जीव आत्मानं त्रिगुणात्मकम् ।
परोऽपि मनुतेऽनर्थं तत्कृतञ्चाभिपद्यते ॥ ५ ॥
अनर्थोपशमं साक्षाद्भक्तियोगमधोक्षजे ।
लोकस्याजानतो विद्वांश्चक्रे सात्वतसंहिताम् ॥ ६ ॥
यस्यां वै श्रूयमाणायां कृष्णे परमपूरुषे ।
भक्तिरुत्पद्यते पुंसः शोकमोहभयापहा ॥ ७ ॥
स संहितां भागवतीं कृत्वाऽनुक्रम्य चात्मजम् ।
शुकमध्यापयामास निवृत्तिनिरतं मुनिः ॥ ८ ॥

श्रीधरस्वामी

ईशमायाकृताश्च जीवानां संसृतिमपश्यदित्याह । यया मायया सम्मोहितः स्वरूपावरणेन विक्षिप्तः परोऽपि गुणत्रयाद्व्यतिरिक्तोऽपि तत्कृतं त्रिगुणत्वाभिमानकृतम् अनर्थञ्च कर्त्तृत्वादिकं प्राप्नोति ॥ ५ ॥

अनर्थमुपशमयति योऽधोक्षजे साक्षाद्भक्तियोगः तञ्चापश्यत् । एतत् सर्व्वं स्वयं दृष्ट्वा एवमजानतोलोकस्यार्थेसात्वतसंहितांश्रीभागवताख्यां चक्रे तदनेनश्लोकत्रयेणभागवतार्थः संक्षेपतोदर्शितः एतदुक्तंभवतिविद्याशक्त्यामायानियंता नित्याविर्भूतपरमानंदस्वरूपःसर्वज्ञः सर्वशक्तिरीश्वरःतन्माययासंमोहितस्तिरोभूतस्वरूपस्तद्विपरीतधर्माजीवः तस्यचेश्वरभक्त्यालब्धज्ञानेनमोक्षइतितदुक्तंविष्णुस्वामिना“ह्लादिन्यासंविदाश्लिष्टः सच्चिदानंदईश्वरः स्वाविद्यासंवृतोजीवः संक्लेशनिकराकरः तथा “सईशोयद्वशेमायासजीवोयस्तयार्दितः स्वाविर्भूतपरानंदः स्वाविर्भूतसुदुःखभूः स्वादृगुत्थविपर्यासभवभेदजभीशुचः यन्माययाजुषन्नास्तेतमिमंनृहरिंनुम” इत्यादि ॥ ६ ॥

संहितायाअनर्थोपशामकत्वंदर्शयति । यस्यांवैश्रूयमाणायामेव किंपुनःश्रुतायामित्यर्थः ॥ ७ ॥

अनुक्रम्य शोधयित्वा ॥ ८ ॥

---

दीपिनी ।

तञ्च अपश्यदिति भक्तियोगेनेत्यादिपूर्व्वश्लोकोक्तक्रियायामन्वयः । ह्लादिन्येति । ह्लादिनी परमानन्दमयी शक्तिः तया संविदा ज्ञानेन । स्वाविद्या स्वाज्ञानम् । श्लोकान्तरञ्च । “अनात्मन्यात्मबुद्धिर्या अस्वे स्वमिति या मतिः साविद्या तत्कृतो बन्धस्तन्नाशो मोक्ष उच्यते” इति । श्रुतिश्च कार्य्योपाधिरयं जीवः कारणोपाधिरीश्वर इति ॥ ६—९ ॥

---

श्रीवीरराघवः ।

मायांविशिनष्टियययेति । परोऽपिमायाख्यप्रकृतेर्विलक्षणोऽपिजीवोययामाययामोहितः त्रिगुणात्मकंगुणत्रयपरिणामात्मकंशरीरमेवात्मानंमनुतेमन्यतेतत्कृतंदेहात्मभ्रमकृतमनर्थंचतापत्रयस्वरूपंप्रतिपद्यते ॥ ५ ॥

किंच अनर्थोपशमंतापत्रयरूपानर्थोपशमनात्मकमुपायमजानतोलोकस्याधोक्षजेभक्तियोगमेवानर्थोपशमंविद्वान्सर्वज्ञानवान्व्यासोऽपश्यदित्यनुषंगः भगवद्भक्तियोगमेवानर्थोपशनोपायत्वेनानिश्चितवानित्यर्थः ततः सात्वतसंहितांश्रीभागवतरूपांसंहितांसंहितासंदर्भविशेषः सात्वतशब्दस्तुपुरस्तादेवनिरुक्तः ॥ ६ ॥

तामेवविशिनष्टि यस्यामिति।यस्यांसात्वतसंहितायांश्रूयमाणायांशोकाद्यपहर्तरिपरमपुरुषेकृष्णेभक्तिरुत्पद्यतेततोमोहोनाम“अनात्मन्यात्मबुद्धिर्याअस्वेस्वमितियामतिरित्युक्तविधः शोकोवाह्यक्लेशः दुःखमान्तरः भयमागामिदुःखदर्शनजंप्रतिकूलंज्ञानंपूरुषइतिदीर्घश्छांदसः ॥ ७

सव्यासोऽनुक्रम्यविवक्षितार्थानूक्रमविशेषेणविन्यस्यतदनुक्रमेणैवेमांसंहितां कृत्वासुतंशुकमध्यापयामासप्रश्नावसरदानायशुकंविशिनष्टिनि वृत्तिनिरतंसांसारिकधर्मवैमुख्यद्वाराकेवलचित्तैकाग्र्यावहः शमदमादिभिर्निवृत्तिः तत्रानिरतंमुनिपरब्रह्मयाथात्म्यमननशीलम् ॥ ८ ॥

---

श्रीविजयध्वजः ।

अनिर्वाच्याविद्यामायानामअतः कथंबंधकशक्तिरियमित्याशंक्यअनिर्वाच्यायाः अर्थक्रियायोगादस्यास्तद्दर्शनादत्रबंधकशक्तिरेवोच्यत इत्यभिप्रेत्याह ययेति परोऽपित्रिगुणात्मकप्रकृतेरन्योपि ययासंमोहितोजीव आत्मानंत्रिगुणात्मकंत्रिगुणोपादानकदेहरूपं मनुते तत्कृतं मायाकृतंतादृशमानकृतंवा जननमरणाद्यनर्थमहंकर्तेत्यनर्थंचाभिपद्यतइत्यन्वयः तस्मादेवंविधमायाबंधनिवर्तकमपरोक्षज्ञानद्वाराभक्तियोगमद्राक्षीदितिभावः ॥ ५ ॥

ततःकिमकरोदितितत्राह अनर्थेति तन्निवृत्तिसाधनमाहेतित्राअनर्थेति साक्षादाहेतीष्टानिष्टप्राप्तिपरिहारोपायमजानतोलोकोकस्यसात्विकप्रकृतेर्बंधकशक्तिनिमित्तमनर्थमुपशमयतिनाशयन्तिइत्यनर्थोपशममधोक्षजेभक्तियोगंविद्वान् महत्त्वज्ञानपूर्वकप्रेमलक्षणभक्तियोगप्रदर्शनायसात्वतसंहितांचक्रइत्येकान्वयः ॥ ६ ॥

अनयाकथंभक्तिरुत्पद्यतइतितत्राह यस्यामिति ॥ ७ ॥

अनुक्रम्यसंशोध्यनत्ववद्यबुद्ध्या निवृत्तिनिरतमित्यस्यफलाभिसंधिरहितमित्यर्थः ॥ ८ ॥

---

क्रमसन्दर्भः ।

अथ अभिधेयस्य प्रयोजनस्य च स्थापकं जीवस्य स्वरूपतएव परमेश्वराद्वैलक्षण्यमपश्येयदित्याह ययेति । यया मायया संमोहितो जीवः स्वयं चिद्रूपत्वेन त्रिगुणात्मकाज्जडात् परोऽपि आत्मानं त्रिगुणात्मकं जडं देहादिसंघातं मनुते । तन्मनन कृतमनर्थं संसारव्यसनञ्चाभिपद्यते । तदेवं जीवस्य चिद्रूपत्वेऽपि यया संमोहित इति मनुत इति स्वरूपभूतज्ञानशालित्वं व्यनक्ति । प्रकाशैकरूपस्य तेजसः स्वपरप्रकाशनशक्तिवत् । "अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तव" इतिश्रीगीतादिभ्यः । तदेवमुपाधेरेव जीवत्वं तन्नाशस्यैव च मोक्षत्वमिति मतान्तरं परिहृतवान् । अत्र यया संमोहित इत्येनन तस्याएव तत्र कर्त्तृत्वं । भगवतस्तु तत्रोदासीनत्वं मतं । वक्ष्यते च "विलज्जमानया यस्य स्थातुमीक्षापथेऽमुया । विमोहिता विकत्थंते ममाह मिति दुर्धियः" इति । अत्र विलज्जमानयेत्यनेनेदमायाति । तस्या जीवसंमोहनं कर्म श्रीभगवते न रोचते इति यद्यपि सा स्वयं जानाति तथापि "भयं द्वितीयाभिनिवेशतः स्यादीशादपेतस्य विपर्ययोऽस्मृति"रित्यादिदिशाजीवाना मनादिभगवदज्ञानमयवै मुख्यमसहमानास्वरूपास्फुरणमस्वरूपावेशंचकरोति । श्रीभगवांश्चानादित एव भक्तायां प्रपञ्चाधिकारिण्यां तस्यांदाक्षिण्यंलंघितुंनशक्नोतितथातद्भयेनापिजीवानांस्वसांमुख्यंवांछन्नुपदिशति "दैवी ह्येषागुणमयीमम मायादुरत्यया । मामेवयेप्रपद्यन्तेमायामेतांतरंतिते" इति । "सतांप्रसंगान्ममवीर्यसंविदोभवन्तिहृत् कर्णरसायनाः कथाः । तज्जोषणादाश्वपवर्गवर्त्मनिश्रद्धारतिर्भक्तिरनुक्रमिष्यती"ति च । लीलयाश्रीमद्व्यासरूपेणतु विशिष्टतयातदुपदिष्टवानित्यनन्तर मेवायास्यति । अनर्थोपशमंसाक्षाद्भक्तियोगइति तस्माद्द्वयोरपितत्तत् । समंजसंज्ञेयं । ननुमायाखलुशक्तिः । शक्तिश्चकार्यक्षमत्वंतच्चधर्मविशेषः तस्यकथंलज्जादिकंउच्यते एवंसत्यपिभगवतितासांशक्तीनामधिष्ठातृदेव्यः श्रूयन्ते । यथाकेनोपनिषदिमहेन्द्रमाययोः संवादः । तदास्तांप्रस्तुतंप्रस्तूयते । तत्रजीवस्यतादृशचिद्रूपत्वेपि परमेश्वरतोवैलक्षण्यं । तदपाश्रयामिति । ययासंमोहितइति च दर्शयतियद्येवयदेकंचिद्रूपब्रह्ममायाश्रयतावलितं विद्यामयंतर्ह्येवतन्मायाविषयतापन्नमविद्यापरिभूतं चेत्ययुक्तमितिजीवेश्वरविभागोऽवगतः । ततश्चस्वरूपसामर्थ्यवैलक्षण्येनतद्द्वितयंमिथोविलक्षणस्वरूपमेवेत्यागतंनचोपाधितार तम्यमयपरिच्छेदप्रतिविम्बत्वादिव्यवस्थयातयोर्विभागःस्यात्तत्रयद्युपाधेरनाविद्यकत्वेनवास्तवत्वंतर्ह्यविषयस्य तस्यपरिच्छेदविषयत्वासम्भवः निर्द्धर्मकस्यव्यापकस्यनिरवयवस्यच प्रतिविम्बत्वायोगोऽपिउपाधिसम्बन्धाभावात् विम्बप्रतिविम्बभेदाभात् दृश्यत्वाभावाच्च उपाधिपरिच्छिन्नाकाशस्थज्योतिरंशस्यैवप्रतिविम्बोदृश्यतेनत्वाकाशस्यदृश्यत्वाभावादेवतथावास्तवपरिच्छेदादौसतिसामानाधिकरण्यज्ञानमात्रेणनतस्यागश्चभवेत्तत्पदार्थप्रभावस्तत्रकारणमितिचेदस्माकमेवमतंसन्मतंउपाधेरविद्यकत्वेतुतत्र तत्परिच्छिन्नत्वादेरप्यघटमानत्वादाविद्यकत्वमेवेतिघटाकाशादिषुवास्तवोपाधिमयतद्दर्शनयानतेषामवास्तवस्वप्नदृष्टांतोपजीविनांसिद्धान्तःसिध्यतिघटमानाघटमानयोःसंगतेःकर्तुमशक्यत्वात्ततश्चतेषांतत्तत्सर्वमविद्याविलासएवेति स्वरूपमप्राप्तेनतेनतेनतत्तद्व्यवस्थापयितुमशक्यमिति ब्रह्माविद्ययोः पर्य्यवसानेसतियदेवब्रह्मचिन्मात्रत्वेनाविद्यायोगस्यात्यंताभावास्पदत्वाच्छुद्धं तदेवतद्योगादशुद्ध्याजीवः पुनस्तदेवजीवा विद्याकल्पितमायाश्रयत्वादीश्वरस्तदेवच तन्मायाविषयत्वाज्जीव इतिविरोधस्तदवस्थ एवस्यात् तत्रचशुद्धायांचित्यविद्यातदविद्याकल्पितोपाधौतस्यामीश्वराख्यायांविद्येतितथा विद्यावत्त्वेऽपिमायिकत्वामित्यसमञ्जसाच कल्पना स्यादित्याद्यनुसन्धेयम् किञ्चयद्यत्राभेदवादएवतात्पर्यमभविष्यत्तर्ह्येकमेवब्रह्मअज्ञानेनभिन्नंज्ञानेनतुतस्यभेद मयदुःखंविलीयतइत्यपश्यादित्येवावक्ष्यत्तथाश्रीभगवल्लीलादीनांवास्तवत्वाभावे सतिश्रीशुकहृदयविरोधश्चजायतेतस्मात् परिच्छेदप्रतिविम्बत्वादिप्रतिपादकशास्त्राण्यपि कथञ्चित्तत्तत्सादृश्येनगौण्यैववृत्त्याप्रवर्त्तेरन् "अम्बुवदग्रहणात्ननतथात्वंवृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवामितिपूर्व्वोत्तरपक्षमयन्यायाभ्यांततएवाभेदशास्त्राण्युभयोश्चिद्रूपत्वेन जीवसमूहस्यदुर्घटघटना पटीयस्याः स्वाभाविकतदचिन्त्यशक्त्याः स्वभावत एव तद्रश्मिपरमाणुगणस्थानीयत्वात् तद्व्यतिरेकेऽव्यतिरेकेणचविरोधंपरिहृत्यैवाग्रेमुहुरपि तदेतद्व्याससमाधिलब्धसिद्धान्तयोजनायथोज-

## क्रमसन्दर्भः।

तीयानि। तदेवंमायाश्रितत्वमायामोहितत्वाभ्यांस्थिते तयोर्भेदेतद्भजनस्यैवाभिधयत्वमायातं । अतः श्रीभगवतएवसर्वहितोपदेष्टृत्वात् सर्वदुःखहरत्वात्रश्मीनांसूर्यवत्सर्वेषां परमस्वरूपत्वात्सर्वाधिकगुणशालित्वात् परमप्रेमयोग्यत्वमितिप्रयोजनञ्चस्थापितम् ॥ ५ ॥

तत्राभिधेयञ्च तादृशत्वेन दृष्टवानपि। यतस्तत् प्रवृत्त्यर्थं श्रीभागवताख्यामिमां सात्वतसंहितां प्रवर्त्तितवानित्याह अनर्थेति। भक्ति योगोऽत्र श्रवणकीर्त्तनादिलक्षणः साधनभक्तिः नतु प्रेमलक्षणः। अनुष्ठानं ह्यु पदेशापेक्षं प्रेम तु तत्प्रसादापेक्षमिति। तथापि तस्य तत्प्रसादहेतोस्तत्प्रेमफलगर्भत्वात् साक्षादेवानर्थोपशमनत्वं न त्वन्यसापेक्षत्वेन। "यत् कर्म्मभिर्यत्तपसेत्यादेः। ज्ञानादेस्तु भक्तिसापेक्षत्वमेव "श्रेयः सृतिं भक्तिमुदस्येत्यादेः। अथवा अनर्थस्य संसारव्यसनस्य तावत् साक्षात् अव्यवधानेनोपशमनम्। सम्मोहादिद्वयस्य तु प्रेमाख्यस्वीयफलद्वारेत्यर्थः। अन्यत् तैः। तत्र स्वादृगुत्थेति। स्वादृक् स्वाज्ञानं तेनोत्थितो यो विपर्य्यासः स्वरूपान्यथाज्ञानं तद्भवो यो भेदः भिन्ने देहादावहं ममतारूपः तस्मात् जाता या भीःशुचश्च ता जुषमाण आस्ते इत्यर्थः ॥ ६ ॥

अथ प्रयोजनञ्च स्पष्टयितुं पूर्वोक्तस्य पूर्णपुरुषस्य च श्रीकृष्णरूपत्वं व्यञ्जयितुं ग्रन्थफलनिर्देशद्वारा तत्र तदनुभवान्तरं प्रतिपादयन्नाह यस्यामिति। भक्तिः प्रेमा श्रवणरूपया साधनभक्त्या साध्यत्वात्। उत्पद्यते आविर्भवति। तस्यानुषङ्गिकं गुणमाह शोकेति। अत्रैषां संस्कारोऽपि नश्यतीति भावः। "प्रीतिर्न यावन्मयि वासुदेवे न मुच्यते देहयोगेन तावदि"ति श्री ऋषभदेववाक्यात् परमपुरुषे पूर्व्वोक्ते पूर्णपुरुषे। किमाकारे इत्यपेक्षायामाह कृष्णे। "कृष्णस्तु भगवान् स्वयमि"त्यादिशास्त्रसहस्रभावितान्तःकरणानां परम्परया तत्प्रसिद्धमध्यपातिनांचासंख्यलोकानां तन्नामश्रवणमात्रेण यः प्रथमप्रतीति विषयः स्यात् तथा तन्नाम्नः प्रथमाक्षरमात्रं मन्वाय कल्पमानं यस्याभिमुख्याय स्यात्तदाकार इत्यर्थः। आहुश्च नाम कौमुदीकाराः। कृष्णशब्दस्य तमालश्यामलत्विषि श्री यशोदास्तनन्धये परब्रह्मणि रूढिरिति ॥ ७ ॥

अथ तस्यैव प्रयोजनस्य ब्रह्मानन्दानुभवादपि परमत्वमनुभूतवान्। यतस्तादृशं शुकमपि तदानन्दवैशिष्ट्य लम्भनाय तामध्यापयामासेत्याह संहितामिति। कृत्वानुक्रम्य चेति विवृतमस्ति। ब्रह्मानन्दानुभवनिमग्नत्वान्निवृत्तिनिरतं। सर्व्वतोनिवृत्तौ निरतं तत्राव्यभिचारिणमपीत्यर्थः ॥ ८ ॥ ९ ॥

---

## सुबोधिनी।

तस्याः कार्यंचापश्यत् ययासंमोहितइति। यद्यपिप्रपंचोऽपितस्याःकार्यंतथापितत्रकारणत्वेनतस्याअन्वयःसंमोहनेतुकर्तृत्वेनस्वातंत्र्यात् एतदेवाहययेतिवस्तुतोजीवोपिब्रह्मैवेतिपरोपि प्रकृतेर्नियामकोपित्रिगुणात्मकं गुणत्रयभावापन्नं जडरूपंमन्यतेतत्कृतं च अनर्थं जन्ममरणादिप्राप्नोति ॥ ५ ॥

तत्रनिस्तारोपायंचापश्यदित्याह अनर्थोपशममिति ज्ञानकाषयामाययामोहइतिनज्ञानेविश्वासः कर्तुंशक्यः ननुसाधनैरुत्पन्नज्ञानंअक्स्मादुत्पन्नामायेति संदेहोनभविष्यतीतिचेत्साधनानामपिछिद्ररूपत्वात् कात्स्न्र्येनानभिव्यक्तत्वादिभिः तन्निर्णयेपिनसाक्षात्तस्यानर्थनिवर्त्तकत्वं यथादर्पणेमुखंनास्तीतिप्रतीतिदार्ढ्येऽपि दर्पणरूपदोषस्याविद्यमानत्वात् कदापिनमुखाभावप्रतीतिः दर्पणाभावश्चनज्ञानसाध्यः तथा मूलभूतायाविद्यमानत्वान्नकदाप्यनर्थनिवृत्तिःशास्त्रप्रामाण्येनसमाधिनाज्ञानेऽपिजातेपुनर्माययामोहः"ज्ञानिनामपिचेतांसी"तिवाक्यात्शास्त्रंतु भक्तिद्वारासाधकं वदतिसाक्षाद्भक्त्यानाअनर्थनिवृत्तौज्ञानमिति"मामेवये प्रपद्यंतेमायामेतांतरंति ते"एवकारेणसर्वेषामनुपायत्वमाहाहिअतः साक्षादनर्थनिवृत्तिहेतुर्भक्तिरेव दृष्टेसालौकिकीकर्मवेति तद्व्यावृत्त्यर्थमधोक्षजइति इंद्रियातीतेभक्तिःशास्त्रीयइवअनेनवस्तुतएवमेवपदार्थाः नान्यथेतिबोधितं अन्यथापदार्थनिरूपणंतुऋषीणांबुद्धिदोषात्योगेपि राजसादिभिस्तद्भावापन्न इतिनवस्तुयाथात्म्यंबोधयति अन्यथा विवादोनस्यात् तस्माद्भगवद्वाक्येनवेदेन वासंवादीयोगजधर्मः पदार्थयाथात्म्यंबोधयतिनान्यस्तस्मान्नारदवाक्येनफलसंवादिनाभगवद्वाक्येनसंवादिना भगवद्वाक्येनसंवादियोगप्रमाणमिति ज्ञात्वाअजानतोलोकस्यार्थेयुक्तिसहितं ज्ञात्वासात्वतसंहितांभगवत्प्रोक्तपदार्थप्रतिपादिकांवेदव्यायसंहितांचक्रे ॥ ६ ॥

ननुकिमनयासंहितयापदार्थज्ञानैर्वाकिं साधनकथनेपिप्राणिनां तथाधिकारा भावात्व्यर्था संहितेत्याशंक्यतस्याः फलमाहयस्यांवैश्रूयमाणायामिति।भक्त्युत्पत्तिपर्यंतामियंश्रोतव्याइयंचदृष्टद्वाराभक्तिजनिकादृष्टेसंभवतिअदृष्टकल्पनायाअन्याय्यत्वात्यथाचास्यादृष्टोपयोगःतदुपपादितं प्रथमश्लोकेकृष्णेआविर्भूतेभगवतिपरमपूरुषे सर्वप्रमाणसमन्वयेकालादिनियंतरिवाभक्तिरुत्पद्यतेस्वतंत्रस्यशोकमोहभयानिरजस्तमःतत्त्वकार्याणितान्यपहंतीतितथा अनर्थनिवृत्तिदूरंगुणकार्यमात्रं एवनिवर्त्ततइत्यर्थः ॥ ७ ॥

एवंभागवतस्योत्पत्तिमुक्त्वाप्रचारमाहससंहितामिति संहितांभागवतीमित्यनुवादः बहुसंहिताकरणादन्यव्यावृत्त्यर्थः अनुक्रमेणशोधयित्वा आनुपूर्व्येणवाइदमन्येननप्रसृतंभविष्यतीति स्वसदृशंपुत्रमध्यापयामासइदं दोषवतानप्रसृतंभविष्यतीति मननाद्वगत्यमुक्तं शुकमध्यापयामासमुक्तोपिलीलयालोकानुवर्त्ताईश्वरवत् तेनापिनास्यप्रचारोभविष्यतीतितदर्थमाह निवृत्तिनिरतमिति ॥ ८ ॥

---

श्रीविश्वनाथचक्रवर्त्ती ।

ननु भगवद्रूपगुणलीलामाधुर्य्यवर्णनार्थं भगवद्दर्शनमपेक्षणीयमेवव्यासस्य माया दर्शनं किमर्थं तत्राह यया सम्मोहित इति । अयमर्थः यदर्थं श्रीभागवतमारिप्सितं सजीवो मायारोगग्रस्तः कथंस्वयं स्वादयतु तन्माधुर्य्यम् अतस्तस्य रोगदर्शनं विनाविचिकित्सानभवति- तथा च विना रोगिणस्तस्य कथ मौषधि पथ्ययोर्व्यवस्थेतिमायाजीवावपि द्रष्टुमवश्यमेवापेक्षणीयावितियया सम्मोहितःस्वरूपाव रणविक्षेपाभ्यां भ्रमितः परोऽपितस्यामायायागुणत्रयातिरिक्तोऽपितत्कृतंगुणकृतमनर्थंतदभि मानेन प्राप्नोति ॥ ५ ॥

तस्य यदौषधं तदपि दृष्टमित्याह अनर्थं मुपशमयति यस्तं भक्ति योग मपश्यत् । अत्र दर्शनेऽयं क्रमोज्ञेयः । प्रथमं भगवन्त मपश्यत् । पूर्णोति पद प्रयोगा दंशादविना कथं पूर्णं त्वामिति तदंशान् पुरुषावतार गुणावतारादीन् अपश्यत् । पूर्त्ति मपृ पूर्णत्व- मिति पूर्त्ते रूपं ब्रह्मं अपश्यत् । तत्प्रकाति भूतां विमलोत् कर्षिण्याधनेक प्रभेदवर्तीं चिच्छक्तिम पश्यत् । पृष्ठेव हिरंगां माया शक्ति मपश्यत् । तया मोहितां जीवशक्तिं तदन्तरमपश्यत् तस्यास्तन्मोह निवर्तिकां सर्वतोऽपि महतीं चिच्छक्तिमुख्यां भक्ति रूपां शक्ति मनुग्रह शक्ति विलास भूतां भगवतोऽपि वशयित्रीं भगवत्वेषापश्यत् । तदेतत् सर्वं स्वयं दृष्ट्वा अजानतो लोकस्यार्थे सात्वत संहिताम् । एतत् सर्वं तत्व प्रकाशिकां श्रीभागवताख्यां चक्रे । ईशः स्वतंत्रश्चित् सिन्धुः सर्व व्याप्येक एवहि जीवाऽधीनश्चित् कणोऽपि स्वोपाधि व्यापि शक्तिकः । अनेकोऽविद्ययोपात्तस्त्यक्ता विद्योऽपि कर्हिचित् । मामात्वचित् प्रधानञ्चा विद्याविद्येति सात्रिधा । ईश्वर जीवमाया जगतां स्व रूप शक्तेर्भक्तेश्च लक्षण प्रमादिकं वेदस्तुति व्याख्यायां व्यक्ती भविष्यति ॥ ६ ॥

संहितायाः प्रेमसाधनत्वमाह । यस्यां श्रूयमाणायामेव किं पुनः श्रुतायां किन्तरां कीर्त्यमानायां किन्तमां कीर्त्तितायां । भक्तिः प्रेमा ईश्वरः सद्यो हृयवरुद्ध्यतेऽत्र कृतिभिरित्युक्ते रीश्वरावरोधस्य फलस्य प्रेम्णः एव लिङ्गत्वात् भक्तानामनुसंहितं फलं संसारनिवृत्तिः साच भक्तानामेव भवतीत्याह शोकेत्यादि ॥ ७ ॥

अथ तस्यैव प्रयोजनस्य प्रेम्णो ब्रह्मानन्दानुभवादपि परमत्वमनुभूतवानेव यत स्तादृशं शुकमपि प्रेमानन्दस्य वैशिष्ट्योपलम्भनाय तामध्यापयामास लोकेहि स्वादितापूर्व्वमिष्टवस्तुकः पित्रादिः स्वस्य मेव पुत्रादिकं तत्तदास्वादयितुं प्रयतते इत्याह स संहितामिति कृत्वानुक्रम्यचेति प्रथमतः स्वयं संक्षिप्तभक्तिकं कृत्वा पश्चान्नारदोपदेशादनुक्रमेण श्रीभगवद्भक्त्येकप्रधानतया अनुक्रम्य संशोध्येत्यर्थः सच नारदोपदेशः श्रीकृष्णान्तर्द्धानानन्तरं परीक्षित् कर्तृक कलिनिग्रहात् पूर्वं श्रेयस्तदेव कलिना स्वाधिकारारम्भे स्वप्रावल्य प्रकटनात् धार्मिकाणामपिशास्त्रदर्शिनामप्यधर्मेप्रवृतेःयतएवव्यासस्यचित्ताप्रसादः । यदुक्तं । जुगुप्सितं धर्मकृतेऽनुशासतइत्यत्रनभन्यते तस्यनिवारणं जनइति । कलियुगात् पूर्वमेव चित्ताप्रसादे नमंस्यत इतिप्रयुज्येत अतस्त दैव पूर्वं निर्मितस्यैव श्रीभागवतस्यानुक्रमणं । यदुक्तं । कृष्णेस्वधामो पगते इत्यत्र पुराणार्कोऽधुनोदितइति । अतएवेदंश्रीमद्भागवतं भागवतानन्तरं यदत्र श्रूयते यच्चान्यत्र अष्टादश पुराणान- न्तरं भागवत मितितद्वयमपि संगतं स्यात् । निवृत्तिनिरतं ब्रह्मानु भविन मपि ॥ ८ ॥

---

सिद्धांतप्रदीपः

जीवःपरमात्मनोंऽशभूतःपरोऽपिदेहादिविलक्षणोपिययामोहित आत्मानंत्रिगुणात्मकंदेहंमनुतेमन्यते जीवलक्षणमुक्तंपूर्वाचार्येण । "ज्ञानस्वरूपंचहरेरधीनंशरीरसंयोगवियोगयोग्यम् अणुंहिजीवंप्रतिदेहभिन्नंज्ञातृत्ववंतंयदनंतमाहुः अनादिमायापरियुक्तरूपंत्वेनंविदुर्वैभगवत्प्रसादादिति विस्तरस्तुसूत्रभाष्येवेदांतकौस्तुभेद्रष्टव्यः तत्कृथंदेहात्माभिमानकृतमनर्थमभिपद्यतेप्राप्नोति ॥ ५ ॥

अनर्थम् । जन्ममरणादिसंतापमुपशमयतीत्यनर्थोपशमंभक्तियोगं चापश्यत् "मद्भक्तएतद्विज्ञायमद्भावायोपपद्यते" । इतिश्रीभगवदुक्तं । तद्भावापत्तिरूपंफलमप्यपशत्साधनस्यसाध्यलक्षकत्वात् । तथाचोपास्यपुरुषं तदुपासकंजीवंमायांतद्भ्रामौविरोधिनीं भक्तिरसंफलंचेत्यर्थपंचकमपश्यत् । अन्येपिसाधनादौविरोधिनोमायोपलक्षिताज्ञेयातेचाग्रेस्फुटीभविष्यंति । इत्येवमर्थपंचकमजानतोलोकस्यार्थे । सद्भगवानुपास्यतयास्ति येषांतेसत्वंतः सत्वंतएवसात्वताः राक्षसवायसादिवत्स्वार्थेअण्तेषांसंहिताभागवतरूपातामर्थपंचकबोधिनींसात्वतसंहितां चक्रेवक्ष्यति च । "श्रीमद्भागवतंपुराणतिलकंयद्वैष्णवानांधनमि" ति ॥ ६-७-८ ॥

---

भाषाटीका

जिस माया से मोहित होकर जीव (माया से पर भी है परंतु) अपने को त्रिगुणात्मक मानलेता है, और मायाकृत अनर्थ (संसार) को प्राप्त होता है ॥ ५ ॥

अधोक्षज भगवान में जो भक्तियोग किया जाता है वही उस अनर्थ का ( संसार ) का उपशम है यह सब तत्वसमाधि में दर्शन कर विद्वान व्यास जीने अज्ञ लोगों के हित के अर्थ सात्वत संहिता वर्णन की ॥ ६ ॥

जिस सात्वतसंहिता के सुनने से परम पुरुष श्रीकृष्ण में जीवों की भक्ति होती है । जिस भक्ति से शोक मोह जरा सबका विनाश होता है ॥ ७ ॥

व्यास जीने वह भगवती संहिता वर्णन की और शुद्ध कर निवृत्ति मार्ग में निरत मुनि, अपने आत्मज शुकदेव को पढ़ायदिया ॥८॥

---

शौनक उवाच स वै निवृत्तिनिरतः सर्व्वत्रोपेक्षको मुनिः ।
कस्य वा वृहतीमेतामात्मारामः समभ्यसत् ॥ ९ ॥

सूत उवाच आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे ।
कुर्व्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरिः ॥ १० ॥
हरेर्गुणाक्षिप्तमतिर्भगवान् वादरायणिः ।
अध्यगान्महदाख्यानं नित्यं विष्णुजनप्रियः ॥ ११ ॥
परीक्षितोऽथ राजर्षेर्जन्म कर्म्म विलापनम् ।
संस्थाञ्च पाण्डुपुत्राणां वक्ष्ये कृष्णकथोदयम् ॥ १२ ॥

## श्रीधरस्वामी ।

कस्य वा हेतोः वृहतीं वितताम् ॥ ९ ॥

निर्ग्रन्थाः ग्रन्थेभ्यो निर्गताः । तदुक्तं गीतासु । "यदा ते मोहकालिलं बुद्धिर्व्यतितरिष्यति । तदा गन्तासि निर्व्वेदं श्रोतव्यस्य श्रुतस्य चे" ति । यद्वा ग्रन्थिरेव ग्रन्थः निवृत्तः क्रोधाऽहंकाररूपो ग्रन्थि येषां ते निवृत्तहृदयग्रन्थय इत्यर्थः । ननु मुक्तानां किं भक्त्येति सर्वाक्षेपपरिहारार्थमाह इत्थं भूतगुणोहरिरिति ॥ १० ॥

भक्तिं कुर्व्वतु नाम एतच्छास्त्राभ्यासे शुकस्य किं कारणमित्यतआह हरेरिति । अध्यगादधीतवान् । विष्णुजनाः प्रिया यस्येति व्याख्यानादि प्रसंगेन तत् संगति काम इति भावः । एतेन तस्य पुत्रो महायोगीत्यादिना शुकस्य व्याख्याने प्रवृत्तिः कथमिति यत् पृष्टं तस्योत्तरमुक्तम् ॥ ११ ॥

यदन्यत् पृष्टं परीक्षितः प्रायोपवेशेन श्रवणं कथमिति तस्य जन्म महाश्चर्य्यमित्यादिना तस्योत्तरं वक्तुमाह परीक्षित इति विलापनं मुक्तिं मृत्युं वा । संस्थां महाप्रस्थानं श्रीकृष्णकथानामुदयो यथा भवति तथा ॥ १२ ॥

---

## दीपनी ।

ततः अधोक्षजे भक्तियोगं च अपश्यत् । एतत् सर्व्वं दृष्ट्वा एवम् अजानतो लोकस्य हिताय भागवतीं संहितां चक्रे ॥ ६ ॥

---

## श्रीवीरराघवः ।

तत्रलब्धावसरः पृच्छति शौनकः सइतिवाइत्यवधारणे निवृत्तिनिरतः मुनिरतएवसर्वत्रश्रोतव्येष्वध्येतव्येषुचोपेक्षकः आदररहितः आत्मारामः परमात्मैकपरः एवंविधःकस्यवाहेतोरिति । शेषः कस्माद्धेतोर्वृहतींविपुलामेतांसंहितामभ्यसदधीतवान् कथमेकाग्रचितोभगवन्मननपरस्तद्विरोधिनी मेतांवृहतींसंहितामभ्यसदितिप्रश्नाशयः ॥ ९ ॥

नेयंसंहिताभगवन्मननविरोधिनीप्रत्युततदुपयुक्त भगवत्स्वरूपगुणविवरणरूपत्वादतोधीतवानित्युत्तरं वक्तुंतद्भक्तेः स्वरूपगुणविषयकतामाहसूतः आत्मारामाइति यद्यपिमुनयआत्मारामाः परमात्मैकनिष्ठाअतएवनिर्ग्रंथाः लौकिकार्थप्रबंधधारणारहिताः अनिर्ग्राह्याइतिपाठेअशिक्षणीयाअपरप्रेक्षाः निरपेक्षाइत्यर्थः तथापितेउरुक्रमे भगवत्यहैतुकीमनन्यप्रयोजनांभक्तिंकुर्वंतिसविषयायाभक्तेः स्वरूपमाहइत्थमितिइत्थंभूताएवंविधागुणायस्यांतथाविधोहरिरितिएवंविधांभक्तिंकुर्वतीत्यन्वयः हरिरेवंविविधगुणकाचित्स्वरूपकइतिसमनुध्यानात्मकत्वाद्भक्तेस्तत्रभजनीयस्वरूपगुणविषयकज्ञानस्यापेक्षितत्वात्तद्विवरणरूपामिमांसंहितामधीतवानितिभावः ॥ १० ॥

तदेवाहाहरेरितिहरेर्गुणैर्वेदांतेभ्योऽवगतैरनुभूयमानैर्गुणैराक्षिप्ताआकृष्टामतिर्यस्यसभगवान्वादरायणिःशुकःनित्यंविष्णुजनप्रियःमहदिदमाख्यानमध्यगादधीतवान्हरेरितिहरेर्गुणाक्षिप्तमतिर्विष्णुजनप्रियइतिदंविशेषणद्वयंहेतुगर्भंविष्णोर्जनाभक्ताः प्रियायस्येतिबहुव्रीहिः अयंभावःयद्यप्यनुभगवद्गुणावेदान्तेऽभ्योवगतास्तथापि "स्वाध्यायाद्योगमासीतयोगात्स्वाध्यायवान्भवेदि" त्युक्तरीत्याभगवद्गुणप्रतिपादकप्रबंधसंशीलनस्यावश्यापेक्षितत्वात्कात्स्न्येनास्यप्रबंधस्यभगवद्गुणप्रतिपादकत्वात्सावतारतद्गुणकसविभूतिकसभक्तितद्गुणभगवतोऽस्यैवनुभाव्यत्वादवतारतद्गुणानां विशिष्यवेदान्तेभ्योऽवगतानांवेदांतावगतगुणेभ्योप्यतिशयितानमास्मादाख्यानाद्वगमादिदमध्यगादिति अनेनप्रबंधप्राशस्त्यंसूचितम् ॥ ११ ॥

श्रीवीरराघवः ।

तदेवंकस्मिन्युगेप्रवृत्तेयमित्यादिप्रश्नानामुत्तरमुक्त मथतस्यपुत्रोमहायोगीत्यादिप्रश्नस्योत्तरं विवक्षिष्यंस्वाव "दभिमन्युसुतंसूतप्राहुर्भाग वतोत्तमम् तस्यजन्ममहाश्चर्य कर्माणिचगृणीहि न" इत्यादिप्रश्नानामुत्तरंसोपोद्धातंवक्तुंप्रतिजानीते परीक्षितइतिपरीक्षितोराजर्षेर्जन्मकर्माणि विलायनंविलयंचतेषांसमाहारः तदुपोद्घातरूपपांडुपुत्राणांसंस्थानंस्थितिवृत्तांतमितियावत् तदेतत्सर्वंकृष्णस्यभगवतः कथायाउदयअनु प्रसक्तिरस्मिस्तद्वक्ष्येसंस्थांचकृष्णकथोदयामितिचपाठांतरं तदाकृष्णकथोदयामितिसंस्थाविशेषणं संस्थाशब्दस्ययथोक्तएवार्थः तत्र पांडुपुत्राणां संस्थाम् परीक्षिज्जन्मकर्माद्युपोद्घातरूपांपरीक्षिज्जन्मकर्मादिकांत्वितःप्रभृतिप्रधानप्रतिपाद्यंतदुभयानुप्रसक्ताकृष्णकथा सर्वोऽयं स्कंधः कृष्णप्रबंधोपोद्घातरूपइतिविवेकः ॥ १२ ॥

---

श्रीविजयध्वजः ।

अविद्वानिवशौनकश्चोदयति सवाइति आत्मनिरमतइत्यात्मारामोःमुनिः सर्वज्ञोमौनीवा अतएवसर्वत्रशिष्यसंग्रहणादावुपेक्षकउदा-सीनबुद्धिर्निवृत्तिनिरतः शुकः कस्यफलस्यार्थेबृहतींमहतीमेतांसमभ्यसद्वाइत्यन्वयः चतुर्षुपुरुषार्थेषुकस्यपुरुषार्थस्येतिविकल्पार्थोवाश-ब्दः शुकगताविितिधातोः परब्रह्मण्यव्याहतबुद्धिगतित्वाच्छुकः ॥ ९ ॥

परिहरतीत्याह आत्मारामाइति चशब्दोऽप्यर्थे आत्मारामाःस्वरूपसुखपवरममाणाअप्यतएवनिर्ग्रांह्याः निरुपादेयाःमुनयः उत्तमाधि-कारिणः उरुक्रमेउरवःक्रमाःपादविक्षेपाः यस्यसतथातस्मिन् अहैतुकींप्रयोजनविधुरामानंदरूपांभक्तिंकुर्वंति किंपुनर्बहुजन्मस्वपरोक्षितपर-तत्वाः येभक्त्यादिसाधनातिशयेनमुक्तानंदातिशयमाकांक्षमाणाः शुकादयाः उरुक्रमेभक्तिंकुर्वंतीतिकिंवर्णनीयमित्येकान्वयः इत्थंभूतगुणः निरपेक्षमुक्तमनोवशीकरणक्षमः किमुतामुक्तमनोवशीकरणक्षमगुणइतिवाच्यमितिभावः ॥ १०॥

अतःशुकेनभागवताभ्यसनंकृतमित्याह हरेरिति हरेरतिशयज्ञानानंदादिगुणै राक्षिप्ताआकृष्टामतिर्यस्यसतथोक्तः बादरायणसुतो-भगवान् नित्यंभागवतजनहृदयंगमं महदाख्यानं आख्यायतेभगवन्महिमाऽनेनेत्याख्या नं भागवतपुराणमध्यगादन्यांश्चाख्यापयामासचेत्ये कान्वयः ॥ ११ ॥

कस्मिन्युगइत्यादिशौनकप्रश्नंपरिहरतीत्याह परीक्षितइति अथपरीक्षितोराजर्षेर्जन्म कर्म विलापनंमरणं वक्ष्ये तदर्थंप्रथमतःपांडुपुत्रा णांसंस्थांस्वर्गारोहणं युद्धादुपरितनमहाभिषेकादि महाप्रस्थानांतांसंस्थांस्थितिंचवक्ष्ये कीदृशींसंस्थांकृष्णकथायाउदयोयस्यांसा-तथोक्ताताम् ॥ १२ ॥

क्रमसन्दर्भः ।

तमेतंश्रीवेदव्यासस्य समाधिजातानुभवं श्रीशौनकप्रश्नोत्तरत्वेन विशदयन् सर्वात्मारामानुभावेन सहेतुकंसंवादयति आत्मारामाश्चेति निर्ग्रंथाः विधिनिषेधातीताः । निर्गताऽहंकारग्रन्थयो वा । अहैतुकींफलाभिसन्धिरहिताम् । इत्थमितिआत्मारामाणामप्याकर्षणस्वभावोगुणो यस्य स इत्यर्थः ॥ १० ॥

तमेवार्थं श्रीशुकस्याप्यनुभवेनसंवादयति हरेरिति । श्रीव्यासादेवयत्किंञ्चित् श्रुतेनगुणेनपूर्वमाक्षिप्तामतिर्ब्रह्मानन्दानुभवोयस्य सः पश्चादध्यगात् । महत्विस्तीर्णमपि ततश्चतत्सत्कथासौहार्देननित्यं विष्णुजनाः प्रियायस्यतथाभूतोवातेषांप्रियो वा स्वयमेवाभवदित्यर्थः । अयम्भावः ब्रह्मवैवर्त्तानुसारेणपूर्वतावदयं गर्भमारभ्यश्रीकृष्णस्यस्वैरितयामायानि वारकत्वंज्ञातवान् । ततः स्वनियोजनयाश्रीव्यासदेवेना नीतस्यतस्यदर्शनात्तन्निवारणेसति कृतार्थम्मन्यतयास्वयमेकांतमेवगतवान् । तत्रश्रीव्यासदेवस्तुतंवशीकर्त्तु तदन्यसाधनं श्रीभागवतमेव ज्ञात्वातद्गुणातिशयप्रकाशमयांस्तदीयपद्यविशेषान् कथञ्चिच्छ्रावयित्वातेनाक्षिप्तमतिं कृत्वातदेवपूर्णमध्यापयामासेति श्रीभागवतमहिमा तिशयः प्रोक्तः ॥ ११ ॥

कृष्णकथानामुदयो यत्रतद्यथाभवतीतिमुख्यतयातेनपृष्टानांकृष्णकथनारम्भोऽपिसूचितः ॥ १२।१३।१४।१५।१६।१७।१८।१९।२० ॥

---

सुबोधिनी ।

कदाचिदपिप्रवृत्तिस्वभावत्वेतद्दोषेणसंबंधात् नभक्तिजानिकास्यात् विषयावेशविष्णवावेशयोर्विरोधात् एतच्चमननादवगतमितिविचा रेणानाया ततःप्रतिपन्नंतदाह । मुनिरिति ॥ ८ ॥

ननुभागवतस्याविषयपरत्वेसतिनाधिकारइतिनिवृत्तिनिरतोयोजितःसचनभागवतार्थंतथाविधःकिंतु ज्ञानार्थमिति तथासतिज्ञानेप्रवृत्ति मात्रस्यैवबाधकत्वात् यथालौकिकीप्रवृत्तिस्त्याज्यातथाभक्तिमार्गानुसारिणी भागवतप्रवृत्तिरपितथाच व्यासः स्वकार्यानुरोधेनयद्यपि शुकंयोजयतितथापिसकथं स्वकार्यविरोधेप्रवर्ततेतिपृच्छतिसवैनिवृत्तिनिरत इतिभागतस्यपाठः प्रवृत्तिरूपः येनोपनयनवेदाध्ययनंनित्य मपि परित्यक्तंनिवृत्तावेवनियतत्वात् नचापितुर्भगवतोवानुरोधात् पठतीतिवाच्यंफलतोवास्वरूपतोवातदुपकारा नपेक्षणात् यद्यपिईश्वर गुरूपकाररूपंज्ञानमपेक्षतेतथापिज्ञानबाधकप्रवृत्तिरूपोपकारंनापेक्षते । तदाह सर्वत्रोपेक्षकइतिनच भ्रमाद्ज्ञानसाधनत्वेनभागवतपाठइति तत्राहमुनिरितिमननमेवहिसाक्षात्कारेएकवाक्यतयोक्तम् । अतःसंभावितहेतूनामभावात्कस्यवाहेतोःबृहतींस्वरूपतोऽर्थतश्च भाव सहिता र्थाव बोध पूर्वक स्वाधीनोच्चारणपर्यंतं कथमभ्यसत् नच कौतुका क्लिष्टचित्तः आत्मारामत्वात् ॥ ९ ॥

अत्रोत्तरमाहआत्मारामाश्चेतिकौतुकसाधनाविद्यानिवर्त्तकत्वेनअन्यथासिद्धिर्नास्तीतिविशेषणत्रयम् चकारादन्यैर्नक्रियतइतिनकिंतुतेपि मार्गांतरस्थस्तुवैकल्याभावात्प्रचारणसमर्थइति सयोजितः नतुमार्गस्थाभावात्नि-कुर्वंतीत्यलौकिकत्वम् अपिशब्दात् भक्तिमार्गस्थिताः

### सुबोधिनी ।

वृत्तितात्पर्यांश्चउरुक्रमइति अलौकिकसामर्थ्यं अलौकिकींभक्तिंकुर्वंतीत्यनुवादः तत्रोपपत्तिःइत्थभूतगुणोहरिरिति भगवद्गुणाःप्रवृत्तिरूपा निवृत्तिस्वभावाः परमानंदरूपाश्चज्ञानरूपाश्चतस्माद्यः कश्चित्यत्रकुत्रचित् आसक्तोभगवद्गुणेषुरमतएवसर्वप्रतिकृतिरूपत्वात्गुणानां ज्ञानवशीकरणस्वभावाच्च ॥ १० ॥

नन्वस्तुभगवद्गुणानांतादृशत्वंग्रंथेकिमायत मित्यतआहहरेर्गुणाक्षिप्तमतिरिति।गुणानामनुपनिबद्धानांस्वबुद्ध्यास्मरणकल्पनयाक्लेशः उपनिबंधनेतुसिद्धत्वात् सुलभंस्मरणमिति भगवद्गुणैर्वशीकृतमतिः सन्आक्षेपान्नान्यत्रवृत्तिः मतिरितिफलं गृहीतंतेनान्यत्रविषयेंद्रियसं-योगेऽपिनव्युत्पत्तिरितिभावः एतज्ज्ञानविचारेणोक्तंवस्तुतस्तुशुकोमहादेवः तदाह भगवानितिकृतिप्रवृत्त्यर्थंविष्णुर्महादेवश्चावतीर्णावितितदा हवादरायणिरिति अतोमहद्प्याख्यानमधीतवान् नन्वनाहूतःस्वयंगत्वाकथंप्रचारितवान् तत्राह नित्यंविष्णुजनप्रियइतिनित्यंविष्णुजनाः प्रिया यस्य कामः कामिनीमिवभगवद्गुणाः स्वप्रतिष्ठार्थं भक्तं प्रापयंति अतः सर्वदायेभगवद्भक्ताः अकृत्रिमनित्यवैष्णवास्तेप्रिया यस्येति नहिस्नेहः संगहेत्वंतरमपेक्षते ॥ ११ ॥

एवं भागवतस्योत्पत्ति प्रवृत्ती निरूप्यश्रोतुः सर्वथा भगवदीयत्वाभावे न प्रतिष्ठितं भवेदिति गर्भ संस्कारमारभ्य भगवतैवस्वतेजसा परिपालितमिति वक्तुं पूर्वं रूपस्य ब्रह्मास्त्रेणदाहं निरूपयितुं तादर्थ्यमपिवैष्णवत्वेति तेषां पांडवानां संतत्यतरस्यदाहं निरूपयन् प्रकृ-तस्यदाहहेतुमाह परीक्षितोऽथेत्यारभ्ययावदध्यायसमाप्ति अश्वत्थाम्नोमहदपमानंहेतु पुत्रांतरदाहस्तूभयत्रसंरक्षायामपमानेनच अपृष्टंनोच्यत इति पृष्टमनूद्यप्रतिजानीते परीक्षित इति।अथ भागवतनिरूपणानंतरंतच्छ्रोतुः परीक्षितः बीजसंस्कारार्थं जन्मकर्मधर्मरक्षार्थं भगवत्कार्यकरणात्विलायनं भागवतश्रवणार्थं पुरुषत्रय शुद्ध्यर्थं अप्रतिबंधार्थं च संस्थांपांडुपुत्राणां प्रथमतएव चकारात् धृतराष्ट्रस्यापिच मुक्तत्वान्नसहोक्तिः प्रतिबंधकत्वं भ्रातृणामेकजातानामित्यभिप्रायेण मुक्तावप्यतिदोशाच्चकारेण ग्रहणं अतएव पांडुपुत्राणामित्युक्तंन पांडवानां कृष्णकथाप्रतिपादकत्वादेतेषांवचनम्अन्यथात्वसंगतिः तदाह कृष्णकथेति कृष्णकथायाउदयो यत्रेतिनहीयंभगवतः स्वतश्चरित्र रूपाकिंतुनैमित्तिकीअतोहेतुनिमित्तंस्वरूपोपकारिहेतुरितितन्निरूप्यतइतिभावः ॥ १२ ॥

---

### श्रीविश्वनाथचक्रवर्ती ।

कस्यवाहेतोः ॥ ९ ॥

निर्ग्रन्थाजिज्ञासितग्रन्थेभ्योनिर्गताः । यदुक्तं । "यदातेमोहकालिलंबुद्धिर्व्यतितरिष्यति तदागन्तासिनिर्वेदंश्रोतव्यस्यश्रुतस्य च,, इति । यद्वाग्रन्थिरेवग्रन्थः निर्गताहंकारग्रन्थयःयदुक्तं । "भिद्यतेहृदयग्रन्थिरिति,, । यद्वाविधिनिषेधग्रन्थातीताः । यदुक्तंचरेदविधिगोचरइति । तथाभूतामपिअहैतुकीं फलाभिसन्धिरहितां । भक्तिंकुर्वंति । भक्त्याज्ञानंज्ञानान्मुक्तिः ततोपिभक्तिरित्युरूःश्रेष्ठः एवक्रमोयस्मिन् तस्मिन् । ननुमुक्तानांकिंभक्त्यानिर्ग्रन्थानांकिंभक्तिग्रन्थेनश्रीभागवतेननिरभिमानानांकिंपुनः सेव्यसेवकलक्षणेनाभि आनेनविधिनिषेधातीतानां किं-पुनःश्रीभागवतोक्तेन भक्तेर्विधिनेत्यादिसर्वाक्षेप परिहारार्थमाह । इत्थंभूतः आत्मारामाणामप्याकर्षणशीलोगुणो यस्यसः । तेनमूलतएव भक्तिप्राधान्याभ्यासेन वा भगवद्गुणानुभवएषामस्त्वितिसनकादिषु भगवत्कृपैवश्रीकृष्णगुणानुभवोमत्सुतस्यास्त्विति श्रीशुकेव्यासस्येव भगवतोभक्तानां वा कृपयायैरात्मारामैस्तद्गुणानु भवयोग्यतालब्धातएवाहैतुकींभक्तिंकुर्वंतिअन्येत्वात्मारामाः सायुज्यार्थाभक्तिंकुर्वंतीत्य-र्थःअहैतुकीपदव्यावृत्तिरनुसंधेया यदुक्तं । "ब्रह्मभूतः प्रसन्नात्मानशोचति न कांक्षति।समः सर्वेषुभूतेषुमद्भक्तिंलभतेपराम् भक्त्यामामभिजा-नातियावान्यश्चास्मितत्त्वतः । ततोमांतत्त्वतोज्ञात्वाविशतेतदनंतरमिति,, ॥१०॥

नारद कृपया व्यासस्येव व्यासकृपया शुकस्यापि तद्गुणमाधुर्यानु भवो विशेषत एवाभूदित्याह हरेरिति हरेर्गुणेन आक्षिप्ता आक्षेपविषयी कृता मति ब्रह्मानुभवो येन सः धिङ्मे मतिं यत ईदृशे भगवद्गुण माधुर्ये सत्यपि एतावान् कालो ब्रह्मानुभवेन मया वृथैव यापित इति । ततश्च तत् कथासौहार्देन विष्णुजना एव नतु केवला आत्मारामाः प्रिया यस्य सः षष्ठीसमासो वा । अत्र व्यास एव भगवद्गुणाभिव्यञ्जकान् श्रीभागवतीयान् कांश्चन श्लोकान् लोकद्वारा विविक्तारण्ये सदा समाधिस्थमपि शुकं श्रावया मास तस्यतच्छ्रुत्यैव भग्नसमाधि स्तन्माधुर्याकृष्ट चित्त स्तादृशं समाधिमप्याक्षिप्य सर्व्वज्ञतया तान् श्लोकान् श्रीभागवतीयान् ज्ञात्वा तत् प्रकाशकञ्च स्वपितरं ज्ञात्वा तदन्तिकमागत्य श्रीभागवतमध्यैष्टेति ब्रह्मवैवर्त्तानुसारेण कथा ज्ञेया । तदेवं व्यास शुकौ पितापुत्रौ ब्रह्मानुभवि चूडामणी अपि विजित्य भक्तिरेकच्छत्रामिव सर्व्वजगतीं चक्रे । तदपि ये तां तथा मन्यन्ते कुपथगामिन श्चेत्ते यमेनैव दण्ड्या इति ॥ ११ ॥

एतेनतस्यपुत्रोमहायोगीत्यादिनाशुकस्यव्याख्यानेप्रवृत्तिः कथमितियत्पृष्टंतस्योत्तरमुक्तंयदन्यत् पृष्टं परीक्षितः प्रायोपवेशेनश्रवणं कथमिति तस्य जन्ममहाश्चर्यमित्यादिनातस्योत्तरमाहपरीक्षित इति विलापनंमृत्युं यद्वा लपेर्ण्यन्तात्ल्युट् श्रीभागवतकथावाच नमित्यर्थः संस्थामहाप्रस्थानं कृष्णकथानामुदयोयत्रतद्यथास्यादिति श्रीभागवतस्यतत्रैव तात्पर्यात् ॥ १२ ॥

१ अयंपाठश्चित्यरछनरत्वयोरप्राप्तेः

सिद्धांतप्रदीपः

सर्वत्रोपेक्षकः सर्वाध्ययनाध्यापनशून्यः कस्यहेतोः ॥ ९ ॥

आत्मारामाः परमात्मध्याननिष्ठाः ध्यानविरुद्धेभ्योग्रंथेभ्योनिर्गताअपि । उरुक्रमेतुभक्तिंध्यानादिरूपांकुर्वत्येव । भक्तिस्वरूपयाथात्म्यबोधार्थंभक्तिबोधिनीसंहितानिवृत्तिनिरतैरवश्यमुपादेयेतिभावः । यस्यांवैश्रूयमाणायां कृष्णेपरमपूरुषे । भक्तिरुत्पद्यते इतिप्रागुक्तेः इत्येकः संहिताध्ययनेहेतुरुक्तः । अथैवंभूतभगवत्प्रतिपादकंग्रंथंनिवृत्तोवाकः शरणंव्रजेदित्तिहेत्वंतरमाह । इत्थंभूतगुणोहरिरिति ॥ १० ॥

द्वितीयंहेतुंविवृणोति । हरेर्गुणाक्षिप्तमतिर्महदाख्यानमध्यगादधीतवानिति । हेत्वंतरगर्भंविशेषणमाह । नित्यंविष्णुजनप्रियइति । विष्णुजनसंगतिसिद्ध्येपिमहदाख्यानमध्यगात् ॥ ११ ॥

तदित्थं "कस्मिन्युगेप्रवृत्तेयंस्थानेवाकेनहेतुनेत्यादिप्रश्नानामुत्तराण्युक्तानिसंप्रति तस्यपुत्रोमहायोगीत्यादिप्रश्नोत्तरंवक्ष्यन् । तावदाभिमन्युसुतंसूतप्राहुर्भागवतोत्तमं तस्यजन्ममहाश्चर्यं कर्माणि च गृणीहिनः इतियत्पृष्टंतदुत्तरंवक्तुमाहपरीक्षितइति जन्मकर्माणिचविलायनंभगवत्प्राप्तिश्चतेषांसमाहारस्तत् कथंभूतंकृष्णकथोदयम् कृष्णकथानांभक्तपरित्राणादि रूपाणामुदयोयस्मात्तत् भगवदावेशेन सर्वपरित्यागपूर्वकशरीरविसर्जनरूपांसंस्थांचकारणभगवत्प्राप्तिं वक्ष्येलिंगव्यत्ययेनकृष्णकथोदयां संस्थामित्येवंयोज्यम् ॥ १२ ॥

भाषाटीका

( शौनकउवाच ) शुकदेव मुनि निवृत्तिनिरत और सबकी उपेक्षा रखते थे आत्माराम थे उन्हों ने किस कारण से इतनी बडी संहिता को पढा ? ॥ ९ ॥

( सुत उवाच ) निर्ग्रंथ और आत्माराम मुनि जन उरुक्रम भगवान में अहैतुकी भक्ति करते हैं । हरि के गुण गण ऐसेही हैं अर्थात् आत्माराम गणाकर्षी हैं ॥ १० ॥

भगवान् बादरायण नंदन शुकदेव ने भी हरि के गुणों से आक्षिप्तमति होकर इस महत् आख्यान को पढा था, क्योंकि वे नित्यही विष्णुजन प्रिय हैं ॥ ११ ॥

अथ अनंतर परीक्षित राजर्षि का जन्म कर्म और मुक्ति वर्णन करूँगा पांडु पुत्रों की संस्था वर्णन करूँगा कृष्ण कथा के उदय सहित ॥ १२ ॥

श्रीधरस्वामी

तत्र परीक्षितो जन्म निरूपयिष्यन् आदौतावद्गर्भस्थ एवाश्वत्थाम्नो ब्रह्मास्त्रात् श्रीकृष्णेन परिरक्षित इति वक्तुं कथांप्रस्तौति यदेत्यादिना । यदा द्रौणिरश्वत्थामाकृष्णासुतानां द्रौपदीपुत्राणांशिरांस्युपाहरत्तदातन्माता अरुदत् । ताञ्चसांत्वयन् किरीटमाली अर्जुनः आहेतितृतीयेनान्वयः । किमितिवालानां शिरांसि उपाहृतवान् इत्यपेक्षायामाह मृधे युद्धे । यद्यपिपाण्डवाअपि कौरवा एव तथापि सृञ्जयवंशजो धृष्टद्युम्नः पाण्डवानां सेनापतिः इतिसृंजयानामित्युक्तं । वीरगतिं स्वर्गं अथोअनन्तरं वृकोदरेण आविद्धायाः क्षिप्तायाः गदायाः अभिमर्षेण घातेन भग्नावूरुदण्डौ यस्य तथा भूते धृतराष्ट्र पुत्रे दुर्योधने सति ॥ १३ ॥

भर्तुर्दुर्योधनस्य । स्मेति वितर्के । इत्येवं प्रियं स्यादिति पश्यन् तस्यविप्रियमेवति वाक्यान्तरं । विप्रियत्वे हेतुः जुगुप्सितमिति ॥ १४ ॥

घोरंदुःसहं यथा भवति वाष्पस्य कलाभिर्बिन्दुभिः । आकुलेव्याप्ते अक्षिणी यस्याः सा । किरीटस्यैकत्वेपि तस्याग्राणांबाहुल्यात् किरीटमालीत्युक्तम् ॥ १५ ॥

शुचः शोकाश्रूणिप्रमृजामि परिमार्जयामि यत् यदाब्रह्मबन्धोर्ब्राह्मणाधमस्यआततायिन इति । "अग्निदोगरदश्चैवशस्त्रपाणिर्धनापहा । क्षेत्रदारापहारीच षडेतेआततायिनः,, इतिस्मरणात् । अत्रतुआततायीशस्त्रपाणितेनचपुत्रहन्तृत्वं लक्ष्यतेगाण्डीवाद्धनुषोमुक्तैर्विशिखैर्बाणैरुपाहरेत्वत्समीपमानयामि । यच्छिरः आक्रम्यआसनंविधायदग्धपुत्रासती ॥ १६ ॥

वल्गवोरम्याविचित्राजल्पा भाषणानि तैः सः अर्जुनः अच्युतएवमित्रं सूतश्चयस्य । दंशितः बद्धकवचः । उग्रंधनुश्चापोयस्य । कपिर्हनुमान् ध्वजेयस्यगुरोः पुत्रंरथेनअन्वाद्रवत् अन्वधावत् ॥ १७ ॥

दीपिनी ।

॥ १३ । १४ । १५ । १६ । १७ ॥

श्रीवीरराघवः ।

तावत्परीक्षितोजन्मेकर्मादिकं वक्तुंपांडुपुत्राणांसंस्थानमाहयदेत्यादिनायावत्पंचदशाध्यायसमाप्ति तत्रपरीक्षितोजन्मउपोद्घातएवांतर्भाव्योच्यतेकर्मादिकंतुततउपरितनग्रंथेनेतिविवेकः यदेत्यस्यतदातृतीयेनान्वयः मृधेयुद्धेकौरवाणांसृंजयानांचवीरगतिंवीराणांगतिंगतेषुप्राप्तेषुसत्सुधृतराष्ट्रपुत्रेदुर्योधनेवृकोदरेणभीमेनापविद्धायाः प्रयुक्तायागदायाअभिमर्षेणाघातेनभग्नावूरूएवदण्डौयस्यतथाभूतेसति ॥ १३ ॥

यदामृधेकौरवसृंजयानांवीरेष्वथोवीरगतिंगतेषु ।
वृकोदराविद्धगदाभिमर्शभग्नोरुदंडेधृतराष्ट्रपुत्रे ॥ १३ ॥
भर्तुः प्रियेद्रौणिरितिस्मपश्यन्कृष्णासुतानांस्वपतांशिरांसि ।
उपाहरद्विप्रियमेवतस्यजुगुप्सितंकर्मविगर्हयंति ॥ १४ ॥
माताशिशूनांनिधनंसुतानांनिशम्यघोरंपरितप्यमाना ।
तदाऽरुदद्बाष्पकलाकुलाक्षीतांसांत्वयन्नाहकिरीटमाली ॥ १५ ॥
तदाशुचस्तेप्रमृजामिभद्रेयद्ब्रह्मबंधोः शिरआततायिनः ।
गांडीवमुक्तैर्विशिखैरुपाहरेत्वाक्रम्ययत्स्नास्यसिदग्धपुत्रा ॥ १६ ॥
इतिप्रियांवल्गुविचित्रजल्पैः ससांत्वयित्वाऽच्युतमित्रसूतः ।
अन्वाद्रवद्दंशितउग्रधन्वाकपिध्वजोगुरुपुत्रंरथेन ॥ १७ ॥

श्रीवीरराघवः ।

द्रौणिरश्वत्थामास्वाचिकीर्षितंभर्तुर्धृतराष्ट्रस्याप्रियमपिप्रियमितिपश्यन्मन्यमानः स्वपतांशयानानांकृष्णायाः द्रौपद्याः सुतानां शिरांसिअपाहरत्छित्वानीतवान्इदंकर्मतस्यधृतराष्ट्रस्यविप्रियमेवयद्वातस्याश्वत्थाम्नः कर्मविप्रियमेवसर्वलोकस्यापीतिशेषः अतएवजुगुप्सितंविगर्हयंतेअधुनापिविनिंदयंति ॥ १४ ॥

यदैवंतदामाताद्रौपदीशिशूनांसुतानांघोरंनिधनंमरणंनिशम्यदृष्ट्वापरितप्यमानावाष्पैराकुलेअक्षिणीयस्यातथा भूतावभूवेति तदातां द्रौपदींसांत्वयन्नुपच्छंदयन्किरीटमालीकिरीटानांराजांतरकिरीटानांमाल्लाएवमालाअस्यास्तीतिकिरीटमालीअर्जुनःव्रीह्यादेराकृतिगणत्वाद्व्रीह्यादिभ्यश्चेतिमत्वर्थीयइनिः इदंवक्ष्यमाणमाह ॥ १५ ॥

तदेवाह। हेभद्रेब्रह्मबंधोर्ब्राह्मणाधमस्याततायिनः"अग्निदोगरदश्चैवशस्त्रपाणिर्धनापहः क्षेत्रदारापहर्ताचषडेतेआततायिन"इतिशस्त्रपाणेराततायित्वस्मरणादाततायिनइत्युक्तं शस्त्रपाणिर्नामशस्त्रधारणेनानिरपराधिप्राणिघातुकःतस्यशिरोगांडीवनमुक्तैर्विशिखैर्बाणैर्यद्यदा आहरेयंयद्यदावाहृतंशिरः पादेनाक्रम्पदग्धपुत्रात्वंस्थास्यासितदातेतवशुचः विमृजामिमार्जयामि ॥ १७ ॥

इतीत्थंवल्गुभिः सुंदरैः विचित्रैश्चज ल्पैर्भाषणैः प्रियांद्रौपदींसांत्वयित्वाअच्युतः कृष्णोमित्रंसूतः सारथिश्चयस्यसारथीकृताच्युतइत्यर्थः दंशितः कवचितः उग्रंधनुर्गांडीवंयस्योकपिध्वजः हनुमच्चिह्नितः ध्वजोयस्यसोऽर्जुनः रथेनसाधनेनगुरोर्द्रोणाचार्यस्यपुत्रमश्वत्थामानमन्वाद्रवदन्वधावत् ॥ १७ ॥

---

श्रीविजयध्वजः

अथोकथांतरंनिरूप्यते यदेति कौरवपांडवानांमृधेयुद्धेभीष्मादिषुवीरेषुवीरगतिंस्वर्गंगतेषु धृतराष्ट्रपुत्रे दुर्योधनेवृकोदरेणाविद्धायाभ्रांतायागदाया अभिमर्षेणसम्यक्ताडनेनभग्नउरुदंडोयस्यसतथोक्तः तस्मिन्सतिदुर्योधनपातमारभ्य ॥ १३ ॥

भर्तुः स्वस्वामिनोदुर्योधनस्यमयाप्रियंकार्यमितिस्मपश्यन्निरूपयन्द्रौणिर्यदास्वपतांनिद्रांकुर्वतांकृष्णासुतानांद्रौपदीपुत्राणांशिरांस्यपाहरत्तदा ॥ १३ ॥

सुतानांमाताद्रौपदीशिशूनांसुतानांनिधनंनिशम्यघोरंयथाभवतितथापरितप्यमानानिधनंविश्रंभणंवातस्यद्रौणेर्जुगुप्सितंनिंदितंएतच्छिशुनिधनाख्यंकर्मविगर्हयंती अरुदादित्येकान्वयः कीदृशंकर्मद्रौणेरेवविप्रियंनतुदुर्योधनस्य भारतेपांस्वभिषेकादिनाप्रियत्वोक्तेः इदानीं द्रौणिनाशिश्वादिवधात्पूर्वंदृष्टस्वप्नमाह तामिति किरीटमालीअर्जुनः सांत्वयन्दुःखंशमयन्तांद्रौपदीमाह ॥ १५ ॥

गांडीवनिः सृतैर्विशिखैः विविधशिखैः शरीरंखनित्वाविशंतीतिवा शरैराततायिनः हनिष्यन्मारिष्यामीतिक्रूरक्रियाकारिणः ब्रह्मबंधोर्ब्राह्मणाधमस्यद्रौणेः पुरतः स्थितंपदाक्रम्यपुत्रवधदुःखनिमित्तनयनजातैर्जलैः स्नास्यसिस्नानंकरिष्यसीतियस्मात्तस्मात्हेभद्रेमाशुचःशोचनंमाकुरु अश्रुपाणिनानिरुजन् हेभद्रेमारुदेत्यसांत्वयदित्यन्वयः शुचोनैनैतिवा अग्निदोगरदश्चैवशस्त्रपाणिर्धनापहः "क्षेत्रदारहरश्चैवषडेतेह्याततायिन" इति "आततायिनमायांतंहन्यादेवाविचारयन्" इतिस्मृतेः ॥ १६ ॥

सकपिध्वजइति वल्गवोमनोहराः विचित्राविविधाश्चर्य भूताजल्पावाग्विशेषायेतेतथोक्ताः तैः प्रियांभार्यांसांत्वयित्वारथेनगुरुपुत्रमभ्यद्रवदित्यन्वयः अच्युतएवमित्रमनिमित्तबंधुः सूतोयंतायस्यसतथोक्तः दंशितः कवचितः उग्रंभयंकरंधन्वायस्यसतथोक्तः ॥ १७ ॥

---

क्रमसन्दर्भः ।

कृष्णा कथानामुदयोयत्र तद्यथाभवतीति मुख्यतयातेनपृष्टानां कृष्ण कथाना मारम्भोऽपिसूचितः ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥

---

## सुबोधिनी ।

तत्रपुत्रांतराणांमारणांवक्तुंहेतुमाहयदामृधइति । सृंजयवंशोत्पन्नोधृष्टद्युम्नः पांडवानांचमूपतिरितिख्यतः पांडवानांकौरवत्वेपिविरोधनिमित्तंद्रौपदीति पांडवानांधृष्टद्युम्नप्रवेशात् अयुक्तपरिहारायचसृंजयानामित्युक्तंतेषांसंबंधिनांचमुक्तिरितिनिरूपयतिवीरगतामिति"द्वौसंमताविहमृत्यू"इतिवाक्यात् अनेनपुत्राणामेवअन्यायमरणमितिशोकहेतुः सूचितः अथोइतिमध्येभिन्नप्रक्रमवचनात् "पार्थास्त्रपूताःपदमापुरस्ये"तिचनिरूपितंदुर्योधनस्या युक्तमरणमाहवृकोदरेतिवृकोदशविधः प्राणउदरेयस्यतिष्ठतिसवृकोदरइत्युक्तो भगवत्कार्यसाधकइतिवाक्यात् भीमसेनप्रक्षिप्तगदायाअभिमर्षणेनभग्नेउरूएवदंडौ यस्यदंडइतिताडनहेतुः द्रौपद्या प्रदर्शनेदुःखजनकत्वात् धृतराष्ट्रपुत्रइतिअंधपुत्रत्वादविवेकित्वमुक्तम् ॥ १३ ॥

अतएव तत्सेवकोप्यविवेकीजातइत्याहभर्तुरिति द्रौणिरितिवैरानुवंधेमूलहेतुः मातृपुत्रत्वात्स्वापः अनेनैकपुत्रत्वान्मातुर्ग्रहणं अतएवभगवान्वंशार्थेतेनरक्षितःकृष्णाद्रौपदीप्रसवमात्रंतस्याः नोद्धारइतिसुतानामितिकृष्णेति पदं"योयच्छूद्धःसएवस"इतिवाक्यात् तद्भावापत्तिंसूचयतिप्रदर्शनार्थेशिरसामुपाहरणंतेनाद्धदाहादतिदुःखंदुर्योधनस्यापितन्मारणमभीष्टंलोकवाच्यतानदुर्योधनेस्थिताइदंतुलोकाविगर्हयंतीति तदाह विप्रियमिति ॥ १४ ॥

माताद्रौपदीरोदनेमातृत्वमेवहेतुः शिशूनामितिस्नेहाधिक्यं श्रवणादधिकक्लेशः घोरमितिरात्रौसौषुप्तिकपर्वकथा सूचितायदाअरुदत् तांसांत्वयन्नितिसंबंधः किरिटमालीअर्जुनः एकस्मिन्नपिकिरोटेकिरोटवाहुल्यप्रतीतिःवहुपुरुषवत्युद्धकरणाद्वास्त्रीवशा अपिभक्ताभगवतापरिपाल्यन्तंइति अर्जुनस्यप्रतिज्ञानमाहअथत्रातांसांत्वयन्नितिवचनान्न यथार्थत्वंप्रतिज्ञायाः ॥ १५ ॥

शोकापनोदनंस्त्रियाः भर्त्राकरणीयं तत्रतूष्णींप्रोंछनमशक्तविषयं अप्रतीकार्येचतत्रमृतानांजीवनमशक्यंमारकवधस्तुशक्य इति तत्कृत्वा तत्राश्रुप्रोंछनंकर्त्तव्यमित्याहतदेति क्रूरंहिक्रूरमश्रुप्रोंछयतेशुचइतिशोकाश्रूणिपुनरुद्गमायंहेतुशब्दवाच्यतानानुविपरीतौकिमुत्तरंतत्राह भद्रेइति तववैधव्यलक्षणाभावात्नतथाभविष्यतीतिभावः ब्रह्मवंधोइतिब्रह्मब्राह्मणजातिः वंधुरेवकदाचिदागच्छतिकदाचिन्नेतिनसदातस्य - ब्राह्मण्यंतिष्ठतिदेवविरोधित्वादसुरावेशाच्च"देव्यौवैवर्णाब्राह्मणाः असुर्यः शूद्रइतिश्रुतेः किंच आततायिनः "अग्निदोगरदश्चे"तिवाक्यात् "आततायिनमायांतमपिवेदांतपारगमाजिघांसंतंजिघांसीयान्नतेनब्रह्महाभवोदितिस्मृतेश्चनतद्वधेदोषः वाणैरेवाछित्वासमानयनंस्पर्द्धः दुष्टत्वात्तथाकरणेसामर्थ्यमाहगांडीवमुक्तैरितिशिरसआक्रम्यस्नानंक्षत्रियधर्मत्वेनवैरनिर्यातनेउक्तंदग्धपुत्रेतिसौप्तिकएवदाहः संस्कारदाहोवा प्रथमतः शोकाधिक्यहेतुः द्वितीयः स्नानहेतुः यदास्नास्यसितदाशुचः प्रमृजामीतिसंबंधः क्षत्रियत्वान्नान्यत्स्वभावतः शोकः काम पराणामेवतन्नक्रोधपराणाम् ॥ १६ ॥

एवंकथनेहेतुः प्रियामितिवल्गुमनोहरंआक्रम्यस्नास्यसीतिविचित्रै विशिखैरूपाहरइति जल्पैरितिस्त्रैणवाक्यंतत्तस्याआपेक्षान्वियत्वात्सम्यक्सांत्वनमएताहशकार्यसिद्धौहेतुः अच्युतमित्रसूतइति अच्युतत्वेनस्वरक्षासूतत्वात्कार्यसिद्धिः अनुपश्चादाद्रवणंपलायनंशंकया पश्चादेवकवचपरिधानंधनुषश्चग्रहणं धनुषउग्रत्वंवधपर्यवसायित्वात्कपिध्वजइत्यातिसामर्थ्यं सूचितमअथवादंशितइतिस्वरक्षाउग्रत्वाद्धनुषः कपिध्वजत्वादप्यस्यागुरुपुत्रमित्यनर्थपर्यवसायित्वंरथेनेतिनस्वाशक्तिः ॥ १७ ॥

---

## श्रीविश्वनाथचक्रवर्ती

तत्र गर्भस्थ एवपरीक्षित् श्रीकृष्णादर्शनं प्रापेति वक्तुं कथां प्रस्तौति । यदा द्रौणिरश्वत्थामा कृष्णासुतानां द्रौपदी पुत्राणांशिरां स्युपाहरत् तदा तन्माता अरुददिति तृतीये नान्वयः । कौरवाः दुर्य्योधनाद्याः सृंजयवंशाद्भवस्यधृष्टद्युम्नस्यपांडवसेनापतित्वात् सृञ्जयपदेन पाण्डवा लक्ष्यन्ते । वीरगतिं भीष्मो क्तयुक्त्या मोक्षं स्वर्गञ्च । वृकोदरेण आविद्धायाः क्षिप्तायाः गदाया अभिमर्षेण घातेन भर्त्तुर्दुर्य्यो धनस्यएवं प्रियं स्यादिति पश्यन् वस्तु तस्तु तस्य दुर्य्योधनस्य विप्रियमेव तत् प्रथमं शत्रुबध श्रवणेन हर्षोदयात् पश्चात् स्पर्शेन भीमादीनां स्वशत्रूणामवध ज्ञानात् वालवधा च्च कुरुवंश लोपश्रवणाच्च विशादोत्पत्तेर्हर्षविषादाभ्याश्चतन्मृत्युप्राप्तेरितिभावः अतएवाह जुगुप्सितमिति किरीटाग्राणांबहुत्वात् किरी टस्थामाला वा यस्यास्तिस किरीटमाली अर्ज्जुनः ॥ १३ ॥ १४ ॥ १५ ॥

शुचः शोकान् यत् यदा ब्रह्मवन्धोर्ब्राह्मणाधमस्याततायिनः शस्त्रपाणेः "अग्निदोगरदश्चैवशस्त्रपाणिर्द्धनापहः क्षेत्रदारापहारीच षडेतेआततायिनः" इतिस्मरणात् ॥ १६ ॥

अच्युतएवमित्रंसूतश्चयस्यसः दंशितोवद्धकवचः ॥ १७ ॥

---

## सिद्धांतप्रदीपः ।

तत्रपरीक्षितोजन्मवक्ष्यन् तत्पितामहादीनांकथामाह यदेति यदेत्यस्यतदाकिरीटमाली आहेतितृतीयेनान्वयः । कुरुसृंजयानांकुरूणां भीष्मादीनांसुयोधनपक्षीयानां सृंजयानां धृष्टद्युम्नादीनां युधिष्ठिरपक्षीयाणां । मृधेयुद्धेउभयपक्षीयेषुवीरगतिंगतेषुसत्सुसुयोधनमहारथेष्ववशिष्टेषुकृपकृतवर्मद्रौणिष्वन्यत्र विद्रुतेषुसत्सु अवशिष्टेनसैन्येनसहकृष्णेषुपांडवेष्ववस्थितेषुसत्सुभीमसुयोधनयोर्गदायुद्धे अथानंतरम् श्रीकृष्णप्रेरितेनवृकोदरेण विद्धायाः क्षिप्तायाः गदायाः अभिमर्शेनघातेन भग्नौउरूएवदंडौयस्यतथाभूतेधृतराष्ट्रपुत्रेसुयोधनेसति ॥१३॥

तदनंतरंजितकाशिषुपांडवेषुकृष्णाज्ञयाशिविरंविहायान्यत्रनक्तंविश्राम्यमानेषु कृपकृतवर्मभ्यांसहागत्यद्रौणिः सुयोधनेनसुप्तवधार्थमाज्ञप्तः भर्तुः सुयोधनस्यप्रियंस्यादितिपश्यन् शिविरेसुप्तानांकृष्णासुतानांद्रौपदीसुतानांशिरांसि छित्वापाहरत् तत् द्रौणिकर्मतस्यसुयोधनस्याविप्रियंजातंतस्यैवाकार्यकारयितृत्वात् यतः शिष्टाः जुगुप्सितंकर्मगर्हयंति ॥ १४ ॥

तमापतंतंसविलक्ष्यदूरात्कुमारहोद्विग्नमनारथेन ।
पराद्रवत्प्राणपरीप्सुरुर्व्यांयावद्गमंरुद्रभयाद्यथार्कः ॥ १८॥
यदाऽशरणमात्मानमैक्षतश्रांतवाजिनम् ।
अस्त्रंब्रह्मशिरोमेनेआत्मत्राणंद्विजात्मजः ॥ १९ ॥
अथोपस्पृश्यसलिलं संदधेतत्समाहितः ।
अजानन्नुपसंहारंप्राणकृच्छ्रउपस्थिते ॥ २० ॥
ततः प्रादुष्कृतंतेजः प्रचंडंसर्वतोदिशम् ।
प्राणापदमभिप्रेत्यविष्णुंजिष्णुरुवाचह ॥ २१ ॥
कृष्णकृष्णमहावाहोभक्तानामभयंकर ।
त्वमेकोदह्यमानानामपवर्गोऽसिसंसृतेः ॥ २२ ॥

सिद्धांतप्रदीपः ।

वाष्पकलाभिराकुलेअक्षिणीयस्याः साकृष्णाऽरुदत् तदाकिरीटमाली इंद्रदत्तस्यकिरीटस्याप्राणांबाहुल्यमाश्रित्येदमुच्यते किरीटानां मालाएवमाला अस्यास्तीतिसतथा अर्जुनइदंवक्ष्यमाणमाह ॥ १५ ॥

यद्यदाऽऽततायिनः शस्त्रपाणेः " अग्निदोगरदश्चैवशस्त्रपाणिर्धनापहः क्षेत्रदारहरश्चैवषडेतेआततायिनः,, इतिस्मृतेः ब्रह्मबंधोर्ब्राह्मणाधमस्याशिरः आहरे आनयामि यदाहृतंशिरः आक्रम्य आसनं विधायदग्धपुत्रास्नास्यसितदाशुचः शोकाश्रूणिप्रमृजामि मार्जयामिअच्युतोमित्रंसूतश्चयस्यसः दंशितः धृतकवचः ॥ १६ ॥ १७ ॥

---

भाषाटीका

जब कौरव और सृंजयों के संग्राम में वीर सब वीर गति को प्राप्त हो गये. और भीम की आविद्ध गदा से धृटराष्ट्र पुत्र के ऊरू भंग हो गये ॥ १३ ॥

तब द्रोण पुत्र अश्वत्थामा भर्ता दुर्योधन का प्रिय देखकर रात्रि को सोते हुए द्रौपदी के पुत्रों का शिर काट करले आया यह उसका कर्म दुर्योधन को भी अप्रिय हुआ और सब इस कर्म की निंदा करते हैं ॥ १४ ॥

माता द्रौपदी अपने शिशु सुतों का घोर निधन देख कर वाष्पकला कुल नेत्रोंसे रोदनक करने लगी तब उसका सान्त्व करने को किरीट माली अर्जुन ने कहा ॥१५॥

भद्रे ! मै तब तेरे शोक के आसूओं को पोंछूंगा जब उस ब्रह्म बंधु का शिर गांडी व मुक्त बाणों से काट कर ले आऊंगा. कि तू दग्धपुत्रा उस शिर को आक्रमण कर स्नान करेगी ॥ १६ ॥

ऐसी मनोहर विचित्र वातों से प्रिया को सांतवन कर अच्युत ही है मित्र और सूत जिस के वह उग्र धन्वा अर्जुन कवच धारण कर रथ से गुरु पुत्र के पीछे दौडा ॥ १७ ॥

---

श्रीधरस्वामी ।

आपतन्तं धावंतं सद्रौणिःकुमारहा वालघातीउद्विग्नमनाःकम्पितहृदयः । प्राणपरीप्सुःप्राणांल्लब्धुमिच्छुः । नतुकीर्ति यावद्गमंयावद् गन्तुंशक्यं । तावदुर्व्यांपराद्रवत्अपलायत । कोब्रह्मा मृगोभूत्वा सुतां जृंभितुमुद्यतः सन् रुद्रस्य भयात् यथा पलायतेस्म । अर्क इति पाठे वामनपुराणकथासूचिता तथाहि विद्युन्माली नाम कश्चिद्राक्षसो माहेश्वरः तस्मै रुद्रेण सौवर्णं विमानं दत्तं । ततो ऽसावर्कस्य पृष्ठतो भ्रमन् विमानदीप्त्या रात्रिं विलोपितवान् । ततोऽर्केण निजतेजसा द्रावयित्वा तद्विमानं पादितं तच्छुत्वाकुपिते रुद्रे भयादर्कः पराद्रवत् । ततोरुद्रस्य क्रूरया दृष्ट्या दंदह्यमानः पतन् वाराणस्यां पतितो लोलार्कनाम्ना विख्यातइति ॥ १८ ॥

अशरणं रक्षकरहितं ननु पलायनमेव रक्षकमस्ति न तस्यापि कुण्ठितत्वादित्याह श्रान्तावाजिनो यस्यतं । ब्रह्मशिरोऽस्त्रं ब्रह्मास्त्रं । द्विजात्मज इति अदीर्घदर्शितामाह ॥ १९ ॥

तद्ब्रह्मास्त्रं समाहितः कृतध्यानः उपसंहारमजानतोऽपिसंधानेहेतुः प्राणकृच्छ्र इति ॥ २० ॥

ततोऽस्त्रात् सर्व्वतोदिशं प्रादुष्कृतं प्रकटीभूतं तेजः अभिप्रेत्य ततः प्राणापदश्चाभिप्रेत्य ॥ २१ ॥

प्रस्तुत ।वज्ञापयितुं प्रथमं स्तौति कृष्ण कृष्णेति चतुर्भिः । संसृतेर्हेतो र्दह्यमानानां तस्या अपवर्गः अपवर्जयिता नाशक इत्यर्थः ॥ २२ ॥

दीपिनी।

सूतः सारथिरित्यर्थः ॥ १८ ॥ २१ ॥
तस्याः संसृतेः संसरणस्येत्यर्थः ॥ २२ ॥ ४७ ॥

---

श्रीवीरराघवः।

आपतंतंतमर्जुनंदूरादेव विलक्ष्यप्रत्यभिज्ञायकुमारहाकुमारघाती सोऽश्वत्थामाउद्विग्नंभीतंमनोयस्य तथाभूतः प्राणपरीप्सुः प्राणान्प्राप्तुमिच्छुर्जिजीविषुरित्यर्थः उर्व्यांभूमौयावद्गमंयावद्गंतुंशक्यंतावद्रथेनसाधनेनपराद्रवत्पलायितवान् कोदक्षः यथा रुद्र भयात्तद्वत् ॥ १८ ॥

यदाऽशरणंरक्षकरहितंश्रांतावाजिनोयस्यतमैक्षतपर्यालोचितवान् तदासद्विजात्मजोद्रौणिरात्मात्रायतेऽनेनेत्यात्मत्राणंस्वरक्षणोपायंब्रह्मशिरोनामकमस्त्रमेनेऽवबुध्यते ब्रह्मशिरोऽस्त्रेणार्जुनंहत्वात्मानंरक्षिष्यामिइत्यध्यवसितवानित्यर्थः ॥ १९ ॥

अथसलिलमुपस्पृश्याचम्यसमाहितः अस्त्रप्रयोगोपयुक्तमनः प्रणिधानयुक्तः संहारमस्त्रोपसंहार मजानन्प्राणकृच्छ्रेप्राणापद्युपस्थितायांतद्ब्रह्मशिरोऽस्त्रंसंदधेप्रयुयोज ॥ २० ॥

ततः सर्वतोदिशंसर्वदिक्षुप्रादुःकृतंप्रादुर्भूतंप्रचंडमुग्रंतेजः प्राणापदमभिप्रेक्ष्यप्राणविपत्तिकारित्वेनउत्प्रेक्ष्यजिष्णुरर्जुनोविष्णुंश्रीकृष्णमुवाच ॥ २१ ॥

तदेवाहकृष्णकृष्णेत्यादिपंचभिः प्रादुः कृतंतेजोयाथात्म्यात्तदुपसंहाराणामज्ञस्तदुपज्ञापनायभगवंतंकृष्णंप्रष्टुकामोनाहमपिवेद्मीति मावोचइत्यभिप्रायेणतावद्भगवंतंस्वाभाविकैर्धर्मैः स्तौतिचतुर्भिः हेकृष्ण "कृषिर्भूवाचकःशब्दोणश्चनिर्वृत्तिवाचक„इत्युक्तकृष्णशब्दोपस्थापितसर्वलोकसुखावहत्वरूपगुणानुसंधानकृतसंभ्रमाद्विरुक्तिः हेमहाबाहो"बाहूराजन्यः कृत"इत्युक्तरीत्याराजन्यकुलप्रभववाहोभक्तानाभयंकरोतीतितथाभूतस्तस्यसबाधनंदह्यमानानांसंसृतेरपवर्गः पारभूतः संसाराद्विमोचकइतियावत् स्वमेकएव कृत्स्नजगत्सुखाव स्यतत्रापि भक्तानामभयंकरस्य संसृतिरूपमहाभयक्षपणक्षमस्यतवकियानेतदुपस्थितभयापनयने प्रयासइतिभावः ॥ २२ ॥

---

श्रीविजयध्वजः

कुमारहाकुमारान्हतवान्द्रौणिरुर्व्यांभूमौ यावद्गमंगंतुंशक्यं तावद्रथेनपराद्रवदित्यन्वयः किंकृत्वाआपतंतंतमर्जुनंदूराद्विलोक्यउद्विग्नमनाः संभ्रांतचेताः प्राणपरीप्सुर्जीवनलाभेप्सुः कइवरुद्रस्यभयात् आर्किरर्कपुत्रः शनैश्चरः पुरायथारुद्रस्यतृतीयनेत्रस्यतेजसोभयाद्रा[1]कः परिधावतितथेतिवायुपुराणांतरप्रसिद्धमिदं यथाकइतिकेचित्पठंति ब्रह्मपंचमशिरश्छेदनायप्रवृत्तंरुद्रंदृष्ट्वाब्रह्मापरिधावतीत्येतदसुरजनमोहार्थमितिज्ञातव्यम् ॥ १८ ॥

अशरणंपालकरहितम्आत्मत्राणं आत्मानंत्रायतइति ब्रह्मशिरोनामास्त्रम् ॥ १९ ॥

ब्रह्मास्त्रप्रयोगइतिकर्तव्यतामाह अथेति अथइक्षणानंतरमुपस्पृश्य आचम्य संहारमुपसंहारम् अपिशब्देनविद्याया असंकल्पंदर्शयाति तर्हिकिमर्थंसंदधइतितत्राह प्राणेति ॥ २० ॥

ततस्तस्मादस्त्रादुत्पन्नंसर्वतोदिशंप्रापतद्व्याप्नुवत्प्रचंड मभिप्रेक्ष्यदृष्ट्वा जिष्णुः अर्जुनः हेत्यनेनमनस्याश्चर्यंकृत्वेतिदर्शयाति ॥ २१ ॥

कृष्ण सदानंदात्मक कृष्णदुःखकर्षणशील संसृतेर्जातेनतापाग्निनादह्यमानानां पुंसांत्वमेकएवसंसृतेरपवर्गोऽसि दुःखनाशकरोऽसीत्यन्वयः ॥ २२ ॥

---

क्रमसन्दर्भः।

सर्वतोदिशमितिसर्वतइत्यस्ययोगेद्वितीयादिशमितिजात्यैकत्वंदिशासर्वत्रेत्यर्थः सार्वविभक्तिकस्तसिल्वा सर्वांदिशमित्यर्थः ।२१।२२।

---

सुबोधिनी।

दृष्टेऽपिनगतिर्मदाजातातत्तोवधपर्यवलायित्वं ज्ञातंतदाह आपतंतमिति सापराधत्वात् दूरादेवदर्शनं क्षत्रियधर्माश्रितस्य युद्धोपस्थितौ प्रोत्साहोभवतिबालवधात्तस्यपापेनमनसउद्वेगःयुद्धसाधनंरथः पलायनसाधनंजातमिति रथेनेत्युक्तं पलायनेहेतुः प्राणपरीप्सुरिति येषांरक्षणार्थे नीचसेवापितृवधः अन्याय्यकरणंचांगीकृतं तेषांरक्षार्थंपलायनं किमाश्चर्यमितिउर्व्यांयावद्गंतुंशक्यते यावन्नद्यादिकं नद्यव धायियोगमंत्रादिनालोकांतरगमनेऽपिनिस्तारोन भविष्यतीति दृष्टांतमाहरुद्रभयाद्यथार्कइति यथार्कःविद्युन्मालिनिराकरणेकृतखसरुद्रस्यक्रोधोजातः ततः शूलमुद्यम्यअर्कवधार्थंप्रवृत्तः ततोऽर्कः पलायन्भूमौपतितः काश्यांलोलार्कसंज्ञोजातः ॥१८॥

तथायमपिलोकांतरेऽपि परिभ्रमन्पतेत्अतः भूमावेवयावद्गंतुंशक्यते तावत्पलायितवानित्यर्थः तदाभयात्शरणान्वेषणेभगवद्वैमुख्येन गच्छतीति कोऽपिमहादेवादिर्नशरणमभूत् पलायनं च कर्त्तुमशक्तः अश्वानांश्रांतत्वात् तदाब्रह्मशिरः ब्रह्मास्त्रंआत्मनः शरणंभविष्यतीति ज्ञातवान्नविद्यतेशरणंयस्यसअशरणःश्रांतावाजिनोयस्य"आध्यात्मिकं चाधिदैवंब्रह्मास्त्रंद्विविधंस्मृतं निवर्त्यमनिवर्त्यंचमंत्रयोः सुप्रतिष्ठितं

1—यथार्किरितिविजयध्वजः

सुबोधिनी।

द्रोणाचार्येणास्मैब्रह्मास्त्रद्वयंदत्तम् उपसंहारस्तुनाशिक्षितःशरीरेविद्यमानएवमृग्योःपालयिष्यतीति इदानींमस्यउपसंहारज्ञानाभावेऽपिप्रयोगेच्छाद्विजात्मजत्वेना दीर्घदर्शनाज्जाता ॥ १९ ॥

ततः पलायनंत्यक्त्वाभिन्नप्रक्रमेणआचमनंविधाय समाहितःसन्देवतासान्निध्यार्थं उपसंहाराज्ञानेसंधानेलोकक्षयान्महत्पापंचभाविष्यतीति ज्ञात्वापिप्राणकृच्छ्रउपस्थिते अयुक्तमप्यापदिकर्त्तव्यमितिबुद्ध्यातत् संदधे ॥ २० ॥ [1]

ततोयज्जातंतदाह ततः प्रादुरभूत्तेजइति प्रचंडमप्रतिक्रियं प्रचंडमित्यादिभिन्नंवाक्यं सर्वतोदिशंअर्जुनस्य अतएवप्राणापहम् ॥ २१ ॥

द्रौणेरिदमस्त्रमित्यज्ञात्वाकिंचिदन्यदेवदैवयोगान्नाशक मुपस्थितमितितदपनोदनार्थं तत्स्वरूपज्ञानार्थं च भगवंतंप्रष्टुं प्रथमंस्तौतीति चतुर्विध पुरुषार्थसिद्ध्यर्थंचतुर्भिः श्लोकैस्तौतिकृष्णकृष्णेत्यादिभिः आदरेवीप्साभयाद्वाद्विरुक्तिः महांतोवाहवोयस्यइंद्रादयो वाहवोयस्यअनेनक्रियाशक्ते राधिक्यमुक्तंपालकत्वंवासामान्यतः सर्वेषांपालकत्वमुक्तंभक्तान् प्रतिविशेषेणपालकत्वमाह भक्तानामभयंकरेति अन्येषामुपस्थितेभये परिपालनंकरोतिभक्तानांतु अभयमेवोपस्थापयतिनभयं किंच त्वत्तोदूरेस्थितादह्यमानाभवंति दाहेष्वपिमहान्संसारदाहः जन्ममरणरूपः तस्यत्वमपवर्गः संसृतेर्हेतोर्दह्यमानानामेकस्त्वमेवापवर्गः "आब्रह्म भुवनाल्लोकाः पुनरावर्तिनोऽर्जुन मामुपेत्यायकौंतेयपुनर्जन्मनविद्यते इति" ॥ २२ ॥

---

श्रीविश्वनाथचक्रवर्त्ती।

कोब्रह्मामृगीभूत्वासुतांजमितुमुद्यतः सन्रुद्रस्यभयात्यथापलायते स्मअर्कइतिपाठेवामनपुराणकथाज्ञेयातथाहिविद्युन्मालीराक्षसः शैवः शिवदत्तेन सौवर्णेनविमानेनअर्कस्य पृष्ठतोभ्राम्यन् विमानदीप्त्यारात्रिं विलोपितवान्ततः कुपितोऽर्कोनिजतेजोभिर्द्रावयित्वातद्विमानंपातयन् तदैवायातस्य रुद्रस्य भयात्ततः पलायमानः पतन्वाराणस्यांलोलार्कोबभूवेति ॥ १८ ॥

अशरणं रक्षक रहितम् आत्मत्राणम्आत्मरक्षोपायंद्विजात्मजइत्यदीर्घदर्शित्वंसूचितम् ॥ १९ ॥

समाहितः कृतध्यानः ॥ २० ॥ २१ ॥

अपवर्गो मोक्षरूपोऽसितेनास्माकं संसृतेर्मोक्षमपिदास्यसि किमुतास्मात् अग्नेस्त्राणमात्रमितिभावः ॥ २२ ॥

---

सिद्धांतप्रदीपः।

विलक्ष्यप्रत्यभिज्ञायप्राणपरीप्सुः प्राणान्प्राप्तुमिच्छुः यावद्गमंयावद्गंतुंशक्यम् तावद्भूमौपराद्रवत् पलायितवान् यथारुद्रभयादर्कः एवंहिवामनपुराणे कथास्तिविद्युन्मालीराक्षसः शिवभक्तः सहिप्रसन्नाच्छिवात्सौवर्णंविमानंप्राप्यार्कवन्मेरोः परितः भ्रमन् रात्रिंविलोपितवान् लोकहितचिकीर्षुरर्कस्तद्विमानंपातयामास ततोभक्तपक्षपातिनिरुद्रेकुपितेऽर्कः पराद्रवदित्यादि ॥ १८ ॥

ऐक्षतपर्यालोचितवान् आत्मात्रायतेऽनेनतदात्मत्राणम् ॥ १९ ॥

तदस्त्रम् ॥ २० ॥

ततोऽस्त्रात् प्रादुःकृतंप्रादुर्भूतम् ॥ २१ ॥

किमिदमिति विज्ञापयितुंतावत्कृष्णेतिचतुर्भिर्भगवंतंस्तौति संभ्रमेद्विरुक्तिः हेकृष्ण "कृषिर्भूवाचकः शब्दोणश्चनिर्वृत्तिवाचकः विष्णुस्तद्भावयोगाच्चकृष्णोभवतिशाश्वतः" इत्युद्योगोक्तनिरुक्तेः हेपरमसदानंद पुनर्हेकृष्णाकर्षतिस्वानन्यभक्तं स्वसाधर्म्यंप्रापयतीति हेस्वसाधर्म्यप्रदएकः निःसमानातिशयः दह्यमानानांसंसारिणांसंसृतेः संसारस्य अपवर्गोनाशकः ॥ २२ ॥

---

भाषाटीका

वह कुमार हो अश्वत्थामा दौडे चले आते अर्जुन को देख उद्विग्न मन हो रथ में सवार प्राण बचाने की इच्छा से पृथवी में जहां-उसकी गम दूर भागा। जैसे रुद्र के भय से ब्रह्माजी भागे थे (१) वा जैसे रुद्र के भय से सूर्य भागे थे (२) ॥ १८॥

जब उस द्विजात्मज के अश्व श्रांत हो गये हैं तब अपने को अशरण देख उसने ब्रह्म शिर अस्त्रही को अपना परित्राण माना ॥ १९

अथ अनन्तर जल स्पर्श कर समाहितहो यद्यपि उसका संहार नहीं जानता था तथापि प्राण कृच्छ्र उपस्थित देखकर ब्रह्मास्त्रका धान किया ॥ २० ॥

तदनन्तर सर्वतोदिश प्रादु स्कृत प्रचंड तेज प्राणों का नाश करने वाला देख कर जिष्णु ( अर्जुन ) विष्णु ( श्री कृष्ण ) से बोले ॥ २१ ॥

( अर्जुन उवाच ) हेकृष्ण ! हे कृष्ण ! हे महा वाहो ! हे भक्तों के अभयंकर ! इस संसार में दह्यमान पुरुषों के एक तुम ही अपवर्ग ( भय वर्जन ) हो ॥ २२ ॥

---

१ प्राणापहमभिप्रेत्येति सुबोधिनी।

(१) मृग रूप धर मृगी सरस्वती का अनुगमन करते ब्रह्मा को शासन करने को जब रुद्र दौडे तब ब्रह्मा उनके भय से भागा था ॥

(२) विद्युतमाली शिव भक्त राक्षस शिवदत्त सुवर्ण विमान में बैठकर सूर्य के पीछे पीछे घूम कर जब रात्रि को दिन करने लगा तब सूर्य ने अपने तेज से उसका विमान गलाकर गिरा दिया यह सुनकर महादेव त्रिशूल ले सूर्य के मारने को चले तब उनके भय से सूर्य भागाथा ॥

त्वमाद्यः पुरुषः साक्षादीश्वरः प्रकृतेः परः ।
मायां व्युदस्य चिच्छक्त्या कैवल्ये स्थित आत्मनि ॥ २३ ॥
सएव जीवलोकस्य मायामोहितचेतसः ।
विधत्से स्वेन वीर्य्येण श्रेयो धर्म्मादिलक्षणम् ॥ २४ ॥
तथायश्चावतारस्ते भुवोभारजिहीर्षया ।
स्वानाञ्चानन्यभावानामनुध्यानाय चासकृत् ॥ २५ ॥
किमिदं स्वित् कुतोवेति देवदेव नवेद्म्यहम् ।
सर्व्वतो मुखमायाति तेजः परमदारुणम् ॥ २६ ॥

श्रीधरस्वामी ।

यतस्त्वमीश्वरः साक्षात् कुतः यतःप्रकृतेःपरःपुरुषः तत्कुतः यतः आद्यःकारणं कारणत्वेप्यविकारितामाह मायांव्युदस्य अभिभूय कैवल्यस्वरूपेआत्मन्येवस्थितइति ॥ २३ ॥

त्रिवर्गदातापित्वमेवेत्याह सइति यस्त्वंमायामभिभूयस्थितः सएवमायाभिभूतस्यजनस्य धर्मादिफलमुपासितः सन्विधत्से वीर्येण प्रभावेन ॥ २४ ॥

तथाचानेनावतारेणनतवसाधुपक्षपातोलक्ष्यतइत्याहतथेति किंभूभारहरणंमदिच्छामात्रेणनभवतितत्राह स्वानांज्ञातीनामनुध्यानायचतथाऽनन्यभावानामेकांतभक्तानांच ॥ २५ ॥

एवंस्तुत्वाप्रस्तुतंज्ञापयति किमिति किमात्मकमिदंकुतोवाआयातीति स्वित्वितर्के ॥ २६ ॥

दीपनी ।

॥ २३ ॥ २६ ॥

श्रीवीरराघवः ।

नन्वेवंविधस्त्वमीश्वरोनाहामित्यतआहत्वमितित्वमेवसाक्षादीश्वरः यत्किंचिदीशितव्यत्वापेक्षया सर्वोपिलोकईश्वरएवेतीतरसाधारणैर्द्धर्मैरभिप्रेतमीश्वरमितरस्साद्व्यावर्त्तयतिआद्यआदौभवः निखिलजगत्कारणत्वेनावस्थितः पुरुषः सर्वांतरात्मतयासर्वप्रशासितृत्वेन- सर्वहृदयांतर्वर्तीत्यर्थः आथापिप्रकृतेः परः "भूमिरापोनलोवायुः खंमनो बुद्धिरेवच अपरेयमितस्त्वन्यामित्यादिश्लोकद्वयोक्तप्रकृतिद्वयाद्विलक्षणःपुरुषशब्देन"पूः संज्ञेवैशरीरेस्मिन्शयनात्पुरुषोहरिरि"तिनिरुक्तेनसर्वांतरात्मत्वंसर्वाधारत्वंचफलितंप्रकृतेःपरइत्यनेनप्रकृतिगतधर्मास्पर्शश्चनन्वीश्वरश्चसर्वाधारकश्चेत्तस्याकिंधारकंदेहाद्विलक्षणस्यापिजीवस्यदेवोऽहंमनुष्योऽहमितिदेहधर्मस्पर्शदर्शनात्कथंतस्यप्रकृतिधर्मास्पर्शश्चेत्यतोविशिनष्टिचिच्छक्त्याशक्तिशब्दः सर्वत्रकार्योपयोगापृथक्सिद्धविशेषणत्वाच्चिच्छक्त्याज्ञानशक्त्यानित्याविर्भूतापरिच्छिन्नधर्मभूतज्ञानशक्त्यामायांप्रकृतिंचेतनाचेतनात्मिकांव्युदस्यमायाशब्दोत्रोपचारान्मायाधर्मपरःमायाधर्मान्व्युदस्यमायाधर्मैरस्पृष्टइत्यर्थःकेवलएवकेवलः स्वार्थेष्यञ्केवलेआत्मनिस्थितः स्वमहिम्निप्रतिष्ठितः इत्युक्तरीत्याआधारांतरानपेक्षइत्यर्थः जीवस्तुकर्मणासंकुचितज्ञानत्वाद्देहात्मभ्रमेणदेहधर्मानात्मन्यध्यस्यति ईश्वरस्तुचिच्छक्त्यातान्व्युदस्यतत्रजीवांतरात्मतयातत्तज्जीवकर्मानुरूपं फलंप्रयच्छतितदाधार्योवतिष्ठतीतिभावः ॥ २३ ॥

तदेवाहयइति उक्तविधईश्वरएवत्वंमाययादेहात्मभ्रमस्वतंत्रात्मभ्रमादिरूपमायाकार्येणमोहितंचेतोयस्यतस्यजीवलोकस्यधर्मादिलक्षणंधर्मार्थकाममोक्षरूपपुरुषार्थ चतुष्टयरूपंश्रेयस्तद्विपर्ययरूपमश्रेयश्चतत्तत्कर्मानुगुणत्वेनस्वेनस्वेनवीर्येणस्वाभाविकानामच्युतेनमहात्म्येनोपलक्षितः विधत्सेप्रयच्छसि ॥ २४ ॥

नकेवलमंतरात्मतयैवंविधत्सेऽपित्ववतारमुखेनापीत्यभिप्रेत्याह तथेति भुवोभारभूतानांदुष्कृतजिहीर्षयासंहारेच्छयाऽनन्यभावानामनन्यप्रयोजनभक्तियोगनिष्ठानांस्वकीयानामसकृदनुध्यानायचायंतवावतारः ॥ २५ ॥

एवं संस्तुत्यप्रकृतंपृच्छतिकिमिति इदंतेजः किंस्विदितियाथात्म्यप्रश्नः कुतोवेतिहेतुप्रश्नः कुतोवाआगच्छतिकुतश्चशमिष्यतिइत्यर्थः स्वस्यत्वेतदज्ञानमावेदयतिनवेद्म्यहमितितर्हिकिंजानासीत्यत्राह सर्वतोमुखंपरमदारुणंतेजः आयात्येतावदेववेद्मीत्यर्थः ॥ २६ ॥

विजयध्वजः ।

अनिष्टपरिहारसामर्थ्यंतवास्तीत्याह त्वमिति पापानिऔषददहदितिपुरुषः "सर्वान्पाप्मनऔषत्तस्मात्पुरुष"इतिश्रुतेः पुरुबहुसरतीतिवा सर्वेषामादौभवनादाद्यः साक्षादीश्वरः निरुपचरितैश्वर्योपेतः । तत्कथमितितत्राह । प्रकृतेरिति चित्प्रकृतेरप्युत्तमः एवंविधस्त्वं चिच्छक्त्यास्वरूपज्ञानशक्त्यामायांबंधकशक्तिंनिरस्यकैवल्ये प्रकृतिप्राकृतबंधरहिते आत्मनिस्वरूपेस्थितोयतोतइत्यन्वयः "सभगवान्कस्मिन्प्रतिष्ठितइतिस्वेमहिम्नी" तिश्रुतेः ॥ २३ ॥

### श्रीविजयध्वजः।

सप्रकृतिप्राकृतसंबंधरहितएवबंधकशक्त्यामोहितबुद्धेर्जीवलोकस्यस्वरूप वीर्येणधर्मादिलक्षणश्रेयोविधित्सुरवतरतीत्यन्वयः ॥ २४ ॥
भगवदवतारास्तेयथापुंसामनुध्यानादिनामोक्षहेतवस्तथा भुवोभारजिहीर्षयाकृतोऽयंचावतारश्चानन्यभक्तानां स्वानामसकृदनुध्या-
नायस्यादित्यतोमोक्षं साधयतस्तवभक्तैर्हिकदुःखनिवारकत्वंकिंवर्णनीयमितिभावः भूभारानुध्यानयोः समुच्चयेचशब्दः ॥ २५ ॥
यत्तेजःपरमदारुणंसर्वतोमुखमायाति हेदेवतादिदंकिंस्वित्कुतोवेति अहंनवेद्मीत्यन्वयः ॥ २६ ॥

---

### क्रमसन्दर्भः।

मायाहेतुकायाः संसृतेः नाशकत्वेनमाया तोविलक्षणांशक्तिंदर्शयतित्वमितित्वंसाक्षात् पुरुषोभगवान्तथायईश्वरः अन्तर्याम्याख्यः पुरुषःसोऽपित्वमेवतंदवमुभयस्मिन्नपिप्रकाशंप्रकृतेः परस्तदसंगःननुकथं केवलानुभवानन्दस्यापितदनुभावित्वंयतोभगवत्त्वमापिलक्ष्यतेतक थमीश्वरत्वात् प्रकृत्यधिष्ठातृत्वेऽपितदसंगित्वंतत्राहमायांव्युदस्येतिअव्यभिचारिण्यास्वरूपशक्त्या तामाभासशक्तिंदूरेविधायतयैवस्व-रूपशक्त्याकैवल्येपरावराणांपरमआस्तेकैवल्यसंज्ञितः। केवलानुभवानन्दसंदोहोनिरुपाधिकइत्येकादशोक्तरीत्या कैवल्याख्येकेवला-नुभवानन्दे आत्मनिस्वरूपेस्थितः अनुभूतस्वरूपसुखइत्यर्थः। तदुक्तंषष्ठेदेवैरपिस्वयमुपलब्ध निजसुखानुभवोभवानिति। संदोहशब्देन-चैकादशेवैचित्रीदर्शिता साचशक्तिवैचित्र्यादेवभवतीति अतएवमस्त्येव स्वरूपशक्तिः प्रकृतिर्नामात्रमायायास्त्रैगुण्यम् एवमेवशक्तित्र-यविवृतिः श्रीस्वामिभिरेवदर्शिता परंप्रधानपुरुषमित्यादिदेवहूतिवाक्ये अत्रपुरुषस्यापिमायान्तः पातित्वंतदधिष्ठानात्तयोपचर्य्यते एव-वस्तुतः तस्यतुतस्याः परत्वं यथा श्रीकपिलवाक्ये-अनादिरात्मापुरुषो निर्गुणःप्रकृतेः परः प्रत्यग्धामास्वयंज्योति र्विश्वंयेनसमन्वितमिति त्रिशक्तिनिरूपणविशेषजिज्ञासाचेत् भगवत्संदर्भोहृश्यः अथवा त्वमाद्यइत्यादि मूलपद्यमेवमवतार्य्यम् श्रीवैकुण्ठेमायां निषेधन्नपि-साक्षात् स्वरूपशक्तिमेवाहत्वमिति कैवल्येमोक्षाख्ये श्रीवैकुण्ठलक्षणेआत्मनिस्वांशेएवस्थितः किंकृत्वातत्रातिविराजमानयाचिच्छक्त्या मायांदूरस्थितामपितिरस्कृत्यैव मतंचैतन्मयाधिकंनिषेधताश्रीशुकदेवेन प्रवर्ततेयत्ररजस्तमस्तयोः सत्त्वंचमिश्रंनचकालविक्रमः नयत्रमाया किमुतापरेहरे रनुव्रतायत्रसुरासुरार्चिताइति मोक्षंपरंपदंलिङ्गममृतंविष्णुमन्दिरमितिपाद्मोत्तरखण्डेवैकुण्ठपर्य्यायशब्दः ॥ २३ ॥ २४ ॥
यथान्ये पुरुषाद्याऽवतारास्तथायमवतारः साक्षाद्भगवतः कृष्णाख्यस्यतवैवप्राकट्यम् परमभक्तायाभुवोभारजिहीर्षयाजातोऽपिअन्ये षांस्वानांभक्तानामसकृच्च मुहुरनुध्यानायनिजभजनसौख्यायभवति ॥ २५ ॥ ३० ॥

---

### सुबोधिनी।

अत्रोपपत्तिंश्लोकद्वयेनाह सर्वैपतिः स्यादितिन्यायेनप्रथमतः स्वस्यदोषाभावः तदनुपरस्यदोषदूरीकरणमिति तत्रदोषाः पंचविधाः कर्मजाः कालजाः स्वभावजाः पापोद्भवाः देशोद्भवाश्चेतितेक्रमेणनिवार्यंते कर्मापेक्षयाप्याद्यत्वात् स्वतंत्रत्वेनतदधीनत्वाभावाच्चनतस्मिन् कर्मजाः किंच सर्वेषामयंनियामकः भगवान्साक्षादात्मनामपिअतः कालस्यापिनियामकइत्युक्तं भवतितेननकालजाः प्रकृतिनियामक त्वाच्चनप्राकृताः भगवतस्तुबह्व्यः शक्तयः संतिअन्योन्यविरुद्धाः तत्तत्कार्यार्थंनिर्मिताः तत्रयस्यामेवआसक्त्याक्रीडायां क्रियमाणायांतद्दो षप्रादुर्भावः संभाव्यतेतदैवतद्विरुद्धशक्तिप्रादुर्भावनेनपूर्वान्दूरीकरोति तथाचिच्छक्त्यामायांव्युदस्यातिष्ठतीतिनमायिकदोषसंबंधः देशदो षस्तुनसंभाव्यएवसर्वधर्मास्पृष्टंकेवलः एवात्मनि विद्यमानत्वात् अतः स्वतः पंचविधदोषरहितः ॥ २३ ॥
अन्येषांदोषदूरीकरणंकैमुत्यन्यायेनाहसएवेतिपूर्वोक्तगुणयुक्तएवमायामोहितचेतसोजीवस्यभ्रांतस्यभ्रांत्यायदेवभ्रांत्यायदेवप्रार्थयतेतत तस्मैप्रयच्छसीतिसर्वाभीष्टदातृत्वमुक्तंअन्यथासर्वेषामभजनीयः स्यात् ॥ २४ ॥
किंचसामान्यतएतत्तवस्वरूपमुक्तंविशेषतस्तवस्वरूपविचारेअस्मदादीनांनकिंचित्कर्तव्यमित्यभिप्रायेणाहतथायमितितथाचायमव तारस्तेयथाभवान्सर्वदोषरहितः सर्वाभीष्टदः तथाअवतारोप्ययंयेषांमतेभगवानेवसाकारः आनन्दमात्रकरपादमुखोदरादिः मायाजव निकादूरीकरणेनप्रादुर्भूतइतितेषांनकिंचित्वक्तव्यंयेषामपिमतेस्वेच्छामयेशरीरविशेषेभगवतोऽनंतसूर्यप्रकाशस्यअयोगोलकेवन्हेरिवआगम नमवतारइतितन्मतेनैवंकथनंतस्यावतारस्यप्रयोजनद्वयंसर्वजनीनंभुवोभारदूरीकरणंवैष्णवशास्त्रेतुस्वानामनन्यभावानांनिरंतरानुध्यानार्थं उभयंअर्जुनस्याभिप्रेतमितिउभयथाप्यस्माकंहितकरणंभूभारहरणसहायात्भक्त्यस्वाच्च ॥ २५ ॥
एवंस्थितेकिमिदमकस्मादाविर्भूतमिति तत्कथयेत्याहसर्वदिशत्वात् कुतोवेतिनज्ञायते कुत्रवामूलमितिअवतारेपि तवनकिंचिदज्ञातं देवकार्यसाधनत्वात् तदाहदेवदेवेतितथात्वमपीत्याशंक्यअत्रज्ञत्वान्नाहंवेद कीर्त्युपपत्तिः अत्रनसंभवतियतः सर्वतोमुख स्वरूपशक्ति-त्वात्तस्मिंश्चसतित्वमात्मनिस्थितंवस्तुतएवेतिभावः ॥ २६ ॥

---

### श्रीविश्वनाथचक्रवर्ती।

ननुत्वन्मातुलेयोऽर्हत्वत्समएवमैवंवादीरित्याहत्वमिति। ननुत्वंप्रकृतेः परइति किं प्रकृति शब्देनाविद्यांमायां वा ब्रूषे तत्राह। चिच्छ क्त्या स्वरूप भूतया शक्त्यासुभगया पट्टमहिष्येवमायां विद्याविद्येति वृत्तिद्वयवर्ती दुर्भगामिव स्वशक्तित्वात् प्राप्तां व्युदस्य दूरीकृत्य तया शक्त्या सहित एवत्वम्आत्मनिस्वचिन्मयस्वरूपेस्थितः। ननुचिच्छ क्त्येत्यस्याः कारणत्वेन मत्तोभिन्नतया स्थितत्वं कथं ममात्मनि स्थितत्वमित्यतआहकैवल्यइति। केवलस्य भावः कैवल्यं तस्मिन् इतितया सहितत्वेऽपि तव कैवल्य मेव तस्यः स्वरूप भूता चिच्छक्तिः सात्वत्तः सदाअभिन्नैवत्वद्देहेन्द्रियपरिकरादिरूपेणातिष्ठति "परास्य शक्तिर्वहुधैवश्रूयते स्वाभाविकी ज्ञानवल क्रियाचेति" श्रुतेः। मायातु छायेव त्वदस्वरूपत्वात् ज्ञानाज्ञान गुणमयजगद्रूपेणावर्त्ततेइतित्वत्तोभेदएवतस्या मायायास्त्वच्छक्तित्वात् क्वचिदभेदोऽपीति भिन्नाभिन्न रूपा सा शक्तिरित्यर्थः। मायैव शक्तिरेका नान्येति मतं परास्तमेव ॥ २३ ॥

श्रीभगवानुवाच ॥ वेत्थेदं द्रोणपुत्रस्यब्राह्ममस्त्रं प्रदर्शितम् ।
नैवासौ वेद संहारं प्राणबाध उपस्थिते ॥ २७ ॥
नह्यस्यान्यतमं किंचिदस्त्रं प्रत्यवकर्षणम् ।
जह्यस्त्रतेजउन्नद्धमस्त्रज्ञोह्यस्त्रतेजसा ॥ २८ ॥

सूतउवाच ॥ श्रुत्वा भगवता प्रोक्तं फाल्गुनः परवीरहा ।
स्पृष्ट्वाऽपस्तंपरिक्रम्य ब्राह्मं ब्राह्माय संदधे ॥ २९ ॥
संहत्यान्योन्यमुभयोस्तेजसी शरसंवृते ।
आवृत्य रोदसी खं च ववृधातेऽर्कवह्निवत् ॥ ३० ॥

### श्रीविश्वनाथचक्रवर्ती

सएवकैवल्येस्थित एव ॥ २४ ॥
तथातेनैव प्रकारेण व्युदस्तमायस्वचिन्मयस्वरूपेणअयमवतारःप्रापंचिक लोकेप्राकट्यम् ॥ २५ ॥
एवंस्तुत्वाप्रस्तुतं विज्ञापयाति किमिदमिति ॥ २६ ॥

---

### सिद्धांतप्रदीपः ।

आद्योविश्वहेतुत्वेनसर्वेभ्यः पूर्वः पुरुषः सर्वांतरात्मा साक्षादीश्वरः स्वयंप्रभुः प्रकृतेः "भूमिरापोऽनलोवायुः खंमनोबुद्धिरेव च अहंकार-इतीयंमेभिन्नाप्रकृतिरष्टधाअपरेयमितस्त्वन्यांप्रकृतिंविद्धिमेपराम् जीवभूतांमहाबाहोययेदंधार्यतेजगदि" ति भगवदुक्तायाः अपरायाःपराया-श्चपरप्रकृतिमत्त्वयोत्कृष्टः एतदेवाह मायामपरांप्रकृतिंचिच्छक्त्याधर्मभूतज्ञानरूपयाव्युदस्यांभिभूयस्थितः पराप्रकृतितः परमोत्कृष्टत्वं-दर्शयतिकैवल्येस्वार्थेष्यञ् आत्मनिस्वस्मिन्नेवस्वयंस्थितः "प्रधानक्षेत्रज्ञपतिर्गुणेशः अणोरणीयान्महतोमहीयानि"त्यादिश्रुतिभ्यः ॥ २३ ॥
एतदुपपादनायपुरुषार्थप्रदत्वंभगवतोदर्शयाति सएवेति सएवंत्रिगुणप्रकृतिमोहितचेतसः पराप्रकृतेर्जीवस्यधर्मार्थकाममोक्षाख्यंश्रेयो-विधत्सेप्रयच्छसि ननुमायामयेलोकेमायामोहितेषुजीवेषु मध्येत्वदुक्तलक्षणस्य ममावतरणं किमर्थमित्यतआह तथेति ॥ २४ ॥ २५ ॥
अथ प्रस्तुतंविज्ञापयति किमिति ॥ २६ ॥ २७ ॥

---

### भाषाटीका

तुम आद्य पुरुष हौ. प्रकृति से पर साक्षात् ईश्वर हौ चित् शक्ति द्वारा माया को पराभव कर कैवल्य आत्मा में स्थित हौ ॥२३ ॥
वही तुम, इस माया मोहित चित्त जीव लोक का धर्मादि रूप श्रेय अपने प्रभाव से विधान करते हौ ॥ २४ ॥
वैसे ही आप का यह भी अवतार पृथवी के भार हरण करने की इच्छा से है । और अपने अनन्य भाव भक्तों के निरंतर अनुध्यान के निमित्त है ॥ २५ ॥
हे देव देव यह क्या है ? मैं कुछ नहीं जानता. पर मदारुण सर्वतो मुख तेज चला आता है ॥ २६ ॥

---

### श्रीधरस्वामी

इदंद्रोणपुत्रस्यब्राह्ममस्त्रं तेनचप्राणबाधेप्राप्तेप्रदर्शितंकेवलं नतत्प्रयोगेकुशलइत्यर्थः यतोऽसावुपसंहारंनवेद एतच्चत्वं वेत्थजानासि ॥ २७ ॥
प्रत्यवकर्षणं कृशत्वकरं निवर्त्तकमित्यर्थः अतः तदस्त्रतेजउन्नद्धमुत्कटं ब्रह्मास्त्रतेजसैवजहि घातय त्वत्प्रयुक्तंचास्त्रंतदुपसंहृत्य स्वयमुपशाम्येत् यतस्त्वमस्त्रज्ञोऽसि ॥ २८ ॥
परेशत्रवस्तएववीरास्तान्हंतीतितथाफाल्गुनोऽर्जुनः अपः स्पृष्ट्वाआचम्य तंश्रीकृष्णंपरिक्रम्यप्रदक्षिणीकृत्य ब्राह्माय ब्रह्मास्त्रंनि-वर्त्तयितुम् ॥ २९ ॥
ततश्चउभयोर्ब्रह्मास्त्रयोः तेजसी शरैः संवृतेसंवेष्टिते परस्परंमिलित्वाववृधाते अवर्धेतांकिंकृत्वारोदसीद्यावापृथिव्यौखमंतरिक्षंचा-वृत्य यथाप्रलयेसंकर्षणमुखाग्निः उपरिस्थितोऽर्कश्चसंहत्यवर्धेतेतद्वत् ॥ ३० ॥

---

### दीपिनी ।

॥ २७ ॥ ३० ॥

---

## श्रीवीरराघवः ।

इत्थंसंस्तुतोविज्ञापितश्चभगवान्सर्वज्ञ आहवेत्थेतिद्वाभ्याम् प्राणबाधउपस्थिते सतिद्रोणपुत्रस्येतिकर्तरिषष्ठी तेनप्रदर्शितंप्रयुक्तंब्रह्मास्त्रमिदंतेजोवेत्थजानीहिअसौद्रोणपुत्रः संहारंप्रयुक्तब्रह्मास्त्रोपसंहारंनवेदनजानाति ॥ २७ ॥

तर्हिकथमिदमुपसंहर्तव्यमित्यत्राह नेति अस्यद्रोणपुत्रप्रदर्शितस्यब्रह्मास्त्रस्य प्रत्यवकर्षकंप्रतिभटमस्त्रंततोऽन्यतमंकिंचिदपिनविद्यतेऽतोऽस्त्रज्ञः ब्रह्मास्त्रप्रयोगोपसंहाराभिज्ञस्त्वमस्त्रतेजसाब्रह्मास्त्रतेजसैवोन्नद्धमुद्रिक्त मस्त्रतेजः ब्रह्मास्त्रतेजोजहित्वमापिब्रह्मास्त्रेणैवतदभिभावयेत्यर्थः ॥ २८ ॥

इत्थंभगवताप्रोक्तमस्त्रसंहारोपायंश्रुत्वा परवीरहाफाल्गुनोऽर्जुनः अपआचम्यतंकृष्णंपरिक्रम्यप्रदक्षिणी कृत्यब्रह्मास्त्रायप्रतिभटंब्राह्ममेवास्त्रंसंदधेप्रयुयोज ॥ २९ ॥

ततस्तयोरुभयोरस्त्रयोस्तेजसीशरैर्व्याप्तेऽन्योन्यंसंहत्यसंगत्यरोदसीद्यावापृथिव्यौखमाकाशंचावृत्यावेष्ट्यार्कवह्नीइव वबृधातेवृद्धिंगते ॥ ३० ॥

---

## श्रीविजयध्वजः ।

यत्तेजः तदिदंद्रोणपुत्रस्यब्राह्ममस्त्रंवेत्थेत्यन्वयः कीदृशंप्राणबाधेजीवाधिष्ठितदेहनाशेउपस्थितेआसन्नेसतिप्रदर्शितं प्राणबाधइत्येतत्कुतोवाऽवगतमितितत्राह नेति असौद्रौणिः अस्यअस्त्रस्यसंहारंनवेदयस्मादतोज्ञायते प्राणबाधेमुक्तमिति ॥ २७ ॥

अस्त्राणामन्यतमंकिंचिदस्त्रमस्यप्रत्यवकर्षणंप्रतीकारसमर्थंनिवर्तकंनाहि अतोऽस्त्रज्ञः विसर्गोपसंहारपूर्वकमस्त्रज्ञस्त्वमस्त्रतेजसाउन्नद्धमुद्धतमस्त्रतेजो जहीत्यन्वयः हिशब्दोहेतौ ॥ २८ ॥

परेषांशत्रूणांसंवंधिनोवीरान्हंतीतिपरवीरहाशत्रुवीरानितिवा तंकृष्णंपरिक्रम्यप्रदक्षिणीकृत्य ॥ २९ ॥

उभयोः शरसंवृतेतेजसीअन्योन्यंसंहत्यसंघट्टनंकृत्वारोदसीद्यावापृथिव्यौखमाकाशंचावृत्यार्कवह्निवत्वबृधातेइत्यत्वयः ॥ ३० ॥

---

## क्रमसन्दर्भः ।

॥ २७ ॥ ३० ॥

---

## सुबोधिनी ।

भगवानाहवेत्थेति गुरुपुत्रत्वादूगुरुणाब्रह्मास्त्र मस्मैदत्तंतदस्त्रं मत्तस्त्वंवेदतदेवेदमितितुजानीहि ननुब्रह्मास्त्राण्यपिवहूनिदृष्टानि प्रयुक्तानिचकदाचिदपि नैवंदृष्टमितिचतत्राहनैवासौवेदसंहारमिति अतअनभिज्ञेनप्रयुक्तत्वात् सर्वतोमुखमायातितर्हिकथंप्रयुक्तवान् तत्राह प्राणकृच्छ्रेउपस्थि तइति यावदूद्वयमपिभिन्नंभिन्नं वाक्यम् ॥ २७ ॥

तर्हिकिंकर्तव्यंतत्राहनह्यस्येति ब्रह्मास्त्रेब्रह्मास्त्रमेवप्रयोक्तव्यंनान्यत्तत् प्रतीकारमर्हतिअतः अस्त्रज्ञोभवान्उन्नद्धं ब्रह्मास्त्रतेजसैवजहित्वयापिप्रयुक्तमेतादृशमेवतेजोभविष्यति येनास्यप्रतीकारःस्यादिति ॥ २९ ॥

एवंभगवतोक्तेयदासीत्तदाह श्रुत्वेति परवीरहेतिसामर्थ्यंतंपरिक्रम्येतिकार्यसिद्धिः अस्यब्रह्मास्त्रस्यपूर्वब्रह्मास्त्रनिवर्त्तकत्वमेव नतु प्रयोक्तृघातकत्वं तदुक्तं ब्राह्मायेति ॥ ३० ॥

---

## श्रीविश्वनाथचक्रवर्त्ती ।

प्रदर्शितमिति दृष्ट्वैव किं न परिचिनोषि किं मां पृच्छसीति भावः संहारमस्योपसंहारं न वेद तर्हि कथमेतत् प्रयुक्तवा नित्यत आह प्राणबाध इति ॥ २७ ॥

तर्हि वारुणास्त्रादिना वह्निमुपशमयामीति चेत्तत्राह नह्यस्येति प्रत्यवकर्षणं निवर्त्तकं तस्मात्त्वम् अस्त्रतेजसा स्वप्रयुक्तब्रह्मास्त्रतेजसैव ब्रह्मास्त्रतेजो जहि यतो अस्त्रज्ञोऽसि ॥ २८ ॥

तं श्रीकृष्णं ब्राह्माय ब्रह्मास्त्रं निवर्त्तयितुम् ॥ २९ ॥

उभयो र्ब्रह्मास्त्रयो स्तेजसी शरैः संवृते संवेष्टिते परस्परं मिलित्वा वबृधाते रोदसी द्यावापृथिव्यौ यथा प्रलये संकर्षण मुखाग्निः उपरिस्थितो ऽर्कश्च ताविव ॥ ३० ॥

---

## सिद्धांतप्रदीपः ।

अस्यब्रह्मास्त्रस्यअन्यतमतोऽन्यतमंप्रत्यवकर्षणंनिवारकंनहि अतोऽस्त्रतेजसा ब्रह्मास्त्रतेजसैव ॥ २८ ॥

तंश्रीकृष्णम् ॥ २९ ॥

उभयोरस्त्रयोः शरसंवृतेतेजोमयशरसंयुक्तेतेजसी अन्योन्यंसंहत्यरोदसीद्यावापृथिव्यौखमा काशंचावृत्यप्रलयेऽर्कवह्निवत्वबृधातेअवर्धेतामित्यन्वयः ॥ ३० ॥

---

दृष्ट्वाऽस्त्रतेजस्तुतयोस्त्रींल्लोकान्प्रदहन्महत् ।
दह्यमानाः प्रजाः सर्वाः सांवर्तकममंसत ॥ ३१ ॥
प्रजोपप्लवमालक्ष्यलोकव्यतिकरंचतम् ।
मतं च वासुदेवस्य संजहारार्जुनो द्वयम् ॥ ३२ ॥
तत आसाद्य तरसा दारुणं गौतमीसुतम् ।
ववंधामर्षताम्राक्षः पशुं रशनया यथा ॥ ३३ ॥
शिविराय निनीषंतं रज्ज्वावद्ध्वा रिपुं वलात् ।
प्राहार्जुनं प्रकुपितो भगवानंबुजेक्षणः ॥ ३४ ॥

भाषाटीका

(श्री भगवानु वाच) यह द्रोणपुत्र का प्रदर्शित अस्त्र है तू जानताहै वह इसका संहार नहीं जानता है परन्तु प्राण वाधा उपस्थित होने से उसने ब्रह्मास्त्र संधान किया है ॥ २७ ॥

और कोई अस्त्र इसका प्रत्यव कर्षण ( शांत करने वाला ) नहीं है । तू तो अस्त्रज्ञ है अपने अस्त्र से इस उन्नद्ध अस्त्र तेज को संहार कर ॥ २८ ॥

( सूत उवाच ) परवीर हा अर्जुन ने भगवत् प्रोक्त सुनकर जलस्पर्श कर भगवान की प्रदक्षिणा कर ब्रह्म अस्त्र के निमित्त ब्रह्मअस्त्र का संधान किया ॥ २९ ॥

शर संवृत दोनों ब्रह्मास्त्रों के तेज अन्योन्य मिलकर द्यावापृथवी को आवरण कर प्रलयानल और सूर्य के समान बढने लगे ॥ ३० ॥

---

श्रीधरस्वामी ।

तयोर्द्रौणिफाल्गुनयोः तेनदह्यमानाः सांवर्त्तकंप्रलयाग्निममंसत मेनिरे ॥ ३१ ॥
लोकानांव्यतिकरं व्यत्ययंनाशमित्यर्थः वासुदेवस्यमतंचालक्ष्यब्रह्मास्त्रद्वयमुपसंहृतवान् ॥ ३२ ॥
गौतमवंशजागौतमीकृपी तस्याः सुतं अमर्षणकोपेनताम्रेअक्षिणीयस्यसः निष्कृपत्वेदृष्टांतः पशुंयथेति तस्यबंधनेधर्मइत्यत्रदृष्टांतः यथायाज्ञिकः पशुमिति रशनयारज्ज्वा ॥ ३३ ॥
शोकरोषादियुकस्यार्जुनस्य धर्मनिष्ठाख्यापनाय श्रीकृष्णवाक्यं तदाहषड्भिः शिविराय राजनिवेशाय नेतुमिच्छंतं प्रकुपितइवेति ॥ ३४ ॥

---

दीपनी ।

॥ ३१ ॥ ३४ ॥

---

श्रीवीरराघवः ।

किंचततस्त्रींल्लोकान्प्रदहत्तयोर्द्रौण्यर्जुनयोरस्त्रतेजसोः तत्प्रयुक्तास्त्रतेजोदृष्ट्वातेनदह्यमानाः सर्वाः प्रजाः सांवर्तकंप्रलयाग्निममंसतामन्यंत ॥ ३१ ॥
लोकव्यतिकरंलोकोपमर्दनरूपंप्रजोपद्रवं वासुदेवस्यमतमभिप्रायंचालक्ष्यार्जुनः द्वयंब्रह्मास्त्रद्वयंसंजहार उपसंहृतवान् ॥ ३२ ॥
ततआसाद्यसमीपमेत्यदारुणमु ग्रंगौतम्याद्रोणपत्न्याः कृप्याः सुतंद्रौणिममर्षणक्रोधेनताम्रेऽक्षिणी यस्यसोऽर्जुनस्तरसावलेनववंधयथारज्ज्वापशुंतद्वत् ॥ ३३ ॥
रिपुंद्रौणिंवलाद्रज्ज्वावध्वाशिविरायराजनिवेशमयंशिविरंप्रतिनिनीषंतंनेतुमिच्छंतमर्जुनंभगवानंवुजेक्षणः कृष्णः प्रकुपितआहधर्मपरीक्षार्थमितिभावः ॥ ३४ ॥

---

श्रीविजयध्वजः

सांवर्तकंप्रलयकालीनदाहम् अमंसतन्यरूपयन् ॥ ३१ ॥
व्यतिकरोनाशः अस्त्रोपसंहारलक्षणंवासुदेवमतम् ॥ ३२ ॥
गौतमीसुतंकृपीपुत्रं रशनयारज्ज्वा ॥ ३३ ॥
शिविरायस्कंधावाराय सेनानिवेशनस्थानायेतियावत् निनीषंतंनेतुमिच्छंतम् ॥ ३४ ॥

---

क्रमसन्दर्भः।

दृष्ट्वेति प्रदहत् दग्धुमारममाणम्। दह्यमानाः दग्धुमारभ्यमाणाः। वर्त्तमानसामीप्ये वर्त्तमानवद्वेति पाणिनिसूत्रम् ॥ ३१ ॥
मतं चेति। प्रथमं श्रीभगवतास्त्रप्रतिघातनमात्रं समादिष्टं न तु संहरणं। तच्च नूनं परास्त्रं न संहर्त्तुं शक्यमिति स्वशास्त्रैक्यं विधाय संहरणाभिप्रायेण। ततु तदाज्ञामात्रेण कृत्वापि पश्चात् प्रत्युत ताभ्यां वृद्धाभ्यामुपद्रवे सति स्थगितायमानमर्ज्जुनं प्रतिसंहारेऽनुमत इति भावः ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥

---

सुबोधिनी।

ततोयज्जातंतदाहसंहृत्येति उभयोस्तेजसीअन्योन्यंसंहृत्यमूलदाढर्यायशरयोः संवेष्टितेभूत्वाद्यावापृथिव्यौअंतरिक्षं चावेष्ट्यसंवर्तकंसूर्यसंकर्षणमुखानलवत् सर्वनाशार्थंववृधाते ॥ ३१ ॥
एतयोर्निवृत्तौहेतुमाहदृष्ट्वास्त्रतेजइति मिलितत्वादेकवचनंप्रजादक्षादयः अन्येऽपिभगवत्सांनिध्यात् ॥ ३२ ॥
अतःपरमनुपसंहारेप्रलयोभविष्यतीति भगवदभिप्रायंचज्ञात्वालोकानांनाशं भूरादीनांचसर्वोपकारार्थं एकगुरुत्वात्द्वयमात्मन्येवोपसंहृतमित्याहसंजहारेतिसंजहार उभयोस्तेजसीशरसंवृते आवृत्यरोदसीखंचववृधातेर्कवह्निवदिति पूर्वोक्तदाहलक्षणंचकारात्स्वस्यापि तेजोलाभात्भगवतः संबंधादप्येतन्मतमित्याहवासुदेवेति ॥ ३३ ॥
ततःस्वस्मिन्तेजोद्वयसंक्रमणानंतरंआसाद्य निकटेगत्वादूराद्वारुणपाशादिभिर्बंधनेन महान्क्लेशोभवतीतितरसाशीघ्रंप्रतिक्रियामवसरायदारुणमितिवंधनेहेतुः मरणशापंमारणंवाईश्वर भजनादिनावाकुर्यादिति ननुगुरुपुत्रंकथंवबंधतत्राह गौतमीसुतमिति नायंगुरोः सम्मतः पुत्रः गौतमीतस्यमाता गौतमवंशोत्पन्नत्वात् अनेनपुत्रस्नेहसंबद्धभार्याप्रार्थनया राजसंबंधोमरणंसूचितंअमर्षताम्राक्षइति अनेनब्रह्मवधादयो नस्फुरिताअवश्यंबंधनीयइति दृष्टांतमाहपशुमिति ॥ ३४ ॥

---

श्रीविश्वनाथचक्रवर्ती।

तयोर्द्रौणयर्ज्जुनयोः साम्वर्त्तकं प्रलयाग्निम् ॥ ३१ ॥
लोकानां भूरादीनां व्यतिकरं नाशम् ॥ ३२ ॥
गौतमवंशजा गौतमी कृपी तस्याः सुतम् ॥ ३३ ॥
शोकरोषादियुक्तस्याप्यर्ज्जुनस्य लोके धर्म्मनिष्ठाख्यापनाय प्रकर्षेणाह पश्चश्लोकीं अरुणेक्षण इत्यनुक्त्वा अम्बुजेक्षण इत्युक्ते वहिरेव प्रकुपित इति गम्यते ॥ ३४ ॥ ३५ ॥

---

सिद्धांतप्रदीपः।

तयो द्रौणयर्जुनयोः अमंसतमेनिरे ॥ ३१ ॥
प्रजायाउपप्लवमुपद्रवम् लोकानांव्यतिकरंसंहारंवासुदेवस्यमतमभिप्रायं चालक्ष्यास्त्रद्वयंसंजहार उपसंहृतवान् ॥ ३२ ॥
गौतमवंशात् शरद्वतोजातागौतमीकृपीतस्याः सुतम् तरसावलेन ॥ ३३ ॥
शोकाद्याविष्टस्याप्यर्ज्जुनस्यधर्म्मपरीक्षार्थंभक्तप्रियोभगवान्शिविरायसेनानिवेशस्थानायरिपुंनिनीषंतंनेतुमिच्छंतमाह ॥ ३४ ॥

---

भाषाटीका।

त्रिलोकी को प्रदहन करते दोनों ब्रह्मास्त्रों के उस तेज को देखकर दह्यमान सब प्रजा ने प्रलय काल ही उपस्थित माना ॥ ३१ ॥
उस लोक व्यतिकर प्रजा के उपप्लव को देखकर वासुदेव का मत जानकर अर्जुन ने दोनों शस्त्रों को संहरण किया ॥ ३२ ॥
तब दारुण गौतमी सुत को सहसा पकड कर अमर्षताम्र लोचन अर्जुन ने बांध लिया जैसे पशु को रसना से बांधते हैं ॥ ३३ ॥
रिपु को वलात् रज्जु से बांधकर अर्जुन जब शिविर को लेचला तब अंबुज लोचन भगवान कुपित होकर अर्जुन से बोले ॥ ३४ ॥

---

श्रीधरस्वामी।

अनागसोनिरपराधान् ॥ ३५ ॥
रिपोरपिसुप्तस्यवालस्यचवधोनधर्मइत्यन्यार्थैर्दर्शयति मत्तंमद्यादिना प्रमत्तमनवहितं उन्मत्तंग्रहवातादिना जडमनुधमं प्रपन्नंशरणागतं विरथंभग्नरथम् ॥ ३६ ॥
तद्वधोदंडरूपस्तस्यैवश्रेयः पुरुषार्थः यद्यतोदंडप्रायश्चित्तरहिताद्दोषात्सपुमानधोयातीति तथाचस्मरंति "राजभिर्धृतदंडास्तुकृत्वा पापानिमानवाः ॥ विधूतकल्मषायांतिस्वर्गंसुकृतिनोयथा" ॥ ३७ ॥ ३८ ॥ ३९ ॥

---

नैनं पार्थार्हसि त्रातुं ब्रह्मबंधुमिमं जहि।
योसावनागसः सुप्तानवधीन्निशि बालकान् ॥ ३५ ॥
मत्तं प्रमत्तमुन्मत्तं सुप्तं बालं स्त्रियं जडम्।
प्रपन्नं विरथं भीतं न रिपुं हंति धर्मवित् ॥ ३६ ॥
स्वप्राणान्यः परप्राणैः प्रपुष्णात्यघृणः खलः।
तद्वधस्तस्य हि श्रेयोयद्दोषाद्यात्यधः पुमान् ॥ ३७ ॥
प्रतिश्रुतं च भवता पांचाल्यै शृणवतो मम।
आहरिष्ये शिरस्तस्य यस्ते मानिनि पुत्रहा ॥ ३८ ॥

दीपिनी।

॥ ३५ ॥ ३८ ॥

---

श्रीवीरराघवः।

तदेवाहनैनमितिपंचभिःहेपार्थइमंब्रह्मबंधुंत्रातुंजीवयितुंनैवार्हसिकिंतुजहि "आततायिनमायांतंहन्यादेवाविचारयन्नि"तिस्मृतेरितिभावः तदेवाह योसौब्रह्मबंधुर्निशिवालकांस्तत्रापिसुप्तानवधीत् ॥ ३५ ॥

धर्मवित्पुमान्मत्तादिरूपंरिपुंनहंतिएवंतुधर्मस्थितिरित्यर्थः तत्रमत्तंमधुनाप्रमत्तमनवहितम् उन्मत्तंपित्तादिनाजडंकेवलमज्ञम् ॥ ३६ ॥

योऽघृणः निष्कृपावानतएवखलोदुरात्मायः पुमान्परेषांप्राणैः स्वप्राणान्प्रपुष्णातितस्यवधस्तस्यैवश्रेयस्करः अन्यथाममस्कादकृतप्राय श्चित्ताद्दोषात्पुमानधः नरकेपतति ॥ ३७ ॥

किंच ममशृण्वतः सतोभवतापांचाल्यैद्रौपद्यैप्रतिश्रुतंप्रतिज्ञातंकिमितिहेमानिनियस्तवपुत्रहंतातस्याशिरआहरिष्यामीति ॥ ३८ ॥

---

श्रीविजयध्वजः।

हेपार्थब्रह्मबंधुंब्राह्मणाधममेनमश्वत्थामानंत्रातुं नार्हासि किंतुयोसौनिशिरात्रौसुप्तान्बालकान् अवधीदितिमंजहिहनेत्यन्वयः अनागसः अकृतापराधान् तत्राश्वत्थाम्नोवध्यत्वेअनागस्त्वं सुप्तत्वं वालकत्वमितिहेतुत्रयमनादृत्य तद्धननंकारणमितिज्ञातव्यम् "अनागसंप्रसुप्तञ्चवालकं हंतियो नरः सखंडशोनिशातव्यइत्येवंमनुरब्रवीदि"तिस्मृतेः ॥ ३५ ॥

रिपुणानैतेहंतव्याइत्याह मत्तमिति मत्तंमद्यादिपानेनमदांधं प्रमत्तंविस्मृतिमंतम् उन्मत्तंग्रहग्रस्तं जडंस्वतोविवेकज्ञानशून्यं सुप्तंनिद्रितं बालंविशेषानभिज्ञं स्त्रियंबाल्येतारुण्येवार्धकेचपराधीनवृत्तिं प्रपन्नंशरणागतं विरथंरथादिसाधनराहितं विपथंयुद्धमार्गादपक्रांतामितिकोचि त्पठित्वाव्याचक्षते तद्भयचलनयोरितिधातोः भीतंचलितंयुद्धमार्गादपसृतामित्यनेनपुनरुक्तं नचकंपितार्थत्वं पाठविरोधादतोनुपासितगुरु चरणैरुत्प्रेक्षितमित्युपेक्षणीयम् ॥ ३६ ॥

खलइंद्रियारामः अघृणः दयारहितः तद्वधः तस्यहिंसकस्यहननंश्रेयः साधु कुतः येषांहिंसादिदोषादधोनरकंयातीतियस्मात्तस्मा दिति ॥ ३७ ॥

प्रतिज्ञाचरक्षणीयेत्याह प्रतिश्रुतामिति हेमानिनिमानार्हे यस्तेतव पुत्रान्हतवान् तस्याशिरआहरिष्यइतिममशृण्वतः सतः पांचाल्यै द्रौपद्यैप्रतिज्ञातंचयस्मात्तस्मादित्यन्वयः ॥ ३८ ॥

---

क्रमसन्दर्भः।

॥ ३५ ॥ ३८ ॥

---

सुबोधिनी।

नहिपराजितः शत्रुः अवध्यात्यक्तुंशक्यते रशनयाबंधनं ध्वजस्तंभेचेतिनीत्वाचपरोक्षमारणंचतदभिप्रेतंतस्यशिविरेनयनमनुचित मितिभगवान्निषेधयतिशिविरायेति सर्पइवायंनस्पृष्टव्यः स्पृष्टश्चेन्मारणीयएवअपकृतस्तुसर्वथामारणीयः तत्रगतेचमरणंभविष्यतिभग- वान्निषेधयतिशिविरायेतिअतोऽत्रैवमारणीयइत्यभिप्रायेणाहनीतिकार्यविचारेमारणीयः धर्मविचारेवंधनीयोपिनरिपुश्चगृहेननेयः बलाच्चन नेयःतत्रअसावधानेकिंचिदपकुर्यादिति शिविरंकटकोत्तरणस्थानंभगवानितिसर्वमारक्तत्वंसूचितम् अंबुजेक्षणइतिमक्तरक्षकत्वंसूचितंतस्मा देतद्वधेसर्वंसुस्थमितिनोचेद्बहुकर्तव्यमित्यभिप्रायः ॥ ३४ ॥

तदेवाहनैनमिति पृथासंबंधिनीभक्ताचेतितथावचनंमारणेऽपि दोषाभावेहेतुद्वयमाह ब्रह्मबंधुरिति अवधीदिति पित्रादिभिरप- कृतेअनपराधिनः पुत्रस्यवध्यानयनमुचितं न मारणं सुप्तस्यकस्यापिमारणमनुचितंनिशिचौरएवमारयतिनसाधुः बालकास्तुसर्वेषामेव- अवध्याः ॥ ३५ ॥

सुबोधिनी ।

विचारेणास्यवध्यतां वक्तुं वध्यावध्यनिर्णयमाहमत्तमिति शास्त्रेोपदिशविधाअवध्याः मत्तोमदिरादिना प्रमत्तःअसावधानउन्मत्तः पिशाचादिभिः जडः स्वभावतः अयंतुदशानांनान्यतरः तस्माद्वध्यः किंच सुप्तवालयोर्वधात् अधर्मयोग्या ॥ ३६ ॥

नन्वस्यभवत्वधर्मः अयंकथंवध्यः ब्राह्मणशरीरस्यपुरुषार्थसाधकत्वात्तस्मादस्यसर्वपुरुषार्थवधेस्वस्याधर्मइतितत्राहस्वप्राणानिति यदयंनवध्यतेतत्रकोहेतुः प्रमाणानिषेधस्तुनास्ति"जिघांसंतंजिघांसीयादि"तिब्राह्मणोधर्मः प्रतिष्ठितइतियद्यवध्यः तदास्मिन्धर्मोनास्तिदयाचेदवध्यः तदैतद्वधेबहूनांप्राणिनांजीवनंभवति अवधेत्वस्यैवकश्चनदेहादिनाउपकारोभविष्यतीतितदपिनास्ति तदाह तद्वधस्तस्य हिश्रेयइतिप्राणापानैर्जीवनंयस्यतत्रप्राणैःप्राणजीवनमुकंधर्मेतुयुक्तम्उभयतारकत्वात्अवश्यमेकस्यब्राह्मणस्यसंक्षयेस्वस्यैवयुक्तःधर्म्यात् तत्रापिप्रकर्षेणपोषणमयुक्तंवालानपियोहंतिसअघृणः घृणाकृपातद्रहितः खलः सूचकः पिशुनइतियावत्तस्मात्दुष्टवधः स्वधर्मः तस्यापि दुष्टशरीरेणतेशरीरांतरेणाधर्मोभवतीतिपूर्वजीवनस्याधर्मैकसाधनत्वात् ॥ ३७ ॥

किंच । महतांप्रतिज्ञापालनं महान्धर्मः त्वयाचप्रतिज्ञातमित्याहप्रतिश्रुतमिति अर्थतोयमनुवादः आहरिष्यइति ॥ ३८ ॥

---

श्रीविश्वनाथचक्रवर्त्ती ।

मत्तं मद्यादिना । प्रमत्तमनवाहितम् । उन्मत्तं ग्रहवातादिना ॥ ३६ ॥

तद्वधो दंडरूपस्तस्यैय श्रेयः । तथा च स्मरंति—"राजभिर्धृतदण्डाश्च कृत्वा पापानि मानवाः ! विधूतकलमषा यांति स्वर्गं सुकृतिनो यथे" ति । अन्यथा यद्यतो दोषात् ॥ ३७ ॥ ३८ ॥ ३९ ॥

---

सिद्धांतप्रदीपः ।

मत्तंमद्यादिना । प्रमत्तंधनादिना । उन्मत्तंग्रहादिना । जडंपूर्वबुद्धिकापराधवार्जितम् । तत्रद्रौणिः सुप्तघ्नः ॥ ३५ ॥ ३६ ॥

तद्वधस्तस्यैवश्रेयः । तथाचस्मृतिः । "राजभिर्धृतदण्डास्तुकृतपापानिमानवाः । विधूतकलमषायांतिस्वर्गंसुकृतिनोयथे"ति । यद्यतः राजदण्डादिप्रायश्चित्तरहिताद्दोषादधोनरकम् ॥ ३७ ॥

पांचाल्यैद्रौपद्यै ॥ ३८ ॥

---

भाषाटीका ।

हे पार्थ इसकी रक्षा नहीं करनी चाहिये उस ब्रह्मबंधु को दमन करना चाहिये । जिसने निरपराध सोते हुये बालकों को रात्रि में मारा है ॥ ३५ ॥

मत्त ( मद्य पान किये को ) प्रमत्त ( असावधान को ) उन्मत्त ( ग्रह वातादि पीडित को ) सुप्त ( सोये हुए को ) बालक स्त्री जड शरणागत और बिरथ शत्रु को भी कोई धर्मज्ञ नहीं मारता है ॥ ३६ ॥

जो निर्दय खल पुरुष पराये प्राणों से अपने प्राण पुष्ट करता है उसका बध करना उसही का श्रेय है । अन्यथा वह उस दोष से अधोगति पाता है ॥ ३७ ॥

और मेरे सुनते तैंने पांचाली से प्रतिज्ञा की थी कि ( हे मानिनि ) जिसने तेरे पुत्रों का बध किया है मैं उसका शिर काट लाऊंगा ॥ ३८ ॥

---

श्रीधरस्वामी ।

यद्यपिचोदितः तथापिहंतुंनैच्छत् आत्महनंपुत्रहंतारमपि यतोमहान् ॥ ४० ॥

गोविन्दः प्रियः सारथिश्चयस्यसः आत्मजान्शोचंत्यै ॥ ४१ ॥

तथापरिभवेनात्हतमानीतं कर्मणोजुगुप्सितेनदोषेणावाङ्मुखम् अपकृतमपकारिणंकृपयानिरीक्ष्य बामः शोभनः स्वभावोयस्याःसा ४२

---

दीपनी ।

॥ ३९ ॥ ४२ ॥

---

श्रीवीरराघवः ।

तत्रयस्मादसौपापात्माआततायात्मनस्तवबंधुहाकुमारघातीहेवीरभर्तुर्धृतराष्ट्रस्याविप्रियमिदंकर्मकृतवान्कुलपांसनः कुलदूषकश्चातोवध्यताम् ॥ ३९ ॥

इत्थंधर्मपरीक्षताधर्मपरीक्षार्थ मेवंकृतवताकृष्णेनचोदितोऽपिपार्थोऽर्जुन आत्मजहनमपिसुतद्दनमपितं गुरुसुतंद्रौणिंहंतुंनैच्छत् यतोऽर्जुनो [illegible]गुरुकृतोपकाराभिज्ञः ॥ ४० ॥

तदसौ वध्यतां पाप आततायात्मबंधुहा ।
भर्तुश्च विप्रियं वीर कृतवान् कुलपांसनः ॥ ३९ ॥
एवं परीक्षता धर्मं पार्थः कृष्णेन चोदितः ।
नैच्छद्धंतुं गुरुसुतं यद्यप्यात्महनंमहान् ॥ ४० ॥
अथोपेत्य स्वशिविरं गोविंदप्रियसारथिः ।
निवेदयत्तं प्रियायै शोचंत्यै आत्मजान् हतान् ॥ ४१ ॥
तथाहृतं पशुवत्पाशबद्धमवाङ्मुखंकर्मजुगुप्सितेन ।
निरीक्ष्य कृष्णाऽपकृतं गुरोः सुतं वामस्वभावा कृपया ननाम च ॥ ४२ ॥

श्रीवीरराघवः ।

ततोगोविंदःप्रियः सारथिश्चयस्यसोऽर्जुनः स्वशिविरमागत्यहतानात्मजान्प्रतिशोचंत्यैप्रियायैद्रौपद्यैतंद्रौणिंन्यवेदयत् ॥ ४१ ॥

तथाहृतमानीतंपशुनातुल्यंपशुवत्पाशेन बद्धंपशुर्यथापाशेनबध्यतेतद्वद्धद्धंकर्मणाः स्वकृतस्यजुगुप्सितेनजुगुप्साशब्दात्स्वार्थे सन्नंताद्भावेक्तः निंद्याहेतुनाअवाङ्मुखमपकृतमपकारिणमर्जुनेनापकृतंवा गुरोः सुतमश्वत्थामानंनिरीक्ष्यदृष्ट्वाद्रौपदीवामस्वभावाहेतुगर्भमिदंसुस्वभावत्वान्ननाम ॥ ४२ ॥

---

श्रीविजयध्वजः ।

"आत्मबंधुःसुतस्तोकःपुत्रोंगजउदाहृत" इत्यभिधानादात्मबंधून्सुतान्हतवानित्यन्वयः तस्मादसौपापः विप्रियंतुलोकदृष्ट्येति ज्ञातव्यम् ॥ ३९ ॥

हरिणाऽर्जुनंप्रतिद्रौणिवधप्रतिपादनमर्जुनस्यधर्मपरीक्षणाभिप्रायमेवनतुवधाभिप्रायमिति कथनपूर्वकमर्जुनस्यभक्त्यतिशयंकथयति एवमिति पार्थः गुरुसुतंहंतुंनैच्छदित्यन्वयः कथंभूतः यद्यप्येवंधर्मपरीक्षताकृष्णेनचोदितः तथापिनैच्छत् कथंभूतम् आत्मानंहतवंतं अयमपिकश्चिद्धेतुः पुनरपिकथंभूतः महान्महापुरुषः महत्त्वान्नैच्छदितिभावः ॥ ४० ॥

अथगोविंदः प्रियश्चसारथिश्चयस्यसतथोक्तः सपार्थः स्वशिविरमुपेत्यद्रौणि नाहतानात्मजान्पुत्रान् प्रतिशोचंत्यैप्रियायैद्रौपद्यैतंन्यवेदयदित्येकान्वयः ॥ ४१ ॥

वामस्वभावामृदुस्वभावा चारुतरशीलेतियावत् कृष्णा तथाहृतं तदेवाह पशुत्वात्पाशेनबद्धंकर्मजुगुप्सितेनकर्मणालज्जयावाङ्मुखं अपकृतंपुत्रहत्ययाऽपकर्तारमपिगुरोः सुतंनिरीक्ष्यकृपयाननामेत्येकान्वयः ॥ ४२ ॥

---

क्रमसन्दर्भः ।

अपकृतमिति किवन्तम् ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥

---

सुबोधिनी ।

तस्मात्सर्वथाअयंवध्यइत्युपसंहरतितदसावितिआत्मनः पुत्रान्तद्वंधूंश्चहंतीतिस्वामिहिताचरणमपिनजातमित्याहभर्तुश्चेतिवंशोविद्यमानेतस्याप्युपकारोभवेत्कुलद्वयकलंकजननाच्चतस्मादस्यवधेकस्यापिनापकारः ॥ ३९ ॥

तत्रैतानिवचनानिधर्मपरीक्षकानीतिसूतज्ञानात्सूतआहएवमितिवस्तुतस्तुबंधनमेवायुक्तंधर्मपरितर्इक्षितावाईश्वरवचनोल्लंघनाभावायवाअर्जुनेनतथाज्ञातमितितदुक्तं"कामतोब्राह्मणवधेनिष्कृतिर्नविधीयते"इतितुधर्मः त्रयोह्यत्रसंतिभगवानर्जुनअश्वत्थामाचेतित्रिष्वप्येकैकोवध्यहेतुरस्तिपरीक्षाभगवतिमहत्त्वमर्जुनेशिष्टेगुरुपुत्रत्वमिति ॥ ४० ॥

प्रकारांतरेणशनैर्गृहेसमागमनमाहअथेतिकार्यसिद्धौहेतुपदंगोविंदेतिउपसंहारेप्युक्तम्अयंतुशत्रुहस्तेपतितोमृतएवदेहस्तुवाणस्थानीयः प्रतिज्ञातंतुशिरः समानीतमितिन्यवेदयत्शोकमध्यएतस्याः धर्मज्ञानमितिशोचंत्याइत्युक्तंभार्याहितार्थंतुमारणंतत्तयानुक्तत्वात्संदेहादत्रैवसमानीतः आज्ञायांमारणीयइतिनिवेदनाभिप्रायः ॥ ४१ ॥

तथाहृतमितिकर्मणिजुगुप्सितंयुद्धेवालकमारणंतेनमुखाप्रदर्शनादवाङ्मुखत्वंकृ
तस्यास्तुतथाहरणमेवअनभिप्रेतंदूरेमारणमित्याह
कृष्णाद्रौपदीवामोमनोहरः स्वभावोयस्याः सर्वहितभावनात्महत्त्वबुद्ध्यानमनाभावेऽपिअहोकष्टंब्राह्मणयमेतादृशेस्थानेपतितामितिकृपयाननाम-
तस्यापितद्वः खदूरीकरणेच्छाकृपाआश्वासनहेतुत्वान्नमनस्यतथात्वम् ॥ ४२ ॥

---

श्रीविश्वनाथचक्रवर्त्ती ।

धर्म्मं परीक्षमाणेन यद्यपि चोदितः तदपि हंतुं नैच्छत् । आत्महनं पुत्रहंतारमपि । यतो महान् कृष्णस्य स्वभावाभिज्ञः । तस्य चायं स्वभावः स्वयं सर्व्वज्ञोऽपि धर्म्मादिनिष्ठाख्यापनाय तत्त्वतो भक्तान् परीक्षते इति । तत्र नैनं पार्थार्हसि त्रातुमित्यादिना रौद्र-रसं प्रदर्श्य धर्म्मवन्तमर्ज्जुनं यथा परीक्षते स्म तथा भर्त्तुः शुश्रूषणं स्त्रीणां परो धर्म्म इत्यादिना भवतीनां वियोगो मे न हि सर्व्वात्मना इत्यादिना अहं हि सर्व्वभूतानामादिरन्तोऽन्तरं वहिरित्यादिना च कर्म्मज्ञानयोगौ प्रदर्श्य प्रेमवतीर्गोपीः । वरञ्च मत् कश्चन मानवेन्द्र वृणीष्वेत्यादिना वरं वृणीष्व भद्रं ते कामपूरोऽस्म्यहमित्यादिना च भोगैश्वर्य्यादीन् प्रदर्श्यभक्तिमतः पृथुप्रल्हादादीन् दीयमानं न गृह्णन्तीत्यादिना अन्यानपि भक्तान् परीक्षाञ्चकारैवेति । तदीयसिद्धभक्ता अपि तथा परीक्षन्ते । तथाहि शुक एव षष्ठस्कन्धे पाप निस्तारार्थं पृष्टः प्रायश्चित्तमात्रमुक्त्वा परीक्षितः सिद्धांताभिज्ञतां नवमे श्रीकृष्णलीलां संक्षेपेणोक्त्वा लीलौत्सुक्यं द्वादशे ब्रह्मज्ञान मुपक्षिप्य भक्तिनिष्ठां परीक्षां चक्रे इति । न तत्र तत्र स्पष्टेऽर्थे तात्पर्य्यम् ॥ ४० ॥

न्यवेदयत् अयं ते पुत्रहन्ता आनीत इत्युक्तवान् ॥ ४१ ॥

तथा तेन प्रकारेण आहृतम् आनीतम् कर्म्मजुगुप्सितेन कर्म्मणो जुगुप्सया । अपकृतमिति किंवन्तम् अपकारिणम् । कृपया निरीक्ष्य । वामः शोभनः । ननाम च उवाच चेति चकाराभ्यां संभ्रमः सूचितः । सती तद्बन्धनासहत्वादियं भगवता धार्मिकत्वे परीक्षितादर्ज्जुनादपि साधुत्ववतीत्यर्थः ॥ ४२ ॥ ४३ ॥

---

सिद्धांतप्रदीपः ।

भर्तुः सुयोधनस्यरात्र्यांसुप्तान्हत्वातच्छिरश्शतशः पातनेनाप्रियंकृतवान् । आत्मनस्तववंधुहा ॥ ३९ ॥
आत्महनंपुत्रघ्नम् ॥ ४० ॥ ॥ ४१ ॥

तथावज्ञापूर्वकमाहृतमानीतम् सुप्तवधरूपकर्मजनितदोषेणावाङ्मुखमपकृतमर्ज्जुनेनावमानितम् वामः सुशोभनः स्वभावोयस्याःसा ।४२

---

भाषाटीका

इससे इस पापी का बध कर यह आततायी है इसने हमारे बंधुओं का वध किया है। और इस कुल पांसन नें अपने स्वामी दुर्योधन का भी प्रिय नहीं किया है ॥ ३९ ॥

इस भांत धर्म की परीक्षा करने को कृष्ण ने अर्जुन से बहुत कहा किन्तु अर्जुन ने गुरुपुत्र के मारने की इच्छा न की यद्यपि उस ने अपने पुत्र मारे हैं, तथापि अर्जुन की उसके मारने की इच्छा न हुई क्योंकि अर्जुन महा पुरुष था ॥ ४० ॥

गोबिन्द प्रिय सार थी अर्जुन अपने शिविर मैं आकर उन पुत्रों को सोचती द्रौपदी के संमुख उस अपराधी को निवेदन किया ॥ ४१ ॥

ऐसे परा भव से लाया गया, पशु के समान पाश बद्ध, जुगुप्सित कर्म से अवाङ्मुख और अपकृत गुरुसुत को देखकर वाम स्वभावा कृष्णा ( द्रौपदी ) ने प्रणाम किया और बडे संभ्रम से कृपायुक्त होकर बोली ॥ ४२ ॥

---

श्रीधरस्वामी

ननामचउवाचचेतिचकाराभ्यांसंभ्रमः सूचितः बंधनानयनमसहमाना ॥ ४३ ॥
सरहस्यः गोप्यमंत्रसहितः विसर्गः अस्त्रप्रयोगः उपसंहारः ताभ्यांसहितोऽस्त्रसमूहश्च ॥ ४४ ॥

किञ्च तस्य द्रोणस्यात्मनो देहस्यार्द्धं कृपी आस्ते । "अर्धत्वे हेतुः पत्नी । अर्धो वा एष आत्मनो यत् पत्नी" इति श्रुतेः जाया-पती अग्निमादधीयातामित्यादि श्रुतेः उभयोरेककारकत्वावगमाच्च । ननु भर्त्तरि मृते कथं सा जीवति तत्राह । नान्वगात् भर्त्तारम् यतो वीरसूः पुत्रवती ॥ ४५ ॥

तत् तस्मात् गौरवं गुरोः कुलं भवद्भिः कर्त्तृभिर्वृजिनं दुःखं प्राप्तुं नार्हति किन्तु पूज्यं वंद्यञ्च ॥ ४६ ॥

---

दीपनी ।

॥ ४३ ॥ ४६ ॥

---

उवाच चासहंत्यस्य बंधनानयनं सती।
मुच्यतां मुच्यतामेष ब्राह्मणो नितरां गुरुः ॥ ४३ ॥
सरहस्यो धनुर्वेदः सविसर्गोपसंयमः।
अस्त्रग्रामश्च भवता शिक्षितो यदनुग्रहात् ॥ ४४ ॥
सएव भगवान्द्रोणः प्रजारूपेण वर्तते।
तस्यात्मनोर्द्धंपत्न्यास्ते नान्वगाद्वीरसूः कृपी ॥ ४५ ॥
तद्धर्मज्ञ महाभाग भवद्भिर्गौरवं कुलम्।
वृजिनं नार्हति प्राप्तुं पूज्यं वंद्यमभीक्ष्णशः॥ ४६ ॥

श्रीवीरराघवः।

अस्यगुरुसुतस्यबंधनेनानयनंबंधनपूर्वकमानयनं बंधनमानयनंचवा अस्यार्जुनस्यार्जुनकर्तृबंधनानयनमितिवा असहंतीसतीद्रौपदी उवाच उक्तिमेवाह मुच्यतामित्यादिभिः सार्द्धैःपञ्चभिः एषद्रौणमुच्यतांमुच्यतांत्वरयाद्विरुक्तिः मोचनीयत्वेहेतुंदर्शयंतीविशिनष्टिब्राह्मण स्तत्रापिगुरुः ॥ ४३ ॥

नह्येषगुरुरपित्वस्यायंपितेत्यतआह सरहस्यइति भवतायस्यानुग्रहाद्रहस्येनसहितो धनुर्वेदः सविसर्गोपसंयमः प्रयोगोपसंहार सहितास्त्रग्रामः अस्त्रसमुदायश्चशिक्षितः ॥ ४४ ॥

सभगवान्द्रोणएवैषप्रजारूपेणवर्त्तते एतच्छब्दोद्रोणस्यैवाकारांतरेणावस्थितिपरामर्शकः "आत्मावैपुत्रइति"श्रुतेरितिभावः पुत्रविषयाप कारेणपितैवापक्रियतेइतिभावः - ननुसस्वर्गतः इत्यत्राह तस्येतितस्यद्रोणस्यात्मनः शरीरस्यार्द्धमर्द्धांशरूपातत्पत्नीकृपीवीरसूः पुत्रव त्यास्तेनान्वगान्नानुसामरणंकृतवती अर्द्धमितिसमांशाभिप्रायेणनपुंसकनिर्देशः "अर्द्धोवाएषआत्मनोयत्पत्नी"तिश्रुत्यभिप्रायेणार्द्धमित्युक्तं द्रोणस्यस्वर्गतत्वेऽपितदर्द्धशरीरभूतातत्पत्न्यपाक्रियेतैवेतिभावः ॥ ४५ ॥

तत्तस्मात्हेधर्मज्ञमदुक्तधर्माभिज्ञ हेमहाभागगुर्वपमानराहित्यरूपमहाभाग्ययुक्तभवद्भिर्गुरूणांबहुमंतृभिर्गौरवंकुलंगुरोःसंबंधिकुलंवृजि नंदुःखंप्राप्तुंप्रापयितुं भवद्भिर्हेतुभिर्वृजिनंप्राप्तुमितिवानार्हतिकिंत्वभीक्ष्णशः पौनःपुन्येनपूज्यंवंदनीयंचभवद्भिरित्यनुषंगः ॥ ४६ ॥

---

श्रीविजयध्वजः।

नकेवलंनत्वातूष्णीमभूत्किंतुवचनंचोवाचेत्याह उवाचेति अस्यद्रौणेर्बंधनेनानयनमसहमानासती प्रशस्तसौशील्यादिगुणवती ब्राह्मणएववर्णानांगुरुः अयंचानितरांयुष्माकंगुरुः ॥ ४३ ॥

अतिशयितगुरुत्वमाह सरहस्येति सरहस्यः सकीलकः धनुर्वेदः सविसर्गोपसंयमः प्रयोगोपसंहारसहितः अस्त्रग्रामः ब्रह्माद्यस्त्र समूहः यस्यद्रोणस्यानुग्रहात् भवताशिक्षितः अभ्यस्तः ॥ ४४ ॥

सएषद्रोणोभगवान्प्रजारूपेण "आत्मावैपुत्रनामासी"दितिश्रुतेः पुत्ररूपेणवर्तते यतोगुरुपुत्रस्यगुरुवत्पूजार्हत्वादितिभावः किंतुअन्यो पिहेतुरस्तीत्याह तस्येति तस्यद्रोणस्यात्मनः शरीरस्यार्द्धम् अर्धांगीसतीवीरसूः वीरपुत्रवतीकृपीसंप्रत्यास्तेपतिनान्वगात् अनुगमनंनकृत वतीयतोऽतोगुरुपत्नीभक्त्याचमुच्यतामितिभावः ॥ ४५ ॥

नकेवलंगुरुभक्तिरेवात्रहेतुः अन्योप्यस्तीत्याह तदिति गुरौगुरुपुत्रेषुवाचारनमनलक्षणोयोधर्मः तंजानातीतिधर्मज्ञः हेधर्मज्ञ भगानां भाग्यानांसमुदायोभागः महान्भागोयस्यसतथातस्यसंबुद्धिर्महाभाग अश्वत्थाम्नोदुःखेसतितन्मातुरपिदुःखस्यात्तेनतत्कोपेनास्मत्कुलस्या पिशापभवेदितियस्मात्तस्मादभीक्ष्णशः सर्वदासर्वैः पूज्यवंद्यंगौरवंकुलं भवद्भिर्वृजिनंपापंतन्निमित्तंदुःखंवाप्राप्तुंनार्हतियोग्यंनभवति ॥४६॥

---

सुबोधिनी।

वहिर्दुःखदूरीकरणार्थमुवाचचअसहंतीपरदुःखंदृष्ट्वास्वयमपि दुःखिता देहधर्मोद्धर्मोमहानितितस्याः कृपाधिक्यमुक्तं सतीतिधर्म स्वभावत्वं भर्तारमपि धर्मप्रमादे बोधये दितिषडंगसहितं धर्मवाक्यमाह मुच्यतामिति द्विरुक्तिः संदेहाभावाय विलंबाभावायच तत्रहेतुः एषब्राह्मण इतिएकस्मिन् धर्मिणिबहूनांधर्माणांस्थितावपि योमहान्धर्मः सआदरणीयः धर्मांगंचदेहोगौणः धर्मश्चमुख्यः देहविचारेण एषब्राह्मण तस्मात्सबलिष्ठमिति किंच धर्मोहिगुरुर्मूलं सचभगवान् तन्मुखत्वाद्ब्राह्मणोगुरुः लौकिकोपदेश कर्तृत्वपेक्षया चशस्त्रत्वंधर्ममूलं चब्राह्मणः भगवन्मुखस्यात्यंतगुरुत्वान्नितरांगुरुः ॥ ४३ ॥

## सुबोधिनी ।

न्यायविरोधे धर्मोदुर्बलइति तदविरोधं वदन्तीलौकिकन्यायेनापिगुरुत्वमाहसरहस्यइति रहांसिभवोरहस्योमंत्रः विसर्गः अस्त्राणांमोचनप्रकारः उपसंयमः उपसंहारः पुत्रादिष्वपितथाअवचनात् अस्त्रग्रामश्चब्रह्मास्त्रादयः नह्येतत् पाठमात्रेणस्फुरतिकिंतुकृपयेति तदाह यदनुग्रहादिति ॥ ४४ ॥

सद्रोणोनायमित्यत आहसएषइतितस्यैतद्रूपत्वेहेत्वंतरमाह भगवानितिब्रह्मविदोहिस्वेच्छयादेहत्यागः तत्रभवतामुपकारायदेहत्यागदशायांहतंपुत्रंश्रुत्वातन्माभूदितितद्रूपेणैवाहंजीविष्यामीतिपितृशरीरं त्यक्तवान् अतः सएवायंद्रोणः "आत्मावैपुत्रनामासी"तिश्रुतेः प्रजारूपेण वःनिवृत्तिधर्माविरोधीचधर्मोनयुक्तइति करुणामाहतस्यात्मनोर्द्धमिति मूलरूपेण्यात्मनोर्द्धपत्न्यास्तेपुत्ररूपेण भर्त्ताजीवतीतिपुत्रवतीनां नाहिगमनंततः पुत्रवधेतस्याअतः तस्याः कृपीतिनामव्यलीकंकापट्यंतदपिधर्मेवाधकं तस्मादस्यमोचनंनिर्व्यलीकमिति ॥ ४५ ॥

तदाह तद्धर्मज्ञेतिर्यदिकेनापिप्रकारेणगुरुकुलेदुः खप्रापणं तदाकृतोगुरुसेवालक्षणोधर्मः सकपटोभवति तथा धर्मं कापट्यंजानन्नपियस्तथाकरोतिसनधर्मज्ञः त्वंतुतद्धर्मज्ञः अतोहेधर्मज्ञ किंच महाभाग्येनगुरूणांसेवाकरणसामर्थ्यंभवति तज्जातेपिसामर्थ्येयदि सेवांनकुर्य्यात्तदामहदभाग्यंत्वंतुतद्विपरीतइति महाभागः किंचअन्यैर्गुरुकुलेवृजिनेप्राप्ते भवद्भिस्तत्दूरीकर्त्तव्यंतत्रतद्विपरीतंदृश्यतेभवद्भिरेवगौरवंकुलंवृजिनंप्राप्नोतितन्नयुक्तं तत्तथानार्हतितत्रहेतुः पूज्यंवंद्यमितिसर्वथामहद्भिर्गौरवंकुलंपूजामेवार्हतितत्प्रसादादेवमहत्त्वस्यजातत्वात् किंच अनम्रतयापूजामपिनार्हतिकिंतुसर्वदानमनमप्यर्हतीत्यर्थः किंच धर्मज्ञानाभावोपिवाधकः "यदेवविद्ययाकरोती"तिश्रुतेः ततः स्वस्मिन्निवास्मिन्नपियः सुखदुः खसमेपश्यतितत्कृतोधर्मः अन्यस्तु विषयधियारचितोयइतिवाक्यात् अधर्मप्रायः ॥ ४६ ॥

---

## श्रीविश्वनाथचक्रवर्त्ती ।

सरहस्यः गोप्यमंत्रसहितः विसर्गोपसंहाराभ्यां सहित इति यदि ब्रह्मास्त्रस्य विसर्गोपसंयमावेतत्पितुः सकाशाल्लब्धास्तदा कथमिमं वध्वा त्वमानेष्य इत्यकृतज्ञता ध्वनिता ॥ ४४ ॥

प्रजारूपेण आत्मा वै जायते पुत्र इति न्यायेन । आत्मनो देहस्यार्द्धं कृपी पत्नी "अर्द्धो वा एष आत्मा यत् पत्नी"ति श्रुतेः । अतएव भर्त्तारं नान्वगात् यतो वीरसूः ॥ ४५ ॥

गौरवं गुरोः सम्बंधि कुलं कर्तृ भवद्भिः करणैः वृजिनं दुःखं प्राप्तुं नार्हति यतः पूज्यमिति ॥ ४६ ॥

---

## सिद्धांतप्रदीपः ।

बंधनपूर्वकमानयनमसहंती ॥ ४३ ॥

सरहस्यः सगुह्यमंत्रः सविसर्गोपसंयमः सप्रयोगोपसंहारः ॥ ४४ ॥

सभगवान्द्रोणः एषः प्रजारूपेणावर्त्तते "आत्मावैपुत्रानामासी" तिश्रुतेः तस्यद्रोणस्य आत्मनोर्द्धं शरीरस्यार्द्धं पत्नीकृपीआस्ते । "एष आत्मनोयत्पत्नी"तिश्रुतेः नान्वगाद्भर्तारम् । यतोवीरसूः पुत्रवती ॥ ४५ ॥ ४६ ॥ ४७ ॥

---

## भाषाटीका ।

इसके बंधन पूर्वक ले आने को नहीं सहकर सती ( द्रौपदी ) बोली । इसे छोडदो छोडदो ! ब्राह्मण है विशेषतः गुरू ! ॥ ४३ ॥

रहस्य सहित धनुर्वेद शस्त्रों के बिसर्ग और संयम अस्त्रग्राम आपने जिसके अनुग्रह से सीखा है ॥ ४४ ॥

वही भगवान् द्रोण यह पुत्र रूप सें वर्तमान हैं इसीसे उनकी अर्द्धांगी पत्नी कृपी भी उनके अनुगत नहीं हुई है क्योंकि वह वीर माता है ॥ ४५ ॥

हे धर्मज्ञ ! हे महाभाग ! आपसे गुरुकुल दुख प्राप्त होने को योग्य नहीं है क्योंकि गुरुकुल की निरंतर पूजन और बंदना करना चाहिये ॥ ४६ ॥

---

## श्रीधरस्वामी ।

मृतवत्सा मृतपुत्रा ॥ ४७ ॥

विपक्षे दोषमाह यैरिति । तेषां राजन्यानां कुलं कर्म्म । कथंभूतं सानुबंधं सपरिवारं शुचा शोकेनार्पितं व्याप्तब्रं । ब्रह्मकुलं कर्तृ प्रदहति ॥ ४८॥

मारोदीदस्य जननी गौतमी पतिदेवता ।
यथाहं मृतवत्सार्ता रोदिम्यश्रुमुखी मुहुः ॥ ४७ ॥
यैः कोपितं ब्रह्मकुलं राजन्यैरजितात्मभिः ।
तत्कुलं प्रदहत्याशु सानुबंधं शुचार्पितम् ॥ ४८ ॥

सूतउवाच ॥

धर्म्यं न्याय्यंसकरुणंनिर्व्यलीकं समं महत् ।
राजा धर्म्मसुतोराज्ञ्याः प्रत्यनंदद्वचो द्विजाः ॥ ४९ ॥
नकुलः सहदेवश्च युयुधानोधनंजयः ।
भगवान् देवकीपुत्रोयेचान्ये याश्चयोषितः ॥ ५० ॥

श्रीधरस्वामी

धर्म्यमित्यादयो वचसः षड्गुणाः पूर्व्वश्लोकषट्के द्रष्टव्याः । तत्र धर्म्यं धर्म्मादनपेतं मुच्यतां मुच्यतामिति । न्याय्यं न्यायादनपेतं सरहस्य इत्यादि । सकरुणं तस्यात्मनोऽर्द्धं पत्नीति । निर्व्यलीकं तद्धर्म्मज्ञेति । सम मा रोदी दिति दुःखसाम्योक्तेः । महत् यैः कोपितमिति निष्ठुरोक्त्या हितोपदेशात् । एवम्भूतं राज्ञ्या वचः हे द्विजाः प्रत्यनन्दत् अनुमोदितवान् ॥ ४९ ॥
नकुलादयश्च प्रत्यनन्दन् । युयुधानः सात्यकिः ॥ ५० ॥

---

दीपनी ।

कुलं कर्म्मेति । कुलमिति परार्द्धश्लोकोक्तपदं कर्म्म द्वितीयैकवचनं कर्म्मपदमित्यर्थः ॥ ४८ ॥
धर्म्मपथ्यर्थन्यायादनपेते ( पा व्या ४ । ४ । ९२ ) इति सूत्रेण धर्म्मशब्दात् अनपेतमित्यर्थे यत्प्रत्ययोऽवगन्तव्यः ॥ ४९ ॥
( भगवान् देवकीपुत्र इति । सर्व्वेषां सत्त्वपरीक्षार्थं प्रथमं किञ्चिन्नोक्त्वा पश्चादनुमोदितवान् । भगवान् दुर्ज्ञेयाभिप्रायः प्रथमर्ज्जुनस्य तद्वधाय प्रवर्त्तनात् पश्चाद्द्रौपदीवचनानुमोदनाच्च । इति व्याख्यालेशः ॥ ५०-५६ ॥

---

श्रीवीरराघवः ।

एतद्विषयात्कृत्यात्कृपीनितरामहमिव दुःखिता स्यात्तत्त्वानुचितमित्यभिप्रायेणाह मृतावत्साः पुत्रायस्याः साऽतएवार्ताहंमुहुर्मुहुरश्रुमुखीयथारोदिमितथास्य ब्राह्मणस्यजननीपतिरेवदेवतायस्याः सागौतमीगौतमस्यदुहिताकृपीमारोदीत् ॥ ४७ ॥
किंचेदंकर्मास्मत्कुलस्याप्यनर्थकारीत्याहयैरिति अजितात्मभिरजितः क्रोधपरवशआत्मामनोयेषांतैर्येराजन्यैर्ब्रह्मकुलं विप्रकुलं कोपितं कोपविषयीकृतमतएव शुचाशोकेनार्पितंप्रापितंदुःखितंसदित्यर्थः तेषांराजन्यानांकुलंसानुबंधमनुबंधसहितमादहति अत्रप्रदहनक्रियाकर्तृ ब्रह्मकुलंकर्मतुराजन्यकुलम् ॥ ४८ ॥
हेद्विजाइत्थंधर्म्यंधर्मादनपेतंन्याय्यंन्यायान्नीतेरनपेतं सकरुणंकरुणायुक्तं निर्व्यलीकमनृताप्रियरहितं सममविषममनुरूपंमहदाशयगंभीरंचराज्ञ्याद्रौपद्यावचोनिशम्यधर्मसुतो युधिष्ठिरः प्रत्यनंदत् ॥ ४९ ॥
तथानकुलादयः येचान्येतद्व्यतिरिक्ताः पुरुषायाश्चस्त्रियः सर्वेतेप्रत्यनंदन्निति वचनविपरिणामेन पूर्वेणान्वयः ॥ ५० ॥

---

श्रीविजयध्वजः ।

यथाअश्रुमुखीमृतवत्सामृतपुत्रा अतएवार्त्ताहंमुहुर्निशंरोदिमि तथापतिरेवदेवतायस्याः सातथागौतमीकृपी अस्याश्वत्थाम्नोजननी मातामारोदीदित्येकान्वयः तस्मादस्मत्कुलहितायवामुच्यताम् अयंगुरुपुत्रइत्यर्थः ॥ ४७ ॥
विपक्षेबाधकमाह यैरिति अकृतात्मभिरशिक्षितबुद्धिभिर्यैराजन्यैर्ब्राह्मणकुलंकोपितंतत्कुपितंशुचार्पितंप्राप्तशोकं सानुबंधंसमूलभूतं तेषांराज्ञांकुलंतत्क्षणमेवप्रदहतीत्यन्वयः ॥ ४८ ॥
धर्म्यंधर्मादनपेतंन्याय्यंन्यायोपेतंदयासहितंनिर्व्यलीकंसमंशत्रुमित्रभावशून्यंसर्वशास्त्रानु सृतंवा अर्थतोमहत् ॥ ४९ ॥
एतेनकुलादयश्चप्रत्यनंदन्नित्याद्यात्तत्यान्वयः युयुधानः सात्यकिः येचान्येऽनुजीविनः तेचयाश्चस्त्रियः ताश्चनतंनुरितिभावः ॥ ५० ॥

---

क्रमसन्दर्भः ।

येरिति । शुचा शोकेन अर्पितं स्वस्मिन् प्रापितं व्याप्तमित्यर्थः । यद्वा शुचा शुक् तस्यामर्पितं निमज्जितं तया व्याप्तमित्यर्थः ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥

---

सुबोधिनी ।

ततएकपुत्रमरणेनरुदतांप्राणिनांयथान्योविनश्येत्तद्वदिदमित्याहमारोदीदिति तद्दुःखेनाहमतिदुःखिताअतएवमारोदीदितिप्रार्थना गौतमीतिऋषिवंशोद्भवत्वात्तद्रोदनमहाननर्थइतिसूचितंस्वरूपतोपिसामहती तदाह पतिदेवतेतिपातिव्रतायानयनजलंभूमौपतेच्चेत्तदा-निर्वीर्याभूमिर्भवतीतिप्रथा ननुपातिव्रतासर्वतत्त्वज्ञाअतोनरोदनंकरिष्यतीतितत्राह यथाहमिति विषयएतादृशोनतत्त्वज्ञानेनानिवर्त्ततइ-त्यर्थः ॥ ४७ ॥

यथावह्नेर्दाहकत्वेज्ञातोपिदाहेवेदनाभवत्येवेतिभावः धर्मस्तुईश्वराविरोधीभवतितत्रधर्मप्रवर्तकत्वात् ब्राह्मणाईश्वराएवतच्चेदन्यैः क्ष-त्रियादिभिः कोपयुक्तः क्रियेततदाअन्येषांकुलंसानुबंधंविनश्यतीतिमहतामुपदेशात् महद्वाक्याविरोधेनचधर्मः कर्त्तव्यइति तस्माच्छीघ्रं मुच्यतामितिसिद्धम् ॥ ४८ ॥

सूतस्तुद्रौपदीवाक्यम नूद्यसर्वसंमत्यातथेतिस्थापयतिधर्म्यमितिद्वाभ्यांधर्मादनपेतंधर्म्यम्एवंन्याय्यंनिर्व्यलीकंनिःकपटंसमंसमबुद्ध्यो क्तंमहद्वाजवदुक्तम्एवंवाक्येषड्गुणाः तत्रतत्रैवनियताः प्रथमतोराज्ञोऽभिनंदनेहेतुः धर्मपुत्रइतिइयमपितद्वार्येतितदाहअत्रसंमत्यर्थंद्विजाइ तिसंबोधनम् ॥ ४९ ॥

नकुलः सहदेवश्चेतिचकाराद्यथायुयुधानः सात्यकिः अर्जुनशिष्यः अर्जुनश्चगुरुशिष्ययोरेकत्रसंमतिकथनंतथैवधर्मनिर्णयइतिख्याप नार्थंभगवतोत्राभिनंदनंभक्तकृपया तदाहदेवकीनंदनइति देवकीनंदनपदं भक्तवश्यताज्ञापनार्थं सर्वजनीनोयंधर्मइतिख्यापयितुंसर्वस्त्रीपुरुषा णांसंमतमित्याहयेचान्यइतियोषित्पदमपिमूढत्वज्ञापनार्थम्अतोनपुनरुक्तिः धर्मोद्विविधः तत्त्वसहितः प्रमाणसहितश्चेतितत्रप्रामाणिकाः व्यवहारे तत्त्वसहितं धर्मंनमन्यंते तत्र प्रमाणेमूलमासन्यः सूत्रात्मकत्वात् अतः सूत्रभूतवाय्ववतारोभीमः ॥ ५० ॥

---

श्रीविश्वनाथचक्रवर्त्ती ।

मा रोदीत् मा रोदितु ॥ ४७ ॥

सानुबन्धं सपरिवारं शुचायामर्पितं शोकव्याप्तं तत्कुलं कर्म्म प्रश्हति ब्रह्मकुलमेव कर्त्तृ ॥ ४८ ॥

धर्म्यमित्यादयो वचसः षड्गुणाः पूर्व्वश्लोकषट्के द्रष्टव्याः । तत्र धर्म्यं धर्म्मादनपेत मुच्यतां मुच्यतामिति । न्याय्यं न्याया-दनपेतं सरहस्य इत्यादि । सकरुणं तस्यात्मनोऽर्द्धमिति । निर्व्यलीकं तद्धर्म्मज्ञेति । समं मा रोदीदिति दुःखसाम्योक्तेः । महत् यैः कोपितमिति निष्ठुरोक्त्या हितोपदेशात् ॥ ४९ ॥

नकुलादयश्च प्रत्यनन्दन् । युयुधानः सात्यकिः ॥ ५० ॥ ५१ ॥

---

सिद्धांतप्रदीपः ।

ब्रह्मकुलंकर्तृतत्कुलंराजन्यकुलंदहति ॥ ४८ ॥

हेद्विजाः राज्ञ्याः स्वभार्य्यायाः राजायुधिष्ठिरः प्रत्यनंदत् । अनुमोदितवान् ॥ ४९ ॥

नकुलाद्याः प्रत्यनंदन् युयुधानः सात्यकिः ॥ ५० ॥

---

भाषाटीका

अपने बालकों की मृत्यु के कारण से मैं आर्त होकर बार बार अश्रुमुखी होकर रोदन करती हूँ ऐसे पति देवता गौतमी इसकी मा मत रोवे ॥ ४७ ॥

जिन अजित चित्त राजन्यों ने ब्रह्म कुल को कोप कराया है उनके सानुबंध कुल को शोक संतप्त ब्राह्मण कुल शीघ्रही दाह करदेता है ॥ ४८ ॥

( सूत उवाच ) धर्म संयुक्त न्याय युक्त करुणा सहित निर्व्यलीक ( कपट शून्य ) और सम द्रौपदी के वचन को राजा धर्म पुत्र और सब ब्राह्मणों ने अभिनन्दन किया ॥ ४९ ॥

नकुल सहदेव सात्यकी अर्जुन और भगवान देवकी पुत्र ने भी अभिनन्दन और अन्य स्त्रीयों ने भी द्रौपदी के वचन को अभिनन्दन किया ॥ ५० ॥

---

तत्राहामर्षितोभीमस्तस्य श्रेयान् बधः स्मृतः ॥
न भर्तुर्नात्मनश्चार्थे योऽहन् सुप्तान् शिशून् वृथा ॥ ५१ ॥
निशम्य भीमगदितं द्रौपद्याश्च चतुर्भुजः ॥
आलोक्य वदनं सख्युरिदमाह हसन्निव ॥ ५२ ॥
ब्रह्मबंधुर्नहंतव्योह्याततायी बधार्हणः ॥
मयैवोभयमाम्नातं परिपाह्यनुशासनम् ॥ ५३ ॥
कुरु प्रतिश्रुतं सत्यं यत्तत्सांत्वयता प्रियाम् ॥
प्रियंच भीमसेनस्य पांचाल्या मह्यमेवच ॥ ५४ ॥

श्रीधरस्वामी ।

तस्य तथा विधस्य द्रौणे बंध एव श्रेष्ठः । अन्यथा तस्य नरकपात प्रसङ्गः स्यात् । तत्राह न भर्त्तुरिति । अहन् जघान ॥ ५१ ॥

चतुर्भुजोक्तेरयं भावः । भीमे तं हंतुं प्रवृत्ते द्रौपद्याश्च सहसा तन्निवारणे प्रवृत्तायाम् उभयोः संवरणायाविष्कृतचतुर्भुज इति । सन्दिहानस्य सख्युरर्ज्जुनस्य ॥ ५२ ॥

बधार्हणः बधार्हः । मयैव शास्त्रकृता ब्राह्मणो न हन्तव्य इति तथा "आततायिनमायान्तमपि वेदान्तपारगम् । जिघांसंतं जिघांसीयान्न तेन ब्रह्महा भवेदि"ति च वदता । तदुभयमप्यनुशासनं परिपालय ॥ ५३ ॥

तव च प्रतिज्ञां प्रपूरयेत्याह । प्रियां सांत्वयता त्वया यत् प्रतिश्रुतं हननं तच्च सत्यं कुरु प्रियञ्च कुरु । मह्यं मम । तत्र बधे भीमस्य प्रियं भवति अवधे द्रौपद्याः द्वये श्रीकृष्णस्य ॥ ५४ ॥

---

श्रीवीरराघवः ।

तत्रभीमस्त्वमर्षित आह किमितितस्यब्रह्मबंधोर्द्रौणेर्बधएवश्रेयान्स्मृतः कुतः यतोऽयंभर्त्तुर्धृतराष्ट्रस्यात्मनः स्वस्यचार्थप्रयोजनायनसुप्तान् शिशून्हतवान् किंतुवृथैवहतवानिति ॥ ५१ ॥

भीमस्यद्रौपद्याश्चगदितं वाक्यं श्रुत्वाचतुर्भुजोभगवान्श्रीकृष्णः सख्युरर्ज्जुनस्यबदनमालोक्यईषद्धसन्निवेदंवक्ष्यमाणमाह ॥ ५२ ॥

तदेवाहब्रह्मबंधुरितिद्वाभ्यांब्रह्मबंधुरितिहेतुगर्भंब्रह्मबंधुत्वादयंनहंतव्यः आततायीत्यपिहेतुगर्भं आततायित्वादयंबधार्हणः बधमर्हतीति बधार्हणः नंद्यादित्वात्कर्त्तरिल्युः मयैवमुभयमाम्नातंतथार्हत्वमनर्हत्वंचेत्युभयमापिसहेतुकमिति अनुशासनंमदनुशासनमनब्राह्मणंहन्यात् आततायिनमायां तंहन्यादेवाविचारयन्नित्यादिशास्त्रानुमतामिदमुभयंपाहिपालयनाति क्रमस्वतथैतदुभयंपालितंस्यात्तथा कुर्वित्यर्थः ॥ ५३ ॥

तत्रान्यतरकरणेऽन्यदकृतं स्यात्तत्त्वानुचितमित्यभिप्रायेणाहकुर्विति प्रियांद्रौपदींसांत्वयतात्वयायत्प्रतिश्रुतंप्रतिज्ञातंशिरश्छिद्यामितित्तदपिसत्यंयथार्थंकुरुभीमादीनांप्रियंचकुरु ॥ ५४ ॥

---

श्रीविजयध्वजः ।

तत्रतस्यामवस्थायाममर्षितोभीमः आहेत्यन्वयः योभर्तुर्दुर्योधनस्यात्मनः स्वस्यचनार्थेसुप्तान्शिशून्वृथाऽहन्हतवान् । वृथाशब्दो बध्यविषयः बध्यानामर्थेचनभवति तस्यबधस्तस्यैव श्रेयान्स्मृतः नास्माकंपापमितिभावः ॥ ५१ ॥

चतुर्भुजः भीमगदितंश्रुत्वाद्रौपद्याश्चवचनमितिशेषः सख्युरर्ज्जुनस्यवदनमवलोक्यमंदस्मितंकुर्वन्निदमाहेत्येकान्वयः ॥ ५२ ॥

हननहननेत्युभयं मयैवाम्नातम् अभिहितं यस्मात्तस्मादनुशासन मात्मवचनंपरिपाहीत्यन्वयः ॥ ५३ ॥ ५४ ॥

---

क्रमसन्दर्भः ।

चतुर्भुज इति तैः । यद्वा मयैवोभयमाम्नातमिति स्वादेशमाननाय दर्शितैश्वर्य्य इति भावः ॥ ५२ ॥ ५३ ॥
टीकायां तव च प्रतिज्ञामित्यत्र च शब्दाद्भीमादीनामिच्छाश्चेति ज्ञेयम् ॥ ५४ ॥

---

सुबोधिनी।

द्रौपद्युक्तत्वसहितंधर्ममनंगीकृत्यस्वयंस्वतंत्रधर्मनिरूपणेनतद्वधार्थंप्रवृत्तइत्याह। तत्रेति। अधर्मप्रतिपक्षत्वात्क्रोधः दर्शनेनैवदैत्यभयं जनयतीतिभीमः तस्यरक्षणापेक्षयावधएवश्रेयान्यतीऽयं निद्रितवधेवसुप्तान्शिशून्अहनत् एवंमन्यदप्यविचारितंकरिष्यतीतिबधः श्रेया नित्यर्थः भगवांस्तूभयरूपंधर्ममुक्तवानिति ॥ ५१ ॥

द्रौपदीभीमयोः परस्परविरोधउभयसमाधानार्थंक्रियाशक्तिद्वयाविर्भावार्थंभुजचतुष्टयाविर्भावंकृतवानित्याहनिशम्येति चतुर्भुजोजात इतिभिन्नंवाक्यम्परस्परविरोधेहिनप्रकारांतरस्थितिर्निकतापिविरुद्धानामुक्तिमात्रविरोधइतिपरस्परकार्यंजननाय स्वयंतावेवस्तंभितवान्अर्जु नस्तुसख्यपर्यंतमागतइतितत्रहापायितुंतन्मुखंविलोक्याभिप्रायमाहअर्जुनोऽपिसंमोहितइवजातः ॥ ५२ ॥

इतिहसन्निवोक्तम्अन्यथा द्रौपदीवाक्यस्याभिनंदितत्वात्सन्मानंकृत्वैवतं विसृजेत्भीमवाक्यंवाश्रुत्वामारयेत् तथाऽनानर्थोभवेत्अत उभयाकरणात्भगवान्मोहयन्निवाहएकंचेन्नकरोषितर्हिउभयात्मकंकुरु ननुविरुद्धंकथमुभयं कर्तुंशक्यमितिचेत्तत्राह मयैवोभयमाम्नातमिति भगवताह्युभयात्मकंवस्तुदृष्ट्वाउभयमाम्नातम्अन्यथा अनात्मत्वप्रसंगात् तच्चक्षात्वामयासमाम्नातंततज्ञात्वामत्साक्षित्वात्त्वयापिकर्तव्यम् अन्यथासखित्वंनस्यादित्यभिप्रायेणाहपरिपाह्यनुशासनमितिपरिपालयमदाज्ञाम् ॥ ५३ ॥

एतावतासर्वेषांसंमतंभविष्यतीत्याहकुरुप्रतिश्रुतमितिस्वप्रतिश्रुतंशिरसः समाहरणेतच्छिरोमाणिहरणेनपालितं भविष्यतिभीमसेनस्य- प्रियं बधेनतद्रूपनादिनापालितं भवतिद्रौपद्याश्चप्रियं मोचनेनतदपितेनैवपालितं भवातिमह्यंचप्रियंमुभयात्मककरणेन ॥ ५४ ॥

---

श्रीविश्वनाथचक्रवर्त्ती।

चतुर्भुज इति भीमे तं हंतुं प्रवृत्ते द्रौपद्याश्च तन्निवारणे प्रवृत्तायामुभयोर्वारणार्थं भुजचतुष्टयं प्रकटयामासेति भावः। हसन्निवेति सखे त्वद्बुद्धेरद्य सूक्ष्मत्वं परीक्षिष्ये इत्येतद्व्यञ्जकं स्मितमात्रमाविष्कुर्व्वन् ननु हास्यमित्यर्थः ॥ ५२ ॥

ब्राह्मणो न हन्तव्य इति "आततायिनमायान्तमपि वेदान्तपारगम्। जिघांसन्तं जिघांसीयान्नदोषो मनुरब्रवीदि"ति उभयमेवाम्नातम् आम्नायकृता मयैवानुज्ञातं शासनं परिपालय। तेन ब्राह्मणत्वं वर्त्तते एव इदानीं शस्त्रपाणित्वाभावात् आततायित्वं न वर्त्तते इत्यश्व- त्थामा न हन्तव्य इति मम मतम्। यत्तु ब्रह्मबन्धुमिमं जहीति पूर्व्वमुक्तं तत् तव धर्म्मपरीक्षार्थमेव। तत्रापि ब्रह्मबन्धुमिमं मा जहि त्रातुमर्हसि तथा विरथं भीतं रिपुं धर्म्मविन्न हन्तीति तथा तद्वधस्तस्य हि श्रेय इति न तु बधकर्त्तुरिति तथा तदसौ वध्यतां बन्धनविषयी भूतः क्रियतामिति तत्र तत्र वास्तवोऽर्थोऽपि मयार्पित इति ॥ ५३ ॥

त्वया यत् प्रतिश्रुतं प्रतिज्ञातम् आहरिष्ये शिरस्तस्येति तदस्य शिरश्छेदं वधं कुरु। तमेव भीमसेनस्य प्रियं कुरु। पाञ्चाल्याः प्रियमबधं च मह्यं मम च मदादीनां मत्प्रियत्वादुभयमपि प्रियं कुरु ॥ ५४ ॥

---

सिद्धांतप्रदीपः।

अहन् जघान ॥ ५१ ॥

द्रौपद्याःमुच्यतां मुच्यतामिति। भीमसेनस्यबधः श्रेयानितिगदितंतिशस्यसख्युरर्जुनस्यबदनमालोक्याह ॥ ५२ ॥

द्रौपद्याःमुच्यतां... ब्रह्मबंधुर्नहंतव्यइति आततायीबधार्हणाइति च मयैवोभयमाम्नातं तदनुकूलंब्राह्मणोनैवहंतव्यइति "आततायिन मायांतंहन्यादेवाविचार यन्नि"ति। अनुशासनंशास्त्रं च परिपाहिपालय ॥ ५३ ॥ ५४ ॥

---

भाषाटीका

तब अमार्षित भीमसेन ने कहा जिसने न अपने किसी स्वार्थ सिद्धि के लिये न भर्ता की प्रीति के निमित्त किंतु वृथा सोते हुए बालकों का बध किया है उसका बध करना ही उत्तम है ॥ ५१ ॥

यह कहकर भीमसेन स्वयं उसको मारने को उद्यत हुए द्रौपदी उनको रोकने को उठी दोनों की प्रवृत्ति रोकने को भगवान चतुर्भुज होकर मध्य में स्थित होकर अर्जुन का मुख देखकर हँसते से यह बोले ॥ ५२ ॥

( श्रीभगवानुवाच ) ब्रह्मबंधु का बध नहीं करना आततायी का बध करना यह दोनों शास्त्र मुख से मेरे ही वाक्य हैं। तुम इसी शासन का प्रतिपालन करो ॥ ५३ ॥

द्रौपदी के सान्त्व करने में जो प्रतिज्ञा की थी उसको सत्य करो, भीमसेन का भी प्रिय करो द्रौपदी का भी प्रिय करो और मेरा भी प्रिय करो ॥ ५४ ॥

---

श्रीधरस्वामी

हार्दमभिप्रायम् आज्ञाय ज्ञात्वा न ह्यशक्यमुभयं विदध्यादतोऽयमभिप्राय इति ज्ञात्वेत्यर्थः। असिना खड्गेन। मूर्द्धन्यं मूर्द्धनि जातम्। सहमूर्द्धजं सकेशम् ॥ ५५ ॥

सूत उवाच अर्जुनः सहसाऽऽज्ञाय हरेर्हार्दमथासिना ॥
मणिं जहार मूर्द्धन्यं द्विजस्य सहमूर्द्धजम् ॥ ५५ ॥
विमुच्य रसनाबद्धं वालहत्याहतप्रभम् ॥
तेजसा मणिना हीनं शिविरान्निरयापयत् ॥ ५६ ॥
वपनं द्रविणादानं स्थानान्निर्यापणं तथा ॥
एषहि ब्रह्मबंधूनां बधोनान्योस्ति दैहिकः ॥ ५७ ॥
पुत्रशोकातुराः सर्वेपांडवाः सह कृष्णया ॥
स्वानां मृतानां यत्कृत्यं चक्रुर्निर्हरणादिकम् ॥ ५८ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्यां प्रथमस्कन्धे पारीक्षिते द्रौणिदण्डो नाम सप्तमोऽध्यायः ॥ ७ ॥

श्रीधरस्वामी ।

मणिना च हीनं निरयापयत् निःसारितवान् ॥ ५६ ॥
अनेन च श्रीकृष्णोक्तं सर्व्वं सम्पादितवानित्याह वपनमिति ॥ ५७ ॥
निर्हरणं दाहार्थं नयनम् ॥ ५८ ॥
इति श्रीमद्भागवतभावार्थदीपिकायां प्रथमस्कन्धे सप्तमोऽध्यायः ॥ ७ ॥

---

दपिनी ।

वपनमिति सर्व्वमुण्डनामित्यर्थः ॥ ( द्रविणस्य धनस्य आदानं ग्रहणं द्रविणादानमिति ) ॥ ५७ ॥ ५८ ॥

---

श्रीवीरराघवः ।

ततएवमुक्तोऽर्जुनोभावज्ञोहरेर्हार्दंहृद्गतमभिप्रायमाज्ञायासिनाखड्गेनसाधनेनाद्विजस्यद्रौणेर्मूर्द्धन्यंमूर्ध्निधारितंमणिंमूर्द्धजैः केशैः सहितं यथातथाजहारहृतवान् ॥ ५५ ॥
ततोरसनांविमुच्यपूर्वमेववालानां हत्ययाहताप्रभायस्यतंतेजसा तेजःपदेनमणिनाचहीनंराहितंसुतरांहतप्रभंशिविरान्निरयापयद्बहिर्निःसारयामास ॥ ५६ ॥
नन्वेवमपिस्वप्रतिश्रुतंभीमगदितंचनकृतमेवेत्याशंकमानंशौनकं प्रत्याहसूतः वपनमितिवपनंमुंडनंद्रविणादानंधनापहरणंस्थानान्निर्यापणं चेत्येषएवहिब्रह्मबंधूनांबधः अन्योदैहिकः शिरःपाण्यादिच्छेदरूपः नास्तिहितत्रैतत्त्रयमपिकृतमेवतेनैवबधोपिकृतप्रायएवेतिभावः ॥ ५७ ॥
ततः सर्वेपांडवायुधिष्ठिरादयः कृष्णयाद्रौपद्यासहशोकपीडिताःसंतोमृतानांस्वानांपुत्रबंधूनांयत्कर्त्तव्यंनिर्हरणादिकंतच्चक्रुः ॥ ५८ ॥
इतिश्रीवीरराघवटीकायां प्रथमे सप्तमः ॥ ७ ॥

---

श्रीविजयध्वजः ।

अर्जुनः सहसाझटितिहरेः त्वदिंगितम् आज्ञायसम्यक्ज्ञात्वाक्षुरधारेण असिनाद्विजस्यसहमूर्धजं केशैः सहितंमूर्धन्यं मूर्ध्नासहोत्पन्नं मणिंजहारेत्यन्वयः ॥ ५५ ॥
तेजसासामर्थ्येनशरीरकांत्यावारत्नेनचरहितं शिशूनांवधेनहतप्रभम् अलक्ष्मीनिधानंरज्ज्वाबद्धं विमुच्यशिविरान्निरयापयत् शवनिर्गमनवर्त्मिनिष्कासयामासेत्येकान्वयः ॥ ५६ ॥
ब्रह्मबंधूनां प्राणत्यागलक्षणमरण प्रतिनिधिरयंवधइत्याह बंधनमिति ब्रह्मबंधूनामेषएवबधः वधप्रातिनिधिः अन्योदैहिकोनेत्रोत्पाटनादिको नास्तीत्यन्वयः शास्त्रविहितोनास्तीतिभावः कोऽसावितितदाह बंधनमिति पाशेनकरौपृष्ठेकृत्वाबंधनं द्रविणादानंहिरण्याहरणं स्थानान्निर्यापणं स्वदेशान्निर्यापणं तथाशब्दः प्रत्येकमभिसंबंधयितव्यः ॥ सात्वयन्नित्यारभ्यनान्योस्तिदैहिकइत्यंतंयदुक्तं तदिदंद्रौणिनास्वप्नेदृष्टंसंकथितं ॥ अन्यथाग्रंथांतरविरोधः तत्रभीमेनकृतमित्युक्तत्वादितिज्ञातव्यम् ॥ ५७ ॥
इति श्रीभागवते प्रथम स्कंधे विजयध्वज टीकायां सप्तमोऽध्यायः ॥ ७ ॥

---

क्रमसन्दर्भः ।

अर्जुनः सहसाऽऽज्ञायेत्यस्यायं भावः । श्रीकृष्णेनानेन ब्राह्मणो न हन्तव्य इत्येषा श्रुतिर्ब्रह्मबन्धुर्न हन्तव्य इत्यनेन स्पष्टीकृता । तत्र ब्रह्मबन्धुरपीति हि तस्यास्तात्पर्य्यम् ब्रह्मबन्धुत्वं चास्याततायित्वेनैव विवक्षितम् । बधार्हत्वं त्वाततायिमात्रेण विहितम् । तत्रायान्तं जिघांसन्तमिति विशेषणं तत्परीक्षार्थं गोपितम् । तत्र हि तत्र तद्वोद्यतस्यैव हननमायाति विशेषणवैयर्थ्यात् । अतएव प्रतिज्ञातत्वेन तुल्यत्त्वेऽपि द्रोणस्योद्यतस्य बधोऽनुमतो बद्धस्य तु नास्य । आततायित्वं न्याय्ये युद्धेऽपि मतम् आततायिनो मे इति श्रीभीष्मवचनात् । यत्तु परिपाह्यनुशासनमित्युक्तं तच्च ब्रह्मबन्धुमिमं जहीति पूर्व्वोक्तानुसारेणैव । तदेवमस्यानुशासनत्रयस्य द्रौपदीभीमयोर्मिथोविरुद्धवाक्यद्वयस्य स्वप्रतिज्ञायाश्च युगपत् समाधायकं मणिहरणादिकमेव करिष्यामीति ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥

इति श्रीमद्भागवतप्रथमस्कन्धस्य श्रीजीवगोस्वामिकृतक्रमसन्दर्भे सप्तमोऽध्यायः ॥ ७ ॥

---

सुबोधिनी ।

भगवत्कृपयाअर्जुनः सर्वरूपमेकंज्ञात्वातथाकृतवानित्याहद्वाभ्याम् अर्जुनइतिकृत्वाहेतुत्वात्सहसेतिअथतदनंतरमेवविमोचनात्पूर्वम-सिनाखड्गेनाशिरसश्चूडामणिमशिखासहितं द्विजस्यहृतवान्द्वंद्वंद्युभयात्मकंतदग्रेवक्ष्यतोत्रसंगत्वादुभयात्मकस्य ॥ ५५ ॥

तृतीयमाहविमुच्येतिपूर्वरशनां बद्धंतस्यतूष्णींभावेहेतुः वालहत्याहतप्रभमितितेजसामणिनाहीनामितितृतीयसमोपद्वयोरनुवादः शिवि-रात् स्वकटकात् निरयापयदिति सतांस्थानान्निर्यापणंनसर्वत्रवसत् सुतस्यप्रवेशोनभविष्यतीतिज्ञापितम् ॥ ५६ ॥

कृतस्यसर्वरूपस्यतथात्वं विवृणोति वपनमितिहीतिपूर्वोक्तप्रमाणादयोऽनुसंधेयाः ब्रह्मबंधूनांदेत्यांशब्राह्मणानां देहिको देहच्छेदना त्मकः ॥ ५७ ॥

प्रासंगिकेगतेप्रस्तुतमुपसंहरतिपुत्रेति ॥ ५८ ॥

इतिश्रीभागवतसुबोधिन्यांश्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायांप्रथमस्कंधेसप्तमोऽध्यायः ॥ ७ ॥

---

श्रीविश्वनाथचक्रवर्त्ती ।

हार्द्दमभिप्रायम् आज्ञाय ज्ञात्वेति आहरिष्ये शिरस्तस्येति मया प्रतिज्ञातोऽस्य शिरश्छेद एव कुरु प्रतिश्रुतं सत्यमिति वदता भगवता-प्यभिप्रेतः पुनश्च पाञ्चाल्याः प्रियं कुर्व्विति वदता शिरसो न छेदश्च विहितः न ह्यशक्यमुभयं विदध्यात् अत एव मया कर्त्तव्यमिति निश्चित्येत्यर्थः । मूर्द्धन्यं मूर्ध्नि भवम् मूर्द्धजाः केशास्तैः सहितं चिच्छेद तेन शिरस्थमपि वस्तु लक्षणया शिरःशब्देनोच्यते इति शिर-श्छेद एव अभिधेयस्तेन शिरश्छेद इत्यश्वत्थाम्नो बधोऽवधश्च कृत इत्यर्थः ॥ ५५ ॥ ५६ ॥

तेन शास्त्रोक्तं धर्म्ममेव कृतवानित्याह वपनं शिरोमुण्डनम् ॥ ५७ ॥

निर्हरणं दाहार्थं नयनम् ॥ ५८ ॥

इति सारार्थ दर्शिन्यां हर्षिण्यां भक्तचेतसाम् । प्रथमेसप्तमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ ७ ॥

---

सिद्धांतप्रदीपः ।

मूर्द्धन्यंमूर्द्धनिजातम् । जहारहृतवान् ॥ ५५ ॥

शिविरान्निरयापयत् निःसारयामास ॥ ५६ ॥ ५७ ॥

निर्हरणादिकंमृतानांयत्कृत्यंदाहार्थंनिः सारणादिकंतच्चक्रुः ॥ ५८ ॥

इतिश्रीमद्भागवत सिद्धांतप्रदीपेप्रथमस्कंधीयेसप्तमाध्यायार्थ प्रकाशः ॥ ७ ॥

---

भाषा टीका ।

( सूत उवाच ) अश्वत्थामा के विना मारे भीमसेन का प्रिय नहोगा मारने से द्रौपदी का प्रिय न होगा भगवान् मारने की और न मारने की आज्ञा देते हैं दोनों कार्य किस भांत होंगे । यह भगवान का अभिप्राय जानकर अर्जुन ने खड्ग से अश्वत्थामा का मस्तक से मूर्द्ध जों ( केशों ) को मूड़कर उसके मूर्द्धन्य मणि को हरलिया ॥ ५५ ॥

वाल हत्याहत प्रभ रसनाबद्ध को खोल दिया और तेज हीन मणि हीन ब्राह्मण को शिविर से बाहर निकाल दिया ॥ ५६ ॥

शिर मूंड़ देना धन छीन लेना स्थान से निकाल देना यही ब्रह्म बंधुओं का बध है उनको दैहिक प्राण दंड नहीं है ॥ ५७ ॥

पुत्र शोकातुर सबरे पांडवों ने द्रौपदी सहित अपने मृत बंधुओं का जो कुछ निर्हरणादिक कृत्य था सो किया ॥ ५८ ॥

प्रथम स्कंध का सप्तम अध्याय ॥ ७ ॥

## अष्टमोऽध्यायः

सूतउवाच ॥　　अथते संपरेतानां स्वानामुदकमिच्छताम् ।
दातुं सकृष्णा गंगायां पुरस्कृत्य ययुः स्त्रियः ॥ १ ॥
ते निनीयोदकं सर्वे विलप्य च भृशं पुनः ।
आप्लुता हरिपादाब्जरजः पूतसरिज्जले ॥ २ ॥
तत्रासीनं कुरुपतिं धृतराष्ट्रं सहानुजम् ।
गांधारीं पुत्रशोकार्त्तां पृथां कृष्णां च माधवः ॥ ३ ॥
सांत्वयामास मुनिभिर्हतबंधून् शुचार्पितान् ।
भूतेषु कालस्य गतिं दर्शयन्नप्रतिक्रियाम् ॥ ४ ॥

श्रीधरस्वामी ।

अष्टमे कुपितद्रौणेरस्त्रादूरक्षा परीक्षितः । कृष्णेन तत्स्तुतिः कुन्त्या राज्ञः शोकश्च कीर्त्यते ॥ ० ॥

ते पाण्डवाः सम्परेतानां मृतानां गङ्गायामुदकंदातुम् । सकृष्णाःकृष्णेन सहिताः । स्त्रियः स्त्रीः पुरस्कृत्य अग्रतः कृत्वा तस्मिन् कार्य्ये स्त्रीपुरःसरत्वविधानात् ॥ १ ॥

उदकं निनीय दत्त्वा । हरिपादाब्जरजोभिः पूता या सरित् गङ्गा तस्या जले । पुनर्ग्रहणात् आदावपि स्नाता इति गम्यते ॥ २ ॥

कुरुपतिं युधिष्ठिरम् । सहानुजं भीमादिभिः सहितम् । ( पुत्रशोकार्त्तामिति तिसृणां विशेषणम् ) ॥ ३ ॥

मुनिभिः सह ॥ ४ ॥

---

दीपनी !

॥ ० ॥ १—९ ॥

श्रीवीरराघवः ।

अथतेपांडवाः संपरेतानांस्वानामुदकंतिलोदकम् एतच्छ्राद्धादीनामप्युपलक्षणम् इच्छतांप्रेतरूपेणकामयमानानांदातुमुदकंदातुंस्त्रियः द्रौपद्यादिस्त्रीः पुरस्कृत्यकृष्णेनसहितागंगांययुः ॥ १ ॥

तत्रतेसर्वेपांडवादयोभृशंपुनः विलप्यसंपरेतानामुदकंनिनीयप्रदायहरेः कृष्णस्यपादाब्जयोरजसापूतेसरितः गंगायाजलेआप्लुताः स्नात्वाविशुद्धाबभूवुरित्यर्थः ॥ २ ॥

तत्र गंगातीरेआसीनमुपविष्टंसहानुजंकुरूणांपतिं धृतराष्ट्रंपुत्रशोकार्त्तामिति गांधारीकृष्णायोर्विशेषणं तत्रगांधारीधृतराष्ट्रभार्यांपृथाकुंतीकृष्णाद्रौपदीमाधवः कृष्णः सांत्वयामासेत्युत्तरेणान्वयः सहानुजमित्यत्रानुजशब्दः पांडुसुतधर्मराजादीनामुपलक्षकः तेषामप्यत्रशोकार्त्तत्वेनसांत्वनीयत्वान्नतुविदुरपरः तस्यपूर्वमेवधृतराष्ट्रेण निर्यापितत्वाद्यादवक्षयानंतरमागामिनस्तदावस्थानासंभवात् एतच्चास्मिन्नृतृतीयेस्कंधेस्फुटीभविष्यति ॥ ३ ॥

हताबंधवोयेषांतानतएवशुचाशोकेनार्पितानार्दितान् धृतराष्ट्रादीन्बंधून्भूतेषुलोकेषुनाविद्यते प्रतिक्रियाप्रत्युपायोयस्यास्तांकालस्यगतिंजन्ममरणाद्युत्पादनरूपांदर्शयन् मुनिभिः सहसांत्वयामास माधवइतिकर्तृपदमनुषंगेणयोजनीयम् एवमुत्तरत्रापिज्ञेयम् ॥ ४ ॥

---

श्रीविजयध्वजः ।

* भक्तिविधानार्थं भक्तवात्सल्याद्यचिंत्यमाहात्म्यं मुरारेर्निरूप्यतेऽस्मिन्नध्यायेतदर्थं मृतानांयत्कर्तव्यंलौकिकंतत्उच्यते पुत्रशोकेति सर्वे पांडवाः मृतानांप्राणवियोगं प्राप्तानांस्वानांबंधूनांयत्कृत्यं निर्हरणादिकंतच्चकुरित्यन्वयः ॥ १ ॥

* भीमहतान्दर्शयइतिपुरायत्प्रतिश्रुतं तदस्यैद्रौपद्यैनिशामयामासदर्शयांचकारेत्यन्वयः ॥ २ ॥

* हताश्चितेतवअरिदारान्शत्रुभार्याः मुक्तमूंधजान्मुक्तकेशीः भीमस्यगदयाभग्नाऊरवः उत्सगाश्चवक्षांसिचयेषांतेतथोकाः उरूणिविस्तीर्णानिवक्षांसीतिवा ॥ ३ ॥

---

* सूतउवाच ॥ पुत्रशोकातुराः सर्वेपांडवाः सहकृष्णया ॥ स्वानांमृतानांयत्कृत्यंचक्रुर्निर्हरणादिकम् ॥ १ ॥
* अथोनिशामयामासकृष्णायैभगवान्पुरा ॥ पतितायाः पादमूलेरुदंत्यायत्प्रतिश्रुतम् ॥ २ ॥
* पश्यराज्ञ्यरिदारांस्तेरुदतोमुक्तमूर्धजान् ॥ आलिंग्यस्वपतीन्भीमगदाभग्नोरुवक्षसः ॥ ३ ॥

इति विजयध्वजपाठः

## श्रीविजयध्वजः ।

स्त्रियः पुरस्कृत्यसंपरेतायुद्धेमृताः सकृष्णाद्रौपद्यासहिताः कृष्णेनयादवेंद्रेणसहितावा ॥ १ ॥

तेपांडवास्तिलोदकंनिनीयदत्त्वाभृशंविवलप्यपरिवेदनलक्षणं रोदनंकृत्वापश्चाद्धरेः पादपद्मपरागेणपूतेशुद्धेसरितोगंगायाः जलेआप्लुताः स्नाता अभूवन्नित्यन्वयः ॥ २ ॥

अनुजेनसंजयेनसहवर्तमानम ॥ ३ ॥

मुनिभिः सह हताः पुत्रायेषांतेतथातान् भूतेषुप्राणिषुकालरूपस्यहरेः गतिंविक्रममप्रतिक्रियामपरिहार्यांदर्शयन् ॥ ४ ॥

---

## क्रमसन्दर्भः ।

मुनिभिर्द्वारभूतैः ॥ ४ ॥ ५ ॥ ६ ॥

---

## सुबोधिनी ।

एवंहिसर्वभक्तानांभगवद्वाक्यनिष्ठता सर्वहेतुकथायैचसप्तमेबोविनिरूपित १ अष्टमेयस्यवाक्यस्यकरणाद्यद्धिजायते दोषश्चेत्तत्समाधानंगुणत्वे दाहपोषणम् २ पूर्वाध्यायांतेअश्वत्थाम्नोपमननं निरूपितम् अनिवर्त्यब्रह्मास्त्रप्रक्षेपहेतुत्वेनअष्टमेतुपदार्थचतुष्टयं निरूप्यतेभगवतोद्भुतकर्म निरूपणायब्रह्मास्त्रदाहः तस्यरक्षाततोद्भुत कर्मनिर्णयस्तोत्रं ततोद्भुतकर्मेतत्रप्रथमं ब्रह्मास्त्रप्रसंगमाहअथेति शङ्कनंतरंहि संस्कारः कर्त्तव्यः साचशुद्धिर्वाह्याभ्यंतरभेदेन द्विधेतिप्रथमं वाह्यशौचमाहद्वयेन मृतानांप्रेतत्वविमोकोहिजीवतांशौचं ततस्तेषांप्रथमंतद्विमोकहेतुक्रियामाह दाहंकुरुक्षेत्रएवकृत्वाहस्तिनापुरे जलदानार्थं सर्वेगताः ब्रह्मदंडहताअपियज्जलस्पर्शमात्रेण विमुच्यंतेतत्रधर्मयुद्धहताः मुच्यंतइतिकिंवक्तव्यं "प्रत्तंजलंत्र्यंजलमात्मजेनप्रेतस्यतापंप्रशमं करोती"ति तापापनोदार्थं जलमपेक्ष्यतेतथाचमूलभूततापत्रयनिराकरणार्थम पिएकहेलयाजलंदेयमितिनिश्चित्यगंगायांगताइतिनिरूप्यतेअथेत्यवैरभावेनसंपरेतानामितिसामान्यतः सर्वेषांतत्रापिस्वानांबहुपुरुषसंवद्धानाम पितत्रापिउदकदायिनांसप्तपुरुषसंवद्धनांतेषांमुक्तिदानार्थंभगवतासहेतिसकृष्णाइत्युक्तंस्त्रियः पुरस्कृत्येतिलोकाचारः ॥ १ ॥

उदकंनिनीयप्रेतेभ्योजलंदत्वा"रोदनाप्रियाःपितर"इतिविलप्यते येष्वपियेषांनखेदः तेपिविहितत्वात्सर्वेपिविलापनंकृतवंतः भृशमितिपुनर्विलापाभावायचकारादन्यदपिकर्त्तव्यंकृत्वापूर्वंजलदानार्थंकृतस्नानाअपिपुनः सर्वशुद्ध्यर्थंभक्त्यर्थंज्ञानाधिकारार्थंगंगयांस्नातवंतइत्याहआप्लुता इतियद्यपिपूर्वमेवतच्चरणापंकजावनेजनारुणकिंजल्कोपरंजितेतिवचनात्धातुः कमंडलुजलमितिवचनाच्च सर्वमेवगंगाजलंतादृशंभवतितथापि नदीत्वेनजलांतरस्पर्शसंभावनयापूर्वस्नातजलंतादृशंभवतिनवेतिसंदिह्यउपरिभागेभगवंतंस्थापयित्वातच्चरणोदकेनस्नातवंतइत्यर्थः अनेनते तदीयाइतिसर्वथाज्ञापितम् ॥ २ ॥

एवंसर्वकर्त्तव्येकृतेतादृशेषुभगवतायत्कर्त्तव्यंतदाहतत्रासीनमितिद्वाभ्याम् आसीनमित्यव्यग्रत्वायकुरुपतिंयुधिष्ठिरंसहानुजंविदुरसहितं भीमादिसहितंवातीर्थाटनकथाकल्पांतरीयास्त्रियः सर्वाएवपुत्रशोकार्त्ताः अतः पुत्रशोकार्त्तमितिविशेषःसर्वत्रकृष्णाद्रौपदीचकारात्सुभद्रादयः स्त्रीणांसांत्वनेहेतुः माधवइतिमायाधवः सर्वासामेवलक्ष्म्यंशत्वात् ॥ ३ ॥

सांत्वनंवस्तुयाथात्म्यज्ञापनेनमुनिभिरितिसंवादार्थंहतावांधवायेषांशोकापनोदनं तत्त्वज्ञानाद्भवति नन्वीश्वरेणसांत्वनमनुचितंसर्वकर्तृत्वादित्याशंक्यस्थापितकालरूपाधिकारिणस्तदूगृहेजातेषु दंडादिकमीश्वरस्याप्यप्रतीकार्यंनहिस्त्रीपुत्रादिताडनेराजदंडो भवतिकालस्यापि भक्तत्वात् कदाचिदपि भक्तानप्युपेक्षतेइमांसिद्धांततामाहभूतेष्वितिकालेजातेषुकलयतीतिकालः गतिंप्रवृत्तिंनविद्यते प्रतिक्रियायस्याः ॥ ४ ॥

---

## श्रीविश्वनाथचक्रवर्त्ती ।

पुनर्ब्रह्मास्त्रतोऽरक्षत् तान् गर्भे च परीक्षितम् । कृष्णः स्तुतश्च पृथया राज्ञः शोकस्तथाष्टमे ॥ ० ॥

स्त्रियः पुरस्कृत्येति तस्मिन् कार्य्ये स्त्रीपुरःसरत्वविधानात् ॥ १ ॥

निनीय दत्त्वा ॥ २ ॥

कुरुपतिं युधिष्ठिरम् । सहानुजं भीमादिसहितम् ॥ ३ ॥

मुनिभिः सहितः ॥ ४ ॥

---

## सिद्धांतप्रदीपः ।

अथेतिगंगायाम् उदकंदातुंसकृष्णाश्रीकृष्णसहिताः ययुः ॥ १ ॥

निनीयदत्वा ॥ २ ॥

कुरुपतिंयुधिष्ठिरम् ॥ ३ ॥ ४ ॥

---

साधयित्वा जात शत्रोः स्वं राज्यं कितवैर्हृतम् ।
घातयित्वा सतो राज्ञः कचस्पर्शक्षतायुषः ॥ ५ ॥
याजयित्वा ऽश्वमेधैस्तं त्रिभिरुत्तमकल्पकैः ।
तद्यशः पावनं दिक्षु शतमन्योरिवातनोत् ॥ ६ ॥
आमंत्र्य पांडुपुत्रांश्च शैनेयोद्धव संयुतः ।
द्वैपायनादिभिर्विप्रैः पूजितैः प्रतिपूजितः ॥ ७ ॥
गंतुं कृतमति र्ब्रह्मन् द्वारकां रथमास्थितः ।
उपलेभे ऽभिधावंती मुत्तरां भयविह्वलाम् ॥ ८ ॥

भाषा टीका ।

( सूतउवाच ) तदनन्तर वे सब स्त्रियों को आगे कर अपने जल इच्छा करते मृत बांधवों को जलदेने को गंगा पर गये ॥ १ ॥

वे सब अपने मृत बांधवों को जल देकर अत्यंत विलाप कर हरि पादाब्ज रज से पवित्र गङ्गा नदी के जल में नहाये ॥ २ ॥

वहां भीमसेनादि भ्राताओं सहित बैठे कुरुराज युधिष्ठिर धृतराष्ट्रपुत्र शोकार्त गांधारी कुंती और द्रौपदी का एवं और समस्त हतबंधु शोकार्त बांधवों को मुनि जनों के सहित माधव भगवान नें जीवों में कालकी अप्रति क्रिया गति दिखाकर सांत्वना की ॥ ३ ॥ ४ ॥

---

श्रीधरस्वामी

कितवैर्धूर्तैर्दुर्योधनादिभिः । द्रौपद्याः कचग्रहणादिनाक्षतं नष्टमायुर्येषां तान् ॥ ५ ॥

याजयित्वेत्यादिना भाविकथासंक्षेपः । शतमन्योः शतक्रतोरिव ॥ ६ ॥

शैनेयः शिनेर्नप्ता सात्यकिः तेन चोद्धवेन च संयुतः ॥ ७ ॥

रथमास्थितः सन् उत्तरां परीक्षिन्मातरं ( भयेन विह्वलां व्याकुलाम् ) अभिमुखं धावन्तीम् उपलेभे ददर्श ॥ ८ ॥

---

दीपनी ।

उत्तमेति । उत्तमः कल्पो येषु यद्वा मुख्यः कल्पो येषु तैः । कल्पो विधानं कल्प्यतेऽनेन कल्पोऽङ्गं स उत्तमो येषु । यद्वाकल्पयन्तीति कल्पकाः अनुष्ठातारः ते उत्तमा येषु तैरिति व्याख्यालेशः ॥ ६—११ ॥ )

---

श्रीवीरराघवः ।

कितवैरक्षद्यूताद्युपायेनवंचकैर्दुर्योधनादिभिर्हृतमजातशत्रोर्युधिष्ठिरस्यस्वंराज्यं साधयित्वाराज्ञ्याद्रौपद्याः कचस्पर्शेनकेशपाशग्रहणेनैव क्षतंक्षीणमायुर्येषांतानसतोदुष्टान्दुःशासनादीन्घातयित्वाअर्जुनादिभिरितिशेषः ॥ ५ ॥

उत्तमकल्पकैर्मुख्यकल्पैरन्यूनमन्त्रदक्षिणैः त्रिभिरश्वमेधैः युधिष्ठिरंयाजयित्वापावनं पवित्रं तस्ययुधिष्ठिरस्ययशः शतमन्योः शक्रस्य यशइवव्यतनोद्विस्तारयामास ॥ ६ ॥

ततःपांडुपुत्रान्चशब्दादन्यांश्चआमंत्र्यापृच्छ्यशैनेयः शिनेर्नप्तासात्यकिः शैनेयोद्धवाभ्यांसात्यक्युद्धवाभ्यांसहितः आत्मनापूजितैः द्वैपायनआदिर्मुख्योयेषांतैर्विप्रैः प्रतिपूजितैर्द्वारकांप्रतिगंतुंकृतमतिर्निश्चितमतिर्हेब्रह्मन्रथमास्थितः अधिष्ठितः ॥ ७ ॥

तदाभिधावंतींभयेनविह्वलामुत्तरामभिमन्युपत्नीमित्थंविज्ञापयंतीमितिशेषः उपलेभेपथिददर्शेत्यर्थः यद्वाऽभिधावंतींविज्ञापनपूर्वकमनुवर्तमानामउपलेभइत्यन्वयः ॥ ८ ॥

---

श्रीविजयध्वजः ।

घातयित्वावधंकारयित्वापांडवैरितिशेषः कचानांकेशानांस्पर्शेनहतानिनष्टानिआयूंषियेषांतेतथातान् अजातः सुयोधनः शत्रुर्यस्यसतथोक्तः तथाचोक्तं "सुयोधनादयः सर्वेत्वजाताजज्ञिरेधरात् व्यासेनानंतवीर्येणमार्तंडाधिकतेजसा"इतिप्रयोगात् नजातः शत्रुर्यस्यसतथोक्तइतिकेचित् कितवैश्चोरप्रायैर्दुर्योधनादिभिः ॥ ५ ॥

श्रीविजयध्वजः।

मध्यमाधमकल्पयो रुत्तमकल्पकः शतमन्ययः क्रतवोयस्यसतथा तस्येंद्रस्ययशो वामनावतारे हरिर्यथाततोनतथाऽतनोत् तनु विस्तारे ॥ ६ ॥ ७ ॥

भगवान्यदाद्वारकांगंतुंकृतमतिः रथमास्थितः तदापाहिपाहीत्यादिवादिनीभयेनाविवशामात्मानमुद्दिश्यागच्छंतीमुत्तरामुपलेभेददर्शेत्य-न्वयः यत्रमर्त्यलोकेपरस्परंमृत्युः तत्रत्वदन्यमभयमभयप्रदंचनपश्ये स्वस्याभिमतप्रकाशनायात्मनेपदप्रयोगः ॥ ८ ॥ ९ ॥

---

क्रमसन्दर्भः।

अथ संक्षेपेणोक्त्वा पुनः प्रस्तुतमाह आमन्त्र्येत्यादिना ॥ ७ ॥ ८ ॥ ९ ॥

---

सुबोधिनी।

एवमपितदानीमाक्रियमाणमपिभक्तानांहितमेवकरोतीतिज्ञापयितुंलौकिकप्रतीत्यापियद्धितं तत्करिष्यमाणमपिभगवदिच्छायांजातायां-कृतमेवलोकेनाभिव्यक्तमितिसिद्धांतज्ञापनार्थंतन्निरूपयतिसाधयित्वेतिद्वाभ्याम् नजाताः शत्रवोयस्येति भक्तावुत्तमाधिकारोद्योतित दानेहेतुः स्वराज्यमितितत्रापिहेतुः कितवैर्हृतमितिकपटद्यूते दुर्योधनादिभिर्हृतंहस्तिनापुरमपि तदापांडवैरराजत्वात् अतएवकितवैरिति बहुवचनं ननुकालस्याप्रातिकिंयत्वेतेषा मायुषोविद्यमानत्वात् कथंतद्घातनंतत्राहघातयित्वेति सर्वेष्वसंतोराजानः दुःशासनेनसहपेक्ष्यभावात् कच स्पर्शोद्द्रौपद्याः तेनैवक्षतमायुः सर्वेषां निरपराधायाभक्तायाः प्राणानामुत्तमादायुषः शिरसिविद्यमानत्वात् वलिष्ठप्राणैर्दुर्बलानां क्षत करणंयुक्तमेव ॥ ५ ॥

"तरतिमृत्युंतरतिपाप्मानंततरति ब्रह्महत्यामि" तिश्रुतेराहारपृथक्त्वपक्षेनाश्वमेधत्रयकरणमउत्तमकल्पकैः उत्कृष्टसाधनसहितैः उत्तमं वाकल्पयंतीतिप्रायश्चित्तरूपैः स्वसांनिध्यात् त्रिभिरेवशताश्वमेधसमानयशोजनकत्वं त्रैलोक्येपितस्ययशः अनेनैकोपक्रमेणाअश्वमेधत्रयंकृत मितिज्ञातव्यम् ॥ ६ ॥

एवं भगवतोऽत्रत्यलौकिकसर्वधर्मसमाप्तिसूचनायाभ्यनुज्ञामाहसार्द्धेनआमंत्र्येति बांधवाःऋषयश्चअभ्यनुज्ञाकर्त्तारः पृथगुक्ताः चकारा द्न्येसर्वेशैनेयः सात्यकिः द्वैपायनादीनांस्वस्थत्वात् अभ्यनुज्ञातुल्येऽपिपूजनमधिकम् ॥ ७ ॥

ब्रह्मभ्रिति ब्राह्मणस्यमहाक्रोधइति सूचितम्रथारोहणपर्यंतस्वक्रिया। अग्रेयंतुरश्वानांच भक्तस्यकार्येउपस्थितेप्रारब्धमपि स्वकार्यंत्यज तीतिज्ञापयितुं तस्मिन्समयेउत्तरांदृष्टवानित्याह उपलेभइतिसाहिभक्ताबुत्तराउत्कृष्टेत्यर्थ अतएवब्रह्मास्त्रदर्शनं तस्याः प्रथममुख्यमेवास्त्रम्। आयसशरेणसंवद्धमुत्तरांप्रतिगच्छति तदनुतस्मादुद्गताः पंचशराः पांडवान्प्रतिगच्छंतिमूलोच्छेदेऽधिकव्यापारात् अकौरवंवदपांडवमपि करिष्यामीतितस्याभीष्टत्वात्आभिमुख्येनधावंती भयविह्वलांवस्त्रादिष्वसावधानांप्रावृत्याद्यभावात् आगच्छन्त्यापिपाहीतिवचनात् आहेत्या धनुक्तिः ॥ ८ ॥

---

श्रीविश्वनाथचक्रवर्त्ती।

द्रौपद्याः कचग्रहणादिना क्षतमायुर्येषां तान् ॥ ५ ॥
याजयित्वेत्यादि भाविकथासंक्षेपः ॥ ६ ॥
शैनेयः शिनेर्नप्ता सात्यकिः ॥ ७ ॥ ८ ॥

---

सिद्धांतप्रदीपः।

किंच कितवैर्द्यूतदेविभिः शकुनीसुयोधनादिभिः असतः सुयोधनदुःशासनजयद्रथप्रभृतीन् कचस्पर्शक्षतायुषः दुःशासनकृते नद्रौपदीकेशग्रहणेनविनष्टजीवितान् ॥ ५ ॥ ६ ॥
शैनेयः शिनेः पौत्रः युयुधानः ॥ ७ ॥
उत्तरामभिमन्युभार्यामदर्शत् ॥ ८ ॥

---

भाषाटीका

धूर्त दुर्योधनादिकों ने जो अजात शत्रु का राज्य हर लिया था वह फिर युधिष्ठिर को साधन कर, द्रौपदी के कच स्पर्श से हतायुष असत् राजाओं को मरवाकर, उत्तम कल्प के तीन अश्वमेधों से युधिष्ठिर की पूजन कराकर, उनका पवित्र यश इन्द्र के समान सब दिशाओं में विस्तृत किया ॥ ५ ॥ ६ ॥

पांडु पुत्रों को आमंत्रण कर सात्यकी और उद्धव संयुक्त पूजित द्वैपायनादि ब्राह्मणों से प्रति पूजित हो, द्वारिका जाने को रथ में विराजे। उसी समय भय से विह्वल दौड़ी चली आती उत्तरा को देखा ॥ ७ ॥ ८

---

उत्तरोवाच ॥ पाहि पाहि महायोगिन् देवदेव जगत्पते ।
नान्यंत्वदभयंपश्ये यत्रमृत्युः परस्परम् ॥ ९ ॥
अभिद्रवति मामीश शरस्तप्तायसो विभो ।
कामं दहतु मां नाथ मा मे गर्भो निपात्यताम् ॥ १० ॥

सूतउवाच ॥ उपधार्य वचस्तस्या भगवान् भक्तवत्सलः ।
अपांडवमिदं कर्तुं द्रौणेरस्त्रमबुध्यत ॥ ११ ॥
तर्ह्येव च मुनिश्रेष्ठ पांडवाः पंच सायकान् ।
आत्मनोऽभिमुखान् दीप्तानालक्ष्यास्त्राण्युपाददुः ॥ १२ ॥

श्रीधरस्वामी ।

उत्तरा श्रीकृष्णं प्रार्थयते पाहि पाहीति द्वाभ्याम् । अन्यस्तु प्रार्थनायोग्यो नास्तीत्याह । त्वत् त्वत्तः अन्यम् अभयं भयरहितं न पश्यामि । यत्र लोके परस्परम् ( अन्योन्यं ) मृत्युर्भवति ॥ ९ ॥

अत्र प्रस्तुतं भयमावेदयति । अभिद्रवति अभिमुखमायाति । तप्तमायसं लोहमयं शल्यं यस्य सः ! अतिकार्पण्यस्माह काममिति कामं यथेष्टम् ॥ १० ॥

पराभवेणातिकुपितस्य द्रौणेः अपाण्डवं पाण्डवशून्यमिदं विश्वं कर्त्तुं प्रवृत्तं ब्रह्मास्त्रमबुध्यत ॥ ११ ॥

अतएव बहुमुखं ब्रह्मास्त्रं तदागतमित्याह तर्ह्येवेति ॥ १२ ॥

---

दीपनी ।

( एकस्यैव ब्रह्मास्त्रस्य बहुमुखत्वात् पञ्च सायकान् इति ॥ १२ ॥ )

---

श्रीवीरराघवः ।

विज्ञापनमेवाहपाहीतिद्वाभ्याम्हेदेवानामपि देवहेजगत्पतेनिखिलजगन्नातः हेमहायोगिन्सूक्ष्मार्थदर्शिन्पाहिपाहिनविद्यतेभयंयस्मात्तथाभूतंत्वत्त्वत्तोऽन्यंनपश्येअदर्शनहेतुं वदंत्यन्यान्विशिनष्टियत्रत्वद्व्यतिरिक्तेषु परस्परंमृत्युः मृत्युग्रस्ताइत्यर्थः नहिस्वयंमृत्युवश्योऽन्यंमृत्योस्त्रातुंप्रभु रितिभावः ॥ ९ ॥

ननुकिंतवभयमुपस्थितंयस्मात्त्वंमयारक्षणीयेत्यत्राह अभिद्रवतीतिहेईशविभोतप्तश्चासावायसोऽयसोविकारःशरः मामभिद्रवतिअभिमुखमागच्छतिहेनाथसशरोमांकामंयथेच्छंदहतुममगर्भश्चयथामानिपात्यतांतथानुगृहाणेत्यर्थः ॥ १० ॥

तस्याउत्तरायावचोऽवधार्याकर्ण्यभक्तवत्सलोभगवानवबुध्यताध्यवस्यत् किमितिअपांडवंपांडवाभावंकर्त्तुमिदंशररूपेणाद्रवतद्द्रौणेरस्त्रंद्रौणिप्रयुक्तंब्रह्मास्त्रमिति ॥ ११ ॥

यथाभगवानेवमवुध्यततर्हितथैवहेभृगुश्रेष्ठशौनकपांडवाअपिआत्मनोभिमुखमागच्छतः दीप्तान्पंचसायकान्शरानालक्ष्यास्त्राणिउपाददुःजगृहुः ॥ १२ ॥

---

श्रीविजयध्वजः ।

अयसोविकारः आयसः तप्तश्चासावायसश्चेतितथोक्तः शरः हननशीलोबाणः शरीरविनाशनशक्तिप्रकाशनायआयसेति अपरिच्छिन्नस्यतवगर्भरक्षणंशक्यसाधनमितिद्योतनायविभोइति नाथऐश्वर्यशक्तियुत मांयथेष्टंदहतु किंतर्हि ममगर्भोमानिपात्यतामिति ॥ ९ ॥ १० ॥

भगवानस्याउत्तरायावचउपधार्यश्रुत्वानिश्चित्यइदमवनिमण्डलमपांडवंपांडुपुत्ररहितंकर्तुमुक्तंद्रौणेरस्त्रमबुध्यतेत्यन्वयः ॥ ११ ॥

हेभृगुश्रेष्ठ अथतर्ह्येवतदानीमेवपंचपांडवाः आत्मनोऽभिमुखान्ज्वलितान्पंचसायकानंतकरान्बाणानालक्ष्यानंतरमेवास्त्राण्युपाददुरित्येकान्वयः षोऽतकर्मणीतिधातोः समंतंकुर्वतीतिसायकाः ण्वुल्आयादेशश्च ॥ १२ ॥

---

## क्रमसन्दर्भः ।

अभिद्रवतीत्यादौ यान् प्रति प्रयुक्तः शरस्त एव तं पश्यन्तीति ज्ञेयम् ॥ १० ॥
उपधार्य्य सावधानं श्रुत्वा । तत्र हेतुर्भक्तवत्सल इति ॥ ११ ॥ १२ ॥

---

## सुबोधिनी ।

तस्याभयोद्विग्नायावाक्यमाह । पाहिपाहीति । कायवाग्भ्यामेकार्थप्रतिपादनायनकर्म निरूपणाशब्दतः किंतु आत्मानंप्रदर्शयन्ती पाहीतिवचनात् आत्मानंपाहीत्युक्तंभयतिमहायोगिन्निति सामर्थ्यं प्रकारंचबोधयंतीवसंबोधयति सर्वात्मकत्वेनशरपक्षपातेपिसांप्रतंदेवाहितकर्तृत्वेनतन्निराकरणंयुक्तमित्याह देवदेवेतिरक्षकाभावाद्वाराजकरास्यसर्वरक्षार्थं चगर्भोरक्षणीयइतिसंबोधयतिजगत्पतइतिकथंश्वशुरादिषुविद्यमानेषुमामेवप्रार्थयसेइत्यतआह नान्यमितिजगतित्वत्तः अन्यमभयंभयरहितमेवनपश्येमृत्युव्याप्तत्वात्अभीतोहिशरणयोग्यः किंच समानशीलव्यसनानांसख्यमपेक्ष्यते तत्रपरस्परघातकत्वमत्याश्चर्यं ततोज्ञायतेकश्चित्सर्वत्राविष्टोमारयतीतिनतेषांशरणागमनंप्रयोजनापेक्षेत्याह यत्रमृत्युरितिअतस्त्वमेवशरणार्हइतिभावः ॥ ९ ॥

प्रस्तुतमाहअभिद्रवतीतिईशेतिप्रतिक्रियायांमूलज्ञानेचविभोरितिसंबोधनद्वयंमृत्योरप्रतीकार्यपक्षेसमृत्युर्मांदहतुमेगर्भोमानिपात्यतांयोगबलाद्गर्भपालयअनेनभक्तरक्षागर्भरक्षैवमुख्यानमद्रक्षेति ज्ञापितम ॥ १० ॥

तप्तायसः शरः सत्यमागत इतितस्याः वचः उपधार्यनिश्चित्य उपधारणेहेतुर्भगवानितिप्रातिक्रियायांहेतुर्भक्तवत्सलइतिअपमानितोऽश्वत्थामातथाकृतवानित्याह अपांडवमिति इदंजगदपांडवंकर्त्तुंद्रोणाज्जातस्यअस्त्रमबुध्यतेत्यर्थः अथवा एतस्यब्रह्मशिरसोयदस्त्रत्वंक्षेपणधर्मत्वम् अपांडवंकर्त्तुमितिउभयथापिपांडवनाशार्थमस्त्रंप्रयुक्तमिति ज्ञातवानित्यर्थः ॥ ११ ॥

तस्मिन्नेवसमये व्यसनांतरमप्यागतमित्याह तर्ह्येवेति तर्ह्येवेत्यव्ययसमुदायः परमाश्चर्यबोधकः मुनिश्रेष्ठेतिसंबोधनंविश्वासात् संवादहेतुः पंचेत्युभयत्रसंबद्धंतथासत्येकैकः सायकः एकैकस्थानेसमागतइत्युक्तंभवतिआलक्ष्यदृष्ट्वाद्रौणेरितिबुद्ध्वा अस्त्राण्युपादद्युरितिपरलोकशुद्ध्यर्थंप्रतिक्रियार्थंवाअस्त्राणिब्रह्मास्त्रादीनि ॥ १२ ॥

---

## श्रीविश्वनाथचक्रवर्त्ती ।

त्वत्तोऽन्यम् अभयं न पश्यामि । परस्परम् एकस्य मृत्युरन्यस्तस्य मृत्युरपरस्तस्याप्यन्य इत्येवम् ॥ ९ ॥
नन्वभिमन्युना तेन पत्या विनापि जीवितं प्रार्थयसे न लज्जसे तत्राह काममिति ॥ १० ॥
इदं विश्वमपाण्डवं कर्त्तुं प्रवृत्तस्य द्रौणेः ॥ ११ ॥
पाण्डवा इति । यो यो हि पाण्डुवंशजः स एव पश्यति नान्य इति ज्ञेयम् ॥ १२ ॥

---

## सिद्धांतप्रदीपः ।

त्वत्त्वत्तोऽन्यमभयं नपश्येयत्रत्वदन्ये ब्रह्मादिस्वबंधुपर्यंतजनेपरस्परं मृत्युर्भवति सत्वदन्योजनः मांपातुं कथं शक्नुयादितिभावः॥ ९ ॥
तप्तमायसंशल्यंयस्यसः मामभिद्रवतिमामभिमुखमागच्छति कामंयथेच्छम् ॥ १० ॥
अस्त्रंब्रह्मास्त्रम् ननुगर्भमात्रविनाशेनविश्वंपांडवशून्यंकथंभवेदित्यत्रास्त्रस्यबहुमुखत्वं सूचयतितर्ह्येवेति ॥ ११ ॥ १२ ॥

---

## भाषाटीका ।

हेदेवदेव हे जगत्पते हे महायोगिन् पाहि पाहि । तुमसे भिन्न मैं इस जगत् में किसी को अभय नहीं देखती क्योंकि जहां परस्पर सब की मृत्यु होती है ॥ ९ ॥
विभोः तप्त लोहमय बाण मेरे अभि मुख दौड़ता है नाथ मुझे भलेही जलादे परंतु मेरे गर्भ को पात न करै ॥ १० ॥
उसका वचन सुनकर भक्त वत्सल भगवान जानगये कि यह इस जगत को पांडव शून्य करने को अश्वत्थामा का अस्त्र है ॥ ११ ॥
उसी समय पांडवों ने भी अपने सन्मुख आते दीप्त पांच बाणों को देखकर अपने अपने अस्त्र उठाये ॥ १२ ॥

---

## श्रीधरस्वामी

ब्रह्मास्त्रस्य अस्त्रान्तरैरनिवर्त्त्यत्वात् दुष्परिहरं व्यसनं वीक्ष्य । न अन्यविषय आत्मा येषां स्वैकनिष्ठानामित्यर्थः ॥ १३ ॥
वैराट्या उत्तरायाः अन्तःस्थः सन् गर्भमावृतवान् । तत्र हेतुः यतः आत्मा अन्तर्यामी । योगेश्वर इति बहिःस्थस्यापि प्रवेशघटनार्थमुक्तम् । कुरूणां तन्तवे सन्तानाय । पाण्डवानामपि कुरुवंशजत्वादेवमुक्तम् ॥ १४ ॥

व्यसनं वीक्ष्य तत्तेषामनन्यविषयात्मनाम् ।
सुदर्शनेन स्वास्त्रेण स्वानां रक्षां व्यधाद्विभुः ॥ १३ ॥
अंतःस्थः सर्वभूतानामात्मायोगेश्वरो हरिः ।
स्वमायया ऽऽवृणोद्गर्भं वैराट्याः कुरुतंतवे ॥ १४ ॥
यद्यप्यस्त्रं ब्रह्मशिर अमोघं चाप्रतिक्रियम् ।
वैष्णवं तेज आसाद्य समशाम्यद्भृगूद्वह ॥ १५ ॥
मामंस्था ह्येतदाश्चर्यं सर्वाश्चर्यमयेऽच्युते ।
य इदं मायया देव्या सृजत्यवति हंत्यजः ॥ १६ ॥

श्रीधरस्वामी ।

अमोघम् अप्रतिक्रियञ्च । समशाम्यत् संशान्तमासीत् ॥ १५ ॥
एतद्ब्रह्मास्त्रशमनम् आश्चर्य्यं मा मंस्था न मन्यस्व ॥ १६ ॥

---

दीपिनी ।

सुदर्शनेनेति युधिष्ठिरादीनामेव ज्ञेयम् । परीक्षितस्तु गदया—अस्त्रतेजः स्वगदया विधमन्तमिति भ्रामयन्तं गदां मुहुरित्युत्तरत्र वक्ष्यमाणेन वाक्येनैकवाक्यत्वात् । यद्वा स्वास्त्रपदेन गदा वाच्येति व्याख्यालेशः ॥ १३ ॥ १४ ॥ )
( भृगुवंश्यानाम् उद्वहः श्रेष्ठः । भृगूद्वहः शौनक इत्यर्थः ॥ १५ ॥ १६ ॥

---

श्रीवीरराघवः ।

तदाऽनन्यविषयआत्मामनोयेषांतेषामत्र्चरक्षकाणांपांडवानांतद्व्यसनंदुःखमवलोक्य विभुः कृष्णः स्वासाधारणेनसुदर्शनेनास्त्रेण स्वानांपांडवानांरक्षांव्यधादकरोत् सुदर्शनेमतान्सायकाग्निरस्यपांडवानूररक्षेत्यर्थः ॥ १३ ॥
ततः सर्वांतरात्मतयाऽवस्थितः आत्मांतः प्रविश्यधारकश्चभगवानतएवयोगेश्वरः निरतिशयसूक्ष्मार्थदर्शीउत्तरागर्भप्रविष्टपांडवास्त्रदर्शीत्यर्थः हरिः कृष्णः कुरुतंतवेकुरुवंशविस्तारार्थंवैराट्याविराट्पुत्र्याउत्तरायागर्भंस्वयमात्मनैवावृणोद्वैराट्याउदरंस्वयंप्रविश्यतद्गर्भंयथाब्रह्मास्त्रेणनदह्येत्तथावृणोद्गर्भमासाद्यसुदर्शनेनास्त्रंचिच्छेदेत्यर्थः ॥ १४ ॥
कथमप्रतिभटंब्रह्मास्त्रंसुदर्शनेनापिनिरस्तंमितिशौनकाभिप्रेतंद्दोषमनूद्यतंप्रतिक्षिपतियद्यपीति ब्रह्मशिरोनामास्त्रमप्रतिक्रियंकेनाप्यनिवार्यंमतएवामोघमप्रतिहतंतथापिहेभृगूद्वहवैष्णवंविष्णोः संबंधितेजः तेजोरूपंसुदर्शनमासाद्यसमगात्सुदर्शनेतराप्रतिक्रियंब्रह्मास्त्रंसुदर्शनमेवसर्वाप्रतिक्रियमितिभावः ॥ १५ ॥
तत्रनविस्मयः कार्यइत्याह मेति सर्वेभ्योप्याश्चर्येभ्योप्याश्चर्यमयेआश्चर्यशक्तिप्रचुरेऽच्युतेस्वाश्रितास्त्रभूषणगुणा विभूत्यादीन्नच्यावयतिनपृथक्करोतीत्यच्युतः तथाभूतेभगवत्येतत्सुदर्शनेनब्रह्मास्त्रं निरस्तमित्येतदाश्चर्यं मामंस्थानमन्यस्वसर्वाश्चर्यमयत्वमेवव्यंजयितुंविशिनष्टियोभगवानच्युतः अजः स्वयंकर्माधत्तोत्पत्त्यादिषड्भावविकाररहितः इदंचिदचिदात्मकंकृत्स्नजगन्मायया देव्यादेवस्यस्वस्यसंबंधिन्यामायया ऽऽश्चर्यशक्त्यासृजत्यवतिहंतिचकृत्स्नजगत्सृष्टिस्थितिलयलीलस्यांकियदेतत्सुदर्शनानिरस्तब्रह्मास्त्रमितिअतोनाश्चर्यंकार्यमित्यर्थः ॥१६॥

---

श्रीविजयध्वजः ।

नअन्यविषयआत्मायेषांतेऽनन्यविषयात्मानः तेषाम् अन्येषुभगवद्वार्तारहितेषुविषयेषुशब्दादिषुआत्मामनोनगच्छतियेषांतेतथोक्तास्तेषामितिवा पांडवानांतद्व्यसनंवीक्ष्याविभुः सुदर्शनाख्यस्वास्त्रेणस्वानांपांडवानांरक्षांव्यधादित्येकान्वयः ॥ १३ ॥
सर्वप्राणिनामंतर्हृदिसंस्थितः अत्माआदानादिकर्तायोगैश्वर्यवान्सहजाणिमादियोगैश्वर्यवान् सर्वोपायानामीश्वरोवाहरिःसंसारदुःखहरणशीलः कुरूणांसंतत्यविच्छेदार्थवैराट्याःविराट्पुत्र्याःउत्तरायाःगर्भंस्वमाययास्वयोगसामर्थ्येन यथाब्रह्मास्त्रंनदहेत्तथावृणोत् आत्मनागूहितमकरोदित्येकान्वयः ॥ १४ ॥
यद्यपिब्रह्मशिरोऽस्त्रंत्वमोघमव्यर्थमप्रतिक्रियंप्रतीकाररहितंचतथापिवैष्णवंतेजआसाद्यसम्यगशाम्यादित्येकान्वयः ॥ १५ ॥
योमाययादेव्यादीप्यमानयाइच्छयाब्रह्मादिजगत्सृजति रक्षति संहरति स्वयंजन्मादिरहितस्तस्मिन्सर्वाश्चर्यस्वरूपेअच्युते विनाशरहितेहरौएतत्ब्रह्मास्त्रोपशमनलक्षणमाश्चर्यमामंस्थानचिंतयेत्येकान्वयः ॥ १६ ॥

---

क्रमसंदर्भः ।

तत् झटित्यशक्यसमाधानं व्यसनं विपदम् ॥ १३ ॥

सर्व्वभूतानामात्मा परमात्मेत्यन्तःस्थः । तर्हि कथं बहिष्ठः तत्राह योगेश्वर इति । स्वेषु पाण्डवेषु या माया कृपा तया । तामेव दर्शयति कुरुतन्तवे इति तैः ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥

---

सुबोधिनी ।

अत्रभगवतोपिप्रतिक्रियासामर्थ्यात्दूरापास्तंपांडवानामितिवक्तुंभगवान्स्वभक्तानांरक्षामेवकृतवान्नास्त्रस्यप्रतिक्रियामित्याह नअन्योविषयः आत्मनियेषांस्वभावेन सर्वेविषयाभवंतुनामचित्तेतुभगवल्लक्षण एवविषयस्तेषामस्ति अत"स्तद्वैतान्भूत्वाऽवती"ति विषयार्थमेवतेरक्षिताः तत्रसुदर्शनचक्रमलातचक्रवत्शरपांडवानांमध्येपरिभ्रमतिअतस्तेनतेषांरक्षांकृतवान्स्वानामितितेषांरक्षायांहेतुः विभुरितिसामर्थ्यस्वास्थ्य देनबुद्धिपूर्वकरक्षाकरणत्वंसुदर्शनस्यसूचितम् ॥ १३ ॥

प्रधानउत्तरागर्भेप्रकारांतरेणरक्षामाह अंतस्थइति गर्भप्रविष्टस्यार्थस्यगर्भरक्षार्थमोघधेत्रायस्वैनमितिवत्माययागर्भशरीरमावृतवान् तत्र बहिःस्थितस्य आवरणंनसंभवतीतितदर्थं चत्वारिविशेषणानिचतुर्विधमायाव्याप्तिप्रतिपादकानितत्रमध्यएवभगवान्स्थितः सुवर्णतेजो वत्तंपालयतीत्याह अंतस्थइति सर्वभूतानांमध्येस्थितःकिंच अन्यस्यान्यपालनं सर्वथा न संभवतीति गर्भरूपोभूत्वापालितवानित्याह किंच वहिरपितच्छरीररक्षार्थमाहयोगेश्वरइतियोगवलेनस्वयंतत्रशरीरास्त्रयोर्मध्येस्थित्वापालयतीत्यर्थः अन्यथाब्रह्मास्त्रशरीरसंबंधेदोषोवासंक्रमेदि ति ननुकिमित्येवंप्रकारैःपालयतीतिचेत्तत्राह हरिरितिसर्वेषांदुःखहरणस्वभावत्वात् समुदायरक्षात्वेतत्साध्यास्वमाययास्वाधीनमायया ब्रह्मांडकोटिभ्रमानिवर्त्तकज्ञानाग्न्यावरकरूपत्वान्मायायास्तयावरणंयुक्त वैराट्याइतिसंबंधात्तस्योदरदाहोपियथानभवतितथाकृतवानितिल क्ष्यतेउभयवंशयोर्भकत्वात्एषारक्षितेत्याह वैराट्याःकुरुतंतवेइतितंतुःपरंपरापालकोवा ॥ १४ ॥

ननुब्रह्मास्त्रंगर्भेप्रयुक्तंदाहकैकस्वभावत्वात् तत्रासमर्थमन्यत्कुतोनदहति तत्राह यद्यप्यस्त्रमिति सत्यमुक्तंसर्वदाहकमेतत्महादे वस्यापि पिशाचत्वंयतोजातंतत्ब्रह्मशिरः ब्रह्मणःपंचमंशिरः तस्यगुणद्वयंसहजममोघंसर्वदाकार्यकरोतीत्यर्थः अप्रतिक्रियंचनविद्यतेप्रति क्रियाप्रतिकूलक्रियाव्यावर्त्तकक्रियावायस्येति तथापि किंचिदद्भुतं जातमित्याह वैष्णवंतेजआसाद्येति यथा व्याघ्रोमंत्रवलेनगौर्भवति तथा परम सात्त्विकंवैष्णवंतेजः आसाद्यप्राप्यसम्यगशाम्यत्शांतंभूतप्राकृतं देहंप्रज्वाल्यभगवद्भावापन्नंवैष्णवंदेहंज्वालयितुंप्रवृत्तंसत्तम- ध्ये वैष्णवंतेजआसाद्यतद्रूपंसत् तदैक्यंप्राप्तवादित्यर्थः तत्रविश्वासार्थमाह हेभृगूद्वहेतिभृगूणांहिपूर्वंवैष्णवनिर्णयः कृतः अन्यथाराज सास्तामसाश्चभक्त्याभगवत् संबंधंप्राप्यसात्त्विकाभूत्वाकथंसायुज्यंप्राप्नुयुः ॥ १५ ॥

नन्वस्त्वजीवानां मुक्तियोग्यानांशास्त्रसिद्धत्वात्तथात्वं ब्रह्मतेजस्त्वचेतनंदेवताधिष्ठितंमंत्राधिकारिरूपंकथमन्यथाभवेत् तथा सति भगवतायुद्धे प्रयोज्यमानानांब्रह्मास्त्रादीनांतथात्वंनस्यात् अत्रचपरीक्षितः पांडवानांचरक्षणात् महदाश्चर्यमिदंवृत्तमित्याशंक्याहमामंस्था इतितदाश्चर्यंमामंस्थाः एतदाश्चर्यंमामंस्थाः कर्तुमकर्तुमन्यथाकर्तुं समर्थत्वात्नहिदृष्टांतव्याख्यादिनाभगवतिपदार्थे निर्णयः कर्तुंशक्यते "अलौकिकास्तुयेभावान तांस्तर्केणयोजयेदि"तिवाक्यात् किंच सर्वाश्चर्यमयेविरुद्धसर्वधर्माणामाश्रये भगवतिअलौकिकसर्वपदार्थमये किमाश्चर्यंनह्येतदन्यस्योच्यते किंचच्युतिरहितःस्वयमात्मनएवात्मानं सर्वच्युतंकरोति तत्रकिमेतदाश्चर्यमिति किंच मायानामकाचिच्छक्तिः पूर्वनिरूपितासाचदेवतामायास्वरूपभूतानया किलविश्वंसृजतिअवतिहंतिचएकंवस्तुअसहाय एकस्यैवअनेकभावं संपादयतीत्यर्थः किंच अतएव जायतेविरुद्धधर्मसंबंधेऽपिनपूर्वधर्मनिवृत्तिः ॥ १६ ॥

---

श्रीविश्वनाथचक्रवर्त्ती ।

ब्रह्मास्त्रत्रयस्यास्त्रान्तरैरनिवार्य्यत्वात् तथा एकेन ब्रह्मास्त्रेण पूर्व्ववदर्ज्जुनप्रयुक्तेनापि प्रतिजनाभिमुखमागतस्य पृथक्पृथग्ब्रह्मास्त्रत्रयस्य दुर्निवारत्वात् तत्प्रयोगादिकालविलम्बासहत्वाच्च व्यसनं दुष्परिहरं वीक्ष्य विचार्य्य न्यस्तशस्त्रोऽपि सुदर्शनेनेत्यादि । तेन स्वप्रतिज्ञा- भङ्गेनापि भक्तवात्सल्यनामानमसाधारणं स्वधर्म्मं ररक्षेति भावः ॥ १३ ॥

अन्तःस्थ इति वैराट्या अपि अन्तर्यामिरूपेण स्थितोऽपि योगेश्वरः योगवलेन हरिरिति कृष्णरूपेण प्रविश्य गर्भमावृणोत् आवृत्य स्थितो ररक्षेत्यर्थः । स्वमायया योगमाययेति वैराट्या तु तथाभूतत्वेनाविज्ञात इत्यर्थः । कुरूणां तन्तवे सन्तानाय । पाण्डवा अपि कुरुवंशजा एवेत्येवमुक्तम् ॥ १४ ॥ १५ ॥ १६ ॥

---

सिद्धांतप्रदीप ।

कथंचिदर्जुनः स्वात्मानं पूर्ववद्रक्षितुं शक्नुयाद्पिनान्येशक्नुयुरित्यतस्तेषां श्रीमत्सुदर्शनेनरक्षां व्यधादकरोत् ॥ १३ ॥

हरिः स्वानन्यजनदुःखहरणस्वभावः योगेश्वरः । दूरस्थभक्तमनोरथ संपादनदक्षोपि सर्वभूतानामात्मांतर्यामी । सर्वदानित्यंप्राप्त अतएव भक्तवात्सल्येनगृहीतः । सूक्ष्ममंगलमूर्तिः प्रतिगृहीतचक्राद्यायुधः वैराट्याः विराट्पुत्र्याः । अंतः स्थः एवंकुरुतंतवेतत्संतानायस्वयंगर्भं प्रावृणोदावृतवान् ॥ १४ ॥

अमोघमनिष्फलम् । अप्रतिक्रियमप्रतिभटम् । वैष्णवंतेजः सुदर्शनादिरूपमासाद्यसमशाम्यत् । सम्यक्शांतमासीत् ॥ १५ ॥

सर्वमाश्चर्यमयंयस्मिन्सतथातस्मिन् । एतदुदरे । आविर्भूयगर्भरक्षणं वह्निसुखब्रह्मास्त्रशमनमाश्चर्यमिति । मामंस्थामन्यस्व । इदंविचित्रं विश्वंमाययास्वशक्तिभूतया ॥ १६ ॥

---

ब्रह्मतेजोविनिर्मुक्तै रात्मजैः सह कृष्णया ।
प्रयाणाभिमुखं कृष्णमिदमाह पृथा सती ॥ १७ ॥

कुंत्युवाच ॥　नमस्ये पुरुषं त्वाद्यमीश्वरं प्रकृतेः परम् ।
अलक्ष्यं सर्वभूतानामंतर्बहिर वस्थितम् ॥ १८ ॥
मायाजवनिकाच्छन्नमज्ञाधोऽक्षजमव्ययम् ।
न लक्ष्यसे मूढदृशा नटो नाट्यधरो यथा ॥ १९ ॥
तथा परमहंसानां मुनीनाममलात्मनाम् ।
भक्तियोगविधानार्थं कथं पश्येमहि स्त्रियः ॥ २० ॥

भाषाटीका ।

अपने ( भगवान ) को छोड़कर नहीं जाता है अन्य विषय में मन जिनका उन पांडवों का व्यसन देखकर । अपने सुदर्शन अस्त्र से अपने भक्तों की रक्षा विधान की ॥ १३ ॥

सर्व भूतात्मा योगीश्वर अंतस्थ हरि ने कुरु वंश के विस्तार के निमित्त विराट तनया उत्तरा के गर्भ को अपनी माया से आवरण करदिया ॥ १४ ॥

हे भृगूद्वह ! यद्यपि ब्रह्म शिर अस्त्र अमोघ है और उसकी प्रति क्रिया किसी शस्त्र से नहीं होती है तथापि वैष्णवतेज को प्राप्त होकर शान्त होगया ॥ १५ ॥

सर्वाश्चर्यमय अच्युत में तुम इसका कुछ आश्चर्य मत मानो । जो भगवान देवी माया से इस जगत् को सृजते हैं रक्षा करते नाश करते हैं उनमें यह क्या आश्चर्य है ॥ १६ ॥

---

श्रीधरस्वामी ।

कृष्णया च सह ॥ १७ ॥

त्वा त्वां नमस्ये नमस्करोमि । ननुकनिष्ठं मांकथं नमस्करोपितत्राह आद्यपुरुषम् कुतः प्रकृतेः परम् । तत्कुतः ईश्वरंप्रकृतेरपिनियंतारम् अतएव सर्वभूतानामन्तर्बहिश्चपूर्णत्वेनावस्थितं तथाप्यलक्ष्यम् ॥ १८ ॥

तत्रहेतुः मायैवजवनिकातिरस्कारिणी रूपातयाआच्छन्नं ( प्रतिच्छन्नम् ) अतोऽहमज्ञाभक्तियोगानाभिज्ञा केवलंनमस्यामि । अधःअक्षजम् इंद्रियजंज्ञानंयस्मात् तम् अव्ययम् अपरिच्छिन्नम् । तत्प्रपंचयति मूढदृशादेहाभिमानिनापुंसात्वंनलक्ष्यसे ॥ १९ ॥

किंचपरमहंसानाम् आत्मानात्मविवेकिनांततोमुनीनांमननशीलानामपि ततश्चामलात्मनां निवृत्तरागादीनामपि तथातेननिजमहिम्नान लक्ष्यसे । अतोभक्तियोगविधातुं त्वांवयंस्त्रियः कथंहिपश्येम । यद्वापरमहंसानामपि भक्तियोगविधानार्थं त्वाम्आत्मारामान्मुनीनपिअचिंत्य निजगुणैराकृष्यभक्तियोगं कारयितुम् अवतीर्णमित्यर्थः ॥ २० ॥

---

दीपनी ।

अध इत्यादि स्वतःसिद्धज्ञान मित्यर्थः ॥ १९ ॥ २१ ॥

---

श्रीवीरराघवः ।

ततोब्रह्मतेजसाब्रह्मास्त्रेणविनिर्मुक्तै रात्मजैर्युधिष्ठिरादिभिः कृष्णयाद्रौपद्याचसहसतीपृथाकुंतीप्रयाणाभिमुखंकृष्णमिदं वक्ष्यमाणमाह १७

तदेवाहनमस्यइतिशड्भिः श्लोकैः प्रयाणाभिमुखंकृष्णमवलोक्यतद्विश्लेषमसहमानातंततोनिवर्त्तयितुंलौकिकोऽपिकश्चिद्गुणाढ्यः पुमानाश्रिता न्हातुमुत्सहते परमकारुणिकस्यसर्वांतरात्मनोऽचिंत्यविविधविचित्रशक्तेः स्वेच्छयाप्राकृतादचर्यदिव्यतनोराश्रितवात्सल्यजलधेराश्रितार्ति हरस्यनिरतिशयसुखदस्ययोगपरिशुद्धमनसैवगोचरस्याविज्ञातचिकीर्षितस्य सर्वशरीरकस्यसर्वसुहृदोऽचिंत्यविविधविचित्र चेष्टितस्या चिंत्यावतारस्यतवपदांबुजयंतरेणानास्माकंशरणमस्त्यतः कथमनन्यात्मनोस्मान्विहायगंतुमुत्सहसेइति विज्ञापयतितत्रतावल्लौकिकपुरुषवै जात्यज्ञापनायानितरसाधारणंकर्मविशिष्टंनमस्करोति नमस्यइति आद्यंसर्वजगत्कारणंप्रकृतेःपरम्पुरुषमीश्वरंत्वांनमस्करोमि नमस्कारेण पूजयामीत्यर्थः नमःशब्दात् "शब्दवैरकलहाभ्रकण्वमेघेभ्यःकरणे" इत्यतःकरणइत्यनुवर्तमाने "नमोवरिवश्चित्रङःक्यच्" इतिकरोत्यर्थेक्यच्च्या त्वादात्मनेपदं सांख्याभिमतपुरुषव्यावृत्त्यर्थमीश्वरमित्युक्तं सापेक्षमीश्वरत्वंब्रह्मादिसाधारणमितितद्व्यावृत्त्यर्थंसर्वभूतानामंतर्बहिश्चावस्थि तमित्युक्तम् अनेन "यच्चकिंचिज्जगत्सर्वंदृश्यतेश्रूयतेपिवा अंतर्बहिश्चतत्सर्वंव्याप्यनारायणः स्थितः" इतिश्रुतिरुपबृंहिताभवति अनेनदेशतोविशे षोप्युक्तः अलक्ष्यमितिप्रकृतिसिद्धअलक्ष्यंतेजस्तथा सर्वंचफलितंसर्वभूतानांब्रह्मादिस्थावरांतानामंतर्बहिश्चव्याप्यनियंतृतयावस्थितमित्यर्थः प्रकृतेःपरत्वेहेतुरलक्ष्यमिति प्रकृतिसिद्धअलक्ष्यंतेजस्तथ सर्वंचफलितंसर्वभूतानांब्रह्मादिस्थावरांतानामंतर्बहिरवस्थितमप्यलक्ष्यमदृश्यम् ॥ १८ ॥

ने इत्यलक्ष्यंयद्वाअंतर्बहिश्चावस्थितमप्यलक्ष्यमदृश्यम्

कृष्णाय वासुदेवाय देवकीनंदनायच ।
नंदगोपकुमाराय गोविंदाय नमोनमः ॥ २१ ॥
नमः पंकजनाभाय नमः पंकजमालिने ।
नमः पंकजनेत्राय नमस्ते पंकजांघ्रये ॥ २२ ॥
यथा हृषीकेश खलेन देवकी कंसेन रुद्धा सुचिरं शुचार्पिता ।
विमोचिताहं च सहात्मजा विभो त्वयैव नाथेन मुहुर्विपद्गणात् ॥ २३ ॥
विषान्महाग्नेः पुरुषाददर्शनादसत्सभाया वनवासकृच्छ्रतः ।
मृधे मृधेऽनेकमहारथास्त्रतो द्रौण्यस्त्रतश्चास्महरे भिरक्षिताः ॥ २४ ॥

## सिद्धांतप्रदीपः ।

पृथाकुंतीद्दवक्ष्यमाणामाह ॥ १७ ॥

त्वात्वांनमस्येऽहं । नमस्करोमि । ननुभ्रातृपुत्रंयुधिष्ठिरभीमाभ्यांस्वपुत्राभ्यामपिकनिष्ठंकस्मान्नमस्करोषितत्राह । आद्यमिति । किंप्रधानं नेत्याह । प्रकृतेः परंपुरुषमिति । किंकमपिजीवविशेषंनेत्याह । ईश्वरमिति । ननुजीवेषुकेचिदीश्वरा अपिसंतितंनमस्करोषिकिंनेत्याह सर्वभूतानामंतर्बहिरवस्थितमिति“अंतःप्रविष्टः शास्ताजनानां यच्चकिंचित् जगत्यस्मिन्दृश्यतेश्रूयतेपिवा अंतर्बहिश्चतत्सर्वंव्याप्यनारायणःस्थितः मयिसर्वमिदंप्रोतंसूत्रेमणिगणाइवे”त्यादिश्रुतिस्मृति प्रतिपाद्यंपरंतत्त्वमित्यर्थः तर्हिसर्वत्रकुतोमांजनानपश्यंतितत्राह । अलक्ष्यमिति साधारणैश्चक्षुरादिभिरग्राह्यमित्यर्थः “नचक्षुषापश्यतिकश्चिदेन” मित्यादिश्रुतेः । योगशुद्धैः करणैस्तुभवदनुग्रहभाजनोभवंतंपश्यत्येवेति भावः “तमक्रतुपश्यतिवीतशोकोधातुः प्रसादान्महिमानमीशं दृश्यतेत्वग्र्ययाबुद्ध्यासूक्ष्मयासूक्ष्मदर्शिभि” रित्यादिश्रुतिभ्यः ॥ १८ ॥

मायावृतत्वेनाल्पज्ञत्वेनात्मनोदैन्यंनिवेदयंती । अनावृततयाभगवंतंविशिनष्टि । माया त्रिगुणासैव“अंतेसिराजवनिकास्यात्स्यात्तिरस्करिणीचसे” तिकोशाज्जवनिकाऽयवशातपटीतया अच्छन्नमनावृतम् एतदीशनमीशस्यप्रकृतिस्थोपितद्गुणैः नयुज्यतेसदात्मस्थैर्ययाबुद्धिस्तदाश्रयेति । विलज्जमानयायस्यस्थातुमीक्षापथेमुयेतिचवक्ष्यमाणात् अधोक्षजम् । अधोऽक्षजमिंद्रियजन्यंज्ञानंयस्मात्तंसर्वज्ञम् । अज्ञस्त्वं निर्विकारम् अहमज्ञाअल्पज्ञाजीवस्यमायावृतस्याज्ञोजंतुरित्यादिवाक्यैरज्ञत्वावगमात् । नमस्येइतिपूर्वेणान्वयः । ननुधृतराष्ट्रादिभिस्त्वं निर्विकारम् ... प्रविष्टंतदप्रदानेनासत्कृतंमांकिमेवंनमस्करोषीत्यत्राह नेतिनाट्यधरः मूढदृग्धनादानायस्वज्ञगतिरपूर्वैः पांडवकृतपंचग्रामयाचनायसभायां प्रविष्टंतदप्रदानेनासत्कृतंमांकिमेवंनमस्करोषीत्यत्राह ... चेष्टावान् नटः स्वरूपेणैवावस्थितः मूढदृशानलक्ष्यते यथातथात्वमपितस्यदुर्वृत्तस्यैश्वर्यं जिहीर्षुः स्वरूपेणैवावस्थितः सर्वेश्वरोयमिति मूढदृशानलक्ष्यसेस्म ॥ १९ ॥

किंचैतावत्त्वेनतुकोपित्वांनजानातीत्याह तथेति यथानंताचिंत्यस्वरूपगुणशक्त्याद्याश्रयस्तथा परमहंसानाम् आत्मानात्मविवेकवतां मुनीनामात्मादिमननशीलानाम् अमलात्मनामात्मादिजिज्ञासार्हाणाम् नलक्ष्यसेतृतीयार्थेषाष्ठी तैः साकल्येननलक्ष्यसेइत्यर्थः “कोद्धावेद नयद्वा गच्युत्पद्यतेनमनोनविज्ञायथैतदनुशिष्यादित्यादिश्रुतेः नमेविदुःसुरगणाः प्रभवंनमहर्षयइति श्रीमुखोक्तेश्च । अतः स्त्रियोवयं भक्तियोगविधानार्थंभक्तियोगंविधातुंत्वांकथंपश्येम । अत्रयदिपरमहंसैर्लब्धात्मादि विवेकैर्नलक्ष्यसेतर्हि विवेकार्थमननपरैर्नलक्ष्यसेइति किमुवक्तव्यमित्येवमुत्तरोत्तरंकैमुत्यन्यायोज्ञेयः ॥ २० ॥

---

## भाषा टीका ।

ब्रह्म तेज विनिर्मुक्त अपने आत्मजों को और द्रौपदी को संग लेकर प्रयाणाभि मुख श्रीकृष्ण को कुंती देवी ने यह कहकर स्तव किया ॥ १७ ॥

( श्री कुंत्युवाच ( आद्यईश्वर प्रकृतिसे पर पुरुष अलक्ष्य सर्व भूतोंके अंतर्व हिस्थ तुम को नमन कर ती हूं ॥ १८ ॥

मायारूप जवनि कासे छन्न अधो क्षज आप को अज्ञा मै केवल नमन करती हूं मूढ दृष्टि अभिमानी, पुरुषों से आप नहीं लखे जाते हैं । जैसे नाट्यधर नट को मूढ नहीं लख सकते हैं ॥ १९ ॥

वैसेही परमहंस अमलमन मुनि जनों को भक्ति योग विधानार्थ आप प्रगट हैं तब भक्ति योग विधानके अर्थ हम स्त्रीयें आपको कैसे देख सकती हैं ॥ २० ॥

---

## श्रीधरस्वामी

ज्ञानभक्त्योरशक्यत्वमुक्त्वापुनः केवलंनमस्करोति कृष्णायेतिद्वाभ्याम् ॥ २१ ॥

पंकजंनाभौयस्य । पंकजानां मालास्तियस्य । पंकजवत् प्रसन्नेनेत्रेयस्य । पंकजांकितावंघ्रीयस्यतस्मै ॥ २२ ॥

तत्कृतोपकाराननुस्मरंतियथेतिद्वाभ्याम् । अयमर्थः—मातृतोऽपि मय्यधिकात्वत्प्रीतिः । तथाहिहेहृषीकेश यथा देवकीकंसेनरुद्धा तत्कृतोपकाराननुस्मरति ... तंदर्शयतिसाअतिचिरंरुद्धासती तस्मादेवसकृद्विमोचितातथाशुचा त्वयाविमोचिताअहंत्वकितयैवविमोचितेति काकामहान्विशेषउक्तः । तंदर्शयतिसाअतिचिरंरुद्धासती ... पितासतीनचतस्याः पुत्रारक्षिताः अस्तिचान्योनाथस्तस्याः अहंतुविपद्गणात् तत्रापिमुहुः शीघ्रंचसात्मजा च त्वयैवनाथेनेति ॥ २३ ॥

विपद्गणमेवदर्शयति । विषात् भीमस्यविषमोदकदानात् । महाग्नेः जतुगृहदाहात् । पुरुषादाहिडिंबादयोराक्षसास्तेषां दर्शनात् । असत्सभायाद्यूतस्थानात् । अभितोरक्षितात्र्आस्मअभवाम ॥ २४ ॥

दीपनी।

जगत् कारणता माह। नमः पंकजनाभायेति। पंकजलोकात्मकं पद्मनाभौयस्य अपरिच्छेद्यतामाह पंकज मालिने इति। एवंभूतानां पंकजानां माला श्रेणी यस्यास्ति अशेष ब्रह्माण्डाधार इति व्याख्यालेशः॥ २२॥ ३६॥

---

श्रीवीरराघवः।

नन्ववतारदशायामयोगपरिशुद्धमनोभिरपिसर्वैर्दृश्यमानस्यभगवतः कथमलक्ष्यमद्माधोक्षजंनलक्ष्यसेमूढदृशेत्युक्तम् "नमांसचक्षुरभिवीक्षतेतंनचक्षुषापश्यतिकश्चनैनामित्यादिभिः श्रुतंचादृश्यत्वमिति चेन्नसर्वैर्देवमनुष्यादिसाजात्येनदृश्यमानत्वेऽपित्वद्विलक्षणत्वेनादृश्यत्वाद्विलक्षणादर्शनमेवह्यलक्ष्यमित्यादिभिःप्रतिषिध्यतेनदृष्टांतेनापितदेवावगतव्यंजानंत्याअपिकथंपश्येमहिस्त्रियदृत्युक्तिर्लोकपरिपाट्याभिप्रायिकाथतस्त्वंसाक्षात्प्रकृतेः परः परमपुरुषईश्वरस्ततएवास्यामवतारदशायामपिस्वभावमजहत्स्वासाधारणानूधर्मानूदर्शयसीत्यभिप्रायेणाह यथेति हेहृषीकेशखलेनदुरात्मनाकंसेनचिरंशुचार्शोकेनार्पितानित्यार्पिताशोकं प्रापितेतियावत्याचदेवकीयथाविमोचितातथाऽहमपिसपुत्राहेविभोसर्वशक्तेत्वयैवनाथेनविपद्गणान्मुहुर्विमोचितार्किकिमेतस्यनेत्यादिर्विमोचितेवेत्यर्थः अनेनस्वार्थनिरपेक्षपरदुःखनिराचिकीर्षारूपंकृपालुत्वमाश्रितानिष्टपरिहर्तृत्वंनिम्नोन्नतानादरेणाश्रितमात्रपक्षपातित्वंचप्रदर्शितमितिफलितम्॥ २३॥

कोऽसौविपद्गणः यस्मात्त्वंविमोचितेत्यत्राहविषादिति महाग्नेर्लाक्षागृहाग्नेः पुरुषादानांराक्षसानांदर्शनाद्भयात्वनवासकृच्छ्रतः वनवासक्लेशात् मृधेमृधेप्रतियुद्धंमहारथानामस्त्रेभ्यः द्रौण्यस्त्रतः ब्रह्मास्त्राद्धेहरेरक्षिताःस्म अभवाम विषादिभ्योरक्षणप्रकारोमहाभारतादवगन्तव्यः विस्तरभयान्नात्रलिख्यते॥ २४॥

---

श्रीविजयध्वजः।

तर्हिस्त्रीणांभगवदुपासनाभावेनतज्ज्ञानाभावान्मोक्षाभावइत्याशंक्यतत्स्तुतिरेवअपरोक्षज्ञानजनकतयामोक्षसाधिकेत्यभिप्रेत्याह कृष्णायेति। कृषतिविलिखतिदारयतिमोहपटलमितिकृष्णःतस्मैनमोनमः नीलोत्पलदलश्यामलायवा वसुनादीव्यतीतिवसुदेवः आनकदुन्दुभिः तत्पुत्रत्वेवासुदेवःतस्मैइति वसआच्छादनइतिधातोः इदंजगदाच्छाद्यदीव्यतीतिवासुदेवः तस्मैइतिवा बलादैत्यनिरसनशीलक्रीडादिगुणसंपत्तद्धर्मस्वायइतिवा देवकीलक्ष्मीःतांनंदयितुंशीलमस्येतिदेवकीनंदनः तस्मैनंदगोपनाम्नोराज्ञःकुत्सितंकुष्ठमारयतिनाशयतीतिनंदगोपकुमारः तस्मैपुराणांतरप्रसिद्धार्थमवलंब्यकथितोयमर्थः अन्यःप्रसिद्धः गवांविद्योलाभोयस्यसतथातस्मै गवावेदेनलभ्यतेइतिगोविन्दइतिवा॥ २१॥

पंकजनाभौयस्यसतथातस्मै पंकाज्जनंजननंयस्यतत्पंकजंनपद्मंतस्मात्रतिअभिभवति आप्नोतीतिवा पंकजनाभःतस्मैपंकजैः रचितामालाऽस्यास्तीतिपंकजमालीतस्मै पंकजदलवन्नेत्रेयस्यसतथातस्मै पंकजैरचितारेखातद्युक्तोऽङ्घ्रिर्यस्यसतथोक्तस्तस्मै॥ २२॥

हृषीकेशइंद्रियगणनाथकसिहिंसायामिति धातोःकंसेनहिंसाशीलेनखलेनइंद्रियारामेणातिचिरंकारागृहेरुद्धाशुचार्पितादेवकीत्वयायथाविमोचिता हेविभोसहात्मजापुत्रैःसहिताहंत्वयैवनाथेनविपद्गणात् मुहुर्विमोचितेत्येकान्वयः॥ २३॥

विपद्गणंविविच्याह विषादित्यादिना हेहरे वयं भीमायदत्तात्कालकूटविषात् जतुगृहदाहप्रयुक्तमहाग्नेः पुरुषादानांहिडिम्बबकर्किर्मीरादीनांदर्शनाद्भक्षणादसतांदुर्योधनादीनांद्रौपदीकेशग्रहणादिनिंदितकर्मणांसभायाः वनवाससंकटान्मृधेमृधेरणेरणेअनेकेषांमहारथानांमायायस्त्रतः तथाद्रौण्यस्त्राद्ब्रह्मास्त्राच्चत्वयाऽभिरक्षिताऽऽस्मइत्येकान्वयः तस्माद्वयमद्यत्वांशरणंगताऽस्मीतिवाक्यशेषः॥ २४॥

---

क्रमसन्दर्भः।

तदेवं भूतोऽपि त्वमहो अस्माकं मित्थं सुखद स्तापहारीच सवृत्तोऽसीति तत् तरस्मृत्वा नमस्करोति कृष्णायेति॥ २१॥

तदेवं भूतोऽपि त्वमहो अस्माकं मित्थं सुखद स्तापहारीच सवृत्तोऽसीति तत् तरस्मृत्वा नमस्करोति कृष्णायेति॥ २१॥

तदेव मेव सुखदत्व तापहारित्वरूपं निजस्वभावं प्रकटयन्निव पंकजाभैर्निजांगैर्विराजसे इत्याह नम इति। पंकजाकारं भगवल्लक्ष्म लक्ष्मी यस्य। पंकजे इव अंघ्रीयस्य॥ २२॥

स्वतापहारित्वमेव दर्शयति यथेति। त्वयैवेति बलदेवस्यान्यस्य च पक्षपात दर्शनेन सपुत्रादि साहाय्यमपि त्वदनुग्रहेणेतिभावः॥२३॥

असत् सभाया द्रौपदी वस्त्र वर्धनादिना॥ २४॥

---

सुबोधिनी।

एवंस्वरूपमुक्त्वागुणानूवदन्ती सर्वसंबंधेननमस्यतिकृष्णायेति नाम्नाऽमृतपुरुषत्वंयान्येवतन्नमस्करणीयानिरूपाणि तान्येवभगवानूस्वीकार्यत्वसंबंधात् पुरस्कृत्यावतीर्णइति ज्ञातेननमस्करणीयानि भवंतियथामद्यतः प्रक्षीणदशायां सेवकत्वेनज्ञात्वानमस्कारकरणेलोकेननुकेवलंमन्यतेकृष्णायेतिवामूलरूपस्यानुवादः मूलमनूद्यहिसंबंधनिरूपणेननमस्करणीयोसबलिवासुदेवायेतिप्रमाणपुरुषत्वंप्रमाणनिरूपणेना

सुबोधिनी ।

तरंमोचयन्तद्भगिनीमपिमोचयेदितितथादेवकीनंदनायेतिदेवकींमोचयन् तन्ननन्दामपिमोचयेदितिचकारात्पितृभामकंमोचयन्तत्पत्नीमपि मोचयेदितिपांडवप्रियायेतिनमस्करणीयंरूपंतथादूरसंबंधेऽपिमोचयेदितिवसुदेवमित्रसंबंधमाहनंदगोपकुमारायेतिकुमारः पालकपुत्रः स्कंदे तथोपलब्धेः गोपसंबंधेनापिमोचयेदितिगोपपदं सन्मार्गवर्त्तिनांसर्वेषामेवसर्वाभीष्टप्रदइति गवामिंद्रायइन्द्रंनस्त्वाभिषेक्ष्यामइति वचनात् गोविंदायेतिनिगमादस्यसिद्धिः निगमनिरुक्तव्याकरणेभ्योधापदसिद्धिः गोविन्दइतिचाभ्यधादितिनिगमस्थानीयंवसतीवरीवत् निगमनाद्वैरुक्त रादरात् अनेनसंबंधमोचकत्वंगुणोऽप्युक्तः ॥ २१ ॥

गुणांतरानाहनमः पंकजनाभायेति जगत्कारणत्वभूषितत्वकृपाश्रयत्वसुखसेव्यत्वगुणैर्नमस्यतिनमनंहिस्वरूपेगुणेवानलीलादौरसाविशा तूपंकजंनाभौयस्येतिब्रह्मपितृत्वंपंकजमालिनेइतिलक्ष्मीपतित्वंसाहिविवाहेनवपंकजमालां प्रक्षिप्तवतीपंकजनेत्रायेतिसर्वपातित्वंवश्यतासंपा दकत्वेनामृतवर्षणाद्वापंकजांघ्रयइतिभक्तिप्रवर्तकायसर्वजनकत्वेनसर्वमुत्पाद्यापिप्रयच्छेत्पैहिकामुष्मिकंप्रयच्छतिमर्कि चेतिगुणाः ॥ २२ ॥

लीलामाहत्रिभिः यथेति मुख्यलीलाहृषीकेशेतिसर्वेषामिंद्रियाणांनियामकत्वेनभर्तृवद्रमणात्त्वत्तः सर्वेन्द्रियप्रीतिमनुभूयतद्रसाभिनि विष्टाः केवानंतमेयुरित्यर्थः किंच तवैषामहतीलीलामातरंपितरंचखलेनबंधनंकारयित्वावहुकालं च दुःखानुभवंचकारयित्वापश्चान्मोचय सीतिअतस्तदपेक्षयावयमेवकृतार्थाइतितवैषालीलावक्तुमप्यशक्याभक्तमोचकस्यगुणत्वेऽपिलीलागुह्यागुणएवतथात्वेनकर्त्तव्यः यथाखलेन कंसेनदेवकी च रुद्धासतीत्वयाविमोचिताअतिचिरंशुचार्पितापिविमोचिताशोकमपिदूरीकृतवान्तथाहचचकरात्यशोदानंदयोरपिमायिपुन र्विशेषोऽप्यस्तीत्याहसहात्मजाअनेनममात्मजाअपिमोचिताः तस्यास्तुभवानेवात्मजइतिनात्मजांतरापेक्षाअथवातस्यावहवःपुत्रामारिताः म मत्वेकएवेति तद्विपरीतत्वंमयिकथमेवं करणंतत्राहविभोइति हेसर्वकरणसमर्थ किंच त्वयैवनाथेनत्वमेवनाथोभूत्वामोचयसे अथवा नाथेनसहसामोचिताअत्रतुतदभावात्त्वमेवनाथइत्यर्थः तवनाथभवननाथमोचनयोराद्यएवश्रेयानित्यहमुत्तमालीलायांविपरीतकथनमप्युक्त मम किंच विपद्गणात्मुहुः सानमोचिताकिंतुवारद्वयमेवअहंतुवाल्यादारभ्यवारंवारंविमोचितेति किंच विपद्गणाद्वाविपदांसमूहात्एक स्यासापदिगणशोऽप्यन्याआपदः समायांतिताभारतेप्रसिद्धाः ॥ २३ ॥

ताआपदोगणयतिविषादित्यादिः भगवत्त्वेनसर्वकर्तृत्वात् विषादावपिमोचकत्वमुक्तंविषात् विषमोदकात् सर्पविषाच्चमहाग्नेर्लाक्षागृहे हिडिंवादयःपुरुषादाः तेषांदर्शनेजातेऽपिरक्षिताः असत्सभायाद्रौपदीनिग्रहेकवरकेशाकर्षणादौ वनवासकृच्छ्रतः द्रौपदीहरणादुर्वासःप्रभृती नांवनवासकृच्छ्रतः इतिवनेऽपिराज्यैश्वर्यदानात् तदनुयुद्धे मृधेगोग्रहणमारभ्यअद्यावधियावंतः संग्रामाजाताः अनेकमहारथाभीष्मादयः तेषांब्रह्मास्त्रादिभिः भगदत्तकर्णादीनांत्वप्रतीकार्यताभवद्रक्षाचतत्रैवसिद्धासारक्षानप्रार्थनयावाधकस्वरूपाज्ञानात् अतओऽस्मत्तर्हि ह आभि तोरक्षिताः स्मः ॥ २४ ॥

---

श्रीविश्वनाथचक्रवर्त्ती ।

अतः सर्वावतारेषुमध्येत्वमेवातिश्रेष्ठइत्याह कृष्णायेति । तत्रापियांस्त्वंस्वीकरोषितेष्वपिप्रेमवत्सुधन्येषुमध्येमद्भ्राताअतिधन्योयस्ते पितेत्याहवासुदेवायेति । ततोऽपिअधिकप्रेमवतीदेवकी धन्यायातमातेत्याह । देवकीनन्दयसितदीयगर्भस्थित्वात्तां सर्वतोऽपिसमृद्धिमतीं करोषीत्यर्थः । ततोऽप्यधिकप्रेमवान्नन्दोधन्यइत्याह । नन्दगोपस्यकुमारायकौमारलीलामाधुर्य्यसएवास्वादयामासेतिभावः । ततोऽपिप्रे भवतीधन्यायशोदेत्यग्रिमश्लोकेवक्ष्यते । कौमारलीलातोऽपिव्रजस्थस्यतवकैशोरलीलामाधुर्य्यमधिकमित्याहगोविंदायेति । कैशोरारम्भएवा भिषेकानन्तरं गोविंद नाम ख्यातेः तदैव गाः सर्वेषां सर्वेन्द्रियाणि विंदसे आकृष्य प्राप्नोषीत्यर्थः । असाधारण्येन तदास्वादकजनास्तु रहस्यत्वेन स्वीयरसास्वादना नौचित्येनच नोट्टंकिताः ॥ २१ ॥

अहंतुतेषां मध्ये नगणनीया तदपि मय्यत्र सुखदोऽसीत्याह नमः पंकजेति । तव नाभि माला नेत्रादिषु पतितामे दृष्टिः सुखशीतला भवतीति भावः ॥ २२ ॥

किञ्चाहमतिदीना त्वया मातेव पालितेत्याह यथेति । हे हृषीकेशेति मदन्तःकरणं त्वमेव जानासीति भावः । अहञ्च तथा मोचिता किन्तु सहात्मजेति मयि विशेषेण तव दया । तत्र हेतुः शुचार्पिता शुचायां शोके एव मत्कर्म्मणा अहमर्पिता इति तस्याः सकाशादप्य- हमतिदुःखिनीत्यर्थः । किञ्च त्वयैव नाथेनेति तस्यास्तु नाथो वसुदेवो विद्यते इत्यपत्यान्तरोत्पत्तिसंभावनाया विद्यमानत्वात् त्वञ्चापत्य- चूडामणिरभूरेव किमन्यैरपालितैर्निकृष्टैः षड्गर्भैरिति भावः । किञ्चाहं मुहुः पुनःपुनरपि यो विपदां गणस्तस्मान्मोचिता सा तु सकृदेव कंसहेतुको यो विपद्गन्ध एव तस्मादेव मोचिता तत्रापि मद्गर्भे परमेश्वरो जनिष्यते इति मनोऽनुलापसुखाभिमानवत्याः कुतो विपद्गन्धोऽपि तदनन्तरं विपत् कापि तस्या नाभूदेवेति अहमेव सर्व्वतोऽप्यतिदीनेति मयि तव दीनवन्धुत्वादेव दया न त्वहं देवकीवत्त्वयि प्रेमवती भाग्यवती वेति भावः ॥ २३ ॥

विपद्गणमेव दर्शयति । विषाद्भीमस्य विषमोदकदानात् । महाग्नेर्जतुगृहदाहात् । पुरुषादा हिडिम्बादयो राक्षसाः । असत्स- भाया द्यूतस्थानात् ॥ २४ ॥

---

**विपदः संतु नः शश्वत्तत्र तत्र जगद्गुरो।**
**भवतो दर्शनं यत्स्यादपुनर्भव दर्शनम् ॥ २५ ॥**
**जन्मैश्वर्य श्रुत श्रीभिरेधमान मदः पुमान्।**
**नैवार्हत्यभिधातुं वै त्वामाकिंचन गोचरम् ॥ २६ ॥**

सिद्धांतप्रदीपः।

अतो "ब्रह्मविदाप्नोतिपरम् ज्ञात्वामांशांतिमृच्छती" त्यादि श्रुतिस्मृत्यनुसारेणभगवंतंज्ञात्वाप्रेम्णानमस्करोति।कृष्णायेतिद्वाभ्याम्।२१।२२।
अथयथेतिद्वाभ्यां भगवत्कृतोपकारान्स्मरति। यथात्वयादेवकीविमोचितातथाहंचविमोचितेतिसामान्योक्तिः तत्रविशेषंदर्शयति सातु
शुचार्पिताकसहतपुत्रशोकव्याप्ताशुचिरंखलेनदुरात्मनाकंसेनरुद्धासतीसकृद्विमोचिता। अहंतुविपद्गणात्सहात्मजामुहुः। शीघ्रं च विमो
चितेतिमातृतस्तवमयिकृपातिशयइतिभावः॥ २३॥
तदेवाह। विषात्कामकोष्ट्याख्येगंगायांस्थाने दुर्योधनेनभीमायदत्तात्। महाग्नेर्वारणावतेग्रामेजतुगृहदाहात्। पुरुषाददर्शनात्पुरुषा
दानांहिडिंववकजटासुरादीनांदर्शनात्। असत्सभायाद्यूतस्थानात्। बनवासकृच्छ्रतः बनवासेप्राप्तात्। बहुविधात्क्लेशात्। मृधेमृधेऽनेका
महारथास्त्रतः। प्रतियुद्धमनेकानां महारथानां भगदत्तादीनांविष्णवस्त्रादिभ्यः। द्रौण्यस्त्रतः। छन्नापितरंहतंदृष्ट्वाप्रकुपितनद्रौणिनासर्वेषां
नाशायप्रादुष्कृतान्नारायणास्त्रात् ब्रह्मास्त्राच्च। हेहरेत्वयाभितः परितोरक्षिताः। आस्मभवामः॥ २४॥

---

भाषा टीका।

कृष्ण वासुदेवको देवकी नंदन को नंद गोप कुमार को गोविंद को नमो नमः॥ २१॥
पङ्कजनाभ—कोनमः पङ्कजमाली को नमः पङ्कज नेत्र को नमः पङ्कज समान अंघ्रि को नमः॥ २२॥
पंकजनाभ—कोनमः पङ्कजमाली को नमः पङ्कज नेत्र को नमः पङ्कज समान अंघ्रि को नमः॥ २२॥
हेहृषी केश! खल कंसने चिर काल से रुद्ध की और शुचा र्पित देवकी की जैसे आप ने रक्षा की थी क्या ऐसी ही मेरी रक्षा
की है नहीं मुझपर देवकी से बहुत अधिक कृपा है मुझे पुत्रों सहित तुम्हीं नाथ ने बड़े बड़े विपद्गण से रक्षा की है॥ देवकी को
चिर काल में एकही बेर रक्षा की है मेरी वार २ की है उसके पुत्रों की रक्षा नहीं की थी मुझे पुत्रों सहित रक्षा की है उसे वसुदेव भैयाने
भी बचा लिया था मेरे तुम्हीं एक नाथ हो जब जब विपद हुई हैं तुम्हीं ने रक्षा की है। माता से भी अधिक मुझपर तुम्हारी कृपा है २३
हे हरे! भीमसेन को विष के लड्डू खिला दिये थे उससे लाक्षा भवन की महाअग्नि से हिडिंवादि राक्षसों से द्यूत सभा से बनवास
के बहुत से क्लेशों से और संग्रामों में अनेक महारथों के शस्त्रों से और वहा आश्वत्थामा के ब्रह्मास्त्र से आपने हमारी रक्षा की है॥ २४॥

---

श्रीधरस्वामी।

यत्र यासु विपत्सु। कीदृशं दर्शनं नास्ति पुनरपि भवदर्शनं यस्मात् तत्॥ २५॥
सम्पदस्तु श्रेयः परिपन्थिन्य इत्याह जन्म सत्कुले। जन्मादिभिरेधमानो मदो यस्य सः। अभिधातुं–श्रीकृष्ण गोविंदेति वक्तुमपि
आकिंचनानां गोचरं विषयभूतम्॥ २६॥

---

श्रीवीरराघवः।

यदेतद्विपद्गणनिवारकत्वन्तदेतत्तवकियदर्थादेवतन्निवृत्तेरित्यभिप्रायेणाह विपदइति हेजगद्गुरोतत्रशश्वत्सदातास्त्वयानिरसनीयाआ
श्रितानांविपदः संतु असतांनतन्निरसनाययत्नस्त्वयाकार्यइतिभावः यद्यपुनर्भवदर्शनंभवतोदर्शनंस्यात्नविद्यतेपुनर्भवस्यसंसृतेर्दर्शनंयस्मा
त्तथाभूतभवद्दर्शनंयदिस्यात्सभावनायांलिङ्सकलापन्मूलसंसृतिपरिहारक्षमंतद्यदिस्यात् विपदः संतुनामअर्थादेवतान्नवृत्ताइतिभावः २५
नन्वहमीश्वरश्चेत्तर्हित्वमिवसर्वेऽपिमामेवंविधंकिंनवदंतीत्यतआहजन्मेति ऐश्वर्यशब्दोधनपरः श्रुतशब्दोविद्यापरः जन्मैश्वर्यश्रुत श्री
सत्कुलप्रसवधनविद्यानांश्रीभिः समृद्धिभिरेधमानः मदोयस्यसपुमांस्त्वामभिधातुंनचार्हति त्रिमदोन्मत्तत्वेनश्वरपरयास्थास्याव का
भावादितिभावः अनर्हतामेवसूचयितुंविशिनष्टिअकिंचनगोचरंनास्तिकिंचनयेषांतेअकिंचनाः निःकामास्तेषांगोचरम्॥ २६॥

---

श्रीविजयध्वजः।

भगवत्स्मरणविरोधिसंपत्परंपरायाः भगवद्दर्शनकरविपत्परंपरैवश्रेयसीभगवद्दर्शनहेतुत्वादतः संपद्भ्योभवद्दर्शनकरविपद् एवास्मा
कंसंत्वितिविज्ञापयति विपदइति हेजगत्पतेनोऽस्माकंतत्रतत्रसांसारिकव्यापारेषुनिरंतरंविपदः संतु यासुयासुविपत्सु रि भवसाक्ष
द्दर्शयतीत्यपुनर्भवदर्शनंस्यादिति यद्यस्मात्तस्मात्ताः स्युरितिवाक्यशेषः॥ २५॥
संपद्भ्याविपदांश्रेयस्त्वंकुतइतितत्राह जन्मेति अभिजनैश्वर्यशास्त्रश्रवणजनितविद्याधनश्रीमदैर्वर्धमानमदः पुमान् अ नानांपरम
हंसानांविषयंज्ञातुं योग्यत्वामसतीत्थंत्वामभिधातुंवक्तुमुपलक्षणमेतत्स्मर्तुंवानार्हः वैयस्मात्तस्मात्स्मरणहेतुविपदएवश्रेयसे संपद्भ्य
इतिभावः॥ २६॥

---

क्रमसंदर्भः ।

विपद इति । दर्शनमवलोकनम् यत् यासु । अपुनर्भवम् अन्यत्रकुत्रापि ईदृशमाधुर्य्याभावात् पुनर्न जातं दर्शनं सम्यक्प्रतीतिर्यस्य तत् अपूर्व्वमित्यर्थः ॥ २५ ॥

मद्विधसम्पदस्तु त्वत्सम्बन्धमात्रपरिपन्थिन्य इत्याह जन्मेति ॥ २६ ॥

---

सुबोधिनी ।

एवंनानाविधलीलया भगवत्कृतांरक्षांप्रतिपाद्यलीलायाअद्भुतकर्मवक्तुं रक्षापेक्षयाआपद्एवसमीचीनाइति क्षुधितस्यान्नभोजनसुखवत्विपत्पीडितानांभगवद्दर्शनानंदोदुर्लभइति लोकानांविपदामनिष्टत्वे ऽपिभक्तानामिष्टसाधनत्वात्ताः प्रार्थयतेविपदइति एवंभगवतो विपरीतलीलाआपत्सुपरमानंदंप्रयच्छतितदभावेपरमानंदतिरोभावंकरोतीति तत्रयत्रैवस्थीयतेगम्यतेच ननुकथमेवं निर्द्धारःक्रियतेविपद एवसंत्विति कुतः शिक्षितमेतत्तत्राहजगद्गुरोइतित्वत्तएतत्शिक्षितंयद्विपदः समीचीनाइतिअंतर्यामितयाप्रेरणाद्धिरण्युपपत्तिदर्शनाद्वयथा सर्वप्राणिनांसिक्षितप्रकारमाहभवतोदर्शनंयत्स्यादितियाभ्योविपद्भ्यः दर्शनंयस्यस्यात् तवैवफलरूपदर्शनान्वयव्यतिरेकाभ्यामिदमवगतम् नविद्यतेपुनर्भवस्यदर्शनंयस्मात् पुनः शरीरंनपश्येदित्यर्थः अथवा अपुनर्भवानांजीवन्मुक्तानांदर्शनंयस्मात् ॥ २५ ॥

एवमद्भुतलीलामुपपाद्यदुष्टदुर्ज्ञेयत्वमाहचतुर्भिःजन्मैश्वर्येति भगवतोहिनवप्रकाराधर्माज्ञेयाः नवविधभक्तिहेतवः स्वरूपगुणादिप्रकारेणाभिन्नाः तत्रस्वरूपेज्ञातेश्रवणंभवतिगुणेषुज्ञातेषुकीर्तनंभवतिलीलायांज्ञातायांस्मरणम्एवमेकःखंडः द्वितीयखंडेसमीपगमनपूजनवंदनदास्यानितृतीयेसख्यात्मनिवेदनेतत्रदुष्टदुर्ज्ञेयत्वादीनांतत्रतत्रकारणतामुपपादयिष्यामः तत्रप्रथमंतावत्दुष्टदुर्ज्ञेयत्वंनिरूप्यते तत्रजन्मसत्कुलेऐश्वर्यराज्यादौश्रीपतेर्नज्ञायतेतावत्दुष्टानांवाधककायवाङ्मनोव्यापाराणांदर्शनात्भगवत्समर्पिनंगच्छेत्ज्ञातेतुपुनः अंधोनपश्यतीतिचक्षुष्मताऽपिनद्रष्टव्यमितिवत् अस्मद्बुद्धीनांवाधप्रतीतिरितिद्वितीयेखंडेप्रवर्त्ततेअतः पदसेवनार्थंदुष्टदुर्ज्ञेयत्वंनिरूप्यते तत्रजन्मसत्कुलेऐश्वर्यराज्यादौश्रुतंशास्त्रादौ श्रीः संपत्एताभिरेधमानोमदोयस्यअयमर्थः यथातंडुलादेस्तुंदनद्वापापितृदेवमनुष्यादीनांतृप्तिजनकत्वेनामृतत्वेऽपिमदापेक्षिणांस्वमलत्वेनपर्यवसानात्मादकत्वंतथासातिसत्कुलोत्पन्नइतिनतस्यसंग्रहः कर्तव्यः एवमुत्तरत्रापिइममेवांशं "विद्यामदोधनमद" इतिवाक्यंप्रवृत्तंपुमानिति स्वातंत्र्येणगुरुभिरनियम्यइत्युक्तम् अतएवत्वामभिधातुंनार्हति यथापूर्वब्राह्मणोऽपिजात्यंतरमापन्नोमादिरामत्तो वेदंपठितुंनार्हतिपठनेप्युन्मत्तप्रलपितमेवतन्नश्रोतव्यम् यद्यपिभक्तौसर्वेऽधिकारिणस्तथापिकृत्रिममदिरादिसंबंधेवेदाधिकाराभाववन्मादकस्यनभगवच्छब्दोच्चारणाधिकारः अतस्तदाचाराणकाचिद्व्यवस्थाननु "जन्मकर्मावदातानामि" तिवेदाधिकारोक्तस्तादृशस्यवेदानधिकारो भवतुनामभगवतः पुनः सर्वात्मकत्वात् "चक्रांकितस्यनामानिसदासर्वत्रकीर्तयेदि" तिस्मृतेश्चपतितःस्खलित" इतिवाक्याच्चमहापातकिनोऽपि प्रायश्चित्तत्वेनोक्तत्वाच्चकथंमत्तस्यनाधिकारइतिचेत्तत्राह अकिंचनगोचरमितिअकिंचनाः पूर्वोक्तरहिताः तेषांगोचरोगम्यः अयमर्थः नतादृशस्याधिकारइतिनस्वरूपतो ऽधिकारोनिवार्यतेकिंतु फलतः भगवान्नैवहृदयेनायाति भगवद्गुणाश्चमुखेआगच्छंतोऽप्यवहारत्वेना गच्छतिशौचेगंगाजलवत्अकिंचनगोचरस्वभावत्वात्अद्यापि लोकेसर्वेसंभाष्यंतेनमत्ताः अतस्तेषुकदाचिदपिभगवत्सांनिध्याभावादनधिकार इत्युक्तम् ॥ २६ ॥

---

श्रीविश्वनाथचक्रवर्त्ती ।

किञ्च ता विपद एव मे सम्पद एवेत्याह विपद इति । हे जगतांगुरो हितकारित्वेन स्वकृपोत्थविपदर्पणप्रदानेन सम्पत्प्रसादपूर्णोऽस्मिन् यत्यासु विपत्सु भवतो दर्शनम् । कीदृशं नास्ति पुनरपि भवस्य संसारदुःखस्य दर्शनम् यतः ॥ २५ ॥

लोके सम्पदएव विपद इत्याह जन्मेति । अभिधातुं कृष्णगोविन्देत्यभिधानमपि वक्तुम् ॥ २६ ॥

---

सिद्धांतप्रदीपः ।

यासुभगवत्स्मरणादर्शनादिकंस्यात्ताविपदोऽपियुक्ताः यासुतन्नस्यात्ताः संपदोऽप्ययुक्ताइत्याह । विपदइतिद्वाभ्याम् । हेजगद्गुरोता विपदोऽपितत्रतत्रजन्मनिजन्मनि नः स्युः काः यत्यासुभवतोदर्शनंस्यात् कीदृक्दर्शनंतत्राह अपुनर्भवदर्शनमिति नास्तिपुनरपिभवस्यगतोदर्शनंयस्मात् ॥ २५ ॥

जन्मैश्वर्यश्रुतश्रीभिः । सत्कुलजन्मधनविद्याश्रीभिरेधमानोमदोयस्यसः नास्तिकिंचनयेषांतेषांनिःकामानांगोचरंस्वविषयमाराध्यंत्वामभिधा । हेकृष्णेतिवक्तुमपिनार्हति ॥ २६ ॥

---

भाषाटीका

किन्तु आप यही चाहते हैं कि—हे जगद्गुरो हमको निरन्तर विपद ही हों । जब जब विपद होती हैं तब ही तब आपके दर्शन होते हैं ( [illegible] दर्शनों से ) फिर भव दर्शन नहीं होता है ॥ २५ ॥

जन्म ऐश्वर्य श्रुत और श्री से जिसको मद बढ़ रहा है वह पुरुष आपका नाम भी नहीं ले सकता है । क्योंकि आप तो अकिंचनों ही के गोचर ॥ २६ ॥

---

**नमो ऽकिंचन वित्ताय निवृत्त गुण वृत्तये ।**
**आत्मारामाय शांताय कैवल्य पतये नमः ॥ २७ ॥**
**मन्येत्वां कालमीशान मनादि निधनं विभुम् ।**
**समं चरंतं सर्वत्र भूतानां यन्मिथः कलिः ॥ २८ ॥**

श्रीधरस्वामी ।

प्रस्तुतमनोरथपूरणाय प्रणमति नम इति अकिंचना भक्ता एव वित्तं सर्व्वस्वं यस्य तस्मै । ततः किं निवृत्ता गुणवृत्तयो धर्म्मार्थकाम विषया यस्मात् तस्मै । तत् कुतः आत्मारामाय तत् कुतः शांताय रागादिराहिताय । किंच कैवल्यपतये कैवल्यं दातुं समर्थाय ॥ २७ ॥

ननु देवकीपुत्रं मां कथमेवं स्तौषि तत्राह । मन्येत्वां कालं ननु देवक्याःपुत्रम् । तत्र हेतवः ईशानं नियन्तारम् । अनादिनिधनमाद्यन्त शून्यम् । विभुं प्रभुम् । समं यथाभवति तथा सर्व्वत्र चरन्तम् । ननु पार्थसारथेर्मम कथं साम्यं तत्राह यदूयतस्त्वत्तो निमित्तभूतात् भूतानामेव मिथः कलिः कलहो भवति ननु स्वतस्त्वयि वैषम्यम् ॥ २८ ॥

---

श्रीवीरराघवः ।

अन्यैश्चिदचिद्व्यावर्त्तकैरीश्वरासाधारणधर्मैर्विशिंषन्तीनमस्करोतिनमइति अकिंचनानांवित्तायविदॢलाभेइतिधातुः विद्यतेलभ्यते इतिवित्तः तस्मैनिवृत्तागुणानांरजआदीनांवृत्तयः कामक्रोधादयोयस्यतस्मैअनेनाचिद्व्यावृत्तिः शांतायोर्मिषट्करहितायअशनापिपासाशोक मोहजरामृत्यवः षडूर्मयः अनेनबद्धजीवव्यावृत्तिः तत्रहेतुरात्मारामायस्वानुभवैकपरायकैवल्यंप्रकृतिसम्बन्धराहित्यंमोक्षइतियावत्तस्य पतिस्तस्मैमोक्षप्रदायानेनमुक्तनित्यजीवव्यावृत्तिः ॥ २७ ॥

ननुब्रह्मरुद्रेंद्राद्यन्यतमः कश्चिदुक्तविधोनत्वहमित्यत्राह मन्यइति ईशानंब्रह्मादीनपिचवशीकुर्वाणंकालंत्वांमन्येकालशरीरकंत्वांमन्य इत्यर्थः अतएवकालकृतजन्ममरणादिरहितं नन्वहमपिप्राकृतवद्वैषम्यादिमानेवततः कालंविशिनष्टि सर्वत्रसमंचरंतंकालयंतंयद्यस्मात्का लनिमित्ताद्भूतानांमिथःकलिः कलहोभवतिसमंचरंतमित्यनेनकालशरीरकस्यतवनवैषम्यनैर्घृण्यादिकमस्तीति सूचितंयन्मिथःकलिरित्यने नाथापितत्तज्जीवकर्मानुसारेणसुखदुःखादीन्प्रतिभिन्नतयानिमित्तमितिसूचितम् ॥ २८ ॥

---

श्रीविजयध्वजः ।

श्रीकृष्णादन्यत्किंचनोपादेयंनविद्यतेयेषांतेअकिंचनास्तएववित्तंयस्यसतथा तस्मै निवृत्ताः सत्त्वादिगुणानांवृत्तयोजाग्रदाद्यवस्थाय स्मात्सतथोक्तः तस्मै अकिंचनैर्ज्ञातायेतिवा निरंतरंवृत्ताज्ञानादिगुणानांवृत्तिः स्थितिर्यस्मिन्सतथोक्तः तस्मैवा अतएवात्मन्यारमतइ त्यात्मारामः तस्मै आत्मनां चेतनानां आरामायक्रीडाकृत्रिमभवनाय अतएवशांतायसुखपूर्णायातएवकैवल्यपतयेमुक्तिनाथायनमइत्य न्वयः ॥ २७ ॥

नाविद्येतेआदिनिधनेयस्यसतथातमनादिनिधनम्,अनस्यप्राणस्यजन्मलयकर्तारमितिवा ईशंशिवमानयतिचेष्टयतीतिईशानः तंसर्वैश्वर्यंवा जगच्चेष्टाशा[illegible]मंतंवा परंसर्वस्मादन्यं सर्वत्रस्वपरेषुसमंयथा योग्यंचरंतंत्वांकालंसंहर्त्तारंमन्येकुरुपांडवादिभूतानांयद्यस्मात्त्वंमिथोऽन्योऽन्यं कलिः कलहस्तंत्वा[illegible]पितिवाक्यशेषः ॥ २८ ॥

---

क्रमसन्दर्भः ।

ननु अकिञ्चनवित्तत्वेन कियन्माहात्म्यं जातं तत्राह निवृत्तेति । गुणवृत्तिरहितस्य तव यद्भक्तवित्तत्वं तत् परममहदेवेति भावः । तर्हि भक्तानां निर्गुणत्वं सर्व्वगुणमयादुत्कृष्टत्वञ्च व्यनक्ति । आत्मारामायेत्यनेन ततोऽप्याधिक्यम् आत्मारामस्यापि तद्वित्तत्वात् । एवं शांता इत्यादि ॥ २७ ॥

सतु तव सुस्वभावस्तर्कागोचर एवेत्याह मन्ये इति चतुर्भिः । कालमंतर्यामिणम् ईशानं वहिश्च सर्व्वनियन्तारम् । यद्यत्र येषु भावेषु भूतानां मिथः कलिर्भवति तेषु समं चरन्तम् । अत्र प्रथमे समत्वं द्वितीये समत्वेऽपि भक्तदूद्वेषिणोरनुग्रहनिग्रहरूपचारितत्वम् तृतीये तदर्थतल्लीलावतारे परम आवेशः चतुर्थेतु तत्रापि परम इति ॥ २८ ॥ २९ ३० ॥

---

सुबोधिनी ।

ननु शिष्टैरपिनज्ञायते भगवतो ऽचिंत्यमाहिमत्वात्सत्यं तथापिनज्ञायतइति ज्ञायते तद्राहनमो ऽकिंचनवित्तायेति आकिंचनावित्तं यस्यअकिंचनानांवावित्तं वित्तंह्यपितिष्ठति वहिरपीति वित्तवतांतथातेषुभगवान् भगवतिचतेअतस्तेएवजानंतिनान्यइत्यर्थः तत्र हेतुमाह निवृत्तगुणवृत्तयइति निवृत्तागुणायेषांतेनिवृत्तगुणाः तैर्वर्तनंयस्यतेषुवृत्तिर्यस्येतिवा "हरिर्हिनिर्गुणः मन्निष्ठंनिर्गुणंस्मृतमि" तिचभगवद्वाक्यात् अतोनिर्गुणगम्ये नसगुणगम्यत्वं यथाचक्षुर्गम्ये नरसगम्यत्वं तत्रापिहेतुः आत्मारामायेतिआत्मन्येवारामो यस्यअनेनस्वापेक्षभावउक्तः परापेक्षायामपिशांतायशांतरूपत्वान्नक्रूरैरपेक्ष्यतइत्यर्थः किंच यैरपेक्ष्यतेतैर्मोक्षार्थमपेक्ष्यते नियतफलत्वात्तस्य अन्यत्तुकाकतालीयं कदाचिद्भवतिअतोमोक्षपतित्वन्मुक्त्यधिकारिभिरेवसेव्योनान्यैरित्यर्थः ॥ २७ ॥

एवंप्रसंगात्स्वरूपंकथयंती तन्मनस्कापुनः प्रकृतंदुष्टदुर्ज्ञेयत्वंप्रकारांतरेणाऽऽहमन्यइतिदुष्टाद्विविधाः विषयपराः पूर्वोक्ताश्चतत्रपूर्वोक्तानामगम्यतानिरूपिताविषयपराणां चागम्यतामाहसंभावनया एवंहिसंभाव्यते यदिविषयपराभगवंतं जानीयुस्तदाकालग्रस्तानभवेयुरितिभगवतएवकालत्वात्ज्ञातेपुनर्ज्ञानीप्रियतमोमत इतिवाक्यात्स्वप्रियंनभक्षयेत्कालः अतः कालव्याप्तेःनभगवंतंजानंतीतिमन्ये ननुकालस्यकथंभगवत्त्वंतत्राहईशानमिति सर्वत्रतस्यैश्वर्यात्नह्येतत्अभगवत्त्वेसंभवति किंच "सदेवसौम्येदमग्रआसीदित्यत्रनासदासीन्नोसदासीत्तदानीमि"त्यत्रच अग्रेतदानींपदवाच्यः कालः तस्याभगवत्त्वेवाक्यार्थोवाध्येत अतएवअनादिनिधनत्वात्कालोभगवान् किंच । कालवशात्सर्वंभवतिअन्यथाशीतादिषुकिंनिमित्तंस्यात् अतः सर्वभवनसमर्थत्वात् कालोभगवान् किंच निर्दोषंहिसमंब्रह्मेतिवचनात् समत्वंभगवद्धर्मः सचकालेवर्ततइतिभगवानित्याह समंचरंतंसर्वत्रेतिसर्वत्रकालः समानेनैवब्रह्मरूपेणप्रविशतितत्रोत्पत्तिः यत्यस्मात् कालात्मिथः परस्परंभूतानामपिकलहः पूर्वमेकप्राणभूताअपिकालमेवनिमित्तमासाद्यकलहेनम्रियंतइत्यर्थः एवंत्वमेवकालइतिकालग्रासाद्वगम्यतेनकोऽपित्वांजानातीति ॥ २८ ॥

---

श्रीविश्वनाथचक्रवर्त्ती ।

अकिञ्चना न विद्यते किंचिन्मात्रं प्राकृतं वस्तु अपि तु त्वल्लक्षणं पूर्णचिदानन्दस्वरूपं वस्तु अस्ति येषां ते एकान्तभक्ता एव वित्तानि धनानीवातिप्रेमास्पदानि सर्व्वतः संगोपनीयाश्च यस्य तस्मै तेषां वित्तायेति वा । नन्वाकचना दरिद्रा उच्यन्ते । सत्यम् । भगवद्भक्तानां मायागुणवृत्त्युत्थाः सम्पदो न भवन्तीत्याह । निवृत्ता गुणवृत्तयो विषयभोगा यस्मात् तस्मै अकिंचनभक्तेष्वेवासक्तिमुक्त्वा अन्यत्र त्वौदासीन्यमाह आत्मारामायेति । भक्तानाम् अपराधे सत्यपि न त्वं कुप्यसीत्याह शांताय स्वभक्तेष्वनुग्रहाय मुमुक्षुभक्तेषु उपकारकत्वमाह कैवल्येति ॥ २७ ॥

भक्तापराधिषु संहारकत्वमाह कालमिति । तथा तथा सामर्थ्ये कारणमाह ईशानमिति तथारूपत्वेन सर्व्वकालदेशव्याप्तिमाह अनादीति विभुमिति । नत्वासक्त्यौदासीन्योपकारकत्वापकारकत्वैरपि त्वयिवैषम्यमित्याह सममिति यत्यत्र मिथः कालिः कलहः ईश्वरो दुःखदः सुखदः समो विषमो निर्घृणः सघृण इत्यादि ॥ २८ ॥

---

सिद्धांतप्रदीपः ।

पुनः भगवद्गुणान्वक्तुंतावत्प्रणमति निवृत्ताः रजआदि वृत्तयोयस्मात्तस्मै कैवल्यंकार्यकारण रूपप्रकृतिसम्बन्धराहित्यंतत्पतयेतद्दातुंसमर्थाय ॥ २७ ॥

ननुनिवृत्तगुणवृत्तित्वादात्मारामत्वंशांतत्वंतत्पुत्रसारथ्यादिकर्मचकथंघटतेतत्राह ।मन्येइति। त्वांकालं"यः कालकाल"इतिश्रुतिप्रसिद्धंकालशक्तिंजगत्कालयंतंमन्ये इत्यर्थः ईशानंसर्वंचिदचिदात्मकंविश्वंस्ववशीकुर्वाणम् आदिश्चनिधनंचादिनिधनेनविद्येते आदिनिधनेयस्य सतथातंविभुंसर्वत्रव्यापकम् समंयथास्यात्तथासर्वत्रचरंतम् ननुधृतराष्ट्रपुत्रपौत्रादिनाशहेतोर्भवतः पुत्राणांप्राणादेर्दातुः कथंसाम्यं तत्राह यन्मिथः कलिरिति यस्मात्तत्तत्कर्मफलदातुः सर्वोपकर्त्तुर्मिथोऽन्योऽन्यंदोषेणैवकालिर्भवति ॥ २८ ॥

---

भाषा टीका ।

आप अकिंचनों के धन हैं आपको नमः गुणवृत्तियों से निवृत्त, आत्माराम शांत और कैवल्य के पति आप हैं आप को नमः २७ अनादि निधन विभु और ईशान कालमें आपही को मानती हूँ। आप तो सर्वत्र समान चरते हैं जिनको निमित्त कर भूतों मेंपरस्पर कलह होता है ॥ २८ ॥

न वेद कश्चिद्भगवंश्चिकीर्षितं तवेहमानस्य नृणां विडंबनम् ।
न यस्य कश्चिद्दयितोऽस्ति कर्हिचिद्द्वेष्यश्च यस्मिन्विषमा मतिर्नृणाम् ॥ २९ ॥
जन्म कर्म च विश्वात्मन्नजस्याकर्तुरात्मनः ।
तिर्यङ्नृषिषु यादःसु तदत्यंतं विडंबनम् ॥ ३० ॥
गोप्याददे त्वयि कृतागसि दाम तावद्याते दशाश्रुकलिलांजनसंभ्रमाक्षम् ।
वक्त्रंनिनीय भयभावनया स्थितस्य सा मां विमोहयति भीरपि यद्बिभेति ॥ ३१ ॥

श्रीधरस्वामी ।

ननु निग्रहाऽनुग्रहरूपं मयि प्रसिद्धं वैषम्यम् अत आह न वेदेति नृणां विडम्बनमनुकरणमीहमानस्य कुर्वतः यस्मिन् त्वयि विषमा मतिः अनुग्रहानिग्रहरूपा भवति ॥ २९ ॥

अजस्य जन्म । अकर्त्तुः कर्म्म । तिर्यक्षु वराहादिरूपेण नृषु रामादि रूपेण । ऋषिषु नरनारायणादिरूपेण । यादः सु मत्स्यादि रूपेण ॥ ३० ॥

नराविडम्बनमत्याश्चर्यमित्याह गोपीति । गोपी यशोदा त्वयि कृतागसि दधिभांडस्फोटनं कृतवति यावद् दाम रज्जुम् आददे जग्राह तावत् तद् क्षणमेव ते तव या दशा अवस्था सा मां विमोहयति । किम्भूतस्य अश्रुभिः कलिलं व्यामिश्रम् अंजनं ययोः ते च ते सम्भ्रमे व्याकुले अक्षिणी यस्मिन् तद्वक्त्रं निनीय अधःकृत्वा ताड़यिष्यतीति भयस्य भावनया स्थितस्य । यत् यतः त्वत्तः भीरपि स्वयं बिभेति तस्य ते दशा ॥ ३१ ॥

---

श्रीवीरराघवः ।

नन्वहमपिकांश्चिदनुगृह्णन्कांश्चिन्निगृह्णन्कथंवैषम्यादिरहितइत्यतआह नेति हेभगवन्नृणांविडंबनमनुकारमीहमानस्यकुर्वाणस्य तव चिकीर्षितंनकोऽपिवेद कचिन्निग्रहोऽप्यंततोऽनुग्रहरूपतयाफलतीतिनवैषम्यादिकमस्ति पूतनाशकटयमलार्जुनधेनुककेशिकुवलयापीड चाणूरमुष्टिकतोसलकंसादिविषयानिग्रहस्यांततस्तेषांनिरतिशयपुरुषार्थरूपमुक्तिहेतुत्वदर्शनादितिभावः यतएवमतएवत्वयिवैषम्यादिराहि तेतदापादयतांनृणांमतिरेवाविषमेत्याह नयस्येति कर्हिचिदपिदयितः प्रियोद्वेष्यश्चनास्ति यस्मिन्नृणांमतिर्विषमारजस्तमोन्वयादयथार्था भवति नृणांविडंबनमीहमानस्येत्यनेननरचेष्टानुकारमात्रमेवनतुसर्वथातत्सजातीयचेष्टितम् “जन्मकर्मचमेदिव्यमिति” भगवतैवोक्तत्वात् इतिसूचितम् ॥ २९ ॥

विडंबनत्वमेवान्यथानुपपत्त्याद्दढयतिजन्मेति अजस्यजन्मरहितस्यकर्मायत्तोत्पत्तिरहितस्याकर्त्तुः प्राचीनकर्मानुरूपप्रवृत्तबुद्ध्यधीनकर्म रहितस्यात्मनः सर्वांतरात्मनस्तवातिर्यगादिषुजन्मतत्सजातीयंकर्मचेतियत्तदत्यंताविडंबनमेव अन्यथाऽजस्याकर्त्तुरात्मनश्चतन्नघटतइतिभावः तत्रतिर्यक्षुवराहादिषुऋषिषुभार्गवदत्तात्रेयकार्दमादिषुनृषुराघवयादवादिषुयादस्सुमत्स्यकूर्मादिषुजलौकः सुविडवनमात्रम् ॥ ३० ॥

नचेदंघटतइत्यभिप्रायेणाऽऽहगोपीति तावद्यथात्वयिकृतमागोऽपराधोयेनतथाभूतेसतिगोपीयशोदादामरज्जुमाददेत्वद्बन्धनार्थंपरिजगृहे तदाश्रुभिः कलिलंकलुषितमंजनंययोस्तेसंभ्रमेभयसूचकाटोपयुक्तेऽक्षिणीयस्यतद्वक्त्रंनिनीयउन्नीयउत्ताम्य अश्रुकलिलेत्यादिक्रियाविशेषणं वाअश्रुकलांजनसंभ्रमाक्षंयथातथावक्त्रंनिनीयप्रापय्येत्यर्थः यस्माद्यतोभीरपिबिभेतितस्यतवभयभावनयाभयाभिनयेनास्थितस्ययादशासामां विमोहयतिअत्रभीशब्देनसर्वेषांभयहेतुर्मृत्युर्लक्ष्यते“भीषाऽस्माद्वातः पवतेभीषोदेतिसूर्यः भीषादग्निश्चेन्द्रश्चमृत्युर्द्धावतिपंचम”इत्युक्तविधस्या भयस्यतवेत्यर्थः तावद्विमोहयतिमूढांकरोति पश्चात्तुनरचेष्टानुकारमात्रमिदमितिज्ञापयतीतितावच्छब्दाशयः ॥ ३१ ॥

---

श्रीविजयध्वजः ।

समंचरंतमित्येतद्विवेचयति नवेदेति यस्यतवयोग्यतातिरेकेणकर्हिचित्कश्चिद्दयितोनास्ति कश्चिद्द्वेष्योनास्तीतिशेषः एवमपियस्मिं स्त्वयिनृणामासुरप्रकृतीनांमतिर्विषमा अर्जुनोऽनुगृह्योऽयंदुर्योधनोद्वेष्यइति ताभ्यामुभाभ्यांबहूपचितपुण्यद्वेषनिचयावगणय्य हेभगवन् स्त्वयिनृणामासुरप्रकृतीनांमतिर्विषमा अर्जुनोऽनुगृह्योऽयंदुर्योधनोद्वेष्यइति ताभ्यामुभाभ्यांबहूपचितपुण्यद्वेषनिचयावगणय्य हेभगवन्
नृणांविडंबनमनुकरणमीहमानस्यचेष्टमानस्यद्विषंतंनैवभोजयेदित्यादिवचनात्तस्यतवकश्चित्पुरुषः चिकीर्षितंकर्त्तुमिष्टंतवेद नजाना तीत्येकान्वयः अथवालोकेयस्मिन्पुंसियोग्यतातिरेकेणस्नेहद्वेषकारिणिनृणांमतिर्विषमाअस्यदयितोऽयमस्यद्वेषीति नभवास्तादृशइत्यत समचारीतिवैदिकाइति ॥ २९ ॥

अधुनाऽनादिनिधनत्वंसमर्थयते जन्मेति हेविश्वात्मन्सर्वांतर्यामिन् अजस्याजातस्यानायासेनफलानपेक्षयाअकर्तुरात्मनःस्वामिन स्तवतिर्यङ्नृपशुषुयादःसुजलजंतुषु यज्जन्म तज्जात्यनुकारिकर्मच तदतिशयेनविडंबनमतोऽनादिनिधनोऽसीतिभावः अजस्यात्मनस्तिर्य गादिषुयज्जन्माकर्त्तुरात्मनस्तज्जात्यनुसारियत्कर्मतदुभयमत्यंतविडंबनमितिवायोजना ॥ ३० ॥

### श्रीविजयध्वजः ।

इदंचातिविडंबनंविदुषामपिमोहकमित्यभिप्रेत्याह गोपीति त्वयिकृतागसिदधिभांडंभित्त्वानवनीतापहारिणिसति यदागोपीनाम्नायशोदानित्यमुक्तंत्वांबद्धुंदामआददे तावत्तदायंत्वांप्रति भीः सर्वजनस्यभयकारिणीदुर्गापिबिभेति यस्यभयभावनयाअश्रुभिः कलिलंकलुषं अंजनंयस्यतत्तथोक्तं अश्रुकलिलांजनंचतत्संभ्रमयुक्तंअक्षियस्यतत्तथोक्तं वक्त्रंविनम्यावाचीनतयाकृत्वास्थितस्यतेतवयादशाऽवस्थासामां विमोहयतीत्येकान्वयः तस्मात्तदनुकारणंविदुषामपिमोहकमितिभावः ॥ ३१ ॥

### क्रमसंदर्भः ।

गोपीति । अत्र भीरपि यद्बिभेतीत्युक्त्या तस्या ऐश्वर्य्यज्ञानं व्यक्तम् ततो यदि सा भीः सत्या न भवति तदा तस्या मोहोऽपि न संभवेदिति गम्यते । स्फुटमेव चान्तर्भयमुक्तम् भयभावनया स्थितस्येति ॥ ३१ ॥

### सुबोधिनी ।

इदानीमवतीर्णातुसुतरांभक्ताअपिनजानंतीत्याह नवेदकश्चिदितिकिंकर्त्तुंभगवान्विचारयतीतिनकोऽपिवेद ननुकार्यदर्शनेनज्योतिःशास्त्रेणवायदेवज्ञायतेतदेवभगवाञ्चिकीर्षितमितिकुतोनवेदतत्राह तवेहमानस्येतिनृणांविडंबनमनुकरणमीहमानस्यचिकीर्षितंनवेदेत्यर्थः सामान्यव्यापारेणैवकार्यस्यासिद्धत्वात्विशेषरूपमनुकरणं किंकार्यायेतिभवतिसंदेहः नन्वस्यानुकरणस्यकार्यंस्पष्टमेवपांडवरक्षाकौरववधश्चेतिभूभारहरणंअर्जुनादीनांयशोदानंचतदपिनेत्याहनयस्यकश्चिदितिपांडवरक्षादिकंचतदाविशेषकार्यं स्यात्यदिभगवतोमित्रोदासीनौवाद्वेषौभवेयुः तथासतिभगवत्त्वमेवनस्यात् कश्चिदपिदयितोनएवंद्वेष्यश्चकश्चिदपिचकरादुदासीनः तर्हिकथंकायंदृश्यतेपांडवरक्षादिनचकालादितिवक्तव्यं कदाचिदपिकौरवरक्षाश्रवणात् तत्राह यस्मिन्विषमामतिर्नृणामिति यस्मिन्त्वयिनृणांवादिनांविषमामतिर्भवति अयमस्माकंमित्रं अयंशत्रुरितिनहिकलशादिषुवस्तुषुगृहे नीयमानेषुदर्शनाच्छकुनादिसंपत्तौनतेषांस्वरूपंभिद्यते शुक्तिकायांवारजतादिप्रतीतौ तस्यस्वाभाविकधर्मव्यतिरेकेणकश्चिदस्तिभ्रमहेतुः स्वाभाविकस्यैवभ्रमहेतुत्वेसर्वेषामेवभ्रमः स्यात्तस्मात्स्वगतदोषेणैवरागादिनात्वयिमित्रत्वादिप्रतीतिः नतुत्वयितादृशोधर्मः कश्चिदस्तीत्यर्थः ननुतदनुसरणंधर्मोभगवत्यस्तियतः सर्वभावितइवभवतितद्दर्पनास्तीत्याहचक्रेणमित्रत्ववत् अनुसारित्वमपिभ्रांतमित्यर्थः ॥ २९ ॥

एवंदुष्टदुर्ज्ञेयत्वंनिरूप्यलक्षणं निरूपयतिद्वाभ्यांजन्मकर्मचेति भगवतः सर्वानुकरणरूपोधर्मःलक्षणमसाधारणोधर्मः नटादिरपिकिंचित्द्रव्यांतरसंबंधनतथास्वात्मानंप्रकाशयतिभगवांस्तुकेवलं अविक्रियमाणएवायमानंदरूपएवनरदेहेंद्रियरूपेणदृश्यरूपेण स्वात्मानंख्यापयतिएतद्भगवतोऽसाधारणंलक्षणम् एतदज्ञानेकोपिभगवंतंनपूजयेत् नवाऽस्यमोहकत्वं लक्षणत्वात्अन्यथासर्वेषामपिमोहोभवेत् तस्मादनुकरणंभगवल्लक्षणमितिज्ञेयं तत्रचेत्भ्रमः पूर्ववत्स्वदोषेणैवदुष्यतिनभगवतः कश्चिद्दोषइत्यर्थः ननुयुक्तिबाधितंनवेदोऽपिबोधयतीति कथं भगवतोऽनुकरणंसंभवति तत्राह विश्वात्मन्निति यथाभगवानविक्रियमाणएवविश्वरूपोजातस्तस्यानुकरणेकःप्रयासइतिभावः अजस्यजन्मअकर्त्तुःकर्मपुरुषोत्तमस्यआत्मनोव्यापकस्येतितिर्यक्षुवराहादौऋषिषुवामनादौयादः सुमत्स्यादौतत्तद्रूपेणस्फुरणमत्यंतमनुकरणं पुरुषोत्तमत्वमपिज्ञापयन्मनुष्यत्वादिकमपिज्ञापयतिविश्वस्मिंस्तुज्ञातेजगत्त्वेननज्ञायते तस्मादनुकरणलक्षणंअसाधारणोभगवद्धर्मः अतोनानेनापिभगवतिसंदेहोयुक्तइतिसिद्धम् ॥ ३० ॥

ननुविशेषदर्शनात् संदेहोगमिष्यतिकिंतद्धर्मवत्त्वेनज्ञापनेनतत्राहगोप्याददइति एतादृशमनुकरणंभगवतः यद्विशेषदर्शनेऽपिजातंभ्रममुत्पादयतितत्राहमेवदृष्टांतःकदाचिदहंगतागोकुलेत्वांद्रष्टुंतस्मिन् समयेगोपीयशोदाशिलापुत्रेणभांडभेदनेकृतेकृतागसित्वयिदामआददे तदातावत्तदानीमेवयातेदशाजाता ननुसास्वभावतएवदशाभवति तत्राह अश्रुकलिलांजनसंभ्रमाक्षमिति अश्रुभिः कलिलंयदंजनं तेनसम्यक्भ्रमयुतेअक्षिणीयस्येतितादृशंमुखंनीचतयास्थापयित्वास्थितस्यतवेतिपूर्वेणसम्बन्धः एवंसर्वैर्ज्ञातंसर्वथाभीतइति नन्वेवमेवास्तुकोदोषइतिचेत्तत्राहभीरपियद्बिभेतीतियद्भयंयतोभगवतोभवतिभीतत्वंभयहेतोर्बाधकोधर्मः नहितस्मिन् विद्यमानेकस्यचिद्भयंसंभवति ॥३१॥

### श्रीविश्वनाथचक्रवर्त्ती ।

ननु तत्र कलहे तत्त्वनिश्चायकः को भवेत् तत्र न कोऽपीत्याह न वेदेति द्वाभ्याम् नृणां शास्त्रविवादिनां तेषां विडम्बनं ज्ञानवैफल्यम् ईहमानस्य इच्छतः । यद्वा रामकृष्णाद्यवतारे स्वीयेन नरत्वेन नृणां नरमात्राणामेव विडम्बनम् ईहमानस्य तादृशसौन्दर्य्यसाद्गुण्यचरित्राद्यदर्शनात् अन्ये नरा विडम्बिता एव भवन्तीतिभावः । नृणाम् अज्ञजनानाम् । विषमा मतिरिति यथा सूर्य्यस्य सूर्य्यकान्तशिलायां स्वतुल्यधर्म्मत्व प्रदानेनासक्तौ अन्धेषु औदासीन्यं चक्रवाकेषूपकारित्वे घूकतस्करान्धकारादिष्वपकारित्वे लक्ष्यमाणेऽपि न तस्य वैषम्यं किंतु तत्र तत्र वस्तुसाद्गुण्यवैगुण्याद्येव कारणमिति बोध्यम् ॥ २९ ॥

किञ्च यदपि तवसाम्यवैषम्यकर्तृत्वाकर्तृत्वजन्मवत्त्वाजत्वादिषु सिद्धांताविर्विद्य लीलैवास्वादनीयेत्याह । अजस्य जन्म अकर्त्तुः कर्म । तत्रापि तिर्य्यगादिषु तच्च तच्च तव सर्वोत्कृष्टस्यैश्वरस्यात्यन्तविडम्बनम् । तत्तज्जातियाथार्थ्येन आत्मनो न्यूनत्वांगीकाराद् तथाहि वाराहे जन्मनि"घ्राणेन पृथ्व्याः पदवीं विजिघ्रन्"इत्यादिना सर्व्वज्ञत्वेऽपीश्वरत्वेऽपि वास्तवशूकर एवाभूयमवलोक्य जहास चाहोवनगोचरो मृग इत्येवमतत्त्वज्ञास्त्वां कर्म्माधीनं जीवमेव मन्यन्ते इति भावः । अत्राजत्वाकर्त्तृत्वयोरेव सत्यत्वे जन्मकर्म्मलक्षणयोर्लीलयोर्मिथ्यात्वम् । तथात्वे च तया शुकदेवाद्यात्मारामगणचित्ताकर्षणस्यासंगतिः । "जन्म कर्म्म च मे दिव्यमेवं यो वेत्ति तत्त्वत इति" भगवदुक्तिश्च जन्मकर्म्मणोः सत्यत्वे अजत्वाकर्त्तृत्वयोरसङ्गतिरिति तस्मादचिन्त्यानन्तशक्तिमतो भगवतः को वेद तत्त्वमिति ॥ ३० ॥

केचिदाहुरजं जातं पुण्यश्लोकस्य कीर्त्तये ॥
यदोः प्रियस्यान्ववाये मलयस्येव चंदनम् ॥ ३२ ॥
अपरे वसुदेवस्य देवक्यां याचितोऽभ्यगात् ।
अजस्त्वमस्य क्षेमाय बधाय च सुरद्विषाम् ॥ ३३ ॥

श्रीविश्वनाथचक्रवर्त्ती ।

तस्मात् तव लीलामेवास्वादयामीत्याह । गोपी यशोदात्वयि कृतागसि दधिमन्थनीस्फोटनं कृतवति सति यावद्दाम रज्जुम् आदद्दे जग्राह तावत् तत्क्षणमेव ते तव या दशा अवस्था सा मां विमोहयति । किंतुतस्य अश्रुभिः कलिलं व्यामिश्रम् अंजनं संभ्रम आवेगश्च यस्योर्यत्र तद्वक्त्रं निनीय अधः कृत्वा ताड़यिष्यतीति भयस्य भावनया स्थितस्य यद्भयतस्त्वत्तः भीरपि स्वयं बिभेति तस्य ते दशा । तेन पूर्व्वोक्तान्नदगोपाद्प्यतिप्रेमवती यशोदा धन्या यया तवैव तादृशो वशीकार इति सूचितम् । अत्र भीरपि यद्बिभेति इत्युक्त्यैव कुंत्या ऐश्वर्यज्ञानं व्यक्तीभूतं भयभावनया स्थितस्येत्यन्तर्भयस्य च तया सत्यत्वमेवाभिमतम् अनुकरणमात्रत्वे ज्ञाते तस्या मोहो न संभवे दिति ज्ञेयम् । अतएव तवेहमानस्य नृणां विडम्बनमित्यादौ विडम्बनमनुकरणमिति व्याख्यान्तरं परास्तम् ॥ ३१ ॥

---

सिद्धान्तप्रदीपः ।

ननुदेवराजः सव्रजोमांहंतुंयत्नंकृतवान् नृपतयोजरासंधचैद्यप्रभृतयोबहुशोममापचक्रांकृतवंतस्तदिदंसमंचरंतंसर्वत्रेत्याविर्भवत्यावचनंक थमर्थवत्स्यादत्राह नवेदेति हेभगवन् । षडैश्वर्यसंपन्ननृणांविडंवनमनुकरणमीहमानस्य तत्तद्भक्तानुरूपंचरितंकुर्वाणस्यतवचिकीर्षि तं तत्तत्कर्मानुसारेणकर्तुरभीष्टंकश्चिदपिनवेद एवंस्वतोयस्मिन्प्रियाप्रियरहितेत्वयिविषमामतिर्नृणामज्ञानाद्भवति ॥ २९ ॥
अजस्यकर्मजन्मोत्पत्तिशून्यस्य स्वेच्छयाजन्मअकर्तुः सत्त्वादिगुणहेतुककर्तृत्वशून्यस्यस्वेच्छंकर्मचात्यंतंविडंवनमनुकरणमत्रतिर्यक्षुव राहादिरूपेणनृषुरामादिरूपेणऋषिषुभार्गवादिरूपेणयादःसुमत्स्यादिरूपेण ॥ ३० ॥
साक्षादवतारिणस्तवप्रादुर्भावेयच्चेष्टितंतदत्यंतंमांविमोहयतीत्याहएकदेशकथनेन गोपीतित्वयिकृतागसिदधिभांडस्फोटनंकृतवतिगोपी श्रीयशोदायावद्दामाददेरज्जुंजग्राहतावत्कालमेवतेतवयादशाऽवस्थासामांविमोहयतिदेहगेहस्मृतितश्चालयति कीदृशस्य अश्रुकलिलांजन संभ्रमाक्षं अश्रुव्यामिश्रांजनेसंभ्रमेभयसूचकवैक्लव्ययुक्ते अक्षिणीयस्यतद्वक्त्रंभयभावनयानिनीयास्थितस्य यद्यतोभीरपिविभेतितस्य ॥ ३१ ॥

---

भाषाटीका ।

हेभगवन् ! आप मनुष्य लीलाकी चेष्टा कर देतेहौ, आप का चिकीर्षित कोई नहीं जानता है न आप का कोई प्रिय है न आप का कोई द्वेष्य है । तव भी आप में मनुष्यों की विषम बुद्धि होती है ॥ २९ ॥
हे विश्वात्मन् ! तिर्यक् ( पशुपक्षी ) ऋषि और जल जन्तुओं मै जो अज आप का जन्म और अकर्ता आत्मा का कर्म यह अत्यन्त विडंवन है ॥ ३० ॥
( नर विडम्वन अति चमत्कार है ) जव तुमनै अपराध किया और गोपी (यशोदा) नै तुमै बांधने को दाम (रस्सी) ग्रहण की उस समय की तुम्हारी वह दशा 'जो तुम भय की भावना सै. अश्रु युक्त संभ्रम नयन मुख नीचाकर खडे थे' मुझै वडा विमोहित करती है। भय भी तुम सै भय खाता है तुमै भय क्या ! ॥ ३१ ॥

---

श्रीधरस्वामी ।

अतएव जगन्मोहनतया दुर्ज्ञेयत्वात् तव जन्मादि बहुधा वर्णयन्तीत्याह केचिदिति चतुर्भिः पुण्यश्लोकस्य प्रियस्य युधिष्ठिरस्य कीर्त्तये । यदोरेव कीर्त्तये इति वा । अन्ववाये वंशे । मलयस्य कीर्त्तये वंशे वा चन्दनं यथा ॥ ३२ ॥
तथा वसुदेवस्य देवक्यां भार्य्यायाम् अज एव त्वमभ्यगात् पुत्रत्वमिति शेषः । प्रथमपुरुषस्त्वार्षः । अभूस्त्वमिति पाठः सुगमः । ताभ्यामेव पूर्व्वं सुतपःपृश्निरूपाभ्यां याचितः सन् । अस्य जगतः क्षेमाय ॥ ३३ ॥

---

श्रीवीरराघवः ।

यतोविडंवनमात्रंनतुतात्त्विकमतएवत्वदवतारप्रयोजनानिमित्तंचेदमेवेतिनिश्चेतुमशक्यत्वात्त्वनानातर्कयंतीत्याहकेचिदितिपंचभिः केचि- त्तदवतारप्रयोजननिर्णयप्रवृत्तानांमध्येअजमपित्वांप्रियस्यभक्तस्यपुण्यश्लोकस्ययदोः कीर्त्तयेतद्वंशेजातमाहुः यदुवंशकीर्त्तिजननायतत्रत्वां जातमाहुरित्यर्थः यथामलयस्यपर्वतस्यकीर्त्तयेचंदनंजातंवदंतितद्वत् ॥ ३२ ॥

श्रीवीरराघवः ।

अपरेत्वत्रसाधुलोकस्यक्षेमायसुरद्विषांबधायचजातस्त्वंवसुदेवस्यदेवक्यांताभ्यांपूर्वजन्मनियाचितःअभ्यगात् पुत्रत्वंप्राप्तइत्याहुः वसुदेवस्येत्यपादानस्यैवशेषत्वविवक्षयाषष्ठी ॥ ३३ ॥

---

श्रीविजयध्वजः ।

इदानीमेवंविधस्यतवदेवक्यांजन्मानुकरणेनिमित्तंविद्वांसोऽनेकधावदंतीतिविज्ञापयति केचिदित्यादिना केचिद्विद्वांसः पुण्यकीर्त्तेर्भगवद्भक्तस्ययदोःराज्ञोऽन्ववायेतस्यकीर्त्तयेजातंत्वामाहुरित्यन्वयः नाम्नामलयस्यपर्वतस्यकीर्त्तयेचंदनमिव ॥ ३२ ॥

अपरेबुधाःदेवैर्याचितोऽजस्त्वमस्यसज्जनस्यक्षेमायसुरद्विषांबधायचवसुदेवस्यसकाशाद्देवक्यामभ्यगादाविर्भूतइतिब्रुवते ॥ ३३ ॥

---

क्रमसन्दर्भः ।

केचिदिति चतुष्कम् ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥

---

सुबोधिनी ।

एवंभगवतिविरुद्धधर्मत्वंतत्संबंधादन्यत्रापिविरुद्धधर्मत्वामिति लक्षणमुक्तंजन्मकारणनिर्द्धारमाहकेचिदाहुरितिचतुर्भिःनमनार्थंजन्मनिर्द्धारःकर्त्तव्यः देहांतः करणात्मनामुत्तरमुत्तरंश्रेयः ततोदेहत्वेनानमनीयत्वेऽपिभगवदवतारत्वेज्ञातेनमनीयत्वंसिद्ध्यतितत्रतादृशस्यकथमनमनयिदेह इतिशंकातत्रऋषिभेदेनस्वयोगजधर्मभेदात्परमार्थतोभगवदिच्छाज्ञानाच्चचतुर्विधाऋषयः स्वस्वबुद्ध्यनुसारेणदेहसंबंधप्रयोजनंकथयंति "वंशकर्त्तापिताचैवमुख्यौदेहनिरूपकौ दुःखाभावश्चमोक्षश्चद्वावर्थौ विहसंमतौ" अर्थद्रव्यविरोधे अर्थोबलीयानितितदयंमतभेदः अर्थस्यगुणभावदेहे मुख्यतयामतद्वयम् अर्थप्राधान्येचमतद्वयमस्तितत्रवंशकर्त्तुर्मुख्यत्वात् महत्त्वाच्चतदीयत्वख्यापनेनतस्यकीर्त्तिर्भवतीतिधर्मप्राधान्येनयदुवंशेऽव तीर्णइत्याहकेचिदाहुरितिअजंजातमिति पूर्ववद्विरुद्धधर्माश्रयत्वम् पुण्यश्लोकस्ययदोः अतएवतथैवशास्त्रार्थोनिर्धारितइतितत्रांशेनाव तीर्णस्येत्युक्तंप्रियस्येतिपुष्टिमार्गभक्तत्वात्मलयस्येवचंदनमिति यथावंदामहेमलयमेवेत्यादिमलयस्य यशः एवंयदोरपितद्वंश्यानां भगवत्संनिधानेनभगवत्सारूप्यात् ॥३२॥

अपरेपुनर्दूरसंबंधमसहमानाः प्रसंगादपिकीर्त्तिसंभवात्कृतप्रयत्नत्वाच्चवसुदेवस्यनिर्दुष्टत्वाच्चअर्थपुरः सरंप्रवर्त्तमानाऋषयःवसुदेवस्य संबंधिन्यां देवक्यां पुत्रत्वेन याचितः सन्नज एव जात इत्याहुस्तदाह अपरइति । सोऽजस्त्वमेवेति पृथग्योजना । "पित्रोः संपश्यतोः सद्य" इति प्राकृतरूपप्रदर्शनाद्भिन्नशंका स्यात् साऽप्यनेन निवारिता तत्र हेतुः अस्य क्षेमायेति । जगतः युधिष्ठिरस्य वा । अतएव "जातः कंस बधार्थाय" इत्यादिवाक्यानि । अनेन द्वयं प्रयोजनं भिन्नमिति ज्ञापितं देवानां भिन्नतया हितकरणात् । चकारात्तेषामपि कृतार्थत्वाय सुरद्वेषित्वेन स्वतो मुक्त्यभावात् । अनेन भगवतो दोषाभावो निरूपितः अतएवोभयोः कार्यता । अन्यथा वैषम्यं स्यात् ॥ ३३ ॥

---

श्रीविश्वनाथचक्रवर्त्ती ।

एवंचत्वं न चेत् प्रादुरभविष्यस्तदा जगन्मोहनी इयं लीला केन वास्वादयिष्यतेति प्रादुर्भावकारणमेव मतभेदेन बहुप्रकारमाह केचिदिति पुण्यश्लोकस्य युधिष्ठिरस्य "पुण्यश्लोको नलो राजा पुण्यश्लोको युधिष्ठिर" इति पुण्यश्लोकत्वेन तदानीं तस्यैव प्रसिद्धेःयदोरन्ववाये वंशेयदो रेव कीर्त्तये इति वा । मलयस्य कीर्त्तये वंशे वा चन्दनं यथा ॥ ३२ ॥

अज एव त्वमभ्यगात् पुत्रत्वमिति शेषः । प्रथमपुरुषस्त्वार्षः । अर्भत्वमिति पाठः सुगमः ताभ्यामेव पूर्वं सुतपः पृश्निरूपाभ्यां याचितः सन् । अस्य जगतः क्षेमाय ॥ ३३ ॥

---

सिद्धांतप्रदीपः ।

भगवतः स्वरूपगुणादेर्दुर्ज्ञेयत्वमुक्तं तत्प्रादुर्भावप्रयोजनमपि दुर्ज्ञेयमित्याह केचिदितिचतुर्भिः अन्ववायेवंशे ॥ ३२ ॥

वसुदेवस्यपत्न्यांदेवक्यागर्भत्वमभ्यगात्प्राप्तः याचितः ताभ्यांप्रार्थितः ॥ ३३ ॥

---

भाषाटीका ।

तुम्हारी लीला जगत् को मोहन करने वाली और दुर्ज्ञेय है इसी से तुम्हारे जन्मादिकों को भी बहुधा वर्णन करते हैं कोई कहते हैं पुण्य श्लोक (युधिष्ठिर) की कीर्त्ति विस्तार करने को प्रिय यदु के वंश में मलय में चन्दन के समान अज आप का जन्म हुआ है ॥ ३२ ॥

कोई कहते हैं वसुदेवजी की देवकी में उन्हीं दोनों से याचित होकर अज भी तुम इस विश्व के क्षेम के और देव द्वेषीओं के (दैत्यों) के वध के लिये उन के पुत्र हुए हो ॥ ३३ ॥

---

भारावतरणायान्ये भुवो नाव इवोदधौ ।
सीदंत्या भूरिभारेण जातोह्यात्म भुवार्थितः ॥ ३४ ॥
भवेऽस्मिन् क्लिश्यमानानाम विद्याकाम कर्मभिः ।
श्रवण स्मरणा र्हाणि करिष्यन्निति केचन ॥ ३५ ॥
शृण्वंति गायंति गृणंत्य भीक्ष्णशः ।
स्मरंति नंदंति तवेहितं जनाः ॥
तएव पश्यंत्य चिरेण तावकं भवप्रवाहो परमं पदांवुजम्॥ ३६ ॥

श्रीधरस्वामी

आत्मभुवेति ब्रह्मप्रार्थनस्य प्राधान्यविवक्षया मतान्तरम् ॥ ३४ ॥

परमानंदस्वरूपाज्ञानमविद्या ततो ज्ञानाद्यभिमानात् कामः ततः कर्माणि तैः क्लिश्यमानानां तन्निवृत्तये श्रवणाद्यर्हाणि कर्माणि करिष्यन् ॥ ३५ ॥

अस्य पक्षस्य सिद्धांततामभिप्रेत्य श्रवणादिफलमाह शृण्वन्तीति नन्दन्ति अन्यैः कीर्त्यमानमभिनन्दन्ति ये जनाः ईहितम् चरितं तावकम् त्वदीयं पदाम्बुजं त एव पश्यंत्येव अचिरेणैवेति सर्व्वत्रावधारणम् । कीदृशं भवप्रवाहस्य जन्मपरम्पराया उपरमो यस्मिन् तत् ॥ ३६ ॥

---

श्रीवीरराघवः ।

अन्येतूदधौअर्णवेनावइवभूरिभारेणसीदंत्याः क्लिश्यन्त्याभुवोभारापहारायात्मभुवाचतुर्मुखेनार्थितोभगवान्जातइत्याहुः ॥ ३४ ॥

केचनअस्मिन्लोकेअविद्यादिभिः क्लिश्यमानानांजनानांश्रवणस्मरणाद्यर्हाणिचेष्टितानिकरिष्यन्कर्तुंजातइत्याहुरित्यर्थः अविद्यादेहात्मभ्रमादेर्निमित्तमज्ञानं कामस्तन्मूलकशब्दादिविषयाभिलाषः कर्माणितदनुकूलव्यापारात्मकानि ॥ ३५ ॥

अविद्यादिभिःक्लिश्यमानानांजनानांश्रवणाद्यर्हाणिइत्यनेनभगवच्चेष्टितानां क्लेशापहर्त्तृत्वंसूचितंतच्चनसाक्षात्कितुसंसृतिनिवर्त्तकभगवच्चरणारविंदसाक्षात्कारावहभक्तियोगनिष्पादनद्वारेत्यभिप्रायेणभगवच्चेष्टितश्रवणादिपराणामेतच्चरणांवुजसाक्षात्कारोनान्येषा मित्याह शृण्वंतीति येजनास्तवेहितंचेष्टितंशृण्वंतिवक्तृसांनिध्येगृणंतिश्रोतृसांनिध्येतदुभयासंनिधौचस्वयंगायंतिस्मरंतिनंदंति तएवभवप्रवाहस्य संसारप्रवाहस्योपरमोयस्मात्तत्तावकंत्वदीयंपदांवुजमाचिरेणपश्यंति ॥ ३६ ॥

---

श्रीविजयध्वजः ।

अन्येप्राज्ञाउदधौहिरण्याक्षादिभूरिभारेणसीदंत्याआसन्नमज्जनायानावइवदुः सहासुरजनभारेणपरिखिन्नायाभुवः आत्मभुवाप्रार्थितः भारावतारणायजातोऽसीत्याचक्षते ॥ ३४ ॥

केचनपंडिताअस्मिन्भवेसंसारेअविद्याकामकर्मभिः क्लिश्यमानानांदुःखेनपरिभूयमानानांश्रवणार्हाणिनामानिस्मरणार्हाणिरूपाणिकरिष्यन्नवातरदितिवदंति ॥ ३५ ॥

कर्मणांश्रवणस्मरणेःकिंफलमितितत्राह शृण्वंतीति येजनास्तवेहितंचेष्टितमभीक्ष्णशःशृण्वंतिगायंतिगृणंतिस्मरंतिनंदंतितएवाचिरेणाक्षिप्रंभवप्रवाहोपरमंसंसारप्रवाहस्यउपरमोनिवृत्तिःविनाशोयस्मिन्तत्तावकंपदांबुजंपश्यंतीत्येकान्वयः तस्मात्त्वत्कर्मश्रवणादिफलं मुक्तिरेवेतिभावः ॥ ३६ ॥

---

क्रमसन्दर्भः ।

शृण्वन्तीति भवेऽस्मिन्नित्यस्य पूर्व्वपद्यस्यैवोपोद्घलकत्वेनोक्तम् । ननु अस्यैव स्वमतत्वेन श्रीयुधिष्ठिरादीनां परमभक्तानां सम्बन्धे नैव तत्तल्लीलाश्रवणादिकम् अन्येषां भवतीति प्रत्युत तत्र तत्रैव मुख्यत्वमवसीयते । तदेवं तत्तन्मतसमाहारेण समुदायस्य कारणत्वेऽप्यवान्तरतारतम्यं विवेचनीयम् । मम तु गोप्याददे इति वर्णिता श्रीयशोदैव सर्व्वोत्तमतया भातीति श्रीकुंतीदेव्याभिप्रायः ॥ ३६ ॥ ३७ ॥

---

सुबोधिनी ।

अन्ये पुनः कालांतरीयत्वात् वसुदेवस्यापि "अर्थो बलीयान्" इति न्यायं पुरस्कृत्य कामप्रधाना भूमिभारहरणार्थं भगवानागत इत्याहुः । तदाह भारेति । ननु भगवति सपरिकरे समागते परमाधिको भारो भवति न तु भारावतरणम् । भारकर्तृषु भूमौ वा बलत्वेन प्रविष्टे भारनाश एव न तु भारोत्तरणम् । भारकर्तॄणामधः पातेन वैषम्यं मुक्तिदाने पूर्वोक्तपक्षाविशेषः स्वतंत्रफलता च स्यादिति चेन्न । अयं भारो न दैहिकः किं तूद्धृतचेष्टाहैतुको मानसः सोऽप्यतिभावनया दैहिक इव भवति । तत्र भूमौ भगवति समागते तत्र चित्ते जाते उद्वेजकविस्मरणाद्भारोत्तारणम् । बुद्ध्या हि भार आरोपितः । शीघ्रं प्रतीकारकरणायाह नाव इवोदधाविति अनेन वैषम्यात्कालस्यापि

सुबोधिनी ।

मज्जनहेतुत्वं सूचितम् । यथा तरंगादिराधारदोषस्तथा धर्मक्षयादिरपि कालदोषः । तस्मात्कालाधारायाः पृथिव्या आधाराधेयोभयदोष संभवाच्छीघ्रं प्रतीकारः कर्त्तव्य इत्यर्थः । अन्यथा पुनर्भूमेरुद्धारः कर्तव्यः पतति सृष्टिश्च अतएव ब्रह्मणः प्रार्थनेत्याह । आत्मभुवार्थित इति । आत्मभुवेति स्वस्यापि ब्रह्मजननं पततीति भावः । स्त्रीपुत्रार्थनया कृतमिति कामत्वाद्भगवतोऽनभिप्रेतत्वं सूचितम् । अवसादनेन विशीर्णतायां पुनर्निर्माणं कर्तव्यं स्यात् । तथा चैकादशनिर्माणासंभवात् नूतनब्रह्मांडनिर्माणमप्यापतेत् अतो भगवतैवं कृतमिति एकपक्षे इतरप्रयोजनं प्रासंगिकमिति द्रष्टव्यम् । अन्यथा अर्थभेदादवतारभेदो भवेत् ॥ ३४ ॥

एतेषां पक्षाणां पूर्वपक्षत्वान्न पर्यवसानकथनम् । केचन पुनर्भगवद्विचारेण त्रैवर्गिकार्थस्य हीनत्वं विचार्य भगवत्क्रियमाणेनैव हेतुना सर्वमुक्त्यर्थं भगवदवतार इत्याहुः । तदाह भवेऽस्मिन्निति । स्वाभिप्रेतत्वं तु स्वरूपनिरूपणएवोक्तम् मुक्तिप्रकरणे श्रवणादीनां धर्मत्वेन भक्तित्वमिति विशेषः । भवइति । निरंतरोत्पत्तिमार्गात् गमनेन अस्मिन्निति अनेकदुःखदर्शनात् स्थित्यापि क्लेशस्यासह्यता निरूपिता अविद्या स्वरूपा ज्ञानं ततः कामः विषयेच्छा नहि परमानंदे स्फुरद्विषयेच्छाभवति ततस्तदर्थंत्रिविधानिकर्माणि श्रवणादेः कर्मणः अविद्याकामकर्मनिवर्त्तकत्वं पंचमाध्यायेनिरूपितं श्रवणस्मरणयोर्भगवद्धर्म परत्वेप्राकृतवाह्याभ्यंतरसंगाभावात् नजन्मक्लेशः अर्थ विवक्षया च स्थितौसर्वस्यभगवत्त्वेन ज्ञानात् न दुःखदर्शनक्लेशोऽपि अन्यथा परमकारुणिको भगवान्कूपंधपातनन्याये नलोकानां त्रैवर्गं कासिद्ध्येनावतरेत् दृढमूलत्वज्ञापनायात्रिविधतापपदं परित्यज्यअविद्यादिपदप्रयोगः कृतः अहेतुकक्लेशप्रदर्शनेतुनिर्मूलकत्वात्स्वतएवदुःख नाशोभवेदिति श्रवणादीनांवैयर्थ्यस्यात् अतोभगवान्मुक्त्यर्थमेवावतीर्णइतिसिद्धम् अवतीर्णएवभगवत्यर्हताभवति श्रवणादिविषयस्य ३५

एवं जन्मकारणनिर्द्धारमुक्त्वाफलनिर्द्धारमाह शृण्वंतीतिदास्येहिफलनिर्णयः कर्त्तव्यः धर्मादिवद्व्यभिचारिफलत्वेपरंपराफलत्वे अन्यफलत्वेवास्वतः सेवां कःकुर्यात्यद्यपिस्वरूपनिरूपणेनैतत्सिद्ध्यति परब्रह्मत्वेभगवतः स्वस्यचजीवत्वेदासत्वाद्दास्यसिद्धिरिति तथापियोग्यतामात्रं सिद्ध्यतुनफलमुखतयाअतः श्रवणादिभिर्यदिपदंपश्येत् तदेवदास्यंकुर्यादितियुक्तं फलनिरूपणम् ईहितंचाद्भुतंभ गवत्प्रयत्नमात्रनिष्पन्नमित्यर्थः तवंत्यवतीर्णस्ययथासर्वेपदार्था जगतितत्रतत्रसिद्धाः तथासंतोभगवत्कथाच गंगावद्देशविशेषेनियताः तथाचगंगायांस्नायादित्यत्रनगंगायामागतायांस्नायादिति । किंतु । स्वयमुद्यम्यतीर्थमुद्दिश्यमहताप्रयत्नेनांतः प्रविश्यस्नायादितिएवमत्रा पिवक्ष्यतिशृण्वंतीतिनकिंतुसतांस्थानेगत्वायथावदंतितथोपायंविधायसमनस्केंद्रियैः सम्यक्शक्तितात्पर्यं निर्णयः कर्तव्यइत्यर्थः कृतेचनिर्णयेतदानं देहद्याविभूतेरसेनगायंति ततोरसपरवशाः संतःअन्यान्पुरस्कृत्यगृणंतिउपदिशंति एतेषांहेतुहेतु मद्भावोऽप्यवक्तव्यः ततःसर्वेषांपदार्थानां भगवत्संबंधित्वेनश्रुतत्वात् यंकंचनपदार्थंदृष्ट्वाईहितमेवस्मरंतिततः स्वतंत्रफलत्वात्आनंदहेतुत्वाच्च स्वतएवनंदंति अंतरानंदयुक्ताभवंतीत्यर्थः एवंश्रवणकीर्त्तनानिसावांतरफलानिनिरूपितानि अतोमहाफलनिरूपणायअवांतरफलवतामेव । महाफलमि तिनिरूपयतितएवपश्यंतीति अचिरेणेतिपदादेवअयोगोव्यवच्छिन्नः कालस्याहेतुत्वादेवनकालविलंबोबाधकः यथाकश्चित् समुद्रंमज्जन्त त्तीरंपश्येत् तथाभवप्रवाहस्यउपरमोयत्रताहशतीरभूतं पदांबुजंपश्येत् ॥ ३६ ॥

---

श्रीविश्वनाथचक्रवर्त्ती ।

आत्मभुवेति ब्रह्मप्रार्थनस्य प्राधान्यविवक्षयेति सर्व्वं मतान्तरम् ॥ ३४ ॥

स्वमतमाह । अविद्या अज्ञानं ततः कामः ततः कर्म्माणि तैः क्लिश्यमानानां सांसारिकाणामपि प्रेमभक्तिसिद्ध्यर्थमेव कर्म्माणि करिष्यन् क्लेशनिवृत्तिस्त्वानुषङ्गिकी उत्तरश्लोके पदाम्बुजदर्शनस्यैव श्रवणादिफलत्वोक्तेः । तद्दर्शनन्तु प्रेमलभ्यमेव ॥ ३५ ॥

अस्य पक्षस्य सिद्धान्तत्वमभिप्रेत्याह शृण्वन्तीति । ते एव न त्वन्ये पश्यन्त्येव नतु न पश्यन्ति अचिरेणैव नतु चिरेण तावकमेव नतु त्वदंशस्य कस्यचित् भवप्रवाहोपरममेव नतु संसारानिवर्त्तकम् पदाम्बुजमेव नतु तव निर्व्विशेषं स्वरूपमिति अर्थसौन्दर्य्यलाभाय षडवधारणानि द्रष्टव्यानि ॥ ३६ ॥

---

सिद्धांतप्रदीपः ।

आत्मभुवाब्रह्मणा ॥ ३४ ॥

अविद्याऽऽत्मानात्मपरमात्मज्ञानाभावस्ततः कामोविषयाभिलाषस्तन्निमित्तैः कर्मभिः क्लिश्यमानानांजनानांक्लेशनिवृत्तयेश्रवणस्मर णार्यर्हाणि चेष्टितानिकरिष्यन्जातः इतिकेचनमन्यंते ॥ ३५ ॥

चरमपक्षस्यसिद्धांतत्वंसूचयन्श्रवणादिफलंदर्शयति शृण्वंतीति तवेहितंचेष्टितंगुरोः सकशात् शृण्वंतिशिष्यादीन् प्रतिगृणं ति क्वचिद्गायंतिस्मरंतिनंदंतिचते एवभवप्रवाहोपरमंसंसारनिवर्त्तकंपदांबुजमचिरेणपश्यंति ॥ ३६ ॥

---

भाषा टीका ।

कोई कहते हैं समुद्र में नावके समान भूरिभार से दुःखित पृथिवी का भार उतारने को आत्मभू ब्रह्मा की प्रार्थना से तुम अव- तीर्ण हुए हो ॥ ३४ ॥

कोई कहते हैं इस संसार मे अविद्या और काम कर्मों से क्लेश भोगते जीवोंको सुख देने के उन लोगों के श्रवण स्मरण योग्य कर्म करने को तुम्हारा औतार है ॥ ३५ ॥

जो सुजन आप के इंगितों ( लीलाओं ) को श्रवण करते हैं गान करते हैं निरन्तर ( कीर्तन ) करते हैं स्मरण करते हैं अभि नन्दन करते हैं वही शीघ्र आप के पदाम्बुज दर्शन करते हैं । जिन पदाम्बुजों से भव प्रवाह का उपरम होता है ॥ ३६ ॥

अप्यद्यनस्त्वं स्वकृतेहित प्रभो जिहासासि स्वित्सुहृदोऽनुजीविनः ।
येषां न चान्यद्भवतः पदांवुजात् ।
परायणं राजसु योजितांहसाम् ॥ ३७ ॥

के वयं नामरूपाभ्यां यदुभिः सह पाण्डवाः ।
भवतोऽदर्शनं यर्हि हृषीकाणा मिवेशितुः ॥ ३८ ॥

नेयं शोभिष्यते तत्र यथे दानीं गदाधर ।
त्वत्पदै रंकिता भाति स्व लक्षण विलक्षितैः ॥ ३९ ॥

इमे जनपदाः स्वृद्धाः सुपक्कौषधिवीरुधः ॥
वनाद्रिनद्युदन्वंतो ह्येधंते तव वीक्षितैः ॥ ४० ॥

श्रीधरस्वामी ।

इदानीं तवास्मत् परित्यागोऽनुचित इत्याशयेनाह अपीति चतुर्भिः । हे प्रभो ! सुहृदोऽनुजीविनश्च नोऽद्य अपि स्वित् किं स्वित् त्वं जिहासासि । येषाम् अस्माकम् अन्यत् परायणं नैवास्ति । कुतः राजसु योजितमंहो दुःखं यैस्तेषाम् । स्वानां कृतमीहितम् अपेक्षितम् येन तस्य संवोधनम् स्वकृतेहित इति । विसर्गान्तपाठे त्वं पदविशेषणम् ॥ ३७ ॥

ननु तव वन्धवो यादवाः पुत्राश्च पांडवाः शूराः समर्थाश्च तत् किं कार्पण्यं भाषसे अत आह के वयमिति । यर्हि भवतोऽदर्शनं यदा त्वमस्मान् न पश्यसि तदा ( नामरूपाभ्यां ) नाम्ना विख्यात्या रूपेण समृद्ध्या च यदुभिः सहिताः पांडवानाम केवयं न केऽपि अतितुच्छा इत्यर्थः । हृषीकाणामीशितुः जीवस्यादर्शने यथा न किञ्चिन्नाम च रूपञ्च तद्वत् ॥ ३८ ॥

किञ्च यथेदानीमियमस्मत्पाल्या भूमिः स्वैरसाधारणैर्वज्रांकुशादिभिर्लक्षणैर्विलक्षितै श्चिह्नितैस्त्वत्पदैरङ्किता सती भाति तत्र तदा त्वयि निर्गते सति न शोभिष्यते ॥ ३९ ॥

अपि च इमे जनपदा देशा स्वृद्धाः सुसमृद्धाः सन्तः ॥ ४० ॥

---

दीपनी ।

योजितमिति । राजानो ह्यस्माभिर्दुःखं प्रापिता अतस्त्वत्तो ह्यन्य आश्रयो नास्त्येवेत्यर्थः ॥ ३७ ॥ ३९ ॥

( सुपका ओषधयो व्रीह्याद्या वीरुधो लताश्च येषु ते एधन्धे वर्द्धन्ते ॥ ४० ॥ ४१ ॥ )

---

श्रीवीरराघवः ।

तदेवंसंस्तुत्याधुनाप्रयाणमुपसंहरेतिसूचयितुंत्वत्पदांभोजैकशरणानस्मान्हातुंउत्सहसेकिमितिकाकाऽऽहअपीतिषड्भिः स्वकृतेस्वार्थे त्वमपीहितः ,किंप्रवृत्तः किमित्यर्थः यद्यस्माद्धेप्रभोसुहृदोऽनुजीविनोभृत्यांश्चनोऽस्मानधुनाजिहासासिहातुमिच्छासिहित्यागानर्हतांसूचायितुं आत्मनोविशिनष्टियेषांभगवतःपदांवुजादन्यत्परायणंश्रेयः प्रापकंप्राप्यंचनास्तिअतएवराजसुराज्ञांमध्येयोजितांहसांयोजितदुःखानांयेषामन्य त्परायणंनास्तितानस्मानित्यन्वयः ॥ ३७ ॥

सर्वमिदंनिर्हेतुकयात्वत्कृपयैवसंपन्नंनत्वस्मद्गतगुणानिरीक्षणेनेत्यभिप्रायेणाह कइति नामरूपाभ्यामुपलक्षितस्येतिशेषःमनुष्यसजाती यनामरूपाभ्यामुपलक्षितस्यतवदर्शनंहृषीकाणामिंद्रियाणांमीशितुः करणाधिपस्यक्षेत्रज्ञस्यदर्शनमिवयर्हियदायेषांजातंते पांडवावयंयदुभिः सहकेनकेऽपिनकेनापित्वद्दर्शनहेतुनागुणेनयुक्ताः किंतुत्वत्कृपयैवेत्थंजातमितिभावः तेवयंनामरूपाभ्यांकइतिवान्वयः किंत्वदर्शनात्कृष्यादि नाम्नातापसादिरूपेणवान्विताइत्यर्थः ॥ ३८ ॥

हेगदाधराधुनाइयंभूमिः स्वैः स्वासाधारणैः लक्षणैश्चिह्नैः ध्वजवज्रांकुशादिरेखारूपैर्विलक्षिताभिश्चैस्त्वत्पदैरंकितासतीतथातत्रत्वद्गमना नंतरकालेनाशोभिष्यत ॥ ३९ ॥

तववीक्षितैरेवयेजनपदादेशाअधुनास्वृद्धाः सुसमृद्धाःस्वृद्धत्वमेवाहसुपक्वौषध्योवीरुधः गुल्मानिचयेषु तथावनानिचाद्रयश्चनद्यश्चोदन्वंतः कमलाकराश्चतद्वर्द्धंतेहि ॥ ४० ॥

---

## श्रीविजयध्वजः ।

स्वात्मादिभ्योऽत्यंतहितकरत्वात्त्वद्विरहोऽस्माकमतिदुःसहइत्यभिप्रेत्याह अप्यद्येति प्रभोराजसुयोजितांहसांकृतापराधानांयेषामस्माकं भवतःपदांबुजादन्यत्परायणंनास्ति त्वंतान्सुहृदोऽनुजीविनःकिंकरान्त्वद्भुक्तभोजनासक्थसेविनोनोऽस्मान् जिहासस्यपिस्वित् द्वारकाग मनव्याजेनत्यक्तुमिच्छसिकिंस्वित् । कीदृशस्त्वंस्वकृतेहितःस्वतंत्रचेष्टितः स्वार्थेभृत्यार्थेहितोवाभृत्यप्रयोजनायकृतचेष्टोवा चशब्दएवार्थे ३७

तत्कुतइतितत्राह तइति यदाईशितुरिंद्रियस्वामिनोदर्शनंतदैवहृषीकाणामिंद्रियाणांदर्शनादिशक्तिरन्यदानास्तीतियथा तथायदूनाम- स्माकंयर्हियदाभवतोदर्शनंतदातेतवसकाशाद्यदुभिःसहपांडवाःकथंनामरूपाभ्यांयुधिष्ठिरादिनाम्नाशुक्लादिरूपेणचयुक्ताइतिशेषइत्यन्वयः यदायेषांयदूनामस्माकंचभवतोदर्शनंतदातेयादवाः वयंपांडवाश्चतेवयंनामरूपवंतइतिवा केवयमितिकेचित्पठंति यर्हिभवतोऽदर्शनं तदा नाम्नायशसाबलेनरूपेणबलकोशाद्यात्मनायदुभिःसहवयंकेअसत्कल्पाएवेतितस्मात्त्वद्विरहोऽस्माकंमरणकल्पइत्यर्थः ॥ ३८ ॥

भोगदाधर इयंराजधानीइदानींध्वजादिलक्षणैर्विशेषेणचिन्हितैस्त्वत्पदैरंकितायथाभातित्वयिद्वारकांगतेतथानशोभिष्यतइत्येकान्वयः । अथवाइयंभूःत्वत्पदै रंकितायथाभाति त्वयिवैकुंठंगतेतथाशोभिष्यतइतिवा ॥ ३९ ॥

नकेवलमस्माकमेवत्वद्गमनंदुःखकरमेषांजनपदादीनामपीत्याह इमइति इमेजनपदादयः तवसन्निधानात्सुष्ठुऋद्धाः त्वत्कारुण्यामृत दृष्ट्यावीक्षिताःएधंतेहियस्मादित्येकान्वयः ॥ ४० ॥

---

## क्रमसन्दर्भः ।

पांडवाः पांडुसम्वन्धिनः ॥ ३८ ॥ ३९ ॥ ४० ॥

---

## सुबोधिनी ।

एवंफलंनिरूप्यदैन्यंनिरूपयतिअप्यद्येतिचतुर्भिः सख्येहिदैन्यनिवृत्तिः दैन्यंह्यंतःकरणधर्मः सयदास्फुरतिसदीनः सचत्वयिसतिविष यामावे न स्फुरितः इदानीं पुनःप्राप्तेविषये त्वद्गमनं भावयन्नेव स्फुरितस्तस्मादस्मान् दीनान् मात्यजेतिप्रार्थयते । अन्यदा हिभगवान् कार्यं सशेषं कृत्वागच्छति । इदानीं कार्यस्यनिःशेषत्वात् पुनर्नागमिष्यतीति अभि प्रायेणास्मान् त्यक्त्वागच्छति । हेस्वकृतेहित ! स्वानामेव कृतं कार्यं तस्मिन्नेव ईहितंयस्य भक्तकार्यकर्त्तः इत्यर्थः । त्वदपरित्याग एवास्मत्कार्यं तत्रैवतवेहितं भवत्विति भावः । अपीति संभावना याम् । अद्येति किमस्मत्त्यागदिनमित्यर्थः । नोऽस्मानथवा नस्त्वमिति । परित्यागः सर्वथा भाव्यइति न वक्तव्यमन्यथाऽपि त्वया कर्तुंशक्यं तइतिप्रभो ! जिहाससिस्वित् । स्विदिति किमर्थं । एतावता कालेनवयं शुद्धहृदया जाताः परिग्रहदशायां च कथंत्यागः । किंचदासाश्च जाताः । अनु पश्चाज्जीवोऽस्यास्तीत्यनुजीवीदूरे गतेजीवनमेव न भविष्यतीत्यर्थः । किंच येषामस्माकं तवपदांबुजव्यतिरेकेण नान्यत्पराय णमस्तितत्र हेतुः राजसु सर्वेषुयोजितांहसां योजितापराधानाम् इदानींवयं सर्वविरोधिनो जाताः अतस्त्वद्रक्षाव्यतिरेकेण न जीवामः इत्यर्थः ॥ ३७ ॥

नचवयं स्वभावत एव महांत इति शंकनीयं त्वद्दर्शनेनैव महत्त्वंनान्यथा केवयंनाम्ना रूपेण चविख्याताः यदुभिः सहपांडवाः यर्हि भवतः अदर्शनं नामचरूपं चगमिष्यतीत्यर्थः यदुत्वं पांडवत्वं चतत्रहेतुभूतं दृष्टांतमाह । हृषीकाणामिंद्रियाणामीशितुः प्राणस्यादर्शने । एकैकेंद्रियव्यतिरेकेणांधबधिरा इव जीवंति प्राणेतुगते सर्वमेव गच्छेदित्यर्थः ॥ ३८ ॥

किंचअयं देशोऽपि नसुखदो भविष्यति । यथेदानींत्वत्पदैरंकिताऽतिशोभायुक्ता भाति इयमेवाग्रे नशोभिष्यते । स्वानि असाधारणानि लक्षणानि ध्वजादीनि तैर्विशेषेण लक्षितैः । शोभाहि सर्वात्वत्संबंधाधीना । गदाधरेति । भूमेः पादस्पर्शे सात्विकभावस्वेदोद्गमे कर्दमत्वं भवतिकर्दमे चक्षेत्रे सर्वोहि साधारोगच्छतीति गदाधरत्वमुक्तमिदमलौकिकं मया दृश्यतइति तथा संबोधनम् ॥ ३९ ॥

किंचसर्वेऽपि शत्रुजयेन प्राप्ता देशा नास्माकंसुखकरा भविष्यंति अग्रे सस्याद्यभावादिदानीं तुसस्यादिसंपत्तिर्भगवद्दर्शनाधीनेत्याह । इमेजनपदा देशाः सुष्ठुऋद्धाः सुष्ठुपक्वाः ओषधयो व्रीह्यादयो वीरुधो द्राक्षादयश्च येषाम् । वनानि अद्रयो नद्यउदन्वंतश्च तवैव वीक्षितै रेधंति तस्मात्त्वत्परित्यागे न किंचिद्भविष्यतीत्यर्थः ॥ ४० ॥

---

## श्रीविश्वनाथचक्रवर्त्ती ।

अस्माकं सुखदुःखे त्वद्दर्शनादर्शने एव नान्ये तत्र सुखसमयोगतः संप्रति दुःखसमयोऽयमायातीत्याह अप्यद्येति । अद्य नोऽस्मान् अपि स्वित् त्वं जिहाससि यतोऽद्य त्वं द्वारकां यातुमिच्छसीति भावः ननु बहुदिनमत्रावसं संप्रति द्वारकां याम्येव तत्र ममावश्यं किंचित् कृत्यमस्ति अनुज्ञां देहीत्यत आह स्वकृतेहितः स्वेनैवकृतं निष्पादितम् ईहितं चिकीर्षितं यस्य सः त्वंकृतकर्त्तव्योऽसीति भावः निर्विसर्गपाठे संबोधनान्तरम् राजसु योजितम् अंहस्तत्पित्रादिबधेन वैरं यैस्तेषाम् । अनुजीविनो मत्पुत्रान् अधुनापि रक्षन्नेव तिष्ठेति भावः ॥ ३७ ॥

ननु भीमार्ज्जुनादयस्ते पुत्रामहाबलिष्ठा एव राजातु साक्षाद्धर्म्म एव यादवाश्च बान्धवा इति न ते कापि चिंतेत्यत आह के वयमिति नाम्ना ख्यात्या रूपेण सामर्थ्येन च । ईशितुर्जीवस्यादर्शनेहृषीकाणां यथा न किंचिन्नामरूपञ्च तद्वत् ॥ ३८ ॥

यदि त्वमितो यास्यासि तत्र तदा इयं भूमिः स्वलक्षणैर्ध्वजवज्रादिभिर्विलक्षितैर्वैलक्षण्यं प्राप्तैः ॥ ३९ ॥ ४० ॥

अथ विश्वेश विश्वात्म न्विश्व मूर्त्ते स्वकेषु मे ॥
स्नेहपाश मिमंछिंधि दृढं पांडुषु वृष्णिषु ॥ ४१ ॥
त्वयि मेऽनन्यविषया मति र्मधुपते सकृत् ॥
रतिमुद्वहतादद्धा गंगेवौघमुदन्वति ॥ ४२ ॥

### सिद्धांतप्रदीपः।

स्वकीयानांस्वकृतमवेक्षितं येनतस्यसंबोधनेहेस्वकृतेहित हेप्रभोत्वंराजसुयोजितांहसांयोजितदुःखानामतएव येषामस्माकंभवतः पदाम्बुजादन्यत्परायणं श्रेयःप्रापकंनैवास्ति तान्सुहृदोदृढस्नेहाननुजीविनोनिजभृत्यानोऽस्मानद्यजिहासस्यपिस्वित् हातु मिच्छासिकिम् ॥३७॥
नन्वत्रागमनेयादवानांतत्रगमनेयुष्माकंदुःखोदयस्तत्राकिंकारणमत्राह केइतिहृषीकाणामिंद्रियाणामीशितुर्मुख्यस्य प्राणस्यादर्शन मिव भवतोयर्हि अदर्शनंतदायदुभिः सहपांडवाः नामरूपाभ्यामुपलक्षिताः नकेऽपिअतिदीनाएवेत्यर्थः ॥ ३८ ॥
इयमस्मत्परिरक्षिताभूमिः स्वैस्तदसाधारणैर्लक्षणै र्ध्वजादिचिह्नैर्विलक्षितैर्भूम्यां चिह्नितैर्यथेदानींशोभतेतथातत्रत्वयिनिर्गतेसाति न शोभिष्यते ॥ ३९ ॥
किंचेदानींस्वृद्धाः सुसमृद्धाः सुपक्काः ओषध्योवीरुधश्चयेषुतेइमेजनपदाः देशाः वनादयश्चतववीक्षितैरेधंतेवर्द्धंतेत्वयिनिर्गतेतुनेति पूर्वेणान्वयः ॥ ४० ॥

---

### भाषा टीका।

हे स्वकृते हित ! ( भक्तों के निमित्तही आप सब चेष्टा लीला करतेहौ ) हे प्रभो। हम सब आप के सुहृद और अनुजीवी हैं आप के पदाम्बुज से अतिरिक्त हमारा और कोई परायण ( आश्रय ) नहीं है। समस्त राजाओं का युद्ध विग्रह द्वारा हमने अंहः (अपराध) किया है। अब क्या आप हमको त्यागकर जांयगे ? ॥ ३७ ॥
हम पांडव और हमारे बांधव यादव, हम सब बडे २ नाम रूप से प्रख्यात भी कुछ नहीं हैं यदि आप का दर्शन न हो। जैसे जीवके विना इन्द्रिय सब वृथा है ॥ ३८ ॥
हे गदाधर ! यह हमारी पालित भूमि जैसी अब तुम्हारे ध्वज वज्रादि चरण चिन्हों से अंकित होकर शोभित होती है। तव ( आपके गमनके अनंतर ) ऐसी शोभित नहोगी—॥ ३९ ॥
ये हमारे समस्त जन पद ( नगर ) सुंदर पक्क औषधि वीरुध वन नदी पर्वत समुद्र तुम्हारी दृष्टि से वर्द्धित होते हैं ॥ ४० ॥

---

### श्रीधरस्वामी।

गमने पांडवानामकुशलम् अगमने च यादवानाम् इत्युभयतो व्याकुलचित्ता सती तेषु स्नेहनिवृत्तिं प्रार्थयते अथेति। विश्वेशेत्यादि संबोधनानि स्नेहच्छेदे सामर्थ्यख्यापनाय दृढं सन्तम् ॥ ४१ ॥
ततः किम् अत आह त्वयीति अनन्यविषया सती मे मतिः रतिमुद्वहतात् अनवच्छिन्नां प्रीतिं करोत्वित्यर्थः। ओघं पूरम्, यथा गंगा प्रतिबंधं न गणयति एवं मतिरपि विघ्नान् न गणयत्विति भावः ॥ ४२ ॥

---

### दीपनी।

पूरः प्रवाहस्तमित्यर्थः ॥ ४२ ॥

---

### श्रीवीरराघवः।

मदभिप्रायंजानास्येवेत्यभिप्रायेणसंबोधयतीत्याह अथशब्दःप्रश्नद्योतकः हे विश्वेशसर्वातः करणनियंतः हे विश्वात्मन्सर्वांतरात्मन् विश्वशरीरकस्वेषुपांडवेषुममयिविभक्तिव्यत्ययआर्षः वृष्णिषुयादवेषुचेमंदृढंस्नेहरूपपाशः तंछिंधियद्वावृष्णिषुपांडवेषुचरवत्स्नेहपाशः इत्य भिप्रायेणमेइत्युक्तम ॥ ४१ ॥
तदेवंद्यजयंतीप्रार्थयतेत्वयीति हे मधुपते यादवानामेवमाधवाइतिनामांतरंतवनवमेस्फुटीभविष्यति त्वय्यनन्यविषयाद्वितराअविषयाममतिरसकृद्वाउदन्वतिसमुद्रेगंगाजलौघमिववउद्वहतात् यथागंगासमुद्रमप्राप्यैवस्वजलौघं वरोढुमक्षमासमुद्रंप्राप्यैवस्वजलौघं वहति एवंत्वामप्राप्य रंतुमक्षमाममेमतिस्त्वय्येवरतिमुद्वहतामित्यर्थः ॥ ४२ ॥

---

## श्रीविजयध्वजः ।

पांडवयादवेषुभागवतत्वेनस्नेहआवश्यकइतिजानंत्यपिपुत्रमित्रादिस्नेहःसंसारहेतुत्वाद्धेयइतिज्ञापयितुमाह अथेति अथानंतरमेतदनुगृहाण किंतदिति हेविश्वेशविश्वात्मन्विश्वव्यापिन्विश्वमूर्त्ते अनंतविग्रहस्वकेषु स्वीयत्वेनाभिमतेषुपांडवेषुपांडवसंबंधिषुयादवेषुचममगाढंपुत्रमित्रादिस्नेहपाशंछिंधीत्यन्वयः पुत्रादिस्नेहएवच्छेद्योनतुभागवतस्नेहः तस्यशास्त्रेकर्त्तव्यत्वेनविहितत्वादित्यभिप्रेत्योक्तमिममिति ॥ ४१ ॥

नकेवलंविषयविरक्त्याऽलंकिंतुत्वय्यनपायिनींरतिं त्वंवितरेत्याह त्वयीतिहेमधुपतेआनन्दनाथनान्य विषयारुद्रादिविषयाअनन्याविषया ओघंजलप्रवाहत्वेगंउदन्वतिसमुद्रे ॥ ४२ ॥

---

## क्रमसंदर्भः ।

अथेति तैरवतारितम् । एवमप्युभयेषां तादृशतदेकालम्बनतादर्शनेन तेष्वधिकभगवत्प्रीत्याधारत्वं स्वस्याधिकस्नेहहेतुरिति तेषु स्नेहच्छेदव्याजेनोभयेषामपि त्वदविच्छेद एव क्रियतामिति च व्यज्यते । ततश्चोत्तरत्र सूतवाक्ये तां वाढमित्युपामन्त्र्येत्यत्र श्रीभगवदभ्युपगमोऽपि सर्व्वत्रैव सङ्गच्छते ॥ ४१ ॥

सम्बन्धवशादनन्यविषया त्वयि या मतिः सैवासकृदनवच्छेदेन रतिमुद्वहतात् । जातया रत्या प्रतिवन्धं निराकरोत्वित्यर्थः । तदेतत् दृष्टान्तेन स्पष्टयति गंगेवौघमिति । सा यथा महाप्रवाहद्वारा तथैवेत्यर्थः । उभयोरपि प्रतिवन्धे सत्यधिकोच्छलनकृतिसाम्यात् ॥ ४२ ॥

---

## सुवोधिनी ।

एवं बहिर्मुखतया दैन्यं प्रतिपाद्य अंतर्मुखतया भिन्नप्रक्रमेण द्वयं प्रार्थयते अथेति द्वाभ्याम् द्वयमेव हि साध्यम् असंग आत्मव्यतिरिक्ते भगवति रतिश्च तत्र आत्मव्यतिरिक्तेऽसंगो विचार्यते किमात्मव्यतिरिक्ते किंचिदस्ति न वेति । अस्तित्वे भगवतः सर्वात्मत्वं भज्येत नास्तिचेत् केन सहासंगः । ननु प्रतीतेनेतिचेत्तत् प्रतीतं भगवानन्यो वा उभयथाऽपि पूर्वोक्त एव दोषः । अन्यथात्वेन प्रतीतेनेतिचेत् यद्यपि तत्रापि पूर्ववद्विकल्पः संभवति तथापि ज्ञानिनोऽसंगो न कर्तव्यः स्यात् तस्मात् एवमेकं रूपं वक्तव्यं यथा शास्त्रार्थपरित्यागौ संगतौ भवतः तदाह विश्वेशविश्वात्मन्निति । विश्वं कार्यं स्वयं सर्वकारणमत ईशः अनेन स्वार्थं सर्वं सृजतीति मुख्यसिद्धांतो ज्ञापितो भवति । ततो भगवदर्थे कृते जगति स्वस्याहंताममतायां भगवद्विरोधेन बंधः स्यात् "क्रीडार्थमात्मन" इति वाक्यात् अतो यथा अक्ष्णोरिंद्रिंद्राण्योर्लक्ष्मीनारायणयो रमणार्थं निद्रा सृष्टा तथैव परित्यागः सृष्ट इत्यर्थः । इदानीं सर्वात्मत्वं साधयति विश्वात्मन्निति । विश्वस्यात्मा स्वरूपं यदेव आत्मत्वेन यदेव न स्फुरति तस्यैव परित्यागः । ननु वस्तुतः आत्मत्वे किं स्फुरणेनेतिचेत् न यतोऽयमात्मा । उद्देश्यविधेयभावस्योक्तत्वात् उद्देश्यस्फुरणे त्यागः । बोधतारतम्यएव सर्वसाधनानामुपयोगात् । न च विश्वात्मत्वमौपचारिकं भद्रसेनो ममात्मेतिवत्तत्राह विश्वमूर्त्तइति । विश्वं मूर्तौ यस्य विश्वस्मिन् वा मूर्त्तिर्यस्य विश्वं मूर्त्तिर्यस्य त्रेधाऽपि नोपचरितं सर्वात्मत्वमत उद्देश्यत्वेन पुत्रादेः स्फुरणात् त्वद्भक्त्या च स्नेह उत्पादितः विधेयदशायां स्नेहः क्रियते तद्विरुद्धशास्त्रैर्नाश्यते मायाकृतस्तुस्नेहो न भगवद्व्यतिरेकेण अन्यस्मादपगच्छति "मामेव ये प्रपद्यंते" इति वाक्यात् छेदने पुनर्योजनाभावः । दृढमिति । दृढग्रंथित्वादविमोकः ॥ ४१ ॥

एवमुद्देश्ये वैराग्यमुक्त्वा विधेये भगवति साक्षादवतीर्णे स्नेहं प्रार्थयते त्वयि मेऽनन्यविषयेति । यद्यपि भ्रातृपुत्रत्वेन रक्षकत्वेन च स्नेहोऽस्त्येव तथापि स देहसंबंधेनान्यविषयकः । आत्मसंबंधी हि त्वनन्यविषयः । परमात्माऽयमात्माऽधिष्ठात्री देवतेति मतिः परमां प्रीतिमुद्वहतात् । ज्ञानेन भक्तिर्भवत्वित्यर्थः प्रतिबंधकागणनायां रतेर्भगवदभेदे च दृष्टांतः परंपरासंबंधाभावे च ओघं प्रवाहमुदन्वति समुद्रे ॥ ४२ ॥

---

## श्रीविश्वनाथचक्रवर्त्ती ।

गमने पांडवानामकुशलम् अगमने च यादवानामित्युभयतो व्याकुलचित्ता सती तेषु स्नेहनिवृत्तिं प्रार्थयते अथेति । यस्त्वं सर्वेषामेव विश्वेषाम् ईशो भवसि । आत्माचेतयिता । तद्रूपोऽपि स्वस्वानुवर्त्तिनां वृष्णिपांडूनां कल्याणाय कृपासिन्धुस्त्वमेव सावधानः सदैवासि अहं किन्तत्कुशलचिंतया वृथैव म्रिये इति भावः ॥ ४१ ॥

तर्हि किं ब्रह्मज्ञाने स्पृहावती भवसि वृष्णिषु स्नेहच्छेदे मय्यपि स्नेहच्छेदात् तत्र नेत्याह त्वयि मतिः रतिं प्रीतिम् उत्कर्षेण वहतात् अनवच्छिन्नतया दधातु । किन्त्वनन्यविषया त्वद्भक्तास्त्वदभिन्ना एव तेषु प्रीतिं विना त्वय्यपि प्रीतिर्न सिद्ध्येत् त्वं प्रसीदसीत्यपि नेत्यहं जानाम्येव अतस्त्वत्तस्त्वद्भक्तेभ्यश्चान्यत्रममत्वशून्या । तदपि पांडवेषु यादवेषु त्वद्भक्तेष्वपि यत् स्नेहस्य छेदं प्रार्थयेतत् त्वदवतारात् पूर्वत एव देहसम्बन्धेन यो व्यवहारमयः स्नेहः प्रवृत्तस्तस्यैव न तु त्वत्प्रियत्वनिबन्धनस्य अतएव बंधकत्वेन स मया पाशरूपकेण प्रयुक्त इति भावः । अतएव गंगा यथा उदन्वत्यखिलनदनदीनामाश्रये ओघं पूरं वहति तथा मतिरपि सर्वभक्ताश्रयणीये त्वयि रतिम् । यथा च गंगा प्रतिवन्धम् न गणयति एवं मतिरपि विघ्नान् न गणयत्विति भावः ॥ ४२ ॥

---

श्री कृष्ण कृष्णसख वृष्ण्यृषभावनिध्रुग्राजन्यवंशदहनानपवर्गवीर्य ।
गोविंद गोद्विजसुरार्त्ति हरावतार योगेश्वरा खिलगुरो भगवन्नमस्ते ॥ ४३ ॥

सूतउवाच ॥

पृथयेत्थं कलपदैः परिणूता खिलोदयः ॥
मंदं जहास वैकुंठो मोहयन्निव मायया ॥ ४४ ॥
ताम्बाढमित्युपामंत्र्य प्रविश्य गजसाव्हयम् ॥
स्त्रियश्चस्वपुरंयास्यन्प्रेम्णा राज्ञा निवारितः ॥ ४५ ॥
व्यासाद्यै रीश्वरेहाज्ञैः कृष्णेनाद्भुतकर्मणा ॥
प्रबोधितोऽपीतिहासैर्ना बुध्यत शुचार्पितः ॥ ४६ ॥

सिद्धांतप्रदीपः ।

उभयकुलवंधूपलक्षितात्प्रपंचाद्वैराग्यंप्रार्थयते अथेति ॥ ४१ ॥

भगवातिभर्क्तिप्रा[illegible]ति त्वयीति हे मधुपते उदन्वतिसमुद्रेओघंपूरंगंगेवमेमतिः त्वयिअनन्यविषयाऽव्यभिचारिणीसतीरातिमनुरक्तिमसकृत्प्रतिक्षणमद्धासाक्षादुद्वहतात् ॥ ४२ ॥

---

भाषाटीका ।

( श्रीकृष्ण के गमन मैं पांडवों को कष्ट है. अगमन में यादवों को यह विचार कुंती प्रार्थना करती है ) हे विश्वेश ! हे विश्वात्मन् विश्वमूर्ते ! यह जो अपने अपने कर पांडव और याद वों मैं मेरी दृढ लोह पासहै इसै आप काट दीजै ॥ ४१ ॥

हे मधुपते ! मेरी अनन्य विषयामति असकृत् ( वार वार ) आपमैही रति उद्वहन करै जैसे गंगाजी का प्रवाह समुद्र मैं प्रवेश करता है ॥ ४२ ॥

---

श्रीधरस्वामी ।

एवमभ्यर्थ्य पुनः प्रणमति । हे श्रीकृष्ण ते नमः । उपकाराननुस्मरन्ती वहुधा संबोधयति कृष्णसख अर्ज्जुनस्य सखे वृष्णीनाम् ऋषभ श्रेष्ठ । अवन्यै भूम्यै द्रुह्यन्ति ये राजन्याः तेषां वंशस्य दहन । एवमपि अनपवर्गवीर्य्य अक्षीणप्रभाव । गोविन्द प्राप्तकामधेन्वैश्वर्य्य गोद्विजसुराणाम् आर्त्तिहरोऽवतारो यस्य इति ॥ ४३ ॥

कलानि मधुराणि पदानि येषु तैर्वाक्यैः परिणुतोऽखिल उदयो महिमा यस्य सः । णुस्तुतावित्यस्मात् परिणुतेति वक्तव्ये दीर्घश्छन्दोऽनुरोधेन । मन्दमीषत् । तस्य हास एव माया । वक्ष्यति हि—हासो जनोन्मादकरी च मायेति ॥ ४४ ॥

त्वयि मेऽनन्यविषया मतिरिति यत् प्रार्थितं तद्बाढमित्यङ्गीकृत्य रथस्थानात् गजाह्वयमागत्य पश्चात्ताश्च अन्याश्च सुभद्राद्याः स्त्रिय उपामन्त्र्य अनुज्ञाप्य स्वपुरं यास्यन् राज्ञा युधिष्ठिरेण प्रेम्णा अत्रैव कञ्चित् कालं निवसेति सम्प्रार्थ्य निवारितः ॥ ४५ ॥

अथ भीष्मनिर्याणोत्सवं वक्तुम् उपोद्घातकथां प्रस्तौति व्यासाद्यैः प्रबोधितोऽपि शुचा व्याप्तः सन् नाबुध्यत विवेकं न प्राप । कुत ईश्वरेहाया अज्ञैः स्वभक्तभीष्मनिर्याणमहोत्सवाय राज्ञा सह कुरुक्षेत्रं गन्तव्यं तन्मुखेनैवायं प्रबोधनीय इतिहीश्वराभिप्रायः कार्य्यद्वय विधायकः तमजानद्भिरित्यर्थः । श्रीकृष्णेनापि प्रबोधितो नावुद्ध्यत । तत्र हेतुः अद्भुतकर्मणेति । यथा कुरुपांडवसंधानार्थं गतोऽपि यथोचितमेव वदन्नपि विग्रहमेव दृढीकृतवान् एवमत्रापि प्रबोधयन्नबोधमेव दृढीचकारेत्यर्थः ॥ ४६ ॥

---

दीपिनी ।

वंशस्येति । यथा वायुररण्ये वंशेषु परस्परसङ्घर्षेण वह्निमुत्पाद्य तेन तान् नाशयति एवं राजन्यवंशेषु परस्परकलहवशाद्वैरमुत्पाद्य तेन तन्नाशकस्त्वमिति वंशदहनपदेन सूचितम् ॥ ४३ ॥

हासइति द्वितीयस्कंधस्य प्रथमाध्यायीयैकत्रिंशश्लोकः ॥ ४४ ॥ ४५ ॥

उपोद्घातेति वक्ष्यमाणमर्थं मनसि निधाय तदर्थम् अर्थान्तरवर्णनम् उपोद्घातः । "चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुधा" इति तल्लक्षणात् ॥ ४६ ॥ ४७ ॥

---

### श्रीवीरराघवः ।

स्वाभिप्रेतज्ञत्वमनुमता "वंजलिः परमामुद्राक्षिप्रंदेवप्रसादिनी" त्युक्तविधांजलिरेवोपायोनततोऽन्योऽस्तीत्यभिप्रायेणकेवलमितरासाधारण गुणविशिष्टंसंबोध्यंनमस्करोति श्रीकृष्णेति हे श्रीकृष्णसर्वलोकसुखकरकृष्णोऽर्जुनस्तस्यसखाकृष्णसखः तत्संबोधनमवृष्णीनामृषभश्रेष्ठ अवनिध्रुहामवन्युपलक्षितलोकोपद्रवकारिणां राजन्यानांवंशस्यदहनोयथा वेणूनांदहनोऽग्निर्नाशकः तद्वद्राजन्यकुलनाशकः अनपवर्गमनंतंवीर्य्यंयस्यहेगोविंदगवांद्विजानांसुराणांचार्त्तिहरो ऽवतारोयस्ययोगेश्वरसूक्ष्मदर्शिन्नखिलगुरोहितोपदेष्टः ॥ ४३ ॥

इत्थं कलानिमधुराणिपदानिवचांसितैः पृथयाकुंत्याकत्र्यापरिणूतः परिगीतोऽखिलउदयोमहिमायस्यसवैकुण्ठः श्रीकृष्णः मायया हासात्मिकयाऽऽश्चर्यशक्त्यालोकं मोहयन्निवमंदमीषज्जहासहसितवान्मंदमितिक्रियाविशेषणम् ॥ ४४ ॥

तावत्स्वपुरंयातुमुद्युक्तोभगवांस्तांपृथामन्याः स्त्रीश्चवाढमोमित्युपामंत्र्यांगीकारपूर्वकमनुज्ञाप्य प्रेम्णाराज्ञायुधिष्ठिरेण च निवारितः गजाह्वयंहास्तिनपुरमेवपुनःप्राविशत् प्रविश्येतिपाठेप्रविश्यतत्रैवकंचित्कालमुवासेतिशेषः ॥ ४५ ॥

तदाईश्वरेहाज्ञैरीश्वरचेष्टाभिज्ञैर्व्या साद्यैरद्भुतंकर्मचेष्टितंयस्यतेन श्रीकृष्णेनभगवता च इतिहासैः प्रतिबोधितोऽपिधर्मसुतः अतएव शुचार्पितःनाबुध्यतकालस्यगतिरीदृशीतिनविजज्ञे ॥ ४६ ॥

---

### श्रीविजयध्वजः ।

स्तुतिमुपसंहरतिश्रीकृष्णेति श्रियाअतसिकाकुसुमसदृशया कृष्ण नीलवर्ण कृष्णसखअर्जुनसखवृष्णिऋषभ वृष्णि[illegible]श्रेष्ठ वृष्णिवत्मेघ वद्भक्ताभिमतवर्षण "वृष्णिःकुलविशेषेतुवर्षन्मेघेऽपिकथ्यत" इत्यभिधानम् अवनिध्रुहांभूकंटकानांराज्ञांवंशमन्वयंदहतीत्यवनिध्रुक्राजन्यवंश दहनः अवानिध्रुग्राजन्याख्यवेणुदाहकइतिवा तस्यसंबुद्धिरवनिध्रुग्राजन्यवंशदहन अमरवंद्यवीर्यदेवस्तुत्यपराक्रम गोविंदवेदवाणीलब्ध विभव गवांद्विजानांसुराणामार्त्तिहरोऽवतारोयस्यसतथोक्तःतस्यसंबुद्धिःगोद्विजसुरार्त्तिहरावतार योगैश्वर्ययुक्ताखिलगुरोयथायोग्यंज्ञानोप देशकर्तःतेतुभ्यंनमइत्यन्वयः ॥ ४३ ॥

विकुंठानामकाचिदृषिपत्नीतत्पुत्रत्वेनजातः वैकुंठपुरनाथोऽपिवैकुंठइतिवा पृथयाकुंत्याकलपदैःश्रीत्वाव्यक्तवर्णमधुरपदैःयोगमायया स्वरूपशक्त्या ॥ ४४ ॥

यत्त्वदभीष्टंतथास्त्वितिबाढमितितामुक्त्वाद्रौपदीपूर्वाःस्त्रियश्चद्वारकांगमिष्यामीत्युषामंत्र्यगंगातीराद्गजसाह्वयंप्रविश्यस्वपुरंद्वारकांयास्यनूगामिष्यन् प्रेम्णासंप्रतिनगंतव्यमितिराज्ञानिवारितःपांडववात्सल्यात्तत्रैवावात्सीदित्येकान्वयः ॥ ४५ ॥

इतिश्रीभागवतेमहापुराणेप्रथमस्कंधे विजयध्वजटीकायामष्टमोऽध्यायः ॥ ८ ॥

---

### क्रमसंदर्भः ।

गोविन्देति नित्यप्राप्तपरमगोलोकाधिपत्येत्यर्थः ।यद्वा अथ विश्वेशेत्यादिपद्यत्रयस्यैवं योजना—तत्प्रियवर्गे स्वसम्बन्धहेतुकां प्रीतिं निषिध्य श्रीभगवत्येव तामभ्यर्थ्य पुनस्तत् प्रियवर्गे तदाधारत्वेनैव प्रीतिमङ्गीकरोति अथेति त्रिभिः । तत्र निषेधः प्रथमेन । अभ्यर्थना द्वितीयेन अङ्गीकारस्तृतीयेन । अत्र श्रीकृष्णसखेत्यादिसम्बोधनैस्तत् प्रीत्याधारत्वेनार्ज्जुनादिष्वपि प्रीतिरङ्गीकृता ॥ ४३ ॥

परिणूतेति तौदादिकणू शिस्तवन इत्यस्य रूपत्वेन दीर्घत्वम् । माययेव मोहयन्निति मोहनमात्रांशे दृष्टान्तः । "हासोजनोन्मादकरी च माये" ति तुविराड्गतमेव । यदि वाक्यालंकार इव शब्दस्तदा मायाशब्दोऽपि कृपावाचक एवेति। "माया दम्भे कृपायाञ्चे"ति कोषकाराः ॥ ४४ ॥ ४५ ॥

व्यासाद्यैरिति । नाबुद्ध्यत प्रत्युत शुचा व्याप्त एवासीदित्यर्थः । ईश्वरस्य तादृगिच्छयैव तेषां युक्तिः प्रतिहतशक्तिकाकृतेति स्वाम्यभिप्रायः।वस्तुतस्त्वेवं व्याख्येयम्—यद्यपि व्यासाद्याः राजाऽयं स्वोपदेशं न मंस्यत इति जानंत्येव तथाप्यद्भुतकर्म्ममय्या ईश्वरेहाया विज्ञैरपि सद्भिः सम्बोधित इति ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥

---

### सुबोधिनी ।

एवं नवधा भगवंतं स्तुत्वा शास्त्रार्थत्वेन नवविधभक्त्यनंतरे स्नेहे जाते माहात्म्ये च ज्ञाते पुनः पुनर्भगवदाविर्भावे किं कर्त्तव्यमित्याकांक्षायां माहात्म्यस्मरणपूर्वकं नमनं कर्त्तव्यमिति सिद्धांतः तदत्र सर्वं स्तुत्वा उपसंहारे माहात्म्यस्मरणाय बहुधा संबोधयन्नमस्यति श्रीकृष्णेति नव विशेषणानि भगवन्निति विशेष्यं तत्र श्रीकृष्णेति स्वरूपं "कृषिर्भूवा चकः शब्दो णश्च निर्वृतिवाचकः । तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते । साकारस्वात्तु सौंदर्यं श्रीशब्देनाभिधीयते" कृष्णसखेति गुणाः कृष्णोऽर्जुनस्तस्य सखा समानशीलव्यसनकथनात् गांभीर्यादयो गुणाः सूचिताः।लीलामाह वृष्णिवृषेति कपटमानुषलीलासूचिता।दुष्टदुर्जयत्वमाह अवनिध्रुग्राजन्यवंशदहनेति । न हि भगवज्ज्ञाने इयमवस्था भवेत् । असाधारणं धर्म्ममाह अनपवर्गवीर्येति । न विद्यते अपवर्गो यस्य तादृशं वीर्यं यस्य इति हि पुरुषोत्तमस्यासाधारणं चिन्हम् । जन्मकारणनिर्द्धारमाह गोविंदेति सद्रक्षाऽवतारप्रयोजनम् । फलमाह गोद्विजसुरार्तिहरावतारेति ।

### सुबोधिनी ।

गावो द्विजाः सुराश्च तेषामार्त्तिहरोऽवतारो यस्य अनेन धर्म्मग्लानिनिवृत्तिरुक्ता भवति । देवतोद्देशेन मंत्रकरणको हविस्त्याग इति त्रयाणां निरूपणं धर्म्ममूलकत्वादन्येषां न पृथक् निरूपणम् । दैन्यनिवृत्त्यर्थमाह योगेश्वरेति एतदति दैन्यं यद्योगेनसर्वंक्रियते न स्वतइति निज प्रार्थनामाह अखिलगुरो ? इति । प्रमाणसिद्धं मह्यं देयमिति पूर्वोक्तधर्म्म वान्न सगुणः किं तु भगवानिति भगवन्निति । "नमो नमएतावत्सद्धुपशिक्षितमिति" नमस्कारः ॥ ४३ ॥

एवं स्तुते भगवत्कर्त्तव्यमाह । विषयभोगार्थमेव ह्येतावत्कृतं न तु वैराग्यभक्त्यर्थमन्यथाऽरण्यादेव तथा कुर्यात् तस्माद्यः कश्चित् यत्किंचित्प्रार्थयतां नाम भगवांस्तु प्रक्रांतं स्वविचारितमेव प्रयच्छति अतोऽद्भुतकर्म्मनिरूपणे मोहंदत्तवानित्युच्यते । कलपदैर्गद्गदकंठेनोच्चारितैः अव्यक्तमधुरैः पदैः परिणूताः परितः स्फुरिताः सर्वे उदया यस्य गुणानामन्योऽन्यमिश्रणान्नवधा तदभावएकधेति "एकधा दशधा चैव दृश्यते जलचंद्रवदिति" श्रुतिरप्येवमभिप्राया तथा लीलाश्च । णू स्तुताविति धातुरूकारांतः कविकल्पद्रुमे निरूपितः अतो न दीर्घश्छांदसः । मंदं जहास मोहनस्याप्यज्ञानार्थं वैकुंठइति सांप्रतं रक्षायां स्थितः जयविजयपातनाद्वा मोहयन्निवेति । अद्भुतकर्म्मत्वादिति "स्वरूपेण कृतार्थत्वं मायया च विमोहनम्" ॥ ४४ ॥

अंतःकृतिमुक्त्वा वहिः कृतिमाह तां वाढमिति । तां कुंतीं प्रार्थितां वा बाढमित्यंगीकारे वचनम् । यत्त्वया कर्त्तव्यं वक्तव्यं वा तन्ममापि संमतं न तु मया अपूर्वं किंचित्कर्त्तव्यमिति ज्ञापितम् । इत्येवंप्रकारेणोपामंत्र्य पूर्वंगमने शकुनाभावामिव लक्षयित्वा पुनर्हस्तिनापुरं प्रविश्य तत्रत्याः स्त्रिय आमंत्र्य चकारादन्यान् द्वारकां यास्यन् भगवदिच्छया प्राकृतप्रेमोद्गमात् विस्मृत्यमाहात्म्यं संबंधस्नेहाद्युधिष्ठिरेण गमनान्निवारितः ॥ ४५ ॥

इयं ह्यद्भुतलीला भगवतो मुक्तस्य बंधो वद्धस्य मोक्ष इति अतो युधिष्ठिरस्यमोहं प्रपंचयति सप्तभिः व्यसनानां तथात्वात् "स्वस्मिन्यदैवकरणमुत्तमस्याधमस्य वा । तदैव मोहः कृष्णे तु ज्ञानमित्येष निश्चयः" । व्यासाद्यैरिति । ननुमोहोऽधिकारिणः प्रमाणान्निवर्त्ततेतत्र युधिष्ठिरोऽधिकारी अन्यथाअग्रेविज्ञानानुदयः स्यात्प्रमाणं वेदाःतत्कर्त्तारोव्यासनारदादयः तैर्बोध्यमानस्यापिज्ञानंनोदेति भीष्ममुखादेवायंबोधनीयइति भगवदिच्छातः योगजधर्मेणज्ञानशक्त्या वान भगवदिच्छाज्ञायतेइच्छाजिज्ञासायांतु चित्तस्यभगवत्परत्वेविषय विस्मरणात् निमित्ताभावेजिज्ञासानश्येत्अतः सर्वज्ञाअपिसत्त्व व्यवधानभगदवताराश्चभगवादिच्छांनजानंतीत्याह ईश्वरेहाज्ञैरिति भगवताऽपिवोधितोनाबुध्यततत्रहेतुः अद्भुतकर्मणेति यथासंध्यर्थंगतः सर्वसमर्थोविग्रहंकृत्वाआगतः एवंवोधनार्थवाक्यानि वदन्अवोधंसंपादितवानित्यर्थः इतिहासैः पुरावृत्तकथनैः नचतेषांवाक्यानामबोधकत्वंतत्राह प्रबोधितोऽपीतिप्रबोधो दूरेप्रत्युतशोके नार्पितः समर्पितोभक्षित इत्यर्थः ॥ ४६ ॥

---

### श्रीविश्वनाथचक्रवर्त्ती ।

स्तवान्ते सर्व्वसुखदत्वेन स्मरन्ती प्रणमति । कृष्णस्य अर्ज्जुनस्य सखा । अवन्यै द्रुह्यन्ति ये राजन्यास्तेषां वंशा एव वंशास्तेषां दहन अनपवर्गवीर्य्य हे अक्षीणपराक्रम । हे गोविंद प्राप्तकामधेन्वैश्वर्य्य ॥ ४३ ॥

परिणूतेति तौदादिकणू शि * स्तवन इत्ययं दीर्घान्त एव । माययेव मोहयन् न तु मायया किन्तु प्रेम्णेत्यर्थः ॥ ४४ ॥

त्वयि मे अनन्यविषया मतिरिति यत् प्रार्थितं तत् वाढमित्यङ्गी कृत्य रथस्थानात् गजसाह्वयं प्रत्यागत्य पश्चात् ताश्च अन्याश्च सुभद्राप्रमुखाः स्त्रिय उपामन्त्र्य अनुज्ञाप्य स्वपुरं यास्यन् राज्ञा युधिष्ठिरेण प्रेम्णा अत्रैव कश्चित् कालं निवसेति सम्प्रार्थ्य निवारितः । तेन च राज्ञा प्रेम्णः सर्वतोऽपि वशीकरणत्वातिशयो व्यञ्जितः ॥ ४५ ॥

यद्यहमिदानीमिहैव स्थितोऽभूवं तर्ह्यासन्नमृत्युकालं मद्दर्शनं विना मर्त्तुमनिच्छन्तं भीष्मं स्वभक्तमात्मानं सपरिकरमेव सन्दर्श्य सुखयामि लोके तदुत्कर्षं ख्यापयितुं तन्मुखेनैव राजानञ्च प्रवोधयामीति भगवदभिप्रायं व्यंजयन्नाह ईश्वरस्य कृष्णस्य ईहाया उक्तलक्षणस्य अभिप्रायस्य अज्ञैर्विज्ञैर्वा । अद्भुतकर्म्मणेति इदमस्याद्भुतं कर्म्म यत् स्वयमेवास्य हृदि प्रविश्य अविवेकम् उत्थापितवान् वहिश्च स्वकर्त्तृकेण व्यासादिकर्त्तृकेणापि प्रबोधेनाबोधमेव दृढीचकार तेन च भीष्ममुखोदितेन तत्त्वेन तं प्रबोध्य व्यासादिभ्योऽपि मत्तोऽपि मदेकान्तभक्तो भीष्मोऽतिशयेन धर्म्मज्ञानतत्त्वज्ञ इति लोके विख्यापयामास किंच युधिष्ठिरस्य तु ततोऽपि प्रेमाधिक्यादाधिक्यं यत् तदनुरोधेनैव द्वारकाम गच्छंस्तत्र स्थितः तत एव तन्निकटं गत्वा तथा चक्रे इति विवेचनीयम् ॥ ४६ ॥

---

### सिद्धांतप्रदीपः ।

संसारेविरक्तिब्रह्मण्यनुरक्तिमभ्यर्थ्यतद्दार्ढ्यार्थंपुनः प्रणमति श्रीकृष्णेति हे श्रीकृष्णहेश्रीयुक्तसदानंदस्वरूपतेनमः अनपवर्गमपगमनानर्हस्वाभाविकंवीर्यंयस्यसतथातत्संबोधनेअनपवर्गवीर्य ॥ ४३ ॥

कलपदैर्मधुरपदैर्वाक्यैः पृथयापरिणूतः परिणीतोऽखिलोदयोनिखिलमहिमायस्यसः दीर्घोकारश्छांदसःमंदंयथास्यात्तथामाययाकृपयाजहासहासितवान् ॥ ४४ ॥

---

* णूशिइतिपाठो मुग्धबोधानुरोधेन ।

आह राजा धर्मसुत श्चिंतयन्सुहृदां वधम् ॥
प्राकृतेनात्मना विप्राः स्नेहमोहवशंगतः ॥ ४७ ॥
अहो मे पश्यताज्ञानं हृदि रूढं दुरात्मनः ।
पारक्यस्यैव देहस्य वह्व्यो मेऽक्षौहिणीर्हताः ॥ ४८ ॥
वालद्विजसुहृन्मित्र पितृभ्रातृगुरुद्रुहः ।
न मे स्यान्निरयान्मोक्षो ह्यपिवर्षायुतायुतैः ॥ ४९ ॥
नैनोराज्ञःप्रजाभर्तुर्धर्मयुद्धे वधो द्विषाम् ॥
इति मे नतु वोधाय कल्पते शासनं वचः ॥ ५० ॥

सिद्धांतप्रदीपः ।

स्नेहपाशंछिंधीतित्वयिमेमतिमुद्वहतादिति चयत्प्रार्थितं तद्बाढमित्यंगीकृत्यरथस्थानाद्गजसाह्वयं प्रविश्यतांपृथामन्याः सुभद्राद्याः स्त्रियश्चोपामंत्र्यानुज्ञाप्यस्वपुरंयास्यन् राज्ञायुधिष्ठिरेणनिवारितः ॥ ४५ ॥

शुचार्पितः सुहृद्वधशोकव्याप्तः कृष्णेनप्रबोधितोऽपिनाबुध्यतेत्यत्रहेतुंसूचयन्विशिनष्टि अद्भुतकर्मणेति स्वभक्तकार्यसिद्ध्यर्थेस्वयं कालयवनमविजित्यस्वभक्ततेजसैवतंघातायितुंतत्रतमनयत् एवंधर्मसुतप्रबोधनार्थंप्रवृत्तेनापिश्रीकृष्णेनस्वभक्तस्यभीष्मस्यसमीपेसर्वैर्युधिष्ठिरादिभिः सहैवगंतुंकामेनस्वेच्छयैव न प्रबोधितः सः एवंविधानि अद्भुतानिकर्माणियस्यस तथा तेनेत्यर्थः ॥ ४६ । ४७ ॥

---

भाषा टीका ।

हे श्रीकृष्ण ! हे कृष्णसखा ! (अर्जुन वंधो) हे वृष्णि ऋषभ ! ( यदुश्रेष्ठ ) हे अवनि ध्रुक् राजन्यवंशदहन ( पृथवी विद्रोही राजाओं के वंश के जलाने वाले ) हे अन पवर्गवीर्य ! ( अक्षीण प्रभाव ! ) हे गोविंद ! हे गोद्विज सुरों की आर्ति हरणावतार ! हे योगेश्वर हे अखिल गुरो ! हे भगवन् ! तुमै नमः ॥ ४३ ॥

( सूतउवाच ) ऐसे मधुर पदोंसै कुंती नै भगवान की समस्त माहिमा कीर्तन की—तव वैकुंठ भगवान मायासे मोहन सा करते मंद मंद हँसने लगे ॥ ४४ ॥

कुंती की प्रार्थना को स्वीकार कर हस्तिनापुर में प्रवेश कर रानियों सहित स्वपुर में जात भगवान् को प्रेम से राजा ने निवारण किया ॥ ४५ ॥

( भीष्मनिर्याण महोत्सव का उपोद् घात करते हैं ईश्वर की ईहा ( चेष्टा ) के अन भिज्ञ व्यासादि मुनियों ने अद्भुत कर्मा कृष्ण ने अनेक इतिहासों सै राजा युधिष्ठिरकोसमझाया परंतु शोकसंतप्तरा जा को वोध नहुआ ॥ ४६ ॥

---

श्रीधरस्वामी ।

अबोधमेव प्रपञ्चयति आह इति षड्भिः । प्राकृतेन अविवेकव्याप्तेन आत्मना चित्तेन । हे विप्राः ॥ ४७ ॥

पारक्यस्य श्वशृगालाद्याहारस्य देहस्यार्थे । मे मया । अक्षौहिणीः अक्षौहिण्यः । अक्षौहिणीप्रमाणं व्यासेनोक्तम्—अक्षौहिणी प्रसंख्याता रथानां द्विजसत्तम । संख्यागणनतत्त्वज्ञैः सहस्राण्येकविंशतिः ॥ शतान्युपरि चाष्टौ च तथा भूयश्च सप्ततिः । गजानाञ्च प्रसंख्यानमेतदेव प्रकीर्त्तितम् । ज्ञेयं शतसहस्रं तु सहस्राणि नवैव तु । नराणामपि पञ्चाशत् शतानि त्रीणि चैव हि । पंचषष्टिसहस्राणि तथाऽश्वानां शतानि च । दशोत्तराणि षट् प्राहुः संख्यातत्त्व विदो जनाः एतामक्षौहिणीं प्राहुर्यथावदिह संख्ययेति ॥ ४८ ॥

सुहृदः सम्वन्धिनः । मित्राणि सखायः । पितरः पितृव्याः ॥ ४९ ॥

द्विषां वधः एनः पापं न भवतीति यत् शासनं शिक्षारूपं वचः । कुतो न कल्पते यतस्तद्वचः प्रजाभर्त्तुरेव । अयं भावः—स्वप्रजानामन्यतो वाधे प्रसक्ते तद्वधोऽनुज्ञातः दुर्योधनेन तु प्रजायां पाल्यमानायां मया केवलं राज्यलोभेन हतत्वात् पापमेवेदमिति ॥ ५० ॥

---

दीपनी ।

एतां गजरथनराश्वानां साकल्येन २, १८, ७०० परिमिताम् । तत्र २१, ८७० रथाः, २१, ८७० रथाः, २१, ८७० गजाः, १, ०९, ३५० नराः, ६५,६५० अश्वा ॥ ४८ ॥ ५२ ॥

---

श्रीवीरराघवः ।

किंतु हे विप्राः बंधुसुस्नेहमोहयोर्वशंप्राप्तः अतएवप्राकृतेनदेहेनतदनुबंध्यादिश्रवणेनमनसासुहृदांवधमेवचिंतयन् धर्मसुतोराजायुधिष्ठिरःअब्रवीत् ॥ ४७ ॥

तदेवाहयावत्समाप्ति अहो दुरात्मनोममहृदिरूढमज्ञानंपश्यततदेवदर्शयतिपारक्यस्यश्वशृगालादि भक्ष्यस्यदेहस्यैवदेहसुखार्थमेवमेमयावह्यः अक्षोहि णीरक्षौहिण्यः हताः ॥ ४८ ॥

बालादिद्रुहः बालादिहंतुर्ममवर्षायुतानामयुतैरपिनिरयान्मोक्षोनहि भवेत् ॥ ४९ ॥

ननु "शौर्यंतेजोधृतिर्दाक्ष्यंयुद्धेचाप्यपलायनं धर्म्याद्धियुद्धाच्छ्रेयोन्यत्क्षत्रियस्यनाविद्यत" इत्यादि शास्त्रैर्धर्म्ययुद्धस्यधर्मत्वावबोधनात्त्वंह तान्प्रति किंशोचसइत्यतआह नेतिप्रजा भर्त्तुः पोषणाधिकृतस्यराज्ञो युद्धेद्विषांवधोधर्मादनपेतः नैनः नपापंकिंतुधर्मएवेतियदनुशासनात्मक वचोभगवद्वचः तन्ममबोधायविवेकायनकल्पतेविवेकं जनयितुमसमर्थमित्यर्थः धर्मयुद्धस्यधर्मत्वेऽपितदनुबंधितयामहतः पापस्यैवप्राप्तत्वादितिभावः ॥ ५० ॥

---

क्रमसन्दर्भः ।

नैन इति । राज्ञो धर्म्मयुद्धे द्विषां वधः एनः पापं न भवतीति यत् शासनं वचः तत्तु न मे बोधाय कल्पते । यतः तद्वचः प्रजाः पालयंतमेव राजानं प्रति न तु लुब्धं प्रतीति वाक्यार्थः । भावार्थस्तु टीकावदेव ॥ ५० ॥ ५१ ॥ ५२ ॥

इति श्रीमद्भागवतप्रथमस्कन्धस्य श्रीजीवगोस्वामिकृतक्रमसन्दर्भे अष्टमोऽध्यायः ॥ ८ ॥

---

सुबोधिनी ।

अतएवशोकव्याप्तस्यवाक्यमाह । आहेति । राजारजोगुणव्याप्तः धर्मसुतः प्रार्थनयाधर्माज्जातः वहिर्मुखंधर्ममुररीकृतवान् अतएव सुहृदांवधं चिंतयन्पूर्वकृतंशोचति अंतःकरणमपिसमीचीनं भगवताकृतमित्यभिप्रायेणाह देहादिबुद्ध्याविप्राइतिसंबोधनं भगवतोऽद्भुतकर्मत्वभावनार्थंस्नेहोमृतेषुमोहोजीवत्सु ॥ ४७ ॥

विपरीतबुद्धिं विस्तारयति अहो इति । देहोपभोगार्थं महतोऽन्यायस्य करणमज्ञानजन्यं हृदि प्ररूढं नास्यप्रतीघातः शक्यो जातः तत्र हेतुः अंतःकरणाशुद्धिः । तदेवाज्ञानमाह पारक्यस्येति । श्वसृगालादिभक्ष्यस्य । अक्षोहिणीः अक्षौहिण्यः मे मदीया हता इत्यज्ञानं वस्तुतस्तु भगवताभूभारहरणार्थं लीलया वा हताः ॥ ४८ ॥

अनेन इह लोको गतइत्युक्तं परलोकोऽपि नास्तीत्याह बालेति । बाला अभिमन्युप्रभृतयः द्विजाः द्रोणादयः सुहृदः शल्यादयः मित्राणि कर्णादयः पितरो भीष्मादयः भ्रातरो दुर्योधनादयः एतएव वा गुरव. अन्ये च । एकस्यापि महापातकस्य बुद्धिपूर्वकं कृतस्यन प्रायश्चित्तं तस्मान्नरके वासो यावदाभूतसंप्लवमित्यर्थः ॥ ४९ ॥

ननु युध्यमानानां वधः को वा दोषाय सत्यं "श्रेयः प्रजापालनमेव राज्ञामिति" प्रजारक्षार्थं शत्रुवधश्चेत्तदा न दोषः प्रकृते तु दुर्योधने प्रजापालने क्रियमाणएव मया स्वलोभार्थमेव सर्वे हताः अतो राज्ञो धर्म्मयुद्धे द्विषां वधः प्रजाभर्त्तुर्नैनः न दोष इति नीतिवचनं मांबोधयितुं न शक्नोतीत्यर्थः ॥ ५० ॥

---

श्रीविश्वनाथचक्रवर्त्ती ।

अबोधमेव प्रपञ्चयति । प्राकृतेनात्मना चित्तेन वस्तुतस्तु तस्यात्मा ह्यप्राकृत एवेति । तदपि प्राकृतत्वारोपो भगवदिच्छयैवोक्तप्रायोजनायेति ज्ञेयम् ॥ ४७ ॥

पारक्यस्य श्वशृगालाद्याहारस्य देहस्यार्थे अक्षौहिणीरक्षौहिण्यो हताः । अक्षौहिणीप्रमाणं व्यासेनोक्तम्—अक्षौहिणी प्रसंख्याता रथानां द्विजसत्तमाः । संख्यागणनतत्त्वज्ञैः सहस्राण्येकविंशतिः । शतान्युपरिचाष्टौ च तथा भूयश्च सप्ततिः । गजानाञ्च प्रसंख्यानमेतदेव प्रकीर्त्तितम् । ज्ञेयं शतसहस्रन्तु सहस्राणि नवैव तु । नराणामपि पञ्चाशत् शतानि त्रीणि चैव च । पञ्चषष्टिसहस्राणि तथाश्वानां शतानि च । दशोत्तराणि षट् प्राहुः संख्यातत्त्वविदोजनाः । एतामक्षौहिणीं प्राहुर्यथावदिह संख्ययेति ॥ ४८ ॥

सुहृदः सम्बन्धिनः । मित्राणि सखायः । पितरः पितृव्याः ॥ ४९ ॥

द्विषां वधः एनः पापं न भवतीति यत् शासनं शिक्षारूपं वचः । कुतो न कल्पते यतस्तद्वचः प्रजाभर्त्तुरेव । अयं भावः—स्वप्रजानामन्यतो बाधे प्रसक्ते तद्वधोऽनुज्ञातः दुर्योधनेन तु प्रजायां पाल्यमानायां मया केवलं राज्यलोभेन हतत्वात् पापमेवेदम् मम जातमिति ॥५०॥

---

स्त्रीणां मद्धतबंधूनां द्रोहो योऽसाविहोत्थितः ॥
कर्मभिर्गृहमेधीयैर्नाहं कल्पो व्यपोहितुम् ॥ ५१ ॥
यथा पंकेन पंकांभः सुरया वा सुराकृतम् ॥
भूतहत्यां तथैवैकां न यज्ञैर्मार्ष्टुमर्हति ॥ ५२ ॥

इतिश्रीमद्भागवते महापुराणेप्रथमस्कंधे युधिष्ठिरानुतापोनामाष्टमो ऽध्यायः ८

सिद्धांतप्रदीपः ।

पारक्यस्यशृगालादिभक्ष्यस्यार्थेमेमया ॥ ४८ । ४९ ॥

धर्मयुद्धेद्विषांवधः राज्ञः एनः पापंनेतिशासनंशिक्षाभूतंवचोमेवोधायनकल्पतेयतस्तादृशंवचः प्रजाभर्त्तुरेवप्रजापालकस्याधर्मयुद्धेद्विषद्वधएनोनभवति धृतराष्ट्रेप्रजाभर्तरिविद्यमानेममप्रजाभर्तृत्वाभावात् द्विषद्वधएनएवेत्याशयः ॥ ५० ॥

---

भाषाटीका ।

अहो मेरे दुरात्मा के हृदय रूढ अज्ञान को देखो कि इस पारक्य देह के निमित्त मैंने वहुतसी अक्षौहिणियों का वध किया ॥ ४७ ॥

राजा मन मै यह सोचते थे ( अहो मैं कैसा दुरात्मा हूं मेरे हृदयमै कैसा दुरंत अज्ञान आरूढ होरहाहै जो मैंने इस पराये देह के निमित्त वहुतसी अक्षौहिणीओं का वधकिया ॥ ४८ ॥

वालक ब्राह्मण सुहृत् मित्र पितृ भ्रातृ और गुरु ओंसे मैंने द्रोह कियाहै अयुता युत वर्षों मै भी मेरा नरकसे उद्धार नहोगा ॥४९॥

"प्रजा पोषणके निमित्त धर्म युद्ध मै राजा को पाप नहीहोता है" यह शास्त्र वचन भी मेरे बोध को नहीं है ॥ ५० ॥

---

श्रीधरस्वामी

किञ्च युद्धे पुंसां वधोभवतु नाम धर्म्मः स्त्रीणां तु मया हता बन्धवो यासां तासां योऽसौ द्रोहोऽनुद्दिष्टोऽप्युत्थितः तं व्यपोहितुम् अपाकर्त्तुं कल्पः समर्थो नाहम् । गृहमेधीयैः गृहाश्रमविहितैः ॥ ५१ ॥

ननु च "सर्व्वं पाप्मानं तरति तरति ब्रह्महत्यां योऽश्वमेधेन यजते" इति श्रुतेः पापमश्वमेधेन नश्येदेवेत्याशंक्य अविवेकविजृम्भितं हेतुवादमाश्रित्य निराकरोति ! यथा पंकेन पंकाम्भो न मृज्यते यथा सुरालेशकृतमपावित्र्यं वह्व्या सुरया न मृज्यते तथैव भूतहत्यामेकां प्रमादतो जातां बुद्धिपूर्व्वकहिंसाप्रायैर्यज्ञैर्मार्ष्टुम् शोधयितुं नार्हतीति ॥ ५२ ॥

इति श्रीमद्भागवतभावार्थदीपिकायां प्रथमस्कन्धे अष्टमोऽध्यायः ॥ ८ ॥

---

श्रीवीरराघवः ।

ननुधर्मार्थं यतमानस्यावर्जनीयतयाप्रसक्तमपिपापंवर्णाश्रमधर्मैरपोहितुमशक्यमेव "धर्मेणापापमपनुदती"तिशास्त्रादित्यतआह स्त्रीणामितिमयाहताबंधवः पतयोयासांतासांस्त्रीणांयोसौद्रोहः पापात्मकः इहधर्मयुद्धेप्रवृत्तेमय्युत्थितः तमहंगृहमेधीयैर्गृहाश्रमिणः कर्त्तव्यैर्द्धर्मैर्व्यपोहितुंनकल्पः नप्रभुः बहुकालानुभाव्यफलोविपुलोद्रोहोऽल्पकालनिवर्त्यैर्गृहमेधीयैः कर्मभिर्नापोहितुंकल्पः कर्मणाकर्मनिर्हारश्चायुक्तइतिभावः ॥ ५१ ॥

एतदेवसदृष्टांतमुपपादयातियथेति पंकांगसपंकमंगंपंकेनैवयथामार्ष्टुंशोधयितुंनार्हतिलोकः यथाचसुराकृतंसुराकृतदोषदूषितंभांडंयतःसुरयैवमार्ष्टुंनार्हति तथायज्ञैरेकामपिभूतहत्यांनमार्ष्टुमर्हति पंकांकइतिपाठेपंकांकितपादाद्यवयवः पुमान्पंकेनैवात्मानंमार्ष्टुंनार्हतितद्वदित्यर्थः पंकांकमितिद्वितीयांतपाठेपंकस्यांकोयस्मिंस्तदंगंपंकेनमार्ष्टुंनार्हतितद्वत् ॥ ५२ ॥

इतिश्रीवीरराघवटीकायां प्रथमेऽष्टमोऽध्यायः ॥ ८ ॥

---

सुवोधिनी ।

ननु प्रायश्चित्तं क्रियतां किंशोकेन तत्राह स्त्रीणामिति । पापस्य हि रोगवत्प्रतीकारः स च प्रत्यग्रोत्पन्नस्य प्रथमं कर्त्तव्यः पश्चात्पुरातनानाम् । प्रत्यहं च सहस्रं स्त्रियः मद्धतान् भर्तॄन् गृहीत्वा शोचन्त्यो म्रियंते स द्रोह इहैव महानुपस्थितः । नन्वस्यैव तर्हि प्रायश्चित्तं क्रियतां तत्राह कर्मभिरिति । अस्त्यत्र प्रायश्चित्तं सर्वपरित्यागः शरीरपरित्यागो वा न तु गृहमेधीयैः कर्मभिः द्रव्यमयैर्भूतहिंसात्मकैः यद्यपि प्रायश्चित्तत्वेन वेदेन बोध्यते तथापि मम नाधिकारः तथाविधसाधनाभावात् ॥ ५१ ॥

## सुबोधिनी।

अन्यथाविधसाधनैस्तु अजीर्णो भोजनवत् सर्वनाशक इति न तादृशयज्ञेन निस्तार इति सदृष्टांतमाह यथेति। कर्दमजलक्षालनार्थं यथा पंकलेपः भित्त्यादिलेपनवत् अधिकमृत्संपादको भवति। अस्य दृष्टांतस्य न परलोकनाशकत्वमित्याशंक्य दृष्टांतांतरमाह सुरया वेति। यथा सुराबिंदुस्पर्शो महत्या सुरयाप्रक्षालनं परलोकनाशकं भवति एवमेवैकामपि ब्रह्महत्यां बहुभिरपि यज्ञैः पशुमारकैः दूरीकर्त्तुं कोऽपि नार्हतीत्यर्थः। वस्तुतः पूर्वकांड विचारकैर्निर्मथितं ज्ञानं मोहज्ञानामिति निरूपितम्। एवं भगवतोऽद्भुतकर्मत्वं सिद्धम् ॥ ५२ ॥

इति श्रीभागवत सुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मज श्रीमद्वल्लभदीक्षित विरचितायां प्रथमस्कंध विवरणे अष्टमाध्यायविवरणम् ॥ ८ ॥

---

## श्रीविश्वनाथचक्रवर्त्ती।

मया हता बन्धवो यासां तासाम्। कल्पः समर्थः ॥ ५१ ॥

ननु च "सर्वं पाप्मानं तरति तरति ब्रह्महत्यां योऽश्वमेधेन यजते" इति श्रुतेः पापमश्वमेधेन नश्येदिदि चेत् तत्राह। यथा घनपङ्केन पंकाम्भो न मृज्यते यथा वा सुरालेशकृतमपावित्र्यं बह्व्या सुरया न मृज्यते। यज्ञैः बुद्धिपूर्वकहिंसाप्रायैर्बहुभिर्यज्ञैः ॥ ५२ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। अष्टमः प्रथमेऽध्यायः सङ्गतः सङ्गतः सताम् ॥ ८ ॥

---

## सिद्धांतप्रदीपः।

किंच धर्मयुद्धेद्विषद्वधः पापंमास्तु इदंपापंतु"धर्मेणपापमपनुदती"तिश्रुत्याज्ञयागृहाश्रमोचितेनकर्मणाऽपिनिराकर्तुमशक्यमित्याह स्त्रीणामिति मयाहतावंधवः पतिपुत्रादयोयासांतासांयोऽसौद्रोह उत्थितस्तंगृहमेधीयैर्गृहाश्रमिसाध्यैर्ध्वपोहितुमपाकर्त्तुमहंकल्पः समर्थोनास्मि ॥ ५१ ॥

किंच "सर्वपाप्मानंतरातिब्रह्महत्यांयोश्वमेधेनयजतेयदुवैनमेववेदे" तिश्रुत्युक्तमपिकर्मज्ञानपूर्वकगुर्वादिवधरूपातिघोरतरपापभयाविष्टो धर्मराजोममत्राणायनेत्याशयेनाह यथेति यथापंकेनपंकांभः यथावासुरयासुराकृतमपावित्र्यंनमृज्यते तथाभूतहत्यांद्रोणादिरूपप्राणिवधजन्यामतिघोरामेकामपिबहुभिर्यज्ञैर्मद्विधोमार्ष्टुंनार्हति"आचार्यदेवोभवे"त्यादिवेदोक्तधर्ममतिलंघ्यातितुच्छदैहिकसुखसिद्धयर्थंगुर्वादिघातिनंवेदोक्तमपिकर्मकथंपवित्रीकुर्यादितिभावः ॥ ५२ ॥

इतिप्रथमस्कंधीये सिद्धांतप्रदीपेऽष्टमाध्यायार्थप्रकाशः ॥ ८ ॥

---

## भाषाटीका।

जिन के पति पुत्रादि बंधु मेरे हेतु मारे गये हैं उनस्त्रियों का जोयह घोर द्रोह उपस्थितहुआहै इस को गृहमेधीय कर्मोंसे मै नहीं अपा करण ( दूर ( कर सक्ताहौं ॥ ५१ ॥

जैसे कीच से कीच नहीं धोई जासक्ती है सुरापान की माद कता फिर सुरापान से नहीं निवृत्त होसकती है ऐसीही प्रमाद से हुई इस युद्ध की हिंसा को अब ज्ञानपूर्वक फिर यज्ञों में हिंसा कर किसतरह मार्जन कर सकता है ॥ ५२ ॥

प्रथमस्कंध का अष्टम अध्याय समाप्त

---:*:---

# नवमो ऽध्यायः ।

इतिभीतः प्रजाद्रोहात्सर्वधर्म विवित्सया ॥
ततो विनशनं प्रागाद्यत्र देवव्रतोऽ पतत् ॥ १ ॥
तदाते भ्रातरः सर्वे सदश्वैः स्वर्णभूषितैः ॥
अन्वगच्छन्रथैर्विप्रा व्यासधौम्यादयस्तथा ॥ २ ॥
भगवानपि विप्रर्षे रथेन सधनंजयः ॥
स तैर्व्यरोचत नृपः कुवेर इवगुह्यकैः ॥ ३ ॥
दृष्ट्वानिपतितं भूमौ दिवश्च्युतमिवामरम् ॥
प्रणेमुः पांडवा भीष्मं सानुगाः सहचक्रिणा ॥ ४ ॥

### श्रीधरस्वामी ।

युधिष्ठिराय भीष्मेण सर्व्व धर्म्म निरूपणम् ।
कृष्णस्तुतिश्च मुक्तिश्च नवमे तस्य वर्ण्यते ॥ ० ॥

यदर्थं तस्यविवेकः श्रीकृष्णेन संवर्द्धितस्तद्दर्शयति इतीति । सर्वेषां धर्म्माणां विवित्सया वेदितुमिच्छया । विनशनम् कुरुक्षेत्रम् । देवव्रतो भीष्मः ॥ १ ॥

सन्तः श्रेष्ठा अश्वा येषु तै रथैः ॥ २ ॥ ३ ॥ ४ ॥

---

### दीपनी ।

० ॥ १ ॥ ११ ॥

---

### श्रीवीरराघवः ।

ततइतीत्थंप्रजाद्रोहाद्भीतोयुधिष्ठिरः स्वाज्ञातधर्मान्बोद्धुमिच्छयाविशसनं विशासिताहिंसितायत्रबंधवः तद्विशसनंकुरुक्षेत्रंप्रागात्प्रतस्थे विशसनंविशिनष्टि यत्रदेवव्रतोभीष्मोऽपतत्भीष्माद्धर्मान्बोद्धुंप्रययावित्यर्थः ॥ १ ॥

तदातस्ययुधिष्ठिरस्यभ्रातरोभीमादयः सर्वेसंतोऽश्वायेषांतैः स्वर्णभूषितैरथैरन्वगच्छन् तथाहेविप्राः व्यासधौम्यादयश्चान्वगच्छन् ॥२॥

हेविप्रर्षेसधनंजयः सार्जुनोभगवान्श्रीकृष्णोऽपिरथेनान्वगच्छत्तदास नृपोयुधिष्ठिरोव्यरोचत यथागुह्यकैर्यक्षैः कुवेरस्तद्वत् ॥ ३ ॥

दिवः स्वर्गाच्च्युतममरमिवस्थितं भूमौनिपतितंभीष्मंदृष्ट्वासानुगाः सभृत्याः पांडवाश्चक्रिणाश्रीकृष्णेनसहप्रणेमुः ॥ ४ ॥

---

### श्रीविजयध्वजः ।

स्वानंदानुभवलक्षणोमोक्षःसकलपुरुषार्थोत्तमःसचभगवदपरोक्षज्ञानलब्धविष्णुप्रसादलभ्यइत्ययमर्थःप्रतिपाद्यतेस्मिन्नध्याये तत्ज्ञापयितुमुपोद्घातंरचयति व्यासाद्यैरित्यादिना स्वराज्येऽभिषिक्तोऽपि ज्ञातितदनुबंधिवधात्यापबुद्ध्याराज्यानिच्छुर्युधिष्ठिरोराजा नावुध्यत अयंधर्मइतिज्ञानंनावैदित्यन्वय कथंभूतः ईश्वरस्यईहांसृष्ट्यादिलक्षणांचेष्टांजानातीतीश्वरेतत्कथाविशेषैःप्रकर्षेणवोधितोऽपिज्ञात्यादिमरणनिमित्तशुचाविद्धः ॥ १ ॥

इत्थंवोधितोऽपिधर्मेअधर्मबुद्धिःकिंचकारेतितत्राह आहेति हेविप्राः शृणुतेतिशेषः प्राकृतेनात्मनाधर्माधर्मविवेकविधुरेणमनसा तत्कारणमाह स्नेहाज्जातोमोहोभ्रमःस्नेहमोहस्तस्यवशंगतः तस्मात् तन्निमित्तमाह सुहृदांज्ञातितदनुवंधिनांवधमहर्निशंचिंतयन् धर्मसुतइत्थमाहेत्येकान्वयः स्नेहमोहवशंगतइत्यनेनधर्मात्मनो धर्मसुतस्यकथंधर्मे हरिविमुखदुष्टतदनुवंधिवधलक्षणेत्वधर्मत्वशंका ऽभूदित्येतदपास्तम् ॥ २ ॥

किमाहेतितत्राह अहोइति मेहृदिरूढमंकुरितमज्ञानंतत्पश्यत अहोआश्चर्यं कथंमेपारक्यस्यपरकीयस्यश्वशृगालभोग्यस्यमेदेहस्यार्थेबह्व्योऽक्षौहिणीरक्षौहिण्योहताएत्रयस्मात्तस्मादितिशेषः ॥ ३ ॥

### श्रीविजयध्वजः।

तत्फलमाह नमइति मेनिरयान्मोक्षोवर्षाणामयुतायुतैःनस्याद्धि कथंभूतस्यमे बालान्सौभद्रादीन्द्विजान्द्रोणादीन्सुहृदोद्रुपदादीन्मित्राणिधनदानिनष्टान्मद्वविशेषान्पितॄन्भूरिश्रवः प्रभृतीन्भ्रातॄन्दुर्योधनादीन्गुरून्भीष्मादीन्द्रोहितवान्हिंसितवान्इतिवालाद्धिज सुहृन्मित्रपितृभ्रातृगुरुध्रुक्तस्य ॥ ४ ॥

प्रजाभर्त्तुः प्रजापालकस्यराज्ञोहरिद्विषांवधोनैनः पापंनभवति प्रत्युतयुद्धेवैरिणांराज्ञांवधोधर्मोधर्मसाधनमितियत् "यः पदातिंहंति समवतिचातुर्मास्ययाजीत्या"दिशाश्वतंनित्यंवेदवचोमेवोधायप्रमंनिरस्ययथार्थज्ञानायनकल्पतइत्यन्वयः तुशब्दएवार्थे ॥ ५ ॥

कुतोनकल्पतइतितत्राह स्त्रीणामिति मद्धतबंधूनांमयाहताबंधवोयासांतास्तथातासां मन्निमित्तहताबंधवोयासामिति वास्त्रीणांयोऽसौ द्रोहोहिंसालक्षणोवैधव्यप्राप्त्यामय्यन्वितः संपृक्तःतमहंइयमेधीयैरश्वमेधसम्बन्धिभिः कर्मभिर्व्यपोहितुंनकल्पोनसमर्थइत्येकान्वयः ॥ ६ ॥

तत्रदृष्टांतमाह यथेति पंकांभः कर्दमजलंपंकेनकर्दमेनयुक्तं द्रव्यंशोधयितुं यथानशक्नोतियथा सुरा सुरयामिश्रीकृतं दोषंव्यपोह्य शुद्धंकर्तुंनशक्ता स्वयमशुद्धत्वात् तथैवयज्ञोहिंसारूपत्वादेतांभूतहत्यांमार्ष्टुं मार्जयितुंनार्हतीत्येकान्वयः ज्ञानपक्षमाश्रित्ययुधिष्ठिरेणयज्ञो निंदितोनत्वकर्तृत्वबुद्ध्या ब्रह्मार्पणंब्रह्महविरित्यादौ ब्रह्मार्पणबुद्ध्याकर्तव्यत्वेन विहितत्वात् कर्मणाज्ञानमातनोतीत्यादेश्च ॥ ७ ॥

प्रजाद्रोहादितिभीतः युधिष्ठिरःसर्वधर्मज्ञानेच्छयाततोहास्तिनपुरात् विशसनं युद्धस्थानंकुरुक्षेत्रं प्रायात्तत्रापियत्रदेवव्रतो भीष्मोऽपतत् दित्येकान्वयः ॥ १ ॥

तस्ययुधिष्ठिरस्यभ्रातरः भीमादयः संतःप्रशस्ताअश्वायेषांतेतथातैः तथाव्यासादयोद्विजाअन्वगच्छन्नित्यन्वयः ॥ २ ॥

सधनंजयः सार्जुनः गुह्यकैर्यक्षैःकुबेरोवैश्रवणः स्वरोचतअराजत रुचदीप्तौ ॥ ३ ॥

सहचक्रिणःकृष्णेनसहिताः दिवःस्वर्गात्च्युतंसमागतं देवमिवद्योतमानम् ॥ ४ ॥

---

### क्रमसंदर्भः।

श्रीभीष्ममहिमदर्शनार्थं भगवदिच्छयैव तत्तत्प्रभावावरणमपि जातमित्याह इति भीत इति चतुर्भिः ॥१॥२॥३॥४॥५॥६॥७॥८॥९॥

---

### सुबोधिनी।

लोकप्रतीत्या कृष्णस्य यदा कार्यसमापनम्। तदा भागवतश्रोतुर्देहरक्षा निरूप्यते ॥ १ ॥ ऐहिकामुष्मिकफल भक्तानां स्थानभार्ययोः। सर्वेष्टाऽऽपूरणं चैव भगवत्कार्यसंग्रहः ॥ २ ॥ श्रीमद्भागवतश्रोतू रक्षापूर्वाक्रियाऽखिला। निरूपिता ततो मध्ये भगवत्कार्यवर्णनम् ॥ ३ ॥ एवं परीक्षितः शरीररक्षाप्रस्तावे रक्षापूर्वकार्यं मायावेष्टनमुक्त्वा इतरकार्यानिरूपणऐकाग्र्येण रक्षाऽसंभवान्मध्ये भगवत्कार्यं निरूपणीयं तच्च कार्यं चतुर्विधं सर्वभक्तानामैहिकसर्व फलदानपूर्वकभक्तिदानमैहिकामुष्मिकयोरेकसंबंधाय निर्वेदश्च प्रथमम्। ज्ञानसंदेशपूर्वकपरमभक्ति प्रादुर्भावेन मुक्तिर्द्वितीयम्। सर्वभक्तचित्तसमाधानपूर्वकं स्वस्थानप्राप्तिस्तृतीयम् ॥ तत्रत्यानां सर्वसुखदानोप संहारश्चतुर्थम्। तत्र मुक्तिदानमेवोत्तमतत्कार्यमैहिकफल दानादितत्पूर्वांगमिति निश्चित्य रक्षापूर्वांगेन सहैकस्मिन्नध्यायेऽष्टमे निरूपितम्। नवमे द्वितीयं कार्यं निरूप्यते। नवमे स्वस्य भिन्नत्वं प्राप्तस्याभावसंशये। स्वच्छंदमृत्यो स्तच्छांत्यै मुक्तिर्भीष्मस्य वर्ण्यते ॥ १ ॥ पुरस्कृतोऽघमुत्सृज्य जत्वा देहमितीरितः। राज्ञोमोहप्रसंगाय निवृत्तिश्चोपदेशतः ॥ २ ॥ भक्तोऽपि भगवद्द्रोहमाचरन्नरकं व्रजेत्। इति दर्शयितुं भीष्मशरपंजरसंस्थितिः ॥ ३ ॥ तस्याप्युद्धारकः कृष्णो निजदत्तधिया स्तुतः। इति स्तुतिस्तथाप्यस्य तादृग्रूपेण वर्ण्यते ॥ ४ ॥ संगतिमाह इति भीत इति। जातेऽपि प्रजाद्रोहे किमस्मत्कृतं न वा अधर्मजनकत्वमस्ति नवेति संदेहात् प्रजाद्रोहस्य भयहेतुत्वमतएव सर्वज्ञस्यैव सर्वसंदेहनिवृत्तिरिति सर्वतत्त्वज्ञानार्थं सर्वेषां धर्म्माणां वेदितुमिच्छया ततोहस्तिनापुरात् विनशनं कुरुक्षेत्रं प्रागात् तत्रापि यत्र देवव्रतोऽपतत्। देववद्व्रतं यस्य भगवतो यथाप्रतिज्ञा ब्रह्मचर्यादि सोऽपि भगवतोऽद्भुतचरित्रत्वादपतत् ॥ १ ॥

तदा भीष्मपुरस्कारार्थं सर्वेगता इत्याह तदा तइति। ये भ्रातरः प्रजाद्रोहादि कृतवंत इति सर्वेऽन्येऽपि। विप्रा अपि गतास्ते वेदव्यास पांडवकृतपुरोहितधौम्यादयः ॥ २ ॥

भगवानपि मुक्तिदानार्थमवश्यगमनेऽपि युधिष्ठिरप्रियार्थं सहैव गत इत्याह भगवानपीति। विप्रर्षे! इति सम्बोधनं भगवतोऽनुवृत्तिर्लीलात्वात् न दोषायेति ज्ञापनार्थं रथेन सधनंजय इति। गरुडध्वजमारुह्यार्जुनेन सारथिनाऽन्वगच्छादिति लक्ष्यते। तेषां भ्रात्रादीनां गमनेऽपि राज्ञो बहिरेव सुखं नांतरमित्याह स तैरिति। नृपत्वात् परं तैः रोचनं वस्तुतस्तु अंतररोचनं सदृष्टांतमाह। यथा गुह्यकैः सह कुबेरः कुत्सितं बेरं अक्षि यस्य अनेन बहिःप्रकाशो महान् अंतस्त्वंधतुल्यस्तथाऽयमपि शोकग्रस्त इत्यर्थः ॥ ३ ॥

एवं सर्वैः सह गमनमुपपाद्य संभाषणव्यतिरेकेणैव दर्शनमात्रेणैव नमस्कारं कृतवन्त इत्याह दृष्ट्वेति। पतितस्यापि महती कांतिरिति सदृष्टांतमाह। भूमौ तस्य स्पर्श एवायुक्तः किं पुनः पातस्तथा भीष्मस्य पराजय एवाशक्यः किं पुनरेवंभावः। यादृशोऽपि देवो मनुष्याणां नमस्करणीयस्तथा भीष्मोऽपि भगवद्विरोधाचरणोऽपि नमस्करणीयः यथा देवः स्वपदच्युतोऽपि अन्येषां भजनीयः बुध्ध्यादीनां विद्यमानत्वात् तथा भीष्मोऽपगतदेहोऽपि ज्ञानपूर्णत्वात् नमस्करणीय इत्यर्थः। पांडवा इति। भ्रात्रेयपुत्रत्वान्नमस्कारयोग्यता सूचिता। भीष्मोपदिश्यमानधर्मस्य सर्वेषां ग्रहणसिद्ध्यै समागतानां सर्वेषां नमनमिति सानुगाइति। "आगत्य नमनं यत्तु लोकाद्भक्तस्तथा न चेत्। विपरीतत्वमापन्नः कथमेवं भवेदिति ॥ सर्वैः सह नमस्कारस्ततो भगवता कृतः"। चक्रिणेति पदं घातकरूपज्ञानार्थमद्भुतकर्मत्वाय ॥ ४ ॥

---

तत्र ब्रह्मर्षयः सर्वे देवर्षयश्च सत्तमाः ॥
राजर्षयश्च तत्रासन्द्रष्टुं भरतपुंगवम् ॥ ५ ॥
पर्वतो नारदो धौम्यो भगवान्वादरायणः ॥
बृहदश्वो भरद्वाजः सशिष्यो रेणुकासुतः ॥ ६ ॥
वशिष्ठ इंद्रप्रमद स्त्रितो गृत्समदो ऽसितः
कक्षीवान् गौतमो ऽत्रिश्च कौशिको ऽथ सुदर्शनः ॥ ७ ॥
अन्येच मुनयो ब्रह्मन् ब्रह्मरातादयो ऽमलाः ॥
शिष्यैरुपेता आजग्मुः कश्यपांगिरसादयः ॥ ८ ॥

श्रीविश्वनाथचक्रवर्त्ती ।

नवमे स्वप्रभुं भीष्मो ददर्शाथ तदाज्ञया ।
धर्म्मानुक्त्वा बहु स्तुत्वा तमेव प्राप भक्तितः ॥ ० ॥

यद्यपि तवाविवेको नापयाति तदा सर्व्वधर्म्मतत्त्वज्ञं भीष्ममपि पृच्छेति युक्तिर्यदा सर्व्वसम्मताऽभूत् तदा राजा तत्रैव ययावित्याह इतीति विवित्सया विचारेच्छया । विनशनम् कुरुक्षेत्रम् । देवव्रतो भीष्मः ॥ १ ॥ २ ॥

भगवानप्यन्वगच्छत् ॥ ३ ॥ ४ ॥ ५ ॥

---

सिद्धान्तप्रदीपः ।

प्रबोधयितुंप्रवृत्तेनापिश्रीकृष्णेनयदर्थंनप्रबोधितस्तद्दर्शयितुंनवमाध्यायआरभ्यते स्त्रीणांमद्धतबंधूनांद्रोहउत्थितइतीत्थंप्रजाद्रोहाद्भीतः ततस्तदनंतरंसर्वधर्मविवित्सयासर्वान्धर्मान्बोद्धुमिच्छयायत्रदेवव्रतोभीष्मः रथादपतद्विनशनंसरस्वत्यंतर्द्धिकौतुकस्थानंकुरुक्षेत्रांतर्गतंस्थानं प्रागात् ॥ १ ॥

संतोविशिष्टाः अश्वायेषुतैरथैः ॥ २ ॥

भगवान्श्रीकृष्णोऽपिरथेनान्वगच्छत् सयुधिष्ठिरःतैर्भ्रात्रादिभिः ॥ ३ ॥

दिवः स्वर्गाद्भूमिच्युतममरमिवस्थितं चक्रिणाधर्मसंस्थापनकामेनसहप्रणेमुः ॥ ४ ॥

---

भाषाटीका ।

( सूतउवाच ) ऐसे प्रजाद्रोह से भीतहोकर सब धर्मों के जानने की इच्छा करके विनशन ( कुरुक्षेत्र ) को गये जहां देवव्रत भीष्म शरशय्या पर पड़े थे ॥ १ ॥

तब युधिष्ठिर के सब भ्राता भीमसेन को आदिले सदश्वों से युक्त सुवर्ण भूषित रथों से राजा के पीछे गये और व्यास धौम्यादिक ऋषि गण भी साथ चले ॥ २ ॥

हेविप्रर्षे ! भगवान गो विंदभी धनं जय सहित रथ मै वैठ कर पधारे । इनसवों से वेष्टित राजा की बड़ी शोभाहुई जैसे गुह्म कों से कुवेर की होतीहै ॥ ३ ॥

स्वर्ग सें च्युत देवता के समान पृथवी पतित भीष्म को देख कर पांडवों ने भीष्म को प्रणाम किया पांडवों के समस्त अनुगतों ने और श्री कृष्ण नें भी प्रणाम किया ॥ ४ ॥

---

श्रीधरस्वामी ।

तत्र तदा तत्रासन् तत्क्षणमेवागता इत्यर्थः । भरतपुङ्गवं भीष्मम् ॥ ५ ॥

रेणुकासुतः परशुरामः ॥ ६ ॥ ७ ॥

ब्रह्मरातः शुकः । आङ्गिरसो बृहस्पतिः ॥ ८ ॥

---

श्रीवीरराघवः ।

तत्रभरतपुंगवंभरतवंश्यश्रेष्ठंदेवर्षिप्रभृतयआसन्नागत्यस्थितवंतः ॥ ५ ॥
तानेवकांश्चिदाहपर्वतइतिद्वाभ्याम्रेणुकासुतोभार्गवोरामः कौशिकोविश्वामित्रः ॥ ६ ॥ ७ ॥
हेब्रह्मन्नन्येचब्रह्मरातः आदिर्येषांते अमलामुनयः शिष्यैरुपेताः कश्यपादयश्चाजग्मुः ॥ ८ ॥

---

श्रीविजयध्वजः ।

तत्रतदासर्वेदेवर्षयः नारदादयः ब्रह्मर्षयोव्यासादयः राजर्षयःविश्वामित्रादयः भरतपुंगवंभीष्मंद्रष्टुमायाताःआसन्नित्यन्वयः ॥ ५ ॥
तेषांनामान्याह पर्वतइत्यादिना रेणुकासुतः श्रीपरशुरामः ॥ ६ ॥
कौशिकोविश्वामित्रः ॥ ७ ॥
ब्रह्मरातः शुकः पर्वताद्याआंगिरसांतामुनयः आजग्मुरित्यन्वयः ॥ ८ ॥

---

सुबोधिनी ।

सर्वज्ञा ऋषयो भीष्मोगूढं तत्त्वं वक्ष्यतीति समागता इत्याह तत्रेति । ब्रह्मर्षयो भृग्वादयो देवर्षयो नारदादयो राजर्षयो मन्वादयस्ते हित्रिविधधर्ममंत्रद्रष्टारः सर्वथा देहेंद्रियादिस्वास्थ्ये शुद्धो धर्मादिः स्फुरति नान्यथेति धर्मतत्त्वं ज्ञात्वा भीष्मे धर्मः परिनिष्ठितो न वेति द्रष्टुमागताः "दौष्यंतिरत्यगान्मायामिति" भरतस्य मायापगमनादेहदृष्ट्या धर्मं न वक्ष्यति तद्वंशोद्भवश्रेष्ठत्वात् स्वार्थदर्शनाच्च भवति संदेहोऽत एव ऋषीणां मतेषु बाधक विषयत्वम् ॥ ५ ॥

राजसादि विभेदेन एते भेदास्तान् गणयति त्रिभिः । सात्विकाः प्रथमं प्रोक्ता राजसास्तदनंतरम् । तामसा दोषनिर्हारात्तुल्यास्ते राज भिर्मताः ॥ १ ॥ पर्वत इति । न देवर्षित्वमात्रं भगवानित्युक्तम् । रेणुकासुतः परशुरामः सोऽपि सशिष्यः एते सप्त सात्विकाः देवर्षयः । वसिष्ठादयो दश राजसा ब्रह्मर्षयो वस्ततस्तु नवैव । अथेति भिन्नप्रक्रमेण सुदर्शनस्याग्रे कथनात् सुदर्शनः अन्ये च राजर्षिभेदाः ब्राह्मणा अपि तत्त्वेन निर्दिष्टाः ब्रह्मरातः शुकः । तेषां तामसादिदोषा भावमाह अमला इति । बहिरेव ते तामसाः अंतस्तु निर्गुणा इति तन्मध्ये ब्रह्म-रातादयः श्रेष्ठाः कश्यपादयो मध्यमाः आंगिरसः बृहस्पतिः ॥ ६ । ७ । ८ ॥

---

श्रीविश्वनाथचक्रवर्त्ती ।

रेणुकासुतः परशुरामः ॥ ६ ॥ ७ ॥
ब्रह्मरातः शुकः । आङ्गिरसो बृहस्पतिः ८

---

सिद्धांतप्रदीपः ।

तत्रतस्मिन्विनशने तत्रयुधिष्ठिर भीष्मसमागमकालेभरतसत्तमंभीष्मंद्रष्टुंब्रह्मर्ष्यादयआसन्प्रादुर्बभूवुः ॥ ५ ॥
पर्वतोभागिनेयस्तन्मातुलोभगवदवतारान्नैष्ठिकादन्योनारदः गृहस्थो महाभारते प्रसिद्धः ॥ ६ । ७ ॥
ब्रह्मरातःशुकः आदिनाश्रीकपिलाद्याः आंगिरसोबृहस्पतिः आदिनाश्रीनारदप्रभृतयः ॥ ८ ॥

---

भाषा टीका ।

हेसत्तम ! वहां सब ब्रह्मर्षि देवर्षि और राजर्षि भरत पुंगव भीष्मको देखने को आये ॥ ५ ॥

पर्वत नारद धौम्य भगवान बादरायण बृह दश्व भरद्वाज शिष्यों सहित रेणुका सुत ( परशुराम ) ॥ ६ ॥

वशिष्ठ इन्द्र प्रमद त्रित गृत्समद असित कक्षीवान् गौतम अत्रि कौशिक ( विश्वामित्र ) सुदर्शन हेब्रह्मन् और भी ब्रह्मरात शुकदेवजी को आदिले निर्मल मुनिगण अपने अपने शिष्यों सहित आये कश्यप आंगिरस आदिक ॥ ७ ॥ ८ ॥

---

तान्समेतान्महाभागानुपलभ्य वसूत्तमः ॥
पूजयामास धर्मज्ञो देशकालविभागवित् ॥ ९ ॥
कृष्णंच तत्प्रभावज्ञ आसीनं जगदीश्वरम् ॥
हृदिस्थं पूजयामास माययोपात्तविग्रहम् ॥ १० ॥
पांडुपुत्रानुपासीनान्प्रश्रयप्रेम संगतान् ॥
अभ्याचष्टानुरागास्रैरंधीभूतेन चक्षुषा ॥ ११ ॥

भीष्मउवाच ॥ * अहोकष्टमहोऽन्याय्यं यद्यूयं धर्मनंदनाः ।
जीवितुं नार्हथ क्लिष्टं विप्रधर्माच्युताश्रयाः ॥ १२ ॥

श्रीधरस्वामी ।

वसूत्तमो भीष्मः ॥ ९ ॥

हृदिस्थं सन्तं पुरत आसीनं पूजयामास ॥ १० ॥

उपासीनान् समीपे उपविष्टान् । प्रश्रयो विनयः प्रेम स्नेहः ताभ्यां संगतान् उपसन्नान् । सन्नतानिति पाठे ताभ्यामवनतान् । अभ्याचष्ट अभ्यभाषत । अनुरागास्रैः स्नेहाश्रुभिः अन्धीभूतेन चक्षुषा उपलक्षितः ददर्शेति वा ॥ ११ ॥

अभिभाषणमाह अहो इत्येकादशभिः । हे धर्मनन्दनाः क्लिष्टं यथा भवत्येवं जीवितुं नार्हथ यूयम् इति यत् एतदहो कष्टं जुगुप्सितम् आहो अन्याय्यं चैतत् । यतो यूयं विप्रो धर्मोऽच्युतश्च आश्रयो येषां ते ॥ १२ ॥

---

दीपनी ।

धर्मेण नन्दयन्ति ये ते तथा । नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ( पां ३ । १ । १३४ ) इति कर्तरि ल्युः ॥ १२--३१ ॥

---

श्रीवीरराघवः ।

तान्ब्रह्मर्षिप्रभृतीन्समेतान्समुदितानुपलभ्याभिज्ञायधर्मज्ञो देशकालविभागज्ञश्चवसूत्तमोभीष्मः यथार्हंपूजयामासपूर्वजन्मनिवसुत्वाद्वसूपम इत्युक्तम् ॥ ९ ॥

तथाकृष्णं च तत्प्रभावाभिज्ञोह्यभिसंपूजयामास ध्यानेनहृदिस्थंकृत्वामानसैरुपचारैः पूजयामासेत्यर्थः कथंभूतमासीनमग्रतउपविष्टं जगदीश्वरंमाययासंकल्परूपज्ञानेनोपात्ताविग्रहायस्यतम् ॥ १० ॥

तत्रउपासीनानुपविष्टाननुवर्त्तमानान् प्रश्रयेणविनयेनप्रेम्णा च संगतान्पांडुपुत्राननुरागास्रैरनुरागजैरश्रुबिंदुभिरंधीभूतेनचक्षुषाअभ्याचष्टददर्शउवाचच चक्षेरुभयार्थकत्वात्अत्रतंत्रेणोभयमपिविवक्षितम् ॥ ११ ॥

तत्रोक्तिमाह अहोइतिद्वादशभिः हे धर्मनन्दनअहोइदंकष्टंजीवनमन्याय्यमितिच्छेदः संधिरार्षः ओदितिप्रकृतिभावत्वात्यद्यस्माद्विप्राधर्मोऽच्युतोभगवांश्चाश्रयायेषांतेविप्राद्यनुवर्त्तिनोयूयंक्लिष्टंकृच्छ्रंयथातथाजीवितुंनार्हथ ॥ १२ ॥

---

श्रीविजयध्वजः ।

महाभागोवसूत्तमोभीष्मः समेतान्संगतान्नृपादीनुपलक्ष्यदृष्ट्वामनसाप्रतिगम्यवा पूजयामास कथंभूतः देशकालविभागवित् देशः कुरुक्षेत्रं कालः शरतल्पशयनलक्षणः तयोर्विभागमौचित्यंवेत्तीतिप्रत्युत्थानादिवंदनादिपूजायामशक्तत्वान्मानसींवाचिकींआंजलिकीं वापूजांकृतवानित्यर्थः अन्यत्रतद्देशतत्कालविभागं जानातीतिधर्मज्ञः आपत्संपद्धर्मोजानातीतिधर्मज्ञः धर्मशब्दवाच्यंभगवंतंजानातीतिवाधर्मज्ञः ॥ ९ ॥

कृष्णंचपूजयामासेत्येकान्वयः कथंभूतः तस्यकृष्णस्यप्रभावंसामर्थ्यं जानातीतितत्प्रभावज्ञः कथंभूतंतत्रासीनंजगतईश्वरं माययास्वेच्छयापितृत्वेनांगीकृतवसुदेवशरीरं हृदिमनसिस्थितं ध्यानलक्षणोपासनयाशरीरमध्ये पुंडरीककर्णिकायांदीपवद्दीप्यमानंवा ॥ १० ॥

प्रश्रयगुणेनप्रेमगुणेनसम्यक्तान्समीपेनिषण्णान्पांडोः पुत्रान्तेषुअनुरागयुक्तैरस्रैर्बाष्पैरंधीभूतेनचक्षुषायुक्तः इत्थंभूतलक्षणेतृतीयेति सूत्रात् अभ्याचष्टआहआभिमुख्येनापश्यदित्यन्वयः ॥ ११ ॥

* अहोऽन्याय्यमिदं कष्टमितिवीरराघवपाठः

## श्रीविजयध्वजः ।

भोधर्मनन्दनयुधिष्ठिरयूयंक्लिष्टंक्लेशयुक्ततयाजीवितुंनार्हथ विप्रादिष्वेकोऽपिसुखजीवनायालंकिमुबहुत्वमित्यभिप्रायेणोक्तंविप्रधर्माच्युताश्रयाइति यत्क्लिष्टंजीवथ तत्कष्टमन्याय्यमहो आश्चर्यादप्याश्चर्यमहो अन्याय्य।मितिप्रगृह्यसंज्ञा भंगोलोकदृष्टिमपेक्ष्यैवोक्तोनतुपांवानांदुःखमस्तीति तेषांभूमारावतारणायावतीर्णानामसुरजननिधनेनवनवासादिष्वपिनित्यसुखित्वादितिविशेषद्योतनार्थः धर्मस्यनंदनः धर्मनंदयतीतिवा धर्मएवनंदनोयस्यसतथेतिवा धर्मेणसुखक्रीडायस्यसतथेतिवातस्मान्नंदनंसुखनंदनंयस्यसतथेतिवा ॥ १२ ॥

---

## क्रमसंदर्भः ।

कृष्णमिति । सदास्वेषांहृदिस्थं हृदयस्थमपि मायया कृपया उप नेत्रसमीपेऽपि आप्त आनीतो विग्रहो येन तम् ॥ १० ॥

यया भीष्मादीनां स्वापराधमननशङ्कया मुनीनां स्वस्यापि शिक्षणेन युधिष्ठिरो न शाम्यति स्म तामेव शङ्कां तस्मिंस्तस्य स्निग्धतादर्शनया तद्द्वारा द्रोणादीनामपि तथाभावव्यंजनया दूरीकर्त्तुं तत् सन्निधावानीतवान्सोऽयंश्रीभगवानिति पूर्वाभिप्रायमेव व्यक्तीकर्त्तुमाह पांडुपुत्रानिति ॥ ११ ॥

अहोकष्टमितितैः । तत्रइतियदितितदेतद्यद्भवद्विचारितमित्यर्थः । ततोविप्रादीनांहिंसाभ्रांत्यामाक्लेशंमन्यध्वेतिभावः । विप्रधर्मेति षष्ठीतत्पुरुषोवा । यद्वाधर्म्मनंदनाअपियद्यूयंजीवितुंनार्हथ जीवितुंयोग्यानभवामेति मन्यध्वेतदहोकष्टमन्याय्यंच । तत्रापिविप्रधर्म्माच्युतानामाश्रया अपियूयं यत् तथा मन्यध्वे ततश्चक्लिष्टमितिपूर्व्ववदेवान्याय्यंकष्टश्चेत्यर्थः यूयमिति श्रीयुधिष्ठिरंप्रत्येवगौरवतः सम्बोधनम् ॥ १२ ॥ १३ ॥ १४ ॥

---

## सुवोधिनी ।

अत्रोत्तमाधिकारे धर्मनिर्णये तदुक्तेषु तरतमभावज्ञानार्थं गणना एवं त्रयः समागताः पांडवा भगवानृषयश्चेति । तत्रऋषिषु कृतमाह तान् समेतानिति । महान् भागो यस्येति धर्मज्ञानादिसमूहः भागः । वसूत्तमो भीष्मः भूमौ हि वसवो मोच्यंते तथाऽन्येऽन्यत्र तद्गृहे पुष्टिभक्तत्वव्यावृत्त्यर्थमाह । देशकालयोर्विभागः देशकालविभागो वा प्राकृतत्वादृषीणामनुत्तमस्याप्यपूर्वस्य प्रथमं पूजनमित्यादि । विधानविदितिपाठेऽपि स एवार्थः ॥ ९ ॥

एवंमुनीन्मनसा वचसा धर्मोपयोगित्वेनपूजयित्वा भगवन्तमर्पितथैव पूजितवानित्याह कृष्णंचेति ननु भगवंतंकथंपूजितवानित्याकांक्षायामाह तत्प्रभावज्ञइति पूर्वोक्तानुत्थितानेव दर्शनमात्रेण पूजितवान्भगवंतंतु आसीनंपूजायांभावनया सर्वोत्तमत्वप्रकारंज्ञापयितुं जगदीश्वरमित्युक्तंहृदिस्थमित्यंतर्यामिणं तस्यवहिर्भानेहेतुः माययोपात्तविग्रहमितिमाययाशक्त्या स्वीकृतोविग्रहोयेनप्राकृतगणेनेंद्रियादिना अहंकारेणचजीवानां देहग्रहणं भगवतस्तुस्वशक्त्यैव देहानिर्माणमपिमायात्वादन्यथाभासयति जीवसंबंधित्वेनपुत्रत्वादिनाके चिद्वीजमेवमाययागृहीतमाहुः एवंलोकानुसारेण भीष्मबुद्ध्यनुसारेण भगवान्निरूपितः वस्तुतस्तुयथा भगवान् तदुत्तरत्रनिरूपयिष्यते ॥ १० ॥

एवमुभयोः पूजनमुक्त्वाप्रथमोक्तान् पांडवान्अपूजयित्वैव स्वोक्तार्थग्रहणसिद्धये शोकापनोदनपूर्वकस्वशोकाभावकथनेन सहभगवंतंनिरूप्यफलंप्रार्थयते पांडुपुत्रानित्यादि चतुर्दशभिः भ्रातृपुत्रत्वेनस्नेह शिक्षायोग्यताउपासीनानिति धर्मयुक्तान्प्रश्रयप्रेमसंगतानिति ज्ञानोपदेशहेतुः विनीतेषुस्निग्धेषुहिज्ञानमुपदिश्यते भगवद्दर्शनात् क्रूरभावेऽपगतेस्निग्धभावेनवदतीत्याह अनुरागास्रैरिति अंधीभूतेनचक्षुषासहितः लक्षितोवास्निग्धइतिस्वक्लेशेनसहितं परदुःखरोदनेहेतुः सर्वेहिभगवताव्यामोहिताः एतेऽपिक्लेशंप्राप्तवंतो वयमपीतिभावः ॥ ११ ॥

तेषांक्लेशमनुवदतिद्वयेनअहोकष्टमिति अहोइत्याश्चर्यंतेषांवनवासक्लेशं स्मृत्वानिरन्वयमेतत् प्राप्तमित्यहोकष्टंहेलनकचग्रहणादिकं स्मृत्वाअहोअन्याय्यमितिपूर्ववत् "वीजस्वभावक्षेत्राणां धर्माधर्मैस्तथापुमान् सुखंदुःखंचलभते कर्ममार्गेणनान्यथा" तत्रयद्भवद्भिः प्राप्तंदुःखंक्लेशाच्छारीरम् अन्यायान्मानसंततकर्मजन्यं नभवतियस्मात्यूयंधर्मनंदनाः यद्यपियुधिष्ठिरएवधर्मपुत्रः तथापितत्प्राधान्येन स्थिताइतिसर्वेतत्त्वेनव्यपदिश्यंते अतोवीजदोषाभावात् अतोदुःखंनयुज्यते किंच विप्रधर्माच्युताश्रयाः भवत्सुस्वाभाविकोदोषो नास्तिस्वभावदुष्टाहित्रेधाधर्मनाश्रयंते धर्मोहित्रिविधः नीत्यविरुद्धः स्वभावशुद्धः ईश्वरसंबंधीचतत्रविप्राश्रितानां सर्वनीतिज्ञानात्नीतिविरोधाभावः धर्मश्चस्वाश्रितं युद्धेस्थापयतिअच्युताश्रयत्वाच्च ईश्वरसंबंधीधर्मः स्फुरतिएकैकाश्रितोऽपिनक्लेशं प्राप्नोतिकिमुतात्रितयाश्रितः त्रयाणामेकभावात्धर्ममार्गेचेयंव्यवस्था कालमार्गेणभिन्नतयावक्ष्यतिभगवन्मार्गेणच ॥ १२ ॥

---

## श्रीविश्वनाथचक्रवर्त्ती ।

वसूत्तमो भीष्मः ॥ ९ ॥

माययैवोपात्तो गृहीतो विग्रहो युधिष्ठिरेण सार्द्धं प्रबोधाप्रबोधहेतुको विवादो येन तम् । यद्वा । मायया कृपया उप नेत्रसमीपे आत्तो निजदेहो येन तम् ॥ १० ॥

अभ्याचष्ट अभ्यभाषत ॥ ११ ॥

संस्थितेऽतिरथे पांडौ वृथा वालप्रजा वधूः ।
युष्मत्कृते वहून्क्लेशान् प्राप्ता तोकवती मुहुः ॥ १३ ॥
सर्वं कालकृतं मन्ये भवतां च यदप्रियम् ॥
सपालो यद्वशे लोको वायो रिव घनावलिः ॥ १४ ॥
यत्र धर्मसुतो राजा गदापाणिर्वृकोदरः ।
कृष्णोऽस्त्री गांडिवं चापं सुहृत्कृष्णास्ततो विपत् ॥ १५ ॥
नह्यस्य कर्हिचिद्राजन्पुमान्वेद चिकित्सितम् ॥
यद्विजिज्ञासया युक्ता मुह्यंति कवयोऽपि हि ॥ १६ ॥

### श्रीविश्वनाथचक्रवर्त्ती ।

अहो कष्टमहोऽन्याय्यमिति राजन्यातिदेश एवान्यायकष्टे खलु न सम्भवतस्तत् किमत्रार्थे सर्व्वविश्वस्थितिकर्त्तरि विष्णावेवान्यायः समभूदिति भावः क्लिष्टं यथा स्यात्तथा यूयं जीवितुं नार्हथ अन्ये तथा जीवन्ति चेत् जीवन्त्विति भावः ॥ १२ ॥

---

### सिद्धांतप्रदीपः ।

वसुषूत्तमोमुख्योवसुर्वशिष्ठशापाद्भीष्मत्वेनस्थितः ॥ ९ ॥

श्रीकृष्णपूजनेविशेषमाह कृष्णंचहृदिस्थंपूजयामास ननुवहिश्चरोहृदिकथंस्थितोभवेत्तेनचसकृतोज्ञातस्तत्राह मायया कृपयाहृदिउपात्त आवि ष्कृतोविग्रहोयेनतंसचतदनुभावंसर्वत्रव्यापकतयाभक्तेच्छयाऽऽविर्भवनसामर्थ्यंवेत्तीतितथा ॥ १० ॥

उपासीनान्समीपस्थान्प्रश्रयप्रेमसंनतान्विनयस्नेहाभ्यामवनतान्पांडुपुत्रान् अनुरागास्रैःस्नेहाश्रुभिः अंधीभूतेनचक्षुषोपलक्षितः अभ्याच-ष्टददर्श अभ्यभाषतचस्नेहाश्रुभिः चक्षेरुभयार्थस्यरूपंतत्रादिनार्थद्वयस्यविवक्षितत्वात् ॥ ११ ॥

अभ्यभाषतेत्युक्तंतदेवाहअहोइत्येकादशभिः हेधर्मनंदनविप्रादयआश्रयायेषांतेतथा एवंभूतायूयंक्लिष्टंयथास्यात्तथाजीवितुंनार्हथ यादिदं साश्रयमपिक्लिष्टंजीवनंतदहोकष्टंगहनमहोअन्याय्यंन्याय्यविपरीतं अहोइत्योदंतनिपातस्यओदितिप्रगुह्यसंज्ञायांप्रकृतिभावप्राप्तौसंधिरार्षः १२

---

### भाषाटीका ।

वसूत्तम भीष्म ने उन समेत ऋषियों को प्राप्तहोकर पूजन किया क्योंकि ये देशकाल के विभाग के वेत्ता हैं ॥ ९ ॥

अपने हृदिस्थ जगदीश्वर श्रीकृष्णजी अपनें सन्मुख विराजमान हैं " जिन्हों ने कृपा से ही यह विग्रह प्रकाश किया है " उनका भी पूजनकिया क्योंकि भीष्म श्रीकृष्ण का प्रभाव जानते हैं ॥ १० ॥

विनय और स्नेह युक्त अपने पास मैं वैठे पांडु पुत्रों से भीष्म अनुराग के आंसुओ से डव डवाये नेत्रों से वोले ॥ ११ ॥

हे धर्म नंदन ! तुम क्लेश पूर्वक जीवन के योग्य नहीं हौ क्योंकि विप्र धर्म और अच्युत के आश्रय हौ तथापि जो तुमको क्लेश है यह वड़ा अन्याय और बड़ा कष्ट है ॥ १२ ॥

---

### श्रीधरस्वामी

किञ्च संस्थिते मृते । वालाः प्रजाः ( पुत्राः ) यस्याः सा वधूश्चेति दैन्यं दर्शितम् । तोकान्यपत्यानि तद्वती अपत्यैः सह क्लेशान् प्राप्तेत्यर्थः ॥ १३ ॥

कालकृतत्वेन शोकं वारयति सर्व्वमिति द्वाभ्याम् । भवतामपि । यद्वशे यद्वशवर्त्ती ॥ १४ ॥

अहो दुर्घटघटनापटुः कालइत्याह यत्रेति । कृष्णोऽर्ज्जुनः अस्त्री धन्वी । ततस्तत्रापि विपत् । पुरुषशारीरवलशास्त्रनैपुण्ययशस्त्रदेवता सम्पत्तावपीत्यर्थः ॥ १५ ॥

ननु कृष्णं कथं कालोऽतिक्रमेदित्यपेक्षायामाह न हीति । अस्यश्रीकृष्णस्येति अंगुलया दर्शयति । विधित्सितं कर्तुमिष्टम् । यस्य विधित्सितस्य विजिज्ञासया ॥ १६ ॥

---

श्रीवीरराघवः।

अतिरथेपांडौसंस्थितेप्रेतेसतिवालाः प्रजाः पुत्रायस्याः सावधूश्चपृथाकुंतीतोकवत्यपत्यवतीसत्यपियुष्मदर्थेबहूनमुहुर्मुहुः क्लेशान्प्राप्ताहि ॥ १३ ॥

भवतांयदप्रियंदुःखमभूदेतत्सर्वंकालकृतंकालेोद्युद्दैवकृतंमन्ये कोऽसौकालः यत्कृतंमदप्रियंतत्राह वायोर्वशमेघपंक्तिरिवयस्यवशेस र्वोलोकोवर्ततेसएवकालः ॥ १४ ॥

अत्यंता संभावितमिदमभवदितिविस्मयतेयत्रेति यत्रधर्मसुतादयः तत्रविपादितिचित्रमित्यर्थः आद्यः कृष्णशब्दोऽर्जुनपरः द्वितीयस्तु-भगवत्परः तद्विशेषणं सुहृदितिधर्मसुतादीनांसुहृत्स्त्रीशब्देन कृष्णास्त्रीद्रौपदीविवक्षिता धर्मसुतादीनामन्यतमएवसर्वविपक्षक्षपणक्षमेसतिसंभूयसर्वेषामवस्थानेऽपि विपदभवदितिएतदतिचित्रमिति इदंसर्वंकालकृतमेवेतिभावः सुहृत्कृष्णइत्यनेनसुहृदपिकृष्णः कालमेवान्ववर्त्ततेतिसूचितम् "द्रव्यंकर्मचकालश्चस्वभावोजीवएवच यदनुग्रहतः संतिनसंतियदुपेक्षये"त्युक्तविधस्यतत्रापिभवतामतिसुहृदः कृष्णस्यविपन्निमित्तकर्मोद्बोधकालानुवर्तित्वादेवोपेक्षासंगतानान्यथेत्याशयः ॥ १५ ॥

ननुयद्वशेलोकः सकालोऽपिश्रीकृष्णोयत्रसत्रादिमांश्चेत्तर्हिकालानुवृत्त्याकिमस्यचिकीर्षित मित्यत्राह नेतिहेराजन्नस्यकृष्णस्यविधित्सितंज्ञातुंप्रवृत्ताः कवयोब्रह्मादयोऽपिमुह्यंति ॥ १६ ॥

---

श्रीविजयध्वजः।

अतिरथेपांडौसंस्थितेस्वर्गंगतवतिसत्यतोकवतीपुत्ररहितायथाबहुक्लेशवतीभवति तथाबालप्रजायुष्मन्मतुप्प्रत्ययः । पुत्रवतीपुत्रपोषणादावतिक्लेशं प्राप्नोतियथातथेत्यन्वयदृष्टां तोवेत्येकान्वयः ॥ १३ ॥

एवंविधयुष्मदप्रियेभवदारब्धकर्मनियामको हरिरेवहेतुरित्याभिप्रेत्याह सर्वमिति भवतांयदप्रियंदुःखादितत्सर्वंयुष्मत्प्रारब्धकर्मनियामककालाख्यहरिकृतंमन्ये वायोर्वशंगताघनावलिरिवजडाजडलोकोयस्य भगवतोवशेवर्ततेसनारायणः सर्वगुणपूर्णत्वात्कालइत्युच्यतइत्येकान्वयः ॥ १४ ॥

अन्यथानुपपत्तितोऽप्ययंहेतुः सिध्यतीत्याह यत्रेति यत्रराजारंजकः धर्मस्यसुतः यत्रचतस्यराज्ञः कनिष्ठः क्षितिभारायितदितिसुतशोणितदिग्धांगदांपाणौबि भ्रत्भक्त्यावशीकृतपरब्रह्मावृकोदरः तथायत्रचेंद्रावतारः कृष्णोऽर्जुनोऽस्त्रोद्रोणादुपात्तास्त्रग्रामः तस्यचकरेरिपूणांपूयशोणितवमनकारि गांडीवाख्यंधनुः यत्रचैषांसर्वसुपर्वाधिराजोराजपक्षोऽनंतबलवीर्याद्यनंतगुणार्णवः श्रीमान्वासुदेव वसुदेवपुत्रः कृष्णः सुहृदनिमित्तवंधुस्तत स्तत्रविपत्तेषांप्रारब्ध कर्माभावेविपत्कुतः स्यादास्तिचतस्मादित्येकान्वयः ॥ १५ ॥

सुत्दृदस्तस्यविपत्करत्वंकथ मितितत्राह नहीति अपरिच्छिन्नत्वाद्यस्यस्वरूपजिज्ञासयायुक्ताः कवयोऽपिमुह्यंतिअयमित्थं भूतइतिनिर्देष्टुं नजानंति हेराजंस्तस्यास्यविधित्सितंकर्तुमिष्टंकश्चिदपि पुमान्कदाचिन्नवेदहि यस्मात्तस्मात्सर्वेषांस्वकृतादृष्टानुसारिफलदातुरस्यभवत्सुत्दृत्त्वेऽपिप्रारब्धकर्मानुकूल्येनाविपत्करत्वंयुक्तमित्येकान्वयः ॥ १६ ॥

---

क्रमसन्दर्भः।

यद्यस्माकं विपत्तिं कालकृतामभत्वा स्वकृतामेव तु मत्वा दुःखं लभसे तर्हि कथं भवतां सा जातेत्याभिप्रेत्याह यत्रेति ॥ १५ ॥

न हीति । अत्र तेषामार्त्तिद्वारेण स्वस्मिन्नावेशार्थं तत्खण्डनजनितहर्षद्वारेण च स्वस्मिन् प्रेमवर्द्धनार्थं तथा विधित्सितामिति गूढोऽभिप्रायः ॥ १६ ॥

---

सुबोधिनी।

एवंस्वभाववीजदोषौपरिहृत्यक्षेत्रदोषाभावायाहसंस्थितेति संस्थितिः स्वधर्मपरिपालनं सूचितम् अतएवयुष्मत्कृते धर्ममार्गेणभवद्रक्षार्थं बहून्क्लेशान् प्राप्तवतीमाद्रीपुत्रौतोकौ यमलजातावतिवालकौ पदचलनेप्यशक्तौ अतएवमुहुः तस्मात्सर्वथास्वधर्मपरिपालनात् नक्षेत्रदोषः दृष्टंत्वदृष्टसापेक्षमिति अदृष्टाभावेदृष्टमप्यस्मदादिरूपं नहेतुरितिज्ञापितम् ॥ १३ ॥

अकारणकार्योत्पत्त्यभावात् किंकारणमित्याकांक्षायामाह सर्वंकालकृतमिति सर्वमाध्यात्मिकादि अस्मत्कृतंवासर्वंकालकर्तृकं ननुनिमित्तमात्रत्वम् तत्राह मन्येइतिममैवंप्रतिभातिप्रमाणमंतः करणस्यवृत्तयः इतिवाक्यात्स्वमनसानिश्चितं वदतिकालएव दुःखहेतुर्ज्योतिः शास्त्रसंवादात्लोककर्मणो निराकरणाच्चज्ञानिनोऽक्लेशात्स्वभावात्तत्प्राप्तिर्नपापादिहेतुः ईश्वरस्यचसहवृत्त्याभक्तत्वान्नेश्वरकृतंदुःखं अतः पारिशेष्यात्कालकृतमेवमन्ये यद्यदिति प्रसिद्धंनैतादृशंकर्मभवतांजन्मांतरेऽपीतिसूचितम् प्रकृतोपयुक्तकालस्यसामर्थ्यमाहसपालइति स्वाधारवश्यत्वाल्लोकानांव यसाव्याप्तत्वात्कालमित्याभोगाच्च ब्रह्मांडस्थितिरपिकालमितासपालोलोकः इंद्रादिसहितोलोकः नकेवलमत्यन्तकालवशत्वं स्थितिकार्यकारणनाशेऽपीति दृष्टांतमाहवायोरिति यथावायोर्वशेघनपंक्तिः सर्वमासेषुसमागच्छंतीमेघाः वायुनैवभवंतिनभवंति ॥ १४ ॥

कालकृतपूर्वोक्तकर्मादिनिराकरणंचतर्कमाह यत्रेति सर्वादृष्टसामग्रीवर्त्तते दुःखाभावहेतुः पुत्रंपालयतिसचराजास्वयं पालितो अन्यान् पालयेत्वृकोदरशविधः प्राणउदरेयस्यसचबलाधिष्ठात्री देवतागदापाणिः ससाधनः कृष्णोऽर्जुनः नाम्नासमानधर्मत्वंप्राप्तः अस्त्रोगांडीवधनुषाब्रह्मास्त्रादि प्रयोगसमर्थः चापस्याक्षयत्वंनाम्नासूचयति अन्यत्तुनाशायोग्यं भगवांश्चसुहृत्हितान्वेषी एतएवविचार्यमाणोदुःखहेत

सुबोधिनी ।

वोजाताः तथाहिपांडुनापूर्वं मेवंपुत्रंपार्श्वेस्थापयित्वा राज्यत्यागः कृतश्चेत्तदानदुःखशंकाभीमस्यवामहाबलत्वाभावेनदुःखंभवेत् अर्जुनस्यवाराधावेधाद्यकरणाआशयाभावान्नदुःखंभवेत् अग्निनावासाधनानिनदत्तानिचेत् इंद्रेणसहकलहाभावात् भगवतासाहाय्यंनकृतंस्यात् तदादनिदययादुःखदातृभिर्दुःखंनदत्तंस्यात्तस्मात् सुखसाधनत्वेनयेगृहीताःतैश्चेत्दुःखंतदाकालकृतमित्येवनिश्चयः ॥ १५ ॥

नन्वेवंसतिकालस्यवलिष्ठतासूचिता तथाकथंभगवंतंकालोऽतिक्रामेत्तत्राहनह्यस्येति अस्यविधित्सितंकोऽपिनवेदयद्यपिकालोभगवदाज्ञाकारित्वात् भगवदिच्छायांसत्यांनप्रवर्त्ततेपरंभगवदिच्छैवज्ञातुमशक्याभगवान्नसुखदुःखहेतुः तथासतिसर्वत्रसर्वस्यस्यात् किंतुभगवदिच्छासाकार्यैकोन्नेयानकार्यात् पूर्वमवगंतुंशक्यानन्वेवंसतिभगवान्कथंविश्वसनीयः तत्राह यद्विजिज्ञासयेतिभगवान्पांडवेभ्यः किंदुःखंदत्तवान्निर्वेदार्थंवासुखंदत्तवान् भगवत्परिपालितत्वज्ञानेनभक्तिंवादत्तवान्कौरवाणांवाहितंकृतवान् इतिविचारेक्रियमाणेसर्वत्रयुक्तिसंभवात् अतएवकवयोऽपिमुह्यति अवाङ्मनसागोचरेयुक्तिर्नवर्त्ततइतिशब्दार्थः ॥ १६ ॥

---

श्रीविश्वनाथचक्रवर्त्ती ।

ननु किं क्लिष्टं तत्राह । संस्थिते मृते । बालप्रजा इति बालप्रजस्त्वदशायामेकाकिन्येव क्लेशान् प्राप्ता । युष्माकं प्रौढवयस्त्वे सति तु तोकवती पुत्रैर्युष्माभिः सहितापि कष्टान् प्राप्तेत्यर्थः ॥ १३ ॥

ननु तर्हि कथमस्माकं क्लेशस्तत्र तत्कारणं प्राचीनमर्वाचीनं किमपि पापमपश्यत् वक्तुमसमर्थ एव लोकोक्तिरीत्यैवाह सर्व्वमिति । ननु कालो हि प्रारब्धसुखदुःखभोगयोरेवाधिकरणमेवेति सहकारित्वादुपचारेणैव कालकृतं मन्ये इति ब्रूषे प्रारब्धपापकृतमिति स्पष्टं कथं न वदसीत्यत आह भवताश्चेति । युधिष्ठिरो हि साक्षाद्धर्म्मावतार इति प्रसिद्ध एव धर्म्मस्यापि प्रारब्धं पापमस्तीति चेन्मन्तव्यं तर्हि कथं धर्म्मस्य धर्म्मत्वम् अतोऽतिप्रबलोऽतिदुर्निवारो दुस्तर्कः काल एव कारणमित्याह सपाल इति ॥ १४ ॥

ननु—"न कर्हिचिन्मत्पराः शान्तरूपे नङ्क्ष्यन्ति नो मेऽनिमिषो लेढि हेतिः । येषामहं प्रिय आत्मा सुतश्च सखा गुरुः सुहृदो दैवमिष्ट मि"ति कपिलदेवोक्तेः कृष्णे दास्यसख्यवात्सल्यवतः पांडवान् कथं कालोऽतिक्रमेत इत्यतोऽतिविस्मयान्वितः कारणं विनैव कर्म्मोत्पत्तिरूपं विभावनालंकारं भावयन्नाह यत्रेति । कृष्णोऽर्जुनः अस्त्री धन्वी । ततस्तत्रापि विपत् पुण्यबलशारीरबलनैपुण्यबलशस्त्रबलसुहृद्बलसम्पत्तावपीत्यर्थः ॥ १५ ॥

तह्यत्र किं निर्द्धारयामि सामान्यतस्तावदयं सिद्धांतः सर्व्ववादि सम्मतो यत् कृष्णस्य चिकीर्षितमन्यथाकर्त्तुं न कोऽपि समर्थतश्चिकीर्षितं किमिति अद्यापि कोऽपि न वेत्तीत्याह न ह्यस्येति । कर्हिचिदपि काले कोऽपि पुमान् ब्रह्मभवादिः कोऽपि न वेद अहं को वराक इति भावः । ननु कोऽपि मा जानातु जिज्ञासा तु अवश्यमेव जायते । तत्रास्मासु दुःखदानमेव किं चिकीर्षितं सुखदानमेव वा उभयदानमेव वा । तत्राद्यं न भक्तवात्सल्यगुणस्य लोपानौचित्यात् । द्वितीयमपि न अदृष्टत्वादेव । तृतीयमपि न तत्सौहार्दलोपापत्तेः । तर्हि जिज्ञासा नैव कर्त्तुमुचितेति विनिर्णयन्नाह यद्विजिज्ञासयेति । युक्ता विवेकिनोऽपि कवयः सर्व्वशास्त्रज्ञा अपि मोहमेव प्राप्नुवन्ति सिद्धांताभावादिति भावः । अत्र भीष्मस्य महाविज्ञस्योक्तौ कवय इति मुह्यन्ति इति पदाभ्यां युधिष्ठिरादयोऽपि भगवद्भक्ताः प्रारब्धं भुञ्जते इति मतं परास्तम् ॥ १६ ॥

---

सिद्धांतप्रदीपः ।

किंचसंस्थितेमृतेबालाः प्रजाःपुत्रायस्याःसातोकवतीसपुत्रामुहुःक्लेशान्प्राप्ता ॥ १३ ॥

कर्मफलप्रदानपरमेश्वरप्रवृत्तौनिमित्तभूतेनकालेनकृतंमन्ये ॥ १४ ॥

धर्मदैहिकबलास्त्रनैपुण्यदिव्यास्त्रादियोगः किंबहुनापरमेश्वरश्चतत्तत्कालेशुभाशुभप्रदइत्याशयेनाह यत्रेति यत्रधर्मसुतादयस्ततस्तत्रापि विपादित्यन्वयः ॥ १५ ॥

कालप्रभावमुक्त्वातन्नियंतुः परमेश्वरस्यप्रभावमाह नहीति अस्यश्रीकृष्णस्यचिकीर्षितंकर्तुमिष्टम् ॥ १६ ॥

---

भाषाटीका ।

अतिरथ पांडु महाराज की मृत्यु के अनंतर बिचारी पृथा बधू ने तुम्हारे निमित्त बहुत से क्लेश बार बार पाये थे । क्योंकि संतान तुम सब बालक थे ॥ १३ ॥

यह जो सब तुमको दुःख हुआ है मैं इसको काल कृत मानता हूं क्योंकि वो काल ही सबका पालन करता है । और जैसे मेघ वायु से बस रहता है यह समस्त लोक काल के बश हैं ॥ १४ ॥

काल का बड़ा दुर्घट करनी यह है । देखो ! जहां साक्षात् धर्म पुत्र राजा, वृकोदर गदा पाणि, अर्जुन धनुर्धर गांडीव धनुष, श्रीकृष्ण सुहृत, और तब भी विपद् ॥ १५ ॥

राजन् ! इन श्रीकृष्ण को क्या कर्त्तव्य है यह कोई पुरुष कभी भी नहीं जानता है जिन के कर्तव्य के जानने की इच्छा से कवियों को मोह होता है ॥ १६ ॥

---

तस्मादिदं दैवतंत्रं व्यवस्य भरतर्षभ ॥
तस्यानुविहितो नाथा नाथ पाहि प्रजाःप्रभो ॥ १७ ॥
एष वैभगवान्साक्षादाद्योनारायणः पुमान् ॥
मोहयन् मायया लोकं गूढ श्चरति वृष्णिषु ॥ १८ ॥
अस्यानुभावं भगवान्वेद गुह्यतमं शिवः ॥
देवर्षिर्नारदः साक्षाद्भगवान्कपिलो नृप ॥ १९ ॥
यं मन्यसे मातुलेयं प्रियं मित्रं सुहृत्तमम् ॥
अकरोः सचिवं दूतं सौहृदादथ सारथिम् ॥ २० ॥

श्रीधरस्वामी ।

( इदं सुखादि ) दैवतन्त्रमीश्वराधीनं व्यवस्य निश्चित्य । तस्येश्वरस्यानुविहितः अनुवर्त्ती सन् कर्त्तरि क्तः । हे नाथ कुलपरम्परागत स्वामिन् प्रभो समर्थ अनाथाः प्रजाः पाहि ॥ १७ ॥

अनुविधेयः परमेश्वरश्च श्रीकृष्ण एवेत्याह । एष एव भगवान् सर्व्वेश्वरः । यत आद्यः पुमान् ! तच्च कुतः यतो नारायणः साक्षात् १८

तदुपपादयति अस्येति । अनुभावं प्रभावम् ॥ १९ ॥

त्वमज्ञानात् यमेवं मन्यसे । ( मातुलेयं ) मातुल्याः देवक्याः सुतम् प्रियं प्रीतिविषयम् । मित्रं प्रीतिकर्त्तारम् । सुहृत्तमम् उपकारानपेक्षोपकारकम् । सौहृदात् विश्वासात् अकरोः कृतवानसि । सचिवं मन्त्रिणम् ॥ २० ॥

---

श्रीवीरराघवः ।

अस्त्वेवंप्रकृते किमित्यत्राह तस्मात्सर्वलोकस्यकालायत्तसुखादिमत्त्वात्कर्मादेश्चकृष्णायत्तत्वात्कृष्णस्यकालाद्यनुवर्तितत्वाच्च हे भरतर्षभइदंसुखदुःखादिकंसर्वंदैवतंत्रंदैवायत्तंव्यवस्यानिश्चित्य दैवमत्रकालकर्माद्युद्बोधयितातदनुवर्तीचेश्वरः कृष्णोविवक्षितः तस्य-दैवस्यानुविहितः तस्येतिकर्तरिषष्ठी तेनवर्तितस्त्वं हे प्रभो नाथ अनाथाः प्रजाः पाहिपालय ॥ १७ ॥

एवंतमनुशास्यलोकानुग्रहकाम्ययाश्रीकृष्णयाथात्म्यमावेदयति एषइति एषश्रीकृष्णः साक्षाद्भगवान्षाड्गुण्यपरिपूर्णः आद्यो जगत्कारणभूतः परमपुरुषोनारायण एवसन्माययालोकंमोहयन्गूढः तिरोधापितस्वकीयवेषः वृष्णिषुयादवेषुचरतिकश्चिद्यादवइवा-नुकरोति ॥ १८ ॥

त्वमेवइममित्थंजानासितथापितस्यतत्कृतंनवैषम्यमस्तीत्याह यमितिद्वाभ्याम् यंकृष्णंमातुलेयंमातुलपुत्रंप्रियंप्रीतिविषयं च मित्रंस्वतुल्यं च सुहृत्तमंमहोपकारकं चमन्यसे यंचत्वं सचिवं मंत्रिणं च कदाचित्दूतं कदाचित्सौहृदातिशयात्सारथिंचाकरोः कृतवानसि ॥ १९ ॥

तस्यानुभावं भगवान्शिवोवेदेतिपूर्वेणान्वयः देवर्ष्यादयोविदुरितिचहेनृपयुधिष्ठिर ॥ २० ॥

---

श्रीविजयध्वजः ।

विवक्षितकथनंनिगमयति तस्मादिति तस्मादुक्तहेतुभ्योदेवस्यहरेस्तंत्रमधीनंजगन्निश्चित्यतस्यहरेरनुकूलयाश्रुतिस्मृतिलक्षणयाआज्ञयाभगवद्भक्तिद्रूतदनुबंधिनिग्रहशिष्टजनपरिपालनाख्यंस्वकर्मविहितं विधिमनुवर्तमानःतत्राधर्मबुद्धिमपहायहेभरतकुलश्रेष्ठप्रभोसमर्थनाथअ-नाथास्त्वदनन्यनाथरहिताःप्रजाःपाहीत्येकान्वयः ॥ १७ ॥

एतावत्कालमीश्वरंपरोक्षतयाऽभिधायेदानीमपरोक्षतयाहस्तत्राहेयानिर्दिशन्निवनिर्दिशति एषवाइतियःसाक्षादाद्योनारायणोभगवान्सएष पुमांल्लोकमज्ञजनंयथार्थज्ञानाच्छादिकयामाययामनुष्यइतिमोहयन्गूढोऽविज्ञातोवृष्णिषुचरतिवैयस्मात्तस्मादयमेवकालाख्यइत्येकान्वय; १८

तर्हिकएनंयथावद्वेदेतितत्राह अस्येति हेनृपसदाशिवोभगवानस्यहरेर्गुह्यतममनुभावंवेद तथादेवर्षिर्नारदः साक्षात्कपिलोभगवानपि जानातीत्येकान्वयः ॥ १९ ॥

त्वंयंकृष्णंमातुलस्यवसुदेवस्यापत्यंप्रियंबंधुंमित्रंसंकटेषुमित्वाज्ञात्वारक्षितारंसुहृत्तमम् अतिशयेनसुहृदंमन्यसेयंचत्वंसौहार्दात् सचिवं मंत्रिणंदूतंसंदेशहरंसारथिंयंतारमकरोस्तस्यास्येतिपूर्वेणसंबंधः ॥२०॥

---

क्रमसन्दर्भः ।

तस्मादस्याज्ञानुसारात् ॥ १७ ॥

न च नरलीलादृष्ट्या साधारणदृष्टिरत्र कर्त्तव्येत्याह एष इति । साक्षादेव स्वयं भगवान् । यः खल्वाद्यः पुमान्महत्स्रष्टा सोऽप्ययमेव यश्चाद्यो नारायणः परमव्योमाधिपतिः सोऽपीति ॥ १८ ॥ १९ ॥

अस्यानुभावाज्ञानसद्भाववतामपि भवतां सम्बन्धविशेषमयसर्व्वाच्छादकमाधुर्य्यज्ञानात्मकप्रेमविशेषेण वशीकारित्वं तु तैरपि दुर्लभमित्याह यमिति त्रयेण । सौहृदात्तादृशप्रेम्ण एव हेतोः यं मातुलेयं मन्यसे अथ सारथिं सारथिमपीत्यर्थः स एव साक्षाद्भगवानित्यादि पूर्व्वेणान्वयः । टीकायां मातुल्या इत्यादिकं स्त्रीभ्यो ढक्-सिद्ध्यर्थमित्थं व्याख्यातम् । मातुलस्यापत्यं मातुलायनिरित्येव स्यात् वृद्धादपत्ये फिञ एव सम्भवात् ॥ २० ॥

---

सुबोधिनी ।

तर्हि अतःपरंकःप्रतीकारइत्यतआहतस्मादितियस्मात्सर्वंकालाधीनंसचकालोभगवान् तदेवचदैवशब्दवाच्यंकालातिक्रमश्चप्रकारांतरेण संभावनीयः तस्मादेतदनुविहितः एतदाज्ञाकारीसन् अनाथाः प्रजाः पाहिआज्ञाकरणेनस्वधर्मेणचभगवान्परितुष्यतीतिमर्यादायद्यपिविशेषतः प्रमेयबलविचारेणभगवान् केनतुष्यतीतिनज्ञायतेतथापिप्रमाणबद्विचारेणैवतदुक्तं पूर्वंदुर्योधनादयोनाथाःस्थिताः इदानीमनाथाः प्रजाअथवात्वयिनाथेऽपिनाथत्वाभिमानाभावात्दययाकेवलंताःप्रजाःपालनीयाःसमर्थत्वात् ॥ १७ ॥

ननुतस्यानुविहितइति पूर्वपरामर्शात् पूर्वकालस्यनिरूपितत्वात् दैवतंत्रमित्यनेनततोऽपिपूर्वंकृष्णस्यनिरूपितत्वात् कस्यानुविहितोभवेदितिसंदेहेकालस्यसर्वाधीनत्वकथनात्तदधीनत्वमनूद्यप्रजापालनंविधीयतइत्यायातिनस्वस्थेतिवाक्येचपूर्वंकृष्णनिरूपणात् कालाधीनत्वेनिरूपितेतन्निवारणार्थंतद्विधित्सितसंदेहोनिरूपितः तत्रकिंकृष्णःकालाधीनोनभवतीतिनिरूप्यतेकालकारणत्वंवानिवार्यतेकालकृष्णयोर्वासद्भावेनदुःखकारणत्वंनिरूप्यतेत्रिष्वपिपक्षेषुकालात् कृष्णस्यभेदःसमायाति ततश्चकालपक्षःपूर्वापरविरुद्धइत्याशंकातन्निराकरणार्थंकालएवकृष्णःसचभगवानितिकृष्णस्यभगवत्त्वंनिरूपयतिएषवैभगवानितिएषः कालरूपःकृष्णःवैनिश्चयेनउपचाराभावेनज्ञानद्वाराभावेनचसाक्षाद्भगवान् ननुकिमस्यकृष्णस्यकालरूपस्यभगवत्त्वेतत्राह आद्योनारायणःपुमानितियआद्यःपुरुषोत्तमःसएवनारायणःब्रह्माण्डविग्रहःसपुमान्स्वराट्अनेनकालस्यकृष्णत्वंतस्यभगवत्त्वंभगवतःपुरुषोत्तमत्वंपुरुषोत्तमस्यनारायणत्वंनारायणस्यस्वराट्पुरुषत्वमितिस्वशरीरेभारप्रतिभानेतन्निवारणार्थंसमागतः यदुषुप्रविष्टोवर्त्ततेयथाऽऽत्मानंकोऽपिनजानातितथामाययानरचेष्टाभिर्लोकंव्यामोहयन्सर्वथाभगवत्त्वंसंगोप्यसर्वाल्लक्षयितुंचरतीत्यर्थः ॥ १८ ॥

ननुकथमयमेवंकथंवाकोऽपिनजानातीत्यतआह अस्यानुभावमितिद्वाभ्याम् अयमेवचतस्यैवंविधस्यएवमनुभावः सर्वमारणःसर्वांगोप्यःतंशिवएवजानातियः तंस्मरन्भक्षयन्नपिशिवःकल्याणरूपोभवति तथाचदेवऋषिर्नारदः सर्वत्रप्रविश्यसर्वान्मारयन् सर्वहितत्वेनप्रतिभातितथासाक्षात्भगवान्कपिलःप्रकृतेरेवकारणत्वंनिरूप्यपुरुषकारणत्वंनिवार्यसर्वहेतुः सन्सर्वहेतुत्वंनिवारयति अतःसात्विकेषुराजसेषुतामसेषुगुणातीतत्वेनोक्तास्त्रयएवजानंति ॥ १९ ॥

अन्येतुबहुधाश्रुत्वाऽपिनजानंतियथाभवान्इत्याह यंमन्यसइति वसुदेवगृहेअवतारात्मातुलपुत्रंमन्यसे किंच प्रियंप्रीतिविषयंमन्यसेसम्बन्धेनात्मीयत्वेनमित्रम्उपकारित्वेन गुह्यंनिरंतरोपकारित्वेनद्रौपद्यादिदानात्सुहृत्तमंचसुहृत्सद्भावयुक्तःकदाप्यकपटःपरोक्षेप्रत्यक्षेचसाक्षात्परंपरयाचतद्धितमेवविचारयतिनकेवलंज्ञानमात्रंकिंत्वयुक्तानिवहून्येवकृतवान् तदाह अकरोःसचिवंसचिवोमंत्री दूतोहीनतयाकार्यसाधकःव्यवहारेसमस्यापिहीनत्वकरणंसौहार्दात् अतएवसारथिंकृतवान्रथस्यरक्षकःसारथिर्नियतः केवलसारथ्यंव्यावृत्त्यर्थं ॥ २० ॥

---

श्रीविश्वनाथचक्रवर्त्ती ।

इदं सुखदुःखादिकं दैवतन्त्रम् ईश्वराधीनमेव व्यवस्यन्निश्चित्य किंतु तद्विधित्सितस्य दुर्ज्ञेयतोकेः स्वभक्ताय तत्प्रदानादिकं दुर्ज्ञेयप्रयोजनकमित्यपि निश्चित्य तस्य कृष्णस्य अनुविहितोऽनुगतः हि गतौ अनाथाः प्रजाः पाहि ॥ १७ ॥

नन्वीश्वराधीनमिति तद्विधित्सितन्तु न वेदेत्यादि कथं ब्रूषे ईश्वरः सम्प्रति तव साक्षाद्धर्य्येव इत्यत इमं कृष्णमेव पृष्ठा कथं सर्व्वं तत्त्वं न वेत्सीत्यत आह एष इति । मायया मोहयन्निति पृष्टो हि भीष्मादपि किमहमतितत्त्वज्ञ इत्यादि वाचा वञ्चयन् न वक्ष्यति । कथं चिद्वदन्नपि मोहयिष्यत्येव इत्यसावनुवर्त्तनीय एव न तु जिज्ञासनीय इति भावः ॥ १८ ॥

किञ्च अस्यानुभावं भावबोधकम् चेष्टाविशेषं शिवो वेद न तु विभ्रितोसितं स्वरूपं प्रभावं वेत्यर्थः । तथाहि रसशास्त्रज्ञाः प्रथममनुभावं स्तम्भस्वेदरोमाञ्चादिकं वेद तेन च स्थायिभावञ्च अनुभावस्य वैशिष्ट्यतारतम्याभ्यां स्थायिभावस्यापि वैशिष्ट्यतारतम्यञ्च । तत्रैव यशोदादिगोपीषु अस्य दामबन्धनादिरूपम् अर्ज्जुनयुधिष्ठिरोग्रसेनादि सारथ्यदास्यादिरूपञ्च पारवश्यम् अनुभावं वेद । तेन च अस्य सर्वेश्वरस्य सर्व्वनियन्तुः महास्वतन्त्रस्यापि वशीकारकः कोऽपि पदार्थविशेषस्तत्र तत्र वर्त्तमानोऽस्त्यपि चित्सम्भवीस्या विद्वर्तीकुर्व्वन्ध्यास्ते इत्यनुमिमीते च । स च नानाविशेषवान् स्वाविषयाश्रययोश्चेतोविद्रावकः परम्परवशीकारकश्च प्रेमाभिधान एव पञ्चमपुरुषार्थः स्नेहानुरागादिशब्दैरुच्यमानो भवति । किंच तत्तज्जनकेनैव प्रतिसमयहेतेन अस्य वशीकाराधिक्यमेव दृष्ट्वा तेन च चूड़ामणिः भक्तिस्नेहानुरागादिशब्दैरुच्यमानो भवति । किंच तत्तज्जनकेनैव प्रतिसमयहेतेन अस्य वशीकाराधिक्यमेव दृष्ट्वा तेन च प्रमाधिक्यमनुमाय सिद्धसाधकभक्तेषु एतत्कर्त्तृकमेव कष्टप्रदानं भक्तिवृद्धचर्यमेवेति सिद्धान्तं निश्चिनोति च शिव एव नारद एव कपिल देव एवेति । अतएव द्रौपद्यादिषु कष्टाधिक्यात् प्रेमाधिक्यञ्च दृष्टम् । तथा—यस्याहमनुगृह्णामि हरिष्ये तद्धनं शनैः ।ततोऽधनं त्यजन्त्यस्य

सर्वात्मनः समदृशो ह्यद्वयस्यानहंकृतेः ॥
तत्कृतं मतिवैषम्यं निरवद्यस्य नक्वचित् ॥ २१ ॥
तथाप्येकांतभक्तेषु पश्य भूपानुकंपितम्
यन्मे ऽसूंस्त्यजतः साक्षात्कृष्णोदर्शनमागतः ॥ २२ ॥
भक्त्यावेश्यमनोयास्मिन्वाचा यन्नाम कीर्त्तयन्
त्यजन्कलेवरं योगी मुच्यते कामकर्मभिः ॥ २३ ॥
सदेवदेवोभगवान्प्रतीक्षतां कलेवरं यावदिदं हिनोम्यहम् ॥
प्रसन्नहासारुणलोचनोल्लसन्मुखांबुजोध्यानपथश्चतुर्भुजः ॥ २४ ॥

श्रीविश्वनाथचक्रवर्त्ती ।

स्वजना दुःखदुःखितामित्यादि श्रीमुखवाक्येन च भक्तकष्टस्य हितैषिणा भगवतैव दीयमानत्वात् न कर्म्मारब्धत्वम् किंचैतदपि न सार्व्वत्रिकं क्वचित् क्वचिदकष्टेनापि स्वभक्तभक्तिं वर्द्धयतीति विधित्सितन्तु न कोऽपि वेदेत्युक्तम् । अनुभावन्तु शिवनारदादिरेव वेद । अन्ये पुनर्मदा दामवन्धनादिकमप्यनुकरणत्वेन व्याचक्षाणा अनुभावमपि न विदुरिति ॥ १९ ॥

अनुभावमेव दर्शयति यमिति । सर्व्वेश्वरस्यापि युष्मत् सचिवत्वदौत्यादिकं प्रेमवश्यत्वानुभाव इत्यर्थः । अत्र यमित्यस्य अस्यानुभाव मित्यनेन पूर्व्वेणैवान्वयः ॥ २० ॥

---

सिद्धांतप्रदीपः ।

यस्मात्कीदृशंकर्मफलंकस्मिन्कालेकृष्णोदास्यतीति ज्ञानाभावाद्धेतोरिदंसर्वंदैवतंत्रंकृष्णायत्तंव्यवस्यनिश्चित्यतस्यकृतस्यानुविहितोऽनुवर्त्तीसन् हेनाथ प्रजाःपाहिपालय ॥ १७ ॥

आद्योनारायणः सर्वेषामवताराणांमूलभूतस्यनारायणस्यापिमूलभूतःविश्वहेतुः साक्षाद्भगवानेवश्रीकृष्णएव माययासंकल्परूपेणाव युनेन ॥ १८ । १९ ॥

अकरोः कृतवान् ॥ २० ॥

---

भाषाटीका ।

अतएव हे भरतर्षभ । यह सुख दुःखादिक दैव तंत्र है यह निश्चय कर, ईश्वर के अनुवर्ती होकर हे नाथ ? हे प्रभो इस अनाथ प्रजा का पालन करो ॥ १७ ॥

यह श्रीकृष्ण ही आद्य नारायण साक्षात् भगवान् हैं । यह अपनी माया से इस लोक को मोहित करते वृष्णिओं में गूढ रूप से विचरते हैं ॥ १८ ॥

इन के गुह्यतम प्रभाव को भगवान् शिव जानते हैं, साक्षात् देवर्षि नारद जानते हैं । हे नृप ? कपिल जानते हैं ॥ १९ ॥

जिनको तुम अपनी मामी का पुत्र जानते हो प्रिय मित्र और सुहृद मानते हो जिनको सचिव बनाते हो दूत बनाते हो विशेष सौहृद से सारथी बनाते हो ॥ २० ॥

---

श्रीधरस्वामी

नन्वीश्वरश्चेत् कथं नीचे सारथ्यादौ प्रवृत्तः तत्राह सर्व्वेति । तत्कृतं नीचोच्चकर्म्मकृतं मम योग्यमयोग्यमिति मतिवैषम्यं क्वचिदपि नास्ति । कुतः निरवद्यस्य रागादिशून्यस्य । तत् कुतः अनहंकृते । तच्च कुतः अद्वयस्य । । तदपि कुतः समदृशः । तत्रापि हेतुः सर्व्वस्यात्मनः । यथेष्टं वा हेतुहेतुमद्भावः ॥ २१ ॥

तथापि समत्वेऽपि । हे भूप । अनुकम्पितमनुकम्पाम् ॥ २२ ॥

इदानीं देहत्यागपर्यंतं श्रीकृष्णावस्थानं प्रार्थयते भक्त्येति द्वाभ्याम् ॥ २३ ॥

यावदिति विलम्बं द्योतयति । अहं हिनोमि त्यजामीति स्वातंत्र्यम् । इदमित्यनात्मत्वेन ज्ञातम् । प्रसन्नहासेन अरुणलोचनाभ्यां च उल्लसत् शोभमानं मुखाम्बुजं यस्य । ध्यानस्य पन्था विषयः योऽन्यैरन्ताश्चिन्त्यते केवलं सोऽग्रतः स्थितः सन् मां प्रतीक्षतामित्यर्थः ॥ २४ ॥

## श्रीवीरराघवः ।

यद्यप्येवंमन्यसेऽकरोश्चतत्कृतंदौत्यसारथ्यादिक्रियाकृतंमतिवैषम्यंकदाचिदप्यस्यनविद्यते मतिवैषम्याभावे हेतुंवदन्विशिनष्टि सर्वात्मनइतिसर्वात्मनः मातुलेयादीन्मन्वानस्यदूतंसारथिं च कुर्वतस्तवाप्यंतरात्मतयायदूतत्वादिकारणायत्वामप्यचोदयतइतिभावः अथाप्यनवद्यस्यनियाम्यगतावद्यासंस्पृष्टस्यतत्रहेतुरनहंकृतेर्देहात्मभ्रांतिरहितस्य किंचाद्वयस्यद्वितीयवस्तुरहितस्यव्याप्यस्वतंत्रवस्तुरहित स्येत्यर्थः अतएवसमदृशः सर्वमपिप्रकृतिपुरुषाद्यात्मकम् उच्चावचंस्वशरीरंतयास्वनियाम्यतयाचैकरूपंपश्यतः उक्तगुणविपरीतस्यैवहि पुंसोमतिवैषम्यमितिभावः ॥ २१ ॥

सर्वात्मनः इत्यनेनसर्वस्यतत्प्रीतिविषयत्वमवगतंशरीरंह्यात्मनः प्रीतिविषयंयद्यपिसर्वंचिदचिदात्मकंजगच्छरीरभूतंप्रियंकृपाविषयं च तथापिक्षेत्रज्ञानुजिघृक्षयाजगद्व्यापारेप्रवृत्तस्यस्वस्यवैषम्यनैर्घृण्यादिपरिहारायकर्ममात्रापेक्षिणः स्वानुवर्तिनोनितरांप्रियाः कृपाविषयाश्चेति तदेवदर्शयितुंभक्तस्यमुमूर्षोर्ममचक्षुर्विषयतांगतइत्याह तथापीतियद्यपिसर्वात्मासमदर्शी च तथापि हेभूपएकांतभक्तेष्वनन्यप्रयोजनेष्वनु कंपितम् अनुकंपास्यसंजातेत्यनुकंपितः तारकादित्वादितच् अनुकंपायुक्तंपश्यावेहि तत्रलिंगमाहयद्यस्मात्कृष्णोऽसून्प्राणांस्त्यजतस्त्यक्तु मुद्युक्तस्यममसाक्षाद्दर्शनंप्राप्तः ॥ २२ ॥

किंतत् यद्दर्शनजंफलमाह भक्त्येति यस्मिन्भक्त्यामनोनिवेश्यवान्त्रायस्यभगवतोनाममात्रमेवकीर्त्तयन् कलेवरंत्यजन्योगीकामकर्मभिः काम्यंतइतिकामाः शब्दादिविषयास्तेषांनिमित्तभूतैः कर्मभिः पुण्यपापात्मकैः कर्मभिश्चेतिवामुच्यतेसंसृतिबंधान्मुच्यतेइत्यर्थः यच्छब्द स्यसकृष्णइत्यध्याहृततच्छब्दवतापूर्वेणान्वयः सदेवइत्युत्तरेणवानामकीर्तनमेवकामकर्मविमोचनद्वारा निःश्रेयसफलकंकिमुसाक्षाद्दर्शन मितिभावः ॥ २३ ॥

यतएवमतोयावन्मत्प्रयाणंतावद्भगवान्प्रतीक्षतामितिप्रार्थयते सइति यावदिदंकलेवरंशरीरंहिनोमित्यजामिविमुक्तोभवामीतिभावः ता वत्प्रसन्नेनप्रहासेनारुणलोचनाभ्यामुल्लसन्मुखांबुजंयस्यसचतुर्भुजोभगवान्श्रीकृष्णः देवानामपिदेवोध्यानपथः ध्यानविषयभूतः सन्प्रतीक्ष तां चक्षुः पथत्वंप्राप्तएवध्यानपथोऽपिभवत्वित्यभिप्रायेणध्यानपथइत्युक्तम् यद्वाद्विभुजत्वेनध्यानपथोभवत्वित्यभिप्रायेणतदुक्तिः तत्रत्यानां द्विभुजत्वेनचक्षुः पथोऽपिस्वस्यचतुर्भुजत्वेनचक्षुः पथस्तेनैवरूपेणध्यानपथोस्त्वित्यभिप्रायेणवाध्यानपथश्चतुर्भुजइत्युक्तम् ॥ २४ ॥

---

## श्रीविजयध्वजः ।

बंधुरित्यादिवाक्याद्बंध्वादिषुस्थित्वाबंध्वादीनांबंध्वादित्वापादकत्वेनमुख्य बंध्वादित्वात्बंध्वादिसर्वरूपत्वात्सर्वात्मनोवा समदृशःयथा वस्तुतथासर्वपदार्थान्जानतः अद्वयस्यसमाधिकरहितस्य अनहंकृतेः प्राकृत वैकृतशरीररहितत्वाद्देहाद्यहं बुद्धिरहितस्यातएवनिरवद्यस्य रागादिदोषरहितस्येत्येतैर्हेतुभिरस्यकृष्णस्यतत्कृतं सारथित्वादिकृतिनिमित्तं त्वयिमतिवैषम्यंक्वचिदपिनास्ति अनेकविधानांजीवानांहित दित्येकान्वयः ॥ २१ ॥

तथाप्यस्याहोसर्वोत्तमोऽहमनेनसारथित्वादिषुविहितइतिविषमाबुद्धिर्नास्तीत्याह सर्वात्मनइति सर्वांतर्यामिणः । पितामातासुहृत् एवंविधविषममतिष्वस्मास्वस्यसंसर्गकारणं किमित्याशंक्ययुष्मद्विधभक्तभक्त्याद्रवीकृतमनोऽनुकंपैवकारणमित्याह तथापीति हेभूप तथापिएवमुक्तप्रकारेणकृतकृत्यस्याप्यस्यएकांतभक्तेषुअव्यभिचारिभक्तिमत्सुयुष्मासुअन्येषुमयिचानुकंपितम् अनुकंपांकृपांपश्य । कुतइति तत्राह यदिति प्राणत्यागकालेप्रायःस्वेनपुष्टापुत्रादयोऽपिपूर्वमेवविमुखागच्छन्त्यहो असून्प्राणांस्त्यजतोमेममस्वामीश्रीकृष्णःसाक्षाद्दर्शनंदृष्टि विषयमागतइति यद्यस्मात्तद्भक्तानुकंपैवसंसर्गकारणमित्येकान्वयः ॥ २२ ॥

प्राणत्यागकालेहरिदर्शनफलमाह भक्त्येति भक्त्याहरौमनआवेश्यवाचायस्यहरेर्नारायणादिनामकीर्त्तयन्कलेवरंशरीरंत्यजन्योगी कामकर्मभिर्मुच्यतेमुक्तःस्यात्तंप्रत्यक्षतोदृष्ट्वाम्रियमाणस्यमेमुक्तिः किंवर्णनीयेतिवाक्यशेषः तस्मात्तत्प्रीतिकृद्धर्मोऽतस्तदुक्तप्रकारेणस्वधर्मे धर्मबुद्धिहित्वात्वंराज्यंकुर्विंतिपरमतात्पर्यार्थः ॥ २३ ॥

युधिष्ठिरंप्रत्यभिधायेदानींस्वच्छन्दमृत्युर्भीष्मउत्तरायणसमयपर्यंतंभगवतोऽवस्थानंप्रार्थयते सइति अहंयावदिदंपंचभूतरचितंकलेवरं हिनोमित्यजामितावदुत्तरायणपर्यंतंसदेवोभगवान्प्रतीक्षतांमयिकृपयाअनुग्रहं कुर्यादितिप्रार्थयइत्यन्वयः कथंभूतःप्रसन्नहासश्चारुणलोचने नेत्रेप्रसन्नहासारुणलोचनानितैरुल्लसन्मुखमेवांबुजंयस्यसतथा ध्यानपथःउपासनाविषयःद्रष्टुंध्यानमेवपंथामार्गोयस्यसतथा चत्वारोभुजा यस्यसतथा इदमेवध्यानविषयंवपुः पुरतःस्थितस्यद्विभुजत्वादयमेवसइतिपरोक्षतयानिर्देशः ॥ २४ ॥

---

## क्रमसंदर्भः ।

ननु भवतु प्रीतिविशेषेणास्माकं तस्मिंस्तथा मतिः तस्य सर्व्वेषां परमात्मनस्तस्मादेव समदृशः परमात्मत्वादेव सर्व्वेषां तच्छक्तिवैभव रूपाणामात्मनां तदनन्यत्वादद्वयस्य तस्मादेव मातुलेयमित्याद्यभिमानशून्यस्य तथा निर्दोषस्य च कथमहमस्य मातुलेयो न त्वमुष्येत्या दिरूपं मातुलेयत्वादिकृतं मतिवैषम्यं स्यादिति पूर्व्वपक्षोट्टङ्कनपूर्व्वकं सिद्धांतयति सर्व्वात्मन इति । टीकायां समदृश इत्यत्र समः सर्वत्रा व्यभिचारी च सः दृक् ज्ञानरूपश्चेति । बहुव्रीहौ हेतुत्वं न घटते ॥ २१ ॥

### क्रमसंदर्भः ।

यद्यपि तादृशस्य तत्र सम्भवति तथापि हे भूप एकांतभक्तेषु युष्मासु अनुकंपां पश्य ! येषां भक्तिविशेषेण परवशः सन्नसावपि तथा तथाऽऽत्मानं वाढमेवाभिमन्यते इत्यर्थः । यःखलु शरीरस्यापि सम्बन्धे हेतुः सोऽभिमान एव हि सम्बन्धहेतुर्मुख्यः न शरीरम् । सति त्वावि र्भावादिना शरीरसम्बन्धेऽपि तस्यमातुलेयत्वादिकं सुतरामेव सिद्धयतीति तात्पर्य्यम् । तत्र हेतुः यन्मेऽसूनिति । यद्यस्मात् युष्मत् संबंधादेव हेतोः । तदेवं परमोपादेयत्वज्ञानादेव तत्संबंधात्मक एव श्रीभगवानुत्क्रांतावपि मुहुरेव निजालंवनीकरिष्यते—विजयसखे रतिरस्तु मेऽनवद्येति पार्थसखे रतिर्ममास्त्विति विजयरथकुटुम्ब इत्यारभ्य भगवति रतिरस्तु मे मुमूर्षोरिति च ॥ २२ ॥

भक्त्येति युग्मकम् । योगी समाहितान्तःकरणः सन् यस्मिन् भक्त्या मन आवेश्यवा वाचा नाममात्रं कीर्त्तयन् त्वाकलेवरैमृत्यजन्मुच्यते २३ प्रसन्नहासेत्यादिना तद्दर्शनबहुकालतार्थमेव शरीरत्यागे विलम्बः कृत इति लभ्यते । ततश्च शरीरांतरप्राप्तौ सत्यां कदा वा दर्शनं स्यादित्युत्कण्ठाविष्टत्वादिति गम्यते । यावन्न मे नवदशा दशमी कुतोऽपीत्यादिकं हि श्रीलीलाशुकस्यापि प्रार्थनं श्रूयते ॥ २४ ॥

---

### सुबोधनी ।

नन्वन्येभगवंतमाजानंतुभगवान्स्वात्मानंजानन्कथंहीनेकर्माणिप्रवर्त्ततेतत्राहसर्वात्मनइतिसर्वास्मिन्नात्मायस्यअनेनस्वार्थमेवकरोति कथंवै षम्यंस्यात् वेदादिप्रमाणवत्वाच्चशत्रुमित्रोदासीनेषुसमबुद्धिः अतोऽपिनवैषम्यंकिंच भेददर्शनेसत्येवंभवतितस्यतुसर्वमात्मैवभासतेअतोनावि द्यतेद्वैतंयस्यतादृशस्यकथंवैषम्यंस्वरूपेणप्रमाणेनप्रमेयेननिराकृतंवैषम्यमवतारेतुनिरहंक्रिययातनौनविद्यते अहंकृतिर्यस्यतत्कृतमुच्चनीच कर्मकृतंसर्वमेवा किंचित्कर्त्तव्यमितिकरोतितच्चूत्कृष्टमितिननुहीनकर्मणाकथंनदोषः स्यादतआहनिरवद्यस्येति अपहतपाप्मनइत्यर्थःअपहत पाप्मत्वंनदेशकालावच्छिन्नमित्याहनकाचिदितितस्मादयमेवसर्वभक्षकः प्रज्ञानादुपचरितः ॥ २१ ॥

एवंकृतवानित्युक्तेभयमसेव्यताचप्रतिभातातन्निराकरणार्थमाहतथापीति यद्यप्येवमेव तथाप्येकस्तस्मिन्नसाधारणोगुणोऽस्तियद्भक्त कृपाभजनीयत्वेहेतुरभयेकारणंच सचाव्यभिचारीनित्यफलश्चभूपेतिसंबोधनंराज्ञामप्येवं कदाचिद्भवतीतिसंवादार्थं कृपायाअव्यभिचारित्वं स्वदृष्टान्तेनाहयन्मेऽसूनितिनहिममसदृशोऽपराधीकश्चिदस्तिअवहेलनकर्त्ताभक्तद्रोहीद्विष्टपक्षपातीचतथापिकदाचिन्नामग्रहात् भक्ताभासंपुर स्कृत्यप्राणत्यागसमयेभक्तोनमुक्तोभवेत् दुष्टइतिशंकयास्वयमागत्यआत्मसाक्षात्कारंकारयित्वाकृतार्थंकृतवानित्यर्थः तस्मादन्येभक्ताःकृता र्थाभविष्यन्तीतिकिंवक्तव्यमितिभावः ॥ २२ ॥

ननुदूरेभगवत्साक्षात्कारान्मुक्तिरितिभगवदाविर्भावव्यतिरेकेणापिभगवद्गैर्मानसरूपनामभिर्मुक्तिर्भवतीत्याह भक्त्यावेश्येतिभक्त्येति विहितभक्त्यधिकारिणः प्रत्युक्तंवस्तुतस्तुयथाकथंचिन्मनोनिवेशनमेवमुक्तिहेतुः इंद्रियव्यापारमपि भगवन्नाम्नाकुर्वन् पूर्वयोगाभ्यासर तोऽपिइदानींभक्तिमार्गेणशरीरंत्यजन् * कायवाङ्मनोभिः तामसराजससात्विकमपिकर्मकुर्वन्पूर्वकामकर्मकः कृतैर्मुच्यतेएभिःकर्मभिः तानि कर्माणिस्वभावंप्रापितानिमुक्तिहेतवोभवंतीत्यर्थः ॥ २३ ॥

एवंभजनीयभगवद्गुणानुक्त्वास्वस्यमनसामूर्तिकल्पनाशक्तेः अंतिमोच्छ्वासपर्यंतंभगवत्स्थितिमेवप्रार्थयतेसदेवदेवइतिअस्मत्कृपाया अन्योऽपिहेतुरस्तिनकेवलमिदानींतनाभक्तिःयतोदेवानांवस्वादीनांदेवःसर्वदापूज्यः किंच स्वतश्चपूर्णः भगवानितिसयावदिदंशरीरंमयात्या ज्यतेतावत्तिष्ठतु न मध्येशरीरं गृह्णातुमारयतु इदमिति जीर्णम् अहमिति सामर्थ्ये "येयथामांप्रपद्यंते" इतिवाक्यानुसारेण मातिष्ठतुकिंतु प्रसन्नहासः अरुणेचलोचने ताभ्यामुल्लसन्मुखांभोजंयस्यहासस्य प्रसन्न त्वान्नमाया मोहः लोचनयोररुण त्वान्मत्पापदूरी करणंतयो रपि प्रसादेविशेषणमपि सर्वगुण निधानं मुखांबुजस्य तादृशत्वेन स्वपद प्राप्तिः ध्यान पथत्वेनाणिमादयः चतुर्भुजत्वेन पुरुषार्थ चतुष्टयसिद्धिः ॥ २४ ॥

---

### श्रीविश्वनाथचक्रवर्त्ती ।

ननु परमेश्वरस्य भक्तिवशीकृतत्वे दौत्यसारथ्यादिरपकर्ष एव तस्मिंश्च सति कथं प्रेमा परमेश्वरस्य सुखप्रद इत्यत आह सर्व्वात्मन इति । निरवद्यस्य निर्दोषप्रेमवतोऽस्य कृष्णस्य तत्कृतं दौत्यादिकृतं मतिवैषम्यं न । अत्र हेतुः सार्व्वकालिकं स्वतः सिद्धं महैश्वर्य्यमेवेत्याह सर्व्वात्मन इति । अर्ज्जुनस्याप्यात्मा स एवेति स्वयमेव सारथी रथी चेति । अतएव समदृशः समं तुल्य मात्मानमेव सर्वत्र पश्यतः । सर्वात्मत्वादेवाद्वयस्य । द्वितीयाभावादेव अनहंकृतेर्गर्वशून्यस्य । किंच महैश्वर्यहीनोऽप्यन्यः प्रेमी प्रेमत एव हेतोरात्मनो नीचकर्मोत्थ मपकर्षं क्लेशंच दुःखत्वेन न मन्यते । अस्य तु महैश्वर्यादेरानन्दमात्रस्य कुतः प्रेमतो दुःखम् तस्माद्युष्माकमेवोत्कर्षो यत एतादृशो ऽपि परमेश्वरो भवतां दूत्यादिकं करोतीत्याहो वशीकारकत्वं प्रेम्ण इति भावः ॥ २१ ॥

अथापीति । यद्यपि युष्मत्तुल्यो नमवितुं शक्नोमीति भावः । अनुकम्पितम् अस्य मय्यनुकम्पां पश्यययाऽयमानन्दमयसाक्षाद्ब्रह्मस्वरूपो ऽप्येतादृशं वीभत्सितं मत्समीपस्थानं प्रस्थापित इत्ययमप्येकोऽनुभावोऽनुभूयतामिति भावः । युष्माकं त्वयमेवानुकम्प्य इतिभावः २२ । २३ प्रतीक्षतां क्षणमत्रैव तिष्ठतु यावदहं किंचिद्विलम्ब्य चक्षुर्भ्यामाभ्यामेव सौन्दर्य्यामृतम् पिवन् स्वस्य मनोऽनुलापं प्रकाशयन् स्तौ मीति भावः । मम उपास्यत्वाद्ध्यानस्य पन्था विषयीभूतो यः सर्वकालमेव भवेत् स प्रसन्नहासेत्यादिरूपोऽस्मिन्नन्तकाले साक्षान्नयन गोचर एव तिष्ठत्विति भावः । चतुर्भुज इति भीष्मस्योपास्यमन्त्रध्यानस्य तथात्वमवगमयति ॥ २४ ॥

---

* कायवाङ्मनसैरित्युचितः पाठः

सूतउवाच । युधिष्ठिरस्तदाकर्ण्य शयानं शरपंजरे ॥
अपृच्छद्विविधान्धर्मानृषीणामनुशृण्वताम् ॥ २५ ॥
पुरुषस्वभावविहितान्यथावर्णं यथाश्रमम् ।
वैराग्यरागोपाधिभ्यामाम्नातोभयलक्षणान् ॥ २६ ॥
दानधर्मान्राजधर्मान्मोक्षधर्मान् विभागशः ।
स्त्रीधर्मान् भगवद्धर्मान्समासव्यासयोगतः ॥ २७ ॥
धर्मार्थकाममोक्षांश्च सहोपायान् यथामुने ॥
नानाख्यानेतिहासेषु वर्णयामास धर्मवित् ॥ २८ ॥

सिद्धांतप्रदीपः ।

सर्वात्मनःचिदचिच्छक्तिमतः अतएवाद्वयस्यैकस्य तादृशपदांतराभावात् अतएवसमदृशःपरकीयपदार्थाभावाद्विषमदृष्टिशून्यस्यतत्कृतं दौत्यादिकर्मकृतंमतिवैषम्यंक्वचिदपिनविद्यते ॥ २१ ॥

तथापिसर्वस्यतदीयत्वेऽपि हेभूपएकांतभक्तेषु अनुकंपितंजातानुकंपंपश्यालोचययद्यस्मादसून्त्यजतोमेममकृष्णोदर्शनंदृक्पथमागतःप्राप्तः ॥ २२ ॥

अधुनास्ववांछितंप्रार्थयतेभक्त्येतिद्वाभ्याम् यस्मिन्मनः समाविश्ययोगीकामकर्मभिः संसारप्रदैः कर्मभिर्मुच्यते ॥ २३ ॥

प्रसन्नेनहासेनअरुणलोचनाभ्यांचोल्लसन्मुखांबुजंयस्यसः ध्यानस्यपंथाआश्रयः अन्यैश्चिंत्यतेकेवलंसचतुर्भुजःपुरःस्थितःसन् यावत्कलेवरंहिनोमित्यजामितावन्मांप्रतीक्षताम् ॥ २४ । २५ ॥

---

भाषाटीका ।

सर्वात्मा समदर्शी अद्वय अन हंकार श्रीकृष्ण को इन कर्मों से कुछ मति वैषम्य कभी भी नहीं होता है क्योंकि वह निरवद्य अर्थात् निर्दोष है ॥ २१ ॥

तथापि हे भूप ! देखो एकान्त भक्तों पर कैसी कृपा है कि जो मेरे प्राण परित्याग करने के समय साक्षात् श्रीकृष्ण दर्शन देने को आये हैं ॥ २२ ॥

भक्ति से जिन में मन आविष्ट कर और वाणी से जिनका नाम कीर्तन करता योगी, कलेवर को त्यागता. काम कर्मों से मुक्त हो जाता है ॥ २३ ॥

यह प्रसन्न हास अरुण लोचन प्रफुल्ल मुखाम्बुज ध्यानपथ चतुर्भुज देव देव भगवान्, जबतक मैं इस कलेवर को त्याग करूं यहां प्रतीक्षा करें ॥ २४ ॥

---

श्रीधरस्वामी ।

तत् सानुकंपं वाक्यमाकर्ण्य ॥ २५ ॥

पुरुषस्य स्वभावेन विहितान् नरजातिसाधारणान् ( धर्म्मान् ) वर्णयामासेति तृतीयेनान्वयः । यथावर्णं वर्णधर्म्मान् यथाश्रममाश्रमधर्म्मांश्च । वैराग्यरागाभ्यामुपाधिभ्यां क्रमेणाम्नातमुभयं निवृत्तिप्रवृत्तिरूपं लक्षणं येषां तान् ॥ २६ ॥

पुनस्तमेव विशेषमाह दानेति । मोक्षधर्म्मान् शमदमादीन् । भगवद्धर्म्मान् हरितोषकान् द्वादश्यादिनियमरूपान् समासव्यासौ संक्षेपविस्तारौ तावेव योगावुपायौ ततस्ताभ्याम् ॥ २७ ॥

धर्म्मादींश्च यथाधिकारं प्रतिनियतोपायसहितान् । यथा यथावत् । नानाख्यानेषु ये इतिहासास्तेषु यथा सन्ति तथा वर्णयामास २८

---

श्रीवीरराघवः ।

तद्भीष्मवचोनिशम्ययुधिष्ठिरः शरपंजरेशयानंभीष्ममृषीणांशृण्वतांसतांनानाविधान्धर्मानपृच्छत् ॥ २५ ॥

धर्मान्विशिनष्टि पुरुषस्वभावः [illegible] विहितान् कर्तव्यतयाविधिबोधितान्यथावर्णंयथाश्रमंब्राह्मणादिवर्णानांब्रह्मचर्याद्याश्रमाणांचयोग्यार्थेकयथाशब्दस्याव्ययीभावः वैराग्यरागावकामकामौ तावेवोपाधीताभ्यामाम्नातानुभयविधान्प्रवृत्तिनिवृत्तिभेदभिन्नान्यथैकस्यैवाग्निहोत्रादिकर्मणोऽग्निहोत्रंजुहोतिजुहुयात्स्वर्गकामः यावज्जीवमग्निहोत्रंजुहुयादितिस्वर्गाधिकारजीवनाधिकाररूपाभ्यामुपाधिभ्यामेवभेदः एवंवैराग्यरागोपाधिभ्यांप्रवृत्तिधर्मत्वेन निवृत्तिधर्मत्वेनचाम्नातान्वस्तुत एकरूपान्वर्णाश्रमादिधर्मानित्यर्थः २६

श्रीवीरराघवः ।

आम्नातानित्यनेनवैदिकधर्मानपृच्छदितिसूचितम् तथास्मार्त्तधर्मानपृच्छदित्यभिप्रायेणाह दानधर्मानितिराजधर्मानीतिशास्त्रोक्ताःमोक्षधर्माः पंचरात्रादितन्त्रोक्ताः तत्राप्यवांतरभेदाभिप्रायेणपुरुषस्वभावभेदाभिप्रायेणविभागप्रायइत्युक्तं भगवद्धर्मास्तच्छ्रवणकीर्त्तनादयः समासव्यासयोगतः संक्षेपविस्ताराभ्यांयुक्ताः शास्त्रेषुप्रतिपाद्यतयेतिसमासव्यासयोगाः सार्वविभक्तिकस्तसिः समासव्यासयोगात् यद्वासमासव्यासयोगात्संक्षेपयोगाद्विस्तरयोगाच्चापृच्छत् संक्षिप्तत्वेनविस्तृतत्वेनचापृच्छदित्यर्थः ॥ २७ ॥

द्वितीयांतानांवर्णयामासेत्युत्तरत्रान्वयः हेमुनेसहोपायान् ससाधनान् धर्मार्थकाममोक्षानपियथावन्नानाविधेष्वाख्यानेष्वितिहासेषुच यत्तत्त्वंतद्भीष्मावर्णयामास ॥ २८ ॥

---

श्रीविजयध्वजः ।

अथयुधिष्ठिरोभीष्मोक्तमाकर्ण्यशरतल्पेशयानंभीष्मंविविधान्धर्मानपृच्छदित्यन्वयः पृच्छतेर्द्विकर्मकत्वाद्भीष्मंधर्मानितियुज्यते ॥२५॥

धर्माणांतत्त्वविद्भीष्मःएतान्धर्मान्नानाख्यानात्मकेष्वितिहासेषुवर्णयामासेत्यन्वयः तान्कथंभूतान् वर्णपुरुषस्यैतानिजत्वेनविहिता धर्मास्तदाश्रमिपुरुषस्यैतेविहिताइतिविविच्ययथावर्णयथाश्रमंवर्णिनामाश्रमिणांपुरुषाणांस्वभावविहितान्निजत्वेनविहितान् धर्मान्वैराग्योपाधिनारागोपाधिनाचएतेनिवृत्तिधर्माएतेप्रवृत्तिधर्माइतिनिष्कामज्ञानपूर्वमित्यादिवचनैःप्रतिपादितोभयविधलक्षणान् ॥ २६ ॥

विभागशःपृथक्पृथक्भगवतःसर्वजगत्स्रष्टृत्वादिधर्मान् ॥ २७ ॥

तथाधर्मार्थकाममोक्षांश्चतत्तत्साधनसहितान्समासव्यासयोगतःसंक्षेपविस्ताराभ्यांयथायथावत् तात्त्विकदेवान्तमयुधिष्ठिरादिबोधने भीष्मस्यासामर्थ्यात्भीष्मस्यकार्य्यर्थंतस्मिस्तत्कालविशेषाविष्टश्रीकृष्णाश्चपांडवप्रश्नान्व्याचख्यावित्यस्यार्थैयर्थात ॥ २८ ॥

---

क्रमसंदर्भः ।

तत् निजचिरस्थितिप्रकाशकं श्रीभीष्मस्य वचनमाकर्ण्य ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥

---

सुबोधिनी ।

एवं सर्वं पुरुषार्थदानाय सर्वाभिव्यक्तिंकुर्वन् विषयांतरसंचाराभावायप्रकटस्तिष्ठत्विति प्रार्थना मध्ये मावकाशं ज्ञात्वायुधिष्ठिरः स्वसंदेहंवारयितुंपृष्टवानित्याह युधिष्ठिर इति ननु युधिष्ठिरः पूर्वोक्तं सर्वं भगवताकृत मित्यवगत्यस्वस्यकारणत्वाभावात्वधादिदोषाभावं विनिश्चित्यापि कथंपृच्छती त्यतआह तदाकर्ण्यापि शरपंजरे शयानमिति यदिभगवानेव करोति किमितिभीष्मः शरपंजरेपतितास्तिष्ठतिनह्यकृतं भोजयति भगवान्तथासति अतिप्रसंगः स्यात्दुःखस्यच सर्वजनीनत्वात् भगवतः सर्वकर्तृत्वस्यच श्रौतत्वात् सर्वेषामेव ऋषीणांसंदेहः अतस्तेषामपि संदेहनिवृत्त्यर्थमृषीणामनुश्रृण्वतां पृष्टवानित्यर्थः धर्माणामेवनाना विधत्वात् प्रवल दुर्बलताभावोऽस्ति राजसेवकवन्नवेति संदेहादपिप्रश्नस्तदाह वि विधानीति ॥ २५ ॥

धर्मास्त्रिविधाः श्रौताः पौराणिकाः पुरुषार्थ साध्यत्वेनान्वयव्यतिरेकसिद्धालौकिकाश्चतान् सर्वान्भीष्मः क्रमेणाहेत्याह पुरुषस्वभावेतित्रिभिः तत्रवैदिकास्त्रिविधाः शरीराधिकारेण प्रवृत्ताः वर्णाश्रमरूपेण वाह्यधर्मेण चप्रवृत्ताः वैराग्याद्यांतर धर्मेणचतत्रपुरुषस्वभावविहिताः स्वतंत्रारक्षादयः वर्णधर्माज्ञानादयः आश्रमधर्माः अध्ययनादयः रागोपाधयः पूर्वकांडोक्ताः वैराग्योपाधयः उत्तरकांडोक्ताः ॥ २६ ॥

दानधर्मादयः पौराणिकाः गोदानादयः तुलापुरुषादयोवाराजधर्माः कार्त्तिकव्रतादयः समासव्यासकथनात् बुद्धिर्भवतिवैस्थिरा अतः संक्षेपविस्ताराभ्यामाहसमासेति ॥ २७ ॥

पुरुषार्थचतुष्टयसाधनीभूतधर्मानाहधर्मेति पुरुषार्थानांस्वरूपं साधनानिप्रकाराश्चयथा यथावत्मुनइति संबोधनाल्नविस्तरेणोच्यते मननविघ्नत्वा दितिआख्यानं शब्दप्रधानं तैरेवमुक्तमित्यादि इतिहासः पुरावृत्तं तैरेवंकृतमेवं जातमितितथानिः शंककथनेहेतुः एतावता सर्वसंदेहा निवारिताइत्युक्तं भवतिसगुणकर्मणा वंधः निर्गुणकर्मणामोक्षः लोकेफलसाधकत्वंज्ञानंभवत्विति यमधःउपरिवानिनीषतितमसाधुसाधुवाकर्मकारयतीति ईश्वरस्यसर्वकर्तृत्वंजीवस्य दुःखाद्यनुभवश्चोक्तो भवतिधर्म प्रवचनादिकं काल विलंव देवनत्व नेनपुरुषार्थसिद्धिरिति ॥ २८ ॥

---

श्रीविश्वनाथचक्रवर्ती ।

युधिष्ठिरस्तदाकर्ण्येति तर्हि मां कः प्रबोधयिष्यतीति व्यग्रोऽपृच्छत् । शयानं शरेति । यद्यपि तद्दशायां प्रश्नानौचित्यं तदपि गत्यंतराभावादिति भावः ॥ २५ ॥

धर्मं प्रवदतस्तस्य स कालः प्रत्युपस्थितः ।
यो योगिनश्छंदमृत्योर्वांछितस्तूत्तरायणः ॥ २९ ॥
तदोपसंहृत्य गिरः सहस्रणीर्विमुक्तसंगं मन आदिपूरुषे ।
कृष्णे लसत्पीतपटे चतुर्भुजे पुरःस्थिते मीलितदृग्व्यधारयत् ॥ ३० ॥
विशुद्धया धारणया हताशुभस्तदीक्षयैवाशु गतायुधव्यथः ।
निवृत्तसर्वेंद्रियवृत्तिविभ्रमस्तुष्टाव जन्यं विसृजन्जनार्दनम् ॥ ३१ ॥
॥ भीष्मउवाच ॥ इति मतिरुपकल्पिता वितृष्णा भगवति सात्वतपुंगवे विभूम्नि ।
स्वसुखमुपगते क्वचिद्विहर्तुं प्रकृतिमुपेयुषि यद्भवप्रवाहः ॥ ३२ ॥

श्रीविश्वनाथचक्रवर्त्ती ।

पुरुषस्वभावेन विहितान् प्रथमं नरजातिसाधारणान् धर्म्मान् वर्णयामासेति तृतीयेनान्वयः । ततो यथावर्णं वर्णयोग्यधर्म्मान् योग्यतायामव्ययीभावः। ततो यथाश्रमं ततो वैराग्यरागाभ्यामुपाधिभ्यां क्रमेणाम्नातमुभयं निवृत्तिप्रवृत्तिरूपं लक्षणं येषां तान्। अयमर्थः— नहि ब्रह्मचर्यादय आश्रमधर्माः सर्व्वैरेव द्विजैः सर्वे क्रमेणैवानुष्ठेया इति नियमः । किन्तु वैराग्यं चेत् सदैव भिक्षवो भवेयुस्तदा रागश्चेद् गृहस्था एव सदेति ॥ २६ ॥

ततश्च तत्रैव विशेषतो दानधर्मानित्यादि सर्वान्ते च भगवद्धर्मान् भक्त्यङ्गानीति मोक्षधर्मेभ्योऽप्यस्य पार्थक्यं श्रेष्ठ्यञ्च व्यंजितम् समासः संक्षेपो व्यासो विस्तरश्च तद्द्वयोर्योगेन युक्ततया ॥ २७ ॥

एवश्चोक्ताः सर्व्वे धर्म्माश्चतुर्षु वर्गेषु एव पर्य्यवस्यन्तीत्युक्तपोषन्यायेन तानेवाह धर्म्मेति । उपाया धर्म्मादिसाधनानि । यथा यथावदेव । नानाऽऽख्यानादिषु ये ये इतिहासास्तेषु प्रदर्श्य प्रमाणीकृतानित्यर्थः ॥ २८ ॥

---

सिद्धान्तप्रदीपः ।

पुरुषाणांस्वभावैः सात्विकराजसतामसैर्विहितान्वर्णयामासेतितृतीयेनान्वयः यथावर्णंवर्णानांयोग्यान् वैराग्यरागाभ्यामुपाधिभ्यां क्रमेण आम्नातोभयलक्षणान् प्रतिपादितनिवृत्तिस्वरूपान् ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥

---

भाषा टीका ।

( सूतउवाच ) यह सुनकर शर शय्या पर शयान भीष्म से युधिष्ठिर ने सब ऋषियों के सुनते विविध धर्म पूंछे ॥ २५ ॥

पुरुषों के स्वभाव विहित धर्म, वर्ण आश्रम धर्म. वैराग्य और रागके भेदसे वेदोक्त दोनों प्रकार के धर्म, दानधर्म, राजधर्म, मोक्षधर्म, स्त्रीधर्म, भगवद्धर्म, । संक्षेप और विस्तार से धर्मअर्थ काम मोक्ष और उनके उपाय, । ये सब राजा ने पूछे ॥ हे मुने ! तत्त्ववेत्ता भीष्म ने यह सब नाना आख्यान और इतिहासों में वर्णन किया ॥ २६ ॥ २७ ॥ २८ ॥

---

श्रीधरस्वामी ।

छन्देन इच्छयामृत्युर्यस्य ॥ २९ ॥

सहस्रणीर्युद्धे समीपस्थान् सहस्रं रथिनोनयति पालयतीति सहस्रणीःभीष्मः । सहस्रिणीरिति पाठे सहस्रार्थवतीर्गिरः। लसंतौ पीतौ पटौ यस्य तस्मिन् । अमीलितदृगेव मनो व्यधारयत् ॥ ३० ॥

अनयैव विशुद्धया धारणया हतमशुभं यस्य सः । तस्य श्रीकृष्णस्येक्षया कृपादृष्ट्यैव गता आयुधश्रमा यस्य सः । अतश्च निवृत्तः सर्व्वेन्द्रियवृत्तीनां विभ्रमः विविधं भ्रमणं यस्मात् सः । जन्यं देहम् ॥ ३१ ॥

परमफलरूपां श्रीकृष्णेरतिं प्रार्थयितुं प्रथमं स्वकृतमर्पयति । इति नानाधर्म्माद्युपायैर्म्मतिर्मनोधारणालक्षणा उपकल्पिता समर्पिता । क्व सात्वतानां पुङ्गवे श्रेष्ठे भगवति । वितृष्णा निष्कामा । अवितृष्णेति वा छेदः अवितृप्ता इत्यर्थः । विगतो भूमा यस्मात् तस्मिन् यद्यपि क्षयान्यत्र महत्वं नास्तीत्यर्थः । तदेव परमैश्वर्य्यमाह स्वसुखं स्वरूपभूतं परमानंदम् उपगते प्राप्तवत्येव। क्वचित् कदाचित् विहर्तुं क्रीडितुं प्रकृतिम् उपेयुषि स्वीकृतवति नतु स्वरूपतिरोधानेन जीववत् पारतन्त्र्यमित्यर्थः । विहर्तुमित्युक्तम् प्रपञ्चयति यद्यतः प्रकृतेः भवप्रवाहः सृष्टिपरम्परा भवति ॥ ३२ ॥

---

### दीपनी ।

अवितृष्णेति दर्शने अलंबुद्धिराहित्यादिति भावः ॥ ३२—३५ ॥

---

### श्रीवीरराघवः ।

एवंपृष्टान्धर्मान्प्रवदतः योगिनः छंदमृत्योः स्वच्छंदानुसारीमृत्युर्यस्यतस्यभीष्मस्ययोवांछितउत्तरायणः सकालः प्रत्युपस्थितः यद्वा तस्यसकालः प्रत्युपस्थितः यश्छंदमृत्योर्योगिनः वांछितः सचापिकउत्तरायणइत्यन्वयः ॥ २९ ॥

तदेति यदासकालः प्रत्युपस्थितः तदासहस्रणीः सहस्राणांकुरुपांडवादिरूपाणांनायकःसहस्रंस्ववश्यानांनयतिसद्गतिंप्रापयतीतिवा स भीष्मः गिरउपसंहृत्यविरम्यमुक्तः संगोदेहतदनुबन्ध्यादिसंगोयस्यतन्मनः पुरः स्थितेलसंतौविलसंतौ पीतौपटौयस्यतस्मिन्कृष्णेऽध्यधारयत् कथंभूतः निमीलितेदृशौदृष्टीयेनसः निमेषणमप्यकुर्वन्कृष्णमेवपश्यन्तद्विग्रहध्यानैकप्रवणंचित्तमकरोदित्यर्थः ॥ ३० ॥

विशुद्धयाधारणयाभगवद्विग्रहानुध्यानात्मिकयाहतंनिरस्तमशुभंभगवत्प्राप्तिविलम्बावहंप्रारब्धंयस्य तदीक्षयैवभगवद्दर्शनेनैवाशुगता निरस्ताआयुधप्रहारजाव्यथायस्यनिवृत्ताः सर्वेषामिंद्रियाणांवृत्तयोविभ्रमः देहात्मादिभ्रमश्चयस्यसः भीष्मःजन्यंजननयोग्यंदेहंविसृजन्त्य क्ष्यन्जनार्दनंसर्वजनदुःखहरंश्रीकृष्णंतुष्टाव ॥ ३१ ॥

स्तुतिमेवाहइतीत्यादिभिरेकादशभिः तावत्परमव्योमस्थंवेदांतवेद्यंदिव्यात्मस्वरूपंप्रकृतावतारूपंतत्प्रयोजनंचानुसन्धायतस्मिन्स्वमाति दार्ढ्यंप्रार्थयतेइतिवक्ष्यमाणप्रकारेणममतिर्भगवतिवितृष्णाऽलंबुद्धिराहितासतीउपकल्पिताप्रतिष्ठिताभवतु यद्वाइतिहेतौमतिर्वितृष्णाइति यस्मात्तस्माद्भगवत्युपकल्पिताभवतिवित्यर्थः कथंभूतेसात्वतपुंगवेसात्वतानांयादवानांपुंगवेश्रेष्ठभागवतानांनायकेवाविभूम्नि विलक्षणे भूम्नि वागादिभ्यः प्राणशब्दवाच्याज्जीवाच्च विलक्षणेऽपरिच्छिन्नेभूमशब्दवाच्यइत्यर्थः "भूमात्वेवविजिज्ञासितव्यः योवैभूमातत्सुखंनाल्पेसुख मस्ती" तिहिश्रूयतेतदाहस्वसुखमुपगतइति स्वंस्वाभाविकसुखमुपगतवत्यपरिच्छिन्नस्वाभाविकानंदशालिनीत्यर्थः क्वचिद्देशेविहर्त्तुंप्रकृतिं विग्रहमुपेयुषियद्भवप्रवाहः संसारप्रवाहोभवति यत्संकल्पमूलाक्षेत्रज्ञानांसंसारप्रवृत्तिस्तस्मिन्नित्यर्थः ॥ ३२ ॥

---

### श्रीविजयध्वजः ।

स्वच्छन्दमृत्योःस्वेच्छयामरणंकुर्वतोयोगिनोवांञ्छितउत्तरायणाख्यःकालोयःसभीष्मस्यप्रत्युपस्थितइत्यन्वयः उत्क्रमिष्यतोज्ञानिनःका-लेऽनुगुणेकिंचित्सुखाधिक्यंभवति नान्यथामुक्त्यभावइत्येतमर्थंतुशब्दोवक्ति ॥ २९ ॥

तदोत्तरायणेप्राप्तेसतिसहस्रणीःस्वमुक्तिसमयेस्वोपदिष्टानेकजननेता । एकादशाक्षौहिणीनायकस्यबलवतांसहस्रसंख्यावतांनायकत्व कथनमनित्यत्वादुपेक्षणीयं अमीलितदृक्प्रफुल्ललोचनः । विशेषतउच्छ्वसितज्ञानोवा । भीष्मोगिरंविषयसंबंधिनीमुपसंहृत्य विमुक्तोविषय संगोयेनतत्तथोक्तंतन्मनः पुरास्थितेप्रत्यक्षेचतुर्भुजेउपलब्धेशोभमानपिशंगवस्त्रेआदिपुरुषेनारायणावतारेश्रीकृष्णेव्यधारयत्विशेषेणाचल तयाऽधारयदित्येकान्वयः मीलितदृक्अर्धमुकुलितचक्षुर्वा ॥ ३० ॥

विशुद्धयाफलरागादिदोषरहितयाहरौनिरंतरमनोधारणयाहताशुभःनिरस्तपापःतस्यकृष्णस्येक्षयानिरीक्षणेनैवनान्येनाशुतत्क्षणंविनष्टा युधिनिमित्तव्यथाऽतएवतदितरःनिवृत्तःनिरस्तःसर्वेषामिंद्रियाणांवृत्तीनांव्यापाराणांविभ्रमोविलासोयस्यसतथोक्तः निवृत्तसर्वेंद्रियवृत्तिश्चा यंविगतभ्रमश्चायमितिवा पद्यमयंजल्पंवचनंविसृजन्रचयन्व्यर्थवचनंमुंचन्वा जनंजननमर्दयतिविनाशयतीत्युपलक्षणमेतत्मरणंचजनन मरणनाशकत्वेननित्यमुक्तिदातृत्वाज्जनार्दनस्तंतुष्टावेत्येकान्वयः ॥ ३१ ॥

ननुकिमियंस्तुतिर्मानसीवाचिकीवाइतिमतिरिति इतिशब्दोहेत्वर्थः प्रकरणार्थोवा समाप्तिवचनोवा यतएवंभगवान्सकलप्रवर्त्तकः तस्मात्तस्मिन्मतिर्मननशीलबुद्धिरुपकल्पितातद्विषयीकृता सकलशास्त्रप्रकरणेवक्ष्यमाणप्रकरणेवा समाप्तौमरणकाले। किंविशिष्टे विभूम्नि परिपूर्णे अपरिच्छेदलक्षणपूर्णत्वंदेशकालयोरप्यस्तीति अतउक्तंभगवतीति । निरवधिकैश्वर्यादिगुणवति यःकश्चिद्दृषिसत्तमोनिर्दिश्य तेइतिशंकामाभूदित्याह सात्वतपुंगवेयादवेश्वरे स्वसुखेस्वरूपानंदेउपगतेआगतेअतिनिकटवर्तिनीतिवा "निलीनोहंप्रकृतौसंसारमेतीति" श्रुतेः यस्याःसकाशाज्जीवानांसंसारप्रवाहोभवति क्वचित्सृष्टिकालेनानावताररूपैर्विहर्त्तुमहदहंकारादिजगत्स्रष्टुकामांतांप्रकृतिंश्रियंजडात्मिकांच उपेयुषिप्राप्तवतिकीदृशीमतिःवितृष्णाविषयतृष्णारहितावाहरौतृष्णायस्याःसातथावा "विःपक्षिपरमात्मनो" रित्यभिधानम् ॥ ३२ ॥

---

### क्रमसंदर्भः ।

यो योगिन इति तेषां तथैव व्यवसायमात्रं श्रीभीष्मस्य तु श्रीभगवद्दर्शनदीर्घत्वाय व्याजमय एव स इति ज्ञेयम् । वक्ष्यते च श्रीस्वा-मिभिरपि द्वितीये—स्थिरं सुखं चासनमित्यादौ देशे च काले च मनो न सज्जयेदित्यत्र देशे पुण्यक्षेत्रे काले च उत्तरायणादौ मनो न सज्जयेत् न सङ्गं प्रापयेत् । न देशकालौ योगिनः सिद्धिहेतू किन्तु योग एवेति ॥ २९ ॥ ३० ॥

तदीक्षयैवेति तत्कर्मकेक्षया तदागमनसमयादेव लब्धयेति प्रथमवृत्तमुक्तम् ॥ ३१ ॥

सात्वतपुंगवे इति धारणाविषयस्य तस्य विशेषणं न तूपलक्षणमिति ज्ञेयम् । विभूम्नि विशेषेण भूमातिशयो यस्मिन् तत्र भूम्वाक्य वद्भूमशब्देनात्र परमातिशय्येव चोच्यते । विश्रब्दस्तु तद्व्यस्तयं एव क्वचिदित्यादिना पुरुषावतारकर्तृत्व मुक्तम् ॥ ३२ ॥ ३३ ॥

---

## सुबोधिनी ।

समागतेकाले सर्वमुपसंहृतवानित्याह धर्मंप्रवदतइतिद्वाभ्याम् उत्तरायण कालस्योत्तमत्वेऽपिपूर्वं कालस्यनि कृष्टत्वात्तद्दोष संबंधे निर्दुष्टतानभवेदितितद्व्यावृत्त्यर्थं धर्मंप्रवदतइत्युक्तं योगिनामुत्तरगतेर्नियतत्वात् सूर्यमंडलमध्यस्थमार्गत्वात् उत्तरायणएवसूर्यंगंतुंशक्य ते छंदमृत्योरिति योगजधर्मेणकालस्य वशीकृतत्वात् स्वच्छंदमृत्युत्वम् ॥ २९ ॥

तस्मिन्कालेयत् कर्त्तव्यंतदाह तदोपसंहृत्येति सर्वपरित्यागेनभगवच्चिंतनंकर्त्तव्यंतन्मौनेनमनसश्चांचल्यपरिहारेणआक्रियथाचभवति तत्रशरीरक्रियाभावः पूर्वमेवासिद्धः वाङ्मियमनमाह गिरः उपसंहृत्येतिसहस्रणीः सहस्रंयोद्धावायुद्धंनवचनेनवानयतिस्वाधीनानूकरोती तिस्वधर्मोत्कर्षउक्तः मनसोविनियोगमाहविमुक्तसंगइतिविशेषेणमुक्ताः अंतर्वाह्यः संगायेनआदिपुरुषेव्यधारयादित्युक्तेमानस्यांप्रतिमायांव्य वधारणमुक्तं भवतितन्निराकरणायअलौकिकप्रकारमाहकृष्णेपुरःस्थितइति"कश्चिद्धीरः प्रत्यगात्मानमैक्षद्" तिचक्षुरंतर्नीत्वातेनद्रष्टव्यंपश्य तिइहतुविपरतिंमनश्चक्षुर्वाहिरानीयतेनभगवंतंपश्यतीति कृष्णः आविर्भूतोभगवान्वहिःस्थितत्वज्ञापनार्थवस्त्रादिपरिकरमाकारंचाहलस त्पीतपटेचतुर्भुजइतिलसत्पीततदाहोचीर्णरूपतादेवकीप्रार्थनयायत्प्राकृतंरूपंकृतंतत्परित्यागेनसहजमेवरूपंप्रदर्शितवानित्यर्थः पुरः स्थित- इतिकल्पनाक्लेशाभावः अमीलितदृगितिनिमेषादिनाव्यवधानंनिराकृतम् ॥ ३० ॥

मनसोधारणासर्वावयवस्थिता अतएवविशुद्धाअपहतपाप्मविषयत्वात्तेनैवसर्वपापक्षयः भगवदपराधजनकमपिपापमपराधेनजनितं प्रतीकाराकरणेनोपेक्षाजनितंचतत्सर्वंशुद्धसेवकभावेन निवारितंभगवतिचशुद्धभावेभगवानपिकृपयावेदनांचदूरीकृतवानित्याह तदीक्षयेति तस्यभगवतः दोषनिवर्त्तकदृष्ट्यैवगताआयुधव्यथायस्यनिवृत्ताः सर्वेंद्रियवृत्तिषुविभ्रमायस्यअनेनांतर्वहिर्दोषाभावउक्तः जनप्रकृतिसमूहं जनांप्रकृतिमर्दयतीतिजनार्दनः ॥ ३१ ॥

यावत्प्रकृतिर्नपीडितास्यात्तावत्स्वकार्यं ननिवर्तयेदितिमर्यादानुसारेणअंतेभगवतियत्कर्त्तव्यं तदत्रविनिरूप्यतेतत्रप्रथमंसर्वसमर्पणं ततोमाहात्म्यज्ञानपूर्विकाभगवतिरतिः ततआत्मसमर्पणमिति आद्यंतयोरेकैकमध्येमाहात्म्यभक्तौनवतत्रप्रथमंसर्वसमर्पणं निरूपयतिइतीति इतिशब्दः समाप्तिवाचकः तत्परमेश्वराद्विभक्तस्यअनंतकोटिजन्माभिः यत्कृतंयदस्तिवातद्विचार्यमेमतिरेवास्मदीयतावद्विषयिणीमयाकृ- तंमदीयमितिपदार्थास्तुभगवदीयाः सर्वेअतोऽस्मदीयाबुद्धिरेवभगवतिसमर्पणीया तदाह इतिमतिरितिअंतिमोच्छ्वासपर्यंतंमदीयमितिप दार्थ स्तुयास्माभिः संपादिताबुद्धिः साचभगवतिउपकल्पिताफलार्थत्वंनिवारयतिवितृष्णेति यद्यप्येवंभगवतिसमर्पणेनाकिंचित्फलंशास्त्र सिद्धंतथाप्यहमेतत्समर्पयामिममैतत्फलंभविष्यतीतिस्वयमेववितृष्णाभवति अतस्तामेवनिषेधतिभगवतिब्रह्मणिसात्वतपुंगवेयादवश्रेष्ठत्वे नाविर्भूतेविगताभूमायस्मात्अक्षरात्परस्मिन्पुरुषोत्तमस्यभगवतः कथंसात्वतपुंगवत्वं तत्राह स्वसुखमुपगते स्वपरमानंदंप्राप्तएवक्वाचित्क दाचित्स्थानविशेषे"लोकवत्तुलीलाकैवल्यम् २।१।३३॥ इतिन्यायेनविहर्त्तुंस्वस्यैवस्वभावरूपांप्रकृतिंसांख्यादिन्यायेन विश्वजननीस्वयं पिता उपगच्छति तादृशे ननुतदापिकुतस्तत्राह यद्भवप्रवाहइतियस्माद्भगवतःप्रकृतिसंवंधात्भवस्यविश्वस्यप्रवाहः वीजांकुरवत्परंपरानघटतउद्भव इत्यस्यार्थविवरणंयथासृष्ट्यर्थंतथाकरोतितथाअस्मन्मुक्त्यर्थमप्येवंकृतवानित्यर्थः ॥ ३२ ॥

---

## श्रीविश्वनाथचक्रवर्ती ।

धर्म्मं प्रवदत इत्यादि । छन्देन इच्छयैव मृत्युर्यस्य तस्य ॥ २९ ॥

युद्धे समीपस्थान् सहस्रं रथिनो नयति परिपालयतीति सहस्रणीर्भीष्मः । सहस्रिणीरिति पाठे सहस्रार्थवतीर्गिरः उपसंहृत्य अन्यतः प्रत्याहृत्य अमीलितदृगेव चक्षुषी स्पष्टम् उन्मिल्यैव व्यधारयत् आनखाशिखं प्रवेशयामास ॥ ३० ॥

तदीक्षया श्रीकृष्णकर्त्तृकेण कृपावलोकेन । विभ्रमो विविधभ्रमणमस्थैर्य्यमित्यर्थः । जन्यं स्थूलदेहं मायिकप्रपञ्चंच ॥ ३१ ॥

इति मतीत्यादि । इति ममायुःसमाप्तौ मतिर्भगवति उपकल्पिता मत्प्रभौ मदन्तकाले कृपापरवशतयैव मत्समीपमागते किञ्चिदुपा यनं दातुमुचितं तत्र सम्प्रति ममाहंतास्पदममतास्पदयोर्मध्ये समीचीनं किमप्यन्यन्नास्तीति हेतोरेषां मतिरेवोपायनत्वेन कल्पिता । ननु उपायनदायिनो लोके किञ्चिज्जिघृक्षवो दृश्यन्ते तत्राह वितृष्णा निष्कामा । भगवति षड़ैश्वर्य्यपूर्णे । किं नारायणत्वेन प्रसिद्धे । न । सात्वतपुङ्गवे यदुकुलोत्तं सत्वेन प्रसिद्धे । ननु नारायणस्यैव भगवत्त्वेन महती प्रसिद्धिश्च सार्व्वकालिकी तत्राह विभूम्नीति । विगतो भूमा यस्मात् तस्मिन् यमपेक्ष्यान्यत्र महत्त्वं नास्तीति नारायणस्याप्यवतारिणीत्यर्थः । तदपि स्वैर्यादवपांडवैरेव सह सुखं परमानंदम् उप आधिक्येन प्राप्त इतिस्वरूपलक्षणमुक्तम् । तटस्थलक्षणमाह प्रकृतिं मायामीक्षणेन महत्तत्त्वाद्युत्पादकतया उपेयुषि । यतः प्रकृते र्भवप्रवाहः सृष्टिपरम्परा तेन पुरुषादयोऽप्यस्यैवावतारा इति भावः ॥ ३२ ॥

---

## सिद्धांतप्रदीपः ।

यदोत्तरायणः कालःप्रत्युपस्थितस्तदासहस्रंजनान्नयतिभगवल्लोकंतद्धर्मोपदेशेनप्रापयतीतिसहस्रणीर्भीष्मः गिरउपसंहृत्यविरम्यपुरःस्थि तेस्वचतुर्भुजेआदिपुरुषेजगत्कारणेश्रीकृष्णेअमीलितदृगेवसौंदर्यदर्शनविच्छेदभयेनानिमेषणमप्यकुर्वन् मनोव्यधारयत् ॥ ३० ॥

विशुद्धयापुरःस्थितभगवद्विषयकधारणया हतमशुभंभगद्भावप्राप्तिप्रतिवंधकीभूतं प्रारब्धंकर्मयस्यसतथा तदीक्षयापुरःस्थितभगवत्क पादृष्ट्यागताआयुधव्यथायस्यसतथा निवृत्ताःकृष्णेतरविषयेभ्यः सर्वेन्द्रियाणांवाह्याभ्यंतराणांवृत्तयोविभ्रमोविविधोभ्रमश्चयस्यसतथा तत्रा त्मज्ञानेविरोधीभूतोभ्रमःस्वपरयोःकेवलभेदभ्रमःकेवलाभेदभ्रमःउभयोर्जडरूपत्वभ्रमः स्वरूपेणजीवात्मनिव्यापकत्वभ्रमः भगवन्मूर्त्यौमा यिकत्वादिभ्रमःभगवतिदेवतांतरसाम्यभ्रमः इत्यादिप्रकारोविविधोभ्रमस्तस्यनिवृत्तइतिदिक् एवंभूतःसन्जन्यंदेहंविसृजन्जनार्दनंश्रीकृष्णं तुष्टाव ॥ ३१ ॥

त्रिभुवनकमनं तमालवर्णं रविकरगौरवराम्बरं दधाने ।
वपुरलककुलावृताननाब्जं विजयसखे रतिरस्तु मेऽनवद्या ॥ ३३ ॥
युधि तुरगरजोविधूम्रविष्वक्कचलुलितश्रमवार्य्यलङ्कृतास्ये ।
मम निशितशरैर्विभिद्यमानत्वचि विलसत्कवचेऽस्तु कृष्ण आत्मा ॥ ३४ ॥
सपदि सखिवचो निशम्यमध्ये निजपरयोर्बलयो रथं निवेश्य ।
स्थितवति परसैनिकायुरक्ष्णा हृतवति पार्थसखे रतिर्ममास्तु ॥ ३५ ॥
व्यवहितपृतनामुखं निरीक्ष्य स्वजनबधाद्विमुखस्य दोषबुद्ध्या ।
कुमतिमहरदात्मविद्यया यश्चरणरतिः परमस्य तस्य मेऽस्तु ॥ ३६ ॥

सिद्धांतप्रदीपः ।

स्तुतिमेवाह इतीत्येकादशभिः तत्रादौश्रीकृष्णेनिष्कामभक्तिंप्रार्थयितुं ज्ञानस्थैर्य्यंप्रार्थयते इतिइयंभगवद्गुणस्वरूपादिविषयमतिर्ज्ञा नात्मिकावितृष्णानिष्कामाभगवतिश्रीकृष्णेकल्पिताप्रतिष्ठिताभवतुतत्स्वरूपगुणादियाथात्म्यंदर्शयितुं विशिनष्टि सात्वतपुंगवे सात्वतानां श्रीनारदादीनामुपास्येतदेवाहविभूम्नीति विगतोभूमायस्माद्यतोभूमानास्तितास्मिन् “भूमात्वेवविजिज्ञासितव्योयोवैभूमातत्सुखमि”तिश्रुति प्रसिद्धेः तदेवाह स्वसुखमुपगतइति स्वंस्वाधारंसुखमपिगतवति “यतोवाइमानिभूतानिजायंते” इतिश्रुतिमुपबृंहयति क्वचिद्विहर्तुंप्रकृति मुपेयुषिइतियद्भवप्रवाह इतिच क्वचित्सृष्ट्युपक्रमसमयेविहर्तुंनानाभवनलीलांकर्तुंप्रकृतिं निजामचेतनशक्तिं “मायांतुप्रकृतिंविद्यान्मायिनंतु महेश्वरमि”त्यादिश्रुतिप्रसिद्धा मुपेयुषि अधिष्ठायस्थितवतियत् यतोहेतोर्भवप्रवाहस्तास्मिन् ॥ ३२ ॥

---

भाषाटीका ।

धर्म कहते २ भीष्म जी को वही काल आकर उपस्थित होगया, जिस उत्तरायण को स्वच्छंद मृत्यु योगी वांछा किया करते हैं ॥ २९.

तव सहस्रणी (सहस्रों योधाओंके अधिपति) भीष्म ने वाणी का संहार (मौन) कर खुले नेत्रों से विमुक्त संग अपना मन लसत्पी-तपट. चतुर्भुज अपने पुरः स्थित श्रीकृष्ण में धारण किया ॥ ३० ॥

विशुद्ध धारण से जिनके समस्त अशुभ नाश होगये हैं और (तत्) भगवान् की ईक्षा (दर्शन) से जिनकी समस्त आयुधों की व्यथा शीघ्राहि गत हो गई है. समस्त इंद्रियों की वृत्तियों के विभ्रम जिनके निवृत्तहोगये हैं वह भीष्मजी जन्य (शरीर) को त्यागते ज-नार्दन की स्तुति करने लगे ॥ ३१ ॥

(भीष्मउवाच) (इति) इन धर्मादिक नाना उपायों से. वितृष्णा अपनी मति मैंने सात्वत (पुङ्गव) श्रेष्ठ विभूमा भगवान मै अर्पण की।जो भगवान स्वसुख प्राप्त हैं तथापि कर्म विहार करने कोप्रकृति मायाको स्वीकार करते है।जिस माया से यह भव प्रवाह है ३२

---

श्रीधरस्वामी ।

इदानीं श्रीकृष्णमूर्त्तिं वर्णयन् रतिं प्रार्थयते । त्रिभुवन कमनं त्रिलोकर म्यमेकमेव यत् कमनीयं तद्वपुर्दधाने रतिर्मेऽस्तु । (कथंभूतं वपुः) तमालवन्नीलो वर्णो यस्य तत् प्रातःकालीना रवेः करा इव स्वत एव गौरे प्रीति करे निर्म्मले अम्बरे यस्मिन् तत् । अलककुलैरुपर्य्योवृत माननाब्जम् यस्मिन् तत् । विजयसखे पार्थसारथौ अनवद्या अहैतुकी फलाभिसन्धिरहिता रतिरस्तु ॥ ३३ ॥

विजयसखत्वमेवानुवर्णयन् रतिं प्रार्थयते । युधि युद्धे तुरगाणां खुररजस्तुरगरजः तेन विधूम्रा धूसरास्ते च ते विष्वञ्च इतस्ततश्च लुलिताः कचाः कुन्तलास्तैर्लुलितं विकीर्णं श्रमवारि स्वेदबिंदुरूपं तेनभक्तवात्सल्यद्योतकेनालंकृतमास्यं यस्य तस्मिन् श्रीकृष्णे मम आत्मा मनोऽस्तु रमतामित्यर्थः । पुनः किम्भूते मदीयैर्निशितैस्तीक्ष्णैः शरैर्विभिद्यमाना त्वक् यस्य तस्मिन् । शरैरेव विलसत् (त्रुट्यत्) कवचं यस्य तस्मिन् ॥ ३४ ॥

किंच सपदीति । “सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत । यावदेतान्निरीक्षेऽहं योद्धु कामानवस्थितान्” इति सख्युरर्ज्जुनस्य वचो निशम्य सपदि तत्क्षणमेव स्वपरयोर्बलयोः सैन्ययोर्मध्ये स्थिते पार्थसखे ररिरस्तु। तत्र स्थित्वा कृतं सख्यं दर्शयति । परस्य दुर्योधनस्य सैनिकानामायुरक्ष्णा कालदृष्ट्या हृतवति असौ भीष्मः असौ द्रोणः असौ कर्णः इति तत्तत्प्रदर्शनव्याजेन दृष्ट्यैव सर्व्वेषामायुराकृष्या र्जुनस्य जयं कृतवति ॥ ३५ ॥

न केवलमर्जुनस्य सपत्नायुर्हरणे जयमावहत् किंत्वविद्याहरणेनापीत्याह । व्यवहिता दूरे स्थिता या पृतना तस्या मुखमिव मुखम् अग्रे स्थितान् भीष्मादीन् निरीक्ष्येत्यर्थः स्वजनवधाद्विमुखस्य निवृत्तस्य । तदुक्तं गीतासु—एवमुक्त्वार्जुनः सङ्ख्ये रथोपस्थ उपाविशत्। विसृज्य सशरं चापं शोकसंविग्नमानस—इति कुमतिमहं हन्तेत्यादि कुबुद्धिम् ॥ ३६ ॥

---

दीपनी ।

पृतना ( स्त्री ) सेना यत्र । २४३ गजा। २४३ रथाः। ७२९ अश्वाः। १२१५ पदातिकाः। एषामेकीकृतसंख्याः २४३०। इत्यमरभरतौ ३६।३७

---

श्रीवीरराघवः ।

प्रकृतंरूपमनुभूयमतिदार्ढ्यंप्रार्थयते त्रिभुवनकमनंत्रिभुवनकमनीयंत्रिभुवनसुंदरमितियावत् तद्वपुर्दधानेविजयसखेऽर्जुनसखेश्रीकृष्णेऽनवद्यानिर्दुष्टाऽनन्यप्रयोजनेतियावत्ममरतिरनुरागोऽस्तुकथंभूतंवपुस्तमालस्येववर्णोनीलोयस्य रवेःकरःकिरणसमुदायइवगौरंवरंचांवरंयस्मिन् अलककुलैःकुंतलजालैरावृतमाननाब्जंयस्यतथाभूतम् ॥ ३३ ॥

युद्धदशावस्थितमनुसन्धायप्रार्थयते युधीति कृष्णेभगवतिममात्मामनःअस्तुदृढंभवतुतिष्ठतुकथंभूतेयुधियुद्धेतुरगरजोभिरश्वशफोत्थितरजोभिर्विधूम्रैर्विधूसरैःविश्वग्विलम्बमानैःकचैरलकैःसुललितैःस्रवद्भिःश्रमवारिभिः श्रमस्वेदविंदुभिश्चालंकृतमास्यंयस्यनिशितैःशरैर्विभिद्यमानात्वग्यस्यातपएवविलसत्क्षतजेनविलसत्कवचोयस्मिंस्तत् ॥ ३४ ॥

युद्धप्रारम्भदशावस्थंरूपमनुसन्धायप्रार्थयतेसपदियुद्धप्रारम्भसमयेसख्युरर्जुनस्यवचः "सेनयोरुभयोर्मध्येरथंस्थापयमेऽच्युत यावदेतान्निरीक्षेऽहंयोद्धुकामानवस्थितान्" इत्यादिरूपंवचोनिशम्यनिजपरयोः पांडवकौरवयोर्वलयोर्मध्येरथंनिवेश्यस्थापयित्वास्थितवतिअक्ष्णैवदृष्टिमात्रेणैवपरसैनिकानांदुर्योधनादीनामायुर्हृतवति पार्थस्यार्जुनस्यसखातस्मिन्ममरतिरस्तु ॥ ३५ ॥

गीतोपनिषदुपदेशावस्थंरूपमनुसंधायप्रार्थयते व्यवहितेति व्यवहितायानातिदूरस्थायाः पृतनायाःशत्रुसेनायाः मुखंपुरोभागमवलोक्य दोषवशात्स्वजनवधाद्विमुखस्यार्जुनस्येतिविशेष्यमध्याहर्त्तव्यं कुमतिंदृष्ट्वेमंस्वजनंकृष्णेत्यादिनातेनैवाविःकृतांबंधुहत्ययापापमाशंकमानांकुमतिमात्मविद्ययागीतोपदेशेनयोपहृतवान् तस्यपरमस्यपरोमायस्मात्सपरमः सर्वाभ्यधिकस्यभगवतश्चरणयोरतिर्ममास्तु ॥ ३६ ॥

---

श्रीविजयध्वजः ।

विजयोऽर्जुनःसखायस्यसतथातस्मिन्कृष्णेममअनवद्यारागाद्यवद्यविधुराऽरतिरस्तु रतिरनवद्यानिर्दुष्टास्त्वितिवान्वयः कथंभूतेत्रिभुवनेषुकमनंकमनीयं त्रिभुवनानांकमनमिच्छायस्मिंस्तत्तथोक्तमितिवा तमालपुष्पवद्वर्णोयस्यतत्तथातमालवर्णं वरंचतत्अंबरंचवरांवरंनवस्यरवेरादित्यस्यकरःकिरणइवगौरमरुणांवरांबरंयस्यवपुषस्तत्तथोक्तं "गौरोऽरुणोसितेपीतेस्वच्छेचपरिकीर्त्यते" इत्यभिधानम् अलककुलैःकुंतलकुलैःआवृतमाच्छन्नमाननाब्जंयस्यतत्तथा एवंविधंवपुर्दधाने ॥ ३३ ॥

ममात्मामनःकृष्णेअस्त्वित्यन्वयः कथंभूते विलसच्छोभमानंकवचंयस्यसतस्मिन् विलसन्सर्पोऽनन्तःकवचंशय्यास्थानीयंयस्यसतथा तस्मिन्नितिवा अच्छेद्यत्वाभेद्यत्वेऽप्यसुरमोहनायममनिशितैःशरैर्विभिद्यमानेवत्वग्यस्यसतथोक्तस्तस्मिन् वीत्युपसर्गाद्भिद्यमानत्वगप्याभिद्यमानैवेतिज्ञातव्यम् निशितशरैरप्यविभिद्यमानत्वगितितात्पर्यार्थः विप्रियइतिवद् युद्धेतुरगाणांखुरनिपातोत्थितैरजोभिर्विशेषेणधूम्रवर्णैश्चतैर्विध्याद्भिःपरस्परमाघ्नद्भिःकचैःकेशैर्ललितैः कलुषितैःश्रमवारिभिःश्रमनिमित्तस्वेदोदविंदुभिरलंकृतमास्यंमुखंयस्यसतथोक्तस्तस्मिन् ३४

पार्थसखेकृष्णेममरतिरस्त्वित्यन्वयः "सेनयोरुभयोर्मध्येरथंस्थापयमेच्युते" तिसख्युरर्जुनस्यवचोनिशम्यसपादिवचः श्रवणानन्तरंनिजपरयोःपांडवकौरवसंबंधिवलयोःसैन्ययोर्मध्येरथंप्रवेश्यस्थितवति अक्ष्णानिरीक्षणेनपरसैन्यानामायुर्जीवलक्षणंहृतवति ॥ ३५ ॥

यः परमः वीरः स्वर्गप्राप्तुंयुद्धायव्यवस्थितयोःपृतनयोःसेनयोःमुखंभीष्मादिकंनिरीक्ष्य हत्वार्थकामांस्तुगुरूनिहैवेतिदोषबुद्ध्यानयोत्स्य इत्युक्त्वास्वजनहननाद्विमुखस्यार्जुनस्यकुमतिंदुष्टनिग्रहशिष्टपरिपालनलक्षणव्यापारबुद्धेर्विपरीतबुद्धिमशोच्यानन्वशोचस्त्वमित्यादिरूपयात्मविद्ययाऽहरत् करिष्येवचनंतवेतिदुष्टनिर्हरणेधर्मेबुद्धिंकारितवान्मेतस्यपरमस्यचरणयोःस्मरणेनज्ञानसाधनयोरवेयुवविशेषयोःरतिरस्त्वित्यन्वयः ॥ ३६ ॥

---

क्रमसन्दर्भः ।

अथ प्राक्तनं स्वापराधं तस्मिन् दैन्येन विज्ञापयन्नपि रतिमेव प्रार्थयते युधीति । मम निशितेत्यादिकं तु मायिकलीलावर्णनमेव—एवं वदन्ति राजर्षे ऋषयः के च नान्विताः इत्यादिन्यायेन वास्तवत्वविरोधात् । तथाहि स्कान्दे—असङ्गश्चाव्ययोऽभेद्योऽनिग्राह्योऽशोऽप्य एव च विद्धोऽसृगाचितो वद्ध इति विष्णुः प्रदृश्यते ॥ असुरान् मोहयन् देवः क्रीडत्येष सुरेष्वपि । मानुषान् मध्यया दृष्ट्या न मुक्तेषु कथंचनेति । श्रीभीष्मस्य युद्धसमये दैत्याविष्टत्वात् तथा भानं युक्तमेव । किन्त्वधुना दुःस्वप्नदुःखस्येव तस्य निवेदनं कृतमिति ज्ञेयम् । किञ्च तुरगेत्यादि मम निशितेत्यन्तैर्विशेषणैस्तथाप्यर्जुनसाहाय्यापरित्यागात् तस्य भक्तवात्सल्यं दर्शितम् स्वस्यापराधित्वेऽपि साम्प्रतं तदनुगृहीतत्वञ्चापितम् ॥ ३४ ॥

सपदीति । तत्राक्ष्णा आयुर्हरणेन प्रारब्धहरत्वमपि दर्शितम् ॥ ३५ ॥ ३६ ॥

---

### सुबोधिनी ।

इदानीं रतिं प्रार्थयते त्रिभुवनकमनमिति कदाचिदभेदादंतर्यामिणिस्वरूपेवारतिंप्रार्थयेदित्याशंक्याहवपुर्दधानइतियत्रप्राकृतानामपिप्रतीतिः शरीरीतितादृशएवममरतिरस्तुप्रमाणबलमपेक्ष्यकेवलंप्रमेयबलेनैवममयत्कार्यंभवति तदेवभवत्वितिकेवलंप्रतीत्यायन्मतंतदेवानुवदतिवपुर्दधानइतिविषयसौंदर्येणैवचित्तंप्रविशत्वितिरूपवर्णनंत्रिभुवनंत्रैलोक्यतदेवकमनंलोकदृष्ट्यैवसुंदरंनतुशास्त्रसंस्कारेणप्रीत्यातथाविधंतथासति बुद्ध्याफलंतदल्पंलौकिकेतुवस्तुनः शक्त्याफलंतमालवर्णमितितमालवद्वर्णोयस्यैतत्पत्तिकोनिरतिशयः सदैकाविधः तमालःवृक्षेषुनीलवर्णः अनेनवर्णेनैतज्ज्ञ्यापितंसर्वथा५रहितजनकामितरविकरगौरवरांवरमितिरविकरवतयद्गौरंवरमंवरंयस्यभगवतः सर्वमुक्त्यर्थंप्रादुर्भूतस्यपीताम्बरप्राच्छादकमितिदुष्टत्वमाशंक्यतन्निवृत्त्यर्थमाहरविकरेतिसूर्यरश्मयोघटादापतिताःप्रकाशयंत्येवनतदाच्छादकाभवंतितथापीतांबरंपरमानंदंप्रकाशयत्येवनत्वाच्छादयतियथावेदार्थंप्रकाशयत्येवगौरमीषद्रक्तपीतंनीलोवर्णोवर्णांतरेणप्रकाश्यतइतिवेदानांप्रार्थनयास्मदावेष्टितो भवान्तिष्ठतु इतिअस्त्वित्युक्तेपीतांवरत्वमापन्नाःभगवंतमाच्छाद्यतिष्ठंतीतिवररूपमवरं अनंतव्यापकताप्युक्ताअप्राकृतत्वंचरविकरैर्वागौरवरमाकाशः वपुरितिआकाशशरीरंब्रह्मेत्युक्तंभवति पूर्वविशेषणद्वयमाकाशपक्षेऽपिस्पष्टमेवअलककुलावृताननाब्जमितिअलकाःचूर्णकुंतलाःतेषांकुलैः आवृतमाननाब्जमुखकमलंयस्यअलमत्यर्थंककुलैरानंदसमूहैः आवृतंमासमंताद्वेष्टितंकरचरणादिरूपेण स्थितमाननमासमंतात्ननंसद्रूपम्अब्जसूर्यचंद्रनक्षत्रलक्ष्मा विद्युन्मेघादिरूपमानंदावयवेआकाशशरीरेब्रह्मणिदंतनेत्रभावापन्नानिसूर्यादीनिअस्येत्युक्तं भवतिवममृतंपुष्णातिसर्वेभ्यःप्रयच्छतीतिवपुः परमानन्दस्वरूपम् अलमत्यर्थंकयेषांतेब्रह्मविदः तेषांकुलैर्वातएववातैतैरावृतमग्निब्राह्मणरूपमाननम् अब्जमाननकमलंयस्यसनकादिभिर्ब्राह्मणैर्देवर्षिनारदादिभिश्चपत्रेषुस्थितैः आवृतंकर्णिकारूपमासनमित्युक्तंभवतिअब्जपदेनचसूर्यादिवेष्टनसहितत्वलक्ष्यतेएतादृशंवपुः दधानेतादृशेऽपिभक्तवत्सलइतिविजयसखेसख्यपर्यंतंदत्तवानितिविजयोऽर्जुनः विशिष्टाजयोयेषांमंतःकरणादिजेतारःतेसखायोयस्यतेषांवासखातत्ररतिः प्रीतिः अनवद्याअलौकिकीपरमाप्रीतिरलौकिकासर्वदुर्लभाभगवदेकनिष्ठातत्त्वएवभवतीतिनोत्तरत्रविरोधः ॥ ३३ ॥

एवंसत्त्वमिश्रसत्त्वावस्थाउक्तारजोमिश्ररजोवस्थामाहयुधीतिसर्वावस्थासुरतिः प्रार्थ्यते युद्धेतुरगाणामश्वानांखुराग्रविक्षिप्तरजोभिः विशेषेणधूम्राःधूसरवर्णाःविष्वक्परितोयेकचाःतैःलुलितंयच्छ्रमवारितेनालंकृतमास्यंयस्यनीलमुखाब्जेमुक्ताफलसदृशाबिंदवःशोभातिशयं कुर्वंतिसाभीष्मस्यत्वक्चर्मादिकयुद्धविशेषणंवाराजसराजसावस्थायाः शांभवसाअथवायुद्धार्थमिंद्रियादिभिः सहतुरगाणांवेदसूर्यादीनांवायद्रजःकामःरजोगुणोवाविधूम्राविशेषणधूसराःयेसकामाःकालवशाद्वासकामाः कालपरिच्छेदकाह्यग्न्यादयः अग्निर्वद्धित्यादिश्रुतिभिः तेषांतुरगत्वंवेदानांचाग्निपुत्रदाहादातेचतेविष्वक्चाश्वब्रह्मविदः सूर्यादिमार्गगामिनःभिन्नावातदातेषांचसमुच्चयः इतरेतरयोगोवातेनलुलिताःमिलिताःऐक्यभावंवाप्राप्ताः तेचतेश्रमवार्यलंकृताश्चगंगाजलपूताःब्रह्मशिवादयः तेऽपिआननंयस्येतिआसमंताद्रूपेवाअनेनमहासामर्थ्यंसूचितंकालरूपत्वंचकिंचमेममअहंकारविशेषेणयानिशातामिताः अहंकारेणाज्ञानंप्राप्ताइतियावत्तेचतेशराश्चपरभेदकाः तैर्विशेषेणाभिद्यमानात्वचःछंदांसियस्येतियस्माद्वा पाखंडप्रवृत्तौकलौवासंजातेगत्यंतराभवात् भगवतश्चतद्दोषाभावेहेतुः विशेषणलसत्कवचंधर्मादित्रयंयस्यएतादृशेकृष्णेआत्माअंतःकरणंमेऽस्तुभक्तिर्हि अतःकरणसाध्याआत्मसाध्यावातदुभयंभगवतिचेत्तदाभक्तिस्तत्रभवति अतः पूर्वश्लोकार्थेअयंहेतुः ॥ ३४ ॥

तृतीयावस्थामाह सपदीति सपदितत्क्षणमेव सखिवचोऽर्जुनस्यवचः "सेनयोरुभयोर्मध्येरथंस्थापयमेऽच्युते"ति निजपरयोः सेनयोर्मध्ये पक्षपातो ऽन्यार्थेऽभ्यघातनंचतृतीयोगुणः परसैनिकानामायुश्च अक्ष्णाकालदृष्ट्या पृथायाः पुत्रस्यचसख्यौपूर्ववन्मतिरस्तु ॥ ३५ ॥

सत्त्वमिश्ररजोवस्थामाह व्यवहितेति व्यवहितदूरेस्थिते येपृतनाविशेषेण अवहिताश्चेतिवामुखमाग्रिमभागः तत्रबांधवाग्रवतिष्ठंतितद्वधव्यतिरेकेणन साधारणवधोऽपिसंभवति अतःस्वजनवधमकृत्वानिवृत्तः परहिंसादोषइति नापितेनक्षौरवदत्रसमाधानम् भारायमाणाःक्षत्रियाःश्मश्र्वादिरूपाः अर्जुनश्चनापितरूपः आत्मविद्यास्वस्यविद्याममैवाह्रियतंममर्चाह तंतेमयिजडांशएवदूरी क्रियतेमुक्तिदानार्थमिति तस्मादेवंविधंनदोषः अतएवगुरुत्वाच्चरणरतिंप्रार्थयते परोमीयतेऽनेनेतिपरमः तस्येतिसएवपरः तदवस्थांप्राप्तस्येतिवा ॥ ३६ ॥

---

### श्रीविश्वनाथचक्रवर्त्ती ।

ननु इति मतिरुपकल्पितेत्युक्ता या सा किमाकारा मतिस्तत्राह त्रिभुवनेति । विजयस्य अर्जुनस्य सख्यौ ममानवद्या फलाभिसंधानरहिता रतिः प्रेमास्तु । कीदृशे त्रिभुवनस्य ऊर्ध्वाधोमध्यलोकस्थजनसमुदायस्य कमनमभिलाषो यत्र तद्वपुर्दधाने । रवेः करैर्गौरवरं अतिगौरीकृतं अम्बरं यत्र । तत् अर्जुनरथोपरिस्थितस्य कृष्णस्य पीतांबरद्वयं सूर्यकिरणसम्पर्कादतिचाकचिक्यवत्त्वेन तदानीमतिपीतं मया दृष्टं तेन पार्थसारथित्वेनोपलब्धमहासौन्दर्ये कृष्णे रति प्रार्थनामयी मतिर्मयातस्मिन्नेवोपकल्पितेति भावः । अत्र चाग्रिमेष्वपि श्लोकेषु साक्षाद्वर्त्तिन्यपि भगवति प्रार्थनायां युष्मत्पदप्रयोगाभावः आस्वादितचरं सांग्रामिकवीररसावेशमये तन्माधुर्य्ये एव चित्तस्यासक्तिं बोधयति ॥ ३३ ॥

अलककुलैरावृतमाननाब्जं यदुक्तं तन्माधुर्यमेव त्यक्तुमसमर्थः पुनरपिविशिष्यास्वादयति युधीति । तुरगरज इति सुन्दरे किमसुन्दरमिति न्यायेन । विष्वक्च इतस्ततश्चलन्तः कचा इति आवेगसूचकम् । श्रमवारीति भक्तवात्सल्यद्योतकम् निशितैस्तीक्ष्णैर्विभिद्यमानत्वचीति कन्दर्परसाविष्टस्य पुंसः प्रगल्भकान्तादन्ताघातैः सुखमेवेतिवद्युद्धरसाविष्टस्य महावीरस्य कृष्णस्य मद्बलसूचकशराघातैः सुखमेवेति । नात्र मम युद्धरसोन्मत्तस्यापि प्रेमशून्यत्वं मन्तव्यम् । नहि स्वप्राणकोट्याधिके प्रेयसि सुरतसमरौद्धत्यकृतनिर्भरनखरदशनाघाता वनिता प्रेमशून्या कथ्यत इति भावः । अत्र तु विभिद्यमानत्वचि नतु विभिन्नत्वचि यतो विलसद्विराजमानं कवचं यस्य तस्मिन्निति ईषद्भेदमात्रमुक्तम् । आत्मा मनः ॥ ३४

सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत । यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितानिति सख्युरर्जुनस्य वचः । किञ्च सपदीति । परस्य दुर्योधनस्य सैनिकानां आयुरक्ष्णा असौ भीष्मः असौ द्रोणः असौ कर्ण इति तत्तत्प्रदर्शनव्याजेन दृष्ट्या एव हृतवति तेन च प्रारब्धं हृतत्वमपि दर्शितम् यदिह निरीक्ष्य गता गताः सरूपमिति तेषां मोक्षोक्तेः ॥ ३५ ॥

स्वनिगममपहाय मत्प्रतिज्ञामृतमधिकर्त्तुमवप्लुतो रथस्थः ।
धृतरथचरणोऽभ्ययाच्चलद्गुर्हरिरिव हन्तुमिभं गतोत्तरीयः ॥ ३७ ॥
शितविशिखहतो विशीर्णदंशः क्षतजपरिप्लुत आततायिनो मे ।
प्रसभमभिससार मद्वधार्थं स भवतु मे भगवान् गतिर्मुकुन्दः ॥ ३८ ॥
विजयरथकुटुम्ब आत्ततोत्रे धृतहयरश्मिनि तच्छ्रियेक्षणीये ।
भगवति रतिरस्तु मे मुमूर्षोर्यमिह निरीक्ष्य हता गताः स्वरूपम् ॥ ३९ ॥
ललितगतिविलासवल्गुहासप्रणयनिरीक्षणकल्पितोरुमानाः ।
कृतमनुकृतवत्य उन्मदांधाः प्रकृतिमगन् किल यस्य गोपवध्वः ॥ ४० ॥

श्रीविश्वनाथचक्रवर्त्ती ।

ततश्च व्यवहिता दूरे स्थिता या पृतना सेना तस्या मुखमिव मुखम् अग्रे स्थितान् भीष्मादीन्निरीक्ष्येत्यर्थः, स्वजनवधाद्विमुखस्येति यदुक्तम् "एवमुक्त्वार्जुनः संख्ये रथोपस्थ उपाविशत् । विसृज्य सशरं चापं शोकसंविग्नमानस" इति कुमतिं सांप्रतिकीं युधिष्ठिरस्येव तदानीन्तनीमर्जुनस्यापि स्वयं भगवतैवोत्थापितां तस्य नित्यपार्षदत्वनरावतारत्वाभ्यां कुमतेरसम्भवात् जगदुद्धारकस्वतत्त्वज्ञापकश्रीगीताशास्त्रमाविर्भावयितुमिति ज्ञेयम् । आत्मविद्यया स्वनिष्ठज्ञानेन ॥ ३६ ॥

---

सिद्धांतप्रदीपः ।

अधुनाश्रीमूर्तिंवर्णयन् भक्तिंप्रार्थयते विजयसखेऽर्जुनसखेश्रीकृष्णे अनवद्याश्रीकृष्णेतराविषयप्रयोजनरूपदोषशून्या मेरतिरनुरक्तिरस्तु कथंभूतेत्रिभुवनकमनेत्रिभुवनेषुऊर्ध्वाधोमध्यलोकेषु कमनंकमनीयमतिसुंदरमतमालवर्णंतमालस्येवनीलो वर्णोयस्यतत्रवेः कराः किरणाइवगौरेश्रेष्ठेचांवरेयस्मिन् अलककुलैः कुंतलकलापैरावृतमाननाब्जं यस्यतदप्राव्रतंवपुर्दधाने ॥ ३३ ॥

युधिसंग्रामेतुरगशफोत्थितरजोभिर्विधूम्राविधूसराः रथगतिवशाद्विष्वंचः सर्वतश्चलंतः कचाः कुंतलास्तैर्लुलितानिविकीर्णानिश्रमजातानिविंदुभूतानिभक्तवात्सल्यसूचकानिवारीणितैरलंकृतमास्यंयस्यतस्मिन् गिरीनपिभेत्तुंशक्तानांमहारथानांनिशितैः शरैः विभिदि विगतभेदे तत्रहेतुगर्भविशेषणम् अमानत्वचि वेदेतरप्रमाणाविषयाविग्रहे त्वक्शब्दस्यविग्रहोपलक्षणत्वात् शरवैयर्थ्यकैमुतिकन्यायेनदर्शयति विलसत्कवचेइति अखंडतयाविलसत् कवचंयस्यतस्मिन्श्रीकृष्णेममआत्मासमर्पितोऽस्तु ॥ ३४ ॥

"सेनयोरुभयोर्मध्येरथंस्थापयमेऽच्युते"ति सखिवचांनिशम्यसपदितत्क्षणमेव पांडवकौरवसैन्ययोर्मध्येरथंनिवेश्यास्थितवतिकौरवसैनिकानामायुः आयुषोपलक्षणेनपुण्यकीर्त्यादिकंसर्वमक्ष्णैवहृतवान् अर्जुनसखेममरतिरस्तु ॥ ३५ ॥

व्यवहितायाः किंचिद्व्यवधानेनस्थितायाः पृतनायामुखंसेनापतित्वेनाचार्यत्वादिनाऽग्रभागंभीष्मद्रोणादिसमूहंनिरीक्ष्यस्वजनवधाद्विमुखस्यनयोत्स्येस्वजनंकृष्णेत्याद्युक्त्वानिवृत्तस्यार्जुनस्यकुमतिंस्वधर्मत्यागस्वतंत्रकर्तृत्वदेहात्मबुद्धित्वादिविषयामात्मविद्यया श्रीमुखगीतोपदेशेनाहरत् यस्तस्यचरणयोर्मेरतिरस्तु ॥ ३६ ॥

---

भाषा टीका ।

त्रिभुवन कमनीय ( मनोहर ) तमाल वर्ण रविकर गौर वर अंबर धारी वपुधर अलक कुलावृत्त मुख पद्म विजय सखा भगवान् में यह मेरी निर्दोष रति हो ॥ ३३ ॥

युद्ध में घोड़ाओं की रज से धूम्र विखरे कुटिल केशों से शोभित श्रम जल कण से अलंकृत मुख मेरे निशित बाणों से भिद्यमान त्वक् विलसित कवच कृष्ण मैं मेरा मनहो ॥ ३४ ॥

शीघ्रही अपने सखा (अर्जुन) का वचन सुन कर अपनी और पर (कौरवों की) सेना के मध्य में रथको लेजाकर जो स्थित थे, और अपनी काल दृष्टि सेही जिन्हों ने पर सैनिकों की आयु को हर लिया था उन पार्थ सारथी मैं मेरी रति हो ॥ ३५ ॥

दूरस्थित सेना मुखको देख कर स्वजनों के वधमें दोषजानकर स्वजन वधसे विमुख अर्जुनकी कुमतिको जिन्होंने आत्म विद्या उपदेश कर हरण किया उन्ही परम पुरुष के चरणों में मेरीरति हो ॥ ३६ ॥

---

श्रीधरस्वामी ।

मम तु महान्तमनुग्रहं कृतवानित्याह द्वाभ्याम् । स्वनिगमम् अशस्त्र एवाहं साहाय्यमात्रं करिष्यामीत्येवम्भूतां स्वप्रतिज्ञां हित्वा श्रीकृष्णं शस्त्रं ग्राहयिष्यामीति एवंरूपां मत्प्रतिज्ञाम् ऋतं सत्यं यथा भवति तथा अधि अधिकां कर्त्तुं यो रथस्थः सन्नवप्लुतः सहसैवावतीर्णः सन् अभ्ययात् अभिमुखमधावत् । इभं हन्तुं हरिः सिंह इव किम्भूतः धृतो रथचरणश्चक्रं येन सः । तदा च संरम्भेण मानुषनाट्यविस्मृतेरुदरस्थसर्वभुवनभारेण प्रतिपदं चलद्गुः चलन्ती गौः पृथ्वी यस्मात् । तेनैव संरम्भेण पथि गतं पतितमुत्तरीयं वस्त्रं यस्य । स मुकुंदो मे गतिर्भवत्वित्युत्तरेणान्वयः ३७ ॥

श्रीधरस्वामी ।

एवं यदाऽभ्ययात्तदा स्मयमानस्याततायिनो धन्विनो मे निशितैस्तीक्ष्णैर्विशिखैर्हतः अतो विशीर्णदंशः विध्वस्तकवचः क्षतजेन रुधिरेण परिप्लुतः व्याप्तः सन् प्रसभं बलादूवारयन्तमर्जुनमभ्यतिक्रम्यमद्वधार्थमभिससार अभिजगाम । एवं यो लोकदृष्ट्यार्जुनपक्षपातीव लक्षितः वस्तुतस्तु ममैवानुग्रहं कृतवान् ( यन्मद्भक्तेनोक्तं वचो मा मृषास्तु इति ) स भगवान् मे मम गतिर्भवत्वित्यर्थः ॥ ३८ ॥

तदेवमन्यायैरपि भृत्यरक्षाव्यग्रे श्रीकृष्णे रतिमाशास्ते विजयोऽर्जुनः तस्य रथ एव कुटुंबं अकृत्यैरपि रक्षणीयो यस्य तस्मिन् । आत्तं तोत्रं प्रतोदो येन तस्मिन् । धृताश्च ये हयानां रश्मयः प्रग्रहास्ते सन्ति यस्य तस्मिन् व्रीह्यादिभ्यश्चेत्यनकारांतादपि रश्मिशब्दादिनिः तच्छ्रिया सारथ्यश्रियेक्षणीये शोभमाने । मुमूर्षोर्मर्तुमिच्छोः । ननु अन्यायवर्त्तिनि किमिति रतिः प्रार्थ्यते अत आह भगवति अचिंत्यैश्वर्ये तदाह इह युद्धे हताः सर्वे यं निरीक्ष्य सरूपं तत्समानरूपं गताः प्राप्ता इति दिव्यदृष्ट्या पश्यन्नाह ॥ ३९ ॥

क्षात्त्रधर्मेण युध्यमानास्तत्सरूपं प्रापुरित्येतन्न चित्रं यत उन्मदान्धा अपि प्रापुरित्याह ललितगतिश्च विलासश्च रासादिः मंजु गत्यादिभिरात्मीयैस्तदीयैर्वा कलिपत उरुर्महान् मानः पूजा यासां ताः । अत उत्कटेन मदेन अन्धाः । अतएव तदेकचित्तत्वेन तस्य कृतं कर्म गोवर्द्धनोद्धारणादिकम् अनुकृतवत्यो गोपवध्वः यस्य प्रकृतिं स्वरूपमगन् अगमन् मकारलोपस्त्वार्षः । किल प्रसिद्धम् । तस्मिन्नेव रतिरस्त्विति पूर्वेणैवान्वयः ॥ ४० ॥

---

दीपनी ।

अनुग्रहं मद्वचःसत्यत्वापादनलक्षणम् ॥ ३८ ॥

व्रीह्यादिभ्यश्चेति सूत्रं पाणिनीयव्याकरणस्य पंचमाध्यायीयद्वितीयपादे षोड़षाधिकशततमम् । व्रीह्यादिगणो यथा—व्रीहि । माया । शाला । शिखा । माला । मेखला । केका । अष्टका । पताका । चर्मन् । कर्मन् । वर्मन् । दंष्ट्रा । संज्ञा । वड़वा । कुमारी । नौ । वीणा । बलाका । यवषद् । नौ । कुमारी । शीर्षान्नञः इति । यद्यप्यत्र रश्मिशब्दो न दृश्यते तथाप्याकृतिगणं मत्वा ऊहनीयः । यद्वा लेखक प्रमादात् रश्मिशब्दस्यादर्शनमनुमेयं सकलकोविदगणश्रद्धास्पदाचार्यश्रीमत्श्रीधरस्वामिना व्रीह्यादिगणे तत्पाठस्याङ्गीकारादिति ३९–४९

---

श्रीवीरराघवः ।

जिघांसयास्वस्योपर्यांधावनदशायामवस्थितंरूपमनुसंदधानस्तमेवतत्प्राप्त्युपायमध्यवस्यति स्वनिगममित्यादिश्लोकद्वयमेकान्वयम् आततायिनः प्रहरतोमेममतावाच्छितैर्विशिखैर्बाणैर्हतस्ताडितोऽतएवविशीर्णःशिथिलोदंशः कवचोयस्यसः क्षतजेनरुधिरेणपरिप्लुतः व्याप्त गात्रः सन् स्वनिगममायुधंनगृह्णामीतिस्वप्रतिज्ञामपहायायुधंग्राहयामीत्येवं विधांमत्प्रतिज्ञामृतांसत्यांकर्त्तुंस्वप्रतिज्ञामुपेक्ष्यभक्तप्रतिज्ञामेव यथार्थांकर्त्तुमित्यर्थः रथस्थस्ततोऽवप्लुतः धृतः रथचरणः सुदर्शनाख्यंचक्रंयेन चलंतीगौर्भूर्मियस्माद्भूमिंचालयन् गतंगच्छदुत्तरीयंयस्य सःइभंगजंहंतुंहरिः सिंहइवबलान्मद्वधार्थमभिससारमदभिमुखमागतवान्समुकुंदोभगवान्ममगतिःस्वप्राप्त्युपायोभवतु ॥ ३७ । ३८ ॥

सारथ्यदशावस्थितंरूपमनुसन्धायास्मिन्रतिदार्ढ्यंप्रार्थयतेविजयेति विजयस्यार्जुनस्यरथःकुटुम्बः कुटुम्बवद्रक्षणायोग्योयस्यआत्ततोत्रे वेत्रंयेनधृताहयानामश्वानांरश्मयः प्रग्रहायेनतास्मिन् तच्छ्रियातोत्रहयरश्मिग्रहणजशोभयाईक्षणीयेऽतीवेक्षितुमर्हेचभगवतिमुमूर्षोर्मर्त्तुमुद्यत स्यममरतिरस्तु इहयुद्धेयंनिरीक्ष्ययेहतास्तेचस्वरूपंस्वाभाविकंरूपमपहतपाप्मत्वादिगुणाष्टकविशिष्टंरूपंमुक्तिमितियावत् गताःप्राप्ताःत स्मिन्भगवतीत्यन्वयः सरूपमितिपाठेसमानरूपंसाधर्म्यमितियावत् ॥ ३९ ॥

नकेवलंतन्निरीक्ष्ययुद्धेहताएवस्वरूपं गताअपितुतत्कामेनतमनुवर्त्तमानाअपीत्याशयेनाहललितेति ललितयासुंदरयागत्याविलासेनवल्गु- हासेनसुंदरतरहासेनमन्दस्मितेनप्रणाय निरीक्षणेनचकलिपतमुर्वधिकंमानंबहुमानंयासांतागोपवध्वः उन्मदेनोद्रिक्त कामेनांधाःस्वपर विवेकरहिताःकृष्णमात्मानंमन्यमानाइत्यर्थः अतएवभगवत्कृतंभगवतश्चेष्टितम्पूतनानिरासादिकमितियावत् अनुकृतवत्यःअनुकुर्वत्यःसत्यः एतश्चस्फुटीभविष्यतियस्यप्रकृतिंस्वभावंसाधर्म्यमगमन्किलेतिप्रसिद्धिर्द्योत्यतेतस्मिन्भगवतिरतिरस्त्वितिपूर्वेणान्वयः ॥ ४० ॥

---

श्रीविजयध्वजः ।

अथयुद्धेआयुधंनग्रहीष्यामीतिस्वनियमंप्रतिज्ञालक्षणंविहाययोभक्तानुकंपी आयुधंग्राहयिष्यामीतिमत्प्रतिज्ञामृतमधिसत्यंस्थितांकर्त्तुं धृतरथचरणः उद्धृतसुदर्शनचक्रःरथस्थोरथादवप्लुतोऽवतीर्णःगतोत्तरीयवासाः श्लथितोत्तरीयवासाः हरिः सिंहःइभंगजमिवबलाग्रेउभ योः सेनयोःपुरतोमांहंतुमभ्ययात् ॥ ३७ ॥

यश्चाततायिनोमेनिशितैस्तेजितैर्विशिखैर्बाणैर्हतोविद्धोविशीर्णदंशः खंडितकवचः क्षतजेनरुधिरेणपरिप्लुतः स्नातइव प्रसभंरथा वतरभीष्मंनप्रतिहरेत्यर्जुनवाक्यमनादृत्यबलात्कारात् ममवधार्थमभिससार समुकुंदोभगवान्ममगतिर्भवत्वितिश्लोकान्वयः ॥ ३८ ॥

इहयुद्धेयंनिरीक्ष्यहताःस्वरूपंवैष्णवंधामगताः मुमूर्षोर्म्रियमाणस्यमेतस्मिन्भगवतिरतिरस्त्वित्यन्वयः कथंभूते विजयस्यअर्जुनस्यरथएव कुटुंबंरक्षणीयवर्गोयस्यसतथातस्मिन् आत्ततोत्रेगृहीतप्रतोदे धृताहयरश्मयःकविकामुखरज्जवोयेनसतथा जितश्रमइतिवाप्रधानोनिर्दे शःजितश्रमइतिकृष्णविशेषणंवा स्वरूपंमूलरूपंवा ॥ ३९ ॥

## श्रीविजयध्वजः ।

यस्यललितानिगतिविलासादीनितथोक्तानि ललितगतिश्चविलासश्चवल्गुहासः मंदस्मितंचप्रणयेननिरीक्षणंचतथोक्तानि तैःकल्पित मुरुपृथुमानंयासांताःतथोक्ताः ललितगत्यादिभिःकृष्णोकल्पितंसमर्पितमुरुमानं महापूजायाभिस्तास्तथोक्ताइतिवा अतएवउत्कृष्टेनमदेनांधाः कृतंपूतनावकादिपराक्रममनुकृतवत्यः कृष्णायमानत्वेनानुकुर्वाणाः गोपवध्वःगोपस्त्रियः यस्यप्रकृतिंजडशरीरंविहायस्वभावाविर्भावलक्ष णंमोक्षमगुःकिलतस्मिन्कृष्णेरतिरस्त्वितिपूर्वेणान्वयः ॥ ४० ॥

---

## क्रमसंदर्भः ।

स्वनिगमेति युग्मकम् । ऋतमिति ऋतरूपामित्यर्थः । ऋतञ्च सूनृता वाणीति भगवदुक्तावजहल्लिंगत्वश्रवणात् । चलद्गुत्वं संरम्भेण किंचिद्भावाविष्कारात् ( किंचिद्भावाविष्कारात् ) ॥ ३७ ॥ ३८ ॥

विजयेति युग्मकम् मर्यादातिक्रमेऽप्यदोषाय सामर्थ्यमाह भगवतीति । यथा रुद्रोऽब्धिजं विषमितिन्यायात् तदतिक्रमे च स्वाभाविकं कारुण्यमेव कारणमिति दर्शयति यमिहेति । अतोऽस्मिन्नेव रतिर्ममास्तु ॥ ३९ ॥

तत् स्वभावमहिम्नः सारूप्यप्रापणत्वं नाम कियानुत्कर्षः यत एतावतोऽपि प्रेम्णा जनकत्वं दृश्यते इत्याह ललितेति । अत्रकृतानुकरणं नाम लीलाख्यो नाथिकानुभावः । तदुक्तम् प्रियानुकरणं लीलेति । प्रकृतिं स्वामवष्टभ्येति न्यायात् संसिद्धिप्रकृती त्विमे स्वरूपञ्च स्वभावश्चेत्याद्यमरकोषाच्च प्रकृतिं स्वभावम् । तादृशः प्रेमावेशो जातः येन तत् स्वभावनिजस्वभावयोरैक्यमेव तासु जातमित्यर्थः । यथोज्वलनीलमणौ महाभावोदाहरणम्—राधाया भवतश्च चित्तजतुनी स्वेदैर्विलाप्य क्रमात् युञ्जन्नद्रिनिकुञ्जकुञ्जरपते निर्धूतभेदभ्रमम् । चित्राय स्वयमन्वरञ्जयदिह ब्रह्मांडहर्म्योदरे भूयोभिर्नवरागहिंगुलभरैः शृंगारकारुः कृतीति ॥ ४० ॥

---

## सुबोधिनी ।

तमोमिश्ररजोवस्थामाहस्वनिगममपहायेति स्वस्यनिगमः प्रतिज्ञाशस्त्रसंन्यासः दंतवक्त्रेसभ्रातरिहतेभगवताशस्त्रसंन्यासः कृतः तत्पुनस्तृतीयदिनयुद्धेनवमेचभीष्मवधार्थं चक्रंगृहीतंयुद्धागमनसमयेचप्रतिज्ञाकृता अयुद्धचमानोऽहमेकतइतिमयाचप्रतिज्ञातं सर्वथाशस्त्रंग्राहयिष्यामीतितत्रमत्प्रतिज्ञामृतं कर्तुंरथस्थएवसन्नवप्लुतः अधिकाचप्रतिज्ञाकृता शस्त्रमेवगृहीतं नतुमारितवानित्यर्थः रथस्यैवचक्रेसुदर्शनावेशः भगवतः प्रतिज्ञात्यागेभूमेः कंपोजातः तदाहचलद्गुरितिचलंतीगौर्भूमिर्यस्यदृष्टांतेनदोषा भावमाह यथाहरिः सिंह इभमिव "यस्य ब्रह्मचक्षत्रं चउभेभवतओदनमि"तिश्रुतेः सायुज्यदानार्थंभीष्ममंतः प्रवेशयितुभगवान्प्रवृत्तः तावताउत्तरीयंपतितम्उपरिआच्छादनार्थमर्जुनोरक्षितः सभूमावागत्यपतितः अतोवधोनजातइतिउत्तरीयाभावेचभोजनं निषिद्धंतदाहिभीष्मोऽहंकारयुक्तः अतस्तस्यज्ञानस्फूर्त्यभावात् तदानमारितइतिभावः अत्ररतिप्रार्थनाभावोभगवतएवरतिकार्यकर्तृत्वात् ॥ ३७ ॥

रजोमिश्रतमोऽवस्थामाहशितेति नवमदिनस्येदंरूपं पूर्वश्लोकेतुतृतीयदिनस्येतिनपुनरुक्तिः शितास्तीक्ष्णाः विगतशिखाः पाषंडिनोयेन विशीर्णदंशः क्षतजपरिप्लुतः विशीर्णादंशायस्मिन् कालेवर्षव्यतिरिक्तकालेमासाष्टकं तत्रक्षताजातायेषांतेक्षतजाताः परिव्राजिनः क्षत्रियांस्तमावातैः परिव्याप्तः अधर्मनिवारको धर्मकइत्युक्तंभवति अतएवआततायिनंपापिष्ठंमांहंतुं प्रसभमभिससारअयुध्यमानयुद्धात् पापिनमपियोमोचयितुंप्रवृत्तः किंतुमुक्तिदानार्थमित्याह मुकुंदइति ॥ ३८ ॥

सत्वमिश्रतमोऽवस्थामाहविजयरथकुटुम्बइति अर्जुनस्यरथः सर्वथापरिपाल्यः अतएवतस्यरथःकुटुम्बंयस्यविविधोजयोविगतोवाजयोयस्येतिविजयः अर्जुनःजयद्रथवधेहियुद्धे अशक्तइवजातः तदास्वयंतोत्रंगृहीत्वाअश्वानांरश्मींश्चगृहीत्वाउत्थितः सन्कर्णादीनामस्त्राणि रथचालनेनैवदूरीकुर्वन् तदानींतनश्रियाईक्षणीयः अतिसुन्दरः तादृशेमुमूर्षोरेवमतिरस्तुनतुपूर्वविस्मरणानंतरंतैः किमुतन्यायेनफलमाह यमिहनिरीक्ष्येतिइहअस्मिन्नवसरेअंतकालेयंदृष्ट्वैवमुक्ताः तत्रांतकालेस्नेहसतिकिंवक्तव्यमित्यर्थः ॥ ३९ ॥

तमोमिश्रसत्वावस्थामाहललितेतिललितायागतिः तत्रयोविलासःहंसगजगतिवत्पदचालनंमनोहरश्चहासः स्नेहपूर्वकंचनिरीक्षणंतमोरजःसत्वभावकार्याणितैःकल्पितः उरुअधिकः भगवन्माहात्म्यमध्यविचार्यप्रवृत्तोम.नोयासांकिंचनकेवलमंतः स्थितएवदोषः किंतुत्रिदोषकार्यमपिवाहिर्वहिः कुर्वंतीत्याहकृतमनुकृतवत्यइतिकृतंभगवच्चरित्रंपूतनापयः पानादितदनुकुर्वंतीतिएवमपिसतिलौकिकमपिज्ञानंनिवृत्तमित्याह उन्मदांधाइति उद्गतेनमदेनभगवदारोहणार्थमपियतंतइत्यंधाः सर्वथाअचिकित्स्यत्रिदोषाः तत्रापिगोपवध्वःजात्यास्वभावेनचदुष्टाः ताअपियस्यसम्बंधात् प्रकृतिस्वरूपमगमन्नात्रसंदेहःकर्त्तव्यःकिलेतिप्रसिद्धे ॥ ४० ॥

---

## श्रीविश्वनाथचक्रवर्त्ती ।

स्वस्मादपि स्वभक्तमुत्कर्षयतीति यच्छ्रुतं तन्मया स्वस्मिन्नेव साक्षाद्दृष्टमित्याह द्वाभ्याम् । स्वनिगमम् अशस्त्र एवाहं साहाय्यमात्रं करिष्यामीति स्वप्रतिज्ञां हित्वा श्रीकृष्ण शस्त्रं ग्राहयिष्यामीत्येवंरूपां मत्प्रतिज्ञाम् ऋतं सत्यं यथा भवति तथा अधि अधिकां कर्तुं रथस्थः सन्नेवावप्लुतः इत्यतिलाघवेनावप्लुतिमतस्तस्य रथाङ्घ्रिश्लेषः केनापि न लक्षित इति भावः अलक्षितप्रकाशेनैकेन रथरक्षार्थं स्थित एवेति वा । ऋतमिति सा लीला एव स्वाभाविक्येव नतु मदनुरोधेनैव कृतेति भावः । धृतो रथचरणश्चक्रं येन सः । अभ्ययात् अभिमुखमधावत् । धावनेनातिसंरंभेणाविष्कृतनिजमहाबलत्वाच्चलन्ती गौःपृथ्वी यस्मात् सः । गतं पतितमुत्तरीयं यस्य सः । अति संरम्भेणोत्तरीयं गाच्चात् पतितम् अस्ति नास्ति वेत्यपि नानुसन्दधान इत्यर्थः । अत्र कृष्णेन स्वभक्तवात्सल्यगुणस्य दुस्त्यजत्वात् अर्जुनस्य युद्धासामर्थ्ये

श्रीविश्वनाथचक्रवर्त्ती।

सति स्वप्रतिज्ञामपि त्यक्त्वा स्वयमेवार्जुनस्य रक्षार्थं शस्त्रेण योत्स्यते एव तथार्जुनस्यासामर्थ्यं प्रापणमन्यैर्दुःशकमित्यतः क्षणमर्जुनं पराभूयास्य युद्धं भक्तवात्सल्यद्योतकं द्रक्ष्यामीति भीष्मस्य स्वमनोरथसिद्ध्यर्थैव प्रतिज्ञेत्यतः स्वप्रतिज्ञाभङ्गेनार्जुने स्वप्रेमाणं तं दर्शयित्वा भीष्मं प्रमोद्य तस्योत्कर्षं च लोके विख्यापयामासेति तत्त्वम् ॥ ३७ ॥

किंच यदैव रथाद्भूमाववप्लु तस्तदैव क्षतजैः रुधिरैः परिप्लुतः सांग्रामिकरुधिरनद्या विन्दुव्याप्तः । ननु कवचस्य विद्यमानत्वात् कथं तथात्वं तत्राह । मम शितैर्विशिखैर्हतस्तस्य संरम्भसुखवर्द्धनार्थं तदपि मया हन्यते स्मैवेतिभावः । यतो विशीर्णकवचः प्लवनात् प्रागेवाभवदित्यर्थः । प्रसभं वलात् वारयन्तमर्जुनमप्यतिक्रम्य मद्वधार्थम् अद्य स्वहस्तेनैव भीष्मं वधिष्यामीत्यभिप्रायेणेत्यर्थः । अभिससारेत्यत्राभिशब्देनाभिसरंतं नायकमालोकितवत्या नायिकाया इव तदानीं मम सुखमपारमेवाभूदिति द्योत्यते । न अन्येषां मुकुन्दो मुक्तिप्रदोऽपि मम तु गतिस्तथाभूतत्वेनैव प्राप्यो भवत्विति हे कृष्ण त्वामहमेतदेव प्रार्थये इति भावः ॥ ३८ ॥

तदेवमन्यायैरपि भक्तरक्षाव्यग्रे कृष्णे रतिमाशास्ते। विजयस्य अर्जुनस्य रथ एव कुटुम्बोऽकृत्यैरपि रक्षणीयो यस्य तस्मिन्। तोत्रं प्रतोदः। रश्मयः प्रग्रहाः धृता हयरश्मयो यस्य सन्तीति व्रीह्यादित्वात् इनिः। ईक्षणीयेति वामहस्ते अश्वधारणरज्जुः दक्षिणहस्ते प्रतोदः मुखारविंदे हुंहुमिति तन्नोदनशब्द इति शोभया यन्माधुर्यमीक्षणीयं तन्मयैव तदा स्वचक्षुर्भ्यामीक्षितं न त्वर्जुनेनापि इति भावः तस्मिन् भगवति मम रतिरस्तु मुमूर्षोरिति । अतएवाहं संप्रति मर्त्तुमिच्छामि यन्मृत्वा तदेव माधुर्यं मुहुर्द्दश्यासंजीवंस्तु तत् कथं द्रष्टुं प्राप्स्यामि प्रकटप्रकाशे तस्या लीलाया भगवता समाप्तीकृतत्वादिति भावः । अत्र म्रियमाणस्येत्यनुक्त्वा सन् प्रत्ययेन इच्छाधीनमृत्योर्भीष्मस्य भगवतः सकाशादपि तल्लीलायां अतिलोभो व्यज्यते । तेन च सा युद्धलीलापि नित्येत्यन्यस्या लीलाया नित्यत्वे कैमुत्यमानीतम् । ननु सत्यं तस्यामेव मे सारथ्यलीलायां त्वमत्यासक्तो यत् प्रतिश्लोकमेव तामास्वादयंस्तामेवोद्गिरंस्तल्लीलाविशिष्टे एव मयि रतिं प्रार्थयसे किन्तु संप्रति मृत्वैव तल्लीलाप्राप्तौ तव किं प्रमाणं मित्यत्र मरणे या मतिः सा गतिरिति प्रसिद्धात् प्रमाणादपि तव दर्शनमेव परं प्रमाणमित्याह यमिहेति । यं निरीक्ष्य हताः युद्धे अन्येनापि हताः सन्तः असुरस्वभावा अपि तादृशज्ञानिनाम् अपि सरूपं सायुज्यमुक्तिं प्राप्ताः । अहं तु भक्तस्तत्रापि मरणकाले तादृशमतिमांस्तं त्वां साक्षाद्दृष्ट्वा मृत्वा कथं न तां लीलां प्राप्स्यामीति भावः। अत्र नरसारथ्यमनधिकारिभ्योऽपि सायुज्यदायित्वमिति युगपदेवानैश्वर्यस्वीकारलक्षणं महामाधुर्यं सर्वभगवत्स्वरूपासाधारणमेव तदानीमुदितमिति ज्ञेयम् ॥ ३९ ॥

ननु यत्सारथ्यसम्बन्धिन्यै लीलायै सर्व्वतत्त्वज्ञोऽपि त्वं स्पृहयासि सोऽर्ज्जुन एव तर्हि मम सर्व्वेषु प्रेमवत्परिकरवृन्देष्वेको मुख्य इति निर्द्धार्य्यते । मैवम् । ततोऽप्यर्ज्जुनादप्यतिमुख्यतमाः सर्व्वतोऽपि प्रेमोत्कर्षवन्तो ये तव प्रियजना वर्त्तन्ते न तेषां पदवीं प्रार्थयितुमपि कोऽपि साहसं धत्ते । भवतु तदपि तदुद्देशेनाप्यस्मिन्नन्तकाले कृतार्थीभवामीत्याह ललितेति । ललितगतिश्च राजनृत्यादिवैदग्धी कायिकी विलासश्च धीरलालित्यादिवैदग्धी मानसी वल्गुहासश्च परिहासवैदग्धी वाचिकी प्रणयनिरीक्षणञ्च प्रेममयसर्व्वभावव्यंजककटाक्षवैदग्धी चाक्षुषी च तैरुपकल्पितो दत्तः उरुर्मान आदरः पूजा वा याभ्यस्ताः। तेन स्वस्मिंस्ताः प्रसादयितुं स्वीयानसाधारणान् सर्व्वानेव सादगुण्यभावांस्तासु विनियुक्तवान् । अतस्तासां निरुपाधिकस्य प्रेमातिशयस्य फलं यत् स्वसादगुण्यसर्व्वस्वार्पणपूर्व्वकत्वलकर्त्तृकानुरंजनप्राप्तिः सा ह्ययन्त्रणैवोभयतः सुखमयमहावशीकारव्यंजिका अर्ज्जुनस्य तु प्रेम्णः फलं वशीकारव्यंजिका सारथ्यदूत्यादिमात्रप्राप्तिर्या सा तूभयतो यन्त्रणामपीति न तत्समकक्षतां प्राप्तुमर्हत्यर्ज्जुन इति भावः। अत्रैव तृतीयान्यपदार्थे बहुव्रीहौ ताभिरपि स्वीयसादगुण्यसर्व्वस्वार्पणेन सोऽनुरंजित इति परस्परानुरंजनसुखमयं सख्यं व्यंजितम् । तत एवासाधारणसौभाग्यप्रदानमाह । कृतं रासे नृत्यं गीतं वा वादनानि च यथा तथैव ता अप्यनुकृतवत्यः तत्साहित्येनैव रासे तासां तथा नृत्याद्युक्तेः । न च तासां तत्तच्छिक्षणाभ्यासः कोऽप्यासीदित्याह । उन्मदेन महाप्रेमोत्थेनान्धाः व्यवहारमात्रमदृष्टवत्यः । अतः किलेत्याश्चर्य्ये यस्य प्रकृतिं स्वभावमेवागच्छन् भगवतो नृत्यगीतादिवैदग्ध्यादयः स्वाभाविकाः असाधारणाः अनन्ता एव ये गुणास्तान् सर्व्वानपि तेन दत्तान् प्रापुरित्यर्थः। अर्ज्जुनाय तु स्वमसाधारणं तदपेक्षितं वलिष्ठत्वमपि भगवता न दत्तमिति । यद्वा कृतं गोवर्द्धनधारणादिकम् । उन्मद उन्माद इति विरहश्च दर्शितः । एवं चातिमन्दास्तावत् सायुज्यं प्रापुः । अत्युत्कृष्टाः प्रेम्णः परां काष्ठाम् । अहं तु तयोर्मध्यवर्त्ती स्वाभीप्सितां तव सारथ्यलीलां कथं न प्राप्स्यामीति भावः ॥ ४० ॥

---

सिद्धांतप्रदीपः।

श्रीकृष्णोगतिर्भवत्वितिप्रार्थयितुं तत्कृतमनुग्रहंवदति स्वनिगममिति सहायमात्रं करिष्यामिनशस्त्रयुद्धमित्युद्योगे कृत प्रतिज्ञः पुनर्युद्धकाले मयाप्रतिदिनं दशसहस्रपुरुषघातिना पांडवसैन्येविमथिते सतिधनंजयंप्रति जातक्रोधः स्वयमस्मत्पराजयाय प्रवृत्तस्तांश्च प्रतिज्ञामपहायश्रीकृष्णमायुधंग्राहयिष्यामीतिमत्प्रतिज्ञामृतंयथास्यात्तथा ध्यधिकंकर्त्तुरथस्थस्ततोऽवप्लुतोऽवतीर्णस्सन् धृतरथचरणः गृहीतसुदर्शनः हरिः सिंहइभंगजंहंतुमिव अभ्ययात् । अभिमुखमधावत् कथंभूतः चलद्गुः चलंतीकुपिताद्भीता गौर्धरणीयस्मात्सः पुनः कथंभूतः गतोत्तरीयः गतंपतितंधरणीमाश्वासयन् इवोत्तरीयंक्रोधाविष्टस्ययुधिष्ठिरपक्षपातिनः सगतिर्भवत्वित्युत्तरेणसंबंधः ॥ ३७ ॥

कथंभूतः मेशितैस्तैलधौतैरतितीक्ष्णैर्विशिखैर्वाणैर्हतोऽप्यविशीर्णदंशः क्षतजपरिप्लुतदेहो अर्जुनेनस्वप्रतिज्ञांपालय भगवन्नित्येवंवादिना प्रणयपूर्वकंकट्यालंब्यमानेन संप्रार्थ्यमानोऽपिप्रसभंवलान्मद्वधार्थमभिससारसमुकुंदः मुक्तिप्रदः मेआततायिनोगतिः स्वात्मप्रदोभवतु ॥ ३८ ॥

विजयरथकुटुम्बे अर्जुनरथः कुटुंबः कुटुंबवद्रक्षणीयोयस्यतस्मिन् आत्ततोत्रेगृहीतप्रतोदेगृहीताश्वप्रग्रहेक्षणीये इहयुद्धेयंनिरीक्ष्ययेभूरिश्रवः प्रभृतयस्तेस्वरूपंभगवत्सारूप्यंगताः प्राप्ताः तदुक्तंद्रोणपर्वणिभूरिश्रवसंप्रतिभगवता"येलोकाः ममविमलाः सकृद्विभांति ब्रह्माद्यैः सुरवृषभैरपीष्यमाणाःतान्क्षिप्रं व्रजताग्निहोत्रयाजिन्ममतुल्योभव गरुडोत्तमांगयान" इति एवंभूतेभगवतिमेरतिरस्तु ॥ ३९ ॥

मुनिगणनृपवर्य्यसङ्कुलेऽन्तःसदसि युधिष्ठिरराजसूय एषाम् ।
अर्हणमुपपेद ईक्षणीयो मम दृशिगोचर एष आविरात्मा ॥ ४१ ॥
तमिममहमजं शरीरभाजां हृदि हृदि धिष्ठितमात्मकल्पितानाम् ।
प्रतिदृशमिव नैकधार्कमेकं समधिगतोऽस्मि विधूतभेदमोहः ॥ ४२ ॥
॥ सूतउवाच ॥ कृष्ण एवं भगवति मनोवाग्दृष्टिवृत्तिभिः ।
आत्मन्यात्मानमावेश्य सोऽन्तःश्वास उपारमत् ॥ ४३ ॥
सम्पद्यमानमाज्ञाय भीष्मं ब्रह्मणि निष्कले ।
सर्व्वे बभूवुस्ते तूष्णीं वयांसीव दिनात्यये ॥ ४४ ॥

सिद्धांतप्रदीपः ।

किंच ललितयासुंदरयागत्याविलासेनरासादिनावल्गुनासुंदरेणहासेनप्रणयनिरीक्षणेनाविनयपूर्वकेणावलोकनेन च कलितः बहुमानोयासांताः अतएवोन्मदांधाः अतएवभगवतः कृतंचेष्टितमनुकृतवत्यः किलगोपवध्वः यस्यप्रकृतिंस्वभावमगन्नगमन्तस्मिन्भगवतिमेरतिरस्त्वितिपूर्वेणान्वयः ॥ ४० ॥

---

भाषा टीका ।

अपनी निगम (प्रतिज्ञा) को त्यागकर मेरी प्रतिज्ञा को सत्य और अधिक करने को रथ से उतर कर रथ चरण ( चक्र ) हाथ में लेकर जो मुझे मारने को जैसे हाथी पर सिंह दौडता है दौडे थे, जिनके भार से पृथवी चलायमान होती थी उत्तरीय गिराजाता था उन भगवान मैं मेरी रति हो ॥ ३७ ॥

शस्त्रधारी मेरे तीक्ष्ण वाणोंसे आहत, शीर्ण कवच, और क्षतज परिप्लुत जो श्रीकृष्ण हठात् मेरा बध करने कों दौडे थे वही मुकुंद मेरी गति हों ॥ ३८ ॥

अर्जुन का रथ जिनका कुटुम्ब है तोत्र (चाबुक) हस्त और सारथी कीं शोभा से दर्शनीय श्रीभगवान मै मुमूर्षे मेरी रति हो । जिन भगवान का दर्शन कर हत बीरजन उनके समान रूप—अर्थात् सायुज्य मुक्ति को प्राप्त हुए हें ॥ ३९ ॥

जिनकीं ललित गति; विलास, वल (मनोहर) हास, और प्रणय कटाक्ष से कलिपत बहुमान गोपवधू गण, उन्मदान्ध होकर, भी जिनकी लीलाओं का अनुकरण करती जिनके स्वरूप को प्राप्त हुई उनभगवान मै मेरीं रति हो ॥ ४० ॥

---

श्रीधरस्वामी ।

जगत्पूज्यतामनुस्मरन्नाह । मुनिगणैर्नृपवर्यैश्च संकुले व्याप्ते अन्तःसदसि सभामध्ये युधिष्ठिरस्य राजसूये । एषां मुनिगणादीनाम् ईक्षणीयः अहो रूपमहो महिमेत्येवमाश्चर्येणावलोकनीयः सन् उपपेदे प्राप । एष जगतामात्मा मम दृशिगोचरः दृष्टिविषयः सन् आविः प्रकटो वर्त्तते अहो मे भाग्यमिति भावः ॥ ४१ ॥

सोऽहं कृतार्थोऽस्मीत्याह तमिममिति । इममजं सम्यगधिगतः प्राप्तोऽस्मि । सम्यक्त्वमाह विधूतभेदमोहः । तदर्थं भेदस्यौपाधिकत्वमाह आत्मकल्पितानां स्वयंनिर्मितानां शरीरभाजां प्राणिनां हृदि हृदि प्रतिहृदयं धिष्ठितम् अधिष्ठितम् । अकारलोपस्त्वार्षः । नैकधा अनेकधा अधिष्ठानभेदादनेकधा भातमित्यर्थः । अत्र दृष्टांतः सर्वप्राणिनां दृशं दृशं प्रति एकमेवार्कमनेकधा प्रतीतमिवेति ॥ ४२ ॥

मनोवाग्दृष्टीनां वृत्तिभिः । परमात्मनि श्रीकृष्णे । अन्तरेव लीनः श्वासो यस्य सः ॥ ४३ ॥

निष्कले निरुपाधौ । संपद्यमानं मिलितम् आज्ञाय आलक्ष्य ॥ ४४ ॥

---

श्रीवीरराघवः ।

युधिष्ठिरराजसूयसभास्थं रूपमनुसंधायतस्यस्वचक्षुर्विषयतांप्रार्थयते मुनीतिद्वे युधिष्ठिर राजसूये मुनीनांगणैर्नृपश्रेष्ठैश्चसंकुलेऽन्तःसदसिसभामध्ये यएषां युधिष्ठिरकृतमुनिगणाद्यभिमतं चार्हणमग्रपूजादिकमुपपेदेप्राप्तः एषईक्षणीयोसर्व तरात्माश्रीकृष्णः ममदृशिगोचरोदृष्टिविषयः सन्नाविर्भवतुयावत्तनुत्यागमवतिष्ठत्वितिभावः यद्वाआविरात्माप्रकाशस्वरूपः दृशिगोचरोऽस्त्वित्यन्वयः ॥ ४१ ॥

अथसर्वांतरात्मानमनुसंधाय उक्तविधभगवंतंप्राप्तोऽस्मीत्याहतमिमिति तमुक्तविधमात्मनाभगवतास्वेनैवतत्तत्कर्मानुरूपंकल्पितानां देहभाजांहृदिहृदिप्रतिहृदयंवस्तुतएकमेवप्रतिदृशंनैकधावस्थितमर्कं सूर्यमिवधिष्ठितमधिष्ठितं समधिगतोऽस्मिकथंभूतः विधूतः भेदमोहः

### श्रीवीरराघवः ।

अब्रह्मात्मकस्वतंत्रवस्तुभेदज्ञानात्मकोमोहएकरूपेआत्मनिदेवमनुष्यादि भेदमोहश्चयस्यतथाभूतः यथादिविष्ठः सूर्यः एकएवसन्प्रतिदृशंदृशाद्दशावारिगतेनापिनयनेनाभिमुखंतत्त्वादोभासमानः जलादिगतवृद्धिह्रासादिदोषागोचरः व्याप्यवस्तुगतदोषसंगरहितोऽर्कस्तमिवहृदिहृदिधिष्ठितमितिदृष्टांतार्थः अन्यथाऽर्कदृष्टांतोनघटतेऽतोयंनिर्दोषत्वेदृष्टांतः "वृद्धिह्रासभाक्त्व मंतर्भावादुभयसामंजस्यादेवंदर्शनाच्च ३।२।२० इतिहिसूत्रितंतत्रहि "नस्थानतोऽपिपरस्योभयलिंगम्।११।इत्यनेनपृथिव्यादिष्वंतरात्मतयावस्थितस्यापिपरमात्मनो निखिलनिरस्तदोषत्वसमस्तकल्याणगुणाकरत्वरूपोभयलिंगश्रवणात्पृथिव्यादिगतदोषसंस्पर्शभावमभिधाय "अतएवतूपमासूर्यकाशादिव १८इत्यनेनयतोनानाविधेषुस्थानेषुस्थितस्यापिपरस्यब्रह्मणो नतत्प्रयुक्तदोषभाक्त्वमपिततएवजलदर्पणादिप्रतिविंवितसूर्यादिवत्परमात्मातत्रतत्रावस्थितोऽपिनिर्दोष इति शास्त्रेषूपमाक्रियते "आकाशमेकंहियथाघटादिषुपृथग्भवेत् तथात्मैकोह्यनेकस्थोजलाधारेष्विवांशुमान् एकएवहिभूतात्मा भूतेभूतेव्यवस्थितएकधाबहुधाचैवदृश्यतेजलचन्द्रव "दित्यादिष्वित्यभिधायपुनः "अंबुवदग्रहणात्तुनतथात्वम्१९इत्यनेनसूत्रेणांबुदर्पणादिषुयथासूर्यमुखादयोगृह्यंतेनतथापृथिव्यादिषुस्थानेषुपरमात्मागृह्यते अम्ब्वादिषुहिसूर्यादयोभ्रांत्यातत्रस्थाइवगृह्यंते नपरमार्थतस्तत्रस्थाइहतु "यःपृथिव्यांतिष्ठन्यआत्मनितिष्ठन्नि "त्येवमादिनापरमार्थतएवपरमात्मापृथिव्यादिषु स्थितोगृह्यते अतः सूर्यादेरंवुदर्पणादिप्रयुक्तदोषानुषं गस्तत्रतत्रास्थित्यभावादेवातोनतथात्वंदार्ष्टांतिकस्यनदृष्टांततुल्यत्वमितिपरिचोद्यवृद्धिह्रासभाक्त्वमित्यादिसूत्रेणपृथिव्यादिस्थानांतर्भावात्स्थानिनः परब्रह्मणःस्वरूपतोगुणतश्चपृथिव्यादिस्थानगत वृद्धिह्रासादिदोषभाक्त्वमात्रंसूर्यादिदृष्टांतेननिरस्यते कथमित्यवगम्यते उभयदृष्टांतसाम मंजस्यादेवमिति निर्श्चीयते आकाशमेकंहि यथाघटादिषुपृथग्भवेत् जलाधारेष्विवांशुमानितिदोषवत्स्वनेकेष्ववस्थिते स्तस्याकाशस्यवस्तुतो नवस्थितस्यांशुमतश्चदृष्टांतस्योपादानंहिपरमात्मनः पृथिव्यादिगतदोषभाक्त्वनिवर्त्तनमात्रेप्रतिपाद्येसमंजसंभवति घटकरकादिषुवृद्धिह्रासभाक्षुपृथक्युज्यमानमप्याकाशंवृद्धिह्रासादिदोषैर्नस्पृश्यतेयथाचजलाधारेषुविषमेषुदृश्यमानोप्यंशुमांस्तद्गतवृद्धिह्रासादिभिर्नस्पृश्यते तथायंपरमात्मापृथिव्यादिषुनानाकारेष्वचेतनेषुचेतनेषुचस्थितः तद्गतवृद्धिह्रासादिदोषैरसंस्पृष्टः सर्वत्रवर्त्तमानोऽप्येकएवास्पृष्टदोषगंधकल्याणगुणाकएवयथाजलादिषुवस्तुतोऽनवस्थितस्याप्यंशुमतोहेत्वभावाज्जलादिदोषानभिष्वगस्तथापृथिव्यादिष्वव स्थितस्यापिपरमात्मनोदोषप्रत्यनीकाकारतयादोषहेत्वभावाच्चनदोषगंधइतिभाषितम् ॥ ४२ ॥

इत्थंभगवतिकृष्णेपरमात्मनि मनोवाग्दृष्टीनांवृत्तिभिर्व्यापारैरात्मानं प्रत्यगात्मानमावेश्यतेनसंयुक्तमनुसंधायेत्यर्थः सभीष्मोक्तत्वासौंतर्लीनः प्राणवायुर्यस्यतथाभूतउपारमच्छरीरंविहाय।चिरादिगत्यापरमपुरुषंप्राप्तइत्यर्थः ॥ ४३ ॥

तदाभीष्मंनिष्कलेनिर्दोषेब्रह्मणिसंपद्यमानं सर्वोपाधिविधूननपूर्वकंब्रह्मप्राप्तवंतमभिज्ञाय सर्वेतत्रत्यातूष्णींवभूवुर्यथादिनात्ययेरात्रौवयांसिपक्षिणस्तद्वव ॥ ४४

---

### श्रीविजयध्वजः ।

मुनीनांगणैः नृपाणांवर्यैश्चसंकुलेनिविडेयुधिष्ठिरराजसूयेयज्ञे अंतः सदसियेषामृष्यादीनांमध्येयोऽर्हणामग्रपूजामभिपेदेप्राप्तवान्युधिष्ठिरपृष्टभीष्ममुखेनायमेवाग्रपूज्यइतिशास्त्रत उपपाद्यादत्तेतिवा सएषआत्मापरमात्मा मत्कारुण्यान्मरणसमयेममदृशिगोचरः दृष्टिविषयआविरभूदहोममभाग्यमितिशेषः आविरात्माप्रकाशरूपइतिवा ॥ ४१ ॥

आत्मत्वाविवरणपूर्वकंस्तौति तामिमामिति चक्षुरभिमानित्वेनप्रतिदृशं दृशं दृशंप्रतिनैकधाचक्षुरिंद्रियनियामकतया अनेकरूपंस्थितमर्कंयथैकमेवसमधिगच्छतिज्ञानी तथाअहमप्यात्मनाकल्पितानांसृष्टानांशरीरभाजांजीवानांहृदिहृदिविष्ठितंविविधंबहुरूपंस्थितं तमिममजंकृष्णमेकत्वसंख्याविशिष्टं नाद्वित्वोपेतं समधिगतोऽस्मिज्ञातवानस्मि कीदृशोऽहंविधूतभेदमोहः अवतारगुणादिषुनिरस्तभेदभ्रमबुद्धि यथास्थितवस्तुविज्ञानीवा अधिगंत्राधिगमनाधिगम्यानांभेदस्याबाधितानुभवसिद्धत्वादन्योऽहंकृष्णोऽन्यइतिभेदमोहनिरासबचनं निजदर्शनदुराग्रहविजृंभितैरविद्याकल्पितमात्मपदप्रयोगेणनिरस्तम् अन्यथातस्यवैयर्थ्यंस्यात् शरीरभाजामित्यनेनचेतनबहुत्वसिद्धेश्च "नित्योनित्यानांचेतनश्चेतनानामि"तिश्रुतेः ॥ ४२ ॥

स्तुतिमुपसंहरति क्षितिभरामिति श्वसनइववायुर्यथावंशेषुवेणुषुमिथः संघर्षणाद्वह्निंसृजतितथाऽयंश्रीकृष्णः क्षितिभरंभूभारम् असुरवललक्षणमवरोपितुमवतारयितुंकुरूणामक्षवंशे वाह्निद्यूताख्यदहनमसृजत् तमिममनुव्रतानांभक्तानामार्तिंहतवानार्तिहाअंघ्रिर्यस्यसतथोक्तस्तमजं श्रीकृष्णांहृदिपरिरभ्यमर्त्यनीडं मरणधर्मशरीरंजहामिसकृष्णोऽत्रानुग्रहंकरोत्वितिवाक्य शेषः ॥ ४३ ॥

कथंकारंशरीरमत्याक्षीदितितत्राह कृष्णइति एकमुक्तप्रकारेणमनसोवाचो दृष्टेर्वृत्तिभिर्हृदिपरिरभ्येत्युक्तत्वादात्मनिहृदिस्थितेबहिःस्थितेचश्रीकृष्णे भगवति आत्मानंस्वजीवचैतन्यलक्षण मंतः करणंनाहंस्वतंत्रस्तदधीनएवेत्यावेश्यनिधायसभीष्मः अंतः श्वासःरेचकपूरकैः कृत्वाश्वासोच्छ्वासरूपप्राणापानौकुंभके कृत्वामूलाधारब्रह्मनाड्या नाभिचक्रादिक्रमेणउदानवायुमूर्ध्वंनीत्वोपारमत् शरीरमजहादित्येकान्वयः ॥ ४४ ॥

---

### क्रमसंदर्भः ।

तदेवं सर्वशुभस्वभावत्वमुक्त्वा सर्वपूज्यत्वसर्वमनोहरत्वसर्वदुर्लभदर्शनत्वान्याह मुनिगणेति आत्मा परमात्मा ॥ ४१ ॥

परमात्मत्वस्थापनाय तत्र विभुमत्वं दर्शयन् स्वमत्युपकल्पतमेवोपसंहरति तामिति । तमिममग्रत एवोपविष्टं श्रीकृष्णं व्यष्ट्यन्तर्यामिरूपेण निजांशेन शरीरभाजां हृदि हृदि धिष्ठितं-केचित् स्वदेहान्तर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तमित्युक्तदिशा तत्तद्रूपेण भिन्नमूर्तिवद्वसन्तमपि एकमभिन्नमूर्त्तिमेव समधिगतोऽस्मि । अयं परमानन्दविग्रह एव व्यापकः स्वान्तर्भूतेन निजाकारविशेषेणान्तर्यामि-

## क्रमसन्दर्भः ।

तया तत्र तत्र स्फुरतीति विज्ञातवानस्मि । यतोऽहं विधूतभेदमोहः अस्यैव कृपया दूरीकृतो भेदमोहः भगवद्विग्रहस्य व्यापकत्वासम्भावनाजनिततन्नानात्वज्ञानलक्षणो मोहो यस्य तथाभूतोऽहम् । तेषु व्यापकत्वे हेतुः । आत्मकल्पितानाम् आत्मन्येव परमाश्रये प्रादुष्कृतानाम् । अत्र दृष्टान्तः प्रतिदिशमिति । प्राणिनां नानादेशस्थितानामवलोकनमवलोकनं प्रति यथैक एवार्को वृक्षकुड्याद्युपरिगतत्वेन तत्रापि कुत्रचिदव्यवधानः संपूर्णत्वेन सव्यवधानस्त्वसंपूर्णत्वेनानेकधा दृश्यते तथेत्यर्थः । दृष्टान्तोऽयमेकस्यैव तत्र तत्रोदय इत्येतन्मात्रांशे । वस्तुतस्तु श्रीभगवद्विग्रहोऽचिन्त्यशक्त्या तथा तथा भासते सूर्य्यस्तु दूरस्थविस्तीर्णात्मतास्वभावेनेति विशेषः । अथवा तं सूर्व्ववर्णितस्वरूपम् इममग्रत एवोपविष्टं शरीरभाजां हृदि हृदि सन्तमपि समधिगतोऽस्मि । यदप्यन्तर्यामिरूपं तस्माद्रूपादन्याकारं तथाप्येतद्रूपमेवाधुना तत्र तत्र पश्यामि सर्व्वतो महाप्रभावस्यैतस्य रूपस्याग्रतोऽन्यस्य रूपस्य स्फुरणाशक्तेरिति भावः । अत्र दृष्टान्तो देशभेदेऽप्यभेदबोधनाय ज्ञेयः नतु पूर्णापूर्णत्वाविवक्षायै । अमीलितदृग्व्यधारयदिति कृष्ण एवं भगवति मनोवाग्दृष्टिवृत्तिभिरित्युपक्रमोपसंहारादत्र श्रीविग्रह एव प्रस्तूयते । ततो नेदं पद्यं ब्रह्मपरं व्याख्येयमिति ॥ ४२ ॥ ४३ ॥

सम्पद्यमानामिति । निष्कलब्रह्मशब्देन मायातीतो नराकृतिपरब्रह्मरूपः श्रीकृष्ण एवोच्यते तस्मिन् सम्पद्यमानता च तत्संप्रतिरेव तथोक्तं सप्तमे—अधोक्षजालम्भमिहाशुभात्मनः शरीरिणः संसृतिचक्रशातनम् । तद्ब्रह्मनिर्वाणसुखं विदुर्बुधास्ततो भजध्वं हृदये हृदीश्वरमिति । अत्र भीष्मस्य वसुत्वात् "यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ३ । ३ । ३२ ॥ इत्यधिकरणविरोधः स्यादिति चेत् । न । लीलया स्वांशेन तत्राप्यवस्थिति सम्भवात् । "तस्य सर्वेषु लोकेषु कामचारो भवती"ति मुक्तिविशेष प्रतिपादकश्रुतेः । एवमेव महाभारताविरोधोऽपि स्यात् ॥ ४४ ॥

---

## सुबोधिनी ।

रजोमिश्रसत्त्वावस्थामाहमुनिगणेति मुनीनांगणाः नृपश्रेष्ठाश्चसात्विकाराजसाः नतुतामसाः अंतःसदसिसभामध्येसर्वतोमध्यस्थाने आभिषेचनिकेअहनिसदस्यपूजायांयः सर्वोत्तमः सपूजनीयइत्यस्मदादिभिरुक्तेकृष्णंपुरुषोत्तमंमत्वायेषांसर्वेषामेवसंभावितत्वात् अतः सर्वेषांपूजांस्वयमेवगृहीतवान् तदाचसर्वेषामेवईक्षणीयोजातः सइदानींममदृशिगोचरः तत्सौंदर्यसांप्रतंपश्यामितस्यप्रकटात्मत्वमाह आविरात्मेतिसोप्ययमेवनत्वेतस्मिन् ॥ ४१ ॥

एवंस्वदृष्ट्यासर्वावस्थाः अनुवर्ण्यगुणातीतायामवस्थायांविद्यमानेभगवतिस्वात्मसमर्पणमाह तमिममिति पूर्वंयः सर्वोत्कृष्टधर्मत्वेनोक्तः सचायंहृदयमारभ्यवहिः पर्यंतमनुस्यूततयास्थितः सचनदेहादिरूपः तदाहअजमिति यथाममायमंतर्वहिस्तिष्ठतितथैवसर्वप्राणिष्वित्याह शरीरभाजांहृदिहृदिधिष्ठितमितिशरीरभाजोजीवाः स्वस्यसमानाकृतिशरीरंपुरुषरूपंसंपाद्यस्वसेवांत्याजयित्वातत्सेवायांनियुक्ताः तत्रचान्यभजनंमाभवत्वितिस्वयमेवहृदिहृदिप्रत्येकपर्यवसायित्वेनधिष्ठितअधिष्ठायस्थितंअधिष्ठाम देवतात्वेननतुजीववत् ननुकेतेजीवास्तत्राह आत्मकल्पितानामिति आत्मनैवकल्पिताः "अवस्थितेरितिकाशकृत्स्न ॥१।४।२२॥ इतिभगवतोऽवस्थाविशेषोजीवः प्राकृतभोगार्थंतामवस्थांसंपादितवानित्यर्थः नन्वेकएवकथमनेकस्थानेषुअननुस्यूततयादृश्यतेतत्राह प्रतिदृशंतिष्ठतिअथवावहिःस्थितएवायंसूर्यः सर्वेषांदृष्टौअस्मदर्थएवायं उदितइतिप्रतिभाति "तस्मात्सर्वएवमन्यतेमांप्रत्युदगादि"तिश्रुतेः तस्मात्महतामचिंत्यसामर्थ्यात्नात्रसंदेहःकर्तव्यःतस्मादेवंविधंपरमात्मानं सम्यगधिस्थितोऽस्मिप्राप्तोऽस्मियोगेनात्मानंतत्रयोजितवानित्यर्थः सर्वोऽपिभगवन्निकटेतिष्ठतितथापिमायायाः स्वतःकार्याच्चसौधर्मावुद्गतौ मोहभेदौतयोः प्रतिबंधकत्वात्नभगवतासहमेलनमितिमयातौनिवारितावित्याहाविधूतभेदमोहइतिइदानींवासमधिगमनानंतरंभेदमोहावपगतौ ॥ ४२ ॥

एवंस्वमनसिस्फुरितंप्रमेयमनूद्यअन्तेस्वकृतमात्मसमर्पणंचानूद्यशरीरंत्यक्तवानित्याहकृष्णइतिकृष्णे भगवतिमूलाविर्भावरूपेएवंकायवाङ्मनोवृत्तयःयोजिताः तैःसहआत्माऽपियोजितः तेषांतुभेदेनयोजनंआत्मनस्तुआत्मन्येवयोजनम् इहैवसमवलीयंते प्राणा" इत्यर्थउक्तो भवति अंतः श्वासः अंतरेवश्वासोस्यसउपारमत्देहत्यक्तवात् ॥ ४३ ॥

तथाचसर्वेषामपितथाप्रतीतिर्जातेत्याहसंपद्यमानमिति अंतःस्थितोभगवान्प्रकटीभूतः तत्तस्यसायुज्यवृत्तं महतीकाचित्प्रभानिर्गता तयासर्वैर्ज्ञातंभीष्मोब्रह्मणिसंगतइतितदापरमपुरुषार्थेविघ्नोमाभूदितिसर्वेतूष्णींभूताः श्रोत्रेन्द्रियस्यानावृतत्वात् विषयैरिन्द्रियद्वारामनसः आकर्षणासंभवात् तद्द्वाराचजीवस्ययथासुषुप्तौवयांसीवेतियथासंध्यापगमेतत्तत्स्थानेस्थितःपक्षिणः अश्वस्तनद्वाद्विचारशून्याः पूर्वोत्तुसन्धानरहिताश्चनिद्राभावेतूष्णींभवन्तितथासर्वसंदेहाभावंश्रुत्वादृष्टान्तंचदृष्ट्वातंवक्तव्याभावात्ब्रह्मभूताएवंतूष्णींजाता इत्यर्थः ॥ ४४ ॥

---

## श्रीविश्वनाथचक्रवर्त्ती ।

किञ्च सम्प्रति प्रत्यक्षीकृतं मद्भाग्यमेव तत्प्राप्तेरावश्यकत्वं कथयतीत्याह मुनीति । अन्तःसदसि सभामध्ये युधिष्ठिरस्य राजसूये एषां मुनिगणादीनामीक्षणीयः अहो रूपम् अहो महिमेत्येवमाश्चर्येण विलोकनीयः सन् उपपेदे प्राप यः स एष ममात्मा मत्प्राणनाथः सम्प्रति मम दृशिगोचर एव मत्प्रार्थितं दधान एवास्ते इति ॥ ४१ ॥

ननु कथं तर्हि त्वयि मे रतिरस्त्वित्येकवारमपि युष्मत्प्रयोगेण न ब्रूषे किन्तु प्रतिश्लोकमेव विजयसखे विजयरथकुटुम्बे मे रतिरस्तु यत्पतिः परमस्य तस्य मेऽस्तु स भवतु मे भगवान् गतिरिति तच्छब्दप्रयोगेणैवेति तत्राह तमिति । तं पार्थसारथिं प्रग्रहप्रतोदालङ्कृतवामदक्षिणकरं मम हृदि स्फुरन्तमेव इमम् अधिगतोऽस्मि न त्विममेव तम् । तस्यैव हृदि प्रथमप्रविष्टत्वादभ्यासेन तदीयस्फूर्त्तिव्याप्ते हृदि अयं प्रवेष्टुं न शक्नोतीति भावः । तं कीदृशम् अजं न जायत इत्यजस्तम् न केवलं तदानीं युद्धकाल एव तादृशस्वरूपो मच्चक्षुषोरग्रे सञ्जातः ।

श्रीविश्वनाथचक्रवर्त्ती ।

अपि तु युद्धात् पूर्व्वमपि स्वाभाविकेन मनोरथेन मम हृदि तथा भात आसीदेवेति भावः । तेनात्र न मम दोषः किन्तु हृदिस्थः परमेश्वरो यं यं यथा स्फोरयति भद्रमभद्रं वा स तथैवाशास्ते इत्याह शरीरभाजां जीवानां हृदि हृदि धिष्ठितम् अकारलोपश्छान्दसः । आत्मनां स्वयमेव कल्पितानां—"यथाग्नेः क्षुद्रा विस्फुलिंगा व्युच्चरन्ती"ति श्रुतेः । न चाहं हृदिस्थं तत्पदवाच्यं पार्थसारथिमन्यं तथा पुरस्थम् इदंपदवाच्यं चतुर्भुजमन्यं जानामीत्याह प्रतीति । आकाशस्थमेकमर्कमपि जनानां प्रतिदृशम् अवलोकनं प्रति नैकधा अनेकधा अयं मन्मूर्द्धोपरि अर्क इति प्रतिमूर्द्धोपरिस्थमर्कं तत्तदृष्टिभेदादनेकधा भातमिवेति । विधूतो दूरीकृतो भेदरूपो मोहो येन सः । अयमर्थः मम हृदि तथा युधिष्ठिरादीनां वसुदेवादीनां उद्धवादीनां नन्दादीनाम् गोपिकानांच हृदि भावभेदेन प्रेमतारतम्येन च पृथक्पृथक्लीलयैव यद्यपि स्फुरति तदप्येक एव कृष्ण इति जानामि । तथा तेषां तत्तत्प्रेमणां तत्तद्भावानां चोत्कर्षतारतम्यं सर्वमहं जानाम्येव । तदपि मे पार्थसारथावेव स्वाभाविक्यासक्तिस्तां त्यक्तुं नैव शक्नोमि । पुरस्थितेऽस्मिंश्चतुर्भुजरूपे धारणापि कृता साप्यकिंचित् करैवाभूदिति ४२

एवमात्मनि हृदि स्थिते कृष्णे पार्थसारथावित्यर्थः । आत्मानं स्वम् आवेश्य आवेशयुक्तं कृत्वा । अन्तरेव लीनः श्वासो यस्य सः । वहिर्वृत्तेरुपरराम ॥ ४३ ॥

एवं भीष्मः स्वाभिलषितं पार्थसारथिं प्राप । लोकास्तु तदविद्वांसो भीष्मो ब्रह्मणि लीनो वभूवेति जानन्ति स्मेत्याह सम्पद्येति अज्ञाने दृष्टान्तः वयांसि पक्षिणः दिनस्यात्यये अवसाने सति दिनं न दृष्टमिति दिनस्य स्वरूपध्वंसमेव ज्ञात्वा यथा तूष्णीं भवन्ति न शब्दायंते इत्यर्थः । ननु वस्तुतो दिनं नश्यति तत्क्षणेऽपि वर्षान्तरे तस्य स्थितेरवगमात् यामचतुष्टयानंतरं तत्रापि पुनरागमात् । एवं भीष्मस्याप्यत्यये भीष्मो मुक्त इत्यज्ञा विदन्ति । विज्ञास्तु तदैवप्रकटप्रकाशे रथचरणपाणिना कृष्णेन भूमौ धावता सह भीष्मो युद्ध्यत एवेति पुनरागामिकृष्णावतारे तेन सह भीष्म आविर्भविष्यत्येवेति जानन्ति । यद्वा निष्कं पदकं लातीति तस्मिन् ब्रह्मणि श्रीकृष्णे इत्यर्थः । ब्रह्मसायुज्य प्राप्तिस्तु न व्याख्येया नित्यपार्षदभीष्मेण फलाभिसन्धिरहिताया रतेर्वाञ्छितत्वात् मोक्षस्याकामितत्वात् भगवतापि वलाद कामितफलदानानौचित्यात् ॥ ४४ ॥

---

सिद्धान्तप्रदीपः ।

ब्रह्मार्घ्यादिपूज्यत्वं भगवतोदर्शयन्स्वभाग्यातिशयं सूचयतियुधिष्ठिरराजसूये मुनिगणैर्नृपवर्यैश्चसंकुलेऽतः सदसिसभामध्येएषांमुनिगणनृपवर्यादीनामीक्षणीयो ऽर्हणामग्रपूजादिकैंयउपपेदेप्राप सएषविश्वात्मामममदृशिगोचरो दृष्टिविषयः सन्आविः प्रकटोऽस्तिभाग्यवानस्मीत्याशयः ॥ ४१ ॥

तमिति ॥ तमिममुक्तविधमजंकर्माधीनजन्मशून्यंश्रीकृष्णम् आत्मकल्पितानाम् तत्तत्कर्मानुसारिणाम् आत्मनाश्रीकृष्णेनैवदेवमनुष्यादिशरीरेषुस्थापितानां शरीरभाजांहृदिहृदिप्रतिहृदयम् एकमेकप्रतिदृशंतत्तदृक् प्रकाशकतयानेकधा ऽर्कमिवाधिष्ठितंसमधिगतोऽस्मि दृष्टांतप्रभाव्याप्त्यातत्तदृक्प्रकाशकतयाधिष्ठितत्वं दार्ष्टांतिकेतुस्वरूपव्याप्त्यातत्तच्छरीरिप्रेरकतयाधिष्ठितत्वमितिविवेकः नन्वस्तुभगवत प्रकस्यैवतदंतर्यामित्वंभवान्केनसंबंधेनतंसमाधिगतइत्यत्राह विधूतभेदमोहइति विधूतोभेदविषयकोमोहोयस्यसः अयमर्थः किंजीवपरयोरत्यंतभेदः किंवोपाधिकृतोऽभेदो वस्तुतोभेदः अथवास्वाभाविकोभेदा भेदस्तयोः संबंधः नाद्यः पक्षः "तत्त्वमस्य"दिवाक्य विरोधात् "क्षेत्रज्ञंचापिमांविद्धी"ति श्रीमुखवाक्याविरोधाच्च नद्वितीयः "ज्ञाज्ञौद्वावजावीशानीशा"वित्यादिवाक्यप्रतिपादितयोरज्ञसर्वज्ञयोर्जीवपरयोरत्यंतंतोऽभेदासंभवात् नतृतीयः उपाधेर्मिथ्यात्वेसत्यवस्तु भेदकत्वासंभवात् सत्यत्वे उपाधिनास्वसामर्थ्याज्जीवपरयोर्भेदः कृतउतपरेच्छया आद्ये समर्थमुपाधिकोऽपिनिराकर्तुंन क्षमः स्यात् द्वितीयेस्वेच्छयातत्कृतभेदंप्राप्यपुनरभेदमिच्छन्मुग्धवदनाप्तः स्यात् तस्मादंशांशिनो जीवपरयोर्गुणगुणिवत्कार्यकारणवत् स्वाभाविकः सर्वशास्त्रसंमतोभेदाभेदः संबंधइति तथाह भगवान्सूत्रकारः "अंशोनानाव्यपदेशादन्यथाचापि दाशकितवादित्वम धीयत एके ॥२।३।४३॥ इत्यादिअतएवविश्वस्यचिदचिद्रूपत्वे नस्वरूपतोब्रह्मभिन्नत्वेऽपितज्जत्वादिनातदभिन्नत्वमाम्नातं छांदोग्येशांडिल्यब्राह्मणे "सर्वंखल्विदं ब्रह्मतज्जलानितिशांतउपासीते"तिशांतउपासीतेत्येवंविधायामुपासनायांकंटकभूतवैषम्यवारणाय सर्वस्यब्रह्मत्वमुक्तंतस्यस्वरूपेण ब्रह्मत्वासंभवात्तज्जत्वादिनाब्रह्मत्वेहेतुमाह ततएवजायते तत्रैवलीयतेतेनैवाऽनतिचेष्टतेइतितज्जलान् इतिशब्दः हेतौइतिहेतोरितिश्रुत्यर्थः विस्तरस्तुवेदान्तकौस्तुभादौद्रष्टव्यः एवंसत्यंशत्वावच्छिन्नेनरूपेणाभिन्नत्वेप्यंशिनिरपेक्षस्थितिप्रवृत्त्याद्यभावात्तादात्म्यसंबंधेनाहंतंसम्यगधिगतोऽस्मीत्यर्थः ॥४२॥

एवमुक्तलक्षणेनसंबंधेनसभीष्मः आत्मनि अंशिनिभगवतिश्रीकृष्णे मनोवाग्दृष्टिवृत्तिभिर्भजनप्रकारैः"ममैवांशोजीवलोकेजीवभूतः सनातन"इति भगवदुक्तं तदंशभूतमात्मानम् आवेश्यतदंशतयातदंतर्गतमनुसंधाय अंतःश्वास अतएवलीनः श्वासोयस्यसः एवंभूतउपारमदेहंहित्वाश्रीकृष्णंप्राप्तइत्यर्थः ॥ ४३ ॥

निष्कलेप्राकृतकलारहिते श्रीकृष्णेउक्तप्रकारेणसंपद्यमानमाज्ञायज्ञात्वा ॥ ४४ ॥

---

भाषाटीका ।

मुनिगण और नृप वर्यों से संकुल युधिष्ठिर की सभा में राजसूय यज्ञ का प्रथम अर्हण जिनको प्राप्त हुआ है वह सर्व लोचन लोभनीय आत्मा मेरे दृष्टि गोचर है अहो । धन्य मेरा भाग्य है ॥ ४१ ॥

भिन्न भिन्न जलाधार घटादिकों में प्रतिबिंबित सूर्य के समान, प्रत्येक शरीर धारी के हृदय में अधिष्ठित आज भगवान को विधूत भेद मोह होकर मैं प्राप्त हुआ हूं ॥ ४२ ॥

तत्र दुन्दुभयो नेदुर्देवदानववादिताः ।
शशंसुः साधवो राज्ञां खात् पेतुः पुष्पवृष्टयः ॥ ४५ ॥
तस्य निर्हरणादीनि सम्परेतस्य भार्गव! ।
युधिष्ठिरः कारयित्वा मुहूर्त्तं दुःखितोऽभवत् ॥ ४६ ॥
तुष्टुवुर्मुनयो हृष्टाः कृष्णं तद्गुह्यनामभिः ।
ततस्ते कृष्णहृदयाः स्वाश्रमान् प्रययुः पुनः ॥ ४७ ॥
ततो युधिष्ठिरो गत्वा सहकृष्णो गजाह्वयम् ।
पितरं सान्त्वयामास गांधारीञ्च तपस्विनीम् ॥ ४८ ॥
पित्रा चानुमतो राजा वासुदेवानुमोदितः ।
चकार राज्यं धर्मेण पितृपैतामहंविभुः ॥ ४९ ॥
इतिश्रीमद्भागवतेमहापुराणे प्रथमस्कंधेयुधिष्ठिरराज्य प्राप्तिर्नाम
नवमोऽध्यायः ॥ ९ ॥

भाषाटीका ।

( सूत उवाच ) इस प्रकार मन और वाणी की वृत्तिओं से आत्मा कृष्ण भगवान्में अपने आत्मा को प्रवेश कर भीष्मजी अन्त श्वास छोड़कर उपरत होगये ॥ ४३ ॥
भीष्म को निष्कल ब्रह्म में संपद्यमान जान कर दिन की समाप्ति में पक्षियों के समान वहां के सबजने चुपहोगये ॥ ४४ ॥

---

श्रीधरस्वामी ।

देवैर्मानवैश्च वादिताः । राज्ञां मध्ये ये साधवः अनसूयवः ॥ ४५ ॥
निर्हरणादीनि संस्कारादीनि सम्यक् परेतस्य मुक्तस्यापीत्यर्थः ॥ ४६ ॥ ४७ ॥
पितरं धृतराष्ट्रम् । तपस्विनीं सन्तापवतीम् ॥ ४८ ॥
राजा युधिष्ठिरः ॥ ४९ ॥
इति श्रीमद्भागवतभावार्थदीपिकायां प्रथमस्कन्धे नवमोऽध्यायः ॥ ९ ॥

---

श्रीवीरराघवः ।

तत्रतदादेवैर्मानवैश्चवादितादुंदुभयोनेदुः दध्वनुः साधवोभागवताः शशंसुरहोभीष्मस्यभाग्यंमाहात्म्यंचानितरसाधारणमितितुष्टुवुः राज्ञांपुष्पवृष्टयः, खादुपरिदेशात्पेतुः पतिताइत्यर्थः ॥ ४५ ॥
हेभार्गवसंपरेतस्यपरलोकंप्राप्तस्यभीष्मस्यनिर्हरणादीनिदाहादिकर्माणिकारयित्वायुधिष्ठिरोमुहूर्त्तंदुःखितोबभूव ॥ ४६ ॥
तथामुनयोहृष्टाः कृष्णंतस्यकृष्णस्यगुह्यं स्वरूपयाथात्म्यं वेदांतवेद्यंतत्प्रकाशकैर्नामभिस्तुष्टुवुः ततस्तेमुनयः कृष्णएवहृदयंयेषांतथाभूताः पुनराश्रमात्प्रययुः ॥ ४७ ॥
ततः कृष्णेनसहितोयुधिष्ठिरोहास्तिनपुरंगत्वापितरंधृतराष्ट्रंतपस्विनींपतिव्रतांगांधारींचसांत्वयामास ॥ ४८ ॥
ततः पित्राधृतराष्ट्रेणानुज्ञातोवासुदेवेनभगवतानुमोदितश्चविभुर्युधिष्ठिरः पित्रादिक्रमप्राप्तंराज्यंधर्मेणचकारचशशास ॥ ४९ ॥
इतिश्रीवीरराघवटीकायां प्रथमेनवमोऽध्यायः ॥ ९ ॥

---

श्रीविजयध्वजः ।

समागतास्तेसर्वेनिष्कलेषोडशकला वर्जितब्रह्मणिहरौ संपद्यमानंप्राप्तवंतं भीष्ममाज्ञायतूष्णींबभूवुः कथमिव । दिनात्ययेसंध्यासमयेवयांसिपक्षिणइवेत्यन्वयः ॥ ४५ ॥

तमिममित्यस्यानंतरम् ॥ क्षितिभरमवरोपितुंकुरूणांश्वसनइवासृजदक्षवंशवह्निम् ।
तमिममजमनुव्रतार्तिहांघ्रिंहृदिपरिरभ्यजहाममर्त्यनीडम् ॥
इत्यधिकः श्लोकस्तस्य टीका विजयध्वजे ॥

श्रीविजयध्वजः ।

तत्रभाष्मिस्यानेयायांसमयखेदाकाशात् भीष्ममूर्च्छीतिशेषः ॥ ४६ ॥

संपरेतस्यमृतस्यनिर्हरणादीनि शवसंस्कारपुरः सराणिकर्माणिकृत्वाभीमादिभिश्चकारयित्वा ॥ ४७ ॥

भगवन्महिम्नाहृष्टरोमांचितसर्वां गास्तस्यकृष्णस्य गुह्यनामभिः वेदशिरोगतात्यंतरहस्यनामाभिः कृष्णाहृदयाः कृष्णोहृदयेयेषांतेतथा कृष्णोहृदयंमनोयेषामितिवा ॥ ४८ ॥

गजाह्वयंगजसमाननामानंहस्तिनपुरं पितरंधृतराष्ट्रम् ॥ ४९ ॥

अनुमोदितोऽनुज्ञातः पित्राधृतराष्ट्रेणच पितृपैतामहंपितृपितामहागतं धर्मशास्त्रोकवर्त्मना विभूराज्यकरणशक्तिमान् ॥ ५० ॥

इतिश्रीभागवतेप्रथमस्कंधेविजयध्वजटीकायांनवमोऽध्यायः ॥ ९ ॥

---

क्रमसंदर्भः ।

तत्रेति राज्ञां समायामिति शेषः । साधवो मुन्यादयः ॥ ४५ ॥ ४६ ॥

गुह्यनाभभि र्दुस्तर्क्यमहिमव्यञ्जकनामभिः कृष्णगोविंदेत्यादिभिः ॥ ४७ ॥ ४८ ॥ ४९ ॥

इति श्रीमद्भागवतप्रथमस्कंधस्य श्रीजीवगोस्वामिकृत क्रमसन्दर्भे नवमोऽध्यायः ॥ ९ ॥

---

सुबोधिनी ।

देवानांसर्वज्ञत्वात् अस्मदीयोवसुर्मुक्तइतिवाद्यवादनंचक्रुरित्याहवादनप्रशंसापुष्पवृष्टयः तामससात्विकराजसरूपाउत्तमाः राज्ञांमध्ये येसाधवःअनेनतत्रापितुष्टाः संतीतिज्ञापितम् ॥ ४५ ॥

"भस्मांतंशरीर"मितिश्रुतेःशरीरप्रपर्सिचक्रुरित्याहतस्येति निर्हरणंज्वलनंसंपरेतस्यशरीरस्यभीष्मात्मानंगृहीत्वाभगवतितिरोहितेभारतोयुधिष्ठिरः मोहाभावायकारयित्वेतिपदाभिषिकस्यस्वतः कारणमनुचितंमुहूर्त्तखेदोवैधः ॥ ४६ ॥

भीष्मोकंकृतंचसर्वेषांहृदयेसमागतमित्यभिप्रायेणाहतुष्टुवुरिति तद्गुह्यनामभिः अद्भुतकर्मत्वादिभिः कृष्णंहृदयेनिवेश्यसर्वेगताइत्याह ततस्तेइतिपुनरितिकेचनभगवद्दर्शनार्थंस्वाश्रमेगत्वापिसमागत्यकृष्णंदृष्ट्वापुनर्गताइत्यर्थः ॥ ४७ ॥

युधिष्ठिरस्यतुज्ञानंवृत्तमित्याह स्वयंविशोकःशोकमन्येषांदूरीकरोतिपितरंधृतराष्ट्रंतपस्विनींसंतप्तांचकारादन्यांश्च ॥ ४८ ॥

ततोभगवत्कृपयातस्यराज्यप्राप्तिरित्याहपित्राचेति अधिकृतैर्मंत्रिभिः पित्राचअनुमतः स्वभावतएवराजामुख्यतयावासुदेवानुमोदितः पितैपतामहमावश्यकंविभुः समर्थः अनेनसर्वेगुणाः सर्वदोषाभावश्चोक्तः ॥ ४९ ॥

इतिश्रीभागवतसुबोधिन्यांलक्ष्मणभट्टसुतश्रीवल्लभदीक्षितविरचितायां

प्रथमस्कन्धेनवमोऽध्यायः ॥ ९ ॥

---

श्रीविश्वनाथचक्रवर्त्ती ।

राज्ञां मध्ये साधवोऽनसूयवः ॥ ४५ ॥

निर्हरणादीनि संस्कारान् । सम्परेतस्येति नित्यपार्षदे भीष्मे वसोः प्रवेशात् तस्यैव देहत्यागो भगवता दर्शितः । यावदधिकारमवस्थितिराधिकारिकाणाम् ॥३।३।३२॥ इति न्यायेन तस्यैवांशेन वसुत्वे च स्थितिर्भगवल्लोके प्राप्तिश्च । अतः सम्यक् परं परमेश्वरम् इतस्य प्राप्तस्येति व्याख्येयम् । "तस्य सर्वेषुलोकेषु कामचारो भवती"ति मुक्तिविशेषप्रतिपादकश्रुतेः । नित्यपार्षदभूतस्य भीष्मस्य त्वप्रकटलीलायां पार्थसारथिप्राप्तिरुक्तैव । अतएव तत्र सो ऽन्तःश्वास उपारमदिति प्रयुक्तम् । अन्तरेव श्वासः प्राणो यस्य तथाभूतः सन्नुपारमत् प्रकटप्रकाशादुपरतोऽभूदिति तत्रार्थः सम्मतः देहं तत्याज प्राणांस्तत्याजेत्याद्यनुक्तेरिति । मूहूर्त्तं दुःखित इति लोकव्यवहाररक्षार्थम् ॥ ४६ ॥

तद्गुह्यनामभिः हे भक्तवत्सल कृष्ण प्रेमाधीन नमस्त्वच्चातुर्यायैवेति ॥ ४७ ॥

पितरं धृतराष्ट्रम् ॥ ४८ ॥ ४९ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
प्रथमे नवमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ ९ ॥

---

सिद्धांतप्रदीपः ।

तत्रतस्मिन्महोत्सवेराज्ञांदुन्दुभयः देवैर्मानवैश्चकृष्यादिभिर्वादिताः ब्रह्मादयोनेदुःसाधवोभागवताः शशंसुःखादंतरिक्षाद्देवादिविमुक्ताः पुष्पवृष्टयः पेतुः ॥ ४५ ॥

सिद्धांतप्रदीपः ।

हेभार्गवसंपरेतस्यसम्यग्भगवन्तंप्राप्तस्यनिर्हरणादीनिदाहादिकर्माणि ॥ ४६ ॥
तस्यकृष्णस्यगुह्यैर्हेतुवादिभिर्दुर्ज्ञेयैरन्यार्थपरतयाप्रतीयमानैर्नामभिः ॥ ४७ ॥
पितरंधृतराष्ट्रम् ॥ ४८ । ४९ ॥

इतिश्रीमद्भागवतसिद्धांतप्रदीपेप्रथमस्कन्धेनवमाध्यायार्थप्रकाशः ॥ ९ ॥

---

भाषाटीका ।

तव वहा देवताओं की और मनुष्यों की वजाई दुंदुभी वजने लगी—राजाओं में भी साधु जन प्रशंसा करने लगे आकाश से पुष्प वृष्टि पड़ने लगी ॥ ४५ ॥

हे भार्गव ! उन संपरेत भीष्म जी का निर्हरणादिक कराकर युधिष्ठिर मुहूर्त मात्र वडेदुःखितहुए ॥ ४६ ॥

भीष्म जी के कथित सहस्र नामादिकस्तोत्रों से हर्षित मुनि जनोंने कृष्ण की स्तुति की और कृष्णहृदय सव मुनिजनों ने अपने आश्रमों को गमन किया ॥ ४७ ॥

तदनंतर युधिष्ठिर ने हस्तिनापुर जाय कर अपने पिता के समान पूज्य धृतराष्ट्र की सांत्वना की और तपस्विनी गांधारी की सांत्वना की ॥ ४८ ॥

पितृव्य धृतराष्ट्र और वासुदेव श्री कृष्ण के अनुमो दनसे राजा युधिष्ठिर धर्मसे अपना पितृपैतामह राज्य करने लगे ॥ ४९ ॥

प्रथमस्कंधका नवम अध्याय समाप्त हुआ ॥

———:*:———

## दशमोऽध्यायः ।

—:*:—

॥ शौनक उवाच ॥ हत्वा स्वरिक्थस्पृध आततायिनो युधिष्ठिरो धर्मभृतां वरिष्ठः ।
सहानुजैः प्रत्यवरुद्धभोजनः कथं प्रवृत्तः किमकारषीत्ततः ॥ १ ॥

॥ सूतउवाच ॥ वंशं कुरोर्वंशदवाग्निनिर्हृतं संरोहयित्वा भवभावनो हरिः ।
निवेशयित्वा निजराज्य ईश्वरो युधिष्ठिरं प्रीतमना बभूव ॥ २ ॥
निशम्य भीष्मोक्तमथाच्युतोक्तं प्रवृत्तविज्ञानविधूतविभ्रमः ।
शशास गामिंद्र इवाजिताश्रयः परिध्युपांतामनुजानुवर्तितः ॥ ३ ॥
कामं ववर्ष पर्जन्यः सर्वकामदुघा मही ।
सिषिचुःस्म व्रजान् गावः पयसोधस्वतीर्मुहुः ॥ ४ ॥

### श्रीधरस्वामी ।

दशमे कृतकार्यस्य हस्तिनापुरतो हरेः ।
स्त्रीभिः संस्तूयमानस्य वर्ण्यते द्वारकागमः ॥ ० ॥

राज्यं चकारेत्युक्तम् । तत्र पृच्छति हत्वेति स्वस्य ऋक्थे धने स्पर्द्धन्ते स्म ये ते तथा यद्वा स्वरिक्थाय स्पृधः ( स्पृत् ) संग्रामो येषाम् । अतएव धनादिहरणादाततायिनः तान् हत्वा । प्रत्यवरुद्धभोजनः बन्धुवधदुःखेन संकुचितभोगः राज्यलाभेन प्राप्तभोगो वा । कथं राज्ये प्रवृत्तः । प्रवृत्तो वा ततः किमकार्षीत् ॥ १ ॥

राज्यप्रवृत्तः श्रीकृष्णस्य प्रीतिं पर्यालोच्य प्रवृत्त इत्याशयेनोत्तरमाह । वंशं कुरोः संरोहयित्वा परीक्षिद्रक्षणेन संरोह्य अंकुरितं कृत्वा । कथंभूतं वंशदवाग्निनिर्हृतं वंश एव दवो वनं तस्मादुद्भूतः क्रोधरूपोऽग्निस्तेन निर्हृतं दग्धम् । निजराज्ये निवेश्य च ॥ २ ॥

प्रवृत्तौ हेतुमुक्त्वा किमकार्षीदित्यस्योत्तरमाह निशम्येति । प्रवृत्तं यद्विज्ञानं परमेश्वराधीनं जगत् न स्वतन्त्रम् इत्येवंरूपं तेन विधूतो विभ्रमः अहं कर्त्तेत्येवम्भूतो मोहो यस्य सः । अनुजैरनुवर्त्तितः सेवितः सन् । अजितः श्रीकृष्ण एव आश्रयो यस्य सः । परिधिः समुद्रः तत्पर्यन्तां गां पृथ्वीं पालयामास ॥ ३ ॥

तस्य राज्यमनुवर्णयति काममिति त्रिभिः । मही सर्वकामदोग्ध्री बभूव । व्रजान् गोष्ठानि । ऊधस्वतीः ऊधस्वत्यः ऊधः क्षीराशयः ( तद्वत्यः ) स्थूलोधस इत्यर्थः सिषिचुरभ्यषिंचन् ॥ ४ ॥

—————

### दीपनी ।

० ॥ १ ॥ २ ॥
परिधिरिति । परिधिभूत इत्यर्थः ॥ ३ ॥
काममिति ) इच्छानुसारमित्यर्थः ॥ ४ ॥

—————

### श्रीवीरराघवः ।

धर्मेणराज्यंचकारेत्युक्तंतदेवविस्तरतोबुभुत्सुरुक्तानुवादपूर्वकंपृच्छतिशौनकः हत्वेतिस्वरिक्थस्पृधः स्वदायलिप्सून्स्पृहइतिपाठेऽपिस एवार्थः हकारस्यधकारआर्षः अतएवाततायिनोदुर्योधनादीन्हत्वाप्रत्यवरुद्धं प्रत्यधिगतं प्रतिप्राप्तंभोजनंराज्यंयेनसधर्मभृतांवरिष्ठोयुधिष्ठिरः गविष्ठिरइतिपाठेगविचसिस्थिरोयुधिष्ठिरः अनुजैर्भीमादिभिःसहकथंप्रवृत्तः राज्यशासनइतिशेषः ततोराजशासनानंतरंकिमकार्षीदिति प्रश्नद्वयंरेफविश्लेषआर्षः ॥ १ ॥

तत्रतावत्कथंप्रवृत्तइतिप्रश्नस्योत्तरंविवक्षुरुपोद्घाततयाभगवतः कृतकृत्यत्वमाहवंशमिति वंशदवाग्निना वेणुवनसंघर्षणजदवाग्नितुल्येनकुलकलहेनदग्धंविनष्टंकुरोर्वंशंसंरोहयित्वापरीक्षिद्रूपेणउत्पादयित्वाभवभावनःभवोजगत्तंभावयतिवर्द्धयतिभवभावनोहेतुगर्भमिदंभवभावनत्वात्संरोहयित्वाहरिरीश्वरः श्रीकृष्णोयुधिष्ठिरंनिजराज्येनिवेशयित्वाप्रीतमनाबभूवकृतकृत्यत्वादितिभावः ॥ २ ॥

## श्रीवीरराघवः ।

प्रश्नस्योत्तरमाहनिशम्येतिचतुर्भिः भीष्मोक्तमच्युतोक्तंचनिशम्यप्रवृत्तेनसुप्रतिष्ठितेनविज्ञानेनदेहात्मविवेकादिरूपेणविधूतः विभ्रमो-देहात्मादिभ्रमोयस्य अनुजैर्भीमादिभिरनुवर्त्तितोयुधिष्ठिरः इंद्रइवाच्युतएवाश्रयोयस्य अच्युतमाश्रयतेसेवतेभजतइतिवातथाभूतः परि-ध्युपान्तांदिगंतावधिचतुःसमुद्रांतांपृथिवींशशास ॥ ३ ॥

अजातशत्रौराज्ञीत्येतत्काममित्यादिपूर्वश्लोकद्वयेऽप्यपकर्षणीयम् अजातशत्रौयुधिष्ठिरेराज्ञिसतिपर्जन्यःकामंयथेष्टंववर्षसर्वान्कामान्दोग्धि प्रपूरयतीतितथामह्यभूत् गावः पयसाक्षीरेणऊधस्वतीरूधस्वत्यः भूम्यश्चमतुपपृथूधसइत्यर्थः मुदाव्रजान्व्रजस्थान्प्रतिसिषिचुः क्षी-रंदुदुहुः ॥ ४ ॥

---

## श्रीविजयध्वजः ।

हास्तिनपुरादूद्वारकायात्राकथन पूर्वकंभगवत्प्रसादलब्ध युधिष्ठिरराज्यसमृद्धिकथनेनहरेर्महिमैववर्ण्यते ऽस्मिन्नध्याये तत्रहारितद्भक्त कथायामवितृप्तमनाः शौनकः पुनरपिपृच्छतीत्याह हत्वेतिस्वरिक्थंस्वराज्याख्यद्रव्यमस्माकमिति स्पर्धतइतिस्वरिक्थस्पृधस्तान् आतता यिनः प्रतिवारंहत्वामर्त्तुकामान् दुर्योधनादीन्हत्वाअनुजैः सहप्रत्यवरुद्धभोजनः संक्षिप्तभोगः धर्मभृतांधर्मप्रवर्त्तकानां व्यासादीनांगविवा चिस्थिरोनिश्चलः युधिष्ठिरः कथंकेनप्रकारेण राज्यपालनेप्रवृत्तः किंकर्माकार्षीदथकृष्णश्चतेनसह हस्तिनपुरमागतः किमकृततदस्माकं ब्रूहीत्येकान्वयः ॥ १ ॥

पांडवानां निरतिशयहरिकृपयैवराज्यादि लाभइति ज्ञापयन्पांडवस्थापनादिकृष्णमहिमानं तावदाह वंशमिति ईश्वरः जगच्चेष्टा यांसमर्थःहरिवंशलक्षणादवाद्गनादुत्पन्नाग्निनानितरांदग्धंतंकुरोराज्ञो वंशंसंरोहयित्वापरीक्षिदंकुरेणजनयित्वायुधिष्ठिरं निजराज्ये निवेशयित्वा प्रीतमनावभूवेत्येकान्वयः नित्यप्रीतस्यकादाचित्कप्रीत्युक्तिलौकिकापेक्षयेत्येतमर्थंहशब्देनप्रसिद्धिद्योतनेनाह भवभावनइति पाठेसृष्टि वर्द्धनः अनेनसंरोहणशक्तिरदर्शि ईश्वरइत्यनेनराज्यस्थापनमाहात्म्यमसूचि भवतापनइत्यनेनसंसारोन्मूलनकर्त्तुः हरेः पांडवरिपुनिबर्ह णंकिमुवक्तव्यमितिन्यायोदर्शितः ॥ २ ॥

याजयित्वेत्येवमुक्तार्थः ॥ ३ ॥

किमकार्षीदितिप्रश्नंपरिहरति निशम्येति अथयुधिष्ठिरः भीष्मोक्तंधर्मसर्वस्वंतथा अच्युतस्यकृष्णस्योदितंवाक्यं चनिशम्यतदुभयं श्रुत्वाप्रवृत्तमुत्पन्नंयद्विज्ञानंतेनविशेषेणधूतः निरस्तः विविधः भ्रमः तत्वे नानासंशयोयस्यसतथोक्तः श्रीकृष्णाश्रयः अनुजैः भीमादिभिर नुवर्त्तितः अमात्यादिसप्तप्रणिधिभिरुपान्तांप्राप्तांगामवनिंस्वर्गंइंद्रो यथाशशासेत्येकान्वयः भूमिंस्वर्गसमानामपालयदितिद्योतनायगामि त्युक्तं अमात्यामंत्रिणोदूताः श्रेणयश्चपुरोहिताः पुरंजनपदंचेतिसप्तप्रणिधयः स्मृताइतिवचनात् । परिधिः समुद्रः सएवउपांते अवसाने यस्याः सापरिध्युपांतामितिपाठो वादरायणमतापरिज्ञानादुच्छ्वसितइतिज्ञातव्यम् ॥ ४ ॥

---

## क्रमसंदर्भः ।

० ॥ १ ॥

वंशमित्यस्य टीकायां राज्यप्रवृत्तेरुत्तरमाहेत्यन्वयः ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥

---

## सुवोधिनी ।

नैश्चित्यसिद्धयेविष्णोर्भीष्ममुक्तिर्निरूपिता ऐहिकेसर्वसौख्यं तुदत्तवानितिरूप्यते १ पाण्डवानांयदूनांचतदध्यायद्वयेनहि निरूप्यंप्रथमं तत्रपाण्डवानांतदुच्यते २ कृष्णाधीनंसुखंयस्यससुखीतिनिगद्यते यतः कृष्णपरंचित्तंसर्वेषामत्रवर्ण्यते ३ पूर्वाध्यायांते युधिष्ठिरस्यराज्य प्राप्तिरुक्तातत्रराज्यकरणंज्ञानाज्ञानाभ्यांनघटतइतिराज्यस्थितिंपृच्छतिशौनकः हत्वेतिस्वऋक्थस्पर्द्धेतेइतितथारिक्थंधनं अतएवआतता यिनः धनापहान्अवध्येवधहेतुराततायित्वं अस्वारिक्थेवास्पर्द्धायेषां अनेनधनार्थिनोहत्वाधनंगृहीत्वातेनराज्यकरणमनुचितमिति ज्ञापितं नन्वेवमेवप्राकृताः कुर्वंतितत्राहधर्मभृतांवरिष्ठ इतिनधर्मज्ञानमात्रं कृतमालंवार्किंतुयेधर्ममेवगृहीत्वातिष्ठंतितेषांमध्येश्रेष्ठः अनुजैः सहेति सर्वत्रशत्रुवधेधर्मज्ञानेराज्यप्राप्तौचाकिंचित् भ्रातृणामैकमत्यमस्तिनवेतिसंबंधः प्रत्यवरुद्धं भोजनंयस्य भोजनंपालनमभ्यवहरणंवापूर्व माततायिभिः प्रत्यवरुद्धंभोजनंइदानींवाअवरोधस्यप्रतिकूलत्वंप्राप्तभोजनत्वंसिद्ध्यति अस्तुस्वेराज्येसर्वज्ञस्यकथंप्रवृत्तिः संतोषेणचराज्ञः राज्येस्थातुमशक्तत्वात् ततोराज्यंप्राप्यपुनःकलहादिअन्यद्वाकृतमितिप्रश्नः ॥ १ ॥

ततःस्वेच्छयायुधिष्ठिरेणनकिंचित्कृतंकिंतुभगवदिच्छयैवततस्यनराज्येदोषोगुणोवाकिंतुभक्तत्वात् भगवदिच्छयाराज्यंकृतवानितिवक्तुंभग वांस्तस्मैराज्यंदत्वातुष्टोजातइत्याहवंशमिति द्वयंकृत्वाभगवान्प्रीतोजातः वंशांकुरंपरीक्षिद्रूक्षणंयुधिष्ठिरायराज्यदानंचततस्तत्रभगवत स्ताद्दशेनकार्येण किमित्याशंक्य स्वभक्तानांवंशरक्षासर्वथाकर्त्तव्यातदभावेप्रवृत्तिमार्गानिष्ठताअयुक्ताऋणित्वात् वैषयिकसुखाभावाच्च दैत्यांशैर्हिभगवदीयानांद्वयंदूरीक्रियतेतत्रभगवतैवप्रतिविधातव्यंस्वतः प्रतीकाराभावायाहवंशदवाग्निनिर्हृतमिति वंशोदवाग्निः वंशादुत्पन्नः अन्योऽन्यसंघर्षेणनसंरोहयित्वेति नूतनमंकुरमुपपाद्यतथाकरणेहेतुः अभवोमोक्षः तंभावयतीति "ऋणत्रयमपाकृत्यमनोमोक्षेनिवेशयेत् नापुत्रस्यलोकोऽस्तिसर्वेते पशवोविदुः" इत्यादिश्रुतिस्मृतिवाक्यैः वंशाभावेपितॄणामाक्रोशात् मुक्तिर्नस्यात् ॥ किंच ॥ हरिः सर्वदुःख हर्त्ताअपुत्रकृतक्लेशमपिदूरीकृत्वेत्यर्थः भवभावनइतिवाउद्भवमेवभावयति अभिवृद्धिभावनकर्त्तेत्यर्थः राज्यंतुपूर्वमेवसिद्धं अन्यथासर्वेभ्यो भक्तेभ्यः राज्यदानंप्रसज्येततत्तोनिवेशनमेवकृतवान् तत्रहेतुः ईश्वरइतिस्वयमीश्वरः अन्यानपीश्वरान्कृत्वासुखीभवति अथवाईश्वरः समर्थः असमर्थोहिप्रमाणसुखनिरीक्षकः सर्वंत्याजयित्वामुक्तिंप्रयच्छति । अयंतुनतथेत्यर्थः हेतिनिश्चये ॥ २ ॥

सुबोधिनी।

ईश्वरधर्माविर्माबामावेतुच्छत्वंस्वस्मिन्स्फुरति राज्याद्भयंतद् युधिष्ठिरस्यज्ञानादपगतमित्याह निशम्येति आवश्यकंतुकर्त्तव्यमेवन तेन किंचिन्नश्यतीतिर्भीष्मवाक्यश्रवणादेवराज्यभयं निवृत्तंअथभिन्नप्रक्रमेणाहईश्वर विचारेण नारायणपरः सर्वेनकुतश्चनविभ्यतीतिन्याये ननारायणपरस्यभगवद्वाक्यमेवकर्त्तव्यं नतुविषयजन्यंभयमपिसंभावनीयमित्यच्युतोक्तं एव मुक्तिश्यां सर्वोऽपिशास्त्रार्थो ऽवगतः ततः प्रवृद्धविज्ञानेनविधूताद्दूरीकृताविशिष्टाभ्रमायस्यगांपृथिवींमाज्ञापूर्वकंपालितवान् अन्योऽपिराजादैवात्तद्वृष्टौसंजातायांसस्येसंपन्नेचौरादिभिः फलंपालयतिअयंतुवृष्टिमपिनिष्पाद्य स्वधर्मेणपुष्टान् कृत्वापालयतीत्याहइंद्रइवेति मनुष्यस्यैवंपालनसामर्थ्येहेतुः अजिताश्रयइति नकेनापिजितो भगवानाश्रयोयस्यपरिधिः समुद्रः उपांतंयस्यायद्यप्यन्येराजानः संतितथाप्येतदाज्ञाकारिणइतितथोक्तं अनुजैरनुवर्त्तितः प्रथमतोभ्रातरएवकुर्वंतिपश्चात्ततत्स्वयंकरोतिभ्रातृभिः सेवितोवा ॥ ३ ॥

तस्यधर्मेणपोषितस्यराज्यस्यगुणानाहत्रिभिः कामंववर्षेति आधिदैविकसौख्यंहितथाचैवाधिभौतिकं आध्यात्मिकंचतद्राज्येकृष्णेच्छातः क्रमोदिताः काममिच्छानुसारेणक्षेत्रविशेषं सस्यापेक्षंपृथीरिवपृथिवीसर्वतः कामदुघाजातागावऊधस्वतीः स्थूलक्षीराशयाः धर्मात्मायंराजाअस्मत्परिपालकोजातइतिमुदापयसाव्रजानेवासिषिचुः यावद्दोग्धाभांडं वशमायातितावत् क्षीराधिक्यात् भूमिमेवसिषिचुः पर्जन्यः पृथ्वीगावोदेवताः नद्यः समुद्राजलमिथुनंवृक्षालताश्चापरंस्थलमिथुनं एतद्द्वयमन्नातिरिक्तसर्वहेतुः ओषधयोव्रीह्यादयः सर्वेषांसजीवत्वात्भूतत्वं काममिच्छानुसारेणइच्छायामपिसत्यां अकालफलनदोषनिमित्तत्वेन कदाचित् भयंभवेत्तन्निवृत्त्यर्थमाह अन्वृतुमृतुमनतिक्रम्य ॥ ४ ॥

---

श्रीविश्वनाथचक्रवर्त्ती।

न्यस्य निष्कण्टके राज्ये पाण्डवं स्वपुरीं हरेः। गच्छतः कुरुनारीभिः स्तुतिर्दशम उच्यते ॥ ० ॥

वासुदेवानुमोदनैव राज्यप्रवृत्तिप्रजापालनादिकं सामान्यतो ज्ञात्वाऽपि विशेषजिज्ञासुः पृच्छति हत्वेति। स्वस्य रिक्थे धने स्पर्द्धन्ते स्म ये तान् शत्रुभिरवरुद्धं यदासीत् तत् तेभ्यः सकाशात् प्रत्यवरुद्धं पुनश्च स्ववशीकृतं भोजनं भोगो येन सः ॥ १ ॥

श्रीकृष्णस्य प्रीतिं पर्य्यालोच्यैव प्रवृत्त इत्याशयेनोत्तरमाह। कुरोर्वंशं वंशदवाग्निनेव निर्हृतं निर्दग्धं संरोहयित्वा परीक्षिद्रक्षणेन संरोह्य दवो वनं वंशानां वनं यथा स्वसंघर्षोत्थेनाग्निना दह्यते तथैव कुरोर्वंशमपि परस्परक्रोधोत्थयुद्धेन हतमित्यर्थः। भवं महादेवमपि भावयति स्वलीलां ध्यापयतीति सः ॥ २ ॥

निशम्येति। प्रवृत्तं यद्विज्ञानं परमेश्वराधीनं जगन्न स्वतन्त्रमित्येवम्भूतं तेन विधूतो विभ्रमः अहं कर्त्तव्यवम्भूतो मोहो यस्य सः। गां पृथ्वीं स्वर्गञ्च। अजितः श्रीकृष्णः उपेन्द्रश्च। परिधयः समुद्रा ऊर्द्धगं दिङ्मण्डलञ्च। अनुजानाम् अनुवर्त्तिता अनुवृत्तिर्यस्मिन्। पक्षे अनुजेनोपेन्द्रेणानुवृत्तिं प्रापिताः ॥ ३ ॥

ऊधस्वतीः स्थूलापीनवत्यः ॥ ४ ॥ ५ ॥ ६ ॥

---

सिद्धान्तप्रदीपः।

वासुदेवानुमोदितोधर्मेणराज्यंचकारेत्युक्तंतद्विस्तरतोबुभुत्सुः पृच्छति हत्वेति स्वस्ययुधिष्ठिरस्यरिक्थायधनायस्पृत्संग्रामोयेषांतानां ततायिनः स्वधनादिलिप्सून्हत्वाप्रत्यवरुद्धं राज्यलाभेनप्रत्यधिगतंभोजनंयेनसः अनुजैःसहराज्येकथंप्रवृत्तः प्रवृत्त्यनंतरंचकिमकारषीत् अकार्षीदितिवक्तव्येरेफविश्लेषश्छंदोऽनुरोधेन ॥ १ ॥

वंशरूपाद्दवाद्वनाज्जातेनक्रोधरूपेणाग्निनानिर्हृतंनिर्दग्धम् कुरोर्वंशंपरीक्षित्त्राणेनसंरोहयित्वा ॥ २ ॥

अनुजैरनुवर्त्तितः सेवितः प्रवृत्तेनविज्ञानेनविधूतो विविधोभ्रमोयस्यसः विज्ञातात्मानात्मपरमात्मयाथात्म्यः परिध्युपांतांसमुद्रपर्यंताम् ॥ ३ ॥

कामंयथेष्टंपर्जन्यो वृष्टेरधिपतिर्देवोववर्ष सर्वान्कामान्दोग्धिपूरयतीतितथाव्रजान् गोष्ठानि ॥ ४ ॥

---

भाषाटीका।

( शौनक उवाच ) अपने रिक्थ ( भाग ) में स्पर्द्धा करने वाले अतएव आततायी ( धनआदि के हरण कर नेवाले ) शत्रुओं को मारकर प्राप्त भोग धर्मभृतों में वरिष्ठ युधिष्ठिर किसतरह प्रवृत्तहुए और क्या किया ॥ १ ॥

( सूतउवाच ) भूत भावन हरि वंश दावाग्निसे दग्ध कुरु वंश को संरोहण कर ( परीक्षित की रक्षासे पुनर्जीवित कर ) और युधिष्ठिर को निजराज्य में निवेश कर प्रसन्न मन हुए ॥ २ ॥

भीष्मोक्त और अच्युतोक्त श्रवण कर प्रवृत्त विज्ञान से विधूत विभ्रम राजा युधिष्ठिर अजिताश्रय होकर समुद्र पर्यंत पृथवी का शासन करने लगे ओरभीमादिक अनुज सब राजा के अनुवर्ती आज्ञा पालकहुए ॥ ३ ॥

मेघ यथेष्ट वर्षने लगा पृथवी समस्त काम पूर्ण कर ने लगी गौआनंदसे वड़े वड़े थैनो सेदूध स्रवा कर व्रजों को सींचने लगी ॥ ४ ॥

---

नद्यः समुद्रा गिरयः सवनस्पतिवीरुधः ।
फलंत्योषधयः सर्वाः काममन्वृतु तस्य वै ॥ ५ ॥
नाधयो व्याधयः क्लेशा दैवभूतात्महेतवः ।
अजातशत्रावभवन् जंतूनां राज्ञि कर्हिचित् ॥ ६ ॥
उषित्वा हास्तिनपुरे मासान् कतिपयान् हरिः ।
सुहृदाश्च विशोकाय स्वसुश्च प्रियकाम्यया ॥ ७ ॥
आमन्त्र्य चाभ्यनुज्ञातः परिष्वज्याभिवाद्य तम् ।
आरुरोह रथं कैश्चित् परिष्वक्तोऽभिवादितः ॥ ८ ॥

श्रीधरस्वामी ।

अन्वृतु ऋतौ ॥ ५ ॥

आधयो मनोव्यथा व्याधयो रोगाः क्लेशाः शीतोष्णादिकृताः दैवञ्च भूतानि च आत्मा च हेतुर्येषाम् आधिदैविकादीनां ते । जन्तूना नाभवन् ॥ ६ ॥

इदानीं द्वारकागमनं निरूपयितुमाह उषित्वेति । स्वसुः सुभद्रायाः ॥ ७ ॥

तं युधिष्ठिरम् ॥ ८ ॥

---

दीपनी !

( काममिति । कामं तस्य युधिष्ठिरस्य इच्छानुसारं नद्यः समुद्राश्च स्थिता अनुकूला इत्यर्थः । सवनस्पतिवीरुधः वृक्षलतासहिताः गिरयश्च अन्वृतु ऋतौ सर्वकालमित्यर्थः फलन्ति । ओषधयो व्रीह्यादयः ॥ ५-१६ )

---

श्रीवीरराघवः ।

तस्ययुधिष्ठिरस्य संबंधिन्यः नद्यादयः स्वधर्मान्नतत्यजुरितिशेषः वनस्पतिभिः वीरुद्भिश्चसहिताः सर्वाओषधयअन्वृतुऋत्वनुकूलं फलानिफेलुः ॥ ५ ॥

अजातशत्रौराज्ञिसतिजंतूनांप्राणिनांकदाचिदप्याधयोमानसिकाव्याधयोदैहिकाश्चक्लेशाः तानेवाहदैवभूतात्महेतवः आधिदैविकाआधिभौतिकाआध्यात्मिका नाभवन् ॥ ६ ॥

किमकार्षीत्ततइत्यस्योत्तरंविवक्षिष्यन्पूर्वं प्रस्तुतस्यनिवृत्तप्रयाणस्यभगवतोवृत्तान्तमाह उषित्वेत्यादिनायावदेकादशाध्यायसमाप्ति सुहृदांयुधिष्ठिरादीनांविशोकायशोकाभावायस्वसुश्च स्वभगिन्याः सुभद्रायाः प्रियकाम्यया च हास्तिनपुरेकतिपयान्मासानुषित्वाऽवस्थाय ॥ ७ ॥

तंयुधिष्ठिरमामन्त्र्यपृष्ट्वातेनाभ्यनुज्ञातस्तंपरिष्वज्याभिवाद्य च कैश्चिन्न्यूनवयस्कैः परिष्वक्तः आलिंगितोऽभिवादितश्चहरिः श्रीकृष्णो रथमारुरोह ॥ ८ ॥

---

श्रीविजयध्वजः ।

कृष्णाश्रयफलमाह काममिति पर्जन्योमेघाभिमानिदेवः सर्वेषामभीष्टंदोग्धीति सर्वकामदुघागावः सौरभेय्यः पयसाक्षीरेणगोष्ठं सिषिचुः सिक्तवत्यः अतिस्थूलंऊधः क्षीरपात्रंयासांताः अत्यूधसः ॥ ५ ॥

नद्यादयः रत्नानिफलंति वनस्पतयः वीरुधोमातुलिंगादयः ओषधयोव्रीह्यादयः पर्जन्यादयः तस्ययुधिष्ठिरस्यकाममिच्छानुसारेण अन्वृतुऋतावृतौ वृष्ट्यादिमंतोऽभूवन्नित्यन्वयः ॥ ६ ॥

नकेवलमिष्टप्राप्तिरनिष्टनिवृत्तिश्चसुतरामित्याह नाधयइति अजातशत्रौ युधिष्ठिरेजंतूनांराज्ञिरंजकेसति कदाचिदप्याधिदैविकादिहेतवः क्लेशानासुरित्येकान्वयः आधिः मानसीपीडाव्याधिः भगंदरादिः कथंभूताः दैवानिभूतानिच आत्माचहेतुर्निमित्तंयेषांतेतथोक्ताः अधिदैवहेतुः अनावृष्ट्यादिः अधिभूतहेतुः उन्मादादिः अध्यात्महेतुः कुष्ठादिः ॥ ७ ॥

इदानींकुरुपुरंप्रविष्टः कृष्णः किमकार्षीदित्यभिप्रायिकंप्रश्नंपरिहरति उषित्वेति सुहृदांपाण्डवानांविशोकायस्वसुः सुभद्रायाश्चप्रियकाम्यया।कतिचिन्मासान्हस्तिनापुरेउषित्वा ॥ ८ ॥

---

## सुबोधिनी।

नद्यः समुद्राजलमिथुनंवृक्षालताश्चापरंस्थलमिथुनं एतद्द्वयमत्रातिरिक्तसर्वहेतुः ओषधयोव्रीह्यादयः सर्वेषांसजीवत्वात् भूतत्वंकाममिच्छानुसारेणइच्छायामपिसत्याम् अकालफलनेदोषनिमित्तत्वेनकदाचित् भयंभवेत् तन्निवृत्त्यर्थमाह अन्वृतुऋतुमनतिक्रम्य ॥ ५ ॥

अध्यात्मनिर्गुणानांस्वतः सिद्धत्वात्दोषाभावायरोगाद्यभावमाह आधिर्मानसीव्यथाव्याधिःशरीरस्यक्लेशा अविद्यादयः इंद्रियसावोगर्भपात व्यभिचारादयोऽपिदैवभूतात्महेतवः क्लेशानभवंतिराजधर्मेणैवसर्वसमाधानात् आदिमध्यावसानेषु राज्यमेकविधमित्याह कर्हिचिदिति ॥ ६ ॥

एवंसामान्यतः सर्वसौख्यमुक्त्वाप्रेमसौख्यनिरूपणार्थं भगवतोनिर्याणोत्सवमाहउषित्वेत्यादियावदध्यायसमाप्ति वृथैवजीवनंलोकेभक्तिज्ञानोत्सवैर्विना कृष्णैकतानचित्तत्वंमुक्तेरप्यधिकंमतम् हस्तिनापुरमिति अलुक्तृतीयासमासः हस्तिनानिर्मितंपुरमितिमध्यपदलोपात् हस्तीराजाहास्तिनः संबंधीतिहास्तिनम् अणप्रत्ययः हस्तिनिर्मितेपुरेवासस्तद्वंश्यानांविमुक्तये निरन्तरस्थितिर्यातुभुक्तिमुक्तिप्रदेतिच ॥ १ ॥ कालस्याकारणत्वायतदंशाः परिकीर्त्तिताः बहुत्वगणनाभावात्तेषांचाहेतुतामता ॥२॥ स्थित्वाशोकापनोदेतुगमनेस्मरणाद्भवेत् स्नेहस्ततः कृतार्थत्वमितिभावोहरेर्मतः ॥ ३ ॥ सुहृदांचविशोकायचकारात्राज्ञः प्रियार्थस्वसुःसुभद्रायाः शोकापनोदः पौत्रोत्पत्त्येतिभगवत्स्थितिः प्रीतिवर्द्धिका ॥ ७ ॥

आमंत्र्येति लौकिकंचकाराद्वरदानादि आलिंगनंसर्वदोषनिवृत्तये अभिवादनंबहिर्मुखत्वेऽपिदोषाभावायचकारादुचितं दानादिकैश्चिदितिसख्यपर्यंतमागतैः प्रेम्णास्निग्धैर्वाकैश्चिदितिताद्दशादुर्लभा इतिद्योतितम् ॥ ८ ॥

---

## श्रीविश्वनाथचक्रवर्त्ती।

स्वसुः सुभद्रायाः ॥ ७ ॥
तं युधिष्ठिरम् ॥ ८ ॥

---

## सिद्धान्तप्रदीपः।

तस्ययुधिष्ठिरस्यराज्ञः प्रजाभूताः नद्यादयः सर्वसुखदावभूवुरितिशेषः ओषधयोवनस्पतिभिः वीरुद्भिश्चसहिताः अनुऋतु ऋतौ फलंतिफेलुः ॥ ५ ॥

अजातशत्रौयुधिष्ठिरेराज्ञिसति दैवभूतात्महेतवः दैवंभूतानि आत्माचहेतुर्येषांते आधिदैविकाधिभौतिकाध्यात्मिकाः आधयोमानसिका व्याधयः शारीराः क्लेशाः जंतूनांकर्हिचिदपिनाभवन् ॥ ६ ॥

पूर्वंगंतुंप्रवृत्तोऽपिसुहृदांयुधिष्ठिरादीनांविशोकायस्वसुः सुभद्रायाः प्रियकाम्ययाहास्तिनपुरे उषित्वा ऽवस्थायरथमारुरोहेति द्वितीयेनान्वयः ॥ ७ ॥

येनपूर्वराज्ञाप्रेम्णानिवारितस्तंयुधिष्ठिरम् अभिवाद्य कैश्चित्स्वसमानवयस्कैरर्ज्जुनादिभिःपरिष्वक्त आलिंगितःकैश्चिन्न्यूनवयस्कैर्नकुलादिभिरभिवादितः रथमारुरोह द्वारकांगंतुमितिशेषः ॥ ८ ॥

---

## भाषाटीका।

नदी समुद्र पर्वत वनस्पति वीरुध ऋतु ऋतुमै राजा के कामों को पूर्ण कर ने लगे और सब औषधि यथा काम फल ने लगीं ॥ ५ ॥

अजात शत्रुको राजा होने पर जंतुओं को दैव भूत और आत्मा के क्लेश कभी भी नही होते थे और न आधि व्याधि होती थी ॥६॥

सुहृदों की विशोक कर ने को और अपनी भगिनी की प्रीति कामना सै हरि नै कतिपय मास हस्तिना पुर मैरह कर । युधिष्ठिर सैपूंछ कर उन की आज्ञा पाकर अभि वादन कर किन्हों को आलिंगन कर किन्हों सै अभिवादितहो कर रथमें आरोहण किया ॥ ७ ॥ ॥ ८ ॥

---

सुभद्रा द्रौपदी कुंती विराटतनया तथा ॥
गांधारी धृतराष्ट्रश्च युयुत्सुर्गौतमो यमौ ॥ ९ ॥
वृकोदरश्च धौम्यश्च स्त्रियो मत्स्यसुतादयः ॥
न सेहिरे विमुह्यंतो विरहं शार्ङ्गधन्वनः ॥ १० ॥
सत्संगान्मुक्तदुःसंगो हातुं नोत्सहते बुधः ॥
कीर्त्यमानं यशो यस्य सकृदाकर्ण्यरोचनम् ॥ ११ ॥
दर्शनस्पर्शनालापशयनासनभोजनैः ॥
तस्मिन्न्यस्तधियः पार्थाः सहेरन् विरहं कथम् ॥ १२ ॥

### श्रीधरस्वामी ।

युयुत्सुर्धृतराष्ट्रात् वैश्यायां जातः गौतमः कृपः । यमौ नकुलसहदेवौ ॥ ९ ॥

अन्याश्च स्त्रियः मत्स्यसुता उत्तरा । तस्याः पुनर्ग्रहणं गर्भरक्षककृष्णस्य विरहेमोहाधिक्यात् । यद्वा मत्स्यसुता सत्यवती ॥ १० ॥

तेषां पुनः श्रीकृष्णविरहासहनं कैमुतिकन्यायेनाह सत्संगादिति द्वाभ्याम् । सतां संगाद्धेतोः मुक्तः पुत्रादिविषयो दुःसंगो येन सः । सद्भिः कीर्त्यमानं रुचिकरं यस्य यशः सकृदप्याकर्ण्य सत्संगं त्यक्तुं न शक्नोति ॥ ११ ॥

दर्शनादिभिः तस्मिन् श्रीकृष्णे न्यस्ता अभ्यस्ता धीर्येषां ते ॥ १२ ॥

---

### श्रीवीरराघवः ।

तदासुभद्राप्रभृतयः विमुह्यंतोमोहिताः शार्ङ्गधन्वनः श्रीकृष्णस्यविरहंविश्लेषंनसेहिरेनासहंत मत्स्युसुतासत्यवती ॥ ९ ॥ १० ॥

युक्तंचैतदित्याभिप्रायेणाहसत्संगादिति द्वाभ्यांसतांसाधूनांसंगाद्धेतोर्मुक्तः दुःसंगोदुरात्मसंयोगोयेनसवुधः पुमान्यस्यरोचनंरुचिकरं कीर्त्यमानंयशएवसकृदाकर्ण्यहातुंनोत्सहते ॥ ११ ॥

तस्मिन्भगवतिकृष्णेदर्शनादिभिर्निहिताधीर्येषांतेपार्थाः तस्यविरहंकथंसहेरन्नसहेरन्नेवेत्यर्थः ॥ १२ ॥

---

### श्रीविजयध्वजः ।

आमंत्र्यद्वारकांगमिष्यामीतियुधिष्ठिरायोक्त्वाशिष्टाचाररक्षणाय युधिष्ठिरंपरिष्वज्याभिवाद्यकैश्चिदर्जुनादिभिः आलिंगितोवंदितश्चरथमारुरोहेत्यन्वयः ॥ ९ ॥

सुभद्रादयः शार्ङ्गधन्वनोहरेर्विरहंनसेहिरेइत्यन्वयः युयुत्सुः धृतराष्ट्राद्वैश्यायांजातोदुर्योधनानुजः गौतमः कृपाचार्यः यमौनकुलसहदेवौ मत्स्यसुतादयः उत्तराप्रभृत्तयः विमुह्यंतः कर्तव्यतामजानंतः ॥ १० ॥ ॥ ११ ॥

पार्थामुकुंदविरहंनसेहिरइत्येतदाश्चर्यंनभवतीत्याह तत्संगादिति तस्यहरेः संगात्सेवालक्षणान्मुक्तः दुः संगः अन्यत्रपुत्रदारादिषु संगः येनसमुक्तदुः संगः बुधोविवेकीजनः तंहातुंनोत्सहतेतस्मादित्यन्वयः तत्रकैमुत्यन्यायमाह कीर्त्यमानमिति भागवतैः कीर्त्यमानं यस्यकृष्णस्ययशः सकृदाकर्ण्यपुंसांरोचनंरुचिजनकम् दर्शनस्पर्शनादिभिरभ्यस्तधियः पार्थास्तस्यविरहंकथंसहेरन्नैवसहेरान्निति किमु वक्तव्यमितिभावः ॥ १२ ॥

---

### सुबोधिनी ।

सुभद्रादयोनसेहिरेविरहमितिसंबंधः देहसंबंधपुरःसरःस्नेहःस्त्रीणामधिकइतिआद्यंतयोर्ग्रहणं विराटतनयाउत्तरायथाभर्त्तातथापुत्रःमारणे रक्षणेऽपिचगांधार्याउत्तरायाश्चतथेति समता राजार्जुनयोरुत्सवासक्त्यानविरहस्फूर्तिः धृतराष्ट्रश्चेतिचकारेणवाग्रहणम् अन्यथाचकारो धृतराष्ट्रस्यभक्तिबोधकः तस्यभक्तिर्दुर्लभेति युयुत्सुर्धृतराष्ट्रस्यभोगस्त्रीपुत्रः गौतमः कृपःगौतमवंशोत्पन्नत्वात् यमौनकुलसहदेवौ ॥ ९ ॥

वृकोदरश्चेति चकारादनुक्तसर्वक्षत्रियग्रहणं धौम्यश्चेति पुरोहितग्रहणादनुक्तब्राह्मणग्रहणं स्त्रियस्तेषां मत्स्यसुतासत्यवती पूर्वोक्तायावाउत्तरायाकार्यार्थमनुवादः विमुह्यंतइति एकशेषात्पुंल्लिंगनिर्देशः शार्ङ्गधन्वनइति कालरूपंधनुर्हस्तेस्थापयतीति तद्विरहेकालभासः शंकितः ॥ १० ॥

## सुबोधिनी ।

विरहासहनंलौकिकंसर्वथानभवतीत्यलौकिकज्ञानेसतिभगवतोऽन्तर्यामित्वाविरहाभावात् अयुक्तं विरहवर्णनमित्याशंक्यज्ञानसत्त्वेऽपि प्रकारविशेषेणपरमसुखदानात् विरहोयुक्तइत्याहसत्संगादितिसार्धेन । भगवद्भिरहकथादूरेभगवत्सेवकानामपि विरहोदुस्त्यजः उपदिष्टे पिज्ञानेअंतर्यामितया भगवत्स्फूर्तावपियोरसः सत्संगादुत्पद्यतेवहिर्भगवत्संबंधनवासनाज्ञानादिभिर्भवति मानसदैहिकस्त्रीसंबंधयोर्वैलक्ष ण्यात् क्रियाश्रवतः सुखस्य त्वसर्ववस्तुनिष्ठरसस्यखनिष्ठ दोषस्फूर्त्यैव अभिव्यक्तिदर्शनात् सायुज्यज्ञानादावपियदात्मसुखमभिव्यक्तं भवतितत्रापिभिन्नतयास्थितंज्ञानप्रवेशेच्छादोषः अन्यथाफलोत्तरंतदपगमोनस्यात् ननुतयोर्गुणत्वमितिचेत्सत्यंलोकेबुभुक्षादीनामपिगुण त्वकथनात् अन्यथातदर्थमुद्यमोनस्यात् तस्मात्भिन्नतयावहिस्थितएवविषयः रसजनकः अतएवयोगिनोऽपिकृष्णाख्येवस्तुनिप्रकटीभूते समाधिंपरित्यज्यतदेवपश्यंति अन्यदातुसमाधिः किंच देहादीनांदोषत्वश्रवणात् प्रलयेतदभावात् मुक्तियोग्यान् जीवान् भगवान्देहसंबंधा न्नकुर्यात् किंच परमकृपालुत्वात् सृष्टिमेवनकुर्यात् अतोदोषोऽपिकचिद्गुणः क्वचिद्दोषः गुणोऽपितथेतिवहिर्व्यवहारपुरः सरमेवसर्वेवेदाः सर्वाणिशास्त्राणिप्रवृत्तानि शक्यव्यवहारस्यमुख्यत्वात्ज्ञानेऽपिसतिभगवद्विरहासहनंयुक्तं समुत्पश्यामः सतांसंगान्नएकस्मिन्संगेविद्यमा नेऽपिसंगांतरमपित्यक्तुंनशक्यतइतिबहुवचनंसतामपिबहुत्वम् एकस्मिन्नपिबहुधारसजननात्तेषामेवकृपयामुक्तोदुष्टैः सहसंगोयेनतदनंतरं तत्कृपयैवबुधः ज्ञानसंपन्नोऽपिस्यात्तथासतिपूर्वेसिद्धान्सत्संगान् चिंतामणिवत्त्यक्तुमिच्छामपिनकरोतीत्यर्थः कीर्त्यमानमितिउभयार्थ मित्येकेयस्यभगवतः कीर्तिसद्भिः कीर्त्यमानांसकृदाकर्ण्यसत्संगात्त्यक्तुंनोत्सहतइतिसंबंधः कीर्तेरुचिजनकत्वात्सत्संगस्यचतद्धेतुत्वात् यशःश्रवणाद्वातस्मिन्न्यस्तधियः यथासमीचीनांपेटिकांदृष्ट्वाखस्योत्कृष्टं वस्तुसर्वेस्थापयंति तथाभगवतः कीर्तिश्रुत्वाबुद्धिरत्नंभगवतिस्था पयंतीत्यर्थः सामान्यग्रहणंवैदिकलौकिकसर्वबुद्धिग्रहणार्थम् । किंच । पार्थाः पृथायाः पूर्वमुक्तत्वात्तद्वचनेनापिभगवतिन्यस्तधियः कथं विरहंसहेरन् असहमानास्तत्रगच्छेयुः प्रतिबंधकंशरीरंवात्यजेयुरिति भगवत्प्रवचनमयुक्तमितिभावः ॥ ११ ॥

तर्हिचलितेभगवति किंजातंतत्राहदर्शनस्पर्शेति दर्शनादयःषट्क्रियाभगवद्योग्याः तेचभगवत्सहभावेनपांडवनिष्ठाः आलापादयस्तुसह वद्दर्शनस्पर्शनयोस्तुविषयत्वमपिसहभावाभावेविषयत्वासंभवात् एवंसहभावेनाश्रयस्तैरेतैः वशीकृताः ॥ १२ ॥

---

## श्रीविश्वनाथचक्रवर्त्ती ।

युयुत्सुर्धृतराष्ट्राद्वैश्यायां जातः । गौतमः कृपः ॥ ९ ॥

मत्स्यसुता उत्तरा तस्याः पुनर्ग्रहणं गर्भरक्षणकृत मोहाधिक्यात् । यद्वा मत्स्यसुता सत्यवती ॥ १० ॥

यस्य यशोऽपि हातुं बुधो नोत्सहते तस्य विरहं पार्थाः कथं सहेरन्नित्यन्वयः । रोचनं रोचकम् । बुधः कीदृशः सत्सङ्गान्मुक्तो दुःसङ्गो येन सः । तेन सत्सङ्गं विना दुःसङ्गो मदमत्सरादिहेतुर्नापयाति तदपगमेन विना भगवद्यशो रोचकं दुस्त्यजञ्च न भवतीति सिद्धान्तो ध्वनितः ॥ ११ ॥

पार्थाः कीदृशाः दर्शनादिभिस्तस्मिन् कृष्णे एव न्यस्तधियः ॥ १२ ॥

---

## सिद्धांतप्रदीपः ।

सुभद्राप्रभृतयोविरहंनसेहिरे इतिद्वितीयेनान्वयः युयुत्सुः शतसंख्याकान् भ्रातॄन्गांधारीपुत्रान्युद्धप्रारंभेविहाययुधिष्ठिरंशरणंगतो धृतराष्ट्राद्वैश्यायांजातः गौतमःकृपः ॥ ९ ॥

मत्स्यसुतादयः मत्स्योदरीप्रभृतयः ॥ १० ॥

शार्ङ्गधन्वनोविरहंनसेहिरेइत्युक्तंतदेवकैमुत्यन्यायेनाह सत्संगादिति द्वाभ्याम् सतांसाधूनाम् तद्यशःश्रावयितॄणांसंगात्यस्ययशः सकृदाकर्ण्य अतएवमुक्तोदुष्टानांतद्यशःश्रवणविरोधिनांसंयोगोयेनसः अतएवचबुधः हेयोपादेयज्ञानवान् पुनःसद्भिः कीर्त्यमानंयशोहा तुंनोत्सहते ॥ ११ ॥

दर्शनादिभिस्तस्मिन् कृष्णेन्यस्तधियस्तस्यविरहंकथंसहेरन् ॥ १२ ॥

---

## भाषा टीका ।

सुभद्रा द्रौपदी कुंती विराट तनया ( उत्तरा ( गांधारी धृतराष्ट्र युयुत्सु कृपाचार्य नकुल सहदेव भीमसेन धौम्य और मत्स्य सुतादिक स्त्रियें येसब विमोहित होकर शार्ङ्ग धन्वा कृष्ण के विरह को नहीं सह सके ॥ ९ ॥ ॥ १० ॥

सत्संगहेत से पुत्रादि कोंके दुः संगसे मुक्त पुरुष सत्पुरुष के कीर्तित रोचन जिनश्री कृष्ण के यश को एक वेर भी सुन कर सत्संग को नहीं छोड़ सक्ते हैं ॥ ११ ॥

उन्हीं श्री कृष्णमें दर्शन भाषणादिकोंसे दर्शन पाणादिकों से न्यस्त बुद्धि पांडवसब कैसे श्री कृष्ण के विरह को सह सक्ते थे ॥ १२ ॥

---

सर्वे तेऽनिमिषैर्नेत्रैस्तमनुद्रुतचेतसः ।
वीक्षंतः स्नेहसंबद्धा विचेलुस्तत्र तत्र ह ॥ १३ ॥
न्यरुंधन्नुद्गलद्बाष्पमौत्कण्ठ्याद्देवकीसुते ।
निर्यात्यगारान्नोऽभद्रमिति स्याद्बान्धवस्त्रियः ॥ १४ ॥
मृदङ्गशङ्खभेर्य्यश्च वीणापणवगोमुखाः ।
धुन्धुर्य्यानकघण्टाद्या नेदुर्दुन्दुभयस्तदा ॥ १५ ॥
प्रासादशिखरारूढाः कुरुनार्य्यो दिदृक्षया ।
ववृषुः कुसुमैः कृष्णं प्रेमव्रीडास्मितेक्षणाः ॥ १६ ॥

### श्रीधरस्वामी ।

अतएवानिमिषैर्नेत्रैस्तमेव वीक्षमाणाः तत्र तत्राईणानयनार्थं चलन्ति स्म । यतः स्नेहेन सम्यक् बद्धा अतएव तमनुद्रुतानि अनुगतानि चेतांसि येषां ते ॥ १३ ॥

देवकीसुते अगारान्निर्याति निर्गच्छति सति बान्धवस्त्रियः औत्कंठ्याद्धेतोः उद्गलत् स्रवद्वाष्पम् अश्रूण्यरुन्धन् नेत्रेष्वेव स्तम्भितवत्यः तत्र हेतुः अभद्रं नो स्यात् अमंगलं माभूत् इत्येतदर्थम् ॥ १४ ॥

मृदंगादयो दश वाद्यभेदाः ॥ १५ ॥

प्रेमव्रीडास्मितपूर्वमीक्षणं यासां ताः ॥ १६ ॥

---

### श्रीवीरराघवः ।

तेपार्थादयःसर्वेस्नेहश्चसंबन्धश्चतयोः समाहारस्तस्मात्स्नेहाच्छरीरसम्बन्धाच्चानुद्रुतमनुसृतंचेतोयेषांतथाभूताः संतोऽनिमिषैर्निमेषरहितैरनन्यपरैरक्षैरक्षिभिः अक्षशब्दइंद्रियवाच्यप्यौचित्याच्चक्षुः परः तमेववीक्षंतः तत्रतत्रचेलुः परिबभ्रमुः ॥ १३ ॥

तदाबांधवाः कुन्तीप्रभृतयः स्त्रियः अगारादगृहाद्देवकीसुते निर्यातिनिर्यातेसत्यभद्रंनस्यादितिबुद्ध्याप्रेमपूर्वकानुध्यानादुद्गलद्बाष्पंन्यरुंधन् ॥ १४ ॥

मृदंगादयः समंयुगपन्नेदुर्दध्वनुः ॥ १५ ॥

कुरूणांनार्यः कृष्णंद्रष्टुमिच्छवः प्रासादशिखरारूढाः प्रेमादीन्यासांसंतीतितथा द्वंद्वान्मत्वर्थीयोऽर्शआद्यच् ॥ १६ ॥

---

### श्रीविजयध्वजः ।

विरहमसहमानानांतेषांभक्तिप्रसरसंप्लवातिरेकमाह सर्वइति अनिमिषैः पक्ष्मव्यापाररहितैः अक्षैर्नेत्रैस्तंवीक्षमाणाः कृष्णानुगतहृदयाः तेसर्वेस्नेहात्तत्रतत्रविचेरुरित्यन्वयः यावद्यावद्दूरंगतः तावत्तावदुत्तुंगं भूपृष्ठमारुह्यवीक्षमाणास्तस्थुरदर्शनेयातेतास्मिंश्चेतसा तमनुदुद्रुवुरित्यर्थंहशब्दः सूचयति ॥ १३ ॥

पांडवस्त्रियः देवकीसुते अगारात् नगारोनिगिरणंनाशलक्षणंयस्मात्सोऽगारः अगावृक्षाएवाराणिवंशवंश्यलक्षणानियस्येतिवा अगमगमनंकांत्यतिशयादेररमलंयस्मादितिवा अगानांस्वर्णात्मकानांपर्वतानामारः प्रवेशलक्षणंगमनंयस्मिन्निति वा तस्मात्पुरान्निर्यातिसत्यभद्रममंगलंनस्यादितिभावेनौत्कंठ्यादुद्ग तंबाष्पंनेत्रजलंन्यरुंधयन्स्तंभितवत्यइत्येकान्वयः ॥ १४ ॥

मार्दंगिकादिभिराहतामृदंगादयोनेदुरित्यन्वयः भेरिनामचर्मपिहितादीर्घमहद्दारुष्टतोवाद्यविशेषः धुंधुरिकाख्यात्मकंवाद्यं दुंदुभिः तिरश्चीनवाद्यविशेषः आनकः पटहः पणवोढक्काविशेषः ॥ १५ ॥

प्रेम्णाव्रीडेनस्मितेनचसहितमीक्षणं दर्शनंयासांतास्तथोक्ताः व्रीडाशब्दउभयलिंगः प्रेमव्रीडाभ्यांयत्स्मितंतत्पूर्वमीक्षणंयासामितिवा कुसुमैः कुसुमानि व्यत्ययोभक्त्यतिशयद्योतनार्थः पुष्पैःकरणैरितिवा ॥ १६ ॥

---

### क्रमसंदर्भः ।

निर्यातीत्यश्रुशोषकेण भयेनेत्यर्थः ॥ १४ ॥ १५ ॥

प्रेमयुक्ताभ्यां व्रीडास्मिताभ्यामीक्षणं यासां क्रमेण शृंगारमयशान्तमय स्त्रीणांताः । वियोगारम्भे पूर्वासां स्मितासम्भवात् विच्छिद्य व्याख्यातम् ॥ १६ ॥ १७ ॥ १८ ॥

## सुबोधिनी ।

सर्वेस्वचित्तंभगवतिदत्तवंतः शयनादिभिर्वातस्मिन्ननिमिषादृष्टयोजाताः दृष्ट्यातुभगवंतमनुदत्तंचित्तम् एवंकायवाङ्मनोवृत्तयः भगवत्युक्ताःविवेकधैर्यादिकंनोत्पन्नमित्यर्थःततः किंजातंतदाहवीक्षंतइतिविरहोगमनस्मरणादुत्पन्नोऽपिभगवद्दर्शनान्निस्मृतः यदाविरहस्तदातथाम विष्यतिव्यर्थमिदानीं परमानंदानुभवंपरित्यज्योद्वेगइति विचारयंतइवदेहेंद्रियांतः करणवृत्तीःभगवतियोजितवंतः तत्रेक्षणमिंद्रियवृत्त्युपलक्षणंस्नेहेनसंबद्धाइत्यंतः करणस्यस्नेहोहिभगवंतमुपस्थापयतिहृदये वहिः स्थितेवाभगवंतिजीवमानयतिउभयथाप्यत्रनविरोधः विचेरुरितिशरीर क्रियाभगवद्गमनोपयोगिकार्यार्थं तत्रतत्रशरीरंचालितवंतइत्यर्थः अतः परंपरयाशरीरस्थितिः साद्भुतक्रमलीलयाभगवतः १३

अतएवमहदतिरोदनेकर्त्तव्येभगवदिच्छयाअल्पमपिरोदनं नकृतवंतइत्याह न्यरुंधन्निति पूर्वस्थित्याउद्गलदपिवाष्पंदेवकीसुते गृहान्निर्गच्छतिसतिअभद्रममंगलसूचकं माभूदितिनेत्रेष्वेवस्तंभितवत्यः एवंहिभगवदिच्छाप्रवलास्वयंकुतः शरीरादिकंत्यक्ष्यंति यतःप्रेमौत्कंठ्यादुद्गतवाष्पमपिनिवारयंतिदेवकीसुत इतियुक्तमेवभगवद्गमनंयतोमहत्तपस्यया देवक्यापुत्रत्वेनप्रार्थितः पुत्रोजातः कथंतांद्रष्टुंनगच्छेत् अतएवास्माभिरपशकुनंनविधेयमितिभावः अगारादितिअस्मद्गृहेभगवान्समागतः कृतश्चोपकारः तादृशस्यस्वगृहगमने अपशकुनकरणमयुक्तं स्यात् इहिहेतोः बांधवस्त्रियः न्यरुंधन्नितिसंबंधः बंधुत्वमपिस्फुरितमितिभावः ॥ १४ ॥

भगवतोनिर्याणोत्सवेदशविधवाद्यानिवादितवंत इत्याहमृदंगेति तत्रमृदंगभेरीपणवानकदुंदुभयः पंचनद्धभेदाः शंखगोमुखौशुषिरभेदौवीणा कातततरूपाघंटाधुंधुर्यौघनभेदौ एवंचतुर्विधवाद्यमुक्तम् एतेषांलक्षणानिवाद्याध्यायप्रसिद्धानि ॥ १५ ॥

उत्सवेस्त्रीणांदर्शनंवर्णनीयमितिपुष्पवृष्टिसहितं तदाहप्रासादेति शिखरमंतिमगृहंकुरुनार्यइतिकुलस्त्रीणांवहिर्गमनाभावः पुष्पवृष्टौसत्यांभगवानात्मानंपश्येदितिकुसुमैर्ववृषुः प्रेमव्रीडास्मितानिगुणकार्याणि ईक्षणसहकारीणि प्रेमादिपूर्वक मीक्षणंयासांभक्तिधर्मज्ञानप्रकारैः बहुविधैर्भगवान्दृष्टइत्यर्थः ॥ १६ ॥

---

## श्रीविश्वनाथचक्रवर्त्ती ।

अतएव अनिमिषैरक्षैस्तमेव वीक्षमाणाः । अनु वीक्षणानन्तरं विक्लिन्नचेतसः ततः स्नेहेन सम्यग्वद्धा अतएव तत्र तत्र विचेलुः यत्र यत्र स चलति स्मेत्यर्थः ॥ १३ ॥

अगारान्निर्याति निर्गच्छति सति औत्कंठ्याद्धेतोरुद्गलंतं स्रवन्तं वाष्पम् अश्रूण्यरुन्धन् स्तम्भितवत्यः । तत्र हेतुः अभद्रं नो स्यादमंगलं माभूदित्येतदर्थम् अत्रोद्गलदिति शतृप्रत्ययेन उद्उपसर्गेण च यत्नतो निरुद्धान्यप्यश्रूणि सस्रुरेव केवलममंगलनिवारणार्थं पटांचलेन गोपयांचक्रुरिति लभ्यते ॥ १४ ॥

मृदंगादयो वाद्यभेदाः ॥ १५ ॥

कुसुमैः कुसुमानि । प्रेमव्रीडास्मितानि ईक्षणेषु व्यंजितानि यासां ताः ॥ १६ ॥

---

## सिद्धांतप्रदीपः ।

अतएवतेसर्वेतमेवश्रीकृष्णमनिमिषैर्नेत्रैर्वीक्षंतः देहगेहव्यवहारपरित्यागपूर्वकंतंप्रत्येवानुद्रुतंचेतोयेषांते तत्रतत्राऽर्हणाद्यानयनार्थं विचेलुः परिवभ्रमुः ॥ १३ ॥

तदाऽगाराद्देवकीसुतेनिर्यातिनिर्गच्छतिसति अभद्रमाभूदितिहेतोः औत्कंठ्यात्स्नेहातिशयादुद्गलद्वाष्पंबांधवस्त्रियोन्यरुंधन् ॥ १४ ॥

समंयुगपत् ॥ १५ ॥

प्रेमादिपूर्वकमीक्षणंयासांताः ॥ १६ ॥

---

## भाषाटीका ।

वेसमस्त पांडव कृष्णमें है अनु प्रविष्टचित्त जिन का अनि मिष ने त्रोंसे कृष्ण को दर्शन करते स्नेह संवद्ध होकर यात्रा के कार्यों के निमित्त इधर उधर चलतेथे ॥ १३ ॥

बांधवों की स्त्रियों ने उत्कंठा से निकल ते आँसुओं की धाराओं को रोकलिया कि देवकी सुत श्री कृष्ण की घर से यात्रा के समय अमंगल नहो ॥ १४ ॥

मृदंग शंख भेरी पणव आनक गो मुख धुन्धुरी आनक घंटा दुन्दुभी आदि बाजे तब बजन लगे ॥ १५ ॥

कुरु नारी सब देखने की इच्छा से प्रासादों की शिखर पर चढी और प्रेम लज्जास्मित सहित देखती कृष्णपर पुष्पों से वर्षा करने लगी ॥ १६ ॥

---

सितातपत्रं जग्राह मुक्तादामविभूषितम् ।
रत्नदण्डं गुडाकेशः प्रियः प्रियतमस्य ह ॥ १७ ॥
उद्धवः सात्यकिश्चैव व्यजने परमाद्भुते ।
विकीर्य्यमाणः कुसुमै रेजे मधुपतिः पथि ॥ १८ ॥
अश्रूयन्ताशिषः सत्यास्तत्र तत्र द्विजेरिताः ।
नानुरूपानुरूपाश्च निर्गुणस्य गुणात्मनः ॥ १९ ॥
अन्योऽन्यमासीत् संजल्प उत्तमःश्लोकचेतसाम् ।
कौरवेन्द्रपुरस्त्रीणां सर्व्वश्रुतिमनोहरः ॥ २० ॥

श्रीधरस्वामी ।

गुडाका निद्रा तस्या ईशो जितनिद्रोऽर्जुनः ( गुडाका धनुर्विद्या तस्या ईश इति वा धनुर्वेदपारग इत्यर्थः ॥ १७ ॥

व्यजने चामरे जगृहतुः । मधुपतिः श्रीकृष्णः ॥ १८ ॥

सत्याः श्रीकृष्णे तासाम् अव्यभिचारात् किंतु नानुरूपाश्च ता अनुरूपाश्च निर्गुणस्य परमानंदस्य सुखीभवेत्यादयो नानुरूपाः गुणात्मनो मनुष्यनाट्यावतारे अनुरूपाश्चेत्यर्थः सन्धिरार्षः ॥ १९ ॥

सर्वासां श्रुतीनां मनोहरः उपनिषदोऽपि मूर्त्तिमत्यः सत्यः तं संजल्पमभ्यनन्दन्नित्यर्थः ॥ २० ॥

---

दीपनी ।

मुक्तादामेति । मुक्तादामभिर्मुक्तालम्बैर्विभूषितम् रत्नघटितो दण्डो यस्य तत् । एवंभूतं श्वेतच्छत्रमित्यर्थः ॥ १७ ॥ ३५ ॥

---

श्रीवीरराघवः ।

सितातपत्रं कथंभूतं मुक्तानांदामभिः सरै विंभूषितंरत्नमयोदंडोयस्यतत् ॥ १७ ॥

उद्धवः सात्यकिश्चोभौपरमेश्रेष्ठेऽद्भुतेचव्यजनेजगृहतुः पथिकुसुमैर्विकीर्यमाणोमधुपतिर्यदुपतिर्यदूनामेवमधवइतिनामांतरंतच्चन त्रमेस्फुटीभविष्यतिरेजेरराज ॥ १८ ॥

निर्गुणस्यसत्वादिप्राकृतगुणरहितस्यगुणात्मनः ज्ञानादिषाड्गुण्यस्वभावस्य "सत्वादयोनसंतीशे"इतिवलैश्वर्येत्यादिवचनात् नानुरूपाः अवाप्तसमस्तकामत्वात् अनुरूपाः भक्तिस्नेहकारितत्वात् तत्रतत्राद्विजेरिताः अतएवसत्याआशिषःअश्रूयंत ॥ १९ ॥

उत्तमश्लोकेकृष्णएवचेतांसियासांतासांकौरवेन्द्रपुरस्त्रीणामन्योन्यंसर्वेषांश्रुतिमनोहरः सुखकरः श्रोत्राणिमनांसिचवशीकरोतीति तथावासंजल्पः सम्वादआसीत् ॥ २० ॥

---

श्रीविजयध्वजः ।

गुडाका"निद्रानिद्रागुडाकासंप्रोक्ताप्रमीलामृत्युरुच्यत"इत्यभिधानम् तस्याः ईशःगुडाकेशः जितनिद्रोऽर्जुनःइंद्रकीलकेविनिद्रोभूत्वातप्त तपाः पशुपतेरेतन्नामलब्धवान् गुडवद्रक्तकेशोवा दीर्घस्तुच्छांदसः मुक्तादामविभूषितं मौक्तिकमालालंकृतप्रांतमंडलंरत्नखचितदंडंसितात पत्रंश्वेतच्छत्रंजग्राहेत्यन्वयः हरेरात्मादेरातिशयेनाप्रियत्वं "तदेतत्प्रेय"इत्यादिश्रुतिप्रसिद्धंहशब्देनाह अर्जुनस्यकैंकर्यातिशयदर्शीवाखसार थ्यकरणलक्षणापराधपरिहारार्थोवा ॥ १७ ॥

उद्धवसात्यकीचव्यजने जगृहतुरितिपूर्वेणसंबंधएवशब्दः स्वहस्ताभ्यामेवजगृहतुर्नत्वन्याभ्यांस्वदासाभ्यामित्यस्मिन्नर्थे मधूनांया दवगोत्रविशेषाणांपतिः मुक्ताधीशोवा कुसुमैः कुरुपुरंध्रिकरकमलमुक्तैरितिशेषः पथिराजमार्गे ॥ १८ ॥

कुरुपुरेतत्रतत्रतत्तन्मा र्गेद्विजवरमुखनिः सृताः दुष्टान्जहिसाधून्पालयपालयास्माननुगृहाणेत्यादिकाशिषः शुभवाक्यप्रबंधाः अश्रूय तेत्यन्वयः कीदृश्यः सत्याः यथार्थविषयाः निर्गुणस्यसत्वादिगुणप्रवृत्त्युदासीनकार्येऽडीस्थत्वासत्वादिगुणानातथतिसततंप्रवर्तयतीतिगुणा त्मा अतसातत्यगमनइतिधातोः उणादिप्रत्ययनिमित्तमेतद्रूपं तस्यपालनादिकर्तुरनुरूपाः पालनानुग्रहादिगुणात्मनोवा चशब्दः समुच्च येद्वार्थोवा ॥ १९ ॥

### श्रीविजयध्वजः।

नकेवलंकुरुपुरस्त्रियोहरौपुष्पावकीर्णमकुर्वन्‌किंतुस्तुतिमपीतिभावेनाह । अन्योन्यमिति उत्तमश्लोकचेतसांकौरवेंद्रपुरस्त्रीणांसर्वश्रुतीनांवेदाभिमानिनीनांदेवतानां मनोहरः सर्वेषांजंतूनांश्रुतीः श्रवणानिमनांसिचहरंतीतिवापरस्परंसंजल्पः स्तुतिलक्षणः संलापआसीदित्येकान्वयः ॥ २० ॥

---

### क्रमसंदर्भः।

यद्यपि श्रीभगवति स्वरूपभूतानां गुणानां नित्यत्वमेव तथापि तत्तल्लीलासिद्ध्यर्थं तेषां क्वचित् कस्यचित् प्रकाशः कस्यचित् अप्रकाशश्च भवति । अतएवाह अश्रूयन्तेति । निर्गुणस्य मध्यपदलोपेन निर्गता गुणेभ्यो गुणा यस्य तस्य प्राकृत गुणातीतनित्यगुणस्य नानुरूपाः नित्यतत्परिपूर्णत्वेन लाभान्तरायोगात् । गुणात्मनः तदाशीर्वादांगीकारद्वारा तत्तद्गुणविशेष प्रवर्त्तकनिवर्त्तकस्यानुरूपाश्च । तदंगीकारे हेतुः सत्या इति । तदेवं प्रकाशना प्रकाशनहेतोरेव श्रीभगवतश्चन्द्रपरंपराद्यौज्ज्वलतादिके सत्यपि तत्तल्लीलामाधुर्यविस्तारकस्तामस्मादिव्यवहारः सिद्ध्यति ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥

---

### सुबोधिनी।

पुरुषाणांकृत्यमाहत्रिभिः सितातपत्रमिति आरक्तोदंडः श्वेतंछत्रंमुक्तादामानिपरितोलंबंतिगुडाकानिद्रातस्याईशः गतभ्रमोऽर्जुनः उपचारेषुसर्वेषुमहाराजत्वमुत्तमं तस्यचिन्हंहितच्छत्रमर्जुनस्तेनबुद्धिमान् प्रियःप्रीतिविषयः अनेनभगवताबहुकृतमितिसूचितं प्रियतमस्यभगवतोयुधिष्ठिराद्यपेक्षयापिभगवान्प्रियतमः अतोमहाराजयोग्यं स्वस्यहीनत्वमपिबोधयित्वाधृतवानित्यर्थः हेत्याश्चर्येलौकिकत्यागात् ॥ १७ ॥

व्यजनेचामरव्यजनेपरमाद्भुतेस्वतएवशीतलसुगंधवायुजनके पथिपुष्पैर्विकीर्यमाणः हृदिस्थितैः रेजेपरमशोभांप्राप्तवान् सर्वाण्येव पुष्पाणिपुष्पवृष्टौसमागतानीवसंतएवायंभगवानाविर्भूतइतिमधुपतिरित्यक्तं विष्णुपूजावातैः सर्वैःकृता माल्यार्थेपुष्पाणिविनियुक्तानीति मधुपतिरित्यक्तं "विष्णोः पदेपरमेमध्वः" इतिश्रुतेःसिंहासनोपवेशनापेक्षयापिपथिपरमाशोभाजाता ॥ १८ ॥

एवमन्यवर्णानांकृत्यमुक्त्वाब्राह्मणानामाह अश्रूयंताशिषइति ब्राह्मणानामयंजातिधर्मः यदीश्वरेआशीर्दानम्अविद्यमानार्थस्याशंसनरूपं तद्दैवतेषांवाक्यंप्रमाणंस्यात् अनधिगतार्थगंतृत्वात् प्रकृतेतुतदभावः आशिषांसिद्धत्वेनानुवादात् तथादृष्टार्थत्वपर्यवसानात् सत्याएवाशिषः अतएवश्रुताएवनगृहीताः अनुवादांशेअनुरूपाः आशंसायामननुरूपाःउभयोः समासः चकारात्प्रत्येकरूपाश्चप्रत्येकरूपत्वेहेतुः निर्गुणस्यअनुरूपाः गुणात्मनोनुरूपाः अन्येचतद्विपरीताः सर्वभवनसमर्थत्वाद्भगवतः सर्वाएवाशिषः सत्याः अतःशुभाइत्यर्थः द्विजेतिवारद्वयजन्मनाव्यग्राः संतःनिर्धार्यवचनेअशक्ताइतिसूचितम् ॥ १९ ॥

एवंसर्वेषांकृत्यमुक्त्वाविरहादिसहनमेवक्रियाचभगवत्सांनिध्येवहिर्मुखत्वंचभगवदिच्छयैवनाज्ञानादितिवक्तुंतासांज्ञानमाविःकरोतिअन्योन्यमासीदितियत्रस्त्रीणामेवज्ञानंतत्रकिंवक्तव्यमन्येषामितिभावःसम्यक्जल्पःस्वपक्षस्थापनपूर्वकपरदूषणवाक्संदर्भोजल्पः यद्यपिकथारूपजल्पस्यमध्यस्थाद्यपेक्षातथापि विचाररूपजल्पस्यनान्यसापेक्षत्वामितिसुष्ठुत्वम् अपिचक्कुः प्रवचनमेकमितिन्यायोनात्रकिंतुअन्योन्यंसर्वेश्रोतारःसर्वेवक्तारश्चेतिएतादृशकथनेहेवः उत्तमश्लोकचेतसामितियथालौकिकेस्त्रीणांनिपुणताभवति तच्चित्तानांतथाभगवत्यपिइदमित्थतयाज्ञानेयुक्तमिव । किंच । कुरोर्महापुरुषस्यधर्मत्वेनपरिगणतस्य वंश्याअपिधर्मत्वेनज्ञानवंतः तत्राप्ययंयुधिष्ठिरः परमैश्वर्यप्राप्तः पूर्णज्ञानादिमानूतस्यपुरस्त्रीणांभगवत्परत्वं युक्तमेव नन्वन्येत्वेवमजानंतः श्रुत्वान्येभ्यउपासतइतिन्यायेनतासांज्ञानमस्तु नतुसंजल्पस्तत्राहसर्वश्रुतिमनोहरइतिसर्वासांश्रुतीनांमनस्तात्पर्यंहरतीति सर्वेषांवाश्रुतिमनसीस्ववशेकरोतीतितथानह्येतादृशः संजल्पःयथाकथंचिद्भवति किंच भगवच्चेतसामेवभवति ॥ २० ॥

---

### श्रीविश्वनाथचक्रवर्त्ती।

गुडाका निद्रा तस्या ईशो जितनिद्रोऽर्जुनः ॥ १७ ॥ १८ ॥

सत्याः कृष्णे तासामव्यभिचारात् । किन्तु ता नानुरूपा अनुरूपाश्च । सन्धिरार्षः । ऐश्वर्य्यदृष्ट्या निर्गुणस्य परमानन्दस्य सुखी भवेत्यादयो नानुरूपाः माधुर्य्यदृष्ट्या गुणात्मनो ब्रह्मण्यत्वप्रेमवश्यत्वाद्यप्राकृतगुणमयस्य तस्य अनुरूपाश्च युष्माकमाशीर्भिरेव मम सदा सुखमिति तत्प्रतिवचनस्य मिथ्यात्वानर्हत्वात् तस्य दास्यसख्यवात्सल्यादिरसविषयाश्रयत्वे सति तत्तद्भक्तजनसंयोगविरहाद्य लौकिकसुखदुःखादिमयत्वाच्च ॥ १९ ॥

सर्व्वेषामेव श्रुतिमनसी हरतीति सः । शेषे सर्व्वासां श्रुतीनामपि मनोहरः । उपनिषदोऽपि मूर्त्तिमत्यः तं संजल्पम् अभ्यनन्दन्नित्यर्थः ॥ २० ॥

---

स वै किलायं पुरुषः पुरातनो य एक आसीदविशेष आत्मनि ।
अग्रे गुणेभ्यो जगदात्मनीश्वरे निमीलितात्मन्निशि सुप्तशक्तिषु ॥ २१ ॥
स एव भूयो निजवीर्य्यचोदितां स्वजीवमायां प्रकृतिं सिसृक्षतीम् ।
अनामरूपात्मनि रूपनामनी विधित्समानोऽनुससार शास्त्रकृत् ॥ २२ ॥
स वा अयं यत्पदमत्र सूरयो जितेन्द्रिया निर्जितमातरिश्वनः ।
पश्यन्ति भक्त्युत् कलितामलात्मना नन्वेष सत्त्वं परिमार्ष्टुमर्हति ॥ २३ ॥
स वा अयं सख्यनुगीतसत्कथो वेदेषु गुह्येषु च गुह्यवादिभिः ।
य एक ईशो जगदात्मलीलया सृजत्यवत्यत्ति न तत्र सज्जते ॥ २४ ॥

सिद्धांतप्रदीपः ।

गुडाकेशोनिद्रेशोऽर्जुनः ॥ १७ ॥
व्यजनेजगृहतुः रेजेरराज ॥ १८ ॥
निर्गुणस्यप्राकृतगुणरहितस्य"यआत्माऽपहतपाप्माविजरोविमृत्युर्विशोकोविजिघत्सोऽपिपास"इतिश्रुतेः गुणात्मनः कल्याणगुणयुक्तस्य "अनन्तकल्याणगुणात्मकोसाविति"स्मृतेः नानुरूपाः पूर्णकामत्वात् अनुरूपाश्चभक्तकृतप्रियत्वात् संधिरार्षः ॥ १९ ॥
सर्वश्रुतीनांवेदवाक्यानांमनांसिहरतीतिसतथासंजल्पः ॥ २० ॥

---

भाषा टीका ।

मुक्तादाम विभूषित रत्नदंड श्वेत छत्र प्रिय तम श्री कृष्ण पर प्रिय अर्जुन नै लगाया ॥ १७ ॥

उद्धव और सात्य की नै परम अद्भुत व्यजन धारण किये । उससमय पुष्पों की वृष्टिसै मधुपति की मार्ग मै वडी शोभाहुई ॥ १८ ॥

वहां ब्राह्मणों के कथित सत्य आशी वादे निर्गुण और गुणात्मा सुनाई पडते थे । कि जो भगवान के अनुरूप और अननुरूप थे ॥ १९ ॥

उससमय उत्तम श्लोक कृष्णमै निमिष चित और वेन्द्र पुर स्त्रियों का पर स्पर संलाप हुआथा । वह सव श्रुतियों के भी मन के हरण कर ने वालाहै २० ॥

---

श्रीधरस्वामी

अत्र तेजः सौन्दर्याद्यतिशयेन विस्मिताभ्यः सखीभ्योऽन्या स्त्रियः कथयन्ति नात्र विस्मयः कार्यः साक्षादीश्वरत्वादस्येति स वै इति चतुर्भिः । वै स्मरणे । किलेति प्रसिद्धप्रमाणद्योतनम् य एक एवाद्वितीयः पुरुष आसीत् स एवायं श्रीकृष्णः । कुत्रासीत् अविशेषे आत्मनि निष्प्रपंचे निजरूपे । कदा अग्रे गुणेभ्यः गुणक्षोभात् पूर्वं तथा निशि प्रलये च । अन्य लक्षणं जगतामात्मनि जीवे निमीलितात्मन्निति लुप्तसप्तम्यन्तं पदं जातावेकवचनम् ईश्वरे लीनरूपेषु जीवेषु सत्स्वित्यर्थः । ननु जीवानां ब्रह्मत्वात् कथं लयः तत्राहुः सुप्तासु शक्तिषु सतीषु जीवोपाधिभूतसत्वादिशक्तिलय एव जीवलय इत्यर्थः ॥ २१ ॥

तदेवं सृष्टेरादौ प्रलयान्तरंच निष्प्रपंचावस्थानमुक्त्वा स्थितौ सृष्टिप्रलययोर्मध्ये सप्रपंचावस्थानमाहुः स इति । स एव अप्रच्युतस्वरूपस्थितिरेव प्रकृतिम् अनुससार अधिष्ठितवान् । भूयः पुनः सृष्टिप्रवाहस्यानादित्वात् । कीदृशीं निजवीर्यचोदितां स्वकालशक्तिप्रेरितां स्वांशभूतानां जीवानां मायां मोहिनीम् अतएव सिसृक्षतीं स्रष्टुमिच्छन्तीम् । किमर्थमनुससार अनामरूपे आत्मनि जीवे रूपनामनी विधातुमिच्छन् उपाधिसृष्ट्या जीवानां भोगायेत्यर्थः । कर्माणि च विधातुं वेदान् कृतवानित्याहुः शास्त्रकृदिति ॥ २२ ॥

अस्य दर्शनमतिदुर्लभमप्यस्माभिर्लब्धमित्याहुः । स वै अयं यस्य पदं स्वरूपम् अंघ्रिं वा निर्जितो मातरिश्वा प्राणो यैः तत्त्वमार्षे ते सूरय एव पश्यन्ति । केन भक्त्या उत्कलितः उत्कंठितः अमलो य आत्मा बुद्धिस्तेन "दृश्यते त्वग्र्यया बुद्ध्या" इति श्रुतेः । बुद्धिनैर्मल्यस्याप्ययमेव हेतुरित्याहुः—ननु हे सखि एष एव सत्त्वं बुद्धिं परिमार्ष्टुं सम्यक् शोधयितुम् अर्हति ननु योगादय इत्यर्थः । यद्वा नु अहो एष सत्त्वं ज्ञानं परिमार्ष्टुं नाशयितुं दूरगमनेनाप्रत्यक्षीभवितुं नार्हति किन्तु अनेन सहैव ( अस्माभिः ) गंतव्यमित्यर्थः ॥ २३ ॥

पुण्यश्लोकतामाहुः स इति । हे सखि यो वेदेषु रहस्यागमेषु च रहस्यनिरूपकैः अनुगीतसत्कथः अनुगीताः सत्यः कथा यस्य स एवायम् । गानप्रकारमाहुः य एक ईश इत्यादि ॥ २४ ॥

### श्रीवीरराघवः ।

संजल्पमेवाहसवैकिलेत्यादिभिर्दशभिः तावत्प्रलयदशायांकृत्स्नजगदुपादानत्वेननिमित्तत्वेनचयएकोऽवस्थितः यश्चततो "बहुस्यांप्रजायेयनामरूपेव्याकरवाणि" इतिसंकल्पपूर्वकंनामरूपव्याकर्तायश्च "तस्यहवाएतस्यमहतोभूतस्यनिश्वसितमेतद्यदृग्वेदः योब्रह्माणंविदधातिपूर्वंयोवैवेदांश्चप्रहिणोतितस्मै" इतिवेदादिभिः कर्तृत्वेनतत्प्रवर्तकत्वेनचप्रसिद्धः यश्चमुमुक्षुभिर्ध्येयोदृश्यश्चवेदांतवेद्यस्वरूपस्वभावः यश्चजगत्सर्गस्थितिलयलीलः सएवायंकृष्णइतिजल्पन्तिचतुर्भिः निशिप्रलयदशायांगुणेभ्यः सत्त्वादिगुणोन्मेषादग्रेपूर्वं सुप्तशक्तिषुसतीषुकर्मरूपशक्तिषुसुप्तासुफलप्रदानायाप्रवृत्तास्वित्यर्थः आत्मनिस्वस्मिन्जगदात्मनिसूक्ष्मचिदचिद्रूपजगच्छरीरकेकार्य्यदशायांजगदंतरात्मनीतिवाईश्वरेनियंतरिनिमीलितवान् आत्मामतिः निवृत्तसर्गादिसंकल्पेस्वास्मिन्नविशेषेसतिविशेषाः पृथिव्यादिभूतानि "महदाद्याविशेषांता" इतिप्रयोगात् तच्चप्रदर्शनार्थंकार्यवर्गरहितेसतिनामरूपविभागरहितेसतीतिवाएकोऽद्वितीयः एकअविभक्तचिदचिच्छरीरकतयैकः उपादानभूतः अविभक्तनामरूपताहिह्युपादानताअद्वितीयः निमित्तांतररहितएकइत्यनेनोपादानत्वोक्त्या निमित्तस्यैवधीस्थत्वादद्वितीयः इत्यनेननिमित्तांतरनिषेधः एवंविधोयआसीत्सएवायंकिलश्रीकृष्णइत्यनेनान्वयः ॥ २१ ॥

सएवभूयइति यएकोऽद्वितीयोभूत्वाभूयः निजवीर्यचोदितांबहुस्यामित्यादिस्वसंकल्पप्रेरितांस्वजीवमायांस्वशेषभूतजीवतिरोधायिकांप्रकृतिंप्रतिसिसृक्षतींस्रष्टुमुन्मुखीमनुससारअन्तरात्मतयाप्रविश्यनामरूपेव्याकरोदित्यर्थः कथंभूतः अनामरूपात्मनिनविद्येतेनामरूपेयस्यतस्मिन्नात्मनिजीवेरूपनामनीनामरूपेविधित्समानश्चिकीर्षुः शास्त्रकृद्वेदप्रवर्त्तकोयः सएवायंश्रीकृष्णोवर्त्ततइत्यर्थः ॥ २२ ॥

सवाइतिनिर्जितानींद्रियाणयंतर्वाह्यानियैः निर्जितः मातरिश्वाप्राणोयैस्तेसूरयः भक्त्योत्कलितंसंयुक्तमतएवामलंचेतस्तेनयस्यपदंस्वरूपंपश्यन्तियोऽयंचसत्त्वमन्तः करणंपरिमार्ष्टुंशोधयितुमर्हतिसएवायंकृष्णः ॥ २३ ॥

सइति हेसखि!गुह्येषुवेदेषुवेदांतेषुगुह्येष्वितिविशेषणाद्वेदवादिभिर्वेदांतगुह्यरूपस्वरूपगुणयाथात्म्योपदेष्टृभिश्चानुगीयमानासतीविशुद्धाकथायस्ययश्चैकएवसन्नात्मनः स्वस्यलीलार्थंजगत्सृजत्यवतिरक्षत्यत्तिसंहरतेतत्रजगतिनसज्जतेजगदंतरात्मतयास्थितस्तद्गतदोषैर्नसज्जतेचनपक्षपातीतिवासएवायंकृष्णः ॥ २४ ॥

---

### श्रीविजयध्वजः ।

कोसावितितत्राह सवाइति हर्यपेक्षयाऽप्रधानत्वात्गुणशब्दवाच्येभ्योमहदादितत्त्वेभ्योऽग्रेनिशिमहाप्रलयेसुप्तशक्तिषुशक्यत्वात्तदधीनत्वाच्छक्तिशब्दवाच्यासुसत्त्वादिगुणाभिमानिनीषुश्रीभूदुर्गासुसुप्तासुजगद्व्यापारा न्विहायंहरौरममाणासुसतीषुएकः प्रधानोजगदात्मनिजगदादानकर्तरिजगत्संहर्तरिनाविशेषोऽधिकोयस्मात्सोऽविशेषः तस्मिन्नीश्वरईशानादिशक्तिमति "सभगवः कस्मिन्प्रतिष्ठित" इतिश्रुतेः स्वरूपाधारेस्थितः निमीलितात्मा "तुच्छ्येनाभ्यपिहितंयदासीदि" तिश्रुतेर्गुणतोऽल्पतमातमआदिरूपयाप्रकृत्यानिगूहितआसीत्सपुरातनःपुरुषोविष्णुरयंकृष्णः किलपरमार्थः सत्यं नैवानयोः कश्चिद्विशेषइत्यन्वयः ॥ २१ ॥

सपरमपुरुषएवभूयः पुनः सृष्टिदशायांस्वजीवमायांप्रकृतिंस्वभार्यामहालक्ष्मीमनुससारतस्यांवीर्यमधादित्यन्वयः कथंभूतांनिजवीर्यचोदितांस्वसामर्थ्येनप्रेरितांसिसृक्षतीं सृष्टीच्छावर्तीं कथंभूतः सः अप्रसिद्धगुणत्वादप्राकृतरूपत्वाच्च अनामरूपात्मरूपात्मनिस्वस्मिन्नाधाररूपनाम्नीविधित्समानः रूपनामात्मकंप्रपंचंस्रष्टुमिच्छन् शास्त्रकृत्सकलनियमनकर्तायएवंविधः सहरिरयंकिलेत्यन्वयशेषः ॥ २२ ॥

अत्रकर्मभूमौजितेंद्रियाः प्राणायामेननिर्जितमातरिश्वनः वशीकृतप्राणाः सूरयः भक्त्याउत्कलितेनविकसितेनउत्कण्ठितेनवाअमलेनरागादिमलरहितेनात्मनास्वरूपांतः करणेनयंत्पदंयस्यस्वरूपंपश्यंतिसवा अयंकृष्णः किलेत्यन्वयः एषकृष्णः सात्त्विकानामनुग्राहकः अस्माकंसत्त्वंस्वविषयकंज्ञानंपरिमार्ष्टुंनाशयितुंनार्हति परिपूर्वोमार्ष्टिर्वर्जनार्थः नन्वित्यनेनअपपरीवर्जनइतिसूत्रंप्रमाणयति नत्वितिपाठः सुगमः कर्मणाऽतः करणशुद्धिः किंनस्यादितितत्राह नत्विति एषकर्मणासत्त्वमंतः करणंपरितः सर्वतः मार्ष्टुंशोधयितुंनार्हतिकिंतुभक्त्याश्रवणाद्युपायसंस्कृतयायावदंतः करणंशुध्यति तावन्नकर्मणेतिभावः ॥ २३ ॥

योवेदवादिभिरनंतवेदेषुगुह्येषुउपनिषत्सुचअनुगीतसत्कथः निरंतरोदितसच्चरितः यश्चैकएवईशः यश्चात्मलीलयाजगत्सृजाति सृष्टमवतितत्तद्योग्यकर्मफलभुक्तय अत्तिसंहरति यश्चजगतिनसज्जते आप्तकामत्वात्फलंनादित्सति हेसखि ? सवाअयंकृष्णइत्येकान्वयः गुह्यवादिभिरितिपाठेउपनिषद्विचारकुशलैरित्यर्थः ॥ २४ ॥

---

### सुवोधिनी ।

तंसंजल्पमाहदशभिः सवैकिलायमिति "यस्मिन्विदितेसर्वमिदंविदितंभवती" ति श्रुत्यामूलंभगवान्ज्ञातव्यः तत्रकोभगवानित्यपेक्षायांयत्सान्निध्यमात्रेणैवउपासनोपदेश विचारव्यतिरेकेण अस्माकंसर्वज्ञतासभगवान् अतः अयमेवभगवान् किंच नकेवलमस्मदुत्पत्तिः अपितुसर्वलोकवेदप्रसिद्धिः वैनिश्चयेनतत्रस्वानुभवेनयुक्तिरुक्तानतुतथापि वेदादिप्रमाणेन "आत्मैवेदमग्रआसीत्पुरुषविधः पूर्वमेवाहमिहासमिति तत्पुरुषस्यपुरुषत्वं पुरुषोहवैनारायणोऽकामयत" इत्यादिश्रुभिः पुरुषात्सृष्टिरुक्ता जन्माद्यस्ययत ॥ १ । १ । २ ॥ इतन्याये च योजगत्कर्त्तासआत्मासभगवान् तद्रूपोतिनचात्रपुरुषशब्दआकृतिवाचियेनेदानींतनैरतिव्याप्तिर्भवति किंतुपुरातनत्वेनयत्किंचिन्मनसावचसानिरूप्यंतस्मात् सर्वस्मादपिपुरातनत्वेनतथाचव्याससमाधौ "अपश्यत्पुरुषं पूर्णमिति । तस्माद्यः सदातनःपुरुषः सभगवान्नान्योभवितुमर्हतीत्याशंक्याह अयंपुरुषः पुरातनइतियोभवतीभिरुक्तः सोऽयमेव" "यस्मात्क्षर

## सुबोधिनी ।

मतीतोऽहमक्षरादपिचोत्तमः अतोऽस्मिलोकेवेदेचप्रथितः पुरुषोत्तम" इत्ययमेवाह नन्वस्यवैकुंठवासिनोमायाद्यनेकसचिवस्यकथंचिदुपपत्त्या पुरुषत्वंभवतुनाम नतुभगवत्त्वमित्याशंक्याहअयएकआसीदितियइति प्रसिद्धौ "सदेवसौम्येदमग्रआसीदेवकमेवाद्वितीयमि" तियः श्रुत्यासजातीयविजातीयस्वगतभेदराहित्येननिरूपितः सोप्ययमेवएकआसीत् ननुकथमेतत् घटतेअधिकरणकालास्थिति क्रियादिसापेक्षत्वात् अत आह अविशेषआत्मनीति नह्ययंक्वचि दन्यत्रस्थितः किंत्वात्मन्येव ननुतथाप्याधारत्वादिधर्मपुरः सरआत्मनिस्थितोवक्तव्यः ततश्चपूर्वोक्तदोषइतितत्राह अविशेषेसर्वाधारादि धर्मविशेषरहिते आनेनकालादीनामपि सत्त्वंतदानींनिवारितं नन्वग्रेतदानीमित्यादिशब्दाः कालवाचकाएवसत्यंतदानींप्रमाणाभावात् वक्राद्यभावाच्चकेवलंरूपं निरूपयितुंनशक्यतेपश्चात् कालादिनिरूपणपुरः सरंतज्ज्ञातमितितदानींतनव्यापारमाश्रित्यतदानीमित्युक्तं नतुकालसत्त्वं प्रतिपाद्यते उभयप्रतिपादने वाक्यभेदप्रसंगात् ततःपूर्वंप्रमाणेतरेणासिद्धत्वान्नानुवादः एकमेवाद्वितीयमिति विरोधश्चकथंवास्वयंस्वगतादिभेदम् निराकुर्वन्कालमनुवदेत् तस्मादिदानींबोधसमयानुसारेणवाग्व्यवहारात् लोकप्रतीत्यर्थं सर्वाधारतयाप्रतीयमानकालोपरंजनतयानिरूपणंतदानीमिति आसनक्रियापिस्वरूपमेवतस्मात् सुष्ठूक्तमविशेषे आत्मनिएकएवासीदिति एवंश्रौतप्रकारेण निरूप्यपुराणादिप्रकारेणनिरूपयति अग्रेगुणेभ्यइतिगुणेभ्यः सत्त्वरजस्तमोरूपेभ्यः अग्रेप्रथमंतदागुणरूपेणस्वयंनाविर्भूतइत्यर्थः अथवा "पूर्ववद्वा॥३।२।२९॥इतिसिद्धान्तानुसारेणभगवान् स्वधर्मरूपःप्रथमंभवतिपश्चात्शक्तिरूपः कार्यरूपश्चतदाहअग्रेगुणेभ्यइतिस्वधर्मनिर्माणात् पूर्वमित्यर्थः सचसतः सत्तायाअनंगीकारात्जगतः पूर्वसत्त्वमंगीकर्त्तव्यमतआहजगदात्मनीतिकालनिराकरणार्थमाह ईश्वरइति जीवनिराकरणार्थमाह निमीलितात्मन्निति नितरांमीलिताजीवरूपेणानप्रकटाः आत्मानोयस्मिन्लुप्तसप्तम्यंतंपदं स्वशक्तिव्यावृत्त्यर्थमाह सुप्तशक्तिषुसत्स्वित्यर्थः अनादिरयंसंसारप्रवाहः नचमहाप्रलयएकएव ब्रह्माण्डभेदानांसृष्टिभेदानांश्रुत्यादिसिद्धत्वात् अतोयस्यां चित्सृष्टौ वक्तव्यापिपूर्वावस्थावक्तव्यातततोऽपिपूर्वसृष्टिरासीदितिज्ञापयति सुप्तासुशक्तिष्वितिपूर्वसृष्टिःशक्तिभिरुपसंहृता ततःब्रह्मणोऽतिमदिवसस्यसमाप्तौरात्रिकालेचापगतेब्रह्माण्डभंगात् तत्त्वानामपिलयात् दिवसोद्गमाभावेनरात्र्यपगमाभावात्सकालोरात्रित्वेनव्यपदिष्टः शक्तयश्चसुप्तप्रतिबुद्धन्यायेनभगवत्युद्गच्छंतिसुप्तानांचभगवत्त्वमेव अतःशक्तिशयनमारभ्यगुणोत्पत्तेः प्राक्भगवानेकएवासीदित्युक्तंभवति ॥ २१ ॥

एवंपूर्वावस्थांनिरूप्यभक्तिसहितामिदानींतनसृष्ट्यवस्थांवक्तुमादितः प्रकारमाह स एवभूयइति सएवपूर्वोक्तएवभूयइति पूर्वमप्येवं सृष्टिंकृतवान् तत्रप्रथमंस्ववीर्यरूपंकालंसृष्टवान् तेनकालेनचोदितांसुप्तांमुख्यांमायाशक्तिंकालः प्रेरिवान्साचमायाद्विविधास्वप्रतिकृत्या संवद्धंभगवंतंजगद्रूपेणकरोतिस्वेच्छयाप्रादुर्भूतान् जीवांश्चव्यामोहयतितदेयंसृष्टिर्जीवार्थाभवतिअतोमायायाः इदानींतनायाः जीवमायेतिनामतयासृष्टिप्रकारमापादितइतिप्रकृतिंसिसृक्षतीमित्युक्तं तादृशींमायांभगवाननुससारतद्व्यापारानंतरंस्वयं तदनुकूलतयापितेवामिलितवानित्यर्थः अस्यांसृष्टौविशेषप्रयोजनमाह अनामरूपात्मनिरूपनामनीविधित्समानइतिपूर्वसृष्टौनभगवतोऽवतारः ननामानिनरूपाणिचइदानींसृष्टेर्भक्तिप्रधानत्वात् भगवतोऽवताररूपनामान्यपेक्षंते अतः पूर्वमनामरूपात्मनिस्वस्मिन् इदानींरूपनामनीविधित्समानइतिअतोजीवार्थमेवस्वस्यापिरूपनामनीअकरोदित्यर्थः किंच शास्त्रकृत्वेदकर्त्ताकेवलनामरूपकरणेयुगपदेवसर्वमुक्तिप्रसंगात् सृष्टिकालह्रासः प्रसज्येत उत्पादितेतुवेदेस्वभावगुणभेदेनभिन्नेतेनव्यामोहितेषुकश्चिदेवमुच्यतइति क्रमेणसर्वमुक्तौसृष्टिकालस्यनह्रासोभवेदित्यर्थः ॥ २२ ॥

एवंपूर्वावस्थां सृष्टिंचोपपाद्ययदर्थमियंसृष्टिः तत्प्रयोजनपरंपरांक्रमेण निरूपयति सवाअयमिति ननुकेषांचिन्मते सगुणादपि सृष्टिः संभवतिब्रह्मविदामुपास्यः सनभवतितस्मात् ब्रह्मविदुपास्यत्वेनैवब्रह्मत्वनिश्चयः सचसमाधिनाउपास्यः अंतरआत्मानतुबाह्य इत्याशंक्यसएवायमित्याह सचवैनिश्चयेन अयंबाह्याभ्यंतरदोषाभावः पूर्वमिवनिरूपितः बहुकालंसमाधौस्थित्वातत्रभगवन्तमनुपलभ्य कुत्रायमात्माभगवान्प्रकटइति विचार्ययोगजधर्मेणावगत्यभगवान्सांप्रतं कृष्णरूपेणैवप्रकटोनान्यत्रेति निश्चित्यसमाधिफलं भगवच्चरणारविंदम् अत्रैवागत्यपश्यंति अतस्तद्वाक्यादवगम्यते अयमेवभगवानिति ननुतेषां पूर्णसाधनाभावात् समाधौनसाक्षात्कारइति चेत्तत्राह सूरयोजितेन्द्रिया निर्जितमातरिश्वनइति तेह्युपनिषदर्थविचारपूर्वकं गुरुमुखात्सम्यगवगत्यसूरयोभूत्वापश्चात्ब्रह्मचर्यादिना जितेन्द्रियाभूत्वा अपहतपाप्मानः यमादिक्रमेणनिर्जितः मातरिश्वायैस्तादृशाः तस्मान्नतेषांसाधनाभावः ननुचक्षुर्ग्राह्यः कथंभगवान्तत्राहभक्त्युत्कलितामलात्मनेति नहितेचक्षुषाभगवंतंपश्यंति किंतुअन्तः करणेनयथा आत्मसाक्षात्कारे "पराञ्चिखानिव्यतृणात् स्वयंभूः तस्मात्पराक्पश्यतिनांतरात्मन् कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्नि" ति श्रुतौप्रत्याहारेणांतर्नीतेनचक्षुषाहृदयं प्रविष्टेनस्वात्मानं पश्यंतितथाबहिःस्थितेभगवतिभक्त्याउत्कलितेनांतः करणेनऊर्ध्वकलिपतेन बहिरागतेनचक्षुःप्रविष्टेनभगवंतंपश्यंतीत्यर्थः ननुतथापितत्त्वमस्यादिवाक्यैरनुपादिश्यमानः कथमात्माभवेत्तत्राह नन्वेषसत्त्वामितिनन्वितिकोमलसंबोधने एषएवसः आत्मत्वेनोपदिष्टइत्यर्थः कुत एतत्तत्राह सत्त्वमितिसएवसत्त्वामित्यर्थः नन्वेवंजीवात्मत्वेन भगवतिउपदिष्टेकिंप्रयोजनंतत्राह परिमार्ष्टुमर्हतीतिआत्मनिप्रकृति संबंधेनयोऽयमनात्मवर्गउल्लिखितः तंपरितः सर्वतः सवासनंमार्ष्टुंदूरीकर्त्तुमर्हति आत्मत्वेनोपदिष्टोभगवान्सवासनः प्रकृतिकार्यंनाशयतीत्यर्थः ॥ २३ ॥

एवंसर्वप्रकारेण साक्षाद्भगवानेवायमित्युक्तेप्रपंचकर्तृत्वेनभोक्तृत्वादि भावापत्तौजीवतुल्यतास्यादित्याशंक्याहसवाअयमिति कर्तृत्वसमानाधिकरणं भोक्तृत्वंक्वचिदेवयत्रस्वार्थःक्रियते भगवांस्तुजीवार्थंकरोतीति नभोक्तृत्वंतेनरूपेणदोषसंबंधेनदोषः नहिदंतकेशादीनांभ्रत्वादि संबंधेअंशिनोदेहस्यकाचित्क्षतिर्भवति अंशेषुतुसगुणएवनदोषः तदर्थमेवतथानिष्पत्तेः अंशानांतुस्वतोजगन्निर्माणसामर्थ्यं पालकानामिव ननुप्रयोजनमनुद्दिश्यमंदोपिनप्रवर्त्ततइति स्वप्रयोजनाभावेकेवलपरार्थंकथंकुर्यात्तत्राह सख्यनुगीतसत्कथइतिहेसखि ! अनुपश्चात्करणानंतरंगीतरागपुरः सरमग्रेमिव्यक्तासद्भिः कथायस्यःभगवतः प्रयोजनंतथाकृतेसंतः कीर्त्तयंतीतिसखिभिर्वासख्यपर्यंतप्राप्तेः अनुगीताभगवन्निरूपणानंतरंरागपूर्वक मुक्तासद्रूपाभगवद्रूपाकथायस्यजीवानांमुक्तिदानायतथाकरोतीत्यर्थः अस्मिन्पक्षेकृपयापरदुःखदूरीकरणार्थंप्रवृत्तिरित्युक्तं नन्वत्रकिंप्रमाणंनहिभगवान्स्वयमागत्यकथयति किंतु कविनिबद्धवक्तृत्वमेवेत्याशंक्याहवेदेषुगुह्यवादि

### सुबोधिनी ।

भिरितिगुह्येषुवेदेषु परमोपदिषत्सु "विष्णोःकर्माणिपश्यतयतोव्रतानिपस्पशेआत्मावाअरेद्रष्टव्यः श्रोतव्य" इतिअंभस्यपारइत्यारभ्यसवात्ततत् प्रकरणेस्थिताम् भगवद्गुणाननूद्ययएवंविदुरमृतास्तेभवतीत्यंतेनभगवत्स्वरूपगुणज्ञानानंतरं भगवत्स्वरूपंप्रतिपादितंतथा "भक्त्यामामाभि जानाति शृण्वंतिगायंति सभाजयंतेमम पौरुषाणि" इत्यादिवाक्यैश्चैन मेवकथयंतीति विशकलिततयानिरूपितं ननुनानाप्रकरणेषु निरूपितो भगवान्प्रकरणै भेदाद्भिन्नोभवेत्शब्दांतराभ्यासवत्प्रक्रियायाअपिभेदकत्वात्तत्राह यएकइतिसर्वप्रकरणेषूक्तोभगवानेकएव "सर्ववेदांत प्रत्ययंचोदनाद्यविशेषात् ॥३।३।१॥ इत्यत्रनिरूपितं सर्वत्रप्रसिद्धोपदेशात् ॥१।२।१॥ इत्यत्रएकस्यसर्वत्रोपदेशेहेतुमाहईशइतिईशोहिसर्वैस्तु वार्त्ताभिर्निरूप्यतेजगतोनिर्माणेक्लेशाभावमाह॰ आत्मलीलयेति अन्येषांदुःकरत्वेऽपिभगवतस्तुसालीलाअत्तिसंहरति आत्मनिस्थापयतिघा यद्यपिगुणानुकथनद्वारासज्जतेतथापितत्रनसज्जते ॥ २४ ॥

---

### श्रीविश्वनाथचक्रवर्त्ती ।

तत्र प्रथमं शान्तिरतिमत्यः सविस्मयं परस्परमाहुः । यः पुरातनः पुरुषः अविशेषो निष्प्रपञ्चः यद्वा न विद्यते विशेषो वैशिष्ट्यमुत्कर्षो यस्मात् तथाभूत एक एवासीत् व्यासादिमुखादस्माभिः श्रुतोऽभूदित्यर्थः स वै निश्चितम् अयमेवेति तर्जनीभिर्दर्शयामासुः । कदा गुणेभ्योऽग्रे गुणक्षोभात् पूर्वं तथा निशि प्रलये महाप्रलये च आत्मनि प्रकृत्यन्तर्यामिणि ईश्वरेऽधिकरणे जगदात्मनि सर्वजगज्जीवे निमीलितात्मनि लीनस्वरूपे सति जात्या एकवचनम् सर्वजीवेष्वीश्वरे लीनेषु सत्स्वित्यर्थः । ननु प्राकृतिकप्रलये जीवानामविद्यालया भावात् लयोऽप्रसिद्धस्तत्राह । सुप्तासु शक्तिषु सतीषु जीवोपाधीनामध्यात्मादीनां लय एव जीवलयोपचारः । यद्वा स एव पुरातनः पुरुषोऽयं यो गुणेभ्योऽग्रे निशि प्रलये च आत्मनि स्वस्वरूपे अविशेष एवासीत् यथा अधुना सपरिकरत्वेन विविधाद्भुतलीलस्तथैव तदापीत्यर्थः । एकः अयमेव न त्वन्यो ब्रह्मादिरपीत्यर्थः । अन्यत् समानम् ॥ २१ ॥

एवं सृष्टेः पूर्वं प्रलयान्तरं चाप्रच्युतरूपगुणलीलत्वेनैवावस्थानमुक्त्वा तन्मध्येऽपि तथैव नित्यावस्थितिं वक्तुं सृष्ट्यारम्भे स्वांशांतरेण लीलान्तरमप्याहुः स एवेति । शास्त्रकृत् श्वासनिष्क्रमप्रथमक्षण एव वेदादिशास्त्राविर्भावकारी महाविष्णुः सन् प्रकृतिम् अनुससार । ननु प्रकृत्यनुगतत्वं नाम प्रकृत्यधीनत्वं तच्च दोष एव । नैवम् । निजवीर्येण निजबलेन प्रेरितां स्ववशीकृत्य कस्मिंश्चन कृत्ये नियुक्तां स्वशक्तिरूपाणां जीवानां मायां मोहिनीं वशयित्रीम् । किमर्थमनुससार अनामरूपे आत्मनि जीवेरूपनामनी देवतिर्यङ्मनुष्यादिलक्षणे विधित्समानः विधातुमिच्छन् स्थूलसूक्ष्मोपाधिसृष्ट्या जीवानां तदध्यासेनेत्यर्थः । कर्मज्ञानयोगभक्तिसाधनसिद्ध्यर्थं तु प्रकृत्यनुगमनात् पूर्वमेव वेदशास्त्राणि कृतवानेवेति शास्त्रकृत् ॥ २२ ॥

ननु सृष्ट्यारम्भे पुरुषादयोऽवतारा लक्ष्यन्ते न त्वेष ईदृशप्रकारः किन्तु वैवस्वतमन्वन्तरीयाष्टाविंशचतुर्युगस्थद्वापरे संप्रत्येवैष उपलभ्यते । सत्यम् । असौ भक्तिगम्यो नित्यस्वरूपो नित्यलीलोऽस्मिन् द्वापर एवावतीर्णोऽप्यस्य भक्तिमद्भिः सदैवायमुपलभ्यते इत्याह स वा इति । निर्जितो मातरिश्वा प्राणो यैः । ह्रस्वत्वमार्षम् । यद्वा निर्जितात् मातरिश्वनः प्राणाद्धेतोर्निर्जितेन्द्रियाः सर्व्वेन्द्रियाणां प्राणाधीनवृत्तित्वात् प्राणजयादेव निर्जितेन्द्रिया इत्यर्थः । तथाभूता अपि भक्त्या उत्कण्ठितोऽमलो य आत्मा बुद्धिस्तेनैव यस्य पदं स्वरूपं चरणारविन्दं वा पश्यन्ति । "दृश्यते त्वग्र्यया बुद्ध्ये"ति श्रुतेः । बुद्धिवैमल्यस्याप्ययमेव हेतुरित्याहुः । नन्विति । ननु निश्चितम् एष एव सत्त्वं बुद्धिं परिमार्ष्टुं सम्यक् शोधयितुम् अर्हति न तु योगादयस्तेन सूरित्वं जितेन्द्रियत्वं जितप्राणत्वं च तेषां भक्त्यैव नतु प्राणायामादिभिरिति भावः । अत्र सूरयो भक्त्युत्कण्ठत्वे सत्येव पश्यन्तीति वर्त्तमाननिर्देशेन सार्व्वकालिकदृष्टिगोचरत्वात् तस्य सार्व्वदिकलीलत्वम् । अतः—"परार्द्धान्ते सोऽवुध्यते गोपवेशो मे पुरुषः पुरस्तादाविर्बभूवे"ति गोपालतापनीश्रुतौ ब्रह्मवाक्यम् । तथा ब्रह्मसंहितायां सृष्ट्यारम्भेऽपि गोपवेशः कृष्ण एव दृष्टः स्तुतश्च ॥ २३ ॥

किञ्चास्य लीलाकथातिरहस्या रहस्यलोकैरेव वेद्येत्याह स वा इति । अयमर्ज्जुनस्य सखा नराकृतिः वेदेषु गुह्येषु शास्त्रेषु च गुह्यवादिभिरतिरहस्य निरूपकैरस्यैव कैरपि लोकैरनुगीताः सत्यः कथा यस्य सः । यः खलु एक एव ईशः ईश्वरः सन् ननु साक्षादेतद्रूप इत्यर्थः ॥ २४ ॥

---

### सिद्धांतप्रदीपः ।

संजल्पंदर्शयाति सइति दशभिःपरमाद्भुतालौकिकशांतिकान्तिगुणमंदिरंभगवंतंदृष्ट्वान्योऽन्यंजल्पन्ति निशिप्रलयेजगदात्मनिचिद्चिच्छक्तिमतिजगत्कारणेईश्वरेकूर्मांगानीवसर्वसंहर्त्तुंसमर्थेसुप्तासुशक्तिषु अचेतनरूपासुसतीषु निमीलितात्मन्निमिलितिलुप्तसप्तम्यंतंपदंनिमीलितेषु आत्मसुजीवेषुसत्सु अतएव गुणेभ्योऽग्रेसत्त्वादिक्षोभात्पूर्वत्रअविशेषेआत्मनि विशेषोलीलाविभूतिरूपश्चिदात्मकः संसारस्तस्य लीनत्वात् कारणमात्रेस्वात्मनिसति यएकः अनन्यः वैनिश्चयेकिलप्रसिद्धोसः पुरातनः पुरुषोऽयंश्रीकृष्णइत्यन्वयः अनामरूपात्मनि नामवाचकंदेवादिपदंरूपंवाच्यंदेवादिशरीरम् नविद्येतेनामरूपेयस्यतस्मिन्नात्मनिजीवेरूपनामनी विधित्समानः विधातुमिच्छन्शास्त्रकृत् ब्रह्मादिद्वारावेदप्रवर्त्तकः स्वजीवमायांस्वांशभूतानांतिरोधायिकांनिजवीर्येणएकोऽहंबहुस्यामित्यादिनास्वाध्यवसायेनप्रथमपुरुषावतारद्वारा चोदितांप्रेरिताम् अतएवसिसृक्षतींमहदादिरूपाणिस्रष्टुमिच्छतीम् प्रकृतिंनिजशक्तिम् भूयःसृष्टिप्रवाहस्यानादित्वात्पुनरप्यनुससाराधिष्ठितवान्यः सोऽयंश्रीकृष्णः ॥ २१ । २२ ॥

यद्वा ह्यधर्म्मेण तमोधियो नृपा जीवन्ति तत्रैष हि सत्त्वतः किल ।
धत्ते भगं सत्यमृतं दयां यशो भवाय रूपाणि दधद्युगे युगे ॥ २५ ॥
अहो अलंश्लाघ्यतमं यदोः कुलम् अहो अलं पुण्यतमं मधोर्वनम् ॥
यदेष पुंसामृषभः श्रियः पतिः स्वजन्मना चंक्रमणेन चाञ्चति ॥ २६ ॥*
अहो वत स्वर्यशसस्तिरस्करी कुशस्थली पुण्ययशस्करीभुवः ॥
पश्यन्ति नित्यं यदनुग्रहेषितं स्मितावलोकं स्वपतिं स्म यत्प्रजाः ॥ २७ ॥
नूनं व्रत स्नानहुतादिनेश्वरः समर्चितो ह्यस्य गृहीतपाणिभिः ॥
पिवन्तियाः सख्यधरामृतं मुहुर्व्रजस्त्रियः संमुमुहुर्यदाशयाः ॥ २८ ॥

सिद्धान्तप्रदीपः ।

"आत्मावाअरेद्रष्टव्य"इत्यादिश्रुतिसिद्धस्ययस्यपदंस्वरूपंभक्त्योत्कलितेनोत्कण्ठितेनामलेनात्मनांतः करणेन"मनसैवानुद्रष्टव्यःदृश्यते त्वग्र्यया वुद्ध्ये"त्यादिश्रुतिप्रोक्तेन जितान्यंतर्वाह्यानींद्रियाणियैस्तेनिर्जितोमातरिश्वाप्राणोयैस्तेहृस्वत्वंछांदसंपश्यन्ति सोऽयंश्रीकृष्णःननुअहो एषसत्व मंतः करणंपरिमार्ष्टुंपरितः शोधयितुमर्हति ॥ २३ ॥

गुह्येषुचवेदार्थवोधकेषुशास्त्रेषुअनुगीतासतीशुद्धाकथायस्यहेसखि ! सोऽयंश्रीकृष्णः ॥ २४ ॥

---

भाषाटीका ।

जो एकहि अद्वितीय पुरुष था वही यह कृष्ण हैं । कहां था अवि शेष आत्मा मै अर्थात् निष्प्रपंच निज रूपमें था । कब था ? गुण क्षोभ से अर्थात् सृष्टिसे पूर्व कालमै और प्रलय कालमें जब जगतके आत्मा जीव सब ईश्वर में लीन थे और जीवों की सत्वादि शक्ति सब सुप्त थीं ॥ २१ ॥

सृष्टि प्रलय मै भगवान का निष्प्रपंच अवस्थान दिखला कर पालन समय में सप्रपंच अवस्थान वर्णन करती हैं ॥ भगवान् फिर निज पराक्रम प्रेरित और सृष्टि करने की इच्छा वाली अपनी जीव माया प्रकृति को अनु सरण किया । क्यों ? अनामरूप जीव के रूपनाम विधान करने को और फिर सृष्टिद्वारा जीवों के कर्म विधान करने को ॥ २२ ॥

प्राणायामादि के द्वारावायु रोककर जप करने वाले जितेन्द्रिय सूरी जन भक्तिसे उत्कंठित मनसे जिन का पद । चरण वा स्वरूप ( दर्शन करते हैं यह वही हैं योग यज्ञादिकों द्वारा चित्त शुद्धि नहीं होती । यही सत्व शुद्ध कर सक्ते हैं ॥ २३ ॥

हेसखि ! यह वहीहै जिस की सत्कथा रहस्य वादि यों नै वेदों में और रहस्य आगमों में गाई है । जो एकही ईश अपनी माया से जगत् को सृजते हैं रक्षा करते हैं और भक्षण करते हैं परंतु उस मै आसक्त नहीं होते हैं ॥ २४ ॥

---

श्रीधरस्वामी

एवंभूतस्य नानावतारे कारणमाहुर्यदेति । तमोव्याप्ता धीर्येषां ते नृपा यदा अधर्मेण जीवन्ति केवलं प्राणान् पुष्णान्ति तत्र तदा एष एव भवाय स्थित्यै सत्त्वतः विशुद्धसत्त्वेन रूपाणि दधत् भगादीनि धत्ते प्रकटयति । युगे युगे तत्तदवसरे । भगम् ऐश्वर्यम् । सत्यं सत्यप्रतिज्ञत्वम् । ऋतं यथार्थोपदेशकत्वम् । दयां भक्तकृपाम् । यशः अद्भुतकर्मत्वम् ॥ २५ ॥

विशेषतः श्रीकृष्णावतारसौभाग्यं वर्णयन्ति अहो इति पंचभिः । यद्यस्मात् एष पुरुषोत्तमः श्रियः पतिः स्वजन्मनायदोः कुलम् अंचति पूजयति सत्करोति अतः श्लाघ्यतमम् तत् । चंक्रमणेन च मधोर्वनं मथुराम् अंचति सत्करोति अतस्तत् पुण्यतममिति । तमप्प्रत्ययार्थस्यापि अत्यन्तातिशये अलमिति। तत्राप्याश्चर्ये अहो इत्युक्तम् ॥ २६ ॥

अहो वत अत्याश्चर्यम् । किं तत् । कुलस्थली द्वारका स्वर्ग उत्कृष्ट इति यद्यशः तस्य तिरस्करी परिभवकर्त्री भुवश्च पुण्ययशस्करी पुण्ययशःकर्त्री भवति । यद्यतः यत्प्रजा यत्रत्याः सर्वाः प्रजाः स्वानुग्रहेण ईषितं प्रेषितं स्मितपूर्वावलोकं यद्वा अनुग्रहार्थमिषितम् इष्टं स्वस्यात्मनः पतिं श्रीकृष्णं न तु पित्रादिवत् देहमात्रपतिं नित्यं पश्यन्ति स्म । उषितमिति पाठे स्वानुग्रहार्थमुषितं कृतनिवासं नैतत् स्वर्गेऽस्तीत्यर्थः ॥ २७ ॥

हे सखि ! अस्य गृहीतपाणिभिः पत्नीभिः ईश्वरोऽयमेव नूनं जन्मान्तरेषु समर्चितः । यस्मिन्नधरामृते आशयाश्चित्तं यासां ताः संमोहं प्राप्ता इति मनोहरत्वमुक्तम् ॥ २८ ॥

---

### श्रीवीरराघवः

नन्वेवंविधश्चेत्किमर्थं यादवान्यतमरूपेणावतिष्ठतइत्याशंकायांदुष्कृद्विनाशायसाधुपरित्राणायचप्रतियुगमवतीर्योवतीर्याधुनैवं रूपेणावतीर्णइत्यभिप्रायेणजल्पंतियदेति यदातमोधियोनृपाः तमोजुषइतिचपाठः तत्रतामसाअतएवाधर्मेणजीवंतितंदैषउक्तविधोभगवान्भवाः यदुष्कृद्विनाशपूर्वकंसाधूनामभ्युदयायसत्त्वतः शुद्धसत्त्वमयानिरूपाणियुगेयुगेदधद्विभ्राणः भगमैश्वर्यंसत्यंवाचिकमृतंपुण्यंकर्मदयां यशश्चधत्तेस्वाभाविकैर्धर्मैरनपेतएवावतिष्ठतएवेत्यर्थः ऋतशब्दःपुण्यशब्दवाची"एवंपुण्यस्यकर्मणोदूराद्गंधोवातीत्यत्रएवमनृतादात्मानंजुगुप्सेदितिपुण्यप्रतियोगित्वेनानृतशब्देप्रयोगात् भगवत्कर्मणांपुण्यंतन्नामवदतांश्रोतृणांचपुण्यावहत्वम् ॥ २५ ॥

यतोभगवानुक्तविधःश्रीमन्नारायणएवश्रीकृष्णरूपेणयदुकुलेऽवतीर्यमधुवनेविहृत्यद्वारकायामाधिवसन्प्रजाःपालयन्नष्टभिर्महिषीभिरन्याभिश्चविहरत्यतोयदुकुलमधुवनद्वारकामहिष्यादीनांभाग्यं तपश्चैतावदितिवाचामनसावाऽवगंतुमशक्यमित्यभिप्रायेणजल्पंति अहोइत्यादिभिः षड्भिः मधोर्वनमलंनितरांपुण्यतमंकुतः यद्यस्मात्पुंसांसात्वतामृषभोनायकः श्रियोलक्ष्म्याःपतिःएषःभगवान्श्रीकृष्णःस्वजन्मनायदुकुलंचंक्रमणेनपुनः पुनः संचारेणमधुवनंचांचतिप्रशस्तंकरोतीत्यर्थः ॥ २६ ॥

अहोवतेतिकुशस्थलीद्वारकास्वर्यशसः कर्मणिषष्ठीस्वर्लोकयशसस्तिरस्करीभुवोभूमेः पुण्यंयशश्चकरोत्यावहतीतितथातदेषव्यंजयितुं विशिंषंतियत्प्रजाः यद्यस्यांकुशस्थल्यांप्रजायद्यस्मादनुग्रहेणोषितमधिवसंतंस्मितयुक्तोऽवलोकोयस्यतंस्वपतिमात्मनायकं नित्यंपश्यंतिस्म यदनुग्रहार्थंयत्प्रजाविषयकानुग्रहार्थमुषितमितिवान्वयः ॥ २७ ॥

नूनमिति अस्यकर्त्तरिषष्ठीअनेनकृष्णेनगृहीताः पाणयोयासांताभिः कर्त्रीभिर्व्रतैरुपवासादिभिः स्नानैःपुण्यजलस्नानहोमैरादिशब्देनदानादिभिश्चव्रतादीनांसमाहारद्वंद्वेनैकत्वम् एभिःसाधनैर्नूनमीश्वरः समर्चितः पूर्वजन्मनीतिशेषः कुतएतदनुमीयतेइत्यतोविशिंषंति याअस्यगृहीतपाणयः स्त्रियःहेसखि! अधरामृतंमुहुर्मुहुः पिवंतिअनाराधितेश्वराणामितदुर्लभमितिभावः कस्याधरामृतंयस्मिन्नाशयोमनोयासांताव्रजस्त्रियः संमुमुहुः तस्यश्रीकृष्णस्याधरामृतमित्यन्वयः ॥ २८ ॥

---

### श्रीविजयध्वजः।

तमोऽधिकास्तामसाअसुरप्रकृतयोनृपाः अधर्मेणधर्मविरुद्धेनश्रुतिस्मृत्यविहितप्राणिहिंसादिकर्मणायदाजीवंति स्वशरीरयात्रांकुर्वंति तत्रतदैषहरिःसात्वतः सात्विकान्देवादीन्अनुगृह्णन्धर्मादिनामवंतिरूपाणियुगेयुगेदधत्दधानोवर्त्ततइतिशेषः वराहमत्स्यादिरूपस्यभूम्युद्धरणकर्मणाधर्माख्या कपिलादेरणिमाद्यष्टैश्वर्ययोगात्षड्गुणपूर्णत्वाद्भगाख्या कल्क्यादेस्तमोविनाश्यसत्त्वगुणमभि संबध्यानंतगुणाभिव्यंजकतयाविशेषानंदरूपत्वात्सत्याख्या व्यासादेर्ज्ञानप्रवर्तकत्वेनज्ञानविशिष्टत्वादृताख्या किमर्थं भवाय चरणप्रणतजनाभिवृद्ध्येतस्मादिदानीमधर्मप्रवर्त्तकान्जरासुतादीन्निगृह्णन्देवावतारान्युधिष्ठिरादीननुगृह्णन्कृष्णात्मनाऽवतीर्णः किलेत्यर्थः ॥ २५ ॥

प्रियश्रवाः मनोहरकीर्त्तिः पुंसामृषभः पुरुषोत्तमः एषः कृष्णः यदोः श्लाघ्यंस्तुत्यंमधुवनंचालमत्यर्थमातिशयेनपुण्यमहोअहोआश्चर्यादप्याश्चर्यं चशब्दः समुच्चये ॥ २६ ॥

अनुग्रहइतितादर्थ्येसप्तमी भक्तानुग्रहार्थंक्षितमुषितंमुखेस्थितंयत्स्मितंतेनयुक्तोऽवलोकोयस्यसतथोक्तः तं क्षिनिवासगत्योरिति धातुः भक्तेष्वनुग्रहेणयदीक्षितंगोपवधूरुद्दिश्यस्मितयुक्तावलोकश्चयस्यसतथोक्तः तंवा स्वपतिंस्वस्वामिनंश्रीकृष्णंयत्प्रजाःयत्रत्याः प्रजा नित्यंपश्यंतीतियद्यस्मात्तस्मात्कुशस्थलीद्वारवतीस्वर्यशसस्तिरस्करीस्वर्गकीर्तिनिरासिनीभुवः यशस्करीचेत्यन्वयः तदीक्षतेतीक्षणव्यपदेशादीक्षितामिच्छाभक्तानुग्रहेच्छयासहितौस्मितावलोकौयस्यसतथातमितिवा ॥ २७ ॥

अस्यश्रीकृष्णस्यपाणिनागृहीताः पाणयोयासांताः तथाताभिरस्यभार्याभिर्नूनंनिश्चयेनव्रतस्नानादिनेश्वरः पूर्वसम्यगर्चितः सत्कृतः याः व्रजस्त्रियः यदाशयायस्याधरामृतमाधुर्यस्यास्वादनेच्छया सम्यक्मुमुहुः हे सखि! तदधरामृतंमुहुः पिवंतीतियत्तस्मादित्येकान्वयः हे सखि! याः स्त्रियोऽस्याधरामृतंपिबंतिअनेनगृहीतपाणिभिस्ताभिर्नूनंव्रतादिनेश्वरः समर्चितः यदाशयाव्रजस्त्रियोमुमुहुरितिवान्वयः ॥ २८ ॥

---

### क्रमसंदर्भः।

अहो इति। पुंसामृषभः सर्वावतारावतारिणां मध्ये श्रेष्ठः ॥ २६ ॥

स्वपतिं पश्यन्ति। तत्र च स्मितावलोकं पश्यन्तीत्यर्थः ॥ २७ ॥

नूनमिति। अत्र पट्टमहिषीणां भाग्यश्लाघयापि श्रीव्रजदेवीनामेव हि परमोत्कृष्टत्वमास्वादाभिज्ञतरत्वमायातम्। यस्यामृतस्य माधुर्यस्मरणे देवाअपि मुह्यन्ति तन्मनुष्येणाप्यनेनास्वाद्यत इतिवत्। तस्मात्तासामेव सर्वोत्तमभावता। अत्र विशेषजिज्ञासायां प्रीतिसन्दर्भो दृश्यः। स वै किलायमित्यादौ पिवन्ति याः सख्यधरामृतमित्यन्ते ज्ञानविवेकादिप्रकाशेन हि शान्तरस एवोपक्रान्तः उपसंहृतश्च शृंगारः। तेन चास्य वत्सलेनेव मिलने संकोच एवेति परस्परमयोग्यसंगत्या भासते। अत्र समाधीयते चान्यैः स वै किलायमित्यादिकमन्यासां वाक्यं नूनमित्यादिकन्त्वन्यासाम्। एवंविधा वदन्तीनामित्यादि सूतवाक्यंच सर्वानंदनपरमेवेति ॥ २८ ॥

---

## सुबोधिनी ।

एवंसर्वप्रकारेणभगवत्त्वेनिरूपिते तादृशस्यात्रागमनेकोहेतुरित्यत्राहयदेति स्थितिर्हिभगवत्कार्यासामान्यविशेषभेदेनद्विविधा तत्रसत्त्वादयोगुणाअपिकृताः तेच"रजस्तमश्चाभिभूयसत्त्वंभवती"त्यादि अन्योन्योपमर्देनैवप्रादुर्भूताः तत्रयदासत्त्वंतिरस्कृत्यरजस्तमसीप्रादुर्भवतः तदास्थितावधिकृतं सत्त्वंस्वतोदुर्वलं सत्भगवंतं निवेद्यसमानयतिरजस्तमसोः सकार्ययोरुपमर्दनार्थंतदासत्त्वेनरूपाणिधत्तेसत्त्वस्य शरीरसमवायित्वंवाशरीरशोधकत्वं वाशरीरत्वंवाप्रादुर्भावनिमित्तत्वंवाभवति तदासत्त्वस्यावयवाअपिपृथक्रूपाणिबिभ्रति सर्वयुगेष्वेवंव्यवस्थाअतस्सत्त्वसहायार्थंभगवदागमनमित्यर्थः यदेतिनैमित्तिकमुक्तम् निमित्तेसंजातेनैमित्तिकस्यावश्यकत्वमितिहिशब्दार्थः धर्मस्य प्रतिच्छायारूपोऽधर्मः सघृतकज्जलवत्प्रत्यहमुपनीयमानः सर्वासांप्रजानांराजनिवर्त्तुलंभवति ततश्चाधर्मेणबुद्ध्याविवेकेन भ्राम्यमाणचक्षुषापरिदृश्यमानघटादिवत् पापव्याप्तदृष्ट्यावस्तूनां याथात्म्यंनप्रकाशते तदाह्यंधाइवपदार्थान् गृह्णंतिकेवलंजीवनार्थम् राजानोहिपालने भगवदंशास्तेषामंधत्वेनजीवनं निमित्तंनृनृपांतीतिपालितानामपिअधर्मनिष्ठतासूचिता एवं सर्वतोऽप्यधर्मउत्थितः तत्रतन्निराकरणार्थमेष एव परमात्मासगुणस्यतत्रसामर्थ्याभावात्किलेति "यदा यदाहिधर्मस्ये"ति वाक्यानिप्रमाणानि रूपाणिदधद्वासत्त्वेन भगादिधत्ते भगादिवादधत्सत्त्वेनरूपाणिधत्ते तदाउत्पन्नोभगः ईश्वरोभावः अधर्मेणगृहीतोविपरीतफलःस्यात्यदावा भगंगृहीत्वारूपाणिन गृह्णीयात्तदाराज्ञांवधोनस्यात् मूलभूतत्वाच्चतेषाम् अधर्मनिराकरणार्थंभगादीनांग्रहणं राजानिराकरणार्थंचरूपाणां भगस्तुभगवदैश्वरोभावः ईश्वरधर्मः प्रमेयवलपोषकः ऋतमनुष्ठीयमानोधर्मः पूर्वकांडार्थः एतेहिपंचांशाविद्यायाः भगवदिच्छा धर्मोज्ञानंदयाभक्तिरिति पूर्वोक्ता-ना मुद्भवाय ॥ २५ ॥

एवं भगवद्वतारप्रयोजनमुक्त्वा प्रासंगिकानांफलमाह अहोइत्यादिपंचभिः अवतीर्णोहि क्वचिद्देशेभवति क्वचिद्देशे तिष्ठति कैश्चित्सहव्यवहरति तथापिनतेषुतात्पर्यंतेषांतु भगवत्संबंधमात्रेणैवकृतार्थता तत्रप्रथमंजन्माधिकरणयोर्वंशदेशयोराह अहोइत्याश्चर्ये कुत्रयदुःशप्तः लोकैर्निंदितः कुत्रायमुत्कर्षः भगवत्यवतीर्णे तद्वंशीयंस्मृत्वालोकोनमस्यति अलंपूर्णमेतस्मादुत्कर्षादन्योत्कर्षोनवक्तव्यः अधिकशौर्यादिहेतुकः श्लाघ्यतमामिति अन्येषांहिवंशानांधर्माद्यर्थं कदाचिन्निरूपणमायाति भगवतस्तुसर्वेषामपेक्षितत्वात् तन्निरूपणार्थंयदुवंशः सर्वदास्तुतोभवतीति एवंमधोरपिवनंसतांनिवासाभावात् नमथुरानिर्दिष्टामधोर्दैत्यस्यवनं पश्चात्पुत्रादिभ्योविभागः अतोवृंदावनादिकमपिमधुवनमेव तस्यदेशस्यपुण्यतमत्वे ऽपि दैत्याक्रांतत्वादधमत्वं वनत्वाद्भयानकत्वं दैत्यभयाक्रांतेभगवत्स्मरणमपि दूरेकुतोभगवान्कुलमितिनह्येतस्मादन्यउत्कर्षःसंभवतिदेवऋष्यधिष्ठानेहिदेशस्यपुण्यतमत्वं भवतितत्रसर्वत्रदेवऋषीणांभर्त्तरिभगवतिकिंवक्तव्यंतत्रवंशस्यसर्वोत्कर्षहेतुः यद्यस्मात्कारणात्पुंसामृषभः स्वजन्मनाअंचतिपूजयतिगच्छतिवाअन्येहिस्त्रीणांभर्त्तारः पुरुषोत्तमस्तु-पुंसांतथाच जगतिसर्वेस्त्रीसहिताः पुरुषाः एतस्यभवंतिअतस्तस्यपूजनेसर्वैःपूजितंभवति तद्गमनेवासर्वैर्गतंभवतिमधुवनस्योत्कर्षहेतुः यस्माद्देवः श्रियः पतिः चक्रंमणेनांचतिचकाराज्जन्मनाचवनंहिसुंदरसुवर्णाद्यभावात्नश्लाघिष्ठंभवतिभगवतितुसमागतेलक्ष्म्यपिसमागतेतिलौकिकीमलौकिकींचशोभांप्राप्नोतीत्यर्थः चंक्रमणंवालगतिः श्रीपतित्वेनगोपिकाक्रीडाऽपिसूचिता ॥ २६ ॥

इदंत्वत्याश्चर्यंयत्कुशस्थल्याउत्कर्षः तदाह अहोवतेतिअहोइतिपूर्ववत्आधिक्योऽत्रविशेषोवतेतिदेशप्रांतभूमिः दोषाक्रांतासिकतामयीच साख्यर्यशसस्तिरस्करीजातातिरस्करणशीलास्वर्गोहि देवास्तिष्ठंतिद्वारकायांतुदेवाधिदेवः स्वर्गेत्वप्सरसः अत्रलक्ष्मीः तत्रत्याः पतंतिअत्रत्यामुच्यंतेसभापारिजातादयस्तुततएवआनीताः अपकृष्टादुत्कृष्टेहिसमानीयंतेइत्याद्यनंतोत्कर्षः किंच भुवोऽपिपुण्ययशास्तिरस्करीयथादेहेचक्षुः एकदेशोऽपिसर्वस्यैहिकामुष्मिकंफलंप्रयच्छतिद्वारकयासंवद्धासर्वापिभूः धन्यापृथिवीयस्यांद्वारकावर्त्ततइतितिष्ठतुदूरेऽयमुत्कर्षः समाधिहृदयापेक्षयाइयमुत्कृष्टा तदाह पश्यंतीतिसमाधौकाश्चिदेवकदाचिदात्मानं पश्यतिअतः सर्वदासर्वोऽपिसमाधौस्थितिरिति कठिनावायुमनसोश्चंचलत्वात्प्रयासाधिक्यात्द्वारकायांतु भगवदनुग्रहेणस्थितिः अनुग्रहश्चसुखात्मास्थिरः तद्दर्शनार्थमेवभगवांस्तत्रस्थितः स्मितावलोकइतिभक्तिज्ञाप्रदत्वंसर्वेंद्रियाह्लादकत्वं च स्वपतित्वेननिः शंकतादोषाभावश्चप्रजापतिनाचपाल्यतापतिपदेनचतदेकगतित्वम् ॥ २७ ॥

एवमचेतनानामुत्कर्षमुक्त्वाचेतनानांमध्येभगवत्पत्नीनामप्युत्कर्षमाहात्रिभिःनूनमिति स्त्रियोहिद्विविधाः मर्यादयापुष्ट्याचतदीयाजाताः तासामुभयासांयत्सर्वपुरुषार्थनाशकमसाधनं च तदेवसर्वपुरुषार्थसाधकंजातम्एवंस्वरूपभेदद्वयंसाधनेचैकमितिअस्यगृहीतपाणिभिः नूनंहरिरर्चितः गार्हस्थ्यफलंधर्मसाध्यं भगवत्फलंसाध्यंतदुभयमेकीभूतं तत्रप्राधान्यंगार्हस्थ्यस्यगोपिकावांछितार्थ भोगात् अतोधर्महेतून् प्राधान्येननिर्दिशतिव्रतंतामसंस्नानंराजसंहोमः सात्त्विकः आदिशब्देनत्रयाणांभेदाः एभिः कृत्वापूर्वजन्मनिअयमेवभगवानीश्वरः सम्यगर्चितः होतियुक्तोऽयमर्थः फलेनकारणानुमानंयुक्तंकारणेन कार्यानुमानंव्यभिचरत्यपियद्यप्येतैर्भगवान्प्रीणाति तथापिमहापुरुषपूजायाः सिद्धिः कार्य्यानुषंगिकीपूजैवोक्ता अथवाव्रतादौपूजाविहिता तत्रव्रतमंगत्वेनकृत्वापूजामेवमुख्यत्वेनकृतवत्यः तत्र पूजाव्रतयोर्धर्मभक्तित्वात् भगवतः पतित्वेनसंबंधः ननुकथमेवंगम्यते अयमेवईश्वरः पूजितइति तत्राह याःहेसख्यः ! अधरामृतंपिबंति अमृतपानंहिईश्वराराधनपूर्वकधर्मकार्यम् अधरामृतंतुततोऽपितदग्रेवर्णयिष्यामः हेसखीतिस्पृहयातुल्यदुःखत्वमस्माकमपीतिबोधितम् अधरामृतमग्रेवर्णयिष्यामः ननुधर्मभक्तिफलमेवैतदस्तुकिमेतदाराधनेनेतीत्याशंक्यप्रकारांतरेऽव्यभिचारमाहव्रजस्त्रियइति गोप्योऽपिकात्यायनीव्रतेभक्त्यागानपूर्वकंव्रतस्नानपूजादिकंकृतवत्यः परमर्चनंकात्यायन्याः कृतंतेनतासामिच्छानपूर्णा यतःयस्मिन्नधरामृते आशयोयासांताः केवलमोहमेवप्राप्तवत्यः ॥ २८ ॥

---

## श्रीविश्वनाथचक्रवर्त्ती ।

साक्षादस्यावतारस्य कालदेशपात्रेषु जिज्ञास्येषु प्रथमं कालमाहुर्यदेति नृपाः कंसादयः । सत्त्वतः सत्त्वेनोत्तमत्त्वेन विशिष्टं भगादिकं धत्ते इत्यन्वयः । भगं षडैश्वर्यम् ऋतं सूनृतवाक्यम् । रूपाणि व्रजमथुराद्वारकोचितानि सौन्दर्याणि । भवाय भूत्यै । युगे युगे कल्पे कल्पे वैवस्वताद्याविंशचतुर्युगीये द्वापरे द्वापरे वा ॥ २५ ॥

---

* नोट १ लक्ष्मीरपीत्युचितः पाठः कृदिकारादक्ति न इति ङीषि लक्ष्मीत्यपीति शेखरोक्त दिशावानिर्वाह्यम् ॥ सुबोधिनी ॥ २६ ॥

श्रीविश्वनाथचक्रवर्त्ती।

पात्रदेशावाहुः अहो इति । यदोः कुलं श्लाघ्यतमं मधोर्वनं मथुरामण्डलं पुण्यतमम् । अत्र श्लाघ्यतममित्यनेनैव द्वयोरुत्कर्षे सिद्धे पुण्यतममिति पृथगुक्तिः देशस्य पुण्यदत्वेनैवोत्कर्षस्य प्रसिद्धेः । तत्र तमप्प्रत्ययार्थस्याप्यत्यन्तातिशये अलमिति तत्राप्यतिशयाश्चर्ये अहो इति । यत् स्वजन्मना चंक्रमणेन गमनेन चकरादन्यैरपि विविधाद्भुतकर्मभिरंचति पूजयति सत्करोतीति यावत् । अत्रानंचेत्यनुक्त्वा अश्चतीति वर्त्तमाननिर्देशेन जन्मादिलीलानां नित्यत्वं बोधयामासुः । उपक्रमत एव य एक आसीदिति भूतनिर्देशेन तृतीयश्लोके पश्यन्ति भक्त्येति वर्त्तमाननिर्देशेन तासां तथाभिप्रायस्यावगतत्वात् । ननु कथं जन्मकर्मणोर्नित्यत्वं ते हि क्रिये क्रियात्वश्च प्रतिनिजांशमप्यारम्भ परिसमाप्तिभ्यामेव सिद्ध्यतीति ते विना स्वरूपहान्यापत्तिः । नैष दोषः । श्रीभगवति सदैवाकारानन्त्यात् प्रकाशानंत्याज्जन्मकर्मलक्षणा लीलानन्त्यात् अनन्तप्रपञ्चानंतवैकुण्ठगततत्तल्लीलापरिकराणां व्यक्तिप्रकाशयोरानन्त्याच्च । यत एव सत्योरपि तत्तदाकारप्रकाशगतयो स्तदारम्भसमाप्त्योरेकत्रैकत्र ते जन्मकर्मणोरंशा यावत् समाप्यन्ते न समाप्यन्ते वा तावदेवान्यत्रान्यत्राप्यारब्धा भवन्तीत्येवं श्रीभगवति विच्छेदाभावान्नित्ये एव तत्र ते जन्मकर्मणी वर्त्तेते । तत्र ते कचित् किञ्चिद्विलक्षणत्वेनारभ्येते कचिदेकरूप्येण चेति ज्ञेयं विशेषणा भेदाद्विशेषणोक्याच्च । एक एवाकारः प्रकाशभेदेन पृथक्क्रियास्पदं भवतीति चित्रं बतैतदेकेन वपुषेत्यादौ प्रतिपादयिष्यते । ततः क्रिया भेदात् तत्तत्क्रियात्मकेषु प्रकाशभेदेष्वभिमानभेदश्च गम्यते । तथा सत्येकत्रैकत्र लीलाक्रमजनितरसोद्बोधश्च जायते । ननु कथं ते एव जन्मकर्मणी वर्त्तेते इत्युक्तम् पृथगारब्धत्वादन्ये एव ते स्ताम् । उच्यते । कालभेदेनोदितानामपि समानरूपाणां क्रियाणामेकत्वम् । यथा शंकरशारीरके—द्विर्गोशब्दोऽयमुच्चरितो नतु द्वौ गोशब्दाविति प्रतीतिनिर्णीतं शब्दैकत्वम् । तथैव द्विः पाकः कृतोऽनेन नतु द्वौ पाकाविति । ततो जन्मकर्मणोरपि नित्यता युक्तैव । अतएवागमादावपि भूतपूर्वलीलोपासनविधानं युक्तम् । तथा चोक्तं माध्वभाष्ये—परमात्मसंबंधित्वेन नित्यत्वात् त्रिविक्रमत्वादिष्वप्युपसंहार्यत्वं युज्यते इति । अनुमतं चैतत् श्रुत्या "यद्भूतं भवच्च भविष्यच्च" त्यनयैव । उपसंहार्यत्वमुपासनायामुपादेयत्वमित्यर्थः । तत्र तस्य जन्मनः प्राकृतात्तस्माद्विलक्षणत्वं प्राकृतजन्मानुकरणेनाविर्भावमात्रत्वं कचित्तदननुकरणेन वेति भगवत्सन्दर्भः । केचित्तु तद्भक्तधामादीनामिवानन्तप्रपंचनित्यधामसु जन्मकर्मणोरपि प्रकाशबाहुल्यान्नित्यत्वसिद्धि रित्याहुः ॥ २६ ॥

मधुवनं स्तुत्वा द्वारकां स्मरन्त्य आहुः । अहो कुशस्थली द्वारका स्वर्यशस इति लोकरीत्यैवोक्तिः नतु सिद्धान्तरीत्या स्वःशब्दे न वैकुंठाभिधानं वा । यद्यतः यत् प्रजा यत्रत्याः प्रजाः । स्वपतिं कृष्णम् अनुग्रहेणैव इषितं प्रेषितं सर्वसुखदानाय अन्तःपुरात् हस्तिनापुरादिस्थलाद्वा प्रस्थापितमित्यर्थः । यद्वा अनुग्रह एव इषित इष्टो यत्र तम् अनुग्रहमात्रप्राप्त्यर्थमित्यर्थः अनुग्रहोषितमिति पाठे स्वानुग्रहार्थमुषितं कृतनिवासं नैतत् स्वर्गेऽस्तीत्यर्थः ॥ २७ ॥

तत्रोज्ज्वलरसौत्सुक्यवत्य आहुः । नूनमस्य गृहीतपाणिभिः पत्नीभिः । या अधरामृतं मुहुर्मुहुः पिबन्ति वयं त्वकृततादृशव्रताः सम्प्रत्येव सौन्दर्यामृतमेव किञ्चिदेव पिबाम इति भावः । किंचास्मत्तः कोटिगुणतोऽप्यधिका अपि व्रजसुन्दरीभ्यः सकाशादतिन्यूना इत्याहुर्यदाशयाः यस्मिन्नधरामृते आशयश्चित्तं यासां तथाभूता एव सत्यः संमुमुहुः रात्रौ पीतचरस्याधरामृतस्य प्रातःस्मरणेऽपि आनन्दमूर्च्छां प्रापुः । न जाने पानकाले ताः कीदृशीं दशां प्रापुरिति तासां प्रेमाधिक्यादानंदाधिक्यं द्योतितम् ॥ २८ ॥

---

सिद्धांतप्रदीपः।

यदाकिलकेवलमधर्मेणनृपाअसुरमनुष्यादिरूपाः जीवंत्येवतदाएव एवश्रीकृष्णः भवायस्थित्यैसत्त्वतोविशुद्धसत्त्वतः नियंतृरूपाणय वताराख्यानि तत्तद्देशकालानुरूपाणियुगेयुगे दधद्बिभ्राणोभगमैश्वर्यम् सत्यंयथार्थभाषणम् ऋतंसूनृतंप्रियंवाक्यम् दयांयशश्चाधत्ते २५

यःपुरुषावतारेणप्रकृतिप्रेरणादिनाजगद्धेतुः नारायणरूपेण ब्रह्मोत्पादनवेदोपदेशादिनाब्रह्मांडांतर्गतसृष्टिहेतुः मत्स्याद्यवतारैः धर्मत्राणादिहेतुःसपरमपुरुषपरब्रह्मादिपदवाच्यः सर्वावताराणांनिर्गमप्रवेशस्थानभूतस्यनारायणस्याप्यवतारीस्वयंपदार्थोभगवान्यदुकुले मथुरायामवतीर्णस्तत्सम्बन्धिकुलादिमाहात्म्यमाहुः अहोअलमिति जन्मनायदोः कुलंचंक्रमणेनमधोर्वनंमथुरामण्डलम् अंचति पूजयति ॥ २६ ॥

किंच अहोवतेतिमहदाश्चर्यम् कुशस्थलीद्वारका ॥ २७ ॥

किंच हेसखि ! अस्यगृहीतपाणिभिरीश्वरः व्रतादिभिर्नूनंसम्यगाराधितः व्रतादीनांसमाहारद्वंद्वेएकत्वम् आदिनादानादेर्ग्रहणम् याः अस्याधरामृतंमुहुः पिबंति यदाशयाः तस्मिन्नधरामृते आशयश्चित्तंयासांताव्रजस्त्रियः संमुमुहुः ॥ २८ ॥

---

भाषा टीका।

जब तमो बुद्धि वाले राजा सब अधर्म से जीवित होते हैं तब यही भगवान जगत की स्थिति के अर्थ सत्वसे रूपों को धारण कर युग युग में भग सत्य ऋत दया और यश को धारण करते हैं ॥ २५ ॥

अहो ! यदु कुल अत्यंत श्लाघ्यतम है और मधुवन अत्यंत पुण्य तम है कि जो यह पुरुष ऋषभ अपने जन्म से और विचरण से शो भित करता है ॥ २६ ॥

अहो कुशस्थली द्वारिका स्वर्ग के भी यश को तिरस्कार करती है और पृथवी के पुण्य यश को विस्तार करती है। क्योंकि जहां की प्रजा नित्यही अनुग्रह पूर्वक प्रेरित स्मित सहित कृपा कटाक्षयुक्त अपने पति ( इन श्रीकृष्ण ) का दर्शन करती हैं ॥ २७ ॥

या वीर्यशुल्केन हृताः स्वयम्वरे प्रमथ्य चैद्यप्रमुखान्हि शुष्मिणः ॥
प्रद्युम्नसाम्वाम्वसुतादयो ऽपरा याश्चाहृता भौमवधे सहस्रशः २९ ॥
एताः परं स्त्रीत्वमपास्तपेशलं निरस्तशौचं वत साधु कुर्वते ।
यासां गृहात्पुष्करलोचनः पतिर्न जात्वपैत्याहृतिभिर्हृदि स्पृशन् ॥ ३० ॥
एवंविधा गदन्तीनां स गिरः पुरयोषिताम् ।
निरीक्षणेनाभिनन्दन् सस्मितेन ययौ हरिः ॥ ३१ ॥
अजातशत्रुः पृतनां गोपीथाय मधुद्विषः ।
परेभ्यः शङ्कितः स्नेहात्प्रायुंक्त चतुरङ्गिणीम् ॥ ३२ ॥

भाषाटीका ।

इन ( कृष्ण ) ने जिनका पाणिग्रहण किया है उन स्त्रियों ने निश्चयही व्रत स्नान होमादिकों से ईश्वर समर्चन किया है । क्योंकि सखी ! जो इन का वार वार अधरामृत पान कर तीहैं । जिस अधरामृत की आशासे व्रज स्त्रियां मोहित हुई थीं ॥ २८ ॥

---

श्रीधरस्वामी ।

एतत् प्रपंचयति द्वाभ्याम् । वीर्यं प्रभाव एव शुल्कं मूल्यं तेन । शुष्मिणो बलिष्ठान् । प्रद्युम्नः साम्वः आम्वश्चसुता यासां रुक्मिणी जाम्बवतीनाग्नजितीनां ता आदयो यासां सत्यभामादीनां ताः । याश्चापराः । अस्य श्लोकस्योत्तरश्लोकेनान्वयः ॥ २९ ॥
एताः स्त्रीत्वमेव परं केवलं साधु शोभनं कुर्वते । अपास्तं ( गतं ) पेशलं भद्रं स्वातंत्र्यं यस्मात् । निरस्तं शौचं शुचित्वं यस्मात् । तथाभूतमपि । जातु कदाचिदपि नापैति न निर्गच्छति । आहृतिभिर्व्यवहारैः यद्वा पारिजातादिप्रियवस्त्वाहरणैर्हृदि स्पृशन् आनन्दयन् ॥ ३० ॥
एवं विधाश्चित्रा गिरः सस्मितेन निरीक्षणेनाभिनंदन् हरिर्ययौ ॥ ३१ ॥
मधुद्विषोऽपि गोपीथाय रक्षणाय स्नेहात् परेभ्यः शङ्कितः सन् प्रायुंक्त "हस्त्यश्वरथपादातं सेनांगं स्याच्चतुर्विधम्" इत्येवं चतुरंगिणीं पृतनां सेनाम् ॥ ३२ ॥

---

श्रीवीरराघवः ।

याइतियाइत्यस्यैताः इत्युत्तरेणान्वयः शुष्मिणोमत्तान्चैद्यप्रमुखान् शिशुपालप्रभृतीन्स्वयंवरेप्रमथ्यमथनपूर्वकं विजित्यवीर्यमेव शुल्कमुपायनत्वेनदेयंद्रव्यंतेनयाआहृताः प्रद्युम्नसांवप्रसवादयः स्त्रियःतत्रप्रद्युम्नप्रसवारुक्मिणीसांवप्रसवाजांववती आदिशब्देनसत्य भामादिसंग्रहः तथापराअन्याश्चयाः स्त्रियोभौमवधेनरकासुरवधेसहस्रशः षोडशसहस्रसंख्याकाआहृताः ॥ २९ ॥
एताः सर्वानिरस्तंशौचंपवित्रतायेन अवाप्तंपेशलंमार्दवंयेनतथाभूतमपिस्त्रीत्वंपरंकेवलंसाधुयथातथाकुर्वते कुर्वंतिवतइत्याश्चर्येतदेव दर्शयितुंविशिषंतियासांस्त्रीणांगृहात्पतिर्जन्ममरणक्लेशाद्रक्षणकर्त्तापुष्करलोचनः कमलनयनः श्रीकृष्णः कदाचिदपिनापैतिनत्यजति कथंभूतः सन्आहृतिभिः हेरुक्मिणि ! एहीत्यादिभिराहृतैः हृदिस्पृशन्हृदयंगमः सन्सोऽयं श्रीकृष्णोयातीत्यर्थः ॥ ३० ॥
वदंतीनांजल्पंतीनांपुरयोषितामेवंविधागिरः उक्तीःसस्मितेननिरीक्षणेनैवाभिनन्दन्सहरिर्ययौ ॥ ३१ ॥
तदाऽजातशत्रुःपरेभ्यःशत्रुभ्यः शंकितःस्नेहान्मधुद्विषः श्रीकृष्णस्यगोपीथायरक्षणायचतुरंगिणीं हस्त्यश्वरथपदातिरूपाययंगान्यस्याः संतीतितथातांसेनांप्रायुंक्तसमयुंक्त ॥ ३२ ॥

---

श्रीविजयध्वजः ।

ताः काइतितत्राहुः याइति विशुष्मिणः विशिष्टवलान्चैद्यप्रमुखान्शिशुपालादीन्प्रमथ्यविलोड्यपराजित्यस्वयंवरेवीर्यमेवशुल्कंउत्को चंतेनयाः स्त्रियोहृताः आनीतास्ताः प्रद्युम्नश्चसांबश्चतौप्रमुखौयेषांतेतथाप्रद्युम्नसांवप्रमुखाः तेआत्मजायासांतास्तथोक्ताः रुक्मिण्याद्याः याश्चापराः सहस्रशः कशोर्वादिशतोत्तरषोडशसहस्रसंख्याः भौमवधेआहृताः ॥ २९ ॥
एताः पुराग्निपुत्रत्वेकृष्णभार्यात्वायस्त्रीत्वमवाप्तयेआप्तुंसमंसंभूयसाधुशोभनंतपआख्यंकुर्वतेअकुर्वत वतहर्षे निरस्तशोकमितिक्रि याविशेषणंवाकुतः पुष्करलोचनः पुण्डरीकाक्षः पतिराकृतिभिराकारैश्चेष्टाविशेषैर्हृदिस्पृशभ्यासांगृहाज्जातुकदाचिदपिनापैतियस्मा त्तस्मादित्यन्वयः ॥ ३० ॥ ३१ ॥
परेभ्यः गोपीथायरक्षणायचतुरंगिणींहस्त्यश्वरथपदातिमतींपृतनांसेनांस्नेहात् स्नेहमात्रात्तदानींमाहात्म्यज्ञानंनास्तीतिभावः ॥ ३२ ॥

---

क्रमसंदर्भः ।

या इति युग्मकम् । तत्र एता इति एता एव नान्या इत्यर्थः स्त्रीत्वं स्त्रीजातिः । सा च श्रीरुक्मिण्यादिष्वपि तज्जातिभेदत्वेनैवात्र गृहीता अपास्तपेशलत्वादिकं हि तज्जात्यन्तराश्रयं ननु श्रीरुक्मिण्याद्याश्रयं तामिस्तासामपि साधुत्व करणात् । ततश्चान्यां तत्तद्दोषयुक्तां स्त्रीजातिमपि या निजकीर्त्यादिना शुद्धां कुर्वन्तीत्यर्थः । तासां तत्तद्दोषरहितसर्वगुणालंकृतत्वं तदवरासां साधुत्वविधाने च हेतुमाह यासामिति । स्वयं तथाविधोऽपि आह्वतिभिः प्रेयसीजनोचितगुणसमाहार्यो एव हृदि स्पृशन् मनस्यासज्जन् यासां गृहादपि न जात्वपैतीति । तस्मादत्रापि वीभत्ससङ्गतिः पूर्ववद्व्याख्येया २९ ॥ ३० ॥ ३१ ॥

तत्र राज्ञः प्रेममहिमानमाह । अजातशत्रुरपि परेभ्यः शङ्कितः । मधुद्विषोऽपि गोपीथाय । तत्र हेतुः स्नेहादिति । एवमैश्वर्यज्ञानस्य दुर्बलत्वं बोधितम् । एवं श्रीबलदेवादिषु तथा दर्शनात् ॥ ३२ ॥ ३३ ॥

---

सुबोधिनी ।

अस्त्वासांभाग्यमितोऽपिरुक्मिण्यादीनांमहद्भाग्यं यदिकालवशात्प्रवाहेपतिताः अन्यत्रनीयमानाअपिवलाद्भगवान्स्वयमुद्यम्य आत्मसात् कृत्वाअमृतंपाययतिस्वसदृशान्पुत्रांश्चप्रयच्छति तासामीश्वरपूजनंमहदित्याहुः यावीर्यशुल्केनेति वीर्यमेवशुल्कंकार्यनिर्वाहकंद्रव्यंतेनहृताः तेनराक्षसोविवाहउक्तः स्वयंवरइतिगांधर्वः "गांधर्वोराक्षसश्चैवधर्म्यौक्षत्रस्यतौस्मृतौ" इति मुख्यविवाहेनपरिगृहीताः नन्वन्यस्मैदीयमानाःकथंहृताः तत्राह प्रमथ्येतिचैद्यः शिशुपालःतत्प्रमुखान्जरासंधादीन्शुष्मिणः कामुकान् अयमर्थः क्षत्रियाणांयुद्धजयेनापिसत्त्वमुत्पद्यतेतेनधर्मादिकमपिसिध्यतिस्त्रियोधर्मभक्तियोग्याः स्वयंचशिशुपालादयोदुरात्मानः कामुकाश्चाह्मणवत् प्रतिग्रहेणप्राप्तुमिच्छंतिअतो युक्तंभगवताहृताइतिप्रद्युम्नः सांवः अंवश्चसुतायासांरुक्मिणीजांववतीमित्रविंदानां महांसएवअंवः महानंसोयस्येति यौगिकएवशब्दोऽत्र गृहीतः याश्चषोडशसहस्रंभौमवधेजातेआहृताः तासांगणनाऋषिभिरेवज्ञायते नान्यैरितिसहस्रमित्युक्तम् ॥ २९ ॥

तासांभगवदाराधनेसाधनंस्त्रीत्वमेवतदपिनभगवतोभोगभोग्यं भगवत्सौंदर्यापेक्षयातासामपेशलत्वात् शापेनवंध्याअन्यपापिग्रहेणाच निरस्तशौचंशुद्धिरहितंवतेतिखेदे अस्मदादीनांतदभावेऽपिनभगवत्प्राप्तिः अतोयथाभगवतःसामर्थ्यमतिनिकृष्टमपि अत्युत्कृष्टंकुर्वते तत्र हेतुः यासांगृहादितिसतांहिभगवद्गृहेसमागत्यकदाचिदेवपश्यंतिआसांतुविपरीतंभगवानासांगृहात् कदाचिदपिनापगच्छतिप्रत्युतपारिजाताद्याहरणैः मानापनोदनमपिकरोतिननुतर्हिदोषमेवसम्पादयतिनगुणंततः किंतासांभाग्यमित्याशंक्याह हृदिस्पृशन्निति तासांहृदि भगवान्स्थितवाताःस्पृशन्तासांहृदिभगवानस्तीतिनतासांदोषः ॥ ३० ॥

एवंभगवद्रूपंप्रासंगिकंचफलंभगवान् श्रुत्वासंमत्यासत्यवादित्वं स्थिरीकृत्यमन्दहासेनचतावशीकृत्यभक्तिप्रदत्वात्तासांवचनंसत्यंकुर्वन् द्वारकामगमदित्याहएवंविधाइति अयमेकःप्रकारःएवमन्येऽपिप्रकाराः संतिस्त्रीसमूहानांवहुत्वात् सर्वाएवगिरोभगवताश्रुताःउच्चैः कथनेहेतुःपुरयोषितामितिअभिनंदनंसत्यमुक्तमिति ॥ ३१ ॥

राज्ञोहिज्ञानाद्भक्तिरधिकेतिज्ञापयितुमाहअजातशत्रुरिति नामविपरीतंकार्य्यंभगवदिच्छयाज्ञानवत्स्वभावोऽपितथागोपीथायरक्षणार्थं मधुद्विषइतिशंकामात्रः परेभ्यःहतवन्धुभ्यः चतुरंगिणींहस्त्यश्वरथपदातिरूपाम् ॥ ३२ ॥

---

श्रीविश्वनाथचक्रवर्त्ती ।

उक्तमेवार्थं प्रपञ्चयति द्वाभ्याम् । वीर्यं प्रभाव एव शुल्कं मूल्यं तेन । शुष्मिणः वलिष्ठान् । प्रद्युम्नः साम्वः आम्वश्च सुता यासां ता रुक्मिणीजाम्ववतीनाग्नजित्यः ता एव आदयो यासां सत्यभामादीनां ताः ॥ २९ ॥

अपास्तं पेशलं मद्रं स्वातन्त्र्यं यस्मात् निरस्तं शौचं शुचित्वंयस्मात् तथाभूतमपि । जातु कदाचिदपि नापैति न निर्गच्छति।आह्वतिभिः पारिजातादिप्रियवस्त्वाहरणैः हृदि स्पृशन् आनन्दयन् ॥ ३० ॥

निरीक्षणेन शान्तिरतिमतीः सस्मितेन उज्वलरसभाववतीरभिनन्दन् ॥ ३१ ॥ गोपीथाय रक्षणाय ॥ ३२ ॥

---

सिद्धांतप्रदीपः ।

गृहीतपाणिभिरितिपदेनभगवत्पत्न्योनिर्दिष्टास्ताः काइत्याकांक्षायामाहुःयाइत्येकेन वीर्यमेवशुल्कंमूल्यंधनंतेन शुष्मिणः प्रवलंमन्यान् ॥ २९ ॥

भगवत्पत्नीनांसौभाग्यंकैमुत्यन्यायेनाहुरेताइत्येकेन अहोएताः अंगुलिनिर्दिष्टाः दर्शनार्थसमास्थिताः अपास्तंपेशलंभद्रंस्वातंत्र्यंयस्मात् निरस्तंशौचंपवित्रतायस्मात्तदपिस्त्रित्वमेवपरंकेवलंसाधुशोभनंकुर्वते अहोभाग्यमासामितिभावः अथखलुआह्वतिभिस्तत्तत्प्रियपदार्थहरणैर्हृदिस्पृशन्सुखयन् यासांगृहाज्जातुकदाचिदपिनापैतिनापयातितासांभाग्यंकिंवर्ण्यतेइत्यर्थः ॥ ३० ॥

अथ दूरागतान् शौरिः कौरवा न्विरहातुरान् ।
संनिवर्त्य दृढांस्निग्धान् प्राया त्स्वनगरीं प्रियै : ॥ ३३ ॥
कुरुजाङ्गलपाञ्चालान् शूरसेना न्सयामुनान् ।
ब्रह्मावर्तं कुरुक्षेत्रं मत्स्या न्सारस्वतानथ ॥ ३४ ॥
मरुधन्वमतिक्रम्य सौवीराभीरयोः परान् ।
आनर्तान् भार्गवोपागाच्छ्रांतवाहो मनाग्विभुः ॥ ३५ ॥
तत्र तत्र ह तत्रत्यैर्हरिः प्रत्युद्यतार्हणः ।
सायं भेजे दिशं पश्चाद्गविष्ठो गां गतस्तदा ॥ ३६ ॥
इतिश्रीमद्भागवतेमहापुराणे प्रथमस्कंधेश्रीकृष्णप्रयाणोनाम ।
दशमोऽध्यायः ॥ १० ॥

सिद्धांतप्रदीपः ।

स्मितेनस्वाभाविकमंदहसितसहितेननिरीक्षणेनगदंतीनांजल्पन्तीनांपुरयोषितांगिरोऽभिनन्दन्हरिःसंसारहरः सःश्रीकृष्णोययौ एवंविधागिरइत्युक्तिःग्रंथविस्तरभयात्तासांस्तुतिः साकल्येनेहनोक्तेतिसूचयति ॥ ३१ ॥

परेभ्यःशत्रुभ्यःशंकितोऽजातशत्रुर्युधिष्ठिरः मधुद्विषोऽपिगोपीथायरक्षणायस्नेहात् चतुरंगिणीम् हस्त्यश्वरथपत्तिरूपाण्यंगानियस्यास्तांपृतनांप्रायुंक्त ॥ ३२ ॥

---

भाषाटीका ।

वलिष्ठ शिशु पाल आदि कों को प्रम थन कर स्वयं वरोंते वीर्यशुल्क से जिन को हराहै और प्रद्युम्न सांव आंध जिन के सुत हैं वेरुक्मिणी जांववती आदि स्त्रियें और जो सहस्त्रों भौम के वधमैं हरी थी यही सव अपास्त पेशल ( अस्व तंत्र ( और निरस्त शौच ( अपवित्र ( स्त्री त्व कोभी शोभन कर रहींहैं । क्योंकि पुष्कर लोचन पति कभी भी जिनके घर से वाहर नही होतेहैं और पारिजातादिकों को ला कर उनके हृदय को प्रसन्न करते हैं ॥ २९ ॥ ३० ॥

इस प्रकार कथन करती पुर वासिनी ओं की वाणी को सस्मित कटाक्षों से अभि नंदन करते हरि चले ॥ ३१ ॥

अजात शत्रु युधिष्ठिर ने भी परों की शंका से मधुद्विष भगवान् की रक्षा को चतुरंगिणी सेना नियुक्त करदी ॥ ३२ ॥

---

श्रीधरस्वामी

पांडोः कुरुवंशजत्वात् पांडवा अपि कौरवा एव तान् प्रियैरुद्धवादिभिः सह ॥ ३३ ॥

कुरुक्षेत्रं कुरुदेशांतर्गतमेव क्रमोऽत्र न विवक्षितः ॥ ३४ ॥

मरुर्निरुदको देशः धन्वोऽल्पोदकः आनर्त्ताख्यो द्वारकाप्रदेशः । स विभुः उपागात् प्राप्तः । हे भार्गव ?। मनागीषत् श्रान्ता वाहा यस्य सः ॥ ३५ ॥

तत्र तत्र देशे तत्रत्यैर्जनैः प्रत्युद्यतानि निवेदितानि अर्हणानि उपायनानियस्मै सः सायम् अपराह्णे पश्चाद्दिशं पश्चिमां दिशं भेजे प्राप्तः तदा च गविष्ठः स्वर्गस्थः सूर्यो गामुदकं गतः प्रविष्टः अस्तं गत इत्यर्थः "अद्भ्यो वा एष प्रातरुदेत्यपः सायं प्रविशती"ति श्रुतेः यद्वा तदा सायंकाले जाते रथादवतीर्य गविष्ठः भूमौ स्थितः ततो गां जलाशयं गतः सन् पश्चाद्दिशं सन्ध्याम् भेजे उपासितवानित्यर्थः ॥ ३६ ॥

इति श्रीमद्भागवतभावार्थदीपिकायां प्रथमस्कंधे
दशमोऽध्यायः ॥ १० ॥

---

दीपनी ।

अद्भ्यो वा एष प्रातरुदेतीतिश्रुतेरयमर्थः—सागरतीरस्थजनैः प्रातः सूर्यः सागरादुदेतीति लक्ष्यते अस्तसमये तस्मिन्नेव प्रविशतीति लक्ष्यते ॥ यद्वेति । नायं पक्षः पूर्वपक्षस्याखरसत्वेनोक्तः । अपितु श्लेषेणार्थद्वयमपि प्रकृतमुक्तमिति भावः ॥ ३६ ॥

---

श्रीवीरराघवः।

अथविरहेणविश्लेषातुरान्नृ: खितानतएवदूरमागतान्कौरवान् युधिष्ठिरादीन्दृढंस्निग्धमनुरागोयेषांतान्सम्यक् सांत्वेनेननिवर्त्यप्रियैः सहस्वनगरींद्वारकांप्रायात्प्रययौ ॥ ३३ ॥

कुर्वादिमरुधन्वांतान्देशानतिक्रम्यततःसौवीराभीरयोः परान्पश्चादवस्थितानानर्त्तान्द्वारकाक्षेत्रजनपदान्विभुर्हरिः श्रीकृष्णः उपागात्कथंभूतः हेभार्गव ? मनागीषच्छ्रांतावाहाअश्वायस्य ॥ ३४ । ३५ ॥

तत्रत्यैस्तदादेशस्थैस्तत्रतत्रप्रत्युधतंशिरस्याधायाभिमुखमानीतमर्हणं पूजासाधनंयस्यतथाभूतः यावदानर्तांनुपागात्सदागविष्टः सूर्यःगोभिः किरणैस्तिष्ठतीतिव्युत्पत्तेः पश्चाद्दिशम्प्रतिसायंभेजेप्राप्तः गांभूमिंगतश्चउदकंगतश्चसायमप्सुप्रविशतीतिश्रुतेः ॥ ३६ ॥

इतिश्रीवीरराघव टीकायांप्रथमस्कंधेदशमोऽध्यायः ॥ १०

---

श्रीविजयध्वजः।

स्वनगरींद्वारवतींप्रियैः पुरुषैः सह ॥ ३३ ॥ ३४ ॥

हेभार्गव ? शौनक कुरुजांगलप्रभृत्येकादश देशानतिक्रम्यागात् श्रांताश्वोविभुरानर्तान् स्वाधिकृतान्देशानुपागादित्यर्थः ॥ ३५ ॥

यदाहरिः सायंसंध्यासमयेपश्चाद्दिशंपश्चिमांदिशंभेजे कथंभूतः तत्रतत्रचस्वराष्ट्रेप्रतिपदं तत्रत्यैर्जनैः प्रत्युद्यतार्हणः प्रदत्तप्राज्यधनः तदागविष्टःदिविस्थितःआदित्यः गांसमुद्रोदकंगतः अस्तंगतइत्यर्थः "असौवागविष्टोऽप्सूदेत्यप्स्वस्तमेती" तिश्रुतेः ॥ ३६ ॥

---

क्रमसन्दर्भः।

कुरुजाङ्गलेति युग्मकम्। अत्र पन्थानमतिक्रम्य गमनं तत्तन्निजजनमिलनार्थम्। शूरसेनागमनं श्रीवृन्दावनादिदिदृक्षयैव ॥ ३४ ॥ ३५ ॥

सायमिति। पश्चात्तदनंतरं सायं यस्मिन् दिने चलितस्तस्यैव दिवसस्यान्ते दिशं द्वारकागन्तव्यकाष्ठां भेजे इत्यर्थः। एवं रथस्य शैघ्र्यं दर्शितम्। अतएव भार्गवेत्याश्चर्येण सम्बोधनं मनाक् श्रान्तवाह इति चोक्तम् तत्र तत्र ह तत्रत्यैर्हरिः प्रत्युद्यतार्हण इत्यत्राशङ्कते— ननु शूरसेनयामुनान्तर्गतवृन्दावनस्थानां श्रीमन्नन्दादीनां मिलनादिकं विशिष्य कथं न वर्णितं तत्राह। स एव गविष्टो गोपाललीलः सन् दन्तवक्रवधानन्तरं गां गोकुलमेव गतः। तदप्रकटप्रकाशो तैः सार्द्धमप्रकटं स्थित एवेत्यर्थः। प्रकटेन स्वप्रकाशेन प्रकटतत्प्रकाश विशेषदर्शनकौतुकार्थमेव तदा तत्र गमनमिति भावः। तदिदं श्रीकृष्णसन्दर्भे विवृतमस्ति ॥ ३६ ॥

इति श्रीमद्भागवतप्रथमस्कंधस्य श्रीजीवगोस्वामिकृतक्रमसन्दर्भे
दशमोऽध्यायः ॥ १० ॥

---

सुबोधिनी।

एतावत्कालं कौरवयादवामिलितास्थिताः अथोभयेपश्चाद्भिन्नतयागताइत्याह अथेति उभयत्रापिभगवानेवहेतुः दूरपर्यंतमागतान् शौरिरितिलौकिकव्यवहारार्थेदार्ढ्यसूचितंशूरः पाण्डवानांमातामहोभागवतः पितामहः अतउभयेएकएव नदूरागमनेनआतुराः किंतु ॥ विरहेणतथापिह्यातुरैः सहगमनमनुचितम् अतआतुरान्निवर्त्यप्रियैःसहअगमत् कौरवाः स्वमनस्येववयंसहगमिष्यामः इतिविरहातुराः अतो भगवतानिवर्त्तिताः नन्वत्यंतमातुरागृहेऽपिनगच्छेयुः इतिनाशंकनीयंयतस्तेदृढंस्निग्धाः नहिदृढंस्निग्धः शीघ्रंनश्यति ॥ ३३ ॥

मार्गस्थदेशान्श्लोकद्वयेननिर्दिशतिकुरुजांगलेतिकुरुजांगले शूरसेनान्वटेश्वरदेशान् अन्यांश्चयमुनातीरदेशान्परपारस्थान्ततः कुरुक्षेत्रदेशः सरस्वतीदृषद्वतीमध्यदेशः आम्बिकावरादिः मरुरल्पोदकदेशः धन्वोऽनुदकदेशः भूमिसिकताभेदनिरूपणायअथशब्दः सौवीरदेशः सुराष्ट्रदेशः आभीरदेशः कुंतीपुरदेशः ततोऽपिपरानानर्त्तान्द्वारका देशान्मध्येदेशानांनामभिरुद्धिग्नंसंबोधयति हेभार्गव ! ति युक्तमेवभृगुवंशस्यतथात्वं किन्तुभगवानेवतान्देशानुपागात्एकेनैव दिवसेनता वतदूरगमनेऽपिमनागेवश्रांतवाहोजातः नतुसर्वथाकिमित्येकेनैवदिवसेन तावत्इत्यत्रहेतुः विभुरिति ॥ ३५ ॥

मध्येतत्रपूजामाहतत्रतत्रेति हइतिनिश्चयेकोऽपिदेशोभगवत्पूजारहितोनजातइत्यर्थः एवंपूजितोभगवान्सायंकालेपश्चाद्दिशंपश्चिमतीरंभेजेतत्रविश्रामंकृतवान्गोधूलिकायांनगरप्रवेशः कर्त्तव्यइतिभगवान्यदासंध्याप्रतीक्षयास्थितः तदासूर्येणानविलंबः कृतइत्याह गविष्टो गांगतस्तदेतिगाविकिरणो अवस्थितेर्बिंबमात्रंदृश्यतइत्यर्थः तादृशःसूर्योगांगतः जलंप्रविष्टः "अद्भ्यः प्रातरुदेत्ययः सायंप्रविशती"तिश्रुतेः सुमुहूर्त्तंजातमित्यर्थः ॥ ३६ ॥

श्रीविश्वनाथचक्रवर्त्ती ।

कौरवान् पांडवान् ॥ ३३ ॥

कुरुजाङ्गलेत्यादौ क्रमो न विवक्षितः ॥ ३४ ॥

मरुर्निरुदको देशः । धन्वः अल्पोदकः । आनर्त्तान् द्वारका प्रदेशान् । हे भार्गव ! । मनाक् ईषत् श्रान्ता वाहा यस्य सः ॥ ३५ ॥

ननु हस्तिनापुरात् द्वारकामार्गेणैव ते देशाः सम्भवन्तीत्यत आह । तत्रत्यैस्तत्तद्देशभवैर्भक्तैस्तत्र तत्र द्वारकामार्गे आगत्य प्रत्युद्यतानि निवेदितानि अर्हणानि उपायनानि स्वस्वदेशनयनार्थं यस्मै सः । तेन तत्तद्भक्तमनोरथपूरणार्थं तत्तद्देशं गत्वा गत्वैव तत्र तत्रैकैकानि दिनानि स्थित्वा पुनर्वर्त्मानुससारेति भावः । सायमपराह्ने पश्चाद्दिशं द्वारकाप्रदेशं भेजे प्राप्तः । तदा गविष्ठः सूर्योऽपि गां गतः पश्चिम समुद्रजलं प्रविष्टः ॥ ३६ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
प्रथमेदशमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ १० ॥

---

सिद्धान्तप्रदीपः ।

प्रियैरुद्धवादिभिःसह ॥ ३३ ॥

कुर्वादिदेशानतिक्रम्यआनर्तानुपागादिति द्वितीयेनान्वयः क्रमोऽत्रनविवक्षितः ॥ ३४ ॥

हेभार्गव ! सौवीराभीरयोः परान् परतः स्थितान् आनर्तान् मनागीषत् श्रांतावाहायस्यसविभुः श्रीकृष्णः उपागात्प्राप्तः ॥ ३५ ॥

तत्रतत्रतस्मिन्तस्मिन्देशेतत्रत्यैर्भक्तैःप्रत्युद्यतानि अर्हणानियस्यसहरिस्तत्रत्यानांक्लेशहरः श्रीकृष्णः सायंकालेयदातस्मिन्क्षणेपश्चात्पश्चिमांदिशंभेजे तस्यांदिशीप्सितंदेशंप्राप्तस्तदातास्मिन्नेवक्षणेगोभिः स्वाश्रयैः किरणैस्तिष्ठतीतिगविष्ठोभानुमान् गामुदकंगतः "अद्भ्योवाएषप्रातरुदेतिअपःसायंप्रविशती"तिश्रुतेः ॥ ३६ ॥

इतिश्रीप्रथमस्कंधीये सिद्धांतप्रदीपे दशमाध्यायार्थप्रकाशः ॥ १० ॥

---

भाषाटीका ।

तदनन्तर दूरतक चले आये बिरहातुर और दृढ स्निग्ध पांडवों को निवृत्त कर प्रियजनों सहित शौरि ( कृष्ण ) अपनी नगरी को आये ॥ ३३ ॥

हे भार्गव ! कुरुजांगल पांचाल शूरसेन यामुन देश ब्रह्मावर्त कुरुक्षेत्र मत्स्यदेश सारस्वतदेश मरु धन्व देशों को उलंघन कर सौवीर आभीर और और देशों में होकर जब आनर्तदेश के निकट पहुँचे तब वाहन अश्वों को थोड़ा श्रम हुआ ॥ ३४ ॥ ३५ ॥

वहां वहां उनहीं देशबासियों की अर्हण पूजा ग्रहण करते सायंकाल को पश्चिम देश में पहुंचे तबही स्वर्गस्थ सूर्य भी जल में अस्त हुए ॥ ३६ ॥

प्रथमस्कंध का दशम अध्याय समाप्त ॥ १० ॥

---:*:---

## एकादश अध्यायः ।

———:※:———

सूतउवाच ॥ आनर्तान्सउपव्रज्य स्वृद्धान् जनपदान्स्वकान् ।
दध्मौ दरवरं तेषां विषादं शमयन्निव ॥ १ ॥
स उच्चकाशे धवलोदरो दरोऽप्युरुक्रमस्याधरशोणशोणिमा ।
दाध्मायमानः करकञ्जसम्पुटे यथाब्जषण्डे कलहंसउत्स्वनः ॥ २ ॥
तमुपश्रुत्य निनदं जगद्भयभयावहम् ।
प्रत्युद्ययुः प्रजाः सर्वा भर्तृदर्शनलालसाः ॥ ३ ॥
तत्रोपनीतवलयो रवेर्दीपमिवादृताः ।
आत्मारामं पूर्णकामं निजलाभेन नित्यदा ॥ ४ ॥

श्रीधरस्वामी ।

आनर्त्तैः स्तूयमानस्य पुरीं निर्विश्य वन्धुभिः ।
एकादशे रतिः सम्यक् यादवेन्द्रस्य वर्ण्यते ॥
उत्सवैरुच्चलत्पौरमुदश्चद्ध्वजतोरणम् ।
उल्लसद्रत्नदीपालि स्वपुरं प्रभुराविशत् ॥ ० ॥

स्वृद्धान् समृद्धान् । दरवरं पाञ्चजन्यं शङ्खं दध्मौ वादितवान् ॥ १ ॥

स इति । उच्चकाशे अतिशयेन शुशुभे । दरः सङ्खः कथंभूतो दरः करकञ्जसम्पुटे दाध्मायमानः आपूर्यमाणः ( वाद्यमानः ) । धवलम् उदरं यस्य सः । तथापि उरुक्रमस्य कृष्णस्याधरस्य यः शोणगुणस्तेन शोणिमा यस्य सः । कथमुच्चकाशे अब्जषंडे रक्तकमल समूहे कलहंसो राजहंस उच्चकाशे यथा तद्वत् ॥ २ ॥

जगतो यद्भयं तस्य भयावहम् । प्रत्युदूययुः प्रत्युज्जग्मुः भर्त्तुर्द्दशने लालसा औत्सुक्यं यासां ताः ॥ ३ ॥

तत्र तस्मिन् श्रीकृष्णे उपनीताः समर्पिताः वलय उपायनानि याभिस्ताः निरपेक्षेऽपि तस्मिन्नादरेण समर्पणे दृष्टान्तः रवेर्दीपमिवेति पितरमर्भका इव तं सर्वसुहृदमवितारमूचुरित्युत्तरेणान्वयः सुहृत्त्वेनैव अवितारं नतु कामेन । तत्र हेतुः आत्मारामम् । तत्रापि हेतुः परमानंदनिजस्वरूपलाभेनैव पूर्णकामम् ॥ ४ ॥ ५ ॥

———

दीपनी ।

० ॥ १ ॥ ६ ॥

———

श्रीवीरराघवः

सभगवान्स्वृद्धान्समृद्धान्स्वकानानर्त्तान्जनपदानुपव्रज्यतत्रत्यानां विषादंस्वविश्लेषजंशमयन्निवदरवरंशंखश्रेष्ठंपांचजन्यंदध्मौध्वनया मास ॥ १ ॥

तदासदाध्मायमानोदरवरः स्वतोधवलमुदरंयस्यतथाभूतोऽपिदामोदरस्यभगवतोऽधरशोणेनशोणिमायस्यसः सभगवत्करकमलयोः संपुटउच्चकाशेयथाऽब्जखण्डे रक्तकमलसमूहेउत्स्वनउच्चैः स्वनोयस्यसहंसस्तद्वत् ॥ २ ॥

जगतोभयंयेभ्यः तेषांभयमावहतीतितथातंनिनदमुपश्रुत्यसर्वाः प्रजाभर्त्तुर्भगवतोदर्शनेलालसाः आसक्तचित्ताः प्रत्युद्ययुः प्रत्याजग्मुः ॥ ३ ॥

तत्रादृताआदरयुक्ताः रवेर्दीपमिवात्मानंजगच्चप्रकाशयतः प्रकाशांतरानपेक्षस्यसूर्यस्यदीपमिव उपनीतः वलिः पूजार्थद्रव्यं याभिस्ताः ॥ ४ ॥

———

## श्रीविजयध्वजः ।

सकृष्णःस्वृद्धान्सुष्ठुसंपन्नान्स्वकान् स्वीयान्नाम्नाआनर्तान्जनपदानुपगम्यइति दरवरंशंखश्रेष्ठंदध्मौपूरयामासतेषां विषादंराजकं भयंशमयन्परिहरन्निवेत्यन्वयः ॥ ३८ ॥

सदरः पांचजन्याख्यःउच्चकाशे धवलंशुक्लमुदरंयस्यसधवलोदरःअतिधवलोदरोऽपि उरुक्रमस्यश्रीकृष्णस्याधरोष्ठस्यशोणेनरागेणशोणिमारक्तभावोयस्यसतथोक्तः दाध्मायमानः पुनः पुनः पूर्यमाणः करावेवकंजेहस्तकमलेतयोः संपुटेमध्येवर्तमानइतिशेषः करकंजसंपुटेनिधायदाध्मायमानइतिवा तत्रदृष्टांतः अब्जखंडेकरकमलेस्थितः उत्स्वनःउच्चध्वनिः कलहंस. राजहंसः यथातथेत्यन्वयः ॥ ३९ ॥

भर्तृदर्शनलालसाःश्रीकृष्णस्यदर्शनोत्सुकाःसर्वाःप्रजा जगतःभवः संसारःतस्माद्भयंहंतीतिजगद्भवभयापहःतं जगद्भयभयापहमिति पाठेजगद्भयानांदैत्यानांसकाशाद्भयंतस्यनाशनः तंनिनदंशंखध्वनिंश्रुत्वा तंकृष्णंप्रत्युद्ययुरित्यन्वयः ॥ ४० ॥

नित्यदानिजलाभेनस्वतोलब्धेनपूर्णकामं अतएवात्मारामं आसमंतात्रममाणं कृष्णंनत्वाहर्षेणगद्गदयास्खलंत्यागिराताः प्रजाः प्रोचुरित्यन्वयः कीदृश्यःप्रीत्युत्फुल्लंविकसितंमुखंयासांताः तथोक्ताः उपनीतःसमर्पितःवलिः भागधेयः याभिस्तास्तथाबालिःपूजासाधनंवा कथमिवतेजःपुंजस्यरवेर्दीपमिवआत्मारामस्यबलिंदत्त्वेतिशेषः आदृताःपरमादरयुक्ताःअर्भकाःबालाःपितरमिवकथंभूतंहरिं अन्नादिदानेन पातृत्वात्पितरं सर्वस्मादात्मादेःसुहृदमनिमित्तबंधुं ज्ञानादिदानेनावनकर्तृत्वादवितारम् ॥ ४१ ॥ ४२ ॥

---

## क्रमसंदर्भः ।

० ॥ १ ॥

स उच्चकाशे इति पद्यं श्चित्सुखेन व्याख्यातमस्ति ॥ २ ॥ ३ ॥

तत्र श्रीद्वारकायाम् । रवेरुपहाररूपं दीपमादृतवन्तो जना इवेत्यर्थः ॥ ४ ॥

---

## सुबोधिनी ।

एवंकौरवभक्तानांसर्वसौख्यंनिरूपितं द्वारकास्थितभक्तानामेकादशउदीर्यते ॥ १ ॥ प्रवेशेचप्रविष्टस्यस्थितस्याप्युत्सवस्त्रिधा प्राप्तानामिवचस्नेहशास्त्रार्थंजानतामपि ॥ २ ॥ कृष्णोच्छ्रातस्तादित्युक्त्वाप्रत्यापत्तिर्निरूप्यते पूर्वाध्यायांतेभगवतोद्वारकाप्रवेशायसुमुहूर्त्तंनिरूपितम् अत्रप्रथमंप्रवेशेमंगलमाह शंखनादस्तथास्निग्धदर्शनंस्तोत्रमेवच दूरान्मंगलमेतद्धिकलशादिस्तथांतिके दुःखितेनगरेकृष्णोनप्रवेशमिहार्हति अतःशंखनिनादेनसुखिनस्तान्करोतिहि द्वारकाजलदुर्गाहितदंतनगरंमहत् आनर्त्ताख्यंततप्रवेशःपूर्वंपश्चात्पुरस्यहि अतो भगवानानर्त्तपुरनिकटेगत्वापांचजन्यध्वनिंकृतवानित्याह आनर्त्तानिति वहुवचनमवांतरग्रामाभिप्रायंस्वृद्धान् सुष्ठुऋद्धान् सस्य धनादिभिः स्वकान्स्वकीयान् द्वारिकानिवेशानंतरंवासितान् ॥ १ ॥

यस्यध्वनिर्दानवदर्पहंता अमंगलरूपदैत्यानां निराकरणार्थंदरवरंशंखश्रेष्ठंवादितवान् भगवतावाद्यमानः शंखःकेनचिद्विर्णितः सोऽप्युपनिवद्धः सचउच्चकाशइति उर्द्ध्वमत्यन्तंचकाशेधवलमुदरं यस्यएतादशोदरः उरुक्रमस्याधरशोणेनरूपेण शोणिमाशोणयुक्तः करकमलद्वयस्य मध्येसंपुटेयथाकमलसमूहे उर्द्ध्वशब्दायमानोहंसोभवति ॥ २ ॥

पांचजन्यध्वनिंश्रुत्वासर्वेदेशनगरवासिनः निश्चयेनभगवंतमागतंज्ञात्वापरमानन्दनिर्वृताअपि दर्शनार्थमग्रेगताइत्याह तमुपश्रुत्येति यस्मिन्श्रुतेमृत्युभयमपिगच्छति किमन्यद्भयमित्याह जगद्भयभयावहमिति पांचजन्यंहिआयुधंशत्रुवधार्थंनिष्पादितं घातकस्वभावं तदत्रमंगले कथमुपपुज्यतइत्याशंक्य अत्रापिघातकरूपेणैव मंगलत्वमिति जगतोयद्भयं तस्यभयं आवहतीतिउक्तं प्रत्युद्ययुःअन्योऽन्यंप्रतिकूलतयाऊत्ऊर्द्ध्वंअग्रेअयुः अयगताअन्योऽन्योपमर्देन अहमहमिहकया अग्रेगताइत्यर्थः सर्वाइतिनात्रावांतरजातिर्नियामिका भर्तृत्वस्य तुल्यत्वात् शास्त्रार्थपरिपालनायसर्वउपायनपाणयः समागताः तत्रोच्चावचत्वसिद्धयेदरिद्राअपि सम्भवन्ति ॥ ३ ॥

तेषामुपायनं भगवतः क्वोपयोगायेत्याशंक्याहरवेर्दीपमिति वालिःपूजा साधन द्रव्यंकयाचित्क्रिययाहि भिन्नोभगवतिसंवध्यतेतदैवाहिपरमानंदः तत्रदृष्ट्याइंद्रियसंवंधेऽपिदेहसंवंधासिध्यर्थमुपायनानयनंसूर्योद्देशेनदीपदानं विहितंनहिदीपेनसूर्यस्य किंचित् कार्यंसिध्यति तथापि त्वत्परोक्षेवयमनेनजीवामइति दैन्यख्यापनेनदयोत्पत्तौहेतुर्भवति तथाभगवत्यपिस्वविद्यमानद्रव्येणोपढौकनंतदाभगवताताः सर्वाआदराः आदरेणसुखिताः कृताः तेषांपूर्णमनोरथानांयत्कार्यंतदाह आत्मारामभिति अथवापूर्वमेताः आत्मारामंप्रत्युद्ययुरितिसंवंधः स्तोत्रोपक्रमस्तुप्रीत्युत्फुल्लेति उत्कृष्टैरप्युपनीतेउपायनेभगवतोऽपेक्षानास्तीति वक्तुंतंविशिनष्टि आत्मारामंपूर्णकाममिति उभयाहि विषयाश्चापेक्षतेयेषांविषयापेक्षैवनास्तियेवापूर्णविषयाः तत्र विषयापेक्षाभावः परंदृष्ट्वानिवर्त्ततइति वाक्यात् भगवति पेक्षाप्राप्तेभवाति भगवांस्तुप्राप्तं भगवानात्मारामः अतएवपूर्णकामः आत्माकामआप्तकामइतिश्रुतः अथवाकामस्तुपूर्वंभगवातिउत्पन्नः ससर्वसृष्टपदार्थान्व्याप्यास्थितः पूर्णइत्युच्यतेसजीवेषु कदाचिन्नपूर्णोभवति सर्वजीवार्थत्वात् विषयानांभगवतस्तुसर्वं भगवतः प्राप्तमितिपूर्णत्वउभयत्रापिहेतुः निजलाभेतिनिजंस्वरूपंनिजावासर्वेप्रापंचिकाः पदार्थाः सर्वेनित्यदेतितिरोभावानुपपत्तिदशायामपिअव्यक्तादिनिधनत्वात् अव्यक्तस्य च भगवत्त्वात्विषयपक्षेसदेत्युक्तं अवतीर्णदशायामपिस्वरूपएवस्थितत्वात्नित्यदेति ॥ ४ ॥

---

प्रीत्युत्फुल्लमुखाः प्रोचुर्हर्षं गद्गदयागिरा।
पितरं सर्वसुहृदमावितारमिवार्भकाः ॥ ॥ ५ ॥
नताः स्म ते नाथ सदाङ्घ्रिपङ्कजं विरिञ्चवैरिञ्च्यसुरेन्द्रवन्दितम्।
परायणं क्षेममिहेच्छतां परं न यत्र कालः प्रभवेत् परप्रभुः ॥ ६ ॥
भवाय नस्त्वं भव विश्वभावन त्वमेव माताथ सुहृत् पतिः पिता।
त्वं सद्गुरुर्नः परमञ्च दैवतं यस्यानुवृत्त्या कृतिनो बभूविम ॥ ७ ॥
अहो सनाथा भवता स्म यद्वयं त्रैपिष्टपानामपि दूरदर्शनम्।
प्रेमस्मितस्निग्धनिरीक्षणाननं पश्येम रूपं तव सर्व्वसौभगम् ॥ ८ ॥

श्रीविश्वनाथचक्रवर्त्ती।

एकादशे स्तुतः कृष्णः आनर्त्तैः स्वपुरं गतः।
बन्धुभिर्मिलितः कान्ता अधिनोदिति वर्ण्यते ॥ ० ॥

दरवरं पांचजन्यं शङ्खम्। इवेति साक्षाद्दर्शनं विना सम्यग्विषादस्य शान्त्यनुपपत्तेः ॥ १ ॥

स दरः शङ्खः उच्चकाशे शोभते स्म। अधरस्य शोणेन गुणेन शोणिमा यस्य सः। दाध्मायमानः अतिशयेन वाद्यमानः। अब्जषण्डे कमलसमूहे इति चतुर्भिः करैर्धृतत्वात् ॥ २ ॥

जगतो यद्भयं तस्य भयमावहति तम् ॥ ३ ॥

उपनीताः समर्पिता वलय उपायनानि याभिस्तथाभूताः सत्यः। निरपेक्षेऽपि तस्मिन्नादरेण समर्पणे दृष्टांतः रवेर्दीपमिव ( रवौ दीपनीय रविपूजका इवेत्यर्थः ) पितरमर्भका इव तम् अवितारं रक्षितारमूचुः। उपायनानपेक्षत्वमाह आत्मारामिति ॥ ४ ॥ ५ ॥

---

सिद्धांतप्रदीपः।

अथद्वारावतीस्थभगवदीयजनानांभगवतिस्नेहाधिक्यंवक्तुंप्रथमंभगवच्चेष्टितमाह आनर्तानिति स्वृद्धान्सुसमृद्धान्दरवरंपांचजन्याख्यं शंखश्रेष्ठम् स्ववियोगजंविषादंशमयन्निवदध्मौवादितवान् सर्वथाविश्लेषजन्मविषादनिवृत्तिस्तुतत्तत्संयोगादेवभवतीत्यतः इवशब्दः ॥१॥

सदासपांचजन्याख्यः दरः शंखःश्वतोधवलोदरोऽपि उरुक्रमस्यअधरशोणितरागेणशोणिमायस्यकरकंजसंपुटेदाध्मायमानोभगवताऽऽपूर्यमाणउच्चकाशेनितरांशुशुभे यथाऽब्जषण्डेऽरुणपद्मसमूहे उत्स्वनउच्चशब्दः कलहंसोराजहंसः ॥ २ ॥

जगद्भयंयस्यकालादेरपिभयमावहतीतितथातम् ॥ ३ ॥

तत्रपूर्णकामे श्रीकृष्णेरवेर्दीपमिवोपनीतावलयोयाभिस्तास्तेनचाहतानित्यदानिजलाभेनपूर्णकाममात्मारामं श्रीकृष्णंप्रोचुरित्युक्तरेणान्वयः ॥ ४ ॥

---

भाषा टीका।

( सूत उवाच ) समृद्ध जनपद अपने आनर्त प्रान्त के देशों में प्राप्त होकर भगवान् ने देश वासियों का विषाद शमन करते अपना दरवर ( शंख ) बजाया ॥ १ ॥

वो धवलोदर ( स्वेत मध्य ) दर ( संख ) उरु क्रम के अधरों की लाली से लाल होकर जैसे कमल समूह में कलहंस शब्द करता ऐसेही भगवान् के करकंज संपुट मै बजता शोभित हुआ ॥ २ ॥

जगत् के भय को भी भय देने वाले उस शंख के निनाद को सुनकर भर्त् दर्शन लालसा से सब प्रजा उद्यत हुई ॥ ३ ॥

आत्माराम और निज लाभ से नित्यपूर्ण काम भगवान् को सूर्य को दीप दर्शन के समान आदर युक्त प्रजा सब वलि ( भेट ) लेकर प्रीति सै उत्फुल्ल मुख आनंदगद्गद वाणी से " जैसे बालक पिता की स्तुति करते हैं " अपने रक्षक की स्तुति करने लगी ॥ ४ ॥

---

श्रीधरस्वामी।

किमूचुरित्याह। नता इति। विरिंचो ब्रह्मा। वैरिंच्याः सनकादयः। इह संसारे परं क्षेममिच्छतां परायणं परमं शरणम्। कुतः परेषां ब्रह्मादीनां प्रभुरपि कालो यत्र प्रभुर्न भवेत् ॥ ६ ॥

अतो भवाय उद्भवाय नोऽस्माकं त्वं भव। हे विश्वभावन!। अनुवृत्त्यानुगमनेन ( अनुवृत्त्यागमनेन ) कृतिनः कृतार्था बभूविम जाता वयम् ॥ ७ ॥

### श्रीधरस्वामी।

कृतार्थत्वमेवाहुः। अहो भवता वयं सनाथाः स्म। यद्यस्मात्तव रूपं पश्येम। त्रैपिष्टपानामपि दूरे दर्शनं यस्य देवानामपि दुर्लभमित्यर्थः प्रेम्णा यत् स्मितं तद्युक्तम् स्निग्धं निरीक्षणम् यस्मिन् तदाननं यस्मिन् तद्रूपम्। सर्व्वं सर्व्वेषु वा अङ्गेषु सौभगं यस्मिन् ॥ ८ ॥

---

### दीपनी।

उद्भवाय उत्तमस्थिताय यद्वा सन्ततं निजदर्शनसमृद्धये इत्यर्थः ॥ ७ ॥ ८ ॥

---

### श्रीवीरराघवः।

प्रीत्याउत्फुल्लानिविकसितानिमुखांवुजानियासांतथाभूताःप्रजाहर्षेणगद्गदयाकुंठितयागिरातंप्रोचुःरविदृष्टांताभिप्रेतंव्यंजयन्विशिनष्टि निजलाभेननित्यानिरवधिकस्वानन्दानुभवलाभेनपूर्णकाममवाप्तसमस्तकाममात्मारामं स्वानुभवैकनिष्ठंवल्यनपेक्षमितिभावः केकमिवोचुः सर्वेषुपुत्रेषुसुहृदंसौहार्दयुक्तमवितारंरक्षितारंपितरमर्भकाः शिशवःपुत्राइव ॥ ५ ॥

उक्तमेवाहुःनताइतिचतुर्भिः हेनाथ! तवांघ्रिपंकजंप्रतिनताःस्म कथंभूतंविरंचिनाब्रह्मणावैरिंच्यैः सनकादिभिः सुरेन्द्रैरिंद्रादिभिश्च वंदितंनमस्कृतमिहक्षेमंनिःश्रेयसमिच्छतांपरमुत्कृष्टंपरायणं क्षेमसाधनभूतं परमितिक्षेमविशेषणंवायत्रयदारविंदेपरेषांब्रह्मादीनामपिप्रभुस्तानपिवशीकुर्वन्कालोऽपिनप्रभवेन्नसमर्थोभवेत् यत्रत्वयिविषयेपरःप्रभुःकालोऽपिनप्रभवेत्तस्यतवपदाम्बुजमितिवान्वयः "सर्वस्यवशीसर्वस्येशानःनतस्येशेकश्चने"त्यादिश्रुत्यर्थोऽत्रानुसंधेयः ॥ ६ ॥

हे विश्वभावन! विश्वं जगत्भावयातिसत्तास्थितिप्रवृत्तिमत्करोतीतितथाभूतस्त्वनोऽस्माकंभवायाभ्युदयायभव "मातापिताभ्रातानिवासःशरणंसुहृद्गतिर्नारायणःतंदेवतानांपरमंचदैवतंपतिंपतीनांपरमंपरस्तात् नतस्यकश्चित्पतिरस्तिलोकेनचेशितानैवचतस्यलिंगंयोवैवेदांश्चप्रहिणोति"इत्यादिश्रुत्यर्थमनुसन्धायोचुः त्वमेवमातेत्यादि लौकिकस्तुवन्धुरेकएवत्वंतुसर्वविधवंधुरितिभावः यस्य तवानुवृत्त्यासेवयावयं कृतिनः कृतकृत्याबभूविमसत्वंनोभवायभवेत्यन्वयः ॥ ७ ॥

अहो! इतिभगवतात्वयावयमहोसनाथाः स्मइतियत्सुखप्रदनाथवंतोबभूविमकुतः यद्यस्मात्तवरूपं पश्येमकथंभूतंत्रैपिष्टपानांदेवानामपिदूरदर्शनंदुर्दर्शनंप्रेमपूर्वकस्मितस्निग्धेसानुरागेईक्षणेचयस्मिंस्तदाननंयस्यतत्सौभगंसुन्दरम् ॥ ८ ॥

---

### श्रीविजयध्वजः।

हेनाथ! तवांघ्रिपंकजंसदानताः स्मेत्यन्वयः कीदृशंविरिंचवैरिंचसुरेंद्रैश्चतुर्मुखशंकरदेवेंद्रैर्वंदितं इहचेतनराशिमध्येपरंक्षेमंमोक्षमिच्छतांभक्तानांपरायणम्उत्तमाश्रयं परस्याहिरण्यगर्भस्यप्रभुः समर्थोजननमरणधर्मापादकोऽपिकालः यत्रपदारविंदेभक्तानांनप्रभवेज्जराद्धिधर्मापादकोनभवति परेषांभक्तानांप्रभुः कालः यत्रभक्तानांनप्रभवेदतस्तस्यांघ्रिपंकजस्थेनसमर्थइतिकिंवाच्यमितिवा ॥ ४३ ॥

हेविश्वभावन! जगतः सत्तादिप्रद त्वंनोऽस्माकंभवायज्ञानभक्त्याद्धिकल्याणायभव यस्यतवानुवृत्त्यासेवालक्षणेनानुवर्तनेनकृतिनः सुकृतिनोवभूविम सत्वंनः परमंदैवतमिष्टदेवतानः सद्गुरुर्निर्दोषगुरुस्थानीयश्च त्वमेवमाताऽभीष्टज्ञानेनात्मनात्वयैवनास्मत्प्रत्नेनसुहृत् पिता पतिः स्वमी ॥ ४४॥

हेनाथ! तवरूपंपश्येमेति यद्यस्मात्तस्माद्वयंभवतासनाथाः स्म नाथवंतोभवाम अहोअस्मद्भाग्यमित्यन्वयः कथंभूतंत्रैविष्टपानामिंद्रादिदेवानामपिदूरतः चिरकालतः चीर्णतपः संपत्त्यादृश्यतइतिदूरदर्शनम् अनेनदर्शनसाधनसामग्र्येवाभिप्रेता नतुदर्शना भावः तैः प्रार्थितत्वेनतत्कार्यार्थमवतीर्णत्वाद्दर्शनतारतम्याभिप्रायोवा प्रेम्णास्मितंस्निग्धंनिरीक्षणंमधुरावलोकनंताभ्यांयुक्तमाननंयस्मिंस्तत्तथोक्तं सर्वपूर्णसौभगंसौंदर्यंयस्मिंस्तत्तथोक्तम् ॥ ४५ ॥

---

### क्रमसन्दर्भः।

एवं स्तुत्यादिकमपि तत् प्रीणनतामर्हतीत्याह प्रीत्येति। पितरमर्भका इवेति दृष्टांतः। तस्य प्रीतावसाधरणं गुणविशेषमप्याह सर्वसुहृदमिति सर्वसुहृत्त्वे लिङ्गम् अवितारमिति। तथाहि तादृशस्य राज्ञः स्वसम्बन्धाभिमानिप्रीतिमत्पुत्रादिषु प्रीतिविशेषादयो यथा दृश्यंते तथा तेषु तं प्रीतिमन्तामित्यर्थः। एवं कल्पतरुदृष्टान्तेऽपि भगवतो भक्तविषयिका कृपा यथार्थमेवोपपद्यते ये खलु सहजतत् प्रीतिमेवात्मनि प्रार्थयमाना भजन्ते तेभ्यस्तद्दानयाथार्थ्यस्यावश्यकत्वात्। तस्मादस्त्येवानन्दस्वरूपस्यापि भक्तावानन्दोल्लास इति ॥ ५ ॥ ६ ॥

भवायसन्ततनिजदर्शनसमृद्धये ॥ ७ ॥ ८ ॥

---

सुबोधिनी।

स्तोत्रपक्षेसमागतस्यकिंकृत्यमाशंक्यतथात्वेस्तोत्राऽसंभवात्तन्निवृत्त्यर्थमुक्तमात्माराममौनिक्लिन्नेहमुक्तिरस्त्य: स्तोत्रंकुर्वंतीति तासांस्वरूपमनुवदतिभगवत्प्रीत्यर्थंप्रीत्युत्फुल्लमुखाइतिप्रीत्याहिउत्फुल्लमुखत्वंहिलोकासिद्धंयेषांयाद्विरहेणामुकुलतामुखस्यतेषांतद्दर्शनेनउत्फुल्लतातदाहिमुखेस्थितंमाधुर्यंप्रकटंभवतितततस्तत्सहितानिवाक्यानिमिष्टानिभवंति किंच हर्षगद्गदयागिरेतिस्तोत्रंहिज्ञानात्मकंवेदेप्रसिद्धंस्थिरमनसांकर्मोपयोगिनतुभक्तानांप्रेम्णासंभ्रमचित्तानाम्अतोगिरेत्युक्तंतत्रापियोहर्षः आनंदोद्गमः तेनगद्गदयागद्गदशब्दोऽनुकरणशब्दः शब्देतथाध्वनियुक्तत्वंवदतिगदव्यक्तायांवाचीतिगदधातुर्निरुक्तः आदरंवोधयतिधाष्टर्यंदोषंवारयतिपितरमितियथाप्रोषितेपितरिसमागतेमहाराजाधिराजेतितत्पुत्राउद्गच्छंतिअत्रतथाविकलत्वंनास्तीतिदृष्टांतांतरमाह सर्वसुहृदमिति सर्वसुहृत्वं "गौर्वावसर्वस्यमित्रमि" तिश्रुतेः तांयथावद्वत्सः संध्यापर्यंतंक्षुधितः स्वजातिशब्दंकुर्वन्नुपधावतिअत्रापिदीनतमत्वाभावात्दृष्टांतांतरमाह अवितारमितियथाअरण्यादौभयस्थानेचौरादिभिर्मार्यमाणाअर्भकाः पूर्वपरिचितंरक्षणसमर्थंदृष्ट्वोद्गच्छंतिवदंतिचखखेदंतद्वदित्यर्थः॥ ५॥

सर्वाःप्रजाश्चतुर्विधाः स्त्रीपुंभेदेनप्रथमंद्विविधाः पुरुषास्त्रिविधाः ज्ञानिवैषयिकभक्तभेदेन तत्राद्यानांज्ञानिनांवचनमाहनताःस्मेतितेअंघ्रिपंकजंनताः स्मनभ्रेनमइत्येतावत्सदुपशिक्षितमिति सिद्धांतात्भगवतिदृष्टेनमनमेवकर्त्तव्यं सर्वज्ञत्वेऽपिभिन्नतयास्थापितत्वात् "किमासनंतेगरुडासनाये"तिवाक्यात् ननुकिंफलार्थंनमनंतत्राह हेनाथ! हेपालकभर्त्तः! स्वतएवसर्वकामानांपूरकत्वात्नित्यएवायंनमस्कारः नकाम्यइतिज्ञापयतिसदेतिं प्रवेशोऽपिनापेक्ष्यतइत्याभिप्रायः ननुकथंब्रह्मलोकादिगमनफलपरित्यागेनसदानमनेनैवास्थितिःप्रार्थ्यतेतत्राहविरिंचिवैरिंच्येतिविरिंचिर्ब्रह्मावैरिंच्योमहादेवः सुरादेवाः अन्येइंद्रश्चएभिश्चतुर्भिरुत्कृष्टैरपिवंदितं तत्रगतानामप्येतदेवकार्यंततोदूरापेक्षया निकटएवस्थित्वावरम् ननुयद्यपिज्ञानिनामैहिकामुष्मिकफलविरागोभवतिभगवत्सायुज्यंचभक्तिरसाज्ञापेक्ष्यते तथापिभगवतासहगमनसामर्थ्यंस्थानच्युतिहेतुप्रतिबंधाभावः स्थिताज्ञानादिसंरक्षणं च अपेक्ष्यतएवतततस्तदर्थं कथंननमनमित्याशंक्याहपरायणमितिइहसंसारप्रवाहेपरंक्षेमाभिच्छतांयत्परायणमाश्रयभूतंरक्षकमितियावत्चरणारविंदमेवसर्वसाधकंक्षेममिहेच्छतामितिपदत्रयेणोक्तंतत्रक्षेमपदेनज्ञानादिरक्षाइहेतिस्थानादिप्रच्युतिः इच्छतामितिसहगमनेच्छायांतत्सामर्थ्यदानं च यद्यपिवाक्यार्थोनभवतितथापिपदार्थमनुदेहस्यकालप्रवाहजातत्वान्नमनासिद्ध्यर्थमपिदेहस्थितिः काम्येतिचेत्तत्राह नयत्रकालइतियत्रनमनेस्थितोभगवतिनम्रत्वात् भगवत्सेवकस्यनकालस्यप्रभवः परः वासुदेवः प्रभुर्यस्य॥ ६॥

विषयपराआहुः भवायनस्त्वमितिहेविश्वभावन! सर्वानेवविषयसंबंधेनभावयसिअधिकान्करोषिअतोऽस्माकमपिउद्भवायभवनस्त्वमितिवाहेतुः य...ऽस्माकंत्वंस्वामीसर्वप्रार्थनायामनुचितत्वाभावायभगवातिषट्कमंत्वंप्रतिपादयतिमातेत्यादित्वमेवनोमातात्वद्गर्भादेवनिर्गतत्वात् उदरस्थानांजीवानामेवबहिः सृष्टेः ब्रह्मांडाख्येचोदरेसांप्रतमपि स्थितेः लोकप्रतीत्यातासांजरायुवत्पोषकत्वाच्चअतस्त्वमेवमाताअतोरोदनेनबलाद्वात्वमेवप्रार्थनीयः किंच अथसुहृत् अविवेकदशायांयथात्वंप्रार्थनीयः अथतदनंतरंविवेकदशायामपित्वमेवप्रार्थ्यः अतस्त्वंसुहृन्मित्रं "द्वासुपर्णासयुजासखायावि"तिश्रुतेः सुष्ठुहृदयः सुहृत्एकस्मिन्नेवहृदयेउभयोःस्थितत्वात् सुष्ठुहरतीतिवासर्वफलभोक्तृत्वात् सर्वफलदातृत्वात् किंच असेवायंपराधेनदण्डनेऽपिभगवानेव प्रार्थनीयइत्याह पतिरितिनह्यन्यागतिरस्माकमस्तियथास्वयमनलंकृतोऽपिभार्यामलंकरोतिबहुभिराभरणैः अलंकृतेतुसंदेहएवनास्तिअतस्त्वंमहानस्मानलंकुर्वित्यर्थः किंच अतएवंयुक्त्यापिभगवानेवप्रार्थनीयः त्वमस्माकंपिताअतोजन्ममात्रेणैववयंतेदायभागिनः जगत्कर्तृत्वेनैवभगवतः श्रवणात्एवमैहिकसर्वफलदानार्थंभगवद्रूपमुक्त्वापारलौकिकसर्वदानार्थमाहत्वंगुरुर्नः परमंचदैवतमितिप्रक्रियांतरत्वात् पुनस्त्वमितिग्रहणंपरलोकस्तुतदर्थविहितकर्मज्ञानभक्तिभिर्भवतितत्रअज्ञानादन्यथाज्ञानान्मोहनार्थंवापाखंडादिबहवोमार्गाजाताः तत्रसन्मार्गवक्तादुर्लभः संदेहेनविश्वासाभावाच्चत्वंत्वव्ययंज्ञानमितिवचनात्त्वमेवगुरुः जीवास्त्वसद्गुरवः त्वमेवसद्गुरुरितिअतोगुरुशुश्रूषयेतिवाक्यात् स्वसेवामेवशिक्षयेत्यर्थः एवंकर्मणांफलमितिपक्षेगुरुसेवयैवकृतार्थतादेवताफलदानपक्षे "फलमतउपपत्तेः॥३।२।३७॥ इतिब्रह्मदानपक्षेऽपित्वमेवफलदातेत्यर्थः परमंचदैवतमितिदेवतादानपक्षेऽपिनांगदेवताः फलंप्रयच्छंति किंतु सहकारिणोभवंतिअतः परममित्युक्तंमध्ये चकारात्ब्रह्मपक्षेऽपिपरमात्मादेवताभवानेवदेवानांत्वदंशत्वात् ब्रह्मरूपत्वाच्चअतस्तवाराधनमेवास्माकंकर्त्तव्यम् अन्यत्तुस्वतएवभविष्यतीत्याह यस्यानुवृत्त्येतिकृतमस्यास्तीतिकृतीभगवदनुवृत्तिव्यतिरेकेणकृतनान्येनधर्मादिनानकृतीत्वंभवति "धर्मःक्षरतिकीर्त्तनात् कृतघ्ननास्तिनिष्कृति"रितिअतस्तवानुवृत्त्यर्थंतथासंपाद्ययथाकृतिनोवभूविमेत्यर्थः॥ ७॥

भक्ताआहुः अहोइति अहोइत्याश्चर्येवयंत्वद्भक्त्यैवपूर्णमनोरथाः इदानींत्वमपिमिलितइत्याश्चर्यं अथवाअल्पायभक्तिः कृतास्माभिः फलमहज्जातमित्याश्चर्यंभवतावयंसनाथाः नारायणपराः सर्वेनकुतश्चनबिभ्यतीतिन्यायेन अपेक्षाभावात् नियतानापेक्ष्यतेभगवतस्तुभक्तिविषयत्वेनैवग्रहणम् एवमपिभगवानेवस्वयमुद्यम्यफलदानादिकं करोतिचेत् तदातेसनाथाभवंति तत्वाश्चर्यकरंभवति इहतुभवतावयंसनाथाः स्वयमागत्यसर्वकार्यं निर्वाहयसीत्यर्थः किंच इदंपुनः सर्वजनीनगुप्ततयाभक्तानांभगवान्स्वयंकिंचित्करोतीतिश्रूयते अत्रतुसाक्षात्सर्वजनीनंसर्वंकरोतीतिस्मेत्युक्तं किंच यद्वयंसर्वदापश्येमनहिसर्वदाभगवान् सर्वैःसाक्षात्क्रियतेसात्त्विकैः क्रियतइतियदितदाहत्रैविष्टपानामपि दूरदर्शनमितित्रिविष्टपेस्वर्गेभवास्तिष्ठंतीतिवातत्रभूमिस्थानां दर्शनशंकैवनास्ति किंच कदाचिद्देवानामापदायांकृपयाभगवत्साक्षात्कारोभवतितथापिनैवंरूपंपश्यंतीत्यभिप्रायेणाहप्रेमस्मितस्निग्धनिरीक्षणमितिप्रेमास्मितेन च स्निग्धंयन्निरीक्षणंतत्साहितमाननंयस्य "येयथामांप्रपद्यंते"इतिप्रेमभक्तेषुभगवतोऽपिप्रेमअज्ञानेनमुक्ताः कालांतरेस्वसेवार्थंभक्ताःक्रियंतेतेनमोहिताइवएतइतिस्मितम्अथवाभगवद्भक्तेषुमोहनमल्पंभगवद्गुणरूपयोस्त्वमोहोनान्यत्रेतिमायारूपहासस्यमंदत्वंअनेनदयानिरूपिताभवतिप्रेमदयाभ्यांहिसर्ववस्तुस्निग्धंभवतिमूर्त्तानांतैलादिःस्नेहहेतुः अमूर्त्तानांस्नेहः हृदयेआत्मसंबद्धानांतेनभगवद्दृष्टिः उभाभ्यामतिस्निग्धाप्रथमतोभगवद्दर्शनमेवदुर्लभंतत्रापिसन्मुखतयातत्रापिभगवद्दृष्टिः स्वस्मिन्पतिततदाहिभगवद्दृष्ट्यागृहीतः भगवतिप्रविष्टएवतत्रापिस्निग्धयादृष्ट्यागृहीतः कदापिनाविश्लेषमेतितत्रहेतुपूर्वकंस्निग्धयाहेतुर्ह्यपिदयासापिस्नेहेनसंबद्धानास्मादन्यः कश्चिदुत्कर्षोऽस्तिभगवदीयानांभगवति किंच एतादृशसपिरूपंसर्वसौभाग्ययुक्तंभवतिस्वापेक्षितसर्वविषयभूतम्एतावतानात्रविषयत्यागोऽप्यपेक्षितः॥ ८॥

यर्ह्यम्बुजाक्षापससार भो भवान् कुरून्मधून्वाथ सुहृद्दिदृक्षया ।
तत्राब्दकोटिप्रतिमः क्षणो भवेद्रविं विनाक्ष्णोरिव नस्तवाच्युत ॥ ९ ॥
कथं वयं नाथ चिरोषिते त्वयि प्रपन्नतृष्णाखिलतापशोषणम् ।
जीवेम ते सुन्दरहासशोभित मपश्यमाना वदनं मनोहरम् ॥ १० ॥
इतिचोदीरिता वाचः प्रजानां भक्तवत्सलः ।
शृण्वानोऽनुग्रहं दृष्ट्या वितन्वन् प्राविशत्पुरीम् ॥ ११ ॥
मधु-भोज-दशा-र्हा-र्ह कुकुरा-न्धक-वृष्णिभिः ।
आत्मतुल्य बलैर्गुप्तां नागैर्भोगवतीमिव ॥ १२ ॥

श्रीविश्वनाथचक्रवर्त्ती।

वैरिञ्च्याः सनकादयः । परं परायणं परमाश्रयम् । यत्र अंघ्रि पंकजे परेषां ब्रह्मादीनां प्रभुरपि कालो न प्रभवेत् ॥ ६ ॥
भवाय क्षेमाय । "भवः क्षेमे च संसारे" इति मेदिनी ॥ ७ ॥ त्रैपिष्टपानां देवानाम् ॥ ८ ॥

---

सिद्धांतप्रदीपः।

पितरमर्भकावालाइवसर्वसुहृदमवितारंरक्षकंश्रीकृष्णमूचुः प्रजाइतिप्रकरणादन्वेति ॥ ५ ॥
तदेवाह नताःस्मेतिपंचभिः इहपरंक्षेममिच्छतांपरायणंसर्वोत्कृष्टंशरणम् तेपदारविन्दंनताःस्म यत्रयस्मिन् शरणीकृतेसतिशरणापन्नेषु परेषामशरणापन्नानांप्रभुरपिकालोनप्रभवेत् कथमनुवर्ततांभवभयंतवयद्भ्रूकुटिः सृजातिमुहुस्त्रिणामि रभवच्छरणेषुभयमितिवक्ष्यमाणात् ६
हेविश्वभावन ! जगदुत्पादकयस्यानुवृत्त्योपासनयाकृतिनः कृतार्थावभूविमजातावयंसत्त्वंनोभवायोद्भवायभव ॥ ७ ॥
कृतित्वंवर्णयंति अहोइति वयंभवतासनाथाः स्मः यतः अहोत्रैविष्टपानामपिदूरदर्शनंयस्यतस्यतवरूपंपश्येम कथंभूतंरूपं प्रेमपूर्वस्मितमन्दहसितंस्निग्धंसरसंनिरीक्षणंचयस्मिन्तदाननंयस्मिन्तत् सर्वसंपूर्णसौभगंयस्मिन्तत् ॥ ८ ॥

---

भाषा टीका।

द्वारिका के सब प्रजा प्रीति से प्रसन्न मुख होकर हर्ष से गद्गदवाणी से सबके सुहृद तथा रक्षक पिता के तुल्य श्रीकृष्ण की स्तुति करते भये ॥ ५ ॥
हे नाथ ! हम आप के अंघ्रि पंकज में सदा प्रणत हैं । जिस अंघ्रि पंकज को ब्रह्मा सनकादिक और सुरेन्द्र वंदना करते हैं जो क्षेम इच्छा करने वालों का परम परायण है । और जहां ब्रह्मादिकों का प्रभु काल भी अपना प्रभाव नहीं कर सका है ॥ ६ ॥
हे विश्वभावन ! तुम हमारे मङ्गलार्थ होहो ? तुमही माता हो सुहृद हो पति हो पिताहो तुमही सद्गुरु और परम देवता हो जिनकी अनुवृत्ति से हम कृतार्थ हुए हैं ॥ ७ ॥
अहो ! हम सब आप से सनाथ हैं । कि जो देवताओं के भी दूर दर्शन, प्रेम स्मित युक्त स्निग्ध निरीक्षण, आप के सर्व सौ भग रूप को दर्शन करते हैं ॥ ८ ॥

---

श्रीधरस्वामी।

अर्भका इव सकरुणमाहुः । यर्हि यदा । भो अम्बुजाक्ष ! । नो भवानिति पाठे न इत्यनादरे षष्ठी अस्माननादृत्य । अपससार अपहाय जगाम । कुरून् हस्तिनापुरम् । मधून् मथुरां वा । तत्र तदा रविं विना आन्ध्यादक्ष्णोर्यथा एवं तव नः त्वदीयानामस्माकमपी त्यर्थः ॥ ९ ॥ १० ॥
इति च एवंविधाः अन्याश्चोदीरिता वाचः शृण्वन् दृष्ट्यासाभिनन्दावलोकनेनानुग्रहं कुर्वन् ( पुरं द्वारकां प्राविशत ) ॥ ११ ॥
द्वारकां स्तौति पंचभिः स्वतुल्यबलैः मधुभोजादिभिः गुप्तां रक्षिताम् ॥ १२ ॥

---

दीपनी ।

मधूनित्यस्यार्थः मथुरामण्डलमिति । अनेन साम्त्वयामास सप्रेमैरायास्य इति दौत्यकैरिति ( १० स्कंध ३९ अं ३५ श्लो ) यदक्रूरयाने वक्ष्यति तस्य सङ्गतिरुक्ता इति वुधरञ्जनी ॥ ९ ॥ १० ॥

---

श्रीवीरराघवः ।

भोअम्वुजाक्ष ! भवान्सुहृद्दिदृक्षयायदाकुरून्मधून्वाजनपदानपससारजगामतत्रतदा हेअच्युत ! नोऽस्माकंत्वामपश्यतां रवेर्विनारविंविना अक्ष्णोः क्षणकालोऽब्दकोटिप्रतिमः सम्वत्सरकोटिकालतुल्योभवेत् ॥ ९ ॥ १० ॥

इतीत्थंप्रजानामुदीरितावाचः शृण्वानोभक्तवत्सलोभगवानवलोकनेनानुग्रहंवितन्वन्पुरंप्राविशत्पूः शब्दोऽयंनतुपुरशब्दः ॥ ११ ॥

कथंभूतांपुरंमध्वादयोयादवान्तरविशेषाः तैरात्मतुल्यवलैः कृष्णातुल्यवलैर्नागैःकाद्रवेयादिभिर्भोगवतीमिवगुप्तांरक्षितांभोगवतीनामनागानांपुरी ॥ १२ ॥

---

श्रीविजयध्वजः ।

हेअंवुजाक्ष ! अथयर्हियदामाधवः श्रीवल्लभोभवान्मधुविषयेभ्यः सुहृदांपांडवानांदिदृक्षयादर्शनेच्छया कुरून्कुरुविषयान् कुरुविषयेभ्योमधून्वांव्रतिगच्छति हेअच्युत ! तत्रतस्यामवस्थायांतवेतिषष्ठीद्वितीयार्थे त्वांविनाकुरूणांमधूनांचनोऽस्माकंयथारविंविनाक्ष्णांतथैकः क्षणः काल अब्दकोटिप्रतिमः वर्षकोटिसमानः स्यादित्येकान्वयः ॥ ४६ ॥

दृष्ट्यादर्शनेन शृण्वानः शृण्वन् चशब्दार्द्धंदिमागधादीनांगिरः ॥ ४७ ॥

गुप्तांरक्षितां भोगवतीनामनागानांपुरी आत्मतुल्यवलैः परस्परमात्मनातुल्यवीर्यैरधिकदृष्टांतन्यायोवा ॥ ४८ ॥

---

क्रमसन्दर्भः ।

यर्हीति यदा यदेत्यर्थः तत्र तदा तदा क्षणोऽपि अब्दकोटिप्रतिमो भवति । तथा रविं विना अक्ष्णोर्यादृश्यान्ध्यावस्था तादृश्यपि भवतीत्यर्थः । नो भवानिति पाठे नोऽस्माकं स्वामी यो भवान् स त्वमित्यर्थः । तत्र मधून् मथुरां वेति व्याख्याय तदानीं तन्मण्डले सुहृदो व्रजस्था एव प्रकटाइति तैरप्यभिमतम् । तत्र योगप्रभावेण नीत्वा सर्वजनं हरिरित्यत्र सर्वशब्दप्रयोगात् । वलभद्रः कुरुश्रेष्ठ भगवान् रथमास्थितः । सुहृद्दिदृक्षुरुत्कंठः प्रययौ नन्दगोकुलमित्यत्र प्रसिद्धत्वात् ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥

---

सुवोधिनी ।

विषयरूपोऽपिस्वयमेवजातइतितस्मादेतन्महदाश्चर्यमितिस्त्रियः स्त्रीप्रधानाश्चाहुः एतानभगवंतंनवागुणान्जानंतिअपितुस्वानुभवंतश्चवस्तुसामर्थ्यात्प्रजायतेतदनुवदंतियर्ह्यंवुजाक्षेति हेकमलनयन ! दृष्ट्येवामृतंपाययतीतितथासम्बोधनं नःअस्माननादृत्यकिमेताः मत्स्वरूपाविदः अतस्तत्रगमिष्यामियत्रमांजानंतीति इत्यपससारभवानितिगमनसमयायवयंसंमुखतयानदृष्टाः कुरून्हस्तिनापुरदेशान् अथततएवप्रक्रियांतरेणभीष्मादिदर्शनार्थंकुरुक्षेत्रंतत्रतास्मिन्समयएकःक्षणःअब्दकोटिप्रतिमोभवेत् यातनास्वेवंश्रूयतेक्षणमध्येवर्षसहस्रंकृत्वाभोजयंतीतितथैवास्माकमनुभवः ननुसुखेऽपिश्रूयतेक्षणमात्रेकल्पभोगान्भुंक्तइति तत्राह रवेर्विनाक्ष्णामिवविषयसंस्कारकत्वेनअधिष्ठातृत्वेन चयदारविः प्रविशतितदाविषयग्रहणसमर्थंचक्षुर्भवतितथास्माकमंतर्वहिश्चेत्भगवान्तिष्ठतितदासर्वकार्यक्षमत्वंअयमर्थः यथायोगिनः समाधौप्रत्याहारेण चक्षुर्निमीलनंकृत्वादेवतांस्ववशेस्थापयित्वातिष्ठंतिक्षणोक्षणोमूर्छिताभवामइतिजीवनंत्वच्युतइतिसंवोधनात् यथात्वमच्युतः तथावयमप्यस्मिन्नंशेजाताइतिद्योतितम् ॥ ९ ॥ १० ॥

एवंचतुर्विधानांवाक्यंभगवान्सत्यत्वेनसमर्थयित्वासत्यवाक्यश्रवणमङ्गलमनुभूयपुरंप्राविशदित्याहइतीति चकारादन्यान्यपिवहुविधानि प्रजानामितिनात्रवचनेदोषग्रहणंतदाभगवतोमहतीकृपाउत्पन्नेतितिवोधयतिभक्तवत्सलइतियथागौर्वत्संदृष्ट्वाव्याकुलाभवतितथाभगवान्जातइत्यर्थः दृष्ट्यानुग्रहंवितन्वन्तथातासुदृष्टिः पतिताभगवान्स्वामादिसंपन्नः यथावत्तासांहृदयेप्रविष्टः येमसुखितान किंचिदुक्तवत्यः ततः पुरींद्वारकांप्रकर्षेणमहतासंभ्रमेणअविशत् ॥ ११ ॥

प्रविष्टांतांपुरींवर्णयतिपंचभिः मधुभोजेतिविद्यायथातथापुरीतिविज्ञापयितुम् "अधिष्ठानेवहिश्चोर्ध्वमंतश्चांतर्विभेदतः सुंदरंभगवद्योग्यस्थानंनान्यत्कथंचन" तत्राधिष्ठातृन्वर्णयतिमधुभोजेतिषड्विधायादवाः मधवोभोजाः दशार्हार्हाः कुकुराअंधकावृष्णायश्चतैर्गुप्तांसत्वरूपमंतः करणंयदाषडिन्द्रियैः संरक्ष्यतेतदाभगवत्प्रवेशयोग्यंभवति इंद्रियैर्विषयाकृष्टैरितिवाक्यात् तैरेवनाशश्रवणात् पुरीचगृहभेदेनद्रष्टव्या आत्मतुल्यवलैः यथाआत्मदेहः तत्तुल्यंवलंयेषाम्आत्मावायुर्वा "अहंमनुरभवंसूर्यश्चे"तिसूक्तेअहंदेवतायावायुभेदत्वात् मंडलमध्यत्वादस्य सूत्रस्यवलं सेनावाभगवत्तुल्यसेना सर्वाप्रवेशेनदृष्टांतः नागैरितिशरीरमिवप्राणैर्नागैः प्राणैःभोगवतीतनुः प्राणायामैः संरक्षितायोगितनुः यथाभगवान्प्रविशतिभोगवतीगंगाप्रवाहोवारक्षाभावेदेवैरपि सान्निध्येत ॥ १२ ॥

---

सर्वर्तु सर्वविभवपुण्य वृक्षलताश्रमैः ।
उद्यानोपवना रामैर्वृतपद्माकर श्रियम् ॥ १३ ॥
गोपुरद्वारमार्गेषु कृतकौतुक तोरणाम् ।
चित्रध्वजपताकाग्रैरन्तः प्रतिहतातपाम् ॥ १४ ॥
संमार्जित महामार्ग रथ्या-पणकचत्वराम् ।
सिक्तां गन्धजलै रुप्तां फल पुष्पाक्षताङ्कुरैः ॥ १५ ॥
द्वारि द्वारि गृहाणां च दध्य क्षतफलेक्षुभिः ।
अलंकृतां पूर्ण कुम्भैर्वलिभिर्धूपदीपकैः ॥ १६ ॥

श्रीविश्वनाथचक्रवर्त्ती ।

भो अम्बुजाक्ष ! । नो भवानिति पाठे नोऽस्मान् अनादृत्य । कुरून् हस्तिनापुरम् । मधून् मथुरामण्डलं नन्दव्रजमित्यर्थः नतु मथुरापुरीं तदानीं तस्यां सुहृदामभावात् । तत्र योगप्रभावेण नीत्वा सर्वजनं हरिरित्यत्र सर्वशब्दात् । तेन आयास्य इति दौत्यकैरिति ज्ञातीन् वो द्रष्टुमेष्याम इत्यादि यद्भगवता उक्तं व्रजं प्रत्यागमनं तत् पाद्मादिपुराणेषु स्पष्टं सदपि ( तदपि ) श्रीभागवते त्वस्मिन्नत्रैव ज्ञापितम् । तदा नस्तव त्वदीयानामस्माकम् ॥ ९ ॥ १० ॥

दृष्ट्या तान् प्रति दृष्टिक्षेपेण ॥ ११ ॥

तां द्वारकां वर्णयति पञ्चभिः ॥ १२ ॥

सिद्धांतप्रदीपः ।

कुरून्मधून्वादेशान् अपससारजगामतवतावकानांनोऽस्माकम् ॥ ९ ॥
किंच तेवदनमपश्यमानाः कथंजीवेम ॥ १० । ११ ॥
पुरींवर्णयतिमध्वितिपंचभिः गुप्तांपालिताम् ॥ १२ ॥

भाषाटीका ।

हे अम्बुजाक्ष ? जब आप हम लोगों को छोडकर अपने सुहृदों के देखने की इच्छा से कुरुदेश वा मधुदेश में गमन करते हैं तब हम को एक एक क्षण कोटि कोटि वर्ष के समान हो जाता है । हे अच्युत ? जैसे सूर्य के विना अन्धकार में आंखों को पल पल कठिन हो जाता है ॥ ९ ॥

हे नाथ ? आप के चिरकाल विदेश रहने से शरणागत जनों का तृष्णा तथा सब ताप का शोषक सुंदर हास से शोभित एवं मनो हर आप के श्रीमुख के दर्शन बिना हम लोग कैसे जीवेंगे ॥ १० ॥

भक्त वत्सल भगवान् इन प्रजाओं के उदीरित वचनों को सुनते दृष्टि से सब पर अनुग्रह करते पुरी में प्रविष्ट हुए ॥ ११ ॥

जो पुरी आत्मतुल्य बलवाले मधु भोज दशार्ह अर्ह कुक्कुर अन्धक और वृष्णियों से नागों से भोगवती के समान रक्षित है ॥ १२ ॥

श्रीधरस्वामी ।

सर्वेषु ऋतुषु सर्वे विभवाः पुष्पादिसम्पदो येषां ते पुण्यवृक्षाः लताश्रमाः लतामण्डपाश्च येषु तैरुद्यानादिभिः वृता ये पद्माकराः सरांसि तैः श्रीः शोभा यस्यां ताम् । उद्यानं फलप्रधानम् । उपवनं पुष्पप्रधानम् । आरामः क्रीडार्थं वनम् ॥ १३ ॥

गोपुरं पुरद्वारम् । द्वारं गृहद्वारम् । कृतानि कौतुकेन उत्सवेन तोरणानि यस्यां ताम् । गरुडादिचिह्नांकिता ध्वजाः जयप्रदवस्त्रांकिताः पताकाः चित्राणां ध्वजपताकानाम् अग्रैः अन्तः प्रतिहतः आतपो यस्यां ताम् ॥ १४ ॥

सम्मार्जितानि निःसारितरजस्कानि महामार्गादीनि यस्याम् । महामार्गाः राजमार्गाः । रथ्या इतरमार्गाः आपणकाः पण्यवीथयः । चत्वराणि अङ्गनानि फलादिभिरुप्ताम् अवकीर्णाम् ॥ १५ ॥ १६ ॥

श्रीवीरराघवः ।

सर्वर्तुषु । युगपन्निर्वृत्तेषुयः सर्वोविभवः फलपुष्पादिसमृद्धिर्येषांतेपुण्यावृक्षाश्चमन्दारपारिजातादयः लतास्तदधस्तनाआश्रमाश्रयेषुतै रुद्यानोपवनारामैः वृतानांपद्माकराणांश्रीःशोभायस्यांतत्रोद्यानंराज्ञांक्रीडास्थानम्उपवनंवनसमीपस्थम्आरामःकृतकः ॥ १३ ॥

गोपुराकाराणांमार्गेषुकृतानिकौतुकानिमंगलार्थानितोरणानिजम्वाम्रपल्लवादिनिर्मितानियस्यांचित्राणांध्वजानांपताकानांचाग्रैरन्तः प्रतिहतोनिरस्तआतपोयस्याम् ॥ १४ ॥

संमार्जितामहामार्गादयोयस्यां महामार्गाराजवीथयः रथ्याउपवीथयः आपणकानिवणिजांक्रयविक्रयादिगृहाणिचत्वराणिगजाश्वादिशालाः गन्धोदकैः सिक्तांफलादिभिरुप्तांविकीर्णाम् ॥ १५ ॥

प्रतिद्वारंदध्यादिभिर्जलपूर्णकुम्भैः पूजाद्रव्यैः धूपैर्दीपैश्चालंकृताम्एवंभूतांपुरमितिपूर्वेणान्वयः ॥ १६ ॥

---

श्रीविजयध्वजः ।

वसंतादिसर्वर्तूनांसर्वविभवैः पूर्णपुष्पसंपत्तिभिः पुण्यैर्वृक्षै रश्वत्थादिभिर्न्यग्रोधरुहाभिः कल्पवल्लीभिर्वा । आश्रमैरुपवेश्यस्थानैः । उद्यानैः प्रमदाभिः सहराज्ञांक्रीडाभूमिभिः उपवनैर्नगरान्नातिदूरेआरोपितवृक्षसमुदायैरारामैः पुराद्बहिः रथ्योभयपार्श्वेरोपितवृक्षसमुदायै रेतैः सर्वर्तुसर्वविभवादिभिः धृतापद्माकराणांश्रीः शोभाययासातथोक्ताताम् ॥ ४९ ॥

गोपुरेषुपुरद्वारेषुअन्यद्वारेषुमार्गेषुकृतानिकौतुकतोरणानिउत्सवतोरणानियस्यांसातथाताम् अंतः प्रतिहतः निवारितः आतपः यस्यां सातथाताम् ॥ ५० ॥

संमार्जितानिविधूतोपस्कराणिमहामार्गरथ्यापणकचत्त्वराणि यस्यांसातथातां महामार्गोराजमार्गः रथ्यारथमार्गः । आपणकानि पण्यविक्रयस्थानानिचत्वरंचतुष्पथंगंधजलैश्चंदनादितोयैः सिक्तांप्रोक्षितांक्रमुकफलपुष्पाक्षतांकुरैरुप्ताम् ॥ ५१ ॥

गृहाणांद्वारिदध्यक्षतफलेक्षुभिः पूर्णकुंभैर्बलिभिः पूजासाधनैर्धूपदीपादिकैरलंकृताम्एवंविधांपुरींप्राविशदितिपूर्वेणान्वयः ॥ ५२ ॥

---

सुबोधिनी ।

एवमधिष्ठातृभिः सुरक्षितत्वमुक्त्वाबहिः शोभातिशयमाहसर्वर्त्विति सर्वेषुऋतुषुसर्वेभावाः पुष्पादिसंपत्तयोयेषाम्एतादृशाश्चधर्मजनकाश्चतेचतेवृक्षाः लताश्चतेषामाश्रयोयेषुतेउद्यानादयः उद्यानंपुष्पप्रधानवाटिकाउपवनंफलप्रधानम्आरामाः क्रीडास्थानानिउद्यानानिउपवनानिआरामाश्चतैःसर्वतः आवृतांपद्माकराणांश्रियोयस्यांसापद्माकरश्रीः ॥ १३ ॥

उपरिशोभातिशयमाहगोपुरेति पुरबहिर्द्वारंगोपुरम् अन्यानिद्वाराणिमार्गाः हट्टमध्योपरिभागाः तेषुकृतानिकौतुकतोरणानियस्यांविचित्राःध्वजाः पताकाश्चगरुडादिचिह्निताध्वजाः जययंत्रांकिताः पताकाः तेषामग्रैर्लेवायमानविचित्रपटैः अंतः प्रतिहतोआतपो यस्यां मध्यान्हेध्वजादेः छायाजनकत्वात् अग्रैरित्युक्तं यद्यप्यंतस्तापोनिवार्यतेतथापिशोभावहिरेवफलांशेनतूत्तरांगम् ॥ १४ ॥

अन्तःशोभामाहसंमार्जितेति महामार्गोराजमार्गः रथ्यान्याआपणाः पण्यवीथीचत्वरमङ्गणम्एतानिसंमार्जितानियस्यांगंधजलैः सिक्तां संनिधानात्पूर्वोक्तस्थानेषुअविशेषेणसर्वत्रवामंगलार्थफलानि पुष्पाणिअक्षताः यवांकुराश्चतैरुप्ताआम्रफलसहितशाखाभूमौनिखातातथा पुष्पगुच्छानितथाअक्षताः उर्ध्वंनिखाताः तथैवांकुराश्चततउप्तामित्युक्तम् ॥ १५ ॥

अंगालंकारमाह द्वारिद्वारीति चकारात् सभाहट्टनगरद्वारेष्वपिगृहग्रहणंमार्गस्थादृष्टतयाअलंकाराभावात्संकानिवृत्त्यर्थंदधिपात्रस्थाः अक्षताराशीभूताः फलानि च अतोनपुनरुक्तिः इक्षवश्चउभयतः स्थापिताः तैः पूर्णकुंभादिभिश्चअलंकृताम्द्वारिद्वारिअलंकृतामितिवोधितं उत्सवार्थमेवंकरणंसूर्यवत्सर्वत्रभगवत्तेजसोव्याप्तत्वाद्वाअंतस्थैरपिभगवानंतर्नीतइति ॥ १६ ॥

---

श्रीविश्वनाथचक्रवर्त्ती ।

सर्वेषु ऋतुषु सर्वविभवाः पुष्पादिसम्पदो येषां ते पुण्यरूपा वृक्षाश्च लताश्च आश्रमाश्च तैः । उद्यानं फलप्रधानम् उपवनं पुष्पप्रधानम् आरामः क्रीडार्थं वनं तैर्वृता ये पद्माकराः सरांसि तैः श्रीः शोभा यस्यां ताम् १३ ॥

गोपुरं पुरद्वारम् । द्वारं गृहद्वारम् । अन्तर्मध्ये मध्ये प्रतिहत आतपः सूर्यज्वाला यस्याम् ॥ १४ ॥

महामार्गा राजमार्गाः । रथ्या इतरमार्गाः । आपणकाः पण्यवीथयः । चत्वराणि अङ्गनानि । उप्ताम् अवकीर्णाम् ॥ १५ ॥ १६ ॥

---

निशम्य प्रेष्ठमायान्तं वसुदेवो महामनाः ।
अक्रूरश्चोग्रसेन श्च रामश्चाद्भुत विक्रमः ॥ १७ ॥
प्रद्युम्नश्चारुदेष्णश्च साम्बोजाम्बवतीसुतः ।
प्रहर्ष वेगोच्छ्वशितशयना-सन-भोजनाः १८ ॥
वारणेन्द्रं पुरस्कृत्य पाणिभिः स सुमङ्गलैः ।
शङ्खतूर्यनिनादेन ब्रह्मघोषेण चादृताः ॥ १९ ॥
प्रत्युज्जग्मुरथैर्हृष्टाः प्रणयागतसाध्वसाः ।
वारमुख्याश्चशतशो यानैस्तद्दर्शनोत्सुकाः ।
लसत्कुण्डलनिर्भात कपोलवदन श्रियः ॥ २० ॥

सिद्धान्तप्रदीपः ।

सर्वर्तुसर्वविभवाः पुण्यवृक्षलताश्रमाःयेषुतैः उद्यानोपवनारामैः वृताः येपद्माकरास्तैः श्रीः शोभायस्यास्ताम् तत्रोद्यानंसर्वसाधारणम् उपवनंपृथक्पृथक्संगृहीतम् आरामःक्रीडावनम् ॥ १३ ॥

गोपुराणिपुरद्वाराणि द्वाराणिवेश्मद्वाराणिमार्गाःप्रसिद्धाः तेषु यथायोग्यंकृतानिकौतुकेन हर्षेणपुष्पपल्लववस्त्रमौक्तिकादिमयानि तोरणानियस्यांताम् चित्राणांत्रिकोणाद्याकाराणांगरुडादिचिन्हांकितानां ध्वजानांदीर्घाकाराणांपताकानांचाग्रैरंतः प्रतिहतआतपो यस्यांताम् ॥ १४ ॥

सम्यङ्मार्जितानिमहामार्गादीनियस्यांताम् तत्रमहामार्गाः राजवीथयः रथ्याउपवीथयः आपणकाः पण्यवीथयः चत्वराण्यंगनानिर्गंधजलैः सिक्तांफलादिभिरुप्तांविकीर्णाम् ॥ १५ ॥

वलिभिः पूजार्थैर्वस्तुभिः ॥ १६ ॥

भाषाटीका ।

सब ऋतुओं के सब संपत्ति के सहित पवित्र वृक्ष लतायुक्त आश्रम तथा पुष्पवाटिका क्रीडावन तथा उपवन कमलों करके युक्त सरोवरों की शोभावाली जो पुरी है ॥ १३ ॥

गोपुर ( वड़े फाटक ) द्वार और मार्गों में जहां कौतुक से तोरण ( बंदनवार ) बांधे गये हैं । और चित्रविचित्र ध्वजाओं के अग्रों से जहां सूर्य का आतप निरस्त है ॥ १४ ॥

महामार्ग ( सड़क ) रथ्या ( गलियें ) आपणक ( बाजार ) और चत्वर सब जहां सम्मार्जित हैं । सुगंध जल जहां सेचन कियागया है फल पुष्प अक्षत अंकुर जहां आरोपण किये गये हैं ॥ १५ ॥

गृहों के द्वार द्वार पर दधि अक्षत फल इक्षु पूर्ण कुम्भ वलि और धूप दीप से जो पुरी अलंकृत है ( उसमें भगवान् प्रविष्ट हुए—यही सम्बन्ध यहांतक है ) ॥ १६ ॥

श्रीधरस्वामी

प्रेष्ठमायान्तं निशम्य श्रुत्वा वसुदेवादयः प्रत्युज्जग्मु रिति चतुर्थेनान्वयः ॥ १७ ॥

प्रहर्षवेगेन उच्छ्वशितानि उल्लंघितानि शयनादीनि यैस्ते । शश प्लुतगतावित्यस्मात् ॥ १८ ॥

वारणेन्द्रं मङ्गलार्थं पुरतः कृत्वा । ससुमङ्गलैः सुमंगलं पुष्पादि तद्युक्तपाणिभिः । ब्रह्मघोषो मन्त्रपाठः । प्रणयेन स्नेहेन आगतं साध्वसं संभ्रमो येषां ते ॥ १९ ॥

वारमुख्या नटादयश्च प्रत्युज्जग्मुः । लसत्कुंडलैर्निर्भातानि यानि कपोलानि तैर्वदनेषु श्रीः ( शोभा ) यासां तास्तथा वारमुख्या नर्त्तक्यो वेश्याः ॥ २० ॥

दीपनी ।

संभ्रमस्त्वरा इत्यर्थः ॥ १९ ॥ २० ॥

श्रीवीरराघवः ।

प्रेष्ठंनिरतिशयप्रियतमं भगवंतमायांतंनिशम्याकर्ण्यमहामनावसुदेवः अक्रूरादयश्च ॥ १७ ॥
प्रकृष्टोहर्षस्तस्यवेगेनऔत्कण्ठ्येनउच्छ्वसितानिव्युदस्तानित्यक्तानिइतियावत्‌शयनादीनियैस्तथाभूताःसंतः ॥ १८ ॥
वारणेन्द्रंगजेन्द्रंपुरस्कृत्यपुरोवस्थाप्यसुमंगलैः स्वस्तिवाचनसहितैः ब्राह्मणानांशंखानांतूर्याणांच निनादेनब्रह्मघोषेणचसहादृताः आदरयुक्ताः ॥ १९ ॥
हेब्रह्मन्‌ ? प्रणयेनहेतुनाआगतंसाध्वसंभयंयेषांतथाभूताः संतोरथैर्गमनसाधनैः प्रत्युज्जग्मुरभिमुखंययुः तथावारमुख्याः गणिकाश्रेष्ठाश्च लसद्भ्यांकुण्डलाभ्यांनिर्भातौकपोलौयेषुतेषांवदनानांश्रीःशोभायासांतास्तद्दिदृक्षयायानैर्गमनसाधनैःप्रत्युज्जग्मुः ॥ २० ॥

---

श्रीविजयध्वजः ।

वसुदेवाक्रूरादयः आयांतंकृष्णंनिशम्यश्रुत्वाकरधृतमौक्तिकपूर्णघटंवारणेंद्रंपुरस्कृत्यपुरस्कृतैर्ब्राह्मणैश्चसार्धंरथैः साधनैः प्रत्युज्जग्मुरित्यन्वयःकिंविशिष्टाः प्रहर्षवेगेनउच्छशितानिसहसापरित्यक्तानिशयनासनभोजनानियैस्तेतथा तूर्यकाहलंब्रह्मघोषःवेदघोषःमय्यासन्नेऽपिमांनाभिजग्मुरितिहार्दोभावःसाध्वसंप्रणयेनागतंसाध्वसंयेषांतेपौरावारमुख्याःनर्तकीपुर्गणकासुश्रेष्ठाःतस्यकृष्णस्यदर्शनोत्कंठावत्यः चलद्भिःकुंडलैर्निर्भातानिकपोलानियेषांतानितथोक्तानिचलत्कुंडल निर्भातकपोलानिचतानिवदनानिचलत्कुंडलनिर्भातकोल वदनानितेषांश्रीः यासांतास्तथोक्ताः ॥ ५३ ॥ ॥ ५४ ॥ ॥ ५५ ॥ ॥ ५६ ॥

---

सुवोधिनी ।

येषांदर्शनार्थंस्वयंगच्छेत्तेपित्रादयः स्वयमागताइतिसंबंधज्ञानापेक्षयाभगवद्ध्यानमेवतेषांवलिष्ठमिति प्रदर्शयन्नाहनिशम्येतिसार्धैस्त्रिभिःअतएवसर्वंधिशब्दमनुक्त्वाप्रेष्ठमित्युक्तंमनसोमहत्त्वंदेहादि विस्मरणपूर्वकभगवदूग्रहणात्‌उग्रसेनोराजाभक्तेमुख्यत्वान्नलौकिकमहत्त्वंक्रमनियामकंसर्वत्र चकारःसद्वर्गग्राहकः ननुरामस्यकथमुद्गमनंजामात्रादिवधंकृत्वाभगवतः समागतत्वात्‌इत्याशंक्यनायंरामः प्राकृतः भगवतइवअस्याप्यद्भुतएवपराक्रमः कौरवेषुस्नेहंख्यापयन्गदायुद्धादिकमपि शिक्षयन्तद्दिष्टमिववदन्दुर्योधनादीन्स्वयमेवमारितवानितियुद्धवोधनात्प्रतीकारादवगम्यतेलोकप्रतीतिस्त्वन्यथातद्युक्तमेवेत्याहअद्भुताविक्रमइति ॥ १७ ॥
जांववतीसुतइतिस्त्रीणामिवालंकरणमस्यप्रियमितियत्रताहशालंकारेणगच्छतितत्रव्यासस्तं तथाविशिनष्टि "पितासंबंधिनश्चैवपुत्राश्चपरिकीर्तिताः भगवदागमनंश्रुत्वायोहर्षोजातः तस्यवेगेनजातेनमहाप्रयत्नउच्छ्वसिताः श्वासवदत्यक्ताः गमनव्यतिरिक्ताअन्योत्सवस्थाः शयनासन[illegible]जनादयः तमः सत्त्वरजोरूपायैः ॥ १८ ॥
मङ्गलार्थंवारणेंद्रं हस्तिश्रेष्ठंपुरस्कृत्यसुमंगलसहितैर्ब्राह्मणैरितियथैतेषांतदेकमनस्त्वंतथाब्राह्मणानामपिविज्ञापितंभगवतासहसर्ववाद्यानांसमागमनेऽपितूरीशंखयोर्मंगलार्थं सन्मुखतयानयनं नतुस्वमहत्त्वख्यापकंमंगलघोषोवेदपाठः चकारात्‌मङ्गलाष्टकादिआदृताः पूर्वमेवसन्मुखतयागताः ॥ १९ ॥
रथयानैर्गमनेहेतुः प्रणयेनआगतसाध्वसाः प्रणयेनआगतंसाध्वसंभयादियेषांलौकिकपदार्थसहितभगवत्स्मरणेहर्षः पश्चात्केवलस्मरणेसाध्वसमितिविवेकः केवलवैषयिकसुखजनकाः अंतर्वहिर्भेदेनयेजीवाः तेतुभगवंतंप्रत्युज्जग्मुरित्याहवारमुख्याश्चेतिवराणांसमूहोवारंतदेवमुख्यंयासामितिवेश्याः चकारादन्याअपिप्रागुक्ताःतास्ववांतरभेदोऽस्तीतिख्यापनायशतशइत्युक्तंतासामपियानानियानानांप्रयोजनमाहतद्दर्शनोत्सुकाइति वाहुल्येननगरयानानिस्वस्थानास्थितावपिदर्शनं संभवतितथाप्युत्सुकतयागमनं पुरस्कारार्थंमंगलत्वख्यापनायतासामलंकारवर्णनंलसत्कुण्डलेतिलसत्कुण्डलैः नितरांभाताः कपोलयुक्तवदनानांश्रियोयासाम्‌ ॥ २० ॥

---

श्रीविश्वनाथचक्रवर्त्ती ।

प्रेष्ठमायान्तं निशम्येति वन्दिपर्यन्तमनुवर्त्तनीयम्‌ अतः प्रेष्ठपदं क्वचिद्‌योगार्थेन क्वचन रूढया च सङ्गमनीयम्‌ ॥ १७ ॥
प्रहर्षवेगेन उच्छशितानि उल्लङ्घितानि शयनादीनि यैः । शशप्लुतगतौ ॥ १८ ॥
साध्वसं सम्भ्रमः ॥ १९ ॥ २० ॥ २१ ॥

---

सिद्धांतप्रदीपः ।

वंधूनांपौराणां च भगवतिस्नेहाधिक्यमाह निशम्येतिसार्धैः पंचभिः ॥ १७ ॥
प्रहर्षवेगेनोच्छसितान्युल्लंघितानिशयनादीनियैस्तेशशप्लुतगतौधातुः ॥ १८ ॥
वारणेंद्रंगजराजम्‌ ॥ १९ ॥

नटनर्तकगन्धर्वाः सूतमागधवन्दिनः ।
गायन्ति चोत्तमश्लोकचरितान्यद्भुतानि च ॥ २१ ॥
भगवांस्तत्र वन्धूनां पौराणामनुवर्तिनाम् ।
यथाविध्युपसङ्गम्य सर्वेषां मानमादधे ॥ २२ ॥
प्रह्वा-भिवादना-श्लेष-कर-स्पर्श-स्मिते-क्षणैः ।
आश्वास्यचाश्वपाकेभ्यो वरैश्चाभिमतैर्विभुः ॥ २३ ॥
स्वयंचगुरुभिर्विप्रैः सदारैः स्थविरैरपि ।
आशीर्भिर्युज्यमानोन्यैर्वन्दिभिश्चाविशत्पुरम् ॥ २४ ॥

सिद्धांतप्रदीपः ।

प्रणयागतसाध्वसाः स्नेहागतसंभ्रमाः लसद्भिः शोभितैः कुंडलैर्निर्भातानिकपोलानितैर्वदनेषु श्रीः शोभायासांताः ॥ २० ॥ २१ ॥

भाषाटीका ।

प्रिय श्रीकृष्ण को आते सुनकर. महा मना वसुदेव. अक्रूर. उग्रसेन. अद्भुत विक्रमराम. प्रद्युम्न. चारुदेष्ण. जांम्ववती सुत सांवये सव आनंद के वेग से भोजन शयन आसन छोडकर मंगलार्थ गजेन्द्र को आगे ले मंगल पुष्पादि पाणि ब्राह्मणों के साथ. शंख तुरई के शब्द और वेद घोष से आदर सहित आनंदित प्रणय से जिनको साध्वस आगया है रथों में बैठकर प्रत्युद्गत हुए ( भगवान के लेने को प्रत्युद्गमन किया ॥ १७ ॥ १८ ॥ १९ ॥

कृष्ण दर्शन के उत्सुक होकर यानों में बैठकर. कुण्डलों की दमक से चमकते कपोलों से मुख की शोभा बढाती सैकडों वारमुख्या ( वेश्या ) ओं ने भी प्रत्युद्गमन किया ॥ २० ॥

श्रीधरस्वामी ।

नटा नवरसाभिनयनचतुराः तालाद्यनुसारेण नृत्यन्तो नर्त्तकाः । गन्धर्वाः गायकाः । "सूताः पौराणिकाः प्रोक्ता मागधा वंशशंसकाः । वन्दिनश्चामलप्रज्ञाः प्रस्तावसदृशोक्तयः अद्भुतानि चेति चकारस्य वन्दिनश्चेत्यन्वयः । ते सर्वे गायन्ति चेति ॥ २१ ॥

यथाविधि यैः सह यथोचितं तैस्तथा समागमं कृत्वा सर्वेषां मानं कृतवानित्यर्थः ॥ २२ ॥

तदाह प्रह्वेति । प्रह्वत्वं शिरसा नतिः । अभिवादनं वाचा नतिः । आश्वास्य अभयं दत्त्वा । श्वपाकादीनभिव्याप्य वरैरभीष्टदानैश्च मानं कृतवान् ॥ २३ ॥

अन्यैश्च वन्दिभिश्च ॥ २४ ॥

श्रीवीरराघवः ।

नटादयोऽद्भुतानिउत्तमश्लोकस्यभगवतश्चरितानिविरागुः तत्रनटाअभिनेतारःनर्तकाः स्त्रीणांनृत्यशिक्षकाः गंधर्वागायकाः सूताः पौराणिकाः मागधावंशावलिपाठकाः वंदिनः मंगलवादिनः स्तोत्रपाठकाश्च ॥ २१ ॥

तत्रभगवान्यथाविधिनमस्कारालिंगनकरस्पर्शस्मितावलोकनादिभिर्यथायोग्यंवसुदेवादिभिरुपसंगम्यसर्वेषां पौराणामनुवर्तिनांभृत्यानांचमानमादधेसन्मानंचकार विभुर्भगवान्श्वपाकपर्यन्तेभ्यः चतुर्थ्यन्तमिदम्आश्वासोपच्छंद्याभिमतैर्वरैर्मानमादधेइत्यन्वयः ॥ २२ ॥ २३ ॥

स्वयंचसदारैर्गुरुभिः स्थविरैर्वृद्धैर्विप्रैरन्यैर्वंदिभिश्चकृताभिराशीर्भिश्चयुज्यमानःपुरमाविशत् ॥ २४ ॥

श्रीविजयध्वजः ।

अभिनयेनशृंगाराद्यनुकरणकर्तानटः गीतवाद्यानुसारेणनृत्यकर्तानर्तकः षड्जादिकुशलाः गंधर्वाः पुराणाद्यर्थानुसारेणस्तावकाः सूताः पराक्रमांकितस्तुतिकर्तारोमागधाः मंगलपाठकावंदिनः ॥ ५७ ॥

तत्रतेषुवसुदेवादिष्वागतेषुसत्सु श्रीकृष्णोभगवान्सर्वेषांबंध्वादीनांयथाविध्युपसंगम्य मानमादधेचकारेत्यन्वयः ॥ ५८ ॥

कैः प्रह्वादिभिः ॥ ५९ ॥ ॥ ६० ॥

राजमार्गं गते कृष्णे द्वारकायाः कुलस्त्रियः ।
हर्म्याण्यारुरुहुर्विप्रास्तदीक्षणमहोत्सवाः ॥ २५ ॥

सुबोधिनी ।

नटाः शास्त्रानुसारनर्त्तकाः गंधर्वागायकाः सूताः पौराणिकाः मागधावंशशंसकाः परिहारावंदिनोवैतालिकाः प्रस्तावसदृशोक्तयः सर्वेऽपिगायंतः चकारात्स्मरंतश्चअद्भुतानांकथनंस्पष्टतयालोकेवक्तुमयुक्तंतदपिगायंतइतिचकारार्थः ॥ २१ ॥

लौकिकप्रभुवत्कृष्णोगतानांनपाक्षिकफलत्वमपितुसर्वफलमित्याहभगवानितिसर्वेहिसमुदायेनत्रिविधाबांधवाः पुरवासिनः सेवकाश्चेतिपुरवासित्वमविशिष्टमितिमध्येवचनंतेषांसन्मुखतया ॥ २२ ॥

यथागमनमुचितंतथाकृतवान् तदाह प्रह्वेतिप्रह्वोनम्रीभावः पित्रादिषुअभिवादनंब्राह्मणेषुआश्लेषोमित्रेषुकरस्पर्शोमुख्यसेवकेषुस्मितेक्षणानिसर्वत्रआश्वासनंस्वविरहखेदनिराकरणेनश्वपाकाश्चांडालावराःसाधनेनाप्राप्याविषयाःचकारादन्येविषयाःसर्वदानेहेतुःविभुरिति ॥२३॥

ननुजीवेभ्यःकथंभगवान्विषयान्प्रयच्छति तत्राहस्वयमिति स्वयंचतैर्मानितःस्वयंसंमाननार्थमेवतेभ्यःप्रयच्छतीतिभावः गुरवोविप्राअन्येचसदारैरितिसर्वत्रविशेषणंस्थविरैरन्यैरपित्रद्धैः आशीर्भिर्युज्यमानः कर्तृकरणयोस्तृतीयेसन्तोषादभिनंदनस्वरूपाआशीरन्यैरपिवन्धुभिः कृतेत्याह अथवा नूतनपाशवद्धैः पुत्रश्वशुरादिभिः पूज्यमानःपुरमाविशत् अत्रक्रियैवसर्वोत्कृष्टेतिनव्यावर्त्तकत्वेन निरूप्यते केवलं भक्तिप्रधानत्वाच्चस्तोत्रतत्त्वादिनिरूपणम् ॥ २४ ॥

---

श्रीविश्वनाथचक्रवर्त्ती

नटा रसाभिनयचतुराः । नर्त्तकाः संगीतोक्तविविधतालोद्घाटनेन नृत्यन्तः । गन्धर्वाः गायकाः । सूताः पौराणिकाः प्रोक्ता मागधा वंशशंसकाः । वन्दिनस्त्वमलप्रज्ञाः प्रस्तावसदृशोक्तयः ॥ २१ ॥

यथाविधि यथोचितम् ॥ २२ ॥

तदेवाह । प्रह्वत्वं शिरसा नतिः पित्रादिषु गर्गादिषु च । अभिवादनं वाचा नतिः यदुवंश्येषु स्थविरेषु । आश्वपाकेभ्यः स्वपाकपर्यंतानपि जनान् आश्वास्य अभयं दत्वा । वरैरभीष्टदानैश्च ॥ २३ ॥

गुरुभिः पितामहादिभिः ॥ २४ ॥

---

सिद्धांतप्रदीपः ।

तत्रभगवच्चेष्टितमाह भगवानितित्रिभिः अत्रयथाविधीतिपदंसर्वत्रयोजनीयम् भगवान्प्रभुः तत्रतस्मिन्समागमेबंधूनांवसुदेवादीनाम् आश्वपाकेभ्यः सर्वेषांपौराणां च यथाविधिसंगम्ययेनयथोचितंतेन तथासमागमंकृत्वा यथाविधिआश्वास्ययथाविधिप्रह्वादिभिरभिमतैर्वरैश्चमानमादधेसन्मानं चकारद्वतिद्वयोरन्वयः ॥ २२ ॥

प्रह्वंसिरसाऽभिवादनंवाचाचनमनम् आश्लेषः आलिंगनम् ॥ २३ ॥

अन्यैरनुक्तैश्च ॥ २४ ॥

---

भाषाटीका ।

नट नर्तक गंधर्व पौराणिक वंश कहनेवाले बंदीजन यह सबमिल के उत्तम श्लोक के अद्भुत चरितों को गातेभये ॥ २१ ॥

भगवान ने वहां सब से यथा विधि मिलकर बंधु पुरवासी और अनुवर्तिओं का सब का सन्मान किया ॥ २२ ॥

किसी को प्रह्व ( शिर से प्रणाम ) कर किसी को अभि वादित ( वाणी से प्रणाम ) कर किसी को आलिंगन कर किसी से कर स्पर्श कर किसी की ओर हंसकर । आचांडाल सब को अभिमत वर देकर सन्मान किया ॥ २३ ॥

स्वयं गुरुजन सस्त्रीक ब्राह्मण और वृद्धों की आशीर्वादों से अभि युज्य मान होते वंदीजनों की आशिष सुनते पुर में प्रविष्ट हुए ॥ २४ ॥

---

श्रीधरस्वामी ।

तदीक्षणमेवमहानुत्सवो यासां ताः ॥ २५ ॥

नित्यं निरीक्षमाणानां यदपि द्वारकौकसाम् ।
नैव तृप्यन्ति हि दृशः श्रियो धामाङ्गमच्युतम् ॥ २६ ॥
श्रियो निवासो यस्योरः पानपात्रं मुखं दृशाम् ।
बाहवो लोकपालानां सारङ्गाणां पदाम्बुजम् ॥ २७ ॥

श्रीधरस्वामी ।

यद् यस्मान्नित्यं सदा अच्युतं निरीक्षमाणानामपि दृशो नैव तृप्यन्ति अत आरुरुहुः । कथंभूतं श्रियः शोभाया धाम स्थानम् अङ्गं यस्य तम् ॥ २६ ॥

एतदेवाभिनयेनाह । श्रियो लक्ष्म्याः यस्य उरः वक्षो निवासः । यस्य मुखं सर्व प्राणिनां दृशां सौन्दर्यामृतपानाय पात्रम् । यस्य बाहवो लोकपालानां निवासः । सारं गायन्तीति सारङ्गा भक्तास्तेषां यस्य पदाम्बुजं निवासः । तं निरीक्षमाणानां दृश इति पूर्व्वेणान्वयः ॥ २७ ॥

---

दीपनी ।

लसत्कुंडलैर्दीप्तकुंडलैरित्यर्थः ॥ २१ ॥

शृङ्गारवीरवीभत्सरौद्रहास्यभयानकाः । करुणाद्भुतशान्ताश्च नव नाट्यरसाः स्मृताः इति रत्नकोषः ॥ २२—३२ ॥

---

श्रीवीरराघवः ।

द्वारकायाराजमार्गेकृष्णेगतेसतितत्रतत्रस्त्रियः तस्यकृष्णस्येक्षणेमहानुत्सवोहर्षोयासांताहेविप्र ? हर्म्याणिसौधान्यारुरुहुः ॥ २५ ॥

नित्यंनिरीक्षमाणानांद्वारकौकसांद्वारका ओकः स्थानंयासांतासांस्त्रीणां दृशोनवितृप्यंतितस्मात्तदीक्षणमहोत्सवाहर्म्याणिरुरुहुरित्यर्थः हिशब्देनातृप्तेः प्रसिद्धिर्द्योत्यते ॥ २६ ॥

उचिताचैषाव्युत्पत्तिरित्यभिप्रायेणाहश्रियइतियस्येत्यस्यउरोमुखवाहुपदाम्बुजैः प्रत्येकमन्वयः यस्योरः श्रियोनिवासः स्थानम् उरोलावण्यानुभवायतदेववासमाश्रितवतीश्रीरित्यभिप्रायः यस्यमुखंदृशांपश्यज्जनचक्षुषांपानपात्रंतल्लावण्यरसपानपात्रं यस्यचहिवाहवो लोकपालानांपानपात्रंतल्लावण्यरसपानपात्रं यस्यचपदाम्बुजंसारंगाणांसारंगच्छतांसारग्राहिणांमुनीनांतल्लावण्ययपानपात्रंसारंगायन्तीति सारंगाः सारतमार्थवक्तारइतिचतमच्युतंनित्यंनिरीक्षमाणानामपिदृशोनवितृप्यंतीतियुक्तमेवेत्यर्थः ॥ २७ ॥

---

श्रीविजयध्वजः ।

हर्म्याणिसौधानितदीक्षणंतस्य श्रीकृष्णस्यदर्शनमेवमहानुत्सवोयासांताः तथोक्ताः ॥ ६१ ॥

दृष्टचरस्यादृष्टपूर्वदर्शनवद्दर्शनेकिमित्युत्कंठातिशयइतितत्राह नित्यमिति श्रियोधामस्थानमंगंवपुर्यस्यसतथातम् अच्युतंनित्यंनिरीक्षमाणानांद्वारकानिवासिनामपिदृशोनाधितृत्यंतिपुनःपुनर्दृष्टाप्यलंदर्शनेनेतिभावंनप्राप्नुवंतियस्मात्तस्माद्युक्तउत्कंठातिशयोहीत्यन्वयः ॥६२॥

नैतदाश्चर्यमित्याह श्रियइति यस्यहरेः उरः वक्षस्थलंश्रियोलक्ष्म्यानिवासःस्थानं यस्यमुखंद्रष्टृणांलावण्यंपातुंपानपात्रं यस्यवाहवोलोकपालानांबलस्थानं यस्यपदांबुजंसारंगाणांसारग्राहिणांब्रह्मादीनांपरायणम् ॥ ६३ ॥

---

क्रमसंदर्भः ।

श्रियः प्रेयस्याः । याः सर्वेषामेव तत्प्रियवर्गाणां दृशश्चक्षूंषि तासाम् । लोकपालानां पाल्यानाम् । सारंगाणां सर्वेषामेव भक्तानाम् निवास आश्रयः यथास्वं भावोद्दीपनत्वात् ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ३१ ॥

---

सुबोधिनी ।

मर्यादास्थितस्त्रीणांकृत्यमाहराजमार्गमिति स्त्रियोऽपिमार्गस्थाःभगवानपिमार्गस्थइतिदर्शनमुचितमितिभावः विप्र! इतिसम्बोधनसभगवताद्वारकायामपिसर्वेमार्गारक्षिताइतिज्ञापयितुंतदीक्षणमेवमहानुत्सवोयासाम् अनेनसर्वाभरणभूषितत्वम् अन्यदर्शनकृतदोषा आवश्य निवारितः ॥ २५ ॥

## सुबोधिनी ।

ननुदर्शनस्यकथमुत्सवत्वंनित्यत्वादित्याशंक्याहनित्यमिति नित्योत्सवत्वाद्भगवतः नभगवद्दर्शनस्यधारावाहिकज्ञानत्वम् अलौकिकार्थबोधात् पूर्वपूर्वदर्शनस्यतुब्युत्पादकत्वमेव नविषयत्वंभगवतोविषयत्वाभावात् रुचिस्तुविषयसामर्थ्यादौषधवत् अतएवतदापितृप्ति र्भगवद्दर्शनेदोषात्परमग्रहणं यथामहादोषेऔषधमपिग्रहीतुंनशक्यते तत्रदृष्टेतेजस्त्वात् विषयदोषेणैवतुष्टतापरमार्थनिर्णयेधर्मआगंतुकतृधर्मसम्बन्धेऽपि सचविषयदोषोद्वारकावासिनांनास्तीत्याह द्वारकौकसामिति अनेनैवसर्वेदोषानिवारिताः "परांचिखानिव्यतृणादि" त्यौत्पत्तिकदोषोभगवद्दर्शनेन निवार्यते अनन्यशक्यत्वात् अन्येतुद्वारकादिभिरितिनिर्णयः ननुभगवतोरसात्मकत्वात् अमृतौषधवत् कथंनोभयसाधकत्वंतत्राह नवितृप्यंतीतिविशेषेणनतृप्यन्तिहियुक्तोयमर्थः यदाहिदृश्यतेभगवान्तदातृप्ताभवंति द्वितीयक्षणेपूर्वं नष्टदर्शनेनरुचेरुत्पादितत्वात् यद्यपिविषयः रुचिमुत्पादयति तथापिज्ञानद्वारेतिज्ञानन्तुविषयद्वारातृप्तिजनयतीतितृप्तौविषयप्राधान्यं अतोविषयात् ज्ञानंप्रवलमिति नविशेषेणतृप्यन्तीत्यर्थः दृशइतिस्त्रीवहुत्वानिर्देशादपिएकस्मादुभगवद्रूपादवितृप्तिः सूचिता किंच यद्यप्येकंरूपमनुभवयोग्यंतदपिश्रियोधामांगंलक्ष्म्याः स्थानरूपांगम् अतस्तयासहितः मान्यस्त्रीणांतृप्तिजनकोभवति किंच यस्मिन् प्रविष्टेहितृप्यन्तिस्त्रियः तदत्रप्रकृतेनास्तीत्याह अच्युतंयस्यअतोविषयविचारेणापिदृष्टीनांनतृष्तिसंभावना ॥ २६ ॥

नन्वंगांतरदर्शनेनतृप्यन्ताम्उरःस्थानमात्रंहिलक्ष्म्याः तत्राह श्रियोनिवासइति कोऽपिभागस्तादृशोभगवतिनास्तियोलक्ष्म्यादिभिर्नपरिगृहीतः तत्रोपरिभागोलक्ष्म्यैवगृहीतःस्थानदर्शनाभ्यांतदाह श्रियोनिवासः यस्यउरः वक्षस्थलंतस्याएवदृशां भगवन्मुखंपानपात्रंलक्ष्म्याः स्वरूपेनिविष्टत्वात् भिन्नतयास्थित्यभावात् भोक्तृत्वाभावात् लक्ष्मनियनाभ्यां निर्गतादृष्टयएवभोक्तृतयाजाताः तासांकरणापेक्षायांयत्रैव लावण्यामृतं तिष्ठतितदेवकरणं तन्नमुखस्यपानपात्रत्वं श्रुतिसिद्धम् "अर्वाग्बिलश्चमसऊर्ध्ववुध्न"मितिश्रुतेः पात्रपदप्रयोगाद्विहितत्वंवहूनामेकपात्रत्वात्तासामेवतृप्तिर्दुर्लभाकुतोऽन्यासामितिश्रुतेर्भावः तर्हिअंगांतरेदृष्टिर्निवेश्यतामित्याशंक्याह संतिवाहवः आलिंगनयोग्याः परमन्यैः पुरुषैराक्रान्ताः नचतेदूरीकर्तुंशक्यावहुत्वात् पुरुषत्वाच्चएकास्त्रीयत्रनिवारयितुमशक्यास्थानद्वयेतिष्ठति तत्रलोकपालाः कथं शक्याः आवश्यकाश्चते लोकपालत्वात् तर्हिततोप्यर्वागवयवेषुदृष्टिः पातनीयेत्याशंक्याहसारंगाणामितिमध्येयेअवयवास्तेवस्त्रादिभिरेव वेष्टिताः दर्शनयोग्याएवनभवंति अतःपरमवशिष्यतेचरणद्वयंतत्राप्येकश्चरणउपरिगतोब्रह्मादिभिरेवगृहीतः लोकस्थित्यर्थंतत्रैवास्थते गंगयाचगृहीतः ब्रह्मांडविलेतिष्ठतिअन्यथाजलेनब्रह्मांडपूरणेनसर्वनाशःस्यात् अथावशिष्यतएकश्चरणः सचवहुभिराक्रान्तः सारंगा सदाचाराः कर्मनिष्ठाः पुनश्चसरतीतिसरः तस्यसमूहः साररसमूह इतियावत् अक्षरव्यत्यासेनवातेकर्मफलार्थिनः विषयिणोयोगिनोवापुनः सारंगच्छंतिजानंतीतिसारंगाः ज्ञानिनः पुनः सारंगायंतीतिसारंगाः भक्ताः पुनः अरसहितंसुदर्शनसहितंसारंभगवंतंसुदर्शनंवा कालेनभीताः संतःगच्छन्तिगायंतिवातेसारंगाः सात्वताः सर्वेषामेकशेषः समानरूपत्वात्सर्वएवरसार्थिनः तस्माद्दृष्टीनांस्वतंत्रस्थानाभावात्तृप्तिर्युक्तेत्यर्थः ॥ २७ ॥

---

## श्रीविश्वनाथचक्रवर्त्ती ।

हे विप्राः ? ॥ २५ ॥

यद्यस्मान्नित्यं निरीक्षमाणानामपि दृशो नैव तृप्यन्ति अतः आरुरुहुः । अच्युतं कीदृशं श्रियः शोभाया धाम स्थानम् अङ्गं यस्य तम् ॥ २६ ॥

यस्य मुखं पानपात्रं सौन्दर्यामृतपूर्णं दृशां निवासः । इंद्रादीनां लोकपालानां यस्य वाहवो निवासः तद्बलमाश्रित्यैव असुरेभ्यो निर्भयास्ते सुखं वसन्तीति भावः । सारं तद्यशो गायंतीति सारङ्गा भक्तास्तेषां श्लेषेण भ्रमराणां पदाम्बुजं निवासः । तं निरीक्षमाणानां दृश इति पूर्वेणान्वयः ॥ २७ ॥

---

## सिद्धांतप्रदीपः ।

तस्यकृष्णस्येक्षणेमहानुत्सवोविनोदोयासांताः ॥ २५ ॥

कुलस्त्रियोऽपिहर्म्याणयारुरुहुरित्युक्तंतत्रहेतुमाह नित्यमिति द्वाभ्याम् श्रियोरमायाः धामवासस्थानमंगंयस्यतम् ॥ २६ ॥

यस्योरः श्रियः वाहवोलोकपालानांसारंगच्छतांसिद्धांतगानांपदांबुजंवासोमुखं च सर्वदृशांपानपात्रंतमच्युतमितिपूर्वेणान्वयः ॥ २७ ॥

---

## भाषाटीका ।

जिस समय श्री कृष्ण राज मार्ग में चलने लगे तब द्वारका की कुल स्त्री उन के मुख निरीक्षण को महोत्सव मान महलों पर चढीं ॥ २५ ॥

क्यों चढीं तहां उत्तर यद्यपि द्वारका वासी नित्य दर्शन करते हैं तथापि श्री शोभा का निवास जिसमें वह अच्युत के अंग को देखने से उनके नेत्र तृप्त नहीं होते हैं ॥ २६ ॥

क्योंकि जिनके वक्षस्थल में लक्ष्मी का निवास है जिनका मुख देखने वालों का लावण्य पान का पात्र है जिनके भुजा लोकपालों के आश्रय हैं जिनके चरण कमल भक्त भ्रमरों के आश्रय हैं तिन श्रीकृष्ण के दर्शन से कैसे तृप्ति होगी ॥ २७ ॥

---

सितातपत्रव्यजनैरुपस्कृतः प्रसूनवर्षैरभिवर्षितः पथि ।
पिशङ्गवासा वनमालया बभौ घनो यथार्कोडुपचापवैद्युतैः ॥ २८ ॥
प्रविष्टस्तु गृहं पित्रोः परिष्वक्तः स्वमातृभिः ।
ववन्दे शिरसा सप्त देवकीप्रमुखास्तदा ॥ २९ ॥
ताः पुत्रमङ्कमारोप्य स्नेहस्नुतपयोधराः ।
हर्षविह्वलितात्मानः सिषिचुर्नेत्रजैर्जलैः ॥ ३० ॥
अथाविशत् स्वभवनं सर्वकाममनुत्तमम् ।
प्रासादा यत्र पत्नीनां सहस्राणि च षोडश ॥ ३१ ॥

श्रीधरस्वामी ।

सितैरातपत्रव्यजनैः उपस्कृतो मण्डितः । अर्कश्च उडुपो नक्षत्रसहितश्चन्द्रमाश्च चापमिन्द्रधनुश्च वैद्युतं विद्युत्तेजश्च तैः । अर्कश्छत्रस्योपमानम् । नक्षत्राणि पुष्पवृष्टेः । चन्द्रः परिभ्रमकृतमंडलाकारयोश्चामरव्यजनयोः । चापं वनमालायाः । विद्युत्तेजः पिशङ्गवाससोः अद्भुतोपमेयम्—यदि घनस्योपरि सूर्यबिम्बम् उभयतश्चन्द्रौ सर्वतो नक्षत्राणि मध्ये च मिलितं चापद्वयं स्थिरञ्च विद्युत्तेजः भवेत् तर्हि स घनो यथा भाति तथा हरिर्बभाबित्यर्थः ॥ २८ ॥

देवकीप्रमुखाः सप्त ववन्दे इति मातृसोदर्यादादरविशेषज्ञापनार्थमुक्तम् । अष्टादशापि पितुर्वसुदेवस्य भार्या मातृतुल्यत्वान्नमस्कृता एव ॥ २९ ॥ ३० ॥

सहस्राणि च षोडशेति चकारादष्टोत्तरशताधिकानीति ज्ञेयम् ॥ ३१ ॥

---

श्रीवीरराघवः ।

सितेति पथिसितातपत्रं चव्यजनेचतैरुपस्कृतः सितातपत्रेणावृतः व्यजनाभ्यांचवीज्यमानइत्यर्थः पिशंगेवाससीयस्यसभगवान् वनमालयाबभौ कथंयथार्कादिभिः युगपत्समुदितैः घनोनीलांबुदस्तद्वत् अभूतोपमैषानह्यर्कोडुपयोःसहावस्थानमस्ति तत्रार्कादिस्थानीयामुकुटवनमालावस्त्रभूषणादयः विद्युदेववैद्युतमुडुपश्चन्द्रः यद्वाउडुपग्रहणंगुरुशुक्रयोरन्येषांनक्षत्राणामप्युपलक्षणंतत्रोडुपस्थानीयं सितातपत्रं गुरुशुक्रस्थानीयेव्यजनेनक्षत्रस्थानीयानिप्रसूनानिइन्द्रमणिस्थानीयावनमालाविद्युत्स्थानीयं पिशंगवस्त्रम्अर्कस्थानीयंतुमुकुटमितिसितातपत्राद्युपस्कृतत्वादिविशेषणसामर्थ्यात् ॥ २८ ॥

ततस्तुपित्रोर्देवकीवसुदेवयोर्गृहंप्रविष्टो भगवान्मातृभिर्देवकीरोहिण्यादिभिः परिष्वक्तआलिंगितः देवकीप्रमुखामातॄर्मूर्ध्नाशिरसामनसाववन्दे ॥ २९ ॥

तादेवक्यादयः पुत्रंकृष्णमंकमारोप्यस्नेहेनस्नुतौपयोधरौस्तनौयासांहर्षेणविह्वलितआत्मामनो यासांतथाभूतानेत्रजलैरानंदवाष्पैः सिषिचुः ॥ ३० ॥

स्वभवनंस्वगृहंप्राविशत्कथंभूतंसर्वेकामाः काम्यमानाभोग्यभोगोपकरणस्थानादयोयस्मिन्नास्त्युत्तमंयस्मात् यत्रपत्नीनांषोडशसहस्राणिप्रासादास्तथाभूतम् ॥ ३१ ॥

---

श्रीविजयध्वजः ।

सितातपत्रव्यजनादिभिरलंकृतोभगवांस्तथाबभौयथार्कादिभिरन्वितोमेघोभातीत्यन्वयः अत्रायंविभागः मध्याह्नार्कस्थानीयंश्वेतच्छत्रंउडुपस्थानीयंव्यजनम् इंद्रचापस्थानीयामाला पीतवस्त्रंविद्युत्स्थानीयं मेघस्थानीयोभगवान् अर्कस्थानीयंकिरीटम् उडुपस्थानीयंश्वेतच्छत्रं मंदारादिप्रसूनमालाइंद्रचापस्थानीयं विद्युत्स्थानीयंव्यजनमितिवा ॥ ६४ ॥

पित्रोः मातापित्रोः स्वमातृभिः देवक्यादिभिः परिष्वक्तः आश्लिष्टः ॥ ६५ ॥

तामातरः पुन्नाम्नोनरकात्त्रायतइतिपुत्रः तंकृष्णंसिषुचुः अभ्यषिचन् हर्षेणविह्वलीकृतः विवशीकृतः आत्मांतःकरणंयासां तास्तथोक्ताः ॥ ६६ ॥

यत्रयस्मिन्भवनेवज्रवैदूर्यमणिमंडिताः षोडशसहस्राणिपुनरष्टोत्तरशतंपत्नीनांप्रासादाः संतितदनुत्तमंसर्वकामंस्वभवनमाविशदित्यन्वयः काम्यंतइतिकामाइच्छाविषयास्तेसर्वेयत्रसंतितत्तथोक्तम् ॥ ६७ ॥

## सुबोधिनी ।

एवं समान्यतः पुरींतत्स्थान्भक्तांश्चनिरूप्यभगवान् कथंविशेषतयानवर्णितइत्याकांक्षायाम् उपमानाभावादित्युक्तेभक्तानांबुद्ध्याअभूतोपमायावर्णनायइति सिद्धांतंवक्तुमाह सितातपत्रेति सितातपत्रंचव्यजनेचसितातपत्रव्यजनानिप्रसूनवर्षैः सर्वतः प्रवृत्तैः प्रसूनभेदात्पुरुषभेदाद्वावहुवचनंपीतांवरंनित्यमपिरूपवद्वर्णनीयानांहेतुत्वेनानिरूप्यतेवनमालयाउपलक्षितः सहितोवा एवं सर्वसामग्र्यांसत्यांवनमालयैववभाविवितिवायथामध्येनीलोमेघोभवतिउपरिसूर्यः परितोद्वौचंद्रौलोलौस्थिराविद्युत्कटितटेइंद्रधनुर्द्वयमुभयतोमिलितं तदाभगवानिवभवेदित्यद्भुतोपमा ॥ २८ ॥

एवंवर्णनांसमाप्यसंवंधिनांस्नेहातिशयमाहप्रविष्टइतितुशब्दः पूर्ववर्णनांव्यावर्त्तयतिपित्रोरितिमातृत्वेनसर्वामातरएवअपृथग्धर्मशीलत्वात्सर्वामांपितुश्चैकंगृहंभेदेकारणाभावाच्चप्रवेशमात्रेणैवभगवत्क्रियातः पूर्वंताएवपरिष्वंगादिकंकृतवत्यइत्याहपरिष्वक्तइति "येयथामांप्रपद्यंत" इतिवाक्यात्मातृः प्रतिवालकएवप्रतिभातिभगवद्धर्मापेक्षयालौकिकधर्मस्यवहिरंगत्वात्नमस्कारापेक्षयापरिष्वंगः प्रथमः स्वमातृभिरिति पितुरपिमातरः संतिअतः स्वमातृभिरित्युक्तंसप्तदेवकीभागिन्यः एकादशापराः एकजातासुकन्यासुएकस्मैवरायवहूनांदानम् अपृथग्धर्मशीलत्वेनैववरस्यकन्यानांचतदैवपत्नीत्वम्अन्यथानार्थत्वं यास्तेशीलमनुव्रताइति वाक्यात्अयमेवहेतुः पतिवहुत्वेऽपिअतएवदेवकीप्रमुखाः सप्त एकस्वभावान्मातरइत्युच्यंते एकदासर्वाववंदेशिरसेतिभगवद्धर्मत्वं शब्देनसर्वासांसकृत् वंदनंसंभवतिनतुकायिकम् अतः शिरसातदेति ॥ २९ ॥

भगवद्धर्मप्राकट्यायनमस्कारानंतरंभगवतिवालत्वमेवप्रकटमितिवालकपुत्रेयत्कर्त्तव्यंतच्चक्रुरित्याह ताइतिसर्वाएवपुत्रमंकमारोप्यवालकस्नेहस्नुतपयोधराजाताः नतुतस्यपयसः कश्चनविनियोगोजातः भगवतोमहत्त्वं प्रौढत्वंजानंत्योऽपिहर्षेणविह्वलितात्मानः पूर्वसंस्कारसद्दृशत्वात्नेत्रजैर्जलैः शिखाः सिषिचुः ॥ ३० ॥

भार्याणामवस्थामाह अथेतिएकस्मिन्नेवभवने बिश्वकर्मणाषोडशसहस्रप्रासादाः कृताः स्वचातुरीख्यापनार्थम्अतएवअनुत्तमंनविद्यतेउत्तमंयस्मात्सर्वेकामायास्मिन्सर्वकामनापूरकपदार्थसद्भावोयास्मिन्वा ॥ ३१ ॥

---

## श्रीविश्वनाथचक्रवर्त्ती ।

वैद्युतं विद्युत्तेजः । घनः कृष्णस्योपमानम् । अर्कश्छत्रस्य उडुपौ परिभ्रमकृतमंडलाकारयोश्चामरव्यजनयोः । उडवः पुष्पवृष्टेः । चापौ वनमालायाः । विद्युत्तेजः पिशङ्गवाससोः । अद्भुतोपमेयम्—यदि घनस्योपरि सूर्यविम्वम् उभयतश्चन्द्रौ सर्वतो नक्षत्राणि मध्ये च मिलितंचापद्वयं स्थिरं विद्युत्तेजो भवेत् तर्हि स घनो यथा भाति तथा हरिर्वभाविति भावः ॥ २८ ॥

सप्त ववन्द इति मातृसोदर्यादादरविशेषज्ञापनार्थमुक्तम् अष्टादशापि पितुर्वसुदेवस्य भार्या मातृतुल्यत्वान्नमस्कृता एव ॥ २९ ॥ ३० ॥

स्वभवनं स्वपुरम् । सहस्राणि च षोड़शेति चकारादष्टोत्तरशताधिकानीति ज्ञेयम् ॥ ३१ ॥

---

## सिद्धांतप्रदीपः ।

अथाभूतोपमानेनध्यानविशेषार्थंभगवंतं वर्णयति सितातपत्रेति यथाश्यामवर्णोघनोयद्यर्कोडुपचापवैद्युतैः शोभितः स्यात् उडुपशब्देनसतारागणंचंद्रद्वयंगृह्यते वैद्युतइत्यत्रस्वार्थेऽण्तथासितातपत्रेणार्कोपमेनव्यजनाभ्यांचंद्रोपमाभ्यांचोपस्कृतोमंडितः तारागणोपमानांप्रसूनानांवर्षैरभिवर्षितः पिशंगेवैद्युतोपमेवाससीयस्यभगवान्घनइवश्यामः इंद्रचापोपमयावनमालयाचवभाविइत्यन्वयः ॥ २८ ॥

सप्तेत्यन्यासामुपलक्षणम् ॥ २९ ॥ ३० ॥

अष्टोत्तरशतसंख्याकाअन्येप्रासादाश्चकारेणग्राह्याः ॥ ३१ ॥

---

## भाषाटीका ।

भगवान् श्वेतछत्र चामरादिकों से शोभित पीतवस्त्र धारण किये मार्ग में जाते समय फूलों की वर्षा से तथा बनमाला से ऐसे शोभित भये जैसे चन्द्र सूर्य इन्द्रधनुष बिजुली इन्हीं से मेघ शोभित होय यह अभूतोपमा कही है ॥ २८ ॥

भगवान् पिता माता के घरमें प्रवेश भये अपनी माताओं से आलिंगित होकर देवकी आदिक सात माताओं को मस्तक से बंदना करते भये ॥ २९ ॥

वे सब माता स्नेहयुक्त, स्तनों से दुग्ध को गिराती हुई हर्षसे विह्वल होकर नेत्रजलों से कृष्ण को सेचन करती हुई ॥ ३० ॥

इसके अनन्तर भगवान् अपने महलमें प्रवेशहुये जोकि महल सब वस्तुओंसे पूर्ण सर्वोत्तम है जहां पत्नियों के षोडशहजार महल बने हुये हैं ॥ ३१ ॥

---

पत्न्यः पतिं प्रोष्य गृहानुपागतं विलोक्य सञ्जातमनोमहोत्सवाः ।
उत्तस्थुराराात् सहसाऽऽसनाशयात् साकं व्रतैर्व्रीडितलोचनाननाः ॥ ३२ ॥
तमात्मजैर्दृष्टिभिरन्तरात्मना दुरन्तभावाः परिरेभिरे पतिम् ।
निरुद्धमप्यास्रवदम्बु नेत्रयोर्विलज्जतीनां भृगुवर्य्य वैक्लवात् ॥ ३३ ॥
यद्यप्यसौ पार्श्वगतो रहोगतस्तथापि तस्याङ्घ्रियुगं नवं नवम् ।
पदे पदे का विरमेत तत्पदाच्चलापि यत् श्रीर्न जहाति कर्हिचित् ॥ ३४ ॥
एवं नृपाणां क्षितिभारजन्मनामक्षौहिणीभिः परिवृत्ततेजसाम् ।
विधाय वैरं श्वसनो यथाऽनलं मिथो वधेनोपरतो निरायुधः ॥ ३५ ॥

श्रीधरस्वामी ।

प्रोष्य देशान्तरे उषित्वा । आरात् दूरादेव विलोक्य । संजातो मनसि महोत्सवो यासां ताः । आसनादाशयाच्च आसनाद्देहेन च उत्तस्थुः आशयोऽन्तःकरणं तस्मादप्यात्मना उत्तस्थुः श्रीकृष्णेनात्मनः संश्लेषे अन्तःकरणव्यवधानमपि नासहन्तेत्यर्थः । व्रीडितानि लोचनानि आननानि च यासां ताः । अपाङ्गैरेव वीक्षणाद्व्रीडितलोचनाः अवनतमुखत्वाद्व्रीडिताननाः । साकं व्रतैरिति हास्यक्रीडावर्जनादिनियमा अपि ताभ्य उत्तस्थुरित्यर्थः । धृतव्रता एव उत्तस्थुरिति वा । व्रतानि याज्ञवल्क्येनोक्तानि—क्रीडां शरीरसंस्कारं समाजोत्सवदर्शनम् । हास्यं परगृहे यानं त्यजेत् प्रोषितभर्तृका इति ॥ ३२ ॥

आरात् आयान्तं तं पतिं दर्शनात् पूर्वमात्मना बुद्ध्या परिरेभिरे ! ततो दृष्टिभिरिन्द्रियैः। ततः समीपे आगतमात्मजैः पुत्रैर्गृहीतकण्ठमालिङ्गयन्त्य इव स्वयमपि आलिंगितवत्य इत्यर्थः । अत्र हेतुः दुरन्तभावाः गम्भीराभिप्रायाः । तदा च तासां नेत्रयोर्निरुद्धमप्यम्बु वाष्पं वैक्लव्यात् वैवश्यादास्रवत् ईषत् सुस्राव । अतएव धैर्यहान्या विलज्जतीनाम् । हे भृगुवर्य ! चित्रं श्रृणिवत्यर्थः ॥ ३३ ॥

पार्श्वगतः समीपस्थः । तत्रापि रहोगतः एकान्ते च वर्त्तते स्म । पदे पदे प्रतिक्षणं नवं नवमेव । अत्र कैमुत्यन्यायः का विरमेतेति । चला चंचलस्वभावा अपि ॥ ३४ ॥

उक्तं श्रीकृष्णचरितं संक्षिप्याह एवमिति द्वाभ्याम् क्षितेर्भाराय जन्म येषाम् । अक्षौहिणीभिः कृत्वा परिवृत्तं सर्वतः प्रसृतं तेजः प्रभावो येषाम् । श्वसनो वायुः वेणूनामन्योऽन्यसंघर्षणेनानलं विधाय मिथो दाहेन यथा उपशाम्यति तद्वत् ॥ ३५ ॥

---

दीपनी ।

( पत्न्यः पतिमिति । एतेन यावत्यः पत्न्यस्तावन्मूर्त्तिः श्रीकृष्णो युगपदेव तासां गृहान् प्राविशदिति ज्ञायते सर्वासां तुल्यभावत्वादिति व्याख्यालेशः । ) ॥ ३२—३७ ॥

---

श्रीवीरराघवः ।

तदाप्रोष्यप्रवासंकृत्वागृहानुपा गतंप्रियंदूराद्विलोक्यपत्न्योरुक्मिण्यादयः संजातोमनसिमहानुत्सवोहर्षोयासांव्रीडिते लोचनेयेषुतान्याननानियासांतथाभूताव्रतैः सहासनाशयात्सहसाआशुउत्तस्थुः तत्रव्रतेभ्यः उत्थानंनामभर्त्रागमनार्थंव्रतत्यागः आसनादुत्थानंप्रसिद्धम् आशयादभिप्रायादुत्थानंदिदृक्षौत्कंठयत्यागः दर्शनस्यजातत्वात् ॥ ३२ ॥

तमितिदुरंतोऽगाधोभावः स्नेहोयासांताः पत्न्यः समागतंतपतिमात्मजैर्दृष्टिभिरंतरात्मनाचपरिरेभिरेआलिंगितवत्यः शरीरपरिरंभस्य रहः कालिकत्वात्तेनसाक्षाच्चक्रुरपितुपुत्रैः प्रद्युम्नादिपुत्रद्वारेणेत्याभिप्रायेणपुत्रैरित्युक्तं मनसाचक्षुषाचसमंसाक्षादेवचक्रुरितिअभिप्रायेणांतरात्मनादृष्टिभिश्चेत्युक्तंहेभृगुवर्य ! विलज्जतीनांतासामतएवनेत्रयोरंबुनिरुद्धमपि विक्लवाद्धाष्ट्यादस्रवत् ॥ ३३ ॥

व्रतैः साकमासनाशयादुत्तस्थुः तस्यात्मजैरित्यादिनाच तासांतद्विरहासहिष्णुत्वंसूचितंतदेवोपपादयति यद्यपीतियद्यप्यसौभगवान्कृष्णस्तासांपार्श्वगतः रहोगतश्चतथापि तस्यांघ्रियुगंतासांनवंनवमेवाभूत् यतस्तत्पदात्तस्यपदारविंदात्काविरमेतविश्लिष्यावस्थातुमुत्सहेतनकापीत्यर्थः तदेवदर्शयितुंविशिनष्टिचंचलाश्रीर्लक्ष्मीरपिकदापियत्यदंघ्रिंनजहातितत्पदात्काविरमेतेत्यन्वयः तदापीतिपाठांतरंतत्र यद्यपिसदापिपार्श्वगतोरहोगतश्चतदापितस्यांघ्रियुगंनवंकिंपुनः कदाचिदंतरितंनवंनवमितिकैमुत्यन्यायसिद्धमितिभावः उत्तरार्द्धंतुयथोक्तार्थमेव ॥ ३४ ॥

अथोपरितनंवृत्तांतंसंगृह्यविवक्षुरुक्तवृत्तांतंसमासतोऽनुवदति एवमिमिति क्षितेर्भूमेर्भारस्यजन्मोदयोयेभ्यः अक्षौहिणीभिः परिवृत्तंपरितोव्याप्तंतेजः शौर्यंयेषांतेषांनृपाणांकौरवाणांपाण्डवानांचामिथः वैरंश्वसनोवायुरनलमग्निमिवविधायवर्द्धयित्वास्वयंनिरायुधः एवतेषां मिथोवधेनवधाद्यउपरतः उपररामउपसंहृतवान्सएषइत्युत्तरेणान्वयः स्वयंनिरायुधएवसन्तेषांमिथोवधंकारयन्स्वयंतूष्णीमवस्थितइत्यर्थः ॥ ३५ ॥

---

श्रीविजयध्वजः ।

पत्न्यः आराराद्दूरादेवाविलोक्यसंजातोमनसिमहोत्सवोयासांतास्तथोक्ताः सहसाझटितिउत्तस्थुरित्यन्वयः कथंभूतंप्रोष्यप्रवासंकृत्वा गृहांतुपागतं कीदृश्यः पत्न्यः साकंपिताश्चव्रीडितलोचनाननाश्चसाकंपितव्रीडितलोचनाननाः सहितमाकंपितंयाभिस्तास्तथाव्रीडितानि लोचनानिआननानिचयासांतास्तथा ॥ ६८ ॥

दुरंतभावाः वलातीतस्नेहाः अनंतशृंगारावा अन्यैरज्ञाताभिप्रायावा दृष्टिभिरात्मजैरंतरात्मनामनसाचतंपतिंपरिरेभिरे वैक्लव्या त्पारवश्याद्विलज्जितानांतासांनेत्रयोर्निरुद्धमप्यंवुअस्रवदित्यन्वयः ॥ ६९ ॥

नैतच्चासांस्नेहकार्यंकिमित्याह यदीति यद्यप्यसौकृष्णः रहोगतः एकांतगतः सदातासांपार्श्वगतः समीपस्थः तथाप्यनुपदंतासां तस्यांघ्रियुगंनवंनवंनूतनान्नूतनं तथाहिकास्त्रीतस्यपादकमलादलमितिविरमेतविरामंकुर्यात् अन्यत्रचंचलविभवप्रदायिनीश्रीः यंभगवं तंकर्हिचिन्नजहातीत्येकान्वयः ॥ ७० ॥

वायुर्यथावनदहनायवेणूनांमिथः संघट्टनेनाग्निमुत्पादयति तथाअक्षौहिणीभिः क्षितिभारजन्मनांभूमेर्भारभूतंजन्मयेषांतेतथोक्ताः तेजां परिवृत्तंपरिवृद्धंतेजोयेषांतेतथोक्तास्तेषामसुराणांधिनाशायकुरुपांडवपक्षपातिनांनृपाणांमिथोवैरंविधायस्वयंनिरायुधः परस्परवधेनावना शंविधायचोपरतउदास्तइत्यन्वयः ॥ ७१ ॥ ॥

---

क्रमसन्दर्भः ।

पत्न्य इति । विलोक्यैव आसनात् तदावेशेनैकचेष्टतावस्थानात् आशयात् तत्समाधिलक्षणाच्च उत्तस्थुः ( तौ ) तत्यजुरित्यर्थः । अतएव व्रीडितेति ॥ ३२ ॥

तमिति तैः । तत्र स्वयमालिंगितवत्य इवेति योज्यम् । दुरन्तभावा उद्भटभावाः । अतएव निरुद्धमप्यास्रवत् । अत्रात्मजद्वारालिंगनेन कान्तभाव आभास्यते । तद्द्वारा तत्सम्भोगायोग्यत्वात् समाधानंच—प्रीतिसामान्यपरिपोषायैव तथाचरितं नतु कांतभावपोषाय । तत् पोषस्तु दृष्ट्यादिद्वारैव । तस्मान्न दोष इति ॥ ३३ ॥

चिरविरहानंतरमेतादृशानुरागोदययोग्यतायां तासामेवावस्थान्तरं कैमुत्येन दृष्टान्तयति यदीति । आसौ श्रीकृष्णः । तासां श्रीपटम-हिषीणाम् । नवं नवमिति । तच्च तासां स्वाभाविकानुरागवतीनां नाश्चर्यम् यतः का वान्यापि तत्पदाद्विरमेत तदास्वादेन तृप्ता भवेत् । तत्कैमुत्येनोदाहरणं चलापीति । जगति चञ्चलस्वभावत्वेन दृष्टापि ॥ ३४ ॥

अथ तथागतस्य तस्य तादृशगार्हस्थ्यलीलासुखोत्कर्षदर्शनार्थं निश्चिन्ततापूर्वकं ताभी रमणमेवाह एवमिति द्वाभ्याम् ॥ ३५ ॥

---

सुबोधिनी ।

यथामातृषु पुत्रत्वेनस्वयं प्रविष्टः तथापत्नीष्वपिप्रविष्टः पतित्वेनप्रभुत्वेननअतस्तासां साधारणपतित्वेनकृत्यंयुक्तंदूरादागच्छंतंपतिंविलोक्यसम्यक्जातोमनसिमहानुत्सवोयासाम्आराद्दूरादेवदृष्ट्वाउत्तस्थुः सहसेतिनसावधानभूताः यथैवस्थितास्तथैवउत्तस्थुः देहआत्माच आसनेचिंतायांनिमग्नोस्थितःतदिदानींद्विरूपाः आसनादाशयादप्युत्तस्थुः परंव्रतानिस्थितान्येवविशेषालंकाररहितत्वादितिभावः अतएव व्रीडया मुकुलितानि लोचनाननानियासाम् ॥ ३२ ॥

ताभिः कृतांभगवत्पूजामाहतमात्मजैरिति तमागच्छन्तमेवताः सर्वाः युगपदेवकायेनमनसाचालिंगनंकृतवत्यः तत्रप्रकारभेदमाह आत्मजैःदृष्टिभिरंतरात्मनेतिपुत्रान् हस्तेप्रयच्छंत्यइवनिकटसंवद्धाः कायेनपरिरेभिरेतथादृष्टिभिः दृष्टिदृष्ट्यायोजयंत्यः परिरम्भणाभा-वाद्गिरणेनअलसवलितादिभिः परिरेभिरेअन्तरात्मनाभगवतिप्रविष्टेनमनसाचपरिरेभिरेतासांपरिरंभणएवमनोरथः समाप्तः नवाद्यकृत्य कृतवत्यः तत्रहेतुः दुरंतभावाइतिदुष्टः अन्तोभावोयस्यभावस्त्वांतरः तस्मिन्हिसमाप्तेवहिः क्रियाभवति सचमानापनोदनावधिः अतोवैक्लव्यात्मानापनोदनात् सर्वमेवाश्रुसमागतं तन्मानवतीभिर्निरुद्धमप्यास्रवत् ईषत्सुस्राव ननुमानवतीनामेतदनुचितं तत्राह हे भृगुवर्य ? भगवन्माहात्म्यादित्युक्तंभवतिप्रत्युततासामेववैक्लव्यंजातम् ॥ ३३ ॥

एवंतासामतिभावंभगवतिनिरूप्यआश्चर्यमितिशंकायांहेतुमाहयद्यप्यसाविति यद्यपिरोदनमनुचितं वस्तुनः अलाभेतद्भवतिसचपा-र्श्वगतः तत्रापिएकांतेभावनानुसारेणभगवतैवकृतत्वात् तथापितस्यांघ्रियुगंनूतनंतासांहिमनोरथश्चरणद्वयंस्थाप्यमितिसच अत्यन्तंरसावि र्भावसम्बन्धादिभिर्जातेकर्त्तुंशक्यः प्रथमंचभक्त्याधर्मेणवालोकतोवाचरणक्षालनेकृतेसम्वाहनेचकृते पूर्वोक्तांभवतिततश्चभगवतश्चरणार विंदस्यनित्यनूतनत्वात् प्रथमक्रिययैवजन्मसमाप्तिः अतोरोदनमनुचितमित्याह पदेपदेक्षणेप्रतिपदंवानूतनादपि नूतमेवअतः कावास्त्रीमनो रथपूर्त्यभावात् सकृदपिविरताभवेत् अथवा तद्भक्तिविषयात् प्रथमसेवातो विरताभवेत् तदाद्यग्रिममनोरथारंभः अतोरोदनमनु चितमितिभावः अत्रार्थेनिदर्शनमाह चलापीतिवस्तुतः श्रीश्चलातथाप्येकस्मिन् कार्येसमाप्ते अन्यत्रगच्छेत्तद्भगवत्येकमपिकार्यंनसमा-प्नोति नित्यनूतनत्वात् अतोभगवंतंकदाचिदपिनजहाति यथाएवंप्रकारेणलक्ष्मीम् अन्याश्चभार्याअपरिसमाप्तकार्या एवस्थापयति ताश्चनजानंति ॥ ३४ ॥

एवमेवभूभारहरणार्थंप्रवृत्तोभगवान् एकक्रिययैवमध्येअसमाप्तयाकार्यंसमापितवानित्याहएवंनृपाणामिति यथास्त्रियःस्वयमेवतिष्ठंति क्षणांतरकार्यार्थंनप्रार्थ्यंतेएवं भूभारहरणेप्रथमकार्येसमारब्धेअंतिमपर्यंततदेवानुवर्त्तते यथाप्रथममग्निसम्बन्धेसर्वदाहपर्यंतस्वयमवानुव

## सुबोधिनी ।

स्तेते एवमयमद्भुतकर्मानलोकसदृशः भूभारार्थंजन्मयेषांतत्रभगवत्कार्यमाह विधायवैरंमिथःवैरंविधायतस्यवैरस्यसामर्थ्यमाह श्वसनो यथानलमितिवायुर्निमित्तम् अग्निरेवदाहकः सतुवंशघर्षणेनजातः सर्वंदहतितथायमपिमिथोवधेनसंपन्नेनउपरतः मिथोवधंकृत्वाउपरत इत्यर्थः जीवत्सुतेषुनोपरमेदितिभावः निरायुधइतिनिर्गतानि आयुधानि यस्यतस्यहिअन्योऽन्यमेवायुधम् अग्निरिंधनमिव एवंसर्वसंहर्त्ता भगवान् महानयमद्भुतकर्मातस्य सर्वकार्यंसमाप्तम् ॥ ३५ ॥

---

## श्रीविश्वनाथचक्रवर्त्ती ।

यावत्यो महिष्यस्तावद्भिरेव प्रकाशैर्युगपदेव पृथक् तत्तन्मन्दिर प्रविष्टं कृष्णमालोकमानानां मामेव प्रथममयं प्राप्त इत्यभिमन्यमानानां तासां तात्कालिकी चेष्टामाह सञ्जातो मनसो महोत्सवः परिरम्भस्पृहा यासां ताः । अतएव आसनात् अन्तःकरणाच्च उत्तस्थुः ततश्च व्रीड़ितलोचनाननाः अपाङ्गैरेव वीक्षणात् व्रीड़ितलोचनाः अवनतमुखत्वाद् व्रीड़ितानना: । अयमर्थः— आसनं परित्यज्य प्रथमं देहेनैव परिरब्धुमुत्थिताः मध्ये लज्जया कृतं विघ्नमालक्ष्य लज्जोत्पत्तिस्थानमन्तःकरणञ्च त्यक्त्वा केवलमात्मनैव परिरेभिरे इति केवलमुत्प्रेक्षैव । कान्तमालोक्य सहसैव स्पर्शौत्सुक्यपूर्णप्रेमानन्दमूर्च्छितास्ता बभूवुरिति तत्त्वम् । मूर्च्छायां सत्यामेव सुषुप्तिप्रलययोरिवान्तःकरणव्यवधानाभावसिद्धेः । साकं व्रतैरिति व्रतानि याज्ञवल्क्येनोक्तानि—क्रीड़ां शरीरसंस्कारं समाजोत्सवदर्शनम् । हास्यं परगृहे यानं त्यजेत् प्रोषितभर्त्तृकेति । व्रतैः सहिता एव उत्तस्थुरिति तेषां व्रतानां पतिं दर्शयितुमनुचितानामपि सहसा त्यक्तुमशक्यत्वात् तैः साकमेवोत्तस्थुः । ततश्च तेन दृष्टा तासामसंस्कृतशारीरपरिच्छदता स्नेहवर्द्धनायैवाभूदिति ॥ ३२ ॥

लज्जया कृतविघ्नानामपि तासां तत्परिरम्भे प्रकारमाहतमिति । आत्मजैर्मनोभवैस्तद्दर्शनेनोद्दीपितैः कामैर्हेतुभिरित्यर्थः । "मकरध्वज आत्मभू"रित्यमरः । दृष्टिभिः परिरेभिरे इति प्रथमं चाक्षुषः सम्भोग उक्तः । ततो दृष्टिभिरेव नेत्ररन्ध्रैरेवान्तः प्रवेश्य आत्मना अन्तर्देहेनापि । यतो दुरंतभावा दुर्ज्ञेयाभिप्रायाः । अतएव वक्ष्यते चायमेव प्रकारो भाववतीनाम्—तं काचिन्नेत्ररन्ध्रेण हृदिकृत्य निमील्य च । पुलकांगुपगुह्यास्ते योगीवानन्दसंप्लुतेति तदपि सूक्ष्मधिया प्रेयसा स्वाभिप्रायं ज्ञातमालक्ष्य विलज्जमानानां तासां नेत्रयोरम्बु निरुद्धमपि वैक्लव्यात् वैवश्यात् आ ईषत् अस्रवत् सुस्राव । हे भृगुवर्य ! ॥ ३३ ॥

पदे पदे क्षणे क्षणे तासां नवं नवमेव भवति । अत्र कैमुत्यं का विरमेतेति । चला चंचलस्वभावा श्रीः सम्पत्तिरूपेति नित्यनूतनत्वं तस्योक्तम् ॥ ३४ ॥

ताभिः सह रमणं निष्प्रत्यूहं वक्तुं तस्य कार्यान्तरव्यग्रत्वाभावमाह एवमिति अक्षौहिणीभिः सह परिवृत्तं विस्तीर्णं तेजो येषाम् । श्वसनो वायुर्वेणूनाम् अन्यान्यसंघर्षेण अनलं विधाय मिथो दाहेन यथोपशाम्यति तद्वत् ॥ ३५ ॥

---

## सिद्धांतप्रदीपः ।

प्रोष्यप्रवासंकृत्वागृहानुपागतंपतिमाराद्दूरादेवविलोक्यसहसैवातएवव्रतैः साकंधृतव्रताएवासनात् आशयादंतः करणाच्च देह गेहस्मृतिरूपादंतः करणधर्मादप्युत्तस्थुः व्रतानियाज्ञवल्क्येनोक्तानि"क्रीडांशरीरसंस्कारंसमाजोत्सवदर्शनम् हास्यंपरगृहेयानंत्यजेत्प्रोषित भर्तृके"ति ॥ ३२ ॥

हेभृगुवर्य ? दुरंतभावाः अगाधस्नेहाः पत्न्यः तमागतंपतिमात्मजैस्तद्द्वारेणदृष्टिभिरंतरात्मना च परिरेभिरे आलिंगितवत्यः विलज्जतीनांस्त्रीणांगुणविशेषरूपांलज्जांकुर्वतीनाम् निरुद्धमपिविक्लवाद्वैक्लव्यान्नेत्रयोरंबुवाष्पमास्रवदीषत्सुस्राव ॥ ३३ ॥

तासांभगवतिस्नेहातिशयमाह यद्यपीति यद्यप्यसौश्रीकृष्णः पार्श्वगतः रहोगतश्च तथापितस्योभयत्रसंश्लिष्टस्यापि पदेपदेप्रति क्षणमंघ्रियुगंनवंनवंतासामभूत् यद्वंश्रीकृष्णंचलापिचंचलापिश्रीः कर्हिचिन्नविजहाति "देवत्वेचभवेद्देवीमनुष्यत्वेचमानुषी विष्णोरे वानुरूपांवैकरोत्येषात्मनस्तनु"मितिस्मृतेः तत्तस्यपदात्काविरमेतविश्लिष्टतयास्थातुमुत्सहेत ॥ ३४ ॥

भगवद्गुणविशेषविवक्षुरुक्तंभगवच्चेष्टितंसंक्षिप्यानुवदति एवमिति श्वसनोवायुर्वेणुनाशहेतुमग्निंविधाययथोपरताभवातितथा क्षिति भारायजन्मयेषांतेषाम् अक्षौहिणीभिः परिवृत्तंपरितोव्याप्तंतेजः प्रभावोयेषांतेषांमिथोवैरंविधायोपरतः तेषांकर्मानुसारेणतान्हत्वोपरराम यः सरेमेइत्युत्तरेणान्वयः ॥ ३५ ॥

---

## भाषा टीका ।

पत्नीगण बिदेश गयेहुये पति को घरमें आयेहुये देखकर अत्यन्त महोत्सव सम्पन्न मन हुई । पतिके आगमनकाल पर्यंत अत्यन्त नियम में स्थित वे सब पत्नियें कामिनियें उनकी दूरही से देखकर लज्जितनयना और लज्जितमुखी होकर अपने २ आसन और अपने २ कार्य परित्यागपूर्वक द्रुगत उठकर खड़ी होगई ॥ ३२ ॥

हे भृगुश्रेष्ठ ! सुनो कैसा आश्चर्य ! उन सब पत्नीगणोंने पतिको चाक्षुष प्रत्यक्ष करने के पूर्वही एकसाथ अन्तरात्मा के साथ आलिंगन किया । फिर जब दृष्टिगोचर हुए तब दृष्टिद्वारा भी लाभ किया ( किन्तु तथापि उस समय वे इतनी अधीर होगई थीं ) कि उनको

स एष नरलोकेऽस्मिन्नवतीर्णः स्वमायया ।
रेमे स्त्रीरत्नकूटस्थो भगवान् प्राकृतो यथा ॥ ३६ ॥
उद्दाम-भाव-पिशुना-मल-वल्गु-हास-व्रीडा-वलोक-निहतोऽमदनोऽपि यासाम् ।
संमुह्य चापमजहात् प्रमदोत्तमास्ता यस्येन्द्रियं विमथितुं कुहकैर्न शेकुः ॥ ३७ ॥
तमयं मन्यते लोको ह्यसक्तमपि सङ्गिनम् ।
आत्मौपम्येन मनुजं व्यापृण्वानं यतोऽबुधः ॥ ३८ ॥
एतदीशनमीशस्य प्रकृतिस्थोऽपि तद्गुणैः ।
न युज्यते सदात्मस्थैर्यथा बुद्धिस्तदाश्रया ॥ ३९ ॥
तं मेनिरेऽबला मौढ्यात् स्त्रैणं चानुव्रतं रहः ।
अप्रमाणविदो भर्तुरीश्वरं मतयो यथा ॥ ४० ॥
इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्यां प्रथमस्कन्धे पारीक्षिते श्रीकृष्णद्वारकाप्रवेशो नाम एकादशोऽध्यायः ॥ ११ ॥

भाषाटीका ।

बड़े गूढ अभिप्राय से पुत्रालिंगन के समान आलिंगन करडाला । उससमय उन सब लज्जावतीओं का चित्त इतना विवश हुआ था वे अपने २ नेत्रों से आसुओं की धारा को नहीं रोककर रखसकीं कुछ भूमि में पड़ने लगे ॥ ३३ ॥

यद्यपि वे सर्वदाही उन सब कामिनियों के पास एकांत अवस्थिती करती थीं तथापि उनके चरण युगल पद पद में भी नवीन नवीन दृष्टिगोचर होतेथे । क्योंकि चंचला लक्ष्मी भी जिनको कभी त्याग नहीं करती उनके पादपद्मसे विरतहो ऐसी कौन स्त्री है ॥ ३४ ॥

वास्तव में । वायु जिस प्रकार वंश समुदाय में प्रविष्ट होकर परस्पर से घर्षण के द्वारा अग्नि उत्पादन पूर्वक उन सब को परस्परही में भस्मीभूत करदेता है फिर वायु से दग्ध हुए वो सब वंश खण्ड आपही घातित होता है । इसी प्रकार यदु भी सबके विधाता कालपुरुष ने अक्षौहिणी सेना समूह के द्वारा चारों ओर फैला हुआ है तेज जिनका और पृथ्वी का भार जनमानेवाले राजाओं में परस्पर विरोधानल उत्पन्न कर दिया है कि जिससे वे परस्पर वध साधन द्वारा निरायुध और निस्तेज होकर अवशेष में प्रशान्त होगए हैं ॥ ३५ ॥

---

श्रीधरस्वामी

स्त्रीरत्नकूटस्थः उत्तमस्त्रीकदम्बस्थः ॥ ३६ ॥

नन्वेवं स्त्रीसङ्गादिभिः संसारप्रतीतेः कथं भगवानवतीर्ण इत्युच्यते तत्राह उद्दामेति द्वाभ्याम् । यासाम् उद्दामो गम्भीरो यो भावः अभिप्रायः तस्य पिशुनः सूचको योऽमलो वल्गुः सुन्दरो हासो व्रीडावलोकश्च ताभ्याम् निहतः अमदनः श्रीमहादेवोऽपि संमुह्यलज्जया चापं पिनाकम् अजहात् । एवंप्रभावाः ( याः ) स्त्रियः इत्येतावद्विवक्षितम् । यद्वा भगवतो मोहिनीरूपेण महेशोऽपि मोहित एव एताश्च तादृग्विलासा एवेति तथोक्तम् । ताः कुहकैः कपटैर्विभ्रमैर्यस्येन्द्रियम् मनः विमथितुं क्षोभयितुं न शक्ताः ॥ ३७ ॥

तं श्रीकृष्णम् अयं प्राकृतो लोक आत्मौपम्येन स्वसादृश्येन सङ्गिनं मनुजं मन्यते । अत्र हेतुः व्यापृण्वानं व्याप्रियमाणम् । यतोऽयम् बुधः अतत्त्वज्ञः ॥ ३८ ॥

कुत इत्यपेक्षायामैश्वर्यलक्षणमाह एतदिति ईशस्येशनमैश्वर्यं नाम एतदेव । किं तत् प्रकृतिस्थोऽपि तस्या गुणैः सुखदुःखादिभिः सदा न युज्यते इति यत् । यथा आत्मस्थैरानंदादिभिरात्माश्रयापि बुद्धिर्न युज्यते तद्वत् । वैधर्म्यदृष्टान्तो वा आत्मस्थैः सत्ताप्रकाशादि भिर्यथा बुद्धिर्युज्यते इति । एवं वा असदात्मा देहः तत्रस्थैर्गुणैस्तदाश्रया बुद्धिस्तदुपाधिर्जीवो यथा युज्यते एवं प्रकृतिस्थोऽपि तद्गुणैर्न युज्यते इति यत् । एतदीशनमीशस्येति ॥ ३९ ॥

तत्पत्न्योऽपि तस्य तत्त्वं न जानन्तीत्याह । तं स्त्रैणम् आत्मवश्यं रह एकान्ते अनुव्रतम् अनुसृतश्च मेनिरे भर्त्तुरप्रमाणविदः प्रमाण मियत्तां महिमानं अजानंत्य इत्यर्थः । ईश्वरं क्षेत्रज्ञं मतयोऽहंवृत्तयो यथा स्वाधीनं स्वधर्मयोगिनं मन्यन्ते तद्वत् । यद्वा यथा तासां मतयः कल्पनाः तथा तमीश्वरं स्त्रैणादिरूपं मेनिरे इत्यर्थः ॥ ४० ॥

इति श्रीमद्भागवतसारार्थदीपिकायां प्रथमस्कन्धे एकादशोऽध्यायः ॥ ११ ॥

दीपनी ।

अजहात् त्यक्तवानिति काचित् पुराणप्रसिद्धाख्यायिकेति प्राञ्चः ॥ ३७ ॥
व्याप्रियमाणं व्यापारविशिष्टमित्यर्थः ॥ ३८—४० ॥

---

श्रीवीरराघवः ।

सएषइतिसएषः स्वमायया आत्मीयसंकल्पेनआस्मिन्नरलोकेऽवतीर्णोभगवान्स्त्रियएवरत्नानितेषांकूटस्थःसमुदायास्थतः रेमेचिक्रीडेयथा प्राकृतः स्त्रीवश्यस्तद्वत् प्राकृतोयथेत्यनेनस्त्रीवश्यत्वानुकारमात्रमेवनतुपरमार्थतस्तदस्तीतिसूचितम् ॥ ३६ ॥

तदेवव्यञ्जयितुंविशिनष्टिउद्दामेतिताः प्रमदोत्तमाः कुहकैर्वचनोपायैर्यस्येंद्रियंप्रमाथितुंनशेकुः नाप्रभवन्नतमपीत्युत्तरेणान्वयः सुतरांपारवश्यत्वाभावसूचनायास्यप्रमदोत्तमाविशिनष्टियासामुद्दामभावादिभिर्निहतः सन्मदनोऽपिसंमुह्यमोहंप्राप्यस्वयंधनुरजहात्त्यजतः प्रमदोत्तमाइत्यन्वयः उद्दामउदारोऽगाधइतियावत् भावोऽभिप्रायस्तेनपिशुनः सूचिताकर्षसूचकः अमलः सुन्दरश्चहासस्तेनचव्रीडापूर्वकावलोकनेनचनिहतः अभिभूतः ॥ ३७ ॥

एवंविधंतंयःस्त्रीवश्यंमन्यतेसोऽज्ञइत्याह तमिति मनुजंव्यापृएवानंमनुजवच्चेष्टमानंमनुष्यभावेनस्वयाथात्म्यमाच्छादयंतमित्यर्थः वस्तुतोनिःसंगमपिसंगिनामिवभासमानंतमिमंभगवंतंयोलोकोजनआत्मौपम्येनस्वतुल्यत्वेनमन्यतेसोऽयंलोकःअतोऽहेतोरबुधःनितरामज्ञः ॥ ३८ ॥

अथविषयैरनाकृष्टत्वमीश्वरस्यनाश्चर्यमित्यभिप्रायेणेश्वरत्वंनिर्वक्तिएतदिति प्रकृतिस्थोऽपिमूलप्रकृतिव्यापकोऽपितद्गुणैः सत्त्वादिभिरात्मस्थैर्जीवगतैरविद्यास्मितारागद्वेषादिभिश्चगुणैः सदानयुज्यतेइतियदेतदेवेश्वरस्येशनमित्यन्वयः सदेत्यनेनमुक्तव्यावृत्तिः सहिपूर्वंतैर्युक्तः हेयगुणास्पर्शोदाहरणमाह यथेति तदाश्रयाईशाश्रयाबुद्धिस्तज्ज्ञानंयथासत्त्वादिभिर्नयुज्यतेनहि"स्वाभाविकी ज्ञानबलक्रियाच" त्युक्ताविधंस्वतःसर्वगतस्यज्ञानंसरजस्तमोऽन्वयाधीनसम्यक्त्वासम्यक्त्वयुक्तंसएवंसर्वप्रकारेणाचिदचिद्गतहेयरहितइति यत्तदेवहि ईश्वरस्येश्वरत्वमित्यर्थः ॥ ३९ ॥

यथैवमज्ञोलोकस्तमुक्तविधमीश्वरमात्मतुल्यंमन्यते तथास्त्रियोऽप्यज्ञानादात्मवश्यममन्यंतेत्याहतमितिसंसारिणामिंद्रियप्रसूतामतयो यथेश्वरंनजानंतिकिंतुमौढ्यादन्यथामेनिरे एवंभूतास्ताअबलाः स्त्रियोऽपितंभगवंतंरहः स्त्रैणंस्त्रीसमूहमनुव्रतं स्त्रीसमूहानुवर्त्तिनंमेनिरे तत्रहेतुः भर्तुरप्रमाणविदः प्रमीयतइतिप्रमाणंस्वरूपंतत्स्वरूपमजानंत्यः ॥ ४० ॥

इति श्री वीरराघव विरचितायां श्रीमद्भागवत टीकायां प्रथम स्कंधे एकादशोऽध्यायः ॥ ११ ॥

---

श्रीविजयध्वजः ।

स्वमाययास्वेच्छया प्राकृतः स्त्रीजितः स्त्रीरत्नकूटस्थः स्त्रीश्रेष्ठसमूहस्थः ॥ ७२ ॥

स्त्रीश्रेष्ठसमूहगतः स्त्रीजितानलुकरोत्येवपरंनस्वयंस्त्रीजितइत्याह उद्दामेति यासामुद्दामभावस्यउत्कृष्टशृंगारचेष्टितस्यपिशुनः सूचकः अमलः निर्व्यलीकः वल्गुःकोमलः हासः स्मितंव्रीडयाअवलोकः कटाक्षवीक्षणमुद्दामभावपिशुनामलवल्गुहासेनव्रीडावलोकनेनचविहतः ताडितः मदनोऽपिसंमुह्यपुष्पाख्यंचापमजहात्मुक्तवांस्ताः प्रमदोत्तमाः कुहकैरुद्दामभावादिभिर्यस्य श्रीकृष्णस्येंद्रियंप्रमथितुंवशीकर्तुंन शेकुः तस्यकुतः स्त्रीजितत्वमित्यन्वयः ॥ ७३ ॥

तस्यस्त्रीजितत्वपरिवादोऽज्ञसंमतयेत्याह मन्यतइति अज्ञलोकः स्वसुखानुभवेनैवाप्तकामतयास्त्रीष्वसक्तमपिआत्मौपम्येनात्मानंदृष्टांतीकृत्यस्त्रीसंगिनंतन्मयंस्त्रीमयंमन्यतेहियस्मात्तस्मादयंजनोऽबुधः अज्ञः कथंभूतंमनुजंप्रावृएवानम् आच्छादयंतम् ॥ ७४ ॥

तर्हिज्ञानिप्रवादः कीदृशइतितत्राह यत्तदिति प्रकृतिस्थोऽपिसदात्मस्थैः स्वाधारैस्तद्गुणैः प्रकृतिगुणैः सत्त्वादिभिः शब्दादिभिश्चनयुज्यतेनसंबध्यतइतियत्तदीशस्येशनमीश्वरत्वं तत्रव्यत्यासदृष्टांतमाह यथेति यथाप्रकृतिस्थानांज्ञानिनांतदाश्रयातस्यकृष्णस्याश्रयाबुद्धिः प्रकृतिगुणैः नबध्यतेकिंमुतस्यप्रकृतिगुणसंबंधेनेत्यतोऽबुधजनप्रवादइतिभावः ॥ ७५ ॥

तथाविदोऽसुराइतिसोदाहरणमाह तमिति खलाइंद्रियारामामूढाः शास्त्रार्थाविदः तामसराजसप्रकृतयोऽतएवाप्रमाणविदोऽनंतगुणत्वादिप्रमाणाविदस्तंकृष्णमनुव्रतंभृत्यवदनुगतंस्त्रैणंस्त्रीजितंमेनिरे वैशेषिकादिवादिनांमतयोयथेश्वरंयथामतिमेनिरेतथा तस्मान्नतस्याप्तकामस्यस्त्रीजितत्वमितिभावः ॥ ७६ ॥

इतिश्री भागवतप्रथमस्कन्धस्य विजयध्वजटीकायां दशमोऽध्यायः ॥ १० ॥

---

क्रमसन्दर्भः ।

य एवमुपरतः स एव रेमे इति योज्यम् । स्वेषु निजजनेषु या माया कृपा तत्सुखचिकीर्षामयप्रेमा तया लोकेऽवतीर्णः इति तस्याः एव सर्वावतारप्रयोजननिमित्तत्वात् स्त्रीरत्नकूटस्थोऽपि तादृशरमणावेशकारिप्रेमविशेषरूपया तयैव रेमे न तु प्रसिद्धकामेनेत्यर्थः । अत्र रत्न पदेन तासामपि तद्योग्यत्वं बोधयित्वा तादृशप्रेमविशेषमयत्वं बोधितम् । एवं भावबैलक्षण्येऽपि क्रियया साम्यमित्याह प्राकृतो यथेति । अत्र श्रीभगवतोऽप्यप्राकृतत्वं दर्शयित्वा तद्वत् कामविषयत्वं ( कामविशेषमयत्वं ) निराकृतम् ॥ ३६ ॥

क्रमसंदर्भः ।

पुनरपि तदेव स्थापयति उद्दामेति । मदनश्च प्राकृतः कामः उद्भटभावसूचकनिर्मलमनोहराभ्यां हासव्रीडावलोकाभ्यां निहतस्तन्माहिमदर्शनेन स्वयमेवोत्कार्थीकृतस्वास्त्रादिवलोऽभूत् । अतएव संमुह्य चापमजहात् भ्रूपल्लवं धनुरपाङ्गतरङ्गितानि वाणा गुणः श्रवणपालिरिति स्मरेण । अस्त्राणि निर्जितजगन्ति किमर्पितानीतिवत् । तत्र निजास्त्रप्रयोगं न कुरुते एवेत्यर्थः । तथाभूता अपि प्रमदोत्तमाः प्रमदेन प्रकृष्टप्रेमानन्दविशेषेण परमोत्कृष्टास्ताः स्ववृन्द एव याः स्वतोऽप्युत्कृष्टप्रेमवत्यस्तासां साम्यच्छया कुहकैस्तादृशप्रेमाभावेन कपटांश प्रयुक्तैः सद्भिः कटाक्षादिभिर्यस्येन्द्रियं विमथितुं तद्विशेषेण मथितुं न शेकुः । किन्तु स्वप्रेमानुरूपमेव शेकुरिति । तस्मात् प्रेममात्रोत्थायि विकारत्वात्तस्य कामुकवैलक्षण्यमिति भावः ॥ ३७ ॥

तस्मादेतत्तत्त्वमविज्ञायैव अयं साधारणो लोकः असक्तमपि प्राकृतगुणेष्वनासक्तमपि यतः आत्मौपम्येन मनुजं व्यापृण्वानं कामादि व्यापारयुक्तम् च मन्यते यथात्मनः प्राकृतमनुष्यत्वादि तथैव मन्यत इत्यर्थः । अतएवाबुध एवासौ लोक इति ॥ ३८ ॥

प्राकृतगुणेष्वसक्तत्वे हेतुः एतदिति । अवतारादौ प्रकृतिगुणमये प्रपञ्चे तिष्ठन्नपि सदैव तद्गुणैर्न युज्यते इति यत् एतदीशस्येशनमैश्वर्यम् । तत्र व्यतिरेके दृष्टान्तः यथेति । तदाश्रया प्रकृत्याश्रया बुद्धिर्जीवज्ञानं यथा युज्यते तथा नेति । अन्वये वा तदाश्रया श्रीभगवदाश्रया परमभागवतानां बुद्धिर्यथा प्रकृतिस्था कथंचित्तत्र पतितापि न युज्यते तद्वत् । एवमेवोक्तं तृतीये—भगवानपि विश्वात्मा लोकवेदपथानुगः । कामान् सिषेवे द्वार्वत्यामसक्तः सांख्यमाश्रित इति ॥ ३९ ॥

ननु तादृशमैश्वर्यं तस्य ताः किं नजानन्ति यदि जानन्ति तदा रहोलीलायां क्षुब्ध्येत्येव तादृशप्रेमेत्याशंक्याह तमिति । ईश्वरमपि तं रह एकान्तलीलायां मौढ्यात् तादृशप्रेममोहात् भर्त्तुरप्रमाणविदः तादृशैश्वर्यज्ञानरहिताः स्त्रैणम् आत्मवश्यम् अनुव्रतम् अनुसृतंच मेनिरे । तच्च नायुक्तमित्याह । यथा तासां मतयः प्रेमवासना तथैव स इति । ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहमित्यादेः स्वेच्छामयस्येत्यादेश्च प्रामाण्यादिति भावः ॥ ४० ॥

इति श्रीमद्भागवतप्रथमस्कन्धस्य श्रीजीवगोस्वामिकृतक्रमसन्दर्भे एकादशोऽध्यायः ॥ ११ ॥

---

सुबोधिनी ।

अतःपरंभक्तोद्धारकभागवताधिकारिदेहनिष्पादनमवशिष्यतेतदुत्तरत्रवक्ष्यते मध्येतस्यविरुद्धधर्माश्रयत्वंवक्तुंशृंगारक्रीडामाहसएषइति सएषनरलोकेऽस्मिन्नवतीर्णः यथाकोऽपिनजानाति तथास्वमाययारमणनिमित्तेस्त्रीरत्नकूटेस्त्रीसमूहेस्वयमेवविद्यमानो भगवान्तद्वशमनापन्नः प्राकृतवद्रीतिंकृतवान् यावद्रसेनप्रविष्टः तावत्तस्यरसंनजानातीति कामशास्त्रेस्ववशेस्थितस्यनरसइति ॥ ३६ ॥

एवंभगवत्कृत्याअंगीकृताग्लानिर्नदोषायेतिन्यायेनभगवद्रमणं नतुविषयधर्मेणतथात्वमिति प्रतिपादयितुमाह उद्दामेति यद्यपिस्त्रियोरतिसमर्थाः तथापिभगवन्मनोजेतुंनशक्ताः तासांसामर्थ्यमाह उद्दामस्त्यक्तशृंखलोयोभावः अज्ञापनीयेज्ञापयतीति पिशुनः असमये अस्थाने च एवमपिसन्नमलः स्वाभाविकत्वान्निर्दुष्टः स्वच्छोवासूचितस्यहितकरणात्तत्रसामर्थ्यं वल्गुमनोहरः पुरुषस्यमनोहरतीति एतादृशो हासः प्रथमंप्रवृत्तः ततःकार्यानन्तरंव्रीडास्वतः प्रवृत्तत्वात् ततःस्ववंचितत्वसूचकदर्शनंतेनापिनिहतः मदनःकन्दर्पः सर्वव्यामोहनार्थं प्रवृत्तः दृष्टिवलंज्ञात्वास्वयंचापमजहात् मत्कार्यमेताएवकरिष्यन्तीतिकिंचापेनेति यत्रमामपिमोहयंति तत्रकथमन्योनमुग्धोभवेदिति एवंकामादप्यधिकाकामपूतनाताएवैताभगवत्स्त्रियः अथापि यस्यभगवतः इन्द्रियंमनः विमथितुंवशीकर्त्तुंकुहकैः कपटैःनशेकुः नसमर्था जाताः दृष्टिमोहितत्वात् युक्तमितिभावः ॥ ३७ ॥

एवमपिस्वयंपराजिताः अशक्ताअपिअज्ञानात् स्वधर्मंभगवति आरोपयन्तीत्याह तमयमिति लोकोभ्रांतः असंगमपिभगवन्तंसंगिनंमन्यते भगवान् संगी विषयसहचरितात्मत्वात् देवदत्तवत् इत्यनुमानेनउपाधिग्रहणसहितेनभगवंतमपि संगिनंमन्यतेतत्रविचारकाणामपिउपाध्यग्रहेहेतुः मनुजंव्यापृण्वानमिति आत्मानंमनुजंयथालोकोमन्यते तथाविशेषचेष्टाकर्त्तारम्अतस्तात्पर्यापरिज्ञानात् अज्ञत्वादिवोधनेविद्यमान उपाधौजीवत्वरूपेतदज्ञानाच्चतथामन्ताअबुधइत्यर्थः ॥ ३८ ॥

ननुबोधनक्रियायाः यथाज्ञानजनकत्वंतथास्वाश्रयस्य निकृष्टत्वसम्पादकत्वमपिलोकेतथैवव्याप्तेः अज्ञानादिकंजीवत्वसमानाधिकरणं दोषजन्यत्वात् मूर्च्छादिवादिति निष्प्रत्यूहानुमानेनजीवत्वमपिज्ञापयति भ्रमजनकत्वेनप्रतारकत्वाच्चजीवत्वंनचजीवत्वंप्रतारणम् अर्थमितिवाच्यंमुक्तजीवानामपि तथाकरणदर्शनात् स्वबन्धभयादेवतत्रतथाकरणंदृश्यते नान्यथेति एवमाशंक्यजीववैलक्षण्यंवदन्विषयसंबंधस्य नजीवत्व वोधकत्वमित्याह एतदीशन मीशस्येति विपरीतमेतदुच्यते विषयसंबंधनजीवत्वमिति भ्रमादेवविषयसंबंधेतथात्वम् यत्वीश्वरत्ववोधकः नियतकार्य्यजनकस्यतत्रकार्य्याजननात् जीवधर्माणामप्रतिवन्धकत्वात् मणिमंत्रादेरप्यलौकिकत्वात् भगवच्छक्तिमत्वमतः प्रकृतिस्थोऽपिविषयेषुरममाणोऽपितद्गुणैः कर्तृवश्यत्वापादकत्वस्वरूपप्रच्युतिदोषाजनकत्वादिभिर्युज्यते नन्वापाततोऽग्निस्पर्शदाहोनजातइति नियतसम्बन्धेऽपिनजायते तथाभगवत्यपिभविष्यतीत्याशंक्याह सदात्मस्थैरिति सर्वाश्रयत्वाद्भगवतः संयुक्तः समवायेनवा सदाआत्मन्येवतेधर्म्माः प्रवर्तंतेतेवहिः स्वाश्रयेस्वकार्य्यंसम्पादयेयुः भगवदाश्रितानभवेयुः भगतोवासर्वाश्रयत्वंधर्मोनभवेत् तथाचयमेवाश्रित्यैव भ्रमात्तदीयत्वेनज्ञाता भवंति तस्यैव संगित्वंवाजीवत्वंवावोधयंति ननियताश्रयाः अन्याश्रयैरेवअन्यत्रदोषजनकत्वं चोरादिषु चलोकेसिद्धम् अत्रदृष्टांतमाह यथाबुद्धिस्तदाश्रयेति महाराजसमीपे शस्त्रपाशादिकंनस्वाश्रये किंचित्करोति अन्यार्थत्वेनैवतस्यसंग्रहात् "श्रियापुष्ट्यागिराकांत्याकीर्त्यातुष्ट्येलयोर्जया विद्ययाविद्ययाशक्त्यामाययाचनिषेवित"मिति विद्याविद्येममतनूइतिच वाक्येभगवदाश्रयत्वेनअमतिरविद्यानिरूपितामतिर्विद्यातत्र प्रतिस्पर्द्धिनीसपत्नीअमतिरविद्यायथाअविद्याभगवतिस्वकार्यंनकरोति तथाएतेऽपिविषया इत्यर्थः "एकस्यैवममांशस्यजीवस्यैव महामते बंधोऽस्याविद्ययानादिर्विद्ययाचतथेतर" इतिवाक्यात् स्वाश्रयदुष्टत्वंसंपादकत्वम् इदानीरमणस्यईश्वरत्ववोधकत्वम् अविद्यावदज्ञानादीनामपिदेवव्यामोहकत्वं दोषनिराकरणार्थंतुसद्धर्मएव अतोदुष्टानांप्रतारणंसद्धर्मएव तस्मात्तिदोषपूर्णगुणो हरिः ॥ ३९ ॥

## सुबोधिनी ।

किंच लोकाभ्रांताभवंत्येवंनियतसम्बद्धाअपिभ्रमन्तइत्याह तमेनिरेइति अबलाःज्ञानजनकक्रियाकरणेअसमर्थाः अतएवमूढाः ज्ञानरहिताः अन्यार्थमन्यंतेतदाहस्त्रैणामिति स्त्रीलम्पटंचकारात्तद्वशमपि तत्रहेतुः रहःअनुव्रतमिति एकान्तेअनुव्रतंयस्ययदैवैकान्तस्थानं तत्रैवभगवान् संनिहितः अतोनिरंतरमेकांतशीलत्वात् स्त्रैणंमनिरे नन्वेवमेवस्यादित्यतआह अप्रमाणविदोभर्त्तुरिति भर्त्तुर्भगवतःप्रमाणंनजानंतीति यथांध्राहस्तिनंमन्यंतेस्पर्शेणसहिचक्षुषैवज्ञेयः तथाभगवच्छास्त्रेणैवभगवान्विज्ञेयः नन्ववस्थाविशेषेणक्रियामात्रेण तथाकरणमपि भर्तृत्वात् अप्रमत्ताचक्षततंतुमेनर्मितिश्रुतेः भगवानेवश्रुत्यर्थप्रतिपादकः अतोभर्तृत्वादेकांतशीलत्वंस्त्रीरक्षार्थंतुभगवां स्तथाकरोति स्त्रीणांतुतदज्ञानं तत्रदृष्टांतमाह ईश्वरंमतयोयथेति यथामतयोदर्शनज्ञानानिभगवतैवप्रवर्तितानिस्वयुक्त्यातमेवान्यथामन्यं तेईश्वरएवनास्तीतिकेचित् अन्येऽपि यज्ञादयएवईश्वरइत्यपरेकर्त्ताकेवलमित्यन्येजीवविशेषएवेतिकेचित् सर्वेषांमेतेषांमूलप्रमाणाज्ञानात् स्वोत्प्रेक्षया तथात्वंतथैवासामपीत्यर्थः ॥ ४० ॥

इतिश्रीभागवत सुबोधिन्यांलक्ष्मणभट्टसुतश्रीवल्लभदीक्षितविरचितायां
प्रथमस्कन्धेएकादशोऽध्यायः ॥ ११ ॥

---

## श्रीविश्वनाथचक्रवर्त्ती ।

स्वमायया योगमाययैव । स्त्रीरत्नसमूहे प्रकाशवाहुल्येन प्रत्येकमेव तिष्ठतीति सः । प्राकृतो यथेत्यनेन तस्य तथा रमणकारणस्य कामस्य रमणस्य च अप्राकृतत्वात् निर्गुणत्वमुक्तम् ॥ ३६ ॥

नन्विन्द्रियैर्विषयान् भुञ्जानस्य तस्य कथमप्राकृतत्वं तत्राह । यासाम् उद्दामः गम्भीरो यो भावः प्रेमा तस्य पिशुनः सूचकोऽमलो वल्गुः सुन्दरो हासो व्रीड़ासहितोऽवलोकश्च ताभ्यां कृष्णविषयकाभ्यां स्वरूपभूतकन्दर्पपीड़ोत्थाभ्यां निहतः अहो एता मच्छराघातं विनैव सस्पृहं कान्तमालोकयन्ते इति विचारयन्नेव तदतिमाधुर्य्यावलोकोत्थविस्मयविवशीकृतः सन् मदनः प्राकृतकन्दर्पस्तन्मोहनार्थमागतोऽपि स्वयं संमुह्य चापम् अजहात् । आसां भ्रूचापाकृष्टानां व्रीड़ावलोकशराणामग्रे किं मे चापेन सशरेणेति तं तत्याज । ताः प्रमदोत्तमाः अपि यस्येन्द्रियं मथितुं स्ववशीकर्त्तुं कुहकैः कपटप्रयुक्तैर्वल्गुहासादिभिर्न शेकुः किन्तु प्रेमप्रयुक्तैः शेकुरिति तासां सम्भ्रसरतित्त्वात् प्रेममयाः काममया अपि कटाक्षादयः सम्भवन्ति । तत्राद्याः भावपिशुनशब्देनोच्यन्ते । द्वितीयाः कुहकशब्देन । तत्राद्यैर्वशीकृतेन्द्रियत्वेऽपि भगवतोऽप्राकृतत्वलक्षणं नैर्गुण्यमेव तस्य प्रेमवश्यत्वात् प्रेमणश्च चिच्छक्तिविलासविशेषत्वात्तन्मयानां कटाक्षादीनाञ्च तदुत्थितस्य कामस्य तत्कारणकस्य रमणस्य च चिन्मयत्वाद्विषयभोगशब्देन वक्तुमशक्यत्वान्मायिकानामेव शब्दस्पर्शादीनां विषयशब्देनाभिधानादिति । द्वितीयैः प्रेमरहितैर्वशीकारासम्भवात् यस्येन्द्रियं विमथितुं कुहकैर्न शेकुरित्युक्तम् । सर्व्वथैव तदिन्द्रियविमथनाभावे व्याख्याते रेमे स्त्रीरत्नकूटस्थो भगवान् प्राकृतो यथेत्यनेन व्यञ्जिता रमणासक्तिश्च नोपपद्यते । किञ्चात्र कादाचित्कैस्तदीयकाममयकटाक्षादिभिर्वशीकाराभावेऽपि तेषां प्राकृतत्वं न वाच्यं पट्टमहिषीणां सर्व्वासां चिच्छक्तित्वात् तदीयेषु कटाक्षादिषु प्राकृतत्वप्रवेशाशक्तेः । न च स्वरूपभूतत्वेऽपि चिच्छक्तिसामान्यस्यैव वशो भगवान् किन्तु चिच्छक्तिविशेषस्य प्रेम्ण एवेति सिद्धान्तादिति सर्व्वमनवद्यम् ॥ ३७ ॥

एवं वस्तुतो विषयसङ्गरहितमपि तम् अनभिज्ञो वहिर्दर्शी लोको विषयसङ्गिनमेव मन्यते इत्याह तमयमिति । आत्मौपम्येन स्वसादृश्येन । तत्र हेतुर्व्यापृणानं व्याप्रियमाणं सत्यभामायामासक्तेरेव पारिजातार्थव्रह्मव्यापारदर्शनादित्यर्थः । अतोऽबुधः सदसद्विवेचनशून्यः नीलमणिं काचमिव प्रेमाणमेव विषयासक्तिं निश्चिनोतीत्यर्थः ॥ ३८ ॥

ननु भवतु नाम तासां चिच्छक्तित्वात् तद्रमणादेर्निर्गुणत्वम् । तदपि प्राकृतप्रपञ्चमध्ये प्राकृते एव यदुवंशे अवतीर्णस्य प्राकृतानामेव जरासन्धादीनामसुराणां रूपशब्दादीन् विषयान् स्वचक्षुःश्रोत्रादीन्द्रियैराददानस्य गुणसंगः खलु दुर्वार एव इत्यत आह एतदिति । ईशस्य ईशनमैश्वर्यं नामैतदिति यत् प्रकृतौ स्थितोऽपि तस्या गुणैः न युज्यते । गुणैः कीदृशैः आत्मस्थैः । अयमर्थः—स्वयं गुणेषु तिष्ठति गुणा अपि तस्मिंस्तिष्ठन्ति तदपि तस्य गुणैरसम्पर्क इति वस्तुतो भगवत एव सर्वप्रपंचस्याधिष्ठानत्वे चाधिष्ठातृत्वे चापि निर्गुणत्वमेवोक्तम् । "साक्षी चेता केवलो निर्गुणश्चे"ति "सत्त्वादयो न सन्तीशे यत्र च प्राकृता गुणा इति हरिर्हि निर्गुणः साक्षात् पुरुषः प्रकृतेः पर" इत्यादि श्रुतिस्मृतिभिः । यथा तदाश्रया स एवाश्रयो विषयो यस्याः सा तत्स्मरणवती परमभागवतानां वुद्धिः प्रकृतिस्थापि संतुष्टिस्तुतिनिन्दादिषु तृप्तिक्षुत्पिपासा पीड़ादिषु जागरस्वप्नसुषुप्तिषु सत्त्वादिगुणेषु स्थितापि तेष्वौदासीन्यात् न तैर्युज्यते इति । तथैव प्राकृतान् विषयान् आददानस्यापि तस्य तेष्वासक्तिशून्यत्वात् न तैर्योगः ॥ ३९ ॥

ननु तर्हि यासु तस्य सदैवासक्तिस्ताः पट्टमहिष्य एवाभिज्ञास्तस्य तत्त्वं सामस्त्येन जानन्ति । मैवम् । रसपुष्टिसिद्धयर्थं तासां स्वरूपभूतानामपि योगमायया भगवतैव स्वसम्पूर्णज्ञानावरणात् ता अपि तं न जानन्तीत्याह तमिति । तं स्वभर्त्तारं रहोऽनुव्रतं स्वप्रेमवश्यमपि स्त्रैणं स्त्रीमात्रभाववद्यं मेनिरे । यतो मूढा भगवतैवादिरसपुष्ट्यर्थं मूढीकृताः । अतः समुद्रे विहरन्तोऽपि यथा समुद्रस्येयत्तां न जानन्ति तथा भर्त्तुः प्रमाणं न विदन्ति । मतयः शास्त्रकृतां वुद्धिवृत्तयः ईश्वरनिरूपणे प्रवृत्ताः जगदुपादानत्वमीश्वरत्वं जगन्नियन्तृत्वं तथा जगन्निमित्तत्वमीश्वरत्वमितिमतवैविध्यात् किंचित् किंचिज्जानंत्योऽपि वस्तुतो मूढा एवेति । गाश्च ( सं ) पर्य्यचरन् प्रेमणोत्याद्युक्तस्तासां प्रेमवत्त्वाद्भगवतश्च प्रेमवश्यत्वात् तासां प्राकृतत्वं न व्याख्येयम् ॥ ४० ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
एकादशोऽपि प्रथमे सङ्गतः सङ्गतः सताम् ॥ ११ ॥

---

सिद्धांतप्रदीपः।

सएवोक्तलीलः स्वमायया स्वकीयेषु नरलोकस्थभक्तेषु मायातयाअस्मिन्प्राकृतेनरलोकेऽवतीर्णः अतएवस्त्रियएवरत्नानितेषांकूटः समूहस्तत्रस्थः स्वयमप्राकृतएवप्राकृतवत् रेमेचिक्रीडेप्राकृतजनस्ययथार्हेऽस्यादिवश्यस्तथायंकृष्णइति प्रतीतिविषयोऽभूदितिफलितोऽर्थः ॥ ३६ ॥

भगवतोऽसंगस्यप्राकृतजनप्रतीत्यासंगित्वमाह उद्दामेतिचतुर्भिः यासामुद्दामभावस्यागाधाभिप्रायस्यसूचकेन अमलेनवल्गुनासुंदरेणहासेनलीलावलोकेनच अमदनोभवोऽपिनिहतोऽभिभूतः संमुह्यमोहंप्राप्यचापमजह्यात् पिनाकंतत्याज ताः प्रमदोत्तमाः कुहकैर्वचनाप्रकारैर्यस्येंद्रियंविमथितुंनशेकुस्तमित्युत्तरेणान्वयः ॥ ३७ ॥

अयंप्राकृतलोकः यतोऽबुधः कृष्णमनभिज्ञोऽतस्तमसंगिनमपि श्रीकृष्णंव्यापृयवानं व्यप्रियमाणं संगिनंमनुजंमनुष्यं चात्मौपम्येनमन्यते ॥ ३८ ॥

प्रकृतिस्थोऽपिप्रकृतौ स्थितोऽपिव्याप्तोऽपि प्राकृतैर्गुणैर्नयुज्यतेनस्पृष्टोभवति तत्कार्य्यभूतैः रागद्वेषादिभिर्नयुज्यतेइतिकिमुवक्तव्यम् एतदीशस्येशनमीशत्वम् तत्रदृष्टान्तः यथात्मस्थैः परमात्मस्थैः कर्तृत्वादिभिर्बुद्धिर्नयुज्यते अन्यथाबुद्धेःकरणस्यैवकर्तृत्वभोक्तृत्वेबंधस्वेबंधमोक्षार्हतास्यात् ॥ ३९ ॥

अवलास्तुयासांयथामतेयाबुद्धयस्तदनुसारेण तास्ताः मेनिरेइत्यन्वयः तत्रश्रीरुक्मिण्याद्याईश्वरंकाश्चिद्रहोऽनुव्रतमेकांतेनुसृतंस्वचस्त्रीगामिनं धार्मिकंकाश्चित्तुमूढाभर्तुः प्रमाणमजानंत्यः स्त्रैणमित्येवंदशमेस्कंधेस्फुटीभविष्यति ॥ ४० ॥

इतिश्रीभगवन्निंबार्कपादपद्मार्चितशुकसुधीविरचितेश्रीमद्भागवतेसिद्धांतप्रदीपे
प्रथमस्कन्धीयेएकादशाध्यायार्थप्रकाशः ॥११॥

---

भाषाटीका।

ये हमारे वोई भगवान हैं। जो अपनी माया के द्वारा इस मनुष्य लोक में अवतीर्ण होकर स्त्री रत्न समुदायके मध्य में रहकर अत्यंत सामान्य मनुष्य के समान क्रीडा करते हैं ॥ ३६ ॥

जिनके गंभीर भाव के सूचक निर्मल मनोहर हसन और लज्जा सहित अवलोकन, से निहत कंदर्प ने भी मोहित होकर अपना धनुष छोडदिया वे प्रमदोत्तमा भी अपने कुहुक मय विला सों से जिनको मनके क्षुभित करने को समर्थ न हुई। अथवा अमदन शिवने भी जिनके विलासों से मोहित होकर अपना पिनाक ( धनुष ) छोडदिया ऐसी स्त्रियें भी जिन के मन के क्षोभ करने को समर्थ न हुई ॥ ३७ ॥

उन श्रीकृष्ण को भी यह सब प्राकृत लोक अपने समान संगबाले मनुष्य मानते हैं। क्योंकि कृष्ण इसी भांति व्यापार करते हैं और ये लोक सब अबुध हैं ॥ ३८ ॥

यही ईश्वर की ईश्वरता है।कि सदा प्रकृस्थित होकर भी प्रकृति के गुणों से युक्त नहीं होते हैं असङ्ग रहते हैं। जैसे आत्मा के आश्रय होकर भी बुद्धि आत्मा के आनन्दादि गुणों से युक्त नहीं होती। ( यद्वा ) आत्मा श्रया बुद्धि जैसे आत्मा के सत्ता प्रकाशादि गुणों से युक्त होती है ईश्वर एसे प्रकृति के गुणों से युक्त नहीं होता है ( यह वैधर्म्म दृष्टान्त है ) ( अथवा ) असदात्मा देहस्थ गुणों से जैसे बुद्धि और जीव युक्त है ईश्वर एसे प्रकृति के गुण सुख दुःखादिकों से युक्त नहीं होते हैं - यहीं उनकी ईश्वरता है ॥ ३९ ॥

( सामान्य लोगों की क्या बात है ) उनकी स्त्रियें भी मूढ, उनको स्त्रैण ( आत्मवश्य ) और एकान्त में अपना अनुगत मानतीं थीं वे भी अपने भर्त्ता का प्रमाण ( अर्थात् तत्व ) नहीं जानती थीं। जैसे अहंमति जीवको अपना आधीन मानती हैं ॥ ४० ॥

प्रथमस्कंध का एकादशअध्याय समाप्त।

---:*:---

## द्वादशोऽध्यायः।

—:*:—

शौनक उवाच। अश्वत्थाम्नोपसृष्टेन ब्रह्मशीर्ष्णोरुतेजसा।
उत्तराया हतो गर्भ्भ ईशेनाजीवितः पुनः॥ १॥
तस्य जन्म महाबुद्धेः कर्म्माणि च महात्मनः।
निधनञ्च यथैवासीत् स प्रेत्य गतवान् यथा॥ २॥
तदिदं श्रोतुमिच्छामो गदितुं यदि मन्यसे।
ब्रूहि नः श्रद्दधानानां यस्य ज्ञानमदाच्छुकः॥ ३॥

सूत उवाच। अपीपलद्धर्म्मराजः पितृवद्रञ्जयन् प्रजाः।
निस्पृहः सर्व्वकामेभ्यः कृष्णपादानुसेवया॥ ४॥

### श्रीधरस्वामी।

पूर्व्वोक्तं यत्प्रसङ्गाय द्रौणिदण्डादि विस्तरात्।
द्वादशे तु तदेवाथ परीक्षिज्जन्म उच्यते॥ ०॥

परीक्षितोऽथ राजर्षेजन्मकर्म्मेत्यादि प्रतिज्ञाय पाण्डवानां राज्यस्थितिरूपोद्घातरूपा सप्रसङ्गं सप्तमाध्यायमारभ्य निरूपिता। इदानीमौपोद्घातिकमुक्त्वानुवादपूर्व्वकं पृच्छति अश्वत्थाम्नेति। उपसृष्टेन विसृष्टेन॥ १॥
तस्य जन्म इत्यादेर्ब्रूहीत्युत्तरेणान्वयः। स परीक्षित् प्रेत्य देहं त्यक्त्वा॥ २॥
प्रार्थये न त्वाज्ञापयामीत्याह। गदितुं यदि मन्यसे अनुग्रहेण तर्हि ब्रूहीति। यस्य ज्ञानमदाच्छुक इति श्रवणेच्छायां कारणम्॥ ३॥
निस्पृहस्यापि राज्ञः श्रीकृष्णानुग्रहात् तादृक् पौत्रः समजनीति वक्तुं तस्य श्रीकृष्णे भक्त्युद्रेकमाह अपीपलदिति त्रिभिः। पितृवत् अपीपलत् पालयामास॥ ४॥

—————

### दीपनी।

परीक्षितोऽथेति एतत्स्कन्धीयसप्तमाध्यायस्य द्वादशश्लोकः॥ १—३०॥

—————

### श्रीवीरराघवः।

यद्यपिपरीक्षिज्जन्मकर्मादिकं पुरस्तादेवपृष्टंयद्यपिचतद्वक्तुमेवतदुपोद्घातरूपोऽयंवचःक्रमःकिमकार्षीत्ततइति प्रकृतप्रश्नस्योत्तरंचाश्रुतंकथं चांतरापुनस्तत्प्रश्नानुपपत्तिः तथापिकिमकार्षीत्ततइतिपृष्टस्यराज्यसाशनानंतरभाविनोयुधिष्ठिरवृत्तांतस्यपरीक्षिज्जन्मानंतरमेवतच्छुश्रूषुस्तावत्स्वयमेवावृणोद्भर्भैवैरास्त्याः कुरुतंतवइतिप्रक्रम्यापरिसमापितंसावशेषंपृच्छतिशौनकः अश्वत्थाम्नेतिअश्वत्थाम्नोपयुक्तेनप्रयुक्तेनउर्वधिकं दुस्सहंप्रभूतंचतेजोयस्यतेनब्रह्मशीर्ष्णाब्रह्मशिरोनामकेनास्त्रेण तावदुत्तरायागर्भोहतः ततः पुनरीशेनकृष्णेनाजीवितः इत्युक्तानुवादः॥ १॥
ततउपरितनंतस्योत्तरातनयस्यमहात्मनः यज्जन्मादितदिदं हेमहाबुद्धे! श्रोतुमिच्छामिनिधनंमरणंयथैवासीत्प्रेत्यमृत्वायथागतवान्यांगतिप्राप्तवान्तादिदामित्यन्वयः॥ २॥
यदिगदितुंमन्यसेवक्तुमिष्टंयोग्यं च मन्यसेचेत्तर्हिश्रद्दधानानांनोऽस्माकंब्रूहि कुतोवस्तज्जन्मादिशुश्रूषाश्रद्धाचभूवेत्यतस्तंविशिनष्टियस्यपरीक्षितः शुकोज्ञानंपरमात्मयाथात्म्यज्ञानमदादुपदिष्टवान्महाभागवतत्वात्तज्जन्मादिशुश्रूषानः समभवदितिभावः अत्रजन्मैवप्राधान्येनपृच्छ्यते तस्यकर्मादिकंतुयुधिष्ठिरादिवृत्तांतानंतरकालिकत्वात्तच्छ्रवणानंतरमेवाविशेषतः प्रष्टव्यमपिजन्मकालिकजातकद्वाराचामान्यतोबुभुत्सुनाजन्मनासहोपात्तम् अतएवोत्तरेऽपिजातद्वारैवतत्कर्मादिकंप्रदर्श्यकइत्यवगंतव्यम्॥ ३॥
परीक्षितोजन्मप्रकारंवक्तुंतावत्तादात्मिकयुधिष्ठिरावस्थानप्रकारमाह अपीपलदितित्रिभिः अपीपलदपालयत्कथंभूतः कृष्णस्यपादयोरनुसेवयाऽनुध्यानेनहेतुनासर्वेभ्यः निर्गतास्पृहायस्यतथाभूतः कृष्णपादानुसेवकत्वान्निस्पृहः सन्नित्यर्थः॥ ४॥

—————

श्रीविजयध्वजः ।

वैराग्यप्रकारोद्दरेसंकानुकंपित्वंचास्मिन्नध्यायेप्रतिपाद्यते उपलेभेऽभिधावंतीमुत्तरामित्यादि श्रुतानुवादपूर्वकंपरीक्षिज्जन्मादिप्रश्नानि पृच्छतिशौनकइत्याह अश्वत्थाम्नेत्यादिना उरुतेजसाश्वत्थाम्नाविसृष्टेनब्रह्मास्त्रेणउत्तरायाइतोगर्भः पुनरीशेनोज्जीवितइत्येकान्वयः ॥१॥
मरणंनिधनं यथाकथं प्रेत्यमृत्वागतवान्कंलोकामितिशेषः ॥ २ ॥
वक्तुंवायदिमन्यसइत्यनेनवक्तव्यस्यातिगोप्यत्वंसूचयति ॥ ३ ॥
अपीपलदपरक्षत्निस्पृहः सर्वकामेभ्यइत्यनेनकृष्णपादसेवाया अतिस्वादुत्वंदर्शितंकामानातिक्तत्वंच ॥ ४ ॥

---

क्रमसन्दर्भः ।

०॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥

---

सुबोधिनी ।

एवमेकाग्रसिद्ध्यर्थंसर्वकार्यंनिरूपितम् अधुनाश्रोतृदेहस्यरक्षणंविनिरूप्यते ॥ १ ॥ सर्वलक्षणसंपन्नः सर्वदोषविवर्जितः बीजसंस्कारसहितःश्रोताभागवतेमतः ॥ २ ॥ व्यवहितत्वाच्छौनकः पूर्वकथांस्मारयाति अश्वत्थाम्नोपसृष्टेनेति द्वाक्यानांसमभिव्यवहारात् अस्माभिरेवनावगतम् अश्वत्थाम्नोब्राह्मणोत्तमत्वात् तेननिरूपितस्यचब्रह्मास्त्रस्यचअमोघत्वात् उत्तरायागर्भोहतः पश्चादीशेनआजीवितः स्वसामर्थ्यात् पूर्वमपिदुर्विभाव्याभिः स्वशक्तिभिः बीजेप्रवेश्यआजीवितवान् इदानीमपिदग्धंबीजं पुनस्तंप्रवेश्यआजीवयतीतिपुनःशब्दार्थः ॥ १ ॥
अनुवादांशमुक्त्वाश्रोतव्यांशमाह तस्यजन्मेति महाबुद्धेरिति पूर्वमेवतस्य ज्ञानंसिद्धंमहात्मनइति शुभानिकर्माणि जन्मकर्मणोवदा तस्य मृत्युसंभावनाभावात् गर्भएवचमृत्योर्निवर्त्तितत्वात् केनप्रकारेण निधनमितिप्रश्नः किंच यथापूर्वजन्मनिज्ञानादिषु सिद्धेष्वपिपुत देहसंबंधोजातः एवमुत्तरत्रापि भविष्यतीत्याशंक्यपृच्छति सप्रेत्यगतवान् यथेति प्रेत्यशरीरंत्यक्त्वायथेति प्रष्टव्यार्थः ॥ २ ॥
तत्पूर्वोक्तंत्रयमुत्पत्तिस्थितिप्रलयाख्यमिदंचलोकगमनंशास्त्रसंदेहात् श्रोतुमिच्छामिबहुकालनिर्बंधात् क्लेशोऽपियदिसर्वथैतद्वक्तव्यमिति मन्यसे तदाश्रद्धायुक्तावयं श्रोतुमिच्छामः इच्छयाकथनेभगवच्चरित्रमत्रास्तीति अवगम्यते अतएवमाह गदितुंयदिमन्यसइति अन्यथाकथात्वेऽपिभगवदीयत्वाच्च अन्यथाशुकस्य ज्ञानदानं नसंभवेत् अतस्तस्य चरित्रंकथयेत्यर्थः ॥ ३ ॥
जन्मनिरूपणार्थं वंशकालदेशानामुत्तमत्वमाहत्रिभिः अपीपलदिति अपालयदित्यर्थः स्वधर्मविष्णुभक्तिभ्यांमहान् सर्वोनचान्यथा विषयेषुचवैतृष्ण्यंसेवार्थंभक्तिसूचकं तत्रराज्ञः प्रजापालनंधर्मः पितृवद्रंजयन् प्रजाइतिज्ञानसहितत्वमुक्तम् अन्यथाभगदृष्टचभावेरंजनं नस्यात् निःस्पृहइतिनैरपेक्ष्यंकृष्णपादानुसेवाशास्त्रानुसारेण फलजननात् सम्यक्कृतेति ज्ञायतेअन्येनराज्ञउत्तमत्वात् तद्राज्यकालः वंशश्चोत्तमइतिराजधर्मएव प्रजाःकुर्वतीति तद्राज्येसर्वत्रवैष्णवसेवैवप्रसृताअतोदेशउत्तमः ज्ञानभक्तिकर्मणांधर्माणांतस्मिन्कालेविद्यमानत्वात् कालोत्कर्षः ॥ ४ ॥

---

श्रीविश्वनाथचक्रवर्त्ती ।

कृत्वा जन्मोत्सवं राजा पौत्रस्य श्रीपरिक्षितः ।
द्वादशे भावि तद्वृत्तं विप्रैरुक्तमुपाशृणोत् ॥
नैव श्रुतचरो भक्तो राजा या तावदीदृशः ।
कृष्णं ददर्श यो गर्भे यश्च कालमदण्डयत् ॥ ० ॥

परीक्षितो जन्म वक्ष्ये इति प्रतिज्ञायं द्रौणयस्त्रक्षेपगर्भरक्षाकुन्तीस्तवभीष्मनिर्याणभगवद्द्वारकाप्रवेशपट्टमहिषीरमणादिकथामाधुर्येषु तत्प्रसङ्गोत्थितेषु मज्जन्तं सूतं तदेव परीक्षिज्जन्म शुश्रूषुः शौनकः पुनर्विशेषतः पृच्छति अश्वत्थाम्नेति । उपसृष्टेन निक्षिप्तेन ॥ १ ॥ २ ॥ ३ ॥
तादृशपौत्रप्राप्तौ राज्ञः कृष्णानुराग एव कारणमित्यभ्यूहयन् ( अभ्यूदयं ) तमेवाह त्रिभिः । अपीपलत् पालयामास ॥ ४ ॥ ५ ॥

---

सिद्धांतप्रदीपः ।

अभिमन्युसुतंसूतप्राहुर्भागवतोत्तमं तस्यजन्ममहाश्चर्यकर्माणिचगृणीहिनः इतिप्रश्नप्रतिवचनार्थंपरीक्षतोथराजर्षेर्जन्मकर्मविलापनम् संस्थांचपांडुपुत्राणांवक्ष्येकृष्णकथोदयमिति सूतेनप्रतिज्ञातंतदुपोद्घातरूपांतत्पितामहराज्यस्थितिं श्रुत्वाकानुवादपूर्वकंतदेवपृच्छति अश्वत्थाम्नेति ब्रह्मशिरोनामकेनास्त्रेण उपसृष्टेन ईशेनश्रीकृष्णेन ॥ १ ॥
महतीबुद्धिर्यस्यसतथातस्यमहात्मनोजन्मेत्यादेर्गृहीत्युसरेणान्वयः सपरीक्षत् प्रेत्यशरीरंविहाययथागतवान् ॥ २ ॥
तद्विदंपूर्वोक्तम् ॥ ३ ॥

सम्पदः क्रतवो लोका महिषी भ्रातरो मही।
जम्बुद्वीपाधिपत्यञ्च यशश्च त्रिदिवं गतम्॥ ५॥
किं ते कामाः सुरस्पार्हा मुकुन्दमनसो द्विज!
अधिजह्रुर्मुदं राज्ञः क्षुधितस्य यथेतरे॥ ६॥
मातुर्गर्भगतो वीरः स तदा भृगुनन्दन!
ददर्श पुरुषं कञ्चित् दह्यमानोऽस्त्रतेजसा॥ ७॥
अङ्गुष्ठमात्रममलं स्फुरत्पुरटमौलिनम्।
अपीच्यदर्शनं श्यामं तड़िद्वाससमच्युतम्॥ ८॥

सिद्धांतप्रदीपः।

श्रीकृष्णोभक्त्यैवकृतार्थानांपाण्डवानांसर्वत्रनिरपेक्षाणां कृष्णेच्छयाभागवतः पौत्रोजातइतिवक्ष्यन् पूर्वंश्रीकृष्णोराजर्षेः पाण्डवश्रेष्ठस्यभक्त्युद्रेकमाह अपीपलद्क्षितितित्रिभिः कृष्णपादानुसेवया कृष्णपादयोरनुवृत्त्यासर्वेभ्यः ऐहिकामुष्मिकेभ्यः कामेभ्योनिस्पृहोगतस्पृहः पितृवदपत्यस्थानीयाः प्रजाःअपीपलदपालयत्॥ ४॥

---

भाषाटीका।

शौनकवोले अश्वत्थामाके चलाये हुये अस्त्रसे उत्तरा का गर्भ नष्ट हुआ था ईश्वरने फिर जिवाय लिया॥ १॥

उस महा बुद्धिमान् महात्मा परीक्षित का जन्म कर्म अंतर्धान होके परलोक जाना जैसा हुआ॥ २॥

यह वृत्तांत हम सुनने चाहते हैं यदि आप कहना उचित समुझैं तो जिसको शुकदेवजी ने ज्ञान दिया है उनकी कथा हम श्रद्धालुओं से कहिये॥ ३॥

सूतजीवोले धर्मराज युधिष्ठिर पिता की नाईं प्रजाका संतोष करते हुये श्रीकृष्ण चरण सेवासे सव कामों से निःस्पृह होकर प्रजाओं का पालन करते भये॥ ४॥

---

श्रीधरस्वामी।

क्रतवस्तदुपार्जिता लोकाश्च॥ ५॥

सुरस्पार्हाः सुराणां स्पृहणीयाः ते सम्पदादयः कामा विषया राज्ञः किं मुदं प्रीतिमधिजह्रुः न कृतवन्त इत्यर्थः। अत्र हेतुः मुकुन्दे एव मनो यस्येति। क्षुधितस्य अन्नैकमनसः यथा इतरे स्रक्चन्दनादयः प्रीतिं न कुर्वंति तद्वत्॥ ६॥

प्रस्तुतमाह मातुरिति। स परीक्षित्॥ ७॥

पुरटं सुवर्णं स्फुरन् पुरटमौलिर्यस्यास्ति तम्। व्रीह्यादिभ्यश्चेति इनिप्रत्ययः। अपीच्यमतिसुन्दरं दृश्यते इति दर्शनं रूपं यस्य तड़िद्वत् वाससी यस्य तड़िद्वाससमिति श्याममिति च पदाभ्यां विद्युद्भूषितमेघोपमा सूचिता। अच्युतमविकारम्॥ ८॥

---

श्रीवीरराघव।

तत्सेवयास्पृहाभावहेतुत्वमेवसदृष्टांतमाहसंपदइतिद्वाभ्यांयथाक्षुधितस्यअशनयायुक्तस्यपुंसइतरेस्रक्चंदनादयोनमुदमावहंति किंत्वन्नमेवतथाहेद्विज! येसंपदादयः तेतेकामाःसुरस्पार्हाःसुराणामपिस्पृहणीयाअपिमुकुंदएवमनोयस्यतस्यराज्ञोयुधिष्ठिरस्यमुदमधिजह्रुःकिंसंपादितवंतः नसंपादितवंतः एवंत्यर्थः तत्रसंपदोभोग्यभोगोपकरणादिसमृद्धयः स्वर्गादिसुखसाधनान्यश्वमेधादीनिलोकाः करप्रदाजनाः महिष्यः पत्न्यः भ्रातरोदिग्विजयिनोभीमादयः महानिष्कंटकापृथ्वीत्रिदिवंगतंत्रिदिवपर्यंतव्याप्तंयशश्च॥ ५॥ ६॥

अथपरिक्षितोजन्मवक्तुंतावत्तस्यमातृउदरावस्थानदशामाह मातुरितिसार्द्धैः पंचभिः हे भृगुनन्दन! वीरः उत्तरातनयः मातुर्गर्भगतः उदरगतः ब्रह्मास्त्रतेसादह्यमानः कंचित्पुरुषंददर्श॥ ७॥

---

श्रीवीरराघवः ।

कथंभूतमंगुष्ठपरिमितामात्राउन्नाहोयस्य नविद्यतेमलंदेहजंयस्यस्फुरत् पुरटोहिरण्मयोमौलिः किरीटंयस्यअपीच्यंहृद्यपुष्टांगतयास्पृहणीयंदर्शनंयस्यअग्नितापननिर्मलीकृतकांचनमयेकुंडलेयस्यक्षतजेरक्तेअक्षिणीयस्यगदापाणीयस्यतम् उल्कस्यांगारस्येवाभायस्यास्तांगदांमुहुर्मुहुः परितः सर्वतः दिशांभ्रामयंतम् आत्मानंधारकम् ॥ ८ ॥ ९ ॥

---

श्रीविजयध्वजः ।

एतदेवरूपमाह संपदइति ॥ ५ ॥

कामातुरस्यार्थाः विषयाः विरक्तस्यमुकुंदमनसोयुधिष्ठिरस्यार्थाः किं पुरुषार्थत्वेननार्थाः । कुतइतितत्राह नेति यथाक्षुधितस्येतरेवीणादयोनतृप्तिंकुर्वंति तथांऽतेदुःखहेतुत्वात्तेमुदंनाकुर्वन्नित्यर्थः । अनेनवैराग्यातिशयोमोक्षेसुखातिशयोदर्शितः ॥ ६ ॥

कंचिल्लौकिकविलक्षणम् ॥ ७ ॥

स्फुरत्पुरटमौलिनंदेदीप्यमानस्वर्णमुकुटम् अपीच्यदर्शनंषोडशवर्षवदृश्यमानंमेघश्यामम् ॥ ८ ॥

---

सुवोधिनी ।

ननुवैराग्यंकुत्रोपयुज्यते तस्यचराज्यस्यचविरुद्धत्वात् इत्याशंक्यनसाधनत्वेनात्रवैराग्यं किंतुभक्तेरानुषंगिकमिति तन्निरूपयाति संपदइति राज्यधनाश्वादीनांसम्पत्तयः आधिक्यंक्रतवोराजसूयादयः विप्रा ! इतिसम्बोधनम् अस्मिन्नर्थेसंवादार्थंमहिषीद्रौपदीभ्रातरोभीमाद्यः महीसर्वापिराजत्वाच्छास्त्रतोमहीपौरुषेनाधिपत्यमितिभेदः अर्ज्जुनेनेंद्रोऽपिजितइतित्रिदिवंगतंयशः एतेभगवत्कृपया स्वतः सिद्धाः ॥ ५ ॥

अतएव अकामाः हृदयेनागताइतितइत्युक्तंवस्तुतः एतेविषयादेवयोग्याः मनुष्यस्यकाम्याभवंति नतुविष्णुभक्तस्ययस्तुवहुकामयते वहुव्याप्तंभवति तस्यनक्षुद्रेषुकामनाप्राप्तेष्वपि मुकुन्देमनोयस्यमोक्षएवयस्यमनः तस्याप्येतद्भवति किमुतद्दातरिद्विजाइतिपूर्ववत् सम्बोधनम् किमुदमधिजह्रुः अपितुनकृतवंतएवेत्यर्थः विषयाणांस्वधर्माजननेदृष्टान्तमाह क्षुधितस्येतिइतरेऽस्त्र्यादयः ॥ ६ ॥

एवंराज्ञोमाहात्म्यमुक्त्वातद्वंशेस्वभावत एवायमेतादृशइतिविषयमाहात्म्यमेवाह मातुर्गर्भगतइति मातुरित्यसमासात् गृहइवभिन्नतयास्तुतिरुच्यते अतोगर्भगतक्लेशोनिवारितः पूर्वमेवज्ञानादिसहितः केवलंगर्भप्राप्तः वीरइतिदाम्नानवद्धः पराक्रमसहितएवतिष्ठति भगवतः साक्षात्परब्रह्मणः इष्ट्यादेवैदाम्नावंधनस्याकृतत्वात् अत्रदेवावैराजन्याइतिश्रुत्यर्थोऽनुसंधेयः वीरःसइतिसम्बधः अत्रविश्वासार्थंसम्बोधनम् तदादह्यमानएवब्रह्मास्त्रतेजसावीरत्वात्तदवगणय्यकंचित्पुरुषं ददर्शभगवान् सर्वकार्य्यनिष्पाद्यसर्वदैत्याप्रवेशायसर्वतत्त्वसहितः तद्रक्षार्थमुदरेप्रविष्टः परिभ्रमतिस्वोपकारज्ञापनायतत्प्रत्यात्मानं प्रदर्शितवान्वेदप्रसिद्धानियानिरूपाणि तत्रयत्प्रथमंभावयितुमप्यशक्यंतेनरूपेणप्रकट ! तितएः स्वधर्मसहितोददर्श "अतप्ततनुर्नतदाप्नोती"तिश्रुतेःकंचिदितिविशेषाकारेणानिर्वचनीयम् ॥ ७ ॥

तद्रूपमनुवर्णयति अंगुष्ठमात्रमिति "अंगुष्ठमात्रःपुरुषोऽगुष्ठंचसमाश्रितः ईशःसर्वस्यजगतः प्रभुःप्रीणातिविश्वभुगि"तिश्रुतेः ब्रह्मत्वादेव अमलमतिस्वच्छंगर्भेहिविद्यमानस्यतन्मलसम्बन्धः सम्भवतितद्व्यावृत्त्यर्थमुक्तंस्फुरत्पुरटमौलिनमिति दाहोत्तीर्णसुवर्णमुकुटयुक्तम् अनेनैश्वर्यंज्ञापितम् अपीच्यदर्शनम् अपीच्यरूपंदर्शनंयस्यप्रियः स्त्रीणामपीच्यइतिश्रुतेः सौंदर्यदर्शनस्यनिकषत्वात् अपीच्यवत् दर्शनंयस्येतिसर्वसुन्दरः अनेनलक्ष्म्याश्रयत्वं प्रतिपादितंश्यामामितिवैष्णवसिद्धान्तसिद्धम् अनेनभक्ताश्रयत्वं निरूपितंतडिद्वाससंस्थिरविद्युन्निभवस्त्रम् अनेनपूर्वविशेषणसहितेनसर्वकामवर्षत्वंसूचितम् अच्युतंपरिभ्रमणेऽपिसर्वदेशसंवन्धसहितं शंखचक्रादिसहितंवाअनेन रक्षायांसामर्थ्यंज्ञापितम् ॥ ८ ॥

---

श्रीविश्वनाथचक्रवर्त्ती ।

सम्पदादयस्तथा सुराणामपि स्पृहैव स्पार्हः स्वार्थे अण् स येषु ते सुरस्पार्हाः कामाः भोगाः राज्ञः किं मुदम् अधिजह्रुर्नैव कृतवन्त इत्यर्थः । तत्र हेतुर्मुकुन्दमनस इति । इतरे स्रक्चन्दनादयः ॥ ६ ॥

प्रस्तुतमाह मातुर्गर्भगतोऽपि वीर इति स्वाभाविकवीरत्वेनैवास्त्रतेजसस्तस्मात् ( न ) अविभ्यदित्यर्थः । ददर्शेति तन्मनोनयनाभ्यां भगवद्रूपे एव स्वविषयग्रहणारम्भः प्रथमतः कृत इति भावः ॥ ७ ॥

अङ्गुष्ठमात्रमिति आत्मनः सर्वतो दिक्षुगर्भे तावन्मात्रस्यैवावकाशस्य स्थितत्वात् तत्प्रमाणमेव भगवत्युपचरितम् । वस्तुतस्तु तावत्यपि देशेऽचिन्त्यशक्त्या यथावत्प्रमाणमेव भगवन्तं ददर्श न त्वन्यथा । गर्भे दृष्टमनुध्यायन् परीक्षेत नरेष्विह इत्युपरिष्टादुक्तेर्नरलोके तत्परीक्षणान्यथानुपपत्तेः । अतएव अपीच्यमन्यूनातिरिक्तत्वादतिसुन्दरं दृश्यत इति दर्शनं रूपं यस्य तम् । पुरटमौलिनमिति श्रीहाविद्यादितिः । श्यामं तडिद्वाससमिति पद्माभ्यां विद्युद्भूषितमेघो ब्रह्मास्त्रदावानलदह्यमानपरीक्षित्कलभत्राणाय सहसैवोत्तराकुक्षिनभसि प्रादुरभूदिति द्योतितम् ॥ ८ ॥

---

श्रीमद्दीर्घचतुर्व्वाहुं तप्तकाञ्चनकुण्डलम् ।
क्षतजाक्षं गदापाणिमात्मनः सर्व्वतो दिशम् ।
परिभ्रमन्तमुल्काभां भ्रामयन्तं गदां मुहुः ॥ ९ ॥
अस्त्रतेजः स्वगदया नीहारमिव गोपतिः ।
विधमन्तं सन्निकर्षे पर्य्यैक्षत क इत्यसौ ॥ १० ॥
विधूय तदमेयात्मा भगवान् धर्म्मगुब्विभुः ।
मिषतो दशमास्यस्य तत्रैवान्तर्दधे हरिः ॥ ११ ॥
ततः सर्व्वगुणोदर्के सानुकूलग्रहोदये ।
जज्ञे वंशधरः पाण्डोर्भूयः पाण्डुरिवौजसा ॥ १२ ॥

### सिद्धांतप्रदीप ।

तेसम्पदादयोमुदमाधिजह्नुः सम्पादितवन्तः किंनैवक्षुधितस्येतरेस्रक्चन्दनादयोयथा ॥ ६ ॥

अथभगवद्दर्शनपूर्वकंपरीक्षिज्जन्माहमातुरितिसार्द्धैःषड्भिः सपरीक्षित् ॥ ७ ॥

"अंगुष्ठमात्रंपुरुषंमध्येआत्मनिसंस्थितं तंज्ञात्वामृत्युमत्येतिनान्यःपंथाविमुक्तये" इतिश्रुत्युक्तमप्राकृतंमंगलविग्रहंश्रीकृष्णम् एतेनविग्रहस्यैवसर्वत्रव्याप्तिर्गम्यते दर्शनंतुतदनन्यभक्तानामेवेतिचज्ञेयम् ॥ ८ ॥

### भाषा टीका ।

गङ्गोपार्जित परलोक ( हे विप्र ) महिषी भ्राता पृथ्वी जम्बूद्वीप का आधिपत्य स्वर्ग पर्यंत व्याप्त यश. ये सब देववांछित संपद भी ( हे द्विजगण ) मुकुन्द निष्ठ मन राजा युधिष्ठिर को आनन्द प्रद नहुए जैसे क्षुधित को माला चन्दनों से आनन्द नहीं होता है ॥ ५ ॥ ६ ॥

हे भृगुनन्दन ! वह वीर माता के गर्भ में ही अस्त्र तेज से दग्ध होता किसी पुरुष को देखता था ॥ ७ ॥

अंगुष्ठ के प्रमाण, निर्मल स्फुर त्पुरट मुकुट सुन्दर दर्शन तडित् सम वसन स्याम वरण अच्युत ॥ ८ ॥

### श्रीधरस्वामी ।

तप्तं दाहोत्तीर्णं यत् कांचनं तन्मये कुण्डले यस्य । क्षतजाक्षं संरम्भादत्यारक्तनेत्रम् । ( अहो मद्भक्तस्यापि गर्भास्त्रपीड़ा इति क्रोधेनेति भावः ) ॥ ९ ॥

अस्त्रतेजो विधमन्तं विनाशयन्तम् । नीहारं हिमं गोपतिः सूर्य इव । ( एवंविधं गर्भगतो बालः ) सन्निकर्षे समीपे ददर्श । दृष्ट्वा च असौ क इति पर्यैक्षत वितर्कितवान् ॥ १० ॥

अमेयात्मा कथं तद्विधूतवान् इत्यवितर्क्यरूपः । धर्मं गोपायतीति धर्मगुप् दशमासपरिच्छेद्यस्य तस्य मिषतः पश्यतः । यत्रदृष्टः तत्रैवान्तर्हितः न त्वन्यत्र गतः यतो विभुः सर्वगतः ॥ ११ ॥

उदर्कम् उत्तरं फलम् । सर्वगुणानामुत्तरोत्तराधिक्यसूचके लग्ने । तत्र हेतुः अनुकूलैरन्यैर्ग्रहैः सहितानां शुभग्रहाणामुदयो यस्मिन् ॥ १२ ॥

### श्रीवीरराघवः ।

गोपतिःसूर्यःनीहारमिवस्वगदयाब्रह्मास्त्रतेजोविधमंतंनाशयंतंसंनिकर्षेस्थितमेवंविधंपुरुषंकोसावितिपर्यैक्षतपर्यालोचितवान् यतः पर्यैक्षतअतएवप्रवृत्तिनिमित्तात्परीक्षिच्छब्दवाच्यश्चसर्वभूतैरितिभावः ॥ १० ॥

तद्ब्रह्मशस्त्रतेजोविधूयनिरस्यापरिमेयात्मा ऽपरिच्छिन्नस्वरूपस्वभावः धर्मगोप्ताविभुर्भगवान्हरिर्दशममासितस्यगर्भस्यशिशोर्मिशतःपश्यतः सतत्रैवांतर्हितवान् ॥ ११ ॥

ततः सर्वगुणोदर्केसर्वगुणाधिकेतदेवाहसानुकूलग्रहोदये आनुकूल्येनसहितानांग्रहाणांभृग्वांगिरादीनामुदयोयस्मिन्लग्नइति विशेष्यमध्याहर्त्तव्यं सानुकूलाग्रहा यस्मिन्नुदयेलग्नेवापांडोर्वंशधरः वंशवर्द्धनः पुनरोजसापाण्डुरिवपाण्डुसदृशोजज्ञे ॥ १२ ॥

### श्रीविजयध्वजः ।

क्षतजवदरुणो अक्षिणीयस्य सतथातम् आत्मनः स्वस्य सर्वतोदिशंपूर्वादिदिक्षुविदिक्षुपरिभ्रमंतंपरितोवर्तमानं उल्काभांगगनात्पतत्तार काविशेषसदृशीं गोपतिः सूर्यः नीहारंहिमंविधमंतंशमयंतंपुनः सन्निकर्षेसमीपेदृष्ट्वाचकोऽयंपुरुषइतिपर्यक्षतआलोचनमकरोत् ॥ ९ ॥ १०

धर्मंगोपायतिनिरीक्षतीतिधर्मगुप् अमेआत्मा अनंतरूपः दशमास्यस्यदशमासारंभस्यकुमारस्यपश्यतः सतइतिशेषः विभुः समर्थोहरिः सर्वपापकर्षणशीलिः भगवान्षड्गुणोपेतः ॥ ११ ॥

ततोहरेर्दर्शनानंतरंसर्वगुणोदर्केसकलगुणोत्तरफलेसानुकूलायेग्रहास्तेषामुदयोयस्मिन्सतथोक्तः तस्मिन्कालेपांडोर्वंशधरः संतानानुच्छेदकर्ता ओजसाभूयः पुनरुत्पन्नः पांडुरिवास्थितः ॥ १२ ॥

---

### क्रमसंदर्भः ।

नीहारं विधमन् सूर्य इवासौ क इति पर्यैक्षतेत्यन्वयः विभक्तिविपरिणामात् ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥

---

### सुबोधिनी ।

श्रीमद्दीर्घचतुर्बाहुं श्रीमन्तोदीर्घाश्चत्वारोबाहवो यस्यसूक्ष्मरूपे आकारःसम्यगभिव्यक्तोनभवेदितिशंकयाएवमुक्तम् आजानबाहुत्वमुक्तं भवति पुरुषार्थचतुष्टयदानायचतुर्णांप्रदर्शनंगतिपर्यंतंक्रियेतिदीर्घत्व मुभयतोलक्ष्मीसहितयारेवकार्यनिर्वाहात् श्रीमत्त्वम् अनेनैहिकामुष्मिकफलदानंसूचितं तप्तकांचनकुण्डलं तप्तकांचनवर्णेकुण्डलेयस्येतिसांख्ययोगयोः कुण्डलत्वात्सर्वविद्याप्रदत्वं सूचितंतप्तकांचनपदात्संतप्तदशायामेव ज्ञानप्राप्तिरितिसूचितंक्षतजाक्षं क्षतजवल्लोहितवत् अक्षिणीयस्यबाधकदूरीकरणायप्रकटितक्रोधलेशयुक्तम् अनेनभक्तरक्षायामासक्तिः सूचिताउग्रत्वाद्वासावधानत्वंसूचितंगदापाणिम् ओजःसहोबलयुतंमुख्यरुक्मंगदांदधार्देतिवाक्यात् आसन्ययुक्तं अनेनतस्यप्राणागमनभयाभावः सूचितः किंच तेजोग्रासेवायुतत्त्वमेवसमर्थम् अतएवतेजोग्रासार्थंवायुमेवगदांहस्तेगृहीत्वातिष्ठतिआधिक्येनिर्वापयिष्यामीतिआत्मनःसर्वतोदिशंपरिभ्रमंतंजीवस्यसर्वत्राहमितिज्ञापयितुंरक्षा च प्रकृतेविशेषमाहउल्काभांगदांभ्रामयंतमिति यस्यतेजोहेतुत्वंज्ञापयंतीगदाख्यांतस्थंतेजःप्राकट्यत् अतउल्काभावादृश्यतेदैत्यानिवारणार्थंमुहुः गदांभ्रामयंतम् ॥ ९ ॥

किंच अस्त्रतेजः स्वगदयेतिजननपर्यंतंब्रह्मास्त्रंचेत्तिष्ठेत्तदानिर्गमनसमयेदैत्याद्युपोद्वलनात् कदाचिद्दहेत् अतइदानीमेवस्वरूपतोनाशयति अग्निवन्नाशनेऽपितद्दशभूतंभस्मतिष्ठेत् अतोनिरंशनाशनार्थम् नीहारमिवगोपतिरित्युक्तंकुहरंसूर्यइवादर्शनसमयएवैतत्कुर्वाणंसंनिकर्षइतितस्मिन्स्नेहः प्रदर्शितः तदाजिज्ञासाभूतस्यकोऽयमितिततोज्ञानार्थंपरीक्षांकृतवान्तत्रपरीक्षायांविषयमाहक इतिनिश्चयमाह असावितियोऽस्मिन्सोऽस्तीति ॥ १० ॥

एवंसर्वकार्यंकृत्वास्वाभिप्रेतार्थसिद्धौमध्येभोगार्थमंतर्धानंप्राप्तवानित्याहविधूयेतितर्हिपरीक्षिताकथंनरक्षितइत्याहअप्राकृतत्वायअंतर्द्धानेधर्मरक्षाहेतुः नन्वेतावतैवकथंसर्वकार्यंसेत्स्यतीत्याशंक्याह विभुरितिसर्वसमर्थः यथैवेच्छातितथैवकरोतीत्यर्थः दशमासपर्यंतंस्थित्वापश्चादंतर्हितः दशमास्स्यदशमास्यस्येतिवापाठः मिषतइति अन्यत्रगमनशंकावारिताअन्यतोभगवान्नागतः किंतुतत्रैवप्रकटइतिज्ञापयितुंतत्रैवांतरधीयतपूर्णज्ञानोत्पत्तौवंधूनांदुःखंस्यादितिशुकतुल्यएवायंप्राकृतइवकृतइत्याहहरिरिति ॥ ११ ॥

एवंभगवत्कृपांप्राप्यमुख्येनाधिकारिदेहेनमहापुरुषत्वज्ञापनार्थंमुख्येकालेप्रादुर्भूतइत्याहततइति सर्वगुणाउदर्केउत्तरफलेयस्यतादृशेकालेकालस्यहिबहवोगुणाः तेकदाचिदुपकुर्वंति अस्यत्वग्रेउपकरिष्यंतीत्यर्थः सानुकूलेग्रहोदयेअनुकूललग्नमहितानांग्रहाणामुदयोयत्रअनेनग्रहफलादपिभावितस्यसर्वफलंज्ञातुंशक्यमित्युक्तंवंशधरः एतस्याग्रेपुत्राभविष्यंतीतिज्ञापितपाण्डोर्वंशोगतएवस्थितः अनेनधृतइतिनित्यसापेक्षत्वादसमर्थसमासः यथापांडुः राजकामनायामेवावतीर्णः अंधस्यज्येष्ठस्य राज्यानर्हत्वात् तथापांडवानां भगवतासहवैकुण्ठगमनावश्यकत्वात् राजत्वायायमवतीर्णइत्यर्थः ओजसाप्ययंपांडुतुल्यः ॥ १२ ॥

---

### श्रीविश्वनाथचक्रवर्त्ती

क्षतजाक्षं ब्रह्मास्त्रं प्रति क्रोधादत्यारक्तनेत्रम् ॥ ९ ॥

नीहारं हिमं गोपतिः सूर्य इव सूर्यो यथा विधमति तथास्त्रतेजो विधमन्तं विनाशयन्तं पर्यैक्षत कोऽसौ वीरासनेन मामेयुक्तोऽपि रक्षतीति वितर्कितवान् ॥ १० ॥

धर्मं भक्तवात्सल्यरूपं स्वधर्मं गोपायतीति धर्मगुप् ( दशमास्यस्य ) दशमासपरिच्छेद्यस्य तस्य मिषतः पश्यतः ( यत्र दृष्टः ) तत्रैवान्तर्दधे न त्वन्यत्र गतः यतो विभुः । हरिरिति तस्य मनोऽपहृत्य तस्मिन्नवदधाने सत्यन्तर्दधे । चौरस्य लक्षणमिदमेव यद्धनवत्यवदधानेऽन्तर्धत्ते इति कुत्रामिकवल तन्मनो हर्तुमेव तत्र प्रविष्ट आसीदित्युत्प्रेक्षा च द्योतिता ॥ ११ ॥

सर्वगुणा एव उदर्कः उत्तरकालभवं फलं यत्र तस्मिन् । अनुकूलैर्ग्रहैः सह वर्त्तमाने उदये लग्ने ॥ १२ ॥

---

तस्य प्रीतमना राजा विप्रैर्धौम्यकृपादिभिः ।
जातकं कारयामास वाचयित्वा च मङ्गलम् ॥ १३ ॥
हिरण्यं गां महीं ग्रामान् हस्त्यश्वान्नृपतिर्वरान् ।
प्रादात् स्वन्नञ्च विप्रेभ्यः प्रजातीर्थे स तीर्थवित् ॥ १४ ॥
तमूचुर्ब्राह्मणास्तुष्टा राजानं प्रश्रयानतम् ।
एष ह्यस्मिन्प्रजातन्तौ कुरूणां कौरवर्षभ ? ॥ १५ ॥
दैवेनाप्रतिघातेन शुक्ले संस्थामुपेयुषि ।
रातो वोऽनुग्रहार्थाय विष्णुना प्रभविष्णुना ॥ १६ ॥

सिद्धांतप्रदीपः ।

क्षतजाक्षमित्यनेनभक्तक्लेशासहिष्णुत्वंसूचितम् ॥ ९ ॥

विधमन्तंनाशयंतम् असौकइतिपर्यैक्षतआलोचितवान् ॥ १० ॥

भगवान्श्रीकृष्णस्तदस्त्रतेजोविधूयनिरस्य तत्रैवगर्भेएवदशमास्यस्यपरीक्षितः पश्यतएवांतर्दधेऽन्तर्हितवान् एतेनभगवतस्तदीयानांचायुधादीनांविग्रहस्यापिस्वेच्छयैवाविर्भावतिरोभावसामर्थ्यंकालसम्बन्धवर्जितत्वंचप्रतिपादितम् अप्रमेयः गर्भेकुतआगतः कुत्रपुनर्गतः किमात्मकइत्येवमनुमातुमशक्यः किंतुवेदैकवेद्यः वेदैकवेद्यत्वंतु वेदान्तकौस्तुभे प्रमाणाधिकरणेपूर्वैःप्रपंचितम् ॥ ११ ॥

ततःकृष्णान्तर्द्धानानंतरम् सर्वगुणोदर्केसर्वगुणानामुत्तरोत्तराधिक्यसूचकेलग्ने अनुकूलैरन्यैर्ग्रहैःसहिताः सानुकूलास्तेषांशुभग्रहसमुदायोयस्मिन्तस्मिन् वंशधरःवंशकर्तापाण्डुरिवतत्तुल्योजज्ञे ॥ १२ ॥

---

भाषाटीका ।

शोभायमान चारभुजावाले तप्तसुवर्णकुंडलवाले लालनेत्रवाले पुरुषको गदा हाथमें लिये अपने चारों ओर घुमते अग्निज्वालावत् गदाको घुमाते देखाथा ॥ ९ ॥

अपनीगदा से अस्त्रकेतेजको सूर्य जैसे कुहिरको नाशकरे तैसे नाशकरते पासमेंकौनहै इस प्रकार देखतेथे ॥ १० ॥

धर्म रक्षक अप्रमेय स्वरूप भगवान् उसतेजको नाशकर दशमासिकवालके देखतेही वहीं अंतर्धान होगये ॥ ११ ॥

तदनंतर सब गुण युक्त सुंदर ग्रहों केउदयके कालमें पांडुराज कावंशधर बलसे दूसरा पांडुसरीका पुत्र उत्पन्न हुआ ॥ १२ ॥

---

श्रीधरस्वामी

जातकं जातकर्म । मङ्गलं पुण्याहम् ॥ १३ ॥

वरान् श्रेष्ठान् । स्वन्नं शोभनमन्नञ्च । तीर्थवित् दानकालज्ञः । यावन्न छिद्यते नालं तावन्नाप्नोति सूतकम् । छिन्ने नाले ततः पश्चात् सूतकन्तु विधीयते । इति वचनात् नतः पूर्वमन्नं प्रादात् आमान्नं वा । प्रजातीर्थे पुत्रोत्पत्तिपुण्यकाले—पुत्रे जाते व्यतीपाते दत्तं भवति चाक्षयमिति स्मृतेः । देवाश्च पितरश्चैव पुत्रे जाते द्विजन्मनाम् । आयान्ति हि नृपश्रेष्ठ! पुण्याहमिति चाब्रुवन् । इति च । [ आयान्ति हि गृहं तस्मात् सूर्य्यग्रहशताधिकम् । इति वा पाठः । ] ( स नृपतिः ) ॥ १४ ॥

हे पौरवर्षभ ! । पुरूणां पुरुवंश्यानाम् ॥ १५ ॥

शुक्ले शुद्धेऽस्मिन् प्रजातन्तौ । दैवेन कथम्भूतेन अप्रतिघातेन दुर्व्वारेण । संस्थां नाशम् उपेयुषि गते सति । योऽनुग्रहार्थाय यस्मात् प्रभवनशीलेन श्रीविष्णुना रातो दत्तः ॥ १६ ॥

---

श्रीवीरराघवः ।

ततः प्रीतंहृष्टंमनोयस्यसराजायुधिष्ठिरः धौम्यकृपादिभिर्विप्रैः सुमङ्गलंस्वाशिषंवाचयित्वाजातकंजातकर्मकारयामास ॥ १३ ॥

ततोनृपतिर्युधिष्ठिरोहिरण्याश्ववरान्कामान्यथायोग्यंयथाभिलाषंचकामंप्रादादर्थिभ्यः प्रायच्छत्सतीर्थवित्तत्वपात्रवित्प्राज्ञःप्रजातीर्थेपौत्रोत्पत्तिनिमित्तदानकालेस्वन्नंसुमृष्टमन्नं च विप्रेभ्यः प्रादात् ॥ १४ ॥

हिरण्यादिभिस्तुष्टाब्राह्मणास्तं प्रश्रयेणविनयेनावनतंनम्रंराजानमूचुः ॥ १५ ॥

श्रीवीरराघव ।

सदैवाहएषग्रहीतिसार्द्धद्वयेनपुरूणांभवतांप्रजातंतौप्रजासंतानेनिमित्तेशुक्लेगर्भपिंडेसंस्थामुपेयुषिसतिहियस्मादेषजातः अप्रतिघातेनप्रतिहतिरहितेनदैवेनप्रभविष्णुनासमर्थीभवनशीलेनविष्णुनावोऽनुग्रहार्थोऽयंरातोरक्षितः ॥ १६ ॥

---

श्रीविजयध्वजः ।

जातकंजातकर्म मंगलंपुण्याहम् ॥ १३ ॥

तीर्थंशास्त्रंपात्रंवावेत्तीतितीर्थवित् प्रजातीर्थेपुत्राख्यशुद्धजलेपुत्रजन्मकालेवासतीर्थविदित्येकंवापदंसतीर्थइत्यर्थः ॥ १४ ॥

प्रश्रयानतंप्रावरण्यगुणावनतंकुरूणांकुरुवंशजातानाम् अस्मिन्कुलेप्रजातंतौपुत्राख्यसंतानसंस्थांविनाशमुपेयुषिगच्छतिसतिवोयुष्माकमनुग्रहाख्यप्रयोजनायप्रभविष्णुनारातोदत्तइतियस्मात्तस्मात्लोकेनाम्नाविष्णुरातइतिबृहच्छ्रवाविख्यातयशाभविष्यति ॥ १५ ॥ १६ १७ ॥

---

सुवोधिनी ।

तस्यप्रासंगिकंकृत्यमाह तस्येति यद्यपिगार्भिकबैजिकएनोनास्ति तथापि अपूर्वपक्षमाश्रित्यअष्टाचत्वारिंशत् संस्कारान् वदन् जातकर्माह मूर्द्धाभिषिक्तस्यस्वतः करणायोगात् विप्रैरित्युक्तंधौम्यः पांडवपुरोहितः कृपःपरंपरागतः जातकंकर्मनामधेयंमंगलंपुण्याहवाचनम् ॥ १३ ॥

जन्मोत्सवमाह हिरण्यमिति महींवृत्तिकरींभूमिं वरान् अभिमतार्थान् स्वन्नंआमंगोधूमादिप्रजातीर्थे“देवाश्चपितरश्चे”तिवाक्यात् पुत्रजन्मनिसर्वदेवतासांनिध्यात् प्रजातीर्थइत्युक्तं वैदिकेकर्मणिज्ञानादेवफलमितिअस्यतीर्थत्वेनाप्रसिद्धत्वात्फलंनभवेदित्याशंक्याह सर्वतीर्थविदितितीर्थविद्भिः सहितः अतस्तदुपदेशात् ज्ञात्वाकृतवानित्यर्थः ॥ १४ ॥

अस्मिन्वालकेद्वेधाप्युत्कर्षोऽस्तिभगवत्कृतः कालकृतश्चतत्रभगवत्कृतंयेवसिष्ठादयोब्राह्मणाः सर्वज्ञाः अतिदानेनसंतुष्टाः विनयेनननम्रंगुह्यमूचुः एषइति प्रथमंनिर्द्दिशतियस्यगुणाअग्रेवक्तव्याः सएषेतिनिर्दिश्यते यथासांमविक्रयएषइति इममर्थंज्ञापयंतिहीति अस्मिन्नितिराजानं वालकंवंश्यांश्चनिर्दिश्यप्रजातंतौपुत्रपौत्रादिरूपेवंशेकुरूणामिति कुरोर्भगवदीयत्वेनतद्वंशसंस्थायाअनुचितत्वात् प्रधानसंस्थायामेव संख्याव्यपदेशाच्चपौरवर्षभेति पितृभक्तत्वाच्चपूरोः ॥ १५ ॥

तस्यापिवंशसंस्थानुचितेति उपघातहेतुमाह दैवेनेतिवंशजनकानामदृष्टंसमाप्तमिति विच्छेदकादृष्टेनवाप्रसवजनकादृष्टस्य विच्छेदकप्रतिवन्धकस्यचाभावात् संस्थाअवश्यंभाव्या अदृष्टंचनास्तिभगवांश्चवर्ततेकमत्रभविष्यतीत्याशंकायां यथाकथंचित् वंशेनउभयं समाहितं भविष्यतीति आशंक्यतन्निषेधार्थंशुक्लइत्युक्त्वादैववलंवलमतिवाक्यात्संस्थामुपेयुषिसति अदृष्टकालादीनामनुकूलत्वात् केवलं भगवान्पुष्टिमार्गमाश्रित्यभवतामनुग्रहार्थाय पूर्वयोभवत्स्वनुग्रहः कृतः तस्यार्थः प्रयोजनमिदमिति नापुत्रस्यलोकोऽस्तातिश्रुतेः अमृतत्वसम्पादकत्वाच्चभगवतः सामान्यभूतत्वाद्वंशस्यप्रजामनुप्रजायन्तेतदुतमर्त्यामितिश्रुतेः भगवताअयंरक्षितः किंच स्वार्थमप्ययंरक्षितः भागवतादिरूपेणप्रकर्षेणउरुभविष्णुना सर्वेषुभागवततद्भक्तेषुभगवद्द्वाराआविर्भावैकरसेन अतोऽर्थप्रतिपादकंनामभगवतीतिसंज्ञाशब्दापेक्षया यौगिकशब्दस्यअजहत्स्वार्थेनमुख्यत्वात् ॥ १६ ॥

---

श्रीविश्वनाथचक्रवर्त्ती ।

जातकं जातकर्म ॥ १३ ॥
प्रजातीर्थे पुत्रोत्पत्तिपुण्यकाले—पुत्रे जाते व्यतीपाते दत्तंभवति चाक्षयमिति स्मृतेः ॥ १४ ॥
पुरूणां पुरुवंश्यानां प्रजातन्तौ संस्थां नाशम् उपेयुषि प्राप्ते सति । शुक्ले शुद्धे रातो दत्तः ॥ १५ ॥ १६ ॥

---

सिद्धांतप्रदीपः ।

सुमङ्गलपुण्याहैर्वाचयित्वाजातकं जातकर्मकारयामास ॥ १३ ॥

सयुधिष्ठिरः प्रजातीर्थेपुत्रपौत्राद्युत्पत्तिकालेतीर्थवित् दानक्रियाविषयेतीर्थानि देशकालपात्रदेयवस्त्वादीनिजानातीतिसतथा ॥ १४ ॥

प्रश्रयानतांविनयेननम्रंतराजानमूचुः हेकौरवर्षभ ! कुरूणांवंश्यानांभवतांप्रजातंतौविषयेएषः रातइतिद्वितीयेनान्वयः ॥ १५ ॥

शुक्लेनिर्दोषेगर्भेसंस्थांनाशमुपेयुषिसति अप्रतिघातेनस्वेप्सितकर्मसुप्रतिभटरहितेनदैवेनप्रभविष्णुनाभक्तकार्यार्थंसर्वत्रप्रभवनशीलेनविष्णुनाश्रीकृष्णेनवोऽनुग्रहार्थायरातोदत्तः ॥ १६ । १७ ॥

---

तस्मान्नाम्ना विष्णुरात इति लोके बृहच्छ्रवाः ।
भविष्यति न सन्देहो महाभागवतो महान् ॥ १७ ॥

राजोवाच । अप्येष वंश्यान् राजर्षीन् पुण्यश्लोकान् महात्मनः ।
अनुवर्तिता स्विद्यशसा साधुवादेन सत्तमाः ॥ १८ ॥

ब्राह्मणा ऊचुः । पार्थ ! प्रजाविता साक्षादिक्ष्वाकुरिव मानवः ।
ब्रह्मण्यः सत्यसन्धश्च रामो दाशरथिर्यथा ॥ १९ ॥
एष दाता शरण्यश्च यथा ह्यौशीनरः शिविः ।
यशो वितनिता स्वानां दौष्यन्तिरिव यज्वनाम् ॥ २० ॥

भाषाटीका ।

राजा युधिष्ठिर प्रसन्न मन होकर धौम्य कृपाचार्य्य इत्यादि ब्राह्मणों से पुण्याह वाचन कराकर उस बालक का जात कर्म कराते भये ॥ १३ ॥

दान काल के जानने वाले राजा युधिष्ठिर पुत्रोत्पत्ति पुण्य काल में सुवर्ण गौ पृथ्वी श्रेष्ठ ग्राम हस्ती घोड़ा उत्तम अन्न ब्राह्मणों को देते भये ॥ १४ ॥

ब्राह्मण सन्तुष्ट होकर विनय से नम्रीभूत राजा युधिष्ठिर से बोले कि हे कौरवर्षभ ये बालक कौरवों के प्रजातंतु को ॥ १५ ॥

अनिवार्य्य दैव से नाश होने पर आप के अनुग्रहार्थ प्रभवन शील विष्णु भगवान् ने दिया है ॥ १६ ॥

---

श्रीधरस्वामी ।

तस्माल्लोके विष्णुरात इति नाम्ना भविष्यति महाभागवतश्च गुणैश्च महान् भविष्यति नात्र सन्देह इति तं राजानं ब्राह्मणा ऊचुरिति त्रयाणामन्वयः ॥ १७ ॥

महाभागवतो भविष्यतीत्युक्ते हृष्टः पृच्छति । अपि स्वित् ( किं स्वित् ) साधुवादेन यशसा सत्कीर्त्या अनुवर्त्तिता भविष्यति इति पूर्व्वस्यैवातः परमप्यनुषङ्गः ॥ १८ ॥

प्रजानामविता रक्षकः । मानवः मनोः पुत्रः । ब्राह्मणेषु हितः सत्यप्रतिज्ञश्च श्रीरामो यथा ॥ १९ ॥

उशीनरदेशाधिपतिः शिविः येन स्वमांसं ( श्येनाय ) दत्त्वा शरणागतः कपोतो रक्षितः । स्वानां ज्ञातीनां यज्वनाञ्च यशोविस्तारकः । दौष्यन्तिर्भरत इव ॥ २० ॥

---

श्रीवीरराघवः ।

तस्माद्विष्णुनारातत्वरूपप्रवृत्तिनिमित्तनाम्नावाचकेनशब्देनलोके विष्णुरातइतिप्रसिद्धोबृहच्छ्रवाविपुलकीर्तिर्गुणैर्महान्महाभागवतश्च भविष्यतिनात्रसंदेहः ॥ १७ ॥

विप्रैरेवमुक्तोयुधिष्ठिरः तस्यभाविनोगुणान्बुभुत्सुः पृच्छतिअपिस्विदित्येतद्द्वयंसमुदितंप्रश्नद्योतकं हेसत्तमाः ! एषजातः शिशुः साधुवादेनसाधूनामुपदेशेनहेतुनामहात्मनः पुण्यश्लोकान्वंश्यान्राजर्षीन्पांड्वादीन्अनुवर्तितास्विदनुवर्तिष्यति किंपांड्वादिवद्यशस्वीभविष्यति इति प्रश्नःसाधूनांवादोयस्मिन्विषयभूतेतेनयशसानुवर्त्तितास्विदितिवान्वयः ॥ १८ ॥

एवमापृष्टाजातकोविदाब्राह्मणास्तस्यभाविनोगुणान्वर्णयंतिपार्थेत्यादिदशभिः नकेवलमितरसाधारणैकगुणमेवानुवर्त्तिताअपितुतत्तदसाधारणगुणान् सर्वानपीत्याहुः हेपार्थ ! मानवः मनोर्वैवस्वतस्यसुतइक्ष्वाकुरिवसाक्षात्प्रजाविताप्रजानामाविताश्क्षितायथादाशरथिर्दशरथपुत्रः श्रीरामस्तद्वद्ब्रह्मण्यःब्रह्मकुले साधुः सत्येयाचकेसंधाद्दढाभिरुचिर्यस्य तथाभूतस्यएषदाताआत्मपर्यंतदाताशरण्यः शरणंरक्षणोपायमर्हतीति ॥ १९ ॥

यथौशीनरः उशीनरसुतः शिविश्चक्रवर्तीतद्वद्दाताशरण्यश्चदौष्कृतिरिवभरतइवयज्वनांस्वदृणां यशोवितनितायशसोविस्तारयिता॥२०॥

---

श्रीविजयध्वजः ।

ब्राह्मणवचनानंतरं युधिष्ठिरस्तानप्राक्षीदित्याह अपीति हेसत्तमाः ! अपिशब्दस्यास्विदित्यनेनान्वयः साधुषुवादोयस्यसतथासाधुरितिवादेनवा ॥ १८ ॥

श्रीविजयध्वजः ।

हेपार्थ ! पृथायाः सुत युधिष्ठिर मानवोमनुपुत्रः प्रजानामविता दाशरथिः दशरथपुत्रः सत्यसंधः सत्यप्रतिज्ञः ॥ १९ ॥
औशीनरः उशीनरपुत्रः दौष्यंतिः दुष्यंतपुत्रइवयज्वनांयथाविस्तारकर्तातथायमपिस्वानांस्ववंशजन्यानांयशोवितनिता ॥ २० ॥

---

क्रमसन्दर्भः ।

अप्येष वंश्यानित्यत्र हृष्ट इति टीकायां हर्षेणैव पुनः प्रश्नोऽयं न त्वपूर्त्येति भावः । वस्तुतस्तु तथात्वेऽपि राजश्रेष्ठताज्ञानार्थं पुनः प्रश्नः ॥ १८—२३ ॥

---

सुबोधिनी ।

नाम्नाविष्णुरातइतिलोकेप्रसिद्धोभविष्यतीत्यर्थः कारणोत्कर्षमाह वृहच्छ्रवाइति भवदाद्यपेक्षयापि अधिककीर्तिमान् नहिभवंतएवं रक्षिताः नकालोनिगृहीतः नवाभागवतंप्राप्तमिति संस्थाप्रापककालादेः प्रतिबंधकत्वात् कथमेवंभविष्यतीत्याशंकायामाह नसंदेहइति तत्रहेतुः महाभागवतइतिभागवतस्यमहत्त्वं भगवत्प्रियत्वेहेतुः तदस्मिन्नलक्षणादिना अवगम्यते अतएवकालादीनांनापकारजनकत्वं तदुत्तरत्रप्रश्नोत्तराभ्यां निरूपयिष्यते किंच यथाकालादिभ्योभगवतावलंदत्तं ततोऽप्यस्मैवहुदत्तमिहनास्मिन्नशंकाविषयइत्याह महानिति ॥ १७ ॥
एवंमहद्भिरर्थैर्निरूपितेकालाद्भयं मन्यमानः सर्वेकालकृतं मन्येइत्युक्तत्वात्कालज्ञानंपृच्छति अप्येषइति भगवत्कृपाव्यतिरेकेणापि यथाकालेनास्मद्वंशरक्षिता यशस्विनश्चकृताः तथायंकिंभविष्यतीतिप्रश्नः वंशेष्वपियेपुण्यश्लोकाः पुरूरवःप्रभृतयः तत्रापियेमहात्मानः कुरुशदृशाः यशः सर्वजनीनंसाधुवादः सद्भिरेवक्रियमाणः चरित्रस्यभावोत्कर्षोवावेदार्थसर्वज्ञाः सत्तमाः ॥ १८ ॥
तत्रसर्वमेवकालोत्कर्षमाहपार्थेति यद्यपिभगवतापवंरक्षितुंदेहोऽनुचितः तथापिहेपार्थ ? अयंसाक्षात्प्रजावितानमंत्रिद्वारास्वयमेवे क्षादिकरणात् यद्यपिमनोर्बहवः पुत्राजाताः अथाप्ययंतवंशकृत् इक्ष्वाकुरेवजातः तस्ययथाप्रजापालनमविच्छिन्नमेवमस्यापिशत्रुमित्रादि षुसमोवाशक्त्यनात् सर्वज्ञत्वाद्वातथावदंतिमानवः वैवस्वतमनोःपुत्रः ब्रह्मण्योब्राह्मणभक्तः सर्वस्वदानात् सत्यसंधः सत्यप्रतिज्ञः वन वासगमनात् दाशरथीरघुनाथः कालस्यापकारजनकत्वंस्वेच्छयाभगवत्यपीति भगवद्दृष्टांतः ॥ १९ ॥
शरण्यः शरणागतरक्षकः चकारात् प्रत्येकसमुदायाभ्यांकीर्तिमान् उशीनरवंशोत्पन्नः शिविःतस्यसमुदायकीर्तिरेवप्रसिद्धा इन्द्राग्निसं-वादेदौष्यंतिभरतः सर्वस्यापिसोमवंशस्ययशः प्रदःयज्विनांचशताश्वमेधकरणात् सर्वत्रचकारेणपूर्वोक्तसंबंधः दृष्टान्तिकदार्ष्टान्तिके चावगन्तव्यः ॥ २० ॥

---

श्रीविश्वनाथचक्रवर्त्ती ।

वालस्य तादृशयोग्यतायामश्रद्दधानं राजानं प्रत्याह न सन्देह इति ॥ १७ ॥
महाभागवतो भविष्यतीत्युक्ते राजैव सान्तश्चमत्कारं सगाम्भीर्यं पृच्छति अपि स्वित् प्रश्ने । अनु लक्ष्यीकृत्य वर्त्तिता । तेषां सदृश भविष्यति न वेत्यर्थः ॥ १८ ॥
तेषां सदृशो यशसेति किं पृच्छ्यते यैरेव एकैकैर्गुणैस्ते सर्वे यशस्विनः आसन् ते सर्वे एव गुणा अस्मिन् वालकेऽधुनैव सन्ति यथा वसरमाविर्भविष्यन्ति तस्मादेतत्तुल्यास्ते न बभूवुरिति प्रतीयतामित्याशयेनाहुः पार्थेति । प्रजानाम् अविता रक्षकः । सत्यसन्धः सत्य प्रतिज्ञः ॥ १९ ॥
उशीनरदेशाधिपतिः शिविः येन स्वमांसं श्येनाय दत्त्वा शरणागतः कपोतो रक्षितः । दुष्यन्तपुत्रो भरतः ॥ २० ॥

---

सिद्धांतप्रदीपः ।

हेसत्तमाः ! एषविष्णुरातः साधूनांवादाः प्रशंसाशब्दोयस्मिन्तेनयशसाराजर्षीन् अनुवर्तिता अनुवर्तिष्यतिस्वित् ॥ १८ ॥
मानवःमनोःश्राद्धदेवस्यपुत्रः प्रजायाअवितारक्षिता ब्रह्मण्यः ब्रह्मशब्दवाच्यानां ब्रह्मब्राह्मणवेदानांहितकृत् सत्येसंधाभिसंधिर्य-स्यसतथा ॥ १९ ॥
उशीनरस्यापत्यमौशीनरः स्वानांज्ञातीनांयज्वनांयष्टृणां यशोवितनितायशसोविस्तारयितादौष्यन्तिर्दुष्यंतपुत्रोभरतइति ॥ २० ॥

---

भाषाटीका ।

तिससे यह बडा यशस्वी महाभागवत महात्मा नामसे विष्णुरात होगा इसमें संदेह नहीं है ॥ १७ ॥

धन्विनामग्रणीरेष तुल्यश्चार्ज्जुनयोर्द्वयोः ।
हुताश इव दुर्द्धर्षः समुद्र इव दुस्तरः ॥ २१ ॥
मृगेन्द्र इव विक्रान्तो निषेव्यो हिमवानिव ।
तितिक्षुर्वसुधेवासौ सहिष्णुः पितराविव ॥ २२ ॥
पितामहसमः साम्ये प्रसादे गिरिशोपमः ।
आश्रयः सर्व्वभूतानां यथा देवो रमाश्रयः ॥ २३ ॥
सर्व्वसद्गुणमहात्म्य एष कृष्णमनुव्रतः ।
रन्तिदेव इवौदार्य्ये ययातिरिव धार्म्मिकः ॥ २४ ॥

भाषा टीका ।

राजा बोले हे सत्तमो ! क्या यह बालक वंश के पूर्व राजर्षी पुण्यश्लोक महात्माओं को साधु शब्दसे यशपूर्वक अनुवर्तन करेगा १८ ब्राह्मण बोले हे पार्थ ! यह बालक साक्षात् इक्ष्वाकुमनु के तुल्य प्रजा का रक्षक होगा ब्राह्मण सेवक सत्यप्रतिज्ञ श्रीराम दाशरथी के तुल्य होगा ॥ १९ ॥

दाता तथा शरणागत रक्षक उशीनर पुत्रशिवि के तुल्य होगा अपने बंधुओं का तथा यज्ञकर्ताओं के यज्ञका विस्तारकर्ता दौष्यंति भरत के तुल्य होगा ॥ २० ॥

---

श्रीधरस्वामी ।

अर्जुनयोः पार्थकार्त्तवीर्ययोः ॥ २१ ॥
हिमवानिव सतां निषेव्यः अनन्यगतिकत्वेन वसुधेव तितिक्षुः क्षान्त्या । प्रीत्या मातापितराविव सहिष्णुः ॥ २२ ॥
पितामहो ब्रह्मा तेन समः । साम्ये समत्वे । रमाश्रयो हरिरिव ॥ २३ ॥
सर्वैः सद्गुणैर्यन्माहात्म्यं तस्मिन् श्रीकृष्णतुल्यः ॥ २४ ॥

---

श्रीवीरराघवः ।

धन्विनांधनुष्मतामग्रणीः श्रेष्ठः तत्रद्वयोरप्यर्जुनयोः कार्त्तवीर्यपार्थयोस्तुल्यइत्यर्थः हुताशोऽग्निरिवदुर्द्धर्षः प्रसोढुमशक्यः समुद्रइवदुस्तरः अगाधाशयः ॥ २१ ॥

सिंहइवविक्रांतः कर्त्तरिक्तः पराक्रमीपादविक्षेपवान्वा हिमवानिवनिषेव्यः भूतानामुपजीव्यः असौशिशुर्वसुधेवभूमिरिवतितिक्षुः प्रसहिष्णुः पितराविवमातापितराविवसहिष्णुः परापराधसहिष्णुः ॥ २२ ॥

साम्येसर्वभूतसमत्वेपितामहेनब्रह्मणासमस्तुल्यः प्रसादेज्ञानप्रसादेअनुग्रहेवागिरिशोपमोरुद्रतुल्यः सर्वभूतानांपुरुषार्थं लिप्सूनामाश्रयआश्रयितुंयोग्यः यथारमाश्रयः श्रीनिवासोदेवस्तद्वत् ॥ २३ ॥

सर्वैसद्गुणानिर्दुष्टगुणास्तत्कृतंमाहात्म्यंयस्मिन् कृष्णंभगवंतमनुव्रतः अनुवर्त्तिताकृष्णतुल्यसद्गुणमाहात्म्ययुक्तइत्यर्थः रंतिदेवइवोदारस्त्यागी ॥ २४ ॥

---

श्रीविजयध्वजः ।

द्वयोरर्जुनयोः कार्तवीर्यपाण्डवयोः तुल्यः दुर्धर्षः दुःसहः ॥ २१ ॥
तितिक्षुः क्षमावान् पितरौइवसहिष्णुः सहनशीलः ॥ २२ ॥
साम्येसामंजस्ये पितामहस्यविरिंचस्यसमः प्रसन्नतायांशिवसमः रमायाआश्रयःपतिः ॥ २३ ॥
सर्वैः सतांगुणैः माहात्म्यंमहात्मत्वंयस्यतथोक्तः अथवासर्वसद्गुणमाहात्म्याविषयेकृष्णांयादवेंद्रमनुगतः तथाभूतः कृष्णमर्जुनम्वा ॥२४॥

---

क्रमसंदर्भः ।

तथापि साधारणजनचमत्कारार्थं पूर्ववदन्यदपि किञ्चिद्ब्रूम इत्याहुः रन्तीति । किंवा बहुभिर्यया स्वज्ञानमुक्तत्वात् पाठक्रमो नात्र विवक्षितः । औदार्यमत्र दातृत्वं तेन कारुण्यं लक्ष्यते ॥ २४ ॥ २५ ॥ २६ ॥

---

धृत्या बलिसमः कृष्णे प्रह्लाद इव सद्ग्रहः।
आहर्त्तैषोऽश्वमेधानां वृद्धानां पर्य्युपासकः ॥ २५ ॥
राजर्षीणां जनयिता शास्ता चोत्पथगामिनाम्।
निग्रहीता कलेरेष भुवो धर्म्मस्य कारणात् ॥ २६
तक्षकादात्मनो मृत्युं द्विजपुत्रोपसर्पितात्।
प्रपत्स्यत उपश्रुत्य मुक्तसङ्गः पदं हरेः ॥ २७ ॥

सुबोधिनी।

धन्विनांधनुर्द्धराणामर्जुनः पितामहः कार्त्तवीर्योऽर्जुनश्चचकारादधिकश्चकालनिग्रहात् हुताशोऽग्निः धर्षणामतिक्रमआज्ञोल्लंघनमितिवत् दुस्तरःयुद्धेसेनायाःस्वस्यपराजयाभावः तरणंतद्धानिरित्यर्थःविक्रान्तःपराक्रमवान् देहापेक्षयाअधिककौशलवान् ॥ २१ ॥

मृगेन्द्रः सिंहःनिषेव्योदेवादीनामप्याश्रयः यथाहिमवान्महादेवादेर्निर्दोषस्थानम् अतएवऋषिश्वासस्तत्रैवगुणेष्वेवदृष्टान्ताःसर्वत्र तितिक्षुः अतिक्रमणसहनवान् वसुधासर्वसहालद्वेषसहनशीलः स्वस्मिन्नपराधसहनंपृथ्वीवत् तस्यैवान्यत्रसहनंपितृवत् ॥ २२ ॥

पितामहोब्रह्मासाम्यंदेवदैत्यनरेषुतुल्यताप्रसादेअविचारितदानेगिरिशोमहादेवः आश्रयःआधारः अवलम्बनमितियावत् सर्वथायथ लक्ष्म्याभगवान् निदर्शनंस्पष्टार्थतत्साम्यमित्यर्थः ॥ २३ ॥

धर्मादीनामपिरक्षकत्वात् सर्वेयावन्तःसद्गुणाः सत्यशौचादयः तेषांमाहात्म्यंपरमोत्कर्षः तदर्थंकृष्णंभगवंतमनुव्रतः यस्यउपासन याकृपातत्तुल्यइत्यर्थःरंतिदेवः नवमस्कन्धेवक्ष्यते यस्तुपुष्कसायजलंदत्वासंतुष्टः उदारोऽत्यंतदातृस्वभावः यथाययातिर्देवयान्यांशुक्रदुहितरिमनुक्तायामपिमनस्तुतद्वतंबुध्वाधर्मोऽयमित्यंगीकृतवान् ॥ २४ ॥

---

श्रीविश्वनाथचक्रवर्त्ती।

अर्जुनयोः पार्थकार्त्तवीर्ययोः ॥ २१ ॥

सर्वसहापि वसुधा परेषां वाक्शरज्वालां नानुभवति अयन्तु तामनुभवन्नपि न प्रतिकरिष्यतीति अत्र दृष्टान्तः पितराविवेति ॥ २२ ॥

पितामहो युधिष्ठिरः। साम्ये सर्वत्र द्वेषाभावे। रमाश्रयो नारायणः ॥ २३ ॥

एकस्यैवोपमेयस्यास्य सर्व्वैर्गुणैरेकमेवोपमानीकुर्व्वन्नाह। सर्व्वैः सद्गुणैर्यन्माहात्म्यं तस्मिन् एष कृष्णमनुव्रतः श्रीकृष्णतुल्यः २४

---

सिद्धांतप्रदीपः।

द्वयोःपार्थकार्तवीर्ययोः ॥ २१ ॥ २२ ॥

रमाश्रयःश्रीपतिः ॥ २३ ॥

सर्वैःपूर्वोक्तैः सद्गुणैर्यत् माहात्म्यंतस्मिन् कृष्णंभगवन्तमनुव्रतोऽनुवर्तिता ॥ २४ ॥

---

भाषाटीका।

धनुर्धारियों में दोनों अर्जुन के समान अग्रणी ( प्रधान ) होगा। अग्नि के समान दुर्धर्ष और समुद्र के समान दुस्तर होगा ॥ २१ ॥

सिंह के समान विक्रमी और हिमाचल के समान साधुओं का सेवा करने योग्य होगा। पृथवी के समान तितिक्षु और माता पिता के समान सहनशील होगा ॥ २२ ॥

ब्रह्मा के समान समदर्शी और गिरीश ( शिव ) के समान शीघ्र प्रसन्न होनेवाला होगा। रमानाथ श्रीभगवान के समान सर्वभूताश्रय होगा ॥ २३ ॥

समस्त सद्गुणों के माहात्म्यमें यह श्रीकृष्ण का अनुव्रत होगा। रंतिदेवके समान उदार और ययाति के समान धार्मिक होगा २४

---

श्रीधरस्वामी

( धृत्या धैर्येण। सद्ग्रहः ) सन् भद्रो ग्रहोऽभिनिवेशो यस्य सः आहर्त्ता कर्त्ता ॥ २५ ॥

राजर्षीणां जनमेजयादीनाम् ॥ २६ ॥

द्विजपुत्रेण प्रेरितात् तक्षकात् आत्मनो मृत्युम् उपश्रुत्यहरेः पदं प्रपत्स्यते भजिष्यति ॥ २७ ॥

जिज्ञासितात्मयाथार्थ्यो मुनेर्व्याससुतादसौ
हित्वेदं नृप ! गङ्गायां यास्यत्यद्धाकुतोभयम् ॥ २८ ॥
इति राज्ञ उपादिश्य विप्रा जातककोविदाः
लब्धोपचितयः सर्व्वे प्रतिजग्मुः स्वकान् गृहान् ॥ २९ ॥
स एष लोके विख्यातः परीक्षिदिति यत् प्रभुः
गर्भे दृष्टमनुध्यायन् परीक्षेत नरेष्विह ॥ ३० ॥

श्रीधरस्वामी ।

ततश्च जिज्ञासितमात्मनो याथार्थ्यं येन स इदं शरीरं गङ्गायां हित्वा अकुतोभयं पदं यास्यति ॥ २८ ॥

लब्धा अपचितिः पूजा यैः ॥ २९ ॥

परीक्षिदिति नाम निर्वक्ति स एष इति । यद्यस्मात् प्रभुः समर्थः सन् गर्भे दृष्टं पुरुषमनुध्यायन्निह दृश्यमानेषु नरेषु मध्ये सर्वमपि नरं परीक्षेत अयमसौ भवेद्विति नो वेति विचारयेदतः परीक्षिदिति विख्यातः । पूर्वं दृष्टमिति वा पाठः ॥ ३० ॥

---

श्रीवीरराघव ।

धृत्याधैर्येणवलिसमः वैरोचनितुल्यः प्रह्लादइवकृष्णेभगवतिभक्तइतिशेषः सद्ग्रहः संतांग्राहकश्चैषशिशुरश्वमेधानामाहर्त्ताऽनुष्ठाताबृद्धानांज्ञानेनचबृद्धानांपर्युपासकः यथोचितसेवकः ॥ २५ ॥

राजर्षीणांजन्मेजयादीनांजनयिताउत्पथगामिनांधर्ममार्गातिवर्तिनांशास्ताभुवः पृथ्व्याहेतोर्धर्मस्यचकारणान्निमित्ताद्धर्मार्थंचेत्यर्थः पुषकलेर्निग्रहीतानिग्रहीष्यति ॥ २६ ॥

द्विजपुत्रेणोपसर्पितात्छापद्वारानियोजितात्तक्षकादात्मनः स्वस्यमृत्युंमरणमुपश्रुत्याकर्ण्यमुक्तोदेहतदनुबंधिषुसंगोयेनतथाभूतोहरेः पदंस्थानंप्रपत्स्यतेप्राप्स्यति ॥ २७ ॥

एतदेवोपपादयतिव्याससुतान्मुनेः शुकाज्जिज्ञासितंविचारितंनिर्णीतमितियावत् आत्मयाथात्म्यंप्रत्यगात्मपरमात्मस्वरूपस्वभावतत्त्वंदह येनसोऽसौपरीक्षित् हे नृप ? इदंशरीरंगंगायांत्यक्त्वानाखिलकुतश्चिद्भयंयस्मात्तद्धरेः पदंधामस्फुटंयास्यति ॥ २८ ॥ तदनुबंध्यसंगहेतुभूतं

इत्थंराज्ञेयुधिष्ठिरायतद्गुणकर्मादिकमुपादिश्यावेद्यजातकमधिकृत्यप्रवृत्तेज्योतिःशास्त्रेकोविदाअतिनिपुणाविप्राः सर्वेलब्धाऽपचितिर्बहुमतिर्यैस्तथाभूताः स्वकान्गृहान्प्रतिजग्मुः ॥ २९ ॥

सजातककोविदैरनुवर्णितैर्भाविगुणराघउत्तरासुतः परीक्षिदितिलोकेविख्यातः कुतः यद्यस्मात्प्रभुरयमुत्तरासुतोगर्भेमातुरुदरेदृष्टंपुरुषंध्यायन्निहलोकेनरेषुतंपुरुषंपरीक्षितवानितियावत् परीक्ष्यश्रीकृष्णमध्यवस्यदित्यर्थः ततः प्रवृत्तिनिमित्तात्परीक्षिच्छब्दवाच्योविख्यातइत्यर्थः पूर्वंपर्यैक्षतकइत्यसावितिगर्भावस्थायामपिपरीक्षणमपितच्छब्दप्रवृत्तिनिमित्तमितिसूचितंपरिपूर्वादीक्षतेः शतारपरीक्षिदितिरूपंपरीक्षादिति च प्रायिकः पाठोदृश्यतेहृसृरुहियुषिभ्यः इत्यौणादिकसूत्रे ईक्षतेर्ग्रहणाभावेऽपिवाहुलकादितिप्रत्ययेहरित्सरिदादिशब्दवत्साध्यः ॥ ३० ॥

---

श्रीविजयध्वजः ।

धृत्यांधर्यं गृह्णातीतिग्रहीभक्तिःसतीभाक्तिर्यस्यसतथोक्तः "अनुवदग्रहणात्तुनतथात्वम् ॥३।३।१८॥ इतिसूत्रात् ॥ २५ ॥

राजर्षीणांकुमाराणांजनयिताउत्पादकः उत्पथगामिनाम् अशास्त्रविहितमार्गवर्तिनांशास्ता धर्मस्यभगवतः दुःखापादनकारणाद् कलेर्निग्रहीतानिगृह्यशिक्षाकर्ता ॥ २६ ॥

द्विजपुत्रोपसर्जितात् द्विजकुमारप्रेरितात्तक्षकात् मुक्तसंगः पुत्रादिसंगरहितः ॥ २७ ॥

व्याससुताच्छ्रीशुकात् मुनेर्जिज्ञासितंविचारितम् आत्मनः परमात्मनः यथास्वरूपसंबंधिगुणाधिक्यंयेनसतथोक्तः इदंशरीरम् अद्धासमीचीनम् अकुतोभयस्वरूपानंदाविर्भावलक्षणंमोक्षंयास्यतीत्यन्वयः ॥ २८ ॥

लब्धाप्राप्ताऽपचितिःपूजायैस्तेथोक्ताः ॥ २९ ॥

यःप्रभुः सर्पदर्शितक्षकाख्यसर्पदर्शनम् अनुध्यायन् निरंतरंचिंतयन् इहनरेषुसमीपमागच्छत्सुपरीक्षेतेतियस्मात्तस्मात्सएषलोकेपरीक्षिदितिविख्यातइतिपरीक्षिन्नामनिरुक्तिरित्यन्वयः ॥ ३० ॥

---

क्रमसंदर्भः ।

हरेः श्रीकृष्णस्य पदं चरणारविन्दम्—श्रानेन वैयासकिशब्दितेन भेजे खगेन्द्रध्वजपादमूलम् इत्युक्तेः । तदेव खल्वकुतोभयम्—मर्त्यो मृत्युव्यालभीतः पलायन् सर्वाँल्लोकान्निर्भयं नाध्यगच्छत् । त्वत्पादाब्जं प्राप्य यदृच्छयाद्य स्वस्थः शेते मृत्युरस्मादपैतीत्यादेः ॥ २७ ॥

ततो जिज्ञासित इत्यत्र आत्मा हरिरेव ॥ २८ ॥ २९ ॥

स एष इति श्रीकृष्णदर्शनात् पूर्वमतिबाल्यावस्थायामेव ज्ञेयम् ॥ ३० ॥ ३१ ॥

---

सुबोधिनी ।

धैर्येबलिसमः सचाष्टमेवक्ष्यतेसद्ग्रहोभक्तिः समीचीनाग्रहोवायज्विनामित्यत्रयागांतरैरपि तथात्वसंभवात् अश्वमेधाहरणंपृथगुक्तं स्वस्यसर्वापेक्षयाप्यधिकगुणवत्त्वेऽपिनगर्वइत्याह वृद्धानामितिपुत्रद्वाराप्युत्कर्षः ॥ २५ ॥

राजर्षीणांजनमेजयादीनांजनयितापुत्रमपिदंडयति तदनंतरंशासनमुक्तम् असकृन्मर्यादोल्लंघनेदंडः शासनंशिक्षापूर्वकंदंडः निगृहीतानिग्रहंकरिष्यतिभुवोधर्मस्यचकारणात् चरित्रंस्पष्टंभविष्यति ॥ २६ ॥

वैराग्यमंतेनिकटेफलपर्यवसायिभविष्यतीत्याह तक्षकादिति आत्मनोदेहस्यमृत्युंनाशंद्विजपुत्रः शृंगीउपसर्जितात् प्रेषितात् उपश्रुत्यमुक्तसंगः कृतन्यासः हरेः पदंगंगातीरसत्सभांतत्रहिभगवत्पदमभिव्यक्तम् ॥ २७ ॥

व्याससुतान्मुनेःशुकात् जिज्ञासितः सम्यग्विचारपूर्वकंज्ञातआत्मनोभगवतः स्वस्यचयाथात्म्यमइदमित्थतयानिर्णयः असावित्यंतेप्रतिनिर्देशः प्रत्यापत्स्यर्थः एतावत्कालंमध्येकार्यार्थंभगवतारक्षितः पुनरंतेब्रह्मास्त्रेणैवब्राह्मणप्रेषिततक्षकरूपेण उपसंहृतइतिइदंशरीरंनृपेति संबोधनंराज्ञांयुद्धनिष्ठानाममोहत्वज्ञापनाय अद्धानिश्चयेनअकुतोभयंभगवच्चरणारविंदमुपादेशनम् ॥ २८ ॥

एकांतेराजमंत्रज्ञानेहेतुः जातककोविदाइतिजातकंज्योतिः शास्त्रैकदेशः प्रकृतोपयोगित्वादेतदुक्तं वस्तुतः सर्वांशेनलब्धाउपचितिः प्रत्युपकारः धनादिर्यैस्तेसर्वेपूर्वोक्ताएतेचपूर्णमनोरथत्वात् स्वगृहानेवगतानान्यत्रभगवत्परितुष्टे पुरुषेकालादिनाभगवत्सेवकेनएतावन्न क्रियतइत्युक्तम् ॥ २९ ॥

क्रमात्तदुक्तस्यसंवादमाह सएषइति योभगवतारक्षितः सइदानीमाग्रिमकथार्थमनूद्यतेएषइति परीक्षिदितिविख्यातः ननुविष्णुरातइति विख्यातोभविष्यतीति सर्वज्ञानांवचनंतत्कथंपरीक्षिदिति लोकेविख्यातइतितत्राह यत्प्रभुरितियस्मात् कारणादयंप्रभुः भगवतास्वसामर्थ्यदानात्भगवद्रूपोजातइतिपूर्वंभगवत्करणापेक्षयापि इदानींतनभगवत्कृत्यंसंनिहितत्वादादरणीयं पूर्वस्यचफलमिति विष्णुरातनाम्नामतस्य क्रियोद्बोधकं परीक्षितमात्मानंश्रुत्वापरितोभगवंतमीक्षतेपरितईक्षामितः परीक्षितः अथवाइतइतिइवार्थेअव्ययं सरइमुखमित्यत्रप्रसिद्धं परितःईक्षदर्शनम् अविभक्तिकधातुनिर्देशः परितोदर्शनमितितकारांतः तेनएतत्संगे अन्यस्यापिपरितोदर्शनं भवतीतिज्ञापितं नरेष्विति आविस्तरांप्रपश्यंतीतिवाक्यात् भगवद्दर्शनाधिकारःसूचितः अथवापरीक्षिदितिविख्यातः तत्रहेतुः यस्मात्प्रभुर्भगवान्एवंज्ञातवान् अयंबालकः अग्रेनरेषुपूर्वदृष्टरूपमनुध्यायन् परीक्षेतपरीक्षांकुर्यादिति "अङ्गुष्ठमात्रंपुरुषंनिश्चकर्षयमोबलादि"ति जीवोऽप्यंगुष्ठमात्रोभवति परमितरसामग्रीरहितः अनेनवैलक्षण्येनजीवस्वरूपात् भिन्नंभगवत्स्वरूपंजानात्वित्येतदर्थंनामेत्यर्थः इहसंसारेअत्रागतस्यबुद्धिभ्रंशः प्रायेण भवतीति ॥ ३० ॥

---

श्रीविश्वनाथचक्रवर्त्ती ।

सद्ग्रहः सन् उत्कृष्ट एव आग्रहो यस्य सः । गुणानुक्त्वा कर्म्माण्याह आहर्त्तेति ॥ २५ ॥ २६ ॥

उपसर्जितात् प्रेरितात् ॥ २७ ॥

जिज्ञासितं विचारितम् आत्मनो याथार्थ्यं वास्तवं तत्त्वं येन सः । इदं शरीरम् ॥ २८ ॥

लब्धा अपचितिः पूजा यैः ॥ २९ ॥

परीक्षिदिति नाम निर्व्वक्ति स एष इति । इह दृश्यमानेषु नरेषु मध्ये गर्भे दृष्टं पुरुषम् अनुस्मरन् अयं स भवेन्न वेति विचारयेत् अतः परीक्षिदिति विख्यातः । पूर्व्वं दृष्टमिति च पाठः ॥ ३० ॥

---

सिद्धांतप्रदीपः ।

सत्समीचीनः ग्रहोऽभिनिवेशोयस्यसः ॥ २५ ॥ २६ ॥

द्विजपुत्रेणशापद्वाराप्रेरितात्तक्षकान्मृत्युंशुकोपदेशद्वाराहरेः पदंप्रपत्स्यतेप्राप्स्यति ॥ २७ ॥

एतदेवाहुः जिज्ञासितात्मयाथात्म्यइति जिज्ञासितमात्मनः सर्वात्मनः कृष्णस्ययाथात्म्यंयेनसः ॥ २८ ॥

इत्येवमुपादिश्यनिर्दिश्यनिवेद्यलब्धोपचितयः लब्धाउपचितिः पूजादक्षिणायैस्ते ॥ २९ ॥

अद्यतोगर्भेदृष्टंभगवंतमनुध्यायन्नरेषुपरीक्षेत अतः सएषः प्रभुः प्रजापालः लोकेपरीक्षिदितिविख्यातः ॥ ३० ॥

---

स राजपुत्रो ववृधे आशु शुक्ल इवोडुपः
आपूर्य्यमाणः पितृभिः काष्ठाभिरिव सोऽन्वहम् ॥ ३१ ॥
( वाल एव स धर्म्मात्मा कृष्णभक्तो निसर्गतः
प्रीतिदः सर्वलोकस्य महाभागवतः सुधीः ॥ ३२ ॥
यक्ष्यमाणोऽश्वमेधेन ज्ञातिद्रोहजिहासया ।
राजाऽलब्धधनो दध्यौ नान्यत्र करदण्डयोः ॥ ३३ ॥
तदभिप्रेतमालक्ष्य भ्रातरोऽच्युतचोदिताः ।
धनं प्रहीणमाजाहुरुदीच्यां दिशि भूरिशः ॥ ३४ ॥

भाषा टीका ।

धैर्य में वलिराज के समान और श्रीकृष्ण के सदग्रह में प्रह्लाद के समान होगा। अश्वमेध यज्ञ करेगा वृद्धों की उपासन करेगा ॥ २५ ॥

राजर्षि पुत्रों को उत्पन्न करेगा। उत्पथगामियों का शासन करेगा। धर्म और पृथ्वी के कारण कलियुग का निग्रह करेगा ॥ २६ ॥

द्विज पुत्र के भेजे तक्षक से अपनी मृत्यु सुनकर मुक्त संग होकर हरि के पद को प्राप्त होगा ॥ २७ ॥

व्यास पुत्र मुनि शुकदेव जी से आत्मयाथात्म जानकर गंगा तट पर इस शरीर को छोड़कर हे नृप ? ( युधिष्ठिर ) यह अकुतो भय पद को जायगा ॥ २८ ॥

जातक फल के कहने वाले विप्र राजा को यह सुनाकर पूजन लेकर अपने अपने घर चलेगये ॥ २९ ॥

यह बालक प्रभु ( समर्थ ) हो गर्भ में देखे रूप का ध्यान करता सब मनुष्यों में उस रूप वाले की परिक्षा करता था इसी से लोक में परीक्षित नाम से विख्यात हुआ ॥ ३० ॥

---

श्रीधरस्वामी ।

शुक्ले शुक्लपक्षे स प्रसिद्ध उडुपोऽन्वहं यथा काष्ठाभिः पंचदशकलाभिरापूर्यमाणो वर्द्धते एवं पितृभिर्युधिष्ठिरादिभिः कामैश्चतुःषष्टिकलाभिश्च आपूर्यमाणो ववृधे ॥ ३१ ॥ ३२ ॥

पूर्व्वमपकृष्योक्तान् अश्वमेधान् स्वावसरे सप्रकारं कथयति। ज्ञातिद्रोहस्य हानेच्छया यक्ष्यमाणः। करदण्डयोरन्यत्र ताभ्यां विना न लब्धधनः दध्यौ चिन्तयामास करदण्डधनस्य परिजनभरणमात्रोपक्षीणत्वात् ॥ ३३ ॥

प्रहीणं मरुत्तस्य यज्ञे त्यक्तं सुवर्णपात्रादिकमानीतवन्तः ॥ ३४ ॥

---

दीपनी ।

कामैः विषयभोगैरित्यर्थः। चतुः षष्टिकलाभिः नृत्यगीतादिचतुः षष्टिविद्याभिरित्यर्थः ॥ ३१ ॥ ३२ ॥

अपकृष्य संक्षिप्योक्तानित्यर्थः ॥ ३३—३७ ॥

---

श्रीवीरराघवः ।

परीक्षिदितिप्रसिद्धोराजपुत्रः एकस्तच्छब्दः प्रसिद्धिद्योतकः अपरस्तुप्रकृतपरामर्शकइत्यतोनपौनरुक्त्यंपितृभिर्वर्द्धयितृभिर्हेतुभूतैरन्वहंहिमांशुरिवववृधे यथाशुक्लेपक्षेआपूर्यमाणाभिर्वृद्धिंगताभिः काष्ठाभिरुडुपश्चंद्रोवर्द्धतेतद्वदित्यर्थः ॥ ३१ ॥ ३२ ॥

अथयहकार्षतितइतिप्रश्नस्योत्तरंसोपोद्घातमाह यक्ष्यमाणइत्यादिनायावत्पंचदशाध्यायसमाप्ति ज्ञातिद्रोहजिहासयाज्ञातिवधप्रयुक्तदोषपरिजिहीर्षयाऽश्वमेधेन"तरतिब्रह्महत्यांयोऽश्वमेधेनयजत"इतिब्रह्महत्यादीनामपिपरिहारकतयाश्रुतेन "ब्रह्महत्याश्वमेधानांनापरं पुण्यपापयो"रितिनिरतिशयपुण्यत्वेनचप्रसिद्धेनाश्वमेधेनयक्ष्यमाणोभगवंतमाराधयितुकामोराजायुधिष्ठिरः अन्यत्रकरदण्डयोः करः स्वामिग्राह्योदण्डःप्रसिद्धः तयोरन्यत्रताभ्यांविनेत्यर्थः अलब्धधनः उपायांतरेणाप्राप्तधनः मनोदध्यौचिंतितवान्करदंडाभ्यांलब्धंधनंनयागार्हमुपायांतरेणतुनप्राप्तंधनमतः कथंयक्ष्यामीतिचिन्ताव्याकुलोबभूवेत्यर्थः ॥ ३३ ॥

तस्ययुधिष्ठिरस्याभिप्रेतमालक्ष्याच्युतेनाहूतेनश्रीकृष्णेनचोदिताआदिष्टाः आहूतोभगवानितिवक्ष्यमाणत्वात् भ्रातरोभीमादयउदीच्यांदिशिप्रहीणंपराजितैराजभिस्त्यक्तंधनंभूरिशः आजह्रुः ॥ ३४ ॥

---

श्रीविजयध्वजः ।

उडुपश्चंद्रः शुक्लपक्षेकाष्ठाभिर्दिग्देवतासरस्वतीगोभिरन्वहम् यथातथासराजपुत्रोऽपिपितृभिर्युधिष्ठिरादिभिरन्वहम्अन्नपानादिभिः पूर्यमाणएधतेत्यर्थः ॥ ३१ ॥ ३२ ॥

ज्ञातिद्रोहजिहासयाभीष्मादिवधनिमित्तपापहमनेच्छयाश्वमेधयज्ञेभगवंतंयष्टुकामोराजाकरदण्डयोरन्यत्रकरदंडवर्जयित्वानलब्धं यमधेनसोऽलब्धधनः दध्याविस्यन्वयः ॥ ३३ ॥

उदीच्याउत्तरस्याः दिशः भूरिशः बहुलंप्रहीणंयज्ञशिष्टंमरुत्तेनपूर्वंजेनस्थापितंधनम् ॥ ३४ ॥

---

क्रमसन्दर्भः ।

बाल एवेति पद्यमिदं चित्सुखसम्मतम् ॥ ३२ ॥

यक्ष्यमाण इति तत्परितोषार्थं श्रीभीष्मोपदेशेनैवेति ज्ञेयम् । अन्यथा भीष्मेऽप्यनास्था स्यात् ॥ ३३ ॥ ३४ ॥ ३५ ॥

---

सुबोधिनी ।

दग्धशरीरत्वात्तीक्ष्णतामाशंक्याह शुक्लेशुक्लपक्षेचउडुपइतिस्त्रीबलिष्ठत्वमुक्तं तापवह्निपोषणाभिन्नाः पितृभिरापूर्यमाणः सर्वाभीष्टपदार्थदानात् काष्ठाभिः कलाभिः प्रत्यहंवैलक्षण्यदर्शनार्थंदृष्टान्तः ॥ ३१ ॥ ३२ ॥

एवंतस्यचरित्रं सर्वमुक्त्वापूर्वंभगवन्मानसकृतमश्वमेधंपुनःकालेकेवलंभगवत्तैवसम्पादितमिति वक्तुंप्रकारमाह यक्ष्यमाणइति करं दण्डादिकंत्वकर्त्तव्यंद्रोहपरिहारार्थत्वादश्वमेधस्यउचितकरादेस्तुराज्यनिर्वाहकत्वम् अतः राजालब्धधनः कथंधनंप्राप्स्यामीतिदध्यौकरदण्डयोरुक्तोत्रिनियोगः राजत्वादेवनप्रतिग्रहः देवताधिष्ठानान्नमेर्वादेः समानयनं पूर्वराज्यवर्णनेयउत्कर्षउक्तः सप्रजानामर्थेराज्ञस्तु कुतोऽपियाचनमयुक्तमतश्चिताभगवानपिनयाचितः अन्यथानूतनमेवदद्यात् ॥ ३३ ॥

किंतु तदभिप्रेतमालक्ष्यभ्रातरएवसमानीतवंतः तेऽपिचिंताकुलिताः भगवतैवप्रेरिताः अनेनभक्तानामल्पाचिंतामपि भगवान्नसहत-इतिसूचितं प्रहीणंबहुअतिनिंदितंवाब्राह्मणानांतादिति आनयनंभगवत्प्रेरणात् द्रोहस्तेषांपीडाब्राह्मणादीनांदुःखदूरीकरणार्थंप्रवृत्तोऽश्वमेधःब्राह्मणानामेवद्रव्यैरुचितः उदीच्यांदिशिमरुत्तयज्ञेदक्षिणात्वेनप्राप्तंद्रव्यंभाराक्रांतुमशक्यम् उत्तरदेशेवहुपरित्यक्तमस्तितदानींतनमित्यर्थः ॥ ३४ ॥

---

श्रीविश्वनाथचक्रवर्त्ती ।

शुक्ले शुक्लपक्षे उडुपश्चन्द्र इव ववृधे । आपूर्यमाण इति कलाभिः लालनैश्चेति ज्ञेयम् । काष्ठाभिर्दिग्भिरिव पितृभिर्युधिष्ठिरादिभि-रावृत इति शेषः ॥ ३१ ॥ ३२ ॥

करदण्डयोरन्यत्र ताभ्यां विना धनालाभात् धनप्राचुर्य्यस्यापेक्षणीयत्वात् दध्यौ चिन्तयामास ॥ ३३ ॥

प्रहीणं मरुत्तस्य यज्ञे त्यक्तस्वर्णपात्रादिकमानीतवन्तः ॥ ३४ ॥

---

सिद्धांतप्रदीपः ।

अन्वहंकाष्ठाभिः कलाभिः उडुपइवपितृभिर्युधिष्ठिरादिभिरापूर्यमाणोववृधे ॥ ३१ ॥ ३२ ॥

करदंडयोरन्यत्रविनाऽलब्धधनोधनार्थंदध्यौ करदंडाभ्यामायस्यव्ययपर्याप्तत्वात् ॥ ३३ ॥

आश्वमेधिकेपर्वणिप्रसिद्धेनसंवर्तमुनिकृपालब्धेनभूरिधनेनमरुत्तोनामराजायज्ञंकृतवान् उर्वरितंबहुधनंतेनोदीच्यांप्रहीणंत्यक्तंततोवहुभिर्गजादिभिराजह्रुरानीतवंतः ॥ ३४ ॥

---

भाषाटीका ।

वह राज पुत्र युधिष्ठिरादिक पितृ वर्गों से समस्त कामों से पूर्य माण होता शीघ्र ही बढा । जैसे दिशाओं से पूर्ण होकर शुक्ल-पक्ष का चन्द्रमा बढता है ॥ ३१ ॥

वह परीक्षित् बालक अवस्था ही में स्वभाव ही से धर्मात्मा कृष्णभक्त सबको प्रसन्न करनेवाला महाभागवत बुद्धिवान् हुआ था ॥ ३२ ॥

तेन सम्भृतसम्भारो लब्धकामो युधिष्ठिरः ।
वाजिमेधैस्त्रिभिर्भीतो यज्ञेशमयजद्धरिम् ॥ ३५ ॥
( आहूतो भगवान् राज्ञा याजयित्वा द्विजैर्नृपम् ।
उवास कतिचिन्मासान् सुहृदां प्रियकाम्यया ॥ ३६ ॥ )
( ततो राज्ञाभ्यनुज्ञातः कृष्णाया सह बन्धुभिः ।
ययौ द्वारवतीं ❀ कृष्णः सार्ज्जुनो यदुभिर्वृतः ॥ ३७ ॥ )

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्यां प्रथमस्कन्धे
पारीक्षिते परीक्षिज्जन्म नाम द्वादशोऽध्याय ॥ १२ ॥

भाषाटीका ।

ज्ञाति के द्रोह से उत्थित विकर्म से मुक्त होने की इच्छा कर अश्वमेध से यजन करने को बड़े चिन्तित हुए । क्योंकि यज्ञ को शुक्ल धन चाहिये और यहां कर और दंड से भिन्न धन संग्रह का कोई उपाय नहीं है ॥ ३३ ॥

राजा का अभिप्राय जानकर श्रीकृष्ण के प्रेरित राजा के भ्राता उत्तर दिशा में मरुत्त राजा के यज्ञ का रखा धन बहुत ले आये ॥३४॥

---

श्रीधरस्वामी ।

सम्भृतसम्भारः सम्पादितयज्ञोपकरणः । भीतो ज्ञातिद्रोहात् ॥ ३५ ॥ ३६ ॥ ३७ ॥

इतिश्रीमद्भागवतभावार्थदीपिकायां प्रथमस्कन्धे द्वादशोऽध्यायः ॥ १२ ॥

---

श्रीवीरराघवः ।

तेनधनेनसंभृताः संचिताभाराः योगसाधनानियस्यसोऽतएवलब्धकामायुधिष्ठिरः त्रिभिर्वाजिमेधैर्भीतोमंत्रतंत्रद्रव्यलोपादिभ्योभीतः निश्छिद्रंयथातथेतिभावः हरिंसम्यगाराधितवान् ॥ ३५ ॥

भगवान्कृष्णोऽपिराज्ञाहूतः द्विजैर्नृपंयुधिष्ठिरंयाजयित्वासुहृदांप्रीतिकर्तुमिच्छयाकतिचिन्मासानुवास ॥ ३६ ॥

ततोबंधुभिः सहराज्ञायुधिष्ठिरेणकृष्णायाद्रौपद्याचानुज्ञातोऽर्जुनेनसहितोयदुभिश्चपरिवृतोहेब्रह्मन् ! द्वारवतींययौ ॥ ३७ ॥

इतिश्रीवीरराघवटीकायां प्रथमस्कंधेद्वादशोऽध्यायः ॥ १२ ॥

---

श्रीविजयध्वजः

तेनद्रव्येणसंभृतः संपन्नः संभारोयज्ञसाधनंयेनसतथोक्तः ॥ ३५ ॥

सुहृदः युधिष्ठिरस्यप्रियेच्छया ॥ ३६ ॥

बंधुभिः सहकृष्णायाद्रौपद्याचाभ्यनुज्ञातः सार्जुनः अर्जुनेनसहितः यदुभिश्चपरिवृतः कृष्णोद्वारवतींययावित्यन्वयः ॥ ३७ ॥

इतिश्रीमद्भागवतेमहापुराणेप्रथमस्कंधेश्रीविजयध्वजटीकायामेकादशोऽध्यायः ॥ ११ ॥

---

क्रमसंदर्भः ।

अत्र—आहूतो भगवान् राज्ञा याजयित्वा द्विजैर्नृपम् । उवास कतिचिन्मासान् सुहृदां प्रियकाम्यया ॥ ततो राज्ञाभ्यनुज्ञातः कृष्णाया सह बन्धुभिः । ययौ द्वारवतीं कृष्णः सार्ज्जुनो यदुभिर्वृतः ॥ इति काचित्कं पद्यद्वयं सम्बन्धोक्तिकारेण व्याख्यातमस्ति ॥३६॥३७॥

इति श्रीमद्भागवतप्रथमस्कन्धस्य श्रीजीवगोस्वामिकृतक्रमसन्दर्भे द्वादशोऽध्यायः ॥ १२ ॥

---

ब्रह्मान्वाति वीरराघवपाठः ।

सुबोधिनी।

तेनसम्भृताःसाज्यंपशवः पुरोडाशीयादयः सम्भारायेनतस्यायुक्तत्वं निराकारोतिधर्मपुत्रइतित्यक्तंभूमौराजकीयमिति युधिष्ठिरस्वाद्श्वमेधसिद्धिः अश्वमेधैरेवयज्ञैः यज्ञेनयज्ञमयजंतेतिश्रुत्यर्थख्यापनार्थमेवमुक्तंहरिमितिब्राह्मणानामपि दुःखदूरीकर्त्तारमतोनपूर्वोक्तविरोधः आभूतइतिश्लोकद्वयंप्रक्षिप्तम् ॥ ३५ ॥ ३६ ॥ ३७ ॥

इतिश्रीभागवतसुबोधिन्यांश्रीमल्लक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां प्रथमस्कन्धेद्वादशोऽध्यायः ॥ १२ ॥

---

श्रीविश्वनाथचक्रवर्त्ती।

सम्भृतसम्भारः सम्पादितयज्ञोपकरणः। भीतो ज्ञातिद्रोहात् ॥ ३५ ॥ ३६ ॥ ३७ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।
प्रथमे द्वादशोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ १२ ॥

---

सिद्धांतप्रदीपः।

ज्ञातिद्रोहाद्भीतः तेनधनेनसंभृतः संपादितः यज्ञोपकरणरूपः संभारोयेनसः ॥ ३५ ॥ ३६ ॥ ३७ ॥

इतिश्रीमद्भागवतसिद्धांतप्रदीपेप्रथमस्कंधीयेद्वादशाध्यायार्थप्रकाशः ॥ १२ ॥

---

भाषाटीका।

उसी धन से यज्ञ का सब संभार संग्रह कर जाति द्रोह से भीत राजा धर्म पुत्र युधिष्ठिर ने तीन अश्वमेधों से भगवान का यजन किया ॥ ३५ ॥

राजा के बुलाये हुए भगवान् श्रीकृष्ण ने ब्राह्मणों के द्वारा राजा का यज्ञ कराकर मित्रों के प्रीति के अर्थ कितनेक मास निवास किया ॥ ३६ ॥

तदनंतर राजा युधिष्ठिर से तथा द्रौपदी से और बंधुओं से आज्ञा लेकर यादवों तथा अर्जुन के सहित द्वारकापुरी को पधारे ॥३७॥

प्रथम स्कंध का द्वादश अध्याय समाप्त।

---:*:---

## त्रयोदशोऽध्यायः।

—::*::—

सूत उवाच।

विदुरस्तीर्थयात्रायां मैत्रेयादात्मनो गतिम्।
ज्ञात्वागाद्धास्तिनपुरं तयावाप्तविवित्सितः॥ १॥
यावतः कृतवान् प्रश्नान् क्षत्ता कौशारवाग्रतः।
जातैकभक्तिर्गोविन्दे तेभ्यश्चोपरराम ह॥ २॥
तं बन्धुमागतं दृष्ट्वा धर्म्मपुत्रः सहानुजः।
धृतराष्ट्रो युयुत्सुश्च सूतः शारद्वतः पृथा॥ ३॥
गान्धारी द्रौपदी ब्रह्मन्! सुभद्रा चोत्तरा कृपी।
अन्याश्च यामयः पाण्डोर्ज्ञातयः ससुताः स्त्रियः॥
प्रत्युज्जग्मुः प्रहर्षेण प्राणं तन्व इवागतम्॥ ४॥

### श्रीधरस्वामी।

निर्गमो धृतराष्ट्रस्य विदुरोक्त्या त्रयोदशे।
उक्तः पौत्राभिषेकेण वक्तुं राज्ञो महापथम्॥ ०॥

इदानीं परीक्षितः कलिनिग्रहादिकर्माणि कथयिष्यन् विदुरागमनेन धृतराष्ट्रप्रस्थानं ततोऽर्जुनागमनं ततः पांडवप्रस्थानंच निरूपयति त्रिभिरध्यायैः। गतिं हरिम्। तया आत्मगत्या अवाप्तं विवित्सितं ज्ञातुमिष्टं सर्वं येन॥ १॥

तदेवाह। यावतः कर्मयोगव्रतादिविषयान् प्रश्नान् प्रथमं कृतवान्। कौशारवस्य मैत्रेयस्य पुरतः। पश्चात् त्रिचतुरप्रश्नार्थज्ञानमात्रेण गोविन्दे जातैकभक्तिः कृतार्थः सन् तेभ्यः प्रश्नेभ्यः उपरराम ततः परं न जिज्ञासितवान्॥ २॥

सूतः संजयः शारद्वतः कृपः पृथा कुंती॥ ३॥

कृपी द्रोणभार्या। यामयो ज्ञातिभार्याः। अन्याश्च स्त्रियः। प्राणं तन्व इव कुतश्चिन्मूर्च्छादिदोषतः प्राणेऽवसन्ने सति तन्वः करांघ्र्यादयो निश्चेष्टा भवन्ति पुनस्तस्मिन्नाविर्भूते सति यथोत्तिष्ठन्ति तद्वत्॥ ४॥

———

### दीपनी।

१—८

———

### श्रीवीरराघवः।

कुरुपाण्डवयुद्धात्प्रागेवमंत्रायधृतराष्ट्रेणाहूतस्तत्पुत्रेणपराभूतोविदुरः तीर्थयात्रायांनिमित्तभूतायांसत्यांगतः तत्रात्मनः परमात्मनो गतिंमैत्रेयाद्दषेर्ज्ञात्वातयाआत्मगत्याज्ञानविषयभूतयाअवाप्ताविवित्सितः कृतकृत्यविवित्सितः इतिपाठेविदितवेद्यः "येनाश्रुतंश्रुतंभवत्यमतंमतमविज्ञातंविज्ञातमात्मानिखल्वरेदृष्टेश्रुतेमतेविदितेइदंसर्वविज्ञातंभवती"तिश्रुतेः पुनर्हास्तिनपुरंप्रागात्प्राप्तः॥ १॥

तयावाप्तविविंत्सितइत्येतदेवोपपादयतियावतः॥ क्षत्ताविदुरः कौषारवोमैत्रेयः कुषारवगोत्रप्रसूतत्वात्तस्याग्रतः यावतः प्रश्नान्कृतवान्तत्रकतिपयानामेवप्रश्नानामुत्तरैर्गोविंदेजातएकाऽव्यभिचारिण्यनन्यप्रयोजनाभक्तिर्यस्यतथाभूतः तेभ्योऽवशिष्टप्रश्नेभ्यउपररामअवशिष्टप्रश्नानामुत्तराणिनशुश्रावेत्यर्थः जातैकभक्तिरित्यनेनकृतकृत्यत्वमुक्तम्॥ २॥

तमागतंबंधुंज्ञात्वासहानुजोधर्मपुत्रोयुधिष्ठिरःधृतराष्ट्रादयः सूतः संजयः शारद्वतः कृपः॥ ३॥

अन्याश्चजामयः अंतः पुरस्त्रियः ससुताःपांडोर्ज्ञातयश्च हेब्रह्मन्!॥ ४॥

———

श्रीविजयध्वजः ।

विषयरागः संसाराय तदभावोविमुक्तयेइत्यतोमुमुक्षुणास्वतोवैराग्यंपरतोवासंपादनीयमित्ययमर्थः प्रतिपाद्यतेऽस्मिन्नध्याये तत्र शुद्धांतः करणस्यैवविषयविरागः सुदृढइतिसचकर्मणार्तार्थसेवयावास्यादित्यभिप्रेत्यविदुरस्यतीर्थसेवांकृत्वायुधिष्ठिरादिबंधुदिदृक्षयाहास्तिनपुरागतिमाह विदुरइतिविदुरोहास्तिनपुरमगादित्यन्वयः किंकृत्वातीर्थयात्रायांकृष्णाद्वैपायनान्मैत्रेयादात्मनः परमात्मनोगतिंज्ञानं जीवस्यगतिंस्वर्गनरकादिविषयामितिवा तयापरमात्मविषयाअवाप्तविवित्सितंज्ञातुमिष्टंयेनसतथोक्तः ॥ १ ॥

नापृष्टः कस्यचिद्ब्रूयादितिवचनात्प्रश्नप्रतिवचनाभ्यांतत्त्वमवगम्यालंबुद्धिरभूदित्याह यावतइति क्षत्ताविदुरःकुषारवस्यापत्यस्य मैत्रेयस्याग्रतोयावतःप्रश्नान्कृतवान्तेभ्यः प्रश्नेभ्योमैत्रेयेणपरिहृतेभ्यउपररामज्ञाततत्वादलंबुद्धिमानभूत् हशब्दः तृप्तिसूचकः चशब्द एवार्थे तत्त्वज्ञाननफलमाह जातेति ततोज्ञानातिशयेनजातएकाप्रधानाभक्तिर्यस्यसतथोक्तः कुत्रगोविन्देश्रीकृष्णे अनेनभक्तिज्ञानयोरन्योऽन्यहेतुत्वमसूचि ॥ २ ॥

सूतः संजयः शारद्वतः कृपः ॥ ३ ॥

अन्याः पांडोर्जामयः पुत्रभार्याः अन्यावाप्रसिद्धनामानः जामयः स्वसारोवा ॥ ४ ॥

---

क्रमसंदर्भः ।

विदुर इति । सोऽयं तृतीयस्कन्धानुसारेण युद्धात् पूर्व्वं दुर्य्योधनाद्विच्छिद्य गत आसीदिति ज्ञेयम् । आत्मनो गतिर्हरेर्भक्तिः तयावाप्तविवित्सित इति तज्ज्ञानेनैव सर्व्वं ज्ञातवानित्यर्थः सर्व्वाश्रयत्वात्तस्य ॥ १—८

---

सुबोधिनी ।

एवंभागवतश्रोतुर्देहोत्पत्तिर्निरूपिता पुरुषत्रयमुक्तिर्हितन्मुक्त्यर्थंनिरूप्यते ॥१॥ पितापितामहश्चैकोधृतराष्ट्रस्ततः परः प्रपितामहमुक्तिर्हि पूर्वंलतउदीर्यते ॥ २ ॥ ततोऽध्यायद्वयेनैवाद्विरूपत्वात्पितामहे सनिमित्तांमुक्तिमाहहेतुकार्यविभेदनाम् ॥३॥ अमुक्तपितृकामुक्तिंनाप्नुवन्तीतिवार्यते अतोनिश्चिततासिद्ध्यैचित्तशुद्धिरिहोच्यते ॥४॥ ततोद्वयेनेन्द्रियाणांराज्यशौर्यादिवर्णनैः ततोवैराग्यसत्संगावधिकारःफलोन्मुखः ॥ ५ ॥ ततोभवतिपुष्टोऽपिनान्यथेत्यग्रिमाकथा तत्रप्रथमंधृतराष्ट्रमुक्तिरुच्यते साज्ञानसाध्येतिज्ञानसिद्ध्यर्थंविदुरप्रसंगउच्यते विदुरोऽवांतरव्यापारः धर्मराजत्वेनगुरुर्वाभगवतास्मृत इतितस्यदोषनिवृत्तिः विदुरमैत्रेयकथांस्कन्धद्वयंवक्ष्यते तदग्रिमकथात्रप्रयोजनार्थंनिरूप्यतेविदुरइतितीर्थयात्रायांसमागतायांचित्तशुद्धौउद्धवोपदेशात् मैत्रेयंप्राप्य आत्मनोभगवतोगतिंचेष्टांलीलामितियावत् तांज्ञात्वाज्ञानसंपन्नः हस्तिनापुरमगमत्भगवद्भक्तियथैवतस्यात्मयाथात्म्यंस्फुरितं तदाहतयावाप्तविवित्सितइति तयागत्याविवित्सितोविशेषेणज्ञातः अयमर्थः मैत्रेयसमीपेगत्वास्वस्यसर्वज्ञतासिद्ध्यैबहुपृष्टवान्तत्रतस्मिन् विदितेसर्वमिदंविदितंभवतीतिन्यायेनभगवच्चरित्रेज्ञातेसर्वंज्ञातंभवतीतितच्चरित्रंस्कन्धद्वयेनावगतं तत्रैवमर्थः संपन्नःसर्वंभगवदधीनंसयथाकरिष्यतितथाभविष्यतीतिकेवलंतदाश्रयतयास्थातव्यंयथाप्रेरयति तथासकरोतीतिकर्तव्यतत्रमध्येभगवदिच्छयाधृतराष्ट्रमुक्त्यर्थंप्रेरितः अग्रिमचरित्रमज्ञात्वापिफलदानात्शीघ्रंनगरेपुनः समागतइति ॥ १ ॥

अतएवपूर्वंयेबहवः पदार्थाः पृष्टाः तानश्रुत्वैवसमागतइत्याह यावतइति क्षत्ताअन्तःपुराध्यक्षः अनेनातिनिपुणत्वंबोधितंकौषारवः कुषारोः पुत्रः मैत्रेयः उत्तमाधिकारित्वात् चरित्रैकदेशश्रवणेऽपिभक्तिर्जाता अतः फलस्यजातत्वात् तेभ्यः प्रश्नेभ्यः उत्तरमश्रुत्वापिउपरराम ॥ २ ॥

एवंतस्यज्ञानवत्त्वात्पूर्वकथामनूद्यसमागतस्याग्रिमकृत्यंवदन्समयप्रतीक्षार्थंस्थितिसिद्ध्येतस्यसत्कारमाहतंबन्धुमित्येकादशभिः सर्वेन्द्रियप्रीतिनिमित्तंवध्यंत अनेनेतिबन्धुः सुखदुःखज्ञानमोक्षैः यथाधिकारंनिर्णयः आगतंदृष्ट्वाअन्यार्थमागतत्वात् नदूरात्ज्ञापनं येनाद्भुच्छ्युः सूतःजायंतयःशारद्वतः कृपः शरस्तंबेजातत्वात्ब्रह्मर्षितसम्बोधनम् ॥ ३ ॥

स्त्रीणांगणनायांविकाराभावायकृपीद्रोणपत्नीजामयः कुलस्त्रियः देवलक्षाभावार्थंपाण्डोरितिज्ञातयः पुरुषाःसुतैःआसर्वतःस्त्रीभिश्चसहिताःसकुटुम्बाज्ञातयइत्यर्थः ॥ ४ ॥

---

श्रीविश्वनाथचक्रवर्त्ती ।

( परीक्षितो जन्म वक्तुं द्रौणायस्त्रादिकथा यथा ।
अभिषेकं तथा वक्तुं विदुरागमनाद्यभूत् ॥ )
विदुरस्योपदेशेन धृतराष्ट्रस्य निर्गमः ।
राज्ञो विषादः शान्तिश्च नारदोक्त्या त्रयोदशे ॥ ० ॥

परीक्षितो जन्म उक्त्वा कलिनिग्रहादिकर्माणि कथयिष्यन् प्रथमं राज्याभिषेकं वक्तुं विदुरस्यागमनं ततो वैराग्योपदेशेन धृतराष्ट्र निष्क्रमः ततोऽर्जुनागमनं ततः पांडवप्रस्थानं च निरूपयति त्रिभिरध्यायैः गतिं । कृष्णम् । तया आत्मगत्या अवाप्तम् आत्मनो विवित्सितं प्राप्तुमिष्टं येन सः । विदॢ लाभे ॥ १ ॥

अभिसङ्गम्य विधिवत् परिष्वङ्गाभिवादनैः ॥ ५ ॥
मुमुचुः प्रेमबाष्पौघं विरहौत्कण्ठ्यकातराः ।
राजा तमर्हयाञ्चक्रे कृतासनपरिग्रहम् ॥ ६ ॥
तं भुक्तवन्तं विश्रान्तमासीनं सुखमासने ।
प्रश्रयावनतो राजा प्राह तेषाञ्च शृण्वताम् ॥ ७ ॥

युधिष्ठिर उवाच । अपि स्मरथ नो युष्मत्पक्षच्छायासमेधितान् ।
विपद्गणाद्विषाग्न्यादेर्मोचिता यत् समातृकाः ॥ ८ ॥

श्रीविश्वनाथचक्रवर्त्ती ।

तेभ्यः प्रश्नेभ्य उपरराम तदुत्तरं श्रोतुं नैच्छत् भक्तौ जातायामन्यस्य जिज्ञास्यस्य वैयर्थ्यादिति भावः ॥ २ ॥
सूतः संजयः । शारद्वतः कृपः । कृपी द्रोणभार्य्या । जामयो ज्ञातिभार्य्याः । जामिशब्दश्चवर्ग्यादिरन्तःस्थादिश्च कोषेषु दृष्टः । प्राणं मूर्च्छादिदावेशे गतप्रायं पुनरागतं संलक्ष्य तन्वः करचरणादिकाः यथा प्रत्युद्गच्छन्ति धृतस्वस्वचेष्टा भवन्ति ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥

---

सिद्धांतप्रदीपः ।

परीक्षितः कलिनिग्रहादीनिकर्माणिकथयिष्यन्धृतराष्ट्रप्रस्थानकथनपूर्वकं संस्थांचपांडुपुत्राणांवक्ष्येइतिप्रतिज्ञातंपांडवप्रस्थानंनिरूपयतिविदुरइत्यादिभिरध्यायैः आत्मनोगतिंपरमात्मविद्यांज्ञात्वातयावासंविवित्सितंवेत्तुमिष्टंसर्वंयेनसः यद्विज्ञानेनसर्वंविज्ञातंभवतीतिश्रुतेः ॥ १ ॥
तयावासंविवित्सितइतियदुक्तंतद्विवृणोति क्षत्ताविदुरः कौषारवाग्रतोमैत्रेयपुरतः प्रश्नान्कृतवान्तेषुकतिपयप्रश्नप्रत्युत्तरैर्गोविन्देजातैकभक्तिः गोविंदस्वरूपगुणशक्त्यादियाथात्म्यबोधनजातायेकाऽव्यभिचारिणीभक्तिर्यस्यसः तेभ्याऽवशिष्टेभ्यः प्रश्नेभ्यउपरराम ॥ २ ॥
सूतः संजयः ॥ ३ ॥
पांडोःज्ञातयः स्वसुताः स्त्रियः अन्याश्चजामयोऽतः पुरस्त्रियः ॥ ४ ॥

---

भाषा टीका ।

( सूत उवाच ) विदुर, तीर्थ यात्रा में मैत्रेय से आत्मा की गति जानकर हस्तिनापुर को चले गये । उन आत्मा की गति हरि हैं ही पूर्ण हो गया है सब ज्ञातव्य विषय जिनका॥ १ ॥
विदुर ने कौशारव ( मैत्रेय ) से जितने प्रश्न किये थे उनमें से कई प्रश्नों के उत्तर ही से उनको गोविन्द में एक भक्ति होगई । अतः वे और और प्रश्नों से उपरत होगये ॥ २ ॥
उन आये अपने बंधु विदुर जी को, अनुजों सहित धर्म पुत्र धृतराष्ट्र युयुत्सू सूत शारद्वान् पृथा गान्धारी द्रौपदी सुभद्रा उत्तरा कृपी और हे ब्रह्मन् पांडु वंश की और और स्त्रियें पुत्र सहित इन सब ने प्रहर्ष से प्रत्युद्गमन किया । जैसे मूर्छा के अनन्तर आये प्राणों को शरीर की सब इन्द्रियें प्रत्युद्गमन करतीं हैं ॥ ३ ॥ ४ ॥

---

श्रीधरस्वामी ।

विरहेण यत् औत्कंठ्यम् तेन कातरा विवशाः ॥ ५ ॥ ६ ॥
तम् विदुरम् ॥ ७ ॥
पक्षिणो ह्यपत्यानि यथातिस्नेहेन पक्षच्छायया वर्द्धयन्ति तद्वत् युष्मत्पक्षपातच्छायया समेधितान् नः अस्मान् किं स्मरथ । समेधितत्वमेवाह विपद्गणाद्यस्मान्मोचिताः स्म ॥ ८ ॥

---

श्रीवीरराघवः ।

प्रहर्षेणप्रत्युज्जग्मुरभिमुखंययुः यथाआगतंप्राणंतन्वः शरीराणिनद्धप्राणमागतमिवतंप्रत्युज्जग्मुरित्यर्थः परिष्वङ्गाभिवादनैर्विधिवद्यथोचितमभिसंगम्य ॥ ५ ॥

### श्रीवीरराघव ।

विरहप्रयुक्तौत्कंठयेनकातराः प्रेमवाष्पौघमानंदाश्रुसमूहंमुमुचुः कृतः आसनपरिग्रहोयेनतंविदुरंराजायुधिष्ठिरोऽर्हयामासपूजयामास ॥६॥

ततोभुक्तवंतंविश्रांतमासनेसुखमासीनंतंविदुरंस्वानांशृण्वतांसतांप्रश्रयेणावनतः प्राह ॥ ७ ॥

तदेवाहअपीत्यादिभिश्चतुर्भिः युष्मत्तवपक्षयोः परिग्रहरूपयोः छायायांसमेधितान्नोऽस्मानपिस्मरार्णयकम् आत्मनांतत्पक्षच्छायासमेधितत्वंस्मारयतिसमातृकाः मात्रासहितावयंविषाग्न्यादिरूपाद्विपद्गणात्त्वयाविमोचिताः ॥ ८ ॥

---

### श्रीविजयध्वजः ।

आगतान्प्राणान्दृष्ट्वातन्वः भोगागतनानिशरीराणीवतत्प्राणोपपन्नउदतिष्ठदितिश्रुतेः ॥ ५ ॥

मियः प्रेमबाष्पौघंप्रेमनिमित्तनेत्रजलप्रवाहम्अर्हयांचक्रेपूजयामास औत्कंठयकातराः औत्कंठयेनपरवशाः कृतआसनस्यपीठस्यपरिग्रहः स्वीकारोयेनसतथोक्तस्तम् ॥ ६ ॥

स्वकीयानांचशृण्वतांसताम् ॥ ७ ॥

नोऽस्मान्स्मरथयूयमितिशेषः मात्रासहवर्तमानाःसमातृकाः विषाग्न्यादेर्विपद्गणान्मोचिताः यद्येनतस्मादितिशेषः ॥ ८ ॥

---

### सुबोधिनी ।

प्रत्युज्जग्मुः संमुखतयागताः तन्वइवकरचरणादयइव अभिसंगम्यविधिवत् शास्त्रानुसारेणयथायोग्यंकैश्चिदभिवादनम् ॥ ५ ॥

प्रेमएवआनन्दरूपंनभवतीति प्रेम्णावाष्पसमूहं विरहेयदौत्कंठयंप्रेमातिभरस्तेनकातरादीनाः पूर्वंतस्मिन्गतेयत्प्रेमजातंभगवतः तेनप्रेम्णादीनाः विषयालाभात् एवंसर्वेषुस्थितेषुमुख्यस्यपूजाधिकारात्राजानंपूजयामास दत्तेआसनेस्वीकृतमासनंयेन अनेनपूजायांनिषेधाभावः सूचितः ॥ ६ ॥

गतश्रमंपृच्छेदितिधर्मशास्त्रात् श्रमापनोदनमाह तंभुक्तवंतमिति प्रत्येकप्रश्नव्यावृत्त्यर्थंतेषांचशृण्वतामित्युक्तंचकारान्मध्येआगताः पूजानंतरमागताश्चपरिगृह्यंते ॥ ७ ॥

प्रथमतोदयामुत्पादयति अपिस्मरथेति युष्मत्पक्षच्छायासमेधिताः अस्मान्अपीतिसम्भावनायांस्मरथपूर्ववयंभवद्भिरेवपरिपालिताः पक्षःपक्षपातः तस्यच्छायाहिताचरणंपक्षिणामेषाव्यवस्थामातरपितरंपुत्रंकालांतरं तेनपाराचन्र्वततिदर्थंपक्षादिपदप्रयोगः स्मरणार्थंपालन विशेषंज्ञापयतिविपद्गणान्मोचिताइति आपदांसमूहात्तमेवगणयतिविषाग्न्यादेरिति विषंमोदकदानं लाक्षागृहदाहश्चप्रत्येकंसमुदायनाशकौ समातृकाइतिस्त्रीणामपिवधेशत्रूणांनविचिकित्सासरक्षकामोचिताइतिवा ॥ ८ ॥

---

### श्रीविश्वनाथचक्रवर्त्ती ।

पक्षिणो ह्यपत्यानि यथा अतिस्नेहेन पक्षच्छायया वर्द्धयन्ति तद्वत् । पक्षे पक्षच्छाया पक्षपातः । यद्यस्मान्मोचिता वयं त्वयेत्यर्थः ॥७॥८॥

---

### सिद्धांतप्रदीपः ।

केनापिनिमित्तेनप्राणावरोधेतन्वः शरीराणिनिश्चेष्टानिभवंतितंपुनरागतंतानियथोत्तिष्ठंतितद्वत् ॥ ५ ॥

विरहजातौत्कंठयेनकातराव्याकुलाः प्रेमवाष्पौघंस्नेहजन्याश्रुसमूहंमुमुचुः राजायुधिष्ठिरः कृतः आसनपरिग्रहोयेनतम् अर्हयांचक्रेअर्हयामासपूजयामास ॥ ६ ॥

प्रश्रयावनतः विनयेननम्रः तेषांधृतराष्ट्रादीनांशृण्वतांतंविदुरंप्राह ॥ ७ ॥

तदेवाहापीतिचतुर्भिः युष्मत्पक्षपातच्छाययासमेधितान्संवर्द्धितानंडजोपमान्नोऽस्मानपिकिंस्मरथयद्यतः समातृकाविमोचितास्तान् ॥८॥

---

### भाषाटीका ।

आलिंगन अभिवान से यथा विधि विदुर से मिलकर विरह की उत्कंठा से कातर होकर सब जनों ने प्रेम के आंसुओं के प्रवाह बहाये ॥ ५ ॥ ६ ॥

आसन पर बैठाकर राजाने उनका पूजन किया । भोजन करने के अनंतर विगतश्रम विदुर जब सुखसे आसन पे बैठे तब राजाने सबके सुनते विनीत होकर विदुरजी से कहा ॥ ७ ॥

कया वृत्त्या वर्त्तितं वश्चरद्भिः क्षितिमण्डलम् ।
तीर्थानि क्षेत्रमुख्यानि सेवितानीह भूतले ॥ ९ ॥
भवद्विधा भागवतास्तीर्थभूताः स्वयं विभो! ।
तीर्थीकुर्व्वन्ति तीर्थानि स्वान्तस्थेन गदाभृता ॥ १० ॥
अपि नः सुहृदस्तात ! बान्धवाः कृष्णदेवताः ।
दृष्टाः श्रुता वा यदवः स्वपुर्य्यां सुखमासते ॥ ११ ॥
इत्युक्तो धर्म्मराजेन सर्व्वं तत् समवर्णयत् ।
यथानुभूतं * क्रमशो विना यदुकुलक्षयम् ॥ १२ ॥

भाषाटीका ।

( युधिष्ठिर उवाच ) आपकी पक्षछाया से वृद्धि प्राप्त हम सबको कभी आप स्मरण भी करते थे । आपने हमको माता सहित विष भक्षण और लाक्षा भवन के दाह आदिक बिपदों से बचाया था ॥ ८ ॥

---

श्रीधरस्वामी

वो युष्माभिः कया वृत्त्या वर्त्तितं देहवृत्तिः कृता । कानि च तीर्थादीनि सेवितानीति ॥ ९ ॥

भवताञ्च तीर्थाटनं न स्वार्थं किन्तु तीर्थानुग्रहार्थमित्याह भवद्विधा इति । मलिनजनसम्पर्केण तीर्थानि अतीर्थानि मलिनानि सन्ति । सन्तः पुनस्तीर्थीकुर्व्वन्ति । स्वान्तं मनः तत्रस्थेन स्वस्यान्तःस्थितेन वा ॥ १० ॥

अपि किं सुखमासते । भवद्भिः क्वापि दृष्टाः श्रुता वा ॥ ११ ॥ १२ ॥

---

दीपनी ।

स्वस्यान्तःस्थितेन वेति । एतेनात्र स्वान्तःस्थेनेति विसर्गमध्यपाठोऽपि प्रामाणिकः स्वस्यानुगतश्चेति ध्वनितम् अन्यथा ईदृशविग्रहा-नुपपत्तेरिति ॥ १०—२४ ॥

---

श्रीवीरराघवः ।

क्षितिमंडलंचरद्भिः कयावृत्त्यावर्तितमिहभूतलेकानितीर्थानिभगवत्क्षेत्रमुख्यानिचभवद्भिः सेवितानि ॥ ९ ॥

कृतकृत्यानांभवतांनतीर्थयात्रयास्वप्रयोजनमस्तीत्यभिप्रायेणाह भवद्विधाइति हे विभो ! भवादृशाः भागवताः स्वयमेवतीर्थभूताः पवित्रभूताः अतस्तीर्थयात्राकृतंपवित्रत्वंनापेक्षितमितिभावः तर्हिकिमर्थंतीर्थान्यटंतितत्राह तीर्थीकुर्वंतीतिस्वांतःस्थेनगदाभृताभगवतातीर्थान्यपि तीर्थीकुर्वंतिइतितीर्थान्यपितीर्थीकर्त्तुंतानिपर्यटंतीतिभावः वस्तुतः परिशुद्धान्येवगंगादितीर्थानितथापिपापिभिः तेषुपरिहृतानिपापान्यादाय तान्यपिपवित्रीकुर्वंतिस्वगतानितुस्वांतरात्मतयावस्थितोगदाभृत् क्षपयतितस्यत्वघप्रतिभटत्वान्नतस्मिन्पापसमावेशप्रसक्तिरितिभावः एतद भिप्रायेणैवगदाभृतेत्युक्तं तथाचनवमे किंचाहंनभुवंयास्येनराम्यय्यामृजंत्यघम् मृजामितदघंकाहंराजंस्तत्रविचिंत्यतामितिगंगयोक्तोभगीरथ आह साधवोन्यासिनः शांताधर्मिष्ठालोकपावनाः हरंत्यघंतेऽगसंगात्तेष्वास्तेह्यघभिद्धरिरिति ॥ १० ॥

अपीतिहेतात ! कृष्णएवदेवतायेषांतेनोऽस्माकंसुहृदोबांधवाश्चयदवः दृष्टाः अथवास्वपुर्यांद्वारकायांसुखमासतइतिश्रुताः किम् ॥ ११ ॥

इतीत्थंधर्मराजेनोक्तः विदुरोयदुकुलक्षयंबिनाऽन्यत्सर्वंयथानुभूतंदृष्टंश्रुतंचानुक्रमशः समवर्णयत् ॥ १२ ॥

---

श्रीविजयध्वजः ।

[illegible]तेनकिमितिशेषः इहभूतलेक्षेत्रप्रधानानितीर्थानियानितानिसर्वाणिचसेवितानीत्यन्वयः ॥ ९ ॥

हे प्रभो ! स्वात्मस्थेनगदाभृताहरिणातीर्थभूताः भवादृशाः भागवताः गंगादितीर्थानितीर्थीकुर्वंतिनस्वयमात्मशुद्ध्यपेक्षयातीर्थानिगच्छंतीतिशेषः ॥ १० ॥

* क्रमतोति विज०

श्रीविजयध्वजः।

कृष्णोदैवतंयेषांतेतथोक्ताः ॥ ११ ॥

भ्रमतापरिवर्तमानेनक्षितितलमितिशेषः स्वेनयथानुभूतंतथातत्सर्वमवर्णयत् किंतुयदुकुलक्षयंविना तीर्थयात्रायांयनुनायांभगवदाज्ञ-यावदरींगच्छंतमुद्धवंदृष्ट्वातस्मात्विप्रशापाद्धेतोः षट्त्रिंशद्वर्षादुपरिनाशमेष्यद्यदुकुलंश्रुत्वातन्नावर्णयदितिभावः ॥ १२ ॥

---

क्रमसंदर्भः।

तीर्थेषु भक्तिमतां भवतां तीर्थाटनंच तीर्थानामेव मङ्गलाय सम्पद्यते इत्याह भवद्विधा इति ॥ १० । ११ । १२ । १३ ॥

---

सुबोधिनी।

एवंदयामुत्पाद्यक्लेशजनितंदुःखमनुवादेनगच्छतीति वृत्तिप्रश्नः वृत्तिर्जीविकावर्णाश्रमविभागविहितयायादृच्छिकयाचेति वःयुष्माभिः जीवनस्यानभिप्रेतत्वात् तंप्रतिस्वातंत्र्याभावात् नकर्त्तरितृतीयाअपितुसम्बन्धमात्रेषष्ठी भूपर्यटनेतुविवक्षितत्वात् कर्तृत्वमतश्चरद्भिरित्युक्तं क्षितिमण्डलमिति अत्यन्तसंयोगेद्वितीयातेनसर्वत्रैकविधानाज्ञानाभावात् परित्यागभावनांवाकृत्वा जीवितमितिप्रश्नार्थः द्वितीयपक्षेअतःपरमत्रस्थास्यंतीतिमनोरथः क्षेत्राणिमुख्यानियत्रजलप्रधानंतीर्थं स्थलप्रधानंक्षेत्रं क्वचिदुभयमेकीभवत् प्रयागवेणीवादिति तानिइहभूतलेसेवितानि मुख्यानांसेवितत्वादतः परंनगंतव्यमितिभावः ॥ ९ ॥

ननुफलस्यासिद्धत्वात् सम्यक्चित्तशुद्धिपर्यंतंतीर्थाटनंकर्त्तव्यमितिचेत्तत्राह भवद्विधाइति नहिभवतांतीर्थाटनेनकश्चिद्गुणोभवति तत्राधिकारिणस्त्वन्ये नन्वस्मद्विधाअपितीर्थेषुपर्यटंतीत्याशंक्याह भवद्विधाइति सत्यंपर्यटंतीतिनतुस्वार्थंकिंतुतीर्थकृपया"हरंत्यघन्तेऽगसंगात्स्वास्तेह्यघभिद्धरि"रितिवाक्यात् स्वयमेवतेतीर्थभूताः पापिनांस्पर्शदोषात् दुष्टानितीर्थानितेषांदोषंस्वयंगृहीत्वा सम्रहणात् पूर्ववतीर्थानितीर्थीकुर्वंति तर्हितेषांकागतिरित्यतआह स्वांतःस्थेनगदाभृतेतितेषांहृदयेभगवान् गदांगृहीत्वाप्रकटास्तिष्ठति अतोगदायाआसन्यरूपत्वात्भगवान् साधनंचअपहतपाप्मरूपं "तेहआसन्यंप्राणमूचु"रित्यत्रयथासतिपाप्मनाशःतथाप्रकृतेऽपीतितिर्थानामपिपापं भगवत्समीपंप्राप्यगच्छतीत्यर्थः अनेनभगवदाज्ञायामेवतीर्थाटनं कर्त्तव्यमन्यथाभगतःप्रयासजननात् नकर्त्तव्यमितिभावः अतोऽत्रैवस्थातव्यमितिफलति ॥ १० ॥

एवमागतंकुशलंपृष्ट्वाभगवद्भक्तत्वादयंभगवद्वृत्तांतंज्ञास्यतीतिपृच्छतिअपिनइति विदुरेणसहतथासम्बन्धाभावेऽपिअस्माभिः सहसंबंधइतिनइत्युक्तंभवति विदुरमप्यात्मत्वेनस्वीकृत्यवासुहृदोमित्राणितातेतिस्नेहेनसंवोधनंतेष्वपिस्नेहयोधनायकृष्णादेवताइतिसुखवासेहेतुः अलएवत्वयादृष्टाः बंधुत्वेनलज्जयाचेन्नदृष्टास्तर्हिभगवदीयत्वात्श्रुताः स्वपुर्यांद्वारकायांस्वधाम्निअल्पेनापिविषयेनसुखंभवतीति यदवइति भक्तवंशत्वादपिसुखंसम्भावितम् अनेनत्रिधापिदुःखंनिवारितम् कृष्णादेवतात्वान्नाधिदैविकं यदुत्वान्नाध्यात्मिकंस्वपुर्यामितिनाधिभौतिकम् एवंसंभावितकुशलाः भवन्मुखान्निश्चिताश्चेत्तदास्माकंसुखमिति प्रश्नाभिप्रायः ॥ ११ ॥

एवंस्मरणादिकुशलान्तैः प्रश्नैःपृष्टःसर्वमेव यथानुभूतमनुवर्णयति परंमौशलव्यतिरेकेण ॥ १२ ॥

---

श्रीविश्वनाथचक्रवर्त्ती।

वृत्त्या जीविकया। वो युष्माभिः ॥ ९ ॥

भवताञ्च तीर्थाटनं तीर्थानामेव भाग्येनेत्याह भवद्विधा इति। तीर्थीकुर्व्वन्ति महातीर्थीकुर्व्वन्ति पावनं पावनानामितिवत् ॥ १० । ११ । १२ ॥

---

सिद्धांतप्रदीपः।

क्षितिमंडलं चरद्भिर्वोयुष्याभिः कयावृत्त्यावर्त्तितं केनोपायेनदेहनिर्हारः कृतः इहास्मिन्भूतलेतीर्थानि पुण्यजलप्रधानानि क्षेत्रमुख्यानि भूमीप्रदेशमुख्यानिसेवितानिकिम् ॥ ९ ॥

भवद्विधानिष्पापत्वाज्ञावत्स्वयंतीर्थभूताःविशेषतस्तुभागवताःस्वांतस्थेन स्वहृदिध्येयभूतेनगदाभृता च तीर्थभूताःतीर्थाटनेऽपिप्रयोजनेऽपि प्रयोजनमाह संसारिसंसर्गेणतीर्थान्यपिमलिनानिपुनस्तीर्थीकुर्वन्ति ॥ १० ॥

नोऽस्माकंसुहृदोवांधवाः कृष्णोदेवतायेषांते भवद्भिर्यादवादृष्टाः कुतश्चिच्छ्रुतावाद्वारकां सुखमासतेकिम् ॥ ११ ॥

यदुकुलक्षयंतुजानन्नपिनवर्णयामास ॥ १२ ॥

---

नन्वप्रियं * दुर्विषहं नृणां स्वयमुपस्थितम् ।
नावेदयत् सकरुणो दुःखितान् द्रष्टुमक्षमः ॥ १३ ॥
कञ्चित् कालमथावात्सीत् सत्कृतो देववत् सुखैः ।
भ्रातुर्ज्येष्ठस्य श्रेयस्कृत् सर्व्वेषां प्रीतिमावहन् ॥ १४ ॥
अबिभ्रदर्य्यमा दण्डं यथाघमघकारिषु ।
यावद्दधार शूद्रत्वं शापाद्वर्षशतं यमः ॥ १५ ॥
युधिष्ठिरो लब्धराज्यो दृष्ट्वा पौत्रं कुलन्धरम् ।
भ्रातृभिर्लोकपालाभैर्मुमुदे परया श्रिया ॥ १६ ॥

भाषाटीका ।

आपने इस पृथवी मंडलमें विचरते किस वृत्तिसे निर्वाह किया था ? और कौन कौन मुख्य तीर्थ कौन कौन क्षेत्र सेवन किये ॥ ९ ॥
आपके समान भागवत जन स्वयं तीर्थ रूपहैं तथापि अपने हृदयस्थ गदाधर हरि से तीर्थो का भी तीर्थ करते हैं ॥ १० ॥
तात ! हमारे सुहृद और बांधव श्रीकृष्ण ही जिनके देवता हैं वे यादव अपनी पुरी में सुख से हैं । आपने देखे वा सुने हैं ? ॥ ११ ॥
धर्मराज के ऐसे प्रश्नों से विदुर जीने जोकुछ देखा और सुनाथा सो वर्णन किया । केवल यदुकुल का क्षय वर्णन नहीं किया ॥१२॥

---

श्रीधरस्वामी ।

यदुकुलक्षयावर्णने कारणमाह नन्विति ॥ १३ ॥
श्रेयस्कृत् तत्त्वमुपदिशन् ॥ १४ ॥
ननु शूद्रोऽसौ कथमुपदिशेत् । न ह्यसौ शूद्रः किन्तु यमस्तद्रूपेणासीत् । किं तत्र कारणं यमे चात्रागतेऽमुत्र को दण्डधर इत्यपेक्षायामाह अबिभ्रदिति धृतवानित्यर्थः । शापात् माण्डव्यस्य शापात् । तथाहि कांश्चिच्चोराननुधावन्तो राजभटा माण्डव्यस्य ऋषेस्तपश्चरतः समीपे तान् सम्प्राप्य तेन सह निरुध्यानीय राज्ञे निवेद्य तदाज्ञया तान् सर्व्वान् शूलमारोपयामासुः । ततो राजा तमृषिं ज्ञात्वा शूलादवतार्य्य प्रसादयामास । ततो मुनिर्यमं गत्वा कुपित उवाच कस्मादहं शूलमारोपित इति । तेनोक्तं त्वं बाल्ये शलभं कुशाग्रेणाविध्य क्रीडितवानिति । तच्छ्रुत्वा माण्डव्यस्तं शशाप बाल्येऽजानतो मे महान्तं दण्डं यतस्त्वं कारितवान् अतः शूद्रो भवेति ॥ १५ ॥
इदानीं राज्यापकर्षं निरूपयितुम् उत्कर्षं निगमयति युधिष्ठिर इति । कुलन्धरं वंशधरम् ॥ १६ ॥

---

श्रीवीरराघवः ।

यदुकुलक्षयंकुतोनावर्णयदित्यत्राहनन्विति ननुहेशौनक? दुर्विषहंसोढुमशक्यंस्वयमुपस्थितंस्वयमेवोपस्थास्यदप्रियंयदुकुलक्षयात्मकंनावेदयत् कुतः यतः सकरुणः दयावानतएवदुःखितान्दुःखिष्यमाणान्द्रष्टुमक्षमः असहिष्यमाणः ॥ १३ ॥
अथदेववदीश्वरवत्सत्कृतोबहुमतः किंचित्कालंज्येष्ठस्यभ्रातुःधृतराष्ट्रस्यश्रेयस्कृत्सर्वेषांधर्मराजादीनांप्रीतिमावहन्सुखमवात्सीदुवास श्रेयः कुर्वन्प्रीतिमवोढुंचावात्सीदित्यर्थः भ्रातुःश्रेयस्करणमत्रतस्यमरणज्ञापनपूर्वकंमुक्त्युपायप्रवर्त्तनरूपंविवक्षितम् ॥ १४ ॥
कथंतस्यसद्भावनसामर्थ्यमितिशंकाव्युदासायसर्वप्राणिमृत्युकालज्ञस्तद्दंडधरश्चयोयमः सएवायंविदुरइतिवदन्शंकांतरंचनिराह अबिभ्रदितिशापान्मांडव्यशापाद्धेतोर्यमोयावच्छूद्रत्वं विदुररूपशूद्रभावंदधारतावद्वर्षशतमर्यमासूर्योऽघकारिषुपापिषुयथाघंतत्पापानुरूपंदंडमबिभ्रत्कारयामास ॥ १५ ॥
युधिष्ठिरइतिद्वाभ्यांलब्धंराज्यंयेनसयुधिष्ठिरः कुलंधरंकुलनिर्वाहकंपौत्रंपरीक्षितंदृष्ट्वाइंद्रादिलोकपालसदृशैर्भ्रातृभिः परयाश्रियाचमुमुदे ॥ १६ ॥

---

श्रीविजयध्वजः ।

तत्किमितिनावर्णयदितितत्राह नन्विति ॥ १३ ॥
विदुरः किमकार्षीदितितत्राह कंचिदिति सुखलक्षणंश्रेयःज्येष्ठस्यभ्रातुर्धृतराष्ट्रस्य ॥ १४ ॥

---

* तत्त्वप्रियमितिविज० ।

श्रीविजयध्वजः ।

एवंभगवद्भक्तिज्ञानादिमानयंविदुरोदेवेषुकस्यावतारइ ततत्राह अबिभ्रदिति योऽर्यमावैवस्वतोऽघकारिषुपापकृत्सुयथाघंपापमनतिक्रम्य दंडमबिभ्रत् शिक्षामकरोत्पापफलमभोजयदित्यर्थः सयमोमांडव्यशापाद्यावद्वर्षशतंतावच्छूद्रत्वंबभारेत्यन्वयः मांडव्योनामकश्चिद्दृषिः कस्मिंश्चिन्नदीतीरेतपश्चरंस्तत्रकस्माच्चिन्नगराच्चौर्यगृहीत्वागतैश्चोरैः सहानुधावद्भिर्नगरपालैरज्ञानाद्गृहीत्वाराज्ञेनिवेद्यतदनुज्ञयाशूलेसमारोपितोऽभूत् तत्रापिशूलेतपः कुर्वंतमपिजाज्वल्यमानदृष्ट्वा जनैर्निवेदितोराजाससंभ्रममुपागम्यशूलादवरोप्यप्रसाद्यप्रस्थापयामासकोपेनजाज्वल्यमानेनयमसमीपंगतेनमुनिनाकस्मादहंशूलमारोपितइतिपृष्टोयमः तस्मात्शापमादातुकामोबाल्यावस्थायांकाचिन्मक्षिकाशूलेसमारोपितातेनदोषेणअयमवस्थाविशेषः प्राप्तइतिप्राह तस्मैकुद्धोमुनिः शूद्राभवेतिशशापतमितिमांडव्यशापः ॥ १५ ॥

अथयुधिष्ठिरः किंचकारेतितत्राह युधिष्ठिरइति इंद्रादिलोकपालसमानैर्भीमादिभ्रातृभिर्लब्धराज्योयुधिष्ठिरः कुलधरंपौत्रंदृष्ट्वापरमसम्पदामुमुदइत्येकान्वयः कुलंधारयतीतिकुलंधरः ॥ १६ ॥

---

क्रमसन्दर्भः ।

नन्विति । अत्रान्योऽपि दुःखशङ्कया नाकथयत् इति ज्ञेयम् ॥ १३ ॥

श्रेयस्कृत् हितोपदेष्टा ॥ १४ ॥

नन्वसौ यम एव विदुरत्वेन जातस्तस्य चास्य लोकेऽस्मिन् श्रेयस्कृत्त्वमेव श्रूयते न तु यमलोके यमरूपेण दण्डकृत्त्वमपि । तर्हि तत्र दण्डः कथमसैत्सीत् तत्राह अविभ्रदिति । वर्षाणि कतिचिदधिकानि शतञ्च वर्षशतम् ॥ १५ ॥ १६ ॥

---

सुबोधिनी ।

"अब्रुवन्विब्रुवन्वापिनरोभवतिकिल्विषी"तिसभारूपेसमाजेधर्मराजेनपृष्टःकथंनोक्तवानित्याशंक्याह नन्वप्रियमिति सर्वंपृष्टमेववक्तव्यं तत्रापि नत्वप्रियं"सत्यंब्रूयात्प्रियंब्रूयान्नब्रूयात्सत्यमप्रियं प्रियंचनानृतंब्रूयादेषधर्मः सनातनः"इतिवाक्यात् पृष्टोऽपिसत्यमपिअप्रियंनवक्तव्यं तत्रापि दुर्विषहं यस्मिन्श्रुतेश्रोतापिम्रियेत अतोधर्मिनाशकं श्रवणानकारणीयमिति तर्हिकथमग्रिमकार्यसम्पत्तिरतआहनृणांस्वरमुपस्थितमिति स्वतएवजनमुखादेवज्ञास्यन्ति किंस्ववचनेनेति किंच करुणावान् सर्वथानवदेत् दुःखितदृष्ट्वास्वस्यापिदुःखसम्भवात् नहिकश्चित्स्वदुःखार्थंयतते अतोधर्मशास्त्रात्नीतिशास्त्रात् शुक्रेश्चपरस्मैदुःखंनवदेदितिभावः यतोदुःखितान् द्रष्टुमक्षमः स्वकार्यंतेमाजानंत्विति गुप्तभावः ॥ १३ ॥

स्वावसरप्रतीक्षयातत्रैवस्थितइत्याह कंचित्कालमिति अथप्रश्नसमाप्त्यनंतरंदेववत् यथैववदन्तिकुर्वन्तितदेवमन्यते विश्वासार्थंस्वसुखंज्ञापयन् पूजितस्तिष्ठतीत्यर्थःस्थितौहेतुमाह भ्रातुर्ज्येष्ठस्यधृतराष्ट्रस्यश्रेयस्कृत् वैराग्यादिसंसाधनेनमोक्षसाधकःसर्वेषांप्रीतिमावहन्निति विश्वासार्थसम्भावितदुःखदूरीकरणार्थंवा ॥ १४ ॥

नन्वस्यकनिष्ठस्यअयथाजातस्यकथंमोक्षसाधकत्वमनधिकारात्तत्राह अविभ्रदिति उत्तरोत्तराज्ञानात् पूर्वत्रलिष्ठतेतिदेहेंद्रियप्राणान्तः करणानांव्यवस्थायद्यात्मनाज्ञायन्तेअयमहमिति तदाअन्येधर्मादुर्बलाः अतएवभुकुंदादेरप्युपदेष्टृत्वंपूर्णज्ञानवानपिसर्वत्राविचारिताग्नभक्षणात्काकत्वंप्राप्तःदेहत्यागसमयेकाकत्र्ययाचतस्मान्नायंकनिष्ठभ्रातानवाशूद्रः किंतुयमः"माण्डव्यशापात्भगवान्प्रजासंयमनोयमः भ्रातुः क्षेत्रेभुजिष्यायांजातः सत्यवतीसुतादि"तिवक्ष्यति तर्हिकइदानींयमलोकेअधिकारीत्याशंक्याह अविभ्रदिति"विवस्वानर्यमापूषे"त्यादिद्वादशादित्याः तत्रद्वितीयोऽर्यमास्यावच्छूद्रत्वंदधारमांडव्यशापाद्वर्षशतं तावदर्यमाअधिकारंकृतवान् यथावत् पापकारिषुशतवर्षानंतरंशूद्रत्वमतउपदेशोऽपिनदोषः ॥ १५ ॥

युधिष्ठिरस्य विदुरविस्मरणार्थं किंचिद्राज्यभोगमाह युधिष्ठिरइति युधिष्ठिरोलब्धापौत्रंचराज्ययोग्यंदृष्ट्वाभ्रातृभिः इंद्रादितुल्यैः सहितः श्रियापरयाइंद्रदुर्लभयावामुमुदे"राज्यंवंशोभ्रातरश्च धनंचाज्ञानहेतवः" ॥ १६ ॥

---

श्रीविश्वनाथचक्रवर्त्ती ।

श्रेयस्कृत् श्रेयः कर्त्तुम् ॥ १३ ॥

न च धृतराष्ट्रादयं कनिष्ठत्वान्न्यूनो मन्तव्यः साक्षाद्धर्मराजस्यैव माण्डव्यशापेन शूद्रतयावतीर्णत्वात् । ननु तावदमुत्र को दण्डधरस्तत्राह । अविभ्रत् आर्षप्रयोगः धृतवानित्यर्थः । तथाहि कांश्चिच्चौराननुधावन्तो राजभटा माण्डव्यस्य तपश्चरतः समीपे तान् संप्राप्य तेन सह निबध्यानीय राज्ञे निवेद्य तदाज्ञया सर्व्वानेव शूलमारोपयामासुः । ततो राजा तमृषिं ज्ञात्वा शूलादवतार्य्य प्रसादयामास । ततो मुनिर्यमं गत्वा कुपित उवाच । कस्मादहं शूलमारोपित इति । तेनोक्तं त्वं बाल्ये कुशाग्रेण शलभमाविध्य क्रीड़तवानिति । तत् श्रुत्वा माण्डव्यस्तं शशाप । बाल्ये अजानतो मे महान्तं दण्डं कारितवान् अतस्त्वं शूद्रो भवेति ॥ १५ ॥ १६ ॥

---

एवं गृहेषु सक्तानां प्रमत्तानां तदीहया ।
अत्यक्रामदविज्ञातः कालः परमदुस्तरः ॥ १७ ॥
विदुरस्तदभिप्रेत्य धृतराष्ट्रमभाषत ।
राजन्निर्गम्यतां शीघ्रं पश्येदं भयमागतम् ॥ १८ ॥
प्रतिक्रिया न यस्येह कुतश्चित् कर्हिचित् प्रभो ! ।
स एष भगवान् कालः सर्व्वेषां नः समागतः ॥ १९ ॥
येन चैवाभिपन्नोऽयं प्राणैः प्रियतमैरपि ।
जनः सद्यो वियुज्येत किमुतान्यैर्धनादिभिः ॥ २० ॥

सिद्धांतप्रदीपः ।

तत्रकारणमाह नन्विति ॥ १३ ॥
भ्रातुर्धृतराष्ट्रस्यश्रेयस्कृत्कल्याणविवक्षुः ॥ १४ ॥
तादृशसामर्थ्यतस्यसूर्यपुत्रत्वादस्त्येवेति सूचयति अविभ्रदिति मांडव्यशापाद्यावद्यमः शूद्रत्वंदधारतावद्वर्षशतमर्यमासूर्यो ऽघकारिषुदंडंदधार ॥ १५ ॥ १६ ॥

---

भाषा टीका ।

क्योंकि जो मनुष्यों को अप्रिय और दुःसह है वह अपने आप आगे आजाता है। यह विचारकर करुणामय विदुरजीने वह नहीं कहा। क्योंकि वे दुःखितों को देखने में असमर्थ हैं ॥ १३ ॥
देवताओं के समान सत्कृत होकर सुखसे विदुरजी कुछ काल बसे। बडे भ्राता धृतराष्ट्र के कल्याण करने की इच्छा थी। और सबकी भी प्रीति विस्तार करते थे ॥ १४ ॥
मांडव्य ऋषि के शाप से जबतक ( सौवरसतक ) यमराज ने शूद्रत्व धारण किया ( विदुर रूप में रहे ) तबतक पितृपति अर्यमा पापियों को दंड विधान करते रहे ॥ १५ ॥
युधिष्ठिर राज्य पाकर कुलंधर पौत्र को देखकर लोकपालकों के समान भ्राताओं से परम सम्पत्ति से आनंद मग्न होगये ॥ १६ ॥

---

श्रीधरस्वामी ।

तदीहया गृहव्यापारेण प्रमत्तानाम् अत्यक्रामत् आयुःकालोऽतिक्रान्तः । यद्वा तान् कालः अभ्यभवदित्यर्थः ॥ १७ ॥
अभिप्रेत्य ज्ञात्वा ॥ १८ ॥
तत्प्रतीकारः क्रियतां किं निर्गमनेन तत्राह प्रतिक्रियेति । सर्व्वेषामिति यैः प्रतिकर्त्तव्यं तेषामपीत्यर्थः ॥ १९ ॥
कथं धनादिवियोगः सोढुं शक्यः अतः आह येनेति । अभिपन्नः अभिग्रस्तः ॥ २० ॥

---

श्रीवीरराघव ।

एवंगृहेष्वासक्तानांतदीहयागार्हीयचेष्टयाप्रमत्तानामविदितमृत्युकालानांकर्त्तरिषष्ठीतैरविज्ञातः परमः सर्ववशीकुर्वन्नतएवदुस्तरः कस्याप्यवश्यः कालोऽत्यक्रामत् अतिक्रांतवान् तदीहयाअविज्ञातइतिवान्वयः युधिष्ठिरादीनांविषयानुभवकालोव्यतिक्रांतोबभूवेत्यर्थः ॥ १७ ॥
भ्रातुः श्रेयस्क्रियाप्रकारंप्रपंचयतिविदुरइत्यादिभिर्दशभिः तंकालातिक्रममभिप्रेत्यविदुरोधृतराष्ट्रमभाषत तदेवाहराजन्नित्यादिसार्द्धैर्नवभिः हेराजन्नितः शीघ्रंनिर्गम्यतांत्वयेतिशेषः आगतमुपस्थितमिदंभयंपश्यालोचय ॥ १८ ॥
किंतत्तत्राहप्रतिक्रियेतिकुतश्चिदपिहेतोः कदाचिदपियस्यभयस्यप्रतीकारः निवारणंनास्तिसएषभगवान्भगवन्नियाम्यः सर्वेषांनोऽस्माकंकालोमृत्युकालः समागतः समुपस्थितः ॥ १९ ॥
गृहासक्तित्याजयितुंकालंविशिषन्नाहयेनेतिअयंपरिदृश्यमानोजनः येनकालेनाभिपन्नः अभिपद्यमानः प्रियतमैर्निरतिशयप्रियैः प्राणैरपिसद्योविमुच्येतत्यज्यतअन्यैः प्राणानुबंधिभिर्धनादिभिर्मुच्येतेतिकिमुवक्तव्यंसकालः समागतइत्यन्वयः ॥ २० ॥

---

श्रीविजयध्वजः ।

*ययौद्वारवतीमित्युक्तश्रीकृष्णप्रयाणशेषमाह अथेति अथविभुर्योऽसोऽच्युतआगामिष्यामीत्यामंत्र्यसंभाष्ययांतं अनुगतान्बंधून्निवर्त्यार्जुनादियुक्तोहयैर्युक्तेनरथेनद्वारवर्तीययावित्येकान्वयः ॥ १६ ॥

अधुनाधृतराष्ट्रस्यस्वर्गप्राप्तिप्रकारंवक्तुमुपक्रमते एवमिति एवमुक्तप्रकारेणहरिपरायणानांपांडवादिवद्वयः कालएकमपिक्षणमवंध्यतांनेतुंशक्यः सकालोहरिविमुखानांगृहेषुपुत्रमित्रादिलक्षणेषुकेवलंशिश्नोदरंभरतयासक्तानांगृहपोषणधनान्वेषणप्रयत्नैः प्रमत्तानांविस्मृतपरमात्मतत्त्वानामतएवाविज्ञातोऽत्यक्रामदतिकांतोऽभूदित्येकान्वयः ॥ १७ ॥

तत्कालस्यातिक्रमणं विदुरइतिनामसार्थसाधयन् निर्गम्यतांगृहादितिशेषः प्राप्तमिदंमरणभयंपश्येत्यन्वय ॥ १८ ॥

यस्यकालस्यकुतश्चित्कारणात्कर्हिचिदपिप्रतिक्रियानिवर्तनक्रियानास्तिसएषभगवान्कालरूपोनः सर्वेषांसमागतः शरीरवियोगकरणायप्राप्तइत्यन्वयः ॥ १९ ॥

इतोऽपिनिर्गमनमुचितमित्याह येनेति इहजीवलोकेयेनकालरूपिणाहरिणाअभिपन्नोग्रस्तः अयंजनोतिशयेनहृदयंगमैः प्राणैरपिवियुज्येतान्यैर्धनादिभिर्वियुज्येतइतिकिमुतेत्यन्वयः ॥ २० ॥

---

क्रमसंदर्भः ।

एवं युधिष्ठिरस्य पालनलब्धसुखप्रकारेण गृहेषु सक्तानां प्रमत्तानां जनानां न तु पांडवानाम्—किं ते कामाः सुरस्पार्हा मुकुन्दमनसो द्विज । अधिजह्रुर्मुदं राज्ञः क्षुधितस्य यथेतरे इत्यादेः—येऽध्यासनं राजकिरीटजुष्टं सद्यो जहुर्भगवत्पार्श्वकामा इत्यादेश्च । अतएव विदुरोऽपि धृतराष्ट्रम् प्रत्येव तथोपादिदेश न तु तान् प्रतीति ॥ १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ ॥

---

सुबोधिनी ।

ततः किमत आहएवंगृहेष्विति तेहिभगवतिविद्यमानएवपौत्रेप्रौढेजातेभगवंतं पृष्ट्वापौत्रंराज्येप्रतिष्ठाप्यनिरंतरंभगवच्चिंतकाः भगवत्सत्रदीक्षिताभवितुंयुक्ताः तत्तुतेषांनराज्यदोषात्वृत्तमित्याह एवंगृहेषुसक्तानामिति षट्त्रिंशत्वर्षपर्यंतंराज्यंकृतं षोडशवर्षानंतरमेवराज्ययोग्यः पुत्रः तथापिएवंपूर्वोक्तप्रकारेणगृहेषु आसक्तानांगृहेतिकर्तव्यतयाचप्रमत्तानांस्वकार्ये अनवधानानामज्ञातएवकालोगतः तैर्ज्ञातमद्यैवराज्येउपविष्टमिति ॥ १७ ॥

एतत्स्वरूपंकियत् कालवासेनविदुरोज्ञातवान् एतेस्वार्थेप्रमत्ताः कालग्रस्ताभविष्यंतीति अन्येचेदेतेभक्ताभवेयुः तदाअयोध्यावत् सर्वमेवनगरंवैकुंठंगच्छेत् तदाधृतराष्ट्रस्यकर्तव्यंनावशिष्येतततुनास्तीति निश्चित्यकलिप्रवेशेबुद्धिभ्रंशे अन्योऽन्यमारणेनधृतराष्ट्रस्यचभीमसेनमहद्भयंभविष्यतीत्याशंक्य धृतराष्ट्रंबोधार्थंप्रवृत्तइत्याह विदुरइति कालस्यपरमदुस्तरत्वकथनात् तादृशानामपिकालांशानांबहूनामतिक्रमात् सर्वनाशककालमध्येपतितोधृतराष्ट्रइत्यभिप्रेत्यतंप्रत्याह राजन्निर्गम्यतामिति राजानोहिकालस्यशीघ्रंभक्ष्याः राज्येनाधर्मबाहुल्यात् शीघ्रनिर्गमनेहेतुः पश्येदंभयमागतमिति यथाभगवतोऽधिकारीकालः तथाकालस्यभयनामाकश्चित् चतुर्थस्कंधेवक्तव्यः सइदानींभगवतिनिर्गतेतदीयामांस्वतोऽनिर्गमने अयमधिकारीसर्वान् भक्षयतिपत्नीरिव अथवायेपूर्वभक्ष्यत्वेनैवस्थिताः भगवद्दृष्ट्याचभक्षितास्तानिदानींभक्षयितुमागतः अग्रेवैधर्म्यद्रीक्षान्यायेनज्ञानसंचारसामर्थ्यंबोधयितुंस्वसामर्थ्यं बलेनतंप्रदर्शयन्नाह आगतमिति ॥ १८ ॥

तर्हिपूर्ववदिदानीमपिप्रतीकारः कर्तव्यइत्याशंक्याह भगवतिगतेअन्यस्मात् कुतश्चिदपियस्य प्रतिक्रियानास्तिपूर्वमप्येवंव्यवस्थातदाह कर्हिचिदिति प्रभो! इतिसंबोधनेनअन्यत्रप्रभुत्वंचलतिनात्रेत्युपहासः तर्हिकिमस्मानेवभक्षयितुमागतः उतसर्वान् आद्ये यथा सर्वेनप्रतीकारंकुर्वंतितथास्माभिरपिनकर्तव्यः कथंप्रतीकारइत्याशंक्याह सएवेतिषः पूर्वंकृष्णाख्यः त्वत्पुत्रादीनुपसंहृतवान् सएवेदानींत्वामुपसंहर्तुमागतः नचसगतइतिमंतव्यंभगवत्त्वात् पूर्वमन्येनरूपेणास्थितः सांप्रतमन्येननामस्वरूपतएवआकृतिमात्रंभिद्यतइत्याह कालइतिकलयतिसर्वानाकलयतीति ननुपूर्वंयथापांडवावर्जिताः तथेदानीमपिवर्जिताभविष्यंति ततश्चतदाश्रयेनवयमपिजीविष्यामः इत्याशंक्याहसवर्षानः समागतइतिपूर्वस्माद्वैलक्षण्यम् ॥ १९ ॥

इदानींमामपि ग्रहीष्यतितर्हिकिंविधेयमित्याशंक्ययेनदोषेणासप्रसतिसदोषः परिहार्यइतिवक्तुमहंतांममतांत्याज्येदित्यभिप्रायेणाह येनचैवाभिपन्नोऽयमिति कालस्त्वात्मानंवस्तुतोनग्रसति आत्मत्वात् परंस्वनिष्पादितैर्यदिप्रविशति तदापेशकीटवत् तमपिभक्षयतितत्रदेहेंद्रियादौ अहंतादिस्त्याज्यः मन्वेतेरक्षकाः कथंत्याज्याइत्याशंक्याह प्राणैरितियावत्समागतः तावदेवंव्यवस्थातस्मिन्नागतेतुसर्वदारक्षकाः प्रियाःप्राणाअपित्यज्यंतेचैवेतिरोगादिसामग्रीअवस्थादिगममंत्रोक्तम् अत्यंतंप्रियाः प्राणाअपित्यज्यंतेयन्मूलकाः सर्वेतेषांत्यागेकोविचारइत्याह किमुतेतितस्मिन्नागते पूर्वंमहताप्रयासेनपोषिताअप्येतेत्यक्त्वागच्छंतीत्यर्थः ॥ २० ॥

---

श्रीविश्वनाथचक्रवर्त्ती ।

गृहेषु सक्तानामिति युधिष्ठिरादिभ्योऽन्येषामेव निन्देयं तात्कालिकजनानां ज्ञेया । तेषां क्षुधितस्य यथेतरे इति दृष्टान्तेन तादृशसम्पत्स्वपि अनासक्तिः प्रपञ्चिता ॥ १७ ॥ १८ ॥

---

* अथामंत्र्याच्युतोबन्धून्निवर्त्यानुगताविभुः ॥ अर्जुनोद्धवैशेनैर्ययौद्वारवतींहयैः ॥ १६ ॥ इतिविजयध्वजः ।

पितृ-भ्रातृ-सुहृत्-पुत्रा हतास्ते विगतं वयः ।
आत्मा च जरया ग्रस्तः परगेहमुपाससे ॥ २१ ॥
अन्धः पुरैव बधिरो मन्दप्रज्ञश्च साम्प्रतम् ।
विशीर्णदन्तो मन्दाग्निः सरागः कफमुद्वहन् ॥ २१ ॥
अहो महीयसी जन्तोर्जीविताशा यया भवान् ।
भीमापवर्जितं पिण्डमादत्ते गृहपालवत् ॥ २२ ॥
अग्निर्निसृष्टो दत्तस्तु गरो दाराश्च दूषिताः ।
हृतं क्षेत्रं धनं येषां तद्दत्तैरसुभिः कियत् ॥ २३ ॥
तस्यापि तव देहोऽयं कृपणस्य जिजीविषोः ।
परैत्यनिच्छतो जीर्णो जरया वाससी इव ॥ २४ ॥

श्रीविश्वनाथचक्रवर्त्ती ।

सर्वेषामिति यैः प्रतिकर्त्तव्यं तेषामपीत्यर्थः ॥ १९ ॥
येन मृत्युरूपेण कालेनाभिपन्नो ग्रस्तः ॥ २० ॥

---

सिद्धांतप्रदीपः ।

एवंगृहेषुसक्तानां धृतराष्ट्रादीनांतदीहयागृहेहयाप्रमत्तानांकालः अत्यक्रामत् जीवनसमयः समाप्तप्रयोजनोजातइत्यर्थः कथंभूतः अविज्ञातः दुर्लक्ष्यः परमदुस्तरः परमैर्ब्रह्मादिभिरपिदुस्तरः ॥ १७ ॥
अभिप्रेत्यालक्ष्य ॥ १८ ॥
भगवान्भगवच्छक्तित्वाद्भगवच्छब्दवाच्यः ॥ १९ ॥
अभिपन्नः अभिपद्यमानः ॥ २० ॥

---

भाषा टीका ।

ऐसे गृह में आसक्त हुये तथा गृह चेष्टा में प्रमत्त हुये पाण्डवों का अत्यंत दुस्तर अविज्ञात काल चला गया ॥ १७ ॥
इस बात को जानकर विदुर जी धृतराष्ट्र से बोले हे राजन् ! इहांसे शीघ्र निकलो देखो यह भय आगया है ॥ १८ ॥
इस का कोई भी निवारण उपाय नहीं है सोई यह भगवान् काल हम सबों का आगया है ॥ १९ ॥
हे प्रभो ! जिसका किसी प्रकार से कभी भी निवारण उपाय नहीं है सोई यह भगवान् काल हम सबों का आगया है ॥ १९ ॥
जिस काल से आक्रांत हुआ अत्यन्त प्रिय प्राणों से भी शीघ्र छूट जाता है तो धनादिकों की तो क्या बात है ॥ २० ॥

---

श्रीधरस्वामी ।

अत्रावस्थानमतिदैन्यमिति दर्शयन् वैराग्यमुत्पादयति पितृभ्रात्रिति सप्तभिः । आत्मा देहः ॥ २१ ॥ २१ ॥
येन पुत्रा हताः तेन भीमेन दत्तं पिण्डम् ( अन्नम् । ) गृहपालः श्वा ( इव ) ॥ २२ ॥
निसृष्टः प्रक्षिप्तः । गरो विषम् । दूषिता अवमताः । तद्दत्तैरन्नादिभिः लब्धैरसुभिः कियत् प्रयोजनं न किञ्चिदित्यर्थः ॥ २३ ॥
तस्यापि एवं दैन्यमनुभवतोऽपि । परैति क्षीयते । ( अतएव धीरो भवेति ) ॥ २४ ॥

---

श्रीवीरराघवः ।

विरक्तिमुत्पादयितुंतस्यावस्थांवर्णयतिपितृभ्रात्रित्यादिभिश्चतुर्भिः तवपित्रादयोहताः मृताः वयोयौवनंचापगतमात्मादेहोजरयाचग्रस्तः तथापिपरेषांशत्रूणांगेहमुपाससेजीवनार्थमितिशेषः ॥ २१ ॥
जीविताशांत्याजयितुंविस्मयमानआह अहोजंतोर्जीविताशामहीयसीबलीयसीययाजीविताशयाभवान्भीमेनापवर्जितंपरिभूयदत्तंपिंडंकब लम दत्तेस्वीकरोतीतियावत्गृहपालः श्वातद्वत् ॥ २२ ॥

श्रीवीरराघवः ।

पिंडस्यभीमापवर्जितत्वख्यापनायभीमादीनांशत्रुत्वंप्रख्यापयंस्तदपवर्जितपिंडेनप्राणधारणमतिहीनमित्याह अग्निरितियेषामित्यस्याग्न्या दिभिः प्रत्येकमन्वयः येषामग्निर्निसृष्टः लाक्षागृहेस्थितिशेषः येषांगरोविषंदत्तंयेषांचदाराः द्रौपदीदूषिताः कचग्रहणवस्त्रापहरणादिभिर्दूषि-ताः येषांचधनंक्षेत्रराज्यंचापहृतंसर्वंत्वयेतिवोध्यं तत्रत्वत्पुत्रैरितिकर्तृपदंबोध्यंतद्दत्तैस्तदपवर्जितैः पिंडदानायतत्वात्तद्दत्तैरित्युक्तमसु-भिः प्राणैःकियत्नकिंचिदतिहीनमिदंजीवनमित्यर्थः॥ २३ ॥

विधिविधेयंप्रारब्धमनुभूयमेवेतत्रजीविताशांत्याजयितुमेवविशिषन्नाहतस्येतितस्यतद्दत्तासोः कृपयाजीवितुमिच्छोरप्यनिच्छतः देह त्यागमनिच्छतोऽपितवहृद्दरतिशेषः जीर्णवाससीइवजरयादेहः परैत्यपगमिष्यत्येव ॥ २४ ॥

---

श्रीविजयध्वजः ।

अस्तुममापिमरणंततः किमितितत्राह पितृेति तवपित्रादयोहताः वयश्चविगत मात्मादेहश्चजरयाग्रस्तइतियत्तथापित्वंपरगेहमुपा सत्से नश्रेयः साधनायेहसे मृतस्यतवातः परलोकेनसुखावाप्तिरित्यर्थः ॥ २१ ॥

परलोकेसुखं नेतिचेदिहैवदीर्घजीवनमस्त्वित्यभिप्रायश्चेत्तर्हित्वं निरपत्रपइत्यभिप्रेत्याह अहोइतिजंतोर्जीविताशावहुकालंजीवामीत्या शाइच्छामहीयसीमहत्तराअहोअज्ञानातिरेकः ययाजीविताशयाभवान्भीमापवर्जितं भीमेनतिरश्चीनहस्तेनदत्तंपिंडमादत्ते कइवगृह पालवत् सारमेयइव ॥ २२ ॥

ननुविषमउपन्यासः कनिष्ठपुत्रत्वेनमत्पुत्रत्वात्तद्दत्तान्नेनशरीरपोषणमुचितमितिचेत्सत्यं विषदानादिना त्वयाऽपराद्धत्वात्तद्दत्तंविषो पममित्यभिप्रेत्याह अग्निरिति अग्निदाहाद्यपराधाः त्वयायेषांकृताः तेषामन्नैः पुष्टैरसुभिः कियत्प्रयोजनं लज्जा करत्वान्मृतिरेवगरीयस्यतो निर्गम्यतामित्यन्वयः ॥ २३ ॥

युधिष्ठिरादीनांमयितात्पर्यान्ननिर्जिगमिष्यामीति चेत्तत्राह तस्येति जरयाग्रस्तेवाससीइववस्त्रेइवयथातथाअनिच्छतोजिजीविषोर्जीवि तुमिच्छोः कृपणस्यपरान्नादननिरतस्यापितवायंजीर्णोदेहः परैतिनिरस्तासुः स्यादतोदेहस्यानित्यत्वान्निर्गच्छत्वितिवदामीतिभावः ॥ २४ ॥

---

सुबोधिनी ।

ननुतदेवास्यकर्त्तव्यंकिमंतरागमनेन. विमुंचेन्मुच्यमानोपिंतिन्यायात् तत्राह पितृभ्रातृइति एवंसर्वहेतवस्य समीचीनाविषयाभवेयुः तवतुजीवनान्मरणमुत्तमंचिरप्रवासीरोगीपरान्नभोजीपरावसथशायीयज्जीवतितन्मरणं यन्मरणं सोऽस्यविश्रामःइति वाक्यात्तवेदानी मेवत्यागउचितः कथंतदुपपादयतिपिताभीष्मः भ्रातरः भूरिश्रवादयः शल्यादः सुहृदः पुत्रादुर्योधनादयः एकोऽपियत्रहन्यतेतत्रसल-ज्जोनतिष्ठतिकिमुतसर्वे वयः आयुः आत्मादेहः जरा कालकन्याप्येवमपि परेषांशत्रूणांगेह गृहपालवदुपाससेइति ग्लानिप्रदर्शनम् ॥ २१ ॥

सामान्यकथनेनविशेषमाह अहोइति येनपुत्रस्यरुधिरं पीतमर्थात् स्वस्यैवतेनअवज्ञयादत्तंवहिर्वलिदान पिंडवत् तत्राप्यन्यः स-ग्रायास्यतीतिभयात् तद्गृहपालः श्वाशीघ्रंभक्षयतितद्वदादत्से ॥ २२ ॥

ननुनिरभिमानस्यैतदुचितंतत्राह अग्निर्निसृष्टोदत्तश्चेति स्यादेवंयदिभवद्भिरपकारः कृतोनस्यात्अतः भवद्भिरेवशत्रुत्वस्यस्थिरी-कृतत्वात् युक्तं भीमकृतं"नद्विषतोन्नमश्नीयात् द्विषंतंनैवभोजयेत् द्विषताहिहविर्भुक्तंनेहनामुत्रतद्भवेदि"तिश्रुतेः अग्निर्निसृष्टोलाक्षागृहेवि-परीतकथनंसामान्यविशेषभावात्दाराः द्रौपदीचकारात्तेऽपिवल्कलादिपरिधानात् क्षेत्रमितिस्थितिस्थानमपि अतएवमपकृतैर्जीवरक्षणं योगशास्त्रविरुद्धंक्रियदिति नतज्जीवनेनकिंचित् प्रयोजनंसेत्स्यतीतिभावः ॥ २३ ॥

एवमपिसर्वविरोधेनपोषितोदेहः स्वयमेवनतिष्ठतीत्याह तस्यापीति एवंग्लानिमनुभवतोऽपिकृपणस्य दीनस्य"कृपणाः सततुविज्ञेया-योऽनालोचितयाचक" इति भीमयाचकस्यवाजिजीविषोः जीवितुमिच्छोः परैति अपगच्छतितत्रहेतुः जरयाजीर्णइति अव्यवहियमाणोअप रिधानोत्तरीयेवाससोस्पर्शमात्रेणैवजीर्णंगच्छतः प्रक्षालनेनापिनश्यतीत्यर्थः ॥ २४ ॥

---

श्रीविश्वनाथचक्रवर्त्ती ।

वैराग्यमुत्पादयति पितृेति सप्तभिः ॥ २१ ॥

अपवर्जितं दत्तम् । गृहपालः श्वा ॥ २२ ॥

तद्दत्तैरन्नादिभिर्लब्धैरसुभिः कियत् किं प्रयोजनमित्यर्थः ॥ २३ ॥

परैति क्षीयते । वाससी अन्तरीयोत्तरीये इति दृष्टान्तस्य द्विवचनदृष्ट्या दार्ष्टान्तिकस्य देहस्यापि सूक्ष्मस्थूलभेदेन द्वितयात्मकस्य जीर्णत्वम् आध्यात्मिधिर्याकिदं सूक्ष्मदेहस्य जीर्णत्वंलक्षणं वलीपलितादिकं स्थूलदेहस्य च ॥ २४ ॥

---

गतस्वार्थमिमं देहं विरक्तो मुक्तबन्धनः ।
अविज्ञातगतिर्जह्यात् स वै धीर उदाहृतः ॥ २५ ॥
यः स्वकात् परतो वेह जातनिर्व्वेद आत्मवान् ।
हृदि कृत्वा हरिं गेहात् प्रव्रजेत् स नरोत्तमः ॥ २६ ॥
अथोदीचीं दिशं यातु स्वैरज्ञातगतिर्भवान् ।
इतोऽर्व्वाक् प्रायशः कालः पुंसां गुणविकर्षणः ॥ २७ ॥
एवं राजा विदुरेणानुजेन प्रज्ञाचक्षुर्बोधित आजमीढः ।
छित्त्वा स्वेषु स्नेहपाशान् द्रढिम्नो निश्चक्राम भ्रातृसन्दर्शिताध्वा ॥ २८ ॥

सिद्धांतप्रदीपः ।

वैराग्योत्पादनायाह पितेति सप्तभिः आत्मादेहः ॥ २१ ॥
भीमेनभवत्पुत्रघ्नेन आवर्जितम् अवज्ञापूर्व्वकंदत्तंगृहपालवत् ग्रासंसिहवदादत्तेस्वीकरोति ॥ २२ ॥
येषांविनाशाय अग्निर्निसृष्टः प्रक्षिप्तः दारादूषिताः कचग्रहणादिभिरवज्ञाताः तद्दत्तैरन्नादि द्वारारक्षितैरसुभिः कियत्किंयदपीत्यर्थः ॥ २३ ॥
अस्यापि एवंदैन्येनवर्त्तमानस्यापितवदेहः परैतिअपगमिष्यति ॥ २४ ॥

---

भाषाटीका ।

पिता भ्राता मित्र पुत्र नष्ट होगये अवस्था चली गयी देह जरा से ग्रस्त होगया दूसरे के घरमें रहते हो यह उचित नहीं ॥ २१ ॥
पहिले ही अंध थे अब वधिर होगये मंदबुद्धि होगये दांत भग्न होगये मंदाग्नि होगये कफ गिराते हो तथापि विषयानुराग नहीं छूटता है ॥ २१ ॥
आश्चर्य है कि मनुष्य की जीवन आशा बडी होती है जिससे आप भीमके दिये हुये अन्न ग्रास को कुत्ता की नांई ग्रहण करते हो २२
तुम्हारे पुत्रों ने जिनके निवास में आग लगाई जिनको विष दिया जिनकी स्त्री को दूषित किया जिनके क्षेत्र को हरण किया उन पांडवों के अन्न से दिये प्राणों से क्या प्रयोजन है ॥ २३ ॥
जीने की इच्छावाले अत्यन्त लुब्ध तुम्हारा यह देह नहीं इच्छा करने पर भी जीर्णवस्त्रवत् नष्ट होजाता है ॥ २४ ॥

---

श्रीधरस्वामी ।

( किंलक्षणो धीर इत्यपेक्षायामाह । ) गतस्वार्थं यशोधर्म्मादिशून्यम् । मुक्तबन्धनः त्यक्ताभिमानः । क्व गत इति अविज्ञाता गतिर्यस्य । स धीरः प्राप्तदुःखस्य स्वयं सहनेन मुक्तिप्राप्तेः । वै निश्चितम् ॥ २५ ॥
नरोत्तमस्तु ततः प्रागेव कृतप्रतीकारः । स्वकात् स्वत एव परतः परोपदेशतो वा ॥ २६ ॥
त्वन्तु पूर्व्वं नरोत्तमो माभूः अत इदानीं धीरो भवेत्याह अथेति । अर्व्वाक् अर्व्वाचीनः एष्यन्नित्यर्थः । गुणान् धैर्य्यदयादीन् विकर्षति आच्छिनत्तीति तथा ॥ २७ ॥
आजमीढः अजमीढवंशजः । प्रज्ञाचक्षुः अन्धः । एवं बोधितः सन् । द्रढिम्नश्चित्तदार्ढ्यात् । भ्रात्रा सन्दर्शितः अध्वा बन्धमोक्षयोर्मार्गो यस्य सः ॥ २८ ॥

---

दीपनी ।

प्राप्तेत्यत्र—यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ । समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते । इति श्रीमद्भगवद्गीतान्तर्गताद्वितीयाध्यायोक्तवचनेनार्थोऽनुसन्धेयः ॥ २५—४० ॥

---

श्रीवीरराघवः ।

तर्हिक्कातिसन्निधावत्रैवपरैत्वित्यत्राह गतेतिगतः स्वार्थः स्वापेक्षितपुरुषार्थोयस्मात्तमिमंदेहंयोजह्यात्त्यजेत् कथंभूतः विरक्तः देहादिष्वस्पृहारहितः मुक्तानिबंधनानिसंसृतिबंधकानिपुण्यपापात्मकानियेन अविज्ञाताज्ञातिभिरज्ञातागतिर्देहत्यागलोकांतरप्राप्तिरूपायस्यसः सएवधीरः योगीउदाहृतः ॥ २५ ॥

किंचस्वकात्परतअन्यस्मादन्योपदेशाद्वाइहजातोनिर्वेदोवैराग्यंयस्यसःयः पुमानात्मवान्जितेंद्रियः हरिमाश्रितानांसंसृतिबंधहरंभगवंतंहृदिकृत्वाविधायध्यानेनसंन्निध्याप्यगेहात्प्रव्रजेत्सएवनरेपूत्तमः त्वमेवंकुर्विवितिभावः ॥ २६ ॥

तदेवाहअथइति अतः स्वैर्ज्ञातिभिरज्ञातागतिर्यस्यसभवानुदीचींदिशंयातुतत्रहेतुमाह इतोऽर्वागितीनंतरंकालः प्रायशः पुंसांगुणानात्मगुणान् अर्केधादीन्विकर्षयत्यपनुदतइतितथाभूतः नंद्यादित्वाल्ल्युः यद्वाइतोऽनंतरकालात्अर्वागधरः निकृष्टः कलिकालः इतियावत् अर्वाक्त्वमेवाहगुणविकर्षणः उक्तार्थः ॥ २७ ॥

एवमित्थमनुजेनविदुरेणबोधितआजमीढः अजमीढवंशजत्वात्तच्चनवमेस्फुटंप्रज्ञैवचक्षुर्यस्यअंधइतिभावः यद्वांधत्वेऽपिप्रज्ञयाचक्षुःस्थानीययासर्वंसाक्षात्कुर्वाणः राजाधृतराष्ट्रः भ्रात्राविदुरेणसंदर्शितः अध्वागंतव्यदेशाध्वायस्यसः अनेनविदुरोऽपितेनैवसहनिरगादितिसूच्यते दृढिम्नः नितरांदृढान्दृढमूलान्स्वेषुदेहतदनुबंध्यादिषुस्नेहाअनुरागास्तएवपाशाः पाशवद्बंधहेतुत्वात्तान्छित्वानिश्चक्रामगृहादितिशेषः ॥ २८ ॥

---

श्रीविजयध्वजः ।

ननु प्रथममेवपतिष्यतीतिदेहमुपेक्ष्यमाणस्य आत्महननाख्यदोषानुषंगइतितत्राह गतेति गतः स्वार्थः ऐहिकामुष्मिकसुखसाधनोयस्मात्सतथोक्तः तमिमंदेहंदहाभिमानं मुक्तस्तदनुभार्यादिस्नेहानुबंधान्मुक्तः अविज्ञातगतिरन्यैर्जनैरनवबुद्धारण्यादिगतिः जह्यात्सवैएवधीरो विवेकवान्युदाहृतः तस्मात्पुरुषार्थसाधनायोग्यदेहहानौदोषाभावात् निर्जनवनंगत्वातपश्चर्ययाशरीरमिदं साधितस्वार्थंकुर्विवितिभावः ॥ २५ ॥

इतोऽपिप्राप्तवनस्यतवतपःसाधनमेवश्रेयस्करमितिवक्तीत्याहयइति यःस्वतःस्वबुद्ध्यापरतः परबोधनेनवाजातनिर्वेदउत्पन्नवैराग्यः आत्मवान्वशीकृतमनाः हरिंहृदिकृत्वागेहात्प्रव्रजेत्सनरोत्तमः पुरुषश्रेष्ठः इत्येकान्वयः ॥ २६ ॥

अथतस्माद्भवानुदीचींदिशंयातुकथंभूतः स्वैरज्ञातगतिः नतुस्वैः पाण्डवैरविज्ञातगतिः पाण्डवानुज्ञयैवतस्यवनवासायगत्युक्तेः कथंतर्हिशब्दयोजना स्वैरिणीशब्दार्थवत्स्वेच्छानुसारेणाज्ञातागतिर्यस्यनपरच्छात: सतथोक्तइतिविवरणोपपत्तेः अन्यथाअविज्ञातगतिरित्येतदपहसितंस्यात् इतोऽर्वाक्पूर्वतनः कालः पुंसामधिकारिणांज्ञानभक्त्यादिगुणसामग्र्यापादकः इतउपरितनः कालः प्रायेणगुणेषुविषयेषुविकृष्यनाशयतीतिगुणविकर्षणः विविच्यदर्शयतीतिवा वेदस्यवाविकर्षणमित्युक्तः ॥ २७ ॥

एवमुक्तप्रकारेणानुजेनविदुरेणबोधितोऽतः प्रज्ञानमेवचक्षुर्यस्यसतथा स्वतोजात्यंधः प्रज्ञयाचेष्टेपश्यति नतुमांसदृष्ट्येतिवाआजमीढः अजमीढवंशोद्भवः आजेनज्ञानेनमीढः सिक्तइतिवा मिहसेचनइतिधातोः द्रढिम्नः दृढतरान् स्वेषुस्नेहाख्यपाशान्छित्वाभ्रात्राविदुरेणसम्यग्दर्शितउभयविधोवैदिकलौकिकाख्योऽध्वामार्गोयस्यसतथोक्तः राजाधृतराष्ट्रः निश्चक्राम निर्गतोबभूवेत्येकान्वयः गृहादितिशेषः ॥ २८ ॥

---

क्रमसंदर्भः ।

गतस्वार्थमिमं देहमित्यादिद्वयम् पूर्वं आतुरसन्न्यासी परस्तु सद्विवेकेन भगवच्छरणतया सन्न्यासीति तारतम्यं ज्ञेयम् ॥ २५ । २६ । २७ । २८ । २९ । ३० । ३१ ॥

---

सुबोधिनी ।

तर्हिकिंकर्तव्यमित्यत्राह गतस्वार्थमिममिति विपयदोषदर्शनेनवैराग्यविवेकोत्पत्तौ अग्निमबाधाभावायवृक्षधर्मत्वादयंदेहः तत्रत्यकृत्यः यत्रत्यकोऽपिनजानाति अपरित्यागदशायामेवास्यापकारजनकत्वात् परित्यागोहिभर्जनवत् बीजस्यअंकुरोत्पत्तौप्रतिबंधकः तादृश्यंरक्ष्यः यावत्स्वस्यकार्यंसिद्ध्यतिसिद्धेकार्येत्यक्तव्यइति गतस्वार्थमित्युक्तं ज्ञातस्वार्थमित्यर्थः अथवापूर्वोक्तन्यायेनगताः स्वार्थाज्ञानधर्मादयोयेनअतोऽपकारिणमिममस्मिन् रागपरित्यज्यतस्य शृंखलापुत्रादिभिः विमुक्तः सन्दुष्टत्वादस्य देहस्यजह्यात् इमंदेहंपरित्यजेत् नविज्ञातागतिर्यस्यशृंखलानांपुनः संबंधाभावार्थंकितः स्यात्तत्राह सवैधीरउदाहृतइति धीरस्ययत् फलंतत्फलंलभेत "धीसमताविहम्त्यूदुरापाविति"धैर्यंतत्फलं ननुतादृशमेवफलंतत्फलेप्रयुज्यतइत्यतआह वैनिश्चयेनयत्रफलार्थंधैर्यगणनाकृतातत्रैतादृशमपिधैर्यंगणितं निश्चितफलत्वेन तस्मात् यथातयोर्धैर्ययोः फलंतथास्यापीत्यर्थः ॥ २५ ॥

एवमेकेनप्रकारेणदेहपरित्यागउक्तः प्रकारांतरमप्याह यःस्वकादिति स्वकीयात् बंधोर्हितकर्तुः परतः शत्रुवत्कृतगुणदोषराहित्येमयअस्मिन्नयंकार्यदृष्टिः सन्जातवैराग्यः देहेंद्रियादिकमज्ञानादन्यार्थंविनियुज्यतेसर्वंस्वनाशेतत्त्यागः प्रथमपक्षः प्रथमएवभोगार्थम-

## सुबोधिनी ।

कृत्वायाद्दशैरपिताद्दशैर्वाक्यैस्तृष्णाभावायजातवैराग्यः तेनदेहादिनाभगवंतंसपरिकरंज्ञात्वातंहृदिस्थाप्यदेहत्यागेच्छांपरित्यज्यतेनदुर्लभं भगवत्स्मरणंकुर्वाणः गृहस्यबाधकत्वात् संबंधाभावायप्रव्रजेत् सन्यस्यगच्छेत् सनरोत्तमः सर्वेभ्यः प्राणिभ्यउत्तमइत्यर्थः ॥ २६ ॥

तर्हिमयाकिंकर्तव्यं तदाह अथेति भवतस्त्वन्यएवमार्गः नदेहपरित्यागः नवान्यत्रविनियोगाभावः तस्मात्एतत्स्थानपरित्यागएवोत्तमः नन्वनुभयरूपत्वात् किमेवंपरित्यागेनतत्राह उदीचींदिशंयात्विति महाप्रस्थानमप्येकोमार्गः उक्तः अदोषतैवसगुणाःविगुणाइति न्यायात् अत्रस्थितौदोषसंभवात् "एषावैदेवमनुष्याणांशांतादिगि"त्युत्तरादिशः उत्कृष्टत्वात् तत्रस्थितौनदेवाबुद्धिनाशंकुर्वंति नस्वतः परस्मिन्नर्थेस्वकीयाप्रतिबंधकाइति तैर्यथानज्ञायततथागंतव्यं ततोयथाधिकारमग्रेवक्ष्यामइतिभावः ननुदोषाभावार्थमेवचेद्गमनंतदात्रैवस्थित्वादोषोदूरीकर्त्तव्यःकिंगमनेन विवेकधैर्यसत्संगभगवद्गुणानामत्रैवसंभवात् तत्राह इतोऽर्वागिति सर्वत्रैवप्रथमपुरुषवचनं हीनत्वबोधनाय अयमेवकालः सर्वेषांबुद्धिनाशकत्वदृष्टांतात् इतोऽप्यर्वाक्यःकालःबाहुल्येनैस्वतंत्राणांविवेकादिमतामपिविवेकनाशकः तत्रकथंविवेको त्पत्तिरितिभावः देशसापेक्षएवकालस्यदोषजननात् अतएवचोत्तरदेशस्थऋषीणांनकालिकालादिनाबुद्धिभ्रंशः परित्यागवैयर्थ्यापत्तेश्चतस्यैवहेतोरित्यत्रसर्वोत्कृष्टफलकालस्याहेतुत्वप्रतिपादनेदेशस्याप्रयोजकताउक्ताभयंप्रमत्तस्यवनेष्वपिस्यादित्यत्रतु ईश्वरेच्छायानियामकत्वात् नकेवलेनविरोधः तदिदानीमेतत्स्थानंपरित्यज्यउत्तरदेशेगंतव्यमितिसिद्धम् ॥ २७ ॥

तत्तथैवकृतवानित्याह एवमिति राजेतिकथाकरणेसामर्थ्यम्अनुजेनेत्यप्रतारकत्वंप्रज्ञाचक्षुरितिउत्तमाधिकारित्वम्आजमीढः आजमीढवंशोत्पन्नः तस्यहस्तिनापुरपरित्यागोपितृकृतनगरपरित्यागेनसर्ववंशधर्मपरित्यागोबोधितः तदुक्तप्रकारेणैवगतइतिज्ञापयितुमाह छित्वा-स्वेष्विति दृढिम्नोदृढतरान् भ्रात्राविदुरेणसम्यक्दर्शितः बहिरंतरमार्गोयस्यकोचिदेवंप्रथमपक्षस्थंमन्यंते ॥ २८ ॥

---

## श्रीविश्वनाथचक्रवर्त्ती ।

गतस्वार्थम् अकृतकृष्णभजनत्वेन शोकमोहजराद्व्याकुलम् । मुक्तबन्धनः त्यक्तधनपुत्रादिः । क्व गत इत्यविज्ञाता गतिर्यस्य सः । जह्यात् क्वापि तीर्थे देहं भक्त्यैव यस्त्यजेत् स धीरः ॥ २५ ॥

नरोत्तमस्तु प्रागेव कृतप्रतीकारः । तल्लक्षणमाह स्वकात् स्वत एव परतः परोपदेशतो वा आत्मवान् विवेकी । धनं हृदि कृत्वा वणिक् यातीतिवत् हरिं हृदि कृत्वा हरिं प्राप्तुमिति भावः । स नरोत्तमः । तत्रातुरसंन्यासी धीरः भक्तिविवेकी नरोत्तम इति भेदः ॥ २६ ॥

त्वन्तु नरोत्तमो नाभूरेवातो धीरो भवेत्याह अथ इति । अर्वाक् अर्वाचीनः एष्यन् काल इत्यर्थः । गुणान् धैर्यदयादीन् विकर्षति आच्छिनत्तीत्यर्थः ॥ २७ ॥

बोधितः मुक्त्यर्थं भक्तिमिश्रज्ञानोपदेशेनेत्यर्थः । आजमीढः अजमीढवंशजः । दृढिम्नश्चित्तदार्ढ्याद्धेतोः । भ्रात्रा सन्दर्शितः अध्वा बन्धमोक्षयोर्मार्गो यस्य सः ॥ २८ ॥

---

## सिद्धांतप्रदीपः ।

धीरलक्षणमाह गतस्वार्थमिति ॥ २५ ॥

नरोत्तमलक्षणमाह यइति ॥ २६ ॥

तत्रत्वानुरूपोधीरत्वसम्पादनावसरोवर्ततेऽतोधीरत्वंसम्पादयेत्याह अथेतिअथदेहस्यगतस्वार्थत्वानिश्चयानन्तरमेवेतियायात् स्वैर्वैराग्यविरोधिभिर्ज्ञातिभिरविज्ञातगतिरुदीचीमुत्तरांदिशंयातुविलम्बेदोषमाह इतोऽनन्तरम् प्रायशोऽर्वाक् अपकृष्टः अतएवगुणान्धैर्यादीन् विकर्षयत्याच्छिनत्तीतिगुणविकर्षणःकालः ॥ २७ ॥

प्रज्ञाचक्षुर्बुद्धिनेत्रः आजमीढोऽजमीढवंश्यः ॥ २८ ॥

---

## भाषाटीका ।

विरक्त पुरुष बंधनों को छोड़कर अपने जनों को अपनी गति न जनाकर स्वार्थ रहित इस देह को छोड़ देने वाला धीर कहाता है ॥ २५ ॥

जो पुरुष अपने से या दूसरे से बैराग्य को प्राप्त हो कर ज्ञान युक्त हो कर श्री हरि को हृदय में स्थापन कर घर से निकल जाता है सो उत्तम पुरुष है ॥ २६ ॥

इसी से आप किसी को गति न जना कर उत्तर दिशा को जाओ यहां से आगे का काल पुरुषों का गुण नाश करने वाला है ॥२७॥

( प्रज्ञाचक्षु ) जन्मांध धृतराष्ट्र राजा ( अजमीढवंशोद्भव ) छोड़े भ्राता विदुर के उपदेश से अपने जनों में स्नेह पाश को छोड़कर भ्राता के दिखाये मार्ग को चले गये ॥ २८ ॥

---

**पतिं प्रयान्तं सुबलस्य पुत्री पतिव्रता चानुजगाम साध्वी ।**
**हिमालयं न्यस्तदण्डप्रहर्षं मनस्विनामिव सत् सम्प्रहारः ॥ २९ ॥**
**अजातशत्रुः कृतमैत्रो हुताग्निर्विप्रान्नत्वा तिलगोभूमिरुक्मैः ।**
**गृहं प्रविष्टो गुरुवन्दनाय न चापश्यत् पितरौ सौबलीञ्च ॥ ३० ॥**
**तत्र सञ्जयमासीनं पप्रच्छोद्विग्नमानसः ।**
**गावल्गणे ! क्व नस्तातो वृद्धो हीनश्च नेत्रयोः ।**
**अम्बा वा हतपुत्रार्त्ता पितृव्यः क्व गतः सुहृत् ॥ ३१ ॥**
**अपि मय्यकृतप्रज्ञे हतबन्धुः स भार्य्यया ।**
**आशंसमानः शमलं गङ्गायां दुःखितोऽपतत् ॥ ३२ ॥**

श्रीधरस्वामी ।

सुबलस्य पुत्री गान्धारी । साध्वी सुशीला । हिमालयं प्रयान्तं पतिमनुजगाम । ननु कथं सा सुकुमारी हिमादिदुःखबहुलं हिमवन्तं गता अत आह न्यस्तदण्डानां सन्न्यासिनां प्रहर्षो यस्मिन् तम् । दुःखदमपि कथञ्चित् केषाञ्चित् प्रहर्षहेतुर्भवतीत्यत्र दृष्टान्तः मनस्विनां शूराणां युद्धे सन् तीव्रः संप्रहारो यथा । पाठान्तरे सत् संप्रहारं युद्धं यथेति ॥ २९ ॥

कृतं मैत्रं मित्रदैवत्यं सन्ध्यावन्दनं येन । नत्वा सम्पूज्य । पितरौ विदुरधृतराष्ट्रौ ॥ ३० ॥

हे गावल्गणस्य पुत्र ? सञ्जय ॥ ३१ ॥

अकृतप्रज्ञे मन्दमतौ । शमलम् अपराधम् आशंसमानः आशङ्कमानः । भार्य्यया सह ॥ ३२ ॥

---

श्रीवीरराघवः ।

पतिमिति सुबलस्यपुत्रीगांधारीन्यस्तस्त्यक्तो दंडोभूतद्रोहोयैस्तेषांसर्वभूतसुहृदांयोगिनांप्रहर्षकरंहिमालयंप्रतियांतंगच्छंतंपतिमनुजगामयुक्तंचैतदित्यभिप्रायेणतांविशिनष्टिपतिव्रतासाध्वीचेतिमनस्विनामिवेतिसधृतराष्ट्र निर्गमः इत्यध्याहारः सनिर्गमः मनस्विनाविवेकिनां संप्रहारइवस्थितः मनस्विनामुद्योधकइवावस्थितेत्यर्थः ॥ २९ ॥

ततोऽजातशत्रुर्हुताअग्नयआहवनीयादयोयेनतथाभूतः अनेनराज्ञावैवधृतराष्ट्रोनिरगादितिसूचितंतिलादिभिः सत्कृत्यविप्रान्नत्वाकृतंमैत्रं येनसः अतएवगुर्वोर्गांधारीधृतराष्ट्रयोर्वंदनायतयोर्गेहंप्रविष्टः पितरौधृतराष्ट्रविदुरौसौवलींगांधारींचनापश्यन्नददर्शपितराविति द्विवचनेन विदुरोविवक्षितः सौवल्याः गांधार्याःपृथगुपादानात् ॥ ३० ॥

ततस्तत्रधृतराष्ट्रगृहेष्वासीनमुपविष्टंसंजयंधृतराष्ट्रस्यगीतोपदेष्टारमजातशत्रु पप्रच्छकथंभूतउद्विग्नंभीतंमानसंयस्यतथाभूतः ॥ ३१ ॥

प्रश्नमेवाह गावल्गणइत्यादिभिस्त्रिभिः हेगावल्गणे ! संजय ! नोऽस्माकंतातः पितानेत्रयोर्नेत्राभ्यांहीनःरहितः वृद्धश्चक्वगतः हताः पुत्रा यस्याः साऽतएवार्त्तोदुःखिताचमातागांधारीचक्वगतातथापितृव्यः पितृभ्राता सुहृच्चविदुरः क्वगतः अपान्यापिशब्दः संभावनाद्योतकः प्रश्नद्योतकोवा ॥ ३२ ॥

हतामयाहताः बंधवः पुत्रायस्यसोऽतएवदुःखितोभार्यया सहाकृतप्रज्ञेविवेकरहितेमयिदोषंशमलमपराधमितियावत् आशंसमानः चिंतयन् गंगायामपतत्पतितआत्स्यात्पतितवान्किमितिवार्थ ॥ ३२ ॥

---

श्रीविजयध्वजः ।

सुबलस्यपुत्रीगांधारी पतिशुश्रूषैवव्रतंयस्याः सातथोक्ता प्रयांतंपतिमनुजगामेत्यन्वयः चकारात्कुंतीच गत्वाकुत्रावसदितितत्राह हिमालयमिति कायवाङ्मनोभिर्न्यस्तः परित्यक्तः भूतद्रोहलक्षणोदंडोयैस्तेषांप्रकर्षेणहर्षंजनयतीतिन्यस्तदंडप्रहर्षमतएवमनस्विनांवशीकृतेंद्रियग्रामाणांसंन्यासिनांसम्यग्विहारंक्रीडास्थानंहिमालयंहिमवंतंपर्वतंगत्वा तत्रबदरिकाश्रमेऽवसदित्यन्वयः ॥ २९ ॥

इदानींयुधिष्ठिरस्यमनसितपस्तपतोधृतराष्ट्रस्यप्रायेणमृतिरभूत् तथाविधशकुनप्रतिभासादित्यभिप्रेत्याह अजातशत्रुरिति मित्रः सूर्यः तद्विषयंकर्ममैत्रंसंध्योपासनादितत्कृतंयेनसकृतमैत्रः गार्हपत्याद्याग्निषुहुतंयेनसहुताग्निः तिलगोवस्त्ररुक्मैः विप्रांस्तर्पयित्वारुक्मं सुवर्णंचदत्वापिबाद्युपवेशनस्थलेपित्रादिगुरुवंदनायपितृगृहान्प्रविष्टोऽजातशत्रुस्तदायतनंनमस्कुर्वन् पितरौकुंतीधृतराष्ट्रौसौबलींगांधारीं मनसाजीवंतौनापश्यत् संप्रतितेमृताइतितस्यमनसितथाप्रत्ययआदित्यन्वयः पितरावित्यत्रपितृशब्देनविदुरोऽत्रनाभिप्रेतः तस्यशूद्रजातत्वेनावंद्यत्वात् धृतराष्ट्रादिमृतेः पूर्वंयुधिष्ठिरेणैकीभूतत्वाच्च नचापश्यदित्यस्यानुक्त्वा धृतराष्ट्रगमनार्थांगीकारेभारतादौयुधिष्ठिराद्यनुज्ञयागत्युक्तेः तद्विरोधोदुर्वारः ॥ ३० ॥

## श्रीविजयध्वजः।

मनसिप्रतीतपितृस्वर्यागस्ययुधिष्ठिरस्यतन्मरणानंतरंतदवसरेतत्रागत्यासीनंसंजयंप्रतिपारलौकिकगतिप्रश्नमाह तत्रेति गवल्गणस्यापत्यंगावल्गणिः तस्यसंबुद्धिः हेगावल्गणे ! नस्तातःक्व कंलोकंप्रतिगतः कथंभूतः नेत्रयोरितितृतीयार्थेषष्ठी नेत्राभ्यांहीनः नेत्रयोर्योगेन वा वृद्धः जरयाचग्रस्तः अंबाकुंतीवा हतपुत्रत्वादार्तागांधारीचपरत्रलोकंकंप्रतिगते पितृव्योधृतराष्ट्रः क्वगतइतिपुनः प्रश्नस्तात्पर्यातिशयात् ३१

धृतराष्ट्रस्यमरणकालेस्वस्मिन्प्रियाप्रियविवेकंतस्वमरणप्रकारंचपृच्छति अपीति अकृतप्रज्ञेअशिक्षितबुद्धौमयिस्वभार्ययासहशमलंपापमपराधमाशंसमानः हतबंधुर्दुःखितः सन्गंगायामपतदपिबंधून्सर्वान्मारयित्वास्वयंराज्यमादायमांनिष्कासितवानितिशमलबुद्धिःनाभवत् किंतद्दुःखातिशयादेवगंगायांपतित्वामृतोनान्यितिभावः ॥ ३२ ॥

---

## क्रमसन्दर्भः।

अपीति। शमलम् अस्य मद्वधात्मकमपि पापं भवत्विति वाञ्छयेत्यर्थः॥ ३२। ३३। ३४। ३५॥

---

## सुवोधिनी।

भार्यायामपितेनमोहस्त्यक्तएवतथापिस्वधर्मत्वेनतयागतामित्याहपतिमिति सुवलस्यपुत्रीतिक्षत्रियाभिमानः तेजोजातिधर्मेणापिगमनमुक्तं नन्वतिदु:खदेशेचित्तस्थैर्याभावात्परलोकार्थिनांकथंगमनंतत्राह न्यस्तदंडप्रहर्षमितिन्यस्तस्त्यक्तः भूतेषुदंडोयैः भूताभयदातारः तेषांप्रकर्षेणहर्षोयत्रअन्यासर्वाभूर्जीवव्याप्तातत्रस्थितः अनिच्छयापिबहून्मारयतिततोव्रतंभज्येतहिमेतुसर्वजीवपरिहारात् शरीरेऽपिक्रमिसंबंधाभावात्परमहंसानांहिमस्थानमतिप्रियंसर्वपरित्यागीदेहपरित्यागार्थमपिप्रवृत्तः तत्रतुदेहपरित्यागसाधनानिसुगमानियथायुद्धेमनस्विनां तत्रदेहपरित्यागेच्छूनांसतत्सर्तृकसम्यक्प्रहारो यत्रयुद्धेशस्त्रलक्ष्यभूतांवास्यादिति स्मृतेः अथवावीररसाविष्टस्ययथायुद्धभूमिः तथा-वैराग्यरसाविष्टस्य सर्वविषयरहितहिमस्थानम् एवमुत्तमदेशपर्यंतमुक्तम् अग्रिमकृत्यंत्वनुवादात् स्पष्टीभविष्यति साक्षाद्विदुरोपदेशकथनेमर्यादायांविरोधआपद्यंत यावत्कस्यापिहृदयंर्यास्मिन् सर्वात्मनाभवेत् "सुहृदावंधसद्भावात्नसमुच्यतकर्हिचित् अतएवेष्टवर्गेच्छायथागच्छेत्तथाचरेत् धृतराष्ट्रतथाबंधोमाभूदितिहरेःप्रियः युधिष्ठिरादिमोहस्यनाशमाहसनारदः मोहाभावःस्वतोनास्तितस्येतिप्राक्कथाततात२९

एवमर्धरात्रसमयेधृतराष्ट्रनिर्गतेउदयानंतरप्रहरपर्यंतं जिज्ञासानाभूत्तदाह अजातशत्रुरस्ति नाम्नैववैराभावो निरूपितः कृतमैत्रइतिदेव पितृऋषिभूततर्पणेन सर्वत्रमैत्रीकृता अथवा प्रातःसंध्या मित्रदैवत्या "मित्रस्य चर्षणीधृत" इत्युपस्थानात् अनुद्धरणाभ्युदयेच मैत्रचरुविधानाच्चमतः कृतसंध्यावंदनइत्यर्थः कृतावश्यकोवा गुदस्य मित्र दैवत्यात् क्रमेणत्रयं ज्ञातव्यं हुताग्निः कृताग्निहोत्रः राज्ञोहिदानंनित्यं तत्रापि तिलपात्रं गोदानं स्वर्णदानामिति च आज्यावेक्षणं स्वर्णदानएवोक्तं "तिलैर्विष्णुगवारुद्रः भूम्याचैवप्रजापतिः सर्वेप्रीताः सुवर्णेनसत्पात्रेषु समर्पणात्" इतिदानानिकृत्वाब्राह्मणेभ्यांनमस्कृत्य परंपरागतं गृहंप्रविष्टः राजगृहंराजशब्दवाच्यत्वंचधृतराष्ट्रेधृतमिति तद्गृहंप्रविष्टः गुर्वादिवन्दनमपिनित्यं नष्टाश्वदग्धरथन्यायेनधृतराष्ट्रस्यपितृत्वं युधिष्ठिरस्यचपुत्रत्वमिति गुरुषुमातुर्मुख्यत्वात् नचापश्यात्कुंतींनत्वा धृतराष्ट्रविदुरनमस्कारार्थंप्रविष्टः तौसौवलींचदृष्टवानपि ननमस्कारादूरेमहानुद्वेगोजातः॥ ३०॥

अतोविचार्यैवसंजयंपृष्टवान् गवल्गणस्यपुत्रः गावल्गणिः पित्रादिक्रमेणत्वमेतेषामेवसेवकः कथमप्रमत्तइति नस्तातइति परमपूज्यत्वं वृद्धइतिधर्मः नेत्रयोर्हीनइतिदया संबंधमात्रविवक्षयाषष्ठी॥ ३१॥

भार्यासहितत्वेनसुखित्वमाशंक्याह अंबाचेतिगांधारी चपुत्रशोकेनभर्तृव्रतचर्ययाचआर्तापीडितागमनसंभावनाभावत्वेनेत्युक्तंपितृव्यो विदुरः सोऽपिचसुहृत् शुद्धांतः करणः अतोवंचनंनकरिष्यतीतिभावः गमनाभावात् अदर्शनाच्चगंगोपर्येवगृहस्यअतउभयाभावात्शास्त्रतः पुत्रत्वेऽपियदिपुत्रत्वंनमृष्यतेतदास्मासुशत्रुत्वमेवस्थितमितिकदाचिदस्मानपिमारयेदितिशमलंपापमाशंसमानः अपमृत्युषुगंगामरणंश्रेष्ठमिति अपमृत्युमरणात्दुःखितः मारणापेक्षयामरणमुत्तममिति गंगायामपतत् विदुरस्तुलज्जयाअनुक्त्वैवगतइतिभावः॥ ३२॥

---

## श्रीविश्वनाथचक्रवर्त्ती।

सुवलस्य पुत्री गान्धारी। साध्वी सुशीला। ननु सा सुकुमारी हिमाद्रिं दुःखबहुलं कथं गतेत्यत आह। न्यस्तदण्डानां प्रहर्षो यत्र तं दुःखदमपि केषाञ्चिदुत् साहवतां प्रहर्षहेतुर्भवतीति। अत्र दृष्टान्तः मनस्विनां शूराणां परमसुकुमाराणामपि युद्धवीराणां सन् उत्कृष्टः संप्रहारो युद्धमिव। सत् संप्रहारमिति पाठे क्लीवत्वमार्षम्। "संप्रहाराभिसम्पातकलिसंस्फोटसंयुगा" इत्यमरः॥ २९॥

कृतं मैत्रं मित्रदैवत्यं सन्ध्यावन्दनादिकं येन सः। नत्वा तिलादिभिः संपूज्येति प्रविश पिण्डीमितिवदाक्षेपलब्धम्। नापश्यत् चकारात् न ज्ञातवांश्च। पितरौ धृतराष्ट्रविदुरौ॥ ३०॥ [ज्ञाननिरूपणार्थमुपन्यासविशेषः पिण्डीत्युच्यते।]

गवल्गणस्य पुत्र सञ्जय!॥ ३१॥

धृतराष्ट्रः शमलं मत्कर्त्तृकमपराधम् आशंसमानः युधिष्ठिरेण मम एकोऽपि पुत्रो न रक्षितस्ततः किं मे जीवितेनेति मनसानुलपन् निर्विद्यमान इत्यर्थः। यद्वा अस्य मद्वधात्मकमपि पापं भवत्विति वाञ्छन्नित्यर्थः॥ ३२॥ ३३॥

---

पितर्य्युपरते पाण्डौ सर्व्वानस्मान् सुहृदः शिशून् ।
अरक्षतां व्यसनतः पितृव्यौ क्व गतावितः ॥ ३३ ॥

सूत उवाच । कृपया स्नेहवैक्लव्यात् सूतो विरहकर्षितः ।
आत्मेश्वरमचक्षाणो न प्रत्याहातिपीड़ितः ॥ ३४ ॥
विमृज्याश्रूणि पाणिभ्यां विष्टभ्यात्मानमात्मना ।
अजातशत्रुं प्रत्यूचे प्रभोः पादावनुस्मरन् ॥ ३५ ॥

सञ्जय उवाच । * नाहं वेद व्यवसितं पित्रोर्वः कुलनन्दन ।
गान्धार्य्या वा महाबाहो ! मुषितोऽस्मि महात्मभिः ॥ ३६ ॥

सिद्धान्तप्रदीपः ।

सुबलस्यपुत्रीगांधारी न्यस्तदण्डानांपरित्यक्तप्राणिद्रोहाणां प्रहर्षोयस्मिन्तम् ननुन्यस्तदण्डानामपिहिमालयः प्रहर्षकरः कथंकइवतत्राह मनस्विनांशूराणांसत्संप्रहारइव ॥ २९ ॥

कृतमैत्रंसौचादिसंध्यावंदनांतंकर्मयेनसः पितरौविदुरधृतराष्ट्रौ ॥ ३० ॥

हेगावल्गणेसंजय ! ॥ ३१ ॥

मयिशमलम् पराधमाशंसमानः स्वकीयया भार्यया सह गंगायां किमपतदित्यन्वयः ॥ ३२ ॥

---

भाषा टीका ।

सुबलराजकी पुत्री पतिव्रता साध्वी गान्धारी भी पीछे जाती हुई जैसे युद्धोत्साही पुरुष संग्राम को जाते हैं तैसे बिरक्तों का स्थान हिमालय को गये ॥ २९ ॥

युधिष्ठिर ने संध्यावन्दनादि करके होम करके तिल गउ सुवर्ण सहित ब्राह्मणों को नमस्कार कर गुरू धृतराष्ट्र के बंदन को घरमें गये वहाँ विदुर धृतरष्ट्र गांधारी को नहीं देखा ॥ ३० ॥

तब दुखित होकर तहां बैठे संजय को देखकर बोले वृद्ध नेत्रों से हीन हमारे माता पिता कहां गये पुत्रों के मरने से दुखित माता तथा काका सुहृत् कहां गये ॥ ३१ ॥

अथवा बांधवोंके मरने से शोकग्रस्त होकर मेरे को पाप लगाकर दुखित होकर गंगा में गिरगये क्या ॥ ३२ ॥

---

श्रीधरस्वामी ।

यौ अरक्षतां तौ इतः स्थानात् ॥ ३३ ॥

कृपया स्नेहवैक्लव्याच्चातिपीड़ितः । आत्मेश्वरं धृतराष्ट्रम् अपश्यन् विरहकर्षितः सूतः सञ्जयः न प्रत्युत्तरमाह ॥ ३४ ॥

आत्मना बुद्ध्या आत्मानं मनो विष्टभ्य धैर्य्ययुक्तं कृत्वा । प्रभोर्धृतराष्ट्रस्य ॥ ३५ ॥

व्यवसितं निश्चयम् । गान्धार्य्याश्च । यतो मुषितो वञ्चितोऽस्मि ॥ ३६ ॥

---

श्रीवीरराघवः ।

वात्सल्ययुक्तत्वात्स्वापराधेष्वपिदोषमनवेक्ष्योपकारत्वेनचिंतयन्पृच्छतिपितरिपांडावुपरते सति सर्वानस्मान्सुहृदःपुत्रान्शिशून् व्यसनतःआपद्भ्यःयावरक्षतां तौपितृव्यौपितुर्भ्रातरौधृतराष्ट्रविदुरावितःक्वगतौछत्रिन्यायेन विदुराभिप्रायाद्वाव्यसनतोऽरक्षतामित्युक्तम् ॥ ३३ ॥

एवमुक्तः सूतः संजयः आत्मनःस्वस्येश्वरंप्रभुंधृतराष्ट्रमचक्षाणः अपश्यमानः अतएवातीवपीडितोदुःखितः तद्विरहेणकर्षितःक्षणादेवकृशीभूतः सन्कृपयास्नेहवैक्लव्यात्धाष्टर्याच्चतावन्नप्रत्याह प्रत्युत्तरंचनुनप्रचमूचेत्यर्थः ॥ ३४ ॥

ततः शनैः पाणिभ्यामश्रूणिविमृज्यात्मनाविवेकात्मिकयाधियात्मानं संकल्पविकल्पात्मकमनोविष्टभ्यप्रतिबध्यस्थिरीकृत्यप्रभोर्धृतराष्ट्रस्यपादावनुस्मरन्नजातशत्रुंप्रत्यूचे ॥ ३५ ॥

---

* अहंचव्यवसितोराजन्पित्रोर्वः कुलनंदन ॥ नवेदसाध्व्यागांधार्या मुषितोऽस्मिमहात्माभिः ॥ इति विज०

श्रीवीरराघवः ।

उक्तिमेवाहनेतिहेकुरुनंदन! योयुष्माकं पित्रोर्विदुरस्य च प्रयोगोऽत्र्यत्यापि यस्मात्स्तजितंवितनाहंमेवेदे महावाहो! त्वमिवाहमपिमहात्मभिः तैर्मुषितोऽस्मिवंचितोऽस्मि ॥ ३६ ॥

श्रीविजयध्वजः ।

स्वस्याकृतप्रज्ञत्वमुपपादयति पितरीतिनः अस्माकंपितरिपाण्डौउपरतेस्वर्गंगतेसति यौगांधारीधृतराष्ट्रौ शिशून्सर्वान्व्यसनताऽरक्षतां सुहृत्त्वंशिशुत्वंचरक्षणीयत्वेहेतुः तौपितृव्यौगांधारीधृतराष्ट्रौमृत्वेतः अस्माल्लोकात्परत्रकंलोकंगतावित्यन्वयः तयोरनवरतशुश्रूषयाऽदेवकृतप्रज्ञतातदभावादकृतप्रज्ञत्वमितिभावः ॥ ३३ ॥

अतिपीडितः दुःखेनेतिशेषः स्वस्यईश्वरंस्वामिनंधृतराष्ट्रमचक्षाणः मृतत्वादेवापश्यन् अतएवविरहेणावियोगेनकर्शितःवक्तुंनाशकदित्यन्वयः ॥ ३४ ॥

आत्मनामनसाआत्मानंविष्टभ्यसंस्थाप्यप्रभोर्धृतराष्ट्रस्य ॥ ३५ ॥

प्रजारंजयित्वाकुलंनंदयति नत्वन्यथाइत्यतः पदद्वयंप्रायोजिनकेवलंत्वमेव्यवसितोऽहंवियोजितइतिचार्थः पित्रोः कुंतीधृतराष्ट्रयोः परलोकगतिमितिशेषः मुषितः वंचितोऽस्मि ॥ ३६ ॥

---

क्रमसंदर्भः ।

सञ्जय उवाचेति क्वचिन्नास्ति । नाहं वेदेत्यादौ—अहं व्यवसितं राजन् पित्रोस्ते कुलनन्दन । न वेद साध्व्या गान्धार्या मुषितोऽस्मि महात्मभिः । इति क्वचित् पाठः ॥ ३६ ॥

---

सुबोधिनी ।

तदप्यसंभावितमितिमत्वाहपितर्युपरतइति वस्तुतस्तुउभाभ्यामेवरक्षितौलाक्षागृहात् दास्याश्चएवमन्यदपिज्ञातव्यं तदाह अरक्षतां व्यसनतइति ॥ ३३ ॥

संजयस्तुपूर्वमेवतदभावंज्ञात्वाभयादपिमूर्च्छितएवस्थितः अतोनोनूनंदत्तवानित्याह कृपयेतिदानत्वात्कृपास्नेहः सहजः कृपयाचस्नेहाधिक्याद्वैक्लव्यमात्मेश्वरामितिनीतिः अतिपीडायांहेतुःयद्यपियुधिष्ठिरः ईश्वरः तथापिस्वस्यधृतराष्ट्रएवअवचनेअतिपीडैवहेतुः नत्वज्ञानादिः तथापीश्वरसांनिध्यात् तूष्णींभावोनुचितइति"वैक्लवश्चनवदेदि"तिस्मृतेः ॥ ३४ ॥

निर्गतानिअश्रूणिपाणिनाविमृज्यअन्येषामनिर्गमार्थंचात्मानं विष्टभ्यगुर्वंतराभावेऽपि स्वयमेवगुरुर्भूत्वाप्रमादकथनेऽपिदंडंनकरिष्यतीति अजातशत्रुंप्रतिधृष्टतौदासीन्यहेलनाद्यभावायप्रभो धृतराष्ट्रस्यपादावनुस्मरन्भक्त्याभगवतो वादंडाभावाय प्रत्यूचेप्रतिकूलमुत्तरंदत्तवान् ३५

नहिनजानामीत्युक्तेराज्ञः प्रियंभवतिअज्ञानेहेतुः आत्मव्यवसितमितिनकेनचित्सहमंत्रणांकृतं किंतुआत्मन्येवव्यवसितमवसितं"वह्निभागुरिरह्लोपमि"तिपित्रोर्वेइति कदाचिद्भवद्भिर्ज्ञायेतआत्मत्वात् कुलनन्दनत्वाच्चचिकीर्षितमितिकदाचित् सूचयेत् अथवाकुलनन्दनेतितवतुदोषोनास्तीत्यर्थः महावाहो ! इतितवतुक्रियाशक्तेराधिक्येऽपियदित्वंनजानासिकुतोममज्ञानमितिभावः महात्मभिरितिमज्ञानात्माअत्मनिवायस्यस्वातएववचनसामर्थ्यंभगवदीयत्वेनवाउभयथाप्यहंवंचितइत्यर्थः ॥ ३६ ॥

---

श्रीविश्वनाथचक्रवर्ती ।

कृपया हा वृद्धयोरनाथयोः किं भविष्यतीति चेतोद्रवेण सम्बन्धहेतुको यः स्नेहस्तेन वैक्लव्याच्च ॥ ३४ ॥

आत्मना बुद्ध्या आत्मानं मनो विष्टभ्य धैर्ययुक्तं कृत्वा ॥ ३५ ॥

वेद वेद्मि । मुषितो वञ्चितः । मन्निद्रासमये ते गता इति भावः ॥ ३६ ॥

---

सिद्धांतप्रदीपः ।

व्यसनतः आपद्भ्यः यावरक्षतांतौपितृव्यौपितुर्भ्रातरौइतः स्थानात् ॥ ३३ ॥

आत्मनईश्वरमन्यादिनारक्षकंधृतराष्ट्रमचक्षाणोऽपश्यमानः ३४ ॥

प्रभोः सर्वसंयोगवियोगहेतोः परमेश्वरस्य ॥ ३५ ॥

मुषितोऽस्मिवंचितोऽस्मि ॥ ३६ ॥

❀ अथाजगाम भगवान्नारदः सहतुम्बुरुः ।
प्रत्युत्थायाभिवाद्याह सानुजोऽभ्यर्चयन् मुनिम् ॥ ३७ ॥

युधिष्ठिर उवाच ।
नाहं वेद गतिं पित्रोर्भगवन् ! क्व गतावितः ।
अम्बा वा हतपुत्रार्त्ता क्व गता च तपस्विनी ॥ ३८ ॥
❀ कर्णधार इवापारे भगवान् पारदर्शकः ।
अथाबभाषे भगवान्नारदो मुनिसत्तमः ॥ ३९ ॥

नारद उवाच ।
मा कञ्चन शुचो राजन् ! यदीश्वरवशं जगत् ।
लोकाः सपाला यस्येमे वहन्ति बलिमीशितुः
स संयुनक्ति भूतानि स एव वियुनक्ति च ॥ ४० ॥

भाषाटीका ।

हमारे पिता पांडुके परलोक होजाने पर हम बालकों को सुहृद समुझ दुःखोंसे रक्षा करने वाले हमारे पितृव्य ( काका ) दोनों इहां से कहां गये ॥ ३३ ॥

सूतजी बोले संजयजी कृपा तथा स्नेह से विह्वल विरह से दुःखित होकर अपने पति धृतराष्ट्र के स्नेहसे पीडा के मारे कुछ नहीं बोले ॥ ३४ ॥

फिर दोनों हाथोंसे आंसुओं को पोछ कर बुद्धिसे मनको रोककर प्रभुके पादकों स्मरण करते हुये युधिष्ठिरजीसे बोले ॥ ३५ ॥

संजयजी बोले हे कुलनंदन मै आपके दोनों पिताओंके अभिप्रायकों और गांधारी का भी अभिप्राय को नहीं जानता हूं इन महात्माओं ने मेरे को ठग लिया है ॥ ३६ ॥

---

श्रीधरस्वामी ।

एवं कञ्चित् कालं शोचति तस्मिन् अथ नारद आजगाम । अत्रास्ति क्वचित् पुस्तके पाठान्तरं तदुलङ्घ्य यथासम्प्रदायं व्याख्यायते । शोकवेगादभ्यर्चयन्निवाह राजा न त्वभ्यर्च्य ॥ ३७ ॥

नाहं वेद वेद्मि । ( तपस्विनी दुःखयुक्ता ) ॥ ३८ ॥

अपारे शोकार्णवे भगवांस्त्वमेव पारदर्शकः अतो ब्रूहीति शेषः ॥ ३९ ॥

आदावेव यथावृत्तकथने शोकेन मूर्च्छितः पतेदिति प्रथमं तावच्छोकमपनयति । कञ्चन माशुचः माशोचः । न केवलं तानेव । यस्मात् ईश्वराधीनं जगत् । तदेवाह लोका इति ॥ ४० ॥ ४१ ॥

---

श्रीवीरराघवः ।

अथतस्मिन्नेवमसमयेतुंवुरुणासहितोभगवान्नारदः तत्राजगामतमवलोक्यसानुजोयुधिष्ठिरः प्रत्युत्थायाभिवाद्याभ्यर्चयन्नेवाह ॥ ३७ ॥

उक्तिमेवाहनाहमितिद्वाभ्याम भगवन् ! पित्रोर्गतिंनाहंवेदाहंनजानेतावितःक्वगतौतथाहतपुत्राआर्त्ताचतपस्विनी पतिव्रताचांबा क्वगता ॥ ३८ ॥

दिष्ट्येत्यानंदद्योतकमव्ययंचादेराकृतिगणत्वान्निपातसंज्ञायां "स्वरादिनिपातमव्ययमि" त्यव्ययसंज्ञा व्यसनार्णवे पितृविश्लेषजदुःखार्णवमग्नानामस्माकं कर्त्तरिषष्ठीनोऽस्माभिर्भगवांस्त्वंदिष्ट्यादृष्टः त्वद्दर्शनेनव्यसनमपगतमेवानन्दश्चभविष्यति इतिभावः कथंदृष्टः अपारेदुःप्रापतीरेमोहसमुद्रेतारयिताकर्णधारइवनाविकइवनस्त्वं पित्रोर्गतिंब्रूहितत्प्रीतिमावोचइत्यभिप्रायेणतंविशिनष्टिपारदर्शनः सर्वस्यावध्यवधिदर्शनः सर्वज्ञइतियावत् ॥ ३९ ॥

हेभार्गव ! इत्थंधर्मपुत्रेणयुधिष्ठिरेणपृष्टः सर्वज्ञोभगवान्मुनिश्रेष्ठोनारदः तमावभाषे ॥ ३९ ॥

भाषणमेवाहमाकंचनेतिविंशत्यायत्पृष्टं पित्रोर्गतिंब्रूहित्वमितितस्योत्तरंविवक्षुस्तावनतत्तज्जीवकर्म्मानुगुणसुखदुःखादिफलप्रदानप्रवृत्तत्वरायत्तत्वाकृत्स्नस्यजगतस्तदंतर्गतस्त्वंकर्मायतादिहतदनुबन्ध्यादिसंश्लेषनिमित्तशोकं माकुर्वितिवैराग्योत्पादनायाहचतुर्भिः हेराजन् !

---

* एतस्मिन्नन्तरे विप्रानारदः प्रत्यदृश्यत । वीणांत्रितंत्रींध्वनयन् भगवान्सहतुंबुरुः राज्ञादरोपनीतार्घ्यंप्रत्युत्थानाभिवादितम् । परमासन आसीनंकौरवेन्द्रमभाषत ॥ इतिविज० ॥

* दिष्ट्यानोभगवान् दृष्टोमग्नानांव्यसनार्णवे । कर्णधार० । इतिवीरराघव शुकदेवौ ॥

श्रीवीरराघवः ।

कंचनदेहंतदनुवन्धिनंवाकंचिदुद्दिश्यमाशुचः शोकंमाकार्षीः कुतः सर्वस्यास्यजगदीश्वरवशत्वात्स्वकर्मानुगुणफलदानप्रवृत्तेश्वरायत्तं त्रियोग मित्यर्थः कोसावीश्वरइत्यत्राह सपालइन्द्रादिलोकपालैः सहिता लोकाः विरिञ्चिप्रमृत्यक्रिचंतपर्यंताइमेजनायस्येशितुंवलिपूजांवहन्ति किंकराभवंतीत्यर्थः ॥ ४० ॥

श्रीविजयध्वजः ।

एतस्मिन्नंतरेयुधिष्ठिरसंजयसंवादमध्येत्रितंत्रींतंत्रीत्रयमेलनोपेतांवीणांध्वनयन्वादयन्तुंबुरुणासहवर्तमानः भगवान्हरेः षड्गुणवेत्ता पूज्योवा ॥ ३७ ॥

राज्ञादरेणोपनीतंदत्तमर्घ्यंयस्मैसतथातंप्रत्युत्थानंकृत्वाभिवादितं परमासनेसिंहासनसमीपेपीठेआसीनमुपविष्टंनारदंकौरवेंद्रोयुधिष्ठिरो ऽभ्यभाषतइत्यन्वयः ॥ ॥ ३८ ॥

हेभगवन् ! मृतयोः पित्रोः परलोकगतिंनवेद तांभवंतंपृच्छामि तौमृत्वेतः कंलोकंप्रतिगतावितिं अपारेसंसारेसीदतांविभ्यतांकर्णधारोनाविकइव तस्मात्त्वंदुःखार्णवेमग्नानांपारंपरंतीरंदुःखशमनोपायंदर्शयतीतिपारदर्शनः ॥ ३९ ॥

धृतराष्ट्रादिपुकंचनमाशुचः शोकंमाकार्षीः कुतः जगदीश्वरवशमितियद्यस्मात्सएवेश्वरः भूतानिसंयुनक्तिस्वकर्मानुसारेणसंयोजयति सएवस्वकर्मावसानेवियुनक्तिवियोजयति एतस्मादस्ववशत्वान्माशुचइतिभावः ॥ ४० ॥

क्रमसंदर्भः ।

अथाजगाम इत्यादौ—एतस्मिन्नन्तरे विप्रा नारदः प्रत्यदृश्यत । वीणां त्रितन्त्रीं ध्वनयन् भगवान् सहतुम्बुरुः । राजदत्तोपनीतार्घ्यं प्रत्युत्थायाभिनन्दितम् । परमासने आसीनं पौरवेन्द्रः स्म भाषते । इतिम्युर्ययास्ययचितृसुखयोः सम्मतः पाठः ॥ ३७ । ३८ । ३९ । ४० ॥

सुवोधिनी ।

एवंपूर्वकथांनिरूप्यविवक्षितकथामारभते तत्रगावल्गणिवाक्यंश्रुत्वामहामोहग्रस्तोराजाप्रमादंवाकुर्यादित्याशंक्यएतादृशकार्येनियुक्तो नारदः तदासमागतइत्याहअथेति अथमोहानंतरंतदपगमार्थमागतइत्यर्थः तुंवुरुरन्योऋषिः शोकापनोदेहिसंमतिरपेक्षतेअधिकारिणउद्वेगातुहीनत्वात् तदाप्रमादंकर्तुंविचारयन् ॥ ३७ ॥

नारदंदृष्ट्वाअनेननिर्णयोभविष्यतीतिउत्थायपूर्वावस्थांत्यक्त्वाऋषिमभिवाद्यस्वागतादिकमपृष्ट्वैवधृतराष्ट्रंपृच्छतिनाहंवेदेतिअमङ्गलसम्भाषणेनोक्तवान् अयुक्तत्वात् ॥ ३८ ॥

शीघ्रकथनार्थमाहकर्णधारइतिशोकसमुद्रेमग्नावयंतत्रसर्वज्ञनौकातस्यानिर्वाहकोभवानेवकेवलनाविकवन्न किंतुपारदर्शनः गंतव्यादेशपश्यसिपर्यवसानः जानासीत्यर्थः एवमर्द्धवचनेस्थितः उपसंहाराकथनात्तदानारदः तस्याकथनहेतुंज्ञात्वास्वयमेवभाषेज्ञानेहेतुर्भगवानितिअनुवंधेवामुनिसत्तमेतिसंवोधनंपाठांतरेऽपिप्रकाराणामुक्तत्वात् आभासाद्यूहेनस्वयमूहनीयं मुनयःकृपालवोभवंतिअतः कृपया नारदः अपृष्टमप्याहेत्यर्थः ॥ ३९ ॥

भगवान्संसारिजीवेषुयदज्ञानंकरोतितत्सहसाकृतिव्यावृत्त्यर्थम् अतस्त्वयापिसहसानकिंचित् कर्त्तव्यंप्रथमतोमोहंदूरीकुरुपश्चात् पृष्टंवक्ष्यामीत्यभिप्रायेणाहमाकंचन शुचइतिशोकोहिअनिष्टज्ञानसाध्यस्वन्यूनतादृक् अनिष्टपदार्थनिदध्यासनविशेषः कोऽप्यनिष्टभावनयानचिंतनीयइत्यर्थः राजन्निति संवोधनात् महाकुटुंवित्वमुक्तंतेनमहतिराज्येसर्वदृष्टानिष्टोत्पत्तेः शोकेकदाचिदपिराज्यसुखंनस्यात् अतोराजा नशोचति किंच शोकोनिस्फलः विरुद्धश्चतत्रहेतुःतत्रयदीश्वरवशंजगदितियस्मात्कारणात्सर्वंजगत् ईश्वरवश्यंभगवताहिसर्वःपदार्थः क्रियते सचनकस्यचिद्विष्टः इष्टोवासस्वार्थंपरार्थंकरोतितत्रपरार्थपक्षेभगवतातस्यहिते क्रियमाणेस्वयंचेच्छोचेत्तदानिषिद्धं भगवतश्चकोपो भवेत् भगवल्लीलायांतुसुतरामेवक्रोधोअनौचित्यं च स्वस्यापिममतास्पददूरीकरणेपूर्वोक्तएवन्यायःअतोभगवदधीनत्वात् आत्मानंपरंवाकंचनमाशुचः ननुअग्नेरिवसंयोगवियोगाभ्यांदुःखजननात्स्वदुःखेनशोकइतिचेत्तत्राह सः संयुनक्तीतिभूतानिसएववियोजयति च तस्मात् कृतावियसंयोगेऽपिसैवयुक्तिरनुसंधेयाउभयथापिसर्वथाभगवान्हितंकरोतीतिज्ञातव्यम् ॥ ४० ॥

श्रीविश्वनाथचक्रवर्त्ती ।

शोकवेगादभ्यर्थ्यंयस्मिवाह न त्वभ्यचर्च्य ॥ ३७ । ३८ ॥

अपारे शोकार्णवे । भगवान् सर्वज्ञस्त्वमतो ब्रूहीति भावः ॥ ३९ ॥

आदावेव यथावृत्तकथने शोकेन मूर्च्छितः पतेदिति प्रथमं तावत् शोकमुपशमयति माशुचः माशोच तयोर्विच्छेदेन शोकाभाव इति चेदप्रतिकार्यमेतत् संयोगवियोगयोरीश्वराधीनत्वादित्याह स इति ॥ ४० ॥

यथा गावो नसि प्रोतास्तन्त्यां बद्धाश्च दामभिः ।
वाक्तन्त्यां नामभिर्बद्धा वहन्ति बलिमीशितुः ॥ ४१ ॥
यथा क्रीडोपस्कराणां संयोगविगमाविह ।
इच्छया क्रीडितुः स्यातां तथैवेशेच्छया नृणाम् ॥ ४२ ॥
यन्मन्यसे ध्रुवं लोकमध्रुवं वा नचोभयम् ।
सर्वथा नहि शोच्यास्ते स्नेहादन्यत्र मोहजात् ॥ ४३ ॥
तस्माज्जह्यङ्ग ! वैक्लव्यमज्ञान कृतमात्मनः ।
कथं ह्यनाथाः कृपणा वर्त्तेरन्वनमाश्रिताः ॥ ४४ ॥

सिद्धांतप्रदीपः ।

मुनिमभ्यर्चयन्नाह ॥ ३७ ॥
वेद वेद्मि ॥ ३८ ॥ ३९ ॥
तत्रसर्वंभगवदधीनमितिवदन्शोकंनिराकरोतिमाकंचनेतिदशभिः हेराजन् ! कंचनमाशुचः कमपिप्राकृतमर्थमुद्दिश्यशोकंमाकृथाः यद्य तोजगदीश्वरवशंवलिपूजाम् भूतानिदेवमनुष्यादीनि ॥ ४० ॥

---

भाषाटीका ।

इस के अनन्तर तुंबुरूमुनि के सहित भगवान् नारदजी आये युधिष्ठिरजी उठे प्रणामकर भ्राताओंके सहित पूजने सरीके बोले ॥ ३७ ॥
हे भगवन् ! मैं दोनों पिताओं की गति को नहीं जानता हूं कि वे इहां से कहां गये अपार शोक समुद्र में आपही पार लगाने वाले हौ ॥ ३८ ॥
तदनन्तर भगवान् नारद मुनिश्रेष्ठ बोले हे राजन् ! किसी को मत शोचो जिससे कि ईश्वर का वशीभूत संसार है ॥ ३९ ॥
जिस ईश्वरको यह सब लोक तथा लोकपाल भेंट देते हैं वहीं ईश्वर सब भूतों को मिलाता है वही छुडाता है ॥ ४० ॥

---

श्रीधरस्वामी ।

प्रवृत्तौ पारतन्त्र्यमुक्त्वा संयोगवियोगयोरप्याह यथेति । क्रीडोपस्कराणां क्रीड़ासाधनानां ( दारुरचितमेषादीनाम् ) ॥ ४२ ॥
ईश्वराधीनत्वान्न शोकः कार्य इत्युक्तम् । लोकतत्त्वे च विचार्यमाणे निर्विषयोऽयं शोक इत्याह यन्मन्यस इति । यद्यदि लोकं जनं ध्रुवं जीवरूपेण । अध्रुवं देहरूपेण । न वेति न ध्रुवं नाप्यध्रुवं शुद्धब्रह्मस्वरूपत्वेन अनिर्वचनीयत्वेन वा उभयं वा चिज्जडांशतः । सर्वथा चतुर्ष्वपि पक्षेषु ते पित्रादयो न शोच्याः । स्नेहादन्यत्र स्नेह एव केवलं शोकहेतुः स चाज्ञानमूल इत्यर्थः ॥ ४३ ॥
तस्मान्मां विना कथं ते वर्त्तेरन् इति मनसो वैक्लव्यं व्याकुलतां त्यज ॥ ४४ ॥

---

दीपनी ।

( वाक्तन्त्यामिति ) । वाक् त्रयीरूपैव तन्त्री तस्याम् । नामभिः ब्राह्मणक्षत्रियादिभिरिति प्राञ्चः ॥ ४१ । ४२ ॥
चतुर्ष्वपीति । ध्रुवमध्रुवं वेति पक्षद्वयम् । न वेत्युभयमिति पक्षद्वयम् । अयमर्थः—ध्रुवस्य नाशाभाव एव । अध्रुवस्य विनाशित्वमेव न ध्रुवमिति । ध्रुवमपि वक्तुं न शक्यते । अध्रुवमपि वक्तुं न शक्यते । उभयमिति । चिद्रूपेण ध्रुवम् । देहाध्यासात् जडरूपेणाध्रुव मिति ॥ ४३ । ४४ । ४५ ॥

---

श्रीवीरराघवः ।

बलिवहनमेवसदृष्टांतमुपपादयति तथेति तंतीतिरश्मीनामहतीरज्जुस्तत्रवद्धाः क्षुद्ररज्जवउपदामानियच्छातन्तीनासारज्जुस्तत्सम्बद्धा आकर्षणपाशादामानियथागावः चतुष्पादः नसिरंध्रीकृतायांनासिकायांप्रोताः संयुक्तरज्जव स्ततस्तंत्यामुपदामभिर्बद्धाः द्विपदंकिंकुर्वंति तथावाकेत्यांवेदाख्यतंत्यांनामभिर्वर्णाश्रमविशेषान्वयात्मकनामभिरुपदामस्थानीयैर्बद्धाःसपालालोकाईशितुर्बलिंवहन्ति ॥ ४१ ॥

### श्रीवीरराघवः ।

किंदेहतदनुबन्ध्यादीन्नित्यान्मत्वाशोचसिकिंवाऽनित्यानथवोभययथातथापिनतेशोकविषया इतिवक्तुं तावद्देहादिश्लेषविश्लेषौक्री- डार्थेजगद्व्यापारेप्रवृत्तेश्वरस्येच्छयातत्रकर्मानुगुणेन संपद्यतइति सदृष्टांतमाहयथेहलोकेकस्यचित्क्रीडितु. पुंसइच्छयाक्रीडोपस्कराणां क्रीडासाधनानां संयोगवियोगावन्यथाचभवतः यथाक्रीडोपस्कराः क्रीडितुरिच्छयाकदाचित्संश्लिष्यपुनस्तदिच्छयैवविश्लिष्टाश्चभवंति तथेश्वरेच्छयानृणामपिसंयोगवियोगौस्याताम् ॥ ४२ ॥

उक्तंशिरस्त्रयमनुवादपूर्वकं प्रतिक्षिपति यदिलोकं ध्रुवंस्थिरंमन्यसेयद्वाऽध्रुवमथवोभयं तत्रतावत्तृतीयः कल्पोऽसम्भवादेवनिरस्तः इत्यभिप्रायेणाह नचोभयमितिनहिद्व्यात्मकंवस्तुदृष्टंश्रुतंवेत्यर्थः परस्परविरुद्धयोर्ध्रुवत्वाध्रुवत्वयोरेकत्रसमावेशोऽसम्भवान्निरस्तइतिभावः तदभ्युपगम्यापितेनसहेतराशिरोद्वयं प्रतिक्षिपति सर्वथेति ध्रुवत्वेचोभयविधत्वेचतेदेहादयः तत्त्वमेवेतिनशोच्याः नहिवस्तुनोयावदात्म भाविधर्मःकेनाप्यपनेतुंशक्यइतिभावः एवंसतितच्छोकहेतुः केवलंदेहात्मभ्रममूलकोदेहादिष्वनुरागएवेत्यभिप्रायेणास्नेहादन्यत्रमोहजा दिति मोहजाद्देहात्मभ्रमजात् स्नेहादन्यत्रान्यस्मिन् शोकमोहहेतुत्वंनास्तीतिशेषः ॥ ४३ ॥

तस्माद्धेराजन्नज्ञानकृतंदेहात्मभ्रमकृतमात्मनः स्वस्वमनसोवावैक्लव्यंदैन्यंजह्यपनय तदभिप्रेतं प्रश्नान्तरंसर्वज्ञत्वात्स्वयमेवाविष्कृत्य प्रतिवक्ति कथमितिसार्द्धद्वयेन तत्रकथमित्यर्द्धेनप्रश्नाविष्कारः ततः श्लोकद्वयेनतस्यप्रतिवचनमिति विवेकः मांविनाऽनाथारक्षितृहीना अतएवदीनास्तेकथंवर्त्तेरन्जीवेरन् इतिशब्दोऽत्राध्याहर्त्तव्यः कथंजीवेरन्नितिपृच्छासिचेदित्यर्थः ॥ ४४ ॥

---

### श्रीविजयध्वजः ।

ईश्वरजीवस्वातंत्र्यपारतंत्र्येसोदाहरणंदर्शयति यथेति यथागावोबलीवर्दाः नसिनासिकायांत्रिवृत्कृततंतुदामभिः प्रोताः स्यूतानासि काच्छिद्रस्यूतसूत्रदामभिः आधारभूतायांदीर्घायांतंत्यांबद्धाः ईशितुः स्वामिनोव्रीह्यादिगोणीर्वहंति तथाब्राह्मणक्षत्रियवैश्यशूद्रब्रह्मचारि गृहस्थवानप्रस्थयतयइति नामात्मकदामभिर्वाकंत्यांविधिनिषेधात्मकवेदलक्षणायांबद्धाः स्ववर्णाश्रमविहितकर्मभिरीश्वरस्यबलियज्ञादि लक्षणपूजांवहंतिकुर्वंति तस्मात्सएवस्वतंत्रोजीवास्तदधीनाइतिशोकपरिहारायसईशः स्वविहितकर्मणापूज्यइतिभावः ॥ ४१ ॥

वेदस्यानेकार्थत्वेनतात्पर्यस्यदुर्ज्ञेयत्वाद्धैरेयाणांचगोणयादिपातनेनस्वामिकार्यावज्ञानदर्शनाद्विषमोयमुपन्यासइत्यतो निदर्शनांतरमाह यथेति यथाक्रीडोपस्करणांलीलासाधनानांसंयोगविगमौक्रीडितुः पुरुषस्येच्छया तथैवेशेच्छयापितृपुत्रादिरूपाणांनृणांमिथः संयोग विगमौस्यातामित्यन्वयः अनेनवेदस्यमुख्यार्थः श्रीनारायणएवेतिनिरणायि तस्मात्पराधीनत्वान्नशोकेनप्रयोजनंतवेतिभावः ॥ ४२ ॥

"यस्तर्केणानुसंधत्तेसधर्मंवेदनेतर" इतिस्मृतेरुक्तार्थनिर्णयेकेयंयुक्तिरितितत्राह यदिति यत्यदिलोकंशरीरंध्रुवंमन्यसेअध्रुवमनित्यंवा अथवोभयंनित्यानित्यंमनुषइतिविकल्प्यपरिहरति सर्वथेति सर्वप्रकारेणतेपितरोनशोच्याः तथाहि नित्यत्वेनाशाभावात्तस्य चादर्शना दनित्यमितिवक्तव्यं तस्यापरिहार्यत्वात्तृतीयोऽनुपपन्नःव्याहतत्वात्तर्हिशोकेकिंकारणमितितत्राह स्नेहादिति अहंममेतिमोहोबुद्धिभ्रमः तस्माज्जातस्नेहादन्यत्रकृतेशोककारणंनास्तिभ्रमजन्यस्नेहएवतस्यहेतुरितिभवः ॥ ४३ ॥

ननु "यस्यदेवेपराभक्तिर्यथादेवेतथागुरा" वितिश्रुतेः गुरुविषयस्नेहलक्षणभक्तेः पुरुषार्थहेतुत्वेनोपयोगात्कथंतस्यमोहजन्यत्वमित्याशंक्य तस्यवैलक्षण्यान्ममतत्पोषणकर्तृत्वेनमन्नाथत्वान्मदृते जीवनमेवनास्ति तेषामीशरक्ष्यत्वादिज्ञानाभावादित्यात्मान्यथाभिमाननिमित्तकातर्यंत्व याज्यमित्याह तस्मादिति आत्मनः परमात्मनोऽज्ञानेनजातंवैक्लव्यंजहित्यजेत्यन्वः परमात्मनः स्वातंत्र्यपरामर्शेनेतिशेषः ॥ ४४ ॥

---

### क्रमसंदर्भः ।

यथा गाव इति पद्यं क्वचिन्नास्ति यथा क्रीडेत्यादेरवतारिकानुसारेण तु स्वामिसम्मतमिति लक्ष्यते । मा कञ्चनेत्यादौ हि पारतन्त्र्य मात्रमुक्तं ततश्चेदं विना प्रवृत्तौ पारतन्त्र्यमुक्त्वेति पारतन्त्र्यविशेषोक्तिर्न घटते । स संयुनक्तीत्याद्यर्द्धं च क्वचिन्नास्ति । किन्तु वहन्ति बलिमीशितुरिति स्थानद्वयपाठेनैव प्रथमलेखकभ्रमोऽयं क्वचित् सम्प्रदायेऽनुवृत्त इति लक्ष्यते ॥ ४१ । ४२ । ४३ । ४४ ॥

---

### सुबोधिनी ।

ननुस्वार्थपक्षेकथंशोकपरिहारः भगवांस्तुस्वलीलार्थंकरोतिजीवास्त्वयुक्तेयोजितत्वात् दुःखेनशोचंतिभगवल्लीलायाबहुकालवितत्वा- त् स्वस्यदुःखपरंपरायांशोकस्यावश्यकत्वात् तत्राह यथागावइति तद्दुःखंपंचभिः सहेतितदर्थमेवसृष्टावयमिति तदर्थमेवमहद्भिर्विष र्योज्यंतइतिचअवसरेस्वामिद्रोहस्यायुक्तत्वात्ज्ञात्वादुःखमपिसोढ्वाअग्रेकृतार्थाभविष्यामइतिबुद्ध्याभगवल्लीलामेवसंपादयेत् अन्यथादुः खंबहुप्रयच्छेदितिवादृष्टांतःनसिनासिकायांप्रोताःतदाहिवलीवर्दाः वशीभवंतिअहंताममतारज्ज्वात्रिविषयलक्षणानासिकायांप्रोताःइंद्रिययुक्ताः भगवद्वशेभवंतीत्यर्थः दृष्टांतेनैवसामान्यबंधनमुक्त्वाविशेषबंधनमाहवाक्तंत्यांनामभिर्बद्धाइतिवेदलक्षणादीर्घरज्जुः ब्राह्मणक्षत्रियरूपाणां निसंबंधः इंद्रियाणिबलीवर्दाः वेदोमर्यादारज्जुः भगवदिच्छास्तंभः एवंसतिस्वस्येंद्रियासाध्येबलीवर्दत्वम् अन्यथास्वस्याधारत्वं त्रिविधपापविमोकश्चफलमइंद्रियाणितुदेवताधिकृतानि वैदिककर्माणिप्रवर्ततेतेनस्वस्यमलापकर्षणं भवतिपुनर्निरतसमाधिनाप्राकृतदोके

### सुबोधिनी ।

अपगतज्ञानाभिमानपक्षाः कांचनत्वंसंपद्यंतेनामभिर्बद्धाः ब्राह्मणोऽयंक्षत्रियोऽयंब्रह्मचारीगृहस्थइतियेयत्रयोजितास्तेतत्रैवपरिभ्रमंतेकार्यंतुप्रभोः कुर्वंतिनतुप्रेरकस्यतस्मादिंद्रियाणांभगवदर्थसृष्टत्वात् तैर्भगवत्कार्यंक्रियमाणेस्वयंवृथाध्यासं कृत्वाशोकोनकर्तव्यइत्यर्थः ॥ ४१ ॥

किंच भगवताहिक्रीडार्थंसृष्टाः यथाबालः प्रतिमादिभिः क्रिडतिसयथासुखंप्रतिमांस्थापयतिकुत्रचिद्योजयति तथासर्वेपुरुषाः भगवतः क्रीडाप्रतिमाः तेकेनचित्संपुज्यंतेवियुज्यंते च अतएवंज्ञात्वासंबंधिषुममतयाशोकहर्षोनाविधेयःकदंतिसमुदायेनाविवेकः पूर्वंतुतत्त्वानांप्रत्येकं विवेकः ॥ ४२ ॥

पूर्वंतत्त्वानांविवेकउक्तएवमीश्वरार्थसृष्टपक्षेशोकोऽनुचितइत्युक्तंनिरीश्वरादिमतेऽपिवाह्यमतेषुकुत्रापिशोकःसार्थोनभवतीत्याह यन्मन्य सइतिसर्वेहिवादिनश्चतुर्धा सांख्याः सर्वंध्रुवंमन्यंतेआविर्भावतिरोभावावेवोत्पत्तिप्रलयौवाह्यास्तुसर्वमनित्यंकृतकत्वादितिअध्रुवंमन्यंतेवाह्य भेदाएवकेचन माध्यमिकादयोनासीन्नास्तिनभविष्यतीतिध्रुवंनाध्रुवंमिथ्येतिमन्यंतेनैयायिकास्तुउभयंमन्यंतेआकाशादयः परमाणवश्चध्रुवाः अन्येअध्रुवाइति चतुर्ष्वपिपक्षेषुसर्वथातेनशोच्याःनहिनित्यःशोकमर्हतिनवाबुद्बुदरूपेअनित्येशोकः संभवतितत्राप्युत्तरमुच्यतेशत्रुमरणेकथं मशोचतिमित्रम रणेशोचतितत्कुतइतिप्रष्टव्यः स्नेहादितिचेत्स्नेहएवशोकहेतुरपकारी सत्यक्तव्यः ननुकदाचित्सुखंप्रयच्छतीतिकथंत्य क्तुंशक्यतइतिचेत्तत्राह मोहजादिति अज्ञानाज्जातःस्नेहःकथंसुखंप्रयच्छेद्धानहिसंनिपाताज्जातंशैत्यंतापापनोदनंकरोतितस्मान्मूर्च्छायांमोहात् दुःखंसुख मिवमन्यते अन्यथातन्निराकरणार्थंनयतेत ॥ ४३ ॥

फलितमाहतस्मादिति हेअंग ! वैक्लव्यमइंद्रियाणामंतःकरणस्यचविकलतांकेवलंपदार्थाज्ञानेनजातंत्वंविदिततत्त्वार्थोजहिनाशयेत्यर्थः अथमेकांशेनापिस्थितः पुनर्दुःखंदास्यतीतिभावः ॥ ४४ ॥

---

### श्रीविश्वनाथचक्रवर्त्ती ।

लोका बलिं वहन्ति स एव संयुनक्तीत्युक्तमर्थद्वयमुक्तपोषन्यायेन सदृष्टान्तं क्रमेणाह । गावस्तन्त्र्यामेकस्यामेव दीर्घायां रज्ज्वां स-र्व्व एव बद्धाः तत्र पृथक् पृथक् दामभिर्नसि प्रोताः । ननु प्रकृते का वा तन्त्री दामानि वा कानीत्यपेक्षायामाह वाक् वेद एव तन्त्री त-स्यां नामभिर्ब्राह्मणक्षत्रियइति ब्रह्मचारी गृहस्थ इत्यादिभिरेव दामभिर्बद्धा बलिम् "अहरहः सन्ध्यामुपासीतेत्या"दिलक्षणं शासनम् ॥४१॥

क्रीडोपस्कराणां क्रीडासाधनानाम् अक्षादीनाम् ॥ ४२ ॥

ईश्वराधीनत्वाच्च शोकः कार्य इत्युक्तम् लोकतत्त्वे तु विचार्यमाणे निर्विषयोऽयं शोक इत्याह । यद्यदि लोकं जनं ध्रुवं जीवरूपेण अध्रुवं देहरूपेण न उभयं न ध्रुवं नाप्यध्रुवं ब्रह्मरूपेण वाशब्दादुभयंच चिज्जडांशरूपेण। सर्वथा चतुर्ष्वपि पक्षेषु ते पित्रादयो न शोच्याः स्नेहादन्यत्र विवेकादौ सति स्नेह एव केवलं शोकहेतुः स चाज्ञानमूल इत्यर्थः । मोहजादित्यनेन भगवद्भक्तिसम्बन्धी स्नेहो व्यावृत्तः । तदुत्थं शोकं तु करुणारसस्थायिभावं परमोपादेयं मन्यते ॥ ४३ ॥

तस्मान्मां विना कथं ते वर्त्तेरन्निति मनसो वैक्लव्यं त्यज ॥ ४४ ॥

---

### सिद्धांतप्रदीपः ।

यथागावोवलीवर्दाः नस्तिनासिकायांदामभिः क्षुद्ररज्जुभिः प्रोताः पुनर्दीर्घतंत्र्यांबद्धा ईशितुः स्वानियंतुर्बलिंवहंति तथाभूतानिनामभिः क्षुद्ररज्जुस्थानीयैर्देवदत्तादिभिः प्रोतानिविधिनिषेधरूपायांवाक्तंत्र्यांदीर्घतंतिस्थानीयायांबद्धानिपरमेश्वरस्यबलिंवहंतीत्यर्थः ॥ ४१ ॥

क्रीडायाउपस्कराणामुपकरणानाम् ॥ ४२ ॥

लोकंयद्युपादानमात्रानुसंधानेनध्रुवंनित्यंमन्यसे उपादेयमात्रानुसंधानेनाध्रुवमनित्यंवामन्यसे किंवाध्रुवंवाऽध्रुवंवा चमन्यसेएकदेशित्व प्रसंगादपितूभयविधंमन्यसेसर्वथापक्षत्रयेऽपिस्नेहजान्मोहादन्यत्रतेलोकप्रवाहपतिताधृतराष्ट्रादयोनहिशोच्याइत्यर्थः ॥ ४३ ॥

तस्मात्रिष्वपिपक्षेषुतच्छोच्यत्वाभावात् अज्ञानकृतम् भगवदायत्तज्ञानाभावकृतम् मांविनाऽनाथाः कथंवर्तेरन् जीवेरन्नितिमनसो वैक्लव्यंजहिअपनय ॥ ४४ ॥

---

### भाषा टीका ।

जैसे गऊ बैल बडी रस्सी में बँधी छोटी रस्सियों से नाक में बँधे रहते हैं तैसे वेद रूप रस्सी में कर्म्मों से बँधे हुए ईश्वर की आज्ञा रूप भेंट को देते हैं ॥ ४१ ॥

जैसे क्रीडा के साधन मेषादिकों का मिलाना अलग करना खिलाडी के आधीन है तैसे ईश्वर के आधीन जगत् है ॥ ४२ ॥

यदि लोकको जीव रूपसे ध्रुव मानते हो यदिवा देह रूपसे अध्रुव मानते हो अथवा न ध्रुव न अध्रुव अनिर्वचनीय ब्रह्मरूप मानते हो वा चिज्जड रूपसे ध्रुव अध्रुव मानते हो चारोंही पक्षोंमें अपने पितृव्यादिकों का शोक करना नहीं बनताहै । मोह जात स्नेह के बिना ४३

इससे हे अंग ! यह तो तुमारा अज्ञान कृत वैक्लव्य है कि "वे अनाथ कृपण वन का आश्रय कर कैसे वर्तेंगे" इसे छोड़दो ! ॥ ४४ ॥

---

कालकर्मगुणाधीनो देहोऽयं पाञ्चभौतिकः।
कथमन्यांस्तु गोपायेत् सर्पग्रस्तो यथा परम् ॥ ४५ ॥
अहस्तानि सहस्तानामपदानि चतुष्पदाम्।
फल्गूनि तत्र महतां जीवो जीवस्य जीवनम् ॥ ४६ ॥
तदिदं भगवान् राजन्नेक आत्मात्मनां स्वदृक्।
अन्तरोऽनन्तरो भाति पश्य तं माययोरुधा ॥ ४७ ॥
सोऽयमद्य महाराज ! भगवान् भूतभावनः।
कालरूपोऽवतीर्णोऽस्यामभावाय सुरद्विषाम् ॥ ४८ ॥

श्रीधरस्वामी।

तत्र त्वद्देहतस्तेषां वृत्तिरित्येतत् तावन्नास्तीत्याह। कालो गुणक्षोभकः। कर्म जन्मनिमित्तम्। गुणा उपादानम्। तदधीनः पाञ्चभौतिको जड़ः। तद्विभागे नाशवांश्च। सर्पग्रस्तः अजगरगिलितः यथा अन्यं न रक्षति तद्वत् ॥ ४५ ॥

ईश्वरेण विहिता वृत्तिः सर्व्वतः सुलभैवेत्याह। अहस्तानि पश्वादीनि। अपदानि तृणादीनि। तत्र तेषु अहस्तादिष्वपि। फल्गूनि अल्पानि। एवं जीवः सर्व्वोऽपि सर्व्वस्य जीवनं जीविका। एतेनैव सर्व्वतो मृत्युग्रस्तत्वञ्चोक्तम् ॥ ४६ ॥

मोहनिवृत्त्यर्थं द्वैतस्यावस्तुतामाह। तदिदम् अहस्तसहस्तादिरूपं जगत् स्वदृक् भगवानेव न ततः पृथक्। स चैक एव न तु नाना। ननु सजातीयविजातीयभेदे प्रत्यक्षे कुत एतत् तत्राह। आत्मनां भोक्तृणाम् आत्मा स्वरूपम् अतो न सजातीयभेदः अन्तरोऽनन्तरश्च अन्तर्बहिर्भोग्यरूपश्च भाति अतो न विजातीयभेदोऽपि। ननु एकः कथं तथा प्रतीयेत तत्राह मायया उरुधा बहुधा तं पश्येति ॥ ४७ ॥

कासावस्तीदृशो महामायावी। द्वारकायामित्याह सोऽयमिति। अस्यां भूम्याम्। अभावाय नाशाय ॥ ४८ ॥

---

दीपनी।

सजातीयेष्वन्योऽन्यतः तथा अहस्तैरपि सहस्तानां नाशदर्शनादाह फल्गूनीति ॥ ४६—५१ ॥

---

श्रीवीरराघवः।

तवतत्तुल्ययोगक्षेमेष्वस्मिंस्तद्रक्षकत्वाभिमानंत्यजेत्यभिप्रायेणाहकालेति कर्मादृष्टम् गुणाः सत्वादयः पृथिव्यादिपंचभूतारब्धोऽयंदेहः कालाद्यधीनःअयमित्यनेनत्वद्देहोऽप्येवंविधदेहः कथमन्यान्गोपायेद्रक्षेन्नरक्षेदेवेत्यर्थः यथास्वयंसर्पग्रस्तोऽन्यांस्तद्ग्रस्तान्नगोपायतितद्वत् ४५

अस्त्वेवमथापिजीविकावतिगृहे स्थितानामस्माकम् जीवनंसुशकम् कथमतोगतामाम् तेषांजीवनम् स्यादित्यतआह अहस्तानीति अहस्तानिभूतानि सहस्तानांतेषां जीवनं यथालाभं यथायोग्यमौषधिफलमूलपशुमृगादीनिजीवनमित्यर्थः तथाहस्तरहितानामपिचतुष्पदामपदान्यविद्यमानपादादिभूतानजीवनंतत्राप्यपदेष्वपिमहतामजगरादीनांभूतानांफल्गूनिक्षुद्राणिभूतानिजीवनंकिंवहुनाजीवस्यभूतस्यजीवः जीवनं जीवनशब्दोभक्ष्यपरः ॥ ४६ ॥

सर्वत्रवनेगृहेवाभगवानेवरक्षितेत्यभिप्रायेणतदुपयुक्ततयाभगवतः सार्वात्म्यंकृत्स्नजगतस्तदात्मकतयातदनन्यत्वंचाह तदिति हे राजन् ! तदीश्वरवशत्वेनोक्तमिदंपरिदृश्यमानंचिदचिदात्मकम्जगद्भगवानेकएव मृदयंघटइतिवत्स्वरूपाभेदशंकांवारयितुंविशिनष्टिआत्मनांदेवमनुष्यादिदेहभृतांजीवानामात्माऽतः प्रविश्यप्रशासनधारकत्वाभ्यामवस्थितःआत्मशब्देनतदेवाहप्रवृत्तिनिमित्तंवदातिःप्रविश्यप्रशासनधारकत्वाभ्यामवस्थानम् अनेनशरीरात्मभावनिबन्धनंजगद्ब्रह्मणोरनन्यत्वमित्युक्तंभवति शरीरात्मभावनिबन्धनश्चानन्यत्वव्यपदेशोदृष्टचरःआत्मादेवोजातःमनुष्योजातइतिव्याप्यवस्तुगतदोषसंस्पर्शशंकांनिराकुर्वन्विशिनष्टिस्वदृगात्मनामात्मतयावस्थितोऽपिस्वात्मयाथात्म्यदर्शीअतोनास्यदोषसंस्पर्शइतिभावःतथाचश्रूयते"अनश्नन्नन्योअभिचाकशीति"नकेवलमन्तरात्मैवापित्वंतराप्यनन्तरोभातिबहिश्चभातिनन्वेकस्यकथंदेवमनुष्यादिरूपेणवहुधावस्थानमित्यत्राह पश्यतंमाययोरुधेति माययादेवमनुष्यादिरूपेणपरिणतया शरीरभूतयाजीवसंसृष्टयातंभगवतं उरुधावहुधापश्यचिदचिदात्मकदेवादिशरीरभेदनैवावस्थित इतिविजानीहीत्यर्थः ॥ ४७ ॥

नकेवलंत्वत्पितरः स्वार्थमेवनिर्गता अपितुयुष्माभिरेवमेवनिर्गतव्यमितिभवतां प्रदर्शनार्थमपीत्यभिप्रायेणाह सोऽयमिति द्वाभ्यां हेमहाराज ! सः निखिलजगदन्तरात्मा वशीकृतलोकत्रयःकालशरीरकोऽयमभगवान् श्रीकृष्णः भूतानिस्वाज्ञानुवर्तीनि भावयत्यभ्युदययुक्तानिकरोतीतितथाहेतुगर्भमिदं साधुपरित्रातृत्वादितिभावः सुरद्विषांदुष्कृतामभावायनाशायकालरूपो मृत्युरूपोऽस्यांभुव्यवतीर्णः ॥४८॥

श्रीविजयध्वजः ।

किंच तवायंदेहः स्वाधीनः पराधीनोवा स्वाधीनत्वेभोगयोग्यदुःखनिवारणाक्षमता कथं नहिकश्चिद्दुःखंमेस्यादित्याकांक्षतिविचक्षणः तस्मात्पराधीनइतिचवक्तव्यं तथाचतस्यपररक्षणसामर्थ्यंनघटतइत्याह कालेति कालः पक्षमासादिलक्षणः कर्मफलपाचकंपुण्यपाप लक्षणमदृष्टं गुणाः सत्त्वादयः निमित्तोपादानकारणजन्यत्वेनकालाद्यधीनः सजीवोऽयंदेहः पंचभिः भूतैरारब्धः स्वव्यतिरिक्तान्कथं गोपायेत्रक्षेत् तत्रदृष्टांतः सर्पग्रस्तोमंडूकः सर्पग्रस्तंपरंरक्षितुंनसमर्थः तथेति तुशब्देनानुभवसिद्धमेवेदमितिद्योतयतितस्माद्दृष्टंपिपादि रक्षाकर्तृत्वज्ञानंत्यजेतिभावः ॥ ४५ ॥

ननुभगवन् ! सत्यमेतत्तथापिवृद्धानामंधानांचामादिदौःस्थ्यात्तज्जीवनेममसंदेहइतिचेत्तत्राह अहस्तानीति हेतात ! वत्सअहस्तानिशश पादावतपक्षिप्रभृतीनिसत्त्वानिसहस्तानांमनुष्याणांजीवनंदेहधारणसाधनं द्विचतुष्पदांचाफलंतृणादयः तत्राद्विपत्स्वापिअणूनिमनुष्यादीनिमह तांराक्षसादीनांजीवनमित्यनुवर्तते एवंजीवस्यजीवनंविधात्राविहितमतोनतान्प्रतिचिंताकर्तव्येत्यर्थः ॥ ४६ ॥

इतोऽपिनशोकः कर्तव्यः किंतुअखिलस्यहर्यधीनत्वात्तद्भजनमेवावश्यंकर्तव्यमित्याह तदिति एवमिदंहरेरितरत् सर्वमनित्यमस्वतंत्रंचे तितत्तस्मात्हेराजन् ! भगवानात्मनांजीवानामात्माऽदानादिकर्ताएकोऽद्वितीयः स्वदृक्स्वयंप्रकाशः विवेकज्ञानिनामंतरः अस्यजगतो ऽतः स्थित्वारतिकृत्अनंतरोगुणगुण्यादिभेदरहितोभाति तस्मात्त्वमपिदेवोत्तमावतारत्वेनाविद्येनविषेक्षितत्वान्माययास्वेच्छयाकृतामुरुतामने कावतारताम्अंतर्याम्याद्यात्मिकांनिर्भेदांहरेर्विभूतिंपश्यंश्चतमेवभजेतिवाक्यशेषः स्वदृक्भगवानात्मासएकएवेदंजगद्भातिकथंभोक्तृरूपेणां तरःभोग्यरूपेणानंतरः नित्यस्यानेकत्वंकथंतत्राह पश्येति तंपरमेश्वरंमाययाबहुधावर्तमानंपश्येतिकेचिद्योजयंति एकस्यभोक्तृभोग्यरूपत्वा नुपपत्तेरनिर्वाच्यमायायाअप्रामाणिकत्वेनानंगीकार्यत्वादनादरणीयमेवतद्वादिति ॥ ४७ ॥

ननुभगवतेश्वरवशंजगदित्युक्तंतमीश्वरंवयंकथंबुध्यामहइतितत्राह सोऽयमितियः सकलंस्ववशंविधायास्तेसोऽयमद्यदेवैः प्रार्थितोऽस्या मुर्व्यां यदुकुले ऽवतीर्णइत्यन्वयः कथंभूतः भूतानांभावनोवर्धनः कालरूपःसंहाररूपःकिमर्थं सुरद्विषामभावायविनाशाय ॥ ४८ ॥

---

क्रमसंदर्भः ।

ममायं पित्रादिर्मया रक्ष्य इत्यभिमानो न कर्त्तव्य इत्याह कालेति ॥ ४५ ॥

व्याघ्रादिभिर्भक्षिते च तस्मिन् दुःखं न कर्त्तव्यमित्याह अहस्तानीति ॥ ४६ ॥

एतच्च जगत् भगवद्दुर्वितर्क्यशक्तिमयकार्यत्वात् तदधीनमेवेत्याह तदिदमिति । मायया दुर्वितर्क्यशक्त्या भगवानेव इदं भाति एत-द्रूपेण परिणमते स्वयं तु स्वरूपेणैव तिष्ठति चिन्तामणिवत् ॥ ४७ ॥

सोऽयमद्येति "वर्त्तमानसामीप्येवर्त्तमानवद्वा ॥ ३ । ३ । १३१ ॥ इति न्यायेन सुरद्विषामभावायेव कालरूपः स्वयं तु परमानंदरूप एवेत्यर्थः ॥ ४८ ॥

---

सुबोधिनी ।

मध्येराजाशंकतेकथंत्वनाथाइति रक्षकरहिताः यनेहिरक्षाअपेक्ष्यतेविषयाभावाच्चकृपणाः यस्यवाश्रयंकृतवंतः तन्नपुंसकमचेतन मिति ॥ ४४ ॥

उत्तरमाहकालकर्मगुणाधीनइति किं त्वमेवरक्षकः तत्रनतिष्ठतीतिशोकः आहोस्विद्रक्षकमात्राभावात् तत्राद्यंनिराकरोतित्वंरक्षक इतिपक्षस्त्वयुक्तः राजशब्दस्यदेहवाचकत्वात्नह्येकेनगृहेणगृहांतरंरक्षितुंशक्यतेकिंचव्यवहारानुसारेणापिरक्षकत्वेअन्याधीनः कथंरक्षेत् अयंदेहः कालाधीनः कालप्रेरणांविनाकथंरक्षेत्कालस्तुनिमित्तमित्यस्मिन्पक्षेऽपिकर्माधीनः कालप्रेरणयायत्कर्मकृतवान् तत्फलभोगस्या वश्यकत्वात् कर्मापिनित्यमेवादृष्टसापेक्षत्वादितिचेत्तत्रापिकर्मैवचेत्दृष्टसामग्रीमपिसंपादयति तदापिपूर्वोक्तएवदोषः अर्थात्प्रश्चेत्स्वभा वभूतास्तेगुणाः अतस्त्रिदोषव्याप्तः स्वयंपंचभूतविकारः भूतानितुभक्षकानियैरात्मैवभक्षितः तद्विकारः कथमन्यान्गोपायेत्अन्येत्वेतद्व्यति रिक्तादेहाद्यध्यासरहिताः तुशब्देनकालाधीनाः भवदीयाजाताः किंच कालग्रस्तः सर्वथा नरक्षतीतिदृष्टांतमाहसर्पग्रस्तइतिअजगरगि लितः परंबहिःस्थितमतस्त्वांधृतराष्ट्रः शोचितुमर्हतिनतुत्वंधृतराष्ट्रमित्यर्थः ॥ ४५ ॥

भक्ष्याभावस्तुनशंकनीयः सर्वत्रैवभगवताभक्ष्यंक्लृप्तमिति वदन्कोऽपिरक्षकोनास्तीतिपक्षंदूषयतिअहस्तानीतिआदौभक्ष्यत्वेनजीवा एवोपस्थिताः तेषांसृष्टिर्नामदेहनिर्माणनतत्रप्रवेशनंतत्रोत्तरत्रवृद्ध्याद्यर्थम् अन्नसंगेकर्तव्येजीवातिरिक्तमलभमानः सर्वमेवान्नमन्नादंचकृत-वान् तत्रसामान्यप्रकारोविशेषश्चसामान्यंलौकिकः विशेषोवैदिकः तत्रसामान्यप्रकारेव्यवस्थामाह अहस्तानिसहस्तानामितिउपलक्ष णमेतत्बलवतांदुर्बलंभक्ष्यंतद्बलंक्रिययेति हस्तपादौक्रियायांकारणावितितयोर्ग्रहणं सहस्ताअप्यहस्तानांभक्ष्याभवंति यथामनुष्याः अजगरादीनांमहांतोऽपिफल्गूनांभक्ष्याभवंति यथापिपीलिकानांसर्पाः अतोबलाभिप्रायेणएतदुक्तंप्रायिकाभिप्रायेणवाअहस्तानिमत्स्यादी निअपदानितृणादीनि यत्पुनर्जीवाधिष्ठानंनास्तितदेवनास्ति भावेवाघटादेरिवनभक्ष्यता अतएवभगवतासर्वत्रभक्ष्यंक्लृप्तमिति नचिंता-कार्यामीवारफलादेररण्येऽपिसत्त्वात् ॥ ४६ ॥

ननुकथमेवंभगवान्करोति स्वसृष्टमन्यंखादयति तत्राह तदिदंभगवानिति वैषम्यनैर्घृण्येभगवतोनस्तः स्वात्मानमेवकरोतीति तदा-ह इदंजगत्भगवान् तत्रहेतुः तदिति यस्मात् कारणात् सर्वंसर्वस्यभक्ष्यंतस्मात् नह्यन्यमन्योभक्षयितुंशक्तोराजन्नितिसंबोधनम् अन्यायं दंडार्थं तत्रयद्यन्यमन्योभक्षयेत्राजदंडादिः स्यात् ननुभगवतोऽप्यनुचितं यत्स्वयंकृत्वास्वयंभक्षयतीति तत्राह आत्मेति अततिव्याप्नोती-त्यात्मा सर्वमेवव्याप्नोतीतिबहिःस्थितमंतः प्रवेशयतिअंतःस्थितं तच्चबहिःस्वस्मिन्नेवस्वयम् अंतर्बहिर्भवतीतिवस्तुवृत्तं तत्रभक्ष्यादिव्यव-

### सुबोधिनी ।

हारस्तुलौकिकः अथवाभ्रातृभजनात् मानिषेधात्मकोभवतिनहिसृष्टस्यभक्षणंमात्मैवावतिष्ठते ननुजीवाधिष्ठितंकथंभक्षयति तत्राह आत्मनामात्मेतिस्वरूपमित्यर्थः ननुतथापिजीवदययानभक्षणीयमित्यतआह स्वदृगितिस्वांस्मिन्नेवदृष्टिर्यस्य अन्यानप्यात्मनैवजानातिस्वभोगार्थं वाअन्यान्नपश्यतीत्यर्थः ननुसकास्तीत्याशंक्याह अंतरोऽनंतरोभातीति अंतरःअनंतरश्चबाह्याभ्यंतरभावेनसएवभातीत्यर्थः सस्वत्रैभक्ष कत्वेनोपस्थित इतिभावः । उपदेशभेदप्रकारेणफलपर्यवसितंमन्यमानआह पश्यतमिति तमेवसर्वत्रभासमानंच पश्येदित्यर्थः नन्वेक- स्यकथमनेकप्रकारत्वंतत्राह माययोरुधेति मायायाः प्रतिरूपत्वेनोक्तत्वात् तत्रसंबंधः जलचंद्रप्रदर्पणवद्वा अनेकधाभातीत्यर्थः ॥ ४७ ॥

एवंरक्षकत्वाभावमाशंक्यभगवतः सर्वरूपेणरक्षकत्वमुक्त्वातस्येदानींसंसारलीलापरत्वमाह सोऽयमद्येति महाराजेतिसंबोधनात् न- भयंकर्त्तव्यम्इतोऽप्यधिकंस्वाराज्यंदास्यतीतिभावः सोऽयमितिज्ञानदृष्ट्याप्रदर्शयन्नाहदृश्यस्यान्यत्वंवारयति भगवानिति नन्वागतस्यकिंप्र- योजनंतत्राह भूतभावनइतिभूतानिभावयतिपालयतीति दोषदूरीकरणेनेतिस्वयंस्वतंत्रतयासंहर्त्तापिविशेषाधिकारत्वात्कालस्यपालय- तीति ज्ञापनार्थं भक्तिसिद्धयेकालस्यरूपमभिधरूपंकृत्वासुरद्विषामभावायावतीर्णः वामनव्यावृत्त्यर्थमाह अस्यामिति ॥ ४८ ॥

---

### श्रीविश्वनाथचक्रवर्ती ।

नहि कश्चिदपि कमपि वृत्तिदानादिना रक्षितुं प्रभवतीत्याह । कालः सामान्यतो निमित्तम् । कर्म जन्मनिमित्तम् । गुणा उपादानम् तदधीनः पांचभौतिक इति तद्विभागे सद्य एव नाशवानित्यर्थः । एकः सर्पदष्टोऽन्यं सर्पदष्टं गोपायितुं नैव शक्नोतीत्यर्थः ॥ ४५ ॥

अतो जीविकामपि ईश्वर एव सर्वेषामेव प्रथममेव व्यवस्थापितवानित्याह । अहस्तानि मृगादीनि । अपदानि तृणादीनि । तत्रापि महतां मत्स्यादीनां फल्गूनि मत्स्यादीनि । अतो जीवस्य जीव एव जीविका साहजिकी । तेन त पक्षिनां पत्रपुष्पफलादिरीश्वरकल्पितै वानिषिद्धा जीविकास्ति । किमर्थं त्वं विषीदसीति भावः ॥ ४६ ॥

ननु यदीश्वरवशं जगदित्यादिना त्वयोक्तं भगवदधीनं सर्वं चेत् कथं कालकर्मगुणाधीनो देह इत्युच्यते । सत्यम् । कालकर्मादिकस्य सर्वस्य जगतो भगवच्छक्तिकार्यत्वात् सर्वं भगवानेवेत्याह तदिदमिति । स्वरूपशक्त्या आत्मनां जीवानाम् आत्मा अन्तर्यामिरूपेण । स्वदृक् स्वप्रकाशः । अन्तरो भोक्तृरूपेण जीवः । अनन्तरो बहिर्भोग्यरूपेण सुखदुःखादि । माययेति । भगवानेव शक्तित्रयरूपेण भाति अतस्त मेवैकं मायया शक्त्या उरुधा देवतिर्यगादिदेहरूपेण बहुधा ॥ ४७ ॥

कासावस्तीदृशो मायावी । द्वारकायामित्याह सोऽयमिति । अस्यां भूमौ सुरद्विषाम् अभवाय नाशाय कालरूपस्तैरेव कालरूपत्वेनानु भूयमानः स्वयं तु परमानन्दरूप एवेत्यर्थः ॥ ४८ ॥

---

### सिद्धांतप्रदीपः ।

पित्रादेः- पालनंतुदेहद्वारैवभवतिसोऽयंदेहः भगवन्नियम्यकालाद्यधीनोऽस्थायी कथंगोपायेत्कथमपितत्रदृष्टांतः सर्पग्रस्तइति ॥ ४५ ॥

वृत्तितोऽपिसर्वेभगवदधीनाः वृत्तेः सर्वत्रभगवत्कृतत्वादित्याह अहस्तानीति अहस्तानिभूतानिसहस्तानांमनुष्यादीनाम् अपदानि चतुष्पदां गवादीनाम् तत्रतेषुफल्गूनिमहतामेवंजीवस्यजीवोजीवनम् ॥ ४६ ॥

अथचिदचिदात्मकस्यसर्वस्यविश्वस्यभगवदधीनत्वंवक्तुंस्वाभाविकंभेदाभेदसंबंधमाह हेराजन् ! इदंचिदचिदात्मकंविश्वम् भगवान्भ गवदभिन्नम् "सर्वंखल्विदंब्रह्म"इतिश्रुतेः कथंभूतोभगवान् आत्मनांजीवानामुपलक्षणंचैतत् प्रकृतिकालादेः आत्मा स्थितिप्रवृत्तिप्रकाशनादि हेतुः यतश्चिदचिच्छक्तेर्जीवप्रकृतिकालादयोभावाः पृथङ्नसंति सः अतएवएकः तस्मात्स्वदेवकार्यस्यकारणात्मकत्वादेवहेतोः अंतरोऽनंत रः बाह्याभ्यंतरः एकएवभगवान्भाति यथाकांचनंकुंडलादौपृथ्वीगिरिवृक्षादौ द्रुमः शाखापत्रादौकार्यकारणतयांऽ तरोतंतरोभातितद्वत् अने नपदेनस्वरूपतोभेदोऽपिदर्शितः चिदचित्पदार्थयोः शक्तिभूतयोः स्वरूपेणस्वाभाविकोभेदोऽपिशक्तिमतः पृथक्स्थितिप्रवृत्त्याद्यभावादभे दोऽपिस्वाभाविकः एवंव्यष्टिभेदाभेदः कारणावस्थायांकार्यावस्थायांचसर्वत्रबोध्यः अथकार्यकारणयोरपिस्वाभाविकौभेदाभेदौदर्शयति तमेकवचननिर्दिष्टंकारणमेकमेवमाययाचिच्छक्तिगर्भयाचिच्छक्त्योरुधानानाब्रह्मांडरूपेणबहुधापश्य कारणावस्थमेकंकार्यावस्थमनेकमित्य र्थः विस्तरस्त्वाकरेद्रष्टव्यः ॥ ४७ ॥

भगवन्नेवंभूतोभगवान्कइत्यपेक्षायामाह सइति यस्यप्रभावोवर्णितः सोऽयमस्यांपृथिव्यांकालरूपः कालात्माऽसुरद्विषामभवायावतीर्णः श्रीकृष्णः ॥ ४८ ॥

---

### भाषाटीका ।

काल कर्म और गुणों के आधीन यह पांच भौतिक देह औरों की कैसे रक्षा करेगा इसे अपना ही संभालना कठिन है । जैसे स्वयं सर्प ग्रस्त दूसरे की रक्षा में असमर्थ होता है ॥ ४५ ॥

( ईश्वर विहित वृत्ति की सर्वत्र सुलभता दीखती है ) विनाहस्तवाले जीव हस्तवालों की और विनापाम के जीव चतुष्पदों की और छोटे जीव बड़े जीवों की जीविका हैं ॥ ४६ ॥

निष्पादितं देवकृत्यमवशेषं प्रतीक्षते ।
तावद्यूयमवेक्षध्वं भवेद्यावदिहेश्वरः ॥ ४९ ॥
धृतराष्ट्रः सह भ्रात्रा गान्धार्या च स्वभार्यया ।
दक्षिणेन हिमवत ऋषीणामाश्रमं गतः ॥ ५० ॥
स्रोतोभिः सप्तभिर्यत्र स्वर्धुनी सप्तधा व्यधात् ।
सप्तानां प्रीतये नाम्ना सप्त स्रोतः प्रचक्षते ॥ ५१ ॥
स्नात्वानुसवनं तस्मिन् हुत्वा चाग्नीन् यथाविधि ।
अब्भक्ष उपशान्तात्मा तत्रास्ते विगतैषणः ॥ ५२ ॥

भाषाटीका ।

हे राजन् ! एकही स्वदृक् भगवान् समस्त आत्माओं के आत्मा अन्तर वाहर जगद्रूप माया से उरुधा प्रतीत होते हैं वह तुम देखो ४७
हे महाराज ! वही यह भगवान् भूत भावन अब सुरद्वेषियों के विनाश के अर्थ कालरूप होकर इस भूमि में अवतीर्ण हुए हैं ॥ ४८ ॥

---

श्रीधरस्वामी ।

तर्हि श्रीकृष्णोऽप्यास्तीत्यत्रैवास्थां मा कृथा इत्याह निष्पादितमिति । तच्च देवानां कार्य्यं तेन निष्पादितम् । केवलम् अवशेषं प्रतीक्षते । यदुकुलक्षयमिति हृदिस्थम् । ततो निजं धाम यास्यति । ततो यूयमपि गच्छतेत्यर्थः । तच्च भूतमपि विदुरवदेव नावर्शयत् ॥ ४९ ॥

तदेवं शोकमास्थाञ्च निवार्य्य जिज्ञासवे तस्मै यथावृत्तं कथयति धृतराष्ट्र इति षड्भिः । हिमवतो दक्षिणे भागे ॥ ५० ॥

या वै प्रसिद्धा स्वर्धुनी गङ्गा सा आत्मानं यत्र सप्तधा व्यधात् । किमर्थं नाना पृथक् सप्तभिः स्रोतोभिः प्रवाहैः सप्तानाम् ऋषीणां प्रीतये । अतएव तत् तीर्थं सप्तस्रोतो वदन्ति ॥ ५१ ॥

तत्र तेन कृतमष्टाङ्गयोगमाह स्नात्वेति चतुर्भिः । तत्र स्नानं होमोऽब्भक्षणञ्च ( इति ) नियमा उक्ताः । भक्षस्थानेऽपां स्वीकारात् अब्भक्षः । उपशान्तः आत्मा यस्य सः । विगताः पुत्राद्येषणा यस्मात् इति यमा उक्ताः ॥ ५२ ॥

---

श्रीवीरराघवः ।

तेनचदेवकृत्यंदेवार्थकर्त्तव्यंकृत्यंप्रयोजनं तद्विपक्षक्षपणरूपंनिष्पादितम् अधुनात्वयं भगवानवशेषंस्वकुलविनाशात्मकमितिगूढाभिसन्धिः प्रतीयतेअतोयावदिहभूलोकेभगवानीश्वरः कृष्णोभवेद्वर्त्ततेतावदेवयूयमप्यवेक्षध्वन्ततः पितृवन्निर्गच्छतेतिभावः ॥ ४९ ॥

क्वाहितवानिति प्रकृतप्रश्नद्वयोत्तरमाह धृतराष्ट्रइतिद्वाभ्यां स्वभार्यया गांधार्याभ्रात्रावाविदुरेणाचसहधृतराष्ट्रोहिमवतोदक्षिणेनऋषीणामाश्रमंगतः हिमवतोदक्षिणपार्श्वानंतरवर्तिनमाश्रमंगतइत्यर्थः एनबन्यतरस्यामदूरेपंचम्याः ॥ ५ । ३ । ३५ ॥ इत्यत्राधिमतः सामीप्येएनप्प्रत्ययेव्युत्पन्नमिदंदक्षिणेनेत्यव्ययम् ॥ ५० ॥

कोऽसावाश्रमइत्यत्राह स्रोतोभिरितियंसप्तस्रोतइतिप्रचक्षतेतमाश्रमंगतइत्यन्वयः तत्रात्मनः प्रवृत्तौनिमित्तमाह यत्रेतिप्रसिद्धस्वर्धुनीस्वर्गनदीगंगासप्तानामृषीणांप्रीतयेयतः सप्तभिःस्रोतोभिः प्रवाहैर्नानाबहुधात्मानं विभक्तावधात्अतस्तंदेशंसप्तस्रोतइत्याचक्षतेयमेवमाचक्षतेतंगतइत्यर्थः ॥ ५१ ॥

तत्रकिंकरिष्यतिकथंवावर्त्तिष्यतेइत्यत्राह तत्रानुसवनंत्रिसंध्यंस्नात्वाऽग्नीन्यथाविधिहुत्वाचाब्भक्षः अपएवभक्षयतिशांतःरागाद्यकलुषितआत्मामनोयस्यविगताईषणादारैषणाअर्थैषणापुत्रैषणायस्यसतथाभूतः आस्तेआसिष्यते ॥ ५२ ॥

---

श्रीविजयध्वजः ।

अवतारप्रयोजनंचसंपन्नप्रायमितिसूचयत्याह निष्पादितमिति भूभारदैत्यसंहारारूयंदेवकार्यंतेननिष्पादितं सपुनरवशेषमवशिष्टंयदुकुलक्षयंप्रतीक्षते पश्चाद्वैकुंठंमेष्यतीतिशेषः श्रीकृष्णः इहभूतलेयावंतंकालंतिष्ठतियूयमपितावंतंसमयमनुवर्तध्वमित्यन्वयः ॥ ४९ ॥

नाहंवेदगतिमितिप्रश्नंपरिहरिष्यन्धृतराष्ट्रस्यतपश्चरणाश्रमतीर्थनामचकीत्याह धृतराष्ट्रइतिभ्रात्राविदुरेण चशब्दात्कुंत्यासहगतः हास्तिनपुरान्निर्गम्यहिमवतः पर्वतस्यदक्षिणेनदक्षिणदिशिगतमृषीणामाश्रमंसप्तस्रोतोनामगतोऽभूदित्यन्वयः ॥ ५० ॥

श्रीविजयध्वजः ।

कस्मात्सप्तस्रोतस्त्वंतस्येतितत्राह स्रोतोभिरिति तत्रयस्मिन्नाश्रमेस्वर्धुनीभागीरथीसप्तानामृषीणांप्रीतयेसप्तभिः स्रोतोभिः जल स्यंदन धाराभिः सप्तधासप्ताभिः द्रोणीभिरभ्यगात्समुद्रमितितिशेषइतियस्मात्सेनविचक्षणाः सप्तस्रोतइतिसंज्ञांप्रचक्षतइत्यन्वयार्थः ॥ ५१ ॥

उपशांतआत्माअंतः करणंयस्यसतथोक्तः विगतेषणः नष्टमांसदृष्टिः, योपरमात्मानिगतंप्राप्तमीक्षणंनिरंतरचिंतनंयस्येतिवा अब्भक्षः कृतजलाहारः सधृतराष्ट्रस्तस्मिन्नाश्रमेस्नात्वायथाविधिअग्नींश्चहुत्वाऽ स्तइत्यन्वयः आस्तइतिलड्भूतार्थे अन्यथोक्तार्थविरोधः स्यात् ॥ ५२ ॥

---

क्रमसंदर्भः ।

अवशेषं भवतामाकर्षणापूर्धमिति द्वत्स्थम् ॥ ४९ । ५० । ५१ । ५२ । ५३ ॥

---

सुबोधिनी ।

एवंकृष्णचरित्रमुक्त्वाउपसंहरन् राजानमुपदिशतिनिष्पादितमिति "मयानिष्पादितंह्यत्रदेवकार्यमशेषत"इति वाक्यात् अवशेषं भारहारकभारदूरीकरणं मोहांतरानुत्पत्तयेतथोक्तं वस्तुतस्तुतदपिजातमेव तावत्तच्छ्रवणपर्यंत मवश्यभावित्वादवेक्षध्वंयावद्भगवानिहनिवारकत्वेनाधिगच्छेत् नन्वस्मान् स्थापयित्वागतः कथंनिवारयेत्तत्राह ईश्वरइति सर्वेकरणसमर्थः ॥ ४९ ॥

एवंभगवद्वचनेनमोहाभावंभयंचोत्पाद्यपृष्टेउत्तरमाह धृतराष्ट्रइति हिमवतोदक्षिणेनाहिमालयस्य दक्षिणेभागेपूर्वमेवसिद्धम् ऋषीणामाश्रमंगतः गंगादक्षिणभागात्राजगृहात् दक्षिणभागेऋषिगृहेगतइत्याधिक्यं गांगकरिकराकृष्टंवायुनापल्लवीकृतं पुण्यवंतंविद्धिराजवेतिवाक्यात् हिमसंमुखतयाशीतेनातिपीडितश्चातिष्ठतीत्यर्थः ॥ ५० ॥

तत्रऋषीणामनुभावंगंगांचाह स्रोतोभिरिति तस्याश्रमस्यसप्तस्रोतइति नामतत् सार्थकमित्याह, याश्राश्रमेऋषीणामुत्कर्षस्यापनाय प्रत्येकंऋषीणांसमीपेप्रवाहरूपेणागतावक्रतयागमनेतुउच्चैर्नीचतास्यात् ऋषीणांवैमनस्यंच अतः स्रोतोभिः सप्तभिरित्युक्तं व्यधात् जाताआत्मानंवा स्रोतोभिरितितृतीया"बहुलंछंदसीतिकर्मार्थेतृतीयातेनस्रोतांसिव्यधादित्यर्थः स्व र्धुनीतिस्वतंत्रतयाआकाशगंगासमागतेति ज्ञायते तेनजलांतरामिश्रणेनातिपावित्र्यमुक्तं नाम्नासप्तस्रोतइति नामेतिपाठे सप्तानां प्रीतयेनाना अनेनयथासंख्यंज्ञातम् ॥ ५१ ॥

तत्रतस्यकृत्यमाह तूष्णींभावव्यावृत्त्यर्थंस्नात्वेति स्नानादयोनियमाः उपशांत्यादयोयमाः अनुसवनंत्रिकालं सवनानुकल्पतयावाअग्नीन्गार्हपत्यादीन् अंधस्यापियथागार्हस्थ्यंहोमइतिचादोषः होमेनाग्नयएवसंस्क्रियंतइति संस्कार्यत्वेनकर्मताआधानंकृत्वेत्यर्थः चकाराद्ग्निहोत्रमपिहुत्वा यथाविधिपंचाग्निविधानमनतिक्रम्यअपएवभक्षयतीत्यब्भक्षः वानप्रस्थाश्रमेअकृष्टपच्यादिवायुभक्षांतमाहाराविहिताः तत्रउपांतमब्भक्षः उपभगवत्समीपेप्रतीचिवाशांतः आत्माअंतःकरणंयस्यज्ञानार्थं भगवदाविर्भावार्थं वाएषणापरित्यागेनमुक्तियोग्यता सूचिता आस्तइतिसत्तातिरिक्तधर्मराहित्यंसूचितं लोकैषणात्रमुख्या ॥ ५२ ॥

---

श्रीविश्वनाथचक्रवर्त्ती ।

केवलमवशेषं प्रतीक्षत इति यदुकुलानामन्तर्धापनमिति हृदिस्थम् । तच्च भूतमपि विदुरवदेव नावर्णयत् । अवेक्षध्वमि कर्म प्रयोगा दहन्तास्पदं ममतास्पदं च सर्वमेव लभ्यते । तदन्तर्द्धाने श्रुते सति सर्वमेवोपेक्षध्वमिति भावः ॥ ४९ ॥

तदेवं शोकं निवार्य जिज्ञासवे तस्मै यथावृत्तं कथयति धृतराष्ट्र इति षड्भिः । दक्षिणेन दक्षिणस्यां दिशि ॥ ५० ॥

या वै प्रसिद्धा स्वर्धुनी गंगा सा आत्मानं सप्तधा व्यधात् । किमर्थं सप्तानाम् ऋषीणां प्रीतये । अतस्तत्तीर्थं सप्तस्रोत एव नाम मरीचिगंगा अत्रिगंगेत्यादि नाना नाम्ना वदन्ति ॥ ५१ ॥

तेन कृतमष्टांगयोगमाह स्नात्वेति चतुर्भिः तत्र स्नानं होमोऽब्भक्षणंच नियमा उक्ताः उपशान्तात्मा विगतैषण इति यमः । जितासन इत्यासन इत्यादिना आसनप्राणायामप्रत्याहाराः । हरिभावनयेति धारणाध्याने उक्ते ॥ ५२ । ५३ ॥

---

सिद्धांतप्रदीपः ।

तेनदेवकृत्यंदेवद्विड्क्षयरूपं निष्पादितम् अवशेषमीश्वरः प्रतीक्षतेनिजलोकेस्थितस्तवमहाप्रस्थानंप्रतीक्षते तावद्यूयमवेक्ष्यध्वंयावदिहहस्तिनापुरेभवेत् प्राप्तोभवेत्तत्संदेशहरइतिशेषः अर्जुनइहागत्यस्फुटंयदुकुलक्षयंभगवत्प्रयाणं च प्रतिपादयिष्यति तदाभवद्भिरपिगंतव्यमितिगूढोऽर्थः राज्ञानावधारितः अपितुईश्वरः यावदिहलोकेभवेत्तावद्यूयमवेक्षध्वमित्येववाक्यार्थोज्ञातः ॥ ४९ ॥

यदुक्तंनाहंवेदगतिपित्रोर्भगवत्कगतावितइति तत्राह धृतराष्ट्रइत्यादिसार्धैर्नवभिः हिमवतोदक्षिणेनतस्यदक्षिणपार्श्वे आश्रमंगतः प्राप्तः ॥ ५० ॥

जितासनो जितश्वासः प्रत्याहृतषडिन्द्रियः ।
हरिभावनयाध्वस्तरजः सत्त्वतमोमलः ॥ ५३ ॥
विज्ञानात्मनि संयोज्य क्षेत्रज्ञे प्रविलाप्य तम् ।
ब्रह्मण्यात्मानमाधारे घटाम्बरमिवाम्बरे ॥ ५४ ॥
ध्वस्तमायागुणोदर्को निरुद्धकरणाशयः ।
निवर्त्तिताखिलाहार आस्ते स्थाणुरिवाधुना ॥ ५५ ॥
तस्यान्तरायो मैवाभूः संन्यस्ताखिलकर्म्मणः ।
स वा अद्यतनाद्राजन् ! परतः पञ्चमेऽहनि ।
कलेवरं हास्यति स्वं तच्च भस्मीभविष्यति ॥ ५६ ॥

सिद्धांतप्रदीपः ।

यत्रस्वर्धुनी सप्तभिः स्रोतोभिः प्रवाहैः सप्तानामृषीणांप्रीतयेसप्तधाव्यधादात्मानमितिशेषः अतस्तमाश्रमं नाम्नासप्तस्रोतारिति प्रचक्षते ॥ ५१ ॥

अनुसवनंत्रिसंध्यं स्नात्वाअनेनस्नानादयोनियमाउक्ताः उपशांतः रागाद्यनभिभूतः आत्मामनोयस्यविगताईषणापुत्रधनादिपिपासा यस्यइतियमोक्तिः ॥ ५२ ॥

---

भाषाटीका ।

देव कार्य तो उन्हों ने निष्पादन करदिया है । अब शेष कार्य की प्रतिक्षा करते हैं । जब तक यहां ईश्वर हैं तबही तक तुम भी अपेक्षा करना ( पृथ्वी पर रहना ) ॥ ४९ ॥

धृतराष्ट्र भ्राता और अपनी भार्या गान्धारी सहित हिमाचल के दक्षिण भाग में ऋषियों के आश्रम में गया है ॥ ५० ॥

सात ऋषियों के प्रीति के अर्थ जहां स्वर्धुनी सात स्रोताओं से सप्तधा हुई है वह सप्त स्रोता नाम का तीर्थ है ॥ ५१ ॥

वहां प्रति समय स्नान कर यथा विधि अग्नि में होम कर जल मात्र भक्षण करता उपशान्त चित्त समस्त ईषणाओं से मुक्त होकर धृतराष्ट्र वहां स्थित हैं ॥ ५२ ॥

---

श्रीधरस्वामी ।

जितासन इत्यादिना आसनप्राणायामप्रत्याहारा उक्ताः । हरिभावनयेति धारणोक्ता ध्वस्ता रजःसत्त्वतमोरूपा मला यस्येति फलतो ध्यानमुक्तम् ॥ ५३ ॥

समाधिमाह विज्ञानेति द्वाभ्याम् । आत्मानमहंकारास्पदं स्थूलदेहाद्वियोज्य । विज्ञानात्मनि बुद्धौ संयोज्य एकीकृत्य । तं विज्ञानात्मानं दृश्यांशाद्वियोज्य क्षेत्रज्ञे द्रष्टरि प्रविलाप्य । तञ्च क्षेत्रज्ञं द्रष्टृंशाद्वियोज्य आधारे आश्रयसंज्ञे ब्रह्मणि प्रविलाप्य । यथा अम्बरं घटोपाधेर्वियोज्य महाकाशे प्रविलाप्यते तद्वत् ॥ ५४ ॥

व्युत्थानाभावमाह ध्वस्तेति । अन्तर्गुणक्षोभाद्वहिरिन्द्रियविक्षेपाद्वा व्युत्थानं भवेत् तदुभयं तस्य नास्ति यतो ध्वस्तो मायागुणानामुदर्क उत्तरफलं वासना यस्य निरुद्धानि करणानि चक्षुरादीनि आशयो मनश्च यस्य अतएव निवर्त्तितः अखिल आहारो भोज्यं इंद्रियैर्विषयाहरणं वा येन सः स्थाणुरिव निश्चल आस्ते ॥ ५५ ॥

तथाभूतमप्यानेतुमुद्यतं प्रत्याह तस्येति । अन्तरायो विघ्नः मैवाभूः इत्यडागमश्छान्दसः । दर्शनमपि तावत् कुर्यामित्युद्यतं प्रत्याह । स वै अद्यतनादह्नः । स्वं स्वाधीनम् । तर्हि तद्दाहार्थं गमिष्यामि नेत्याह तच्चेति ॥ ५६ ॥

---

दीपनी ।

अन्तरायो नवविधस्तथा चात्र विशेषप्रतिपत्तये सभाष्यं महामुनिभगवत्पतंजलिप्रणीतं सूत्रमिदं प्रदर्श्यते । अथ के अन्तरायाः । ये चित्तस्य विक्षेपकाः । केपुनस्ते कियन्तो वेति ( भा० ) व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपाः तेऽन्तरायाः ( पातंजलदर्शने समाधिपादे ३० सू ) । नवान्तरायाश्चित्तस्य विक्षेपाः सहैते चित्तवृत्तिभिर्भवन्त्येव । तेषाम

दीपनी।

भावे न भवन्ति। पूर्वोक्ताश्चित्तवृत्तयः व्याधिर्धातुरसकरणवैषम्यम् स्त्यानमकर्मण्यता चित्तस्य। संशयः उभयकोटिस्पृग्विज्ञानं स्यादिदमेवं नैवं स्यादिति। प्रमादः समाधिसाधनानामभावनम्। आलस्यं कायस्य चित्तस्य च गुरुत्वादप्रवृत्तिः। अविरतिश्चित्तस्य विषयसंयोगात्मा गर्द्धः। भ्रांतिदर्शनं विपर्ययज्ञानम्। अलब्धभूमिकत्वं समाधिभूमेरलाभः। अनवस्थितत्वं यल्लब्धायां भूमौ चित्तस्या प्रतिष्ठा समाधिप्रतिलम्भे हि सति तदवस्थितं स्यादिति। एते चित्तविक्षेपा नव—योगमला योगप्रतिपक्षा योगान्तराया इत्यभिधीयन्ते ( भा० ) इति ॥ ५६—५९ ॥

---

श्रीवीरराघवः।

जितमासनंयेनसः चिरमासीनोऽपिक्लमरहितइत्यर्थः जिताः श्वासाः प्राणादिवायवोयेनसप्रत्याहृतानि शब्दादिविषयेभ्योनियमिता निषडिंद्रियाणियेन हरिभावनयाभगवद्रूपानुस्मृत्याध्वस्तानिनिरस्तानिरजआदिगुणत्रयकार्याणिमुक्तिप्रतिबन्धकानिपुण्यादिरूपाणिमला नियस्यतथाभूतः ॥ ५३ ॥

विज्ञानात्मनिविज्ञानस्वरूपेक्षेत्रज्ञेप्रत्यगात्मन्यभिसंयोज्यपूर्वंप्रस्तुतानींद्रियाणीत्यर्थात्सिद्धम् इन्द्रियाणिसंयोज्येंद्रियैरनाकृष्टचित्त इत्यर्थः तमात्मानंक्षेत्रज्ञमाधरेधारकेब्रह्मणिबिलाप्यविलीनंकृत्वोपाधिविधूननेनब्रह्मसमानाकारतयाऽनुसंधायेतियावत् तत्रदृष्टांतमाह घटां-बरमिवांबरइति महाकाशेघटाकाशमिवब्रह्मण्यात्मानंप्रविलाप्यस्थाणुरिवास्तइत्युत्तरेणान्वयः अम्बरदृष्टांतेनजीवब्रह्मणोः स्वरूपैक्यम नुसंधायेति न भ्रमितव्यंघटाद्युपाध्यपगमेनघटनाशस्यमहाकाश संश्लेषेऽपिस्वरूपभेदसद्भावात् पंचीकरणादाकाशेऽप्यंशभेदस्यवेदांतिभि रवश्यमंगीकृतत्वात् यद्याकाशेंऽशभेदोनाभ्युपगम्येततदाकृत्स्नस्याप्याकाशस्यघटाद्युपहितत्वप्रसंगः नचेष्टापत्तिः घटाकाशयोर्व्याप्यव्यापक तायांवैपरीत्यापातात्कात्स्न्र्येनाकाशस्यघटोपहितत्वेहितत्परिच्छिन्नस्याकाशस्यव्याप्यत्वंसुस्पष्टम् अतः संश्लेषदशायामपिघटाकाशमहाकाश योःप्रदेशभेदोऽस्त्येवउपाध्यपगमेनसमानाकारत्वमात्राभिप्रायकएवायंदृष्टांतइत्यवगंतव्यम् ॥ ५४ ॥

ध्वस्तमायागुणानांरजआदीनामुदर्कोरागद्वेषादिकार्ययस्यनिरुद्धानिकरणानि इंद्रियाण्याशयवासनांतःकरणंवायेननिवर्तिताअखिला अभ्भक्षणादयोऽपियेनतथाभूतः स्थाणुरिवाचलोनिश्चलआस्तेआशिष्यतेप्रत्याहृतषडिंद्रियइत्यनेनेंद्रियाणांविषयेभ्यः आकर्षणमात्रमुक्तंनि रुद्धकरणाशयइत्यनेनतुपुनर्विषयेषुप्रवृत्तिप्रतिबंधउक्तः अतोनपौनरुक्त्यंतथाध्वस्तरजस्तमोमलइत्यनेनपुण्यपापाद्यभावउक्तः ध्वस्तमायागु-णोदर्कइत्यनेनपुण्यापुण्यमूलकरागद्वेषाद्यभावउक्तः तथातावदब्भक्षस्ततोनिवर्त्तिताखिलाहारइति ॥ ५५ ॥

कथंचित्समानयिष्यामीतियुधिष्ठिराभिप्रायमालक्ष्याहतस्येति सन्यस्तानित्यक्तान्यखिलानिदेहधारणार्थान्यपिकर्माणियेनतस्यधृतराष्ट्र-स्यांतरायोविघ्नभूतस्त्वं माभूः नभव हेराजन्! सधृतराष्ट्रः अद्यतनाद्वर्तमानदिनादारभ्यपरतः पंचमेहनिस्वंकलेवरंहास्यतिवैनूनंत्यक्ष्य तितच्चकलेवरंयोगाग्निनैवभस्मीभविष्यतीति ॥ ५६ ॥

---

श्रीविजयध्वजः।

अपिमयीतिमृत्युकालीनंमनस्यविवयंप्रश्नंपरिहरतीत्याह जितासनइति धृतराष्ट्रउक्तविधिनातपः कुर्वन्नभ्यासपाटवेनजितासनः स्वस्ति कायासनजयवान्निर्जितश्वासः प्राणजयवान्विषयेभ्यः प्रत्याहृतश्रोत्रादिषडिंद्रियः सन् हरिभावनयाहरिनिरंतरध्यानेनध्वस्तंसत्त्वरजस्त मोनिमित्तंमनोमलंयेनसतथा ॥ ५३ ॥

स्वरूपज्ञानेनस्वस्वरूपमारभ्यपरतत्त्वपर्यंतानि अशेषतत्त्वान्यपरोक्षीकृत्यसर्वंजगद्विज्ञानात्मनिविज्ञानतत्त्वाभिमानिनिविरिंचेसंयोज्यतत्र स्वरूपज्ञानेन... प्रविलाप्यलयमेष्यतीतिध्यात्वातंविरिंचंक्षेत्रज्ञेस्वहृदिस्थिते हरावंतर्यामिणिप्रविलाप्य घटांबरमंबरइवउत्पद्यमानघटवर्तिमहाकाशस्वरूप प्रविलाप्यलयमेष्यतीतिध्यात्वातंविरिंचंक्षेत्रज्ञेस्वहृदिस्थिते तद्भिन्नजायमानाकाशयोर्मध्येमहाकाशस्वरूपघटाकाशोमहाकाशेघटेभिन्नेयथैकीभवतितथात्मानं स्वांतर्यामिणंहरिमाधारंसर्वाधारंब्रह्मणि सर्वगतेप्रविलाप्यैकीभावेनचिंतयन् ॥ ५४ ॥

अतएवध्वस्तमायागुणोद्रेकइतिहेतुगर्भं निरस्तप्रतिसत्त्वादिगुणोद्रेकत्वाद्धरावेवनिरुद्धाशेषकरणमनाअतएवनिवर्तिताखिलाऽशनोऽ धुनास्थाणुरिवाचलआस्तेतदामृतिकालेआसीदित्येकान्वयः तस्मात्त्वयिशमलमाशंसमानोनापिदुःखितोगंगायामभ्यपर्तादितिभावः ब्रह्मा-र्पणबुद्ध्यासंन्यस्तसमस्तकर्मणः तस्यधृतराष्ट्रस्यतपोविघ्नोमाभूदित्यन्वयः ॥ ५५ ॥

इदानींधृतराष्ट्रमृतिकालंवक्तीत्याह सवाइति सधृतराष्ट्रः अद्यतनादह्नः परतः पूर्वस्मिन्पंचमेऽहनिकलेवरंहास्यतिजहौतच्चभस्मीभ विष्यतिभस्मसाद्भूत् हशब्देन"सुप्तिङुपग्रहलिंगनराणामितिव्याकरणसूत्रमत्रप्रमाणीकरोतिइतिहासंवासूचयति वाइत्यनेन"तांस्तदावा रदोविद्वानुक्तमयामास धर्मवित्। उक्त्वोत्तमांगतिंतेषांनिष्क्रांतातात्कालिकींतथे"ति स्कंदपुराणोक्तंवाक्यंसूचयति चशब्दएवार्थेतत्कलेवरमे वभस्मीभविष्यति नतुसः स्वयंशून्यतामेष्यति चेतनस्यनित्यत्वात् ॥ ५६ ॥

---

क्रमसन्दर्भः।

आत्मानमहंकारास्पदं सूक्ष्मदेहं स्थूलदेहाद्वियोज्य क्षेत्रज्ञे देहद्वयाभिमान्यवस्थजीवे प्रविलाप्य तं च क्षेत्रज्ञं विज्ञानात्मनि शुद्धजीव स्वरूपे प्रविलाप्य तं च ब्रह्मणि संयोज्य घटाम्बरमिति चिद्रूपत्वेनैवाभेदांशे दृष्टान्त इति ज्ञेयम् ॥ ५४ । ५५ । ५६ । ५७ ॥

---

## सुबोधिनी ।

एवंयमनियमावुक्त्वाअष्टांगयोगंवक्तु मासिनादिकमाह जितासनइति आसनजयः प्राणायामजयः प्रत्याहारश्चक्रमेणोक्तः षडिंद्रियइति कर्मेंद्रियाणिनियमएवप्रत्याहृतानि ध्यानमाह हरिभावनयाति ध्यानधारणा एकीकृत्योक्त एकदेशसमुदाय भेदनतयोर्भेदात् गुणाश्च यमलानि रागादीनियस्य ॥ ५३ ॥

निर्विकल्पसमाध्यर्थमाह विज्ञानात्मनीति अंतेसएवकर्त्तव्यः अत्रह्युत्तरोत्तरंपंचात्मानः उत्क्रांतिगत्यागतिकर्ताजीवः प्रथमः देहमानस्पभेदेनभिन्नएकएषसव्यष्ट्यात्माततोमहान् ब्रह्मांडाभिमानः विज्ञानात्मासमष्टिः तस्मात्परः प्रकृत्यधिष्ठातापुरुषः ततोऽपिमहान्अक्षरात्मा ततः पुरुषइति तत्रस्वात्मानंप्रथमंक्रमविलापनेनब्रह्मपर्यंतं गतइत्याह स्वात्मानंविज्ञानात्मनिसंयोज्यतंचक्षेत्रज्ञे अथवाविज्ञानात्मामहत्तत्त्वं चित्ताविर्भूतचैतन्यंतंक्षेत्रज्ञेपुरुषे तंब्रह्मणिअक्षरंतस्यानात्मत्वेप्रलापनंव्यर्थमित्यतआह आत्मानमिति ननुपुरुषाक्षरयोः स्वरूपेवैलक्षण्याभावात् किंप्रविलापनेनेत्यतआह घटांबरमिति घटेभिन्ने यथाआकाशमाकाशेस्यात् अतः प्रकृत्यधिष्ठातृत्वंदूरीकृतमित्यर्थः ॥ ५४ ॥

तस्याक्षरधर्मात्रिर्भावेनदोषनिवृत्तिमुपसंहरति ध्वस्तेति मायागुणानामुदर्कः प्रकृतौव्यामोहेनसंबंधः नितरांरुद्धाः पुनरुद्गमनसामर्थ्यरहिताः इंद्रियातः करणानिकरणाशयायस्य निवर्तिताखिलाहारइति प्राणवृत्तिनिवारणम् एवंचतुर्णांदेहेंद्रियप्राणांतः करणानांबीजभूतमायागुणसहितानांव्यापारे निवृत्ते अक्षररूपंप्राप्तस्यात्मनः स्वतोव्यापाराभावात्स्थाणुरिवासीदित्याह आस्तइतिवहिः स्थितवाय्वचालनेदृष्टांतः "वृक्षइवस्तब्धोदिवितिष्ठत्येकस्तेनेदंपूर्णं पुरुषेणसर्वमि"ति श्रुतेःतत्तुल्योवाजातइत्यर्थः ॥ ५५ ॥

तर्ह्ययंवहुकालेस्थास्यतीति विचार्यसमाधिविरतौसमानेयइत्याशंकायामाह तस्यांतरायइति परपुरुषार्थेसंनिहितस्य विघ्नरूपत्वंमाभूः त्वद्दर्शनादिनामोहउत्पन्नेसर्वनाशोभविष्यति किंच त्वयागतेनविषयसंपादनंकर्त्तव्यं तच्च सन्यासिनोनिषिद्धमित्याह संन्यस्तानिअखिलानिकर्माणियेन अनेनकर्मार्थमपिविषयग्रहणंनिवारितंतर्हिरक्षार्थंप्रयत्नः कर्तव्यइत्याशंक्याह सवाइति प्रथमंवहुकालेस्थितिरेवनास्ति विनियोगश्चस्वतः सिद्धः अद्यतनात् पंचमेऽह्निराजन्निति संबोधनाद्गमनसंभूतावपितावान् कालोगमिष्यतीति सूचितं परत इति अद्यदिनंपरित्यज्यपंचदिनानि तत्रपंचमेऽहनिकलेवरंहास्यति ॥ ५६ ॥

---

## श्रीविश्वनाथचक्रवर्त्ती ।

विज्ञानेति स्वदेहगतानि भूतानि क्रमेण कारणेषु प्रवेश्य आत्मानमहंकारे विज्ञानात्मनि महत्तत्त्वे संयोज्य संयुक्तं भावयित्वा तंच विज्ञानात्मानं क्षेत्रज्ञे जीवे प्रविलाप्य संयुक्तं विभाव्येत्यर्थः तंच क्षेत्रज्ञं ब्रह्मणि संयोज्य आत्मानं स्वदेहस्थमन्तर्यामिणम् आधारे आश्रयतत्त्वे भगवत्यंशिनि संयुक्तं विभाव्य । नन्वन्तर्यामिभगवतोरैक्यमेव प्रसिद्धम् । सत्यम् । ऐक्येऽपि औपचारिको भेदो विवक्षित एवेति सदृष्टांतमाह घटाम्बरमिवाम्बर इति । उपाधिस्थमाकाशं निरुपाध्यावाकाशे इव । तयोश्च घटाकाशमहाकाशयोर्वस्तुतः सर्वव्यापकत्वादैक्यमेवेत्यर्थः । व्युत्थानाभावमाह ध्वस्तेति । अन्तर्गुणक्षोभाद्वा बहिरिन्द्रियविक्षेपाद्वा व्युत्थानं भवेत् । तदुभयं तस्य नास्ति । यतो ध्वस्तो मायायागुणानामुदर्क उत्तरफलं वासना यस्य सः । अतएव निरुद्धेत्यादि ॥ ५४ ॥ ५५ ॥

तथाभूतमप्यानेतुमुद्यतं प्रत्याह तस्येति । अन्तरायो विघ्नो मैवाभूः । अडागमश्छान्दसः । तद्दर्शनमपि तावत् कुर्यामित्युद्यतं प्रत्याह स वा इति । तर्हि तद्दाहार्थं गमिष्यामि नेत्याह तच्चेति ॥ ५६ ॥

---

## सिद्धांतप्रदीपः ।

जितमासनंयेनेत्यासनोक्तिः जितः श्वासोयेनेतिप्राणायामोक्तिः प्रत्याहृतानिनियमितानिशब्दादिभ्यः श्रोतादीनीन्द्रियाणियेनेतिप्रत्याहारकथनम् हरिभावनयेतिधारणादर्शिता ध्वस्तारजआदयोमलायस्येतिफलतोध्यानंसूचितम् ॥ ५३ ॥

समाधिमाह विज्ञानात्मनीति आत्मानंबुद्धींद्रियाद्यचेतनवर्गप्रकाशकंधर्मभूतंविज्ञानमचेतनवर्गाद्वियोज्यविज्ञानस्यात्मनिधर्मिणिक्षेत्रज्ञेसंयोज्यतंक्षेत्रज्ञंदेहादिभोक्तारमंशभूतंघटांवरमिवनित्यमात्मस्वरूपंदेहादेर्विलक्षणं निर्मलंसंचिंत्यब्रह्मणिअंशिनिनित्य निर्मलेऽवरस्थानीये प्रविलाप्यसर्वदानिर्मलस्यब्रह्मणोंऽश भूतस्तद्वदेवनिर्मलोऽस्मीति संचिंत्यास्ते इत्युत्तरेणान्वयः नचघटांवरशुद्धांवरयोः स्वरूपैक्यवज्जीवब्रह्मणोरपिस्वरूपैक्यमितिवाच्यम् जीवब्रह्मणोर्नैर्मल्येजीवस्यालपत्वेब्रह्मणोऽनल्पत्वेचदृष्टांतसंभवात् अन्यथाऽवरवद्ब्रह्मणिजडत्वभौतिकत्वप्रसंगापत्तेश्च वस्तुतस्तुघटांवरशुद्धांवरयोः पंचीकृतपदार्थत्वेनस्वरूपैक्यमपिनास्तीतिविज्ञेयम् ॥ ५४ ॥

नित्यसमाधितोऽन्यसमाध्योर्विशेषतामाह ध्वस्तोमायागुणानांरजआदीनामुदर्कः उत्तरोत्तरप्रसृतोवासनाप्रवाहोयस्येतिगुणतोव्युत्थानाभावउक्तः निरुद्धकरणाशयइतिवाह्याभ्यंतरेंद्रियनिमित्तकव्युत्थानाभावउक्तः अतोनिवर्तिताअखिला अन्नभक्षणादयोऽपिआहारायेनसः अतः स्थाणुरिवाचलआस्ते ॥ ५५ ॥

करुणावशात्तदानयनंमाकुर्वित्याशयेनाह तस्येति ॥ ५६ ॥

---

## भाषाटीका ।

आसन को जीतकर श्वास को जीत कर षडिन्द्रियोंको प्रत्याहरण कर हरि भावना से रजसत्वतमो गुणों को ध्वस्त कर अमल होरहा है ॥ ५३ ॥

दह्यमानेऽग्निभिर्देहे पत्युः पत्नी सहोटजे ।
बहिःस्थिता पतिं साध्वी तमग्निमनु वेक्ष्यति ॥ ५७ ॥
विदुरस्तु तदाश्चर्य्यं निशाम्य कुरुनन्दन ? ।
हर्षशोकयुतस्तस्माद्गन्ता तीर्थनिषेवकः ॥ ५८ ॥
इत्युक्त्वाथारुहत् स्वर्गं नारदः सहतुम्बुरुः ।
युधिष्ठिरो वचस्तस्य हृदि कृत्वाऽजहाच्छुचः ॥ ५९ ।

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्यां प्रथमस्कन्धे पारीक्षिते नारदवाक्यं नाम त्रयोदशोऽध्यायः ॥ १३ ॥

भाषा टीका।

आत्मा—अहंकारास्पद सूक्ष्मदेहको स्थूल देह सै वियुक्तकर क्षेत्रज्ञको देह अभिमानी जीव है उसमै मिलाकर और उसक्षेत्रज्ञ को विज्ञानात्मा शुद्ध जीव तत्त्व मै मिलाकर और शुद्ध जीव को आधार स्वरूप ब्रह्म मै घटाकाश को महाकाश मै मिलाने के सदृश मिलाकर ॥ ५४ ॥

माया के गुणमय फलों को ध्वस्त कर इन्द्री और आशा को निरोध कर समस्त भोगों सै निवृत्त होकर धृतराष्ट्र स्थाणु के समान अचल होरहा है उस अखिल कर्म सन्यासीके तुम अन्तराय मनहोओ ॥ ५५ ॥

हे राजन् ! वह आज स परे पांचवें दिन अपने कलेवर को त्याग करेगा और वह कलेवर भस्म होजायगा ॥ ५६ ॥

---

श्रीधरस्वामी।

तर्हि गान्धार्यानयनाय गमिष्यामीति नेत्याह दह्यमाने इति । पत्युर्देहे सहोटजे पर्णशालासहिते योगाग्निना सह गार्हपत्यादिभिः दह्यमाने तस्य पत्नी वहिःस्थिता सती तं पतिमनु अग्निं वेक्ष्यति प्रवेक्ष्यति ॥ ५७ ॥

तर्हि विदुरानयनार्थं गन्तव्यमेव नेत्याह । विदुरस्तु तन्निशाम्य दृष्ट्वा भ्रातुः सुगत्या हर्षः तन्मृत्युना शोकश्च ताभ्यां युक्तः तस्मात् स्थानात् तीर्थानिनिषेवितुं गन्ता गमिष्यति ॥ ५८ ॥

शुचः शोकान् ॥ ५९ ॥

इति श्रीमद्भागवतभावार्थदर्शिकायां प्रथमस्कन्धे त्रयोदशोऽध्यायः ॥ १३ ॥

---

श्रीवीरराघवः।

तदासहोटजेपर्णशालासहितेभर्त्तुर्देहेऽग्निभिर्दह्यमानेसतितस्यसपत्नीसाध्वी पतिव्रतागांधारी वहिःस्थितातमग्निमनुवेक्ष्यत्यनुप्रवेक्ष्यति ॥ ५७ ॥

हेकुरुनंदन!ततस्तदाश्चर्यं निशाम्यदृष्ट्वाविदुरः हर्षशोकाभ्यांभ्रातुर्मुक्तिविश्लेषजाभ्यांयुक्तः तस्माद्देशात्तीर्थनिषेवकः सेवितुमिच्छन्गंतागमिष्यति ॥ ५८ ॥

इतीत्थमुक्त्वासहतुंबुरुर्भगवान्नारदः स्वर्गमारुरोहस्वर्गंप्रत्यूर्ध्वंजगामेत्यर्थः युधिष्ठिरस्तुतस्यनारदस्यवचः हृदिकृत्वाविधायशुचः शोकान्अजहात्तत्याज ॥ ५९ ॥

इति श्रीमद्भागवत श्रीवीरराघवटीकायाम् प्रथमस्कंधे त्रयोदशोऽध्यायः समाप्तः ॥१३॥

---

श्रीविजयध्वजः।

उटजेनपर्णशालयासहवर्तमानः सहोटजः तास्मिन्प्रवेक्ष्यति प्राविशत् साध्वीशब्देनकुंतीच साचाग्निमाविशत् तस्मादुत्तरगतिं प्राप्तान्प्रतिपरलोकमुद्दिश्यनशोचितव्यमितिभावः ॥ ५७ ॥

विदुरइति सर्वज्ञोविदुरोदिव्यज्ञानेनभविष्यदाश्चर्यंधृतराष्ट्रपांडवयाद एव्यज्ञस्यविदुरस्यधृतराष्ट्रवनप्रवेशात्पूर्वतनाचरणप्रकारमाह विदुरइति सर्वज्ञोविदुरोदिव्यज्ञानेनभविष्यदाश्चर्यंधृतराष्ट्रपांडवयादवानांस्वर्निर्याणंनिशम्यहरिसामर्थ्यस्मरणो नचहर्षशोकान्वितः सर्वमनित्यमशिवमेवनित्यस्ततस्तीर्थयात्रावितरसेवैयपुरुषार्थप्रदेत्यत्र कारणात्तीर्थनिषेवणकोगंतागम्यादितीर्थानांभागतादिशास्त्राणाञ्चसेवनीययौ तुशब्दोगंतेतिलुद्भूतार्थत्वमेवमाह "तुः स्याद्भेदे वधारणे" त्य

श्रीविजयध्वजः।

भिक्षमानस्सम्पुनर्धृतराष्ट्रपरिसरमागतोऽभवत् धृतराष्ट्रदिदिक्षयावनंगतेषुभवंतंप्रविश्य एकत्वमागतोहितस्मात्नतस्यगतिर्मयावर्णनीये तिभावः पुरादिरक्षार्थंवनमागतेषुपांडवेषुराजानंप्रविश्यएकत्वमागतइतिस्कांदकथितार्थभेदेवावर्ततइतितुशब्दः ॥ ५८ ॥
सतुंबुरुरितिवकव्येसहतुंबुरुरितिनारदः सर्वदातुंवुरुणासहैववर्ततेनतंविहायेतिद्योतनार्थः कुंत्यादिविषयाः शुचः ॥ ५९ ॥

इतिश्रीभागवतेप्रथमस्कंधेविजयध्वजटीकायांद्वादशोऽध्यायः ॥ १२ ॥

---

क्रमसंदर्भः।

विदुर इति। हर्षोऽयं धृतराष्ट्रस्य सद्गतिप्राप्तेः हर्षप्राय एव ज्ञेयः। शोकस्तु मूलतो यः स एव ज्ञेयः ॥ ५८। ५९ ॥

इति श्रीमद्भागवतप्रथमस्कन्धस्य श्रीजीवगोस्वामिकृतक्रमसंदर्भे त्रयोदशोऽध्यायः ॥ १३ ॥

---

सुबोधिनी।

अहनीतिशुक्लपक्षादिकमपिसूचितं कलेवरपरित्यागेहेतुः स्वामिति दग्धपटन्यायेनअभिमानशेषस्य विद्यमानत्वात् "भस्मांतमिदंशरीरमि"तिश्रुतेः तस्यप्रतिपत्तिमाह तच्चेति ब्रह्मणिस्थितोऽपिप्रयत्नशेषेण प्राणादेहादिकंभृत्वातिष्ठति तस्यत्यागसमये आग्नेयींधारणांकृत्वा त्यक्तवान् अतस्तद्भस्मजातमित्यर्थः आधानप्रभृतियजमानोऽग्नयोभवंतीतिश्रुतेः अंतःस्थिताग्निप्राकट्येवहिः स्थितैरपिसंसर्गात् महत्यग्नौसंजातेपर्णशालायामपिदग्धायां पातिव्रत्यधर्मेण"प्रविशेद्वाहुताशनमि"तिवहिः स्थितापिपत्नीअग्न्युपयाता भावाय साध्वीतमेवाग्निमनुप्रवेशंकरिष्यतीत्यर्थः ॥ ५७ ॥

एवंदंपत्योर्विनियोगमुक्त्वातद्धेतुभूतविदुरविनियोगमाह विदुरस्त्विति तुशब्देनतयोरवस्थांतस्य निवारयति ननुसहागतानांमध्येद्वयोरेवसागतिर्नतृतीयस्येत्यतआह तदाश्चर्यमिति पूर्वंतुतत्क्रियायामेवआसक्तं चित्तमासीत् किं भविष्यतीति निष्पन्नेतुकार्ये तदाश्चर्यत्वेनस्फुरितंनकर्त्तव्यत्वेन नह्यद्भुतंसर्वस्यसंभवतीति तर्हिकिंकृतवानित्यतआह गंतेतिकुरुनंदनेति संवोधनंतवैतन्नकर्तव्यमिति सूचयति सर्वाह्लादकरत्वात् पारलौकिकैहिकविचारणेहर्षशोकयुतस्तस्मादेहपातनपर्यंतंपरिभ्रमेदितिविध्यनुसारेणप्रवृत्तत्वाच्च मध्येप्रासंगिकंसमाप्यप्रक्रांतमेवकृतवानित्याह तीर्थनिषेवकइति ॥ ५८ ॥

एतावताराज्ञः शोकोनिवृत्तइतिं नारदगमनेपूर्वोक्तस्य समाप्तिमाह इतीति अथेतिभिन्नप्रक्रमेणपूजितः संतुष्टहृदयः अतः परंभूमौतस्य कार्यंनास्तीति ज्ञापयति आरुहत्स्वर्गमिति तुंवुरुणाकथांतरसूचनमाशंक्यसहतुंबुरुणेति उपाख्यानफलमाह युधिष्ठिरइति शुचः शोकान्वाक्यस्यशोकबाधकत्वाद्वाक्येस्थितेशोकाविगतानीत्यर्थः ॥ ५९ ॥

इतिश्रीमद्भागवत सुबोधिन्यां श्रीमद्वल्लभदीक्षितविरचितायां प्रथमस्कंध विवरणे
त्रयोदशोऽध्यायः समाप्तः ॥ १३ ॥

---

श्रीविश्वनाथचक्रवर्त्ती।

तर्हि गान्धार्यानयनाय गमिष्यामि नेत्याह। पत्युर्देहे सहोटजे पर्णशालासहिते अग्निभिः योगाग्निगार्हपत्यादिभिर्दह्यमाने तस्य पत्नी बहिःस्थिता पतिमनु अग्निं वेक्ष्यति प्रवेक्ष्यति ॥ ५७ ॥

तर्हि विदुरानयनार्थं गन्तव्यमेव नेत्याह। विदुरस्तु तन्निशाम्य दृष्ट्वा। तन्मुक्त्या हर्षः लोकव्यवहारेण शोकश्च। तस्मात् स्थानात् तीर्थानि निषेवितुं गन्ता गमिष्यति। अत्र भक्तापराधिनि धृतराष्ट्रे विदुरस्य तादृशकृपाभावान्मुक्तिरेवाभून्न तु प्रेमभक्तिरिति ज्ञेयम् ॥५८॥

इत्युक्त्वा समादधे अथारुहत्। शुचः शोकान् ॥ ५९ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।
त्रयोदशोऽपि प्रथमे सङ्गतः सङ्गतः सताम् ॥ १३ ॥

---

सिद्धांतप्रदीपः।

अग्निभिः सहोटजेपर्णशालासहिते भर्तुर्देहे दह्यमानेबहिःस्थितापिसाध्वीपतिव्रता पत्नीगांधारीपतिमन्वग्निंवेक्ष्यतिप्रवेक्ष्यति ॥ ५७ ॥
सभार्यस्यभ्रातुः सुहृत्स्यतो देहत्यागदर्शनात् हर्षेणाकारुण्याच्छोकेनचयुतः ॥ ५८ ॥ ५९ ॥

इति श्रीमद्भागवतसिद्धांतप्रदीपेप्रथमस्कंधीयेत्रयोदशाऽध्यायार्थप्रकाशः ॥ १३

। भाषाटीका ।

गान्धारी अपने पति के देहको उटज (पर्णशाला) सहित जलते देखकर वह वहीं स्थितासाध्वी पति का अनुगमन कर उसी अग्नि में प्रवेश करेगी ॥ ५७ ॥

हे कुरुनन्दन ! विदुर उस आश्चर्य को देखकर हर्ष और शोक युक्त होकर तीर्थ निषेवा करने को चलेजायँगे ॥ ५८ ॥

नारद यह कहकर तुंबुरु सहित स्वर्ग को चलेगये युधिष्ठिर ने उनका वचन हृदयमें लेकर सब शोक त्याग दिया ॥ ५९ ॥

प्रथम स्कन्ध का त्रयोदश अध्याय समाप्त ॥ १३ ॥

## चतुर्दशोऽध्यायः ।

सूत उवाच ।　संप्रस्थिते द्वारकायां जिष्णौ बन्धुदिदृक्षया ।
ज्ञातुञ्च पुण्यश्लोकस्य कृष्णस्य च विचेष्टितम् ॥ १ ॥
व्यतीताः कतिचिन्मासास्तदा नायात्ततोऽर्ज्जुनः ।
ददर्श घोररूपाणि निमित्तानि कुरूद्वहः ॥ २ ॥
कालस्य च गतिं रौद्रां विपर्य्यस्तर्त्तुधर्मिणः ।
पापीयसीं नृणां वार्त्तां क्रोधलोभानृतात्मनाम् ॥ ३ ॥
जिह्मप्रायं व्यवहृतं शाठ्यमिश्रञ्च सौहृदम् ।
पितृ-मातृ-सुहृद्-भ्रातृ-दम्पतीनाञ्च कल्कनम् ॥ ४ ॥

श्रीधरस्वामी ।

चतुर्द्दशे त्वारष्टानि दृष्ट्वा राजा विशङ्कितः ।
अश्रृणोदर्ज्जुनात् कृष्णतिरोधानमितीर्य्यते ॥ ० ॥

कृष्णस्य चेति चकारेणाभिप्रायश्च ज्ञातुम् ॥ १ ॥
कतिचित् सप्त । तदा कालातिक्रमेऽपि । ततः द्वारकायाः नायात् नागतः । निमित्तानि उत्पातादीन् । कुरूद्वहो युधिष्ठिरः ॥ २ ॥
रौद्रां घोराम् । तदेवाह विपर्य्यस्ता ऋतुधर्म्मा यस्मिन् तस्य । वार्त्तां जीविकाम् । क्रोधलोभानृतैर्युक्त आत्मा येषाम् ॥ ३ ॥
जिह्मप्रायं कपटबहुलं व्यवहृतं व्यवहारम् शाठ्यं वंचनं तन्मिश्रं सौहृदं सख्यम् । पित्रादीनां स्वप्रतियोगिभिः कल्कनं कलहादि ॥ ४

———————

दीपनी ।

अश्रृणोत् अनुमितवानित्यर्थः धातूनामनेकार्थत्वात् । अनुमानं तु चरमश्लोके द्रष्टव्यम् ॥ १—९ ॥

———————

श्रीवीरराघवः ।

संप्रस्थितइतिवंधूनांयदूनांदिदृक्षयापुण्यश्लोकस्यपुण्ययशसः श्रीकृष्णस्यविचेष्टितंज्ञातुं च जिष्णावर्ज्जुनेद्वारकायांसंप्रस्थितेप्रस्थानपूर्वकंद्वारकायांप्रविष्टेसतिद्वारकायांवंधूनांदिदृक्षयेतिवान्वयः ॥ १ ॥
कतिचिन्मासाव्यतिक्रांताबभूवुः तथापिततोद्वारकातोऽर्ज्जुनोनागच्छत्तदाकुरूद्वहो युधिष्ठिरः घोररूपाणि निमित्तान्यरिष्टानिददर्श ॥२॥
विपरीताऋतूनांवसंतादीनांधर्मायस्यतस्यरौद्रांघोरांगतिंच द्वितीयांतानांपूर्वेणादृष्ट्वेत्युत्तरेणान्वयः क्रोधादिप्रवणआत्मामनोयेषांनृणां पापीयसींवार्त्तांजीवनार्थप्रवृत्तिम् ॥ ३ ॥
जिह्मप्रायंकौटिल्यप्रचुरंव्यवहृतं व्यवहारंशाठ्यमिश्रंमौर्ख्ययुक्तं सौहृदंचपित्रादीनां परस्परं कल्कनंरागादिदोषंच ॥ ४ ॥

———————

श्रीविजयध्वजः ।

दुर्निमित्तादिसंसारयात्राप्रतिपादनात्तस्यानित्यत्वज्ञापनेनहरौपराभक्तिर्जायतइत्यर्थोनिरूप्यतेऽस्मिन्नध्याये तत्रावशेषंप्रतीक्षतइत्युक्तयदुकुलसंहारकथनपूर्वकंश्रीकृष्णस्यस्वधामप्राप्तिंवक्तुमुपक्रमते संप्रस्थितइति नारदोक्तपरामर्शेनवीतशोकतयाराज्यंपालयन्नृपःस्वानुमतेनाजिष्णावर्ज्जुनेद्वारकायांस्थितानांवंधूनांदर्शनेच्छया माययेच्छयागृहीतमनुष्यवेषस्यवासुदेवस्यईहितंचेष्टितंचज्ञातुंद्वारकांप्रतिसंप्रस्थितेगते ॥ १ ॥
यदाकतिचिन्मासाःदिवसाः व्यतीताः अतिक्रांताः तदाशतशः सहस्राणिघोररूपाणिभयंकराणिनिमित्तान्याध्यात्मिकाधिभौतिकाधिदैविकानुत्पातान्ददर्शेत्यन्वयः “अहस्तुमासशब्दोक्तंयत्रचितायुतंव्रजेदि”त्यभिधानं तुशब्देनगृहीतम् ॥ २ ॥
उत्पातंदृष्ट्वाकिंचकारनृपइतितत्राह कालस्येति कालगत्यादिकंदृष्ट्वानृपोऽनुजंभीमसेनमित्यभाषतेत्यन्वयः विपर्यस्ताः वसंतादीनामृतूनांधर्माः पुष्पोद्गमाः अस्यसंतीतिविपर्यस्तर्त्तुधर्मस्यकालस्यरौद्रामितिपाठात् गतेरपरिहार्यत्वंवक्ति क्रोधादिष्वात्मामनोयेषांतेतथोक्ताः तेषांनृणांवार्त्तांश्रुत्वाजीवनोपायप्रवृत्तिंपापीयसींपापभूयिष्ठांदृष्ट्वा ॥ ३ ॥
व्यवहृतंदानोपादानादिव्यवहारंजिह्मप्रायंकापट्यप्रचुरंसौहृदंस्नेहंसाठ्यमिश्रंस्वप्रयोजनोपेतंपित्रादीनांकल्कितांकलंकतांकलहंवा ॥४॥

———————

### क्रमसंदर्भः ।

संप्रस्थिते इति अश्वमेधार्थं श्रीकृष्णस्य पुनरागमनानन्तरमिति ज्ञेयम् ॥ १ ॥
ददर्शेति । विदुरागमनात् पूर्वं परञ्च वृत्तमिदं ज्ञेयम् ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥

---

### सुबोधिनी ।

एवंतांधृतराष्ट्रस्यमुक्तिमुक्त्वात्रयोदशे पांडवानामतोद्वाभ्यांहेतुपूर्वमुदीर्यते॥तेषांनेष्टोब्रह्मभावःसायुज्यंपरमीप्सितम् तत्तस्माद्भूतलेकृष्णे सखिभावेनबंधनात् ॥ अतश्चतुर्दशेहेतुंभगवद्गमनंमहत् योवदेत्तस्यसंदर्शः प्रश्नश्चविनिरूप्यते॥ संभावनायांहेतुत्वनिश्चयेकिमुतोतिच भगवद्गमनंतस्मादुभयत्रोच्यतेद्विधा ॥ एवंपूर्वाध्यायेतावद्यूयमवेक्षध्वमितिवाक्याद्भगवन्निर्याणस्यावश्यकत्वंश्रुत्वा धृतराष्ट्रगमनकृतक्लेशंपरिहृत्यस्वगमनहेतुभूतं भगवद्गमनंप्रतिचिंताकुलितः पर्यालोचनंकरोतीति वक्तुंतस्य पीठिकामाह संप्रस्थितइति शापात्पूर्वंभगवान् किं करोतीति ज्ञानार्थमर्जुनः प्रेषितस्तस्मिन्नपिगतेबहवोमासाजाताइति विलंबेकारणाभावाच्चिंतानिमित्तदर्शनाच्च तत्राद्यंद्वाभ्यामाह गमनागमस्यनिरूपणात् द्वारकायांगतस्य नकापिचिंतातत्रापि सम्यगागतस्यस्वसुहृद्देसमाह्वानात् तत्रापिस्वयंजिष्णुर्जयशीलस्तत्रापि बंधूनां दर्शनार्थेनकलहाद्यर्थे ॥ १ ॥

तत्रापिसर्वानिष्टनिवारकस्य कृष्णस्यविशेषचरित्रं चेष्टितंज्ञातुंकतिचित्सप्तमासाः सनायात्पाण्डुसुतः दीर्घसदृशविचारावश्यकत्वायचनृपः आगमनेअपशकुनानिदृष्टवान्घोराणिरूपाणियेषांफलतोभय जनकत्वंदूरेतेषामेवदर्शनेभयंभवतीत्यर्थः नचतावन्मात्रत्वं तानिपुनर्निमित्तानिअदृष्टसूचकानिशकुनशास्त्रेतथाप्रतिपादनात् स्वतोऽपिज्ञानंसंभवति महापुरुषवंशोत्पन्नत्वादित्याह कुरूद्वहइति ॥ २ ॥

ज्योतिःशास्त्रात्कालगतिश्चक्रूराजाताकलेर्दुष्टस्यप्रवेशात् किंच विपर्यस्ताऋतुधर्मायत्रअनेनापिकालगतिर्दुष्टेतिज्ञातम् अनापद्यपिप्राणिनां जीविकापापीयसीसाधुजुगुप्सिता कर्तृधर्मेषुक्रोधलोभाविवप्रकटौयत्किंचित्क्रियते तत्राधिकारिविशेषणमेतद्द्वयं ताभ्यामावृतःआत्मायेषाम् ३

कालस्यकालस्थानां च दोषाउक्ताः व्यवहारेबुद्धिदोषमाह बुद्धिर्द्विधाहिसमीचीना व्यवसायात्मिकासर्वप्राणिषुसौहार्दजनिका च तत्रोभयत्रापिकौटिल्यंचंचलता च प्रविष्टा बुद्धिर्हिबहिः चेष्टाभिरनुमीयतेसाकुटिलस्यनशक्या वंचकस्य च सौहार्दंतस्मादेतद्वयं लोकेभीतमित्यर्थः लौकिकधर्मेदोषमाह पित्रादिभिः कलहः येषुसहजः स्नेहः धर्म्यः तैः सहकलहः पित्रादीनांसंबंधिभिः सह कलहः दंपतीनांपरस्परम् ॥ ४ ॥

---

### श्रीविश्वनाथचक्रवर्त्ती ।

चतुर्दशे नृपोऽपश्यदरिष्टानि बहूनि यत् ।
विवेद तत्फलं दृष्ट्वैवार्जुनं खिन्नमागतम् ॥ ० ॥

कृष्णस्य चेति चकारेणाभिप्रायश्च ज्ञातुम् ॥ १ ॥
कतिचित् सप्त । निमित्तानि दुःखकारणानि ॥ २ ॥
विपर्य्यस्ता ऋतुधर्म्मा यस्मिन् तस्य । वार्त्ता जीविकाम् । पापीयसीमतिपापवतीम् ॥ ३ ॥
कल्कनं कलहादि ॥ ४ ॥

---

### सिद्धांतप्रदीपः ।

द्वारकायांबंधूनांवसुदेवादीनांदिदृक्षयापुण्यकीर्त्तेः कृष्णस्यचविचेष्टितंज्ञातुंजिष्णावर्ज्जुनेप्रस्थिते ॥ १ ॥
कतिचिन्मासाःव्यतीताःव्यतिक्रांतास्तदपिकतिचिन्मासेषुव्यतिक्रांतेष्वपिततोद्वारकातोऽर्ज्जुनोनायाधागच्छत् तदानींकुरूद्वहोयुधिष्ठिरः घोररूपाणि अप्रियकराणिनिमित्तानिददर्श ॥ २ ॥
विपर्य्यस्ताःविपरीताःऋतुधर्मायस्मिन् तस्यरौद्रांगतिंदृष्ट्वानुजमुवाचेत्यग्रिमेणान्वयः क्रोधादिभिर्युक्त आत्मामनोयेषांतेषांवार्त्तांवृत्तिम् ३
जिह्मप्रायंकपटबहुलम् व्यवहृतंव्यवहारम् शाठ्यमिश्रंमौढ्यमिश्रम् पित्रादीनांकल्कनानर्हाणांकल्कनंकलहादि ॥ ४ ॥

---

### भाषाटीका ।

सूतजीबोले—द्वारिका में बंधुओं के देखने को तथा पुण्यकीर्ति श्रीकृष्ण के चरित्र जानने को जब अर्जुन चलेगये थे ॥ १ ॥
तब सात महीना बीतने पर भी अर्जुन के नहीं आने से युधिष्ठिर जी घोर अशकुनों को देखने लगे ॥ २ ॥
काल की भयंकर गति ऋतुओं के धर्मों का वैपरीत्य क्रोध लोभ झूठ वाले मनुष्यों की पाप वाली वृत्ति ॥ ३ ॥
कपटयुक्त व्यवहार शठता युक्त मित्रता पिता माता सुहृत् स्त्री पुरुषों का परस्पर झगड़ा ॥ ४ ॥

---

* निमित्तान्यत्यरिष्टानि काले त्वनुगते नृणाम्।
लोभाद्यधर्म्मप्रकृतिं दृष्ट्वोवाचानुजं नृपः ॥ ५ ॥

युधिष्ठिर उवाच।

संप्रेषितो द्वारकायां जिष्णुर्बन्धुदिदृक्षया।
ज्ञातुश्च पुण्यश्लोकस्य कृष्णस्य च विचेष्टितम् ॥ ६ ॥
गताः सप्ताधुना मासा भीमसेन! तवानुजः।
नायाति कस्य वा हेतोर्नाहं वेदेदमञ्जसा ॥ ७ ॥
अपि देवर्षिणाऽऽदिष्टः स कालोऽयमुपस्थितः।
यदात्मनोऽङ्गमाक्रीडं भगवानुत्सिसृक्षति ॥ ८ ॥

श्रीधरस्वामी।

अत्यरिष्टानि अत्यन्तमशुभानि दृष्ट्वा नृणां लोभाद्यधर्म्मप्रकृतिश्च दृष्ट्वा। अनुजं भीमम् ॥ ५ ॥ ६ ॥
वेदिं वितर्कें। कस्माद्धेतोर्नायातीति नाहं वेद्मि ॥ ७ ॥
अपि किम्। यदा आत्मन आक्रीडं क्रीडासाधनम् अङ्गं मनुष्यनाट्यम् उत्स्रष्टुमिच्छति स कालः किं प्राप्तः ॥ ८ ॥

---

श्रीवीरराघवः।

कन्यांविक्रीणातीतितथा तातं पितरंपित्रोरपोषकंसुतंचवेदेभ्यो विमुखान् ब्राह्मणान् ब्रह्मवादिनोवेदपाठकान् शूद्रांश्च ॥ ५ ॥
तथात्यरिष्टानिनिमित्तानिःदुःखसूचकानिकालेत्वनुगतेनिमित्तभूतविपरीतकालानुसारिणीत्यर्थः नृणांलोभाद्यधर्मस्वभावंच दृष्ट्वा लोभादीत्यादिशब्देनक्रोधादिसंग्रहःनृपोयुधिष्ठिरः अनुजंभीमंप्रोवाच ॥ ५ ॥
तदेवाहसम्प्रेषितइतिषोडशभिः द्वारकायांयेबांधवास्तेषांदिदृक्षयाकृष्णस्य विचेष्टितंज्ञातुंचजिष्णुः संप्रेषितः प्रस्थापितः ॥ ६ ॥
हेभीमसेन! सप्तमासाः व्यतिक्रान्ताः अधुनापिकस्माद्धेतोस्तवानुजोऽर्जुनोनायाति इदमनागमननिमित्तमंजसानवेदअंजसेत्यव्ययंतत्त्व शीघ्रार्थयोर्वर्त्तते ॥ ७ ॥
अपीत्यपिशब्दःसम्भावनाद्योतकःदेवर्षिणानारदेनादिष्टःसूचितः सकालोऽधुनाऽनुपस्थितोऽप्युपस्थितःस्यात्किमित्यर्थःकोऽसौयास्मिन्कालेभगवान्कृष्णआत्मनः स्वस्याक्रीडंक्रीडांगमुत्सिसृक्षतित्यक्तुमिच्छतिसकालः आंक्रीडंक्रीडार्थमनुष्यसंस्थानभागंशुद्धसत्त्वमयमप्राकृतंशरीरमुत्सिसृक्षतिभूमेर्विश्लेषयितुमिच्छतीत्यर्थः ॥ ८ ॥

---

श्रीविजयध्वजः।

अरिष्टानिअशुभानि "अरिष्टंपापशुभयोःरिष्टमशुभेऽपिचे"त्यभिधानमपिशब्देनाग्राहि पूर्वकालवैलक्षण्यद्योतकस्तुशब्दः लोभादिनाअधर्मस्वभावम् ॥ ५ ॥ ॥ ६ ॥
अत्रापिमासाः दिवसाः अहमंजसेदंकारणंनवेदत्वमिदंवेत्थकिमितिवाक्यशेषः ॥ ७ ॥
आत्मनः स्वस्याक्रीडंक्रीडास्थानमंगंनिजांभूमिं "यस्यपृथिवीशरीरम्" त्यादेः यद्यदादेवर्षिणानारदेनयूयंतावद्वेक्षध्वमितिनिर्दिष्टः सः कालः प्रत्युपस्थितः आसन्नः अपिकिम् ॥ ८ ॥

---

क्रमसन्दर्भः।

अपीति। अङ्गं स्वधामगमनेन विराड्रूपं त्यक्ष्यतीत्यर्थः ॥ ८ ॥

---

सुबोधिनी।

एवमेतानिनिमित्तानिअन्यानि च अत्यनिष्टसूचकानिसमूलानिचेत्याह कालेत्वनुगतइतिदोषेषुकालः सानुकूलः किंच नृणांप्राणिनांसर्वेषांपूर्वयुगेषुब्राह्मणादीनांशमादयइवलोभाद्यधर्माः स्वाभाविकाजाताः प्रकृतित्वेचाविगानमपिनास्तीतिभावः अनुजोभीमः ॥ ५ ॥

* कन्याविक्रयिणं तातं सुतंपित्रोरपोषकम्। ब्राह्मणान् वेदविमुखान् शूद्रांश्च ब्रह्मवादिनः ॥५॥ इत्यधिकः पाठो वीरराघव सिद्धांतप्रदीपयोः ॥

यस्मान्नः सम्पदो राज्यं दाराः प्राणाः कुलं प्रजाः।
आसन् सपत्नविजयो लोकाश्च यदनुग्रहात्॥ ९॥
पश्योत्पातान्नरव्याघ्र! दिव्यान् भौमान् सदैहिकान्।
दारुणान् शंसतोऽदूराद्भयं नो बुद्धिमोहनम्॥ १०॥
ऊर्व्वक्षिबाहवो मह्यं स्फुरन्त्यङ्ग! पुनःपुनः।
वेपथुश्चापि हृदये आराद्दास्यन्ति विप्रियम्॥ ११॥
शिवैषोद्यन्तमादित्यमभिरौत्यनलानना।
मामङ्ग! सारमेयोऽयमभिरेभत्यभीरुवत्॥ १२॥

सुबोधिनी।

आसन्यस्त्वपहतपाप्माअतः कालादिदोषसंभ्रमाभावात् तेनसहविचारोयुक्तइति भीमेनसहविचारयति संप्रेषितइति चकारादभिप्रायं द्वितीयचकारादन्येषामपिकालादीनाम्॥ ६॥

तस्यस्वतोऽऽनिष्टंनास्तीत्याह भीमसेनेति भीमासेनायस्यअनुपश्चाज्जातत्वात्सोऽपितादृशः जिज्ञासितसंदेहेऽपिआगमनाभावेहेत्वभावात् कुतोनायातीत्याह॥ ७॥

शुद्धांतःकरणत्वात् स्वस्यैवनिमित्तंस्फुरितंसंभावनायामाहअरीति आसमंतात्क्रीडासाधनमाक्रीडासाधनंवाअन्यथा एवंनभवेदिति भावः॥ ८॥

---

श्रीविश्वनाथचक्रवर्त्ती।

सर्व्वत्र हेतुः अनुगते काले स्वसमये अनुप्राप्ते सति लोभाद्यधर्म्मरूपां प्रकृतिं स्वभावम्। अनुजं भीमम्॥ ५॥ ६॥ ७॥

यदात्मनोऽङ्गमिति युधिष्ठिरस्य वन्धुशोकानुरूपैवोक्तिर्न्न तु सिद्धान्तस्पर्शिनी। सरस्वती तु तन्मुखे समुचितमेवाह। यदात्मनोऽङ्गम् अंशरूपं नारायणम् उत्सिसृक्षति ऊर्द्ध्वं वैकुण्ठं प्रति सिसृक्षति प्रस्थापयितुमिच्छति। कीदृशमङ्गम् आईषदेव क्रीडा यस्मिंस्तम्॥ ८॥

---

सिद्धांतप्रदीपः।

तातं पितरं कन्याविक्रयिणम्॥ ५॥
अनुजं भीमम्॥ ५॥ ६॥
नवेद नवेद्मि॥ ७॥
यद्यास्मिन्भगवान्अंगस्नेहास्पदमंगतातादिपदवाच्यमस्मदादिजनम् आक्रोडम् क्रीडास्थानंलोकंच उत्सिसृक्षतिसदेवर्षिणादिष्टः निष्पादितंदेवकृत्यमवशेषंप्रतीक्षते इत्यादिनासूचितः कालः समुपस्थितः संप्राप्तोऽपिकिम्॥ ८॥

---

भाषाटीका।

पिता कन्या का बेचने वाला पुत्र पिता माता का नहीं पोषने वाला ब्राह्मण वेद से विमुख शूद्र ब्रह्मवादी॥ ५॥
इत्यादि निमित्तों को मनुष्यों के काल बीतनेपर देख तथा लोभादि अधर्ममें प्रवृत्ति को देखकर युधिष्ठिर जी भीमसेन से बोले॥ ५॥
बंधुओं के देखने को पवित्र कीर्ति कृष्ण के चरित्र जानने को अर्जुन को द्वारका में भेजा है!॥ ६॥
हे भीमसेन? अब सात महीना बीतगये तुम्हारा अर्जुन किस हेतु से नहीं आता है यह बात हम नहीं जानते हैं॥ ७॥
क्या नारदजी का कहा हुआ वही कालि आगया जब कि भगवान् क्रीडा कलेवर को अन्तर्ध्यान करेंगे॥ ८॥

---

श्रीधरस्वामी।

अस्माकं सर्वपुरुषार्थहेतुः श्रीकृष्णः। अतस्तद्वियोगं विना अनिष्टं नस्यादित्याशयेनाह। यस्मात् श्रीकृष्णाद्धेतोः। एतच्चोपरिष्टादर्जुनः स्पष्टीकरिष्यति। लोकाश्च यज्ञकरणरूपात् यस्यानुग्रहात्॥ ९॥
अदूरात् सन्निहितम्। नोऽस्माकं भयम् आशंसत उत्पातान्॥ १०॥

श्रीधरस्वामी।

दैहिकानाह उर्वीति। उर्वादयो वामाः स्फुरन्ति। वेपथुः कम्पश्चहृदये वर्त्तते। एते मह्यम् आरात् सन्निहितं विप्रियं दास्यन्ति ॥११॥

भौमानाह सार्द्धत्रिभिः। शिवा क्रोष्ट्री उद्यन्तम् आदित्यमभिरौति उद्यत्सूर्याभिमुखं क्रोशति। अनलानना अग्निं मुखेन वमन्तीत्यर्थः अङ्ग हे भीम! मामभिलक्ष्य सारमेयः श्वा अभिरेभति प्लुतं भषति। अभीरुवत् निःशङ्कवत् ॥ १२ ॥

---

दीपनी।

मूलस्थ–शंसतः इत्यस्यैवार्थमाह आशंसत इति ॥ १० । ११ ॥

उद्यन्तम् उद्गच्छन्तं प्रकाशमानमिति भावः प्लुतं दीर्घं भषति स्वजातीयशब्दविशेषं करोतीत्यर्थः ॥ १२—१४ ॥

---

श्रीवीरराघवः।

भगवंतंविशिनष्टि यस्माद्भगवतोहेतोः नोऽस्माकंसम्पदादयोबभूवु यस्यचानुग्रहात्पुण्यलोकाभविष्यन्तिसभगवानुत्सिसृक्षतीत्यन्वयः संपदःभोग्यभोगोपकरणादिसमृद्धयः सपत्नविजयः शत्रुविजयः ॥ ९ ॥

हेनरव्याघ्र!दिव्यान्दिविभवान्भौमान् भूमौभवान्देहेचभवान् दारुणान्घोरानदूरात्समनंतरमेवनोऽस्माकंबुद्धिंमोहयतीतितथाभूतंभयं शंसतःसूचकानुत्पातान्पश्य ॥ १० ॥

तावद्दैहिकानुत्पातान्दर्शयतिउर्वीति अंगहेभीम! ममवामोर्वादयः पुनःपुनःस्फुरंतिचलंतिहृदयेवेपथुः कंपश्चभवतितान्येतान्युर्वादिस्फुरणानिआरात्समनंतरकालमेवमह्यमप्रियंदास्यंतिममविप्रियसूचकानिभवंतीत्यर्थः ॥ ११ ॥

एषाशिवाशृगालविशेषः अनलज्वलदाननंयस्याः साआदित्यमभि आदित्याभिमुखंरौतिअंग! हेभीमायंसारमेयःश्वाअभिमुखमभीरुवदभीतवद्रोदितिरोदनंकरोति ॥ १२ ॥

---

श्रीविजयध्वजः।

यस्यंकृष्णस्यानुग्रहात्येषामस्माकंसंपदादयआसंस्तेषांनः सकालः आसन्नइत्यन्वयः दाराभार्याः सपत्नानांशत्रूणांविजयोलोकाः स्वर्गादयः प्रजाः पुत्राः ॥ ९ ॥

कुतः आशंकसइतितत्राह पश्येति दिव्यान्सूर्यप्रकाशादीन्भौमान्भूकंपादीन्देहभवादैहिकास्तेत्रोरुस्फुरणादयः तैः सहवर्तमानाः सदैहिकास्तान्इतित्रिविधान् दृष्टव्यातिरिक्तकारणशून्यानशुभसूचकानुत्पातान्पश्यंइत्यन्वयः कीदृशान्बुद्धिमोहनंभयमदूरादिदानीमेव आशंसतः कथयतस्तस्मादाशंकइतिभावः ॥ १० ॥

दैहिकान्वक्तुत्याह ऊर्वक्षीति ममोत्संगादयः पुनः पुनः स्फुरंतिकंपंते एतेआरात् क्षिप्रंधिप्रियंमह्यंदास्यंतीत्यन्वयः ॥ ११ ॥

अनलोऽग्निराननेयस्याः सातथोक्तामुखादग्निज्वालामुद्गिरंतीत्यर्थः एषाशिवासृगालीउपगच्छन्तमरुणमादित्यमभिमुखंरौतिरटति रटः सृगालाक्रोशेकाकाह्वानेच सारमेयःश्वा ॥ १२ ॥

---

क्रमसंदर्भः।

यस्मादिति। यस्यानुग्रहमत्रात् लोकाश्च वशीकृता आसन् ॥ ९ ॥

भयं शंसतः कथयत उत्पातान् ॥ १० । ११ । १२ ॥

---

सुबोधिनी।

तत्रहेतुमाह यस्मादितिलोकाः स्वर्गादयः राजसूयादिकरणादवगम्यते ॥ ९ ॥

हेनरव्याघ्रेतिदर्शनमात्रेणनभयामितिसूचितम् उत्पाताः अनिष्टसूचकानिनिमित्तानित्रिविधान्यपिस्वतःक्रूराणि अतः आरात्दूरादेवभयं शंसंतिबुद्ध्याहिभयंनिवर्त्तयितुंशक्यते इदंतुभयंबुद्धिमेवमोहयति ॥ १० ॥

तत्राध्यात्मिकंनिमित्तमाह उर्वक्षीतिप्रार्थयंगत्वेऽपिनैकवद्भावः भिन्नस्वभावत्वेनदोषख्यापनार्थः वेपथुः कंपः चकाराच्छितादयः आरात्समीपे ॥ ११ ॥

भौतिकमनिष्टमाह शिवेतिएषाइदानीमपिदृष्टिगोचरा अनलाननास्वभावत एवाग्निमुखाअभितोरौतिपरीत्यपरीत्येत्यर्थः सारमेयः श्वाअभिपरितः रोदितिदुष्टशब्दंकरोतिमत्तोभयंनमन्यते ॥ १२ ॥

---

शस्ताः कुर्वन्ति मां सव्यं दक्षिणं पशवोऽपरे ।
वाहांश्च पुरुषव्याघ्र ! लक्षये रुदतो मम ॥ १३ ॥
मृत्युदूतः कपोतोऽयमुलूकः कम्पयन्मनः ।
प्रत्युलूकश्च कुह्वानैर्विश्वं वै शून्यमिच्छतः ॥ १४ ॥
धूम्रा दिशः परिधयः कम्पते भूः सहाद्रिभिः ।
निर्घातश्च महांस्तात ! साकञ्च स्तनयित्नुभिः ॥ १५ ॥
वायुर्वाति खरस्पर्शो रजसा विसृजंस्तमः ।
असृग्वर्षन्ति जलदा वीभत्समिव सर्व्वतः ॥ १६ ॥

श्रीविश्वनाथचक्रवर्त्ती ।

श्रीकृष्णवियोगं विनैतादृशमरिष्टं न स्यादित्याशयेनाह यस्मादित्यादि । लोकाः यज्ञादिप्राप्याः ॥ ९ ॥
भयं शंसतः सूचयतः ॥ १० ॥
दैहिकानुत्पातानाह ऊर्विति । वामा इत्यर्थः बहुबचनमार्षम् ॥ ११ ॥
भौमानाह । शिवा क्रोष्ट्री आदित्यम् अभि उद्यत्सूर्याभिमुखं क्रोशति । अनलानना अग्निं मुखेन वमन्ती । अङ्ग हे भीम ! । मामभिवीक्ष्य सारमेयः श्वा प्लुतं रौति रोदिति ॥ १२ ॥

सिद्धांतप्रदीपः ।

यस्माद्भगवतः ॥ ९ ॥
नोऽस्माकमदूरात् अल्पेनकालेन ॥ १० ॥
तत्रदैहिकानुत्पातानाह उर्वक्षीति आरात्त्वरितम् ॥ ११ ॥
भौमान्दर्शयति शिवेतिसार्द्धैस्त्रिभिः अनलवद्रौद्राः शब्दा आननेयस्याः एषाशिवाफेरुः उद्यंतमादित्यमभिउद्यदादित्याभिमुखंरौति अंगहेभ्रातः ! सारमेयःश्वा अभीरुवदभीतवत् मामभिमुखंरोदितिरोदनंकरोति ॥ १२ ॥

भाषा टीका ।

जिससे हमारी संपत्ति राज्य स्त्री प्राण कुल प्रजा शत्रुओं का विजय सब लोक भी जिस के कृपा से भये हैं ॥ ९ ॥
हे पुरुष ? व्याघ्र दैविक दैहिक भौतिक बुद्धि के मोहक घोर भय को दूरही से दिखाते हुये उत्पातों को देखो ॥ १० ॥
हे भीम मेरे वाम उरु नेत्र वाहु फरकते हैं हृदय में कम्प होता है थोड़े देर में भय प्रदान करेंगे ॥ ११ ॥
यह शृगाली मुख से अग्नि को निकालती हुयी उदय होते सूर्य के सन्मुख रोदन करती है हे भीम ! मेरे सन्मुख निर्भय होकर यह कुत्ता रोदन करता है ॥ १२ ॥

श्रीधरस्वामी ।

शस्ताः गवादयः मा सव्यं वामं कुर्वन्ति । अपरे गर्दभादयः प्रदक्षिणं कुर्वन्ति । वाहान् अश्वान् ॥ १३ ॥
अयं कपोतो मृत्युदूतः मृत्युसूचकः । उलूकः पेचकः । प्रत्युलूकः तत्प्रतिपक्षो वकः काको वा । कुह्वानैः कुत्सितशब्दैः । विश्वं शून्यमिच्छतः ॥ १४ ॥
धूम्रा धूसराः दिशः परिधय इव अग्निं लोकमावृण्वन्ति । दिव्यानाह सार्द्धद्वाभ्याम् । निर्घातो निरभ्रवज्रपातः । स्तनयित्नवोऽभ्रगर्जितानि तैः सह ॥ १५ ॥
तमो विशेषेण सृजन् ॥ १६ ॥

दीपनी ।

परिधय इति । अग्निं यज्ञाग्निं यथा परिधयः यज्ञाग्निवेष्टनास्तत्कुशा आवरणं कुर्वन्ति तद्वित् तद्वदित्यर्थः ॥ १५—१७ ॥

श्रीवीरराघवः ।

प्रशस्तागवाश्वादयः पशवोमांसव्यमात्मनां सव्यप्रदेशेकुर्वन्त्यपरेअप्रशस्ताः खरमहिष्यादयः तुदक्षिणंकुर्वंतिहेपुरुषव्याघ्र!ममवाहान्गजाश्वादीन्रुदतोरोदनंकुर्वाणान्लक्षये ॥ १३ ॥

अयमुलूकोमृत्योर्दूतः तद्वदनिष्टकरः सचप्रत्युलूकश्चमदभिमुखमन्यश्चउलूकश्चानावेतौ अनिद्रौनिद्रारहितौकुह्वानैःकुकुइत्येवंविधैर्ह्वानैः शब्दैःकितितच्छब्दानुकारः इमंदेशंशून्यमिच्छतः सूचयतः ॥ १४ ॥

दिशोधूम्राः परिधयश्चदृश्यन्ते इतिशेषः अद्रिभिः सहभूः पृथ्वीकम्पतेस्तनयित्नुभिर्मेघैरकालिकैः सहमहान्निर्घातोऽशनिनिर्घोषश्चासीत् ॥ १५ ॥

खरःकठिनःस्पर्शोयस्यसवायुर्धूलिंबहुशः विसृजन्विशेषेणसृजन्वातिजलदामेघाः सर्वतोबीभत्समिवासृग्रुधिरंवमंतिमुंचंति ॥१६॥

श्रीविजयध्वजः ।

शस्ताः भारद्वाजादयः मां सव्यमप्रदक्षिणम् अपरेपशवो वस्तगर्दभादयः मांप्रदक्षिणंकुर्वंति वाहानश्वादींश्चरोदनंकुर्वतः मनसानिरूपयामि ॥ १३ ॥

मृत्युदूतः मरणसूचकः कपोतः शिलाकणाशनपक्षीअग्रेपदंकरोति यत्कपोतः पदमग्रेकृणोतीतिमंत्रात् इदंस्वप्नेदर्शनमिति ज्ञातव्यं मे मनः कंपयन्नुलूकःप्रत्युलूकश्चमिथोहुंकारैर्जगच्छून्यमिच्छतः सर्वनाशेयथातथाह्वानंकुरुतइत्यर्थः कुह्वानमितिकेचित्पठंति कुह्वानंनामतज्जातिध्वनिविशेषः ॥ १४ ॥

परिधयः दिशः धूम्राः धूम्रवर्णाः ज्वलिताः परिवेषा वा स्तनयित्नुभिरशनिभिरकालमेघैर्वासाकंमहान्निर्घातः निर्मेघगर्जितम् ॥ १५ ॥

वायुः शंसत्यपकर्षकालमित्याह वायुरिति रजसाधूल्यातमोऽधकारंविसृजन्निष्ठुरस्पर्शः वायुर्वाति अथदिव्यानाह असृगिति जलदाः सर्वतोदिशंबीभत्समिवभीषकमिवअसृग्रुधिरंवर्षंति ॥ १६ ॥

क्रमसंदर्भः ।

शस्ता इति । मम वाहानित्यन्वयः ॥ १३ ॥
उलूकस्तथा तत्प्रतिपक्षोऽन्य उलूकश्च यो यो मनः कम्पयन् वर्त्तेते तौ द्वावनिद्रौ सन्तौ ॥ १४ ॥
दिशः सूर्यादिपरिधयश्च धूम्राः ॥ १५ ॥
बीभत्सं बीभत्सितव्यं यथा स्यात् तथा । इवेति वाक्यालंकारे ॥ १६ ॥

सुबोधिनी ।

शस्ताः अश्वादयः अपरेगर्दभादयः वाहाः अश्वाः चकाराद्गवादयः पुरुषव्याघ्रेतिसंबोधनंतस्यशंकाभावसूचकं ममापिअश्वाः सर्वसुखेनविद्यमानाअपिरोदनंकुर्वंतइवलक्ष्यंते ॥ १३ ॥

अयंकपोतोमृत्युदूतः मृत्युसमीपेआकारणार्थमागतः दक्षिणादिशामागत्यशब्दकरणादवसीयते कपोतोऽयमितिभिन्नवाक्यम् उलूकादिभिन्नःप्रत्युलूकः काकजातिविशेषोवा चकारादन्येऽपियेषांशाश्वतिकोविरोधः कुह्वैः कुत्सितशब्दैः नविद्यते निद्रायाऽयांतौशून्यंजगदिच्छतः ॥ १४ ॥

आधिदैविकानाहधूम्रादिशइति धूमयुक्तादिशश्चपरिधयः मध्येत्रैलोक्यंज्वलदग्निरित्यर्थः निर्घातःनिरभ्रविद्युत्पातः मेघाभावेऽपिगर्जितानिच ॥ १५ ॥

खरस्तीक्ष्णः स्पर्शोयस्यरजसापांसुवृष्ट्यातमः अंधकारम् असृक्रुधिरं बीभत्समिवविष्ठारूपमिवपश्यति ॥ १६ ॥

श्रीविश्वनाथचक्रवर्त्ती ।

शस्ताः गवादय- । सव्यं वामम् । अपरे गर्दभाद्याः प्रदक्षिणम् । वाहान् अश्वान् ॥ १३ ॥
प्रत्युलूकः उलूक प्रतिपक्षो घूकः काको वा ॥ १४ ॥
धूम्रा धूम्रवर्णा दिशः परिधयः परिधितुल्याः । निर्घातः आकस्मिकघोरशब्दः । स्तनयित्नवो निरभ्रगर्जितानि ॥ १५ ॥
तमोऽन्धम् । विशेषेण सृजन् । असृक् रक्तम् ॥ १६ ॥

सूर्य्यं हतप्रभं पश्य ग्रहमर्दं मिथो दिवि ।
ससङ्कुलैर्भूतगणैर्ज्वलिते इव रोदसी ॥ १७ ॥
नद्यो नदाश्च क्षुभिताः सरांसि च मनांसि च ।
न ज्वलत्यग्निराज्येन कालोऽयं किं विधास्यति ॥ १८ ॥
न पिबन्ति स्तनं वत्सा न दुह्यन्ति च मातरः ।
रुदन्त्यश्रुमुखा गावो न हृष्यन्त्यृषभा व्रजे ॥ १९ ॥
दैवतानि रुदन्तीव स्विद्यन्ति प्रचलन्ति च ।
इमे जनपदा ग्रामाः पुरोद्यानाकराश्रमाः ।
भ्रष्टश्रियो निरानन्दाः किमघं दर्शयन्ति नः ॥ २० ॥

सिद्धांतप्रदीपः ।

हे पुरुषव्याघ्र ! शस्ताः गवादयः मां सव्यंवामं कुर्वंति अपरे अशस्ताः खरादयः ॥ १३ ॥

अयंसमीपेकपोतः क्षुद्रकपोतः मृत्युदूतइति ममनः कंपयन्नूवर्त्तते उलूकोघूकः प्रत्युलूकस्तदभिमुखंप्रतिपक्षोघूकश्चतावेतावनि द्रौनिद्रारहितौकुद्वानैः कुत्सितैः शब्दैर्विश्वंशून्यमिच्छतः ॥ १४ ॥

धूम्राः धूसराः परिधयः परिध्याकाराः दिशोलक्ष्यंते दिव्यानाह निर्घातइति सार्द्धद्वाभ्याम् स्तनयित्नुभिरकालिकैर्मेघैः सह निर्घातोवज्रपातआसीत् ॥ १५ ॥

खरस्पर्शः कठिनस्पर्शः ॥ १६ ॥

---

भाषाटीका ।

प्रशस्त पशु मेरे बांये तरफ जाते हैं अशुभ पशु दाहिने तरफ जाते हैं हे पुरुषव्याघ्र ? हमारे घोड़ों को रोते हुए देखता हूं ॥ १३ ॥

मृत्यू का दूत यह कबूतर और उलूक काक यह सब पक्षी मन को कम्पाते हुये सोते नहीं हैं दुष्ट शब्दों से संसार को शून्य करना चाहते हैं ॥ १४ ॥

दिशा सब धूम्र वर्ण होगई हैं चन्द्र सूर्य के मंडल होगये हैं पर्वतों के सहित भूमि कांपती है हे तात ! मेघों के सहित महा वज्राघात होता है ॥ १५ ॥

धूली से अंधकार करता हुआ कठिन स्पर्श वायु बहता है मेघ सब रक्त की वर्षा करते हैं सब ठिकाने घिमाइन है ॥ १६ ॥

---

श्रीधरस्वामी ।

ग्रहाणां मर्दं युद्धम् । भूता रुद्रानुचराः तेषां गणैः संकुलैः व्यामिश्रैः प्राणिभिः सहितैः रोदसी द्यावापृथिव्यौ ज्वलिते प्रदीप्ते इव पश्येति ॥ १७ ॥

पुनर्भौमानाह नद्य इति सार्द्धैस्त्रिभिः । प्राणिनां मनांसि च ॥ १८ ॥

न दुह्यन्तीति कर्मकर्त्तर्यार्षं न प्रस्नु वन्तीत्यर्थः ॥ १९ ॥

दैवतानि प्रतिमाः । अघं दुःखम् ॥ २० ॥

---

दीपनी ।

( सरांसि च मनांसि चेत्यत्र क्षुभिता इत्यस्य लिङ्गव्यत्ययेन क्षुभितानीति प्रयोज्यम् । किंचात्र पुनर्भौमानाहेति स्वाम्युक्त्याभासेन मनसः पार्थिवत्वेदर्शितेऽपि शाखान्तरेण तद्विरोधो नाशङ्कनीयः । मनसः अपंचीकृतपंचमहाभूतसत्वकार्यत्वेऽपि अन्नमशितं त्रेधा विधीयते इत्यारभ्य अन्नमयं हि सौम्य मन इत्यन्तेन छान्दोग्योपनिषद्दीयषष्ठप्रपाठकान्तर्गतपंचमखण्डस्थब्राह्मणचतुष्टयेन तस्याप्युपचितत्वेन भौतिकत्वदर्शनादिति ॥ १८—२४ ॥

---

श्रीवीरराघवः ।

हताप्रमायस्यतथाभूतंसूर्यंपश्यदिविग्रहाणांभृग्वंगीरादीनां परस्परंविमर्दकलहंपश्यसुनितरांसंकुलैर्भूतानापिशाचानांगणै रोदसीस्य व्ययंद्यावापृथिव्योर्वर्त्तेतेज्वलितेइवदृश्येते ॥ १७ ॥

तदाप्राक्स्रोतसः सरांसिभूतानांमनांसिचक्षुमिताः संवलिताभवंतिशुष्काभवंतीतिवा अग्निराहवनीयादिराज्येननज्वलत्ययंकालः किं दुःखंविधास्यत्यहंनवेद्मीतिभावः ॥ १८ ॥

वत्साः स्तनंस्तन्यंनपिबन्ति मातरश्चवत्सान्प्रतिनदुह्यन्तिस्तन्यमितिशेषः गावः अश्रूणिमुखेयासांताः रुदान्तिव्रजेगोष्ठेऋषभान हृष्यान्तिच॥ १९ ॥

दैवतानिदेवप्रतिमारुदन्तीवखिद्यन्तिगात्रप्रस्वेदंमुंचंति उच्चलतीतीवउत्प्लुत्यपतन्तीवदृश्यन्ते पुरादीनामाश्रयाइमेजनपदादेशाः ग्रामाश्च भ्रष्टाश्रीर्येभ्योनिर्गतआनंदोयेभ्यः तथाभूताद्दृश्यंते नोऽस्माकंकिमघंदुःखंदर्शयिष्यंतिवयंतु न विद्मइतिभावः ॥ २० ॥

---

श्रीविजयध्वजः ।

दिविव्योम्निपरस्परंग्रहमर्दंग्रहयुद्धं भगणेनक्षत्रसमूहेससंकुलेसांकर्यसहिते भावप्रधानत्वद्योतनायससंकुलइत्युक्तं तेनापिभयप्राप कत्वमाह तुशब्देनैवंचेदेवंस्यादितिज्योतिः शास्त्रंप्रमाणीकरोति रोदसीद्यावापृथिव्यौज्वालाकुलेइवभातः ॥ १७ ॥

पुनश्चभौमानाह नद्यइतिस्वर्नद्यादीनांदिव्यत्वसंग्रहार्थमत्रनापाठि नदाःपुन्नद्यःशोणादयः क्षुभिताःनिमित्तमंतरेणकलुषाः नित्यमाज्ये नज्वलनस्वभावोवन्हिः आज्येननज्वलतीतियस्मादतोऽयंकालः किंशमलंविधास्यति ॥ १८ ॥

व्रजेगोष्ठे अश्रुमुखेयासांतास्तथोक्ताः नहृष्यन्तिनाविष्किरन्तितदाघातं नकुर्वन्तीत्यर्थः दैवतानिप्रतिमाः रोदनादीयोभावःतंकुर्वन्ति ॥१९॥

भ्रष्टश्रियः अतएवनिरानन्दाः समृद्धिरहिताः सुखमुक्तावा अघंव्यसनम् ॥ २० ॥

---

क्रमसंदर्भः ।

स संकुलैरित्यत्र स इति स एव त्वामित्यर्थः १७ । १८ । १९ । २० । २१ । २२ । २३ । २४ । २५ । २६ । २७ ॥

---

सुबोधिनी ।

नात्रतिरोहितामिवंग्रहाणां शुक्रादीनांयुद्धंपश्येत्युभयत्रसंबंधः दिविआकाशेनतुशास्त्रमात्रे सम्यक् संकुलैः भूतप्रेतपिशाचा दीनां-गणैः हेतुभिर्द्यावापृथिवीज्वलितेएव तेहिमध्येस्थिताघातुकारुद्रगणाः उपर्यधश्चज्वालयंतीत्यर्थः वाद्यादिहेतुव्यतिरेकेणापि क्षुभिताः पंकिलावर्त्तमानजलाः मनांसिवास्मदादीनाम ॥ १७ ॥

अग्निः आज्येननज्वलति जलेनेवएवं सर्वस्यान्यथाकर्त्ताकालः किं विधास्यतीति नज्ञायत इत्यर्थः ॥ १८ ॥

तेषांनिमित्तानामवांतरफलमपि जातमित्याह नपिबंतीति क्षुधिताअपिवत्सास्तनंनपिबंतीत्यर्थः मातरः गावः सर्वेषामेवदुग्धोपजी वनात् नदुह्यंतिदोहनंनकारयंतीत्यर्थः अश्रूणिमुखेयासांऋषभापुष्टावलीवर्दाः ॥ १९ ॥

दैवतानिप्रतिमाः खिद्यंतिखेदयुक्तानि भवंति उच्चलंतिदेशांतरे गच्छंति भ्रष्टाश्रीर्येषांनिर्गतः आनंदोयेभ्यः अघंदुः खजनकंपापंनः अस्मभ्यम ॥ २० ॥

---

श्रीविश्वनाथचक्रवर्त्ती ।

ससंकुलैः प्राण्यन्तरसहितैः । रोदसी द्यावापृथिव्यौ ॥ १७ ॥　　पुनर्भौमानाह नद्य इति ॥ १८ ॥

न दुह्यन्तीति कर्मकर्त्तर्यार्षं न प्रस्नु वन्तीत्यर्थ- ॥ १९ ॥

दैवतानि प्रतिमाः ॥ २० ॥

---

सिद्धांतप्रदीपः ।

ग्रहमर्दंग्रहयुद्धम सुसंकुलैर्नानाजातितयाव्यामिश्रैर्भूतगणैः रोदसीत्यव्ययंद्यावापृथिव्यौज्वलितेप्रदीप्तेइवपश्य ॥ १७ ॥

पुनर्भौमानाह नद्यइतिसार्द्धैस्त्रिभिः अग्निरावहनीयादिः ॥ १८ ॥

वत्साः स्तनंनपिबंतिबलात्प्रेर्यमाणान्वत्सान्प्रतिमातरोऽपिनदुह्यंतिस्तन्यमितिशेषः ॥ १९ ॥

दैवतानिप्रतिमारूपाणिखिद्यंतीवप्रस्वेदंमुंचंतीवदृश्यंते जनपदादयोनिर्गत आनन्दोयेभ्यस्तेऽतोभ्रष्टाश्रियोदृश्यंते अतएवनोऽस्माकंकिमयं दुःखंदर्शयंति दर्शयिष्यंति ॥ २० ॥

---

मन्य एतैर्महोत्पातैर्नूनं भगवतः पदैः ।
अनन्यपुरुषश्रीभिर्हीना भूर्हतसौभगा ॥ २१ ॥
इति चिन्तयतस्तस्य दृष्टारिष्टेन चेतसा ।
राज्ञः प्रत्यागमद्ब्रह्मन् ! यदुपुर्याः कपिध्वजः ॥ २२ ॥
तं पादयोर्निपतितमयथापूर्व्वमातुरम् ।
अधोवदनमब्बिन्दून् सृजन्तं नयनाब्जयोः ॥ २३ ॥
विलोक्योद्विग्नहृदयो विच्छायमनुजं नृपः ।
पृच्छति स्म सुहृन्मध्ये संस्मरन्नारदेरितम् ॥ २४ ॥

भाषाटीका।

देखो सूय का प्रभाहत होगई है आकाश में परस्पर ग्रहों का युद्ध होता है प्राणियों के सहित भूमि आकाश जलतेसे हैं ॥ १७ ॥
नदनदी सरोवर मन क्षुभित होगये हैं घृत से अग्नि नहीं जलती है जाने क्या करैगा ॥ १८ ॥
बछरा दूध नहीं पीते हैं गऊ दूध नहीं देती हैं गऊ अश्रु मुख से रोती हैं ब्रज मे वृषभ हृष्ट नहीं होते हैं ॥ १९ ॥
देवताओं की प्रतिमा रोती सी हैं पसीना देती हैं उछलती हैं यह सब देश ग्राम बगींचा आकर आश्रम भ्रष्ट श्री होगये हैं ॥ २० ॥

---

श्रीधरस्वामी।

एतैः कृत्वा न विद्यते ऽन्येषु पुरुषेषु श्रीर्वज्रांकुशादिशोभा येषां तैर्भगवतः पदैर्हीना भूरित्यहं मन्ये ॥ २१ ॥
तस्य राज्ञ इत्येवं दृष्टानि अरिष्टानि येन तेन चेतसा चिन्तयतः सतः ॥ २२ ॥
अयथापूर्वं निपतितम् । तदेवाह आतुरमित्यादि । अब्बिन्दून् अश्रूणि नेत्राभ्यां विसृजन्तमित्यर्थः ॥ २३ ॥
उद्विग्नं कम्पितं हृदयं यस्य विच्छायं विगतकान्तिम् ॥ २४ ॥

---

श्रीवीरराघवः।

इदंत्वहमुद्भावयामीत्याहमन्यइतिएतैर्महोत्पातैरिदन्त्वहंमन्येउद्भावयामि किमनन्यपुरुषश्रीभिर्नविद्यतेऽन्यपुरुषेषु श्रीर्येषुतैरन्यपुरुषेष्व सम्भावितकान्तिभिर्भगवतः श्रीकृष्णस्यपदैः पादविन्यासैर्हीनारहिता अतएवहतंसौभगंसौंदर्य्यंयस्यांतथाभूताभूः पृथ्वीनूनंभवि-ष्यतीति ॥ २१ ॥
इत्थंदृष्टानिज्ञातान्यरिष्टानियेनतेनचेतसाराज्ञोयुधिष्ठिरस्यचिंतयतः सतःहेब्रह्मन् ? कपिध्वजोऽर्जुनः यदुपुर्याः द्वारकायाः प्रत्यागमत् आगतवान् ॥ २२ ॥
तमागतंपादयोर्निपतितमनुजंनृपोयुधिष्ठिरः विलोक्योद्विग्नंभीतंहृदयंयस्यतथाभूत्वानारदोक्तं संस्मरन् सुहृदांमध्येपृच्छतिस्मापृच्छत् कथंभूतं ययापूर्ववदनवास्थितमातुरंदुःखितमधोवदनमवाङ्मुखं नयनाब्जयोरश्रुविन्दून्सृजन्तंमुंचन्तं विच्छायंविगतकान्तिम् ॥ २३ । २४ ॥

---

श्रीविजयध्वजः।

एषामुत्पातानांफलंस्वयमेवानुमिनोमीत्याह मन्यइति एतैर्महोत्पातैः प्रायेणयादवेंद्रस्यभगवतः पदैर्हीनात्यक्ताअतएवहतसौभगाभू-र्महीतिमन्ये कथंभूतैःपदैःअनन्यपुरुषश्रीभिर्नान्येपुरुषाः श्रियश्चसौन्दर्येसाम्येआधिक्येचवर्ततेयेषांतान्यनन्यपुरुषश्रीणितैः दीर्घश्छांदसः अनन्यैर्भगवदेकशरणैः पुरुषैःश्रीभिश्चहीनेतिवा ॥ २१ ॥
दृष्टारिष्टेनदृष्टाशुभेनव्यसनमनुमिमानेनचेतसातस्ययुधिष्ठिरस्यराज्ञइतिचिंतयतोऽनुजंप्रतिकथयतश्चसतइतिशेषः कपिध्वजोऽर्जुनः यदु पुर्याःद्वारकायाः हस्तिनपुरंप्रत्यागमदित्यन्वयः ॥ २२ ॥
अयथापूर्वंपूर्वंयथातथानभवतीति आतुरंसंभ्रांतंरोगिकल्पंवा अधोवदनमवाङ्मुखंअपविन्दून् जलविन्दून् ॥ २३ ॥
विच्छायंविगतश्रीकमनुजंनिरीक्ष्योद्विग्नहृदयः त्वरितमनःपृच्छतिस्मअपृच्छदित्यन्वयः ॥ २४ ॥

युधिष्ठिर उवाच ।

कच्चिदानर्त्तपुर्य्यां नः स्वजनाः सुखमासते ।
मधुभोजदशार्हार्हाः सात्वतान्धकवृष्णयः ॥ २५ ॥
शूरो मातामहः कच्चित् स्वस्त्यास्ते वाथ मारिषः ।
मातुलः सानुजः कच्चित् कुशल्यानकदुन्दुभिः ॥ २६ ॥
सप्त स्वसारस्तत्पत्न्यो मातुलान्यः सहात्मजाः ।
आसते सस्नुषाः क्षेमं देवकीप्रमुखाः स्वयम् ॥ २७ ॥
कच्चिद्राजाहुको जीवत्यसत्पुत्रोऽस्य चानुजः ।
हृदीकः ससुतोऽक्रूरो जयन्तगदसारणाः ॥ २८ ॥

सुबोधिनी ।

एतेषांपापंसंभावयतिमन्यइति महोत्पातैर्हेतुभिः कृत्वाभूः पदैर्हीनेतिमन्ये नविद्यते अन्यपुरुषेषुश्रीः ध्वजवज्रादिरूपायेषाम् ॥ २१ ॥
एवमन्वयव्यतिरेकाभ्यांसामीचीन्यंसर्वभगवदन्वयात् सर्वमेवानिष्टंतत्सांनिध्याभावादिति निरूपितं सूचकानांशीघ्रफलमाह इति चिंतयतइति दृष्टमालोचनेनअरिष्टंयेनतादृशचेतसाराज्ञः सतः यदुपुर्याः द्वारकायाः कपिध्वजइति शीघ्रागमनंसूचितम् ॥ २२ ॥
प्रतिकूलतयाआगमनेआगत्यवचनादिकमनुक्त्वैवपादयोः पतितंसर्वदायथायाति नतथेत्यपूर्वमातुरंविच्छायंकृशं दुःखविकाराभावेऽपिबहुकालाभ्यासात् स्वतएवावृविंदवः नेत्रकमलाभ्यांपतंतिकमलपदंजलावतरणसूचकम् ॥ २३ ॥
विगताच्छायाकांतिर्यस्य एतादृशेनसहसंभाषणस्यानुचितत्वमपि अनुजत्वात्तथानृपत्वाद्दुनिमित्तज्ञानं तेनदर्शनमात्रेणाभाव्यर्थ निश्चयज्ञानमिति पृच्छति सुहृदांमध्येएकांततुल्येदृष्टश्रुताभ्यामनुमानशंकीअनेनार्जुनतुल्योऽयमपीत्युक्तं भवति स्मेतिप्रसिद्धे अनेनसर्वज्ञानंतस्यभगवत्परत्वमित्युक्तम् ॥ २४ ॥

---

श्रीविश्वनाथचक्रवर्त्ती ।

एतैः कृत्वा न विद्यते अन्येषु पुरुषेषु श्रीर्वज्रांकुशादिशोभा येषां तैर्भगवतः पदैर्हीना भूरित्यहं मन्ये ॥ २१ । २२ । २३ ॥
विच्छायं विगतकान्तिम् ॥ २४ । २५ ॥

---

सिद्धांतप्रदीपः ।

नास्त्यन्यपुरुषेषुश्रीः शोभायेषांतैर्भगवतः पदैर्भूर्हीना ऽतएवहतसौभगेति एतैर्महोत्पातैरहंमन्ये ॥ २१ ॥
दृष्टान्यरिष्टानियेनतेनचेतसा ॥ २२ ॥ ॥ २३ ॥
विच्छायम् विगतकांतिम् ॥ २४ ॥

---

भाषाटीका ।

भ्रष्ट श्रीआनन्द रहित यह देशादिक हमारे किस पाप को दिखाते हैं हम जानते हैं कि इनमहा उत्पातों से अकट अनन्यपुरुष श्री जो भगवान के पदतिनों से हीनहत सौभग यह भूमि होंगी ॥ २१ ॥
हे ब्रह्मन् ! ऐसे अरिष्ट देखे चित्त से युधिष्ठिर को चिंता करते ही में द्वारिका से अर्जुन जी आगये ॥ २२ ॥
तिनकों पादों में पड़े हुये पूर्व से अन्यथा रूप दुखित अधो मुख नेत्र कमलों से जलबिंदु गिराते हुये विगत कांति छोटे भ्राता कों देख कर उद्विग्न हृदय राजा नारद के बचन को स्मरण करते सुहृदों के मध्य में पूछने लगे ॥ २३ ॥ २४ ॥

---

श्रीधरस्वामी ।

स्वजनाः बान्धवाः ॥ २५ ॥
किं वक्ष्यतीति शङ्कया व्यवहितक्रमेण पृच्छति शूर इत्यादिना । मारिषः मान्यो मातामहः आनकदुन्दुभिर्वसुदेवः ॥ २६ ॥
स्वसारः परस्परम् । वसुदेवक्षेमात् तासामपि क्षेमं पृष्टमेव पृथगपि पृच्छति स्वयमिति ॥ २७ ॥
आहुक उग्रसेनः । असन्पुत्रो यस्य । अतएव जीवनमात्रमेव पृष्टम् । अनुजः देवकः । हृदीकसुतः कृतवर्मा । जयन्तादयः श्रीकृष्ण भ्रातरः ॥ २८ । २९ ॥

दीपनी।

मधुभोजादयः सर्व्वे यदुवंशजाताः एतेषां संक्षिप्तपरिचयो नवमस्कन्धीयचतुर्विंशाध्याये विशेषस्तु महाभारते द्रष्टव्य इति २५-३६

श्रीवीरराघवः।

प्रश्नमेवाहकच्चिदित्यादिनायावदध्यायसमाप्ति ... अयं तावत्सामान्यतः सर्वानिष्टान्बन्धून्पृच्छति कच्चिदि तिमध्वादयोयादवांतरविशेषाः तच्चनवमेस्फुटंनोऽस्माकंस्वजनबन्धवः आनर्त्तपुर्यांद्वारकायांसुखंयथातथा आसतेकच्चिदासते किंतच्च मदिष्टमितिकाच्चिच्छब्दंप्रयुंजानास्यभावः एवमुत्तरत्रापि द्रष्टव्यम् ॥ २५ ॥

अथोक्तविधार्जुनदर्शनेनकृष्णनिर्याणंसम्भाव्य ... पश्चाद्देवभवत्वित्यभिप्रायेणतावत्क्रमशोविशेषेणपृच्छति शूरइत्या दिनाअस्माकंमातामहःशूरः हेपार्थ ! हेमारिष ! सविसर्गपाठेशूरविशेषणंमारिषशब्दः सौम्यशब्दपर्यायः स्वस्तितथातथास्तेकच्चित्तथा नोमातुलआनकदुंदुभिर्वसुदेवः सानुजः कुशलीकुशलमस्यास्तीति तथाभूतआस्तेकच्चित्वसुदेवस्यानुजास्तु देवभागो देवश्रवा आनकः संजयः श्यामकः कंकः समिको वत्सरो वृकश्चेति नव ॥ २६ ॥

सप्तेतिस्वसारउग्रसेनस्येतिशेषः सप्तभगिन्यः तस्यानकदुन्दुभेः पत्न्यःमातुलान्यः अस्मन्मातुलस्यवसुदेवस्यस्त्रियः इन्द्रवरुणभव शर्वच्छेत्यानुगागमेङीषिचमातुलानीतिशब्दोव्युत्पादितः आत्मजैः सहिताः स्नुषाभिः सुतभार्याभिः सहितादेवकीप्रभृतयः देवकीश्रुत देवाशान्तिदेवोपदेवाश्रीदेवादेवरक्षितासहदेवाचेत्येताः स्वयंक्षेमंयथातथाआसतेकच्चित् ॥ २७ ॥

असन्दुरात्माकंसः पुत्रोयस्यसआहुकः उग्रसेनोराजाजीवतिकच्चित् अस्याहुकस्यचानुजोदेवकश्चजीवति कच्चिदित्यन्वयः हृदी कस्यश्वफल्कस्यसुतोऽक्रूरः जयंतादयोयेचगदप्रद्युम्नादयोवसुदेवपुत्राः तेसर्वेकुशलमासतेकच्चित् ॥ २८ ॥

श्रीविजयध्वजः।

आनर्तपुर्यांद्वारवत्यांमधवश्चभोजाश्चदशार्हाश्चअर्हाश्चसात्वताश्चअन्धकाश्चवृष्णयश्चमधुभोजदशार्हार्हसात्वतांधकवृष्णयः ॥ २५ ॥

मारिषःआर्यःमातामहः मातुः सहोदरः आनकदुंदुभिर्वसुदेवः कच्चिच्छब्दः प्रश्नार्थे कुशलीसुखी ॥ २६ ॥

वसुदेवस्यसप्तस्वसारःसहोदर्यः कुशलवत्यः किं तस्यवसुदेवस्यपत्न्यः अस्माकंमातुलान्यः मातुलभार्याः आत्मजैःसहवर्तमानाः अनेनतत्पुत्राणांचकुशलप्रश्नःकृतइतिज्ञातव्यं स्नुषाभिःपुत्रभार्याभिःसहिताः ॥ २७ ॥

असन्दुष्टः पुत्रः कंसनामायस्यसोऽसत्पुत्रः आहुकउग्रसेनोऽस्यानुजोदेवकः ससुतः कृतवर्माख्यपुत्रसहितोहृदीकः पुत्रैः सहिता अक्रूरोवा ॥ २८ ॥

क्रमसंदर्भः।

असन् कृष्णद्वेषी पुत्रो यस्य सः। तादृशपुत्रत्वात् अद्यापि लज्जितोऽसौ कदाचिदिह वा त्यक्तवानित्यभिप्रायेण जीवतीत्युक्तम् ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥

सुबोधिनी।

आनर्तपुरीद्वारकायांपूर्वरक्षकत्वेनषड्विधाउक्ताः तेसुखिनः कच्चित्तेचेत्सुखिनः तदासमूलत्वात्स्वास्थ्यंस्वयमेवज्ञानंभविष्यतीतिप्रश्नः २५

तान्सामान्यतः प्रश्नविशेषेणपृच्छतिशूरइतिमारिषः सूरः संबोधनंवावाशब्देनद्वंद्वत्वात्तदकौशलेऽपिनचिंतेतिसूचितम् अतएवपूर्वकै लक्षणयाय अथअग्रिमाणांकुशलीसर्वत्रसप्तवेआनकदुंदुभिरितिसूचितम् ॥ २६ ॥

सहात्मजाइतिसमस्तपदमनेकविशेषा ॥ २७ ॥

आहुकः पितृनाम्नानिरूपितः उग्रसेनः असत्पुत्रोयस्यअविद्यमानपुत्रोवा अतएवदुःखापनोदनार्थंराज्येऽधिकृतः हृदीकः ससुतः अक्रूरोऽपिजयंतादयोभ्रातरः सर्वेनवमेस्पष्टाभविष्यंति ॥ २८ ॥

श्रीविश्वनाथचक्रवर्त्ती।

मारिषो मान्यः २६ ॥

स्वसारः परस्परं भगिन्यः ॥ २७ ॥

आहुक उग्रसेनः। असन् पुत्रो यस्य अतएव जीवनमात्रं पृष्टम्। अनुजो देवकः। हृदीकसुतः कृतवर्मा। जयन्तादयः कृष्ण भ्रातरः ॥ २८ ॥ २९ ॥

आस्ते कुशलं कच्चिद्ये च शत्रुजिदादयः ।
कच्चिदास्ते सुखं रामो भगवान् सात्वतां प्रभुः ॥ २९ ॥
प्रद्युम्नः सर्ववृष्णीनां सुखमास्ते महारथः ।
गम्भीररयोऽनिरुद्धो वर्द्धते भगवानुत ॥ ३० ॥
सुषेणश्चारुदेष्णश्च साम्बो जाम्ववतीसुतः ।
अन्ये च कार्ष्णिप्रवराः सपुत्रा ऋषभादयः ॥ ३१ ॥
तथैवानुचराः शौरेः श्रुतदेवोद्धवादयः ।
सुनन्दनन्दशीर्षण्या ये चान्ये सात्वतर्षभाः ॥ ३२ ॥

सिद्धांतप्रदीपः ।

कच्चिदित्यव्ययमिष्टप्रश्नद्योतकम् ॥ २५ ॥
मारिषोमान्यः ॥ २६ । २७ ॥
असन्दुष्टःकंसः पुत्रोयस्यसः आहुकउग्रसेनः तदनुजोदेवकः सुतेनकृतवर्मणासहहृदीकः जयन्तादयः श्रीकृष्णभ्रातरः ॥२८।२९॥

---

भाषाटीका ।

क्या द्वारिका पुरी में बंधु लोग मधु भोज दशार्ह अर्ह सात्वत अंधक वृष्णि यह सब यादव सुखी हैं ॥ २५ ॥
हमारे मान्य माता महशूरजी हमारे मामा वसुदेव जी भ्राताओं के सहित सुखी हैं क्या ॥ २६ ॥
उन वसुदेव जी की पत्नी सात वहिन हमारी मामी देवकी आदिक पुत्र तथा पुत्र वधुओं के सहित सुखी हैं क्या ॥ २७ ॥
दुष्ट पुत्र वाला उग्रसेन तथा उसका छोटा भ्राता देवक जीते हैं क्या सुतों सहित अक्रूर जयंतादि कृष्ण भ्राता सब कुशल से हैं क्या ॥ २८ ॥

---

श्रीधरस्वामी ।

सर्ववृष्णीनां मध्ये महारथः । गम्भीररयः युद्धे महावेगः । वर्द्धते मोदते इत्यर्थः ॥ ३० ॥
श्रीकृष्णस्यापत्यानि कार्ष्णयः तेषु प्रवराः ॥ ३१ ॥
सुनन्दनन्दौ शीर्षण्यौ मुख्यौ येषां ते ॥ ३२ । ३३ ॥

---

श्रीवीरराघवः ।

सात्वतांभक्तानांपतिः सात्वच्छब्दोभक्तवाचकः सात्वतशब्दस्तुयादववाचकःइतिविवेकःभगवान्बलरामः सुखमास्तेकच्चित् ॥ २९ ॥
अथश्रीकृष्णपुत्रान्पृच्छतिसर्ववृष्णीनांमहारथः प्रद्युम्नः सुखमास्तेकच्चित् तथाभगवान्गम्भीरवेगोऽनिरुद्धश्चवर्द्धते ॥ ३० ॥
जांबवतीसुतइतिसांबस्यविशेषणंसुषेणादयः अन्येचऋषभादयः कार्ष्णिप्रवराः श्रीकृष्णसुतश्रेष्ठाः सपुत्राअपिसुखमासत इत्युपरिष्टादन्वयः ॥ ३१ ॥
तथैवशौरेर्भगवतोऽनुचराः श्रुतदेवोद्धवादयः येचान्येसात्वतर्षभाः यादवश्रेष्ठाःसुनन्दादयः ॥ ३२ ॥

---

श्रीविजयध्वजः ।

येशत्रुजिदादयः तेचसुखमासतेकिंरामोवलभद्रः ॥ २९ ॥
सर्ववृष्णीनांमध्येमहारथः गंभीररयउग्रवेगः अगाधज्ञानोवा रयगतौगतिर्ज्ञानम् ॥ ३० ॥
कार्ष्णीनांकृष्णसुतानांप्रवराः कार्ष्णिप्रवराः ॥ ३१ ॥
श्रुतसेनोद्धवादयः शौरेरनुचराः भृत्याः सुनन्दनन्दौशीर्षण्यौप्रधानौयेषांतेसुनन्दनन्दप्रधानाइत्यर्थः नन्दशीर्षाद्याइतिपाठेसुनन्दः नन्दशीर्षश्चआद्यौयेषान्तेतथोक्ताइतियोजनीयंशीर्षशब्दः प्रधानवाची पार्षदेषुप्रधानौसुनन्दनन्दौआद्येयेषान्तेतथोक्ताइतिवा ॥ ३२ । ३३ ॥

---

अपि स्वस्त्यासते सर्व्वे रामकृष्णभुजाश्रयाः ।
अपि स्मरन्ति कुशलमस्माकं बद्धसौहृदाः ॥ ३३ ॥
भगवानपि गोविन्दो ब्रह्मण्यो भक्तवत्सलः ।
कच्चित् पुरे सुधर्म्मायां सुखमास्ते सुहृद्वृतः ॥ ३४ ॥
मङ्गलाय च लोकानां क्षेमाय च भवाय च ।
आस्ते यदुकुलाम्भोधावाद्योऽनन्तसखः पुमान् ॥ ३५ ॥
यद्बाहुदण्डैर्गुप्तायां स्वपुर्य्यां यदवोऽर्च्चिताः ।
क्रीडन्ति परमानन्दं महापौरुषिका इव ॥ ३६ ॥

## सुबोधिनी ।

रामोबलभद्रः सर्वेषांसौख्यंतन्मूलकमितितेत्रयोभिन्नतयाख्यातंऽयेणानिरूप्यंते ॥ २९ ॥
बलभद्रः प्रद्युम्नः अनिरुद्धश्चभगवानितिमहारथइतिभगवानितिच ॥ ३० ॥
सुषेणादयः पुत्राः कार्ष्णिप्रवराः कृष्णपुत्राः प्रवरायेषांप्रद्युम्नादिमिश्राणि ऋषभादयः कार्ष्णिपुत्रप्रवराः ॥ ३१ ॥
शौरेर्भगवतः सुनंदनंदौशीर्षण्यौ श्रेष्ठौयेषांते ॥ ३२ ॥

## श्रीविश्वनाथचक्रवर्त्ती ।

गम्भीररयः युद्धे महावेगः ॥ ३० । ३१ ॥
सुनन्दनन्दौ शीर्षण्यौ मुख्यौ येषां ते ॥ ३२ । ३३ ॥

## सिद्धांतप्रदीपः ।

भगवत्पुत्रपौत्रकुशलंपृच्छतिप्रद्युम्नइत्यादिना गम्भीररयोगम्भीरवेगः बर्द्धतेमोदते ॥ ३० । ३१ ॥
सुनन्दनंदौशीर्षण्यौशिरोमणीयेषान्तेतथा ॥ ३२ । ३३ । ३४ ॥

## भाषा टीका ।

जो शत्रु जिदादिक यादव सो कुशली हैं यादवों के पति भगवान् बलरामजी कुशली हैं क्या ॥ २९ ॥
सब वृष्णि में महारथ प्रद्युम्नजी सुखी हैं बड़े वेगवाले अनिरुद्धजी वृद्धियुक्त हैं क्या ॥ ३० ॥
सुषेण चारु देष्ण जांववती के पुत्र सांव और भी कृष्ण के पुत्रों में श्रेष्ठ ऋषभादिक कुशली हैं क्या ॥ ३१ ॥
तैसे ही शौरी के भृत्य श्रुत देव उद्धवादिक सुनन्दनन्दादिक यादव श्रेष्ठ कुशली हैं क्या ॥ ३२ ॥

## श्रीधरस्वामी ।

भगवति सुखमास्ते इति प्रश्नस्यानौचित्यमाशंक्याह पुरे इत्यादि ॥ ३४ ॥
भगवतोऽत्रावस्थाने लोकानां मङ्गलं नान्यथेत्याशयेनाह चतुर्भिः । मंगलाय शुभाय क्षेमाय लब्धपालनाय । भवाय उद्भवाय । अनन्त सखः बलभद्रसहायः ॥ ३५ ॥
अर्च्चिताः सर्व्वैः पूजिताः । परमानन्दं यथा भवति तथा । महापौरुषिकाः वैकुण्ठनाथानुचराः ॥ ३६ ॥

## श्रीवीरराघवः ।

कृष्णरामभुजाएवाश्रयायेषांतेसर्वेऽपिआसतेबद्धसौहृदाः तेऽस्माकमपिकुशलंस्मरंतिकिमित्यर्थः ॥ ३३ ॥
अथभगवतः कुशलंपृच्छतिभगवान्कृष्णोऽपिपुरेसुधर्मायांसुहृद्भिर्वृतः सुखमास्तेकच्चित् ॥ ३४ ॥

श्रीवीरराघवः ।

ब्रह्मण्योभक्तवत्सलइतिविशेषणद्वयाभिप्रेतपृच्छति मंगलायेतिलोकानांभक्तजनानांमंगलार्थमनंतस्यसखा आद्यः पुमान्परमपुरुषः यदुकुलांभोधावास्तेकच्चित् अनंतसखइत्यनेनबलरामसहितआस्तेकिमितिपृष्टंभवातिक्षेमोलब्धसुखपरिपालनंयोगः सचलब्धसुखलाभरूपः तदुभयविधायमंगलायेत्यर्थः ॥ ३५ ॥

तदेवप्रपंचयतियच्छाह्वितित्रिभिः यस्यकृष्णस्यभगवतोबाहुदंडगुप्तायांस्वपुर्यांद्वारकायामार्चिताः सर्वैर्लोकैर्बहुमताः यादवाः परमानंदंयथातथाक्रीडंतिमहापौरुषिकाइवयक्षाइव ॥ ३६ ॥

---

श्रीविजयध्वजः ।

सुधर्मायांसभायां ब्रह्मणावेदेनगम्यतइतिब्रह्मण्यः विप्रप्रियोवानित्यसुखस्यहरेः कुशलोद्देशो न मे प्रश्नः किंतुलोकसुखकरत्वोद्देशइत्ययमर्थोऽपिशब्देनदर्शितः ॥ ३४ ॥

एतमेवार्थंदर्शयति मंगलायेति सःअनंतःशेषःसखायस्यसोऽनंतसखःआद्यःपुमान्लोकानांमंगलायशुभायक्षेमायप्राप्तपरिपालनायभवायवृद्धयेयदुकुलसमुद्रेआस्तेकच्चिदित्यन्वयः चशब्दाःमिथःसमुच्चयार्थाःमंगलाद्यनेकप्रयोजनार्थाः ॥ ३५ ॥

यद्वांयस्यकृष्णस्यबाहुदंडैः रक्षितायांस्वपुर्यांक्रीडंतीत्यन्वयः कइवपरमानंदंप्राप्यमहापौरुषिकाइव मुक्ताइवपरमानंदापरपर्यायंवा वैश्रवणबाहुदण्डगुप्तचैत्ररथंप्राप्यमहापौरुषिकायक्षाइववा ॥ ३६ ॥

---

क्रमसंदर्भः ।

मङ्गलायेति तैः ॥ ३५ ॥
यदिति । इवेति लौकिकदृष्ट्या । एवमग्रेऽपि ॥ ३६ ॥ ३७ ॥ ३८ ॥

---

सुबोधिनी ।

भगवदीयत्वेनतेषांप्रश्नइत्याभिप्रायेणाह तेषामपिस्वस्त्यासतइति रामपदंआवेशाभिप्रायेणप्रतिज्ञयाभिप्रायेणवा यथातेषांकुशलमस्माभिः स्मर्यतेतेऽप्यस्मत् कुशलंस्मरंतीति संभावनाअनेनकुशलंसकामास्पृष्टंस्वयमतिकुशलाः परकुशलंस्मरंतीति ॥ ३३ ॥

भगवतः प्रश्नकुशलस्य कर्तुमयुक्तत्वेऽपि बहूनांरक्षणीयत्वेनोपस्थितत्वात् आराध्यानांब्राह्मणानांकालवशेनोत्पथानांरक्षणवैयग्र्यसंभवात् भक्तानामपि तथात्वाच्च शत्रुवधार्थमन्यत्रगमनसंभावनात् बहिर्मुखानांयादवानां परस्परंकलहसंभावनाच्च गोविंदोऽस्मदादीनामिंद्रः ब्रह्मण्यः ब्राह्मणहितः भक्तेषुवत्सलः पुरेद्वारकायांसुधर्मायांसभायांसुहृद्वृतः सुखमास्तइति सुहृदांसुखंकुर्वन् आस्तइत्यर्थः ॥३४॥

स्यमंतकप्रसंगवत् असुखसंभावनात् किमनेनप्रश्नेनेत्यतआह मंगलायचेति भगवतोयतद्वारकायां निवसनंतत्सर्वं प्राणिनां विशेषतोद्वारकावासिनां निविष्टपदरक्षणाय च आधिक्याय च ननुयदितेषांभाग्यंमंगलजनकंनभवेत् तदा किं भगवत्स्थित्याइत्यतआहआद्यइति मूलकारणभूतइत्यर्थः कालंकर्मस्वभावंचेतिवाक्यात् सृष्टिसमयेभगवताकार्यार्थं परिगृहीताः कालादयः ततोजीवान् दृष्टातेभ्योऽदृष्टरूपंकर्मविभक्तं अतस्तेतादृशाएव अथवाययापूर्वंविभक्ताइदानीमपि स्वेच्छयाविभज्यंते तस्यैवविभाजकत्वात् ननुकालेनयथास्थानास्थिताः सर्वेऽपकृष्यंते तद्भगवताकथंक्षेमस्तत्राह अनंतसखइति अनंतः कालस्तस्यसखाअनेनभगवदभिप्रेतस्यस्थानेनापकर्षतीत्युक्तं ननुप्राकृतस्योद्भवः पूर्वमेवसिद्धोयथाप्रकृतिपरिणामंकथमिदानीमुद्भवोभवेत्तत्राह पुमानिति पूरुषाधिष्ठानेनैवनित्याप्रकृतिस्तथापरिणामति तस्येदानीमपिविद्यमानत्वादुद्भवेनपरिणताभविष्यतीत्यर्थः अतोभगवत्स्थितेरेतदर्थत्वात् कार्यंकुर्वन्तिष्ठतीतिप्रश्नः नह्यस्यकर्हिचिदितिवाक्यात्द्वितीयः पक्षः स्थितौक्लेशाभावश्चध्वनिनासूचितः अंभोधावनंतसखइतिशेषशायीसमुद्रेतिष्ठतीत्यर्थः ॥ ३५ ॥

एतस्मिन्नर्थेनिदर्शनमाह पुरुषाणांस्त्रीणांश्लोकद्वयेनक्रमेणद्वारकायांसर्वेयादवाः स्वर्चिताएवतिष्ठंतिचौरदाशिशत्रुभयाभावात् स्वइति कार्यांतराभावात्क्रीडंतिभोजनशयनादिकमपिक्रीडनंकुर्वंति परमानंदोभवतितथा यथापरस्परंक्रीडाकर्तृणांस्वरूपंक्रीडयाव्यज्यते तथा परमानन्दम्परस्परार्थेविनियुंजतइत्यर्थः भगवत्याश्रितत्वस्यदृढत्वात् भगवत्कृतमात्मकृतमेवमन्यमानाः महापौरुषयुक्ताइवनिःशंकाः क्रीडंतीत्यर्थः ॥ ३६ ॥

---

श्रीविश्वनाथचक्रवर्ती ।

भगवति कुशलप्रश्नस्यानौचित्यमाशंक्याह पुर इति ॥ ३४ ॥
मङ्गलाय प्रेमप्रदानाय । क्षेमाय केषाञ्चित् मुक्तिदानाय । भवाय सम्पदे च । अनन्तसखः बलभद्रसहायः ॥ ३५ ॥
अर्च्चिता देवैरपि । महापौरुषिकाः वैकुंठनाथानुचरा इव महद्भिः पौरुषैर्विजयिन इवेति वा ॥ ३६ ॥

यत्पादशुश्रूषणमुख्यकर्म्मणा सत्यादयो द्व्यष्टसहस्रयोषितः ।
निर्जित्य संख्ये त्रिदशांस्तदाशिषो हरन्ति वज्रायुधवल्लभोचिताः ॥ ३७ ॥
यद्बाहुदण्डाभ्युदयानुजीविनो यदुप्रवीरा ह्यकुतोभया मुहुः ।
अधिक्रमन्त्यङ्घ्रिभिराहृतां बलात् सभां सुधर्म्मां सुरसत्तमोचिताम् ॥ ३८ ॥
कच्चित्तेऽनामयं तात ! भ्रष्टतेजा विभासि मे ।
अलब्धमानोऽवज्ञातः किं वा तात ! चिरोषितः ॥ ३९ ॥
कच्चिन्नाभिहतोऽभावैः शब्दादिभिरमङ्गलैः ।
न दत्तमुक्तमर्थिभ्य आशया यत् प्रतिश्रुतम् ॥ ४० ॥

सिद्धांतप्रदीपः ।

आद्यःसर्वेभ्यःपूर्वोभगवान् श्रीकृष्णःमंगलायतत्रकेषांचित् क्षेमायमोक्षरूपायमंगलायकेषांचिद्भवायभोगरूपायमंगलाय यदुकुलां भोधावास्ते ॥ ३५ ॥

परमानंदंयथास्यात्तथा यद्बाहुमूलदण्डगुप्तायांक्रीडंतिसयदुकुलांभोधावास्तेइतिपूर्वेणसम्बन्धएवमग्रेऽपिमहापौरुषिकाइवजयविजयादयइव यद्वाअनन्वयालंकारः ॥ ३६ ॥

---

भाषाटीका ।

क्या रामकृष्ण के भुजों के आश्रित मित्रता वाले यादव हमारे कुशल को स्मरण करते हैं ॥ ३३ ॥

भक्त वत्सल ब्राह्मण रक्षक गोविंद भगवान् द्वारका के सुधर्मा सभा में सुखपूर्वक हैं क्या ॥ ३४ ॥

जोकि लोगों के मङ्गल योग क्षेम संपत्ति के लिये बलभद्र जी सहित यदुकुल समुद्र मे स्थित हैं ॥ ३५ ॥

जिनके भुजों से पालित द्वारिका मे पूजित होकर बैकुण्ठ वासियों के तुल्य यादव परमानन्द से क्रीडा करते हैं ॥ ३६ ॥

---

श्रीधरस्वामी ।

यस्य पादशुश्रूषणमेव मुख्यं तपआदिभ्यः श्रेष्ठं यत् कर्म्म तेन । सत्यभामादयः संख्ये युद्धे श्रीकृष्णबलेन निर्जित्य । तदाशिषः देवभोग्यान् पारिजातादीन् । वज्रायुधवल्लभा शची तस्या उचिताः ॥ ३७ ॥
यद्बाहुदण्डप्रभावोपजीविनः सुधर्म्मामङ्घ्रिभिरधिक्रामन्ति स गोविन्दः सुखमास्ते इति गतपञ्चमश्लोकेनान्वयः ॥ ३८ ॥
इदानीं तस्यैव कुशलं पृच्छति कच्चिदिति षड्भिः । अनामयमारोग्यम् । न लब्धो मानो येन बन्धुभ्यः सकाशात् । किंवा तैः प्रत्युत अवज्ञातः तिरस्कृतः । यतश्चिरोषितः बहुकालं तत्र स्थितः ॥ ३९ ॥
अभावैरिति छेदः । प्रेमशून्यैरमङ्गलैः परुषैः शब्दादिभिर्नाभिहतः न ताडितोऽसि किम् । यद्वा अर्थिभ्यः किमपि दास्यामीति नोक्तं किम् । यद्वा आशया सह यथा आशा भवति तथा दास्यामीति प्रतिश्रुतं यत् तन्न दत्तं किम् ॥ ४० ॥

---

दीपनी ।

मूलस्थितसत्याशब्दः सत्यभामावाचकः "विनापि प्रत्ययं पूर्वोत्तरपदयोर्वा लोपो वाच्य" इति ठाजादावूर्ध्वं द्वितीयादचः (पा० ५।३।८३) इति सूत्रस्थवार्त्तिकेन भामेत्युत्तरपदस्य लुप्तत्वादिति ॥ ३७—४४ ॥

---

श्रीवीरराघवः ।

यस्यभगवतः पादयोः शुश्रूषणंपरिचरणंमुख्यंकर्मतेनहेतुनासत्यभामादयः षोडशसहस्रयोषितः संख्येयुद्धेत्रिदशान्देवान्निर्जित्य वज्रमायुधंयस्यसइंद्रोवल्लभः प्रियोयासांतासांसच्यादीनामुचिताःअशिषः अभीष्टार्थाःपारिजातादयः भगवताआहृताइतिशेषः तदित्यव्ययं सामान्याभिप्रायमेकत्वंनपुंसकत्वंवा ताआशिषः हरंतिस्वीकुर्वंति ॥ ३७ ॥

श्रीवीरराघवः ।

यस्यभगवतोवाहुदंडएवाभ्युदयोयेषांतेतदुपजीविनः तद्भृत्यायदुप्रवीराः नविद्यतेकुतोऽपिभयंयेषांतथाभूताः संतः सुरसत्तमानामिंद्रादीनामुचितांतान्निर्जित्यवलादाहृतांसुधर्माख्यांसभामंघ्रिभिर्मुहुर्मुहुराधिक्रमंति ॥ ३८ ॥

तस्यनिस्तेजस्कत्वादिहेतून्विकल्पयन्पृच्छतिहेतात ! तवानामायमारोग्यंकच्चित् मेममभ्रष्टंतेजोयस्मात्तथाभूतो विभासिलक्ष्यसे हेतात ! त्वंतत्रचिरमुषितः हेतुगर्भमिदंचिरमुषितत्वादलब्धोमानोसंमाननंयेनतथाभूतः किम्अथवातैरवज्ञातः अवमतः किम् ॥ ३९ ॥

अभावैरितिच्छेदः नविद्यतेभावः सद्भावोयेषांतैरमंगलैः वाशब्दादिविषयैर्नाभिहतः आशयाऽर्थिभ्योयाचकेभ्यः यत्प्रतिश्रुतंदास्यामीतिप्रतिज्ञातंतत्तेभ्यः किंवानदत्तम् ॥ ४० ॥

---

श्रीविजयध्वजः ।

यस्यहरेः पादयोः शुश्रूषणंसेवालक्षणंतदेवमुख्यंकर्मतेनसाधनेनसत्यादयः सत्यभामापुरः सराः द्व्यष्टसहस्रयोषितः शोडशसहस्रसंख्याः स्त्रियः संख्येयुद्धेत्रिदशानिंद्रादीन्निर्जित्यवज्रायुधस्येंद्रस्यवल्लभायाः शच्याः उचितास्तदाशिषस्तेषामिंद्रादीनामाशिषः पारिजातादिकाः हरंतिआच्छिद्यस्वीकुर्वंतीत्यन्वयः ॥ ३७ ॥

यस्यहरेर्बाहुदंडानामभ्युदयोदिग्विजयश्रीस्तामनुजीवितुंशीलाअतएवाकुतोभयाः युदुप्रवीराः सुरसत्तमस्येंद्रस्यउचितांवाहुवलाद्दत्तामानीतांसुधर्माख्यांसभामंघ्रिभिरनुदिनमाधिक्रमंत्याक्रम्यतिष्ठंतीत्यन्वयः ॥ ३८ ॥

तवाकिमेतादृशदुःखनिमित्तमितिपृच्छसीत्याह कच्चिदिति हेतात ? तेतवअनामयं कच्चित्सुखंकिं कुतः कुशलप्रश्नइतितत्राह भ्रष्टतेजस्त्वेकारणंपृच्छति अलब्धेति अलब्धोमानोयेनसतथोक्तः नकेवलंमानाभावः किंतुअवज्ञातश्चाकिमित्याह अवज्ञातइति पूर्वंचिरोषितोऽप्यकिंवाक्षिप्रमागतः तत्ब्रूहीत्यर्थः ॥ ३९ ॥

अवज्ञाचइंगितैः क्रिययावाचावास्यात्तत्रतवैकेनसर्वैः किंवेत्यभिप्रेत्यपृच्छति कच्चिदिति आदिशब्देनेंगितक्रियेगृहीते शब्दादिभिरवज्ञानेकारणं स्वदोषः परदोषोवा तत्रस्वदोषोनास्तिहीतिपृच्छति नदत्तामिति वित्ताशयाप्राप्तेभ्योऽर्थिभ्योयुक्तंयोग्यंदास्यामीतिप्रतिज्ञातंतन्नदत्तंकिमितीयंवैस्वदोषात् दत्वापितदाशापूर्तिपर्यंतंनदत्तमितीयंपरदोषात् उभयंचनप्राप्तंहीतिवावाक्यार्थः ॥ ४० ॥

---

क्रमसंदर्भः ।

कच्चित् ते इति । तेषां भवत्वमङ्गलं किञ्चिदस्यैव वा भवत्वित्यपेक्षायां प्रकरणमिदम् ॥ ३९ ॥
नाभिहतः किम् अपि त्वभिहत एवेत्यर्थः ॥ ४० । ४१ । ४२ । ४३ । ४४ ॥
इति श्रीमद्भागवतप्रथमस्कन्धस्य श्रीजीवगोस्वामिकृतक्रमसंदर्भे चतुर्दशोऽध्यायः ॥ १४ ॥

---

सुबोधिनी ।

स्त्रीणामपितथात्वमाह यत्पादेतिपादशुश्रूषणमेवमुख्यंकर्मअन्यत्तुलौकिकं लौकिकापेक्षयाविहितस्यैवमुख्यतयाकरणात्स्वर्गभोक्तव्येधर्मपरित्यागेनभोगोमाभवत्वितिविषयवलात् अत्रैवस्वर्गमानयंतिसत्यासत्यभामातस्याः प्रियत्वप्रसिद्धेः तद्भावमेवान्याअपिशिक्षंतीतिसत्यादयइत्युक्तंद्व्यष्टानांसहस्राणांसमाहारः स्त्रीविवक्षाभावाभावङीप्त्रिदशान्स्वयंनिर्जित्येतिस्वेच्छयागरुडप्रेरणयाअवगम्यते स्त्रीणांस्त्रीकर्तृकभोगः स्वर्गएववांछितइतिवज्रायुधवल्लभोचिताइत्याह वज्रायुधस्यइन्द्रस्यवल्लभाइन्द्राणीतस्याः उचितंपारिजातादि ॥ ३७ ॥

एवमैहिकामुष्मिकेएकत्रभुंजतइत्युक्तं पुरुषाणांत्वामुष्मिकस्यअनुक्तत्वात् सत्यादिवदेकीकृत्यभोगासंभवात् आमुष्मिकंपृथगाहयद्बाहुदंडाभ्युदयानुजीविनइतिअन्यः स्वर्गतुल्योविषयः स्वतः सिद्धः सभापरंन्यूनेतितद्भोगमाहवाहुदंडयोरभ्युदयः सर्वोत्कर्षस्तमनुजीवनंयस्ययेषांतेयदुश्रेष्ठत्वेनस्वर्गोहिदेवाः सकृत्स्नाताः तस्यांसभायांसकृदुपविशंतिपादावस्पर्शयित्वाताद्दशींसभांमुहुः अंघ्रिभिराक्रमंतितत्रापिवलात् नहिलौकिकक्रिययासालभ्याशताश्वमेधकर्तृलभ्यत्वात् तदाह सुरसत्तमोचितामिति सुरसत्तमाइन्द्रादयः ॥ ३८ ॥

एवंसर्वान्पृष्ट्वाअर्जुनगतवैक्लव्यहेतुमुद्भावयतिकच्चित्तेनामयमिति अनामयमारोग्यंकच्चित्रोगेणाप्येवंभवति किंच तेजोऽपितवगतमितिलक्ष्यतेतत्रममदृष्टिरेवप्रमाणमित्याह विभासीतितेजोगमनमंतः शोकात्पापाच्चभवति तत्रप्रथममंतः शोकहेतून्गणयतिअलब्धमानइतिपरगृहेमानाभावःअतस्तापेहेतुःअवज्ञाचसुतराम् अवज्ञायांहेतुःचिरोषितइति श्वशुरगृहेवहुकालवासेअवज्ञाभवतिअवज्ञातःकिंवेतिसंबंधः अथवाचिरवासएवशोकहेतुः ॥ ३९ ॥

एवमंतः करणशरीरकृतदोषेणतापउपपादितइन्द्रियकृतदोषमाह कच्चिन्नाभिहतइतिअभावैः स्नेहशून्यैःरूक्षैः अमंगलैर्वागालिदानैः आदिशब्देनपंचापिगृहीताः इदानीमधर्माणिसंभावयतिनदत्तमिति आशायायत्प्रतिश्रुतं "चतुर्थ्यर्थेबहुलंछंदसि" ॥ २ ॥ ३ ॥ ६२ ॥ इति आशायैदास्यामीतिप्रतिज्ञातंतदाशाभंगहेतुत्वाददानं सर्वमिष्टंदत्तंवृत्तमितितेतेजोहर्तृभवति ॥ ४० ॥

---

कच्चित्त्वं ब्राह्मणं बालं गां वृद्धं रोगिणं स्त्रियम् ।
शरणोपसृतं सत्त्वं नात्याक्षीः शरणप्रदः ॥ ४१ ॥
कच्चित्त्वं नागमोऽगम्यां गम्यां वाऽसत्कृतां स्त्रियम् ।
पराजितो वाऽथ भवान् नोत्तमैर्नासमैः पथि ॥ ४२ ॥
अपिस्वित् पर्य्यभुङ्क्थास्त्वं सम्भोज्यान् वृद्धबालकान् ।
जुगुप्सितं कर्म्म किञ्चित् कृतवान्न यदक्षमम् ॥ ४३ ॥
कच्चित् प्रेष्ठतमेनाऽथ हृदयेनात्मबन्धुना ।
शून्योऽस्मि रहितो नित्यं मन्यसे तेऽन्यथा न रुक् ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्यां प्रथमस्कन्धे
पारीक्षिते युधिष्ठिरप्रश्नो नाम चतुर्द्दशोऽध्यायः ॥ १४ ॥

श्रीविश्वनाथचक्रवर्त्ती ।

निर्जित्य कृष्णबलेनैवेत्यर्थः त्रिदशान् देवान् तदाशिषः पारिजातादीन् वज्रायुधवल्लभा शची ॥ ३७ ॥

अभ्युदयं प्रभावमनुजीवितुं शीलं येषां ते । आहृतां स्वर्गलोकादित्यर्थः ॥ ३८ ॥

इदानीं किञ्चिदप्यवदतस्तस्यैव कुशलं पृच्छति कच्चिदिति षड्भिः । अनामयमारोग्यम् । बन्धुभ्यः सकाशादलब्धादरः प्रत्युतावज्ञातः चिरोषितः बहुकालं तत्र स्थितः ॥ ३९ ॥

अभावैः प्रेमशून्यैः नाभिहतः न ताड़ितोऽसि किम् । अर्थिभ्य आशया प्राप्त्याशया वर्त्तमानेभ्यो यद्दातुं प्रतिश्रुतं तन्न तत्तं न च उक्तं किमपि मौनं कृतमिति भावः ॥ ४० ॥

---

सिद्धांतप्रदीपः ।

सत्यादयः सत्यभामादयः तत्तेनश्रीकृष्णेनभर्त्राहेतुभूतेनसंख्येत्रिदशान्निर्जित्येन्द्रपत्न्युचिताः आशिषःपारिजातादीनिष्टार्थान् यस्यकृष्णस्यपादशुश्रूषणमुख्यकर्मणा हरंतिकुर्वंति ॥ ३७ ॥

यस्यबाहुदण्डयोरभ्युदयः प्रभावस्तदनुजीविनः ॥ ३८ ॥

तदानींतंनिस्तेजस्कंदृष्ट्वातमेवपृच्छति कच्चिदितिषड्भिः हेतात ! मेममत्वमपि तावद्भ्रष्टतेजाविभासिलक्ष्यसे भ्रष्टतेजस्कत्वेहेतुंपृच्छति कच्चित्तेऽनामयमारोग्यम् बन्धुभ्योऽलब्धमानः किंवातैरवज्ञातोऽसिकिंवायताश्चिरोषितस्तत्र ॥ ३९ ॥

अभावैर्भाववर्ज्जितैरतएवामंगलैः शब्दादिभिर्वचनकर्मप्रेक्षणादिभिर्नाभिहतोनताडितोऽसिकिम् असौदातुंसमर्थइत्याशयार्थिभिरुक्तं प्रार्थितंभवतानदत्तंकिम् कदाचित्स्वतएवप्रतिश्रुतमिदंदास्यामीति प्रतिज्ञातंनतद्दत्तंकिम् ॥ ४० ॥

---

भाषा टीका ।

जिनके चरण सेवा मुख्य कर्म से सत्यभामादिक षोडश हजार स्त्री युद्ध में जीतकर इन्द्र स्त्री के उचित संपत्ति को भोगती हैं ॥ ३७

जिनके भुजदंड आश्रित यदुवीर लोग निर्भय होकर जोरी से हरण करी हुई देवताओं के योग्य सुधर्मा सभा को पादों से आक्रमण करते हैं ॥ ३८ ॥

हे तात ! तुम्हारा आरोग्य है मेरे को तेजहीन मालूम देते हो हे तात ! अधिक दिन रहने से मानहीन होने से अवज्ञात भये क्या ३९

क्या अमंगल शब्दादिक अभावों से अवज्ञात हुये अथवा आशा से मांगनेवालों को प्रतिज्ञा किया हुआ नहीं दिया है ॥ ४० ॥

---

श्रीधरस्वामी ।

अन्यद्वा शरणागतं सत्त्वं प्राणिमात्रं न त्यक्तवानसि किं यस्त्वं पूर्वं शरणप्रदः आश्रयप्रदः ॥ ४१ ॥

अगम्यामिति छेदः निन्दितां स्त्रियं नागमः किं न गतवानसि । असत्कृतां मलिनवस्त्रादिकां नागमः किम् । नोत्तमैरनुत्तमैः समैरित्यर्थः । असमैरधमैर्वा किं न पराजितोऽसीत्यर्थः ॥ ४२ ॥

श्रीधरस्वामी ।

सहभोजनार्हान् वृद्धान् बालकांश्च किं स्वित् पर्यभुङ्क्थाः त्यक्त्वा भुक्तवानसि किम् । अक्षमं कर्तुमयोग्यं यत् तत् न कृतवानसि किम् ॥ ४३ ॥

नित्यं सदा प्रेष्ठतमेन हृदयेन अत्यन्तरङ्गेण स्वबन्धुना श्रीकृष्णेन रहितः शून्योऽस्मीत्यात्मानं मन्यसे । यद्वा स्वहृदयेन शून्योऽस्मीत्यात्मानं मन्यसे । यद्वा स्वहृदयेन शून्योऽस्मीत्यन्वयः । अन्यथा ते रुक् मनःपीडा न घटते ॥ ४४ ॥

इतिश्रीमद्भागवतभावार्थदीपिकायां प्रथमस्कन्धे चतुर्दशोऽध्यायः ॥ १४ ॥

---

श्रीवीरराघवः ।

ब्राह्मणादीनन्यंचशरणोपसृतंशरणागतंजंतुंशरणप्रदः रक्षकस्त्वंनात्याक्षीः कच्चित् ॥ ४१ ॥

अगम्यांस्त्रियंत्वंनागमः नगतवान् कच्चित् गम्यामप्यसत्कृतांवानागमः कच्चित् अथनत्तुभवान्पथ्युत्तमैरधमैर्वाजनैः पराजितोवाकिम् ४२

संभोज्यान्सहभोक्तुंयोग्यान् वृद्धान् बालकांश्चपरीत्यव्ययं वर्जनार्थपरित्यज्यत्वमभुंक्थाः अपिभुक्तवान् किंनोऽस्माकमक्षममसह्यंकिंचिन्निंदितंकर्मकृतवान् किम् ॥ ४३ ॥

हृदयेनहृदयंगमेननित्यंप्रियतमेनात्मबंधुनाश्रीकृष्णेनरहितः अतएवशून्योनिरानंदोऽस्मीतिमन्यसेकच्चित् अन्यथाउक्तहेतूनामन्यतमस्याभावेतवरुग्रोगः आधिर्नस्यात् यद्वारुग्दीप्तिरन्यथानप्रागिवनास्त्यतः केनचिदुक्तान्यतमेनहेतुनाभवितव्यमित्यर्थः ॥ ४४ ॥

इति श्रीभागवतेश्रीवीरराघवटीकायां प्रथमस्कंधे चतुर्दशोऽध्यायः ॥ १४ ॥

---

श्रीविजयध्वजः ।

ब्राह्मणादिसत्त्वंजीवजातंशरण्योपसृतंशरणार्थितयाप्राप्तं शरणप्रदस्त्वंनात्याक्षीः रक्षामकृत्वात्यक्तवानसिकिम् अरक्षितैस्तैस्त्वज्ञातइति वाक्यार्थः ॥ ४१ ॥

अगम्यांविधवांपरस्त्रियंवा गम्याम् असत्कृतांवास्नानादिसंस्काररहितां प्रदानकर्मरहितांवास्त्रियंनागमः नगतवानसिकिंइयंचपार्थएवं विधंकर्मकरोतीतिकाचित्स्वदोषनिमित्तावज्ञा ॥ ४२ ॥

आवृद्धबालकान् बालावधिसर्वान् अभोज्यान् भोजयित्वापर्यभुङ्क्थाः भुक्तवानसिकिंसंभोज्यानितिपाठेसहभोक्तुंयोग्यान् वर्जयित्वाभुक्तवानसीत्यर्थः अक्षमंकर्तुमशक्यंतादृशं किंचित् शास्त्रनिषिद्धंकर्मकृतवान् किम् एकादशीभोजनस्वर्णस्तेयं निधानोद्धरणमित्यादि जुगुप्सितं कर्म ॥ ४३ ॥

उक्तंसर्वविच्छायत्वे नपूर्णमितिमत्वाकारणांतरंपृच्छति अथेति अथयंनित्यंप्रेष्ठादिगुणत्वेनमन्यसेतेनसर्वतः प्रेष्ठेनप्रियतमेनहृदयेनमनोहारिणाऽस्मबंधुनास्वाभाविकबंधुनाकृष्णेनरहितोवियुक्तःसन् शून्योऽमङ्गलोऽसिकच्चित्तेतवरुक् शरीरप्रभाऽन्यथा नपूर्ववद्धि यस्मात्तस्मात्तेनवियुक्तोऽमंगलोभवितुमर्हसीतिमन्ये नित्यंप्रेष्ठतमेनरहितः शून्योऽस्मीत्यात्मानंहृदयेनमन्यसे सर्वथातवशरीरकांतिस्त्वन्यथानपूर्ववदितिवा प्रेष्ठेनतेनरहितः शून्योऽस्मीतिमन्यसेअन्यथातथा मननाभावेरुक्रोगोमनोव्यथाकथमितिवा त्वंमन्निष्ठत्वादात्मैकनिष्ठत्वाच्चकृष्णप्रेष्ठत्वाच्चलोकशास्त्रनिषिद्धंनकरोषिहि तस्मात्तेनकृष्णेनवियुक्तत्वात्तवविच्छायत्वमितिमन्यइतिहिशब्दार्थः ॥ ४४ ॥

इतिश्रीभागवतेप्रथमस्कंधेविजयध्वजटीकायांत्रयोदशोऽध्यायः ॥ १३ ॥

---

सुबोधिनी ।

दानंशरणागतरक्षाचक्षत्रियस्यमुख्यं शरणागतानामपिमध्येत्वमेतान्नकच्चित्परिपालितवानसीत्याहकच्चिदिति ब्राह्मणाः सर्वावस्थासुपरिपाल्यः स्त्रियश्चअन्येवृद्धबालरोगिणः अन्यदपिशरणोपसृतंसत्त्वंहरिणादिनात्याक्षीर्नत्याजितवानसिअन्यैः पीडायांसमुपस्थितायांततस्त्याजनमकृतमित्यर्थः ॥ ४१ ॥

धर्मसूक्ष्माभावमाह त्वन्नापुरुषोभूत्वाअगम्यामगमः कामवशेनअगम्यागमनंकृतंगम्यांवाअसत्कृताम् अपमानंकृत्वाअगम्यामगमइतिशत्रुपराजयोऽप्येतद्धेतुरितितमाह पराजितइतिअस्यपूर्वोक्तानुरूपत्वात् अथेति नोत्तमैर्नसमासःनासमैःअधमैः समैर्वाअधमैर्वापराजितइत्यर्थः ॥ ४२ ॥

मिष्टान्नादिकंपाचकेभ्योबालादिभ्यअदत्वाभोजनेऽप्येवंभवतीतिलौकिकमाशंकते अपिस्विदितिपरिवर्जनात् संभोज्यान् वृद्धबालकानितिपाठेभोज्याः स्त्रियः संभोज्याःअथतावुत्तरेविभागइतिन्यायेनवृद्धाःआवृद्धबालकान्वा अन्यदपिजुगुप्सितंपश्चाज्जुगुप्साजनकम् अक्षमंचपश्चात्सोढुमशक्यंच ॥ ४३ ॥

सुबोधिनी ।

मुख्यंकारणमुत्प्रेक्षतेकाश्चिदिति हृदयेनहृतअयतेप्रविशततीतिहृदयः अंतर्यामी अपीतिपूर्वव्याख्यावृत्त्यर्थः आत्मत्वेनबंधुरहितः तादृशेन विरहितः शून्योऽसिअनित्यंमन्यसेआत्मनिगतेदेहादिस्थितेर्नित्यत्वात् अतिशोकेऽप्ययमेवहेतुः अन्यथातेनरुक्अन्यस्याविवेकिनः शास्त्रेऽपि चिंताभवतितवत्वयमेवहेतुरित्यर्थः ॥ ४४ ॥

इतिश्रीमद्भागवतसुबोधिन्यांश्रीमद्वल्लभदीक्षितविरचितायांप्रथमस्कंधविवरणेचतुर्दशोऽध्यायः ॥ १४ ॥

---

श्रीविश्वनाथचक्रवर्त्ती

शरणोपसृतं शरणागतं सत्त्वं प्राणिनम् ॥ ४१ ॥

अगम्यामिति छेदः । असत्कृतां मलिनवस्त्रादिकाम् । असमैर्बलेनातुल्यैर्न्यूनैरित्यर्थः । तत्रापि नोत्तमैर्जात्यापि न श्रेष्ठैर्नीचजातिभिरित्यर्थः ॥ ४२ ॥

परिवर्ज्जने वृद्धादीन् वर्जयित्वा भुक्तवानसि । अक्षममनुचितम् ॥ ४३ ॥

किञ्चैता आशङ्कास्त्वयि न सम्भवन्ति । सम्भवति चेदमिति नारदोक्तं स्मरन्नाह कच्चिदिति । नित्यं सदा प्रेष्ठतमेनात्मनो बन्धुना कृष्णेन रहितोऽहं हृदयेन चेतसा शून्यो मूर्च्छितोऽस्मीति मन्यसे आत्मानमिति शेषः । सत्यं सत्यमेतदेव कारणं सत्यमिति भावः । अन्यथा ते रुक् मनःपीड़ा न घटते ॥ ४४ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।

चतुर्द्दशश्च प्रथमे सङ्गतः सङ्गतः सताम् ॥ १४ ॥

---

सिद्धांतप्रदीपः ।

नात्याक्षीर्नत्यक्तवानसिकिम् ॥ ४१ ॥

त्वमगम्यांस्त्रियंनागमः नगतवानसिकिंकच्चित् गम्यांवाप्यसत् कृतांदूषितांनागमः कच्चित्नउत्तमाःनोत्तमाःइत्यर्थः तथाचसमैरसमैर्वाकिंनपराजितोभवान् ॥ ४२ ॥

सम्भोज्यान् सहैवभोक्तुमर्हान् त्वमपिस्वित्पर्य्यभुंक्थाः वर्जयित्वाभुक्तवानसिपरिवर्जनार्थमव्ययम् ॥ ४३ ॥

अथवानित्यंप्रेष्ठतमेनहृदयेनहृदयंगमेन आत्मबन्धुनाश्रीकृष्णेनराहितस्तस्मादेवशून्योऽस्मिनिरानन्दोऽस्मीतित्वंमन्यसेकच्चित् अन्यथोक्तहेत्वन्यतमाभावेतेरुङ्मनः पीडा नभवेत् ॥ ४४ ॥

इतिश्रीभागवतेसिद्धान्तप्रदीपेप्रथमस्कन्धीये

चतुर्दशाऽध्यायार्थसमाप्तः ॥ १४ ॥

---

भाषाटीका ।

क्या तुमने ब्राह्मण गऊ बालक वृद्ध रोगी स्त्री शरणागत को शरण्य होकर भी त्यागे तो नहीं हो ॥ ४१ ॥

क्या तुमने अगम्य स्त्री का गमन किया अथवा असत्कृत स्त्री का गमन किया अथवा असम अनुत्तम अधम पुरुषों से पराजित भये हो ॥ ४२ ॥

क्या भोजन कराने योग्य वृद्ध बालकादिकों को छोडकर भोजन किया है अथवा अयुक्त निंदित कोई कर्म किया है ॥ ४३ ॥

अथवा प्रियतम हृदयरूप आत्मबंधु श्रीकृष्ण से रहित होने से अपने को शून्य मानते हो अन्यथा तुमको चिंता का संभव नहीं है ॥ ४४ ॥

चतुर्दश अध्याय समाप्त ॥ १४ ॥

———:*:———

## पञ्चदशोऽध्यायः ।

—:*:—

सूत उवाच । एवं कृष्णसखः कृष्णो भ्रात्रा राज्ञाविकल्पितः ।
नानाशङ्कास्पदं रूपं कृष्णविश्लेषकर्शितः ॥ १ ॥
शोकेन शुष्यद्वदनहृत्सरोजो हतप्रभः ।
विभुं तमेवानुध्यायन्नाशक्नोत् प्रतिभाषितुम् ॥ २ ॥
कृच्छ्रेण संस्तभ्य शुचः पाणिनामृज्य नेत्रयोः ।
परोक्षेण समुन्नद्धप्रणयौत्कण्ठ्यकातरः ॥ ३ ॥
सख्यं मैत्रीं सौहृदञ्च सारथ्यादिषु संस्मरन् ।
नृपमग्रजमित्याह वाष्पगद्गदया गिरा ॥ ४ ॥

श्रीधरस्वामी ।

कलिप्रवेशमालक्ष्य धुरं न्यस्य परीक्षिति ।
आरुरोह नृपः स्वर्गमिति पञ्चदशेऽब्रवीत् ॥ ० ॥

कृष्णोऽर्ज्जुनः । आविकल्पित इति छेदः । नानाशङ्कास्पदं रूपमालक्ष्य विकल्पित इत्यर्थः । प्रतिभाषितुं नाशक्नोदित्युत्तरेणान्वयः । तत्र हेतवः श्रीकृष्णविश्लेषेण कर्शितः कृशः कृतः ॥ १ ॥

शोकेन हेतुना वदनञ्च हृच्च ते एव सरोजे शुष्यती वदनहृत्सरोजे यस्य । हता प्रभा तेजो यस्य ॥ २ ॥

शुचः शोकाश्रूणि यान्युद्गच्छन्ति तानि नेत्रयोरेव संस्तभ्य गलितानि च पाणिना आमृज्य । परोक्षेण दर्शनागोचरेण श्रीकृष्णेन हेतुना समुन्नद्धम् अधिकं यत् प्रेमौत्कण्ठ्यं तेन कातरो व्याकुलः नृपमित्याहेत्युत्तरेणान्वयः ॥ ३ ॥

सख्यं हितैषिताम् । मैत्रीम् उपकारिताम् । सौहृदं सुहृत्त्वं सम्बन्धिताञ्च । वाष्पेण कण्ठावरोधाद्गद्गदया ॥ ४ ॥

---

दीपनी ।

धुरमिति । विपुलराज्यभारमित्यर्थः ॥ ० ॥ १—३० ॥

---

श्रीवीरराघवः ।

एवमिति कृष्णस्यभगवतः सखाकृष्णोऽर्ज्जुनोभ्रात्राराज्ञायुधिष्ठिरेणनानाविधानांशंकानामास्पदंनिमित्तंरूपंतेजोहीनंस्वकीयंरूपंप्रतिविकल्पितः कृष्णस्यभगवतो विश्लेषेणवियोगेनकर्षितः ॥ १ ॥

विश्लेषजशोकेनशुष्यद्वदनंहृदयकमलंचयस्यसोऽतएवहताप्रभायस्यतथाभूतः तमेवविभुंश्रीकृष्णमभिध्यायन्प्रतिभाषितुं प्रतिवक्तुंना शक्नोन्नशशाक ॥ २ ॥

ततःकृच्छ्रेणमहताप्रयत्नेनशुचः शोकान्संस्तभ्यनेत्रयोर्नेत्रकर्मणिषष्ठीपाणिना आमृज्ययद्वासंस्तभ्यमनइतिशेषः नेत्रयोःशुचःशोकाश्रूणिपाणिभ्यांसंमृज्यपरोक्षेणातिसमुन्नद्धः उत्कटः प्रणयः स्नेह औत्कण्ठ्यंप्रेमपूर्वकानुध्यानं विरहासहत्वदशावा ताभ्यां कातरःअधीरः ३

वाष्पैर्गद्गदयाकुण्ठीभूतयागिराऽग्रजंनृपतिमितीत्थंवक्ष्यमाणयारीत्याहेत्यन्वयः कथंभूतःसन्सारथ्यादिषुकर्मसुसख्यादीन्संस्मरन्तत्र सौहृदंहितैषित्वं मित्रत्वंप्रियैषिता समानशीलत्वंसखित्वं नियोगादिकरणार्हत्वंवामैत्रत्वम् ॥ ४ ॥

---

श्रीविजयध्वजः ।

भगवतिभक्तिविधानार्थंदुःखकथनव्याजेनतन्माहिमाप्रतिपाद्यतेऽस्मिन्नध्याये कृष्णस्यविश्लेषेणवियोगेनकर्षितः उक्तनानाशंकायाआस्पदंशोकाग्निनाशुष्यतीवदनहृत्सरोजेयस्यतत्तथोक्तः अतएवहतप्रभंनष्टकांतिरूपंआकारंदृष्ट्वा भ्रात्राराज्ञाविकल्पितः एवंवाएवंवेतिबहुकोटिविषयीकृतः तमेवविभुमनुध्यायन्निरंतरंचिंतयन्कृष्णस्यसखार्जुनः प्रतिभाषितुंनाशक्नोदित्येकान्वयः ॥ १ । २ ॥

श्रीविजयध्वजः।

शोकहेतूनामनेकत्वाद्बहुवचनं शुचः शोकान्कृच्छ्रेणसंस्तभ्यपाणिनानेत्रजमश्रुआमृज्यकृष्णस्यपारोक्ष्येणाप्रत्यक्षत्वेनसंबद्धेनप्रणयेन कदानुपश्येयमित्यौत्कण्ठ्येनकातरः विवशः ॥ ३ ॥

सारथ्यादिषुकर्मसख्यादिकंसम्यक्स्मरन् अर्जुनोबाष्पेणनिमित्तेनगद्गदयास्खलंत्यागिरा अग्रजंनृपमितिवक्ष्यमाणप्रकारेण इत्यन्वयः ॥ ४ ॥

---

क्रमसंदर्भः।

०।१।२।३।४।५।६।७।८।९॥

---

सुबोधिनी।

एवंचतुर्दशेहेतुंसंभाव्याथविनिश्चयात् कृतकार्यः शास्त्ररीत्यामुक्तोऽभूदितिवर्ण्यते ॥ १ ॥ भार्याभ्रातृभिरत्रैवसहितोमुक्तिमेयिवान् पंचदशे महाराजकृष्णभक्तिर्निरूप्यते ॥ २ ॥ प्रेमोपकारज्ञानानिजिष्णोराजार्थमाहहि एवंदृष्ट्वैवराजापितथावाभूद्यतः परः ॥ ३ ॥ प्रथममर्जुनप्रेमौत्कण्ठ्यमाह एवमितित्रिभिः एवंकृष्णोऽर्जुनः नानाशंकास्पदरूपंविकल्पितोऽपिनाशक्नोदितिसंबंधः कृष्णस्यभगवतः सखासखिस्मरणेनव्याकुलइतिएतद्द्वारावाभगवानेतानुपसंहर्त्तुमागतइतिकृष्णपदप्रयोगः अतएवकृष्णसखः अन्यथाततएवगमनमुचितंस्यात् अर्जुनेनान्विताः सर्वइतिभगवद्वाक्येऽपिततएवगमनमुचितंस्यात्तावद्यूयमवेक्षध्वमितिनारदवाक्यं च सत्यंस्यात्कृष्णोयदुकुरूद्वहावितिच अवस्थाप्रकटनंतु विश्वासार्थंभगवतैवलीलाअन्यथाभगवतः सावशेषकार्यकर्तृत्वंस्यात्अर्जुनस्यतेजः शोकस्यायुक्तः स्यात्अतएवकृष्णएवार्जुनेसमाविष्टः समागतइतियुधिष्ठिरमुक्तिरुचितानानाशंकानांपूर्वोक्तानामास्पदंरूपंप्रतिकल्पितःरूपमेवार्जुनइतिवाप्रतिभाषितुंनाशक्नोदितिवासंबंधः कृष्णस्ययोविश्लेषोवातेनकर्शितः क्षीणः ॥ १ ॥

अनुत्तरेदृष्टउपायउक्तः शोकेनशुष्यत्शोषमयत्शोषंप्राप्नुवत्हृत्सरोजंवदनसरोजं च यस्यअतएवहतप्रभः अंतस्तापेबहिः कांतेर्नाशनात् उत्तरध्यानयोर्युगपदुपस्थितावपितमेवध्यायन् उत्तरंवक्तुंनाशक्नोत् तत्रहेतुः विभुमिति ॥ २ ॥

उत्तरापेक्षया नविषयस्य समर्थत्वात् शोकसहकृतंध्यानंजायतइति शोकंदूरीकरोतीत्याह कृच्छ्रेणेति शोकस्तुस्मरणहेतुकइति स्मरणेविद्यमानेशोकनिवृत्तिः शक्या तथापिताद्दशधर्मविशिष्टंभगवंतंतेभ्योधर्मेभ्यः पृथक्कृत्यपूर्वधर्मैः सहसंयोज्यशोकदूरीकरणात् कृच्छ्रेणेत्युक्तं शुचः शोकाश्रूणि अभ्यंतरात्समागच्छंति तत्रैवस्तंभितानितेत्रयोः समागतानितानिपाणिना मृज्यआसमंतात् मृष्ट्वाएवंकृते पूर्वोक्तधर्मयोजनात् गतकालसहितः परोक्षशब्दवाच्यः अर्ज्जुनस्यांतः प्रविष्टइत्याह परोक्षेणेति अक्षात्परः परोक्षः स्वेच्छयैवपूर्वमिंद्रियगोचरोऽपिसांप्रतमिच्छायाअभावात् सौख्यएवतेनसमुन्नद्धः आविष्टः सम्यङ्नद्धः अयोगोलकंवह्निनेवअनेनांतः कथनेवलमुक्तं भक्तिरपि पूर्वंप्रविष्टास्वकार्यंकरोतीत्याह प्रणयौत्कण्ठ्यकातरइति प्रणयेनस्नेहेनयदौत्कण्ठ्यंउद्गतकण्ठताकण्ठाभावः कण्ठमुद्रणमितियावत् तेनकातरः कदावावक्ष्यामीत्याकुलः भगवान्वर्ततेइतिवक्तव्यंभक्तिर्वर्ततेइतिनवक्तव्यमिति एवंसतिभगवत्स्मरणस्य प्राबल्यात् भक्तिहेतुकभगवत् स्मरणेन भगवति पुष्टेतत्तेजसाकण्ठमुद्रणे अपगतेउद्गतेनबाष्पेणकण्ठेउद्गतताजाता ॥ ३ ॥

ततोभक्तिंदूरीकृत्यभगवंतमेवोररीकृत्यपूर्वधर्मयोगात् नातिस्मरणमाहेत्याह सख्यमिति समानशीलव्यसनत्वंसख्यंगुह्यगोपनगुणप्रकटीकरणआपद्गतात्यागादिधर्मवत्त्वंमैत्री सारथ्यादिषुभगवताद्वयंकृतंसौहृदंचसुहृदोभावः सतामिवकृत्यंबंधुकृत्यंवाइदमपि प्रकटीकृत्यचकारात् स्वामित्वगुरुत्वेआदिशब्देनपार्षदसेवनदौत्यरीत्यासेवनअनुगमनादि असमासनिर्देशः पृथक्स्मरणार्थइति वक्ष्यमाणप्रकारंगिरानत्वभिनयेनशोकेतस्यापिसंभवात् ॥ ४ ॥

---

श्रीविश्वनाथचक्रवर्ती।

श्रुत्वा नृपः पञ्चदशे विलापं धनञ्जयस्याथ कलेः प्रवेशम्।
आलक्ष्य राज्येष्वभिषिच्य पौत्रं विरज्य भीमादियुतः प्रतस्थे ॥ ० ॥

कृष्णोऽर्ज्जुनः विकल्पितः एवंभूतो वा त्वमेवंभूतो वा इति विकल्पविषयीकृतः। तत्र हेतुः नानाशङ्कास्पदं रूपं दधान इति शेषः। कर्शितः कृशः कृतः ॥ १ ॥ २ ॥

शुचः शोकाश्रूणि यान्युद्गच्छन्ति तानि नेत्रयोरेव संस्तभ्य गलितानि च पाणिना आमृज्य परोक्षेण परोक्षीभूतेन कृष्णेन हेतुनेत्यर्थः ३ प्रेम्णा परस्परप्राणत्वं ( परस्परहितैषित्वं ) सख्यम्। मैत्री दास्यमिश्रं सख्यम्। सौहृदं वात्सल्यमिश्रं सख्यम् ॥ ४ ॥

---

सिद्धांतप्रदीपः।

एवंभ्रात्रानानाशंकास्पदंनिस्तेजस्कंरूपंप्रतिविकल्पितोऽपिकृष्णस्यवियोगकर्शितः कृष्णोऽर्जुनः तमेवानुध्यायन्प्रतिभाषितुंनाशक्नो दितिद्वितीयेनान्वयः ॥ १ ॥

कृष्णस्यविश्लेषजनितेनशोकेनहेतुनाशुष्यन्ती वदनहृत्सरोजेयस्यसः प्रतिभाषितुं प्रतिवक्तुं नाशक्नोत्नशशाक ॥ २ ॥

अर्जुन उवाच । वञ्चितोऽहं महाराज हरिणा बन्धुरूपिणा ।
येन मेऽपहृतं तेजो देवविस्मापनं महत् ॥ ५ ॥
यस्य क्षणवियोगेन लोको ह्यप्रियदर्शनः ।
उक्थेन रहितो ह्येष मृतकः प्रोच्यते यथा ॥ ६ ॥
यत्संश्रयाद् द्रुपदगेहमुपागतानां राज्ञां स्वयंवरमुखे स्मरदुर्मदानाम् ।
तेजो हृतं खलु मया निहतश्च मत्स्यः सज्जीकृतेन धनुषाधिगता च कृष्णा ॥ ७ ॥
यत्सन्निधावहमु खाण्डवमग्नयेऽदामिन्द्रञ्च सामरगणं तरसा विजित्य ।
लब्धा सभा मयकृताद्भुतशिल्पमाया दिग्भ्योऽहरन्नृपतयो बलिमध्वरे ते ॥ ८ ॥

सिद्धांतप्रदीपः ।

कृच्छ्रेणसंस्तभ्यआत्मानमितिशेषः नेत्रयोरशुचः शोकाश्रूणिपाणिनामृज्यपरोक्षेणकृष्णेनहेतुनासमुन्नद्धाभ्यांवृद्धाभ्यांप्रणयौत्कण्ठ्याभ्यांस्नेहवैकल्व्याभ्यांकातरोविह्वलोऽग्रजमित्याहेत्यग्रिमेणान्वयः ॥ ३ ॥

सारथ्यादिषुसारथ्यदौत्यानुगमनादिषुकर्मसुसख्यंसमानशीलत्वं मैत्रीमुपकारित्वेसतिप्रत्युपकारानपेक्षतांसौहृदंहितैषित्वंवाष्पेणकण्ठावरोधहेतुनागद्गदयास्खलिताक्षरया अग्रजंयुधिष्ठिरमाह ॥ ४ ॥

---

भाषाटीका ।

सूतजी बोले इस प्रकार से युधिष्ठिर राजाके नानाशंके प्रश्न करनेपर कृष्णसखा अर्जुनजी कृष्ण के वियोग में क्लेशित थे शोकसे मुख कमल हृदय कमल सूख गये थे कान्तिहत होगई थी उसी प्रभु कृष्ण का ध्यान करते थे तिससे बोलने को समर्थ न हुए ॥ १ । २ ॥

बड़े कष्ट से आंसुओं को रोक कर नेत्रों को हाथ से पोंछकर अन्तर्हित कृष्ण के प्रेम से अधीरज होकर सारथि आदि लीलाओं में सखाभाव मित्रता सुहृदपनाको स्मरण करते हुए वाष्प गद्गद कण्ठ से ज्येष्ठ राजा के प्रति — वचन बोले ॥ ३ । ४ ॥

---

श्रीधरस्वामी ।

येन मां वंचयता । देवान् विस्मापयति यत् ॥ ५ ॥

यस्य क्षणवियोगेनेत्यादि यच्छब्दानां तेनाहमद्य मुषित इति सप्तमश्लोकस्थेन तच्छब्देन सम्बन्धः । प्रियस्याप्यप्रियत्वे दृष्टांतः । उक्थेन प्राणेन एव पित्रादिः ॥ ६ ॥

श्रीकृष्णोपकारान् अनुस्मरति यत्संश्रयादिति दशभिः यस्य संश्रयात् बलात् । स्मरेण कामेन दुर्मदानाम् अतिमत्तानाम् । तेजः प्रभावः हृतं धनुर्ग्रहणेनैव । पश्चात् तद्धनुः सज्जीकृतञ्च तेन मत्स्यो यन्त्रोपरि भ्रमन् विद्धः । ततस्तान् विजित्य द्रौपदी च प्राप्ता ॥ ७ ॥

उ इति विस्मये । खांडवम् इन्द्रस्य वनम् अदां दत्तवानस्मि खाण्डवदाहे रक्षितेन मयेन कृता सभा च लब्धा । अद्भुतशिल्परूपा माया यस्यां सा । ते अध्वरे राजसूये ॥ ८ ॥

---

श्रीवीरराघवः ।

उक्तिमेवाहवंचितइतित्रयोविंशत्याहेमहाराज ! अहंवंधुरूपिणावंधुरूपतांप्राप्तेनहरिणाआश्रितार्तिहरेणसाक्षाद्भगवतावंचितोऽस्मिराहितोऽस्मीत्यर्थः येनेत्यादीनांयच्छब्दानांतेनाहमस्मिमुषितः पुरुषेणभूम्नेत्युपरिष्टादन्वयः देवानामपिविस्मापनमाश्चर्यकरंयन्महन्मत्तेजोयेनापहृतंदेवेतिराज्ञः सम्बोधनंवा ॥ ५ ॥

यस्यचभगवतः क्षणमात्रवियोगेनाप्यप्रियंदर्शनं यस्यतथाभूतोऽयंमत्प्रभृतिलोकोभवतितथैवलोकः उक्थेनप्राणेनरहितः मृतकःशवः प्रोच्यतेअपिशब्दाददर्शनयोग्यश्चप्रोच्यतेतद्वत् ॥ ६ ॥

यत्संश्रयादिति अस्मदीयसौर्यादिकंयदधीनंतेनवंचितोऽस्मीतिसमुदायार्थः द्रुपदगेहेद्रौपद्याः स्वयंवराख्येस्वयंवरप्रारम्भेस्मरणकामेमहेतुनादुर्मदोयेषान्तेषामुपागतानांराज्ञान्तेजोमयायस्यभगवतः संश्रयाद्धेतोरपहृतंखलुतथासज्जीकृतेनसमारोपितज्याग्रुणकेनधनुषामत्स्याकारोयंत्रविशेषश्चाभिहतश्छिन्नः कृष्णाद्रौपदीचाभिगतालब्धाच ॥ ७ ॥

श्रीवीरराघवः ।

यत्संनिधावितिं यस्यभगवतः संनिधौहेतुभूतेऽसुरगणैः सहितमिंद्रं जवेनविजित्यखांडवाख्यंवनमहमग्नयेऽदामदत्तवानस्मि अहमुइ
तिछेदः उशब्दः निपातोविस्मयद्योतकः अत्याश्चर्यमयमेवंविधंकर्मकृतवानस्मीतिभावः तथामयकृतामयेननिर्मिताअद्भुतान्याश्चर्यभूतानि
शिल्पानिप्रतिमादीनिमाया अन्यान्यप्याश्चार्याणियस्यांसासभामयालब्धाअद्भुतानिशिल्पानिपाणिपादादिनैपुण्यानियासुतामायाआश्चर्य
रूपाःप्रतिमादयोयस्यामितिवातथायत्संनिधौतेतवाध्वरेऽध्वमेधेनृपतयोदिग्भ्योवलिमुपाहरन्नाहृत्यसमर्पयामासुः ॥ ८ ॥

---

श्रीविजयध्वजः ।

देवानपिविस्मापयतीतिदेवविस्मापनंमहत्तेजः सामर्थ्यलक्षणंयेनकृष्णेनापहृतंसहैवनीतंतेनबंधुरूपिणाप्रधानबंधुनाहरिणाअर्जुनोऽहं
वंचितइत्येकान्वयः वंचितइतिहरौनदोषआरोप्यते किंतुतेनावियुक्तइतितद्वियोगमात्रं वियोगोऽपिगृहीतमानुषाकारेणनसाक्षात्सर्वद्वादसन्नि
हितत्वात्तस्येत्यभिप्रायेणबंधुरूपिणेत्युक्तं तस्माच्छोकाच्छून्योऽस्मीतिभावः ॥ ५ ॥

एतमर्थंसदृष्टांतमाह यस्येति यथोक्थेनप्राणेनरहितएषदेहोमृतकः कुणपइतिप्रोच्यते तथायस्यकृष्णस्यक्षणवियोगेनलोकोऽप्यप्रिय
ममंगलंपश्यतीत्यप्रियदर्शनः यस्मात्तस्माच्छून्यत्वमित्यर्थः प्राणत्यागेपित्रादिशरीरमपिपुत्रादेरप्रियत्वात्बहिर्भूमौनिक्षिप्यतेयथातथाह
मपिबंधुभिरप्रियत्वादवज्ञातइवदृष्टइतिभावः ममायंलोकोदेहोऽप्रियदर्शनोजातइतिवा प्रथमहिशब्देनप्राणनियुक्तदेहस्यकुणपत्वंश्रुतिसिद्ध
मितिदर्शयति नकेवलमहमेवाप्रियदर्शनः किंत्वयंलोकोबंधुजनोद्वारवत्यादिप्रदेशोवा उक्थेनपित्रादिनावियुक्तएवंबंधुजनोऽपीतिदृष्टांतयो-
जना ॥ ६ ॥

यत्संश्रयात्सन्निधावित्यादिश्वदनुभावनिरस्तचित्ताइत्यंतानांश्लोकानांतेनाहमद्यमुषितइतिमध्यगतेनश्लोकेनमध्यकुलकन्यायेनान्वयः य-
यत्संश्रयाद्यस्यकृष्णस्यसेवावलात्द्रुपदगृहेपांचालपुरे स्वयंवरमुखेस्वयंवरश्रेष्ठउपागतानां मिलितानांस्मरकारणेनजातोदुष्टोमदोयेषांतेत
तेतथोक्ताः तेषांराज्ञांजरासंधादीनांतेजोऽभिमानलक्षणंमयेदृशेनहृतं किंचसज्जीकृतेनधनुषायंत्रविहितोमत्स्योविहतः पातितश्च किंचमयाकृ
ष्णाद्रौपदीचाधिगताचेदाध्ययनवदादरेणप्राप्तेत्येकान्वयः ॥ ७ ॥

यस्यसन्निधावहमेवामरगणैः सहवर्तमानमिन्द्रंचतरसावेगेनवलेनच विजित्यखांडवाख्यंवनमपियाचमानायअग्नयेअदांदत्तवानास्मि
अद्भुतानिशिल्पानिस्थलेजलप्रत्ययादीनिमायाश्चयस्यांसंतिसातथोक्तामयनाम्नातक्ष्णाकृतासभामयालब्धा यत्सन्निधानविशेषादातयोऽन्यम्
तेतवाध्वरेयज्ञेराजसूयलक्षणेदिग्भ्यआगतनृपतयोबलितेतुभ्यमहरन्ददुरित्यन्वयः ॥ ८ ॥

---

सुबोधिनी ।

राज्ञाद्यंपृष्टेयादवानांकुशलमर्जुनशोकहेतुश्च तत्र सन्निहितत्वात् उक्तन्यायेनभक्तेस्तिरोहितत्वाच्च शोकहेतूनाह वंचितइत्यादि भ-
स्मन्हुतंकुहकराद्धमिवोप्तमुष्यामित्यनेनभगवतावंचितस्यममेयंगतिरित्यर्थः वचनप्रकारमाह येनेति ननुभगवान् परमकृपालुः कथंवं-
चयति तत्राह हरिणेतिसर्वदुःखहर्तायदिइदानीमर्जुनस्यतेजोहरणं निमित्तसांनिध्यंकिमर्थंकृतमित्याशंक्याह बंधुरूपिणेतितत्रापि भग-
वतावचनेकृतंबंधुरूपमस्यास्तीति बंधुरूपामातुलपुत्रइवततोलौकिकव्यवहारेणनिकटेतेजोऽपहृतमित्यर्थः ननुस्थितेऽपितेजसिदेवानांरक्ष-
कत्वात् किमनेनानिष्टंभवेदित्यतआह देवविस्मापनमिति देवान् विस्मापयतीति ननुवामन्यमानत्वात् नशंकेत्यतआह महदिति ॥ ५ ॥

ननुतेजसिगतेमंत्रादीनांविद्यमानत्वात् क्वातवंचितत्यतआह यस्येति यस्यतेजसः क्षणवियोगेनसर्वोऽपिलोकः अप्रियदर्शनोजातः अ-
प्रियंदर्शनंयस्य तेजसिगतेजगत्द्रष्टुमपिनरोचतेकिंमंत्रादिनाक्षुद्रभावेऽन्नमिवकामाभावेकामिनीमिव किंच तेजसाहीनः मल्लक्षणः पुरुषः
उक्थेनप्राणेनरहितः प्राणकार्यंहिबलंतद्धतमेव तास्मन्गतेवृक्षादाविवप्राणः अकिंचित्करइत्यर्थः किंच लोकप्रतीत्याप्यहंतथैवजातः
तदाहमृतकः प्रोच्यतेयथेति यथामृतकः लोकैः प्रोच्यतेनायमत्रस्थापनीयः ज्वालनीयोदूरीकर्तव्यइति तथामल्लक्षणोऽपिजनोलोकैरु-
क्तइत्यर्थः एवंतेजोपहरणेनमृतप्रायएवाहंजातइत्युक्तं नन्वस्यवंचकत्वंज्ञातंचेत्कथंसख्यंकथंवाशास्त्रतोभजनीयतत्याशंक्यवंचनमद्यैव
कृतंनपूर्वमित्याह यत् संश्रयादित्यादितेनाह मद्यमुषितः पुरुषेणभूम्नेत्यंतेन "गुणस्वभावभेदेनकृष्णेनोपकृतावयम् गुणैस्तुनवधायोगात्
स्वभावेनत्रिधापुनः एवंद्वादशधाकृष्णः कृतार्थीकृत्यसांप्रतम् अवंचयदितिह्युक्तं तनैवास्यचसंक्षयः एवंचतुर्दशश्लोकैः पांडवेषुहरेर्गुणाः
तावद्भिरेवस्वज्ञातैश्चतुर्दशोगतिंययुः ॥ ६ ॥

तत्रप्रथमंसत्त्वगुणभेदान् वंकुंरजोमिश्रत्वेनभगवतायउपकारः कृतः रजोमिश्रितात् दूरस्थेनउपकारफलंचस्त्रीप्राप्तिरिततदाह यत्सं
श्रयादिति सम्यगाश्रयात् कृष्णस्येतिनह्यतींद्रियाश्रयव्यतिरेकेण अतींद्रियार्थज्ञानंभवति तत्रहिएकचक्रनगरात् पलायिताः ब्रह्मचा-
रिरूपेणस्थिताः तत्रद्रौपदीस्वयंवरप्रस्तावेअदृश्यराधावेधप्रतिज्ञायामस्मत्प्राप्त्यर्थमेवभगवताकृतायां सर्वेसमाहृताः अस्मत्तेजसः
प्राकट्यार्थंभगवतैवततस्तत्कृपयास्वयंप्राप्तंतेषांतेजः लक्षाज्ञानंद्रौपदीचतस्याः कृष्णेतिनामतः स्वसारूप्यंमन्यमानः सखिष्वस्मासुतांयो-
जितवान् अतींद्रियं च तेषां च तेजः स्वकीयमपितदपि च अतस्तेनैवतेजोदत्तंप्रथमे अंतेतेनैवापहृतमतितेजसांमध्येसर्वापहरणेनसर्व
नाशश्चस्वयंवरस्य मुखआरंभेतदाहि सर्वेमिलंति ननुपरब्रह्मस्वरूपस्यभगवतःसमाश्रयणेकथंप्राणिनामनिष्टकरणंतदाहस्मरदुर्मदाना
मिति स्मरेणादुष्टोमदोयेषाम् अतस्तेषां तेजोहरणेदोषरूपमदहरणात् उपकारएवतेषांकृतः अन्यितिराज्ञः संमतिः आसिद्धतश्चतित्क्षत
अभिहतश्चधनुषोऽपिसज्जीकरणंज्ञातंततउक्तंसज्जीकृतेनेति चकारादिदमस्थानम् ॥ ७ ॥

यत्तेजसा नृपशिरोऽङ्घ्रिमहन्मखार्थमार्य्योऽनुजस्तव गजायुतसत्त्ववीर्य्यः ।
तेनाहृताः प्रमथनाथमखाय भूपा यन्मोचितास्तदनयन् बलिमध्वरे ते ॥ ९ ॥
पत्न्यास्तवाधिमखक्लृप्तमहाभिषेकश्लाघिष्ठचारुकबरं कितवैः सभायाम् ।
स्पृष्टं विकीर्य्य पदयोः पतिताश्रुमुख्या यस्तत्स्त्रियोऽकृत हतेशाविमुक्तकेशाः ॥ १० ॥

सुबोधिनी ।

सत्त्वमिश्रसत्त्वेनोपकारमाह यत्सन्निधावितिसत्त्वमिश्रणात् भगवत्सांनिध्यम्उइति वितर्केकुत्राहंकुत्रतत्कर्मेतिखांडववनंसर्वौषधिसहितमग्नयेपावकायइंद्रस्यवनमिति तंविजित्यसभाराजसूयसभा तत्र दुर्योधनमोहः खांडववनेस्थितस्य मयस्यप्राणरक्षणात् स्वप्राणपरिवर्त्तनरूपंसर्वमायामयम् अद्भुतशिल्परचनारूप च कार्यदत्तवान् विश्वकर्माशिल्पमेवजानाति मयस्तुमायामपि अत्रापि प्राप्तदानसामर्थ्यमगादि इंद्रादीनांतेजःस्वभावः ततस्तवाप्युपकारोजातइत्याह दिग्भ्योऽहरन्निति तेअध्वरेराजसूयेबलिपूजामुपढौकनद्रव्यरूपम् ॥ ८ ॥

---

श्रीविश्वनाथचक्रवर्त्ती ।

वञ्चितस्त्यक्तः येन मां त्यक्तवता मम तेजोऽपहृतं तेन तद्दत्तमेव तेज इति भावः ॥ ५ ॥

यस्य क्षणवियोगेनेत्यादियच्छब्दानां तेनाहमद्य मुषितः इति सप्तमश्लोकस्थेन तच्छब्देनान्वयः । प्रियस्याप्यप्रियत्वे दृष्टान्तः उक्थेन प्राणेन । एष पित्रादिः ॥ ६ ॥

यस्याश्रयात् स्वयंवरे राज्ञां तेजो हृत्वा द्रौपदी प्राप्ता ॥ ७ ॥

उ इति विस्मये । खाण्डवमिन्द्रस्य वनम् । खाण्डवदाहे रक्षितेन मयेन कृता सभा लब्धा । अद्भुते शिल्पमाये यस्यां सा अध्वरे राजसूये ॥ ८ ॥

---

सिद्धांतप्रदीपः ।

तदेवाहवंचितोऽस्मीतिचतुर्विंशतिश्लोकैः हरिणावंचितोऽस्मियेनेत्यादियच्छब्दानांतेनाह मुषितइत्यनेनान्वयः ॥ ५ ॥

उक्थेन प्राणेन ॥ ६ ॥

स्वयंवरस्यमुखेप्रारम्भे उपागतानांराज्ञांयत्संश्रयात्तेजोहृतमपहृतं तथासज्जीकृतेनधनुषामयाभिहतःछिन्नः तथाकृष्णाद्रौपदी अधिगता लब्धा ॥ ७ ॥

यथामणिविशेषसंनिधावयोनृत्यति तथायस्यसंनिधिमात्रतोमयेदंकृतमिति विस्मिततयाह यदिति यद्यस्यसंनिधौ उइतिविस्मये अहमग्नयेविप्ररूपेणयाचमानायखाण्डवमिंद्रवनमदांदत्तवानस्मि तत्राग्निदाहभयत्रातमयकृताद्भुतशिल्पमाया आश्चर्यतायस्यांसासभा चलब्धा ॥ ८ ॥

---

भाषाटीका ।

हे महाराज ! बन्धुरूप हरि ने मेरे को ठग लिया है जिसने कि देवों का विस्मय कारक मेरे तेज को हर लिया है ॥ ५ ॥

जिसके क्षणमात्र वियोग होने से संसार अप्रिय होजाता है जैसे प्राण के नहीं रहने से मृतक शरीर ॥ ६ ॥

जिस कृष्ण के आश्रय से द्रुपद राजा के घर से स्वयम्बर में आये हुये कन्दर्प वाले राजाओं के तेज को मैने हरण किया था धनुष चढा मत्स्य वेध करके द्रौपदी का लाभ किया था ॥ ७ ॥

जिसके सन्निधि से मैने अग्नि को खांडववन दानकिया देवों सहित इन्द्र को जीतकर अद्भुतशिल्प माया वाली मय दानव की सभा को लाभ किया आपके यज्ञमें दिशों से राजा लोग भेट लाये ॥ ८ ॥

---

श्रीधरस्वामी ।

अनन्तरः श्लोको विगीतः तथापि व्याख्यायते । नृपशिरःसंघ्रिर्यस्य तं जरासन्धं तवानुजो भीमः मखार्थम् अहन् हतवान् तज्जियं विना राजसूयमखानुपपत्तेः । गजायुतस्येव सत्त्वम् उत्साहशक्तिः वीर्य्यं बलञ्च यस्य सः । तं हत्वा प्रमथनाथो महाभैरवः तस्य मखाय ये राजानः तेनाहृताः ते यद्यस्मान्मोचिताः तत्, तस्मात् ते अध्वरे बलिम् आनीतवन्तः ॥ ९ ॥

श्रीधरस्वामी।

यैः कितवैः दुःशासनादिभिः तव पत्न्याः कवरं विकीर्य उन्मुच्य स्पृष्टम् आकृष्टं तेषां स्त्रियो हतेशाः अतएव वैधव्यात् विमुक्तकेशाश्च अकृत चकार। कथंभूतं कवरम् अधिमखं राजसूयमधिकृत्य क्लृप्तो रचितो यो महाभिषेकः तेन श्लाघ्यतमं चारु रम्यं तच्च तच्च स्मरणात् तदानीमेवास्मत्कृपया प्राप्तस्य श्रीकृष्णस्य नमने, पदयोः पतितानि अश्रूणि मुखाद्यस्याः पत्न्याः। पदशब्दसापेक्षस्यापि पतितशब्दस्याश्रुपदेन समासो नित्यसापेक्षत्वात् ॥ १० ॥

---

श्रीवीरराघवः।

तवानुजोममार्योऽग्रजः गजानामयुतस्यसत्त्वंबलंतत्तुल्यंबावीर्यंचयस्यभीमः तवमखार्थयज्ञार्थिनस्यभगवतः संश्रयाद्धेतोर्नृपस्यजरासंधस्याशिरोऽङ्घ्रिमिति प्राण्यंगत्वात्समाहारद्वन्द्वैक्येनशिरोऽङ्घ्रिचाहतंननृपेणाहृताः नृपास्ततोविमोचिताः संतोयत्प्रमथस्यरुद्रस्यभैरवस्यवामखायमखार्थंसंभृतंधनंतवाध्वरेचबलिकरमनयन्नानीतवन्तः नृपाणांशिरस्सुअङ्घ्रिर्यस्यतंजरासंधमितिवा ॥ ९ ॥

पत्न्याइतितवपत्न्याद्रौपद्याः अधिमखंराजसूयाख्येयज्ञेविभक्त्यर्थेऽव्ययीभावः क्लृप्तःकारितोयोमहाभिषेकः तेनश्लाघिष्ठमत्यन्तश्लाघ्यंचारुसुन्दरंधम्मिल्लंविकीर्यविक्षिप्ययैर्दुःशासनादिभिः स्पृष्टंतेषांस्त्रियः स्त्रीः हताभृताईशाःपतयोयासांताश्चविमुक्ताः केशायासांताश्चतथाभूताः योअकृतकृतवान्सतवानुजोनृपशिरोऽङ्घ्रिमहन्नितिपूर्वेणान्वयः कथंभूतायाःपत्न्याः पादयोर्दुःशासनस्यभगवतोवासुदेवस्यापदयोः पतितानि अश्रूणिमुखाद्यस्याश्चतथाभूतायाः ॥ १० ॥

---

श्रीविजयध्वजः।

गदाख्यमायुधंचसत्त्वंचहृदयसारश्चवीर्यंवीरभावश्चसत्त्वंमानसबलंचवीर्यंकायबलंचवायस्यसगदायुधसत्त्ववीर्यः तवानुजोममज्येष्ठोभीमसेनोनृपशिरःस्वंघ्रिर्यस्यसतथोक्तः तंजरासंधंयत्संनिधावहन्हतवानित्यन्वयः किमर्थंमखार्थंराजसूययज्ञमुद्दिश्यजरासंधेनतेनप्रमथनाथमखायरुद्रमुद्दिश्यपुरुषमेधाख्ययज्ञायाहृतागृहीतायेनकृष्णेनमोचिताः जरासंधवधेनेनातिशेषः भूयस्तेतवाध्वरंबलिंश्युदनयन्अभिगम्यानीतवंतइत्यन्वयः "वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयो"रित्यत्र"भेरप्युपसंख्यानंकर्तव्यम्" ॥ ९ ॥

कुरुसभायांतवपत्न्याद्रौपद्याअपिराजसूयनाम्निमखेक्लृप्तेनकृतेनमहाभिषेकेणश्लाघिष्ठमतिशयेनश्लाघ्यतममतएवचारुरुचिरंकवरंकेशबंधंयैरक्षकितवैर्दुःशासनादिभिः स्पृष्टंयत्तत्तत्कवरंविकीर्ययत्पदयोः पतितायाः अश्रुमुख्याः अश्रुप्रधानोयःसःतत्पदयोः पतितत्वादेवतत्स्त्रियः तेषांकितवानांस्त्रियोभार्याः विमुक्तकेश्यः भीमाविद्धगदाभग्नोरुदंडान्स्वपतीनालिंग्यरुदतीर्विकीर्णकेशपाशाः न्यक्कृतनितरामकार्षीदित्येकान्वयः अश्रुशब्दउभयलिंगोऽप्यस्तिधनुः शब्दवत् ॥ १० ॥

---

क्रमसंदर्भः।

यस्तव पत्न्याः सम्बन्धे तेषां कितवानां स्त्रियो हतेशाविमुक्तकेशा अकृत। कीदृश्याः पत्न्याः कवरं विकीर्य्य पश्चाद्वनान्तर्गतस्य कृष्णस्य पदयोः पतिताश्रुमुख्याः। कीदृशं कवरं कितवैः स्पृष्टं द्यूतसभायामाकृष्टमिति योज्यम् ॥ १० ॥ ११ ॥

---

सुबोधिनी।

यस्तेजसेति विगीतश्लोकोमध्येअधिकः सोऽपिव्याख्यायतेतस्य भगवतस्तेजसानृपशिरोऽङ्घ्रि नृपशिरस्सुअंघ्रिर्यस्य जरासंधस्यतवमखार्थमहन् आर्योममज्येष्ठभ्राताभीमः तवअनुजः येचमोहिताः यस्मात्तेमोचिताः तस्मात्तेअध्वरेबलिमनयस् आनीतवंतः अहमपिभीमोऽपिभगवत्सांनिध्यात् श्लोकोक्तंफलंप्राप्तवानित्यर्थः ॥ ९ ॥

तमोमिश्रसत्त्वेनोपकारमाहपत्न्यास्तवेति रजसातस्यतमसानाशउचितः तथापिसत्त्वेनतस्योपकारः कर्तृस्त्रीषुदत्तः तथाकरणेहेतुः अधिमखेतिराजसूयमध्येमहाभिषेकप्रस्तावेयजमानपत्न्याः क्लृप्तोयोऽयंमहाभिषेकः तेनश्लाघिष्ठं सर्वसभास्तुत्यंचारुमनोहरं च वेदलोकयोरुत्कृष्टंयत् कवरंतत् कितवैर्वंचकैः दुर्धूर्तैः अपणितमपिपणत्वमारोप्यभीष्मादिस्थितसभायांपापप्राकट्यायैः स्पृष्टंतत्स्त्रियः हतेशाविमुक्तकेशाः कृताः हतः ईशोयोभर्तातेनमृतभर्त्राविमुक्ताः केशायासां ननुभगवतःएवंकरणेकोहेतुस्तत्राह विकीर्यपदयोः पतिताअश्रुमुख्याःइति दुष्टस्पर्शेनदोषसंबंधात् तन्निराकरणार्थंगाढंभक्तिहृदयेन हानाथद्वारकावासिन्निति रूपेणस्मरणे तदानीमेवोपस्थितस्य भगवतः अन्येषांमहापातकित्वात् द्रौपदीमात्रप्रत्यक्षस्य पदयोर्दुष्टस्पृष्टंकवरंविकीर्यपतितायाश्रुमुखीतस्याः इदानींभगवान्द्वारिकातःसमागत्यतस्याअग्रेस्थितः सोऽपितंदृष्ट्वातस्याः पादयोः पतित्वा अश्रूण्यवर्तयत् अतएव "यात्वराद्रौपदीत्राणे" इति वाक्यंसंगच्छते एवं गुप्ततयापिसर्वदासर्वंकरोतीत्यवगंतव्यम् ॥ १० ॥

---

योनो जुगोप वन एत्य दुरन्तकृच्छ्राद्दुर्व्वाससोऽरिरचितादयुताग्रभुग्यः ।
शाकान्नशिष्टमुपयुज्य यतस्त्रिलोकीं तृप्ताममंस्त सलिले विनिमग्नसङ्घः ॥ ११ ॥
यत्तेजसाथ भगवान् युधि शूलपाणिर्विस्मापितः सगिरिजोऽस्त्रमदान्निजं मे ।
अन्येऽपि चाहममुनैव कलेवरेण प्राप्तो महेन्द्रभवने महदासनार्द्धम् ॥ १२ ॥

श्रीविश्वनाथचक्रवर्त्ती ।

नृपाणां तत्सजातीयानां प्राकृतानां शिरःसु अंघ्रिर्यस्य तं जरासन्धम् । तवानुजो भीमः । मखार्थं तन्निर्जयं विना राजसूयमखानुप पत्तेः गजायुतस्येव सत्त्वम् उत्साहशक्तिः वीर्यं बलं च यस्य सः । प्रमथनाथो भैरवस्तस्य मखाय ये राजानः तेनाहृताः यद्यस्मान्मोचिताः तत्तस्मात्तेऽध्वरे बलिम् आनीतवन्तः ॥ ९ ॥

यैः कितवैर्दुःशासनादिभिः तव पत्न्याः अभिमखं राजसूये कृतमहाभिषेकेण प्रशस्तं कवरं विकीर्य्य उन्मुच्य स्पृष्टम् आकृष्टम् । तेषां स्त्रियो हृतेशा अतएव वैधव्याद्विमुक्तकेशाश्च अकृत यस्तवानुज इति पूर्व्वस्यैवानुषङ्गः । कीदृश्याः स्मरणात् प्राप्तस्य कृष्णस्य नमने पदयोः पतितानि अश्रूणि मुखाद्यस्याः । पदशब्दसापेक्षस्यापि पतितशब्दस्य अश्रुपदेन समासो नित्यसापेक्षत्वात् । पदयोः पतिता चासौ अश्रुमुखी चेति तस्या इति वा ॥ १० ॥

---

सिद्धांतप्रदीपः ।

यद्यस्यश्रीकृष्णस्यतेजसाममार्योऽग्रजस्तवानुजोभीमः नृपसिरःस्वंघ्रिर्यस्यतंजरासंधंमखार्थंराजसूयार्थंराजसूयाख्ययज्ञार्थम् अहन् हतवान् किंचप्रमथनाथमखायमहाभैरवमखायतेनजरासन्धेनयेभूपाआहृताः यद्यतोमोचितास्तत्ततोहेतोस्तेभूपास्तवाध्वरेराजसूयेबलिम् अनयन् आनीतवन्तः ॥ ९ ॥

तवपत्न्याः कृष्णायाः अभिमखंमखेविभक्त्यर्थेऽव्ययीभावः क्लृप्तेनमहाभिषेकेणहेतुनाश्लाघिष्ठचारुएवंभूतम् कवरम् यैःकितवैर्दुःशासनादिभिर्विकीर्य्यविक्षिप्यस्पृष्टम् तत्तेषां हृतेशविमुक्तकेशाः हताईशाविमुक्तावैधव्यसूचनार्थंकेशायासांताः एवं भूताः स्त्रियः यः श्रीकृष्णः अकृत कृतवान् कथंभूतायाः पत्न्याः तदाद्रौपद्यास्मरणेनसभायांप्राप्तस्य अन्यैरदृष्टस्यद्रौपदीसमीपेस्थितस्यपदयोः पतितान्यश्रूणिमुखाद्यस्याः तदुक्तं केशग्रहणानन्तरंवस्त्रापकर्षणावसरे सभापर्वणि "आकृष्यमाणेवसनेद्रौपद्याश्चिंतितोहरिः गोविन्द द्वारिकावासिन्कृष्णगोपीजनप्रिय ? कौरवैरभिभूतांमांकिंनजानासिकेशव ! याज्ञसेन्यावचःश्रुत्वाश्रीकृष्णोगह्वरितोऽभवत् त्यक्त्वाशय्यासनं पद्भ्यांतन्नैवकृपयाऽभ्यगादि"त्यादि ॥ १० ॥

---

भाषाटीका ।

जिस के तेजसे अयुत गज के बलवाले राजमुकुट जरासंध को यज्ञके लिये भीमसेन ने मारा उसके लाये हुए भैरव यज्ञ के लिये जो राजा छुटाये तब आप के यज्ञ में भेट लाये ॥ ९ ॥

आप के राज्याभिषेक में कल्पित उत्तम आपकी पत्नी द्रौपदी के केशों को सभा के मध्य में धूर्तों ने पकडा था अश्रु सहित पांवों में पड़ने में भी नहीं छोड़ा उन दुष्टों को मारकर उनकी स्त्रियों के केशों को खोल दिया ॥ १० ॥

---

श्रीधरस्वामी ।

शिष्याणामयुतस्याग्रे तत्पङ्क्तौ भुङ्क्ते यस्तस्मात् दुर्व्वाससो हेतोः अरिणा रचितं यत् दुरन्तं कृच्छ्रं शापलक्षणं तस्मात् सकाशात् नोऽस्मान् वने आगत्य जुगोप । किं कृत्वा शाकमेवान्नं तस्मिन् पात्रेऽवशिष्टम् उपयुज्य भुक्त्वा । यत उपयोगात् सलिले विनिमग्नो मुनीनां संघः त्रिलोकीं तृप्ताम् अमंस्त । एवं हि भारतकथा—कदाचित् दुर्व्वाससो दुर्य्योधनेनातिथ्यं कृतम् । तेन च परितुष्टेन वरं वृणीष्वेत्युक्ते दुर्व्वाससः शापात् पाण्डवा नश्येयुरिति मनसि विधाय दुर्य्योधनेनोक्तं युधिष्ठिरोऽस्मत्कुलमुख्योऽतस्तस्यापि भवतैवं शिष्यायुतसहितेनातिथिना भाव्यम् । द्रौपदी यथा क्षुधया न सीदेत् तथा तस्यां भुक्तवत्यां तद्गृहे गन्तव्यमिति । ततश्च तथैव दुर्व्वाससि प्राप्ते परमादरेण युधिष्ठिरेण माध्याह्निकं कृत्वा आगम्यतामिति विज्ञापितो मुनिसंघोऽघमर्षणाय जले निममज्ज । तत्र चिन्तातुरया द्रौपद्या स्मृतमात्रः श्रीकृष्णः अङ्कस्थां रुक्मिणीं हित्वा तत्क्षणमेव भक्तवात्सल्येनागतः । तया चावेदिते वृत्तान्ते भगवतोक्तं हे द्रौपदि ! अहञ्च बुभुक्षितोऽस्मि प्रथमं मां भोजय । तया चातिलज्जया अहो मदीयमभाग्यं भाग्यञ्च यतः त्रैलोक्यनाथो यज्ञपुरुषो भगवान् मद्गृहमागतः भोजनं प्रार्थयतीति मनसि विधायोक्तं भोः । स्वामिन् ! मद्भोजनपर्य्यन्तमक्षयमन्नं सूर्य्यदत्तस्थाल्याम् । मया च सर्व्वान् संभोज्य भुक्तम् अतो नास्त्यन्नमित्यश्रुपातं चकार । तथाप्यतिनिर्व्वन्धेन स्थालीमानाय्य तत्कण्ठलग्नं किञ्चिच्छाकान्नं प्राश्योक्तं भोस्तु मुनिसंघमाह्वयेति ।

श्रीधरस्वामी ।

अथ भीमश्च प्रहितवान् । भीमेन गत्वोक्तं स्वामिन्! भोजनार्थमागम्यतां कथं विलम्बः क्रियते । स च तावतातितृप्तः वृथापाकभयेन प्रपलाय्य गत इति ॥ ११ ॥

गिरिजासहितो विस्मापितः सन् निजं पाशुपतमस्त्रम् अदात् । अन्येऽपि लोकपाला निजान्यस्त्राणि ददुः । अन्यदप्याश्चर्य्यमाह अमुनैवेति । महत इन्द्रस्यासनार्द्धम् ॥ १२ ॥

---

श्रीवीरराघवः ।

योनइतियोऽयुताग्रभुगयुतेनविप्राणामयुतेनसहाग्रेभुंक्तेइतितथाअयुतस्याग्रेवातस्मादरिणादुर्योधनेनविहितात् दुर्वाससः हेतोरागतात् दुरन्तकृच्छ्रादपारसंकटाद्योभगवान्नोऽस्मान् शाकात्मकान्नावशिष्टमवलेपमुपयुज्यभुक्त्वाजुगोपशाकावशिष्टमुपभुक्तवतोभगवतोहेतोः सलिलेनिमग्नः संघोभूतसंघरूपोदेशोयस्यसदुर्वासाः त्रिलोकीमपितृप्तामममंस्तामन्यततेनभगवतामुषितोऽस्मीत्यन्वयः एषाचान्यत्रकथासूच्यते "दुर्वासामुनिवर्योऽथदुर्योधनगृहंगतः तंराजापूजयामाससार्घ्यपाद्यासनादिभिः निमंत्रयामाससतंभोजनायनराधिपः तंवाढमितिचामंत्र्यकृत्वानित्यादिकाःक्रियाः बुभुजेऽन्नंबहुगुणंब्राह्मणैः सहधर्मवित् अब्रवीच्चसराजानंभुक्त्वातुष्टमनामुनिः वरंवरयभद्रंतेवरदोऽस्मिनराधिप! याचयाम्यद्यकिमहंवरमेतंमुनीश्वरम् इतिचिंतासमापन्नोराजादुर्योधनस्तदा मुहूर्तंचिंतयित्वाथप्रतिपेदेमनोगतम् वनवासंगतायेतुपांडवाः शंशितव्रताः तेषामस्यमुनेः शापंजनयेयंलवान्नृपः मद्गृहेभुक्तवान्सर्वंयदावांछतिभोजनम् तन्नदातुंशक्नुवन्तितेवनेक्लेशभागिनः तदाकोपपरीतात्माशापंदास्यत्यसंशयम् इत्येवंदुरभिप्रायोवरंवव्रेसुदारुणम् वनेमेभ्रातरः सन्तिपांडवादुःखभागिनः भोक्तव्यंतद्गृहेगत्वामद्गृहेभुक्तवान्यथा तथेतिमुनिरुक्त्वातंगत्वायाचतभोजनम् अयुतब्राह्मणाग्रेमांभोजयाशुयुधिष्ठिर! श्रुत्वैतद्वचनंराजाहृदिसंजातवेपथुः भुक्तमस्माभिरधुनाशिष्टमन्नंनविद्यते तथानब्राह्मणाःसन्तिसामग्रीचकदाचन यद्यहंनददाम्यन्नंशापंदास्यतिकोपतः तथाप्येनंनिमंत्र्यैवमुपायंमृगयेऽधुना इत्येवंमनसाध्यायन्राजामुनिमथाब्रवीत् भगवन्नित्यकर्मादिकृत्वास्नानादिकर्मच शीघ्रमागमनंकार्यंसिद्धंसर्वंतथामम ततओमित्यनुज्ञायगत्वाचाप्सुविवेशह तत्राघमर्षणंकुर्वन्दध्यौतद्ब्रह्मनिष्कलम् एतस्मिन्नेवकालेतुभगवान्यदुनन्दनः आजगामकुरुश्रेष्ठसन्निधौक्लेशनाशनः विषण्णवदनान्दृष्ट्वापांडवान्मधुसूदनः उवाचराजन्! किंदीर्घंध्यायसेक्लेशभागिव सोऽसौन्यवेदयत्सर्वंमुनेरागमनादिकम् श्रुत्वैतद्भगवान्कृष्णोदुर्योधनविचेष्टितम् श्रुत्वोवाचावशिष्टंतदन्नंकिंकिंचिदस्तिवै शाकमात्रावशिष्टोमेपाकइत्यब्रवीन्नृपः उवाचभगवान्शिष्टंशाकमानीयतामिति अनीतंभक्षयामासराज्ञोदुःखोपशांतये दुर्वासास्तुमुनिर्मेनेतृप्तंस्थावरजंगमम् इत्यादिकाकथावर्तते ॥ ११ ॥

यत्तेजसेति यस्यभगतस्तेजसामयाहितेनहेतुनाभगवान्शूलपाणिः शम्भुःकिरातरूपोयुद्धेविस्मापितः मयेतिशेषःविस्मयंप्राप्तः सचगिरिशोरुद्रः मेमह्यमस्त्रंपाशुपताख्यंददौतथाप्यन्येचशक्त्यादयोविस्मापिताः इत्यर्थः तथाहममुनैवाधुनातेजोहीनकलेवरेणैवमहेन्द्रस्यभवनेमहदासनस्यार्द्धंप्राप्तः इन्द्रासनस्यार्धमधिष्ठितवानस्मीत्यर्थः महदितिपृथक्पदम् अन्यथाआन्महतइत्यात्वापत्तिः आर्षत्वात्तदभावेमहत्यासनेइत्यप्यन्वेतुंशक्यम् ॥ १२ ॥

---

श्रीविजयध्वजः ।

यस्यतेजसायुधिवराहनिमित्तयुद्धेविस्मापितः विस्मयंगमितः शूलपाणौयस्यसशूलपाणिः सगिरिशः निजमस्त्रंपाशुपताख्यंमेमह्यमदादित्यन्वयः अन्येलोकपालाअपिस्वंस्वमस्त्रंददुरितिशेषः अपिचार्जुनोऽहममुनैवकलेवरेणमान्येनमहेंद्रभवनेअमरावत्यांमहतोदेवेंद्रस्यासनार्धंप्राप्तइत्येकान्वयः अथान्यच्चश्रीकृष्णमाहात्म्यंवक्ष्यामिविशेषतइत्यथशब्दार्थः ॥ १२ ॥

---

क्रमसंदर्भः ।

यत्तेजसेति पूर्ववल्लौकिकलीलामयत्वेनैव ॥ १२ ॥

---

सुबोधिनी ।

रजोमिश्रतमसायउपकारः कृतस्तमाह योनइति एवंह्याख्यायिकाकदाचित्दुर्वासाःषण्मासोपवासीपारणादिवसेसर्वदेत्यप्रार्थनया दुर्योधनगृहेगतः तेनचातिथ्येनसंतोषितः अयुतशिष्यसहितः वरंवृणीष्वेत्याह तदाभगवतान्यामोहितोदुर्योधनः सहसापांडूनांनाशः प्रार्थयितुमशक्यइतिमन्यमानः व्याजेनप्रार्थयिष्यामीति संचिन्त्ययथास्मद्गृहेसमागतंशिष्यैः सहतथास्मज्ज्येष्ठभ्रातुर्युधिष्ठिरस्यगृहेगंतव्यंपरंद्रौपदीभोजनानंतरम् अन्यथासाखेदंप्राप्स्यतीति वरमयाचत ततस्तथेत्युक्त्वातथैवगतोदुर्वासाः पांडवानांचारण्येभोजनाभावेभगवदुपदेशात् सूर्यप्रार्थनायांसर्वान्नपूर्णस्थालींददत् सूर्यआहद्रौपदीभोजनावधि अक्षय्यमन्नंभविष्यतीति ततः प्रभृतिसातिथ्यागमनकालमतिक्रम्यभुंक्ते । एवंजातेसतिप्रहरराज्यंतरंद्रौपदीभोजनयोगेनज्ञात्वातथैवागतः तदापांडवाः द्रौपदीचसर्वनाशंमेनिरेतदाध्यातः कृष्णः समागतः बहिरेवद्रौपदीमदृष्ट्वैवऋषिंप्रत्युक्तवान् जातः पाकः स्नानंक्रियतामिति तथेत्यावश्यकं कर्त्तुंदुर्वाससिगतेअंतः प्रविष्टोभगवान्

सुबोधिनी ।

द्रौपदीवैक्लव्यंदृष्ट्वाकवलमात्रावशिष्टेभोजनेस्थाल्यामपि तावच्छिष्टंशाकान्नंप्राश्यत्रिलोकीमेवतृप्तामकृतेतदाह योनोजुगोपेतियोभगवान् वनमेत्य नः अस्मान्जुगोपदुर्वाससः तथाहेतुत्वात्पंचमी दुरंतकृच्छ्रंयस्मात् अरिविहितात् दुर्योधनेनप्रेरितात् योदुर्वासाः अयुतंब्राह्मणाः अग्रेभुंजतेयस्यशाकेनाशिष्टमन्नमुष्टिंप्रथमतएवभगवदर्थस्थापितांनियतकृत्यंहितत् तदुपयुज्यस्वीकृत्यजुगोपेतिसंबंधः कथमेतावतागोपनंतत्राह यतः सलिलेनिमग्नऋषिसंघः यः पूर्वमावश्यकंकर्त्तुंगतः सलिले निमग्नउत्थानसमयेत्रिलोकीमिवतृप्तामभंस्तकिमुतआत्मानमित्यर्थः ॥ ११ ॥

सत्त्वमिश्रतमसाकृतमाह यत्तेजसेति अथेतिभिन्नप्रक्रमेश्लोकद्वयेनद्रौपदीनिमित्तरक्षणस्योक्तत्वात् स्वपौरुषाभावाच्चतदपहायकेवलंस्वपौरुषसाध्यचरित्रमितिभगवानितिसंतोषेवरदानहेतुः शूलपाणिरितिविपरीतेमारणहेतुः एवंदुर्योधनविषयत्वाभावात् कुत्सितत्वाच्च अतः सत्त्वतमोभिःश्लोकत्रयपरिपाट्यैवभगवच्चरित्रमुक्त्वातोपश्चतुर्थेप्रतिपाद्यते लोकत्रयजयस्यैव अभीष्टत्वात् दैत्यजयः साधनप्राप्त्या निरूपणीयोऽपिभोग्यस्यप्राधान्यात् सएवनिरूपितः अर्थान्निरूपितोऽपिसंहारेअनुवदनवंचनशेषतयानिरूपितः दैत्यानांतत् प्राधान्यात् मायेत्यसुराइतिश्रुतेः यत्पुनरग्रेभगवच्चरित्रकथनंतदवतारकार्यमिति नात्यंतमर्जुनानुग्रहः सिध्यतिभूभारहरणस्यस्वापेक्षितत्वात् "मयैवैतेनिहताःपूर्वमेवनिमित्तमात्रंभवसव्यसाचिन्न" ति भगवद्वाक्याच्च अतोऽर्जुनेनभगवतः उपकारत्रयमेवानुगुणरूपंदोषाभावत्रयंचाग्रेवक्ष्यते सौत्येत्रतइत्यादिभिस्त्रिभिः "कारणंकरणंचैवप्रतिबंधश्चकथ्यते स्वकृतत्वज्ञापनायमाहात्म्यज्ञापनायतत् दोषाभावेनसहितंदोषेनापिविमिश्रितम् कृष्णमाहात्म्यज्ञापनंत्रिभिः त्रिभिश्चदोषास्पर्शोपिमहादेवःयत्तेजसाविस्मापितः नहिजीवसामर्थ्यंब्रह्मणोविस्मयोभवेत् तत्रापिगिरिजयापार्वत्यासहितः पर्वतपुत्रीहिपर्वतादप्यधिकेनपदार्थेनविस्मिताभवतीतिसूचितम् अत्रापिकिरातार्जुनकथानुसंधेया परीक्षार्थं समागतोमहादेवः सर्वव्रतोद्यापनरूपचिन्हसहितस्यार्जुनस्य चिन्हप्रदर्शनार्थंपार्वतीमप्यानीतवान् तत्रशस्त्रबाहुमुष्टियुद्धेषुस्वयंभूमौपतितादर्जुनपृष्ठस्थचिन्हेपार्वत्याद्वंद्वंदपत्योर्हास्यमुखमवलोक्यभीतोऽर्जुनः स्तोत्रंकृतवान् ततः प्रीतोमहादेवः पाशुपतास्त्रंदत्तवान् मेंमह्यम् अन्येऽपींद्रादयः तदानींसमागत्यशस्त्राणिदत्तवंतः चकाराच्छत्रुजयश्च किंच तस्यास्त्रस्यप्रयोगसिध्यर्थं महेंद्रप्रस्थितमातलिप्रार्थनयातेनैवनीतः महेंद्रभवनेवर्षपंचकमिंद्रासनस्यार्द्धमहदिंद्रोपवेशभागादधिकं शरीरांतरोपभोग्यममुनैवकलेवरेणअतेजोममेनप्राप्तवानस्मीत्यर्थः अत्रापित्रयंप्राप्तंमहादेवसंतोषः अस्त्रप्राप्तिः इंद्रासनप्राप्तिश्चेति ॥ १२ ॥

---

श्रीविश्वनाथचक्रवर्त्ती ।

दुर्व्वाससो हेतोररिणा रचितं यद्दुरन्तं कृच्छ्रं शापलक्षणं तस्मात् सकाशाद्योऽस्मान् वने एत्य जुगोप । यः शिष्याणाम् अयुतस्य अग्रे अग्रपङ्क्तौ भुङ्क्ते । शाकमेवान्नं तस्मिन् पात्रेऽवशिष्टम् उपयुज्य जग्ध्वा । यत उपयोगात् सलिले विनिमग्नो मुनीनां सङ्घस्त्रिलोकीं तृप्तामभंस्त । एवं हि भारते कथा—कदाचिद्दुर्व्वाससो दुर्य्योधनेनातिथ्यं कृतम् । तेन च परितुष्टेन वरं वृणीष्वेत्युक्ते दुर्व्वाससः शापात् पाण्डवा नश्येयुरिति मनसि विधाय दुर्य्योधनेनोक्तम् । युधिष्ठिरोऽस्मत्कुलमुख्यः अतस्तस्यापि भवतैवं शिष्यायुतसहितेनातिथिना भवितव्यम् । किन्तु द्रौपदी यथा क्षुधया न सीदेत्तथा तस्यां भुक्तवत्यां तद्गृहं गन्तव्यमिति । ततश्च तथैव दुर्व्वाससि प्राप्ते परमादरेण युधिष्ठिरेण माध्याह्निकं कृत्वा आगम्यतामिति विज्ञापितो मुनिसङ्घोऽघमर्षणाय जले निममज्ज । तत्र चिन्तातुरया द्रौपद्या स्मृतमात्रः श्रीकृष्णः अङ्कस्थां रुक्मिणीं हित्वा तत्क्षण एव भक्तवत्सल आगतः । तया चावेदिते वृत्तान्ते भगवतोक्तम् । द्रौपद्यहं बुभुक्षितोऽस्मि प्रथमं मां भोजय । तया चातिलज्जया अहो मदीयमभाग्यं भाग्यं च यत्त्रैलोक्यनाथो यज्ञपुरुषो मद्गृहमागतो भोजनं प्रार्थयतीति मनसि विधायोक्तम् । स्वामिन् ! मद्भोजनपर्य्यन्तमक्षय्यमन्नं सूर्य्यदत्तस्थाल्याम् । मया च सर्व्वान् भोजयित्वा भुक्तम् । अतोनास्त्यन्नमिति अश्रुपातं चकार । तथाप्यतिनिर्व्वन्धेन पाकस्थालीमानाय्य तत्कण्ठलग्नं शाकान्नं प्राश्योक्तं भोक्तुं मुनिसङ्घमाह्वयेति । अथ भीमश्च प्रहितवान् । भीमेन गत्वोक्तं स्वामिन् ! भोजनार्थमागम्यतां कथं विलम्बः क्रियते । स च तावता अतितृप्तः वृथापाकभयात् पलायित इति ॥ ११ ॥

गिरिजया दुर्गया सहितः विस्मापितः सन् निजं पाशुपतमस्त्रम् । अन्येऽपि लोकपालाः निजास्त्राण्यदुः । महत इन्द्रस्य आसनार्द्धम् ॥ १२ ॥

---

सिद्धांतप्रदीपः ।

योमुनिः शिष्यायुतस्याग्रेगुरुत्वाद्भुंक्तेतस्मादरिभिर्दुर्योधनादिभिर्विहिताद्दुर्वाससः हेतोरुपस्थिताद्दुरंतादपारात् कृच्छ्रात्संकटात् यः श्रीकृष्णः वनमेत्यशाकान्नशिष्टंशाकमेवान्नमदनीयंतदेवशिष्टमवशिष्टंस्थाल्यांलग्नंतदुपयुज्यनोऽस्मान्जुगोप यतःशाकलेशोपयुक्तवतः श्रीकृष्णात्सलिलेविनिमग्नोमुनिसंघस्त्रिलोकीमपितृप्तामभंस्तअमन्यत अस्यार्थस्यविस्तरोवनपर्वणिद्रष्टव्यः ॥ ११ ॥

धृतकिरातवेशः सगिरिजः सोमः भगवान् शूलपाणिः शिवः वनपर्वणि प्रसिद्धेऽर्जुनकिरातीयेयुद्धेयस्य श्रीकृष्णस्यतेजसा हेतुभूतेनमयाविस्मापितः निजंपाशुपतमस्त्रमदात् तदनन्तरमेवान्येलोकपालाअपिनिजास्त्राण्यपिददुः किंचामुनैवकलेवरेण लोकपालाश्च प्राप्स्यतनन्तरमहेंद्रभवनेमहतः स्वपितुरिन्द्रस्यासनार्धं प्राप्तः प्राप्तवानास्मि चकारादिंद्रदत्तास्त्रादिकंच प्राप्तवानस्मीति सूचितम् ॥ १२ ॥

---

तत्रैव मे विहरतो भुजदण्डयुग्मं गाण्डीवलक्षणमरातिवधाय देवाः ।
सेन्द्राः श्रिता यदनुभावितमाजमीढ ! तेनाहमद्य मुषितः पुरुषेण भूम्ना ॥ १३ ॥
यद्बान्धवः कुरुबलाब्धिमनन्तपारमेको रथेन ततरेऽहमतीर्य्यसत्त्वम् ।
प्रत्याहृतं पुरुधनञ्च मया परेषां तेजास्पदं मणिमयञ्च हृतं शिरोभ्यः ॥ १४ ॥
यो भीष्म-कर्ण-गुरु-शल्य-चमूष्वदभ्र-राजन्य-वर्य्य-रथ-मण्डल-मण्डितासु ।
अग्रेचरो मम विभो ! रथयूथपानामायुर्मनांसि च दृशा सह ओज आर्च्छत् ॥ १५ ॥
यद्दोःषु मा प्रणिहितं गुरुभीष्मकर्णनप्तृत्रिगर्त्तशलसैन्धववाह्लिकाद्यैः ।
अस्त्राण्यमोघमहिमानि निरूपितानि नोपस्पृशुर्नृहरिदासमिवासुराणि ॥ १६ ॥

भाषाटीका ।

जिसने शत्रु के भेजे हुये दुर्वासा से रक्षा किया जिसने अयुत ब्राह्मणों के पहिले भोजन करने को शाक का अवशिष्ट अन्न को भोजन करके जल में मग्नऋषि समूह को त्रिलोकी को तृप्त समुझा दिया ॥ ११ ॥

जिसके तेज से युद्ध में विस्मय कराये महादेव ने मेरे को निज अस्त्र देदिये और भी इसी शरीर से मैं इन्द्र का पुर में जाकर महा आसन के अर्ध को प्राप्त हुआ ॥ १२ ॥

---

श्रीधरस्वामी ।

तत्रैव स्वर्गे क्रीडतः । गाण्डीवं लक्षणं चिह्नं यस्य तत् । अरातयो निवातकवचादयो दैत्याः तेषां वधार्थमाश्रितवन्तः । येनानुभावितं प्रभावयुक्तं कृतम् । हे आजमीढ ! युधिष्ठिर । तेन मुषितो वञ्चितोऽस्मि । कथम्भूतेन भूम्ना निजमहिमावस्थानेन ॥ १३ ॥

यद्बान्धव इत्यादि श्लोकत्रयस्यापि तेन मुषितोऽहमिति पूर्व्वेणैव सम्बन्धः । श्रीकृष्णबान्धव एक एवाहं कौरवसैन्याब्धिं नास्त्यन्तो गाम्भीर्य्येण पारञ्च देशतो यस्य तं ततरे तीर्णवान् उत्तरगोगृहे अतार्य्याणि दुस्तराणि सत्त्वानि तिमिङ्गिलादीनि भीष्मादिरूपाणि यस्मिन् । परैर्नीतं गोधनञ्च प्रत्याहृतम् । परेषाञ्च शिरोभ्यः सकाशात् तेजास्पदं प्रभावस्यास्पदमुष्णीषरूपं मणिमयं मुकुटरत्नरूपञ्च वहुधनं तान् मोहनास्त्रेण मोहयित्वा हृतं यद्बान्धवेन मया ॥ १४ ॥

वहुधनं तान् मोहनास्त्रेण मोहयित्वा हृतं यद्बान्धवेन मया ॥ १४ ॥ रथमण्डलैर्मण्डितासु भीष्मादीनां चमूषु सारथिरूपेण ममाग्रेचरः सन् हे विभो ! तेषां रथयूथपा-
अदभ्रा अनल्पा ये राजन्यवर्य्यास्तेषां रथमण्डलैर्मण्डितासु भीष्मादीनां चमूषु सारथिरूपेण ममाग्रेचरः सन् हे विभो ! तेषां रथयूथपा-
नाम् आयुरादीनि दृशा दृष्ट्यैव आर्च्छत् हृतवान् । मनांसीत्युत्साहादिशक्तिम् । सहो वलम् । तेजः शस्त्रादिकौशलम् ॥ १५ ॥

यस्य दोःषु भुजेषु मा मां प्रणिहितं स्थापितं तेनैव गुर्व्वादिभिर्निरूपितानि प्रयुक्तानि अस्त्राणि न स्पृशन्ति स्म । गुरुर्द्रोणः । नप्ता भूरिश्रवाः । त्रिगर्त्तदेशाधिपपिः सुशर्म्मा । सलः सल्यः । सैन्धवः सिन्धुदेशाधिपतिः जयद्रथः । वाह्लीकः शान्तनोर्भ्राता । अमोघो महिमा येषां तथाभूतान्यपि । महितानीति पाठेऽपि स एवार्थः । प्रतीकाराकरणेऽप्यस्पर्शे दृष्टान्तः नृहरिदासं प्रह्लादमिवेति ॥ १६ ॥

---

श्रीवीरराघवः ।

तत्रैवमहेन्द्रभवनेविहरतोममगाण्डीवलक्षणंगाण्डीवेनसहलक्ष्यतेइतितथायेनभगवताऽनुभावितंप्रभावंप्रतिनीतंभुजदंडयोर्युग्मंसेंद्रादेवा अरातिवधायकालेयनिवातकवचाद्यसुरवधार्थंश्रिताः सहायत्वेनाश्रिताः हेआजमीढ ! तेनभूम्नाऽपरिमितानन्दरूपेणपरमपुरुषेणश्रीकृष्णे नाहंमुषितोऽस्मिवंचितोऽस्मिमामांविहायस्वलोकंजगामेत्यर्थः ॥ १३ ॥

यद्बान्धवइति यच्छब्दानामध्याहृततच्छब्दवताल्लूठांतिहृदयंममबान्धवस्येत्यनेनान्वयः योभगवान्बान्धवोयस्यसोऽहमेकएवातीर्यमतार्यं सत्त्वंवलंयस्यतमनंतपारंनिरवधिकंकुरूणांवलरूपमब्धिंरथेनसाधनेनतैतरंतीर्णवानस्मि अर्षत्वात् "तृफलभजत्रपश्च । ६ । ४ । १२२ । इत्ये- त्वाभ्यासलोपाभावः आत्मनेपदंच तथायद्बान्धवेनमयापरेषांशत्रूणांवहुधनंप्रत्याहृतंतथातेषांशिरोभ्यः तेजस्पदंतेजःसुपदमाश्रयंमणिम- यंमणयात्मकंचधनंप्रत्याहृतम् ॥ १४ ॥

यइति हेविभो ! अदभ्राणामनल्पवीर्य्याणांवहूनांराजन्यश्रेष्ठानांरथजालैः मण्डितासुभीष्मादीनांसेनासुयोभगवान्ममाग्रेचरः अवस्थितः दृशादृष्टिमात्रेणरथयूथपानामोजसासहितमायुर्मनांसिचाच्छैत्हृतवान् तेनाहंमुषितोऽस्मीतिसम्बन्धः ॥ १५ ॥

यद्दोःष्विति यस्यभगवतोदोःषुवाहुषुप्रणिहितं प्रणिधापितंत्वयेतिशेषः त्वयायद्भुजैकशरणत्वेनकृतंतमामित्यर्थः गुरुभिर्द्रोणप्रभृ- तिभिर्निरूपितानिप्रयुक्तान्यप्रतिहतमहिमान्यस्त्राणिनोपास्पृशन् यथाआसुराण्यसुरेण कशिपुनाकारितायस्त्रघातादीनिनृसिंहदासंप्रह्लादं नास्पृशंस्तद्वत् ॥ १६ ॥

---

श्रीविजयध्वजः ।

येनकृष्णेनानुभावितंप्रवृद्धवलवत्कृतं गांडीवज्याघातलांछनभुजदंडयुग्मंश्रिताः इन्द्रेणसहवर्तमानाः देवाः अरातिवधायनिवातकवच नाम्नांअसुराणांहननाय कस्यभुजदंडयुग्मं तत्रमहेंद्रभवनएवविहरतः क्रीडमानस्यमेमम ॥ १३ ॥

येषांबांधवोऽहंकुरुभिर्विराटगोग्रहणेअनंतपारमहद्‌यतीरांतरं अनंतः अपरिच्छिन्नः पारः पूर्तिर्यस्यसतथातंकुरुसेनासमुद्रंरथेनतस्माद्वेगे जातरंतीर्णवानस्मीत्यन्वयः कथंभूतः एकोऽसहायः आर्यसत्त्वः पूज्यबलःकिंच यद्‌बांधवेनमयाविराटपुरेगोधनंचप्रत्याहृतंपुनरानीतं तथापरेषांशत्रुभूतानांभीष्मादीनांशिरोऽयोमणिमयंधनमुष्णीषलक्षणंनकेवलंहृतं किंतु परंकेवलंतेजोऽभिमानलक्षणंसामर्थ्यमेवापहृतमित्य न्वयः ॥ १४ ॥

राजन्यवर्याणांश्रेष्ठानांरथानांमंडलैः समूहैर्मंडितासुअलंकृतासुभीष्मश्चकर्णश्चगुरुश्चशल्यश्चतेतथोक्ताः तेषांसेनापतीनांचमूषुसेनासु मध्येमम योरथः तस्मिन्रथेयः अग्रेचरः सारथित्वात्पुरोभागवर्तीतेषामेवरथयूथपानांभीष्मादीनामआयुर्मनांसिचसहसाशीघ्रंदर्शनेन नाच्छेत्‌अपाहरदित्येकान्वयः चशब्दएवार्थे यदाच्छेत्‌स्वदृष्ट्यैवधनायुर्धादिना समुच्चयेवा ॥ १५ ॥

गुरुभिर्भीष्मादिभिर्निरूपितानिप्रयुक्तानिअमेयमहिमानिअचिंत्यसामर्थ्यानिअस्त्राणि यस्यदोःषुभुजेषुप्राणिहितंनिक्षिप्तंमांनोपस्पृशुः न- तापंचक्रुरित्यन्वयः स्पृशउपतापेइतिधातुः कानिकमिवआसुराणिहिरण्यकशिपुप्रेरितानिअसुरप्रयुक्तानिनृहरिदासंप्रह्लादंयथानव्यथयंति तथेति ॥ १६ ॥

---

क्रमसन्दर्भः ।

भूम्ना सर्व्वमहत्तमेन ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥

---

सुबोधिनी ।

तमोमिश्रतमसातत्त्वमाह तत्रैवेति तत्रैवस्वर्गएवविहरतोभुजदंडयुग्मंस्वयंचतुर्भुजाअपि केचनाधिकभुजाः केचनततोऽप्यधिकभुजा आश्रयणेहेतुः गांडीवलक्षणमिति गांडीवलक्षणंचिन्हं यस्य अनेनउभयोश्चिन्हतायुधधनुष्टंकार करणादौहस्तद्वयंसर्वदाव्यापृतमिति ज्ञापितंतनैतावताकार्यंसिध्यति महेंद्रपुत्रत्वात्‌ वलंस्ववायुजन्यत्वात्‌ गांडीवस्य च आग्नेयत्वात्‌ इंद्रादीनांमूलभूतानामेव तत्रसत्त्वात्‌ हेत्वंतरंवक्तव्यमित्याकांक्षायामाह यदनुभावितमिति आजमीढेतिविकल्पाभावाय सहितैस्त्रिभिः पुरुषैः सहयुक्तः तमसामिलिततमसावंचित- व्याभिप्रेतत्वात्‌ उपकारासमाप्तावेवकारणगुणनिरूपणादाह मोषेहेतुः पुरुषेणेतिब्रह्मांडविग्रहत्वात्‌ रोगनाशेऔषधत्यागवत्‌ तेजोहरणेऽपि- भगवतोव्यापकत्वात्‌ ज्ञानद्वारामोक्षदास्यतीतिनानात्वमित्याह भूम्नेति वस्तुतस्तु यत्तेजसानृपसिरोऽग्रिश्लोकवत्‌ पत्न्यास्तथैवानोज्ञु गोपत्वेतावपिविगीतौअर्ज्जुनविषयत्वाभावात्‌कुत्सितत्वाच्च अतः सत्त्वतमोभिरेवश्लोकत्रयप्रतिपाद्यैर्भगवच्चारित्रमुक्त्वामोक्षश्चतुर्थेप्रतिपाद्यते लोकत्रयजयस्यैव अभीष्टत्वात्‌ दैत्यजयःसाधनप्राप्त्यानिरूपणीयोऽपिभोग्यस्यप्राधान्यात्‌ सएवनिरूपितः अर्थान्निरूपितोऽपिसंहारेअनुव दनंचनशेषतयानिरूपितः दैत्यानांतत्प्राधान्यात्‌ मायेत्यसुराइतिश्रुतेः यत्पुनरग्रेभगवच्चरित्रकथनं तदवतारकार्यमितिनात्यन्तम- र्ज्जुनानुग्रहः सिद्ध्यतिभूभारहरणस्यस्वापेक्षितत्वात्‌ “मयैवैतेनिहताः पूर्वमेवनिमित्तमात्रंभवसव्यसाचिन्नि”ति भगवद्वाक्याच्च अतोऽर्ज्जुने नभगवतः उपकारत्रयमेवानुगुणानुरूपंदोषाभावाचाग्रेत्रयंवक्ष्यते सोत्येवृतइत्यादिभिस्त्रिभिः कारणं करणंचैवप्रतिबन्धश्चकथ्यते स्वकृतत्व ज्ञापनायमाहात्म्यज्ञापनायतत्‌ दोषाभावेनसहितंदोषेनापिविमिश्रितम्‌ कृष्णमाहात्म्यज्ञापनंत्रिभिः त्रिभिश्चदोषाभावःद्वयेनदैन्यमिति अन्तर्वहिः साधनहरणात्‌ इतियुक्तमुत्पश्यामः ॥ १३ ॥

ततोमिश्ररजसाचरित्रमाह यद्बान्धवइति हेतुत्वेनकारणंवा यस्यभगवतोवान्धवः भगवद्बन्धुत्वेनैवभजनसांनिध्याभावेऽपि कुरु- बलाब्धितरणंसेनाधानित्यनूतनत्वायअब्धित्वमनन्तपारमिति देशकालानवच्छिन्नन्तत्रत्याअवध्याइतिकालानवच्छिन्नताअनुल्लंघ्याइति दे- शानवच्छिन्नता तत्रएकः असहायः उत्तरंग्रहणाऽसरस्यभीतस्यदर्शनार्थस्थापितत्वात्‌ रथेनेतिप्लवनशंकानिवारितातेननिलीयगमनंपरास्ते अतार्याः कर्णादयः तएवसत्त्वानिजलचरादयोयस्मिन्‌ अनेनतैस्तत्रपतितस्यपुनरनावृत्तिः सूचिताकुतस्तरणमितिभावः नकेवलंतरणं कृतंकिंतुतत्रत्यानिरत्नान्यपाहृतानीत्यभिप्रायेणाह प्रत्याहृतंपुरुधनंचेति वस्तुतस्तुतत्‌ भव्यमर्जुनस्यैवराज्यस्वामित्वात्‌ तैःपरंबलात्‌ गृहीतं तत्पुनः प्रत्याहृतमितिप्रतिशब्दार्थः चकाराद्वस्त्राणितजस्पदन्तेजसंस्थानंतत्‌ व्याजेनतेजोऽप्यपहृतमित्यर्थः मणिमयमूल्यं सर्वपुरुषार्थसाधकंवाअनेनचसर्वस्वंसर्वेचपुरुषार्थाहृताइतिज्ञापितं चकारात्‌ शिरोरत्नरत्नानिचसहजानिशिरोभ्यइतितत्‌ व्याजेनशिरां- स्येवापहृतानीत्यर्थः संमोहनास्त्रेणमोहयित्वा सर्वहृतमत्रबन्धुत्वमेवानिमित्तम्‌ ॥ १४ ॥

सत्त्वमिश्ररजसाकृतमाह योभीष्मकर्णेति पूर्वपरीक्षार्थगतत्वात्‌ असावधानैर्गतमिदानींयुद्धार्थंशस्त्रास्त्रादिसम्पन्नाः मेत्रादियुक्तकव- चादिमंतः कालेनापिमारयितुमशक्याः कालकामपरशुरामादिजेतारः अशक्याइतिमत्वास्वयमग्रेअग्रेसरोभूत्वातेषामायुर्मनांसिचवर्चसाह श्रवीःचकारात्‌ विवेकधैर्यादिकंचदर्शनादृष्टिमात्रेणैवआच्छेत्‌ आहृतवान्‌ ओजसासहेत्यर्थः अथवासहः अंतः करणशक्तिः ओजःइंद्रिय शक्तिः तदपिहृतवानित्यर्थः गुरुर्द्रोणःसत्वादएवसेनापतयोजाताः तेषांचमूषुभीष्मगुरुमध्येकर्णकथनमतिसामर्थ्यद्योतनार्थमत्रश्रायें राजन्यवर्याः कुत्रापिमारणार्थंछिद्ररहिताः तेषांरथमंडलानितैर्मंडितासुअनेनतासुप्रविष्टोवशीकरोभवतीतिसूचितम्‌ एवंसेनाकृष्णेऽपि भगवतैवसर्वंकृतं नमयेत्युक्तमअनेनस्वयंकरणमुक्तम ॥ १५ ॥

## सुबोधिनी ।

रजोमिश्ररजसाकृतमाहपरेस्त्रतप्रतिवध्यवाद्दोःषुमामिति प्रणिहितस्थापितंद्रोणिरश्वत्थामा त्रिगर्त्तः सुशर्माशलः शल्यः सैन्धवःजयद्रथः अमोघोमहिमायेषांनिरूपितानिमद्वधार्थं प्रक्षिप्तान्यपिमानोपास्पृशन् समीपेरथादिकमपि तस्यदृष्टवतः नोपास्पृशन्तिभावः नृहरिदासं प्रह्लादंप्रसिद्धोदृष्टांतः प्रमेयनृलेप्रमाणबलदृष्टांतः दास्यभक्तेः शास्त्रीयत्वात् यद्दोःष्वितिप्रमेयबलत्वसंख्यासुराणिअसुरेःकृतानि मूलंवानिगुणकृतमुक्त्वास्वसात्रकृतंपुनःचक्रर्मणिनियुक्तः तदपराधंसोढवानित्यर्थः ॥ १६ ॥

---

## श्रीविश्वनाथचक्रवर्त्ती ।

अरातयो निवातकवचादयो दैत्यास्तेषां वधाय । येन कृष्णेन अनुभावितं प्रभावयुक्तं कृतम् । भूम्ना अतिशयेनाहं मुषितस्त्यक्तः ॥ १३ ॥

यः श्रीकृष्ण एव बान्धवो यस्य सोऽहमेक एव कुरुसैन्याब्धिं ततरे तीर्णवान् उत्तरगोग्रहे । नास्त्यन्तो गाम्भीर्येण पारञ्च देशतो यस्य तम् । अतार्य्याणि दुस्तराणि सत्त्वानि भीष्मादितिमिङ्गिलादीनि यस्मिंस्तम् । गोधनं प्रत्याहृतम् । तथा तान् मोहनास्त्रेण मोहयित्वा शिरोभ्यः सकाशात् तेजरूपदमुष्णीषञ्च हृतम् ॥ १४ ॥

अग्रेचरः सारथिरूपेणाग्रे स्थितः सन् हे विभो ! स्वाचिन्त्यप्रभावेण आयुः प्रारब्धकर्म्म स्वसौन्दर्येण भीष्मादीनां तेषां मनांसि स्वसामर्थ्यज्ञापनेन सहो मनःपाटवलक्षणं युद्धोत्साहम् तेज इन्द्रियपाटवलक्षणं शस्त्रादिग्रहणसामर्थ्यं दृशा स्वदृष्ट्यैव आच्छेत् जहार ॥ १५ ॥

यस्य दोःषु भुजेषु मा मां प्रणिहितं स्थापितं तेनैवेत्यर्थः । गुर्व्वादिभिर्निरूपितानि प्रयुक्तानि अस्त्राणि न स्पृशन्ति स्म । गुरुर्द्रोणः नप्ता भूरिश्रवाः । त्रिगर्त्तः त्रिगर्त्तदेशाधिपतिः सुशर्म्मा । शलः शल्यः । सैन्धवः सिन्धुदेशाधिपतिः जयद्रथः । वाह्लीकः शंतनोर्भ्राता अमोघमहिमानि महितानि चेति पाठश्च । प्रतीकाराकरणेऽप्यस्पर्शे दृष्टान्तः नृहरिदासं प्रह्लादमिवेति ॥ १६ ॥

---

## सिद्धांतप्रदीपः ।

किंचइंद्रसहिताःदेवाःतत्रैवमहेन्द्रभवनेविहरतःमेममयेनश्रीकृष्णेनानुभावितंसर्वपराभवशक्तियुक्तंकृतंगाण्डीवधनुर्लक्षणं चिन्हंयस्य तद्भुजदण्डम् अरातयोहिरण्यपुरादिगताअसुरास्तद्वधायश्रिताःआश्रितवंतः तेनमुषितोऽस्मि असमन्ध्यत्यक्तोऽस्मि ॥ १३ ॥

यद्बांधवइत्यादिश्लोकत्रयगतानांयच्छब्दानांतेनाहमद्यमुषितइतिपूर्वेणैवसम्बन्धः यः श्रीकृष्णः बान्धवोयस्यसोऽहम् एकोऽसहायः उत्तरगोग्रहे अतार्य्याणिदुर्लंघ्यानिभीष्मद्रोणादिरूपाणिसत्त्वानितिमिंगिलादीनियस्मिन्तत् अनन्तपारंविपुलम् कुरुबलाब्धिंरथेनततरे तीर्णवानस्मि तन्नीतंबहुधनंचमयायद्बांधवेनप्रत्याहृतम् परेषांशिरोभ्यस्तेजस्पदन्तेजसामाश्रयंमणिमयं मुकुटादिकंचहृतम् ॥ १४ ॥

हेविभो । यः श्रीकृष्णः अनल्पराजन्यश्रेष्ठरथसमूहैर्मण्डितासुभीष्मादीनांसेनापतीनां नियम्यासुचमूषुदशसुद्वयोः पंचसुदिवसेषु दिनाष्टकंचममाग्रेचरः सारथिःसन् दृशादृष्टिमात्रेणैव रथयूथपानांभीष्मकर्णादीनाम् आयुर्मनांसि जीवनानिमनोवीर्य्याणि सहोबुद्धिसामर्थ्यम् ओजइंद्रियसामर्थ्यंच आच्छेत् हृतवान् ॥ १५ ॥

यद्यस्यचतुर्भुजस्य दोःषु भुजेषुयद्बयास्त्वयाप्रणिहितम् निधिवत्स्थापितंमांतैर्गुर्वादिभिर्निरूपितान्यमोघमहिमान्यस्त्राणि आसुराणि प्रह्लादमिवनोपस्पृशुः नस्पृशंतिस्म त्रिगर्तस्त्रैगर्तः सुशर्मा सैंधवोजयद्रथः ॥ १६ ॥

---

## भाषाटीका ।

हे आजमीढ युधिष्ठिर वहीं इन्द्रभवन में बिहार करते हुए मेरे गांडीव लक्षण युक्त भुजदण्ड को जिन श्रीकृष्ण के प्रभावयुक्त होने से शत्रु वध के लिये इन्द्र सहित देवता आश्रयण करते हुए तिन श्रीकृष्ण करिके आज हम वंचित होगये हैं ॥ १३ ॥

जो श्रीकृष्ण बांधव जाके ऐसा मैं उत्तर गो गृहमें असहाय भी होकर अपार और दुर्लंघ्य है भीष्म द्रोणादि सत्व जिसमें ऐसे कौरवों के सेना रूपी समुद्र को एक रथ से उतर गये और शत्रुओं का बहुत धन और शिरो से मणि मय मुकुटादिक हरण करि लिये उन श्रीकृष्ण से आज हम मुषित होगये ॥ १४ ॥

हे विभो ! जो श्रीकृष्ण अनेक क्षत्रियवर्य्य रथ मण्डल से मण्डित और भीष्म कर्ण द्रोणाचार्य्य शल्यादि की सेनाओं मे हमारे अग्रेचर होकर दृष्टि से रथयूथ के पालन करने वाले भीष्मादिकों की आयु और मन और बुद्धि सामर्थ्य और इंद्रिय सामर्थ्य हरण करते भये ॥ १५ ॥

हे विभो ! जिन श्रीकृष्ण के भुजाओं में स्थापित जो मैं हूं तिसको द्रोणाचार्य्य भीष्म कर्ण अश्वत्थामादि वीरों करि के प्रक्षिप्त अस्त्र अमोघ महिमा वाले नहीं स्पर्श करते भये जैसे दैत्य प्रह्लाद को नहीं स्पर्श करसक्के भये ॥ १६ ॥

सौत्ये वृतः कुमतिनात्मद ईश्वरो मे यत्पादपद्ममभवाय भजन्ति भव्याः ।
मां श्रान्तवाहमरयो रथिनो भुविष्ठं न प्राहरन् यदनुभावनिरस्तचित्ताः ॥ १७ ॥

नर्माण्युदाररुचिरस्मितशोभितानि हे पार्थ ! हेऽर्जुन सखे कुरुनन्दनेति ।
संजल्पितानि नरदेव ! हृदिस्पृशानि स्मर्तुर्लुठन्ति हृदयं मम माधवस्य ॥ १८ ॥

शय्या-सना-टन-विकत्थन-भोजनादिष्वैक्याद्वयस्य ऋतवानिति विप्रलब्धः ।
सख्युः सखेव पितृवत् तनयस्य सर्वं सेहे महान् महितया कुमतेरघं मे ॥ १९ ॥

सोऽहं नृपेन्द्र ! रहितः पुरुषोत्तमेन सख्या प्रियेण सुहृदा हृदयेन शून्यः ।
अध्वन्युरुक्रमपरिग्रहमङ्ग ! रक्षन् गोपैरसद्भिरबलेव विनिर्जितोऽस्मि ॥ २० ॥

श्रीधरस्वामी ।

स्वापराधमनुस्मरन् सन्तप्यमान आह। सौत्ये सारथ्ये कुमतिना मे मया स वृतः । कुमतित्वमेवाह आत्मद इत्यादिना । अभवाय मोक्षाय । भव्याः श्रेष्ठाः । श्रान्ताः वाहा अश्वा यस्य तं माम् । जयद्रथवधे हि जलपानं विना अश्वाः श्रान्ताः ततो रथादवतीर्य्य धरां भुवं भित्वा जलं सम्पादितं मया । तदा यस्यानुभावेन निरस्तचित्ता अरयो न प्रहृतवन्तः । स सौत्ये वृत इति कुमतित्वम् ॥ १७ ॥

हे नरदेव । उदारं गम्भीरं रुचिरं यत् स्मितं तेन शोभितानि नर्माणि परिहासवाक्यानि तथा कार्य्यप्रस्तावेषु हे पार्थेत्यादीनि मधुराणि संजल्पितानि च हृदिस्पृशानि मनोज्ञानि । माधवस्य यान्येतानि तानीदानीं स्मर्त्तुर्मम हृदयं लुठन्ति क्षोभयन्ति । णिजभाव आर्षः ॥ १८ ॥

विकत्थनं स्वगुणश्लाघनम् । शय्यादिषु ऐक्यात् अव्यतिरेकाद्धेतोः कदाचित् व्यभिचारं दृष्ट्वा हे वयस्य ऋतवान् सत्ययुक्तस्त्वम् इति वक्रोक्त्या विप्रलब्धस्तिरस्कृतोऽपि ऋभुमानिति पाठे ऋभवो देवाः सेवकाः सन्ति यस्य असौ महानपि मया वयस्य इति मत्वा विप्रलब्धस्तिरस्कृत इत्यर्थः ऋतमानिति पाठे वत्वभाव आर्षः । मे अघम् अपराधम् असहत । महितया महत्त्वेन । महामहितयेति पाठे एकपदे अतिमहत्त्वेनेत्यर्थः । सख्युरघं सखेव । तनयस्याघं पितेव ॥ १९ ॥

त्वयाशङ्कितं पराजयश्च प्राप्तोऽहमित्याह । तेन सख्या रहितः अतो हृदयेन शून्यः । अङ्ग हे राजन् ! उरुक्रमस्य परिग्रहं षोडशसहस्र स्त्रीलक्षणम् । असद्भिर्नीचैः । अबला योषेव ॥ २० ॥

---

श्रीवीरराघवः ।

सौत्यइतियस्यभगवतःपादपद्मंभव्याः साधवोभवायमुक्तयेभजन्ति यआत्मदआत्मपर्यन्तवदान्यः "सआत्मदोवलदायस्यच्छायामृतं" इतिश्रुतेः ईश्वरः सर्वनियंताकुबुद्धिनामेमयासौत्येसारथ्येनिमित्तेवृतः श्रान्तवाहं रथिनोभुविष्ठमपिमांयस्यभगवतः प्रभावेणनिरस्तविमोहितंचित्तंयेषांतेनृपानप्राहरन्नप्राहृतवन्तः ॥ १७ ॥

नर्माणीतिहेनरदेव ! तस्यमाधवस्यश्रीकृष्णस्यउदारंरुचिरंसुन्दरंयत्स्मितंतेनशोभितानिनर्माणिपरिहासवाक्यानिहेपार्थेत्यादिरूपाणि संम्बोधनात्मकानिजल्पितानिचस्मरतोममहृदयंलुठन्तिछिंदन्ति ॥ १८ ॥

शय्येतिशय्यादिव्यापारेष्वैक्यंसाधारण्यं साम्यमितियावत् तेनलब्धेतेद्वयंद्वैविध्यमन्यतरस्यव्यापारांतरंयस्यतस्यकुमतेर्ममसख्युरघं सखेवतनयस्याघंपितृवत्पितेवउक्तप्रकारेणविप्रलब्धोधिक्षिप्तः ऋभुमान्ऋभवोदेवास्तद्वान् ऋतवानितिवत् देवानांस्वामीत्यर्थः महामहितयामहामहिमत्वात् महान्महितयेति पाठेमहितामाहात्म्यं तेनमहान्सर्वमघमपराधंसेहेसोढवान्ऋतवानितिपाठेऋतंसत्यंवाचिकं काकुगर्भंविवक्षितंत्वंसत्यवादीकिलेत्येवमादिरूपेणविप्रलब्धोऽपीत्यर्थः ॥ १९ ॥

सोऽहमितिसऐक्यद्वयोऽहंहेनृपेंद्र ! सख्यामित्रेणप्रियेणनिरतिशयप्रीतिविषयेणहृदयतेगच्छतीतिहृदयः अयगतावितिधातुः हृदयंगमेन सुहृदाहितैषिणापुरुषोत्तमेनशून्योरहितः अंगहेराजन् ! अध्वनिउरुक्रमस्यश्रीकृष्णस्यपरिग्रहंकलत्रमंडलंरक्षन् गोपैरप्यसद्भिर्दुर्जनैरबलेवयोषिद्विनिर्जितोऽस्मीति ॥ २० ॥

---

श्रीविजयध्वजः ।

हेनरेंद्र ! दर्शीसर्वज्ञोयदीशोरणमूर्ध्निअलब्धरूपंकेनाप्यज्ञातपूर्वरूपंमेअभवद्भूत् सूत्रादयः मुख्यप्राणमुखादेवास्तंनविदुरिति यद्यस्मात्तस्मादीशोऽतर्क्यविहारः अचिंत्यक्रीडइत्यन्वयः लब्धरूपमानन्दरूपमितिवा कथंभूताःसूत्रादयः यस्यमाययामोहकशक्त्याआवृतदृशः पिहितनेत्राः नष्टज्ञानाइतियावत् कथमावृतदृशइतितत्राह अहमहमिति भव्याः ज्ञातुंयोग्यतावंतः सकलमङ्गलरूपाइतिवा ॥ १६ ॥

* यन्मेनृपेंद्र!तदतर्क्यविहारईशोयोऽलब्धरूपमवदद्रणमूर्ध्निदर्शी। यन्माययावृतदृशोनविदुःपरंतंसूत्रादयोऽहमहमस्मिममेतिभव्याः १६ इति विजयध्वजः ॥

## श्रीविजयध्वजः ।

भव्यामुमुक्षवोयत्पादपद्ममभवायभजंति यस्यश्रीकृष्णस्यानुभावेनमहिम्नानिरस्तंमुग्धंचित्तंयेषांतेतथोक्ताः अरयः कर्णादयोमांन प्राहरन्नायुध्यन् कथंभूताः रथिनः रथादियुद्धसाधनोपेताः किंविशिष्टंमांभुविष्ठंभूमौस्थितं सम्यक्श्रांताः वाहाः अश्वायस्यसतथोक्तः तं श्रांतानांवाहानांजलपानायरथादवरुह्ययुद्धसाधनमन्तरेणभूमितलेस्थितमित्यर्थः सोऽयमीश्वरः कुमतिनामयामेमत्संबंधिनिसौत्येसारथ्यकर्मणिवृतः किंविशिष्टः आत्मानंददातीत्यात्मदः "यआत्मदाबलदा" इतिश्रुतेः अद्यतेनभूम्नापुरुषेणमुषितोऽस्मीतिपरमोऽन्वयः ॥ १७ ॥

हेनरदेव ! माधवस्यहृदिस्पृशानिमनोहराणि हेपार्थअर्जुनेत्यादीनिगोष्ठ्यांसंजल्पितानिनर्माणिपरिहासलक्षणानिस्मर्तुर्ममहृदयंलुठंति परिवर्ततेहृदयान्ननिर्गच्छंतिकथंभूतानि उदारंगंभीरंरुचिरं यत्स्मितंतेनशोभनानिमङ्गलानि ॥ १८ ॥

ममायंकृष्णोवयस्यः अहमेतादृशेनकृष्णेनसमानवयस्कत्वादृभुमान्सदेवइति भावेनपरमेष्ठदेवेनश्रीकृष्णेनशय्यादिष्वैक्यात्तेनवंचितः तादृशबुद्धेस्तदधीनत्वात्परंदेवतयाशय्याद्यैक्यमपराधोहियस्मात्तस्माद्वंचितोऽस्मि शय्याशयनंविकत्थनंगालीवचनंस्तवनंवा तथापिसकृष्णो महतोमहित्वेनसख्युरघमपराधंसखेवपुत्रस्याघंपितेवकुत्सितबुद्धेर्मेऽघंमयाविप्रलब्धोऽपिसंवंचितोऽपिमहामहितयाकुमतेर्मेऽघंसेहइतिवा शय्यादिषुऋभुमान्महात्मामयाविप्रलब्धस्तिरस्कृतः किमिति वयस्यः सखेत्यैक्यव्यवहारात्तथापि महामाहात्म्येनममापराधंसेहइति वा ॥१९॥

शून्योऽस्मीतिविकल्पंपुनः स्पष्टंपरिहरतीत्याहसोऽहमिति हेनृपेंद्र!सख्याजन्मप्रभृतिसहवर्तमानेनप्रियेणविषयादिसुखप्रापकेणसुहृदाश्रनिमित्तबंधुनाहृदयेनातिस्निग्धेनअतिक्रांतेनवापुरुषोत्तमेनक्षराक्षरमतीत्यवर्तमानेनकृष्णेनरहितः शून्योऽमङ्गलोऽस्मीत्यैकान्वयः येनमेपह्नुतं तेजइत्येतद्विवृणोतिअध्वनीतिअंगराजन्!उरुक्रमस्यहरेः परिग्रहंकलत्रंरक्षन्नागच्छन्नसद्भिरसाधुभिर्गोपैरवलायोषेवविनिर्जितोऽस्मि तस्मात्तेनममतेजोपहृतमितिभावः ॥ २० ॥

---

## क्रमसंदर्भः ।

सोऽहमित्येकादशक्रमव्याख्यायां त्वं तु मद्धर्म्ममास्थायेत्यादौ राजन् परस्येत्यादौ मायिकलीलामयत्वेनैवेति दर्शयिष्यते । ब्रह्मपुराणस्यात्रैवार्थे तात्पर्य्यमवगम्यते । अर्ज्जुनं प्रति व्यासवचनम् यथा—तत् त्वया न हि कर्त्तव्यः शोकोऽल्पोऽपि हि पाण्डवः । केनाप्यखिलनाथेन सर्व्वं तदुपसंहृतमिति । अखिलः पूर्ण एव नाथः पतिः कृष्णस्तेन तत् सर्व्वं स्वप्रियावृन्दम् उप निकट एव सम्यक्प्रकारेण हृतम् अर्ज्जुनात् सकाशात् गृहीतमित्येव व्याख्येयम् ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥

---

## सुबोधिनी ।

सौत्येवृतइति सूतकर्मणिवृतस्तत्रहेतुः कुमतिनाफलंतु कुत्सितंसाध्यसाधनत्वेनानियोजितत्वात् सहनेहेतुः आत्मनइतिसाहितुष्टः स्वात्मानंप्रयच्छति ततः सकुत्रापिनियोगंकरोतुप्राप्तत्वादित्यर्थः तर्हिकोदोषस्तत्राहईश्वरइति यद्यप्यात्मदस्तथापीश्वरः कर्तुमकर्तुमन्यथा कर्तुंसमर्थः अनेनतेजोहरणमल्पमेवजातमिति भावः मेमयामद्यंवानहिकौत्यनकिंचित्कार्यसिद्धं प्रतिष्ठामात्रपरंकुमतिरेवं प्रकटयातियत्पादपद्ममितिभाव्याः सत्तायांपरितिष्ठिताः संतइतियावत् अभवायमोक्षायपादेन प्रणिहितमित्यत्रनिरूपितमिति शब्दाद्यस्पर्शलोकरीत्यास्पष्टसंभावनाभावात् पुनर्ज्जयद्रथवधेमध्याह्नेश्रांतवाहानांविशल्यकरणार्थमुत्तीर्णमांनप्रहारन्नित्याह संभ्रांतवाहमितिसाधनाभावः सूचितः अरयइतिमारणावश्यकत्वं रथिनोभुविष्ठमितिसाधनाभ्यां बहुवचनैकवचनाभ्यां च कामयमानानामपिशत्रूणांदुर्लभावस्थासूचिता यस्य भगवतः अनुभावेनअलौकिकसामर्थ्येननिरस्तंचित्तंसारथ्यमितिज्ञानंयेषांते अनेनअपकारेऽप्यानुषंगिकं फलमेतादृशमिति सूचितम् ॥१७॥

किंच एतादृशेऽप्यपकारिणिपरिहासदशायामपिवचनेनापिनापकारःकृतइत्याहनर्माणीति अपराधाभावेऽपिस्मरणार्थंसर्वावस्थासुतथा वचनान्युक्तवान् यथाहृदयेप्रविष्टानिहृदयंलुठंति लोठयन्तिलुनन्तीतिपाठः नर्माणिसुखकराणिपरिहासवचनानि अर्थानुसन्धानाभावेऽपि स्वरूपतः सुखकराणीत्याह उदारंयत् रुचिरंस्मितं सर्वपुरुषार्थदानायोदारं रुचिरंरसोत्पत्त्यारसानुभावेपुरुषार्थारामत्वायस्मितं नाल्पव्यामोहनंसूचितं स्वभावसुन्दराणांस्मितेनशोभातिशयः वशीकरणार्थोभवति तत्रानैकांतिकं दृष्ट्वाहेपार्थेतिसम्बोधयतिधाष्टर्येहृष्टाऽर्ज्जुनेतिवृक्षवाचकत्वात् वंचनाकरणादिदृष्ट्वा हेसखेतिअचातुर्यदृष्ट्वाकुरुनन्दनेतिक्षेत्रकर्षकत्वात्कुरोः अतएवभगवद्वाक्यानांसंजल्पितत्वमुक्तं नरदेवेतिगूढप्रतिबोधनार्थंसम्बोधनं वचनानांसमर्थत्वात् मर्मस्पर्शित्वात् हृदिस्पृशानीत्युक्तं ममहृदयंहृदयंममममाधवस्यअस्मत्स्वामिनः संजल्पितानीतिसम्बन्धः ॥ १८ ॥

एवमपराधापनोदनार्थंप्रतिकारेकृतेतद्धेतुका अन्येऽप्यपराधाः कृतास्तानपिदूरीकृतवानित्याह शय्येति शय्यायांशय्याविषये आसनादिविषयेषुताम्बूलादिस्थानानिशय्यासनाटनानिविकत्थनानिसंनिपातकार्यश्चश्लाघारूपंभोजनादीन्यावश्यकलौकिकादिष्वैक्यात् कश्चित् नाहंस्वस्मात् कश्चित् कदाचित् शंकतेऐक्यकरणं भगवदुपकारः दुष्टस्यततोमदात् विप्रलम्भः वक्रोक्त्यावचनं तत्रवचनशब्दमाह हेवयस्येति वयसातुल्ययोर्मध्येकुतस्तवाधिक्यं कथंवामित्रीमीतवाकिंवाकृतवानितिसत्यवानित्यर्थः असत्यकरणं कृत्वातथावचनं सर्वचनमनसिरोषम्लापनेनसह्यदोषेमातृदृष्टान्तः असह्यदोषेतुपितृदृष्टान्तः अन्यासह्यदोषसंग्रहार्थंसर्वमितिसहनेप्रयोजकंरूपमाह महानिति नहिपिपीलिकादीनामपराधंगजोमन्यते उपढौकनाद्यभावायमहितयेतिस्वमहिम्नैवहेत्वंतरमाह कुमतेरिति ॥ १९ ॥

एवंसर्वंचरित्रमुक्त्वासर्वोपसंग्रहार्थंतत्कृतांजलिनानुस्मरतिसोऽहमिति नृपेंद्रेतिसम्बोधनं अस्यविचारस्त्वयावश्यंकर्तव्यइतितदर्थं पुरुषेणापिरहितः प्राणिस्त्र्यादिरूपः सर्वकार्यवाह्यः कृतोभवति किमुतपुरुषोत्तमेन अनेनोत्तमकार्योपसंहारोज्ञापितः सख्येतिमध्यमकार्यो

### सुबोधिनी।

पसंहारः प्रियेणेति प्रियजनः परः प्रियस्यनिकृष्टमपिकरोति एवंस्वानिष्ठकार्याभावहेतुमुक्त्वाभगवन्निष्ठाभावायाह तद्राहित्यस्यफलमाह हृदये नशून्यइति उत्कृष्टधर्माणांतत्सहभावात् तदपगमेसर्वमप्यपगतमिति शून्यंजातमित्यर्थः तेनान्यदपिकार्यजातमिति यदनूपराजितोपाथभवानिति संभावनाभत्याजातेत्याह अध्वनीतिपरिग्रहः स्त्रीवर्गः अज्ञातसम्बोधनं प्रतीकारकरणाभावाय अबलासीव ॥ २० ॥

### श्रीविश्वनाथचक्रवर्ती।

तद्विरहेण तदैश्वर्य्यस्मृत्या दास्यभावस्यैवोदयात् स्वाभाविकस्य सख्यभावस्यापलापात् तत्कार्यसारथ्यादिकमपराधत्वेन निश्चिन्वन् अनुतप्यमान आह। सौत्ये सारथ्ये अभवाय मोक्षाय भव्या भजन्ति अहन्त्वभव्यस्तमेव भजनमकारयम्। एतावदपराधवत्यपि मयि तस्य दयां शृणुत्याह। श्रान्ता वाहा अश्वा यस्य तं मां जयद्रथवधे हि जलपानं विना अश्वाः श्रान्ताः ततो रथादवतीर्य वाणैर्भुवं भित्त्वा जलं सम्पादितं मया तदा यस्यानुभावेन निरस्तचित्ता अरयो न प्राहरन् ॥ १७ ॥

मधुराक्षरत्वात् हृदिस्पृशानि लुठन्ति लोठयन्ति णिजभाव आर्षः ॥ १८ ॥

ऐक्यात् परस्परप्राणैक्यादृतवांस्त्वमेव सत्यवादीति वक्रोक्त्या विप्रलब्धस्तिरस्कृतोऽपि। ऋभुमानिति पाठे ऋभवो देवाः सेवकाः सन्ति यस्य असावपि तिरस्कृतः। तदपि महितया स्वमहत्त्वेन ॥ १९ ॥

त्वयाशङ्कितं पराजयञ्च प्राप्तोऽस्मीत्याह। तेन सख्या रहितः अतो हृदयेन मनसा शून्यः मूर्च्छितप्राय इत्यर्थः उरुक्रमस्य परिग्रहं षोड़शसहस्रस्त्रीलक्षणम् असद्भिर्नीचैः वस्तुतस्तु न विद्यन्ते सन्तो येभ्यस्तैर्गां पृथ्वीं द्याञ्च पान्तीति तैः गोपजातित्वाच्च गोपैः ताः स्वप्रेयसीरप्रकटप्रकाशे प्रवेशनार्थं तत्तद्रूपेण भगवतैव तासामाकर्षणात्। न वयं साध्वि साम्राज्यमित्यादौ कामयामह एतस्येत्यनेन व्रजस्त्रियो यद्वाञ्छन्ति पुलिन्दस्तृणवीरुधः। गावश्चारयतो गोपाः पादस्पर्शं महात्मनः॥ इति तासां वाक्येन व्रजस्त्रीवाञ्छित एव भगवत् स्वरूपः तासां मनोरथोऽवगतः। अन्यथा तासां भगवदुपभुक्तदेहानां साक्षाल्लक्ष्मीरूपाणां नीचस्पर्शे सद्य एवान्तर्धानं स्यादित्यतः प्रकाशान्तरेण तासां व्रजस्त्रीत्वप्राप्तिरिति ज्ञेयम्। विष्णुपुराणब्रह्मपुराणयोरप्यत्रैवार्थे तात्पर्यमवगम्यते। यथा तत्र तत्राऽर्ज्जुनं प्रति व्यास वचनम्। एवं तस्य मुनेः शापादष्टावक्रस्य केशवम्। भर्त्तारं प्राप्य ता याता दस्युहस्ता वराङ्गनाः। इति। पुरा देव्योऽष्टावक्रमुनिं स्तुत्वा विष्णुर्वः पतिर्भविष्यतीति तस्माद्वरं प्राप्य तदङ्गवक्रिमदर्शनोत्थादुपहासाद्दस्युहस्ता भविष्यथ इत्यभिशापञ्च प्राप्य पुनःप्रसादिताच्च तस्माच्छापान्तञ्च प्रापुरतो भर्त्तारं प्राप्य दस्युहस्तं गता इति मुनेः शापप्रसादयोरमोघत्वाद्दस्युहस्तगतत्वं भर्त्तुः प्राप्तिश्च तासां तत्रैवाभूत् स्वभर्त्तुः कृष्णस्यैव दस्युरूपत्वात् अतस्तत्रैव पुनर्वचनान्तरञ्च यथा। तत् त्वया न हि कर्त्तव्यः शोकोऽल्पोऽपि हि पाण्ड ?। तेनाप्यखिलनाथेन सर्व्वं तदुपसंहृतमिति। अखिलः पूर्ण एव नाथः पतिः कृष्णस्तेन तत् सर्व्वं स्वप्रियावृन्दम् उप निकट एव सम्यक्प्रकारेण हृतम् अर्ज्जुनात् सकाशात् गृहीतमित्येव व्याख्येयम् ॥ २० ॥

---

### सिद्धांतप्रदीपः।

एकाहसाध्येजयद्रथवधे आदित्यास्तमनात्पूर्वकालेजयद्रथमहत्वासरथोऽग्नौप्रवेशंकरिष्यामीतिप्रतिज्ञायपरसैन्यंप्रविष्टंमध्यान्हेजलादिनाश्वश्रमापनोदनार्थंदिव्यास्त्राभिमंत्रितैर्वाणैर्जलाशयंकर्तुंरथादवतीर्णमतएवभुविष्ठंमांयदनुभावेनप्रभावेणतिरस्तचित्ता अरयोनप्राहरन्नप्रहृतवंतः सईश्वरः "यआत्मदोवलद" इतिश्रुतिविधआत्मदः मेमयाकुमतिनासौत्येसूतकर्मणिवृतः ॥ १७ ॥

हेनरदेव! माधवस्य उदारेणगम्भीरेणरुचिरेणमन्दतरेणचस्मितेनशोभितानिनर्माणिपरिहासवाक्यानिहेपार्थेत्यादीनिसंजल्पितानिप्रतिकार्यमभिमुखीकरणार्थकानिसंबोधनानिच हृदिस्पृशानिश्रोत्रहृणांहृदयंगमानिस्मर्तुर्ममहृदयंलुठंतिक्षोभयंति ॥ १८ ॥

शय्यादिष्वैक्यात्साम्याद्धेतोः हेत्रयस्यऋतवांस्त्वंसत्यवानसि इतिविप्रलब्धोऽपि उपहसितोऽपिकुमतेर्मेऽघमपराधंसर्वंसेहेभसहत यतोमहितयामाहात्म्येनमहान् अक्षोभ्यः ॥ १९ ॥

हेनृपेंद्र! योमहारथतयासर्वगुणसंपन्नतयालोकेप्रसिद्धः सोऽहंपुरुषोत्तमेनसख्याप्रियेणसुहृदाहृदयेनहृदयंगमेनरहितः अतएवशून्यः तेजोवीर्यादिवर्जितोऽस्मि अतएवहेअंग! उरुक्रमपरिग्रहंरक्षन्गोपैरसद्भिरवलेवयोषिदिवाऽध्वनिमार्गेविनिर्जितोऽस्मि ॥ २० ॥

---

### भाषाटीका।

भव्य जन जिनके पाद पक्ष को अभव (मुक्ति) के निमित्त भजन करते हैं उन आत्मद ईश्वर को मुझ कुमति ने सारथी बनाया! जिनके प्रभाव से निरस्त चित्त रथियों ने श्रान्त वाहन और भूमिस्थित पर भी प्रहार न किया ॥ १७ ॥

हे नरदेव! माधव के, उदार, रुचिर स्मित शोभित, "हे पार्थ! अर्जुन! सखे! कुरुनन्दन इत्यादिक हृदयस्पर्शी नर्म (परिहास) जल्पित वचन स्मरण करते मेरे हृदय को विलुठित करते हैं ॥ १८ ॥

शय्या में आसन में भोजन में पर्यटन में एकत्र रहने के कारण मैं उनको ऐसे विप्रलंभ भी करता था कि "हे वयस्य! तुम बड़े

तद्वै धनुस्त इषवः स रथो हयास्ते सोऽहं रथी नृपतयो यत आनमन्ति ।
सर्व्वं क्षणेन तदभूदसदीशरिक्तं भस्मन् हुतं कुहकराद्धमिवोप्तमूष्याम् ॥ २१ ॥
राजंस्त्वयानुपृष्टानां सुहृदां नः सुहृत्पुरे ।
विप्रशापविमूढानां निघ्नतां मुष्टिभिर्मिथः ॥ २२ ॥
वारुणीं मदिरां पीत्वा मदोन्मथितचेतसाम् ।
अजानतामिवान्योऽन्यं चतुःपञ्चावशेषिताः ॥ २३ ॥
प्रायेणैतद्भगवत ईश्वरस्य विचेष्टितम् ।
मिथो निघ्नन्ति भूतानि भावयन्ति च यन्मिथः ॥ २४ ॥

भाषाटीका ।

सत्यवक्ता हो" परंतु उन्होंने सखा के अघ को सखा के समान पुत्र के अपराध को पिता के समान अपने महत्व से मुझ कुमति के सब अघों को सह्य किया ॥ १९ ॥

हे नरेन्द्र ! सो मैं अपने प्यारे सुहृद सखा पुरुषोत्तम से रहित, हृदय से शून्य हूँ, हे अंग ! मैं मार्ग में उरुक्रम कृष्ण के परग्रह को रक्षा कर लिये आता था कि दुष्ट गोपों ने मुझे स्त्री के समान जीतलिया ॥ २० ॥

---

श्रीधरस्वामी ।

श्रीकृष्णवियोग एवात्र हेतुः नान्य इत्याह तद्वै इति । यतो येभ्यः । ईशेन रिक्तं शून्यम् । असत् कार्याक्षमम् । सन्मन्त्रविधानैरपि भस्मनि हुतमिव । भस्मन्निति लुप्तसप्तम्यन्तं पदम् । अतिप्रीतादपि कुहकान्मायाविनः सकाशात् राद्धं लब्धं यथा । सम्यक्कर्षणादिनापि ऊषरभूमौ उप्तं बीजमिव ॥ २१ ॥

सुहृत्पुरे त्वया पृष्टानां नः सुहृदां मध्ये चत्वारः पञ्च वा अवशेषिताः । तत्र हेतुः विप्रशापेत्यादि ॥ २२ ॥

वारुणीमन्नमयीम् । अजानतामिवान्यो ऽन्यम् एरकामुष्टिभिर्निघ्नताम् ॥ २३ ॥

अवशेषिता इत्यनेनोक्तं हेतुकर्त्तारमाह प्रायेणेति त्रिभिः भावयन्ति पालयन्ति ॥ २४ ॥

---

श्रीवीरराघवः ।

तदिति येभगवतासहावस्थानदशायांधनुरादयस्तएवाधुनापिरथीचाहंसएवाधुनापियतोयेभ्योधनुरादिभ्योनृपतयोआनमंति बलिष्ठं रथिनंमांमन्यंतइत्यर्थः यद्यप्येवंतथापितत्सर्वंधनुरादिकमीशरिक्तंश्रीकृष्णरहितं सत्क्षणेनासदसत्प्रायमभूत्यथाभस्मनिहुतं यथाकुहकराद्धं दोषवच्छिप्रस्यराद्धंराधनंदानादिसत्कारः यथाचोष्यामूषरभूमावुप्तंबीजंतद्वत् ॥ २१ ॥

हेराजन् ! सुहृत्पुरेद्वारकायांत्वयाभिपृष्टानांनोऽस्माकं सुहृदांमध्येचतुः पंचावशेषिताः चत्वारःपंचवावशिष्टाः अन्येतुसर्वेऽपिमृता इत्यर्थः तत्रहेतुंवदन्विशिनष्टिविप्राणामृषीणांशापेनविमोहितचित्तानाम् ॥ २२ ॥

वारुणींमदिरांसुरांपीत्वातेनोन्मथितंविभ्रांतंचेतोयेषामतएवान्योऽन्यमजानतामिवमिथोमुष्टिभिर्निघ्नताम् ॥ २३ ॥

तन्मिथोनिहननमपि प्रायशईश्वरस्यकृष्णस्यविचेष्टितमेतत्संकल्पमूलकमेवेतिभावः तदेवसदृष्टांतमाह यद्यथायत्संकल्पान्मिथोभूतानि भावयंतिवर्द्धयामासुः तथातत्संकल्पादेवमिथोनिघ्नंतिविनिजघ्नुः ॥ २४ ॥

---

श्रीविजयध्वजः ।

तदेवस्पष्टयतीत्याह तदिति धनुस्तद्वैतदेवतइषवः तादृशाः शराः सरथः तादृशोरथः तेहयाः तादृशाअश्वाः रथीसोऽहंनान्यः यतः यस्मैनृपतयः आमनंति तत्सर्वमीशरिक्तंश्रीकृष्णतेजसाविहीनंक्षणेनअसत्नाशवत्अप्रयोजकमभूत्कथमिव भस्मनिहुतमिवकुहकेनराद्धं चौरेणासिद्धमिवऊषेऊखरेउप्तमिव भस्मनिहुतस्यमंत्रोच्चारणादिना किंचित्फलंस्यादित्यतः कुहकेति ऐंद्रजालिकेनकुटुम्बभरणमुद्दिश्यद्रव्याहरणात्तज्जीवनेनैहिकफलदर्शनादित्यतउक्तमुप्तमूषइति नत्वत्रकिंचित्बीजं प्ररोहतीत्यभिप्रायेणानिदर्शनत्रयमुक्तमितिवेदितव्यम् ॥ २१ ॥

कश्चिदानन्दपुर्यामित्यादिवांत्रवकुलप्रश्नंपरिहरतीत्याह राजन्निति सुहृत्पुरेद्वारकायाम् ॥ २२ ॥

## श्रीविजयध्वजः ।

नाम्ना वारुणीं वरुणनिर्मितां मदिरां मदकरीं सुरां पीत्वा; अन्यच्च निमित्तमस्तीत्याह विप्रशापेति ब्राह्मणशापेन विमूढानां कृत्याकृत्यज्ञान रहितानामतएवात्मानमजानताम् ॥ २३ ॥

इदं यादवानिधनमपि श्रीकृष्णकृतमित्यभिप्रेत्य ब्रूत इत्याह प्रायेणेति भूत निमिथो निघ्नंति भावयंति उत्पादयंति चेतीति यत्तदीश्वरस्य भगव तोविशिष्टचेष्टितमितिमन्ये प्रायः शब्दस्य प्राचुर्यार्थवाचित्वेऽप्यत्रावधारणार्थएव चशब्दः समुच्चयार्थः ॥ २४ ॥

---

## क्रमसन्दर्भः ।

प्रायेणेति । दुःखोक्तिरियं तादृशलीलादृष्ट्यनुसारेणैव ॥ २४ ॥ २५ ॥

---

## सुबोधिनी ।

सर्वनाशमाह तद्वैधनुरिति गांडीवलक्षणमित्युक्तं तदेव वः अर्जुनस्य इमेवाणाइति सरथः अप्रतिहताः तेहयाः सर्वत्रगंतारः सोऽहं रथीभीष्मादिहंता आनमंतिसर्वतोनमंति आमनन्तीतिवापाठः कीर्तयंतीतिवातत्रगारेभ्याभ्युपगमे इमालब्धं सम्पद्यते तदारूपं देवत्वं दाहकत्वं सर्वमेवापगच्छति तथापूर्वोक्तेषु ईशः प्रविष्टः तदातत्सर्वं कार्यं निष्पन्नं तदपगमे सर्वं नष्टमिति अन्वयव्यतिरेकाभ्यां प्राप्ताप्राप्त विवेके तत्सर्वं भगवत्कृतामिति सिद्धं भवति केवलान्वयविशेषणात देकसाध्यानि नियामकाभावात् इदानींतु तदाराधकत्वेनान्यथासिद्धमित्यभिप्रायेणाह असदिति ईशरिक्तं सर्वमसद्भूदित्यर्थः कार्याकर्तृत्वेनासत्त्वं तेषां फलसाधकत्वमेव रूपमिति तदभावो वाततएवतत् प्रसिद्धेः अत्रासाधकत्वे दृष्टान्तमाह लोकभेदेन द्वयं वेदे तु तत् समुदितमेकत्रैव द्वयम् अतो दृष्टान्तत्रयमाह तत्र वैदिको दृष्टान्तः भस्मनिहुतमितियदि पूर्वस्यामाहुतायां यजमानो म्रियेत दक्षिणतः शीते भस्मन्युत्तरामाहुतिं निनयेत् भस्मोत्करं वागमयेदिति भस्मनिहोमउक्तः सयथास्थित इतिअसतिविनियुत भस्मोत्करं वागमयेदिति भस्मत्यज्यते तथागोप्रेष्वसमाभिर्विनियुक्त इत्यर्थः नवाईश्वराराधनंनवाधर्मः लोकेईश्वराराधनमस्तितेन कार्यं सिद्ध्यति तत्कार्यमीश्वराराधनमित्युच्यते सचेदीश्वरः कुहकोभवेत् तत्फलमसत् भवेत् कुलमाषदानवत् अनं आधिकर्तृदेवानांविपरीतफलदानेन असत्त्वमुक्तम् एवं फलवैफल्यं साध्यवैकल्यं चोक्तं साधनवैफल्यमाह इवोप्तमूष्यामिति उषाउषररूपापृथ्वी गौरादित्वान्ङीष् साहिबीजशक्तिदाहिका तत्रगतं बीजं स्वरूपतोऽपि विनश्यति तथात्रापि लौकिककृषित्वमस्य ॥ २१ ॥

एवं द्वितीये उत्तरमुक्त्वा प्रथमस्योत्तरमाह राजन्निति सुहृदांयत् कुशलं पृष्टं सुहृत्पुरे तत्रोत्तरं शापोजातः ॥ २२ ॥

ननु विप्रशापविमूढानां देशान्तरंगत्वा मुष्टिभिर्विनिघ्नतां मिथो युद्धे हेतुः वारुणीं मदिरां पीत्वेति अमृतमथनादुद्भूतामदिरा वारुणी सातालाद्यधिष्ठिता तालप्रसूता वारुणीत्युच्यते तेन मदेन उन्मथितचेतसां गतविवेकानां मध्ये चतुः पंचावशेषिताइति सम्बन्धः चतुर्नियुक्ताः पंचवतुःपंचत्र्यसु यादवशरीरसंग्रामं प्रविष्टेषु चतुर्विधैः रत्नाणुभिः सह आकाशादयः पंचउर्वरिताः ननुस्नेहकत्वात्कथमेवमत आह अजानतामिति युद्धार्थज्ञानमन्यार्थमज्ञानमित्यर्थः ॥ २३ ॥

अत्रकर्तारं सम्भावयति प्रायेणेति सर्वकर्तृत्वेन रक्षकत्वेन च भगवत्कर्तृकत्वं निश्चीयते कालेनापि सम्भावयतीति प्रायग्रहणं तत्रापि भगवतो विद्यमानत्वात् उत्कटकोटिः दृष्टार्थमन्यथात्वेन व्याख्यास्यन् सर्वत्रैव लोककर्तृकं कार्यं भगवत्कार्यमित्याह मिथोनिघ्नंतीति तुल्यानां मारणालक्षणे प्रयोजककार्ये स्वतउत्कर्षात् चकारादुत्पादयंति पुत्रगृहस्वयमुत्पन्नः पितापुत्रत्वमापद्यंत ॥ २४ ॥

---

## श्रीविश्वनाथचक्रवर्त्ती ।

श्रीकृष्णवियोग एवात्र हेतुर्नान्य इत्याह तदिति । यतो धनुरादिभ्यो हेतुभ्यो माम् आनमन्ति तत् सर्व्वम् ईशेन रिक्तमसत् कार्य्याक्षमम् । भस्मनि हुतमिति निष्फलत्वे कुहकान्मायाविनः सकाशात् राद्धं प्राप्तमित्यवस्तुभूतत्वे ऊष्याम् ऊषरभूमौ उप्तमिति नश्यद्वस्थत्वे दृष्टान्तः ॥ २१ ॥ २२ ॥

एरकामुष्टिभिर्मिथो निघ्नतां सुहृदां मध्ये चात्वारः पञ्च वा अवशेषिताः ॥ २३ ॥

केनावशेषिता इत्यपेक्षायामाह प्रायेणेति । एतद्यदुकुलसंहरणम् । प्रायग्रहणं लोकोक्तिरीत्यैव न तु सिद्धान्तरीत्येत्याह मिथ इति । यत् यतो निमित्तभूताद्भावयन्ति पालयन्ति ॥ २४ ॥

---

## सिद्धांतप्रदीपः ।

धनुराद्यात्मपर्यंतस्य सर्ववस्तुनो नैष्फल्यं तत्संनिधिंविनाभूदित्याह तद्वाइति यतो येभ्यो धनुरादिभ्यो नृपतय आनमंति तदिदं धनुराद्यात्मपर्यंतं सर्वं तु ईशेन श्रीकृष्णेनारिक्तं क्षणेनासद्भूत स्वस्वकार्याक्षममभूत् यथा भस्मनि विधिवदपि हुतमसद्भवति यथा च कुहकाय पुत्रं धनंदास्यामीति त्रीत्रिकार्थं परधनमादातुं प्रवृत्ताय राद्धं विधिवद्दत्तमसद्भवति यथा च ऊषरभूतायामूष्यां सम्यगुप्तं बीजमसद्भवतितथा ॥ २१ ॥

जलौकसां जले यद्वन्महान्तोऽदन्त्यणीयसः ।
दुर्ब्बलान् वलिनो राजन्महान्तो वलिनो मिथः ॥ २५ ॥
एवं वलिष्ठैर्यदुभिर्महद्भिरितरान् विभुः ।
यदून् यदुभिरन्योऽन्यं भूभारान् संजहार ह ॥ २६ ॥
देशकालार्थयुक्तानि हृत्तापोपशमानि च ।
हरन्ति स्मरतश्चित्तं गोविन्दाभिहितानि मे ॥ २७ ॥
एवं चिन्तयतो जिष्णोः कृष्णपादसरोरुहम् ।
सौहार्देनातिगाढेन शान्तासीद्विमला मतिः ॥ २८ ॥

सिद्धांतप्रदीपः ।

हेराजन् ! त्वयासुहृत्पुरेद्वारकाख्येपृष्टानांनः सुहृदांमध्ये चत्वारः पंचवाअवशेषिताः भगवदिच्छयातेषुविप्रशापोनप्रादुरभूदित्यर्थः तदितरविनाशेहेतुगर्भविशेषणमाह विप्रशापाभिमूढानामिति ॥ २२ ॥
विप्रशापजांमूढतामाह वारुणीमिति मुष्टिभिः एरकामुष्टिभिः ॥ २३ ॥
भगवदिच्छयैतदभूदित्याह प्रायेणेतित्रिभिः एतन्मिथोमुष्टिभिर्निहननम् प्रायेणभगवतः श्रीकृष्णस्यविचेष्टितम् कर्मसापेक्षत्वाभि प्रायेणप्रायग्रहणम् यद्यतोहेतुभूताद्भगवतस्तत्संकल्पाद्भूतानिमिथोभावयंतिपालयंतिच अदंतिभक्षयंति ॥ २४ ॥ २५ ॥

---

भाषाटीका ।

वही धनुष वही बाण वही रथ वेही घोड़े और वही मैं रथी कि जिसको बड़े बड़े राजा नमन करते थे, किन्तु ईशरिक्त वह सब क्षण भरमें असत् होगया । जैसे भस्म में होम कुहुक का दिया धन और ऊषर का बोया बीज वृथा जाता है ॥ २१ ॥

हे राजन् ! हमारे सुहृत्पुरसे जिन सुहृदों को तुमने पूँछा है वे विप्रशाप से मूढ वारुणी पीकर मदसे उन्मथित चित्त हो परस्पर मुष्टिओं से मारने लगे परस्पर परस्पर का नहीं जानने से लडते लडते सब नष्ट होगये चार पांच बचे हैं ॥ २२ । २३ ॥

यह सब प्रापकर ईश्वर ही का चेष्टित हैं कि जीव सब परस्पर एक का एक पालन करते हैं और एक को एक हनन करते हैं ॥२४॥

---

श्रीधरस्वामी ।

जलौकसां मत्स्यादीनाम् मध्ये महान्तः स्थूलाः अणीयसः सूक्ष्मान् यथा भक्षयन्ति ॥ २५ ॥
भुवो भारभूतान् यदून् संहृतवान् ॥ २६ ॥
अतः परं वक्तुं न शक्नोमीति सूचयन्नाह । देशकालोचितार्थयुक्तानि मनःपीड़ोपशमनकराणि च गोविन्दस्य वचनानि स्मरतो मम चित्तं हरन्ति आकर्षयन्ति ॥ २७ ॥
एवमिति सूतोक्तिः । अतिदृढेन स्नेहेन चिन्तयतो मतिः शान्ता विशोका विमला विरक्ता चासीत् ॥ २८ ॥

---

श्रीवीरराघवः ।

युक्तंचैतत्तस्यभूभारावतारायावतीर्णस्येत्यभिप्रायेणस्वयमुदासीनएवसन्भारं संजहारेत्याहजलौकसामितिद्वाभ्यांतत्राविवक्षितार्थोप योगितयादृष्टांतमाहजलेजलौकसांमत्स्यादीनांमध्येयथाऽणीयसःसूक्ष्मान्जलौकसोमहांतस्तत्अदंतिभक्षयंति यथाचदुर्वलांस्तान्वलिनोहंति यथाचहेराजन् ! महांतोवलिनश्चतेमिथोनिघ्नंति ॥ २५ ॥
एवंविभुर्वलिष्ठैर्महद्भिश्चयदुभिरितरान्दुर्वलानन्यांश्च भूतान् ततोऽन्योन्यंयदुभिर्यदूनेवमिथोभुवोभाररूपान्संजहारसंहृतवान् ॥ २६ ॥
देशकालार्थः देशकालानुगुणकर्त्तव्यं प्रयोजनंतद्युक्तानितत्प्रकाशकानिशृण्वतांहृदयगतदुःखोपशमानिगोविंदस्याभिहितानिभावेक्तः भाषणानिगीतादिरूपाणिस्मरतोममचित्तंहरंति ॥ २७ ॥
इत्थमितिगाढेनापरेणसौहार्देनकृष्णस्यपादसरोरुहंचिंतयतोऽर्जुनस्यातएवविमलाशांतारागाद्यकलुषिताचमतिर्वभूव ॥ २८ ॥

---

श्रीविजयध्वजः ।

इममर्थंसोदाहरणंस्पष्टयतीत्याह जलौकसामिति जलौकसांयादसांमध्ये महांतोऽणीयसोऽणुतरानदंति बलिनोदुर्बलान् भक्षयंति येम हांतः येचबलिनः तेमिथोऽन्योन्यंभक्षयंतियथा ॥ २५ ॥

एवंविभुर्बलिष्ठैर्महद्भिर्यदुभिरितरान् हत्वायदुभिरेवयदून्न्योऽन्यंहत्वाभूभारंदैत्यकुलंसंजहारेत्येकान्वयः भूभारहरणमेवावतारप्रयोज नमित्यंतत्तद्शब्देनाह यद्वाहुदण्डाऽभ्युदयानुजीविनः यदून्यदुभिरन्योऽन्यमित्याद्युक्तपालनंसंहरणंचहरेर्विषममितिचेत्तत्राह इयमिति तत्तत्कर्मानुसारिफलदातुरीश्वरस्याप्तकामस्यतेषांसंजीवनंमरणंचेतिद्वयंसममेव जीवनेनोपादेयाभावान्मरणेनहान्यभावाच्चातः इयंनविष ममितिभावः ॥ २६ ॥

स्वदुःखकारणंसूतइत्याह देशेति देशकालार्थयुक्तानितत्तद्देशतत्कालतत्तद्वस्तूचितानिहृत्तापोपशमनानि अहंकाराग्निसंसारसमुद्र शोषणकारणानि गोविंदस्याभिहितानि वचनानिस्मरतांममचित्तं हरंतीतियस्मात्तस्मात्तद्रहितत्वेनशोचामीत्येकान्वयः ॥ २७ ॥

बांधवनिमित्तस्नेहलक्षणभक्त्यतिशयेनतच्चरणस्मरणमाह एवमिति अतिगाढेनातिशयेनदृढेनतत्रैवातिशयेनमग्नेनवा सौहार्देनप्रेमलक्षण भक्तिसाधनेनकृष्णपादपद्ममेवमुक्तप्रकारेणस्मरतोजिष्णोर्निर्मलामतिर्मननसमर्थाबुद्धिः शांतासुखपूर्णापूर्वस्मादतिशयेनभगवन्निष्ठावती आसीदित्येकान्वयः ॥ २८ ॥

इतिश्रीभागवतेमहापुराणेप्रथमस्कंधेविजयध्वजकृतटीकायांचतुर्दशोऽध्यायः ॥ १४ ॥

---

क्रमसंदर्भः ।

एषामधार्म्मिकत्वेन भारत्वं च भूभारराजपृतना यदुभिर्निरस्येत्यत्रैकादशे परिहरिष्यते ॥ २६ ॥ २७ ॥

एवमिति । शान्ता चेतसि चक्षुषीव भगवदाविर्भावेन दुःखरहिता । अतएव विमला तद्वृत्तिभूता ये कालुष्यविशेषास्तैरपि रहिता २८

---

सुबोधिनी ।

ननुप्रकृतेकथंभगवत्कार्यत्वंश्रुत्यप्रतिपादितत्वादित्याशंक्याह जलौकसामिति यथामत्स्यानममग्निशापविमूढानामन्योऽन्यघातकत्वंमा- त्स्योन्यायः महांतोऽदंत्यणीयसइति तथाप्रकृतेदुर्बलान् बलिनः राजर्षिमितिसंमत्यर्थंमहान्तस्त्वन्योऽन्यंपरस्पराघातेनमृताः तत्राहविभुरिति सर्वकरणसमर्थः तैरेवतान्मारितवान् महान्साधनैः करोति महत्तरस्त्वाज्ञयाविभुरिच्छया अन्योऽन्यमितिच यथाविवाहेउत्सवादिषु अन्योऽन्यपरिवेषणंजातमित्यर्थः एवंसामान्याकारेणसंक्षेपतः कथामुक्त्वाविस्तरेणाकथनीयमित्याकांक्षायां पुनस्त्यक्तधर्मविशिष्टभगवत् स्मरणेनवैक्लव्येजातेवक्तुंनशक्यतइत्याह देशकालाभ्यां विशेषितायेअर्थाः तैतत्युक्तानिइति वाक्यानिहृत्तापोपशमानिचकारात् भगवन्माहात्म्यबोधकानिएवंत्रिविधान्यपिवाक्यानि भगवताबोधितानिदेशकालानुसारेणसर्वकर्तव्यमितिनीतिः आत्मनिष्ठतयावाद्यध मोस्त्यक्तव्याः भगवद्विषयकमोहः भगवन्माहात्म्यज्ञानात् एतानिवाक्यानि भगवदुक्तानिसांप्रतंस्मृतानिसन्तिचित्तंहरंतिअर्थानुसंधाने हिशोकापनोदः स्वरूपेणैवशोकजनकत्वं भगवदीयत्वात् तस्मात्शब्दप्रावल्यात् शोकेनतूष्णींभावः एवंधर्मपुरः सरेणभगवताभक्ति जननात् भक्त्याचभगवच्चरणारविन्दस्मरणेदृढप्रेमोत्पत्तौ जीवभगवतोः सांनिध्येसतिसत्वगुणावेशात् परमानन्दाविर्भावाच्चरजस्तमो दोषेष्वपद्गतेषुशांताविमलाचबुद्धिरासीत् शान्तासत्त्वेनविमलान्ययोरपगमेनमतित्वात् स्वभावत्वात् एवंज्ञानरूपत्वम् ॥ २५ । २६ । २७ ॥

एतत्सर्वंजातमित्याह एवमिति नष्टापातितः शोकापगमेऽपिसुषुप्तावित्तसर्वथानापगतइतिज्ञानप्रकाशमाह आत्मरूपज्ञानंभगवत्स्वरूप ज्ञानंचनोपदेशसापेक्षकं प्रमाणवस्तुपरतंत्रत्वात् परंप्रमाणवस्तुनोरावरणंदूरीकर्तव्यं तत्रप्रमाणावरणंदूरीकृतमेवरजस्तमसोरपगमेन सत्वतमः प्राकट्यात् जीवात्मावरणंमाया भगवदिच्छातत्रजीवावरणं भक्तिसहितज्ञानेनापगच्छति भगवन्माहात्म्यज्ञानपूर्वकभगव- द्विषयकपरमप्रेम्णाभगवत्सेवायांभगवदावरणमपगच्छति तदानिर्मलदृष्टेः सवितृप्रकाशसाक्षात्कारइव भगवत्स्वरूपयोर्मनसासाक्षात्का रोभवति ॥ २८ ॥

---

श्रीविश्वनाथचक्रवर्त्ती ।

जलौकसां मत्स्यादीनां मध्ये महान्तः स्थूलाः अणीयसः सूक्ष्मान् यथा भक्षयन्ति । बलिनस्तुल्यबलास्तु मिथः परस्परमेव ये यान् शक्नु वन्तीत्यर्थः ॥ २५ ॥

भूभारान् भूभारभूतान् यदून् संजहार इत्यर्ज्जुनादीन् प्रति भगवता तल्लीलायास्तथैव प्रत्यायितत्वात् । तत्कारणं तत्रैव एकादशा- न्ते व्यक्तीभविष्यति । किञ्च तदपि भूभारभूतान् यदूनित्यर्ज्जुनोक्त्या न तु भुवोऽलङ्कारभूतान् यदून् तन्नित्यपरिकरानित्यर्थस्तत्रैवोपलभ्यत एव । नारी खल्वलङ्काराणां भारं भारं न मन्यते यथा तथैव भूर्नित्यपरिकराणां यदूनाम् । ये तु देवास्तत्रैव यदुवंशावतारेण प्रविष्टा इतास्तेषामपि रजस्तमोरहितानां भारत्वेन वक्तुमनुचितानामपि स्वस्वपदप्रापणाय तन्मिषेणैवोपसंहारार्थम् अष्टादशाक्षौहिणीकामदशे दारस्ते वलं दुर्विषहं यदूनामित्युक्तवता भगवता भारत्वारोपः कृतः ॥ २६ ॥

वासुदेवाङ्घ्र्यनुध्यानपरिवृंहितरंहसा ।
भक्त्या निर्म्मथिताशेषकषायधिषणोऽर्जुनः ॥ २९ ॥
गीतं भगवता ज्ञानं यत्तत् संग्राममूर्द्धनि ।
कालकर्म्मतमोरुद्धं पुनरध्यगमद्विभुः ॥ ३० ॥
विशोको ब्रह्मसम्पत्त्या संछिन्नद्वैतसंशयः ।
लीनप्रकृतिनैर्गुण्यादलिङ्गत्वादसम्भवः ॥ ३१ ॥
निशम्य भगवन्मार्गं संस्थां यदुकुलस्य च ।
स्वःपथाय मतिश्चक्रे निभृतात्मा युधिष्ठिरः ॥ ३२ ॥

श्रीविश्वनाथचक्रवर्त्ती ।

अतः परं वक्तुं न शक्नोमि त्वमपि किञ्चिन्मा पृच्छेत्याह देशेति । यस्मिन् देशे यस्मिन् वा काले यस्मिन् वा अर्थे युक्तानि समुचितानि यानि यानि गोविन्दस्याभिहितानि वचनानि तानि स्मरतो मम हृदयं हरन्ति लुम्पन्ति ॥ २७ ॥

मतिस्तद्विरहसन्तप्तापि शान्ता निरन्तरतच्चिन्तनजनितस्फूर्त्तिलब्धेन तेन निर्व्वापितदाहत्वात् शीतलेत्यर्थः । अतएव विमला अस्थैर्य्यलक्षणमालिन्यमपि तस्या विगतमित्यर्थः ॥ २८ ॥

सिद्धांतप्रदीपः ।

विदुर्गोपकः श्रीकृष्णःसंजहारसंहृतवान् देशकालानुरूपार्थयुक्तानि गोविन्दस्यअभिहितानिभाषणानिस्मरतोमेचित्तंहरंति एकाग्रं कुर्वंति ॥ २६ ॥ २७ ॥

जिष्णोरर्ज्जुनस्य अतिगाढेनाचलेनसौहार्द्देनस्नेहेन शांतापादसरोरुहैकनिष्ठा अतएवविमलातादितररागमलरहितामतिरासीत् ॥ २८ ॥

भाषाटीका ।

राजन् ! जलमें जैसे दुर्वल और छोटों को वलवान् वड खाय जाते हैं ॥ २५ ॥

ऐसे ही वलिष्ठ वडे यादवों से उत्तर छोटे लोगों को और यादवों को अन्योन्य यादवोंही के द्वारा विनाश कर भूभार का संहार किया है ॥ २६ ॥

देश काल के अर्थ से युक्त हृदय के ताप को शमनकारी गोविंद के वचन स्मरण करते मेरे चित्तको हरण करते हैं ॥ २७ ॥

इस भांति कृष्ण पाद सरोरुह चिन्तवन करते जिष्णु (अर्जुन) की मति विमल होकर अति गाढ सौहार्द से शान्त होगई ॥ २८ ॥

श्रीधरस्वामी ।

मतिवैमल्यफलमाह । वासुदेवाङ्घ्र्यनुध्यानेन परिवृंहितं रंहो वेगो यस्याः तया निर्म्मथिता उन्मूलिताः अशेषाः कषायाः कामादयो यस्याः सा धिषणा बुद्धिर्यस्य सः ज्ञानं पुनरध्यगमदित्युत्तरेणान्वयः ॥ २९ ॥

कालेन कर्म्मभिस्तमसा भोगाभिनिवेशेन च रुद्धम् आवृतं सत् पुनः प्राप ॥ ३० ॥

ज्ञानफलमाह विशोक इति । एतदेव शोकहेत्वभावेनोपपादयति । शोकस्य हि हेतुः द्वैतभ्रमः तस्य देहः तस्य लिङ्गं तस्य गुणाः तेषाम् अविद्या । तत्र ब्रह्मसंपत्त्या ब्रह्माहमिति ज्ञानेन लीना प्रकृतिरविद्या यस्मिन् तन्नैर्गुण्यं भवति न तु सुषुप्ति प्रलययोरिवाविद्यावशेषः । तस्मान्नैर्गुण्यात् गुणकार्य्यलिङ्गनाशः । अलिङ्गत्वाच्च असम्भवः सम्यग्भोगाय भवति पुनःपुनरिति सम्भवः स्थूलशरीरं तद्रहितः । ततश्च तत्परिच्छेदाभावात् संछिन्नो द्वैतलक्षणः संशयो भ्रमो यस्य सः विशोको जात इति ॥ ३१ ॥

भगवतो मार्गम् आलक्ष्य यदुकुलस्य संस्थां नाशं श्रुत्वा नारदोक्तमनुस्मृत्य । स्वःपथाय स्वर्गमार्गाय । निभृतात्मा निश्चलचित्तः ॥ ३२

। दीपनी ।

विशोक इति । सोऽर्जुनः विशोको जात इति योजना । कथं विशोकत्वं, द्वैतभ्रमादीनि दर्शयति । ब्रह्मसम्पत्त्या ब्रह्माहमिति ज्ञानेन लीना प्रकृतिरविद्या यस्मिन् तादृक्नैर्गुण्यात् अलिङ्गत्वं लिङ्गदेहराहित्यं लिङ्गदेहाभावादसम्भवः सम्भवः स्थूलदेहस्तदभिमानराहितः । यद्वा पुनर्देहान्तरग्रहणाभावः । यतो लिङ्गदेहादेव पुनःपुनः स्थूलदेहो भवति तद्वीजराहितः । ततश्च स्थूलदेहाभिमानाभावात् संछिन्नः संशयो द्वैतभ्रमो यस्य । स्थूलदेहाभिमानेन द्वैतभ्रमादिति व्याख्यालेशः ॥ लिङ्गनाश इति । सप्तदशावयवात्मकस्य लिङ्गशरीरस्य पूर्ववत् कार्यकारित्वनाश इत्यर्थः ॥ तद्रहित इति । स्थूलशरीराभिमानरहित इत्यर्थः ॥ ३१ ॥ ३२ ॥

---

श्रीवीरराघवः ।

वासुदेवस्यांघ्र्योरनुध्यानेनपरिबृंहितंबृंहितंवर्द्धितंरयोवेगःप्राचुर्यंयस्यास्तयावासुदेवभक्त्याऽविच्छिन्नस्मृतिसंतानरूपयाप्रीत्यात्मिकया निर्मथितानिरस्ताः अशेषाः कषायाः कषायवद्मोच्यारागादयोयस्याः साधिषणाबुद्धिर्यस्यसोऽर्जुनः ॥ २९ ॥

संग्राममूर्द्धनियुद्धारंभेयद्भगवनागीतंगीतोपनिषद्रूपेणोपदिष्टंज्ञानं स्वात्मपरमात्मतत्प्राप्तिसाधनादियाथात्म्यगोचरंज्ञानंतन्महताकालेन कर्मणातमागुणेनचावरुद्धतिरोहितमपिविभुस्तत्त्वावधारणसमर्थः अत्रनिर्मथिताशेषकषायत्वंहेतुःपुनरप्यध्यगमदध्यवस्यत् ॥ ३० ॥

ब्रह्मसंपत्त्यापतृलगतीगत्यर्थाश्चबुद्ध्यर्थाब्रह्मविषयकसम्यग्ज्ञानेनचार्जुनस्तदानींमुक्तःतेनोपलक्षितःयद्वातेनहेतुनाच्छिन्नद्वैतसंशयःआत्मनि देहगतदेवादिभेदभ्रमरहितइति गीतोपनिषत्पूर्वषट्कोकबुद्ध्युन्मेषःब्रह्मसंपत्त्येतिमध्यषट्काथज्ञानोन्मेषउक्तः यद्वाब्रह्मसंपत्त्यासंछिन्न द्वैतसंशयः ब्रह्मज्ञानेनसंछिन्नदेवादिद्वैतस्वनिष्ठद्वैतसंशयइत्यर्थः अलिङ्गत्वादिति स्थूलदेहविरहानुसंधानमुक्तंलीनप्रकृतिनैर्गुण्यात्रिनष्ट सूक्ष्मप्रकृतितयागुणत्रयविरहात्तदनुसंधानादित्यर्थः देहेवर्त्तमानत्वादर्जुनस्यासंभवः अतएवपुनर्जन्मरहितः ततोविशोकोऽभवदित्यर्थःवि शोकग्रहणमपहतपाप्मत्वादिगुणाष्टकयुक्तस्वरूपोपलक्षणम् ॥ ३१ ॥

भगवतोमार्गस्वलोकगमनप्रकारं यदुकुलसंस्थांतंनाशंचेतियावच्छ्रुत्वायुधिष्ठिरः निभृतात्मासमाहितः स्वःपथाय स्वः शब्दःसुख परःनिरतिशयसुखरूपलोकमार्गायमतिंचक्रे ॥ ३२ ॥

---

श्रीविजयध्वजः ।

नन्वर्जुनस्यनानाविधक्षत्रहत्यापापोपरक्तायास्तामस्याबुद्धेर्नैर्मल्यंकथंयुज्यतेइत्याशंक्यज्ञोवन्मुक्तेष्वेकत्वात् भगवदर्पणबुद्ध्याकृतदुष्ट क्षत्रहत्यस्यतस्य मतेर्नैर्मल्यंयुक्तमिति दर्शयति वासुदेवेति ब्रह्मसंपत्त्या ब्रह्मणोवगत्याब्रह्मापरोक्षज्ञानेन विशोकस्तस्मादेवछिन्नोनिवृ त्तोद्वैतसंशयोयस्मात्तथोक्तः द्वइतंद्वीतंद्विधागतंज्ञानंतस्यभावः द्वैतमन्यथाज्ञानमितियावत्संशयइदंवाऽदोवेत्युभयकोटिविषयंज्ञानं विच्छ न्नाजीवब्रह्मभेदविषयः संशयोयेनेतिवा लीनाअपसारितात्प्रकृतिरहंकारात्मिकायस्मात्सतथोक्तः भावप्रधानोनिर्देशः तस्माल्लीनप्रकृति त्वान्निर्गतानिसत्त्वादिगुणकार्याणियस्मात्सतथोक्तः तस्यभावोनैर्गुण्यंतस्मादलिंगत्वात्सूक्ष्मशरीररहितत्वाच्चसंभवो ऽनारब्धकर्ममूलाया पुनरुत्पत्तिस्तयावार्जितः अनारब्धकर्मणांज्ञानादयंगनाशादारब्धकर्मणामेवोर्वरितत्वाज्ज्ञानोदयकालएवंभूतः सच्चार्जुनोरणमूर्धन्यारब्धकर्म णास्वधर्मेअधर्मबुद्ध्यस्वात्मनेभगवतायत् ज्ञानंगीतमुपादिष्टं तदारब्धकर्ममूलेः कालकर्मतमोभिः रुद्धं कालेनकर्मणातमसाचावृतएनर प्यगमदवगतवानावर्तितवानित्यन्वयः कीदृशः वासुदेवस्यांघ्र्योरभिरतः सम्यक्ध्यानेनपरितोबृहितंवृद्धंरंहोवेगोयस्याः सातथोक्तातया भक्त्या निर्मथिताअशेषाः समूलाःकषायाःपापलक्षणाः रागलक्षणाचायस्याः सातथोक्तानिर्मथिताशेषकषायाधिषणाबुद्धिर्यस्यसतथा अत्रनसर्वारब्धकर्मणांनिर्मथनमभिप्रेतं किंतुमहताभगवत्कारुण्यादिनाकारणेनकेषांचिदेव अन्यथा "भोगेनत्वितरेक्षपयित्वाथ संपत् स्यते"॥४।१।१९॥तस्यतावदेवचिरमित्यादिसूत्रश्रुतिविरोधः स्यात् "महताकारणेनैवप्रारब्धान्यपिकानिचित् कर्माणिक्षयमायांतिब्रह्मदृष्टिमतः क्वचिद्" इत्युक्तत्वाच्च अतोत्राशेषशब्दोनिर्मथनयोग्याशेषप्रारब्धविषयइतिभावः ॥ १ ॥ २ ॥ ३ ॥

एवंयादवसंस्थांश्रीकृष्णस्वधामप्राप्तिंचाभिधायपांडवस्वर्यानमुपक्रमते निशम्येति भगवतःश्रीकृष्णस्यस्वधामगमनप्रकारंयदुकुलस्य संस्थांविनाशंचश्रुत्वानिवृत्तात्माराज्यादिभ्योव्यावृत्तमनाःनितरांवृत्तसदाचारआत्मायस्येतिवायुधिष्ठिरःकामक्रोधादजयलक्षणयुद्धरथरः स्वःपथायस्वर्गमार्गाय वीराध्वनेमतिंचक्रइत्यन्वयः ॥ ४ ॥

---

क्रमसन्दर्भः ।

वासुदेवेति । पूर्वस्यैव विवरणमिदं पद्यद्वयम् । तत्रानुध्यानं पूर्वोक्तं चिन्तैव । कषायः पूर्वोक्तं मलमेव ॥ २९ ॥

गीतं मामेवैष्यसीत्यन्तम् । कालो भगवल्लीलेच्छामयः । कर्म तल्लीला । तमस्तल्लीलावेशेन तदननुसन्धानम् । अध्यगमत् तन्महा विच्छेदस्य तस्यान्तेऽपि तथा तत्प्राप्तेः पुनर्मामेवैष्यसीत्येतद्वाक्यं यथार्थत्वेनानुभूतवान् ॥ ३० ॥

ततश्च कृतार्थोऽभवदित्याह विशोक इत्यादि । ब्रह्मसम्पत्त्या श्रीमन्नराकारपरब्रह्मसाक्षात्कारेण संछिन्न इयं मम चेतसि स्फूर्तिरेव साक्षात्कारस्त्वन्य इति द्वैतसंशयो येन सः । तदा भगवत्प्राप्तौ नान्यजन्मान्तरप्राप्तिकालसन्धिरप्यन्तरायोऽभवदित्याह लीनेति । लीना पलायिता प्रकृतिर्गुणकारणं यस्मात् एवम्भूतं यन्नैर्गुण्यं तस्माद्धेतोः गुणातत्कारणातीतत्वादित्यर्थः । तथैवालिङ्गत्वात् प्राकृत-

### क्रमसंदर्भः ।

शरीररहितत्वाच्च असम्भवो जन्मान्तररहित! । तस्मादनन्तरं चक्षुष्याविर्भविष्यनीत्येव स्फूर्त्तिविशेषः ( विशेषः ) इति भावः । अतएव कलिं प्रति श्रीपरीक्षिद्वचनं—यस्त्वं कृष्णे गते दूरं सह गाण्डीवधन्वनेति । एवं—येऽध्यासनं राजकिरीटजुष्टं सद्यो जहुर्भगवत्पार्श्वकामा इति श्रीमुनिवृन्दवाक्यञ्च । तस्मात् सर्व्वेषां पाण्डवानां तदीयानां च सैव गतिर्व्याख्येया ॥ ३१ ॥

भगवन्मार्गं निशम्य वितर्क्य । यदुकुलस्य च संस्थां निशम्य श्रुत्वा । श्रीकृष्णस्य नित्यसामीप्येन सम्यक् स्थितिं वितर्क्येति वास्तवोऽर्थः । स्वः श्रीकृष्णधाम येऽध्यासनमित्याद्यौ सद्यो जहुर्भगवत्पार्श्वकामा इत्यनंन तदर्थमेव कृतप्रयत्नत्वात् ब्रह्मादयो लोकपालाः स्ववांसमभिकाङ्क्षिण इति श्रीभगवद्वाक्याच्च ॥ ३२ ॥

---

### सुबोधिनी ।

तत्रार्जुनस्यद्वयंजातमित्याहश्लोकद्वयेन वासुदेवेति शांतापिबुद्धिः सवासनेतिपुनरुद्गमनानिराकरणार्थवासुदेवांघ्र्यनुध्यानस्ययत् परि बृंहितमालिंगनं तदेवरंहावेगोयस्याःतादृशभक्त्यानिर्मिथिताः उद्धृतसाराःस्वरूपेणनाशितावा अशेषकषाया यस्याःतादृशीधिषणायस्य सोऽर्जुनोजातइत्यर्थः ॥ २९ ॥

अनेनसवासनंबुद्धरावरणंगतमित्युक्तंजीवावरणदूरीकरणार्थमुपायमाहगीतमिति शुद्धेश्वंतःकरणेप्रमाणेनोत्पादितंज्ञानम् आत्मावरणं दूरीकरोतिनतत्पूर्वमेवगीताख्येनप्रमाणेनभगवताउपदिष्टेनज्ञानंजातमेवास्ति परंकालकर्मतमोभिस्त्रिगुणात्मकैः सज्ञानाबुद्धिरावृता तांददानी मावरणापगमेस्वयमेवज्ञानंजातमित्याह गीतमितिगीतायांभगवताउक्तंज्ञानं यत्तत् पुनरध्यगमादितिसम्वन्धः ननुवृत्तिरूपंज्ञानंत्रिक्षणावस्था यीतिसकारणस्यस्वतस्तिरोहितत्वात् कथंप्राप्तवान् तत्राह विभुरितिसमर्थत्वात् ज्ञानंतिरोभावंदूरीकृतवानित्यर्थः ॥ ३० ॥

ततोयथात्मावरणं दूरीभूतंतदाह क्रमेणविशोकइतिज्ञानेनब्रह्मसंपत्तिजांताब्रह्मवंदब्रह्मैवभवतीतिशोकोहिविषयाप्राप्तौभवति ब्रह्मत्वे नसर्वविषयप्राप्तौसत्यांशोकाभावइतिसर्वविषयप्राप्तिमाह संछिन्नद्वैतसंशयइतिसम्यक्छिन्नाद्वैतप्रपंचेदेहादौ सशयायस्यस्वस्यैवसर्वरूप त्वे नको ऽपिसंदेहोभवतीति अथवाअद्वैतेसर्वत्रात्मनःप्रवेशात्सर्वस्यात्मनास्वरूपनाशसशयास्थिताः सखण्डभावात् तदात्मनोब्रह्मभावात् अंतःप्रवेशेनवहिः सम्वन्ध संदेहानिवारिताइत्यर्थः ननुवाह्येविषयेस्थितंपुनः सम्वन्धेनसंशयाभविष्यन्तीत्याशंक्याह लीनायाप्रकृति स्तयाकृत्वाजातं यत्नैर्गुण्यं निर्गुणावस्थातयाकृत्वालिंगापगमेजातमूलदोषाणांनिवृत्तत्वात् असम्भवं न पुनरुद्गमइत्यर्थः अतउद्गमाद्यभावा देवनसम्वन्धः लिंगस्य चनिवृत्तत्वात् एवंसर्वदोषापगमपूर्वकब्रह्मभावेजातेसर्वेशोकानिवृत्ताइतिभावः ॥ ३१ ॥

एवमर्जुनस्यकृतार्थत्वमुक्त्वाराज्ञः कृतार्थत्वंवक्तुंतस्याध्यवसायमाह भगवन्मार्गंज्ञात्वावैकुण्ठंगतइति यदुकुलस्यसंस्थांमृत्युंस्वःपथा यद्देवमार्गायनिभृतात्माद्दढांतः करणःगंतुमतिचक्रइत्यर्थः ॥ ३२ ॥

---

### श्रीविश्वनाथचक्रवर्त्ती

ननु कामादयः कषाया अपि मलशब्देनोच्यन्ते सत्यम् । अर्ज्जुनस्य भगवन्नित्यपरिकरत्वेन साक्षान्नरावतारत्वेन च तदसम्भव एव महेन्द्रांशत्वेन कषायः सम्भवति चेत् तदपि नैवेत्याह वासुदेवेति । जन्मारभ्यैवोत्पन्नया भक्त्या प्रथमत एव निर्म्मथिता उन्मूलिता अशे- षाः कषायाः कामादयो यस्या सा धिषणा बुद्धिर्यस्य तथाभूत एवार्ज्जुनः ॥ २९ ॥

किन्तु "प्रियस्य विच्छेददवे प्रियोक्तिस्मृत्यैव संधुक्षणमातुरस्ये"ति रीत्या तन्मुखचन्द्रविनिर्गतं सर्व्वसन्तापोपशमनं गीतामृतमेव पातुमारेभे इत्याह गीतमिति । कालादिभिरवरुद्धमविस्मृतम् । तत्र तमोऽन्धकारसमस्तद्विरह एव ॥ ३० ॥

तत्र च मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु । मामेवैष्यसि कौन्तेय प्रतिजाने प्रियोऽसि मे ॥ इत्यत्र पद्ये एष्यसीति भविष्यन्नि- र्देशेनेदं द्योतितम् । हे कौन्तेय संप्रति त्वं मामेष्यस्येव यदा तु तव मद्वियोगो महान् भावी तदा मां प्राप्तु यतिष्यमाणस्य तव तदुपायमहमधुनैव स्नेहेन ब्रवीमि इति स्वप्राप्त्यर्थं यत् ध्यानमुक्तं संप्रति तेन मुहुरभ्यस्तेन ध्यानेनैव तत्पार्श्वगतमेवात्मानमभिमन्यमा- नस्यापि मम देह एवान्तरायो यतोऽयं मध्ये मध्ये वहिर्वृत्तिमनुभाव्य मां शोकार्णवे क्षिपति तदस्माद्देहादात्मनः पार्थक्यमापादयितुं सर्व्वशास्त्रास्त्रविद्यावत् पूर्व्वाभ्यस्तं योगमेव लक्षणम् ( रक्षणम् ) अनुशीलयामीति मनसि निश्चित्य चिन्मयशरीरोऽपि आत्मानं श्रीकृष्णनित्यप्रियसखत्वेन नारायणसखत्वेन वा नानुसन्दधानः प्रेमवैवश्येन प्राकृतं नरमेव जानंस्तद्भावापलापाय क्षणमात्रेणैव योगा- रूढो बभूवेत्याह विशोक इति । ब्रह्मसम्पत्त्या प्राप्तया विशोकोऽभूदिति तदाभिमत्यनुसारेणैव सूतोक्तिर्वस्तुतस्तु प्रपंचगतां सम्पत्तिं त्यक्त्वा ब्रह्मसम्पत्त्या अप्रकटप्रकाशगतया श्रीकृष्णप्रियसखत्वप्राप्त्या विशोकः विगतशोकः संछिन्नो द्वैते संशयः देहेन सह मम सम्ब- न्धोऽस्ति नास्ति वेति सन्देहो यस्य सः । वस्तुतस्तु द्वैते सख्युः श्रीकृष्णात् सकाशात् स्वस्य भिन्नत्वे सति संशयः पूर्व्वमावयोः पर- स्परसख्यादैक्यमासीत् संप्रति तु द्वैतं वृत्तम् । तदधुना स कृष्णः किं पुनरपि सख्यसुखमयाद्वैत एव मां नेष्यति किंवा पार्थक्यलक्षणा- द्वैतदुःखसिन्धौ निमज्जयिष्यतीति भावनामयः सन्देहः संछिन्नो यस्य सः । न च तस्य प्राकृतलोकस्येव ( प्राकृताप्रकृतलोकस्येव ) पुनः संसार आशङ्कनीय इत्याह । लीन इति स्पष्टम् । वस्तुतस्तु लीनं सुश्लिष्टं दुर्लक्ष्यं यत् प्रकृतितः स्वभावादेव नैर्गुण्यं कृष्णसखत्वेन गुणातीतत्वं तस्मादेवालिङ्गत्वे लिङ्गदेहाभावस्तत एव न सम्यग्भवः संसारो यस्य सः । यद्वा महेन्द्रांशभूतोऽर्ज्जुनस्तु जीवन्मुक्तोऽभूदि- त्याह विशोक इति । संछिन्नो द्वैतसंशयः प्रपंचानुसंधानगतशोकमोहादिर्यस्य सः । तत्र हेतुः लीना ईश्वरं लीनीकृता या प्रकृतिस्तत एव यन्नैर्गुण्यं तस्मात् । अतएवालिङ्गत्वाल्लिङ्गदेहापगमादसम्भवः अपुनर्जन्मेत्यर्थः ॥ ३१ ॥

पृथाप्युपश्रुत्य धनञ्जयोदितं नाशं यदूनां भगवद्गतिञ्च ताम् ।
एकान्तभक्त्या भगवत्यधोक्षजे निवेशितात्मोपरराम संसृतेः ॥ ३३ ॥
ययाहरद्भुवो भारं तां तनुं विजहावजः ।
कण्टकं कण्टकेनेव द्वयञ्चापीशितुः समम् ॥ ३४ ॥
यथा मत्स्यादिरूपाणि धत्ते जह्याद्यथा नटः ।
भूभारः क्षपितो येन जहौ तच्च कलेवरम् ॥ ३५ ॥
यदा मुकुन्दो भगवानिमां महीं जहौ स्वतन्वा श्रवणीयसत्कथः ।
तदाहरेवाप्रतिबुद्धचेतसामभद्रहेतुः कलिरन्ववर्त्तत ॥ ३६ ॥

श्रीविश्वनाथचक्रवर्त्ती ।

मार्गं पदवीं चातुर्य्यपरिपाटीमिति यावत् । संस्थां वक्ष्यमाणसिद्धान्तानुसारेण अप्रकटप्रकाशगतत्वेन सम्यक् स्थितिं स्वान्तर्दशायां तद्बहिर्दशायान्तु नाशञ्च । स्वः श्रीकृष्णधाम । येऽध्यासनं राजकिरीटजुष्टं सद्यो जहुर्भगवत्पार्श्वकामा इत्युक्तत्वात् । तथा सम्पदः क्रतवो लोका इत्यादिभ्यश्च । युधिष्ठिर इत्युपलक्षणम् पञ्चैव भ्रातरः स्वःपथाय श्रीकृष्णधामपथं गन्तुं मतिं चक्रुः । निभृतात्मा अन्यालक्षितचित्तव्यापारः ॥ ३२ ॥

---

सिद्धांतप्रदीपः ।

पादसरोरुहैकनिष्ठायाः फलमाह वासुदेवेतिद्वाभ्याम् वासुदेवांघ्र्यनुध्यानेनपरिवृंहितंसंवर्द्धितंरयोगङ्गाप्रवाहवद्वेगोयस्यास्तया भक्त्याऽखंडयानिर्मथिताः निर्मूलिताः अशेषाः कषायाः रागादयोयस्याः साधिषणाबुद्धिर्यस्यसोऽर्जुनः ज्ञानमध्यगमदित्युत्तरेणान्वयः २९ संग्राममूर्द्धनितदारंभेभगवतायद्गीतमुपदिष्टम् "क्षरः सर्वाणिभूतानिकूटस्थोक्षरउच्यतेउत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृत" इतितत्त्वत्रयविषयकंकालेनवहुसंवत्सरात्मकेन अश्वमेधादिकर्माभिनिवेशनतदर्थं दिग्विजयादिवशादुत्पन्नेनतमसाक्षत्रियोचिततमोगुणेनरुद्धंज्ञानं तत्पुनर्विभुस्तत्त्वावधारणासमर्थः अध्यमगत् अध्यवस्यत् तत्रक्षरशब्दवाच्यमनात्मभूतंप्राकृतंतत्त्वम् कूटस्थंप्रकृतिभिन्नमात्मतत्त्वम् उत्तमपुरुषस्तदुभयनियंताचिदाचिच्छक्तिमान् तत्रस्वात्मपरमात्मनोः स्वरूपतोभिन्नत्वेऽपिसर्वथांशांशिनोः पृथगवस्थानाभावादभेदोऽपीतिविवेकः ॥३०॥
उक्तज्ञानभक्तिभ्यांकृतार्थस्यास्थितिमाह विशोकइति लीनातत्पृथक्कूटस्थस्वरूपाध्यवसायेनविस्मृताप्रकृतिः शरीरादिसकलक्षरपदार्थमूलभूतायस्यसलीनप्रकृतिः कार्यकारणरूपप्रकृतिभिन्नस्वरूपवित् तस्यनैर्गुण्यंसत्त्वादिगुणशून्यत्वंतस्मात् अतएवालिङ्गत्वाच्च सूक्ष्मशरीरभिन्नत्वाच्च असंभवः नास्तिसंभवः पुनर्जन्मयस्यसः कार्यकारणरूपप्रकृतिभिन्नस्वरूपोऽहंनपुनः प्राकृतदेहवान् भविष्यामीत्यध्यवसायवान् ब्रह्मणिभगवतिवासुदेवेसंपत्तिर्ज्ञानेनतादात्म्यलक्षणांपूर्वश्लोकेसंक्षेपतः प्रतिपादितंतयाचाछिन्नद्वैतसंशयः ब्रह्मात्मकोऽस्मीतिज्ञानसंपन्नः इत्थंविशोकोजातइतिदिक् ॥ ३१ ॥
तथैवयुधिष्ठिरनिश्चयमाह निशम्येति भगवतः श्रीकृष्णस्यमार्गंनिजधामगमनप्रकारं यदुकुलस्यसंस्थांसंहारंचनिशम्यश्रुत्वा स्वःपथाय स्वरित्यव्ययंसुखवाचकंपरमसुखात्मकधामपथायमतिंचक्रे ॥ ३२ ॥

---

भाषाटीका ।

वासुदेव के चरणों के अनुध्यान सै वृद्ध वेग भक्ति सै निर्मथित हुए हैं अशेष कषाय जिसके ऐसी बुद्धि युक्त अर्जुन संग्राम के आरम्भ में भगवान के गीत उस ज्ञान को जो काल कर्म तम सै रुद्ध होगया था फिर प्राप्त हुआ ॥ २९ ॥ ३० ॥
द्वैत संशय जिसका छिन्न होगया है प्रकृति के लीनहोजाने सें और निर्गुण होने से और लिङ्ग के अभाव से ब्रह्म सम्पत्ति से अर्जुन विशोक होगया ॥ ३१ ॥
भगवान के मार्ग को और यदु कुलके नाशको सुनकर निभृतात्मा युधिष्ठिर ने भी स्वर्ग के मार्ग को मति की ॥ ३२ ॥

---

श्रीधरस्वामी ।

तां भगवद्गतिं दुर्ज्ञेयां वक्ष्यति हि—सौदामन्या यथाकाशे यान्त्या हित्वाभ्रमण्डलम् । गतिर्न लक्ष्यते मर्त्यैस्तथा कृष्णस्य दैवतैरिति । संसृतेरुपरराम जीवन्मुक्ता बभूव देहं जहाविति वा ॥ ३३ ॥
तदेवमुक्तमपि यादवेभ्यो भगवद्वैलक्षण्यम् अबुद्ध्वा तत्साम्यं वदतो मन्दमतीन् प्रति वैलक्षण्यं स्पष्टयति द्वाभ्याम् । यया यादवरूपया तन्वा भुवो भारं कण्टकेन कण्टकमिवाहरत् । यावत्तनुर्भूभारतनुश्चेति द्वयमपि ईश्वरस्य संहार्यत्वेन सममेव ॥ ३४ ॥

### श्रीधरस्वामी ।

श्रीकृष्णस्य मूर्त्तेर्विशेषमाह यथेति । तान्यपि यथा धत्ते जहाति च । तदाह यथा नटो निजरूपेण स्थित एव रूपान्तराणि धत्ते अन्तर्धत्ते च तथा तदपि कलेवरं जहौ अन्तरधादित्यर्थः ॥ ३५ ॥

युधिष्ठिरस्य स्वर्गारोहणप्रसङ्गाय कलिप्रवेशमाह यदेति । स्वतन्वा जहौ स्वतनोरेव वैकुण्ठारोहात् । श्रवणार्हा सती कथा यस्य । तदा यदहस्तस्मिन्नेव । अहारिति लुप्तसप्तम्यन्तं पदम् । अप्रतिबुद्धचेतसामिति विवेकिनान्तु न प्रभुरित्युक्तम् । अन्ववर्त्ततेति पूर्व्वमेवांशेन प्रविष्टस्य स्वेन रूपेणानुवृत्तिरुक्ता ॥ ३६ ॥

---

### दीपनी ।

सौदामन्या इति । एकादशस्कन्धीयैकत्रिंशाध्यायस्य नवमश्लोकः ॥ ३३ ॥

यादवतनुर्भूभारतनुश्चेति । यादवाः प्रद्युम्नसात्यक्यादयः तद्रूपा तनुः मूर्त्तिः । भूभाराः शम्बरादयः तद्रूपा तनुः । ईश्वरस्य सर्व्व-मयत्वात् । तत्र संहार्यातनुरसुरादयः हेयतनुः प्रद्युम्नसात्यक्यादिमूर्त्तिः द्वयमेव समं त्याज्यत्वेन । तत्र दृष्टान्तः कण्टकमित्यादि । यथा कण्टकविद्धपादः कण्टकान्तरमानीय पादस्थकण्टकमुद्धृत्य द्वयमपि प्रक्षिपति तथा यादवमूर्त्त्या भूभारमूर्त्तिमसुरसमूहं हत्वा द्वयमपि त्यक्तवान् इति व्याख्यालेशः ॥ ३४ ॥

( यथा मत्स्यादीति । येन श्रीकृष्णरूपेण भूभारः क्षपितः । तच्चेति । चकारस्त्वर्थे । तत्तु तत् पुनर्नराकृतिरूपं जहौ अन्तरधात् यदुवंशनाशानन्तरं चतुर्भुजरूपमाविष्कृत्यान्तर्धानात् न तु देहं त्यक्त्वागतः दृष्टान्तस्यासम्भवात् एकादशस्कन्धोक्ततत्संवादाच्च । इति व्याख्यालेशः ॥ ३५—३८ ॥ )

---

### श्रीवीरराघवः ।

अर्ज्जुनोदितं यदूनांनाशंतांभगवतोगतिंच श्रुत्वाकुंत्यपिभगवत्यधोक्षजे ऽनन्यप्रयोजनयाभक्त्यानिवेशितआत्मामनोययातथाभूतासंसृते रुपररामविरक्ताबभूव ॥ ३३ ॥

भगवन्मार्गमिति भगवद्गतिमित्यनेनचोक्ताभगवतः स्वलोकंप्रतिगतिः किंकृष्णस्यतनु त्यागपूर्विकाउततयैवेतिशौनकाभिप्रेतांविशदयति ययेति अजोभगवान्ययातन्वाभुवोभारमहरत्तांतनुंविजहौमनुष्यसंस्थानंविजहौ स्वासाधारणयाचतुर्भुजादिमत्यातन्वावतीर्यपित्रोः प्रार्थन यायांमनुष्यसंस्थानस्थितांतनूंभूभारमपनेतुंजग्राहतांतनुंतिरोधाय्यस्वासाधारणतन्वाजगामेत्यर्थः मनुष्यसंस्थानस्यभूभारापनोदनौपाधि कत्वेनयावदुपाधितत्संस्थानमपनुद्यस्वासाधारणयैवजगामेतिभावः मनुष्यसंस्थानेनैवकिंनजगामेत्याकांक्षायांतत्रदृष्टांतमुखेनोत्तरमाहयथा कंटकविद्धचरणः पुमान्यावत्तदपनोदककंटकांतरंपरिगृह्य तेनतदपनुद्यततोपनुत्तमपनोदकमपिकंटकद्वयं जहातितद्वदीशितुर्भगवतः द्वयमपिसममपनोद्यंदुष्कृततच्छरीरजालमपनोदकंमनुष्यसंस्थानंचोभयमपिसमंहातव्यत्वेनसममपनोदकशरीरस्यापियावदुपाधिधार्यत्वा दितिभावः ईशितुरुभयमित्यनेनदुष्कृच्छरीरेष्वप्यंतः प्रविश्यनियंतुर्भगवतः तान्यपिशरीराणिभगवतएवस्वस्यैवेतिसूचितं कंटकदृष्टांतेनचै तदभिप्रेतंयथोभयोः कंटकयोः कंटकत्वमविशिष्टमेवमुभयोरपिशरीरयोः स्वशरीरत्वमविशिष्टमिति ॥ ३४ ॥

इदमेवप्रसिद्धंदृष्टांतांतरेणाप्याहयथेतियथानटोनाट्योपयुक्तानिवेषांतराणि परिगृह्यनाट्यानंतरंस्वेनरूपेणैवावतस्थेतथायेनशरीरेणभू भारः क्षपितोनिरस्तः तत्कलेवरं जहौतत्तिरोधायस्वासाधारणेनैवजगामेत्यर्थः ॥ ३५ ॥

यदेतिश्रोतव्याः सत्याः कथायस्यसभगवान्मुकुंदः स्वतन्वास्वासाधारणदिव्यमंगलविग्रहोपेतः महींयदायस्मिन्नहनिजहौतदहरेवतस्मि न्नहन्येवविवेकिनामभद्रहेतुरशुभहेतुः कलिरवर्त्तत ॥ ३६ ॥

---

### श्रीविजयध्वजः । *

* स्वर्याणनिर्णयेकारणमाह यदेति यदाश्रवणीयसत्कथोमुकुन्दः स्वतन्वास्वाभिमतयाभूत्याइमांमहींजहौत्यक्तवांस्तदहरेवप्रतिबुद्ध चेतसां हरिविषयबोधरहितबुद्धीनांपुंसामभद्रहेतुः पापकारणकालरम्ववर्ततेत्यन्वयः ॥ ५ ॥

---

### क्रमसन्दर्भः ।

नाशं लोकदृष्ट्या वस्तुतस्त्वदर्शनमेव । भगवत्यधोक्षजे निवेशितात्मेति भगवतः पृथाध्यानालम्बनत्वं दर्शयित्वा पृथयानुभूतां स्थिति मेव दर्शयति । तत्र सौदामिन्या इत्याद्येकादशस्कन्धपद्यात्मकं शास्त्रं सौदामिन्या अपि नाशं निषेधयति चेत् तर्ह्यत्रापि तद्दृष्ट्या सुतरामेव तन्मन्तव्यम् । तदुक्तं तत्रैव—देवादयो ब्रह्ममुख्या न विशन्तं स्वधामनि । अविज्ञातगतिं कृष्णं ददृशुश्चातिविस्मिता इति । संसृतेः प्रपञ्चा वतारात् ॥ ३३ ॥

---

* त्रयस्त्रिंशत्प्रभृतिपंचत्रिंशदंताः श्लोकाविजयध्वजीयेनसंति ॥

क्रमसन्दर्भः ।

यथेति । तनुरूपकलेवरशब्दैरत्र श्रीभगवतो भूभारजिहीर्षालक्षणो देवादिपिपालयिषालक्षणश्च भाव एवोच्यते । यथा तृतीये विंशति तमेऽध्याये तत्तच्छब्दैर्ब्रह्मणो भावएवोक्तः । यदि तत्रैव तथा व्याख्येयं तदा सुतरामेव श्रीभगवतीति । ततश्च तस्य भारस्य भगवति तदा भासरूपत्वात् कंटकदृष्टांतः सुसङ्गत एव । तथा द्वये एव ईशितुः साम्यमपि ॥ ३४ ॥

मत्स्यादिरूपाणि मत्स्याद्यवतारेषु तत्तद्भावान् । अथ नटदृष्टान्तेऽपि नटः श्रव्यरूपकाभिनेता । व्याख्यातं च तैः प्रथमस्यैकादशे नटा नवरसाभिनयचतुरा इति । ततो यथा श्रव्यरूपकाभिनेता नटः स्वरूपेण स्ववेशेन च स्थित एव पूर्व्ववृत्तमभिनयेन गायन् नायकनायिकादिभावं धत्ते जहाति च तथेति । अथवा "नाहं प्रकाशः सर्व्वस्य योगमायासमावृतः" । इति श्रीगीतावाक्येन योगिभिर्दृश्यते भक्त्या नाभक्त्या दृश्यते क्वचित् । द्रष्टुं न शक्यो रोषाच्च मत्सराच्च जनार्द्दनः ॥ इति पाद्मोत्तरखण्डनिर्णयेन मल्लानामशनिरिति श्रीभागवतदर्शनेन आत्मविनाशाय भगवदस्त्रचक्रांशुमालोज्ज्वलमक्षयतेजःस्वरूपं परमब्रह्मभूतमपगतद्वेषादिदोषो भगवन्तमद्राक्षीत् इति शिशुपालमुद्दिश्य श्रीविष्णुपुराणगद्येन चासुरेषु यद्रूपं स्फुरति तत्तस्य स्वरूपं न भवति किन्तु मायाकल्पितमेव । स्वरूपे दृष्टे द्वेषश्चापयातीति । ततश्चासुरेषु स्फुरत्या यया तन्वा भुवो भाररूपमसुरवृन्दमहरत् तां तनुं विजहौ पुनस्तत्प्रत्यायनं न चकारेत्यर्थः । भक्तिदृश्या तनुस्तु तस्य नित्यसिद्धैवेत्याह अज इति । देवक्यां देवरूपिण्यामित्यादेः कृष्णश्च तत्र छन्दोभिः स्तूयमानमित्यत्र गोलोकाधिष्ठातृत्वनिर्द्देशाच्च । ततश्च यथा नट ऐन्द्रजालिकः कश्चित् स्वभक्षकाणां वकादीनां निग्रहाय मत्स्याद्याकारान् धत्ते स्वस्मिन् प्रत्याययति तन्निग्रहे सति यथा च तानि जहाति तथा सोऽयमजोऽपि येन मायिकेन लक्ष्यतां प्रापितेन रूपेण भूभाररूपः असुरवर्गः क्षपितः तद्वर्गं क्षपितवानित्यर्थः तच्च कलेवरं जहौ अन्तर्धापितवानित्यर्थः । किन्तु गीतापद्ये योगमायासमावृतइति सर्पकञ्चुकवन्मायारचितवपुराभाससमावृतइत्यर्थः ॥३५॥

यदेति । त्यागोऽत्र स्वतनुकरणक इति न तु स्वतन्वा सहेति व्याख्येयं सह इत्यध्याहार्य्यापेक्षागौरवात् उपपदविभक्तेः कारकविभक्तिर्व्वलीयसीति न्यायाच्च ॥ ३६ ॥

---

सुबोधिनी ।

क्रमेणमुक्तिंवक्तुंपृथायामुक्तिमाहपृथापीति ॥ ३३ ॥

भगवतोयादवोपसंहारेआत्मत्वात् दोषाभावइतिवक्तुंययायादवतन्वासहायार्थमानीतयाभुवोभारमहरत् तांतनुंविजहौ क्लेशाभावार्थमाह अजइतिनहितेनजातोऽस्तितत्रदृष्टांतमाह कंटकमितिसर्वथात्मीयाभावः सूचितः तथापिअभिमानिनांजीवानांक्लेशात् कथमेवमतआह द्वयंचापीशितुः सममिति ॥ ३४ ॥

भगवतिविशेषमाह यथेति यथानटाः स्वरूपमेवनानाविधक्रीडार्थंस्त्र्यादिरूपेणप्रदर्शयंतिनिवृत्तेचकार्येतानिरूपाण्युपसंहरंतिएवमिदमपीत्यर्थः ॥ ३५ ॥

एतत्कथनस्यप्रकृतोपयोगंवक्तुमाह यदामुकुंदइति सर्वेषांमोक्षदानार्थमवतीर्णोभगवान् दत्वामोक्षंयदानिवृत्तः कलिरन्ववर्त्ततदामोक्षबाधकत्वेनकलिधर्माणां निरूपणात् तेष्वागतेषुस्थितस्यमोक्षोनास्तीतिनिर्गमनमेवशरणमितिकालव्याप्तिरहितदेशेभक्तिहेतोर्भागवतादेरभावात्भगवतैवसहगंतव्यमितिमतिंकृतवानित्याह यदामुकुंदइति"कलिकालमलंसर्वकालस्वामीतुमाधवः यतोनिवर्त्ततेतत्रवहाविवनिकृष्टता" दारौतुतथातेनदेशांतरगतिर्मता अग्निभावेऽपिकाष्ठेनसाध्यइतिनिश्चयः मुकुंदोभगवानितिवचनात् मुक्त्यर्थमेवभगवदवतारइत्युपसंहारः यद्यपिभगवतः नित्यसंबंधात् क्वापित्यागोनास्ति तथापिप्रकटितपरमानन्दरूपस्यपरिच्छिन्नतयाप्रदर्शनात् तन्वाजहौ तनुद्वाराजहावित्यर्थः भूमीत्यागस्यपूर्वमनुक्तत्वाश्नटवत् तनुत्यागस्याक्तत्वात् त्यक्तस्यवस्तुत्वाभावात् अपूर्वविधौअनुवादेवासहार्थतृतीयानसम्भवति नन्वग्रेउत्पत्स्यमानानांभक्तानां कथमुद्धारइत्याशंक्याह श्रवणीयसत्कथइतितदातस्मिन्नित्यर्थेअव्ययम् अहरितिलुप्तसप्तम्यन्त मध्यरं वाप्रातः कालेभगवद्गमनमितिसम्प्रदायविदः तदैवप्रात कालेकलिः प्रवृत्तः ननुभगवत्कृपावलोकितानां भगवन्मार्गानुवर्त्तिनां विद्यमानत्वात् कथंकलिप्रवृत्तिरित्यत आहअप्रतिबुद्धचेतसामभद्रहेतुरितिसर्वागमनं प्रकर्षेणविकासितकमलानांमुकुलसंभावनारहितानामयेन कंचित्कृतः अन्येषामस्तमये अन्धकारादिनाकीटनिवासः स्यादेवज्ञानेनाविनाशः भक्त्यामुकुलसम्भावनाभावः ॥ ३६ ॥

---

श्रीविश्वनाथचक्रवर्त्ती

तां प्रसिद्धाम् अन्तर्द्धानलक्षणाम् । संसृतेः सम्यक्सरणात् प्रपञ्चेऽवतारात् उपरराम सद्य एवंवांतदेधावित्यर्थः । तच्छ्रवणक्षण एव तद्वियोगजनितां दशमीमपि दशां दर्शयामासेति वा ॥ ३३ ॥

यादवादीनामन्तिमदशाश्रवणेन विषीदतः शौनकादीनाश्वासयन् सिद्धान्तरहस्यमाह यथेति । यया यादवादितन्वा भुवः स्वपादभूतायाः ( स्वपादमूलायाः ) भारं कण्टकेन सूच्यग्रेण कण्टकमिव अहरत् तामेव तनुं विजहौ । देवदत्तो वसनं विजहावितिवत् स्वसङ्गाद्विच्युतांचकारेत्यर्थः । न तु यया नित्यं क्रीडति तामपीति भावः । तेन अंशावतरणसमये ये देवा नित्यभूतेषु यादवादिषु प्रविष्टास्ते एव तेभ्यो योगवलेन निष्कास्य प्रभासं गमितास्तद्देहत्यागं लोकान् माययैव दर्शयता भगवता मधुपानानन्तरं देवरूपीकृत्य स्वर्गं प्रापयामासिरे इत्येकादशान्तव्याख्यानुसृत्या ज्ञेयम् । नित्यलीलापरिकरा यादवास्तु प्रापञ्चिकलोकालक्षिताः श्रीकृष्णेन समं द्वारकायामेव यथा पूर्व्वमेव खेलन्तीति भागवतामृतोक्तसिद्धान्तादवगन्तव्यम् । द्वयमिति । भूभारभूता असुरो यादवादिरूपा देवाश्चेति द्वयम् ईशितुः परमेश्वरस्य सममेव । किन्तु दृष्टान्ते कण्टकत्वेन साम्येऽपि करणभूतस्य सूच्यग्रस्य उपकारकत्वेनान्तरङ्गत्वं कर्म्मभूतस्य कण्टकस्यापकारकत्वेन साम्येऽपि वहिरङ्गत्वमित्यपि ज्ञापितम् । "सूच्यग्रे क्षुद्रशत्रौ च लोमहर्षे च कण्टक" इत्यमरः ॥ ३४ ॥

श्रीविश्वनाथचक्रवर्त्ती ।

कृष्णस्त्वैन्द्रजालिकनट इव स्वदेहत्यागं मिथ्याभूतमेव प्रत्याययामासेत्याह यथेति । भगवान् धत्ते जह्यात् न तु धृत्वा जह्यादिति तनुत्यागकालेऽपि तत्तत्तनुधारणमस्त्येव । ननु कथमेतद्बोद्धव्यमित्यत आह । यथा नटः ऐन्द्रजालिकः छिन्नबाहुमूर्च्छादिभिः स्वदेहं त्यजति तस्य त्यागं सर्व्वान् दर्शयति प्रत्याययति अथच स्वदेहं धत्ते एव न तु म्रियते । तथैव मत्स्यादिरूपाणि मत्स्यादिशरीराणि स्वीयानि भगवान् धत्ते जह्यात् दधान एव जहाति । तेन नटस्य स्वशरीरधारणं सत्यमेव तत्त्यागस्तु मिथ्यैव यथा तथैव भगवतोऽपि मत्स्यादि स्वीयशरीरधारणं सत्यमेव तत्तत्त्यागो मिथ्यैवेत्यर्थः । यथा च मत्स्यादिशरीराणि दधान एव जहाति तथैव येन भूभारः क्षपितस्तच्च कलेवरं जहाविति श्रीकृष्णकलेवरत्यागो मिथ्यैवेति । नराकृतिपरब्रह्मत्वादिकमपि नटरूपनरधर्म्ममेवं भगवान् करोति न तु तत्त्वेन । स्वदेहस्याभौतिकत्वेन नाशासम्भवात् । यदुक्तं महाभारते—न भूतसंघसंस्थानो देहोऽस्य परमात्मन इति । वृहद्वैष्णवेऽपि—यो वेत्ति भौतिकं देहं कृष्णस्य परमात्मनः । स सर्व्वस्माद्बहिः कार्य्यः श्रौतस्मार्त्तविधानतः । मुखं तस्यावलोक्यापि सचैलः स्नानमाचरेदिति । वैशम्पायनसहस्रनामनि च—अमृतांशोऽमृतवपुरिति । अमृतं मरणरहितं वपुर्यस्येति तत्र श्रीशङ्कराचार्य्यव्याख्या न प्रसिद्धा । अत्र श्लेषेण जह्यादिति जहातेस्त्यागार्थत्वात् त्यागस्य च दानार्थत्वात् वैकुण्ठादिधामस्थेभ्यो भक्तेभ्यः स्वशरीरप्रविष्टचरं नारायणादिरूपं तेषां पालनार्थं ददावित्येकादशान्ते व्याख्यास्यते ॥ ३५ ॥

तनुत्यागस्यावास्तवत्वं स्पष्टयन्नाह । यदा स्वतन्वा जहौ स्वतनोरेव वैकुण्ठारोहादिति श्रीस्वामिचरणाः त्यागोऽत्र स्वतनुकरणक एव न तु स्वतन्वा सह महीं जहाविति कुव्याख्याया अवकाशः "उपपदविभक्तेः कारकविभक्तिर्बलीयसी"ति न्यायात् । प्रदर्श्यातप्ततपसाम् , वितृप्तदृशां नृणाम् । आदायान्तरधाद्यस्तु स्वविम्बं लोकलोचनमित्यत्रापि लोकलोचनरूपं स्वविम्बं निजमूर्त्तिं प्रदर्श्य पुनरादायैव च अन्तरधात् न तु त्यक्त्वेति सन्दर्भश्च । तदा यदहः तदभिव्याप्येत्यर्थः । अप्रतिबुद्धचेतसामिति विवेकिनां तु न प्रभुरित्यर्थः । चौरो हि निद्रितस्यैव धनमपहरति प्रतिबुद्धात्तु विभेतीत्यर्थः ॥ ३६ ॥

---

सिद्धांतप्रदीपः ।

कुन्त्यामुक्तिमाह पृथापीति संसृतेः संसारात् ॥ ३३ ॥

ननुभूभारराजपृतनायदुभिर्निरस्येतिवचनाद्भूभारहरणौपयिकान् तस्यैवतेभूस्तनवस्त्रिलोक्यांशांता अशांताउत्तमूढयोनयः शांताः प्रियास्तेह्यवितुमतांस्थातुश्चतेधर्मपरीप्सयेह तद्इतिवक्ष्यमाणात्स्वकीयशांततनुभूतान्यदून्यदुभिरन्योऽन्यंभूभारान्संजहारहेतियदुक्तं तत् कथंसंहृतवान्तत्राह ययेति अजइति नित्यशरीरः स्वरूपतस्तु भूभाररूपाराजन्याः तदुपसंहारायसंवर्धिताः यादवाश्चसर्वेऽजा एव द्विभुजचतुर्भुजशतभुजसहस्रभुजाकारेणस्थातुंसमर्थेनागिर्य्याद्याकारेणवालतरुणाद्याकारेण एकधादशधाशतधासहस्रधाविश्वरूपेणाच दृश्यत्वेनादृश्यत्वेनचभवितुमर्हेण श्रीविग्रहेणाप्यजइत्यर्थः सचविग्रहश्चतुर्भुजो द्विभुजोभवति नतत्रमुख्यत्वकल्पनावकाशः एवंभूतः अजो नित्यानन्दाचिन्त्यस्वाभाविकविग्रहः श्रीकृष्णः ययायादवभूतयाशांतयाभुवोभारमशांतशरीरंकंटकंकंटकेनेवाहरत् तांतनुं विजहौशान्ता यादवतनुरशान्ताभूभारतनुश्चेतिद्वयमपीशितुर्भौतिकतयासंहार्यत्वेसमम् यादवानामपि भगवल्लीलादर्शनव्यातिरिक्तंभौतिकदेहेनकिमपि कृत्यम् यथामुनीनांभगवल्लीलादर्शनात्र्कृतेप्रायोवचमुनयोविहगावनेऽस्मिन्नित्यादिवक्ष्यमाणेषुविहगादिरूपेषुनाकिमपिप्रयोजनं तद्वदितिभावः शांतान्यशांतानिचशरीराणिकृष्णस्येत्यत्रप्रमाणम् स्वशांतरूपेष्वितरैः स्वरूपैरभ्यर्द्यमानेष्वनुकम्पितात्मेत्यपिवक्ष्यमाण वोध्यम् ॥ ३४ ॥

ननुनिशम्यभगवन्मार्गसंस्थांयदुकुलस्यच पृथाप्युपश्रुत्यधनञ्जयोदितं नाशंयदूनांभगवद्गतिंचतामित्युक्तंभगवद्गमनंयथावृन्दावनान्मथुरांप्रतिप्रत्यक्षमुतयथारासक्रीड़ायामंतर्द्धानपूर्वकंतद्वदित्यतआह तयेति येननित्येनशरीरेणोभयविधोभूभारःक्षपितःतच्च "यदात्मको भगवांस्तदात्मिकाव्यक्तिः नभूतसंघसंस्थानोदेहोऽस्यपरमात्मन" इत्यादिश्रुतिस्मृति प्रतिपादितंस्वरूपवन्नित्यामनन्ताचिन्त्यंकार्यकारणरूप प्रकृतिसम्वन्धवर्जितमप्राकृतंकलेवरंस्वाभाविकंशरीरम् तासांतत्सौभगमदम्वीक्ष्यमानंचकेशवः प्रशमायप्रसादायतत्रैवांतदधेहारीरीति वजहौप्रत्यक्षतांत्यक्त्वांतार्हितोऽभूदित्यर्थः प्रसंगान्मत्स्यादिप्रादुर्भावेषुयथोपयोगमाविष्कृतेषुश्रीमूर्तेर्नित्यतांदर्शयाति यथानटः एकेनैवदेहेनस्थितोरूपंधत्तेजह्याच्च तथैकेनदेहेनएवभगवान् यथेच्छंमत्स्यादिरूपाणिधत्तेजह्यादन्तर्धत्तेच ॥ ३५ ॥

पांडवानांगृहान्निर्गमनंतत्कुंकलिप्रवेशकालमाह यदेति श्रवणीयाश्रवणार्हासतीकथा यस्यसःयथाचरणोपादुकांजनोजहातितद्वत्यदा स्वतन्वाश्रीमूर्त्याइमांमहींजहौतदैव अहरहनिकलिरन्ववर्त्तत ॥ ३६ ॥

---

भाषाटीका ।

धनंजय कथित यादवों का नाश और भगवान् की उस गति को सुनकर कुंती भी एकान्त भक्ति से अधोक्षज में मन लगाकर संसार से उपरत हुई ॥ ३३ ॥

अज भगवान ने जिस यादव कुल रूप अपनी तनु से पृथवी का भार दूर किया था उस यदुकुल का भी संहार किया क्योंकि ईश को दोनों ही समान हैं । जैसे पद में कांटा लगने से उसे दूसरे कांटे से निकालकर दोनों ही कांटे फेंक दिये जाते हैं ॥ ३४ ॥

जैसे भगवान् मत्स्यादि रूप धारण करते हैं और अन्तर्द्धान करते हैं ऐसेही जिस अपनी निज मूर्ति से भूभार क्षय किया था उस श्रीकृष्ण रूप को भी अंतर्द्धान करलिया ॥ ३५ ॥

श्रवणीय सत्कथ मुकुन्द भगवान ने जिस समय अपनी श्रीमूर्ति से इस पृथवी को छोंड़ा उसी दिन से अप्रतिबुद्ध ( अज्ञान ) चित्त लोगों में अधर्म हेतु कलियुग ने प्रवेश किया ॥ ३६ ॥

---

युधिष्ठिरस्तत्परिसर्पणं बुधः पुरे च राष्ट्रे च गृहे तथात्मनि ।
विभाव्य लोभानृतजिह्महिंसनाद्यधर्म्मचक्रं गमनाय पर्य्यधात् ॥ ३७ ॥
* सम्राट् पौत्रं विनियतमात्मनः सुसमं गुणैः ।
तोयनीव्याः पतिं भूमेरभ्यषिञ्चद्गजाह्वये ॥ ३८ ॥
मथुरायां तथा वज्रं शूरसेनपतिं ततः ।
प्राजापत्यां निरूप्येष्टिमग्नीनपिबदीश्वरः ॥ ३९ ॥
विसृज्य तत्र तत् सर्व्वं दुकूलवलयादिकम् ।
निर्म्ममो निरहङ्कारः संछिन्नाशेषबन्धनः ॥ ४० ॥

श्रीधरस्वामी ।

बुधो युधिष्ठिरः तस्य कलेः परिसर्पणं प्रसरणं विलोक्य । कथम्भूतं लोभादि अधर्म्मचक्रं यस्मिन् । जिह्मं कौटिल्यम् । पर्य्यधात् बुद्धिचितं परिधानमकरोत् ॥ ३७ ॥
आत्मनः स्वस्य गुणैः सुसमम् अतिसदृशम् । तोयं सर्व्वत एव स्थितं समुद्रोदकमेव नीवी परिधानविशेषो यस्याः तस्याः भूमेः पतित्वेनाभिषिक्तवान् ॥ ३८ ॥
वज्रम् अनिरुद्धस्यपुत्रम् । निरूप्य कृत्वेत्यर्थः । अपिबत् आत्मन्यारोपयामास । ईश्वरः समर्थः ॥ ३९ ॥
सछिन्नानि अशेषाणि बन्धनानि उपाधयो येन ॥ ४० ॥

दीपनी ।

( तथा—अभ्यषिञ्चदिति शेषः । शूरसेनः स्वनामकदेशविशेषः तस्य पतिम् अधिपतिमित्यर्थः ॥ ३९ ॥ ४० ॥ )

श्रीवीरराघवः ।

ततोयुधिष्ठिरः पुरेराष्ट्रेगृहेआत्मनि जनानांदेहेषुचतस्यकलेः परिसर्पणमनुवर्त्तनंबुधः जानन्तन्मूलकं लोभाद्यधर्माणां चक्रंजाल मवलोक्यगमनाय गृहान्निर्गमनायपर्यधात्परिहितउद्युक्तोबभूवेत्यर्थः ॥ ३७ ॥
ततः स्वराट्राजायुधिष्ठिरः गुणैरात्मनः स्वस्यसमंतुल्यं विनयिनंचपौत्रंपरीक्षितं हस्तिनपुरेतोयनीव्याः समुद्रमेखलायाभूमेः पतिमभ्यषिञ्चदभिषिक्तवान्विनिमयमितिपाठेविनिमयंविनिमयार्हंसदृशमनवममन्यूनमित्यर्थः ॥ ३८ ॥
तथामथुरायां वज्राख्यंयदुकुलकुमारं शूरसेनानांजनपदानांपतिमभ्यषिञ्चत्ततः प्राजापत्यांप्रजापतिदेवताकामिष्टिंनिरूप्यकृत्वाईश्वरो युधिष्ठिरोऽग्नीनाहवनीयादीनपिबत् आत्मन्यारोपितवान् ॥ ३९ ॥
तत्रस्वगृहएवतत्प्रसिद्धं दुकूलादिकंत्यक्त्वावाचंजुहवेत्यन्वयः कथंभूतः निर्ममः देहाद्यनुबंधिषुस्वकीयत्वाभिमानरहितः निरहंकारः देहात्मभ्रमरहितः संछिन्नान्यशेषाणि बंधनानिप्रकृत्यादीनियेनतथाभूतः प्रकृत्यादिमोक्षमनुसंहितवानित्यर्थः ॥ ४० ॥

श्रीविजयध्वजः ।

बुधः विवेकज्ञानीयुधिष्ठिरः राज्येपुरेचगृहेभार्यादौचतथात्मनिस्वस्मिन् तस्यकलेः परितः सर्पणंव्याप्तिंविभाव्यज्ञात्वा कलिव्याप्ति मूलंलोभाद्यधर्मसमुदायंचविज्ञायगमनायवीराध्वगमनायपर्यधात्निश्चितवानित्येकान्वयः "प्रणिधानंतुनिश्चय" इत्यभिधानं लोभश्चानृतंच जिह्मंकौटिल्यंचहिंसनंचलोभानृतजिह्महिंसनानि आदिर्यस्यपुरुषादेस्तत्तथोक्तम् ॥ ६ ॥
स्वराट्चक्रवर्ती स्वपौत्रंतंगुणैरनवमंयेयमीत्रमभिमस्योः सुतंपरीक्षितंतोयमेवतीवीवसनंयस्याः सातथोक्तातस्याः ॥ ७ ॥
मधुपुर्यामनिरुद्धपुत्रंनाम्नावज्रंशूरसेनविषयपतिमभ्यषिञ्चदितिशेषः प्राजापत्यांप्रजापतिदेवत्यामिष्टिंनिरूप्यसर्वस्वदक्षिणामिष्टिंकृत्वा श्रौताग्नीनपिबत् आत्मनिसमारोपयामास सकीदृशईश्वरः राज्यादिषुनिर्विद्यसंन्यसनेसमर्थः ॥ ८ ॥
तदेवाह विसृज्येति संछिन्नाशेषपापादिबन्धनः ॥ ९ ॥

* स्वराट्पौत्रं विनयिनमात्मनस्सदृशं गुणैः इति वीरराघवादिपाठः ॥

### क्रमसन्दर्भः।

युधिष्ठिर इत्यत्र तस्य त्यागे कलिप्रसिसर्पणमुद्दीपनमात्रम्। वस्तुतस्तु भगवत्पार्श्वकामित्वमेव कारणं ज्ञेयम ॥ ३७ ॥

विनियतं समर्य्यादम्। टीकायां सुसममतिसदृशमिति व्याख्यानात् सोः पूजायां षत्वनिषेधः। सुः पूजायाम् इति कर्म्मप्रवचनीय-विधेः ॥ ३८ ॥

प्राजापत्यां चेष्टिं निरूप्येत्यन्वयः ॥ ३९ ॥ ४० ॥

---

### सुबोधिनी।

तर्हिस्वस्यनकाचित्चिन्तेत्याशंक्याह युधिष्ठिरइति विकलत्वाभावेनदृढस्थित्यांअधिकाशंमन्यतेकालः सन्युधिष्ठिरादीनपितथाम-न्यते अतस्तद्देशेष्वपि महदल्पप्रभेदभिन्नेषुराष्ट्रनगरगृहशरीरेषुप्रविष्टः अल्पविकाशाश्चतत् ज्ञातवानित्याह बुधइति तत्रापिविचारः किंस्थातुमागतः द्रष्टुंचेति तत्रापियुधिष्ठिरस्यनिश्चयोजातइत्याह विभाव्यइतिससामग्रीकस्य समागतत्वात् ततोऽगमनंकलेः तस्यसा मग्रीप्रथमतोलोभः सर्वदोषाणामाश्रयः अन्तःकरणधर्मः अनृतंवाग्दोषः प्रायेणस्वरूपनाशकः प्रामाण्यकोटेः स्वरूपनिर्वाहकस्यनाशात् कुटिलताबुद्धिदोषः हिंसाशरीरस्यअत्रक्रमेशिष्टंस्वयमूह्यम् आदिशब्देनरोगादयोऽपिहिंसाद्यधर्मचक्रंविभाव्यगमनायपूर्वोक्तामेवगतिपर्यधा दित्यर्थः ॥ ३७ ॥

अशक्तस्यपरित्यागोऽनुचितः त्यक्तानांवासनाजनकत्वात् अतः कलिभयात युधिष्ठिरगमनमनुचितमित्याशंक्याह स्वराट्पौत्रमिति नहिकलिनिराकरणासमर्थो युधिष्ठिरोगतः तन्निराकरणार्थं पौत्रस्यस्थापितत्वात् किंतुशास्त्रस्यप्रामाण्यात् इत्यभिप्रेत्याहस्वराट्पौत्र मिति भ्रातृणामेकजातानामिति न्यायात् राजदानाच्चस्वेति पौत्रग्रहणंपुत्रनामस्थापनार्थंगुणैर्भगवदीयत्वादिभिः आत्मनः अनवममन्यूनं अनेनदोषाभावस्तत्रागतइत्युक्तंभवति हीनस्थापनेप्रजाशापः प्रसज्येत तोयनीव्याः समुद्रावरणाशाः अन्येतुराजानस्त्रियोवस्त्ररहिता मपिस्त्रियैकदेशचरणसम्वाहनादिनापतित्वंमन्यन्ते इतिसूचितंनीवीपदेनपतिमित्यनुवादः भगवतैवतदर्थंकृतत्वात् पतित्वार्थमितिलक्षणा चस्यात् अतः स्वयमभिषेकमात्रंकृतवान् ॥ ३८ ॥

एवमेववज्रमपिकृतवान् अनिरुद्धपुत्रोवज्रः शूरसेनदेशस्यापि पतित्वज्ञापनायाह शूरसेनपतिमिति अनेनमर्यादायांयावान्देशः तावान् दत्तइत्युक्तंततस्तेषांराज्यस्वीकारानन्तरंप्राजापत्यामिष्टिंनिरूप्यप्रव्राजंकृतवानित्याह वैश्वानरीप्राजापत्यावाविकल्पेनविहिता ईश्वरइति तथावारणसमर्थः यथाशास्त्रकरणात् गृहएवसर्वपरित्यागस्योक्तत्वात् अंशपरित्यागस्याशास्त्रत्वाच्च ॥ ३९ ॥

सर्वपरित्यागनिरूपणार्थमाह विसृज्येति देहातिरिक्तपरित्यागः सुगमः तदाह आदिशब्देनदुकूलवलययोर्विद्यमानत्वेनग्रहणं मनुः शेषाभ्यनुज्ञापकत्वेनवारयामासेति यदग्रेवक्ष्यते नतत्परित्यागतुल्यत्वेनतत्ज्ञापनार्थंत्यक्तानामात्मीयत्वंनिराकरोति निर्ममइति परित्यागाभि मायाभावायैतदुक्तम् अन्तस्त्यागायत्राउभयोः कर्तव्यत्वात्अन्योऽन्यंहेतुमत्भावाच्चदेहस्यसपरिकरस्यत्यागमाह निरहंकारइति देहेअहंतां त्यक्त्वाममतायाः स्वरूपतोनाशात् मध्येतिष्ठतिदेहादिः तस्यत्यागप्रकारमाह संछिन्नाशेषबन्धनः इतिबाह्यावरणं सम्यक् छिन्नमित्याह संछिन्नेतिपुत्रादीनामुपकारित्वबुद्धिरधुनानिवृत्ता अतएवनप्रतिबन्धकः ॥ ४० ॥

---

### श्रीविश्वनाथचक्रवर्त्ती।

पर्य्यधात् तदुचितपिधानमकरोत् ॥ ३७ ॥

विनियमं राजोचितविशिष्टनियमयुक्तम्। आत्मनः स्वस्य गुणैः सुसमम् अतिसदृशं तोयं समुद्रोदकमेव नीवी परिधानविशेषो यस्या-स्तस्या भूमेः पतित्वेनाभिषिक्तवान् ॥ ३८ ॥

वज्रमनिरुद्धपुत्रम्। निरूप्य कृत्वा। अपिबत् आत्मन्यारोपयामास। ईश्वरः समर्थः ॥ ३९ ॥ ४० ॥

---

### सिद्धांतप्रदीपः।

युधिष्ठिरःपुरादौतस्यकलेः परिसर्पणंप्रसरणंबुधःजानन् तत्कृतलोभानृतजिह्महिंसनाद्यधर्मचक्रंचविभाव्यविलोक्यगृहान्निर्गमनायप र्यधात् निर्गमनानुरूपंपरिधानमकरोत् ॥ ३७ ॥

पौत्रं परीक्षितम् तोयनीव्याः जलधिवस्त्रावृत्तायाः भूमेः पतिंगजाह्वयेऽभ्यषिंचदभिषिक्तवान् ॥ ३८ ॥

ईश्वरःसमर्थः तथैवमथुरायामनिरुद्धात्मजंशूरसेनानांपतिमभ्यषिञ्चत् ततःप्रजापतिदेवताकामिष्टिंनिरूप्यकृत्वाऽग्नीनपिबदात्मन्यारो पयामास ॥ ३९ ॥

संछिन्नानिअशेषाणिदेहगेहादिष्वहंममेत्यादिरूपाणिबन्धनानियेनसः वाचंजुहावेत्युत्तरेणान्वयः ॥ ४० ॥

वाचं जुहाव मनसि तत् प्राण इतरे च तम् ।
मृत्यावपानं सोत्सर्गं तं पंचत्वे ह्यजोहवीत् ॥ ४१ ॥
त्रित्वे हुत्वा च पंचत्वं तच्चैकत्वेऽजुहोन्मुनिः ।
सर्व्वमात्मन्यजुहवीद्ब्रह्मण्यात्मानमव्यये ॥ ४२ ॥
चीरवासा निराहारो बद्धवाङ्मुक्तमूर्द्धजः ।
दर्शयन्नात्मनो रूपं जडोन्मत्तपिशाचवत् ॥ ४३ ॥
अनपेक्षमाणो निरगादशृण्वन् वधिरो यथा ।
उदीचीं प्रविवेशाशां गतपूर्व्वां महात्मभिः ॥
हृदि ब्रह्म परं ध्यायन्नावर्त्तेत यतो गतः ॥ ४४ ॥

भाषाटीका ।

बुद्धिमान् युधिष्ठिर महाराज नै पुर मैं राष्ट्र मै गृह मै और मन मै कलियुगका प्रवेश देखकर और लोभ अनृत कपट हिंसा आदिक अधर्म चक्र देखकर राज त्याग कर वन गमन करने के उचित वेष परिधान किया ॥ ३७ ॥

स्वराट् युधिष्ठिर नै विनीत और गुणों से समान अपने पौत्र को तोयनीवी ( समुद्रान्त ) पृथवी का राजा हस्तिनापुर मैं अभिषिक्त किया ॥ ३८ ॥

और वज्र ( श्रीकृष्ण के प्रपौत्र ) को मथुरा मैं शूरसेन देश का राजा अभिषिक्त कर, प्राजापत्य इष्टि कर अग्नि को अपने में आरोपित कर लिया ॥ ३९ ॥

वहीं वह सब वस्त्र वलयादिक सालङ्कार छोंड़कर निर्मम निरहङ्कार समस्त बंधन उपाधियों को संछिन्नकर वाणी को अर्थात् तदुपलक्षित समस्त इंद्रियों को मनमै होमकर अर्थात् लयकर, मनको प्राण मै और प्राण को अपान मै उत्सर्ग सहित अपान को मृत्यु मैं और मृत्यु को पंचत्व में होम किया पंचत्व को त्रित्व में त्रित्व को एकत्व में अर्थात् अविद्या मै, सर्वारोपहेतु अविद्या को जीव में और जीव को अव्यय ब्रह्म मे होम किया ॥ ४० । ४१ । ४२ ॥

---

श्रीधरस्वामी ।

तदेव दर्शयति द्वाभ्याम् । वाचमित्युपलक्षणं सर्व्वेन्द्रियाणि मनसि प्रविलापितवानित्यर्थः तच्च मनः प्राणे प्राणाधीनवृत्तित्वात् तं प्राणमितरे अपाने तेनाकर्षणात् । अपानव्यापार उत्सर्गस्तत्सहितमपानं मृत्यौ तदधिष्ठातृदेवतायाम् । अनेनैव वागादिष्वपि तत्तत्कर्म्मसाहित्यं ज्ञेयम् । तं मृत्युं पञ्चत्वे पञ्चभूतानामैक्ये देहे । देहस्यैव मृत्युर्नात्मन इति भावितवानित्यर्थः । अजोहवीदिति यङ्लुगन्तात् लुङि रूपम् ॥ ४१ ॥

त्रित्वे गुणत्रये । तच्च त्रित्वं एकत्वे अविद्यायाम् । सर्व्वं सर्व्वारोपहेतुमविद्यां आत्मनि जीवे । अजोहवीदिति वक्तव्येऽजुहवीदित्यार्षम् । एवं शोधितमात्मानं ब्रह्मणि अव्यये कूटस्थे । न तस्यान्यत्र लय इत्यर्थः ॥ ४२ ॥

तदेवमात्मप्रतिपत्तिमुक्त्वा बाह्यस्थितिमाह चीरवासा इति सार्द्धद्वाभ्याम् । बद्धवाक् मौनी । अनपेक्षमाणः अनुजादिप्रतीक्षाम कुर्व्वन् ॥ ४३ ॥

आशां दिशम् । गतपूर्व्वां पूर्व्वप्रविष्टाम् । यतो यां दिशम् ॥ ४४ ॥

---

दीपनी ।

प्राणे इति । प्राग्गमनवति नासाग्रस्थानवर्त्तिनि वायावित्यर्थः ॥ ४१ ॥
( मुनिः मननशीलो युधिष्ठिर इति यावत् ॥ ४२—४८ ॥ )

---

श्रीवीरराघवः ।

तत्प्रकारमाहवाचमित्यादिनावाचंवागादिकर्म्मज्ञानोभयेंद्रियव्यापारंमनसिजुहावमनोधीनममन्यत मनसइन्द्रियप्रकृतित्वाभावादित्यर्थः तन्मनः प्राणेजुहावमनः प्रवृत्तिप्राणाधीनांमेनेतथाप्राणसंवादादिषुदर्शनादतएवाहितस्यमुखप्राणत्वं प्राणादीनांलयानुसंधानप्रकारमाह इतरेचतमृत्यावपानं सोत्सर्गमितितंप्राणमितरेइतरस्मिन्नपानेसोत्सर्गमपानमुदानइतिशेषः उत्सर्गशब्दोवृत्तिपंचकप्रदर्शनार्थः स्वस्वव्यापारे

श्रीवीरराघवः ।

विशिष्टानामेवतेषुतेषु लयमनुसंहितवानित्यर्थः तत्तत्त्वानांमृत्योर्मृत्युसंबन्धेतमात्मैकत्वसमानं पंचत्वेप्राणादिपंचककारणेवायावित्यर्थःअव स्थाविशेषवायुर्हिप्राणः नवायुमात्रंसचैकोऽपि प्राणापानादिवृत्तिपंचकविधः अतोवृत्तिपंचकनिरोधेनप्राणस्यतत्कारणे वायौलयानुसंधान प्रकार उक्तः ॥ ४१ ॥

एवमिंद्रियवर्गप्राणतद्वृत्तिनिरोधानुसन्धानमुक्त्वा अथप्राणसहितानिपंचभूतानिइंद्रियवर्गंचाहंकारकार्यमितितदुभयंत्रित्वेसात्त्विक राजसतामसरूपत्रिविधाहंकारेजुहावेत्यर्थः सर्वत्रत्वप्रत्ययः स्वार्थिकः यथायथमिंद्रियाणां सात्त्विकाहंकारेलयः भूतानांतामसइतिविवेकः तच्चाहंकारत्रयंएकत्वेएकस्मिन्प्रकृतितत्त्वेमहत्तत्त्वेद्वाराज्जुहावेत्यर्थः सर्ववागादिप्रकृत्यंतमात्मनिजीवेऽजुहवीच्चेतनोह्यचेतनप्रकृतिः अतएव मुक्तंनहिजीवः प्रकृतेरुपादानमात्मानंजीवमव्ययेब्रह्मण्यजुहोत् जीवस्यब्रह्माधीनवृत्तित्वात्तस्मिन्तंस्थापितवानित्यर्थः ॥ ४२ ॥

ततश्चीरंवल्कलंवासोवस्त्रंयस्यसनिराहारः बद्धवाक्मौनीमुक्ताविक्षिप्तामूर्धजाः केशाः येनसःजडादिवदात्मनः स्वस्यरूपमाकारं दर्शयन्लोकस्येतिशेषः ॥ ४३ ॥

यथाबधिरस्तद्वदश्रृण्वन्नन्धइवानवेक्षमाणः निरगाद्गृहादितिशेषः पूर्वेगतांगतपूर्वांयतोयांगतः पुनर्नावर्तेततांमहात्मभिर्विरक्तैःगतपूर्वां उदीचींदिशंहृदिपरंब्रह्मध्यायन्प्रविवेश ॥ ४४ ॥

---

श्रीविजयध्वजः ।

स्वमरणकालपतच्चिंतनीयमित्यभिप्रेत्यतत्कृतमित्याह वाचमिति वाचंच वागभिमानिनीमुमांमनसिमनोभिमानिनिरुद्रेऽजुहोत् अस्या अस्मिन्लयोभवतीत्यचिंतयत्नतुतदानींकृतवानित्यर्थः तत्मनः प्राणे मनः कारणेजुहाव मनसः परंउत्तमंप्राणंइतरेइतरस्मिन्अपाने उत्सर्गकर्माभिमानिनिजुहाव धृत्यामनसएकाग्रतया सोत्सर्गसवृत्तिकमपानंतत्परत्वेतस्मादपानात्पूर्वभाविनिव्यानेअजोहवीदितितथाहि ग्रन्थांतरप्रसिद्धिः ॥ १० ॥

अथव्यानापानचिंतनानंतरमत्रशिष्टावुदानसमानौत्रित्वेत्रित्वसंख्याविशिष्टेषुस्वकारणेषुप्राणापानव्या नेषुहुत्वालयंविचिंत्यतच्चपंचत्वं पंचत्वसंख्याविशिष्टान्प्राणापानव्यानोदानसमानांश्चैकत्वे एकत्वसंख्याविशिष्टेपंचानांकारणे मूलप्राणेअजुहोन्मुनिर्मौनीतत्पूर्वोक्तंसर्वंतस्य मूलप्राणस्यापिकारणेआत्मनिस्वहृदिस्थितेविष्णावजुहोत् तंचात्मानमव्ययेविनाशरहितेब्रह्मणिसर्वगते तदभिव्यक्तिकारणेविष्णावजुहो दित्येकान्वयः अत्रवागादींद्रियाणांतदभिमानिदेवानांदेवशरीराणांचाग्नावाज्यलय वत्स्वकारणेषुविलयएवेतिज्ञातव्यम् ॥ ११ ॥

चीरवासाः वल्कलवस्त्रः निराहारः मनुष्याशवर्जितः बद्धवाग्वचनवृत्तिविधुरः मूर्धजाः केशाः जडादिवदात्मनोरूपंदर्शयन्बधिरोयथा तथाअशृण्वन्नतएवानपेक्षमाणः स्वयंगेहान्निरगादित्येकान्वयः ॥ १२ ॥

यावच्छरीरपातंभुवंप्रदक्षिणीकृत्य निरंतराटनमेवसंकल्प्यहृदिपरंब्रह्मध्यायन्लक्षत्रियैर्महात्मभिः गतपूर्वांमुदीचीमाशामुत्तरांदिशंप्रवि वेशवीरगतिंगमिष्यन्यतोगतांनावर्तेत यांवीरगतिंगतः पुनर्नावर्तेततामित्यन्वयः ॥ १३ ॥

---

क्रमसंदर्भः ।

वाचमिति । तत् मनः व्यवहारात्मकं मनोहंसं न तु परमार्थात्मकमपि अग्रेऽनुसन्धानान्तराधिधानात् । पञ्चत्वे पञ्चभूतानामैक्यरूपो यो देहस्तस्मिन् न तु श्रीकृष्णपार्षदरूपे स्वदेहे इत्यर्थः ॥ ४१ ॥

एकत्वे अव्यक्ते । तदेवमयोग्यं तत् सर्व्वम् अव्यक्ते एव भावयित्वा योग्यं यत् सर्व्वं तत् आत्मनि भगवत्पार्षदरूपे अजुहवीत् धारयामास । तच्चात्मानं नराकृतिपरब्रह्मणि समर्पयामास ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥

---

सुबोधिनी ।

इदानीमुर्वरितस्यशरीरमात्रस्यज्ञानकर्मभ्यांलयंवक्तुं प्रथमतोज्ञानेनलयमाह अध्यासस्याज्ञानसाध्यत्वात्तन्निवृत्त्यर्थंतत्त्वादिप्रकारेणज्ञान साध्यत्वात् तत्प्रकारेणैवनिवर्त्तते भगवत्कृतत्वेपक्षेतदाज्ञयापरित्यागः तत्रापियेनक्रमेणभगवतासम्पादितं क्रमकथनंचित्तप्रबोधनार्थमुचितं तदाहवाचमिति वाक्सम्बन्धेनहिशरीरसम्बन्धः पुरंजनोपाख्यानेतथानिरूपणात् मनसोहिभार्यावाक् प्राकृतासाआत्मनोहिवाचः तया वाचासम्बन्धात् नपृथग्निरूपणम् अस्यांनिवृत्तायांसास्वेनिष्ठास्वतएवभविष्यति तस्यान्निर्बन्धः प्रथमाद्वक्तव्यः बद्धवागित्यनेनईश्वरकर्तृ केहि अधीनेलयोमुख्यःतत्रदुस्तरत्वंमनसोमनसीतिश्रुतेः मनोधीनत्वंवाचः वाक्काचित्सर्ववागधिष्ठात्रीदेवता सह्यभिमानिनीयमेवतस्या निकृष्टत्वंमन्यते ततएवनिवर्त्तते प्रजापतिरिवनह्यस्मादपिनिवर्त्तिष्यन्तमितिभावः तथामनसोऽपिप्राणाधीनत्वं तत्गत्यागतिभ्यांनिरूप- णात् यद्यपिप्राणनिरोधेनमनसः कारणत्वं तथाप्यग्रेनिरोधकत्वात् तदधीनत्वं तन्निरोधेन विरुद्धत्वाद्वातथाचदेहबन्धकापगमः अतएव योगशास्त्रेतत् मूलत्वकथनंदेहस्यइतरेचेत्  इतरेअपानेइतरस्मिन्निति विकल्पे इतरइतिकथनमसर्वनामत्वज्ञापकंतेनमलत्वेनपरित्यागकथनात् अगवत्त्वमयुक्तमिति प्राणनियामकत्वेऽपि भगवद्दृष्टिः कर्त्तव्येतिसूचितंहोमकथनं पंचाग्निविद्यायोरपादितशरीरस्यप्रह्मविद्योपयोगात् प्रकृतस्यपुनरपानेनाकर्षणात्प्राणस्यापानाधीनत्वंसांसर्गिकस्तुवायुःश्वासेनवहिर्निर्गच्छति अन्यथासोऽपि निरुध्येत अपानस्तुप्रयत्नाधीन

## सुबोधिनी ।

गतिकः तस्यमृत्युरेवनियामकइति मृत्यौतस्यलयमाहमृत्यावपानमिति मृत्युनैवसऊर्ध्वंक्रियतेकिंचन योगप्रमाणंवलिष्ठंविधायअपानेनप्राणापकर्षणोक्तेपुनः प्राणोत्कर्षणेसोपानमुत्कर्षति वहिर्गमनाभावायचअन्योऽन्यवलिष्ठत्वात् गतिद्वयनिरोधंचकुर्वेति तस्यप्रकारस्यफलार्थत्वात् नचप्रकृते निरूप्यते अतःसहजासुरेअपानेप्राणमजुहोत् अपानंतुमृत्याविति ननुतेनप्रकारेणमृत्युनागृहीतेऽपानेदुर्गतिश्रवणात् किमित्यजुहोत् तत्राह सोत्सर्गमिति मृत्युरप्यत्रैवलीयते "मृत्युर्यस्योपसेचनमि"ति श्रुतेःमृतकदेहोमृत्युनाधृतामिति तत्रहिमृत्युरपानश्चसोत्सर्गे गच्छतः तत्रउत्सर्गसहितस्यापानस्यमृत्यौहोमात् मृत्योस्तेनमार्गेणगमनाभावः अतोनाभीष्टदातृत्वम् अतोमृत्युरत्रैवनिरुद्धः अशनयामृत्युरेवेतिश्रुतेः ससर्वप्राणिषुवर्त्तते तस्यप्राणापानौपोषकौ आहारदान मलापकर्षणाभ्यांतौचतत्रनिरुद्धौदेहमात्रपरिविष्टौदेहार्थेनभवति पश्चाद्देहंभक्षयितुमारभते तदातस्यनियामकानि पंचमहाभूतानितंनिवघ्नंति अतोयोगिनोदेहोनबध्यतेनक्षीयते ॥ ४१ ॥

एवंपञ्चमहाभूताधारंमृत्युंप्राप्ताप्राप्तविवेकेनभूतप्रविष्टभगवत्कार्यत्वात् भूतांशधर्मिणंपरित्यज्यप्रविष्टस्यैकस्यभगवतः पंचत्वात् पंचत्वे अजुहोत् पूर्वोक्तयुक्तिर्हिशब्देनद्योत्यते एवंतत्रापिस्वतएवाकृत्यभगवतःपंचत्वाभावात् द्विपदातिक्रमस्यैवशक्यत्वात् स्वास्मिन् कालेचगच्छन् स्वेच्छयागरुडमतिक्रम्यलक्ष्म्यांसमागतः स्त्रीत्वंप्राप्तः कालमतिक्रम्यप्रकृतौवा तदेवमस्मदादिमृत्युभक्षकत्वंपंचस्वरूपभूतमात्मानंभगवन्तंगुणत्रयरूपेभगवतिअजुहोत् तदधीनत्वात् भूतानांतत्रापिगुणत्रयानिविष्टोभगवान् प्रकृतिस्वरूपेहुतः साहिपरंपरयासर्वकार्यरूपातत्रहिसर्वप्रवाहाःप्रविशंतिअतः सर्वशब्दवाच्यताएकत्वरूपंभगवन्तंपुरुषरूपेआत्मनिअजुहोत्तञ्चपुरुषंकालादिनियामकेअक्षरेब्रह्मणिअजुहोत्तदधीनत्वात्तस्यतन्मायाफलरूपेणेतिवाक्यात् अव्ययइतिवेदब्राह्मणत्वजातिचतुर्मुखनिराकरणार्थम् अथवातस्यापिप्रकृतिपुरुषभावेनव्ययसम्भवात् तद्रहितेभगवति तदक्षरमजुहोदित्यर्थः ॥ ४२ ॥

एवंभगवन्मार्गेणवहुतयानवाप्तयः ततः स्वकीय क्रमेणहुत्वासर्वंभगवतिसमर्प्यत्यक्तमलांशंदेहमरण्येत्यक्तुंवहिः स्थितिमाह चीरवासाइति अतः परंयदस्यदेहः उत्पद्यतेपार्षदवदुत्पद्यते पंचाग्नौब्रह्मविद्योपयोगिदेहिवत् एवमर्थस्यतूर्णींपरित्यागः सर्वनाशकः देहपतितानिवस्त्राणिचीरवासांसि एतादृशेऽपिरक्षाविधेयेतित्रिदण्डमाह निराहारइतिप्राणदण्डः बद्धवागितिवाग्दण्डः मुक्तमूर्धजइति देहदण्डः चित्तदण्डोवा भ्रान्तत्वाज्ञापनात् अननवीजस्यापहारे अंकुरोत्पादकत्वंसूचितम् एतादृशस्यसर्वसाधनसाध्यसहितस्यप्रकारेणैतदपरित्यागेपुनः सर्वदोषः संभवति कूलंकषाप्रवाहपतितनौकोत्तरणवत् देहोत्तरणंकर्त्तव्यमिति तत् प्रकारमाह दर्शयन्निति आत्मनो देहस्यजडोऽतःकरणविवेकशून्यः जडभरतवत् उन्मत्त इंद्रियविकलः मदिरामत्तवत् पिशाचोभूतग्रस्तः देहविकलः एवं देहेंद्रियांतःकरणानियथानपरैराक्रम्यंते तथाविधेयानि अन्यथाऽन्यत्रप्रविष्टानिवीजभावमापद्येरन् ॥ ४३ ॥

अनपेक्ष्यमाणइति अनवेक्ष्यमाणः इतस्ततोऽनवलोकयन् तस्मिन्नेवदत्तचित्तः स्वभावतएवान्यवचनमश्रृण्वन् सर्वथाआत्मनिदत्तचित्तस्तत्त्वज्ञापनायवधिरोयथेति दग्धपटवत् तस्यगमनसंस्कारः इयमेवावस्थाब्रह्मविदांवहिरिंद्रियाणांविषयाग्रहणेभवतिशुकवत् सदुक्तंगतव्यदेशमाहउदीचीमितियद्यपिसर्वदेशेषुनास्यनाशः तथापिमर्यादयातत्रैवगतः महात्मभिरिति एतदपेक्षयापितेमहांतइति तेषामनुगमनंयुक्तमितिभावः शून्यवत्गमनंवारयतिहृदिब्रह्मपरंध्यायन्निति यद्यपिवाह्यानित्यकानितादृशस्यध्यानंनापेक्ष्यतेस्वतएवस्फुरतितथाप्यनभिव्यक्तिदशायांध्यानंकर्त्तव्यंनतूष्णींभावोयुक्तइतिकियत्दूरगतमित्याकाङ्क्षायामाहगतः प्राणीयतोनावर्ततेकंपर्यंतंहिमेजलेवातावत्दूरं गतइत्यर्थः ॥ ४४ ॥

---

## श्रीविश्वनाथचक्रवर्त्ती ।

अर्ज्जुनवद्युधिष्ठिरोऽपि वहिरनुसन्धाननिवृत्त्यर्थं प्रयततेस्मेत्याह । वाचमित्युपलक्षणं सर्व्वेन्द्रियाणि मनसि मनोऽधीनवृत्तित्वात् तच्च मनः प्राणे प्राणाधीनवृत्तित्वात् तस्मिन्नेव जुहाव समर्पयामास जुहोतेर्दानार्थत्वात् । हे मनस्तुभ्यमेवेन्द्रियाणि दत्तानि तवैवैतानि सन्तु साम्प्रतं ममैतैः प्रयोजनं नास्तीति धारयामास । तेषु स्वत्वाभावेन वस्तुतः सम्प्रदानाभावात् न चतुर्थी । एवमग्रेऽपिसर्व्वत्र ज्ञेयम् । नन्वहं कस्य भवामीत्यत आह । तन्मनः प्राणे जुहाव । तं प्राणम् इतरे अपाने तेनाकर्षणात् । अपानव्यापार उत्सर्गस्तत्सहितमपानं मृत्यौ तदधिष्ठातृदेवतायाम् । अनेनैव वागादिष्वपि तत्तत्कर्म्मसाहित्यं ज्ञेयम् । तं मृत्युं पञ्चत्वे पञ्चभूतानामैक्ये देहे । हे मृत्यो त्वं देहस्यैव भव इति भावितवानित्यर्थः ॥ ४१ ॥

ततश्च पृथिव्यादिभूतपञ्चकं क्क स्थास्यतीत्यत्राह । त्रित्वे गुणत्रये तच्च त्रित्वम् एकत्वे व्यष्टिरूपे मायांशे तत् सर्वमात्मनि जीवे अजुहवीदित्यार्षम् अजोहवीदित्यर्थः । हेजीव तवैतन्मायांशकृतमुपाधित्रिकम् एतस्मात् त्वं पृथग्भूत एव विराजस्व नैतस्याधीनो भवेति भावः तञ्चात्मानं ब्रह्मणि । एवं परीक्षिति स्वराज्यभावं वज्रे च मथुरां समर्प्य तत्सम्बन्धमात्मनो दूरीकृत्य वहिर्निश्चिन्त इव इन्द्रियादीनपि तत्तद्दशयितरि योग्ये समर्प्य अन्तर्निश्चिन्तो बभूव । तथाहि ब्रह्मणः कृष्णस्यैव जीवो जीवस्यैव व्यष्टिमाया तस्या एव गुणत्रयं गुणत्रयस्यैव पञ्चभूतात्मको देहः देहस्यैव मृत्युर्मृत्योरेवापानः अपानस्यैव प्राणः प्राणस्यैव मनः मनस एव इन्द्रियाणि इन्द्रियाणामेव विषया राज्यादिभोगाः तेषाञ्च भोक्ता संप्रति परीक्षिदेव न तु अहमिति विचारयामास । किन्तु भगवन्नित्यपरिकरत्वान्नित्यविग्रहाणामपि तदानीमात्मानं प्राकृतशरीरं मत्वैवायं विचारोऽप्यकिञ्चित्कर एवेति ज्ञेयम् ॥ ४२ ॥

तदेवं सर्व्वथा निश्चिन्तस्य तस्य वाह्यस्थितिमाह चीरेति । बद्धवाक् मौनी । अनपेक्षमाणः अनुजादिप्रतीक्षामकुर्व्वन् ॥ ४३ ॥

अधुना न्यस्तसमस्तभारोऽहमव्यग्रः क्कापि विविक्ते देशे श्रीकृष्णप्राप्त्यर्थं "मन्मना भव मद्भक्त" इति भगवदुपदिष्टमेवोपायं करिष्यामीति निश्चिन्वतस्तस्य चेष्टामाह उदीचीमिति । परं ब्रह्म श्रीकृष्णं ध्यायन् ध्यातुम् ॥ ४४ ॥

---

सर्व्वे तमनुनिर्जग्मुर्भ्रातरः कृतनिश्चयाः ।
कलिनाधर्म्ममित्रेण दृष्ट्वा स्पृष्टाः प्रजा भुवि ॥ ४५ ॥
ते साधुकृतसर्व्वार्था ज्ञात्वात्यन्तिकमात्मनः ।
मनसा धारयामासुर्वैकुण्ठचरणाम्बुजम् ॥ ४६ ॥
तद्ध्यानोद्रिक्तया भक्त्या विशुद्धधिषणाः परे ।
तस्मिन्नारायणपदे एकान्तमतयो गतिम् ॥ ४७ ॥
अवापुर्दुरवापां ते असद्भिर्विषयात्मभिः ।
विधूतकल्मषास्थानं विरजेनात्मनैव हि ॥ ४८ ॥

## सिद्धांतप्रदीपः ।

बंधनसंछेदनप्रकारमाह वाचमिति द्वाभ्यांवाचंवागुपलक्षितानिसविषयाण्युभयेन्द्रियाणिमनसि अजोहवीत् जुहाव मनोऽधीनानि भावितवान् लयस्त्विद्रियाणांमनसिनशंक्यस्तेषांतत्कार्य्यत्वाभावात् मनः प्राणेतमितरेऽपाने सोत्सर्गेणाखकीयेनव्यापारेणसहितमपानंमृत्यौ अधिष्ठातृदेवतायाम् तंदेहनाशकंमृत्युंपञ्चत्वेपञ्चभूतैक्येदेहेभावितवान् ॥ ४१ ॥

पञ्चत्वंपञ्चभूतैक्यंचसत्तन्मात्रपंचभूताहंकारादिद्वारायथाक्रमंत्रित्वेगुणत्रयेकारणेहुत्वाप्रविलाप्यतत्त्रित्वमेकत्वेप्रकृतितत्त्वेजुहाव सर्वस्यप्राकृतपदार्थस्यजीवभोग्यत्वभावनयाऽऽत्मनिजीवे अजुहवीदजोहवीत् अजुहवीदित्यार्षपदम् तंजीवात्माननियम्यभूतम् नियंतर्य्यव्ययेब्रह्मणि अजोहवीत्समर्प्पयामास ॥ ४२ ॥

एवंचेतनाचेतनभूतंवस्तुब्रह्मात्मकमित्यनुसंदधानस्य भ्रातृभिःसहितस्यभगवत्स्थानप्राप्तिमाह चीरवासेतिसार्द्धैःषड्भिः बद्धवाग् मौनी निरगादित्युत्तरेणान्वयः ॥ ४३ ॥

नावेक्ष्यमाणः भगवदितरपदार्थमात्रापेक्षाशून्यः निरगात् गृहादितिशेषः महात्मभिर्महानुभावैर्गतपूर्वा यतःयस्यांदिशिगतोनावर्तततामुदीचीमाशांपरंब्रह्मश्रीकृष्णाख्यंहृदिध्यायन्प्रविवेश ॥ ४४ ॥

---

## भाषा टीका ।

चीर वस्त्र धारण कर निराहार होकर मौन होकर बाल खुले हुए हैं, जड़ उन्मत्त पिशाच के समान अपना रूप दिखाते किसी की अपेक्षा न कर बधिर के समान सुनी अनसुनी करते घर से निकल गये । और पूर्व २ महात्मा जिस दिशा में गये हैं उसी उत्तर दिशा में प्रवेश किया । हृदय में परब्रह्म का ध्यान करते, जहां से गया हुआ कोई फिरकर नहीं आता है ॥ ४३ । ४४ ॥

---

## श्रीधरस्वामी ।

अधर्म्मो मित्रं यस्य तेन ॥ ४५ ॥

साधुकृताः सर्व्वेऽर्था धर्म्मादयो यैः । अतएव वैकुण्ठस्य चरणाम्बुजमेव आत्यन्तिकं शरणं ज्ञात्वा मनसा धारयामासुः ॥ ४६ ॥४७॥

कथम्भूते पदे विधूतकल्मषाणाम् आस्थानं निवासस्थानं यत् तस्मिन् । विरजेनात्मनैव प्रापुः न तु षोड़शकलेन लिङ्गेन । गतेर्वा विशेषणम् विरजेनात्मनैवावस्थानरूपां गतिं ते विधूतकल्मषाः प्रापुरिति ॥ ४८ ॥

---

## श्रीवीरराघवः ।

तंयुधिष्ठिरमनुसृत्यतद्भ्रातरः सर्वेकृतनिश्चयागमनायकृतोनिश्चयोयैस्तेकृतविवेकावानिर्जग्मुः तेभ्रातरःयुधिष्ठिरादयोवाअधर्मः मित्रं यस्यतेनकालिनास्पृष्टाः प्रजाभुविदृष्ट्वा ॥ ४५ ॥

असाधुकृतास्तुच्छीकृताः सर्वेअर्थादेहतदनुबंध्यादयोयैस्तथाभूताः आत्मनोदेहस्यात्यंतिकंमरणंज्ञात्वाभगवच्चरणाम्बुजंमनसाधारयामासुःयुधिष्ठिरादयः ॥ ४६ ॥

तस्यवैकुण्ठपदाम्बुजस्यध्यानेनोद्रिक्तयाभक्त्याविशुद्धाधिषणाबुद्धिर्येषांतेनारायणपदवाच्येपरमपुरुषेएकान्तागतिर्मतिर्येषांमतेरैक्यंनाम विजातीयप्रत्ययाऽव्यवधानंविशयेषुशब्दादिषुप्रवणाआत्मामनोयेषांतैरसाद्भिर्दुरात्मभिर्दुःखेनाप्यवाप्तुमशक्यांगतिंमुक्त्यात्मिकामवापुः तदेवा

## श्रीवीरराघवः ।

पपादयतिविधूतानिनिरस्तानिकल्मषाणिभगवत्प्राप्तिप्रतिबन्धकानिपूर्वोत्तराघाणि येषांतेविरजेनरजस्तमोरहितेनआत्मनास्वरूपेणस्थानं श्रीनारायणस्यपदमवापुरित्यनुषंगः ॥ ४७ । ४८ ॥

---

## श्रीविजयध्वजः ।

भ्रातरः भीमसेनादयः अधर्ममित्रेणअधर्मप्रधानेन ॥ १४

आत्मनः परमात्मनः स्वरूपमात्यंतिकंसर्वातिशयमथवात्मनः स्वस्यआत्यंतिकमंतकालेकर्तव्यंज्ञात्वासाधुसम्यक्कृतोऽनुष्ठितः सर्वार्थोधर्मादिर्यैस्तेतथा साधुनाकर्मणापुण्यलक्षणेनकृत्ताश्छिन्नानिरस्ताः सर्वेअर्थाः शब्दादिविषयायैस्तेतथोक्ताइतिवा कृतीछेदनइतिधातुः अत्रहरौमनोधारणंनामाखंडस्मरणमितिज्ञातव्यम् ॥ १५ ॥

इत्थंनारायणचरणांबुजंहृदिसंविधायतद्ध्यानेनोद्रिक्तयाभक्त्याविशुद्धमतयोऽह्नोभिः सप्ताभिर्भुवंप्रदक्षिणीकृत्यगंधमादनगिरिविवरे बदर्याख्यंनारायणाश्रमंप्राप्यतास्मिन्परेमनोहरेनारायणपदेनारायणाश्रमेएकांतमतयः एकांतंनारायणंध्यायंतस्तेपांडवाः अपतञ्छरीराणि तत्यजुरित्यन्वयार्थः एकमनस्कावा ॥ १६ ॥

शब्दादिविषयमनस्कैरसद्भिरमंगलैः पुरुषैर्दुरवापंगंतुमशक्यंनिरस्तजरामरणादिकल्मषस्थानंस्वस्वमूलरूपंविरजेनरजआदिगुणात्मकलिंगशरीराभिमानरहितेनात्मनामनसाउपलक्षितास्तेप्राप्ताइत्येकान्वयः एवकारस्तुदेवद्भुतदर्शितमायायायुधिष्ठिरदृष्टभीमादिरोदनापादकलोकंतापुरित्यस्मिन्नर्थेनतुरजोमिश्रितात्मनेत्यत्रहिशब्दस्तुनदोषात्देहपातः किंतुप्रारब्धकर्मनाशादित्यस्मिन्नर्थेश्रुतिप्रसिद्धिंद्योतयति श्रुतिरपिसकलसुरोत्तमालिपुरःसरगणाराराधितचरणैःश्रीभगवत्पादैःसकलपुराणसारसंग्रहगृहेश्रीमहाभारततात्पर्यनिर्णयेउक्तात्तानास्माभिरत्रोदाह्रियंतेग्रंथबाहुल्यभयादिति विदुरोऽपिपरित्यज्येतिप्रक्षेपश्लोकः ॥ १७ ॥

---

## क्रमसंदर्भः ।

ते इति । ते पाण्डवाः साधु यथा स्यात्तथा कृतसर्व्वार्थाः वशीकृतधर्म्मार्थकाममोक्षा अपि वैकुण्ठस्य श्रीकृष्णस्य चरणाम्बुजमेव आत्यान्तिकं परमपुरुषार्थं ज्ञात्वा तदेव मनसा धारयामासुः ॥ ४६ ॥

नारायणः श्रीकृष्णः ॥ ४७ ॥

पुनर्गतिमेव विशिनष्टि । विधूतकल्मषंयत् आस्थानं नित्य-श्रीकृष्णप्रकाशास्पदं तदीया सभा । । आत्मना स्वशरीरेणैव । तत्र हेतुः विरजेनाप्राकृतेन । हिशब्दोऽसम्भावनानिवृत्त्यर्थः ॥ ४८ ॥

---

## सुबोधिनी ।

अन्येषांनिर्गममाहसर्वइतिअनेनैवप्रकारेणसेंवषांगमनमाहतमन्वितिलौकिकशास्त्रीयसंमतिमाहभ्रातरः कृतनिश्चयाइतिभ्रातृणांयदन्यः करोतितत्सर्वेकुर्वंतीतिलोकः शास्त्रेतुनिश्चितंकुर्वंतीतिमुख्येशास्त्रार्थसंभवइतिन्यायेनसर्वेषुयदिशास्त्रार्थसंभवः स्यात्सर्वेमुख्याः स्युः अथ लोकवद्भेदेऽपितेगौणाइतितत्कथंतद्भवातिदेशइत्याशंक्यतथाशास्त्रार्थनिर्द्धारेऽपिस्थलप्रकारेणतेषांनिर्धारोऽस्तीतितदाह भगवद्भक्तेषुविषयाणांबाधकत्वाभावेऽपिदुःसंगसहितानांतेषांकथात्वात्कालेनदोषसम्भवात्कलिनाधर्ममित्रेणसर्वाःप्रजाःदृष्ट्वागंतुंकृतधियोजाताइति ॥ ४५ ॥

वैराग्यंसाधनमाहतेसाधुकृतसर्वार्थाइतिधर्मार्थकाममोक्षाश्चत्वारःपुरुषार्थाःसाधुयथाभवतितथाकृताःचतुर्णांपुरुषार्थानां स्वसाधनसाध्यन्तेषुचभगवत्सेवासाध्यताप्यस्तितत्रापिभगवत्सेवयासाधितानिःप्रत्यूहमुत्तमाभवंतिअतस्तैःसर्वे पुरुषार्थाःसाधिताःअथवासाधुषुकृताः सर्वेपुरुषार्थाःसिद्धाःअतस्तद्विरोधित्वेनअसत्संगोहेयइतिपूर्वेणसम्वन्धःअथवाभक्तिःपंचमःपुरुषार्थःचत्वारस्तैरनुभूताःभक्तिश्चपंचमःतत्र तारतम्येविचार्यमाणेअत्यन्तंसुखंसुखहेतुश्चभक्तिरेव अतआत्यन्तिकंज्ञात्वाश्रीकृष्णचरणारविन्दमेवमनसाधारयामासुः ॥ ४६ ॥

ततः किंवृत्तमित्याहतद्ध्यानेनउद्रिक्तायाभक्तिः सर्वांगेपूर्णावहिरपिनिर्गतातेनअंतःस्थान्दोषान्दूरेवाहिः करोतिअतोविशुद्धधिषणाः ततः परेपुरुषोत्तमेअनन्यशब्दवाच्ये तस्मिन्प्रसिद्धे नारायणपदेनारायणोब्रह्मांडरूपः पदंयस्य अनेनशास्त्रार्थरूपेएकांतमतयो भूत्वादोषादेवव्यभिचारव्युत्पत्तेः गतिर्गमनसामर्थ्यंगमनमेवअवापुः पूर्वशास्त्रतः साधनान्युक्तानिनफलमेतेषांतुफलमप्युक्तम् अथवाज्ञानमार्गेणयज्ञोगतिः अन्येषांभक्तिमार्गेणेति अथवालोकेऽप्यस्तिभोगपर्यंतमसाधारण्येनगमनमुक्त्वापश्चात् सर्वेषांसाधारण्येनगमनंसाधनंफलम् अतःसर्वएव शास्त्रमार्गंपरित्यज्य केवलविषयात्मभिः दुरवापांगतिमापुरिति सर्वेषांभगवत्प्राप्तिः फलम् असद्भिरित्याचारराहित्यं सिद्धेऽपिज्ञाने अभिमानशेषस्यविद्यमानत्वात् तत्कृतोदोषः स्यादेवविषयात्मभिरिति अंतःकरणदोषः प्रत्येकगमनेहेतुः पाषंडिविषयव्यावृत्त्यर्थंततोगतिं प्रतिपद्यसमीपेगच्छंतः क्रमेणतत्त्वांशातिक्रमेण यदासर्वांशातिक्रमः तदाविधूतकल्मषत्वमात्मापेक्षयाअन्यस्यसर्वस्यैवकल्मषत्वात्स्थानस्य स्वस्यचएकरूपत्वंतदाहविरजेनेति हियुक्तोऽयमर्थः नह्यशुद्धाःशुद्धे गंतुमर्हंति शुद्धानांवाअशुद्धंस्थानंभवतितस्मात् यथायोग्यंस्थानमप्राप्तवंतइत्यर्थः ॥ ४७ । ४८ ॥

---

विदुरोऽपि परित्यज्य प्रभासे देहमात्मवान् ।
कृष्णावेशेन तच्चित्तः पितृभिः स्वक्षयं ययौ ॥ ४९ ॥
द्रौपदी च तदाज्ञाय पतीनामनपेक्षताम् ।
वासुदेवे भगवति ह्येकान्तमतिराप तम् ॥ ५० ॥
यः श्रद्धयैतद्भगवत्प्रियाणां पाण्डोः सुतानामिति सम्प्रयाणम् ।
शृणोत्यलंस्वस्त्ययनं पवित्रं लब्ध्वा हरौ भक्तिमुपैति सिद्धिम् ॥ ५१ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्यां
प्रथमस्कन्धे पारीक्षिते युधिष्ठिरादिस्वर्गारोहणं नाम
पंचदशोऽध्यायः ॥ १५ ॥

श्रीविश्वनाथचक्रवर्त्ती ।

श्रीकृष्णं प्राप्तुं वयमपि तन्मनस्का एव भवामेति कृतो निश्चयो यैस्ते ॥ ४५ ॥

साधु यथा स्यात् तथा कृता अनुष्ठिताः सर्व्वेऽर्था धर्म्मादयो यैस्तथाभूता अपि आत्यन्तिकं तेभ्योऽप्यत्यन्ताधिकं श्रीकृष्णचरणाम्बुजमेव मनसा निर्द्धारयामासुः । साधुकृता धर्म्मार्थकाममोक्षा यैरतएव चरणाम्बुजमेवात्यन्तिकमिति श्रीस्वामिचरणाः ॥ ४६ ॥

विशुद्धा ज्ञानयोगाद्यमिश्रा धिषणा बुद्धिर्येषां ते । अतएव एकान्तमतयः । गतिं कीदृशीं विधूतकल्मषाणाम् आस्थानं निवासस्थानम् । यद्वा विधूतकल्मषाणाम् आस्थानं सभा सुधर्म्माभिधाना यत्र तत् कृष्णधामैव गतिम् अवापुः । केन प्रकारेणेत्यत आह । विरजेन निर्म्मलेन गुणमयधर्म्मेन्द्राद्यंशराहित्यादप्राकृतेनात्मना स्वशरीरेणैव न तु देहभङ्गेनेत्यर्थः ॥ ४७ ॥ ४८ ॥

---

सिद्धांतप्रदीपः ।

अधर्ममित्रेणकलिना स्पृष्टाः प्रजाः दृष्ट्वा ॥ ४५ ॥

ते सर्वे युधिष्ठिर प्रमुखाः असाधुकृताः सर्वेऐहिकामुष्मिकाअर्थायैस्तेआत्मनः आत्यंतिकंपरंप्राप्यं वैकुंठचरणांबुजंज्ञात्वामनसाधारयामासुः ॥ ४६ ॥

तस्मिन्नारायणस्यपदेचरणांबुजेपरेसर्वत उत्कृष्टे एकांतातदैकविषयामतिर्येषां तेतस्यचरणांबुजस्यध्यानेनोद्रिक्तया तीव्रयाभक्त्या असद्भिर्दुरवापांगतिंमुक्तिं "योऽस्याध्यक्षः सपरमेव्योमन्निति" श्रुतिप्रोक्तं परमव्योमाख्यं स्थानंच विरजेनकार्यकारणसंबंधरहितेनात्मना अवापुरितिद्वयोरन्वयः ॥ ४७ । ४८ ॥

---

भाषाटीका ।

पृथिवीं में अधर्म मित्र कलियुग ने स्पर्श करी प्रजा को देखकर भीम आदिक सवै भ्राताओं ने भी निश्चय कर युधिष्ठिर महाराज का अनुगमन किया ॥ ४५ ॥

साधु कृत सर्वार्थ युधिष्ठिर आदिक सब अपना आत्यंतिक समय जानकर मन सै वैकुण्ठ चरणाम्बुज का ध्यान करने लगे ॥ ४६ ॥

भगवान के ध्यान सै उद्रिक्त भक्ति सै विशुद्ध बुद्धि युधिष्ठिरादिक सब एकान्त मति उसी नारायण के परमपद मैं गत प्राप्त हुए उस गति को प्राप्त हुए जो विषयात्मा असत्य पुरुषों को दुष्प्राप है। किन्तु ये युधिष्ठिरादिक सै विधूत कलमष, विरज आत्मा से उसी स्थान को प्राप्त हुए ॥ ४७ । ४८ ॥

---

श्रीधरस्वामी ।

तीर्थान्यटन् प्रभासे कृष्णावेशेन श्रीकृष्णे चित्तमावेश्य देहं परित्यज्य तच्चित्तः एव सन् तदानीं नेतुमागतैः पितृभिः सह स्वक्षयं स्वाधिकारस्थानं ययौ ॥ ४९ ॥

आत्मानं प्रत्यनपेक्षतां तदा ज्ञात्वा तमाप ॥ ५० ॥

इत्येवं यत् सम्प्रयाणं अलम् अतिशयेन स्वस्त्ययनं मङ्गलास्पदममलं पवित्रञ्च ॥ ५१ ॥

इति श्रीमद्भागवतभावार्थदीपिकायां प्रथमस्कन्धे पञ्चदशोऽध्यायः ॥ १५ ॥

---

दीपनी ।

स्वाधिकारस्थानं यमलोकमिति प्राञ्चः ॥ ४९ ॥

अनपेक्षताम् अपेक्षाराहित्यमित्यर्थः । तं श्रीकृष्णम् ॥ ५० ॥ ५१ ॥

---

श्रीवीरराघवः ।

विदुरोऽपिकिंचित्कालतीर्थान्यटित्वापांडवादीनांगतिमाकर्ण्यात्मवान्भगवतिसमाहितचित्तःप्रभासेदेहंपरित्यज्यकृष्णावेशेनकृष्णासमाधानेनतान्वितः कृष्णैकविषयकचित्तः पितृभिः पितृदेवताभिः सहस्वयंस्वस्थानंययौ पुनर्यमएवभूत्वास्वलोकंययावित्यर्थः कृष्णोपदेश इतिपाठेयदुकुलसंहारायत्रश्रीकृष्णः प्रविष्टस्तस्मिन्देशेप्रभासेइत्यर्थः पुनरधः पतनाभावात्पाण्डवादीनांमुक्तत्वकथनंतेहिप्रारब्धकर्मावसानेविमोक्ष्यन्तेएवातोनविरोधः ॥ ४९ ॥

तदाद्रौपद्यपिपतीनामनपेक्षतामाज्ञायज्ञात्वावासुदेवेभगवतिएकान्ताविजातीयप्रत्ययान्तराव्यवहितामतिर्यस्यास्तथाभूतातंवासुदेवमवाप ॥ ५० ॥

श्रीकृष्णादीनांप्रयाणश्रवणादिफलमाहयइति इतीत्थमतितरांस्वस्त्ययनंशृण्वतांपठतांचशुभावहंपवित्रंचभगवतः प्रयाणंपांडोःसुतानांसंप्रयाणंचयःपुमान्श्रद्धयाशृणोतिहरौभक्तिंलब्ध्वासिद्धिंमुक्तिमुपैति ॥ ५१ ॥

इतिश्रीवीरराघवटीकायांप्रथमस्कन्धे

पंचदशोऽध्यायः ॥ १५ ॥

---

श्रीविजयध्वजः ।

अनपेक्षतांदेहाद्यनभिमानवतामेकांतमतिरेकाग्रचेताः ॥ १८ ॥

श्रीकृष्णपांडवानांस्वधामप्रवेशश्रवणादिनाकिंप्रयोजनंयेनात्रावश्यंवक्तव्यंस्यादितितत्राह यइति यएतद्भगवत्स्वधामप्रयाणंभकारांचपांडवानांचप्रयाणादिकंश्रृणोतिसहरौभक्तिंलब्ध्वाशांतिंमुक्तिमुपैतीत्यन्वयः अलंत्रिकरणशुद्धया ॥ १९ ॥

इतिश्रीभागवतेप्रथमस्कंधेविजयध्वजटीकायांपंचदशोऽध्यायः ॥ १५ ॥

---

क्रमसंदर्भः ।

विदुरस्य यमलोकगतिः स्वाधिकारपालनार्थं लीलया कायव्यूहेनेति ज्ञेयम् । तदित्थमेव श्रीभागवतभारतयोरविरोधः स्यादिति ४९ आत्मानं प्रति अनपेक्षमाणानां तत्र श्रीकृष्णसङ्गमनम् आज्ञाय सम्यक् ज्ञात्वा। वासुदेवे श्रीवसुदेवनन्दने । हि प्रसिद्धौ । यस्मिन्नेकान्तमतिस्तमेव प्राप्तवती । अत्रान्येन पथा गच्छतोऽप्येतान् श्रीद्वारकानाथः स्वयं स्वशक्त्या स्वसमीपमेवानीतवानिति गम्यते । नित्यं सन्निहित इत्याद्युक्तेः ॥ ५० ॥ ५१ ॥

इति श्रीमद्भागवतप्रथमस्कन्धस्य श्रीजीवगोस्वामिकृतक्रमसन्दर्भे पञ्चदशोऽध्यायः ॥ १५ ॥

---

सुबोधिनी ।

अधिकारिणांभक्तानामपि"यावदधिकारंत्वाधिकारिकाणि"तिन्यायेननभगवत्प्राप्तिः किंतुस्वस्थानप्राप्तिरेवेति विदुरेतदाहविदुरो ऽपीति प्रभासोह्यधिकारस्थानमार्गः आत्मवान्इन्द्रियादिसहितः पूर्वदेहसहितोवामोक्षार्थमाश्रयकरणेहेतुःकृष्णावेशेनेति तच्चित्तएवभगवदाज्ञयाअधिकारंकरोतीति पितृभिरिति समानयनार्थमागतैः स्वक्षयंवैवस्वत पुरंक्षयपदप्रयोगस्तुतत्रगतानांतथात्वात् ॥ ४९ ॥

द्रौपद्याभिन्नांगतिमाह द्रौपदीति सापूर्वमेवभगवदीयाभगवच्चरणप्रवेशार्थमुद्यतापिभगवतापतिभ्योदत्तत्वात् तत्हितार्थस्थिता तेषांचानपेक्षतांज्ञात्वास्वहृदयएवप्रकटेभगवति एकांतगतित्वादस्याः देहेंद्रियादिसंघातादुत्क्रम्यभगवति आपतदित्यर्थः ॥५० । ५१ ॥

इतिश्रीभागवतसुबोधिन्यांश्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां

प्रथमस्कन्धेपंचदशोऽध्यायः ॥ १५॥

---

श्रीविश्वनाथचक्रवर्त्ती ।

देहं परित्यज्येति । देवतारूप एव न तु पार्षदरूप । अतएव पितृभिस्तदानीं नेतुमागतैः सह । स्वक्षयं स्वाधिकारस्थानम् ॥ ४९ ॥

द्रौपदीति । सुभद्रादीनामप्युपलक्षणम् । तम् आपेति देहत्यागानुक्त्या शरीरेणैवेति ॥ ५० ॥

इति एवं संप्रयाणमेव न तु प्रकारान्तरम् । सिद्धिं सिद्धिदशाम् ॥ ५१ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
प्रथमेऽयं पंचदशः सङ्गतः सङ्गतः सताम् ॥ १५ ॥

---

सिद्धांतप्रदीपः ।

स्वक्षयंस्वाभीष्टस्थानम् ॥ ४९ ॥

द्रौपदीतदापतीनामात्मानं प्रत्यनवेक्षतांमाज्ञायज्ञात्वाभगवतिएकांतमतिः सतीतंभगवंतमाप ॥ ५० ॥

यः सुकृतिः एतत्पूर्वोक्तं श्रीकृष्णस्यभगवतोनिजलोकगमनं तथाभगवत् प्रियाणांपांडोः सुतानां कुंत्यादिसहितानाम् इतिपूर्वोक्तंप्रयाणम् अलमत्यर्थंस्वस्त्ययनंपवित्रम् श्रृणोति सहरौभक्तिंलब्ध्वासिद्धिमुपैति ॥ ५१ ॥

इतिश्रीमद्भागवतसिद्धांतप्रदीपेप्रथमस्कंधीयेपंचदशाऽध्यायार्थप्रकाशः ॥ १५ ॥

---

भाषाटीका ।

विदुरजी भी श्रीकृष्णके आवेश से प्रभास मै अपना देह परित्याग कर पितृगणों के सहित अपने स्थान को चले गये ॥ ४९ ॥

द्रौपदी भी पतिओं की अनपेक्षता जानकर वासुदेव भगवान मै एकांतमतिहोकर उन्हीं वासुदेव को प्राप्त हुई ॥ ५० ॥

भगवत् प्रिय पांडवों के पवित्र स्वस्त्ययन इस प्रयाण को जो श्रद्धा पूर्वक सुनता है वह हरि मै भक्ति को प्राप्त होकर सिद्धि को प्राप्त होता है ॥ ५१ ॥

प्रथम स्कंध का पंचदश अध्याय समाप्त ॥ १५ ॥

---:*:---

## षोडशोऽध्यायः ।

सूत उवाच । ततः परीक्षिद्द्विजवर्य्यशिक्षया महीं महाभागवतः शशास ह ।
यथा हि सूत्यामभिजातकोविदाः समादिशन् विप्र ! महद्गुणस्तथा ॥ १ ॥
स उत्तरस्य तनयामुपयेमे इरावतीम् ।
जनमेजयादींश्चतुरस्तस्यामुत्पादयत् सुतान् ॥ २ ॥
आजहाराश्वमेधांस्त्रीन् गङ्गायां भूरिदक्षिणान् ।
शारद्वतं गुरुं कृत्वा देवा यत्राऽक्षिगोचराः ॥ ३ ॥
निजग्राहौजसा वीरः कलिं दिग्विजये क्वचित् ।
नृपलिङ्गधरं शूद्रं घ्नन्तं गोमिथुनं पदा ॥ ४ ॥

### श्रीधरस्वामी ।

ततश्च षोडशे भूमिधर्म्मयोः कलिखिन्नयोः ।
सम्वादे वर्ण्यते प्राप्तिः पालकस्य परीक्षितः ॥ ० ॥

द्विजवर्य्याणां शिक्षया । सूत्यां जन्मनि । अभिजातकोविदाः जातकर्म्मविदः । हे विप्र ! । महतां गुणा यस्मिन् सः ॥ १ ॥
जनमेजयादीनित्यर्द्धे एकाक्षराधिक्यं छान्दसम् । उत्पादयदित्यडागमाभावः आर्षः ॥ २ ॥
आजहार कृतवानित्यर्थः । शारद्वतं कृपम् । यत्र येष्वश्वमेधेषु ॥ ३ ॥
निजग्राह निगृहीतवान् । कलिमेव निर्दिशति नृपेति ॥ ४ ॥

### दीपनी ।

० ॥ १—४ ॥

### श्रीवीरराघवः ।

तदेवं संप्रस्थानं पाण्डुपुत्राणां वक्ष्ये कृष्णकथोदयामिति प्रतिज्ञातं पाण्डुपुत्रसंस्थानं परीक्षिज्जन्मोपेतमुपपाद्य परीक्षितोऽथ राजर्षेर्जन्मकर्म विलापनमिति प्रतिज्ञातानि वर्णयति तत्र तज्जन्म पाण्डवपुत्रवृत्तान्तपर्यन्तं भाव्याभिहितं विलापनं द्वादशे स्कन्धे वक्ष्यति इतः परं चतुरध्यायैः कर्माणि वर्णयते इति विवेकः ततइतिततः पितृनिर्गमनानंतरं महान्तो गुणा यस्य स परीक्षित् हे द्विज ! जन्मसूत्यां जन्मदिने जातककोविदाः विप्राः यथा समादिशन् तथैव द्विजवर्यशिक्षया महाभागवतः सन्महीं शशास पालयामास ॥ १ ॥
स परीक्षिदुत्तरस्य मातुलस्य तनयामिरावतीमुपयेमे उदुवाह तस्यामिरावत्यां जनमेजयादींश्चतुरः सुतानुदपादयत् अडभाव आर्षः आगम शास्त्रस्यानित्यत्वाद्वा ॥ २ ॥
शारद्वतं कृपं गुरुं कृत्वा गङ्गायां गङ्गातीरे त्रीनश्वमेधानाजहार यत्र येष्वश्वमेधेषु देवा इन्द्रादयः अक्षिगोचरा बभूवुः तथाविधानाजहारेत्यर्थः ॥ ३ ॥
कदाचिद्दिग्विजयनिमित्ते चरन् वीरः परीक्षित् कचिद्देशे यदा पादेन गोमिथुनं स्त्रीपुंसयोर्गवोर्युग्मं घ्नन्तं शूद्रमपि नृपचिह्नधरं कलिमोजसा पराभवसामर्थ्यात्मकेन निजग्राह निगृहीतवान् ॥ ४ ॥

### श्रीविजयध्वजः ।

अत्र भवति भक्तिविधानार्थं भगवद्भक्त परीक्षितः कलिबंधनादि माहात्म्यवर्णनेन हरिमहिमैव प्रतिपाद्यत इति तन्महिमा प्रतिपाद्यतेऽस्मिन्नध्याये तत्र प्रथमे राज्यपालनादि महिमोच्यत इत्याह तत इति ततः पांडवस्वर्यानानंतरं द्विजवर्यशिक्षया कृपादिब्राह्मणश्रेष्ठसदुपदेशेनाशि

### श्रीविजयध्वजः ।

क्षाविद्योपादानम् अभिजातकोविदाः जातकज्ञानपटवः सूत्यामुत्पत्तौयथामहद्गुणानुपादिशंस्तथातदनुसारेणमहींशशासेत्यत्ययः ॥ १ ॥

उत्तरस्यविराटपुत्रस्यपुत्रींनाम्नेरावतीमुपयेमे उपयमनम्विवाहः उत्पादयत् उदपादयत् अजनयत् चतुरइतिपाठः ॥ २ ॥

शारद्वतंकृपंयत्रयेषुअश्वमेधेषुदेवाइंद्रादयः अक्षिगोचराः प्रत्यक्षास्तादृशानितिशेषः ॥ ३ ॥

सधीरः दिशांजयेओजसास्वाभाविकशक्त्याकलिंनिगृहीतवानित्यन्वयः नृपाणांलिंगंलक्षणंधारयतीतिनृपलिंगधरः तंकर्मणाशूद्रंतदे वाह पदेति पदागोमिथुनंघ्नंतंताडयंतंकाचिदेकांतप्रदेशे ॥ ४ ॥

---

### क्रमसंदर्भः ।

० ॥ १ ॥
स उत्तरस्य तनयामिति पूर्व्वकथा ( राज्याभिषेकात् प्राक् ) ब्रह्मचर्य्ये राज्याभिषेकायोगात् ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥

---

### सुबोधिनी ।

एवमध्यायत्रयस्यप्रासंगिकतांज्ञापयितुंचरित्रश्रवणफलमाहभगवतःसर्वांशश्रवणसहितस्यसर्वश्रवणेसर्वंफलमितिभंशेखराडशः फलम नूद्यतेकश्चित्पूर्वसहितम्अतोनान्यानर्थक्यंवैष्णवत्वात्तेषुश्रद्धातेषांस्वातंत्र्यादिगुणवत्त्वंसुतेऽपीतिद्योतयितुंपाण्डोरित्युक्तं ऐहिकफलंस्वस्त्य यनंपवित्रमिति इष्टप्राप्त्यनिष्टनिवृत्तिरूपमामुष्मिकंतुभक्तिःसाधनंभगवत्प्राप्तिःफलंसिद्धमिति "मुक्तिर्निरूपिता पूर्वमधिकारनिरूपणंपारलौ किकवन्धस्यनिवृत्त्यैपितृहेतुतः ऐहिकस्यापिवन्धस्यनिवृत्तिरधुनोच्यते ॥ अधिकारस्यसम्प्राप्त्यालोकतो वन्धसम्भवः कलिदोषाश्चतेनाम क्रमेणैवनिवार्य्यते ॥ प्रथमंषोडशेऽध्यायेस्वाधिकारेणयद्भवेत् भूधर्मरक्षासर्वापिसामान्येनविशेषतः निरूप्यतेऽन्यथास्वस्यदोषःस्याद्विविधो ऽपिहिअतःपुत्रान्समुत्पाद्यधर्मरक्षानिरूप्यतेआधिदैवकरक्षार्थंकलिनिग्रहईर्य्यते स्वभावतः स्थापितोऽपिमूलदोषान्नवर्धते मूलनिर्हरणंतस्मात् कर्त्तव्यमितिनिश्चयः आधिदैविकरूपाणांसाक्षात्कारोयदानाहि भगवच्चरितस्यापिदैविकत्वात्सदैवाहि अतोऽधिकारसिद्ध्यर्थंदैविकानांनिरूप णम् अनुग्रहोऽनुग्रहश्चावदानन्तथैवच" एवंपरीक्षितः पाण्डवकृतप्रकृतिवन्धनिवृत्त्यर्थं तेषांमुक्तिमुक्त्वाआश्चर्यवत्पश्यतिकश्चिदेनामिति न्यायेनश्रुत्वाप्येवंवेदनचैवकश्चिदिति निर्धाराच्चतथाश्रवणंमाभूदितिपूर्वंतस्यआधिदैविकं साक्षात्कारादिकंनिरूपयितुंजातकेसूचितंस्वरूपं तस्यानुवदतिततः परीक्षिदिति "यस्त्विच्छयाकृतोधर्म"इतिवाक्यात्राज्यरक्षापिस्वेच्छयानकृतेत्याह द्विजवर्यशिक्षयेतिभगवद्भक्ताःब्राह्मणाः द्विजवर्याःतेषामेवधर्मसूक्ष्मपरिज्ञानं "नारायणपराविप्राधर्मगुह्येपरंविदुरि" तिवाक्यात् वोधितस्यहृदयेसमागमनार्थमाहमहाभागवतइति भगवद्भक्तेषुमहान्अनेनत्रयंसूचितंसर्वत्रभगवद्भजनप्रवृत्तिः भूमेर्भगवद्भार्याया अपि हेतुवशादन्यपालनमितिहेत्याश्चर्यंभगवद्भक्तानांकार्य विशेषस्यअयुक्तत्वात्भगवद्वाक्यत्वेऽपिस्वरूपाविष्टत्वात् तथात्वेवापरमभागवतत्वंनभवेदितिउभयमत्रेत्याश्चर्यंआश्चर्यम्समर्थयितुं काल कृतंतत्रभगवत्प्रेरणयेतिज्ञापयितुमाहयथाहीतिसूत्यांजन्मकालभभिजातंतत्रकोविदानिपुणाः विप्रेषुमहान्गुणोयस्यब्रह्मण्यतेतियावत् अतः कालकृतशुभफलसिद्धिः ॥ १ ॥

इदानींतस्यकृतस्यभूरक्षणस्यानुवृत्तिसिद्ध्यैपुत्रानुत्पादितवानित्याह सउत्तरस्येति मातुलकन्यापरिणयनंलोकेविहितंस्मृतौनिषिद्धं लौकिकधर्माणांदृष्टांतीकरणप्रस्तावेमातुलस्येदंयोषाभागइत्यत्रनिरूपणात् "मातुलस्यसुतामूढ्वामातृगोत्रांतथैवच समानप्रवरांचैवत्यक्त्वा चांद्रायणंचरेदि"तिस्मृतेः अतः केवलधर्मार्थं तादृशोविवाहोनकर्त्तव्यः लौकिकवलशौर्याद्यपेक्षायांतुकर्त्तव्यएवअतः उत्तरस्यमातुलस्यस्व समानवलसिद्ध्येइरावतीमुपयेमे नाम्ना चवैष्णवत्वंसूचितं श्रुतौरोदसीतिकथनात् भगवत्परिपाल्यत्वंचतस्याः पुत्राजाताः सुतानिति स्वतः चतुर्दिक्षुरक्षाचतुर्विधपुरुषार्थसिद्धिश्चतावतैवभविष्यतीतिनाधिकोत्पादनम् ॥ २ ॥

आधिदैविकप्रकारेणाश्वमेधकरणंपूर्ववदाह आजहारेतित्रिविधोऽपिदोषस्तावतैवनिवृत्तइतिनामकरणंगंगायामितिगंगागर्भभूमौभूरिदक्षि णानितिसभार्यादक्षिणाः पुष्टाइतिज्ञापनार्थंधर्मस्यपाण्डवैकनिष्ठत्वात् कुलाचार्यः कृपएवअनेनगुरुत्वेनस्वीकृतइत्याह शारद्वतमिति शरस्तं वेजातः कृपःभुविदक्षिणाब्राह्मणासम्पत्तौयागआधिदैविकोजातइत्याह देवायत्राक्षिगोचराइतिहविर्भागभुजोदेवाःभगवदंशभूताः आधिदैविकाः तएववैदिकमन्त्रे प्रतिपाद्यामन्त्रप्राधान्यपक्षेणआध्यात्मिकाः तएवज्ञानरहितैः उत्तमास्तुभगवदंशभूताःभगवानिवप्रत्यक्षाः ॥ ३ ॥

एवंसामान्यधर्मंचोक्त्वाआधिदैविकत्वख्यापनार्थंधर्मप्रतिपक्षनिग्रहमाह निजग्राहौजसेतिअन्यथापाण्डवानामिवास्यापि गमनमुचितं स्यात् पाण्डवैः कलिभीतैर्गतंतुअपगतमपिनिजग्राहइति पुरुषोत्कर्षः क्वचिदितिकुरुक्षेत्रे कलेरवस्थानरूपमाह नृपलिंगधरमितिकलेः रूप त्रयंपापः शूद्रः उभयविशिष्टोराजाआधिदैविकरूपः तदाह नृपलिंगधरमिति सुपुत्रेणापिसहितागौर्मिथुनत्वेनव्यपदिश्यते मातरमभि गच्छंतीतिश्रुतेः अतएवकलिपतस्पर्शयोग्यंरूपंप्रदर्शितं शकटमारुह्यगांवलीवर्दंचयोजयित्वालंवमानपादेनघ्नंतम् अथवाविजित्यगोमिथुनंस्व विषयेनयंतंराजायथाधिष्ठातृचोरान् भूवाक्यानामनुश्रवणादर्शनंचानु ग्रहसामर्थ्यम् ॥ ४ ॥

---

श्रीशौनक उवाच । कस्य हेतोर्निजग्राह कलिं दिग्विजये नृपः ।
❀ नृदेवचिन्हधृक्शूद्रकोऽसौ गां यः पदाहनत् ॥ ५ ॥
तत्कथ्यतां महाभाग ! यदि कृष्णकथाश्रयम् ॥
अथवास्य पदाम्भोजमकरन्दलिहां सताम् ॥ ६ ॥
किमन्यैरसदालापैरायुषो यदसद्व्ययः ।
क्षुद्रायुषां नृणामङ्ग ! मर्त्यानामृतमिच्छताम् ॥ ७ ॥
इहोपहूतो भगवान् मृत्युः शामित्रकर्मणि ।
न कश्चिन्म्रियते तावद्यावदास्त इहान्तकः ॥ ८ ॥

श्रीविश्वनाथचक्रवर्त्ती ।

परीक्षितो दिग्विजयो धर्म्मप्रश्नः क्षितिंप्रति ।
तस्याः कृष्णवियुक्तायाः शोकोक्तिः षोड़शेऽभवत् ॥ ० ॥

हे विप्र ! । तथैव महतां गुणा यस्मिन् सः अभूत् ॥ १ ॥
जनमेजयादीनिति । "प्रधाने कर्म्मण्यभिधेये ण्यादीनाहुर्द्विकर्म्मणा" मितिवन्नवाक्षरैकपादोऽनुष्टुब्विशेषोऽयम् ॥ २ ॥
शारद्वतं कृपम् ॥ ३ ॥ ४ ॥

---

सिद्धांतप्रदीपः ।

"संस्थांचपाण्डुपुत्राणांवक्ष्येकृष्णकथोदय" मितियत्प्रतिज्ञातंतत्प्रतिपाद्य "अभिमन्युसुतंसूतप्राहुर्भागवतोत्तमं तस्यजन्ममहाश्चर्यकर्माणि चगृणीहिन" इति चतुर्थाध्यायेप्रश्नः कृतःपुनः "अश्वत्थाम्नोपसृष्टेनब्रह्मशीर्ष्णोरुतेजसा उत्तरायाहतोगर्भईशेनाजीवितःपुनः तस्य जन्ममहाबुद्धेःकर्माणिचमहात्मनः निधनंचयथैवासीत्सप्रेत्यगतवान्यथा तदिदंश्रोतुमिच्छामिगदितुंयदिमन्यसे ब्रूहिनःश्रद्दधानानां यस्यज्ञानमदाच्छुक" इतिद्वादशाध्यायेप्रश्नःकृतः तत्रद्वादशाध्यायेपरीक्षितोजन्मवर्णितंनिधनंसंक्षेपतोऽष्टादशाध्यायेविस्तरतोद्वादशस्कन्धे वक्ष्यतिइदानींतस्यकर्माणिवर्णयति ततइतिचतुर्भिरध्यायैः ततोऽभिषेकानन्तरंमहांतोद्वादशाध्यायोक्तागुणायस्मिन्सः परीक्षित् हेविप्र ! यथासूत्यांजन्मवेलायामभिजातकोविदाः जातकर्मविदः शमादिशन्तथैवद्विजवर्याणांशिक्षयामहींशशासपालयामास ॥ १ ॥
सः उत्तरस्यवैराटेस्तनयामुपयेमेउवाह तस्यांजनमेजयादीन् उत्पादयत् जनान्शत्रून् एजयतेइतिजन्मेजयः ॥ २ ॥
शरद्वतोऽपत्यंकृपंगुरुंकृत्वागङ्गायांगङ्गातटेयत्रयेषुदेवाःइन्द्रादयःअक्षिगोचराःप्रत्यक्षाःबभूवुः तानश्वमेधान्आजह्रारंकृतवान् ॥ ३ ॥
क्वचित्स्थलेगोमिथुनंस्त्रीपुंरूपयोर्गवोर्युगलम् ॥ ४ ॥

---

भाषाटीका ।

सूतजीबोले हेविप्रशौनक ! तिसके अनन्तर महाभागवत परीक्षितजी ने ब्राह्मणों की शिक्षा से पृथिवी का पालन किया जैसे जन्म कालमें जैसे दैवज्ञ ब्राह्मणों ने कहे थे तैसेही महागुण उनके हुए ॥ १ ॥
उन परीक्षितजी ने उत्तर की पुत्री इरावती से विवाह कर उस मे जन्मेजयादिक चार पुत्रों को उत्पन्न किया ॥ २ ॥
कृपाचार्य को आचार्य वनाकर गङ्गाजी के तीर पर वहुत दक्षिणा सहित तीन अश्वमेध यज्ञ किये जिनों में देवता दर्शन देते थे ॥ ३ ॥
बीरपरिक्षितजी ने दिग्विजय में कहीं पर राजचिन्ह धारि वस्तुतः शूद्र होकर गऊ तथा वैल को पाद से प्रहार करते कलियुग को वल से पकड़ा ॥ ४ ॥

---

श्रीधरस्वामी ।

कस्य हेतोरिति । अयमर्थः । कस्माद्धेतोः कलिं केवलं निजग्राह न तु हतवान् । यतोऽसौ शूद्रकः अतिकुत्सितः शूद्रः । यो गां पदाहन्निति ॥ ५ ॥
अस्य विष्णोः पदाम्भोजयोर्यो मकरन्दस्तं लिहन्ति आस्वादयन्ति ये तेषां सतां महतां वा कथाश्रयमिति समासान्निष्कृष्यानुषङ्गः । तर्हि कथ्यताम् । नो चेत् किमन्यैरसद्भिरालापैः । यत् यैरायुषो वृथा क्षयः ॥ ६ ॥

* शूद्रःकोऽसाविति वीरराघवश्रीवल्लभाचार्यादिसंमतःपाठः ॥

### श्रीधरस्वामी ।

अस्माकमयं सत्रप्रयत्नोऽपि हरिकथामृतपानार्थ एवेत्याह सार्द्धद्वाभ्याम् । क्षुद्रमल्पमायुर्येषाम् अतो मर्त्यानां मरणवतां तथापि ऋतं सत्यं मोक्षमिच्छतां यो मृत्युः स इह सत्रे शमितुरिदं शामित्रं कर्म पशुहिंसनं तदर्थमुपहूतः ॥ ७ ॥

ततः किमत आह न कश्चिदिति । ततोऽपि किमित्याह । अहो नृलोके हरिलीलामृतं वचः पीयेतेत्येतदर्थम् । हरिलीलैवामृतं यस्मिन् ॥ ८ । ९ ॥

---

### दीपनी ।

कुत्सिते ( पा० ५ । ३ । ७४ । ) इत्यधिकारे संज्ञायां कन् ( पा० ५ । ३ ७५ ) इति सूत्रेण कुत्सितार्थे शूद्रशब्दात् कनि शूद्रकशब्दः साधनीय इत्याशयेनाह शूद्रकःअतिकुत्सितः शूद्र इति ॥ ५—७ ॥

( अष्टमश्लोके—"यतेत बुद्धिमान् मृत्योरभावाय पुरैव हि ॥" इति तृतीयचतुर्थचरणौ क्वचित् दृश्येते ॥ ८—१२ ॥

---

### श्रीवीरराघवः ।

तत्रलब्धप्रश्नावसरः पृच्छतिशौनकः कस्यहेतोरितिनृपः परीक्षिद्दिग्विजयेकस्माद्धेतोः कलिंनिजग्राहेत्येकः प्रश्नःयोगांपदाहनत्तता डासौनृपचिन्हधारीशूद्रः कइत्यपरः यद्यपिनृपलिङ्गधरंशूद्रंकलिमितिसामानाधिकरण्यनिर्देशेनैव कलिरेवनृपदेवचिन्हधृक् शूद्रइतिज्ञात एवेतिप्रश्नानुपपत्तिस्तथापिकइत्यस्यकिंगुणकइत्यभिप्रायः अतः प्रश्नोपपत्तिः ॥ ५ ॥

तत्कलिनिविग्रहादिकंकेवलमस्माभिःपृष्टमित्येववर्णयकिंहेमहात्मन् ! यदिविष्णुकथाश्रयंभगवत्कथोपेतमथवास्यविष्णोःपदाम्बुजमक- रन्दास्वादिनांसाधूनांकथाश्रयंस्यात्तर्हिकथ्यताम् ॥ ६ ॥

तत्रहेतुंवदन्विष्णुतद्भक्तकथानाश्रयाणामश्रोतव्यत्वमवर्णनीयत्वंचाहकिमन्यैरिति अङ्गहेसूत ! यद्येभ्यआयुषोऽसद्व्ययः निरर्थकः क्षयोभवतितैः क्षुद्रायुषामल्पायुषामृतंकर्मफलमिच्छतांमर्त्यानां मरणशीलानांनृणांसम्बन्धिभिरन्यैर्विष्णुतद्भक्तजनाकथाश्रयैरतोऽतएवा सद्भिरालापैः किंवर्णितैर्वानकिंचित्प्रयोजनंकिंतुकेवलमायुर्व्ययएवेतिभावः यद्वाऋतंसत्यंपरंब्रह्मइच्छतांतत्प्राप्तिकामयमानानांमरणशीला नामल्पायुषांनृणामस्माकमन्यैरसदालापैः किंनकिंचित्प्रयोजनमस्तियतोयेभ्यः केवलमायुषोऽसद्व्ययोभवतीत्यन्वयः ॥ ७ ॥

ननुक्षुद्रायुषांमर्त्यानामस्माकंयावत्त्वत्प्रश्नवर्णनश्रवणंजीवनमप्यवसातुंशक्यमित्यत्राहइहेति इहनैमिषक्षेत्रेशामित्रकर्मणिसत्रकर्मणि शमिच्छब्दः पशुसंज्ञपयितृत्ववाचीशमयिताचभगवानास्त्वितिश्रुतेः सचेहपापापनोदकभगवद्गुणानुभवितृपरः तत्सम्बन्धेकर्मणिसत्रकर्म णिभगवद्गुणात्मकब्रह्मसत्रइत्यर्थः भगवान्मृत्युराहूतः सचान्तकोयावदिहास्तितावदत्रनकश्चिन्म्रियतेनमरणमेति ॥ ८ ॥

---

### श्रीविजयध्वजः ।

नृपलिंगधृग्यः शूद्रः पदागामहनत्तंकलिंदिग्विजयेनिजग्राहअसौकः कष्टकर्माइत्याक्षेपः नप्रश्नः कलिमित्युक्त्याज्ञातत्वेनासिद्धप्रश्नत्वा पातात् ॥ ५ ॥

विष्णुकथाआश्रयोयस्यतत्एतादृशंकालिबन्धनंचेत्तर्हिकथ्यताम । अथपक्षांतरे वा यदिअस्यहरेः मकरन्दकरंभावंददातीतिमकरंदः तंलिहंतिआस्वादयंतितेषांकथाश्रयंतर्हिकथ्यतामित्यन्वयः ॥ ६ ॥

किमितिविष्णुवैष्णवकथाकथनमितितत्राह किमन्यैरिति असदालापैरमंगलसंगैः किंप्रयोजनंनकिमपि कुतः आयुषोऽसद्व्ययः व्यर्थ क्षयइतियद्यस्मादतइत्यर्थः यद्वैरसदालापैरायुषोऽसमीचीनोव्ययइतिवा इतोऽपीतरप्रसङ्गानापेक्षितइतिब्रूतइत्याह क्षुद्रायुषामल्पायुषां मर्त्यानांमरणधर्मणामतएव मृतिमिच्छतांनृणांमारकः मृत्युः भगवान्नरसिंहः शामित्रकर्मणि पशुसंज्ञपनकर्मकर्ताशमिता तस्य कर्मशामित्रंतादर्थ्येसप्तमी शामित्रकर्मार्थमृषिभिर्नैमिषारण्यवासिभिरिहोपहूतः आहूयप्रसाद्यस्थापितः अंतंकरोतीत्यंतकः सभगवान् यावदिहास्तेनतावत्कश्चिन्मियतइत्यन्वयः ॥ ७ ॥ ८ ॥

---

### क्रमसंदर्भः ।

यदि कृष्णकथाश्रयं भवति तर्हि तदन्यदपि कथ्यतामित्यर्थः ॥ ६ ॥

ऋतं परमसत्यं श्रीभगवन्तमिच्छतां क्षुद्रायुषामन्यैः किम् । ननु तादृशानां श्रीभगवत्कथाश्रवणमपि सम्पन्नं न स्यादित्याशङ्क्याह इहेति ॥ ७ ॥

यावदिह हरिकथायामास्ते तावदिह कश्चिन्न म्रियेत । तथैषां श्रोतृणां मरणनिवारणकारणं मृत्व्याह्वानं निर्विघ्नहरिकथामृतपाना- र्थमेवेत्याह एतदर्थमिति ॥ ८ । ९ ॥

---

## सुबोधिनी ।

इदानींतनवत् भाषापरिज्ञानेऽपिदर्शननियमादिकंसंभवति अस्मिन्वाक्येशौनकस्यसंदेहोजातइतिकालिरन्यः शूद्रस्त्वन्यइति तस्मिन्वा आविष्टः कालिरिति अन्यायिनंवामारयति अवध्यमानेऽपिचकारेपदार्थद्वयकथनेएकक्रियायांसमुच्चयप्रतीतिः अतः पृच्छति कस्यहेतोरिति दिग्विजयेहिराज्ञांजयः कर्त्तव्यः ननुकालस्यस्वाधारत्वात् व्यर्थश्चकलिनिग्रहः कालस्यसाधारणनिमित्तत्वात् कलिनिमित्तेचराज्यस्यप्राप्तत्वात् अतोहेत्वभावात् अशक्यत्वविग्रहनिग्रहेकालनिग्रहाभावात्प्रश्नः ॥ ५ ॥

तथापिनृपः कालावच्छिन्नराजातद्विशेषणत्वेनशूद्रमजानन्नाहनृदेवचिन्हधृगितिशूद्रस्यकथंसवेशंकुतोवाप्राप्तः तथाभूतस्यवाकथंपदाघातादनम् अतः संदेहनिवारणार्थंतत्कथयेत्याहतत्कथ्यतामिति किमन्यैरसदालापैरायुषोयदसद्व्ययः निषेधार्थसंबोधयतिमहाभागेति महत्त्वभाग्यंयत् भगवत्कथायांनियुक्तः तदभिज्ञश्च अतः स्वार्थाविरोधित्वेकथनीयमन्यथानेत्याह यदिकृष्णकथाश्रयमिति कृष्णकथायाआश्रयः तत्कथायां भगवत्कथावर्त्ततेयदितदाकथ्यतां भगवत्कथाधारत्वाभावेऽपिवस्तुतोभगवदीयायेतत्संबंधिनी अन्यथापियाकथातदाश्रयत्वेऽपिकथ्यतामित्याह अथवेतिभक्तिरसास्वादनमित्यनेनभक्तिरसस्पर्शाभावेकथाराहित्यंतेषांसूचितं सतामित्यनेनव्यामोहनार्थमप्यन्याकथानिवारितापुरुषसुखंब्रह्मसुखमर्थसुखंददातीतिमकरंदः गमेश्च,,इतिसंज्ञायांखश्सभगवच्चरणारविंदैकनिष्ठः प्रेमसेवायामाविर्भावरूपः भक्त्यैकभोग्यः विशेषतोनिर्वचनाशक्यः यदर्थंसर्वोऽपिभक्तिमार्गः शास्त्रं च तथास्वादनयुक्तानांकथयाशास्त्रार्थपरिज्ञानंभवति अतः प्रमाणकथाप्रमेयकथावातदाश्रिताचेत् कथनीयाअन्यथा अस्यापिसंदेहापादकत्वादसतअसदालापः उभयस्याभयंप्रतियोगितादृशैः किंप्रयोजनंनचोच्छिष्टलेपः पुष्टिकरइतिकालगमनमेवप्रयोजनं तत्राह आयुषोयदसद्व्ययइति कोटीसुवर्णैरपियदायुःक्षणमात्रमलभ्यंतादृशस्यायुषः असद्व्ययः अन्यायव्ययः अतआयुः क्षयकरत्वात् तत्रवक्तव्यम् ॥ ६ ॥

सत्रारंभस्त्वायुर्वृद्ध्यर्थमेवेत्याह क्षुद्रायुषामिति अल्पायुषांप्राणिनांमरणावश्यकत्ववर्ती मरणक्लेशनिवृत्त्यर्थममृतमिच्छतामर्थेमृत्युरिहोपहूतइतिसम्बन्धः क्षुद्रायुषांकिमन्यैरसदालापैरिति सहस्रसम्वत्सरसत्रैः अमृतमाविर्भवतीतिनिश्चयः विद्यमानानांचमृत्युर्बाधरूपः आधिदैविकश्चसः अतोयज्ञभागभोगार्थमिहोपहूतः अवस्थाभेदेनपशूनांतद्भागत्वात् मृत्युरेवोपनीयतेयत्पशुरितिश्रुतेः रौद्रंगवीतिन्यायेनअवस्थाभेदेनापिहविर्भोक्तृशामित्रंपशुर्हिंसनं तत्रकर्मणिदेवमायापेक्षासूचिता अधर्मकोटित्वाभावायभगवानिति ॥ ७ ॥

किमतोयद्येवं तदाह नकश्चिदितिततोऽपिकिम् एतदर्थमिति अहोनृलोकेपीयतहरिलीलामृतंवचः ततोऽपिकिम्एतदर्थमितिलोकेकोऽपिनम्रियतामस्मत्सत्रेणाविर्भूतेनामृतेनपीतेनअमराएवभवंतुसर्वेमध्येऽपिनाम्रियंतामिति अर्थनिश्चित्यतन्निर्वाहार्थपरमर्षिभिराहूतः समर्थः भगवानिहाहूतः सचाहृश्यः कथारूपेणसमागतः अतएवअहोइत्याश्चर्ययतः लोकेहरिलीलामृतंवचः पीयेतअयमर्थः अस्माभिः सत्रेसमारब्धेस्वापकीर्तिनिवारणार्थसत्रेहिसमारब्धेसर्वेम्रियंतेयामात्रापागुरतइतिश्रुतेः किमेतेसत्रिणइति तद्दोषपरिहारार्थमृषिभिरेवंविचारितमत्रभगवानानेतव्यः योगश्चतत्रसमर्पणीयः मृत्युश्चशामित्रकर्मणिततश्चास्मदपकीर्तिर्गमिष्यतीति तत्रभगवतितथैवसंपादितं स्वयमागतः कथारूपेणचसमागतस्तद्वरप्रदत्वंत्वाश्चर्यम् अतोहृष्टद्वारैवप्राणिनाममृतंभविष्यतीति अन्यथावतारादिद्वारे अदृष्टाद्वातत् सिद्धेत् अतआश्चर्यस्यसिद्धत्वात् भगवच्चरित्रमेववक्तव्यंत्वयानान्यादिति ॥ ८ । ९ ॥

---

## श्रीविश्वनाथचक्रवर्त्ती ।

निजग्राह न तु हतवान् । यतोऽसौ शूद्रकः अतिकुत्सितो हन्तुमेवोचितः ॥ ५ ॥

तत् कलिनिग्रहणं सतां कथाश्रयमित्यनेन समासगतेनाप्यन्वयः ॥ ६ ॥

ऋतं सत्यवस्तु श्रीकृष्णमित्यर्थः । ननु नश्वरदेहानां कृष्णकथाभाग्यलाभोऽपि कथं सेत्स्यतीति अत आह । इह क्षेत्रे शमितुरिदं शामित्रं कर्म्म पशुहिंसनं तत्र तदर्थं मृत्युरुपहूतः ॥ ७ ॥

ततः किमत आह न कश्चिदिति । ततोऽपि किमत आह अहो इति ॥ ८ ॥

---

## सिद्धांतप्रदीपः ।

कस्यहेतोः कस्माद्धेतोः कलिंनिजग्राहकेवलम् योगांपदापादेन अहनत् ताडितवान् किंचशूद्रःसन् नृदेवचिन्हधृक् अतोविपरीतकारितयावध्यः अतोऽसौकः केनगुणविशेषेणोपेक्षितइतिभावः ॥ ५ ॥

तत्कलिनिग्रहादिकृष्णस्यकथाश्रयंकथोपेतम् अथवाऽस्यकृष्णस्यपदांभोजयोर्मकरन्दः सौंदर्यरसस्तंलिहत्याश्वादयंतियेतेषांसाधूनांकथोपेतंस्यात्तर्हिकथ्यताम् ॥ ६ ॥

हेअङ्गसूत ! क्षुद्रायुषामल्पायुषांमर्त्यानांमरणधर्मिणांमध्येयेऋतंसत्यंभगवत्पदमिच्छन्तितेषामृतमिच्छतांमुमुक्षूणाम् अन्यैःकृष्णतद्दासकथावर्जितैरसदालापैः किंनकिमपीत्यर्थः यत्यैरसदालापैः आयुषोऽसद्व्ययः असाधुक्षयः तस्मात् कृष्णतद्दासकथाश्रयंचेत्तर्हि कथ्यताम् ॥ ७ ॥

इहसत्रेशामित्रकर्मणिशमितुरिदंशामित्रंपश्वालंभनंकर्मतदर्थे मृत्युर्भगवानुपहूतआहूतः अतोऽतकोयावदिहास्तेतावत्कश्चिदपि न म्रियते ॥ ८ ॥

---

एतदर्थं हि भगवानाहूतः परमर्षिभिः ।
अहो नृलोके पीयेत हरिलीलामृतं वचः ॥ ९ ॥
मन्दस्य मन्दप्रज्ञस्य वयो मन्दायुषश्च वै ।
निद्राया ह्रियते नक्तं दिवा च व्यर्थकर्मभिः ॥ १० ॥

सूत उवाच

यदा परीक्षित्कुरुजाङ्गलेऽशृणोत्कलिं प्रविष्टं निजचक्रवर्तिते ।
निशम्य वार्तामनतिप्रियां ततः शरासनं संयुगशौण्डिराददे ॥ ११ ॥
स्वलङ्कृतं श्यामतुरङ्गयोजितं रथं मृगेन्द्रध्वजमाश्रितः पुरात् ।
वृतो रथाश्वद्विपपत्तियुक्तया स्वसेनया दिग्विजयाय निर्गतः ॥ १२ ॥

भाषाटीका ।

शौनकजी बोले किस हेतु से दिग्विजय में राजा ने कलि का ग्रहण किया वह राज चिन्हधारी कौन शूद्र था जो कि गऊ को पाद से मारता था ॥ ५ ॥

हे महाभाग ! सो कहिये यदि कृष्ण कथा का आश्रय होय अथवा कृष्ण चरण कमल मकरन्द पीने वाले सत्पुरुषों का कथा होय तो ॥ ६ ॥

और असत्कथन से क्या है जिन से व्यर्थ असत् आयु का व्यय होता है हे सूत ! अल्पाय मनुष्य हैं मरने वाले अमृत इच्छा वाले उनको हरि कथाही सार है ॥ ७ ॥

ऋषियों ने यज्ञ कर्म में इहां भगवान् काल रूप का अवतारन किया है जबतक काल इहाँ रहैगा तब तक कोई नहीं मरैगा ॥ ८ ॥

---

श्रीधरस्वामी ।

तदभावे वृथैव जीवनमित्याह । मन्दस्य अलसस्य । नक्तं रात्रौ यद्वयः आयुस्तन्निद्रया दिवा अह्नि यद्वयः तत् व्यर्थकर्मभिः अपह्रियते १०

तत्र तावत् कलिनिग्रहप्रसङ्गमाह । यदा निजचक्रवर्तिते स्वसेनया परिपालिते देशे कलिं प्रविष्टं शुश्राव । तदा ताम् अनतिप्रियां वार्तां किञ्चित् प्रियाञ्च युद्धकौतुकसम्पत्तेः निशम्य ततः शरासनं दुष्टनिग्रहार्थमाददे । संयुगशौण्डि युद्धे प्रगल्भः । संयुगशौरिरिति पाठे युद्धे शौरितुल्यः ॥ ११ ॥

ततश्च दिग्विजयाय निर्गतः ॥ १२ ॥

---

श्रीवीरराघवः ।

किमर्थमाहूतइत्यत्राहएतदर्थमितिएतदर्थमत्रावस्थितानामस्माकंमरणार्थमेवहिपरमर्षिभिर्भगवान् मृत्युराहूतः इत्यर्थः मृत्यर्थः मृत्यु रपिस्वव्यापारंविहायभगवद्गुणश्रवणायेहनकिंचिदपिहन्यादित्यभिप्रायेणाहूतइतिभावः तत्कथ्यतांमहाभाग ! इत्यादिश्लोकद्वयेनतद्भक्तक-थाश्रवणस्यैववर्णनीयत्वंश्रोतव्यत्वंचोक्तंतदेवसहेतुकमुपपादयति अहोइतिसार्द्धेननृलोकेहरेर्लीलायस्मिन्प्रतिपाद्यास्तद्धरिलीलंतदमृततुल्यं वचः पीयेतपावकंश्रोतव्यमितियावत् येपिबंतितानभिनन्दतिअहोइतितेषांभाग्यमेतावदितिवक्तुमशक्यमितिभावः ॥ ९ ॥

कुतःयद्यस्मान्मन्दस्यमन्दचेष्टस्यमन्दाप्रज्ञाबुद्धिर्यस्यमन्दमल्पमायुर्यस्यतस्यहरिलिलामृतंवचोऽशृण्वतोवयः कौमारादिकेवलं नक्तं रात्रौनिद्रयाह्रियतेह्रस्यतेदिवाहनितुव्यर्थैः पुरुषार्थशून्यैः कर्मभिः सांसारिककर्मभिः ह्रियतेहरिलीलामृतंवचः पिवतस्तुवयः सफल मितिभावः ॥ १० ॥

इत्थमापृष्टः सहेतुकंकलिनिग्रहादिकंवर्णयतिसूतः यदेत्यादिनायावत्सप्तदशाध्यायसमाप्ति यदापरीक्षिद्दिग्विजयार्थंगतः कुरूणांजांगलेषुचजनपदेवसन्निजचक्रेणस्वाज्ञाचक्रेणवर्तितेऽनुशिष्टदेशेस्वसेनाधिष्ठितेदेशे वाप्रविष्टंकलिंतत्प्रवेशरूपामत्यन्तमप्रियांवार्त्तांनिशम्याकर्ण्य ततः संयुगेयुद्धेशौंडिः प्रवीणोराजासरासनंधनुराददेजग्राहनिजचक्रवर्तितेकुरुजांगलेवसन्नितिवान्वयः ॥ ११ ॥

ततःसुष्ठ्वलंकृतंश्यामैस्तुरंगैः संयोजितंमृगेन्द्रः सिंहोंकितोध्वजोयस्मिंस्तंरथममाश्रितोऽधिष्ठितः तथाचतुरङ्गयुक्तयासेनयापरिवृतोदिग्विजयायनिर्गतः कुरुजांगलादिष्वितिशेषः ॥ १२ ॥

---

श्रीविजयध्वजः ।

अनेनप्रकृतेकिमायातमितितत्राह एतदर्थमिति अतःसंप्रतिनृलोकेमृत्युभयविधुरतयास्थितैर्मर्त्यैर्लीलामृतंवचःपीयेतैतदर्थंहिपरमर्षिभिरिहाहूतः अहोआश्चर्यंमरणधर्मिणामपिहरिलीलाऽमृतत्वपदंहियस्मात्तस्माद्विष्णुवैष्णवकथाश्रयंचेत्तत्कथ्यतामितिभावः ॥ ९ ॥

### श्रीविजयध्वजः।

यथामर्त्यस्यासत्प्रसंगात् आयुषोवैय्यर्थ्यं तथानिद्रार्थादिपरस्यापीत्याह मंदस्येति अल्पस्यापिप्रज्ञाबाहुल्यादनेकवेदशास्त्रतदर्थग्रहणंस्यादित्यतोमंदप्रज्ञस्येति मंदप्रज्ञस्यकल्पायुषस्तत्स्यादित्यतोमंदायुषइतिअल्पायुषोऽपिभाग्यवशात्तत्स्यादित्यतोमंदस्येदि मंदस्य निर्भाग्यस्यएवंविधस्यमर्त्यस्य नक्तंरात्रिःनिद्रयाह्रियते हिरण्याद्यर्थान्वेषणाकर्मभिर्दिवादिनमपिह्रियते चशब्दोहेत्वर्थे तस्मान्निद्रादिजयेनहरितत्परायणाकथाऽत्रत्वयाकथ्यतामितिभावः वैइत्यनेनानुभवसिद्धमेतदितिदर्शयति सत्रविहक्षयान्नागतैर्मर्त्यैश्चाकर्णयेतां। मृत्याव असाद्भिर्वैत्यस्मिन्नर्थेआद्यश्चशब्दः॥ १०॥

कुरुजांगलेकुरुविषयेहस्तिनपुरेवसन्परीक्षिद्यदानिजचक्रवर्तिते निजचक्रेणाख्यानुज्ञयानिजानांपांडवानामाज्ञयावर्तितेराष्ट्रेप्रविष्टंकलिंश्रुश्रावेतिशेषः ततस्तदासंयुगशौचिर्युद्धेच्छुःराष्ट्रंविष्लवरूपामनतिप्रियांवार्तांनिशम्यशरासनमाददइत्यन्वयः संयुगंरोचयतीति धनुर्विशेषणांवा ११

श्यामैर्नैवसुवीथिषुविशिष्टगतिभिः नीलवर्णैर्वा तुरंगैर्योजितंमृगेंद्रोध्वजेयस्यसतथा तंसिंहलांछनध्वजंरथाश्चअश्वाश्चद्विपाश्चपत्तयश्च रथाश्वद्विपपत्तयःतैर्युक्तयापुरान्निर्गतोऽभूदित्यन्वयः॥ १२॥

---

### क्रमसंदर्भः।

अनतिप्रियाम् अतिशयेनाप्रियामित्यर्थः। टीकायां दुष्टनिग्रहार्थमादद इति तन्निग्रहेणैव कलिनिग्रहः स्यादित्यभिप्रायात्॥ ११॥

अतएव दिग्विजयाय तत्तद्दिक्स्थितदुष्टराजादिवशीकाराय॥ १२॥

---

### सुबोधिनी।

ननुतेस्वतएवस्वमृत्युंनिवारयिष्यंति किंभवत्प्रयासेनेत्यतआहमन्दस्येति मंदस्यअलसस्यअनेनकर्माभावः सूचितः मंदाप्राज्ञायस्येतिज्ञानाभावः मंदआयुर्यस्येतिभक्त्यभावः तस्यनक्तंवयःरात्रिसंबंधिआयुः निद्रयाह्रियतेदिवाचायुःव्यर्थकर्मभिरितिअतःसर्वस्याप्यायुषोऽन्यत्रविनियोगात् नतेषांसामर्थ्यम्॥ १०॥

भगवत्कथाश्रयत्वंकलिनिग्रहस्यमत्वातस्यप्रस्तावनामाह यदापरीक्षिदिति कुरुजांगलेदेशेहस्तिनापुरेअवसत् तदानिजचक्रवर्तिते कलिंप्रविष्टंश्रुत्वाशरासनमाददइतिसंबंधः सन्निति पाठेभवतीत्यर्थात् योजनीयम् अभूदितिवापांडवैरेवराज्यस्यसाधितत्वात् निष्कंटकेराज्ये स्वयमुपविष्टोनाममात्रेणराजेतिहृदयेदुःखमासीत् ततकलिप्रवेशश्रुतेविशेषतः शिक्षणोसमागत इतिप्रोत्साहोजातः तथापिराज्यंअधर्मः प्रविष्टइतिअनतिप्रियावार्ताराजाज्ञाकरणोकलिस्ततप्रयोजकः तदकरणेतएवमारणीयाः दैत्यपक्षपाताभावेहृदयपूर्वकालोल्लंघनासामर्थ्यात् तस्मात्दैत्यवधेनदोषइति. संयुगशौण्डिः युद्धशूरः शरासनमाददेदूरादेवतान् मारयिष्यामीति देवाश्वानांदैत्याभिमुखतानसंभविष्यतीति श्यामतुरङ्गयोजितंरथमारुरुहे॥ ११॥

राजत्वज्ञापनायस्वलंकृतमिति रथादिघटितंमृगेंद्रध्वजइति स्वस्यासाधारणंचिन्हंकलिश्चगजरूपइतिगर्दभयुक्तोवासिंहरूपेणभगवता दैत्येंद्रवधाद्वा पुमानिति असहायशूरत्वंपुरादितिपाठेनगरात् युद्धार्थंनेवनिर्गतः नतुविचारंकृतवानितिदिग्विजयेकृतेऽन्यदांतरालिकंस्वयमेव भविष्यतीति दिग्विजयायेत्युक्तम् अस्यजंवूद्वीपाधिपत्यंतस्यनवखण्डाः॥ १२॥

---

### श्रीविश्वनाथचक्रवर्त्ती।

अन्यथा आयुषो वैयर्थ्यमित्याह मन्दस्येति॥ १०॥

यदा निजचक्रवर्त्तिते स्वसेनया पालिते देशे कलिं प्रविष्टमेव अनतिप्रियां वार्त्तां तज्जिघांसया किञ्चित् प्रियांच निशम्य शरासनम् आददे तदैव पुरात् दिग्विजयाय निर्गत इत्यन्वयः। अत्र प्रविष्टः कलिरेवानतिप्रिया वार्त्तेत्यनुवादविधेयभावो विवक्षितो ज्ञेयः। शौण्डिः (शौण्डः) प्रगल्भः। संयुगशौरिरिति पाठे संयुगे शौरितुल्यः॥ ११। १२। १३। १४। १५। १६॥

---

### सिद्धांतप्रदीपः।

मृत्युप्रतिकारप्रयोजनमाह एतदर्थमिति अर्थमाह हरिलीलैवामृतंयस्मिन्तद्वचः अहोनृलोकेपीयेतेति॥ ९॥

अन्याथातुजीवनंनिष्फलमित्याहमन्दस्येतिमन्दस्यप्रज्ञोत्पादनेशिथिलप्रयत्नस्यमन्दप्रज्ञस्यमन्दाश्रोतव्या ऽश्रोतव्यविवेकहीनाप्रज्ञायस्य मन्दायुषः अल्पायुषः तादृग्वचोऽशृण्वतः वयआयुर्नक्तंरात्रौनिद्रयादिवाऽहनिव्यर्थकर्मभिर्ह्रियते॥ १०॥

भद्राश्वं केतुमालंच भारतं चोत्तरान् कुरून् ।
किम्पुरुषादीनि वर्षाणि विजित्य जगृहे बलिम् ॥ १३ ॥
तत्र तत्रोपशृण्वानः स्वपूर्व्वेषां महात्मनाम् ।
प्रगीयमाणंच यशः कृष्णमाहात्म्यसूचकम् ॥ १४ ॥
आत्मानंच परित्रातमश्वत्थाम्नोऽस्त्रतेजसः ।
स्नेहंच वृष्णिपार्थानां तेषां भक्तिंच केशवे ॥ १५ ॥
तेभ्यः परमसन्तुष्टः प्रीत्युज्जृम्भितलोचनः ।
महाधनानि वासांसि ददौ हारान् महामनाः ॥ १६ ॥

सिद्धांतप्रदीपः ।

निजचक्रवर्तितेनिजचक्रेणसेनात्मकेन आज्ञात्मकेनवावर्तितेपालिते यदाकलिंप्रविष्टमशृणोत् शुश्रावतदाऽनतिप्रियांवार्त्तांनिशम्यततः हेतोःसंयुगशौंडिः युद्धेप्रगल्भः शरासनमाददे ॥ ११ ॥

ततोदिग्विजयायनिर्गतः ॥ १२ ॥

---

भाषा टीका ।

इसीके लिये परमर्षियों ने भगवान् का आवाहन किया है यह बडा आश्चर्य है कि जो मनुष्य लोकमें हरिलीलामृत बचन पान किया जाता है ॥ ९ ॥

स्वयं मंद मंद बुद्धिवाला मंद आयुवाला जो यह जन तिसकी अवस्था में रात्रि सोने में चली जाती है और दिन व्यर्थ कामों में चला जाता है ॥ १० ॥

सूतउवाच जब परीक्षित राजा कुरुजाङ्गल देश में निवास करते थे तब उन्हों ने अपने चक्रवर्तित ( राज्य ) में कलियुग को प्रविष्ट सुना, इस अनतिप्रिया ( युद्ध कौतुकमात्र से थोरीप्रियभी ) वार्ताको सुनकर संग्राम शौंड ( कुशल ) राजा ने शरासन ग्रहण किया ॥ ११ ॥

सुन्दर अलंकृत श्याम तुरङ्ग योजित मृगेन्द्र ध्वज रथ मे पुर से आरोहणकर रथ अश्वद्विप पदाति युक्त चतुरङ्गिणी अपनी सेना से आवृत दिग्विजय को निकले ॥ १२ ॥

---

श्रीधरस्वामी ।

भद्राश्वादीनि पूर्वपश्चिमदक्षिणोत्तरतः समुद्रलग्नानि वर्षाणि मेरोः सर्वतः इलावृतं ततउत्तरतो रम्यकं हिरण्मयंच दक्षिणतो हरिवर्षं किंपुरुषंच तानिविजित्य ॥ १३ ॥

प्रगीयमाणं यशः । यश आदीनि शृण्वन् तेभ्यो ददाविति तृतीयेनान्वयः ॥ १४ । १५ । १६ ॥

---

दीपनी ।

भद्राश्वादीनीति । अत्रादिपदात् केतुमाल-भारतवर्ष-उत्तरकुरुवर्षाणां ग्रहणम् । पूर्व्वपश्चिमदक्षिणोत्तरतः मेरोरिति शेषः । समुद्रलग्नानि पार्श्वे इति शेषः । ततः इलावृतात् इति भावः । एतद्विशेषः पञ्चमस्कन्धीयषोड़शाध्यायादौ द्रष्टव्य इति ॥ १३—१६ ॥

---

श्रीवीरराघवः ।

भद्राश्वादिवर्षाणिनिर्जित्यबलिंकरंजगृहे ॥ १३ ॥
तत्रतत्रदेशेषुस्वपूर्वेषांयुधिष्ठिरादीनांमहात्मनांकृष्णस्यभगवतोमाहात्म्यसूचकंप्रगीयमाणंयशः ॥ १४ ॥
अश्वत्थाम्नोब्रह्मास्त्रतेजसापरिश्रान्तमात्मानंचवृष्णीनांपार्थानांचकेशवे कृष्णेस्नेहमनुरागंचतथातेषांतस्मिन् भक्तिंचोपशृण्वन् ॥ १५ ॥

श्रीवीरराघवः ।

नितरांहृष्टः प्रीत्याउज्जृंभितेलोचनेयस्यसमहामनाउदारबुद्धिर्वदान्योराजातेभ्यश्रावयितृभ्यःमहाधनानिवहुमूल्यद्रव्याणिवासांसिहारान्मुक्ताहारांश्चददौ ॥ १६ ॥

---

श्रीविजयध्वजः ।

सपरीक्षित् भद्राश्वादिवर्षाणिउत्तरकुर्वादिजनपदान्वाविजित्यबालिंकरंजगृहइत्यन्वयः ॥ १३ ॥

समहामनास्तत्रतत्रवर्षेषुविषयेषुचस्वपुरतोगायकैरुपगीयमानंकृष्णमाहात्म्यसूचकं महात्मनांस्वपूर्वेषांपांडवानांमाहात्म्यमुपश्रृण्वानः उपश्रृण्वन् ॥ १४ ॥

कथंमाहात्म्यंसूचयतइतितत्किंचिदाह अस्त्रेणाभिति अश्वत्थाम्नोऽस्त्रतेजसःकृष्णेनपरिरक्षितमात्मानंचवृष्णीनांपांडवानांमिथःस्नेहंचउभयेषांकृष्णेभक्तिंच श्रृण्वन् ॥ १५ ॥

तेभ्योगायकेभ्यः परमसंतुष्टोऽतएवप्रीत्याउज्जृंभितेविकसितेलोचनेयस्यसतथोक्तः महाधनानिअनर्घ्याणिवस्त्राणिहारान्मौक्तिकमालास्तेभ्योददावित्यन्वयः ॥ १६ ॥

---

क्रमसंदर्भः ।

ततश्च तत्प्रभावेण निन्हुतस्वप्रभावे सति भारतवर्षमात्राधिकारिणि कलौ प्रसङ्गतो भद्राश्वादीन्यपि जेतुं गतः । क्रमस्त्वत्र न विवक्षितः ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥

---

सुबोधिनी ।

तत्रप्रथमंपरितः परिभ्रमणंकृतवान्तत्रपश्चिमभागेभद्राश्वंनामवर्षंकेतुमालंपूर्वभागेभारतदक्षिणतः उत्तराः कुरवः उत्तरभागेअन्ये मध्यस्थाः किंपुरुषादयः नवखण्डजयंकृत्वास्वाज्ञांप्रचारितवान् तत्रप्रमाणंवलिंगृहीतवानितिकलिस्त्वांतरालिकइति ज्ञापनार्थं प्रथमं तत्र भगवद्भक्तिः स्थितेतिनिरूपयति यत्रैवगच्छतितत्रैव रथेनार्जुनस्यगतिश्रृणोति तत्रत्याः कृष्णादृष्टवंतः माहात्म्यं च मार्यतिपांडवेभयंवत्सनेबंधं च जानंति अतः परमेनं च तेजानंति ब्रह्मास्त्रतोभगवतापरिपालितंस्नेहं च यावत्जानंतितावत्सर्वंगायंतिअतः प्रगीयमाणं श्रृण्वानः संहृष्टः तेभ्योददावितिसंबंधः अनेनप्राप्तस्यभागस्यतत्रैवविनियोगउक्तः मात्सर्याभावश्चगुणपूर्वंधर्मस्थापनंचोक्तंप्रीत्युज्जृंभित लोचनइति तेषामपराधसहनमपिसूचितं महामनाइति स्वकृतार्थतावाएवंवर्त्तमानेकिंचिदाश्चर्यंवृत्तंतद्वक्ष्यतिमध्येसारथ्येतिश्लोकःप्रायेण विगीतःतं केचनश्रुत्वेतिपदमध्याहृत्यसेवादीनिकृतवानित्यर्थंव्याख्याययोजयंति जगत्कर्तृकांप्रणतिंचश्रुत्वेतिजगत्प्रणतस्येतिपाठः एवंकलिकार्यंदूरीकृत्यजगतिधर्मस्थापयित्वाविष्णुभक्तिं च कलिनिग्रहार्थम् ॥ १३ । १४ । १५ । १६ । १७ ॥

---

सिद्धांतप्रदीपः ।

आदिनाहरिप्रभृतिवर्षग्रहणम् ॥ १३ ॥

तत्रतत्रयशआदिशृण्वानस्तेभ्योददावितितृतीयेनान्वयः ॥ १४ । १५ ॥

महामनाः अतिवदान्यः ॥ १६ ॥

---

भाषाटीका ।

भद्राश्व केतुमाल भारत उत्तर कुरु और किम्पुरुषादिक वर्षों को जीतकर सबसे बलिग्रहण किया ॥ १३ ॥

वहां वहां अपने पूर्वपुरुष महात्माओं से कृष्ण माहात्म्य सूचक गीयमान यश श्रवण किया, अश्वत्थामा के अस्त्र तेज से अपना श्रीकृष्ण ने परित्राण किया, यह और पांडवों को वृष्णिओं का स्नेह और उनकी श्रीकृष्ण भक्ति सुनकर प्रीतिफुल्ल लोचन राजाने परम सन्तुष्ट होकर वस्त्र हार और महाधन उनको दिये । क्योंकि राजापरीक्षित् महात्मा हैं ॥ १४।१५।१६॥

सारथ्य-पारषद-सेवन-सख्य-दौत्य-वीरासनानुगमन-स्तवन-प्रणामान् ।
स्निग्धेषु पाण्डुषु जगत्प्रणतिंच विष्णोर्भक्तिं करोति नृपतिश्चरणारविन्दे ॥ १७ ॥
तस्यैवं वर्त्तमानस्य पूर्व्वेषां वृत्तिमन्वहम् ।
नातिदूरे किलाश्चर्य्यं यदासीत् तन्निबोध मे ॥ १८ ॥
धर्म्मः पदैकेन चरन् विच्छायामुपलभ्य गाम् ।
पृच्छति स्माश्रुवदनां विवत्सामिव मातरम् ॥ १९ ॥
कच्चिद्भद्रे ! ऽनामयमात्मनस्ते विच्छायासि म्लायतेषन्मुखेन ।
आलक्षये भवतीमन्तराधिं दूरे बन्धुं शोचसि कंचनाम्ब ! ॥ २० ॥

श्रीधरस्वामी ।

स्निग्धेषु पाण्डवेषु विष्णोर्यानि सारथ्यादीनि कर्माणि तानि शृण्वन् तथा विष्णोर्जगत्कर्त्तृकां प्रणतिंच शृण्वन् नृपतिः परीक्षित् विष्णोश्चरणारविन्दे भक्तिं करोति स्म । पारषदमिति रेफसकारयोर्विश्लेषश्छान्दसः । तत्र पार्षदं सभापतित्वम् । सेवनं चित्तानुवृत्तिः । वीरासनंरात्रौ खड्गहस्तस्य तिष्ठतो जागरणम् ॥ १७ ॥

वृत्तिमनुवर्त्तमानस्य । नातिदूरे शीघ्रमेव ॥ १८ ॥

धर्मो वृषरूपः विच्छायां हतप्रभाम् । गां गोरूपां पृथ्वीम् । विवत्सां नष्टापत्याम् ॥ १९ ॥

ते आत्मनो देहस्य । यद्यपि वहिरामयो न लक्ष्यते तथापि अन्तर्मध्ये आधिः पीडा यस्यास्तां त्वामालक्षये । केन यतः विच्छायासि । अतः ईषन्म्लायता वैवर्ण्यं भजता मुखेन लिङ्गेन । तत्र कारणानि कल्पयन् पृच्छति दूरे बन्धुमित्यादि पंचभिः । दूरे स्थितम् ॥ २० ॥

---

दीपनी ।

छान्दस इति । छान्दसत्वाश्रयणं प्रायशश्छन्दोऽनुरोधेनेति चिन्त्यम् ॥ १७—३४ ॥

---

श्रीवीरराघवः ।

स्निग्धेष्वनुरक्तेषुपाण्डुषुयुधिष्ठिरादिषुविष्णोः श्रीकृष्णस्यसारथ्यादिकं जगत्कृतंप्रणामञ्चस्मृत्वेतिशेषः नृपतिःपरीक्षिद्विष्णोश्चरणारविन्देभक्तिंकरोतिस्मचकारेत्यर्थः तत्रसारथ्यंप्रसिद्धंपारिषदंसभ्यत्वंसेवनंभृत्यकर्मदौत्यंदूतकर्मवीरासनानुगमनंनृपासनाधिष्ठितंप्रत्यनुवर्त्तनं स्तवनंस्तुतिकर्मप्रणामोनमस्कारः विष्णुकर्तृकान्यविषयानेतान्स्मृत्वेत्यर्थः ॥ १७ ॥

तस्यपरीक्षितःपूर्वेषां युधिष्ठिरादीनांवृत्तिमन्वहंवर्त्तमानस्यसतः तस्यनातिदूरेसन्निकृष्टदेशेयन्महदाश्चर्यमासीत्कथयिष्यतोमेमत्तः निबोध शृणु ॥ १८ ॥

धर्मइतिधर्मः धर्माधिदेवोवृषरूपधरः एकेनपदेनचरन्विच्छायांनिस्तेजस्कांगांगोधरूपधरांवत्सरहितांमातरमिवाश्रुणिवदनेयस्यास्तां पृच्छतिस्मापृच्छत् ॥ १९ ॥

प्रश्नमेवाहकच्चिदित्यादिभिः षड्भिःहेभद्रे ! तवात्मनः हेहस्यानामयमारोग्यमस्तिकच्चित् ईषन्म्लायताहर्षक्षयमुपगतेनमुखेनविच्छायानि स्तेजस्काभवसि अहंतुभवतींत्वामन्तराहृदयमध्येआधिः क्लेशोयस्यास्तथाभूतामालक्षये म्लानविच्छायामुत्पश्यामिहेअम्ब ! कंचनदूरस्थं बन्धुंशोचसि ॥ २० ॥

---

श्रीविजयध्वजः ।

नृपतिःपरीक्षित् कृष्णेस्निग्धेषुपांडुपुत्रेषुमुक्तामुक्तप्रपंचप्रणतस्यविष्णोः सारथ्यादिनाअहोहरिश्चरणानत जनतासुकरुणार्णवोनान्विति तस्य चरणारविंदेविशेषतोभक्तिंकरोतीत्येकान्वयः सारथेःकर्मसारथ्यं पार्षदंसभापतिकर्म द्वाःस्थत्वंवा परिषदः कर्मेतिवा सेवनमुक्तकर्मकरणं सख्युःकर्मसख्यं दूतस्यकर्मसंदेशकरत्वंदौत्यं । वीरासनंरात्रौखड्गपाणिःस्थित्वास्वामिरक्षार्थंजागरणं वीरोचितासनं गच्छतःपृष्ठतोगमनमनुगमनं स्तवनंस्तुतिः । प्रणामोनमस्कारः प्रह्वत्वंवा वीरासनानुगमनंसिंहासनोपसर्जनतयाउपवेशनंवा ॥ १७ ॥

पूर्वेषांपित्रादीनांवृत्तमाचरितमनुदिनमेवंवर्तमानस्य नातिदूरेअस्मदृष्टिगोचरेयदाश्चर्यमासीत्तन्निबोधेत्येकान्वयः ॥ १८ ॥

श्रीविजयध्वजः ।

किंतदिति तत्राह धर्मइति सत्याख्येनैकेनपदेनचरन्धर्मः वृषभोभूत्वावत्सरहितांमतरमिवाश्रुवदनामतएवविच्छायांविगतकांतिंगोरूपिणींगांभूमिमुपलभ्यापृच्छदित्येकान्वयः ॥ १९ ॥

"भद्रागौर्गोमतल्लिके"त्यभिधानं हेभद्रे ! तेतवात्मनः देहस्यानामयमारोग्यंकच्चित्किं म्लायताम्लानिंगच्छतामुखेनविच्छायांविगतकांतिरसीति यद्यस्मात्तस्माद्भवतीमंतराधिमनः पीडावतीमालक्षयेपश्यामि किंचकंचनदूरेबंधुपरोक्षप्रदेशेस्थितंबंधुंप्रतिशोचसीवेति ॥ २० ॥

---

क्रमसंदर्भः ।

जित्वा च निवृत्तिसमये कचिन्निन्दु त्य भ्रमन् स्वराज्यस्य नातिदूर एव साक्षात् कलिं ददर्श । तद्दूरगमने पुनः कृतधार्ष्ट्यत्वादिति ज्ञेयम् । तथैवाह तस्येति ॥ १८ ॥

कामिव कां तत्राह विवत्सामिव मातरमिति । यथा नष्टापत्यां स्वमातरं कोऽपि पृच्छति तथा तामपृच्छदित्यर्थः ॥ १९ ॥

कच्चिदिति । अत्रेषच्छन्दोऽनायासे वर्त्तते ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् इत्यत्रेषत्कर इतिवत् । ततश्चेषदनायासेनालक्षय इति योज्यम् ॥ । २० । २१ । २२ । २३ ॥

---

सुबोधिनी ।

आधिदैविकधर्मउपकारमाह तस्यैवमिति एवंवर्त्तमानस्यतस्यसतः निकटएवकिञ्चित्जातंतत् निबोधेतिसम्बन्धःवर्त्तमानस्यनातिदूरेवा क्रियापेक्षया देशनैकत्यंकालनैकत्यंतूक्तमेवधर्मः पृथिवीचराजानंबोधयितुमेवताहशरूपेणसमागता स्वस्वावस्थामन्योऽन्यमुखतोनिरूपयति कलिश्चाध्यात्मिकेरूपेनिराकृतेस्थानंप्रार्थयितुंतद्रूपेणप्रकटः ॥ १८ ॥

राजान्वेषणार्थमेवप्रकृतिमध्येमिलितौतदाहधर्मइति एकेनपदाचलन्सत्यात्मकेनअंशतोव्याख्यानेभुतंदेवतारूपत्वाच्च लौलिकानुपपत्तिः पादानांनामतश्चरूपतश्चभेदः युगभेदेनकल्पभेदेनचव्यवस्थापनीयः विच्छायांविवर्णांचरणोपुरुषस्याधः छायानिष्ठतितदभावेविच्छायत्ववर्णां पृथिवींगोरूपांकेचनकृष्णाद्यभावातछायाभावमाहुः कालेनभीतांवाअश्रुवदनास्मितिअश्रूणिवदनेयस्याः अनेनांतस्तापोभूमौवाष्पजलमेवजलं नवृष्टिजलंवंशरहितागौरिवकेवलंपितृणा मुपयोगिनींतथा पृथिव्यपिमरणार्थमेवोपयुज्यतेनजीवनार्थमितिमातृपदंव्याख्यातम् ॥ १९ ॥

आमयंज्ञात्वाव्यवहारानुसारेणपृच्छतिकच्चिदितिभद्रे ! इतिसंबोधनंपरीक्षिदास्तिपालकइतिज्ञापनार्थंवैकुंठेभगवद्भार्यासुखेनतिष्ठस्तितथापितवात्मनःपृथिवीरूपस्यअनामयंकच्चित् रोगस्तुतवनास्तिआधिः संभाव्यतेतदाह ईशषन्म्लायतामुखेनयतोविच्छायासि अतोभवतीमंतराधि लक्षयेअंतराआधिर्यस्याःसातांतत्राधिहेतूनुत्प्रेक्षते दशेंद्रियाणयंतःकरणचतुष्टयंततश्चतुर्दशशोकहेतूनुत्प्रेक्षतेदूरेबंधुमित्यादिना हेअंब ! दूरेस्थितंबंधुंभर्तारंवराहं हेअंब ! मांपुत्रंशोचसि ॥ २० ॥

---

श्रीविश्वनाथचक्रवर्त्ती ।

किञ्च स्निग्धेषु पांडवेषु विष्णोर्यानि सारथ्यादीनि कर्माणि तानि शृण्वन् । तथा विष्णोर्जगत्कर्त्तृकां प्रणतिंच शृण्वन् । तत्र पार्षदं सभापतित्वम् । सेवनं चित्तानुवृत्तिः । वीरासनं रात्रौ खड्गहस्तस्य तिष्ठतो जागरणम् ॥ १७ ॥

अन्विति शेषः । अन्वहमनुवर्त्तमानस्य ॥ १८ ॥

धर्म इति । युगारम्भक्षणात एव धर्मपृथ्वीकलयस्तथाभूतीभवन्तो लौकैरदृश्या अपि दिदृक्षणीयत्वादनुध्यायतः परीक्षितो योगजनेत्राभ्यां दृष्टा ज्ञेयाः । धर्मो वृषरूपः । विच्छायां हतप्रभाम् ॥ १९ ॥

आत्मनो देहस्य । अनामयमारोग्यम् । किंच अनुर्मध्ये आधिःपीडा यस्यास्ताम् तत्र कारणानि कल्पयन् पृच्छति दूरे वन्धुमिति ॥ २० ॥

---

सिद्धांतप्रदीपः ।

स्निग्धेषुस्नेहवत्सुविष्णोर्वासुदेवस्यसारथ्यादीनिकर्माणिशृण्वंस्तथाविष्णोर्जगत्कर्तृकांप्रणतिंचशृण्वन्नृपतिर्विष्णोश्चरणारविंदे भक्तिंकरोतिस्मचकारेत्यर्थः तत्रसारथ्यंसौत्यंपारिषदंसभ्यत्वंदौत्यंदूतकर्म ॥ १७ ॥

अन्वहंपूर्वेषांराजर्षीणांवृत्तिंवर्तमानस्यानुवर्तमानस्यसतः नातिदूरेशीघ्रमेवयदाश्चर्यमासीत्तन्मेमत्तोनिबोध शृणु ॥ १८ ॥

धर्मोवृषरूपः विच्छायांविगतप्रभांगोरूपधरांपृथ्वींवत्सहीनांमातरमिवपृच्छतिस्म अपृच्छदित्यर्थः ॥ १९ ॥

तदेवाह कच्चिदितिषड्भिः हेभद्रे ! कच्चित्तेतव आत्मनःदेहस्यानामयमारोग्यमस्ति अहंतुयतोविच्छायासि अतःईषन्म्लायतावैन्यवतामुखेनच अन्तर्मध्येआधिर्व्यथायस्यास्तथाभूतांभवतीमालक्षये तत्रबहून्हेतूनूतर्कयन्पृच्छति हेअम्ब ! दूरेस्थितंकञ्चनबन्धुंशोचसि २०

पादैर्न्यूनं शोचसि मैकपादमुतात्मानं वृषलैर्भोक्ष्यमाणम् ।
आहो सुरादीन् हृतयज्ञभागान् प्रजा उत स्विन्मघवत्यवर्षति ॥ २१ ॥
अरक्ष्यमाणाः स्त्रिय उर्व्वि ! बालान् शोचस्यथो पुरुषादैरिवार्त्तान् ।
वाचं देवीं ब्रह्मकुले कुकर्म्मण्यब्रह्मण्ये राजकुले कुलाग्र्यान् ॥ २२ ॥
किं क्षत्रबन्धून् कलिनोपसृष्टान् राष्ट्राणि वा तैरवरोपितानि ।
इतस्ततो वाशनपानवासःस्नानव्यवायोन्मुखजीवलोकम् ॥ २३ ॥
यद्वाम्ब ! ते भूरिभरावतारकृतावतारस्य हरेर्धरित्रि ! ।
अन्तर्हितस्य स्मरती विसृष्टा कर्माणि निर्व्वाणविलम्बितानि ॥ २४ ॥

भाषाटीका ।

समस्त जगत् जिनको प्रणाम करता है वे विष्णु पांडवों का सारथ्य करते हैं पार्षद वनते हैं सेवन करते हैं सख्य करते हैं दौत्य करते हैं वीरासन से उनकी रक्षा करते हैं स्तुति करते हैं प्रणाम करते हैं यह सुनकर राजा परीक्षित कृष्ण चरणारविन्द में भक्ति करते थे ॥ १७ ॥

प्रतिदिन पूर्व पुरुषों के वृत्त में वर्त्तमान उस राजा परीक्षित को शीघ्रही जो आश्चर्य हुआ वह मुझसे सुनौ ॥ १८ ॥

धर्म ( वृषरूप ) एक पादसे चलता बिना बछडा की मा के समान अश्रुमुखी कान्ति बिहीन गौ ( पृथिवी ) को प्राप्त होकर उससे पूँछने लगा ॥ १९ ॥

भद्रे ! तेरे आत्मा का अनामय ( आरोग्य ) तौ है ? छोटे से मलिन मुखसे तुम कान्तिहीन सी हो तुम अन्तर में कुछ चिन्तायुक्त दीखती हो । अम्ब ! क्या किसी दूरस्थित बंधु को सोचती हौ ॥ २० ॥

---

श्रीधरस्वामी ।

त्रिभिः पादैर्नूनम् अतएवैकपादम् । मा माम् । वृषलैरत ऊर्ध्वं भोक्ष्यमाणं पुंस्त्वमात्मनो विशेषणत्वात् । हृता यज्ञभागा येषां यज्ञाद्य करणात् ॥ २१ ॥

हे उर्वि पृथिव ! । भर्तृभिररक्ष्यमाणाः स्त्रियः । पितृभिररक्ष्यमाणान् बालान् । प्रत्युत तैरेव पुरुषादैरिव निर्दयैरार्त्तान् क्लिष्टान् । वाचं देवीं सरस्वतीं कुकर्मणि दुराचारे स्थिताम् । कुलाग्र्यान् ब्राह्मणोत्तमान् सेवकान् ॥ २२ ॥

उपसृष्टान् व्याप्तान् । अवरोपितानि उद्वासितानि । व्यवायो मैथुनम् । निषेधानादरेण सर्वतोऽशनादिषून्मुखं प्रवर्त्तमानं जीव लोकं वा ॥ २३ ॥

अम्ब ! हे मातर्धरित्रि ! ते तव यो भूरिभारः तस्य अवतारणार्थं कृतावतारस्य कर्माणि स्मरन्ती तेन विसृष्टा सती शोचसि । निर्वाणं विलम्बितम् आश्रितं येषु तानि । निर्वाणविडम्बितानीति पाठे निर्वाणं विडम्बितम् उपहसितं यैः । मोक्षादप्यधिकसुखानीत्यर्थः ॥ २४ ॥

---

श्रीवीरराघवः ।

किंवापादैस्त्रिभिर्न्यूनमएकः पादोयस्यतंमांप्रतिशोचसि- उतवृषलैः शूद्रप्रायैराजभिर्भोक्ष्यमाणंस्वात्मानंप्रत्येवशोचसि आहोस्विस्सुतः शून्यः यज्ञीयहविर्भागोयेषांतान् देवान्प्रतिउतस्वित्मघवतींद्रेऽवर्षतिसतिदुर्भिक्ष्यपीडिताःप्रजाःप्रति ॥ २१ ॥

यद्वाहेउर्वि ! पुरुषादैराक्षसैरिवनृसंसैरार्त्तान्पीडितान् वालकान्रक्षमाणाः स्त्रियःस्त्रीः प्रतिशोचसिकिं ब्रह्मकुलेकुकर्मणिदुर्वृत्तेसति देवस्यविष्णोः सम्बन्धिनींवाचंत्रयीं प्रतिउतराजकुलेऽब्रह्मण्येब्राह्मणेष्वसाधुनिसतिकुलाग्र्यान्ब्राह्मणान्प्रति ॥ २२ ॥

किंवाकलिनोपसृष्टान्क्षत्रियाधमान्प्रतियद्वातैःक्षत्रबन्धुभिरवरोपितान्युपद्रुतानिराष्ट्राणिप्रति उतइतस्ततःनिषिद्धदेशेजनेष्वशनाद्युन्मुख मशानाद्यभिलाषिणींजीवलोकंप्रति ॥ २३ ॥

यद्वाहेअम्ब ! हेधरित्रितवभूरिभारस्यावतारायहरणायकृतः अवतारोयेनतस्यहरेरधुनांतर्हितस्यश्रीकृष्णस्यहरेरितिकर्त्तरिषष्ठीतेनावि-सृष्टात्यक्तासतीतस्यकर्माणिचेष्टितानिनिर्वाणविलम्बितानिस्मरतीत्वंशोचसिनिर्वाणोमोक्षेविशेषेणालम्बितानिसंनिहितानिसाक्षात्कृतानीति यावत् यद्वानिर्वाणंसुखंविलम्बितमधुनांतरितंयेभ्यस्तानि ॥ २४ ॥

---

श्रीविजयध्वजः ।

अपिचत्रिभिः पादैर्न्यूनंहीनमेकपादंमामांप्रतिशोचसि उतपक्षांतरेआहोस्वित् वृषंधर्मंलीनंनष्टंकुर्वंतीतिवृषलाः राजाभासाः शूद्रप्रायास्तैर्भोक्ष्यमाणमात्मानंशोचसि अथोअथवा हृतोयज्ञेभागोयेषांतेतथोक्तास्तान्सुरादीन्शोचसिकिम् मघवतींद्रेऽवर्षतियज्ञाभावाद्वर्षमकुर्वतिसतिसस्यादिसमृद्ध्यभावेनदरिद्राः प्रजाउद्दिश्यशोचस्युतस्वित्अपिस्वित् ॥ २१ ॥

अथवाहेउर्वि ! भूः राजकुलेअब्रह्मण्येअरक्ष्यमाणास्त्रियउद्दिश्यशोचसिअथवापुरुषादैर्मनुष्यभक्षकैरिवस्थितैरुपद्रवकरैरार्तान्दुःखितान्बालांश्चशोचसिकिं ब्रह्मकुलेब्राह्मणकुलेकुत्सितकर्मणिदुष्प्रतिग्रहेलिखन्‌दिकमकुर्वतिसति राजकुलेअब्रह्मण्येब्राह्मणबहुमानमकृत्वातस्मात्करादिनादद्‌दानेसतिचकुलाग्र्यांश्रेष्ठांकुलीनवर्तमानामितिवादेर्वीर्योतमानांवाचंवेदवाणीमाचारकुलहीनाअध्येष्यंतीतिशोचसिस्वित् । "बिभेत्यल्पश्रुताद्वेदोमामयंप्रचालिष्यतीति" वचनात् ॥ २२ ॥

कलिनोपसृष्टानुपहतान्क्षत्रबंधून्शोचसि तैःक्षत्रबंधुभिः अवरोपितानिविनाशितानिराष्ट्राणिवाशोचसि यद्वा एवंवाइतस्ततः अनिक्रमेणाशनंचपानंचवासः स्नानंचव्यवायोग्राम्यधर्मश्चतेतथोक्ताः तेषूत्सुकमुत्कंठावंतंजीवलोकंप्राणिसमूहंकिंशोचसि ॥ २३ ॥

अथेतिपक्षांतरारंभः तेतवभूमेर्महतोभारस्यावतारोऽवरोपणंतस्मैभूरिभारावतारायकृतोऽवतारः स्वरूपप्रकाशोयेनसतथोक्तः तस्यांतर्हितस्यनिर्वाणंस्वस्वयोग्यंमोक्षंविशेषेणालंबयंतिपुरःस्थितंकारयंतीतितिनिर्वाणविलंबितानिनिर्वाणविलंबयंत्यपहरंतीतिवाहरेःकर्माणिचरितानिस्मरंतीहरिणाहमद्यविसृष्टानन्वितिशोचस्यपिकिम् ॥ २४ ॥

---

क्रमसंदर्भः ।

निर्वाणविडम्बितानीत्यत्र निर्वाणं विडम्बितं यैरिति विग्रहः । निर्वाणस्य सुखादित्वात् पूर्वनिपातः । डलयोरेकत्वात् पाठद्वयमपि समानार्थम् ॥ २४ ॥

---

सुबोधिनी ।

शोकेहेतुः पादैर्न्यूनमिति आत्मानंशरीरंवापृथिवीरूपरसोऽत्रशोकहेतुः वृषलैः शूद्रैः हृतयज्ञभागादेवाः बहवः मघवतिअवर्षतिअन्नरहिताः प्रजाः ॥ २१ ॥

यादाअरक्षमाणास्त्रियः बालाश्चहेउर्वि ! संतोषाभावेमनोवैक्लव्यंमलमोक्षोवा पुरुषादैः राक्षसैरिवआर्त्तान् पीडितान्बालान्वाचंदेवींवेदरूपांचक्षुरेषांकुकर्मणिब्राह्मणकुलेब्राह्मणाहितैराजकुलेकुलाग्र्यान्ब्राह्मणान्श्रोतृरूपान् ॥ २२ ॥

क्षत्रबंधून्क्षत्रियाधमान्कालिनोपसृष्टानितिसर्वदोषसहितान्ब्राह्मणरूपान् तैरवरोहितानिउद्वासितानिराष्ट्राणिदेशाः बहुशःइतस्ततःविधिनिषेधपालनव्यतिरेकेणभोजनपानास्थितिस्नानसंभोगोन्मुखंजीवलोकंबुद्धिरूपम् ॥ २३ ॥

तवभूरिभारावतारार्थंकृतावतारस्यभगवतोवासुदेवस्यसर्वदुःखहर्तुःहेधरित्रि ! सांप्रतमंतर्हितस्यतेनैवाविसृष्टाकर्माणिउदारचरित्राणिअनधिकारिषुवर्त्तमानानिवारणार्थंविलंबितानिनिर्वाणप्रदत्वात्तूष्णींस्थितानिचित्तरूपाणिस्मरतीतानिशोचसि ॥ २४ ॥

---

श्रीविश्वनाथचक्रवर्त्ती ।

मा माम् । वृषलैर्म्लेच्छैरत ऊर्द्धम् आत्मानं भोक्ष्यमाणम् । पुंस्त्वमात्मपदविशेषणत्वात् ॥ २१ ॥

भर्त्तृभिररक्ष्यमाणाः स्त्रियः । पितृभिररक्ष्यमाणान् बालान् प्रत्युत तैरेव पुरुषादैरिव निर्दयैरार्त्तान् क्लेशितान् । वाचं पाण्डित्यलक्षणां सरस्वतीम् कुकर्म्मणि दुराचारे । ब्राह्मणभक्तिहीनेऽपि राजवंशे उत्पन्नान् कुलाग्र्यान् कुलीनत्वेन ख्यापितान् ॥ २२ ॥

उपसृष्टान् व्याप्तान् । अवरोपितानि उद्वासितानि ( भूमेः ) भुवो ( भरः ) भारस्तस्य अवतारणार्थं कृतोऽवतारो येन तस्य कर्माणि स्मरन्ती । यतस्तेन त्वं विसृष्टा त्यक्ता । निर्वाणं कैवल्यं विडम्बितं स्वमाधुर्येण उपहासास्पदीकृतं यैस्तानि । डलयोरैक्यात् पाठद्वयमपि समानार्थम् ॥ २३ । २४ ॥

---

सिद्धांतप्रदीपः ।

किंवात्रिभिः पादैर्न्यूनम् एकः पादोयस्यतथाभूतंमामांशोचसि अथवातः परमात्मानंवृषलैः शूद्रप्रायैराजन्यैर्भोक्ष्यमाणंशोचसिआहोस्वित् हृतानष्टाश्छिन्नायज्ञभागायेषांतान् सुरादीन्देवर्षिपितॄन्शोचसि उतप्रजाःदुर्भिक्षकर्शिताः ॥ २१ ॥

हेउर्विवसुंधरे ! अरक्षमाणाभर्त्रादिभिरितिशेषः स्त्रियःशोचसि अथोअथवापुरुषादैरिवातिनिर्दयैः पित्रादिभिर्बालान् आर्त्तान्क्लिष्टान्शोचसिकुकर्मणिकुत्सितकर्मपरंदेवींधोतमानांवाचंसरस्वतींकिंवाशोचासिअब्रह्मण्यंब्राह्मणानामहितकारिणिकुलाग्र्यान् द्विजोत्तमान्जीविकार्थंस्थितान्शोचसि ॥ २२ ॥

इदं ममाचक्ष्व तवाधिमूलं वसुन्धरे ! येन विकर्शितासि ।
कालेन वा ते वलिनां वलीयसा सुरार्च्चितं किं हृतमम्ब ! सौभगम् ॥ २५ ॥

धरण्यु वाच । भवान् हि वेद तत् सर्व्वं यन्मां धर्म्मानुपृच्छसि ।
चतुर्भिर्वर्त्तसे येन पादैर्लोकसुखावहैः ॥ २६ ॥
सत्यं शौचं दया क्षान्तिस्त्यागः सन्तोष आर्जवम् ।
शमो दमस्तपस्साम्यं तितिक्षोपरतिः श्रुतम् ॥ २७ ॥
ज्ञानं विरक्तिरैश्वर्य्यं शौर्य्यं तेजो वलं स्मृतिः ।
स्वातन्त्र्यं कौशलं कान्तिर्धैर्य्यं मार्द्दवमेव च ॥ २८ ॥

सिद्धांतप्रदीपः ।

किंवाकलिनोपसृष्टान्व्याप्तान् आहोस्वित्तैः कलिनोपसृष्टैरवरोपितानि उद्वासितानि किम्वाइतस्ततः योग्यतामनपेक्ष्यैव अशना द्युन्मुखंजीवलोकंशोचसि ॥ २३ ॥

यद्वाहेअम्ब ! मातः धरित्रि तेतवयोभूरिभरस्तस्यावतारायकृतोवतारोयेनतस्यहरेः प्रत्यन्तर्हितस्यनिर्वाणमोक्षंविलम्बितमाश्रितंयेषु तानिकर्माणिस्मरतीसतीत्वंशोचसिकियतोविसृष्टातेनत्यक्तासि ॥ २४ ॥

---

भाषाटीका ।

क्या तीन पादों से रहित मुझ एक पाद को सोचती हौ ? वा शूद्र राजाओं करके भोक्ष्यमाण अपने को सोचती हौ ? वा हत (नष्ट) यज्ञभाग देवतादिकों को सोचती हौ ? वा अवर्षा से दुःखी प्रजा को सोचती हौ ? ॥ २१ ॥

हे उर्वि ! पुरुषों से अरक्षित स्त्रियों को सोचती हौ ! वा राक्षसों के समान निर्दय माता पिताओं से पीडित बालकों को सोचती हौ ! वा दुराचारी ब्राह्मणों के कुल में सरस्वती देवी का सोच करती हौ वा अब्रह्मण्य राजकुल में उत्तम ब्राह्मण दास्य करते हैं उन्हें सोचती हौ ! ॥ २२ ॥

क्या कलियुग से व्याप्त क्षत्र वंधुओं को सोचती हौ ! वा क्षत्र वंधुओं ने उच्छिन्न किये देशों को सोचती हौ ! किम्वा जहां चाहें तहां ( निषेध विधिन मानकर ) भोजन करना पान करना वास करना स्नान करना. इन में उन्मुख जीव लोक को सोचती हौ ॥ २३ ॥

यद्वा हे अम्ब ! धरित्रि ! तुम्हारे भूरि भार के उतारने को कृतावर हरि के निवार्ण विडम्बित कर्मों को स्मरण करती हौ ! क्योंकि वे तुमको छोड़कर अन्तर्ध्यान होगये है ॥ २४ ॥

---

श्रीधरस्वामी ।

हे अम्ब ! ते सौभाग्यं कालेन वा हृतम् ॥ २५ ॥

भवान् जानात्येव । तथापि वक्ष्यामीत्याह । येन हेतुभूतेन त्वं चतुर्भिः पादैर्वर्त्तसे यत्र च सत्यादयो गुणा न वियन्ति ( न क्षीयन्ते स्म ) तेन श्रीनिवासेन रहितं लोकं शोचामीति षष्ठेनान्वयः ॥ २६ ॥

सत्यं यथार्थभाषणम् । शौचं शुद्धत्वम् । दया परदुःखासहनम् । क्षान्तिः क्रोधप्राप्तौ चित्तसंयमनम् । त्यागोऽर्थिषु मुक्तहस्तता । सन्तोषः अलंवुद्धिः । आर्ज्जवम् अवक्रता । शमो मनोनैश्चल्यम् । दमो वाह्येन्द्रियनैश्चल्यम् । तपः स्वधर्म्मः । साम्यम् अरिमित्राद्यभावः । तितिक्षा परापराधसहनम् । उपरतिः लाभप्राप्तावौदासीन्यम् । श्रुतं शास्त्रविचारः ॥ २७ ॥

ज्ञानम् आत्मविषयम् । विरक्तिर्वैतृष्ण्यम् । ऐश्वर्य्यं नियन्तृत्वम् । शौर्य्यं संग्रामोत्साहः । तेजः प्रभावः । वलं दक्षत्वम् । स्मृतिः कर्त्तव्यार्थानुसन्धानम् । स्वातन्त्र्यम् अपराधीनता । कौशलं क्रियानिपुणता । कान्तिः सौन्दर्य्यम् । धैर्य्यम् अव्याकुलता । मार्द्दवं चित्ताकाठिन्यम् ॥ २८ ॥

---

श्रीवीरराघवः ।

हेवसुन्धरे ! तवाधेर्मूलमिदंमुपस्थितंमह्यमाचक्ष्वाख्याहियेनत्वंविकर्षिताकृषत्वंप्राप्तासितस्याधेर्मूलमित्यर्थः हेअम्ब ! सुरैरपिवहुमन्तव्यंतवसौभगंस्पृहणीयंसौंदर्यंवलिनामपिवलीयसाकालेनकिंवापहृतम् ॥ २५ ॥

### श्रीवीरराघवः ।

एवमुक्ताधरण्याहभवानित्यादिदशभिःतन्ममाधिमूलंसर्वंनूनंभवान्वेदजानास्येवकुतः यद्यस्माद्धर्मान्पृच्छसिअजानतोधर्मप्रश्नोनोपपन्न इतिभावः अथापिकिंतादितिचेद्येनकारणेनत्वंलोकानांसुखावहैश्चतुर्भिः पादैर्वर्त्तसेऽवर्तथाः अधुनायेनकारणेनविनैकपादेनवर्त्तसेतदेवममा प्याधिमूलमित्यर्थः ॥ २६ ॥

कारणविशेषजिज्ञासायांतदुपपादयतिमत्यमित्यादिपंचभिः सत्यादयोऽन्येचवहवोमहत्त्वमिच्छद्भिर्जनैःप्रार्थनीयागुणाःनित्याःकदाचिद पियस्मिन्नवियंतिनव्ययंति तेनगुणानांपात्रेणमुख्याश्रयेणश्रीनिवासेनश्रीकृष्णेनसांप्रतमधुनारहितमतएवपाप्मनापापेनकलिनाईक्षितंलोकं प्रत्यहंशोचामीत्यन्वयःतत्रसत्यंभूतहितत्ववाचिकंवा शौचंहेयप्रतिभटत्वं दयापरदुःखासहिष्णुत्वं क्षांतिःपरापराधसहिष्णुता त्यागअनादरः पूर्णकामत्वप्रयुक्तः तथाचश्रूयते“सर्वमिदमभ्यात्तोवाक्यनादर”इति आत्मपर्यंतवदान्यत्वंवात्यागः संतोषः कर्हिचिदपि क्लेशराहित्यम् आर्जवंमनोवाक्कायानामैक्यरूपम् शमोमनोनिग्रहः दमोवाह्येंद्रियनिग्रहः तपआलोचनंजगद्व्यापारोपयुक्तं साम्यमरिमित्रादिराहित्यं तितिक्षाद्वंद्वाप्रतिहतत्वम् उपरतिर्वृथाव्यापारोपरतिः श्रुतंसर्वशास्त्रार्थयाथात्म्यावित्त्वम् ॥ २७ ॥

ज्ञानमाश्रितानिष्टपरिहारेष्टप्रापणोपयुक्तं विरक्तिर्विषयेषुनिस्पृहत्वं विषयानाकृष्टचित्तत्वंवा ऐश्वर्यंस्वातिरिक्तसर्वनियंतृत्वं शौर्यंयुद्धे ष्ववैमुख्यं तेजोधृष्टता वलंप्रसिद्धं स्मृतिःसत्स्वपिविपुलेषु“अहंप्रजापतीनांचसर्वेषामीश्वरःप्रभुःममविष्णुरचिंत्यात्मेतिब्रह्मवचनम् उपकार विषयस्मरणंस्वातंत्र्यमन्यानपेक्षत्वं कौशलंनैपुण्यं कांतिः“नतत्रसूर्योभाती”ति श्रुत्युक्तविधादीप्तिः धैर्यंवीर्यं तत्रयुद्धेस्वगृहइवप्रवेशसाम र्थ्यम् मार्दवमक्रूरत्वंस्वातंत्र्यमन्यानपेक्षकौशलमेवस्वातंत्र्यं सौभगंकांतिरितिपाठेसौभगंस्पृहणीयत्वम् ॥ २८ ॥

---

### श्रीविजयध्वजः ।

येनमनोदुःखेनविकर्शिताकृशतरासिहेवसुंधरे!तदिदमाधेर्मनःपीडायामूलंममाख्याहीत्यन्वयः अथवासंप्रतिप्रभुणासमर्थेनवलिनासर्वाग पुष्टेनकालेनतवसुरार्चितंसौभाग्यमवलीढंग्रस्तंचेत्यन्वयः ॥ २५ ॥

धर्मेणपृष्टाभूमिः तंप्रतिब्रूतइत्याह भवानिति हेधर्म ! यदाधिमूलंत्वंमामनुपृच्छसितत्सर्वंभवान्वेदहि तथापिवक्ष्यइतिशेषः येनश्रीकृष्णे नत्वंलोकसुखावहैः तपःशौचदयासत्याख्यैश्चतुर्भिः पादैःकलावपिवर्तसेभवर्ततेत्यर्थः ॥ २६ ॥

यत्रयस्मिन्श्रीकृष्णेइमेउक्ताः सत्यादयोऽनुक्ताअन्येचमहागुणाः प्रत्येकमनन्ताःसन्ति कीदृशाःमहत्त्वमिच्छद्भिःपुरुषैःप्रतिविम्बेतारश्च गुणलाभायप्रार्थ्याउपास्यास्तेकर्हिचिद्यतोनयांतिचअभिन्नत्वादित्येतमर्थंस्मेत्यनेनं श्रुतिसिद्धंदर्शयति हेदेवोत्तम ! तेनगुणपात्रेणश्री निवासेनसांप्रतंरहितंपाप्मनाकलिनेक्षितं दृष्टमात्मनंमांचभवन्तंधशोचामीत्यन्वयः सत्यंनिर्दुःखानन्दानुभवः भूतहितयथार्थभाषणंवा शौचंनित्यशुद्धिः प्रकृतिसम्वन्धाभावान्नित्यंबाह्याभ्यन्तरशुद्धिताहरेरेव अन्यत्र मृज्जलाभ्यांरागराहित्येन । दयासज्जनेष्वार्तप्राणिषु चित्त द्रवत्वंवाउभयत्रसमम्।दानंभक्ताभक्तमध्यमेषुसुखदुःखमिश्रफलावितरणम्। अन्यत्रधर्मार्थपात्रेवित्तविश्राणनंत्यागोऽस्वकीयेस्वकीयताबुद्धय परपर्यायमिथ्याभिमानोत्सन्नता । अन्यत्रसंन्यासः । सन्तोषःस्वरूपानन्दपानेनान्यत्रालम्वुद्धिः अन्यत्रयदृच्छयाप्राप्तभोगेष्वलम्प्रत्ययः आर्जवंव्यवहारेष्ववक्रतामनसिवचसिचैकविधताउभयत्रसमानम् । शमःस्वतः प्रियरूपत्वादिदंप्रियमिदमप्रियमितिबुद्धिविधुरता शंरूपत- यामीयतइतिवा । अन्यत्रबुद्धेर्भगवन्निष्ठता दमःइन्द्रियाणांस्ववशत्वमुभयत्रसमानं स्वतःपरतइतिविशेषः शत्रुनिग्रहोवा । तपआलोचनं मुक्तिज्ञानम् । अन्यत्रकृच्छ्रचांद्रायणाद्युपवासनियमः । साम्यंसर्वावतारांतर्यामिरूपेषुनिर्दोषगुणपूर्णत्वेनसमता यथास्थितवस्तुदर्शनंवाउभ यत्रसमानम् नतुसर्वत्रशत्रुमित्रभावराहित्यंतितिक्षामहापराधसहनंयथाभृगोःपादाहत्यपराधम् अन्यत्रद्वन्द्वसहिष्णुता उपरतिःस्वरूपरतिः। उपःमुख्यप्राणःतस्मिन्रतिर्वाऊरुद्रः * अन्यत्रकाम्यकर्मनिवृत्तिः कृतकृत्यतयाव्यर्थसर्वव्यवहारोपरमोवा । श्रुतंसर्वत्रभवणशक्तिःश्रोते त्यादेः श्रुतिप्रसिद्धतावा अन्यत्रशास्त्रार्थतात्पर्यावधारणंश्रुत्यर्थविचारोवा ॥ २७ ॥

ज्ञानंसर्वज्ञतान्यत्रअपरोक्षापरोक्षभेदेनपरमार्थविषयं विरक्तिःस्वेतरविषयेअसारताबुद्धिः अन्यत्रशब्दादिविषयरागराहित्यम् । ऐश्वर्यं समस्तजगदीशितृत्वसामर्थ्यम् अन्यत्राणिमादिकं शौर्यंसंग्रामेष्वपलायित्वमुभयत्रसमानं तेजःपरैरप्रधृष्यत्वम् अन्यत्रब्रह्मवर्चसं धृतिः सर्वधारणम्“एषसेतुर्विधृतिरि”तिश्रुतेः विकारहेतावविकारित्वंवा अन्यत्रजिह्वोपस्थजयः स्मृतिरतीतानागतानंतब्रह्माण्डादिस्मरणम् अन्यत्रावगतपदार्थानुसन्धानं स्वातंत्र्यमपराधीनत्वम् अन्यत्रस्वतन्त्रोविष्णुःतदधीनत्वंकुमारीकंकणवदेकाकित्वंवा कौशलंसर्वकर्माणिवैचि त्र्यकरणबुद्धिः अन्यत्रशिल्पविद्यावैशारद्यं कान्तिर्देहगतादीप्तिः अन्यत्रभगवद्भक्तिकामनं सौभगंशुभैकभागित्वम् अन्यत्रलोकमनोहरत्वं मार्दवंभक्तेषुमृदुत्वमुभयत्रसमानं क्षमाक्रोधासमुत्थितिः उभयत्रसमम् ॥ २८ ॥

---

### क्रमसंदर्भः ।

विकर्शितासि विशेषेण कृशीकृतासि ॥ २५ ॥ २६ ॥

तत्र सत्यमित्यादि । सत्यं यथार्थभाषणं ( १ ) शौचं शुद्धत्वं ( २ ) दया परदुःखासहनम् ( ३ ) अनेन शरणागतपालकत्वं ( ४ ) भक्तसुहृत्त्वञ्च ( ५ ) क्षान्तिः क्रोधोत्पत्तौ चित्तसंयमः ( ६ ) त्यागो वदान्यता ( ७ ) सन्तोषः स्वतस्तृप्तिः ( ८ ) आर्जवमक्रूरता ( ९ ) अनेन सर्व्वशुभङ्करता ( १० ) शमो मनोनैश्चल्यम् ( ११ ) अनेन सुदृढव्रतत्वमपि ( १२ ) दमोवाह्येन्द्रियनैश्चल्यं ( १३ ) तपः क्षत्रियत्वादि-

* अनेन उरुद्रंपातीतिउपःमुख्यप्राणइत्यसूचि ।

क्रमसन्दर्भः ।

लीलावतारानुरूपः स्वधर्मः ( १४ साम्यं शत्रुमित्रादिबुद्ध्यभावः ( १५ ) तितिक्षा स्वस्मिन् परापराधस्य सहनम् ( १६ ) उपरतिर्लाभप्राप्तावौदासीन्यं ( १७ ) श्रुतं शास्त्रविचारः ( १८ ) ॥ २७ ॥

ज्ञानं पञ्चविधं बुद्धिमत्त्वं ( १९ ) कृतज्ञत्वं ( २० ) देशकालपात्रज्ञत्वं ( २१ ) सर्व्वज्ञत्वम् ( २२ ) आत्मज्ञत्वञ्च ( २३ ) विरक्तिरसद्विषयवैतृष्ण्यम् ( २४ ) ऐश्वर्य्यं नियन्तृत्वं ( २५ ) शौर्य्यं संग्रामोत्साहः ( २६ ) तेजः प्रभावः २७ ) अनेन प्रतापश्च स च प्रभावविख्यातिः ( २८ ) बलं दक्षत्वं तच्च दुष्करक्षिप्रकारित्वं ( २९ ) स्मृतिः कर्त्तव्यार्थानुसन्धानं धृतिरितिपाठे क्षोभकारणे प्राप्तेऽप्यव्याकुलत्वं (३०) स्वातन्त्र्यमपराधीनता ( ३१ ) कौशलं त्रिविधं क्रियानिपुणता ( ३२ ) युगपद्भूरिसमाधानकारितालक्षणा चातुरी ( ३३ ) कलाविलासविदग्धतालक्षणा वैदग्धी च ( ३४ ) कान्तिः कमनीयता एषा चतुर्विधा अवयवस्य ( ३५ ) हस्ताद्यङ्गादिलक्षणस्य ( ३६ ) वर्णरसगन्धस्पर्शशब्दानां तत्र रसश्चाधरचरणस्पृष्टवस्तुनिष्ठो ज्ञेयः ( ३७ ) वयसश्चेति ( ३८ ) एतया ( कान्त्या ) नारीगणमनोहारित्वमपि ( ३९ ) धैर्य्यमव्याकुलता ( ४० ) मार्द्दवं प्रेमार्द्रचित्तत्वम् ( ४१ ) अनेन प्रेमवश्यत्वञ्च ( ४२ ) ॥ २८ ॥

---

सुबोधिनी ।

इदंवक्ष्यमाणंभवत्येवतवाधिमूलं तत्रसंमतिमेवआचक्ष्वहेवसुंधरे ! सर्वरत्नादिसहितेश्रृंगारप्रियेयेनरहितेनत्वंविकर्षितासिततः स्वयमेवाह यत्कलिनाकालेनवलिनासुरार्चितंतवसौभाग्यम् भगवत्स्थितिरूपंतद्धररूपमितिकालेनचिन्हादीनामपिहरणात् ॥ २५ ॥

तत्रधर्मोक्तंसर्वमेवहेतुमंगीकृत्यसर्वेषांमूलंभगवद्गमनमितियत्रैवतद्राहित्यंतमेवशोचामीत्याह भवान्हिवेदेतियुक्तिरुक्तैव धर्मस्यज्ञानमपिप्रमाणमुत्प्रेक्षितमितिप्रमितमेवस्वात्मनिप्रमितत्वात्अतस्तदाह चतुर्भिवर्त्तसेयेनेतिद्वापरांतेस्वभावतएवपादत्रयंगच्छति तद्वापित्वंयेनभगवतांकृत्वाचतुर्भिः पादैर्वर्त्तसेतेपादाःसर्वसुखहेतवः ॥ २६ ॥

तेचभगवन्निष्ठाःतत्संबंधादेवान्यत्रभवंतितेनगुणपात्रेणरहितंसर्वमेवशोचामीतिवक्तुंगुणान्गणयतिभगवदीयान् सत्यमित्यादिनासत्यंयथार्थभाषणंशौचंशुद्धत्वंदयापरदुःखप्रहाणेच्छा क्षांतिः क्रोधप्राप्तौचित्तसंयमनंत्यागः अर्थिषुमुक्तहस्तता संतोषः अलंबुद्धिः आर्जवमवक्रताशमोमनोनैश्चल्यं तपःस्वधर्मः साम्यमरिमित्राद्यभावः तितिक्षाअपराधसहनम्उपरतिःलाभप्राप्तावौदासीन्यं स्मृतंशास्त्रविचारः ॥ २७ ॥

ज्ञानमात्मविषयं विरक्तिर्वितृष्णताऐश्वर्यंनियंतृत्वंशौर्यंसंग्रामोत्साहः तेजः प्रभावः बलंदक्षत्वं स्मृतिःकर्त्तव्यार्थानुसंधानं स्वातंत्र्यमपराधीनताकौशलंक्रियानिपुणता कांतिः सौन्दर्यंधैर्यमव्याकुलतामार्दवंचित्ताकाठिन्यम् ॥ २८ ॥

---

श्रीविश्वनाथचक्रवर्त्ती ।

विकर्शितासि विशेषेण कृशीकृतासि ॥ २५ ॥

ननु यद्यप्यहं जानामि तदपि त्वन्मुखात् श्रोतुमिच्छामीत्यत आह चतुर्भिरिति । येन हेतुभूतेन त्वं चतुर्भिः पादैर्वर्त्तसे इति वर्त्तमानसामीप्ये वर्त्तमान प्रयोगः । तेन श्रीनिवासेन रहितं लोकं शोचामीति षष्ठेनान्वयः ॥ २६ ॥

सत्यं यथार्थभाषणम् । शौचं शुद्धत्वम् । दया परदुःखासहनम् । अनेन शरणागतपालकत्वं भक्तसुहृत्त्वंच । क्षान्तिः क्रोधोत्पत्तौ चित्तसंयमः । त्यागो वदान्यता । संतोषः स्वतस्तृप्तिः । आर्जवमवक्रता । शमो मनोनैश्चल्यम् अनेन सुदृढव्रतत्वमपि । दमो वाह्येन्द्रियनैश्चल्यम् । तपः क्षत्रियत्वादिलीलारूपः स्वधर्मः । साम्यं शत्रुमित्रादिबुद्ध्यभावः । तितिक्षास्वस्मिन् परापराधस्य सहनम् उपरतिर्भोगप्राप्तावौदासीन्यम् । श्रुतं शास्त्रविचारः ॥ २७ ॥

ज्ञानं सर्वज्ञत्वं कृतज्ञत्वादिकंच । विरक्तिर्वैतृष्ण्यम् । ऐश्वर्यं नियन्तृत्वम् । शौर्यं संग्रामोत्साहः । तेजः प्रभावः । बलं दक्षत्वम् । स्मृतिः कर्त्तव्यार्थानुसन्धानरूपा । स्वातन्त्र्यम् अपराधीनता । कौशलं कलाविलासादिवैदग्धी । कान्तिः कमनीयता । धैर्यमव्याकुलत्वम् । मार्द्दवं सुकुमारत्वं प्रेमार्द्रत्वंच ॥ २८ ॥

---

सिद्धांतप्रदीपः ।

हेवसुन्धरे ! येनआधिमूलेनत्वमाधिद्वाराविकर्षितासितदिदमाचक्ष्वभाख्याहिहेअम्ब ! सुरार्चितंसुरैरपिपूजितंतवसौभगंकालेनकिंवाहृतम् ॥ २५ ॥

एवमुक्ताधरण्युवाचभवानित्येकादशभिः यन्मामाधिमूलंपृच्छसितत्सर्वंभवान्वेदजानात्येवतथापिशृणु येनभगवताहेतुभूतेनलोकसुखावहैश्चतुर्भिःपादैस्त्वंवर्तसेयत्रचसत्यादयोगुणानवियंतितेनश्रीनिवासेनरहितं लोकंशोचामीतिषष्ठेनान्वयः ॥ २६ ॥

सत्यमाप्ततमत्वम् यथार्थबोधकवेदप्रवर्तकत्वात् ॥ १ ॥ शौचंनित्यशुद्धविग्रहादिमत्वम् ॥ २ ॥ दयापरदुःखासहिष्णुत्वम् ॥ ३ ॥ क्षांतिर्जितक्रोधत्वम् ॥ ४ ॥ त्यागोवदान्यत्वम् ॥ ५ ॥ सन्तोषोनित्याप्तकामत्वं ॥ ६ ॥ आर्जवमवक्रत्वं ॥ ७ ॥ शमःस्थिरमनस्कत्वम् ॥८॥ दमोवाहेंद्रियस्थैर्यम् ॥ ९ ॥ तपःआलोचनम् ॥ १० ॥ साम्यमरिमित्रोदासीनराहित्यम् ॥ ११ ॥ तितिक्षाद्वेषशून्यत्वम् ॥ १२ ॥ अयुक्तव्यापाराद्दुपरतिः ॥ १३ ॥ श्रुतंसर्ववेदशास्त्रार्थयाथात्म्यवित्त्वम् ॥ १४ ॥ २७ ॥

प्रागल्भ्यं प्रश्रयः शीलं सह ओजो बलं भगः ।
गाम्भीर्य्यं स्थैर्य्यमास्तिक्यं कीर्त्तिर्म्मानोऽनहंकृतिः ॥ २९ ॥
एते चान्ये च भगवन्नित्या यत्र महागुणाः ।
प्रार्थ्या महत्त्वमिच्छद्भिर्न वियन्ति स्म कर्हिचित् ॥ ३० ॥
तेनाहं गुणपात्रेण श्रीनिवासेन साम्प्रतम् ।
शोचामि रहितं लोकं पाप्मना कलिनेक्षितम् ॥ ३१ ॥
आत्मानञ्चानुशोचामि भवन्तञ्चामरोत्तमम् ।
देवानृषीन् पितॄन् साधून् सर्व्वान् वर्णांस्तथाश्रमान् ॥ ३२ ॥

सिद्धांतप्रदीपः ।

ज्ञानंभूतभविष्यवर्तमानसर्वपदार्थविषयकम् ॥ १५ ॥ विरक्तिर्विषयेषुवैराग्यम् ॥ १६ ॥ ऐश्वर्यंसर्वचेतननियंतृत्वम् ॥ १७ ॥ शौर्यंसर्व विजयसामर्थ्यम् ॥ १८ ॥ तेजःसर्वब्रह्मादिस्तवयर्यैतैरजेयत्वेसतिपराभिभवनसामर्थ्यम् ॥ १९ ॥ बलंविश्वधारणसामर्थ्यम् ॥ २० ॥ स्मृतिः यथापूर्वंविश्वरचनानुसन्धानम् ॥ २१ ॥ स्वातन्त्र्यम् सर्वनियंतृत्वेसतिस्वायत्तत्वम् ॥ २२ ॥ कौशलंविश्वसृजनपालनादिक्रियानैपुण्यम् ॥ २३ ॥ कान्तिर्निरतिसयसौंदर्य्यम् ॥२४॥ धैर्यमव्याकुलत्वेसतिप्रतिज्ञापालकत्वम् ॥२५॥ मार्दवम् मनोवाक्कायव्यापारसाम्यम् ॥२६ ॥२८॥

---

भाषाटीका ।

हे वसुन्धरे ! यह अपनी आधि का मूल तुम मुझसे कहो जिस से तुम इतनी कृश हो । किम्वा बलवानों से भी बलवान् काल ने आज तुम्हारा सुरगणार्चित सौभाग्य हरलिया है ॥ २५ ॥

पृथ्वी बोली हे धर्म ! तुम जो मुझ से पूछते हो सो स्वयं सब जानते हो । जिस से तुम लोक सुखद चार पादों से वर्त्तते हो ॥ २६ ॥

और सत्य शौच दया क्षान्ति त्याग संतोष ऋजुता शम दम तप साम्य तितिक्षा उपरति शुभ ज्ञान वैराग्य ऐश्वर्य शूरता तेज बल स्मरण स्वातन्त्र्य कौशल कांति धैर्य मार्दव प्रागल्भ्य प्रश्रय शील सद ओज बल भग गांभीर्य स्थैर्य आस्तिक्य कीर्तिमान और अनहङ्कार उनतालीस तो ये और अन्य भी ब्रह्मण्यत्व शरण्यत्वादि महद् गुण जिन में नित्य स्वाभाविक हैं कि जिनका कभी क्षय नहीं जिनके इन गुणों को महत्त्व इच्छा करने वाले प्रार्थना करते हैं ॥ २७ । २८ । २९ ॥

---

श्रीधरस्वामी ।

प्रागल्भ्यं प्रतिभातिशयः । प्रश्रयो विनयः । शीलं सुस्वभावः । सहओजोबलानि मनसो ज्ञानेन्द्रियाणां कर्म्मेन्द्रियाणाञ्च पाटवानि । भगः भोगास्पदत्वम् । गाम्भीर्य्यमक्षोभ्यत्वम् । स्थैर्य्यमचञ्चलता । आस्तिक्यं श्रद्धा । कीर्त्तिर्यशः । मानः पूज्यत्वम् । अनहङ्कृतिर्गर्व्वाभावः ॥ २९ ॥

एते एकोनचत्वारिंशत् अन्ये च ब्रह्मण्यत्वशरण्यत्वाद्यो महान्तो गुणा यस्मिन् । नित्याः सहजाः । न वियन्ति न क्षीयन्ते स्म ३० तेन गुणपात्रेण गुणालयेन । पाप्मना पापहेतुना ॥ ३१ ॥ ३२ ॥

---

श्रीवीरराघवः ।

प्रागल्भ्यंसभासुधार्ष्ट्यंप्रश्रयोमहत्सुविनयः शीलंसद्वृत्तिः सहः प्राणस्यस्वाभाविकसामर्थ्यंओजइंद्रियादिजनितवंधनधारणसामर्थ्यं भगोज्ञानाद्युत्कर्षः गाम्भीर्यंदुःखग्राह्याभिप्रायत्वंस्थैर्यंक्रोधनिमित्तैरविकारः आस्तिक्यंशास्त्रार्थविश्वासः कीर्त्तिर्यशःमानः पूजार्हताअनहंकृतिर्देहात्माभिमानराहित्यम् ॥ २९ । ३० ॥

श्रीयतेब्रह्मादिभिरितिश्रीःलक्ष्मीःतस्याः निवासःश्रीनिवासइत्यभिप्रेतम् ॥ ३१ ॥

आत्मानंमांभवंतंचानुशोचामीत्यर्थः ॥ ३२ ॥

---

## श्रीविजयध्वजः ।

प्रागल्भ्यंधाष्ट्र्यमुभयत्रसमं प्रश्रयोविनयः समं शीलंलोकमनोहरस्वभावत्वंसमं सहःसहनशक्तिःप्राणस्यस्वाभाविकसामर्थ्यं वास मम् ओजःपराभिभवशक्तिः अन्यत्रमानसवलं । वलंस्वेच्छाकरणशक्तिः अन्यत्रशरीरादिधारणसामर्थ्यंवा भगःषड्गुणवत्त्वंभाग्यंवा अन्यत्रोत्पत्त्यादिज्ञानं गाम्भीर्यंपरैरनवगाह्यत्वम् अन्यत्रस्तिमितत्वं स्थैर्यंनित्याकंपनम् अन्यत्रधर्मादचलनम् आस्तिक्यंवेदाद्युक्तमस्तीति बुद्धिः अन्यत्रगुरुवाक्येषुश्रद्धानताकीर्तिर्दिक्षुख्यातिः मानःपरेषां*माननम् अन्यत्राभिमानः अनहंकृतिःस्वरूपभेदादहमितिबुद्धिराहित्यम् अन्यत्रनाहंकर्ताहरिरेवमयिस्थित्वासर्वंकरोतीतिबुद्धिः ॥ २९ । ३० । ३१ ॥

नकेवलंभवंतंशोचामिकिंतुदेवादीनपि ॥ ३२ ॥

---

## क्रमसंदर्भः ।

प्रागल्भ्यं प्रतिभातिशयः ( ४३ ) अनेन वावदूकत्वं ( ४४ ) प्रश्रयोविनयः ( ४५ ) अनेन ह्रीमत्त्वं ( ४६ ) यथायुक्तसर्व्वमानदातृत्वं ( ४१ ) प्रियम्वदत्वञ्च ( ४८ ) शीलं सुखभावः ( ४९ ) अनेन साधुसमाश्रयत्वं ( ५० ) सहः मनःपाटवम् ( ५१ ) ओजः ज्ञानेन्द्रियपाटवं ( ५२ ) वलंकर्म्मेन्द्रियपाटवं ( ५३ ) भगस्त्रिविधः भोगास्पदत्वं ( ५४ ) सुखित्वं ( ५५ ) सर्व्वसमृद्धित्वञ्च ( ५६ ) गाम्भीर्य्यं दुर्व्वोधाभिप्रायत्वं ( दुर्विरोधाशयत्वं ) ( ५७ ) स्थैर्य्यम् अचञ्चलता ( ५८ ) आस्तिक्यं शास्त्रचक्षुष्ट्वं ( ५९ ) कीर्त्तिः साद्गुण्यख्यातिः ( ६० ) अनेन रक्तलोकत्वं ( ६१ ) मानः पूज्यत्वं ( ६२ ) अनहंकृतिः तथापि गर्व्वराहित्यम् ( ६३ ) ॥ २९ ॥

चकाराद्ब्रह्मण्यत्वं-( ६४ ) सर्व्वसिद्धिनिषेवितत्व-( ६५ ) सच्चिदानन्दविग्रहत्वादयो ( ६६ ) ज्ञेयाः । अत्र सन्तोषादयः कतिचिद्-गुणा भक्तसम्वन्धादन्यत्र ज्ञेयाः । महत्त्वमिच्छद्भिः प्रार्थ्या इति महागुणा इति च वरीयस्त्वमपि गुणान्तरम् ( ६७ ) एतेन तेषां गुणाना-मन्यत्र स्वल्पत्वं चलत्वञ्च अत्रैव तु पूर्णत्वम् अविनश्वरत्वञ्चोक्तम् । अतएव सूतवाक्यं—नित्यं निरीक्ष्यमाणानां यदपि द्वारकौकसाम् न वितृप्यन्ति हि दृशः श्रियो धामाङ्गमच्युतमिति । तथा नित्या इति न वियन्तीति सदा स्वरूपसंप्राप्तत्वमपि गुणान्तरम् ( ६८ ) । अन्ये च जीवालभ्या यथा—तत्राविर्भावमात्रत्वेऽपि सत्यसङ्कल्पत्वं ( ६९ ) वशीकृताचिन्त्यमायत्वम् ( ७० आविर्भावविशेषत्वेऽपि अखण्डसत्त्वगुणस्य केवलस्वयमवलम्बनत्वं ( ७१ ) जगत्पालकत्वं ( ७२ ) यथा तथा हतारिगतिदातृत्वम् ( ७३ ) आत्मारामगणाकर्षित्वं ( ७४ ) ब्रह्मरुद्रादिसेवितत्वं ( ७५ ) परमाचिन्त्यस्वरूपशक्तित्वम् ( ७६ ) आनन्त्येन नित्यनूतनसौन्दर्य्याद्याविर्भावत्वं ( ७७ ) पुरुषावतारत्वेऽपि मायानियन्तृत्वं ( ७८ ) जगत्सृष्ट्यादिकर्त्तृत्वं ( ७९ ) गुणावतारादिवीजत्वम् ( ८० ) अनन्तब्रह्माण्डाश्रयरोमविवरत्वं ( ८१ ) वासुदेवत्वनारायणाङ्गत्वादिलक्षणभगवत्त्वाविर्भावेऽपि स्वरूपभूतपरमाचिन्त्याखिलमहाशक्तिमत्त्वं ( ८२ ) स्वयं भगवल्लक्षणकृष्णत्वेन हतारिमुक्तिभक्तिदायकत्वं ( ८३ ) स्वस्यापि विस्मापकरूपादिमाधुर्य्यवत्त्वम् ( ८४ ) अनिन्द्रियाचेतनपर्य्यन्ताशेषसुखदातृस्वसान्निध्यत्वं ( ८५ ) तदेतद्दिङ्मात्रदर्शनम् । यत आह श्रीब्रह्मा—गुणात्मनस्तेऽपि गुणान् विमातुं हितावतीर्णस्यकईशिरेऽस्येत्यादि ॥ ३० । ३१ ॥

आत्मानमित्यादावपि तेन रहितमित्यादि योज्यम् ॥ ३२ ॥

---

## सुवोधिनी ।

प्रागल्भ्यंप्रतिभातिशयः प्रश्रयोविनयः शीलंसुखभावः सहओजोवलानि मनइन्द्रियशरीराणांपाटवानि भगः सौभाग्यास्पदत्वं गांभीर्यमक्षोभ्यत्वं धैर्यमचञ्चलताआस्तिक्यंश्रद्धा कीर्तिर्यशः मानः पूज्यत्वम्अनहंकृतिः गर्वाभावः ॥ २९ ॥

अन्येचब्रह्मण्यत्वभक्तवत्सलत्वादयःनित्याःसहजाइमेचान्येचेतिचकारद्वयंसांसर्गिकदोषनिवृत्त्यर्थंमहागुणाइतिपरकाष्ठापन्नाः यथाज्ञानं निरतिशयंवलंनिरतिशयमिति एकस्मिन्नपिहिगुणेजातेजगतिमहत्त्वंलभतेजीवः तेनविनानसर्वथामहत्त्वं भक्तिस्तुभगवद्रूपेतिनतयाव्यभिचारः अतएवसर्वैरेतेगुणाः प्रार्थ्यातेभगवतिव्ययमपिनप्राप्तुवंतिईषदपिनक्षीयंते ॥ ३० ॥

एवंगुणनिरूपणस्यप्रयोजनमाह तेनाहमिति सर्वेगुणाएकतःलक्ष्मीचैकतः अतस्तांभिन्नतयानिरूपयति श्रीनिवासेतिभगवन्निर्गमनेसर्वे भगवद्गुणाः लक्ष्मीः तद्गुणाश्चनिवृत्ताः अतः शोचामीत्याह किंच तत्प्रतियोगिनोदोषाःसर्वेसमागताइत्याह पाप्मनाकलिनेक्षितामिति सर्वेषांपापानांहेतुभूतेनकलिनाईक्षितंदृष्टम् ॥ ३१ ॥

आत्मीयोऽयमितिकेतदीक्षिताइत्याकांक्षायांत्वदुक्ताः सर्वएवेतितान्गणयतिहेअमरोत्तमदेवश्रेष्ठधर्म ! द्वितीयांतपाठोवादेवपितृऋषयः ऋणापकरणकर्त्रभावात्सदाचाराः नसंतीतिसाधुशोकः वर्णाश्रमाः स्वधर्माभावात् ॥ ३२ ॥

---

## श्रीविश्वनाथचक्रवर्त्ती ।

प्रागलभ्यं प्रतिभातिशयः । प्रश्रयो विनयः । सहस्तजोवलानि मनसो ज्ञानेन्द्रियाणां कर्मेन्द्रियाणांच पाटवानि । भगो भोगास्पदत्वम् । गाम्भीर्यम् अक्षोभ्यत्वम् । स्थैर्यमचंचलता । आस्तिक्यं श्रद्धा । कीर्त्तिर्यशः । मानः पूज्यत्वम् । अनहंकृतिर्गर्वाभावः ॥ २९ ॥

---

* नारदादीनांक्रियमाणःसम्मानः ।

ब्रह्मादयो बहुतिथं यदपाङ्गमोक्षकामास्तपः समचरन् भगवत्प्रपन्ना ।
सा श्रीः स्ववासमरविन्दवनं विहाय यत्पादसौभगमलं भजतेऽनुरक्ता ॥ ३३ ॥
तस्याहमब्जकुलिशांकुशकेतुकेतैः श्रीमत्पदैर्भगवतः समलङ्कृताङ्गी ।
त्रीनत्यरोच उपलभ्य ततो विभूतिं लोकान् स मां व्यसृजदुत्स्मयतीं तदन्ते ॥ ३४ ॥
यो वै ममातिभरमासुरवंशराज्ञामक्षौहिणीशतमपानुददात्मतन्त्रः ।
त्वां दुःस्थमूनपदमात्मनि पौरुषेण सम्पादयन् यदुषु रम्यमविभ्रदङ्गम् ॥ ३५ ॥
का वा सहेत विरहं पुरुषोत्तमस्य प्रेमावलोकरुचिरस्मितवल्गुजल्पैः ।
स्थैर्यं समानमहरन्मधुमानिनीनां रोमोत्सवो मम यदङ्घ्रिविटङ्किताया: ॥ ३६ ॥
तयोरेवं कथयतोः पृथिवीधर्म्मयोस्तदा ।
हूरीक्षिन्नाम राजर्षिः प्राप्तः प्राचीं सरस्वतीम् ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्यां
प्रथमस्कन्धे पारीक्षिते धर्म्मपृथ्वीसंवादो नाम
षोड्शोऽध्यायः ॥ १६ ॥

श्रीविश्वनाथचक्रवर्त्ती ।

इमे च अन्ये च सत्यसंकल्पत्वब्रह्मण्यत्वभक्तवात्सल्यादयो नित्याः सर्वकालवर्त्तिनो महागुणाः । मां भजन्ति गुणाः सर्वे निर्गुणं निरपेक्षकमिति भगवदुक्त्या गुणातीतस्यापि तस्य गुणवत्त्वान्महागुणाः अप्राकृताश्चिन्मयाः स्वरूपभूता इत्यर्थः । कर्हिचिन्महाप्रलयेऽपि न वियन्ति न विगता भवन्ति । तथाहि सत्यं यथार्थभाषणम् । तदादीनां गुणानां तदैव नित्यत्वं स्यात् यदि ते महाप्रलयमभिव्याप्य नैरन्तर्येण तत्र श्रीकृष्णे तिष्ठन्ति । तेषां नित्यत्वे सति यान् प्रति भाषणादिकं तेषां तद्वासस्थानानामपि नित्यत्वमुपपन्नमतो लीलानां लीला परिकराणां पार्षदानां धाम्नांच तदीयानां सर्वेषां नित्यत्वं सिद्धम् ॥ ३० । ३१ । ३२ ॥

---

सिद्धांतप्रदीपः ।

प्रागल्भ्यंप्रतिभातिशयः ॥ २७ ॥ प्रश्रयोविनयः ॥ २८ ॥ शीलंसुस्वभावः ॥ २९ ॥ सहोमनः सामर्थ्यम् ॥ ३० ॥ ओजः ज्ञानेंद्रियाणांसर्वं श्रवणादिसामर्थ्यम् ॥ ३१ ॥ वलंकर्मेन्द्रियाणांसर्ववक्तृत्वादिसामर्थ्यम् ॥ ३२ ॥ भगोऽत्रोक्तैश्वर्योत्कर्षः ॥३३॥ गांभीर्यमनवगाह्यत्वम्॥३४॥ स्थैर्ययुद्धादौस्थिरत्वम् ॥ ३५ ॥ आस्तिक्यंवेदोक्ततत्त्ववादित्वम् ॥ ३६ ॥ कीर्तिर्यशसोऽतिशयः ॥ ३७ ॥ मानःसर्वपूज्यत्वम् ॥ ३८ ॥ अनहंकृतिःसर्वेश्वरत्वेऽपिगर्वाभावः ॥ ३९ ॥ २९ ॥

एतेएकोनचत्वारिंशत् अन्येचसौंदर्यमाधुर्य सौकुमार्यवात्सल्यशांतत्वशरण्यत्वादयोमहागुणानित्यायावदात्मवृत्तयोमहत्त्वं भगवद्भावमिच्छद्भिः प्रार्थ्यास्तत्रकेचिद्भगवदसाधरणतयाज्ञेयाअन्ये यथावस्थमात्मनिसम्पादनीयत्वेनप्रार्थ्याइतिविवेकः यत्रकर्हिचित्कदाचिदपिनवियन्तिनच्यवन्ति ॥ ३० ॥

तेनश्रीकृष्णेनगुणपात्रेणगुणाश्रयेणश्रीर्निवसतियस्मिंस्तेनरहितम् अतएवपाप्मनापापहेतुना ईक्षितम् लोकंशोचामि ॥ ३१ । ३२ ॥

---

भाषाटीका ।

उन गुण पात्रश्रीनिवास से रहित इस लोक को मैं शोच करती हूं । अब यह लोक पाप हेतु कलिकी दृष्टिसे दग्ध होरहा है ॥ ३१ ॥ अपने को शोचती हूं । हे अमरोत्तम ! आपको भी शोचती हूं । देवता पित्र ऋषि साधु और सब वर्ण आश्रमोंको सोचती हूं ॥ ३२ ॥

---

श्रीधरस्वामी ।

तस्य विरहो दुःसह इत्याह चतुर्भिः । ब्रह्मादयो यस्याः श्रियः अपाङ्गमोक्षः स्वस्मिन् दृष्टिपातः तत्कामाः सन्तः बहुथितं बहुकालं तपः समचरन् सम्यक् चरन्ति स्म । भगवद्भिरुत्तमैः प्रपन्ना आश्रिता अपि । सा श्रीर्यस्य पादलावण्यम् अलमनुरक्ता सती सेवते ॥ ३३ ॥

## श्रीधरस्वामी ।

तस्य भगवतः श्रीमद्भिः पदैः केतुर्ध्वजः अब्जादयः कृताश्चिह्नानि येषां तैः । यद्वा अब्जादीनामाश्रयैः सम्यगलंकृतमङ्गं यस्याः साहं ततो भगवतो विभूतिं सम्पदमुपलभ्य प्राप्य त्रीन् लोकान् अतिक्रम्यारोचे शोभितवत्यस्मि । पश्चात् तस्या विभूतेरन्ते नाशकाले प्राप्ते सति उत्स्मयन्तीं गर्व्वं कुर्व्वाणां मां स व्यसृजत् त्यक्तवान् ॥ ३४ ॥

किञ्च यो वै आसुरो वंशो येषां तेषां राज्ञाम् अक्षौहिणीशतरूपं ममातिभरं भारम् अपनीतवान् । त्वाञ्च ऊनपदत्वात् दुःस्थं सन्तं पौरुषेण पुरुषकारेण आत्मनि स्वस्मिन् सम्पूर्णपदं सुस्थं सम्पादयन् । "लक्षणहेत्वोः क्रियायाः" इति हेतौ शतृप्रत्ययः । सम्पादयितुमित्यर्थः अविभ्रत् धृतवानित्यर्थः ॥ ३५ ॥

तस्य विरहं का वा सहेत प्रेमावलोकश्च रुचिरस्मितञ्च वल्गुजल्पश्च तैर्मधुमानिनीनां सत्यभामादीनां समानं गर्व्वसहितं स्थैर्य्यं शुद्धत्वं योऽहरत् । यस्यांघ्रिणा रजस्युत्थितेन विटङ्कितायाः अलंकृतायाः शष्पादिमिषेण रोमोत्सवो भवति ॥ ३६ ॥

कथयतोः सतोः । प्राचीं पूर्व्ववाहिनीं कुरुक्षेत्रे ॥ ३७ ॥

इति श्रीमद्भागवतभावार्थदीपिकायां प्रथमस्कन्धे षोड़शोऽध्यायः ॥ १६ ॥

---

## दीपनी ।

लक्षणेति । इदंच सूत्रं पाणिनीयतृतीयाध्यायस्य द्वितीयपादीयषड्विंशत्यधिकशततमम् । अस्यार्थः—क्रियायाः परिचायके हेतौ चार्थे वर्त्तमानाद्धातोर्लटः शतृशानचौस्तइति ॥ ३५—३७ ॥

---

## श्रीवीरराघवः ।

तदेवविशदयतिब्रह्मादयइतिचतुर्मुखप्रभृतयः यस्याअपांगमोक्षः ईषत्तिर्यक्प्रसारस्तद्विषयत्वमात्मानंकामयमानाःवहुतिथंवहुकालंतपः समचरन्चक्रुः साश्रीरपिकमलवनं स्वनिवासंविहायभगवंतमेवप्रपन्नाचसतीयस्यपादयोः सौभगंसौंदर्यमेवालंनितरांभजतेसेवते ॥ ३३ ॥

तस्यभगवतअब्जादीनांकेतूनांचिन्हानांकेतैराश्रयभूतैःपदैः पादविन्यासैरलंकृतमङ्गंयस्याः साहंततः अतएवविभूतिंलक्ष्मीमप्युपलभ्य त्वयाप्येवंभाग्यंनलब्धमित्यभिाक्षिप्याविभूतिंसर्वसमृद्धिंप्राप्येतिवात्रीनापिलोकानत्यरोचेत्रिलोकीमातिक्रम्यततोप्याधिकं दीप्तिमत्यस्मिएवमुत्स्मयन्तींगर्वितांमां सभगवान् तदंतेअवतारप्रयोजनांतेव्यसृजत्तत्याज ॥ ३४ ॥

योवाइतिममातीवभाररूपमसुरवंशोऽसुरसंपद्युक्तवंशोजातानांराज्ञामक्षौहिणीनांशतमपानुददपनीतवान्तथायश्चात्मतंत्रःस्वतंत्रःऊनपदमूनंपदंपादद्वयंयस्यतमतएवदुःस्थंदुःखितंत्वामात्मनिस्वस्मिन्यत्पौरुषंसामर्थ्यंतेनसम्पादयन्पादचतुष्टयसम्पन्नं कर्तुमिच्छुर्यदुषुरमणीयमङ्गं शरीरमविभ्रद्धृतवान् ॥ ३५ ॥

यश्चप्रेमपूर्वकावलोकनेनरुचिरेणसुन्दरेणस्मितेनसुन्दरैर्भाषणैश्चमधुमानिनीनांयादवस्त्रीणामितरावश्यत्वं सम्यक्हृतवान्यस्यचांघ्रिभ्यांविटंकितायाः अलंकृतायाममरोमोत्सवोरोमोद्गमोबभूव तस्यपुरुषोत्तमस्यश्रीकृष्णस्यविरहंकामादृशी सहेतनकापीत्यर्थः ॥ ३६ ॥

इत्थंतयोःपृथिवीधर्मयो कथयतोर्मिथःसंभाषामाणयोःसतोःतदापरीक्षिन्नामराजर्षिः प्राचींसरस्वतीं प्रभासतीर्थंप्राप्तःगतः ॥ ३७ ॥

इतिश्रीवीरराघवटीकायां प्रथमस्कन्धे
षोडशोऽध्यायः ॥ १६ ॥

---

## श्रीविजयध्वजः ।

श्रीकृष्णविरहएवममाधिमूलमित्याख्याति ब्रह्मादयइति यस्याःश्रियःअपांगःकटाक्षःतस्यमोक्षउन्मीलनाविशेषः तंकामयंतइतियदपांगमोक्षकामाः स्वेषुश्रियःकटाक्षनिपातमाकांक्षमाणाइत्यर्थः शास्त्रोक्तप्रकारेणभगवत्प्रपन्नाः ब्रह्मादयोवहुतिथंवहुकालंभगवतीमभजन्नितिशेषेणान्वयः साश्रीरनुक्तासद्भक्तिमतीस्वनिवासमरविन्दवनं पद्मवनंविहाययस्यश्रीकृष्णस्यपादयोः सौभगंसौभाग्यमलंभजतइत्यन्वयः ॥ ३३ ॥

उपलब्धातपोविभूतिर्ययासातथातपसाविविधफलंप्राप्तासतीतस्यभगवतः अब्जंचकुलिशंचांकुशश्चकेतुर्ध्वजश्चअब्जकुलिशांकुशकेतवः लेखारूपाएतेकेताश्चिह्नानियेषांतानितैः श्रीमद्भिःपदैःसम्यगलंकृतसर्वांगा ऽहंत्रीन्लोकानतिक्रम्यारोचंशोभितवती सःश्रीकांतःतदंतेतपोविभूतेरवसाने उत्स्मयन्तींकानुमत्सदृशीस्त्रीत्यहंकुर्वाणांमांव्यसृजदित्येकान्वयः तदंतइतिवितरापेक्षयोक्तं नतुभूमेःपुण्यावसानमस्ति भगवत्पत्नीत्वात् ॥ ३४ ॥

योवैअसुराणांसम्बन्धीवंशःआसुरवंशः तस्मिन्जातानांराज्ञामक्षौहिणीशतंममातिभरमपानुददपाहरत् शतमितिशब्दः सहस्रादिवाचीत्वायिचतुष्पदत्वंनपूर्णपदंसम्पादयन् आत्मतन्त्रोयदुषुरम्यंरमणीयमङ्गमविभ्रत् ॥ ३५ ॥

## श्रीविजयध्वजः ।

यश्चप्रेम्णावलोकश्चरुचिरंस्मितंचवल्गुर्मधुरोजल्पश्चतेतथोक्तास्तैर्मधुमानिनीनांसमानमभिमानेनसहवर्तमानंस्थैर्यमहरत् यस्यांघ्रिभ्यांवि टंकितायाश्चिह्नितायाअलंकृतायावा ममरोमोत्सवः रोमांचोऽभूदितिशेषः तस्यपुरुषोत्तमस्यविरहंकावास्त्रीसहेत नकापीत्यन्वयः ॥ ३६ ॥

तदवसरेतत्रपरीक्षितोगमनमाह तयोरिति परीक्षिन्नामराजश्रेष्ठः कुरुक्षेत्रेप्राचींदिशमुद्दिश्यस्यन्दमानांनाम्नासरस्वतीं नदींप्राप्तइत्य न्वयः ॥ ३७ ॥

इतिश्रीभागवतेप्रथमस्कन्धे विजयध्वजटीकायां षोडशोऽध्यायः ॥ १६ ॥

---

## क्रमसंदर्भः ।

भगवन्तं प्रपन्ना अपि तस्या अपि प्रेयसीत्वात् यस्याः कृपाकटाक्षकामा ब्रह्मादयो बहुतिथं बहूनां कालानां पूरणं कालं व्याप्य तपः समचरन् । सा स्ववासमरविन्दवनं विहायेति तत्पादयोः सर्व्वारविन्दजातिशोभातिक्रमेतात्पर्य्यम् । सापि भजत इति ॥ ३३ ॥

तत्सम्बन्धेन स्वविभूत्यतिशयो युक्त एवेत्याह तस्य इति ॥ ३४ ॥

पूर्व्वे ये आसुरवंशा आसन् त एव राजानस्तेषाम् । छिन्नप्ररूढादिवत् समासः । पाठान्तरे आसुरवेशाः आसुरभावं प्रविष्टा इत्यर्थः । ऊनपदं त्वामात्मनि आश्रये सति सम्पादयन् सम्पन्नं पूर्णपदं कुर्व्वन् ॥ ३५ ॥

तस्य विरहं का वा सहेत । प्रेमावलोकश्च रुचिरं स्मितं च वल्गुजल्पश्चः तैर्म्मधुमानिनीनां मधुवन्मादको मानः पातिव्रत्यादिगर्व्वो यासाम् अस्ति तासां सत्यभामादीनां समानं गर्व्वसहितं स्थैर्य्यं शुद्धत्वं यः अहरत् । यस्यांघ्रिणा रजस्युत्थितेन विटङ्कितायाः अलंकृतायाः शष्पादिमिषेण रोमोत्सवः भवति ॥ ३६ ॥ ३७ ॥

इति श्रीमद्भागवतप्रथमस्कन्धस्य श्रीजीवगोस्वामिकृतक्रमसन्दर्भे षोड़शोऽध्याय ॥ १६ ॥

---

## सुवोधिनी ।

अलमेतैर्निरूपितैः मुख्यतयात्वात्मानमेवानुशोचामीत्याह ब्रह्मादयइतिद्वाभ्याम् अतः केचित् इमेगुणाः प्राकृतकार्यगुणरूपाः गुणासंवं धादेवभगवतिवर्त्ततेनसहजाइत्याहुः तेप्रष्टव्याः कस्यैतेगुणाइति सत्त्वादीनामात्मनोवा आद्येस्वातंत्र्यादीनांतदीयत्वेगुणत्वमेवलुप्यतेब्रह्मत्वं वाभवेत् संयोगजत्वेऽपिप्राप्ताप्राप्तविवेकेनगुणसंवंधकृताश्चेत् गुणानामेवउत्पत्तिपक्षस्तुवैनाशिकप्रक्रियायाअनंगीकारात् नघटतेइत्यादिवा- क्यविरोधश्चसगुणोभगवानितितुपक्षः निराकृतो निराकरिष्यते च किंच यामनुपपत्तिपरिहर्तुंभगवतिसत्त्वादीन् कल्पयंति तत्र सत्त्वादेः काशक्तिः ययाभगवदनुपपत्तिमपिदूरीकुर्युः यथायावानर्थोऽस्माभिर्ब्रह्मण्युच्यते तावान्गुणेषुमायायांचमन्यतेचेत् मायेत्यसुराइति पक्षं तुव्यभिचरेयुरित्यलंविस्तरेणवहुतिथंवहुकालंभगवत्त्यागस्यपरमानिष्टत्वंशास्त्रार्थः तत् किंस्वभावतएवहेतुनावेतिविचार्य्यते तत्र भगवदी यानांभगवत्त्यागः सर्वानर्थायतदपेक्षयाअन्येषांहीनत्वात् संघातप्रवेशेनसापेक्षत्वात् हीनापेक्षयास्वरूपनाशापत्तिः अतोभगवदीयानांमध्येमु- ख्यालक्ष्मीः ततः सामर्थ्यमपितस्या अकिंचित्करमिति तन्निर्वाहार्थं च कार्यकारणेचउदासीनाभगवंतमेवभजते अन्ये च पुनः तत्सेवकाः अहंचसपत्नीततोभगवत्त्यागेमहाननर्थइति वक्तुंलक्ष्म्याः कृत्यमाह तस्याअपिकार्यवृत्तांत उच्यते यदपांगमोक्षकामायस्याः लक्ष्म्याः अपांगः कटाक्षः तस्यमोक्षः तत्कामाब्रह्मादयः अत्रकटाक्षपदेनभगवन्निष्ठा रागसहितभगवद्विषककामभावसहितस्वसामर्थ्यभावोद्गिरणसहिता र्थदृष्टिरुच्यते ततः तस्यांदृष्टौभगवान्भगवद्विषयकामः भगवतःस्नेहः लक्ष्मीसृष्टिरितिपंचपदार्थाः संतितेहिदुर्लभाः एकत्रसमुदिताः अतोदृष्टिविषयतासिद्ध्यर्थंभगवत् प्रपन्ना भगवतिशरणागता भगवंतंहृदयेस्थापयित्वेत्यर्थः तादृशाः संतस्तपः कुर्वंतिएतादृशाः कटाक्षाः लक्ष्म्याः प्रतिक्षणंसहस्रंभवंति एवं माहात्म्ययुक्तापिसालक्ष्मीः चरणारविंदंभजतेभगवत्त्यागेतस्यैवहेतुत्वात् तस्यापिदुर्लभश्चरणः सर्वथा मेचरणप्राप्तिस्तुसुतरांदुर्लभाएवंतस्याः कार्यमुक्त्वाकरणपरित्यागमाह स्ववासमरविंदवनंविहायेति शतांशेनाप्यन्यासक्तौचरणसेवा दुर्लभेतिस्वस्यजन्मस्थानमपि अरविंदवनंविहायवनपदेनवास्तव्यत्वंसूचितं चरणसौभाग्यंभजतेभक्तिनिष्ठाभवतीत्यर्थः एतावताममचरण- त्वात् मत्सेवांसापिकरोतीति अहंभगवदीयानामुत्तमेतिभावः ॥ ३३ ॥

चरणसौभाग्येसाभिलाषालक्ष्मीः तत् प्राप्तयेतत्त्वायवाअनुरागेणोत्पन्नतुष्टत्वंद्योतयाति तन्मयिसर्वत्रस्थितामित्याह अब्जकुलिशांकुश केतुकेतैरितिभगवच्चरणकमलाकृतिरेखाः एकदेशस्यकमलत्वसंपादिकाः सतितेनमकरंदरूपामृतं तत्र फलंनियतमस्तीतिसूचितं तत्राभ्रिका रिणोदुर्लभाः सर्वथादोषरहिताः सत्संघातेविद्यमानानामसंभावितं तदर्थंभगवच्चरणारविंदएववज्राकाररेखावर्त्तते पापपर्वतानांछेदका अतस्तत्सेवायांप्रथमतः सर्वपापक्षयः किंच मनोनैश्चल्येसर्वमेतत्संभवति योगादिनातत्साधनेबहिर्मुखतास्यात् अतः भगवच्चरणा- रविंदएवसेवकानांमनोवशीकरणार्थमंकुशाकाररेखावर्त्तते अतोभगवच्चरणारविंदमाहात्म्यादेवततसेवकानांततोमनोनगलति नापिमार्ग विरोधेननचैतत् सर्वभजनानंतरंभवति भजनप्रवृत्तिरेवदुर्लभाकालकर्मस्वभावेभ्योभयसंभवात् सर्वदाजीवानांभीतत्वात् नकापिस्वास्थ्य मित्याशंक्यभगवच्चरणारविंदएव अभयपताकालक्षणारेखावर्त्ततेअत्रागमनमात्रेणैवनकुताश्चित्भयमिति ज्ञापिकाएतान्येवकेतानि चिन्हा नियेषां लक्ष्मीश्चापितत्र संगेक्रटाक्षाब्रह्मादयश्च तदाह श्रीमत्पदैरिति अत्रागतस्यान्यथाभावव्यावृत्त्यर्थमाह भगवतइति सम्यक् अलं कृतानि अंगानियस्याः वैष्णवानांचक्रादिचिन्हैरेवसम्यक्त्वं भगवच्चरणारविंदएवस्पर्शैसात्त्विकभावेनतदंशेस्वतोरेखासहितचरणाभिव्य क्तिःस्फुटाएवमलंकरणसहितालोकत्रयस्य चान्येषांचारित्रत्वयुक्तानामनलंकृतत्वात् अत्यरोचेअतिक्रम्यकांतियुक्ताजाता किंच भगवतोऽपि

सुवोधिनी ।

विभूतिमुपलभ्यभगवानपिमयिशेतेउपविशतिभुंक्तेक्रीडतिऐश्वर्यं च करोतिएवंपूर्वसौभाग्ययुक्तांमामिदानींव्यसृजत्त्यागेहेतुः उत्स्मयंती मिति भूमिस्थानांयादवानां भूम्युत्पन्नभोजनगर्वदर्शनात् कारणगर्वानुमानम् अन्नेनैवसर्वभावानामुद्भवात् अतस्तदंतेउत्स्मयनाशार्थमां व्यजसृदित्यर्थः ॥ ३४ ॥

एवं मूलभूतामुपपत्तिंश्लोकद्वयेनोक्त्वालौकिकीमुपपत्तिंश्लोकद्वयेनाहयोवैममेति ममातिभाररूपमक्षौहिणीशतमपानुदत् भूम्युत्पन्ना नांतद्धारकत्वेहेतुः असुरेतिवंशपदेनतेषांगोत्राण्यत्रसंतीतिज्ञापितं स्वस्यसाधनापेक्षायामाहआत्मतंत्रइति अनेनयादवरूपभारहरणमपि सूचितंवंशोपकारमप्याहत्वांदुःस्थमितिरोगादिव्याप्तिवत् अधर्मप्राप्तादुस्थताजनपदत्वंकालात् आत्मनिपौरुषेणेतिस्वयमंतः प्रविश्यस्वपु- रुषेणागतानंशान्सम्यक्संपादितवानित्युक्तंत्वांसंपादयन्निति संबंधः त्वंहिप्रथमतःपूर्णइति त्वदर्थमदर्थमेवयद्दुषुअंगमविभ्रत् आवयोरेवरम णायोग्यंभगवदीयाधर्मात्मानश्चरमंते ॥ ३५ ॥

फलितमाहवेत्यनादरेयाभगवत्राविरहंसहते सानकापीत्यर्थः पुरुषमात्रविरहोऽपिसोढुमशक्यः किंपुनः तस्यइति उपकारपक्षोदूरेतिष्ठतु अकामेनापि विरहासहनमित्याह प्रेमेतित्रिभिःससाधनैः सर्वाएववशीकृताःसात्त्विकाः तामसाराजसाश्च तत्रसात्त्विकाः प्रेमावलोकेन वशीकृताः तामसास्तुरुचिरस्मितेनमनोहारिमोहनेनराजसास्तुवल्गुजल्पैः मनोहरजल्पैः सात्त्विकेभ्योभक्तिज्ञानंदत्वावशीकृतवान् ताम सेभ्यः मोहाभावंवैराग्यंचदत्वाराजसेभ्यः युक्तिप्रमाणेदत्वाअतएव मधुमानिनीनांसमानंस्थैर्यमहरत् मथुरास्थानांमानिनीनांयेनमानेनस्थि रोन्नतताकामेमार्गेवा वेदेनज्ञानेनवा आत्मस्थितिःमधुइतिभिन्नंवापदं मानिनीनांरसस्थैर्यादिवत् किंच ममापियदंघ्रिचिह्निताया: सर्वदारो मोत्सवः ॥ ३६ ॥

एवंभगवद्विरहेणक्लिष्टयोःसम्वादेक्रियमाने अदूरेश्रुत्वादेवताधर्मसांनिध्यंबुद्ध्वा विश्वामित्रप्राचींकुरुक्षेत्रस्थामृषित्वादावश्यकंकर्तुं गतइत्याह तयोरिति ॥ ३७ ॥

इतिश्रीभागवतसुवोधिन्यांश्रीलक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां

प्रथमस्कन्धेषोडशोऽध्यायः ॥ १६ ॥

---

श्रीविश्वनाथचक्रवर्त्ती ।

बहुतिथं बहुकालं । भगवन्तं प्रपन्ना अपि ब्रह्मादयः सकामभक्तत्वात् यदपाङ्गेत्यादि ॥ ३३ ॥

तस्य श्रीकृष्णस्य । केतं चिह्नम् । त्रीन् लोकान् अतिक्रम्य अरोचे शोभितवत्यस्मि । ततः श्रीकृष्णाद्विभूतिं सम्पदम् उपलभ्य प्राप्य तदन्ते विभूतेर्नाशकाले प्राप्स्यमाने उत्स्मयन्तीं मत्तुल्यो वैकुण्ठोऽपि न भवतीत्यन्तर्गर्व्ववतीम् ॥ ३४ ॥

पूर्व्वे ये आसुरवंशा आसन् त एव राजानस्तेषाम् । छिन्नप्ररूढादिवत् समासः । पाठान्तरे आसुरवेशाः आसुरभावं प्रविष्टा इत्यर्थः । ऊनपदं त्वामात्मनि आश्रये सति सम्पादयन् सम्पन्नं पूर्णपदं कुर्व्वन् ॥ ३५ ॥

मधुमानिनीनां सत्यभामादीनां स्थैर्य्यमचाञ्चल्यं मानसहितम् । विटङ्किताया अलंकृताया इति तेन तस्य सर्व्वास्वपि प्रेयसीषु मध्ये अहं सदैव स्वाधीनभर्त्तृका विरहरहितैवासमिति भावः ॥ ३६ ॥

प्राचीं पूर्व्ववाहिनीम् ॥ ३७ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
प्रथमे षोड़शोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ १६ ॥

---

सिद्धांतप्रदीपः ।

तद्विरहस्यदुःसहत्त्वमाह ब्रह्मेतिचतुर्भिः ब्रह्मादयः यस्याः अपांगमोक्षः स्वेषुदृष्टिपातस्तत्कामाः बहुतिथं बहुकालंतपः समचरन्सम्यक् चक्रुः साश्रीः भगवत्प्रपन्नासती स्ववासमरविंदवनं विहायतस्यभगवतः पादयोः सौभगंसौन्दर्यम् अनुरक्तानित्योद्युक्ता अलमत्यर्थंभजते सेवते ॥ ३३ ॥

तस्यश्रीकृष्णस्ययुक्तैः पदैः कथंभूतैः अब्जकुलिशांकुशोपलक्षितानांयवधेनुध्वजकुम्भादीनांकेतूनांचिन्हानांकेतै राश्रयैः अलंकृतमंगं यस्याः साऽहंततः एवविभूतिसमृद्धि मुपलभ्यप्राप्यत्रीन्लोकानत्यरोचम् तानतिक्रम्यशोभितवत्यस्मितदित्थमुत्स्मयंतीमांसः श्रीकृष्णस्त दंतेसमृद्धिक्षयकालेव्यसृजत्तत्याज ॥ ३४ ॥

यः श्रीकृष्णः असुराणामयमासुरः सवंशोयेषांराज्ञांराजच्छन्नासुराणाम् अक्षौहिणीशतरूपंममातिभरमपानुददपनीतवान् तथात्वांचोन पदमतएवदुःस्थंसंतंपौरुषेणसामर्थ्येन आत्मनिस्वस्मिन् संपूर्णपदंसंपादयन् संपादयितुम् हेतौशतायदुषुरम्यंरमणीयमंगं श्रीविग्रहमविभ्र द्धृतवान् आविश्वकारइतियावत् तस्यपुरुषोत्तमस्यविरहंकावासहेतेत्युत्तरेणान्वयः ॥ ३५ ॥

सिद्धांतप्रदीपः ।

प्रेमपूर्वकेणावलोकेनावलोकनेनरुचिरेणास्मितेन वल्गुजल्पैः मधुरसंभाषणैश्चमधुमानिनीनांमधुवंशराजन्यभार्याणांमानेनसहितंस्थैर्यं स्तब्धत्त्वम् अहरत् यदंघ्रिविटंकितायाः यस्यचरणाभ्यामलंकृतायाः ममरोमोत्सवः रोमोद्गमोबभूवतस्य श्रीपुरुषोत्तमस्यविरहंमादृशी कावासहेतनकाचिदपीत्यर्थः ॥ ३६ ॥

एवंतयोःपृथिवीधर्मयोः मिथः कथयतोः संभाषमाणयोः प्राचींपूर्ववाहिनींसरस्वतींप्राप्तः ॥ ३७ ॥

इतिश्रीमद्भागवतसिद्धांतप्रदीपटीकायां प्रथमस्कंधीये
षोडशोऽध्यायार्थप्रकाशः ॥ १६ ॥

---

भाषाटीका ।

ब्रह्मादिक देवगण नें बहुत काल पर्यन्त जिस के कृपा कटाक्ष की कामना कर तप किया था, वही भगवत्प्रपन्ना श्री अपने निवास कमल बन को छोड़कर अनुरागवती होकर जिनके चरण कमल सौभाग को भजन करती है ॥ ३३ ॥

उन भगवान् के अब्ज कुलिश अंकुश ध्वज आदि चिन्हों से शोभित श्रीमत्पदों से अलंकृताङ्गी होकर उन से वैभव प्राप्त हो मैं तीनों लोकों को अति क्रम कर शोभित होती थी। जब उस वैभव के अन्त का समय आया तब मुझे गर्व हुआ. और भगवान् मुझे छोड़गये ॥ ३४ ॥

जिन्हों नें असुर वंश राजाओं की शत शत अक्षौहिणी रूप मेरे अति भार अपनोदन किया था। और दुःस्थ ऊन पद तुमको अपने पौरुष से सुस्थ सम्पादन करते यदुकुल में रम्य अङ्ग धारण किया था ॥ ३५ ॥

पुरुषोत्तम तिसके विरह को कौन सह सक्ती हैं। जिस के प्रेमा बलोक रुचिर स्मित, मनोहर भाषण से मान सहित मधु माननीयों का स्थैर्य हरण होता था जिनके चरणों से शोभित मुझको रोमांच होता था ॥ ३६ ॥

पृथवी धर्म की इस प्रकार बातें होती थीं कि वहीं प्राची सरस्वती पर राजर्षि परीक्षित भी आय पहुंचे ॥ ३७ ॥

प्रथम स्कंध का षोडश अध्याय समाप्त ।

——:*:——

## सप्तदशोऽध्यायः ।

—:*:—

सूत उवाच । तत्र गोमिथुनं राजा हन्यमानमनाथवत् ।
दण्डहस्तञ्च वृषलं ददृशे नृपलाञ्छनम् ॥ १ ॥
वृषं मृणालधवलं मेहन्तमिव बिभ्यतम् ।
वेपमानं पदैकेन सीदन्तं शूद्रताडितम् ॥ २ ॥
गाञ्च धर्म्मदुघां दीनां भृशं शूद्रपदाहताम् ।
विवत्सामश्रुवदनां क्षामां यवसमिच्छतीम् ॥ ३ ॥
पप्रच्छ रथमारूढ़ः कार्त्तस्वरपरिच्छदम् ।
मेघगम्भीरया वाचा समारोपितकार्म्मुकः ॥ ४ ॥

### श्रीधरस्वामी ।

ततः सप्तदशे राज्ञा कलेर्निग्रह उच्यते ।
तस्यैवं वीर्य्यभाजोऽपि वैराग्यं वक्तुमद्भुतम् ॥ ० ॥

हन्यमानं ताड्यमानम् ॥ १ ॥

मृणालं पद्मकन्दः तद्वत् धवलम् । भयान्मेहन्तं मूत्रयन्तम् इवेत्यनेन पादावशेषो धर्म्मो भयान्मूत्रयन्निव प्रतिक्षणं क्षीयमाणांशः तस्याप्यनिर्व्वाहात् कम्पमान इति दर्शितम् ॥ २ ॥

धर्म्मदुघां हविर्दोग्ध्रीम् । क्षामां कृशाम् । यवसं तृणम् । अत्र शस्यादिप्रसवक्षयात् विवत्सेव । यज्ञाभावात् कृशा । अतएव यज्ञभागमिच्छती पृथ्वीति सूचितम् ॥ ३ ॥

कार्त्तस्वरं सुवर्णं परिच्छदः परिकरो यस्य स्वर्णनिबद्धमित्यर्थः । सज्जीकृतकार्मुकः ॥ ४ ॥

———

### दीपनी ।

( नृपाणामिव लांछनं चिह्नं यस्य स नृपलांछनस्तं नृपवेशधारिणमिति यावत् ॥ १—१४ )

———

### श्रीवीरराघवः ।

तत्रेतितत्रप्राच्यांसरस्वत्यांपूर्वोक्तमनाथवद्धन्यमानंगोमिथुनंनृपस्येवलांछनानियस्यदण्डोहस्तेयस्यतं वृषलंचराजापरीक्षिद्ददर्श ॥१॥

तत्रगोमिथुनेपुमांसंविशिनष्टिवृषमिति वृषंमृणालवधवलंमेहंतमिव मूत्रंमुचंतमिवबिभ्यतमुद्विजंतमेकेनपादेनकम्पमानंशूद्रेणताडितमतः सीदंतंक्लिश्यंतम् ॥ २ ॥

स्त्रियंविशिनष्टिगामिति धर्मदुघांघृतपयोरूपक्षरणप्रव्यदोग्ध्रींशूद्रस्यपादेनताडितामतएवभृशंदीनांवत्सरहितामश्रुसहितंवदनंयस्यास्तांक्षामांकृशांयवसंतृणमिच्छन्तींकामयमानांचचकाराद्वृषलंचपप्रच्छेत्यन्वयः ॥ ३ ॥

कार्त्तस्वराः स्वर्णमयाः परिच्छदाः परिकरायस्मिस्तंरथमारूढः समारोपितंसज्जीकृतंकार्मुकंधनुर्येनसपरीक्षिन्मेघगर्जितवद्गम्भीरयागिरापप्रच्छ ॥ ४ ॥

———

### श्रीविजयध्वजः ।

अत्रापिभगवद्भक्तप्रधानस्यपरीक्षितः कलिबंधनादिमाहात्म्यवर्णनेनहरेर्महिमैववर्ण्यतइतितन्महिमोच्यते तत्रनातिदूरइतिकथितमार्थमाह तत्रेति तत्रकुरुक्षेत्रेप्राच्याः सरस्वत्यास्तीरे अनाथवत्नाथः स्वामीतेनरहितायथाहन्यंतेतथाताड्यमानंगोमिथुनम् ॥ १ ॥

### श्रीविजयध्वजः ।

मिथुनंविनिच्याह वृषमिति मृणालधवलंकमलनालसूत्रवद्धवलंशुक्लवर्णं विभ्यतंभीतमिवमेहंतंशकृन्मुंचंतंवेपमानमेकेनपदास्थित स्वात्सीदंतभग्नांगवत्तिष्ठंतंशूद्रेणकलिनापीडितंवृषमद्राक्षीत् ॥ २ ॥

यवसंतृणमाकांक्षमाणामतएवकृशामश्रुवदनामश्रुमुखीं विवत्सांवत्सरहितामिवास्थितांशूद्रस्यपदाताडितांभृशमत्यर्थंहीनांकृपणांधर्मदुघांयज्ञयोग्यपयोदोग्ध्रींगांचैवंविधामपश्यदित्यन्वयः ॥ ३ ॥

दृष्ट्वाचतांराजापप्रच्छेत्यन्वयः कथंभूतः कार्तस्वरपरिच्छदंसुवर्णपरिकरपरिष्कृतंरथमारूढःसमारोपितकार्मुकः सज्जीकृतधन्वा ॥ ४ ॥

---

### क्रमसंदर्भः ।

तत्रैवाकस्माद्वृषले समागते राजा समागत इत्याह तत्रेति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥

---

### सुबोधिनी ।

ततःसप्तदशेधर्मपृथिवीसांत्वनम्विदः भीतस्यस्थानदानंचकलेःशिक्षाचरूप्यते प्रथमंमारणेभीतिः तयोःस्वास्थ्यस्यचक्षयःअतः सांत्वनमग्रेचस्थानदानंविचारतः विवेकस्थापनायैवधर्मवाक्यंततोस्थहि सर्वसामर्थ्यसंबोधवैराग्यंवकुमद्भुतं मूर्तीभूतास्त्रयोराज्ञेस्वखेदख्यापनायतौ वेषांतरेऽपितत्पीडाख्यापनायसमारकः संधानवस्तुभूतस्यकृतन्तेनास्यचस्वयम् कृतंभूमेस्तुहेतूनांशोकस्यविनिवारणात् ॥ एवंपूर्वाध्यायांतेपूर्ववाहिन्यांसरस्वत्यांस्नातुंगतइत्युक्तं ततस्तत्रगतः अधर्मंदृष्टवानित्याहतत्रेति गांमिथुनंमिथुनवद्धासमानं वृषभंगांचअनाथवत् द्वितीयार्थेवतिः नाथभावयुक्तंवाभगवतोऽप्रकटत्वात् वृषलंशूद्रंमहतांव्यक्तिदर्शनेनैवजातिपरिज्ञानात् चिन्हानितुराज्ञःनृपलांछनमिवलांछनंयस्यएवंपाखण्डधर्मंचदृष्टवानित्यर्थः ॥ १ ॥

मिथुनस्यदीनत्वज्ञापनायतौवर्णयतिवृषइति अन्यथापक्षपातोऽपिदोषःस्यात् प्रथमंवृषंवर्णयतिमृणालधवलमिति अब्जादिवत्कांतियुक्तश्चतम्अनेनस्वभावतः शुद्धइत्युक्तम् अन्यानिपंचांगानिविकलानीत्याहतत्रप्रत्यहंवाह्यक्षयः मेहनंमूत्रणंकर्मक्षयउक्तः विभ्यंतमिति भयेनज्ञानाभावउक्तः इत्येवमनुकरणात् अथवामूत्रस्थानातिरिक्तस्थानेऽन्यमूत्रध्वनिःसरतितेनरोगः सूचितः एकेनपदत्रयस्यगमनेएकपादस्थितौकम्पोभवत्येवज्ञानसहिततपः प्रभृतीनामभावात्केवलसत्येधर्मस्थितिश्चपलाभवति जाड्येनवेपंतंपदार्थापरिज्ञानेनधर्मकृतिर्नेतिःकंपः शूद्रताडितमितिकालवशेनशूद्रकर्तृकधर्मस्यपाखण्डित्वेनधर्मकथाजननात् ताडनंदंडेनताडनंवृषस्यपदाताडनंपृथिव्याः कलिः भूमिर्वधायतिष्ठतिपाखंडमार्गैश्चधर्मव्ययर्थंतदहशइत्येवसम्बन्धः ॥ २ ॥

गांचवर्णयतिचकारात्भयकंपोऽस्याइति स्वभावतउत्तमेत्याहधर्मदुघामिति धर्ममग्निहोत्रादिकंदोग्धीतिधर्मदुहामिति पाठेप्रवर्ग्येदुग्धंदोग्धीतिअस्याः षडङ्गविकलत्वमाह देशाः संपन्ना दुघाभवंति तदभावेविकलादेशानामुत्तमानां कालदुष्टस्थित्यानाशात्दीनाकालेनापिपीडितापाखंडैरुपनुद्यमानत्वात्कलेःप्रथमपादत्वात् पदेत्येकवचनम् एवंदेशकालदोषैर्निरूपितैर्विवत्सामिति कर्त्रभावः वत्साःस्वधर्ममुख्याः पृथुदोहेनिरूपितास्तेषांसांप्रतमभावः अतएवसाश्रुवदनामश्रुभिःसहितंवदनंयस्याः अनेनमन्त्राभावउक्तः हर्षरूपास्तेअपशब्दाः अश्रूणिकृशांद्रव्याभावात् यत्रयज्ञः तत्रनयाज्ञिकानिद्रव्याणियवसमिच्छंतीयज्ञादिषुभागमिच्छंतीएवमस्याःषडंगविकलत्वंसूचितमत्रापिपूर्ववत्क्रियासम्बन्धः ॥ ३ ॥

एवंदृष्ट्वामारकस्यपूर्वत्वात् तंपृच्छतिमारयितुम्अन्यथाअविचारितकर्तृत्वंस्यात् अतएवससामग्रीकः पृच्छतीत्याहपप्रच्छेति कार्त्तस्वरेतिस्वाराजत्वख्यापनंकार्त्तस्वरंसुवर्णंतस्यपरिच्छदानियस्य अनेनमहत्त्वज्ञानात्सहसाअनतिक्रमः सूचितः मेघगम्भीरयेतितप्तानांकृपावर्षणात् गम्भीरेतिशब्दश्रवणेनैवशत्रूणांमज्जनम् एवंवाक्येदुष्टनिग्रहाशिष्टपरिपालनेसूचिते समारोपितकार्मुकइति ॥ ० ॥

---

### श्रीविश्वनाथचक्रवर्त्ती ।

परीक्षिद्धर्मयोः प्रोक्तमुक्तिप्रत्युक्तिकौतुकम् ।
निग्रहानुग्रहौ राज्ञा कलेः सप्तदशे ततः ॥ ० ॥

हन्यमानं ताड्यमानम् । नृपलांछनमिति सत्यत्रेताद्वापरादियुगमर्यादानां भङ्गे स्वातन्त्र्यसूचकम् ॥ १ ॥

मेहन्तं मूत्रयन्तामिवेति पादावशिष्टोऽपि धर्मः प्रतिक्षणं क्षरन्निवेत्युत्प्रेक्षायां नश्यदवस्थ इत्यर्थः । वेपमानमिति सोऽपि नानाचिह्नैर्निष्पन्न इव कलिनाक्रियते इति सूच्यते ॥ २ ॥

धर्मदुघां हविर्दोग्ध्रीं शस्यादिप्रसवक्षयाद्विवत्सां धर्मक्षयेणाश्रुवक्त्रां यज्ञाभावात् क्षामां कृशाम् । यवसं यज्ञभागम् ॥ ३ ॥

कार्त्तस्वरं सुवर्णम् । सज्जीकृतकार्म्मुक इति कलेः पलायनाशङ्कया ॥ ४ ॥

---

कस्त्वं मच्छरणे लोके बलाद्धंस्यबलान् बली ।
नरदेवोऽसि वेशेन नटवत् कर्मणाऽद्विजः ॥ ५ ॥
यस्त्वं कृष्णे गते दूरं सह गाण्डीवधन्वना ।
शोच्योऽस्यशोच्यान् रहसि प्रहरन् वधमर्हसि ॥ ६ ॥
त्वं वा मृणालधवलः पादैर्न्यूनः पदा चरन् ।
वृषरूपेण किं कश्चिद्देवो नः परिखेदयन् ॥ ७ ॥
न जातु कौरवेन्द्राणां दोर्दण्डपरिरम्भिते ।
भूतलेऽनुपतन्त्यस्मिन् विना ते प्राणिनां शुचः ॥ ८ ॥

### सिद्धांतप्रदीपः ।

ततः प्राचीसरस्वतीतटे हन्यमानंताडचमानम् गोमिथुनंगवोः स्त्रीपुंभूतयोर्युगलम् ददर्शेददर्श ॥ १ ॥

तत्रपुमांसंविशिनष्टि वृषमिति मृणालवत् पद्मकंदवद्धवलम् मेहंतमिवमूत्रोत्सर्गस्यानुकरणं कुर्वंतनतुमूत्रयंतमित्यर्थःतंदैन्यंसुचितम् यतःशूद्रेणताडितम् अतएवविभ्यंतमुद्विजंतम् वेपमानंकंपमानम् एकेनपदासीदंतंक्लिश्यंतंच ॥ २ ॥

स्त्रियंविशिनष्टि गामिति धर्मदुघांधर्मार्थंपयोघृतरूपंहविर्दोग्ध्रीम् यवसंतृणम् ॥ ३ ॥

दंडहस्तंवृषलंच्चविशिनष्टि कार्तस्वरपरिच्छदमिति कार्तस्वराः स्वर्णमयाः नृदेवार्हाः परिच्छदामुकुटकुंडलादयोयस्यतं वृषलंवृषंगांच पप्रच्छेतित्रयाणामन्वयः ॥ ४ ॥

---

### भाषाटीका ।

सूतजी बोले तहांपर अनाथ की तरह मारे जाते गऊ बैल को दंडहस्तवाले शूद्र को नृपचिन्ह सहित राजा ने देखा ॥ १ ॥
कमल कंद की नाईं वृषभ को मूतते हुये डरते शूद्र से ताडित होने से एक पाद से कांपते दुखित देखा ॥ २ ॥
धर्म को दुहनेवाली शूद्र पाद से ताडित दीन वत्स रहित आंसुमुखवाली अति कृश घास चाहती गऊ को देखा ॥ ३ ॥
सुवर्ण परिकरवाले रथमें चढे हुये राजा ने मेघ गंभीर वाणी से धनुष चढाकर पूँछा ॥ ४ ॥

---

### श्रीधरस्वामी ।

हंसि घातयसि । राजाहमिति चेत् तत्राह । नट इव वेशमात्रेण नरदेवोऽसि । कर्मणा अद्विजः शूद्रः ॥ ५ ॥
अशोच्यान् निरपराधान् रहसि यस्त्वं प्रहरसि स शोच्यः सापराधोऽसि । अतो वधमर्हसि ॥ ६ ॥
वृषं प्रत्याह त्वं वा कः । स्वयमेव सम्भावयति किं कश्चिद्देवो वृषरूपेणास्मान् परिखेदयन् वर्त्तसे ॥ ७ ॥
दोर्दण्डैः परिरम्भिते परिरम्भितवत् सुरक्षिते । ते शुचः अश्रूणि विनान्येषामश्रूणि नानुपतन्तीति खेदहेतुत्वं दर्शितम् ॥ ८ ॥

---

### श्रीवीरराघवः ।

प्रश्नमेवाहकस्त्वमित्यादिभिरेकादशभिः तावद्वृषलंप्रतिप्रश्नमाह द्वाभ्यांकस्त्वंत्वंकः इतिप्रश्नः किमर्थंपृच्छसीत्यत्राह अहमेवशरणं रक्षितायस्यतस्मिन्नस्मिँल्लोकेबलीसन् बलाद्धंस्यतः पृच्छामीतिभावः नृपोऽहमित्यत्राह नटवद्वेषेणनरदेवोऽसिकर्मणात्वद्विजःशूद्रः ॥ ५ ॥
गांडीवधन्वनाअर्जुनेनसहश्रीकृष्णेदूरंस्वलोकंप्रतिगतेसतित्वमवशोकानर्हान् रहसिप्रहरन् वधमसिअतःशोच्योऽसिस्वजनेनेतिशेषः ६
वृषभम्पृच्छतित्वमिति हेमृणालधवल ! पादैस्त्रिभिर्न्यूनः पदैकेनचरन् त्वंवाकः नोऽस्मान् वृषरूपेण परिखेदयन्किवाकश्चिद्देवः ॥ ७ ॥
कौरवेंद्राणांदोर्दण्डपरिरम्भिते आश्लिष्टेपालितेइतियावत् अस्मिन्भूतलेविनातेत्वांविनाकेषांचिदपिप्राणिनांशुचः शोकाश्रुबिंदवः कदाचिदपिनपतंति ॥ ८ ॥

---

### श्रीविजयध्वजः ।

तत्रप्रथमंशूद्रंप्रतिप्रश्नप्रकारमाह कस्त्वमिति यस्त्वंनटवद्वेषेणनरदेवोऽसिनतुराजा कर्मणाअद्विजः शूद्रोऽसि अद्विजइत्युक्त्याशूद्रत्वंकथंज्ञातमितिचेत्कर्मणेत्यनेनक्षत्रियवैश्ययोः परिहृतत्वात् मच्छरणेअहमेवरक्षकोयस्यसतथातस्मिन् "शरणंगृहरक्षित्रो"रित्यभिधानं

### श्रीविजयध्वजः ।

बलीत्वमबलौदुर्बलौगोवृषौवलात्प्रसह्यहंसिपीडयसित्वंकः ॥ ५ ॥

गांडीवधन्वनासहकृष्णोदूरंगतेसातियः शोच्योरहसिअशोच्यान्प्रहरन्नसिसत्वंवधमर्हसीत्यन्वयः ॥ ६ ॥

इदानींवृषभंपृच्छति त्वंवेति हेवृषभ ! पादैर्न्यूनः यथाचरासितथात्रिभिः पादैर्न्यूनः एकेनचरन्मृणालवद्धवलस्त्वंकोवावृषभरूपेणास्मान् परिखेदयन्अस्मद्बुद्धेः परिघातंकुर्वन्गतस्त्वंकाश्चिद्देवः किम् ॥ ७ ॥

कुतः परिखेदकत्वमितितत्राह नजात्विविकौरवेंद्राणांदोर्दंडैः परिरंभितेरक्षिते ऽस्मिन्भूतलेप्राणिनांशुचः शोकनिमित्ताश्रुबिंदवः जातुकाचिदपिर्नानिपतंतित्वांविना त्वंतुवाष्पकलाक्षः शोचसियस्मात्तस्मात्परिखेदयसीतिभावः ॥ ८ ॥

---

### क्रमसंदर्भः ।

अद्विजः द्विजविरोधी ॥ ५ ॥

यस्त्वमित्यत्र सह गाण्डीवधन्वनेति । तथैव प्रतिज्ञातं तं प्रति श्रीभगवता—मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे इति । स्वर्ग-पर्वणि तु तत् साक्षादेव निर्दिष्टम् । ददर्श तत्र गोविन्दं ब्राह्मयेण वपुषान्वितं । तेनैव दृष्टपूर्व्वेण साहश्येनोपसूचितम् ॥ दीप्यमानं स्ववपुषा दिव्यैरस्त्रैरुपस्कृतम् । उपास्यमानं वीरेण फाल्गुनेन सुवर्च्चसा ॥ यथास्वरूपं कौन्तेयस्तथैव मधुसूदनमिति । अत्र कौन्तेयो युधिष्ठिरः ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥

---

### सुबोधिनी ।

अयुक्तवचनमात्रेणैवपरिज्ञातोमारणीयइति प्रश्नमाह कस्त्वमितिद्वाभ्याम् अज्ञाननिश्चयभेदात् अधिक्षेपार्थोवाद्वितीयःअहमेवशरणं रक्षकोयस्यतादृशेलोकेवलात् विधिव्यतिरेकेणअवलान् अशत्रुभूतान् दीनान् वलीत्यनेनआपदभावः सूचितः चिन्हैरेवपरिज्ञायतामि-त्याशंक्याह वेषेणकेवलंनरदेवोऽसि नराजात्वंसामर्थ्याभावात् प्रसिद्धत्वाच्च नटवदिति राज्ञामुपहासार्थंतादृशंरूपंकृत्वाधर्मभूरक्षायांक र्त्तव्यायांविपरीतकरणंनभवतीत्याह कर्मणाअद्विजाःगांपदाताडयंति अद्विजइत्यनेननाद्वितीयजन्मनिजातेकर्त्तव्याकर्त्तव्यविवेकोभवेत् कथं कृष्णेअर्जुनेचविद्यमानेनप्रकटः अतः धर्मकर्त्तरिकारयितरिच प्रचलितेत्वंकःकुत्सितएवतद्गमनानन्तरमयमहामित्यागतस्तर्हिचोरोभवति ताभ्यांराज्येअनिरूपणात्वलात्चेत् राजाभवितुमिच्छसितदाशोच्योऽसिसापराधोऽसि किंच अशोच्यान्अनपराधान् एकांतेप्रहरन्सुतरां सापराधोऽसि अतोवधमर्हसिनान्यंदण्डमितिभावः ॥ ५ । ६ ॥

एवंमारयितुंविचारयन् उत्तराकथनात्सन्दिग्धः तयोःसापराधत्वमाशंक्यसांत्वनार्थंसम्पृच्छति त्वंवामृणालधवलइति प्राकृतवृषभ कांतियुक्तत्वेशुभ्रतादुर्लभाएकपदाचगमनम् अतइदंप्राकृतपशोरसंभावितमितिकश्चित् देवएवकिंभवान्नहिपशुरूपादेवाएतादृशाभवंतीहि तर्हिवृषरूपेणनः अस्मान्खेदयन्किंदेवः पूर्वमपिश्रूयतेशिविप्रभृतिषुअग्न्यादयोरूपांतरेणागताइति ॥ ७ ॥

कथमयंराजाअस्मान्ज्ञास्यतीतिपदाभूस्पर्शात्नायंदेवइतिनिश्चित्याह नजात्विति त्वद्व्यतिरेकेणअन्योऽस्मद्राज्येश्रुतोदृष्टोवानकस्य चित्अश्रूणिपतन्ति तत्राप्यस्मिन्कौरवेन्द्राणांकुरुवंशराज्ञांदोर्दण्डपरिरंभिते आलिङ्गितेभूतलेनहिमहाराजोपयुज्यमानाभूः क्लिष्टाभवति तवतुस्वरूपंनज्ञायतइतिभावः खेदोवाअनेनानिवृत्तः ॥ ८ ॥

---

### श्रीविश्वनाथचक्रवर्त्ती ।

कस्त्वं रे मदग्रे हंसि नरदेवोऽहमिति चेन्मयि नरदेवे विद्यमाने त्वं कुतस्त्यो नरदेवः नटवद्वेशेनेति चेन्नहि नहि कर्म्मणा त्वम् अद्विजः शूद्रः । नटो ह्यनुकार्य्यस्यैव कर्म्म अभिनयतीति भावः ॥ ५ ॥

ननु यथा त्वं देशस्य राजा तथै वाहमपि संप्रति कालस्य राजेति मयि तव विक्रमो न भविष्यतीत्यत आह यस्त्वमिति । गाण्डीवध-न्वना अर्ज्जुनेन सह कृष्णे दूरे गते सतीति एतावद्दिनं त्वं क्वासीरिति भावः । नन्वासमेव किन्तु ताभ्यां भयेन न प्राभूवम् । अधुना तु कस्माद्बिभेमि इति सत्यम् । शोच्योऽसि अधुना त्वं मर्त्तुमेवेच्छसीति भावः ॥ ६ ॥

भवतु क्षणं तव प्रथममपराधं विमृशामीति मनसि कृत्वा वृषं प्रत्याह त्वं वेति । नोऽस्मान् खेदयितुं किं कश्चिद्देवोऽसि । नैतादृशः कृशो ( वृषो ) दुःखी मया स्वप्नेऽपि दृष्ट इति भावः ॥ ७ ॥

त्वय्येव राजनि सति वयमेव दुःखिनः सांप्रतं समभूमेति चेत् तत्र सानुतापं साटोपं चाह न जात्विति । परिरम्भिते परिरम्भित-वत् सुरक्षिते तव शुचः अश्रूणि विना अन्येषामश्रूणि न पतन्ति ॥ ८ ॥

---

मा सौरभेयात्र शुचो व्येतु ते वृषलाद्भयम् ।
मा रोदीरम्ब ! भद्रं ते खलानां मयि शास्तरि ॥ ९ ॥
यस्य राष्ट्रे प्रजाः सर्व्वास्त्रस्यन्ते साध्व्यसाधुभिः ।
तस्य मत्तस्य नश्यन्ति कीर्त्तिरायुर्भगो गतिः ॥ १० ॥
एष राज्ञः परो धर्म्मो ह्यार्त्तानामार्त्तिनिग्रहः ।
अत एनं वधिष्यामि भूतद्रुहमसत्तमम् ॥ ११ ॥
कोऽवृश्चत्तव पादांस्त्रीन् सौरभेय ! चतुष्पद ! ।
माभूवंस्त्वादृशो राष्ट्रे राज्ञां कृष्णानुवर्त्तिनाम् ॥ १२ ॥

सिद्धांतप्रदीपः ।

प्रश्नप्रकारमाह कस्त्वमित्यादि द्वादशभिः अरेत्वंकोऽसि वेषेणस्वर्णमयमुकुटादिपरिच्छदेननटवन्नरदेवः नतुवस्तुतः तत्रहेतुमाह यतःवली-सन् अवलान् हंसिघातयसि अनेनकर्मणाऽद्विजः द्विजभिन्नः प्रतीयसे ॥ ५ ॥

दूरंप्रकृतिमंडलतोदूरतरंनिजलोकंदीनानुकंपिनिकृष्णे गांडीवधन्वनाप्रवलदुर्जनदमनेनानुकंपिनिकृष्णेगांडीवधन्वनाप्रवलदुर्जनदमनेनार्जुनेनसहगतेसति शोच्यः सापराधस्त्वंकोऽसि अशोच्यान् निर्दोषान्रहसिप्रहरन्वधमर्हसि ॥ ६ ॥

मृणालधवल ? त्वंवा त्रिभिःपादैर्न्यूनः पदाएकेनपादेनचरन् नोऽस्मान्वृषरूपेणपरिखेदयन्किंकश्चिद्देवोऽसि ॥ ७ ॥

खेदहेतुमाह कौरवेंद्राणांदोर्दंडैर्भुजदंडैः परिरंभितेऽस्मिन्भूतलेतवशुचोऽश्रूणिविनाऽन्येषां प्राणिनामश्रूणिजातुकदाचिदपि नानुपतंति ॥ ८ ॥

---

भाषाटीका ।

मेरे रक्षित लोकमें बली होकर जबरी से दुर्बलोंको मारता है वेषसे राजा सानट के तुल्य कर्म से शूद्र तू कौन है ॥ ५ ॥

गांडीव धनुवाले अर्जुनके कृष्ण सहित दूर चले जाने पर अशोच्य जीवों को एकांत में प्रहार करताहुआ तू बधके योग्य है ॥ ६ ॥

हेवृष ! मकलकंदवत् धवलवर्ण तीन पादों से हीन एक पाद से चलता कौन है किंवा वृषरूप से हमारी बुद्धि को मोहन करता हुआ कोई देवता है क्या ? ॥ ७ ॥

कौरवों के भुजदंडों से पालित भूमी में कभी भी तुम्हारे बिना और किसी के आंसू नहीं गिरते हैं ॥ ८ ॥

---

श्रीधरस्वामी ।

एवमुक्ते पुनरपि शोचन्तं प्रत्याह । भोः सुरभेः पुत्र ! अत्र मा शुचः शोकं मा कुरु । व्येतु अपयातु । गां प्रत्याह । अम्ब ! मातः शास्तरि मयि जीवति सति ते भद्रमेव अतो मा रोदीः ॥ ९ ॥

मैद्धितार्थमेवैनं हनिष्यामि न तवोपकारायेत्याह यस्येति द्वाभ्याम् । हे साध्वि ! । सर्व्वाः याः काश्चिदपीत्यर्थः । असाधुभिः त्रस्यन्तेः पीड्यन्ते । भगो भाग्यम् । गतिः परलोकः ॥ १० ॥ ११ ॥

पुनरपि शोचन्तं वृषभं प्रत्याह । कोऽवृश्चत् चिच्छेद । त्वादृशास्त्वद्विधा दुःखिताः ॥ १२ ॥

---

श्रीवीरराघवः ।

हेसौरभेय ! मानुशुचः शोकंमाकार्षीः तेतववृषलादस्माच्छूद्राद्भयमत्येतुनश्यतुगामाश्वासयन्नाहमेति हेअम्बाखलानांदुरात्मनांशास्तरि दंडधरेमयितिष्ठतिसतित्वंमारोदीः रोदनंमाकार्षीः तेतवभद्रंसुखमेवभविष्यति ॥ ९ ॥

हेसाध्वि ! यस्यराष्ट्रेदुरात्मभिः सर्वाःप्रजास्त्रस्यंतेबिभ्यति असाधुभिरितिकरणत्वविवक्षयातृतीयाप्रयुक्ताऽतोन "भीत्रार्थानाम्"इत्य पादानत्वंतस्यमत्तस्यराज्ञः कीर्त्यादयोनश्यन्तिभगोभाग्यंगतिः पुण्यलोकगतिः ॥ १० ॥

आर्त्तानांदुःखितानामार्त्तिपरिहारइतियदेषराज्ञांपरउत्कृष्टोधर्मः यतः एवमतः भूतद्रोहकारिणमतएवासत्तममेनंवधिष्यामि ॥ ११ ॥

पुनर्वृषंपृच्छन्नाश्वासयतिकइतिसार्द्धैश्चतुर्भिः हेसौरवेयचतुष्पद ! तवत्रीन्पादान्कोऽवृश्चदभिनत्कृष्णानुवर्त्तिनांराज्ञामस्माकंराष्ट्रेत्वा दृशादुःखितामाभूवन्नसन्तु ॥ १२ ॥

---

## श्रीविजयध्वजः ।

हेसौरभेय ! सुरभिवंशोद्भव माशुचः शोकंमाकार्षीः तेतववृषलाद्भयंव्येतुनश्यात्वित्यन्वयः इदानींसौरभींपृच्छाति मारोदीरिति हेसौर-भेयि ! त्वमपिकासीत्यध्याहारः कर्तव्यः कस्त्वमित्युक्तत्वात् हेअम्ब ! मोरोदीः अश्रुविमोक्षणंमाकार्षीः तेतुभ्यंभद्रमस्तु कुतः मयिदुष्टा नांशास्तरिसति ॥ ९ ॥

यस्यराष्ट्रेराज्येऽ साधुभिर्दुष्टैः प्रजाः साधुर्हिस्यंतेपीड्यंतेमत्तस्यतस्यकीर्त्यादयोनश्यंतीत्यन्वयः गतिः परलोकः ॥ १० ॥

यः आर्त्तानामार्त्तिनिग्रहः एषः राज्ञः परोधर्मोहियस्मादार्त्तिनिग्रहस्यस्वधर्मत्वादसत्तमंभूतद्रुहमेनंवृषलंवधिष्यामीत्यन्वयः अनेनकस्य हेतोर्निजग्राहेतिचोद्यंपरिहृतम् ॥ ११ ॥

हेसौरभेय ! चतुष्पदस्तवत्रीन्पादान्कोऽ वृश्चत्छेदितवान्सकः ज्ञातश्चेत्परिहरिष्यामीतिशेषः कुतइतितत्राह माभूवन्निति त्वादृशाः त्वद्विधाः ॥ १२ ॥

---

## सुबोधिनी ।

ननुराज्ञाकथनमेवमनुचितमित्याशंक्याह हेसौरभेय! सुरभ्याःपुत्रअनेनास्यमध्यमाभावोनिरूपितःनायंदेवोनप्राकृतइति अतस्त्वंमाशुचःते वृषलात्भयमपगच्छतु वृषलंमारयिष्यामीतिभावः एवंवृषभसांत्वनमुक्त्वासुरभीसांत्वनमाह मारोदीरिति हे अम्ब ! सर्वदात्वद्दुग्धपानात् मातृत्वंस्नेहेनवातेभद्रं मदागमनंतवकल्याणमित्यर्थः अतएवमारोदीः तर्हिएतावत्कालंनज्ञातंतत्राहमयीतिशास्तरिसतियदाहमस्यशासनं करिष्यामीति तदातवभद्रंनिमित्ताभावात्पूर्वं नजातमितिभावः ॥ ९ ॥

नन्वस्मिन्निमित्तंत्वयाकिमर्थंमारणीयः तत्राहस्वार्थमेवायंमारणीयः अस्मदपकारित्वादितितस्यापकारमाह हे साध्वि ! यस्यराष्ट्रेअसा धुभिः प्रजानश्यंतेतस्यचत्वारिनश्यंतिनाशाननुसंधानेहेतुमाहमत्तस्येति चत्वारिगणयतिकीर्त्तिरितिभगोभाग्यंगतिः परलोकोज्ञानंवा ॥१०॥

किंच नकेवलमेतदरक्षणादौदोषइति एतद्रक्षणं तथासतिकाम्यतास्यात् किंतुएतद्रक्षणंविहितमपीतिनित्यतातस्मात् नियतविहितत्वा देवकरिष्यामीत्याह एषराज्ञइति एषअंगुल्यानिर्दिशतिएतादृशानांरक्षणंराज्ञः परोधर्मःप्रजारक्षापेक्षयाअयमेवपरोधर्मःयदार्त्तानामार्त्तिनिग्रहः आर्तेभ्योधनाद्यपेक्षाया अपिआर्त्तिनिग्रहः परोधर्मः ततःकिमतआह ततःस्वधर्मपरिपालनार्थमेवैनंवधिष्यामि ननुसाक्षात्वधेअधर्मः तत् कथंहनिष्यसीत्यतआहभूतद्रुहमिति सर्वेभ्योभूतेभ्यो द्रुह्यतीतिएतद्वधेभूतानांजीवनंभवति एतदवधेबहूनांमरणम् अतोलाघवादेकस्यैवमरणं वरं ननुसाक्षात्निषेधाविधिविषयोऽयम् अन्येतुनस्वकर्तृकहिंसाविषयाअतोवहुत्वमप्रयोजकमित्याशंक्याह असत्तममितिनह्यस्यवधःअधर्मो स्तिदुष्टनिग्रहादेर्विहितत्त्वात् अतएवतद्वधेत्रयंसिद्ध्यतिदुष्टनिग्रहविधिपरिपालनंभूतद्रोहनिषेधविधिपरिपालनमार्त्तानामार्त्तिनिग्रहविधि परिपालनंच ॥ ११ ॥

इतिसुरभिसांत्वनविधिप्रस्तावेनतद्वधमुक्त्वासौरभेयार्थमपि तद्वधोभवत्वितिपुनः पृच्छतिकोऽवृश्चदिति पादान्कःअवृश्चत्अच्छिनत् यथापराधंदण्डःकर्त्तव्यःसुरभ्यास्ताडनमात्रमनेनकृतंतन्निवारणपूर्वकताडनेनापिप्रतीकारोभवति पादत्रयच्छेदेतुअस्यापिपादद्वयंहस्तश्चच्छे त्तव्यः ततःकथयेत्यर्थःचतुःपदेतिसम्बोधनात् अवश्यंपूर्वपादचतुष्टयंस्थितमितिज्ञापितंननुतस्यापिपादच्छेदेनममकःपुरुषार्थःस्यात् तत्राह यथाभवान्जातःतथाअन्येऽप्यस्मिन्जीवतिमाभूवन्नितिएवानिग्रहःकर्त्तव्यःननुत्रिविधाराज्येभवंतिकोऽयमाग्रहःसर्वथाअयंमारणीयइतितत्राह राज्ञांकृष्णानुवर्तिनामिति अन्येषांराज्येभवन्तुनामभगवत्सेवकानांराज्येनयुक्ताःयतोऽत्रत्यैः सर्वैरेवभगवान्सेव्यः ॥ १२ ॥

---

## श्रीविश्वनाथचक्रवर्त्ती ।

नन्वलीकमिदमिति स्वमिव रुदन्तीं गां दर्शयन्तं वृषं साश्वासमाह । भोः सुरभेः पुत्र ! मा शुचः मा शोचः । भयं व्येत्विति अधुनैवेमं हन्मीति भावः । गां प्रत्याह मेति । मयि जीवति सति ॥ ९ ॥

नन्वस्मत्संबंधेनैनं घातयन्नेतद्वधभागिनावावां मा कुर्वित्यत आह यस्येति । अतः स्वहितार्थमेवैनं हन्मि न चात्र युष्मदनुरोध इति भावः ॥ १० । ११ । १२ ॥

---

## सिद्धांतप्रदीपः ।

पुनर्वृषमाश्वासयन्नाह हेशौरभेय ! माशुचः शोकंमाकार्षीः वृषलात्शूद्रात्तेभयंव्येतु अपयातु गामाश्वासयन्नाह हेअंवमातः ! खलानां दुर्वृत्तानांशास्तरिमयिसतितेभद्रमेवभविष्यति अतोमारोदीरोदनंमाकार्षीः ॥ ९ ॥

हेसाध्वि ! भगोवुद्ध्याद्यैश्वर्यपरलोकगतिश्च ॥ १० ॥

आर्त्तानांक्लेशाक्रांतानामार्त्तिनिग्रहः क्लेशपरिहारः ॥ ११ ॥

पुनर्वृषंपृच्छन् स्वधर्ममाह कइतिपंचभिः अवृश्चदभिनत् त्वादृशास्त्वद्विधादुःखितामाभूवन्मासन्तु ॥ १२ ॥

---

आख्याहि वृष! भद्रं वः साधूनामकृतागसाम्।
आत्मवैरूप्यकर्त्तारं पार्थानां कीर्त्तिदूषणम् ॥ १३ ॥
जनेऽनागस्यघं युञ्जन् सर्व्वतोऽस्य च मद्भयम्।
साधूनां भद्रमेव स्यादसाधुदमने कृते ॥ १४ ॥
अनागःस्विह भूतेषु य आगस्कृन्निरङ्कुशः।
आहर्त्तास्मि भुजं साक्षादमर्त्यस्यापि साङ्गदम् ॥ १५ ॥
राज्ञो हि परमो धर्म्मः स्वधर्म्मस्थानुपालनम्।
शासतोऽन्यान् यथाशास्त्रमनापद्युत्पथानिह ॥ १६ ॥

भाषाटीका।

हे सौरभेय! तुम मत शोचो इस शूद्रसे भय छोडो हे गो माता! मत रोदन करो तुम्हारा कल्याण होगा क्योंकि मैं खली का दंडदाता हूं ॥ ९ ॥

हे सध्वि! जिस प्रमत्त राजाके राज्यमें असाधुओं से साधु पीडित होते हैं उस राजा का कीर्ति आयुः भाग्य गतिः नष्ट होती हैं १०

यह राजा का परम धर्म है कि दुखियों का दुःख नाश करना इसी से इस भूतद्रोही असाधु को मैं मारूँगा ॥ ११ ॥

हे वृषभ! तेरे तीन पादों को किसने काटा है कृष्णभक्त राजाओं के राज्य में तुम से जीव नहोने चाहियें ॥ १२ ॥

---

श्रीधरस्वामी।

वो भद्रमस्तु। आत्मनस्तव पादच्छेदेन वैरूप्यं कृतवन्तम् कीर्त्ति दूषयतीति तथा तम् आख्याहि ॥ १३ ॥

ननु तदाख्याने कृते कथं भद्रं स्यादित्यत आह। यस्मादनागसि जने यः अघं दुःखं युञ्जन् कुर्व्वन् भवति। अस्यैवंभूतस्य मत्तः सकाशात् सर्वत्रापि भयं भवति। ततः साधूनां भद्रं भवेदिति ॥ १४ ॥

एतस्य दण्डेऽसमर्थ इति माशंकीरित्याह। अनागःसु य आगस्कृत् अपराधकर्त्ता तस्यामर्त्यस्य देवस्यापि भुजम् आहर्त्तास्मि आहरिष्यामि। साङ्गदमित्यनेन मूलत उत्पाट्याहरिष्यामीति दर्शितम् ॥ १५ ॥

नन्वेकस्य विग्रहेण अन्यस्यानुग्रहे तव किं प्रयोजनं तत्राह राज्ञो हीति। अन्यान् अधर्मिष्ठान् शासतो दण्डयतः ॥ १६ ॥

---

दीपनी।

( निरंकुशः इति काकाक्षिगोलकन्यायेन राज्ञोऽपि विशेषणमिति ॥ १५ ॥ )
( उत्पथान् मार्गमुत्सृज्य वर्त्तमानान्। इति विजयध्वजः ॥ १६ ॥ )

---

श्रीवीरराघवः।

हेवृषभ! भद्रमेवभविष्यतिकिंत्वकृतागसांनिरपराधिनांसाधूनांयुष्माकमात्मवैरूप्यकारिणंपार्थानांकीर्त्तिदूषयतीतितथातमाख्याहि॥१३॥

यअनागसिनिरपराधेजनेद्रोहंयुञ्जन्नास्तेतस्यसर्वतः सर्वत्रममत्तोभयंभविष्यति ॥ १४ ॥

योऽनागस्सुजनेषुनिरंकुशःउत्पथःसन्नागस्कृद्द्रोहकृद्भवति तस्यसाक्षादमर्त्यस्यदेवस्याप्यंगदयुक्तं भुजमाहर्त्तास्मिआहरिष्यमाणोऽस्मि १५

स्वधर्मस्थानांपालनमेवराज्ञः परमोधर्मः कथंभूतस्येहलोकेऽनापद्युत्पथान्दुर्वृत्तानन्यानसाधून्शासतः दंडयतः अनापद्युत्पथानित्यनेनापदिदुर्वृत्तिर्नदोषावहेतिसूचितम् ॥ १६ ॥

---

श्रीविजयध्वजः।

अकृतागसामकृतापराधानांनिर्दोषाणांवोयुष्माकंभद्रमस्तु पार्थानांकीर्त्तिदूषणम्आत्मवैरूप्यकर्तारंपुरुषमाख्याहीत्यन्वयः हेगलेस्तनि! योऽनागसिअघमपराधंयुंजन्प्रयुंजानोवर्ततेअस्यतत्तस्मादपराधात्सर्वतइहपरलोकेचभयंभवत्येवेतिशेषः "सौरभेयीगलाधेनुर्भद्रानंदाऽमृतस्रवे" त्यभिधानम् ॥ १३ ॥

### श्रीविजयध्वजः ।

निरंकुशः अनिवारितः अंगदेनबाहुभूषणेनसहवर्त्तमानम् अमर्त्यस्यादेवस्यापिबाहूतीस्मिछेत्तास्मि ॥ १४ । १५ ॥

कुतइतितत्राह राज्ञइति स्वविहितधर्ममनुतिष्ठतामनुपालनंतत्तधोग्यतयारक्षणंराज्ञः परोधर्मोहि किंविशिष्टस्य इहानापदिआपदभावेऽपिउत्पथान्मार्गमुत्सृज्यवर्त्तमानानन्यान्दुष्टान्यथाशास्त्रंशासतः ॥ १६ ॥

### सुबोधिनी ।

इन्द्रियविकलास्तुसेवितुंनार्हंति अतस्तादृशानयुक्ताः अतःसर्वथात्वयावक्तव्यमित्याह आख्याहीति वृषत्वात्तवनानौचित्यंननुचास्मदीयाद्वाक्यात्कथितेमारयिष्यतीतिशंकानविधेयेत्याशंक्याह भद्रंवइति युष्माकंभद्रमेव नन्वस्मिन्जीवतिकथंभद्रंतत्राह साधूनामिति एतस्य शिक्षार्थंदण्डकरणपक्षेऽपिधर्ममार्गवर्त्तिनामपराधरहितानां देहवैरूप्यकरणमनुचितं तथापिकएणोकोहेतुस्तत्राहपाण्डवानामेवायमघकारी सर्वान्दण्डयतीतिलोकापवादजननात्पूर्वसिद्धांनिःकलंककीर्त्तिंदूषयति अतोभवतामप्येतदाख्याने कीर्त्तिस्थापनधर्मोभवति ॥ १३ ॥

मत्प्रतिज्ञाचसिद्धाभवतीत्याहजनइति अनागसिजनेअपराधंयुंजन्सर्वतोमत्तोभयंप्राप्नोतिदेहिधनैहिकामुष्मिकप्रकारैः मत्कृतंभयंप्राप्नोतिअस्यसम्बन्धीपुत्रादिभयंप्राप्नोतीत्यध्याहारःकरणीयः अनागसिजनेअघंयुंजन्भवति तस्यमत्तःसर्वतोभयंभवतीतिभवति द्वयमध्याहर्त्तव्यं वस्तुतस्तुधर्ममात्रंपूर्ववत् अग्रिमश्लोकेनोक्तार्थत्वात् । १४ ॥

आख्यातेकिंकरिष्यतीत्याकांक्षायामाह अनागस्स्विति ननुसोऽप्यधिकारीकथंत्वयामारणीयस्तत्राह निरंकुशइति नियामकरहितःअत एवोत्पथगामीकथंक्षमइत्यपेक्षायामाह आहर्त्तास्मीति अमर्त्यस्येन्द्रस्यापिबाहुमुत्पाटयामीत्यर्थः साक्षादिति स्वयमेवगत्वानचाभिचारद्वारसांगदमिति अंगदाद्याभरणैःसहितंसर्वैः पूजितमपि ॥ १५ ॥

ननुभवानत्रनानियुक्तः अतोनियोगानुसारेणपालनंकर्त्तव्यं वयंतुयतः कुतश्चित्त्वद्राष्ट्रेसमागताः नत्वदीयाइत्याशंक्याह राज्ञोहिधर्मद्वयंसहजोधर्मः अधिकृतस्तुसहजधर्मस्तु आर्त्तार्त्तिनिग्रहः समुख्यः अन्यस्तुगुणः तत्रस्वराष्ट्रादिनियमोनास्तिभार्यामपिमारयन् निवारणीयः परमशक्त्यातूष्णींभावः राज्ञस्त्वशक्त्यभावात् समुख्योधर्मःस्वधर्मानुपालनमेवअन्यान् स्वधर्मरहितान् अनापादिउत्पथान्शासतः नतुविरक्तस्यंअतोममार्त्तिहरणंस्वधर्मः अतोवक्तव्यमिति कलिनिग्रहोवहिर्मुखेनकर्त्तुमशक्यः अभगवदीयेनवा ॥ १६ ॥

### श्रीविश्वनाथचक्रवर्ती ।

किन्तु तव मुखात् किञ्चित् श्रुत्वैवैनं वधिष्यामि इत्यत आह आख्याहीति । ननु मम किमपि विवक्षितं नास्तीति तत्राह । हे वृष ! वो युष्माकं साधूनां निरपराधानां भद्रं सुखेऽपि दुःखेऽपि सदा भद्रमेव । किन्त्वस्माकं पार्थानां कीर्त्तिं दूषयति यस्तम् आख्याहि । तमेव कम् आत्मनस्तव पादच्छेदेन वैरूप्यं कृतवन्तम् ॥ १३ ॥

न च कथिते सति त्वत्त एवास्य भयं किन्त्वकथनेऽपि सर्व्वत एवेत्याह । निरागसि जने योऽघं युञ्जन् भवेत् अस्य सर्व्वत एव हेतुभ्यो मत्सकाशाद्भयम् ॥ १४ ॥

ननु यदि त्वत्तोऽपि महाप्रभावी वलवांश्च स्यात् तदा किं भवेदत आह अनागःस्विति । साक्षादमर्त्यस्यापि देवस्यापि । साङ्गदमिति मूलत एव छित्त्वा आहरिष्यामीति देवासुरनरादिषु मत्तुल्यो वलिष्ठः प्रभावी वा कोऽपि नास्तीति भावः ॥ १५ ॥

ननु एकस्य निग्रहे अन्यस्यानुग्रहे तव किं प्रयोजनं तत्राह राज्ञो हीति । अन्यान् अधर्म्मिष्ठान् शासतः दण्डयतः ॥ १६ ॥

### सिद्धांतप्रदीपः ।

हेवृष ! वो भद्रंभवतु अकृतागसांनिरपराधिनांपापवर्जितानांसाधूनांपुण्यवतांयुष्माकमात्मवैरूप्यकर्तारंपादच्छेदेनशरीरवैरूप्यकर्तारम् अतएवपार्थानांकीर्त्तिंदूषयतितत्रैत्रपालयप्राणिपीडाजननद्वारालोपयतीतितमाख्याहि ॥ १३ ॥

अनागसिनिरपराधेजनेयोऽघंदुःखंयुंजन्कुर्वन्वर्त्ततास्यचकारात्तत्पक्षपातिनोमत्तः सकाशाद्भयंभवति सर्वतःसर्वेभ्योयमादिभ्यश्चभयं भवति ननुविराधिन्यपिजनेदण्ड्यमानेसाधूनांकोलाभइत्यतआह साधूनामिति ॥ १४ ॥

यदिनिरपराधिष्वपराधकर्ताकश्चिदमानुषोऽपिस्यात्तर्हिसोऽपिमेदण्ड्यएवेत्याह अनागस्स्वितिभूतेषुप्राणिमात्रेषुकिंपुनः शिष्टेष्वितिभावः निरंकुशः शासनातिगः दण्डदानेआत्मनः कौशलंसूचयति यःसाक्षादागस्कृदिति आगस्कृत्तयासाक्षात्परिज्ञातइत्यर्थः तस्यभुजंनसांगद्वेन अपराधेकृते भुजमेवतत्राप्यंगदमप्यपरित्यज्यैवाहरिष्यामि तत्रमित्रादयोवर्ज्याइतितुकिंवक्तव्यम् यजनार्हःसुरोऽपिनवर्जनीयोऽपितुदण्ड्य एवेत्याह अमर्त्यस्यापीति ॥ १५ ॥

तादृशनिर्बन्धेकारणमाहराज्ञइतिअन्याअधार्मिकान्उत्पथान्धर्ममार्गातिगान् अविहितकर्तॄन्विहितोपेक्षकान्यथाशास्त्रेणशासतोदण्डयतोराज्ञःस्वधर्मस्यानुपालनंपरमोधर्मःआपदितुविहिताविहितवैपरीत्यकारिणांव्यतिक्रमःसोढव्यइतिसूचयन्नाहअनापदीति ॥ १६ ॥

धर्म्म उवाच ।

एतद्वः पाण्डवेयानां युक्तमार्त्ताभयं वचः ।
येषां गुणगणैः कृष्णो दौत्यादौ भगवान् वृतः ॥ १७ ॥
न वयं क्लेशबीजानि यतः स्युः पुरुषर्षभ ! ।
पुरुषं तं विजानीमो वाक्यभेदविमोहिताः ॥ १८ ॥
केचिद्विकल्पवसना आहुरात्मानमात्मनः ।
दैवमन्ये परे कर्म्म स्वभावमपरे प्रभुम् ॥ १९ ॥
अप्रतर्क्यादनिर्देश्यादिति केष्वपि निश्चयः ।
अत्रानुरूपं राजर्षे ! विमृश स्वमनीषया ॥ २० ॥

भाषाटीका ।

हे वृष ! आपका कल्याण ही होगा निरपराध साधुओं के स्वरूप को विरूप करनेवाले पांडवों के कीर्ति को दोष लगाने को आप कहदो ॥ १३ ॥

जो कोई निरपराधी जन को दुःख देता है उसको मेरेसे तथा सबसे भय है क्योंकि दुष्टके दंड देने से सज्जनों का भला होगा ॥ १४ ॥

निरपराधियों को दुःख देनेवाला जो निरंकुश है वह देवता भी हो तो उसके बाजूबंद सहित भुजकों में काटनेवाला हूँ ॥ १५ ॥

स्वधर्मस्थों का पालन तथा बिना आपत् में उत्पथगामियों को दंड देना यह दोनों राजा का परम धर्म है १६ ॥

श्रीधरस्वामी ।

आर्त्तानामभयं यस्मात् तद्वचो वो युक्तमुचितमेव ॥ १७ ॥

वयं तु यतः पुरुषात् प्राणिनां क्लेशहेतवो भवेयुः तं पुरुषं न विजानीमः । यतो वादिनां वाक्यभेदैर्विमोहिताः ॥ १८ ॥

वाक्यभेदानेवाह । विकल्पं भेदं वस्ते आच्छादयन्ति ये योगिनस्ते आत्मानमेव आत्मनः प्रभुं सुखदुःखप्रदमाहुः । तदुक्तम्—आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मन इति । यद्वा विकल्पैः कुतर्कैः वसनाः प्रावृता नास्तिका ये एवं ते वदन्ति—न तावद्देवतादीनां प्रभुत्वं कर्माधीनत्वात् न च कर्म्मणः स्वाधीनत्वात् अतः स्वयमेव प्रभुः न चान्यः कश्चिदिति । अन्ये दैवज्ञा दैवं ग्रहादिरूपं देवताम् । परे मीमांसकाः कर्म्म । अपरे लोकायतिकाः स्वभावम् ॥ १९ ॥

केष्वपि सेश्वरेषु । केष्वपीति दुर्लभत्वं दर्शितम् । निश्चय इति सिद्धान्तत्वम् । अप्रतर्क्यात् मनसोऽगोचरात् अनिर्देशात् वचसोऽगोचरात् परमेश्वरात् सर्व्वं भवतीति विमृश विचारय स्वबुद्ध्या ॥ २० ॥

दीपनी ।

( वृत इति पाठो विजयध्वजसम्मतः स एव प्रामाणिकः ॥ १७ ॥ १८ ॥
लोकायतिकाः चार्व्वाका इत्यर्थः ॥ १९—२३ ॥

श्रीवीरराघवः ।

एवमुक्तवंतमाहवृषः एतदितित्रिभिः तावद्वचोभिनंदति एतदितिपांडुवंशजातांयुष्माकमेतदार्त्तानांनभयंयस्मात्तद्वचोयुक्तमेवपांडवेया न्विशिनष्टि येषांपांडवेयानांगुणगणैर्हेतुभिर्भगवान्कृष्णोदौत्यादौकर्मणिवृतः दौत्यादिकर्मार्थंवृतइत्यर्थः येषामितिकर्त्तरिषष्ठीयैः वृतइत्यर्थः एवंविधगुणगणाश्रयाणामेतद्वचोयुक्तमेवेतिभावः ॥ १७ ॥

गाण्डीवधन्वनार्जुनेनसहश्रीकृष्णोदूरस्थलोकंप्रतिगतेसतित्वमेवशोकानर्हानुरहसिप्रहरन्वधमर्हसि अतःशोच्योऽसिस्वजने कोवृश्चादिति यत्पृष्टंतत्रोत्तरमाहहेपुरुषर्षभ ! यस्मात्पुंसः क्लेशबीजानिदुःखकारणानिस्युस्तंपुरुषंवयंनजानीमः तत्रहेतुंवदन्नात्मनोविशिनष्टिवाक्यभेदविमोहिताः क्लेशकारणानिवदतांवाक्यभेदैर्नानाविधवाक्यैर्विमोहिताः ॥ १८ ॥

वाक्यभेदानेवदर्शयतिकेचिदितिसाधनक्लेशकारणवादिनांमध्येकेचिदेवंचैवमेवेत्येवंविधो विकल्पएववसनंवसनवाचिणातिव्याधीपावकं येषांतथाभूताआत्मनः स्वस्यात्मानमेवक्लेशकारणमाहुः अन्येतुदैवमपरेतुकर्मप्राक्तनंकृतमितरेतुस्वभावंपरेतुप्रभुंतत्रदैवं जीवादृष्टस्वभावः प्रकृतेः परिणामस्वभावः प्रभुरीश्वरः ॥ १९ ॥

**श्रीवीरराघवः ।**

केचित्स्वप्रतर्क्यात्तर्कागोचरादनिर्देश्यादुक्तुमशक्यात्कस्माच्चित्कारणादित्याहुरितीत्थंकेषामपिनिश्चयः नेत्यध्याहारः यद्वातदभिमानानुसारेणैवनिश्चयः इत्यर्थः तत्रैवक्लेशकारणेषुविकल्पितेषुहेराजर्षे ! यदनुरूपं प्रकृतक्लेशानुगुणंकारणं तत्स्वमनीषयासूक्ष्मयाधियाविमृश्यविचारय ॥ २० ॥

**श्रीविजयध्वजः ।**

श्रीकृष्णोभगवान्येषांपांडवानांज्ञानभक्तिविरक्त्यादिगुणगणैर्दीत्यादौवृतः तेषांपांडवेयानांपाण्डुवंशोद्भवानांवः एतदार्त्तानामभयंकरंवचः युक्तमुचितमित्यन्वयः ॥ १७ ॥

हेपुरुषर्षभ ! यतोजीवानांक्लेशबीजानिस्युर्वयं तंपुरुषमयमेवेतिनजानीमः अनेकशोकबीजप्रतिपादकवेदवाक्यविमोहिताः ॥ १८ ॥

वाक्यभेदमेवाह केचिदित्यादिना केचिद्विकल्पविकल्पसमूहोपेतंवचोयेषांतेतथोक्ताः संदिग्धवचसइत्यर्थः आत्मनः स्वस्यक्लेशबीजमात्मानंस्वयमेवाहुः केचित्सांख्याआत्मानमतः करणंतत्कारणमाहुः वैकल्यवचसः प्रकृतिपुरुषयोर्विवेकाग्रहवचनापकंसम्यक्ज्ञानिनः दैवंसर्वदेवप्रधानंहरिंक्लेशबीजमाहुः "सर्वेनिमेषाजज्ञिरेविद्युतः पुरुषा"दितिश्रुतेः स्वशब्दवाच्याद्विष्णोर्भावः यस्यसः स्वभावः ॥ १९ ॥

अनंतत्वात्सर्वात्मना ऽप्रतर्क्यात्तर्काविषयादनिर्वाच्यात्प्रधानात्क्लेशपरंपरात्र्संषांजीवानांप्रकृत्यापिहित्वादितिकेष्वपिनिश्चयः अथवाऽप्रतर्क्यात्प्रकर्षेणतर्कायोग्यात्सत्त्वेनासत्त्वेनवानिर्वक्तुमशक्यात् भावरूपाज्ञानादितिकेषुमायावादिषुनिश्चयः भोराजश्रेष्ठ ! एषुपक्षेष्वनुरूपंश्रुतिस्मृत्यनुकूलंविमृशस्वबुद्ध्यालोच्यनिश्चिन्विति ॥ २० ॥

---

**क्रमसंदर्भः ।**

तत्र साक्षाद्धिंसाकर्तृगतः प्रश्नोऽयमिति ज्ञात्वापि सूचकता न युक्तेति तस्यापि गौणत्वं मत्वा तत्प्रयोजककर्तृगतत्वेन सिद्धान्तयन्नप्यनिर्द्धारितमिवाह न वयमिति त्रिभिः । वयमीश्वरवादिनो ये च वाक्यभेदविमोहितास्ते सर्व्वेऽपि तं पुरुषमीश्वरं न विजानीमः सर्व्वाबोचरत्वात् ॥ १८ ॥

वाक्यभेदविमोहितान् गणयति, केचिदित्यकेन । एते सर्व्वे वैदिका एव ग्राह्याः । वेदवाक्यस्यैव प्रामाण्यात् । परे कर्म्मेति । अपरे सांख्याः ॥ १९ ॥

स्वेषामीश्वरवादित्वं निश्चयेन दर्शयति अप्रतर्क्यादिति ॥ २० ॥ २१ ॥ २२ ॥

---

**सुबोधिनी ।**

यद्यप्ययमनुभयरूपः तथाप्यभिमानात्तथाभातिअतोतमुखः कर्त्तव्यइत्यभिप्रायेणउत्तरंवक्तुंप्रथमंप्रोत्साहयति भगवदीयत्वज्ञानाय एतद्इतिपततपरदुःखदूरीकरणपरमकृपालूनांभवतामुचितमेवआर्त्तानामभयंयस्मात्ताद्दशंवचः यद्यपिइदंवचनमभिमानसूचकंभवति तथापिपरदुःखनिवारणार्थमुक्तंनतुस्वोत्कर्षख्यापनार्थंकृतिस्त्वयुक्तैवेतिभावः नह्यन्यपीडयाकृतः पदार्थोधर्मोभवति आर्त्तिनिवारणरूपंभगवदीयंधर्मंपुरस्कृत्यभगवान्वशोजातःताद्दशाःगुणाःभवत्सुसहस्रशःयैःकृत्वापरमानन्दःसाक्षात्पुरुषार्थःसर्वप्रमाणार्थःअनेनभ्रांतत्वमप्याक्षिप्तमतोऽत्यन्तंवहिर्मुखानिष्ठात्यक्तव्येतिभावः ॥ १७ ॥

इतिभगवत्परत्वमुपादिश्यधर्मसूक्ष्ममुपदिशतिनवयमिति अयमर्थः एतेत्रयोऽपियदा आहत्यैकेनैवहताः किंतुसत्यादिभिःस्वस्वनिवृत्त्यातेहिधर्मपादोपजीवकाः स्वयंनिवर्त्तमानाः धर्मस्यैकैकम्पादमादायनिवर्त्तेतेद्वापरेचधर्मोद्विपदोजातः प्रमाणानांद्वैराश्यात् अतोनिर्णायकप्रमाणाभावात्वस्तुतःकेनाप्यकृतत्वात्कालेनभगवतावाकृतत्वात् ताद्दशस्वभावधर्मकरात्उत्तरंनघटतेनहिकालेवाभगवतिवाअयंकिंचित्कर्त्तुंशक्तः तस्मात्प्रमाणवोधनेस्वाधिकारानुसारेणपदार्थान्बुद्धचातथाकरिष्यति नत्वकथनंस्पष्टकथनंवायुक्तमिति हेपुरुषर्षभ ! "पुरुषत्वंचमांधीरा" इतिन्यायेनपुरुषमात्रस्यैवंभगवद्दृष्टियुक्तात्वंतुपुरुषर्षभः किंचक्लेशबीजानिपापानिभगवदपराधावातानिकुतोभवंतीति विचारःकर्त्तव्यःपुरुषएवतत्रसमवायिकारणम् अन्तःकरणंभूतसंस्कारपक्षेशरीरंवानिमित्तान्यन्यानिनियामकोविचारणीयः केननियमितासासामग्रीवाजजनयति तत्रानिश्चयेहेतुः सहिपुरुषोभवति अन्यस्यनियामकाभावात् तेचपुरुषाःपंचव्यष्टिसमष्टिपुरुषकालपुरुषोत्तमाः तत्र निश्चयःविचारकस्यस्यात्तस्यवाक्यभेदेमोहितत्वात् तेचपुरुषाःपंचवयमितिसर्वेषामेवात्रविचारेअशक्यतापक्षमेववाक्यंस्वस्वबुद्ध्यनुसारेणअनेकधायोजयंतितेवाक्यभेदाः सर्वत्रयुक्तिसहिताः वाक्यभेदेनिर्णीतान्पदार्थानाहतत्रकेचिन्मायावादिप्रभृतयः व्यष्टिमेवहेतुं मन्यंतेतदर्थंसर्वमेवविकल्प्यमायसाच्छादयंतितेविकल्पवसनाः विकल्पावसनंयेषामिति विविधकल्पनारूपमज्ञानंवासस्तेषामितितेआत्मानमेवनियामकंमन्यंते "आत्मैवह्यात्मनोबंधु"रितिवाक्यात् आत्मनोऽपिहेतुत्वेनात्मातिरिक्तकारणमन्यंतेकिंतुआत्मनैव अन्येपुनः समष्टिकारणवादिनःपौराणिकाः ज्योतिःशास्त्रसहकृताः पुरुषशरीरंब्रह्माण्डंमत्वातत्रचेष्टारूपंचकालचक्रंस्वीकृत्यतदवयवैःबुधादिभिः अन्तःसर्वपरिज्ञानात्ग्रहसहितंसमष्टिमेवकारणंमन्यंते ततोऽपिपुरुषकारणवादिनः प्रकृत्याधिष्ठातारंपुरुषंमन्यन्तेसहायभूतंचकर्मनियामकत्वेनैवस्वीकुर्वन्ति अन्यथाप्रकृतिपुरुषयोर्नित्यत्वात् अपेक्षाभावेसृष्टिर्नस्यात् अतोनियामकस्यकर्मणोऽपेक्षा "प्रबुद्धकर्मादैवेने"तिवाक्याच्च यद्यपिकालःस्वभावश्चेति

## सुबोधिनी ।

तथापिनतयोर्नियामकत्वंसम्भवति अन्यत्वात् साधारणत्वाच्चतस्मात्कर्मसहितःपुरुषः क्लेशबीजहेतुः अन्येपुनः कालमेवहेतुत्वेनमन्यं तेद्वारत्वेनस्वभावं सहिप्रकृत्यादीन् प्रेरयतिस्वभावेनपरिणामंतेस्वभावादिव्रप्रेरयंति सुखंदुःखमिति कालरूपस्य भगवतोवाक्यांश्चयद्यपि पुरुषोत्तमएवसःतथापिसर्वरूपत्वात् तस्मिन्प्रकरणेकालरूपं ख्यापितवानिति तद्व्याख्यानान्तच्छेषत्वं "सकालोयद्वशेलोकोवायोरिव घनावलि" रितिवाक्याच्च अन्येतुपुरुषोत्तममन्यंतेसहिसर्वत्रप्रविष्टःसर्वंकरोति कालादिष्वपिसएवप्रविष्टः यद्यपिकालस्यसर्वप्रभुत्वं तथापिनतस्यस्वतस्तत् किंतुभगवत्प्रेरणयाअन्यथातस्यसर्वार्थत्वाभावात् वैषम्यनैर्घृण्येप्रसज्ज्येयातां कालात्मनोश्चविवेचनमग्रेव क्ष्यामः नियामकत्वमेवतस्यसर्वक्षमितिच तर्हिसर्वप्रविष्टोभगवान् सर्वैःकथंनलक्ष्यते तत्राह अप्रतर्क्यादिति यद्यपिशास्त्रप्रामाण्यात् आपाततस्तर्क्यतेसर्ववस्तुस्वरूपश्चतितत्त्वविदःपश्यंति तथापिशृंगग्राहिकयास्पष्टतयानप्रतर्क्यः तर्हिशास्त्रेतत्कथंनोच्यते इदमित्थमिति तत्राह अनिर्वाच्यादितिशर्करादिमाधुर्यवत् केवलानुभवैकवेद्यंनस्पष्टतयावक्तुं शक्यंविशेषशब्दाभावात्संकेताभावाच्च अव्यवहार्यत्वात् यद्यपिविशेषाकारेणवक्तुमशक्यमुत्प्रेक्षितंच तथापिशास्त्रानुभवाभ्यांतन्निश्चयः तादृशाविरलाइत्याह अत्रपञ्चपक्षेषुतथाधिकारेऽप्यव स्थात्वात्तवापियथाधिकारःतदनुरूपेणाव्यवस्थापयेत्याह अत्रानुरूपमिति राजर्षे ! इतिसम्बोधनात् राजत्वात्विचारकत्वमृषित्वान्मंत्रद्रष्टृ त्वंतनवेदहृदयविचारेणनिर्णयंकुर्वीतिज्ञापितम् अत्रसम्मतिः प्रष्टव्यापकरूपत्वाभावेनस्वाधिकारानुसारेण कथनप्रसंगात् ततःस्वमनीष यैव विचारय ॥ १८ । १९ । २० ॥

---

## श्रीविश्वनाथचक्रवर्त्ती ।

येषां गुणगणैरिति प्रेमात्मकैरित्यर्थः । कृष्णस्य प्रेमैकवश्यत्वात् तस्यार्जुनस्य पौत्रत्वं तत्तुल्य एव तवापि गुणैरधीन एव कृष्णो वर्त्ततइति त्वदशक्यं किमपि नास्तीति भावः ॥ १७ ॥

किञ्च यतः पुरुषात् क्लेशबीजानि स्युस्तं पुरुषं वयं न जानीमः । ननु कथमेवमपलपसि त्वत्क्लेशदायी पुरुषोऽयं मया दृश्यत एव । सत्यमसौ मम क्लेशदः किन्तु मम क्लेशस्य बीजं किंचिदवश्यं भविष्यति । यतोऽयं ममैव क्लेशदोनान्यस्य । अतः क्लेशबीजं यतो भवति तं पुरुषं न जानीम इत्यर्थः । ननु शास्त्रज्ञा यूयं कथं न जानीथ सत्यम् । बहुशास्त्रज्ञानमेव तदनिर्द्धारे कारणम् इत्याह । वादिनं वाक्यभेदैर्विमोहिता इति ॥ १८ ॥

वाक्यभेदानेवाह । केचिद्विकल्पं भेदं वसते आच्छादयन्ति ये योगिनस्ते आत्मानमेवात्मनः प्रभुं सुखदुःखप्रदम् आहुः । यदुक्तम्— आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः इति । यद्वा केचिद्विकल्पं जीवेश्वरादिभेदं वसते आच्छादयन्तीति तथाभूता भवन्तीत्यन्वयः । अत्रार्थे अद्वैतवादिनस्ते हि सुखदुःखादेरात्माज्ञानविजृम्भितस्य द्वैतस्य मिथ्यात्वात् न कोऽपि सुखदुःखप्रदो भवतीत्याहुः । केचिच्च तार्किका आत्मनः सुखदुःखबीजम् आत्मानमेवाहुः । एवं ते वदन्ति न तावद्देवतानां प्रभुत्वं कर्म्माधीनत्वान्न च कर्म्मणः स्वाधीनत्वादतः स्वयमेव प्रभुर्न चान्यः कश्चिदिति । अन्ये दैवज्ञा दैवं ग्रहादिरूपां देवताम् । परे मीमांसकाः कर्म्म । अपरे लोकायतिकाः स्वभावम् ॥ १९ ॥

केष्वपि वैष्णवेषु अनिर्देश्यान्निर्देष्टुमनर्हात् परमेश्वरादेव सुखदुःखादीनि भवन्ति इति निश्चयः । यदुक्तं श्रुतिभिः—त्वदवगमी न वेत्ति भवदुत्थशुभाशुभयोर्गुणविगुणान्वयानिति । तथा सुखं दुःखं भवोऽभावो भयञ्चाभयमेव च । अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः । भवन्ति भावा भूतानां मत्त एव पृथग्विधा इति भगवद्गीताभिश्च । ननु तर्हि कथं निर्देष्टुमनर्हत्वं सत्यम् कालकर्म्मस्वभावग्रहभूतनृपसर्परोगादिभ्य एव लोके क्लेशस्य दर्शनात् तेषामेव निर्देश्यत्वात् वस्तुतस्तु तेषामस्वातन्त्र्याच्च भगवत एव सर्व्वं भवतीति सिद्धान्तात् भगवतः सकाशात् दुःखं भवतीत्युपासकानां वक्तुमनौचित्याच्च । नन्वेवमपि तस्य वैषम्यनैर्घृण्ये दुर्व्वारे एव इत्यत आह अप्रतर्क्यादिति । अस्मत्तर्कागोचरत्वात्तस्य तदपि न वैषम्यनैर्घृण्ये इति भावः । यदुक्तं भीष्मेण—न ह्यस्य कर्हिचिद्राजन् पुमान् वेद विधित्सितम् । यद्विजिज्ञासया युक्ता मुह्यन्ति कवयोऽपि हीति । तदपि भक्ताभासस्य मम दैन्यवर्द्धनेन स्वविषयकस्मरणवर्द्धनार्थं वा भक्तोत्तमस्य तव कलिनिग्रहादिकीर्त्तिख्यापनार्थं वेति हितायैव क्लेशदानमूह्यत इति । नन्वेषां मतानां मध्ये कस्योपादेयत्वं तत्राह । अत्रानुरूपं समुचितं सिद्धान्तं त्वमेव स्वमनीषया विचारय । यतस्त्वं राजर्षिर्भवसि । इत्युक्तिभङ्ग्या निश्चयशब्दात् सर्व्वान्ते कथनाच्च वैष्णवमतस्य सिद्धान्तत्वम् । अतः केष्वपीत्यनेन मतस्यास्य दुर्लभत्वञ्च सूचितम् । तत्र विमृशेत्ययं राज्ञो विमर्शः । न तावत् क्लेशानां मिथ्यात्वं प्रकटमनुभूयमानत्वात् । न चात्मनस्तत्कारणत्वं जीवात्मनः पारतन्त्र्यात् । न च ग्रहाणां तेषां कालचक्राधीनत्वात् । न च कर्म्मणः जाड्यात् । किञ्च साक्षाद्धर्म्मस्यास्य किं प्रारब्धम् प्रारब्धं वा पापमस्ति पापवत्त्वे धर्म्मत्वस्यैवानुपपत्तेः । न च स्वभावस्य तस्यानैकान्तिकत्वात् । तस्माद्भगवत एव कारणत्वं सुस्थिरम् । तद्विधित्सितन्तु सर्व्वैर्दुर्ज्ञेयमेवेति भीष्मोक्तिरेव प्रमाणम् ॥ २० ॥

---

## सिद्धांतप्रदीपः ।

वृषोराज्ञायत्पृष्टंकोऽवृश्चत्तवपादानितितदुत्तरंतद्वचोभिनन्दनपूर्वकमाह चतुर्भिः पाण्डवेयानांपाण्डुवंश्यानांभवताम् आर्त्तानामभयेयत्सा तद्वचोयुक्तंयोग्यमेव आदिनासाक्षात्स्वावादग्रहणम् ॥ १७ ॥

हेपुरुषर्षभ ! यतः प्राणिनांक्लेशबीजानिदुःखनिदानानिस्युस्तं पुरुषंवयंनविजानीमः यतोवाक्यभेदैर्नानावाक्यैर्विमोहिताः ॥ १८ ॥

"कालःस्वभावोनियतिर्यदृच्छाभूतानियोनिः पुरुषइतिचिन्त्य"मिति वेदान्तवाक्यमुपबृंहयन्तानेववाक्यभेदान् दर्शयतिकेचिदिति श्रुतौ तावत्किंकारणमितिकारणमुपक्रम्यषट्पक्षाः धारिताःपञ्चपूर्वपक्षत्वेनहेयतयैकः सिद्धान्तत्वेनोपादेयतया तथाहि कालोयोनिःकारणमिति

एवं धर्म्मे प्रवदति स सम्राड्द्विजसत्तम ! ।
समाहितेन मनसा विखेदः पर्य्यचष्ट तम् ॥ २१ ॥
धर्म्मं ब्रवीषि धर्म्मज्ञ ! धर्म्मोऽसि वृषरूपधृक् ।
यदधर्म्मकृतः स्थानं सूचकस्यापि तद्भवेत् ॥ २२ ॥
अथवा देवमायाया नूनं गतिरगोचरा ।
चेतसो वचसश्चापि भूतानामिति निश्चयः ॥ २३ ॥
तपः शौचं दया सत्यमिति पादाः कृते कृताः ।
अधर्म्मांशैस्त्रयो भग्नाः स्मयसङ्गमदैस्तव ॥ २४ ॥

### सिद्धांतप्रदीपः ।

देवज्ञाः स्वभावःप्रकृतेःपरिणामस्वभावोयोनिरित्यब्रह्मात्मकप्रधानपरिणामवादिनःसांख्याः नियतियोनिरितिकर्मवादिनोमीमांसकाः यदृच्छायोनिरित्यनियमवादिनआर्हताः भूतानियोनिरितिलोकायतिकाः सिद्धांतपक्षमाह पुरुषोऽचिन्त्यानंतशक्तिः परब्रह्मादिशब्दाभिधेयः परमात्मैवजगद्योनिरितिवेदांतिनइति अत्रतुक्लेशप्रदंपुरुषमुपक्रम्यतेपक्षाउच्यन्ते तत्रसिद्धान्तपक्षंप्रथममाह केचिद्विकल्प वसनाः विकल्पनानाकारणवादं "नेहनानास्तिकिंचनमृत्योः समृत्युमाप्नोतियइहनानेवपश्य" तीत्येवंवसतेआच्छादयन्ति येवेदान्तास्तद्विदोवातेआत्मतत्त्वंपदार्थस्य आत्मानंतत्पदार्थंप्रभुंसुखदुःखप्रदमाहुः तथाचश्रुतिः "एषएवसाधुकर्मकारयतितंयमेभ्योलोकेभ्य उन्निनीषते एषएवासाधुकर्मकारयतितंयमेभ्योलोकेभ्योऽधोनिनीषतेइतिअन्येदैवज्ञादैवंप्रभुमाहुः परेमीमांसकाः कर्मेवप्रभुमाहुः अपरेसांख्याः अब्रह्मात्मकप्रधानस्यपरिणामित्वरूपंस्वभावंप्रभुमाहुः ॥ १९ ॥

वाह्यपक्षद्वयमेकीकृत्याह केषुवाह्येषु यदृच्छाद्यपरपर्यायादप्रतर्क्यादतएवानिर्देश्यात्सर्वंभवतीतिनिश्चयः अत्रैतेषुपक्षेषु अनुरूपंपक्षं विमृश्यविचारय स्वमनीषयास्वबुद्ध्या ॥ २० ॥

### भाषाटीका ।

धर्म बोले आप पांडवों का यह आर्त्त अभय कारक वचन उचित है जिनके गुणगणों से भगवान् कृष्ण दूतादि कार्य में नियुक्त भये थे ॥ १७ ॥

हे पुरुष श्रेष्ठ ! जिस से क्लेश के हेतु होते हैं उस पुरुष को हम नहीं जानते हैं क्योंकि हम शास्त्रकारों के वाक्य भेदों से विमोहित हो रहे हैं ॥ १८ ॥

कोई विकल्प के मानने वाले आत्माकोही आत्मा का कारण ,कहते हैं कोई प्रारब्ध को कोई कर्मको कोई स्वभाव को कोई ईश्वर को कारण कहते हैं ॥ १९ ॥

तर्क ने योग्य निर्देश करने योग्य न होने से किसी में निश्चय नहीं होता है हे राजर्षे ! इस में जो युक्त होय सो अपने बुद्धि से विचार करो ॥ २० ॥

### श्रीधरस्वामी ।

विखेदः गतमोहः । पर्य्यचष्ट प्रत्यभाषत ज्ञातवानिति वा ॥ २१ ॥

अनिर्द्धारितमिव ब्रुवन् घातकं जानन्नपि न सूचयेत् इत्येवं रूपं धर्म्मं ब्रवीषि अतो धर्म्मोऽसि । सूचने को दोष इत्यत आह यदिति । स्थानं नरकादि ॥ २२ ॥

यद्वा अज्ञानादप्यकथनं सम्भवतीत्याह अथवेति । देवस्य मायाया गतिः वध्यघातकलक्षणा वृत्तिः भूतानां चेतसो वचसश्च अगोचरा सुज्ञेया न भवतीति निश्चयः ॥ २३ ॥

धर्म्मोऽसाविति ज्ञात्वा तस्य पादानुवादेन व्यवस्थामाह तप इति द्वाभ्याम् । अधर्म्मपादैस्तवत्रयः पादास्त्रिभिरंशैर्भग्नाः । स्मयो विस्मयः ॥ २४ ॥

### दीपनी ।

अधर्म्मपादैरिति । त्रिभिरंशैः स्मयसङ्गमदलक्षणैः अधर्म्मपादैस्तव त्रयः पादा भग्नाः तपोलक्षणैकः शौचलक्षणैको दयात्मकैकश्चेति तव पादत्रयो विनष्टा इत्यर्थः । तपः शौचं दया सत्यमिति चतुर्णां धर्म्मपादानां कलौ चतुर्थचतुर्थांशमात्रत्वेन अवस्थानार्हत्वेऽपि ताः

दीपनी।

समुदायेन न सन्ति सत्यात्मकैकपादस्य पादपरिमितचतुर्थांशमात्रमेवास्तीति अधुना दृश्यते इति भावः। एवं सति अस्याध्यायस्य वेपमानः पदैकेन इति द्वितीयश्लोकस्य पादैर्न्यूनः पदा चरसीति सप्तमश्लोकस्य कोऽवृश्चत् तव पादांस्त्रीनिति द्वादशश्लोकस्य इदानीं धर्म्म पादस्ते इति पञ्चविंशश्लोकस्य वृषस्य नष्टांस्त्रीन् पादानिति द्विचत्वारिंशत्तमश्लोकस्य द्वादशस्कन्धीयतृतीयाध्यायोक्तश्लोकानाञ्च सङ्गतिर्भवतीति परमगुरवः॥ स्मय इत्यस्यार्थत्वेनोक्तः विस्मय इति। अस्यार्थो दर्पः मेदिनीकोषप्रमाणात्। अतएव स्मयो गर्व्वः गर्व्व-द्वारा तपोनाशकत्वेनेति वक्ष्यमाणटीकासङ्गतिः॥ २४—२६॥

---

श्रीवीरराघवः।

इत्थंधर्मंप्रवदतिमातिहेद्विजसत्तमाः! सम्राट्सार्वभौमः परीक्षिद्विगतखेदः समाहितेनमनसातंधर्मस्याभिप्रायंप्रत्यक्षचाक्षिद्दर्शनेऽपिवर्ततेदृष्ट्वालोच्यनिर्णीतवानित्यर्थः॥ २१॥

निर्णीतमेवतदभिप्रायंप्रत्याहधर्मामित्यादिभिः षड्भिः तत्रक्लेशवीजावहेपुरुषेसंनिहितेऽपियदुक्तंक्लेशवीजानियतः स्युस्तंपुरुषंनजानीमइतितत्रतदाभिप्रायं निर्णीतमाहधर्ममिति हेधर्मज्ञ! साक्षात्त्वंवृषरूपधृग्धर्मएवासि अतएवापद्यपिपुरुषंतंनविजानीमइतिधर्ममेवत्वंब्रवीषिअधर्मकारिणपुरुषसंनाहतयद्धर्मसूत्रकंवचस्तद्धर्ममेवेत्यर्थः यद्यस्मादधर्मकृतोऽधर्मकारिणःस्थानंप्राप्यंस्थानंयत्सूचकस्यापितत्स्थानंभवेत्पातनंपतितइत्युक्त्वापातिष्यतीतिशास्त्रादितिभावः॥ २२॥

अथवेतिदेवमायायाईश्वरसङ्कल्पस्य "मायावयुनंज्ञानम्" इतिज्ञानपर्यायोऽत्रमायाशब्दः "मायामयःशततवांतपवनिनांचशुभाशुभम्" इतिप्रयोगाच्चगतिभूतानांचतेसार्वचसस्थगोचरेणअविषयभूतेतिवानिश्चयःनजानीमइतिविमृश्यसर्वत्रवदामिव्यक्तावादीति सूचनमेधर्मईश्वरसंकल्पइत्यवाङ्मनसयोरगोचरइतिवादशितामित्यर्थः॥ २३॥

धर्मोऽसीत्यनेनत्वंसाक्षाद्धर्माधिदेवताएवेत्युक्तं यतएवमतएवतवपादाअपिनलौकिकवृषभपादसजातीयाअपितुवाशिष्टाएवातिवदंस्तच्चतकांनुदर्शयतित्रयइतिधर्माधिदेवस्यतवपादास्तपआदयश्चत्वारः प्रकीर्तिताः तत्रत्रयःपादाःअधर्मस्यांशैःत्रिभिःस्मयादिभिर्भग्नाःतत्रस्मिनुत्कर्षधीःस्मयःसचतपोनाशहेतुःसंगःशौचविरोधीचित्तविकारःविवेकाक्षमत्वरूपंमदेनास्तानामार्तिमपश्यन्नदयांकुरुते॥ २४॥

---

श्रीविजयध्वजः।

धर्मंएवंप्रवदतिसातिसमम्राट्समाहितेनएकाग्रेणमनसाआलोच्य स्वाधीनैः कर्मकालप्रधानैः देवमेवास्वतंत्रजीवानांदुःखादिबीजंनत्ववतिर स्वातंत्र्येणाकर्मादीनांदुःखबीजपक्षाहेयएवेत्येवधर्मानुवादित्वातप्रत्याचष्टेत्येकान्वयः आत्मादिशब्दवाच्यंपरमात्मातंक्लेशबीजादिदृत्वेतिच आदानादिकर्तृत्वादात्मा देवोत्तमत्वादेवं क्रियाविषयत्वात्सकलकारणशक्तिमत्त्वात्कर्मस्वसद्भावः स्वभावस्वरूपभूतांभांप्रकाशंवातिगच्छतीति नपरप्रकाशमितिस्वभावः स्वयंप्रकाशइत्यर्थः अप्रतर्क्यातुदुस्तर्काविषयत्वादप्रसक्तत्वादनिर्वाच्यात् असिद्धत्वाच्यतातिस्मृतेः इतिसर्वेषुपक्षेषुहरिरेवोच्यतेक्लेशबीजत्वेन "अहंसर्वस्यप्रभवोमत्तः सर्वंप्रवर्तते इतिमत्वाभजंतमांबुधाभावसमन्विताः बुद्धिर्ज्ञानमसंमोहः क्षमासत्यंदमः शमः सुखंदुःखंभवोभावोभयंचाभयमेवच अहिंसासमतातुष्टिस्तपोदानंयशोयशः भवंतिभावाभूतानांमत्तएवपृथग्विधाः" इत्यादेश्च अहंहिसर्वयज्ञानांभोक्ताचप्रभुरेव नतुमामभिजानंतितत्त्वेनातश्च्यवंतितेइतिस्मृतेः पृथक्कल्पनाया अज्ञानविषयत्वादित्यादिकंसमाहितेनसम्राडितिपदद्वयेनोक्तमितिज्ञातव्यं सम्यग्राजतेप्रकाशतेसर्वम स्यातिसम्राट् अतएवात्मवैरूप्यकर्तारंनविजानीमइत्येवंतंधर्मंसमब्रवीदित्यन्वयः समाहितचेतसाज्ञानेनतंधर्मंभगवंतंप्रत्यक्षदृष्टवान् अपरोक्षदर्शने नतस्यानिजरूपमद्राक्षीदित्यर्थः दृष्ट्वाचाब्रवीदितिशेषः॥ २१॥

किमब्रवीदितितत्राह धर्ममिति हेधर्मज्ञ! धर्मंब्रवीषियस्मात्तस्मात्सधर्मोऽसि नवृषः अपितुअज्ञजनमोहनायवृषरूपंधत्से यदुक्तमात्मवैरूप्यकर्तारंनविजानीमइतितत्राह यदिति असत्कृतमधर्मंतुवदन्धर्ममेवाप्नुयादितिवचनादस्यवृषलस्यात्मवैरूप्यकर्तृत्वात्सूचनेचदोषाभावेऽपि "यःस्वधर्मःकृतःसद्भिर्नसवाच्यः कथंचने"तिवाक्यात्सज्जनेष्वधर्मकृतोयत्स्थानंनरकादिलक्षणंतत्सूचकस्यापितत्स्थानंभवेदितिज्ञापनात्त्वयाऽत्मवैरूप्यकर्तानज्ञापितइत्यतोधर्मंब्रवीषीत्यर्थः॥ २२॥

क्लेशबीजानि नविजानीमइतिवदतः सम्राजोऽभिप्रायमभिव्यनक्तीत्याह अथवेति दैवमायायाः सर्वजीवानांमुख्यामुख्यक्लेशबीजस्यदेवस्यहरेरिच्छायागतिस्थितिरधर्मेणाधर्मंशोचामीत्यादिकाअगोचरेतिज्ञापयितुंसर्वज्ञेनभवतानविजानीमइत्युक्तमितिभावः अभिप्रायनिश्चयइति॥ २३॥

तवतपआदिचत्वारः येपादाः कृतयुगेकृताः पूर्णाअवर्तंततेषांमध्येत्रयः पादास्तपः शौचदयाख्याः अधर्मांशैरधर्मपादैःस्मयसंगमदैर्भग्नाःस्मयेनतपोभंगः स्त्रीसंगेनशौचभंगः मदेनदयाभंगः॥ २४॥

---

### क्रमसन्दर्भः

ननु यत्र कुत्रचिद्धर्म्मे विशेषतस्तु सर्व्वधर्म्मरक्षायां प्रमाणीकृतस्य यथार्थवचनमेव युक्तम् । तथा च वयमीश्वरवादिनोऽपि तं न विजानीम इति कथमुक्तवन्तस्तत्राह अथवेति । तस्मादधुना देवमायाकृते कलेः प्रभावे तवाप्ययं संशयो युक्त इतिभावः । देवपदं त्वत्र तथापि द्योतमानत्वात्तस्य मायादोषास्पृष्टत्वनिगमनार्थं कृतम् ॥ २३ ॥

माया च धर्म्माधर्म्मलक्षणं क्रमवशात् समुदितोसवृत्तं जीवानां कर्म्मविशेषमनुसृत्य तत्तद्युगे तत्तत् प्रवर्त्तयतीति तस्याश्च न वैषम्यमित्याह तप इति द्वाभ्याम् । स्मयो गर्व्वः । गर्व्वद्वारा तपोनाशकत्वेनेति वक्ष्यमाणटीकासङ्गतेः । सङ्गः स्त्रीभिः । मदस्तु पानादिजः । अभ्यर्थित इत्यत्र वक्ष्यमाणतत्तत्सङ्गतरेव । अधर्म्मांशैः स्मयाद्यंशरूपैः । त्रय इति त्रयस्त्रयोऽशाः भग्नाः । ततश्चतुर्थचतुर्थांशैरेक एव पादोऽवशिष्यते । तत्र च सत्यस्यैवांशोऽवशिष्यत इत्यर्थः ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥

---

### सुबोधिनी ।

एवंधर्मवाक्यंश्रुत्वावाच्यवचनकर्तृनिर्धारंकृतवानित्याहएवमिति, नहिधर्मव्यतिरेकेणान्यः एवंवक्तुंशक्तः सचसम्राट् विचारकः हेद्विजसत्तमेति सर्व्वांधर्मसूक्ष्मेक्षिकायांसम्वादार्थतस्यैवंविचारउत्पन्नः व्यवहारानुसारेणपृष्टेयदयमन्यथोत्तरयति अस्मत्परीक्षार्थपरोक्षेणकथनंस्वस्यवा अव्यवहारत्वप्रतारकत्वमज्ञत्वंचेतिएवंचतुः पक्षविचारायचित्ततत्रकुशाग्रबुद्धित्वात् वाच्यवाक्यज्ञानाभावेपिनिश्चय स्यवक्तुश्चनिर्धारंशीघ्रमेवकृतवान् अस्तुयथाकथंचित् पंचपक्षाःतत्निर्धारोवातथापिघातकोऽयम्अनेनैवातिताडितः तथापि मत्तःकथयति व्याजेनचान्यत् कथयतिअतोधर्मएवायम् ॥ २१ ॥

पूर्वव्यवस्थायाः श्रुतत्वात् युगनिरूपणप्रस्तावे अतःस्वप्रयोजनमवसरंचविचार्यनिर्धारितत्वात् तमर्थपर्यचष्टइतितमेवाह धर्मं ब्रवीषीति त्वंतुधर्मःधर्मत्वात् नहिअन्योऽन्यस्वरूपंजानासीतिहेतोः स्वरूपासिद्धिमाशक्यअयंधर्मज्ञः धर्मवक्तृत्वादिति किंच वृषरूपधृक् अलौकिकेवाधर्मस्यवृषरूपित्वं धर्मकथकत्वंसमर्थयते यदधर्मकृतःस्थानमिति क्त्वधर्मकृतः तस्यपरस्थानंनरकादिसूचकस्यापितत्भवेत् अधर्मस्थानं तस्मात्नरकभयात् धर्मसूक्ष्मदृष्ट्याधर्मवदतीतिधर्मः ॥ २२ ॥

नन्वयुक्तोयंनिर्धारः वाक्यानांस्वार्थपरित्यागात् इदानींतनमीमांसकवत् तस्मात्वाक्यार्थपुरस्कृत्यविचारणीयमित्याकांक्षायामाह अथवेति यदुक्तमतेनतन्नजानीमइतितत्तथैव "मायांमदीयामुद्गृह्यवदतांकिंनुदुर्घट" मिति वाक्यात्युक्तोनामप्रयोजकत्वेनानिर्धारस्याशक्यत्वात् ननुमायातत्प्रवृत्तिर्वाप्रथमतोविचारयितुंततोऽन्योभ्राम्यतीत्याशंक्याह देवमायायाःभगवच्छक्तित्वेनतुल्यायाःवागतिःप्रवृत्तौनस्वानुभवगम्या नवेदवाक्यगम्यासाधारणानांतदाह भूतानामिति ॥ २३ ॥

एवंधर्मोऽयपृथिव्यंकलिरयामिति त्रितयंनिश्चित्यतदनुरूपंकरिष्यन्धर्मोग्रेअनुवदतितपःशौचमिति तत्तद्युगानुसारेणधर्मस्यनानारूपत्वात्तदानींतनपादान्गणयतिद्वादशस्कंधेन्यथानिरूपेऽस्यप्रयोजनंतत्रैववक्ष्यतेतपःकृच्छ्रादिशौचंसर्वथाशुद्धतातद्धेतुराचारः दयापरदुःखप्रहाणेच्छासत्यभाषणंचएभिश्चतुर्भिर्धर्मोज्ञायतेप्रत्येकंकृतादिषुप्रधानाः तस्यधर्मस्यप्रतिपक्षीअधर्मः तस्यापिचत्वारः पादाः सचगर्दभरूपःसचैकशः अधर्मोच्छिशाकः प्रमाणप्रवृत्तौधर्माधर्मेतुनप्रमाणइतितिनिवृत्त्यर्थंपरिज्ञापनम् अनुवादनअन्यथावाक्यभेदः स्यात्भूमिः सर्वोपरिस्थितियोर्ग्यामुभयोर्भूमिसमानपृथुत्वात्कालस्तुभयसमानः प्रवृत्तिनिवृत्तिभेदेनभयस्थापकः युगप्रवृत्तौधर्मनिवृत्तावधर्मइतिततः कालबलात्त्रीन्धर्मपादान्दूरीकृत्यअधर्मस्तस्यपादान्त्रीन्प्रस्थापयामासेत्याहअधर्मांशैरितिअधर्मस्यपादाश्चत्वारः गर्वसंगमदानृतरूपाः एतेषु दशाविशेषधर्मप्रवेशात् अंशपदप्रयोगःकलदोषंवक्तुमाहइदानींतसत्यमेवैकःपादः यतोनिवर्त्तयतत्स्वात्मानिनितरांवर्त्तयतत्तत्वधर्मोजिघृक्षति कलेःकोऽपराधइतत्राह अधर्मोयंकलिरिति अपरिच्छिन्नःकालःतस्यकृतादिपदप्रयोगःअवच्छेदनवक्तव्यःतत्रस्वस्यावच्छेदकत्वात् अन्यस्याभावात्धर्मावच्छेदकत्वेनकृतादिप्रयोगःतत्रकेवलधर्मावच्छेदककृतकेवलधर्मावच्छेदकःकलिभागःउभयावच्छेदकत्रेतासमस्यउभयावच्छेदकद्वापरमितिकालस्यद्वितीयराशिपरिच्छेदार्थमागमने अधर्मांशमप्यतिक्रम्यआगमनादधर्मांशप्रवेशः यथैवचत्वारः स्तोमःकृततत्त्र्यस्येयच्चकलिः सइतिश्रुत्वास्तोमचतुष्टयात्मकस्यज्योतिष्टोमादेःकृतत्वनिरूपणात्धर्मावच्छेदककृतस्य अथतदतिरिक्तोयःकालःपंचात्मकःसकलिःएतदभावचतुष्टयरूपत्वमतिरिक्तंचअतःपंचत्वसमानस्याङ्गिः पंचगुणयानिनक्षत्राणीत्यत्रप्रसङ्गान्निर्धारितम् अतोयथाकाशस्यपरिच्छेदकोघटादिस्तस्य घटाकाशस्यप्रदर्शनेघटएवप्रदर्श्यतेमध्यभागेनतथायंकलिरित्यर्थः पूर्वकृतेतनसहसहताहीनताचस्थिता उत्कृष्टतयापदत्रयप्रविशंततत्रापिसुलभंअनृतनएधितःपुष्टितः स्वशत्रुंधर्मपादंजिघृक्षतिशत्रुदोषस्यारक्षणीयत्वात् अतएवंवदेउभयोरेवनाम त्रेताकृतशेषःद्वापरंकलिशेषः २४।२५

---

### श्रीविश्वनाथचक्रवर्ती ।

समाहितेन लब्धसमाधानेन मनसा पर्य्यचष्ट प्रत्यभाषत ॥ २१ ॥

अयं मां निरपराधमपि ताड़यतीति मयि राजनि वक्तुमर्हन्नपि पृष्टोऽपि यन्न ब्रवीसि तद्धर्म्मं ब्रवीषि । यतोऽधर्म्मकर्त्तुर्यत् स्थानं सूचकस्यापि तत् किं पुनरभिधायकस्य अतस्त्वं साक्षाद्धर्म्म एव मयानुमितः ॥ २२ ॥

अथवेति । त्वया सर्व्वमुक्तमेवेत्यर्थः । देवमायेत्यादिना अप्रतर्क्यादिति तदुक्तमनुमोदितम् ॥ देवस्य भगवतो मायायाः सर्व्वजगत्पालनसंहारकारिण्या गतिः भूतानां चेतसोऽगोचरेति अप्रतर्क्येत्यर्थः । वचसोऽगोचरा इति अनिर्देश्येत्यर्थः । मायायास्तच्छक्तित्वात् स देवः पालनसंहारलक्षणे सुखदुःखे भूतेभ्यः कथं ददातीति ज्ञातुं वक्तुञ्च कः शक्नोतीत्यर्थः ॥ २३ ॥

इदानीं धर्म्म ! पादस्ते सत्यं निर्व्वर्त्तयेद्यतः ।
तं जिघृक्षत्यधर्म्मोऽयमनृतेनैधितः कलिः ॥ २५ ॥
इयञ्च भूर्भगवता न्यासितोरुभरा सती ।
श्रीमद्भिस्तत्पदन्यासैः सर्व्वतः कृतकौतुका ॥ २६ ॥
शोचत्यश्रुकला साध्वी दुर्भगेवोज्झिता सती ।
अब्रह्मण्या नृपव्याजाः शूद्रा भोक्ष्यन्ति मामिति ॥ २७ ॥
इति धर्मं महींचैव सांत्वयित्वा महारथः ।
निशात माददे खड्गं कलयेऽधर्महेतवे ॥ २८ ॥

श्रीविश्वनाथचक्रवर्त्ती ।

अहन्तु त्वया अकथितमपि तव भद्राभद्रं सर्वं जानाम्येव तत् शृणिवत्याह तप इति द्वाभ्याम् । अधर्मस्य अंशः पादैः स्मयादिभिः । स्मयो गर्वः । संगः स्त्रीभिः । मदो मधुपानजः । उपलक्षणमेतद्धिंसादेरपि । ततः सत्यादिनाशकत्वं ज्ञेयम् ॥ २४ ॥

---

सिद्धांतप्रदीपः ।

कृष्णमपर्यंत्वष्टाऽभाषतयद्वातंवृषंधर्मोऽयमितिज्ञातवान् चक्षिङ्दर्शनेऽप्यस्ति ॥ २१ ॥

हे धर्मज्ञ ! प्रत्यक्षप्रमाणप्राप्तेघातकेसंनिहितेऽपिहेयोपादेयपक्षद्वयगर्भपरदोषरहितंसत्यवचनात्मकंधर्मंब्रवीषि अतोधर्मोऽसि धर्मोपिवा वृषदेवतारूपोऽसिसूचनंदोषमाह अधर्मकृतोऽधर्मकारिणोयेनरकादिस्थानंतत्सूचकस्यापिभवेत् ॥ २२ ॥

अथवेतिदेवस्यविष्णोर्मायायाः प्रकृतेर्गतिः चेतसोवचसश्चागोचरा अविषयाविष्णुमायामोहिताः सर्वेसर्वंनजानंतीतिभावः तथोक्तं महाभारते "सर्वेसर्वंनजानंतिसर्वज्ञोनास्तिकश्चने"ति वैष्णवे "ब्रह्माद्याःसकलादेवामनुष्याः पशवस्तथा विष्णुमायामहावर्तमोहांधतमसावृता" इतियद्वा भगवदिच्छयाप्यकथनंसंभवतीत्याह अथवेतितस्यभगवतः वयुनात्मिकायाःगतिःप्रवृत्तिः सर्वज्ञानामपिकाचिन्मोहहेतुर्भूतासाचके षुकेषुसर्वज्ञेषुकस्मिन्कस्मिन्कार्ये ऽस्तीतिभूतानांजनानांगोचराग्राह्यानभवतीतिनिश्चये त्रिगुणात्मिकयामाययासर्वजगद्भूतांजीवामोहिताः भगवदीयानांतुकाचिन्मोहश्चेत्तत्रभगवदिच्छैवकारणमितिभावः ॥ २३ ॥

स्मयेनविस्मयेनतपः संगेनशौचं मदेनदयाइतिक्रमेणाधर्मस्यांशैः पादैः त्रयोधर्मपादाः भग्नाः ॥ २४ ॥

---

भाषाटीका ।

सूतजी बोले हे द्विज सत्तम शौनक ! इसप्रकार धर्म के बोलनेपर वह राजा एकाग्र चित्त होकर चिन्ता रहित होकर उसको जानता हुआ ॥ २१ ॥

बोला कि हे धर्मज्ञ ! आप धर्म कथन करते हो सो धर्म ही हो अधर्म करनेवाले को जो नरकादि स्थान होता है सोई स्थानसूचक पुरुष को भी होता है ॥ २२ ॥

अथवा परमेश्वर की माया की गति भूतों के चित्त के तथा बचन के अगोचर है यह बात निश्चित है ॥ २३ ॥

आपके सत्ययुग में तपः शौच दया सत्य यह चार पाद किये थे अब अधर्म के गर्व आसक्ति मद इन तीनों पादों से तीनों पाद टूट गये हैं ॥ २४ ॥

---

श्रीधरस्वामी ।

इदानीं कलौ हे धर्म ! ते पादश्चतुर्थांशः । तत्रापि सत्यमेवास्ति । यतः सत्याद्भवान् आत्मानं निर्वर्त्तयेत् कथंचिद्धारयेत् । यद्वा पुरुषस्त्वां साधयेत् । तमपि पादम् अनृतेन सम्वर्द्धितः कलिरूपोऽयमधर्मो ग्रहीतुमिच्छति । तत्रेयं स्थितिः कृतयुगे प्रथमं सम्पूर्णचतुष्पाद्धर्मः । त्रेतायां चतुर्णामपि मध्ये स्मयेन तपः सङ्गेन शौचं मदेन दया अनृतेन सत्यमित्येवं चतुर्थांशोहीयते । द्वापरे त्वर्द्धम । कलौ चतुर्थांशोऽवशिष्यते सोऽप्यन्ते नंक्ष्यतीति ॥ २५ ॥

न्यासितः अन्योन्यद्वारेणावतारित उरुभारो यस्याः । कृतं कौतुकं मङ्गलं यस्याः ॥ २६ ॥

अश्रूणि कलयति मुंचतीत्यश्रुकला । तेन त्यक्ता सती शूद्रा भोक्ष्यन्ति मामिति शोचति ॥ २७ ॥

निशातं निशितम् । अधर्मस्य हेतुर्यः कलिः तं हन्तुमित्यर्थः ॥ २८ ॥

दीपनी।

तेन भगवता इत्यर्थः ॥ २७—३७ ॥

श्रीवीरराघवः।

अथवृषलंतच्चिकीर्षितंचानिश्चित्याह इदानीमिति हेधर्म ! यत्तवतुरीयंपादंसत्यम्यद्यतोनिवर्त्तयेत् यस्माद्धेतोर्निष्पाद्येततमिदानीमनृते नैधितःप्रवृत्तोऽयमधर्मरूपःकलिर्जिघृक्षतिग्रहीतुमिच्छति तपआदीनांक्रमेणनिवर्तकाः स्मयसङ्गमदानृतानांभावाः सन्त्यपिहितपआदीनि विस्मयादिभिर्नव्यज्यन्ते ॥ २५ ॥

अथगांतत्क्लेशहेतुंचानिश्चित्याहइयमितिद्वाभ्यामइयंगौः साक्षाद्भूः पृथ्वीभगवताश्रीकृष्णेनन्यासितोपनीतः उरुभरोयस्यास्तथाभूता श्रीमद्भिरब्जादिविग्रहैः श्रीः शोभाग्रेषामस्तीतितैस्तस्यभगवतः पादन्यासैः सर्वत्रकृतंकौतुकमुत्सवोयस्याः साबभूव ॥ २६ ॥

अधुनातुभगवतोज्झितात्यक्तासतींसाध्वीभूरतएवभाग्यहीनेवाब्रह्मण्यात्रह्मकुलासाधवःनृपव्याजानृपवेषमात्रधराः शूद्रामांभोक्ष्यंतीति हेतोरश्रूणांकलांबिंदवोयस्यास्तथाभूताशोचति ॥ २७ ॥

इतीत्थंधर्ममहिंचसांत्वयित्वामहारथः परीक्षिदधर्महेतवेकलयेतद्वधार्थंनिशातंतीक्ष्णंखङ्गमादधेउद्धृतवान् ॥ २८ ॥

श्रीविजयध्वजः।

इदानीमस्मिन्युगेयतोयेनपादेननिर्वर्तसे हेधर्म ! तेसपादः सत्यंसत्यात्मकस्त्ववशिष्टोऽनृतेनाधर्मपादेनएधितोवर्धितोऽधर्मात्मकः कलिः तंसत्याख्यंपादंजिघृक्षतितंग्रहीतुमिच्छति ग्रसितुमाकांक्षतेइत्यन्वयः ॥ २५ ॥

इयंभूश्चभगवतान्यासितोऽवरोपितउरुर्महान्भरोभारोयस्याः सातथोक्ताश्रीमद्भिस्तस्यहरेः पदन्यासैःपदपरिक्रमणैः सर्वतः कृतकौतुकारांचितालंकाराररचितरोमांचेतिवा सतीनिर्मलाभूत् ॥ २६ ॥

सेयंसाध्वीअधुनातत्पदन्यासैरुज्झितादुर्भगेवभाग्यहीनास्त्रीवशोचंतीआश्रुकलासंततस्रुतनेत्रजलधाराऽऽस्तइत्यन्वयः किंकृत्वाअब्रह्मण्याब्राह्मणभक्तिरहितानृपव्याजाः शूद्रामांभोक्ष्यंतिपालकव्याजेनभुंजतइति ॥ २७ ॥

अधर्महेतवेअधर्मकारणाय निशातं तेजितंहंतुमितिशेषः ॥ २८ ॥

क्रमसंदर्भः।

इतीति। ननु जीवानामधर्म एव तत्तद्दोषहेतुरित्युक्तम् कथं कलिं हन्यात् तत्राह। अधर्मस्य हेतवे सहायायेत्यर्थः। वक्ष्यते च त्वमधर्मबन्धुरिति ॥ २८। २९। ३० ॥

सुबोधिनी।

एवंधर्मस्वरूपमुक्त्वाभूमिस्वरूपज्ञानमाविःकरोति इयंचेतिचकारादतिरिक्तःकलिःतस्यविशेषतःअनिरूपणंचकारेणज्ञापितम्अस्यागुणा अयंदोषत्रयम्इयंहिषडंशापूर्वंभगवतान्यासितः उत्तारितःउरुअधिकोभारोयस्याःभगवत्कृतोपकारत्वंगुणःततःसतीभगवदेकनिष्ठाभगवते सर्वांशैरलंकृताच तदाह श्रीमद्भिरिति न्यासःस्थापनं सर्वतःकृतं अनेनशृङ्गाररसत्वंचसूचितम् ॥ २६ ॥

दोषानाहशोचतीति भगवत्परित्यागेनशोकदुर्भगात्वम् अब्रह्मण्यभोगेनपूर्वावस्थात्यागश्चअश्रूणिकलयतीत्यश्रुकलास्वकृतदोषाभावार्थमाह साध्वीतिभाग्यनाशएवहेतुः तदाहदुर्भगेति अधुनेतित्यागनैकट्यंसूचितम् ननुराज्ञांभगवद्रूपत्वात्भोगेकोदोषइति तत्राह अब्रह्मण्या इति भगवद्धर्मवैपरीत्यम् अब्रह्मण्यपदेनसूचितम् नृपत्वंवक्तुंयोगाभावात् शूद्राइतिभगवद्विरोधिनः असुर्यः शूद्रइतिश्रुतेः तेभोक्ष्यंतीति शोकोरोदनंच अनेनस्वरसाविर्भावात् नतेषांयोगः सेत्स्यतीतिभावः सूचितः ॥ २७ ॥

उपसंहरतीतीति चकारउक्तसमुच्चयार्थः एवकारःकलिनिषेधार्थःमहारथइतिनिग्रहसामर्थ्यं कालस्यदेवतात्वात् तीक्ष्णखड्गेनशिरश्छेदो नयुक्तइत्याशंक्याह अधर्महेतवइतिअधर्मकरणनिवृत्त्यर्थेचतुर्थीमशकेभ्योधूमइतिवत् अदृश्यतयागमनेनप्रयोजनं नवानिर्स्तारः ॥ २८ ॥

श्रीविश्वनाथचक्रवर्त्ती।

इदानीं कलौ हे धर्म ते पादश्चतुर्णामेव तप-आदिपापानां स्मयादिभिर्भागत्रयध्वंसात् अवशिष्टैश्चतुर्भिश्चतुर्थैरंशैरेकः। स च प्राधान्येन व्यपदेशा भवन्तीति न्यायेन सत्यम्। तप-आदिषु सत्यस्यैव प्राधान्यात्। यतः सत्याद्भवानात्मानं निवर्त्तयेत् कथंचिद्धारयेत्। यद्वा पुरुषस्त्वां साधयेत्। तदपि पादमनृतेन संवर्द्धितः कलिरूपोऽयमधर्मः ग्रहीतुमिच्छति। तत्रेयं द्वादशस्कन्धदृष्ट्या स्थितिः। कृतयुगे

तं जिघांसुमभिप्रेत्य विहाय नृपलांछनम् ।
तत्पादमूलं शिरसा समगाद्भयविह्वलः ॥ २९ ॥
पतितं पादयोर्वीरः कृपया दीनवत्सलः ।
शरण्यो नावधीच्छ्लोक्य आह चेदं हसन्निव ॥ ३० ॥
न ते गुडाकेशयशोधराणां बद्धाञ्जलेर्वै भयमस्ति किञ्चित् ।
न वर्त्तितव्यं भवता कथंचन क्षेत्रे मदीये त्वमधर्म्मबन्धुः ॥ ३१ ॥
त्वां वर्त्तमानं नरदेवदेहेष्वनुप्रवृत्तोऽयमधर्म्मपूगः ।
लोभोऽनृतं चौर्य्यमनार्य्यमंहो ज्येष्ठा च माया कलहश्च दम्भः ॥ ३२ ॥

### श्रीविश्वनाथचक्रवर्त्ती ।

प्रथमं संपूर्णश्चतुष्पाद्धर्मः । त्रेतायां चतुर्णामपि पादानां मध्ये स्मयेन तपः सङ्गेन शौचं मदेन दया अनृतेन सत्यमित्येवं चतुर्थोऽशोहीयते । द्वापरं त्वर्द्धम् । कलौ चतुर्थोऽशोऽवशिष्यते । सोऽप्यन्ते नंक्ष्यतीति ॥ २५ ॥

न्यासितः अवतारितः स्वेनान्यद्वारा च उरुभरो भारो यस्याः सा ॥ २६ ॥

अश्रूणि कलयति दधातीति ॥ २७ ॥

कलये कलिं हन्तुं खड्गम् आददे इत्यत्र राज्ञोऽयमभिप्रायः—मत्पाणिस्थखड्गदर्शनेनायमपि नृपचिह्नधारी मया सार्धं द्वन्द्वयुद्धं योद्धुं मायातु ततश्चैनं शीघ्रमेव हनिष्यामीति ॥ २८ ॥

---

### सिद्धांतप्रदीपः ।

हेधर्म ! इदानींकलौसत्यंतेपादोऽस्तियतोभवानात्मानंनिर्वर्तयेद्धारयेत्तमपिअधर्मोऽधर्महेतुरयंकलिः अनृतेनैधितोजिघृक्षति ग्रहीतुमिच्छति ॥ २५ ॥

गोरूपधारिणी भूरियमिति ज्ञात्वातांप्रत्याह इयमितिद्वाभ्याम् इयंगोरूपधराभूः भगवताश्रीकृष्णेनन्यासितःअवतारित उरुर्भरोयस्याः साश्रीयुक्तैस्तत्पदन्यासैः सर्वत्रकृतंकौतुकमुत्सवोयस्याः सापूर्वमेवंभूतापि ॥ २६ ॥

अधुनातुभगवतोज्झितात्यक्ताऽतोश्रूणांकलाः विंदवोयस्याः सासाध्वीसदाचारादुर्भगेवाब्रह्मण्यब्रह्मब्राह्मणहितवर्जिताः नृपव्याजाः वृत्त्यर्थंनृपवेशधराः मांभोक्ष्यंतीतिशोचति ॥ २७ ॥

अधर्महेतवइति निशातं निशितम् ॥ २८ ॥

---

### भाषाटीका ।

हे धर्म ! अब तुम्हारा एक सत्यपाद रहा है जिससे तुम अपना निर्वर्त्तन करते हो परंतु यह अनृत से वर्द्धित कलियुग रूप अधर्म उसे भी लेना चाहता है ॥ २५ ॥

यह भूमि है भगवान ने इसका सब भार दूर कर दिया था और उनके श्रीमत्पदन्यासों से सर्वतः कृतकौतुका थी । अब दुर्भगाके समान उन्हों ने छोंड़ दी है अश्रु कला युक्त होकर विचारी यह शोचती है कि अब्रह्मण्य नाम मात्र के राजा शूद्र मुझे भोग करेंगे ॥ २६ । २७ ॥

महारथ राजा ने ऐसे धर्म और मही को शांत कर, अधर्म हेतु कलियुगको मारने को निशात ( पैना ) खड्ग हाथ में लेलिया राजामारना चाहता है यह जान कर कलि, राज लांछन (चिन्ह—वेष) छोंड़कर भय से विह्वल हो शिर से राजा के चरणों में गिरपड़ा ॥ २८ । २९ ॥

---

### श्रीधरस्वामी ।

अभिप्रेत्य ज्ञात्वा ॥ २९ ॥

शरण्यः आश्रयार्हः । श्लोक्यः सुकीर्त्तिर्यः ॥ ३० ॥

गुडाकेशोऽर्जुनः तस्य यशोधरा ये वयं तेषाम् । तान् प्रति बद्धोऽञ्जलिर्येन तस्य तव । किन्तु कथञ्चन केनाप्यंशेन न वर्त्तितव्यम् । यस्मात्त्वमधर्मस्य बन्धुः ॥ ३१ ॥

श्रीधरस्वामी ।

तदेवाह । राजदेहेषु वर्त्तमानं त्वामनु सर्व्वतः । प्रवृत्तः । अनार्य्यं दौर्जन्यम् । अंहः स्वधर्म्मत्यागः । ज्येष्ठा अलक्ष्मीः । मायां कपटम् ॥ ३२ ॥

---

श्रीवीरराघवः ।

तंपरीक्षितंजिघांसुंहंतुमिच्छुममिप्रेत्यालक्ष्यकलिःनृपलांछनानिकिरीटादीनिविहायापनीयभयेनाविह्वलगात्रः शिरसातस्यपरीक्षितः पादयो मूलंसमगात्पपातेत्यर्थः ॥ २९ ॥

पादयोःपतितंकलिंवीरोदीनवत्सलः शरणमर्हः शरण्यः श्लोक्यः प्रशस्तोराजाकृपयानावधीन्नहतवान्किंतुहसन्निवेदंवक्ष्यमाणमाह ३०

तदेवाहनेत्यादिभिश्चतुर्भिः गुडाकेशयशोधाराणामर्जुनकीर्त्तिवर्द्धनानामस्माकंसन्निधावितिशेषः बद्धांजलेस्तेतवकिंचिदपिभयंनास्ति अस्मदीयेक्षेत्रेकथंचनभवतानवर्तितव्यं कुतः यतस्त्वमधर्मस्यवंधुरनुबंधी ॥ ३१ ॥

तदेवप्रपंचयतित्वामितिनरदेवानांदेहेषुवर्त्तमानंत्वामनुसृत्यप्रवृत्तोभवत्ययमधर्मसमुदायःकोऽसावधर्मयूथइत्यत्राहलोभइतिअनार्यंशाठ्यं मंहः पापंज्येष्ठाऽलक्ष्मीः मायागुणकार्यरागद्वेषादिकम्अपन्हवोवादंभोवंचनम् ॥ ३२ ॥

---

श्रीविजयध्वजः ।

जिघांसुंहंतुकामंपादमूलंसमगात् अष्टांगविशिष्टतयाऽसीदित्यन्वयः ॥ २९ ॥

श्लोक्यः कीर्तिकामः ॥ ३० ॥

गुडाकेशयशोधाराणामर्जुनकीर्तिविभ्रतांकौरवाणामस्माकमर्थेबद्धोऽञ्जलियेनसतथाकेस्तस्यगुडाकेशयशोधराणांसकाशात्भयंनास्तीतिवाकिंतुहेकलेत्वयामदीयेक्षेत्रेकथंचिदपिनवर्तितव्यमित्यन्वयः देहमारभ्यराष्ट्रपर्यंतस्थानाभिविवक्षयाक्षेत्रइत्युक्तम् कुतइतितत्राह त्वामितिअधर्मएवबंधुर्यस्यसतथोक्तः अधर्मबंधुत्वादितिभावः ॥ ३१ ॥

ततश्चकिमितितत्राह त्वामिति नरदेवानांधर्मपालकानांराज्ञांदेहेषुवर्तमानंसन्निधानंत्वामन्वनंतरम्अयंलोभाद्यधर्मयूथः प्रवृत्तोभवतीति यस्मात्तस्मादधर्मबंधोहेकलेसत्येनधर्मेणचवर्तितव्येब्रह्मावर्तेविंध्यहिमवत्पर्वतयोर्मध्येपुण्यदेशेनवर्तितव्यमित्यन्वयः लुभगार्ध्यइति धातो र्लोभः परवित्ताभिलाषः सद्व्ययेप्राप्तेस्ववित्तापरित्यागोवा ज्येष्ठाअलक्ष्मीः मायानिकृतिः यत्रयस्मिन्ब्रह्मावर्तेस्वाध्यायादिर्ब्रह्मयज्ञश्चपुरो डाशादिद्रव्यलक्षणवितानयज्ञश्चयेषांतेब्रह्मवितानयज्ञाः मुनयः यज्ञैर्यज्ञेश्वरंयजंति ॥ ३२ । ३३ ॥

---

क्रमसंदर्भः ।

गुडाकेशस्य यद्यशस्तस्य रक्षणव्यग्राणामित्यर्थ ॥ ३१ । ३२ ॥

---

सुबोधिनी ।

धर्मवाक्यानांश्रवणात् तदर्थपर्यालोचनयाराजनि अभिमानादिःस्वकुटुम्बमस्तीतिज्ञात्वास्वनाशभयं परित्यज्यतच्छरणंगतइत्याहतं जिघांसुमिति राजचिन्हंछत्रादिलोकेआज्ञापनंत्यक्त्वेत्यर्थः पादमूलमिति स्वस्यराजशेषत्वंज्ञापितंशरणागतः भवत्सेवकइतिभयविह्वलइति धर्मश्चेत् प्रेरयेत्तदामारयिष्यतीति भयंकापट्यंवाज्ञास्यतिचरणपातव्याजेनराजानमपिपृच्छतितेनतस्याप्यग्रेदुर्बुद्धिरुत्पश्यते धर्मसांनिध्या दियमर्थंज्ञास्यतीतिभयम् ॥ २९ ॥

चरणपातानन्तरंयज्जातंतदाह पतितमिति पादयोरितिगतिनाशःसूचितः शोऽपिवुद्धेरुपकारायभविष्यति इहैवभगवत्सायुज्याद्धीर इतिस्वधर्मनाशःप्रकृतइतिविचारः धर्मसांनिध्यात् दयादिप्रवेशः धर्मसांनिध्यात्तत्रजातः तदाह कृपयेतिइयंदयालौकिकीत्याह दीन वत्सलइतिवत्सलातीतिपशुः दानविषयेनविचारः कृतइत्यर्थः पूर्वजकीर्तिरक्षार्थंनास्यबुद्धिर्जातास्वधर्मएवजातेतिशरण्यइत्युक्तंलोकाप वादभयादपितदाह श्लोक्यइति इदंवक्ष्यमाणम्आह च अनिष्टंतुनष्टामिष्टंच प्रयच्छतीत्यर्थः हसन्निवेति मुखप्रसादः सर्वक्लेशसम्बन्धी वाकलेः ॥ ३० ॥

कम्पंदृष्ट्वाकालान्तरेमारयिष्यतीतिशंकास्यवर्ततइत्यनुमायतन्निवृत्त्यर्थमाह नतेगुडाकेशइति गुडाकानिद्रातस्याईशोऽर्जुनः अनेनमाया मोहाभावात्त्वत्कृतमस्माकंभयमिति सूचितं यशोधराणामिति यशोऽर्थमप्यधर्मनकरिष्यामिइतिभावः सत्यप्रतिज्ञार्थंवाअहंतुपौत्रएव अन्येऽपियेकेचनअर्ज्जुनस्ययशोधारकाः तेषामप्यग्रेबद्धांजलेस्तवाकिमपिभयंनास्ति इन्द्रादिरपि भयजननासमर्थइत्यर्थःपरमस्मदीयाआज्ञा

### सुबोधिनी।

परिपालनीयेत्याह न वर्त्तितव्यमितिकथंचनकेनाप्यंशेनतस्यजम्बूद्वीपराज्यमल्पामिवनिरूपयतिक्षेत्रमितिउत्पत्तिःस्थानंवाअतोयदेवविजिंपति ष्यति तदेवोत्पत्स्यतइतित्वयानस्थातव्यंतत्रहेतुः अधर्मवंधुरितिअधर्मेनिवार्यंदण्डेवाअपकारंकरिष्यतीतिसूचितम् अतएवेदानींपाषण्डिता निराकरणेनिराकर्त्तुर्भयम् ॥ ३१ ॥

ननुराज्ञएतत्कार्यंयत्प्रजाशिक्षणं दण्डश्चअतोलाभहेतुंमांकुतोनिवारयसीत्यतआह त्वांवर्त्तमानमिति यदिराजानस्त्वयात्यक्तास्युस्त दातेषांलोभोभवेत् तेषामप्यधर्मत्वेस्वरूपनाशःस्यात् किलाभिनस्वस्यापितथात्वेतदनुमोदनादलाभश्च अतएवनरदेवदेहेषुवर्त्तमानंत्वामनु अधर्मसमूहोऽपिप्रविष्टः सचप्रत्यक्षोऽस्माखपिवर्त्तत इतिइदमानिर्दिशतितमधर्मपूगमेवगणयति भवतस्यप्राणःलोभः परद्रव्याभिलाषः ततस्तत्सिद्ध्यर्थमनृतं मिथ्यैवंत्वयैवंकृतमितिवाच्यतापादनादिप्रतियोगिनोवलत्वेचौर्यंगुप्ततयावित्तहरणंदौर्वल्येतुअनार्यंप्रत्यक्षतएवस्त्रीरत्ना दिहरणम् आर्यविरुद्धशीलत्वात्तस्यानार्यत्वं तस्यशक्तौअंहअपराधकरणम् अग्निदाहादि ततोज्येष्ठादारिद्यूसम्पादनंचकारात्स्वस्यापि दारिद्र्यं ततोवचनेचातुरीमायाततः कलहःपुनः विश्वासार्थंदंभश्च चकारात्कलहादनंतरंमारणंवा ॥ ३२ ॥

---

### ॥ ९६ ॥ श्रीविश्वनाथचक्रवर्त्ती।

विहाय नृपलांछनमिति। तदा कलिनाप्येवं विचारितम्—अनेन सह योद्धुं न मे शक्तिर्न च क्षत्रियस्य शरणापत्तिरुचिता अतो नृपचिह्नं विहायैव पादयोरस्य पतामीति ॥ २९ ॥

नावधीत् श्लोक्य इति। राज्ञापि विचारितं—शरणागतोऽयं हन्तुमनर्हः तदपि दुष्टमेवं यदि हन्मि तर्हि शरणागतवधाज्जातमधर्म्म-मालम्ब्य मय्येवासौ प्रवेक्ष्यति न मरिष्यतीति हसन्निवेति, कोपानपगमात् ईश्वरेण तादृश एव विधिर्निर्म्मितो यज्जिघांसोरपि मम हस्तात् त्वमद्य रक्षितोऽभूरिति मनोऽनुलापाद्य ॥ ३० ॥

स्वकार्य्यं विचार्य्याह—गुडाकेशोऽर्ज्जुनस्तद्यशोधराणामस्माकमग्रतो बद्धाञ्जलेस्तव। किन्तु कथंचन केनाप्यंशेन न वर्त्तितव्यं न स्थेयम् ॥ ३१ ॥

त्वत्प्रवृत्तौ दोषान् शृणुत्याह—त्वामिति। नराणां देवानाञ्च देहेष्विति। देवा अपि त्वदाक्रान्तदेहा लोभाद्यधर्म्मिष्ठा भवन्ति किं पुनर्नरा इति भावः। वर्त्तमानं त्वामनु सर्व्वतः प्रवृत्तः। अनार्य्यं दौर्जन्यम्। अंहः स्वधर्म्मत्यागः ज्येष्ठा अलक्ष्मीः। माया कपटम्। दम्भोऽहङ्कारः ॥ ३२ ॥

---

### सिद्धांतप्रदीपः।

जिघांसुंहंतुमिच्छुम् अभिप्रेत्यज्ञात्वापादयोर्मूलंसमगात्पपात ॥ २९ ॥

कृष्णशरण्यःशरणमाश्रयस्तदर्हः श्लोक्यः श्लोकाः यशांसितदर्हः ॥ ३० ॥

तद्यशोधराणामस्माकमग्रेवद्धांजलेस्तेतवकिंचिदपिभयंनास्ति तथापित्वमधर्मस्यवंधुरनुकूलः अतोमदीयेक्षेत्रेक थंचनकेनाप्यंशेन भवतानवर्तितव्यम् ॥ ३१ ॥

कलेरधर्मवंधुत्वंदर्शयति नरदेवदेहेषुवर्तमानंत्वामनु अधर्मपूगोऽयंप्रवृत्तःकोऽसावित्याकांक्षायामाह लोभोऽन्यायेनाऽर्थाभिलाषः अनृतम् यथार्थभाषणम् अनार्य्यंशाठ्यम्अंहःपापाचरणम् ज्येष्ठाऽलक्ष्मीः मायातवसंवंधनिवंधनाऽऽत्मपरमात्माद्यनभिज्ञताकापट्यंवाकलहःपित्रा दिभिर्विवादः दंभः धर्मध्वजित्वम् ॥ ३२ ॥

---

### भाषाटीका।

दीनवत्सल शरणागत पालक राजा ने चरणों में गिरे कलि को देखकर वध न किया कृपा कर हँसता यह बोला। क्योंकि राजा श्लोक्य अर्थात् यशस्वी है ॥ ३० ॥

राजोवाच—तू अंजली बांधकर चरणोंमें गिरा है अब तुझे गुडाकेश के यशोधरों से कुछ भय नहीं है। किन्तु तुमको मेरे राज्य में नहीं रहना चाहिये क्योंकि तुम अधर्म के बंधु हो ॥ ३१ ॥

तुम्हारे यहां रहने से लोभ, अनृत, चौर्य, दुर्जनता, स्वधर्मत्याग, अलक्ष्मी, कपट, कलह और दम्भ आदिक अधर्म समूह राजाओं के देह में प्रवृत्त होता है ॥ ३२ ॥

न वर्त्तितव्यं तदधर्म्मबन्धो ! धर्म्मेण सत्येन च वर्त्तितव्ये ।
ब्रह्मावर्त्ते यत्र यजन्ति यज्ञैर्यज्ञेश्वरं यज्ञवितानविज्ञाः ॥ ३३ ॥
यस्मिन् हरिर्भगवानिज्यमान इज्यात्ममूर्त्तिर्यजतां शं तनोति ।
कामानमोघान् स्थिरजङ्गमानामन्तर्व्बहिर्वायुरिवैष आत्मा ॥ ३४ ॥

सूत उवाच ।

परीक्षितैवमादिष्टः स कलिर्जातवेपथुः ।
तमुद्यतासिमाहेदं दण्डपाणिमिवोद्यतम् ॥ ३५ ॥
यत्र क वाथ वत्स्यामि सार्व्वभौम ! तवाज्ञया ।
लक्षये तत्र तत्रापि त्वामात्तेषुशरासनम् ॥ ३६ ॥

श्रीधरस्वामी ।

ततस्माद्वर्त्तितव्ये वर्त्तितुमर्हे ब्रह्मावर्त्ते देशे । यज्ञस्य वितानं विस्तारः तत्र विज्ञा निपुणाः ॥ ३३ ॥

इज्या यागः तद्रूपा मूर्त्तिर्यस्य । शं क्षेमं कामांश्च । नन्विन्द्रादयो देवा इज्यन्ते न तु हरिस्तत्राह । एष स्थावरादीनामात्मेति तत्रापि जीववत् परिच्छिन्न इत्याह अन्तर्व्बहिरिति । यथा वायुः प्राणरूपेणान्तःस्थितोऽपि बहिरप्यस्ति तद्वत् सर्व्वान्तर्यामीश्वरो-ऽपीति ॥ ३४ ॥

उद्यतासिम् उद्धृतखड्गम् । दण्डपाणिं यमम् । उद्युक्तम् ॥ ३५ ॥

अत्र न वस्तव्यमिति या तवाज्ञा तया यत्र क्वापि वत्स्यामि । किन्तु तत्र तत्रापि आत्तः गृहीतः इषुः शरासनञ्च येन तं त्वामेव लक्षये ॥ ३६ ॥

श्रीवीरराघवः ।

ततस्माद्धेऽधर्मबंधो ! धर्मेणसत्येनचवर्तितव्येऽस्मिन्ब्रह्मावर्तक्षेत्रेत्वयानवर्तितव्यं "सरस्वतीदृषद्वत्योर्देवनद्योर्यदंतरं" तद्ब्रह्मावर्ततयायत्रयज्ञविज्ञानविज्ञाः यज्ञानुशासनकोविदाः यज्ञैर्यज्ञेश्वरंपरमपुरुषमाराधयंतितत्रब्रह्मावर्तेनवर्तितव्यंसर्वतस्यर्थः ॥ ३३ ॥

किंबहुनायस्मिन्देशेहरिर्भगवानिज्याआराध्याइंद्रादयस्तेमूर्तिः शरीरंयस्यसइज्यमानावायुरिवस्थावराणांजंगमानांचभूतानामंतर्बहिश्चव्याप्यातिशेषः आत्मांतःप्रविश्यप्रशासनधरणंकुर्वन्यजतामाराधयितॄणाममोघान्कामानिष्टार्थांश्चसुखंमोक्षाख्यंचतनोतिप्रयच्छतितत्रसर्वव्यापिनसर्वतावर्तितव्यम् ॥ ३४ ॥

इत्थंपरीक्षितानुशिष्टः कलिर्जातवेपथुः संजातगात्रकंपः उद्यतः उद्धृतोऽसिः खड्गोयेनतंदंडपाणियममिवोद्यंतमुद्युक्तमिदं वक्ष्यमाणमाह ॥ ३५ ॥

तदेवाहयत्रेतिद्वाभ्यांहेसार्वभौम ! तवाज्ञयायत्रक्वचित्वत्स्यामियत्स्थानंभवान्निर्दिशतितत्रक्वचिद्वत्स्यामिकिंतुतत्रत्वामेवगृहीतशरासनमालक्षये ॥ ३६ ॥

श्रीविजयध्वजः ।

यस्मिन्निच्छात्ममूर्तिः इच्छातनुः इज्यमानोहरिर्भगवान्यजतांपुंसांशंसुखंतनोतिप्रपंचयति अमोघान्कामानपितनोतीति किंविशिष्टो हरिः स्थिरजंगमानामंतर्बहिश्चवर्तमानः कइववायुरिवात्माव्याप्तः ईशः प्रवर्तकः ॥ ३३ ॥

उद्यंतसन्नद्धंदंडपाणियममिवस्थितमुद्यतासिमुद्धृतखड्गम् ॥ ३४ ॥

यत्रक्वाथवेत्युक्तस्थलेवत्स्यामीत्यन्वयः लक्षयेपश्यामि ॥ ३५ ॥

हेधर्मभृतांश्रेष्ठ ! तत्स्थानंनिर्देष्टुमर्हसीत्यन्वयः आतिष्ठन्वत्स्येवसामि ॥ ३६ ॥

क्रमसन्दर्भः ।

ब्रह्मावर्त्त इत्युपलक्षणं यज्ञीयदेशानाम् ॥ ३३ । ३४ । ३५ । ३६ । ३७ ॥

## सुबोधिनी ।

उपसंहरतिनवर्त्तितव्यमिति अधर्मेकदेशो । तस्माद्धेनोनिवर्त्तितव्यम् अधिकरणस्यतद्विरोधित्वंप्रकटयतिधर्मेणेति धर्मेणकायिकेनसत्येनवाचिकेनचकारान्मानसिकेन कायवाङ्मनोभिर्धर्मकर्त्तारस्तेषामिः स्थानयोग्येनत्रापिदेशविशेषंनिर्दिशति ब्रह्मावर्त्तइति तद्धिधर्मक्षेत्रं तत्रयदिनिदुष्टोधर्मउत्पन्नःतदान्यत्रधर्ममपिनाशयेत् अतः धर्मक्षेत्रत्वयानस्थातव्यनचकदाचिदपितत्रधर्मशून्यतादेवानामपिदेवयजनत्वेन निरन्तरयज्ञसम्भवात् तदाहयत्रयजंतियज्ञेरिति तत्रापिमुख्यधर्मप्रकारेणयजंतीत्याह यज्ञेश्वरमिति "यज्ञेनयज्ञमयजन्तदेवा" इतिश्रुतिरनुसन्धेयानन्वहमपिएकदेशेस्थास्यामीति चेत्तत्राह यज्ञवितानविज्ञइति यज्ञवितानोयज्ञविस्तारः तुष्ट्यादयः तत्रविशेषज्ञाः अनेनत्वयिप्रविष्टे तदानीमेव ज्ञास्यंतितेतानकरिष्यंतीतिसूचितम् ॥ ३३ ॥

ननुकियज्ञैःएहिकेसिद्धिस्त्वयैवकर्त्तव्यापरलोकस्तुविचारणीयस्तत्राहयस्मिन्निति यस्मिन्देवयजनेहरिरित्यनुमानउद्देश्योयज्ञपुरुषोविष्णुरेवसाक्षाद्भगवान् ननुदेवाएवइन्द्रवाय्वादयः तत्रइज्यंतेतत्राह इज्यात्ममूर्तिरिति इज्यानामात्मामूर्तिश्च ततःक्रमतआह भजतांशंतनोति भक्तिमार्गानुसारिअस्तिदेवकंज्ञायते तत्रनादृष्टद्वाराफलंकिंतुप्रीतादेवनाः फलंप्रयच्छंतीत्यस्यादेश्यत्वाभावाच्चभगवतश्च तथात्वात् अतः प्रीतिरेवद्वारंभौतिकेषु भूनसंस्कारद्वारासर्वज्ञत्वाभगवान्फलदाता फलमतउपपत्तेः ॥ ३ । २ । ३७ ॥ इति तदाहभजतांशंतनोतीति धर्मपक्षे विस्तारभावः अमोघाश्चनकामाःस्थिरजङ्गमानांचेत् फलसम्बन्धः अतोयथावदयज्ञकरणमत्रैवफलंच किंच यज्ञैःसंतुष्टो भगवान्ज्ञानमपि प्रयच्छतिअन्तर्बहिश्चप्रकाशो भवतीत्याह अन्तर्बहिरिति एकस्योभयत्वसदृष्टांतमाह वायुरिवेति ननुदृष्टांतेनैवभगवता तथास्तुसर्वत्वात् अतइत्याह प्राणवायुशब्दएवेति यथापदार्थस्यतथाभगवानन्तर्बहिः पदार्थत्वेनभवतीत्याह अवह्रियमाणोऽप्येकएवेत्यर्थः ननु दृष्टान्तेनैव भगवान्तथास्तुसर्वत्वादतआहएषआत्मेतिनप्राणमात्रमस्यकिन्त्वयमात्माएषइतिभक्त्यास्फुरन्तंभगवन्तंनिर्दिशति ॥ ३४ ॥

एवंप्राप्तजीवनोविशेषंप्रार्थयितुंपुनर्यत्रभावनांकृत्वाविज्ञापयितुमारभतइत्याहपरीक्षितैवमितिआदिष्टआज्ञप्तःजातवेपथुःप्रतिज्ञासत्यांकरिष्यतीति दण्डपाणिमिवेति विलम्बस्तूष्णींभावोवाइत्याशंक्याह उद्यतामिति कृतपूर्वापराधस्यअवश्यंदण्डकर्तृत्वंज्ञापयतिदंड पाणिमिवेति सकृदपराधःसोढव्यः ततःपरंमारयिष्यतीत्याह उद्यतमितिविज्ञापनामाह यत्रेति हेसार्वभौम ! सर्वाभूमिस्तवैव अहमपि त्वदीयः अतो मदधिष्ठितः भूमिरेवेश्वरइतिज्ञापितम् ॥ ३५ ॥

पूर्वमस्माकंस्वातन्त्र्यंस्थितमधुनातवैवाज्ञाकर्त्तव्येत्याह अथेतिभिन्नप्रक्रमेत्वदाज्ञयात्रक्वचनवत्स्यामिममस्थितौनास्तिसंदेहः परंत्वया रोषोनविधातव्यः जीवताचक्वचित्स्यातव्यंजीवनंत्वयैवदत्तम् अतःस्पष्टतयात्वदाज्ञाव्यतिरेकेऽपि जीवनरक्षणात् देवज्ञामतूकार्यदर्शनाच्चको धंचकरिष्यतीत्याह लक्षयइति ॥ ३६ ॥

---

## श्रीविश्वनाथचक्रवर्त्ती ।

धर्मेणेत्यनेनैव सिद्धे सत्येन चेति पृथगुक्तिः सत्यस्य धर्ममूलत्वव्याञ्जिका । स्कन्धशाखादिकं विना केवलेन मूलेनापि न भाक्ः प्रयोजनसिद्धिरित्यतो धर्मेणेति चोक्तम् । वर्त्तितव्ये वर्त्तितुं योग्ये ॥ ३३ ॥

नन्विन्द्रादयो देवता अपीज्यन्ते न केवलं भगवानेव तत्राह—इज्यानाम् इन्द्रादीनाम् आत्ममूर्त्तिरन्तर्यामिरूपः । ते आत्ममूर्त्तयो यस्येति वा स्थिरजङ्गमानामस्मत्प्रजानां कामानाहिकान् शं पारत्रिकं सुखं च तनोति वायुरिवान्तर्बहिश्च साक्षादनुभूयमानः सन्नित्यर्थः । त्वयि वर्त्तमाने तु तथा नैव स्यादिति भावः ॥ ३४ ॥

उद्यतासिम् उर्द्ध्वीकृतखड्गम् । जातवेपथुरिति स्वरक्षणार्थं बहुतरं बुद्धिबलं प्रकाशितम् । तदपि मम वध एवोपस्थित इति भावः । राज्ञोऽयमभिप्रायः—यदीमां मदाज्ञां न पालयति तदा मदभीष्टमस्य वधमधुनैव करिष्यामि यदि च पालयति तदास्यावधेऽपि मम क्षापि क्षतिर्नास्तीति । दण्डपाणिं यमम् ॥ ३५ ॥

हे सार्वभौम ! सर्वस्या अपि भूमे राजन् । लक्षये साक्षाद्देवमेव त्वां पश्यामि । तेन सर्वेषां स्थावरजंगमानां युष्मत्प्रजात्वात् सर्वस्या अपि भूमेस्तवाधिकारात् मम वस्तुं स्थानाभावात् सम्प्रति त्वदग्रे वर्त्तमानं त्वत्पादयोः पतितं मां स्वहस्तेनैव जहीति भावः ॥ ३६ ॥

---

## सिद्धांतप्रदीपः ।

तत्तस्मात् धर्मेणसत्येनचवार्तितव्येवार्तितुमर्हे ब्रह्मावर्ते ब्रह्मावर्तोपलक्षिते समन्पारिपाल्येभूतलेयत्रयज्ञेश्वरस्य "अहंहिसर्वयज्ञानांभोक्ताच प्रभुरेवच" इति निजवाक्योक्तंश्रीकृष्णम् यज्ञवितानस्य यज्ञेश्वरयजनविस्तारस्यविज्ञाअभिज्ञाः यज्ञैर्यजंतिआराधयंतितस्मिन्त्वयानवर्तितव्यम् ॥ ३३ ॥

यस्मिन्ब्रह्मावर्तोपलक्षितेभूमंडलेइज्यामूर्तिःइज्यारूपायागरूपा मूर्तिर्यस्यसः यथावायुः प्राणरूपेणांतश्चरोऽपिवहिरपिधूयमानोऽस्तितथा स्थिरजंगमानांस्थावराणांजंगमानांच अंतरात्मावहिरपिवर्तमानएषहरिः यजतांशंमोक्षाख्यंसुखममोघान्सत्यानीप्सितान्कामांश्चतनोति ॥३४॥

दंडपाणिंधर्मराजमिवोद्यतमुच्चुकमुद्यतासिमुद्धृतखड्गमिदंवक्ष्यमाणमाह ॥ ३५ ॥

तदेवाह द्वाभ्याम् हेसार्वभौम ! सर्वभूमिपते नवर्तितव्यंभवताकथंचनक्षेत्रमदीयेइतियातवसार्वभौमस्याज्ञातयायत्रक्वचनवत्स्यामि आज्ञावलात्कांश्चिन्मुख्यान्विहायस्थातवतावासासंभवात्सार्वभौमस्यभवतएवयस्मिन्कस्मिन्क्षेत्रेगत्वावासंकरिष्यामि एवंचाज्ञाछेदकारिणं मांमरवाप्रवृत्तत्वाम् आत्तागृहीतइषुःशरासनंचयेनतंलक्षये ॥ ३६ ॥

तन्मे धर्म्मभृतां श्रेष्ठ ! स्थानं निर्देष्टुमर्हसि ।
यत्रैव नियतो वत्स्ये आतिष्ठंस्तेऽनुशासनम् ॥ ३७ ॥

सूत उवाच । अभ्यर्थितस्तदा तस्मै स्थानानि कलये ददौ ।
द्यूतं पानं स्त्रियः सूना यत्राधर्म्मश्चतुर्विधः ॥ ३८ ॥
पुनश्च याचमानाय जातरूपमदात् प्रभुः ।
ततोऽनृतं मदं कामं रजो वैरंच पंचमम् ॥ ३९ ॥
अमूनि पंच स्थानानि ह्यधर्म प्रभवः कलिः ।
औत्तरेयेण दत्तानि न्यवसत् तन्निदेशकृत् ॥ ४० ॥

भाषाटीका ।

हे अधर्म बन्धो ! इसी से तुम्हें यहां न रहना चाहिये ब्रह्मावर्त्त में धर्म और सत्य से रहना होता है जहां यज्ञ वितान के वेत्ताजन यज्ञेश्वर को यज्ञों से पूजन करते हैं ॥ ३३ ॥

जिस ब्रह्मावर्त्त में यजन किये गये इज्यामूर्ति भगवान् यजन करनेवालों का मंगल विधान करते हैं स्थावर जंगम में वायु के समान अंतर्बहिः व्यापक हरिसर्वात्मा समस्तकामें पूर्ण करते हैं ॥ ३४ ॥

सूतउवाच—परीक्षित करके इस प्रकार आदिष्ट कलि कांपता, दण्ड पाणि के समान उद्यत उद्यतासि राजा से बोला ॥ ३५ ॥

हे सार्वभौम ! तुम्हारी आज्ञा से मैं जहां निवास करूँगा वहीं धनुष बाण धारी तुमको देखता हूं ॥ ३६ ॥

श्रीधरस्वामी ।

अतः तस्मात् । नियतो निश्चलो वत्स्यामि ॥ ३७ ॥

पानं मद्यादेः । सूनाः प्राणिवधाः । द्यूतेऽनृतम् । पाने मदः । पूर्वं मदो दयानाशकत्वेनोक्तः अत्र तु गर्व्वद्वारा तपोनाशकत्वेन । स्त्रीषु सङ्गः हिंसायां कौर्यंच दयानाशकमिति ज्ञेयम् । यद्यपि सर्वं सर्वत्र सम्भवति तथापि प्राधान्येनानृतादीनां द्यूतादिषु यथासंख्यं तज्ज्ञेयम् । द्वादशस्कन्धे तु सत्यं दया तपो दानमिति पादा विभाव्यन्ते अत्र दानशब्देन शौचमेवोक्तं मनःशुद्धिरूपत्वात् भूताभयदानस्य । त्रेतायां धर्मपादानां तुर्य्यांशो हीयते शनैः । अधर्मपादैरनृतहिंसासन्तोषविग्रहैरित्यत्र च असन्तोषशब्देन तस्य हेतुर्गर्व्वो लक्ष्यते । विग्रहशब्देन च तद्धेतुः स्त्रीसङ्ग इत्यविरोधः ॥ ३८ ॥

चतुर्विधस्याप्येकत्रावस्थानं देहीति पुनर्याचमानाय जातरूपं सुवर्णं च दत्तवान् । ततः सुवर्णदानात् अनृतं मदं काममिति स्त्रीसङ्गं रज इति रजोमूलां हिंसाम् एतानि चत्वारि पंचमं वैरंच अदादिति ॥ ३९ ॥

अमूनि अमीषु स्थानेषु न्यवसदित्यर्थः ॥ ४० ॥

दीपनी ।

पूर्व्वमिति अस्याध्यायस्य पंचविंशश्लोके इति शेषः ॥ सत्यमिति द्वादशस्कन्धीयतृतीयाध्यायस्याष्टादशश्लोकः । त्रेतायामिति द्वादशस्कन्धीयतृतीयाध्यायस्य विंशश्लोकः ॥ ३८ ॥

सुवर्णदानादिति । सुवर्णदानादेव तन्मूलकानृतमदादिपञ्चानां दानं सिद्धमिति भावः ॥ ३९ ॥ ४० ॥

श्रीवीरराघवः ।

अतस्त्वामेवंविधंनयत्रलक्षयेहेधर्मभृताश्रेष्ठ ! तवानुशासनमाज्ञामातिष्ठन्ननुपालयन्नियमेनवत्स्येतत्स्थानंनिर्देष्टुंत्वमर्हसि ॥ ३७ ॥

इत्थमभ्यर्थितोराजाततस्तस्मैकलयेत्राणस्थानानिददौतान्येवाह द्यूतमिति येषुस्थानेषुद्यूतादिरूपश्चतुर्विधोऽधर्मस्तानिददावित्यर्थः तत्रद्यूतमक्षैर्देवनंपानंमद्यपानंस्त्रियः स्त्रीणांसंगः सूनाप्राणिहिंसा ॥ ३८ ॥

पुनश्चयाचमानायकलयेप्रभुः परीक्षिज्जातरूपंसुवर्णंस्थानमदात्ततः पुनरपिस्थानांतराणियाचमानायानृतादीनिपंचयेष्वतानिस्थानानि ददौ ॥ ३९ ॥

### श्रीवीरराघवः ।

रजः क्रोधः प्रभवत्यस्मादिति प्रभवः अधर्मप्रभवः कलिरौत्तरेयेण परीक्षिता दत्तान्यमूनि पंचस्थानान्यनृतादीनि पूर्वोक्तानि द्यूतादीनि च तस्यौत्तरेयस्याज्ञानुवर्ती स कलिर्न्यवसत् ॥ ४० ॥

### श्रीविजयध्वजः ।

कानि तानि स्थानानीति तत्राह द्यूतमिति द्यूतं देवनं पीयत इति पानं मद्यं सूना प्राणिहिंसनं यत्र येषु स्थानेषु चतुर्विधोऽधर्मः पापं स्यादिति शेषः ३७

जातरूपं सुवर्णं तत्फलमाह तत इति ततो द्यूतादिभ्योऽनृतादीनि पापसाधनानि भवंतीति शेषः ॥ ३८ ॥

तस्य राज्ञो निदेशकृदाज्ञाकृत् अधर्मप्रभवः अधर्मोत्पादकः अमूनि द्यूतादीनि पंच स्थानानि ॥ ३९ ॥

बुभूषुः पुरुषार्थकामः लोकपतिर्लोकपालः गुरुरुपदेष्टा धर्मस्येति शेषः ॥ ४० ॥

---

### क्रमसंदर्भः ।

पानं सौत्रामण्यादिविहितव्यतिरिक्तम् । स्त्रियः कामस्त्रियः न तु धर्मपत्न्यः । सूनाश्च धर्मव्यतिरिक्ताः । अत्र टीकायां पानेन मदगर्वौ गृहीतौ । मदे गर्वोऽपि दृश्यत इति एतदेवाह—गर्वेश्चेति । ततः पूर्ववदेव दयातपसोर्नाशकत्वेन तौ विवक्षितौ । द्यूतेनानृतं गृहीतं तच्च पूर्ववदेव सत्यनाशकम् । स्त्रीभिः सङ्गो विवक्षितः स च पूर्ववदेव शौचनाशकः । यत्तु सूनाभिः क्रौर्यं पूर्वतोऽधिकं गृह्यते तदपि भवतु दयानाशकमिति न पूर्वेण विरोध इत्यर्थः । एतदेवाह क्रौर्यं चेति । द्वादशस्कन्धवाक्यं तु मतान्तरं वा ज्ञेयम् ॥ ३८ ॥

जातरूपं सुवर्णादिकम् । पूर्ववद्धर्म्मार्थं विना । तत्र पूर्वोक्तचतुर्णां स्थानरूपेणादात् । विशेषतः पंचमस्य वैरस्य चेति । तदेवाह ततस्तद्दानहेतोरनृतादिपंचाप्यदादिति स्थानानिर्णयेन स्थानिनः प्राप्तेर्दुष्कर्त्ता हि स्यादिति भावः ॥ ३९ ॥

ततश्च तत्क्षणादेव तत्र तत्र गतः कलिस्तान्यधिष्ठितवानित्याह अमूनीति । कालाध्वभावदेशानामित्यादिकारिकाबलेन कर्म्मत्वम् ॥ ४० ॥ ४१ ॥

---

### सुबोधिनी ।

यत्रैवस्थास्यामितत्रैवत्वामात्तशरासनंपश्यामिअतोयत्रस्थितःत्वामात्तशरासनंनद्रक्ष्यामितत्स्थानंदेहीत्याहतन्मइति चातुर्येणाप्रार्थितत्वा द्रक्ष्यामिशरासनरहितम् अतोमद्दर्शनमात्रेणैवशासनंत्यक्तव्यमितिभावः धर्मभृतांश्रेष्ठेतियाचितदानंदत्तपरिपालनंचसूचितम् यद्यप्यहंतत्र स्थास्यामिपरंत्वयानिर्दिष्टव्यंत्वदाज्ञयाचेतःस्थितिःस्यात्त्वदाज्ञापरिपालितास्यात् अत्रापिवचनं "शास्त्रफलंप्रयोक्तरि" ॥ १ । २ । ३ ॥ इति न्यायेन तत्पापंतवैवभविष्यतीतिभावः नियतइतिवचनात् धर्मार्थेष्वपिद्यूतादिषुमेमवासइतिज्ञापितम् ॥ ३७ ॥

तत्तथैवकृतवानित्याहतथेतिअस्यावश्यंस्थानंदेयमितिद्यूतमक्षक्रीडाअनाधानाविषयंपानंमदिरायाः स्त्रियःसाधारण्यः बहुवचनात्सूना हिंसाएतेषुयत्राधर्मोभवतितदस्यस्थानं नतुस्वभावतः शास्त्रतोवायत्रैतानिभवंति तानिकलिस्थानानिभवंति किंच चतुर्विधोधर्मः "ब्रह्महत्या सुरापानंस्तेयंगुर्वंगनागमः" स्तेयंद्यूतेप्रविष्टम् अतोमहापातकस्थानभूतमेतत् चतुष्टयंकलेः स्थानमित्यर्थःकलिनासर्वएवगृहीताःयएतानिकरो तियत्रेतिपदात् अधर्मस्यापदेश्यत्वमेव ॥ ३८ ॥

ननुममपंचस्थानानिश्रुतिबोधितानि अतएकमधिकं देयमित्याकांक्षायामाह एकवारंस्थानचतुष्टयंदत्तंपुनर्याचमानायजातरूपंसुवर्णम् दात्स्तेयेसामान्यत्वेनसुवर्णमागतम् अधुनासुवर्णस्तेयत्वेनस्वरूपेणस्वर्णंकलिस्थानंनन्वयंमहाननर्थः कथंसुवर्णंतस्मैदत्तवानितितत्राहविभु रितिचकारात्स्वतंत्रतयार्पितानिस्थानानियाचितानिएषांस्थानानांपुनः प्राप्तानांनस्वरूपेणस्थानत्वं किंतुकार्यतइतितानिकार्याणिक्रमेणगण यतिततइतियस्मात् अधर्मइतिवर्त्तते अतः अनृतरूपंद्यूतंमदरूपंपानंकामरूपाः स्त्रियः रजः क्रोधः तद्रूपासूनासुवर्णंवैररूपंचकारादुभयविधं गृहीततत्पंचमंसुवर्णोऽपिवैरंहिंसायांचवैरमिति ॥ ३९ ॥

अमूनिपंचस्थानानिअधर्मप्रभवःअधर्मोत्पादकः औत्तरेयेणउत्तरायाःपुत्रेणअविवेकः सूचितः तेषुन्यवसदित्यर्थः तन्निदेशकृत्परीक्षिदा ज्ञाकर्त्ता ॥ ४० ॥

---

### श्रीविश्वनाथचक्रवर्त्ती ।

शरणागतं त्वामहं न हन्मीति चेत् तदा हे धर्मपालकानां श्रेष्ठ ! ॥ ३७ ॥

द्यूतं स्पष्टम् । पानं मद्यादेः । स्त्रियोऽविवाहिताः । सूनाः प्राणिवधाः । यत्र चतुर्विधोऽधर्म इति । द्यूतेऽनृतं सत्यनाशकं पाने मदो दयानाशकः स्त्रीषु सङ्गः शौचनाशकः प्राणिहिंसायान्तु समुदित एव चतुर्विधो ऽधर्मः । न हि प्राणिहन्तृषु तपः शुचित्वं दया वा । स्यवचनंतु तेषु नास्त्येवेति ॥ ३८ ॥

अथैतानि न सेवेत बुभूषुः पुरुषः क्वचित् ।
विशेषतो धर्म्मशीलो राजा लोकपतिर्गुरुः ॥ ४१ ॥
वृषस्य नष्टांस्त्रीन् पादान् तपः शौचं दयामिति ।
प्रतिसन्दध आश्वास्य महीञ्च समवर्द्धयत् ॥ ४२ ॥

श्रीविश्वनाथचक्रवर्त्ती ।

भो राजन्नेतद्वृत्तान्तं श्रुत्वा द्यूतादिकं कोऽपि नानुशीलयिष्यति । किंच प्रथमं मनसि मत्प्रवेशस्तत एव लोकाः प्रायो द्यूतादिकं भजन्ते इति । तत्र भवता दीयमानमपि स्थानचतुष्टयमदत्तमेवाभूत् । तस्मादेवं किमपि स्थानमहं प्राप्नुयां यल्लोकैर्दुस्त्यजं स्यादिति याचमानाय कलये जातरूपं स्वर्णोपलक्षितं रजतादिकं द्रव्यमात्रमेव तद्वासस्थानत्वेन अदात् । तत एव हेतोर्धनवत्सु अनृतं मिथ्या मदः पानादिजनिता मत्तता कामः स्त्रीसङ्गः रजो गर्व इति चतुर्विधोऽधर्मः तथा पंचमं वैरंच स्यात् । मदकामयोः क्लीवत्वमार्षम् ॥ ३९ ॥

अमूनि अमीष्वित्यर्थः । यद्वा कालभावाध्वदेशानामिति कारिकाबलात् कर्मत्वम् ॥ ४० ॥

सिद्धांतप्रदीपः ।

तत्तस्माद्धर्मभृतांमध्येश्रेष्ठ ! शरणागतपालक ! यत्रनियतोनिश्चलस्तवानुशासनमनुतिष्ठन्पालयन् वत्स्यामितत्स्थानंत्वंनिर्देष्टुं मर्हसि ॥ ३७ ॥

यत्रयेषुचतुर्विधोऽधर्मस्तानिद्यूतादीनिस्थानानिददौ तत्रद्यूतेऽक्षादिभिर्देवनेसत्यनाशकमनृतम् मद्यादिपानेतपोनाशकोविस्मयः स्त्रीषुशौचनाशकः संगः सूनायांप्राणिपीडनेदयानाशकोमदः ॥ ३८ ॥

चतुर्विधस्याधर्मस्यैकत्रवासंयाचमानायजातरूपंसुवर्णमदाद्दत्तवान् प्रभुः स्थानपंचकदानेसमर्थः ततस्तस्मिन्जातरूपेतद्द्वाराद्वारैव अनृतंमदंकामशब्दवाच्यंसंगंरजश्शब्देनविस्मयमेवचतुर्विधमधर्मंचतुर्विधाधर्ममूलंवैरंचस्थापयामासेतिशेषः ॥ ३९ ॥

औत्तरेयेणउत्तरापुत्रेणदत्तानिअमूनिद्यूतादिजातरूपांतानिपंचस्थानानि अधर्मप्रभवः अधर्मस्यप्रभवोयस्मिंस्ततस्यौत्तरेयस्य युगचक्रस्येतिवानिर्देशकृत्कलिर्न्यवसत् "कालचक्रंजगच्चक्रंयुगचक्रंचकेशवः अनादिनिधनोदेवः परिवर्तयतेऽनिशमि" तिस्मृतेश्च ॥ ४० ॥

भाषाटीका ।

इस से हे धर्म भृतो में श्रेष्ठ ! आप मुझे स्थान निर्देश करदीजिये कि जहां मैं आप का अनुशासन पालन करता नियत होकर निवास करूं ॥ ३७ ॥

कलियुग कर्तृक अभ्यर्थित राजा नें कलियुग को ये स्थान दिये द्यूत (जूआ) पान (मद्य) स्त्री सूना (हिंसा) जहां चार प्रकारका अधर्म है ॥ ३८ ॥

फिर जब कलि ने प्रार्थनाकी तब उसे जातरूप ( सुवर्ण ) दिया जिससें अनृत ( मिथ्या भाषण ) मद काम रज ( रजो मूलक हिंसा ) और पांचवां वैर है ॥ ३९ ॥

अधर्म प्रभव कलि, उत्तरानन्दन ( परीक्षित ) प्रदत्त इन्हीं पांचों स्थानों में । बसा है । उनकी आज्ञा पालन करने वाला है ॥ ४० ॥

श्रीधरस्वामी ।

अथेति द्वेतौ । बुभूषुरुद्भवितुमिच्छुः । स्त्रीसुवर्णयोरसेवनं नाम तयोरनासक्तिः ॥ ४१ ॥

एवं कलिं निगृह्य वृषस्य पादान् प्रतिसन्दधे तप-आदीनि प्रवर्त्तितवानित्यर्थः ॥ ४२ ॥

दीपनी ।

( गुरुः धर्म्मोपदेष्टा इति विजयध्वजः ॥ ) उद्भवितुमिच्छुः अत्यर्थं सद्भावं प्राप्तुमिच्छुरित्यर्थः ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥

श्रीवीरराघवः ।

यतोद्यूतादीनिकलेरावासस्थानान्यतः बुभूषुर्भवितुमिच्छुः सन्पुमान्एतानिद्यूतादीनिनसेवेतबुभूषुरित्यनेनैतानिसेवमानोऽततः स्थावरतांप्राप्नुवन्नसत्प्रायोभवेदितिसूचितंराजातुविशेषतएतानिनसेवेत कुतःयतोऽयंधर्मशीलःधर्मएव शीलंवृत्तंयस्यसः तथाकुतः लोकपतिर्लोकानांपतिः पालयिताअन्यथाराजानमनुवर्त्तमानाःप्रजाअपितथाकुर्वन्त्योनश्येयुरितिभावः एतच्चराज्ञोऽनुचितमित्यभिप्रायेणाविशिनष्टिगुरुर्हितोपदेष्टा ॥ ४१ ॥

ततोवृषस्यवृषरूपधर्मस्यनष्टान्तपआदिरूपांस्त्रीन्पादान्प्रतिसंदधेसंयोजयामासपरीक्षिदितिशेषः तथामहींचाश्वास्यसांत्वयित्वासम्यग्वर्द्धयत्पुपोष ॥ ४२ ॥

---

श्रीविजयध्वजः ।

वृषस्यधर्मस्य ॥ ४२ ॥

---

क्रमसंदर्भः ।

राजा तु तस्मिन् वञ्चनामेव कृतवान् यतो गते तस्मिन् तत्तत्स्थानाभावमाचरितवान् । जातरूपंच धर्म्मार्थं प्रयोजितवानित्यभिप्रेत्याह वृषस्येति । पादस्य त्रिभिस्त्रिभिरंशैस्त्रीन् प्रतिसन्दधे भगवद्भक्तिबलेनेति शेषः । साक्षात्तन्मूर्त्तेः सन्धानेन सर्व्वत्रापि प्रतिसंहितवानिति भावः । सत्यं तत्प्रभावेन न तादृशं तदा नष्टमिति तथोक्तम् । दयेति वक्तव्ये दयामित्यार्षम् ॥ ४२ ॥

---

सुबोधिनी ।

एवंकलेः स्थानानिनिर्दिश्यप्रसंगात्धर्मवर्त्तिनःउपदिशतिअथेति अनृतादिरूपाण्येतानिनसेवेतबुभूषुरुद्भविष्णुः कश्चित्प्रमादविषुपाक्षिकोऽपिदोषःपरिहरणीयानिपदार्थग्रहेणासेवमानेकदाचित्कलिस्थानमेवसेवेततमहाननर्थोभवेत्तस्मात्एतानिपंचापिदूरतएवपरिहरणीयानि कलिस्थानशंकयायत्रपुनर्व्यतिरेकनिश्चयः तत्रविधिर्नप्रतिषेधः सम्भावितमेतत्राज्ञइतिविशेषाकारेणनिषेधं विशेषतइतिधर्मशीलोराजातस्याधर्मप्रतिपक्षत्वात्लोकगुरुः अन्येभ्यउपदेशकर्त्ताशिष्याणांतदाचारशिक्षणात् पतिरितिपरिपालकराजधर्माःप्रजाइति ॥ ४१ ॥

एवंकलिप्रस्थाप्यराजायत्कृतवान्तत्प्रकृतमाहवृषस्येति कालेनधर्मस्यत्रयःपादाःपूर्वोक्तागताः ताननूद्यपुनःप्रतिसंदधेसम्यक् सन्धानं कृतवान्चतुर्विधमपिधर्मं प्रवर्तितवानित्यर्थः पृथिव्याःसांत्वनमाह आश्वास्येतिसमवर्द्धयत् सर्वत्रभक्तिमार्गप्रकारेणकृष्याद्दिनाचपाषंडदूरीकरणेन चकारात् धर्ममप्यवर्द्धयत् ॥ ४२ ॥

---

श्रीविश्वनाथचक्रवर्त्ती ।

स्त्रियं परकीयामेव न सेवेत । बुभूषुः स्वक्षेममिच्छुः । सुवर्णस्यासेवनं नाम तत्रानासक्तिरित्येके ॥ ४१ ॥

एवं कलिं निगृह्य वृषस्य पादान् प्रतिसन्दधे तप-आदीनि प्रवर्त्तितवानित्यर्थः ॥ ४२ ॥

---

सिद्धांतप्रदीपः ।

अथेति अथशब्दोहेत्वर्थः यतो द्यूतादीनि अधर्महेतोः कलेः वासस्थानानितस्माद्धेतोर्बुभुषुरुद्भावितुमिच्छुर्नसेवेत धर्मशीलश्चविशेषतस्तथाराजाविशेषतोनसेवेततद्धिभ्रंशेप्रजाभ्रंशप्रसंगात् तथाऽन्योपिलोकपतिः तथागुरुश्चविशेषतोनसेवेत ॥ ४१ ॥

इत्थंकलिंनिगृह्यतदनंतरंवृषस्यतपआदीन्त्रीन्पादान्प्रतिसंदधेसंयोजयामास तथामहींसमवर्द्धयत् अत्रपादत्रयस्यनष्टत्वसंयोजनंचकथासौंदर्यार्थमुक्तंवस्तुतस्तुत्रेताप्रभृतिषुत्रिषुयुगेषुचतुर्णांपादानांप्रत्येकंतुर्यांशनाशात्त्रयस्त्रयोंशानष्टास्तेएवराज्ञासंयोजिताइतिज्ञेयम् ॥ ४२ ॥

भाषाटीका ।

इसी सें बुभूषु पुरुष इनका सेवन न करैं । विशेषतः धर्म शील, राजा, लोकपति और गुरू तौ और कभी भी इन पांचों का सेवन न करैं ॥ ४१ ॥

धर्म रूप वृषको आश्वासनकर उसके विनष्ट तीनों पाद अर्थात् तप शौच और दया को प्रति संधानकिया अर्थात् इनको पुनः प्रकट किया और पृथिवी को भी सम्वर्द्धन किया ॥ ४२ ॥

---

स एष एतर्ह्यध्यास्ते आसनं पार्थिवोचितम् ।
पितामहेनोपन्यस्तं राज्ञारण्यं विविक्षता ॥ ४३ ॥
आस्तेऽधुना स राजर्षिः कौरवेन्द्रश्रियोल्लसन् ।
गजाह्वये महाभागश्चक्रवर्ती बृहच्छ्रवाः ॥ ४४ ॥
इत्थम्भूतानुभावोऽयमभिमन्युसुतो नृपः ।
यस्य पालयतः क्षोणीं यूयं सत्राय दीक्षिताः ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्यां
प्रथमस्कन्धे पारीक्षिते कलिनिग्रहोनाम
सप्तदशोऽध्यायः ॥ १७ ॥

श्रीधरस्वामी ।

युष्मदीयसत्रप्रवृत्तिरपि तत्प्रभावादित्याह त्रिभिः । एतर्हि इदानीं युधिष्ठिरेणारण्यं प्रवेष्टुमिच्छता उपन्यस्तं समर्पितम् आसनमध्यास्ते ॥ ४३ ॥

अधुना आस्ते पालयते इति च वर्त्तमानसामीप्ये वर्त्तमानवन्निर्देशः । स्मेत्यध्याहारो वा ॥ ४४ ॥

सत्राय सत्रं कर्त्तुं दीक्षिताः दीक्षां कृतवन्तः ॥ ४५ ॥

इति श्रीमद्भागवतभावार्थदीपिकायां प्रथमस्कन्धे सप्तदशोऽध्यायः ॥ १७ ॥

---

श्रीवीरराघवः ।

सइतिसउक्तविधप्रभावएषपरीक्षिदेतर्ह्यधुनाअनतिकालेविप्रकृष्टकालेविविक्षताप्रवेष्टुमिच्छतापितामहेनराज्ञायुधिष्ठिरेण उपन्यस्तंप्रदत्तं पार्थिवस्यसार्वभौमस्यौचित्यंसिंहासनमध्यास्तेवर्तमानवद्भेतिभूतेलट् ॥ ४३ ॥

कौरवश्रेष्ठः श्रियासार्वभौमाश्रियोल्लसन्प्रकाशमानोविपुलकीर्तिश्चक्रवर्तीचक्रभूमंडलंवर्तयाति पालयतीतितथाभूतः राजर्षिर्महाराजः परीक्षिद्गजाह्वयेपुरेऽधुनावर्तमानसान्निकृष्टेभूतकालेआस्तेआस्त ॥ ४४ ॥

नकेवलमुक्तएवतस्यप्रभावः किंत्वित्थंभूताअन्येचप्रभावायस्यतथाभूतोऽयमाभिमन्योःसुतोनृपः परीक्षित् अतएवाधुनातस्याभावेऽपितन्न यात्कलेरत्रदेशेप्रवेशाभावादेवभवतामिदंसत्रंप्रवर्ततइत्याहयस्येतियस्यपरीक्षितः क्षोणींपालयतः अत्रापिवर्तमानसामीप्येभूतेलट् [illegible] देशःपालितवतःसेतअपनीतेपिधनसारेततप्रेटिकायांतद्वासनानुवृत्तिवत्तदाचक्रानुवृत्तेरेवहेतोर्यूयंसत्रायंकृतसंकल्पावर्तते अन्यथाकलिनाभि भूतंसत्रमिदंनप्रवर्तेतेत्यर्थः ॥ ४५ ॥

इतिश्रीवीरराघवटीकायां प्रथमस्कन्धे सप्तदशोऽध्यायः ॥ १७ ॥

---

श्रीविजयध्वजः ।

एतर्हितदानींपार्थिवानांराज्ञामुचितमासनं सिंहासनमध्यास्तइतिलट्लुङर्थः अरंप्राप्तंरक्षतीत्यरण्यंवनंविविक्षताप्रवेष्टुकामेनपितामहेन पितुःपित्रा युधिष्ठिरेणउपन्यस्तंदत्तमासनमध्यास्तइति अधिशीङ्स्थासांकर्मेतिसप्तम्यर्थेद्वितीया बृहच्छ्रवाः महाकीर्तिः ॥ ४३ । ४४ ॥

यस्यक्षोणींपालयतः सतः यूयंसत्रायपक्षविशेषायदीक्षिताः सोऽयमभिमन्युसुतोनृपः इत्थंभूतानुभावः कल्यादिबंधनलक्षणसामर्थ्यो पेतइत्यन्वयः ॥ ४५ ॥

इतिश्रीभागवतेमहापुराणेप्रथमस्कंधेविजयध्वजटीकायांसप्तदशोऽध्यायः ॥ १७ ॥

---

क्रमसंदर्भः ।

अध्यास्त इति प्रभावरूपेणेति ज्ञेयम् । एवमुत्तरत्रापि ॥ ४३ ॥ ४४ ॥

यस्य पालयतः इत्यत्र सत्रं श्रीबलदेवदृष्टादन्यज्ज्ञेयम् ॥ ४५ ॥

इति श्रीमद्भागवतप्रथमस्कन्धस्य श्रीजीवगोस्वामिकृतक्रमसंदर्भे सप्तदशोऽध्यायः ॥ १७ ॥

---

सुबोधिनी ।

तस्यशांतस्यापिकीर्त्यनुभावयोर्विद्यमानत्वात् वर्त्तमानवद्धेतिन्यायेनश्रद्धातिशयजननार्थंदूरकथाव्यावृत्तये विद्यमानत्वेननिरूपयति सएषइति भगवत्सायुज्यप्राप्तस्यसर्वत्रभगवतः स्फुरणात्एषइतिनिर्देशः अतएवहिइदानीमपिपार्थिवोचितमासनमध्यास्ते किंतुजनमेजयस्तत्स्थानेतदध्यासनउपविशति सएवभगवद्रूपोभूत्वात्रास्तेहीतिसर्वेषांप्रतीतिः अतएवपार्थिवोचितराज्ञामुचितम् इदानीमप्यास्तइत्यर्थः अन्यथापार्थिवोचितमपिव्यर्थस्यात् सिंहासनान्तरमपिनाध्यास्ते किंतुपितामहेनराज्ञायुधिष्ठिरेणपरित्यागंचकृत्वावनंविवक्षताउपन्यस्तम् ४३

ननुकिमेतदुपचारादुच्यते नेत्याह आस्तेअधुनेति अधुनापित्तथैवास्ते ननुदेहान्तरम्प्राप्यनेत्याह सराजर्षिः राज्ञएवराजर्षिरेव सादृश्यभ्रमंवारयति कौरवेन्द्रश्रियोल्लसदितिकौरवेन्द्राणांश्रियाराजलक्ष्म्याउल्लसद्यथाभवतितथाआसनंचातत्रापिगजाह्वयेमहाराजइतिराजश्रियाजुष्टएवचक्रंवर्त्तयति आज्ञापयति तथैववृहती कीर्त्तिर्यस्य ॥ ४४ ॥

एवंभगवत्कृपयाभागवतेनच अजरामरःब्रह्मभूतएवभगवानिवरमतइत्युक्त्वातत्दिदृक्षयानिवृत्त्येतस्यालौकिकमेवरूपमुक्तं नतुलौकिकमित्यभिप्रायेणोपसंहरति इत्थंभूतानुभावोऽयमिति मृतोऽपिजीवन्तिष्ठतीतीत्थं,भूतानुभावः कलिनिग्रहादिद्वारा अभिमन्युसुतइति महाशूरत्वमुक्तं तद्राज्यएवभवद्भिः सत्रमारब्धमित्याह यस्यपालयतइति अन्यथाभवन्तोऽपि भागवतस्यश्रवणार्थंगच्छेयुः सम्वत्सरदीक्षायाः कृतत्वात्नकश्चिन्म्रियतेतावदितिवाक्येननविरोधःअग्नीषोमीयप्रभृत्यैवहिंसायामितिविधानात् क्षोणींपालयतः सतःसत्रायसहस्रसम्वत्सरायैव अन्यथाअल्पराजनिमहत् कर्मारम्भोनघटते अनेनकलौमहायोगनिषेधोऽपिसमर्थितोभवति ॥ ४५ ॥

इतिश्रीमल्लक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायांश्रीभागवतसुबोधिन्यां
प्रथमस्कन्धेसप्तदशोऽध्यायःसमाप्तः ॥ १७ ॥

---

श्रीविश्वनाथचक्रवर्त्ती ।

युष्मदीयसत्रप्रवृत्तिरपि तत्प्रभावादेवेत्याह स एष इति त्रिभिः । अध्यास्ते आस्तेऽधुना पालयत इत्येषु वर्त्तमानसामीप्ये वर्त्तमाननिर्देशः ॥ ४३ । ४४ ॥

सत्राय सत्रं कर्त्तुम् । सत्रमिदं श्रीबलदेवदृष्टादन्यदेव ज्ञेयम् ॥ ४५ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
प्रथमेऽयं सप्तदशः संगतः संगतः सताम् ॥ १७ ॥

---

सिद्धांतप्रदीपः ।

सएषउक्तप्रभावः परिक्षित् अरण्यंप्रवेष्टुमिच्छतापितामहेनयुधिष्ठिरेणोपन्यस्तंसमर्पितं पार्थिवस्यपृथिवीपतेरुचितमासनंएतर्हीदानींमध्यास्तेवर्तमानवद्वेतिभूतेलट् ॥ ४३ ॥

राजाचासौऋषिश्चराजर्षिः कौरवेंद्रः कौरवश्रेष्ठः श्रिया महाराजश्रियाउल्लसत्शोभमानः चक्रमाज्ञांवलंवर्तयतिप्रतिवर्तयतीतिचक्रवर्तीवृहच्छ्रवः वृहतीकीर्तिर्यस्यसएवंभूतः यः परीक्षित् गजाह्वयेआसीत् सअधुनाआस्तेमुक्तरूपेणइतिशेषः ॥ ४४ ॥

इत्थंभूतानुभावः अयंवुद्धिस्थोनृपोऽभवदितिशेषः यस्यपालयतः वर्तमानसामीप्येलटः शत्रादेशः पालितवतः सत्रायसत्रंकर्तुंयूयंदीक्षिताःदीक्षांकृतवंतः ॥ ४५ ॥

इतिश्रीमद्भागवतसिद्धांतप्रदीपेप्रथमस्कंधेसप्तदशाध्यायार्थप्रकाशः ॥ १७ ॥

---

भाषा टीका ।

बन में जाते अपने पितामह युधिष्ठिर के दत्त पार्थिवोचित आसन पर वह राजा अभी विराजमान है ॥ ४३ ॥
कौरवेंद्रों की राज्य श्री से उल्लसित वह बड़ा यशस्वी महाभाग चक्रवर्ती राजर्षि अब गजाह्वय (हस्तिनापुर) मैंविराजमान है ॥४४॥
जिसके पृथिवी पालन समय में तुम सब सत्र में दीक्षित हुए हो, वह अभिमन्यु सुत राजा ऐसा प्रभाववाला है ॥ ४५ ॥

सप्तदश अध्याय समाप्त ॥ १७ ॥

---

## अष्टादशोऽध्यायः ।

—:*:—

सूत उवाच ।

यो वै द्रौण्यस्त्रविप्लुष्टो न मातुरुदरे मृतः ।
अनुग्रहाद्भगवतः कृष्णस्याद्भुतकर्म्मणः ॥ १ ॥
ब्रह्मकोपोत्थिताद्यस्तु तक्षकात् प्राणविप्लवात् ।
न संमुमोहोरुभयाद्भगवत्यर्पिताशयः ॥ २ ॥
उत्सृज्य सर्व्वतः सङ्गं विज्ञाताजितसंस्थितिः ।
वैयासकेर्जहौ शिष्यो गङ्गायां स्वं कलेवरम् ॥ ३ ॥
नोत्तमःश्लोकवार्त्तानां जुषतां तत्कथामृतम् ।
स्यात् संभ्रमोऽन्तकालेऽपि स्मरतां तत्पदाम्बुजम् ॥ ४ ॥

### श्रीधरस्वामी ।

राज्ञस्त्वष्टादशे तस्य ब्रह्मशापो निरूप्यते ।
स चानुग्रह एवास्य जातो वैराग्यमावहन् ॥ ० ॥

परीक्षितो निर्याणमत्याश्चर्य्यं वक्तुं तत्सम्भावनाय जन्माश्चर्य्यमनुस्मारयति यो वा इति । विप्लुष्टो निर्दग्धः सन् ॥ १ ॥
ब्रह्मकोपादुत्थिताद् तक्षकात् यः प्राणविप्लवः प्राणनाशस्तस्माद्यदुरुभयं तस्मान्न संमुमोह । अत्र हेतुः यस्तु भगवत्यर्पिताशय इति ॥ २ ॥
किन्तु उत्सृज्येति । वैयासकेः शुकस्य शिष्यः सन् । विज्ञाता अजितस्य श्रीहरेः संस्थितिस्तत्त्वं येन सः ॥ ३ ॥
न चैतच्चित्रमित्याह । उत्तमःश्लोकस्यैव वार्त्ता येषु अतएव नित्यं तत्कथारूपममृतं जुषतां संभ्रमो न स्यात् ॥ ४ ॥

---

### दीपनी ।

० ॥ १—७ ॥

---

### श्रीवीरराघवः ।

अथैतत्प्रबंधपिपृच्छिषामुद्बोधयितुंपारीक्षितमवशिष्टं वृत्तान्तं समासतोवदन्नुपसंहरति यइति दशभिः योवैपरीक्षिन्मातुरुदरेद्रौणस्त्रेण विप्लुष्टोदग्धोऽप्यद्भुतकर्मणः कृष्णस्यभगवतोऽनुग्रहान्नमृतः ॥ १ ॥
यश्चब्रह्मकोपेनब्राह्मणशापात्मकेनउत्थितात्समुपस्थितात्प्राणानांविप्लवोनाशोयस्मादुरुभयं यस्मात्तक्षकान्नसंमुमोहमोहंनप्राप्तः । नाबिभेदित्यर्थः कथंभूतः भगवत्येवार्पितः आशयोऽतःकरणंयेनतथाभूतः सन् ॥ २ ॥
सराजासर्वतःसर्वत्रदेहतदनुबंध्यादिषुसंगमुत्सृज्यवैयासकेःशुकस्यशिष्यो भूत्वाविज्ञातेऽजितेभगवतिसंस्थितिर्निष्ठायस्यसःस्वकलेवरं गंगायां जहौ तत्याज ॥ ३ ॥
मोहाभाव मेवसहेतुकमुपपादयति नेति उत्तमः श्लोकस्यभगवतोवार्त्तायेषांतेषांनभयंमोहोवास्तीत्यर्थः किमुत्तमस्योत्तमश्लोकस्यकथामृतंजुषतांसेवमानानांतत्पदांबुजंस्मरतामंतकालेऽपिसंभ्रमएवस्यात् ॥ ४ ॥

---

### श्रीविजयध्वजः ।

पुनरपिभगवतिभक्तिविधानार्थंतन्माहात्म्यमुच्यतेऽस्मिन्नध्यायेतदर्थंपारीक्षितंस्वर्याणमुपक्रमते यइति योऽद्भुतकर्मणः श्रीकृष्णस्यानुग्रहात् द्रौणयस्त्रदग्धोऽपिमातुरुत्तरायाउदरेनमृतः ॥ १ ॥

## श्रीविजयध्वजः ।

यश्चब्रह्मशापोत्थितात्ब्राह्मणशापप्रेरितात्तक्षकनागात्प्राणविप्लवेविनाशेप्राप्तेसतिभगवत्यर्पितचित्तत्वान्मरणाख्योरुभयान्नसंमुमोह २

सपरीक्षित्सर्वतः सर्वेषुराज्यादिषुस्नेहलक्षणंसंगमुत्सृज्यवैयासकेः श्रीशुकस्याशिष्योभूत्वातदुपदेशेनात्मयोग्यंविज्ञानंस्वरूपविंबपरत स्वापरोक्षज्ञानं तेनअजितासंपादितासंस्थितिर्मुक्तिर्येनसतथोक्तः गंगायांप्रासादेस्वकलेवरंजहावित्यन्वयः ॥ ३ ॥

नैतदाश्चर्यमित्याह नेतिउत्तमश्लोकस्यवार्ताप्रसंगोयेषांतेतथा उत्तमश्लोकस्यवार्ताजीविकायेषांतेतथेतिवा । तेषांश्रवणपुटेनतस्यहरेः कथामृतंजुषतांश्रवणव्याजेनसेवमानानांतस्यपादपद्मंचस्मरतामंतकालेसंभ्रमोनस्यादित्यन्वयः निरंतरंहरिचरणनिषेवणोनात्यंतिकप्रलयेस षंदेहविरहमिच्छतांदेनंदिनमरणभयंनास्तीतिकिंवर्णनीयमित्यपिशब्दार्थः । उत्तमश्लोकवार्तादिष्वेकमेवालंमिलितांकिमुवर्णनीयमितिवा ॥४॥

---

## क्रमसंदर्भः ।

०॥ १ ॥ २ ॥ ३ ॥ ४ ॥

---

## सुबोधिनी ।

"अथाध्यायद्वयेनास्यवृत्तमुत्तरमीर्यते शापात्प्रायस्ततोराज्येशापोवैराग्यबोधकः संक्षेपकथनं पूर्वंश्रोतृप्रीत्यनुसारतः विस्तारोक्तौ तयोः श्लाघाश्लाघाचान्योऽन्यमीर्यते तादृशंफलवत्तान्यदितिस्थापयितुंद्विजात् शापस्तुहरिणाप्रोक्तस्तक्षकाग्नेरलौकिकात् ज्ञानिनोदेहनाशाय नान्यथामृतवर्षणात् यादवेष्वप्यतस्तथोत्कर्षःशापमुखेष्वयीर्यते" एवंतस्यराज्यस्थितिमुक्त्वाउत्तरस्थितिंसंक्षेपेणाह योवैद्रौणयस्त्रेति येन भगवतापूर्वंसंरक्षितः तेनैव चेदानीमुपसंहृतइतिबोधयति अद्भुतकर्मणइति प्लुष्टोनमृतः अमृतंपीत्वामृतइतिभगवतः कृष्णस्येति प्रकटा प्रकटत्वज्ञानाग्निमातुरुदरेनमृतःगंगायांतुमृतइति ॥ १ ॥

इदानींमरणविशेषमाह ब्रह्मकोपोत्थितादिति तक्षकोऽप्यधस्तात्स्थातुमशक्तः ब्रह्मास्त्रमत्रागत्यसफलंजातमितिब्रह्मशब्दप्रयोगःप्राणानां विप्लवोयस्मात्इतिनिरुद्धानामग्नौप्रवेशात् महानुपद्रवः सर्वत्रप्राणानांप्रिस्थूर्शतिअत्रपर्यायोप्राणविप्लवः अतएवोरुभयात् संमोहाभावेहेतुः भगवत्यर्पिताशयइति आशयस्यतक्षकाग्दृष्णार्थंभगवतिसमर्पणम् ॥ २ ॥

तस्यदेहत्यागप्रकारमाहउत्सृज्येतिप्रथमतःपरित्यागस्ततोगुरूपपातस्यततसम्प्रदायात् भगवत्स्वरूपविज्ञानंततोगंगायांदेहत्यागइतिविशे- षणज्ञाताअजितस्यसंस्थितिर्येनसम्यक् स्थितिर्व्यवस्था ॥ ३ ॥

कथंमहाभ्रमेनसम्भ्रमइत्याकांक्षायामाहउत्तमश्लोकस्यैववार्तायेषांभगवत्सम्बन्धिनांसर्वदातत्कथामृतंजुषतामुपनिबद्धांसद्भिः कथ्य- मानांकिंचतत्पदाम्बुजंसेवमानानांभ्रमस्तुसन्निपातकार्यदोषागुणाश्चएकीभूतायदैकत्वं सम्पद्यते "वयासंनिपातस्त्वहमिति ममेत्युद्भवयाता मतिः"व्यवहारश्चसंनिपातः तेनयावत्संनिपातव्यवहारः अन्तेऽपितत्कार्यंप्राप्नुवंति देहेन्द्रियांतःकरणैः भगवदीयकार्यकरणेपूर्वंसंनिपातो निवर्त्तते तत्रलौकिकीवार्त्तातामसीआवश्यकीराजसीभगवज्जनंसात्विकं विपरीतम्वा आधमानसं यद्धिमनसाध्यायतीतिश्रुतेः अतोनिरं तरंकार्येंद्रियांतःकरणैः सबीजदोषनिराकृतेत्रयाणांस्वभावपरावृत्तौसंस्पर्शमणेलौहादेरिवसर्वस्यअसंक्लिष्टभगवत्स्वरूपाभिनिवेशातन्नभ्र मजनकत्वमित्यर्थः यद्यप्यंतकालेदेहेन्द्रियांतःकरणानांवैकल्यंसम्भवतितथापितेषांकालस्यनांतकत्वमंतकसम्बंधित्वंवाअमृतपानेननित्यत्वा दितिभावः ॥ ४ ॥

---

## श्रीविश्वनाथचक्रवर्ती ।

अष्टादशे मुनेः कण्ठे सर्पं बध्वा गृहागतः ।
अनुतप्यन् नृपस्तस्य पुत्राच्छापमथाशृणोत् ॥ ० ॥

परीक्षितः कलिनिग्रहश्रवणेनातिविस्मितान् मुनीन् प्रति तस्य जन्मावधि भगवत्प्राप्तिपर्यन्तं सर्वमेव चरित्रमत्यद्भुतं संक्षेपेण गणयन्नाह यो वा इति । विप्लुष्टो निर्दग्धः ॥ १ ॥ २ ॥

वैयासकेः शुकस्य शिष्यः सन् विज्ञाता अजितस्य हरेः संस्थितिस्तत्त्वं येन सः । विज्ञातोऽनुभवगोचरीकृतोऽजितः संस्थितौ मरण- काले येन स इति वा ॥ ३ ॥

नैतच्चित्रमित्याह नोत्तमेति । उत्तमश्लोकस्य वार्तैव वार्ता जीवनहेतुर्येषां तेषाम् ॥ ४ ॥

---

## सिद्धांतप्रदीपः ।

अवशिष्टपरीक्षिद्वृत्तांतमास्कंधसमाप्तेर्वक्तुम् तदद्भुतजन्मरहस्यस्मरणपूर्वकं तदुपाख्याननिधनपर्यंतम् संक्षिप्यदर्शयति यइतिनवभिः द्रौणयस्त्रेणविप्लुष्टोनिर्दग्धोऽपिनमृतः ॥ १ ॥

... ब्राह्मणेभ्यः परीक्षितोवैलक्षण्यंयोनेत्यादि ... ब्रह्मकोपेनोत्थितात्तक्षकात् प्राणविप्लवः ... भयंतस्मान्नसुमोहमोहंनप्राप्तः यतोभगवतिअर्पितआशयोयेनसः ॥ २ ॥

तावत् कलिर्न प्रभवेत् प्रविष्टोऽपीह सर्व्वतः ।
यावदीशो महानुर्व्यामाभिमन्यव एकराट् ॥ ५ ॥
यस्मिन्नहनि यर्ह्येव भगवानुत्ससर्ज गाम् ।
तदैवेहानुवृत्तोऽसावधर्म्मप्रभवः कलिः ॥ ६ ॥
नानुद्वेष्टि कलिं सम्राट् सारङ्ग इव सारभुक् ।
कुशलान्याशु सिध्यन्ति नेतराणि कृतानि यत् ॥ ७ ॥
किन्तु बालेषु शूरेण कलिना धीरभीरुणा ।
अप्रमत्तः प्रमत्तेषु यो वृको नृषु वर्त्तते ॥ ८ ॥

सिद्धांतप्रदीपः ।

एतद्विवृणोति सर्वतःसर्वेषुदेहगेहादिषुसंगमुत्सृज्यवैयासकेः शिष्यः सन् तदनुग्रहाद्विज्ञातेगुणशक्त्यादिविशेषविवेकेनस्तुष्मासे ऽजितेकालकर्माद्यस्पृष्टस्वभावेश्रीकृष्णेसम्यगात्मभरन्यास रूपास्थितिर्यस्यसः गंगायांतत्तीरेस्वकलेवरंजहौतत्याज ॥ ३ ॥

युक्तंचैतदित्याह उत्तमश्लोकस्यवार्त्तायेषुतेषाम् तस्योत्तमश्लोकस्यकथात्मकममृतंजुषताम् ध्यानमार्गेणतस्योत्तमश्लोकस्य श्रीकृष्णस्यपदांबुजंस्मरतांचसम्भ्रमोऽन्तकालेऽपिनस्यादत्रोत्तरोत्तरंकैमुत्यिकन्यायोऽपिज्ञेयः ॥ ४ ॥

---

भाषाटीका ।

सूतउवाच जो परीक्षित अश्वत्थामा के अस्त्र से दग्ध होकर भी अद्भुतकर्मा भगवान् श्रीकृष्ण के अनुग्रह से माता के उदर में नहीं मरे थे ॥ १ ॥

जो कि भगवान में मन के अर्पण करने से प्राणनाशक ब्राह्मण कोप से उत्पन्न तक्षक रूप महा भय से मोहित न भये थे ॥ २ ॥

जिनने ईश्वर की मर्यादा कूं जानकर शुकदेव जी का शिष्य होकर सर्वत्र संग छोड़कर अपने देह को गङ्गाजी में त्याग दिया ॥ ३ ॥

क्योंकि भगवद्भक्तों को भगवत्कथामृत सेवन करने से भगवत्पदांबुज सेवन से अन्तकाल में भी सम्भ्रम नहीं होता है ॥ ४ ॥

---

श्रीधरस्वामी ।

तस्मिन् शासि सुतरां तत्र चित्रमित्याशयेनाह तावदिति । अभिमन्योः पुत्रः । एकराट् चक्रवर्त्ती । ईशः पतिस्तावत् ॥ ५ ॥

ननु तदा कलेरप्रवेश एवास्तु प्रविष्टोऽपि न प्रभवेदिति कुतः तत्राह । यस्मिन्नहनि यर्हि यस्मिन्नेव क्षणे । गां पृथ्वीम् । अनुवृत्तः प्रविष्टः । अधर्म्मस्य प्रभवो यस्मिन् ॥ ६ ॥

ननु अधर्म्महेतुं कलिं सर्व्वथा किं न हतवान् तत्राह नानुद्वेष्टीति । सारङ्गो भ्रमर इव सारग्राही । सारमाह । यत् यस्मिन् कुशलानि पुण्यानि आशु सङ्कल्पमात्रेण फलन्ति । इतराणि पापानि आशु न सिध्यन्ति । यतस्तानि कृतान्येव सिध्यन्ति न तु सङ्कल्पित मात्राणीति ॥ ७ ॥

ननु दोषाधिक्यात् तदुच्छेद एव युक्तः न धीरेषु तस्याकिंचित्करत्वात् इत्याह । किं तु तेन भवेत् । बालेषु अधीरेषु । अप्रमत्तः सावधानः सन् यो वृक इव वर्त्तते ॥ ८ ॥

---

दीपनी ।

वृकः घोंच इति ख्यातः । वत्सादन इति राजनिघण्टुः ॥ ८ ॥ ९ ॥

---

श्रीवीरराघवः ।

सिंहावलोकनन्यायेनयस्त्वपालयत क्षोणीमित्यनेनाभिप्रेतमुपपादयति तावदिति इहलोकेसर्वत्रप्रविष्टोऽपिकलिर्यावदुर्व्यामभिमन्युसुत एकराट्स्वतुल्यराजांतररहितईश्वरोऽधिपतिर्बभूवतावदावायावदुच्चावबभूवतावत्कलिर्नभवेन्नसमर्थोबभूव ॥ ५ ॥

### श्रीवीरराघवः ।

कदाप्रविष्टइत्यत्राह यस्मिन्नहनियर्ह्येवक्षणेभगवान् कृष्णोगांभूमिमुत्ससर्जतत्याजतस्मिन्नेवाहनिक्षणेचासावधर्मप्रभवः कलिरनुप्रवृत्तः प्रविष्टोबभूव ॥ ६ ॥

ननुकलिंकुतोनहतवानित्यत्राह नेति सम्राट्सार्वभौमःपरीक्षित्कलिनानुद्वेष्टितन्मरणपर्यंतंद्वेषंनकृतवानित्यर्थः वर्त्तमानसामीप्येलट्कुतः यतःसारंगइवभृंगवत्सारभुक्सारानुभवितासारग्राहीतियावत्सारंगोयथाकमलगतंसारंमकरंदंगृह्णातिनतुतन्नाशयति तद्वत्कलिगतसारग्राहित्वान्नतंजघानेत्यर्थःकोऽसौतद्गतसारः यज्जिघृक्षुस्तंनानुद्वेष्टीत्यत्राह कुशलानीतियद्यस्मिन्कलौकृतानिकुशलानिभगवन्नामकीर्त्तनादिरूपाणिपुण्यकर्माण्याशुसिध्यंतिभगवत्प्राप्तिमावहंति इतराण्यकुशलकर्माणिपापानीतियावत् तान्याशुनासिध्यंति नफलदानिभवंतिएतत्सारभुङ्नानुद्वेष्टि अनेनकृतादियुगेषुकुशलानांचिरेण फलदत्वमितरेषांत्वाश्वितिसूचितम् ॥ ७ ॥

ननुकलिनाभिभूतैर्जनैः कुशलानिनकृतान्येवस्युः येनाशुसिध्येयुरित्यत्राह किंत्वितिवालेषु मूर्खेषु विषयभूतेषु शूरेणाधीरेषु विवेकिषु तुभीरुणाकलिनाकिंनुकृतंस्यान्नकोऽप्यनर्थः कृतः स्यादित्यर्थः तदेवदृष्टांतेनदर्शयन् विशिनष्टि यः कलिरधीरेषु वृकइवप्रमत्तेतेष्वेवजनेषुसर्वतोवर्तते ॥ ८ ॥

---

### श्रीविजयध्वजः ।

मदीयेराष्ट्रेनवर्तितव्यमित्यस्याभिप्रायः कलेः सामर्थ्यप्रकटनाभावः नतुप्रवेशाभावइत्यभिप्रेत्याह तावदिति आभिमन्यवअभिमन्योः पुत्रः परीक्षिदेकराट्चक्रवर्तीयावद्यावंतंकालमुर्व्यामास्तइत्यन्वयः कीदृशः महानीशः सप्तद्वीपवत्याः भूमेरधिपतिः नमंडलेशइत्यर्थः तावत्तावंतंकालमिहसंप्रविष्टोऽपिकलिः नप्रभवेत्स्वशक्तिप्रकटनसमर्थोनाभूदित्यन्वयः ॥ ५ ॥

कदानूर्व्यांकलिः प्रविष्टइतितत्राह यस्मिन्निति ॥ ६ ॥

सारंगोमधुकरइव सारभुक्सारग्राहीसम्राट्कलिंनद्वेष्टीत्यन्वयः कुतइतितत्राह कुशलानीति कुशलानिसुकृतानि इतराणिपापानियद्यस्मात् ॥ ७ ॥

इतोऽप्युदास्तइत्याह किम्विति धर्मज्ञानादिकंवृणोतीत्यावृणोतिनाशयतीतिवृकः शूरेषुभीरुणाबालेषुशूरेणकलिनाकिंमुर्किंप्रयोजनम् ॥ ८ ॥

---

### क्रमसंदर्भः ।

तावत् कलिर्न प्रभवेदिति दत्तानामपि तेषां स्थानानां तत्प्रभावेनानुद्भवात् ॥ ५ ॥

प्रवेशकालमाह यस्मिन्निति ॥ ६ ॥

सारमेवाह कुशलानीति । लोको विकर्म्मनिरतः कुशले प्रमत्त इत्याद्यनुसारेण सर्व्वमङ्गलमयानि भगवत्कीर्त्तनादीनि आशु सङ्कल्पमात्रेण कलावपि सिध्यन्त्येव कलिं सभाजयन्त्यार्य्या इत्यादेः कृष्णचरितं कलिकल्मषघ्नमित्यादेः श्रुतोऽनुपठितो ध्यातः इत्यादेः सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणादित्यादेः यस्यां वै श्रूयमाणायामित्यादेश्च । इतराणि कर्म्माणि तु कृतान्यपि न सिध्यन्ति । "अतः कलौ तपोयोगविद्यायज्ञादिकाः क्रियाः । साङ्गा भवन्ति न कृताः कुशलैर्व्वापि देहिभि"रिति ब्रह्मवैवर्त्तात् । ततो महाफलानां तत्कीर्त्तनादीनां सिद्धिश्चेन्मा सिद्ध्यन्तु नाम तुच्छफलान्यन्यानीति तदभिप्रायः ॥ ७ ॥

बालेषु तदबुधेषु । धीरास्तत्र बुधाः । तदबुधत्वादेव प्रमत्तेषु ॥ ८ । ९ ॥

---

### सुबोधिनी ।

ननुकथंकालनियामकत्वंतेषांतत्राहतावत्कलिरिति तस्यराज्येऽपिकालसम्बन्धोनास्ति तत्रकथंतदायुषिसम्बन्धः आधिदैविकत्वादस्यकालस्यननुगुणानांगुणयपेक्षयाहीनत्वात्भगवत्कृतंकालंकथमयंनिराकृतवानित्यतआह प्रविष्टोऽपीति मणिनायथाग्निस्तम्भः तथा राजनिविद्यमानेकलेः प्रतिष्टंभः भगवदीयत्वात् विशेषेऽपिकार्यापेक्षयागुणानामुत्कृष्टत्वात् प्रतिष्टंभएवराज्ञाकृतः नमुख्यदेशात् दूरीकरणंतदाह इहसर्वतः प्रविष्टोऽपीति अनेनकालस्यदेशपरिच्छेदोनिवारितः ननुप्रविष्टोऽपिवशीकर्तुंकथंशक्यःतत्राहईशइति भगवत्प्रवेशादैश्वर्यदानाच्चाईशत्वंसहिकर्त्तुमकर्त्तुमन्यथाकर्त्तुंसमर्थःकिंचभगवताकालोऽप्यधिकृतः राजाचतयोःपुनाराजामहान्कृतःअतःप्रतिबन्धोयुक्तएव किंच अयंभागिनेयपुत्रः व्यवहारेमान्यःसतुवाहनरूपः अतोऽप्यस्यमहत्त्वं किंच कलिःषडंशःप्रवर्त्ततेदेशाविषये अन्येष्वष्टवर्षेषुत्रेतायुगसमः कालोवर्त्ततइतिवचनात् अयंचएकराट् अतःखण्डमण्डलाधिपतिः महाखण्डमंडलेश्वरात्प्रतिबद्धः ॥ ५ ॥

ननुभगवत्येवकालएवकलिर्नप्रवृत्तइतिकुतोनांगीक्रियते तस्यर्त्तेयःक्षणोनीतइतिवाक्यानुरोधात् सूर्यगत्यागणनायांकालएवोत्कृष्टः कस्मान्नोच्यतइत्याशंक्याह यस्मिन्नहनीति सत्यमेताभ्यामुत्कर्षकर्त्तुंशक्यतेपरंनसम्पन्नःतत्रक्षापरांतेभगवानवतीर्णः कलिश्चनप्रविष्टः तथाच भगवतासूर्यगतिरुत्कृष्टैव अथप्रचलितेभगवति उत्कर्षकाभावात् परीक्षितश्चाप्यधिकारात्प्रविष्टः अतः परंप्रविष्टस्यच्छेदनेमर्यादैव स्वदेशाच्चनिराकरणे पश्चादागत्यपुनस्तावन्तंकालमनुभवेत् ततश्चकल्क्यवतारकालेबाध्येतअतोभगवतासहअभ्यस्यमानवलत्वाभावात्नासौ उत्कर्षइत्यभिप्रायेणाह यस्मिन्नदिवसेयस्मिन्क्षणेभगवान्त्यक्तवान् तदैवायंकलिरनुवृत्तः तदपेक्षयास्थितएवभगवति चलितेस्वयमुपविष्टः तस्मिन्नुपविष्टेएवसर्वेअधर्माःप्रवृत्ता ॥ ६ ॥

सुबोधिनी ।

ननुतथापिदुष्टत्वात्मारणमेवोचितंनिराकरणंतामासांक्षमप्रार्थनीयं सर्वेषांचोपकारः सिद्धयतीत्याशंक्याह नानुद्वेष्टीतियद्यपि राजा सर्वकर्त्तुसमर्थः तथापिकलिंनानुद्वेष्टिनन्वधर्मप्रभवत्वात्प्रयुक्तोद्वेषः तत्राहसारभुगितिव्रीहिषुतुषाः सन्तीतितेननिराक्रियन्ते अपितुतुष विमोकेनतुतुद्यंते तथायमपिराजासारमेवभुंक्तेसारत्वंतुतदेवयदाभसारंधनवाष्टिताभवति अतःकेनाप्यंशेननविद्वेष्टि ननु विषमधुसंयुक्ता न्नत्यागवत् गुणदोषयोस्तुल्यत्वात् दोषस्यविभिक्तत्वात्कुतोनत्यागः तत्राहसारङ्गइवेतिसारङ्गायतीतिसारङ्गो भ्रमरः सहिमधुनामत्तो गायति तत्रकेतक्यादिषुवहिः कंटकवेष्टितेषुमकरन्दप्राचुर्यात् तत्ररमते तदेकजीवनत्वात् तथाराजापि "कलौखलुभविष्यन्तिनारायण परायणा" इति भगवद्गुणानांभक्तानांचात्रसुलभत्वात् स्वस्यतदेकजीवनत्वाच्चभक्तिसिद्धयर्थंनद्वेष्टीत्यर्थः अधर्मांशनिराकरणंतुप्रति वन्धेनापिसेत्स्यतीतिभावः किंच कृतस्यास्यचतुल्यतातस्मादपिनद्वेष्टीत्याह कुशलानीति "कृतेतात्क्षणिकःपापः त्रेतायांग्रावशोऽहनि द्वापरेमासमात्रेणकलौसम्वत्सरेणतत्" तद्वैपरीत्येनचधर्मसिद्धिः तदाह कुशलानिपुण्यानिइतराणिपापानिकृतानितानिप्रायेणकलौसंसर्ग आनिमभवंतीतिज्ञापितं यद्यस्मात्तान्येवइतराणिभवन्ति अतोलोकोपकारार्थमपिनद्वेषः ॥ ७ ॥

किंच नायंकलिर्द्देशेवर्तते किंतुपुरुषेषुतत्रापिप्रमत्तेषु अतिशिक्षकत्वेनतस्यास्थितत्वात् उपेक्ष्यैवतत्रनद्वेषइत्याह किंत्विति तुशब्देन पूर्वपक्षोद्देशस्थितरूपोनिवारितः वालेषुधर्मार्थप्रवृत्तेषुशीघ्रमेवफलासिद्धौप्रपंचविलयःस्यात् धर्मेणांतःकरणशुद्धौज्ञानोदयेनसर्वत्याग प्रसंगात् अतएवतत्प्रतिवन्धार्थंशूरेणायेतुमोक्षाधिकारिणोधीराः तेभ्यस्तुविभेति किंच वैराग्यहेतुश्चायंयतः प्रमत्तेषुअप्रमत्तः आयुः क्षरत्वात् अतएवकलावल्पायुषोभवंति ननुकथमेवंस्वभावस्तत्राह योवृकइति अयंतुवृकरूपः सरात्रौशयानान् अरक्षितान्बालानेव गृह्णाति नव्याघ्रवत्सर्वभक्षकः अतएवतद्वधार्थंमहतांप्रवृत्तिः एकवचनेनासहायतासूचिता तत्रापिविशेषः नृषुवर्त्ततेननरोत्तमेष्वन्येषुवा ऋषिषु अतउपेक्षणीयइत्यर्थः ॥ ८ ॥

---

श्रीविश्वनाथचक्रवर्त्ती ।

राज्ञा निगृहीतस्य कलेस्ततः परं कीदृशी स्थितिरभूदित्यपेक्षायामाह तावदिति ॥ ५ ॥

कलेः प्रवेशकालमाह यस्मिन्निति । गां पृथ्वीम् ॥ ६ ॥

निगृहीते कलौ राज्ञः कीदृशो भाव आसीदित्यपेक्षायामाह । सारङ्गो भ्रमर इव सारग्राही । सारमाह । यत् यस्मिन् कुशलानि पुण्यानि आशु सङ्कल्पमात्रेण फलन्ति इतराणि पापानि आशु न सिद्ध्यन्ति । कृतान्येव सिध्यन्ति न त्वकृतानीति । तेन कुशलान्यकृतान्यपि सिध्यन्तीति लभ्यते । अकृतत्वं खल्विह सङ्कल्पितत्वं व्याख्यातम् ॥ ७ ॥

अन्योऽपि राज्ञोऽभिप्राय आसीदित्याह वालेष्वविवेकिषु शूरेण कलिना किं न किमप्यनिष्टम् । यतो धीरेषु विवेकिषु भक्तजनेषु च भीरुणा । वालकेष्वेव वृकः शूरः ॥ ८ ॥ ९ ॥

---

सिद्धांतप्रदीपः ।

इहास्मिन्लोकेसर्वतः सर्वत्रप्रविष्टोऽपिकलिर्यावदभिमन्युपुत्रः एकराट्स्वसमनरेंद्रांतरवर्जितः सन्सम्राट् ईशः प्रजानियंताऽऽसीत्तावद प्रभवेत्समर्थोनबभूव ॥ ५ ॥

कलिप्रवेशकालमाह यस्मिन्नहनियर्हियस्मिन्क्षणेभगवान् गांभूमिमुत्ससर्जतत्याजतस्मिन्नहनितस्मिन्नेवक्षणेऽसावधर्मप्रभवः कलि स्तुप्रवृत्तः प्रविष्टोबभूव ॥ ६ ॥

नन्वेवंभूतमनर्थहेतुंकलिंकुतोजीवंतमेवोत्ससर्जेत्यत्राह नेति सम्राट्कलिंनानुद्वेष्टितस्मिन्द्वेषंनकृतवान् प्रत्युत स्थानपंचकदानेनानुग्रहं कृतवान् वर्तमानसामीप्येलट् यतः सारंगइवभ्रमरइवसारभुक्गुणग्राही सारमेवदर्शयति यद्यस्मिन्कलौआशुशब्दोऽल्पकालपरस्त दुपलक्षितमनोनिर्वर्त्यानिकुशलानिपुण्यानि सिद्ध्यंति मनसापिकृतानिफलंतीतियावत्इतराणि अपुण्यानिआशुनसिद्ध्यंतिमनोनिर्वर्त्यानि तानिनफलंतीकिंतुकृतानिशरीरादिभिरनुष्ठितान्येवफलंति ॥ ७ ॥

किंच धीरेषुपरमपुरुषध्यानेलब्धस्थैर्येषुभीरुणावालेषुअतत्त्वज्ञेषुशूरेणकिन्त्वपकर्तव्यंनकिमपीत्यर्थः एतदेवदृष्टांतेनोपपादयति यः कलिः वृकइवाऽप्रमत्तः सन्प्रमत्तेष्वनवहितेषुनृषुवर्त्तते ॥ ८ ॥

---

भाषाटीका ।

कलियुग इहां प्रवेश होनेपर भी जबतक समर्थ एक राजा महान परीक्षित राज करते थे तबतक कुछ प्रभाव नहीं किया ॥ ५ ॥

जिस दिन जिस क्षण भगवान ने पृथिवी को त्याग किया उसी क्षण अधर्म का हेतु कलि प्रवृत्त होगया ॥ ६ ॥

सारग्राही राजा ने कलि को नहीं मारा क्योंकि कलि में पुण्य तो संकल्प ही से सिद्ध होते हैं पाप करनेपर फल देते हैं ॥ ७ ॥

भगवद्भक्तों से डरनेवाले अभक्तों पर शूर कलि से क्या डर है जो प्रमादी पुरुषों में भेडिया की नांई प्रवृत्त होता है ॥ ८ ॥

उपवार्णितमेतद्वः पुण्यं पारीक्षितं मया ।
वासुदेवकथोपेतमाख्यानं यदपृच्छत ॥ ९ ॥
या याः कथा भगवतः कथनीयोरुकर्मणः ।
गुणकर्माश्रयाः पुम्भिः संसेव्यास्ता बुभूषुभिः ॥ १० ॥

शौनक उवाच ।

सूत ! जीवसमाः सौम्य ! शाश्वतीर्विशदं यशः ।
यस्त्वं शंससि कृष्णस्य मर्त्यानाममृतं हि नः ॥ ११ ॥
कर्मण्यस्मिन्ननाश्वासे धूमधूम्रात्मनां भवान् ।
आपाययति गोविन्दपादपद्मासवं मधु ॥ १२ ॥

श्रीधरस्वामी ।

पारीक्षितमाख्यानम् अपृच्छत पृष्टवन्तो यूयमिति ॥ ९ ॥

किं बहुना नरैरेतावदेव कर्त्तव्यमिति सर्व्वशास्त्रसारं कथयति या या इति । कथनीयानि उरूणि कर्म्माणि यस्य तस्य । गुणकर्म्माश्रयाः । बुभूषुभिः सद्भावमिच्छद्भिः ॥ १० ॥

पुनर्व्विस्तारेण कथनार्थं सूतोक्तिं तत्सङ्गं चाभिनन्दन्ति सूतेति त्रिभिः । शाश्वतीः समाः अनन्तान् वत्सरान् जीव । अत्यन्तसंयोगे द्वितीया । विशुद्धं यशः कीर्त्तयसि यश्चास्माकं मर्त्यानाम् अमृतं मरणनिवर्त्तकम् ॥ ११ ॥

किंच अस्मिन् कर्म्मणि सत्रे अनाश्वासे अविश्वसनीये वैगुण्यबाहुल्येन फलनिश्चयाभावात् । धूमेन धूम्रः विवर्णः आत्मा शरीरं येषां तानस्मान् । कर्म्मणि षष्ठी । आसवं मकरन्दम् । मधु मधुरम् ॥ १२ ॥

दीपनी ।

उरूणि महान्तीत्यर्थः ॥ १० ॥

अत्यन्तेति । कालाध्वनोरत्यन्तसंयोगे ( पां २ । ३ । ५ ) इति सूत्रेणेति यावत् ॥ ११ ॥

कर्म्मणीति । उभयप्राप्तौ कर्म्मणि ( पां २ । ३ । ६६ ) इति सूत्रेणेति यावत् ॥ १२—४८ ॥

श्रीवीरराघवः ।

यद्यूयंमामपृच्छततदेतद्वासुदेवस्यकथोपेतमतएवशृण्वतांवदतांचपुण्यावहमेतत्परीक्षितःसंबंधाख्यानंमयावोयुष्मभ्यमुपवर्णितम् ॥ ९ ॥

पिपृच्छिषमुद्बोधयितुमवसानेकल्याणंभगवत्कथानांश्रोतव्यतामाहयायाइतिकथनीयान्यनुरूपाणिबहूनिकर्माणिचेष्टितानियस्यतस्यभगवतो गुणाः कर्माणिचाश्रयायासांताः कथायासांताः कथास्ताबुभूषुभिः पुंभिःसंसेव्याः ॥ १० ॥

एवमुक्तमुत्सृज्यसर्वतःसर्गाद्विज्ञाताजितसंस्थितिःवैयासकिजहंसशिष्यः शुकोपदिष्टंतत्पुराणजश्चतेनमुक्तोवभूवेति तद्वैयासक्यपादपद्मपराग श्रवणद्वारातज्जन्यज्ञानलिप्सुः पृच्छतिशौनकः सूतेतिसप्तभिः तावज्जन्मसंस्राद्यंततद्दुःखावहकृतसहसंसृतिक्षपणाद्वरानिसत्वरपानंदरूप परब्रह्मप्राप्तिहेतुतत्कथामृतंपाययंतमहोपकर्त्तारंसूतमाशास्तसूतेतिहेसूत ! हेसौम्यत्वंशाश्वतीः समावत्सरानजीव "कालाध्वनोरत्यंतसंयोग" इतिद्वितीयाकृतएवमाशास्यहेतुत्वेनविशिनष्टियस्त्वं कृष्णस्यविपुलं विषदममृततुल्यंयशोमर्त्यानांनो ऽस्मभ्यंशंससिकथयसिअतोऽमृतात् श्रेयादाशासइतिभावः ॥ ११ ॥

तदेवव्यनक्तिकर्मणीतिअनाश्वासे ऽविश्वासनीयेनिर्भयेनिर्भयत्वनिमित्ते ऽस्मिन्यज्ञादिकर्मणिनिष्ठानामितिशेषः धूमधूम्रात्मनामज्ञाना वृतमनसां यद्वाधूमेनयज्ञीयेनधूम्रआत्माशरीरंयेषांकेवलकर्मजडानामितिभावः भवान्गोविन्दस्यपादपद्मयोरासवममृतंमधुमधुरंपाययति १२

श्रीविजयध्वजः ।

उपसंहरति उपवर्णितमिति ॥ ९ ॥

यद्येयंपारीक्षितीकथाप्रसंगतो [illegible] कथनीयानि उरूणिकर्माणियस्यतथोक्तः तस्यबुभूषुभिः मोक्षैककामैः ॥ १० ॥

सूत ! यस्त्वंश्रीकृष्णस्यविशदयशोऽमृतमरणधर्मिणांअस्माकंशंससितद्दियस्मात्तस्मात्वाचलिक्षयां सौमाद्दभद्रेतिवा सुमायाः वत्सतिवा सुमारोमहर्षभार्या शाश्वतीः समाः बहुवर्षान्जीवशतवर्षानुपर्य्यन्तिरात्र्यस्येत्येकान्वयः ॥ ११ ॥

श्रीविजयध्वजः

कर्मणाज्ञानमातनोतीत्यादिश्रुतिरित्यादिना [illegible] श्वासेश्वासमोक्षानवसरे अन्यत्रसंगात् सरविधुरेवाऽतएवहरिकथावर्णनेसावसरेअस्मिन्नुपक्रान्तेसत्राख्येकर्मणि दुर्यदेशेनसुहुतहविराज्यादुद्भूतधूमेनधूम्रआत्मामनआदींद्रियजा तंयेषांततथोक्ताः कर्मणिषष्ठीदर्शनात् तेनधूमेनधूम्रतयापावित्रीकृतशरीरानस्मान्मधुमधुगोविंदपादपद्मासवंआपाययतीत्यन्वयः पादपद्मा दासुयतइत्यासवंमधुवा अनेनसत्रयागात् फलंजातइत्युक्तंभवति ॥ १२ ॥

क्रमसंदर्भः।

या यास्ताः सर्व्वा अपि किमुत श्रीवसुदेवनन्दनसम्बन्धिन्य इत्यर्थः। गुणकर्म्माश्रयास्तत्तद्‌गुणसूचककर्म्माश्रयाः ॥ १० ॥
जीव मर्त्यलोके वर्त्तस्वेत्यर्थः ॥ ११ ॥
अनाश्वासे अविश्वसनीये। वैगुण्यबाहुल्येन कृषिवत् फलनिश्चयाभावात्। अनेन भक्तेर्विश्वसनीयत्वं ध्वनितम्। धूमेन धूम्रौ विरञ्जितौ आत्मानौ शरीरचित्ते येषाम्। कर्मणि षष्ठी। तानस्मानित्यर्थः। पादपद्मस्य यशोरूपम् आसवं मकरन्दं मधु मधुरम्। अत्र सत्रवत् कर्मान्तरं यशः श्रवणवद्भक्त्यन्तरं च ज्ञेयम्। तदेवं भक्तिं विना भूतानां कर्मादिभिरस्माकं दुःखमेवासीदिति व्यतिरेकित्वमात्रं गम्यते। तदुक्तं—यशः श्रियामेव परिश्रमः पर इत्यादि अतो वै कवयो नित्यमित्यादि च। ब्रह्मवैवर्त्ते च श्रीशिवं प्रति श्रीविष्णुवाक्यं—यदि मां प्राप्तुमिच्छन्ति प्राप्नुवन्त्येव नान्यथा। कलौ कलुषचित्तानां वृथायुःप्रभृतीनि च। भवन्ति वर्णाश्रमिणां न तु मच्छरणार्थिनामिति ॥ १२ ॥

सुबोधिनी।

एवंस्वरूपात्कलिस्वरूपंनिरूप्यतत्कथामुपसंहरतिउपवर्णितामिति एवंषोडशेनिरूपेतस्यप्रकृतोपयोगित्वाभात्पुण्यमित्याह यथामज्जनस्नानादिकंधर्मः तथैतदुपाख्यानमपिपरीक्षित्सम्बन्धिकथनेहेतुःवासुदेवकथोपेतमिति ॥ ९ ॥
किंच यदात्मानमपृच्छत्तत्कथ्यतामिति वाक्येनस्पष्टत्वादुत्तरंदत्तमन्यथासंक्षेपश्चयद्यनुक्तः प्रश्नःसाक्षाद्भगवत्कथा अनिरूपकत्वात् तद्भावयंतदैववयंकथनंनिवारिताः किंप्रासंगिकेणेति तत्राह यायाःकथाइति नात्यंतकथाअनुपयोगिनीभगवत्कथायाआधारत्वात् उत्तमाश्रयत्वमेवाधिकारित्वमतोयाःकाश्चनकथाभगवतोगुणकर्माश्रयाःगुणाःकर्माणिचआश्रित्यप्रवृत्ताःताःश्रोतव्याः तत्रहेतुः कथनीयोरुकर्मणा इतिकथनीयानिउरुअधिकानिकर्माणियस्यभगवत्कथायाआधिक्यंनिरूपककथायाः सद्भावेभवतितदेवभक्तिजनकत्वमन्यथासहस्रनामपाठवत्धर्मोपयोगित्वंस्यात् कथनीयानिउरुयथाभवति तथाकर्माणियस्यकेवलनिर्देशेनभगवत्कर्माणिनकथनीयानि किंतुसाधारणानिसप्रतिष्ठानिकथनीयानीत्यर्थः पुंभिरिति स्वतन्त्रैस्तत्रापिबुभूषुभिः भवितुमिच्छति उद्भविष्णुः घृतसहितस्यान्नस्यैवपोषकत्वात् ॥ १० ॥
एवंनिवृत्तसूतंप्रतिवुध्यसर्वेऋषयः आभिप्रेतार्थज्ञानार्थंतंप्रोत्साहयंति सूत। जीवेति ब्राह्मणानांहिसन्तोषदानआशिषएवद्रव्यं तदाह हेसूत। शाश्वतीः समाःत्वंजीवननुभवतांकोपयोगस्तत्राहुः हेसौम्य। हेबुध उत्पत्तिशिष्टेनज्ञानेनतुयैचमतोवहुकालंत्वज्जीवनेऽस्माकंमहत्कार्यमितिभावः समाःसवंत्सराः शाश्वतीःनित्याःतेहिब्रह्मणोभवंति अन्येषांवानित्यानांपदार्थानाम् अनेनापरिमितकालंजीवेत्युक्तंभवति एवमाशीर्वादेहेतुमाहुःयस्मात् कारणात् विशदंकृष्णस्ययशःशंससि ॥ ११ ॥
प्रोगादिशंसनवत् नेदंकर्ममात्रोपयोगिकिंतुअस्माकममृतंतत् मरणनिवर्त्तकंसुखकरं परमानन्दरूपंचतदर्थंहेतूनाह विशदंयशःकृष्णस्येतिविशदंनिर्मलं विषंयतीतिवा संसारप्रवेशंदूरीकरोतीति अनेनमरणनिवर्त्तितं यशश्चसर्वेषांसुखजनकंकृष्णश्चपरमानन्दः सदानन्दवाचकत्वात् "कृषिर्भूवाचकः शब्दोणश्चनिर्वृतिवाचकः सदानन्दश्चभगवान्कृष्णइत्यभिधीयते" अनेनपरमानन्दत्वंपरीक्षित्कथाश्रवणमात्रेणायदायमुदासीनः तदाकिमप्रवृत्तिमस्मदीयांदृष्ट्वानिवर्त्स्यतीत्याशंक्याहुः कर्मण्यस्मिन्निति अस्मिन् यज्ञाख्यकर्मणिफलनिश्चयाभावात्तदाश्वासोनास्तिकोहितद्वेदयद्यमुस्मिन्लोकेऽस्तिवानवेति दिक्वतीकाशान् करोतीनिश्रुतेः यथातत्रसंदेहवचनमेवमत्रापीत्यर्थः अतएवधूमधूम्रात्मनो धूमेनधूम्रआत्मादेहो येषां यज्ञकृतादोषः स्फुटःगुणास्तुसंदिग्धः एतादृशमहातिकष्टेगोविन्दपादपद्ममधु आपाययति सहस्रसमयागेनकोऽपि रसोनानुभूतः त्वयाचानुभूयते अनेनयागेपक्षयभिवामादवणीयः आसमंतात् पानंहृदयप्रदेशपर्यन्तंगोविन्देति श्रीतद्‌गारक्षकत्वं पादपद्मात् भक्तिमार्गप्रचारः अनेनअग्रेऽपिपापंसूचितम् आसवंहिदेहविस्मारकम् अनेनज्ञानमात्रानुषंगिकमिति ज्ञात्वाउत्कर्षःसूचितः माध्वीतिमिष्ट स्वरूपतोऽपिपूषायोग्यताउक्ता ॥ १२ ॥

श्रीविश्वनाथचक्रवर्त्ती।

बुभूषुभिः स्वसत्तामिच्छद्भिः। अन्यथा जीवन्मृतत्वं स्यादिति भावः ॥ १० ॥ ११ ॥
कर्म्मण्यस्मिन् सत्रे अनाश्वासे अविश्वसनीये वैगुण्यबाहुल्येन फलनिश्चयाभावात्। तेन भक्तेर्विश्वसनीयत्वमुक्तम्। धूमेन धूम्रा विवर्णा आत्मानश्च [illegible] येषां तेषाम्। कर्माणि षष्ठी। भक्तेः साक्षात् [illegible] आपाययतीति। आसवं मकरन्दरूपम्। मधु मादकमिति तावित [illegible] ॥ १२ ॥

तुलयाम लवेनापि न स्वर्गं नापुनर्भवम् ।
भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताशिषः ॥ १३ ॥
कोनाम तृप्येद्रसवित्कथायां महत्तमैकान्तपरायणस्य ।
नान्तं गुणानाम गुणस्य जग्मुर्योगेश्वराये भवपाद्मुख्याः ॥ १४ ॥
तन्नो भवान्वै भगवत्प्रधानो महत्तमैकांत परायणस्य ।
हरेरुदाराचरितं विशुद्धं शुश्रूतांनो वितनो तु विद्वन्श्रूष ! ॥ १५ ॥
सवै महाभागवतः परीक्षिद्येनापवर्गाख्य मदभ्रबुद्धिः ।
ज्ञानेनवैयासकि शाब्दितेन भेजेखगेंद्र ध्वजपादमूलम् ॥ १६ ॥

सिद्धांतप्रदीपः ।

यूयंयदपृच्छतपृष्टवंतस्तत्पारीक्षितंपरीक्षिदुपाख्यानंवोयुष्मभ्यमुपवर्णितंमया ॥ ९ ॥

तत्कथ्यतांमहाभागयदिकृष्णकथाश्रयमित्यादिमुनिवाक्येनैवतेषांश्रीकृष्णकथायांप्रीत्यतिशयंज्ञात्वास्वमतेनापिता एवमुमुक्षुभिःश्रोतव्या इत्याहयायाइति कथनीयान्युरूणिवहूनिकर्माणियस्यतस्यभगवतः यायागुणकर्मविषयाः कथास्तास्ताः सर्वाः मुमुक्षुभिरुद्भवितुमिच्छुभिः पुंभिः सम्यक्सेव्याः ॥ १० ॥

एवंवादिनंसूतंशौनकोविस्तरतः श्रीकृष्णकथाकीर्त्तनंप्रार्थयन्नभिनंदतिसूतेतिसप्ताभिः हेसूत ! त्वंशाश्वतीः समा अनंतान्संवत्सरान्जीव कालाध्वनोरत्यंतसंयोगेद्वितीया हेसौम्य ! यस्त्वंकृष्णस्यविशदंविपुलंमर्त्यानांमरणधर्मवताममृतममरत्वसंपादकंमोक्षदंयशः नोऽस्मभ्यं शंससि कीर्त्तयसि ॥ ११ ॥

अत्यंतोपकर्तृत्वेनाभिनंदतिअनाश्वासेविघ्नशंकयावैगुण्यशंकयाचसमाप्तौफलेचाविश्वसनीयेधूमेनधूम्रोविवर्णआत्मादेहोयेषांतेषामस्मा कमस्मिन्कर्मणिसत्रेगोविन्दपादपद्मासवंमकरन्दं मधुमधुरमापाययति कर्मणिव्यग्रा एतेहरिचेष्टितश्रवणानर्हाइत्येवमुपेक्षांनकरोषीति भावः ॥ १२ ॥

---

भाषाटीका ।

यह वासुदेव कथायुक्त पवित्र परीक्षित चरित्र जोकि आपने मुझसे पूछा था सो मैंने कह दिया है ॥ ९ ॥
कीर्तन करने योग्य गुणोंवाली जो जो गुण कर्म युक्त भगवत् कथा है वह सब मुमुक्षु जनों की सेवनीय हैं ॥ १० ॥
शौनकजी बोले हे सूतजी ! आप अनंत वर्षतक जीतेरहो जोकि निर्मल यशरूपी श्रीकृष्ण कथामृत मरनेवाले हमलोगों को देते हो ॥ ११ ॥
इस अविश्वासनीय यज्ञ कर्म में धुआं से धूम्रात्मा हम लोगों को आप गोविंद पाद पद्म मकरन्द पान कराते हो ॥ १२ ॥

---

श्रीधरस्वामी ।

भगवत्सङ्गिनो विष्णुभक्ताः तेषां सङ्गस्य यो लवः अल्पल्पः कालः तेनापि स्वर्गं न तुलयाम न समं पश्याम न चापवर्गम् । सम्भावनायां लोट् । मर्त्यानां तुच्छा आशिषो राज्याद्याः न तुलयामइति किमुत वक्तव्यम् ॥ १३ ॥

एवं सत्सङ्गमभिनन्द्य श्रवणौत्सुक्यमाविष्कुर्वन्ति को नामेति । रसवित् रसज्ञः । महत्तमानामेकान्तेन परमयनमाश्रयो यः तस्य कथायाम् । अगुणस्य प्राकृतगुणरहितस्य कल्याणगुणानामन्तं ये योगेश्वरास्तेऽपि न जग्मुः एतावन्त इति न परिगणयांचक्रुः । भवः शिवः पाद्मो ब्रह्मा च मुख्यौ येषां ते ॥ १४ ॥

तन्नोऽस्माकं मध्ये भगवान् प्रधानं सेव्यो यस्य स भवान् । नः शुश्रूषतां हरेश्चरितं विस्तारयतु ॥ १५ ॥

तत्र शुकपरीक्षित्संवादेन कथय इत्याहुः स वा इति द्वाभ्याम् । वैयासकिना शब्दितेन कथितेन येन ज्ञानेन ज्ञानसाधनेन । अपवर्ग इत्याख्या यस्य तत् । खगेन्द्रध्वजस्य हरेः पादमूलं भेजे ॥ १६ ॥

---

श्रीवीरराघवः ।

एतदेवमतएवस्वर्गमोक्षयोरपिनभगवत्सङ्गिसङ्गलेशेनापितुल्यत्वमित्यभिप्रायेणाहतुलयामेतिभगवत्सङ्गिनः स्वाश्रयास्तेषां सङ्गःतस्यलवे नलेशमात्रेणापिस्वर्गमपुनर्भवंमोक्षंचापिनतुलयामनतुल्यंमन्यामहइत्यर्थः यतस्तेनस्वर्गमोक्षावेवनतुलयामः किंपुनर्मर्त्यानामाशिषोऽर्थकामादीन्तुलयामेति ॥ १३ ॥

---

श्रीवीरराघवः ।

ननु श्रुतभगवद्गुणकर्मभिर्वः किं पृच्छसितत्राह कइति महत्तमानामेकांतं परमुत्कृष्टमयनं प्राप्यः प्रापकमाधारश्चाऽयनं यतोऽयनमीयत्यनेनेत्यय नमीयत्यस्मिन्नित्ययनमितिविश्वं व्युत्पन्नानामयनशब्दानां तत्रयाणां निर्देशः तस्य भगवतः कथायां विषयभूतायां रसज्ञश्चेत्कोनामपुमान् तृप्येत नकोऽपीत्यर्थः श्रुतानामेव भगवद्गुणानां कर्मणां पुनः श्रवणे कोपादरस्तो निष्पद्यतइत्याशंकां निराकुर्वन् भगवंतं विशिनष्टि यस्यागुणस्य हेयगुणरहि तस्य गुणानामंतमवधिं ब्रह्मचतुर्मुखादयो योगेश्वराअपि नजग्मुः अश्रुतानामपि गुणकर्मणामानंत्याच्छ्रुतानामपि नवायमानत्वान्न कोऽपि तृप्येदि तिभावः ॥ १४ ॥

यतएवमतो महत्तमैकांतपरायणस्यहरेरुदारं विपुलमाचरितं चेष्टितं विशुद्धं शृण्वतां वदतां च विशुद्ध्यावहं भगवानेवप्रधानो मुख्यः श्रेष्ठो यस्य सभवान्हेविद्वन् ! भगवद्गुणस्य हरेरुदारं श्रोतुमिच्छतां नोऽस्मभ्यं वितनोतु विस्तारयतु कथयतुइति यावत् ॥ १५ ॥

संप्रति प्रष्टव्यं पृच्छति सवाइति द्वाभ्यां सउक्तविधो महाभागवतोऽनल्पबुद्धिः परीक्षित् यन्नैर्यासकि शब्दितनशुकोपदिष्टपुराणजेन ज्ञानेन गरु डध्वजस्य भगवतः पादमूलं भेजे प्राप्तः ॥ १६ ॥

---

श्रीविजयध्वजः ।

दीर्घकालीनसत्रकरणमंतरेणाल्पकालीनयज्ञकरणेन शुद्धांतः करणजन्यज्ञानान्मोक्षः सुकर इत्याशंक्याह तुलयामेति भगवत्संगि नां वैष्णवानां संगस्य सेवालक्षणस्य सकाशाद्यत्सुखं तस्य लवेनापि लवलक्षणकालावच्छिन्नभागेन सह स्वर्गं दुःखासंभिन्नप्रदेशं नाकलक्षणमपुन र्भवं कैवल्यं सम्यक्स्वरूपाभिव्यक्तिजननाभावलक्षणं न तुलयाम तुलयितुं न प्रभवामः लडर्थे लोट् प्रार्थनायां वा मर्त्यानां मर्त्यशरीरभोगराज्या दिसंपदः किमुत न तुलयामेति किं वक्तव्यं सायुज्यादिविशिष्टफलहेतुत्वेनांतरंगत्वाज्ञ समइत्यर्थः क्षिप्रमुक्तौ तदनंतरं पूर्वस्मादातिरिक्तफलवि शेषाभावाच्चिरसमयस्य संचीर्णं महत्सेवादिलक्षणसंगस्यातिसुखहेतुत्वेन तस्य चेह दीर्घसत्रकरणव्याजेन संभवादिदमेव सर्वैरनुमंतव्यमित्यु- क्तमनेनेतिभावः ॥ १३ ॥

श्रुतभगवत्कथानामप्यस्माकं न तत्कथायामलंबुद्धिरित्याशयवंतः आहुरित्याह कोनामेति येभवपद्ममुख्याः भवः शिवः पद्मो ब्रह्मा तौ मु ख्यौ येषां ते तथोक्ताः योगेश्वराः तत्तदधिकारियोग्यमोक्षोपायोपदेष्टृप्रधानास्ते अगुणस्य सत्त्वादिगुणरहितस्य सर्वकार्येषु प्रधानस्य वा यस्य ज्ञानादिगुणानामंतमवसानं न जग्मुः कोनाम पुमांस्तस्य मुक्तामुक्तब्रह्मादीनां महत्तमानामेकांततो नियमेन परायणस्य उत्तमाश्रयस्य महत्तमेभ्यः एकां ततः परायाउत्कृष्टायाः श्रियोऽप्ययनस्य वा हरेः कथायां तृप्येदलंबुद्धिमाप्नुयादित्यन्वयः कीदृशः रसवित्सारज्ञानीविद्वान् ॥ १४ ॥

ततः किमितितत्राह ततइति अलंबुधिर्नास्तीतियतस्ततो हेविद्वन् ! भगवतां सौभाग्यवतां पुंसां प्रधानो भवान् हरेरुदारं चरितमस्माकं वितनो तु विस्तारयतु इत्यन्वयः भगवानेव प्रधानो यस्य मते स तथेति वा महत्तमश्चएकांतश्च परायणश्चेति महत्तमैकांतपरायणः महतां ब्रह्मादीनामति शयेन श्रेष्ठः अंते प्रलये एक एव न द्वितीयोऽस्ति परामुक्तास्तेषामाश्रयः शुश्रूषतामित्यनेन श्रवणशीलत्वं स्वाभाविकमिति दर्शयति ॥ १५ ॥

हरेरुदाराचरितानामनंतत्वात्तेषां मध्ये किं वक्ष्यामीति प्रश्नो माभूदित्यभिलषितचरितमिदमित्याहुरित्याह तत्रइति तदाख्यानमस्माकं भा ख्याहीत्यन्वयः परमुत्कृष्टं पुरुषं पुनानं असंवृतः स्पष्टोर्थः पुरुषार्थो यस्माद्भवति तथोक्तं तत् अत्यद्भुतानां योगानां भक्तिज्ञानादिलक्षणानां निष्ठा प्रतिपाद्यतया नितरां स्थितिर्यस्मिंस्तत्तथोक्तं तत्कालतो देशतश्चानंतस्यापरिच्छिन्नस्य हरेश्चरितेनोपपन्नं सहितं तथा परीक्षित्संबंधि भागवता नामभिरामं मनोहरं भागवताः अभिरमंते यस्मिन्निति वा भगवत्संबंधित्वाद्वाऽभिरामम् ॥ १६ ॥

---

क्रमसन्दर्भः

तुलयामेति तैः । तत्र सम्भावनायां लोडिति । तुलयितुं सम्भावनामपि न कुर्मः किमुत तुलनां न कुर्म इत्यर्थः ॥ १३ ॥ योगस्य भक्तियोगस्य ईश्वराः दातुमदातुञ्च समर्थाः ॥ १४ । १५ । १६ ॥

---

सुबोधिनी ।

एवं कथायामत्यादरमुक्त्वा तस्मिन्नत्यादरमाह तुलयामेति भगवता सह संयोगः यस्य तादृशस्य यः संगः तस्यैकदेशमपि स्वर्गेन तुलयामः यथा त्वत्सङ्गेन कथामृतपाने सुखं जातं तथा स्वर्गे भविष्यतीति न कल्पयामः तथा समानत्वापादनेन अनादरः स्यात् स्वर्गो हि "यन्न दुःखेन संभिन्न" मितिवाक्यात् दुःखासंश्लिष्टः सुखविशेषः सच जीवोपभोग्यः जीवात्मानंदात् न्यूनः तस्यैव जीवावरणनिवृत्तिरूपः अपुनर्भवः यतो न पुनर्भवतीति सच मानुषानन्दापेक्षया उत्तमोऽपि ब्रह्मानन्दापेक्षया स्वल्प एव उभयथापि आनन्दमयस्य भगवतस्तुल्यो न भवतीति संख्ययापरि मितत्वेन निरूपणात् अपरिमितो हि भगवदानन्दः विलक्षणश्च अन्यथा जीवस्य ब्रह्मभावो नोच्येत ब्रह्मभूतस्यैव भगवत्प्रवेशः नहि ग्रामा मात्रेऽपि पिपीलिकायाः भक्षिते मुष्टिमात्रशर्करारसानुभवो भवति ब्रह्मानन्दे ब्रह्मणोऽपि पूर्णानन्दतोऽपि सनकादेः भगवदानन्दाकांक्षणात् अतो भगवता सह स्वर्गापवर्गयोर्न तुल्यता प्राप्तः तुलयतु नाम परं तु न तुलयामः मर्त्यानामाशिषश्चित्तवृत्तिः पित्राद्याशीः आशिषइति स्त्रीत्वं बहु वचनं ता सा निषिध्यलौकिकत्व तत्रादरविशेषात् लौकिकवैदिकमार्गापेक्षया पुष्टिमार्ग उत्कृष्ट इत्युक्तं भवति ॥ १३ ॥

॥ सुबोधिनी ॥

[illegible] नयेदिति [illegible] पूर्वनिरूपितःसत्त्व-
[illegible] केवलंनतद्रूपार्थं किंतुसत्त्वमिति [illegible] यद्यपिसत्यासत्येन
श्रोत्रमात्रेसंजनयति तथापि [illegible] यस्तुरसवित्सकथंतृप्यते
इत्यर्थः तत्रापिकथायांकथारसस्य [illegible] लौकेऽपिसिद्धः कर्मज्ञाननिष्ठास्तृप्यंतीतिचेत् [illegible] तेषामेकान्त
नियमेनपरंयदयनमुत्कृष्टंयत्प्राप्तिस्थानंफलरूपमितियावत् यस्यभगवतः यद्यपिकेवलकर्मज्ञानिनः रसवित्पदेनैवनिवर्तिता तथापिलोक
प्रतीत्यासाधनत्वेनतेषामपिरसवित्त्वं परांतरेऽप्युक्तंत्याः ननिवर्ततेफलत्वात् तदातेतदनुवर्तिनः [illegible] केवलं [illegible]
देवनान्यतइतिसिद्धंतत्रसंसतिमाह नांतमिति अगुणस्यगुणानामंतंपरिच्छेदंनजग्मुः यथारुचिनित्यकथाकृतैवकथायांतथागुणा अपिनपरि
च्छिन्नाः अतोनालंबुद्धिहेतवः अपेक्षितात् परिच्छिन्नादेवनिवर्तते अतः प्रमाणप्रमेययोःनित्यत्वात् अपेक्षान्तराभावात् प्रतिबन्धकाभावाच्च
नालंबुद्धिःसंभवतीत्युक्तम् अगुणस्यगुणानामितिविरोधाभावेन असंख्यतासूचिता योहिगुणवान्सपरिमितगुणोभवति यथादेवदत्तादिः
अगुणस्येतिगुणाः पर्वताग्रनदीजलवदपरिमिताएवभवंति नचतेअधिकाः रसानुभवात् प्रेक्षावतांचप्रवृत्तेः नचगुणवान्अद्वैतभङ्गापत्तेः
अतोभगवानेवस्वरूपेणैवअविक्रियमाणएवतादृशगुणरूपोभवंतीतिकारणस्यनित्यत्वात् प्रतिक्षणंज्ञानानिगुणाअनंताएवभवंति गणकानां
गणनापर्यवसानाच्च अनन्तत्वंतदाहयोगेश्वराइति अलौकिकाभगवद्गुणाः अलौकिकप्रमाणगम्याइतिवा तत्रापिनसाधारणयोगगम्याइति
योगेश्वराइत्युक्तंभवोमहादेवः पाद्मोब्रह्मानाभिकमलेजातःभक्तियोगयोःमहादेवस्यप्राधान्यात्प्रथमतोग्रहणंप्रमाणमुख्यतयाभव ग्रहणं प्रमे
यमुख्यतयापाद्मग्रहणंभवतीति व्युत्पत्त्याअभियुक्तब्रह्मरूपवदरूपमवभवस्यरूपमिति वेदःशिवःशिवोवेदेतिवाक्यात् भगवन्नाभिकमलो
द्भवत्वात् ॥ १४ ॥

तज्जननत्वेनतत्त्वं प्रमाणप्रमेयप्रमातृणामात्यंतेनयोग्यत्वात्गुणान् कथयेत्याहुः तन्नोभवामिति तवचैतदेववक्तव्यंयतोभगवान्विनि
श्चीयतेयेनभगवदीयानांमध्येप्रधानोमुख्यः प्रधानशब्दः प्रकृतिवाचकएवनित्यनपुंसकः भगवान्प्रधानंयस्येतिवा किंच महत्तमानांभगवद्भ
क्तानामेकांततः परायणंपरमप्राप्यफलम् अतस्तवापिमहत्त्वसिद्धयेभगवद्गुणकथनमावश्यकमित्युक्तं कथनक्लेशोऽपिनास्तीत्याह हरेरिति
भगवद्व्यतिरेकेणापिगुणैरेवसर्वे पुरुषार्थादीयंतइतिउदारं चरितमित्युक्तंविशुद्धमिति विशुद्धमेवाहिसर्वेप्रयासाः सर्वेचमत्काराःचरित्रं
च विशेषाकारेणशुद्धिःयस्मादिति स्वस्यश्रोतृत्वमाह शुश्रूषतामिति विशेषेणतनोतुविस्तारयतु प्रार्थनायांलोट् वक्तृत्वयोग्यतामाह
विद्वन्निति ॥ १५ ॥

एवंसामान्यतः कथनार्थंप्रार्थयित्वाश्रोतव्यंविशेषाकारेणपृच्छति सवैमहाभागवतइति साधनफलयोर्यत्रनव्यभिचारः तत्श्रोतव्यं
तत्रश्रोतुरधिकारिविशेषणंमहाभागवतइति भगवद्भक्तोभागवतः यस्तुभागवतानामुत्तमत्वेनगृहीतः सफलमुख्योमहाभागवतः अत्यन्तं
भगवत्कृपावलोकितः श्रोतामुख्यइत्युक्तंभवति तस्यतथात्वेहेतुमाहपरीक्षिदिति पूर्वंसृष्टमनुध्यायन्निति निरुक्त्यापरीक्षित्त्वं येनोपदेशे
नखगेन्द्रध्वजपादमूलंभेजेतत् कथयेत्यग्रेणसम्बन्धः शास्त्रान्तरेब्रह्मइतिमोक्षइतियत्स्वरूपंव्यपदिश्यते तदेवास्मिन्शास्त्रेचरणायितंवैकुण्ठा
ख्यंतद्विष्णोः परमंपदमितिश्रुतेः परमभागवतस्यापिभगवच्चरणारविन्दगमनेच्छयालमंतवक्तव्यंश्रोतव्यं महतामपियेनविनाकार्यंनासि
द्ध्यति तत्साधनमित्यभिधीयतेनतुतत्ज्ञानंभविष्यति तत्साधनमितिनिश्चीयतेतच्चप्रसिद्धमेवेति किंकथनेनेत्याशंक्याह अदभ्रबुद्धिःअ-
नल्पाबुद्धिर्यस्यपूर्वमेवतस्यबुद्धिःस्थिता अतोनबुद्धिरूपंज्ञानंसाधनं किंतुवैयासकिशब्दितेनज्ञानेनतत्सुज्ञानंनित्यं सिद्धमेववैयासकिना
शुकेनकेवलंसब्दितमुक्तंचरितं भागवताख्यंज्ञानंचैतन्यरूपंखगेंद्रोगरुडः सच्छन्दोमयकालचिह्नतांप्राप्तःकालात्मकः सोऽयस्तुपर्णआसीदिति
वाक्यात् विष्णोःपरमंपदमिति श्रुत्यनुरोधेनैतदुक्तंमूलपदंपुनरागमनाभावाय ॥ १६ ॥

---

श्रीविश्वनाथचक्रवर्ती।

तस्मात् त्वादृशसाधुसङ्गमहानिधेर्माहात्म्यमस्मदनुभवगोचरीकृतं कियदब्रूम इत्याहुः। भगवत्सङ्गिनो भक्तास्तेषां सङ्गस्य यो लवोऽत्यल्पः कालस्तेन स्वर्गं कर्म्मफलम् अपुनर्भवं मोक्षंच ज्ञानफलं न तुलयाम मर्त्यानां तुच्छा आशिषो राज्याद्याः किमुत वक्तव्यं न तुलयामेति। यतः साधुसङ्गेन परमदुर्लभाया भक्तेरंकुरो ह्युद्भवतीति भावः। तत्र भक्तेः साधनस्यापि साधुसङ्गस्य लवेनापि कर्म्म-ज्ञानादः फलं सम्पूर्णमपि न तुलयाम किमुत बहुकालव्यापिना साधुसङ्गेन किमुततरां तत्फलभूतया भक्त्या किमुततमां भक्तिफलेन प्रेम्णेति च कैमुत्यातिशयो द्योतितो भवति। तथात्र सम्भावनार्थकलोटा तोलने सम्भावनामेव न कुर्म्मः। न हि मेरुणा सर्षपं कश्चित्तु-लयतीति द्योत्यते। बहुवचनेन बहूनां सम्मत्या नैषोऽर्थः केनचिदप्रमाणीकर्त्तुं शक्यते इति व्यज्यते। भगवत्संगिसंगस्य इत्यनेन—न तथास्य भवेत् क्लेशो बन्धश्चान्यप्रसंगतः। योषित्संगाद्यथा पुंसस्तथा तत्संगिसंगत इति। योषित्संगादपि योषित्संगिनां संगो यथातिनिन्द्य उक्तः तथैव भगवत्संगादपि भगवत्संगिनां संगोऽतिवन्द्योऽतिप्रशस्योऽत्यभिलषणीय इति बोध्यते ॥ १३ ॥

ननु सत्यमेव प्रशस्यते साधुसंगो यतस्तं विना कृष्णकथास्वादो न लभ्यते स युष्माभिर्लब्ध एवेति किं पुनस्तस्यैव पौनःपुन्येनेत्यत आह को नामेति। रसवित् सर्वधैव तदा को नाम महत्तमानाम् एकान्तेन परम् अयनम् आश्रयो यस्तस्य कथायां तृप्येदिति [illegible] व्यमुक्तम्। महैश्वर्य्यं चाह नान्तमिति। यतः अगुणस्य प्राकृतगुणरहितस्य गुणानां चिन्मयानाम् अन्तं ये योगेश्वरास्तेऽपि न जग्मुः ॥ १४ ॥

नोऽस्माकं मध्ये भगवान् प्रधानं सेव्यो यस्य सः भवान्। नोऽस्माकं शुश्रूषतां सम्बन्धेन। विशुद्धं मायातीतम् ॥ १५ ॥

ननु ज्ञानादेव मोक्ष इति ज्ञानाय तत्फलाय मोक्षाय च कथं न स्पृहयथेति चेदस्माकं भक्तानां भगवच्चरितास्वादनं ज्ञानं तत्फलं भगवत्पदप्राप्तिरेव मोक्ष इति परीक्षिदृष्टान्तेनाहुः। तच्चरितं भवान् वितनोतु येन स वै परीक्षित् खगेन्द्रध्वजस्य भगवतः पादमूलं प्राप।

तन्नः परं पुण्यमसंवृतार्थमाख्यानमत्यद्भुतयोगनिष्ठम् ।
आख्याह्यनन्ताचरितोपपन्नं पारीक्षितं भागवताभिरामम् ॥ १७ ॥

सूतउवाच । अहो वयं जन्मभृतोऽद्यहास्मवृद्धानुवृत्त्यापि विलोमजाताः ।
दौष्कुल्यमाधिं विधुनोति शीघ्रं महत्तमानामभिधानयोगः ॥ १८ ॥
कुतः पुनर्गृणतो नाम तस्य महत्तमैकान्तपरायणस्य ।
योऽनन्तशक्तिर्भगवाननन्तो महद्गुणत्वाद्यमनन्तमाहुः ॥ १९ ॥
एतावतालं ननु सूचितेन गुणैरसाम्यानतिशायनस्य ।
हित्वेतरान् प्रार्थयतो विभूतिर्यस्याङ्घ्रिरेणुं जुषतेऽनभीप्सोः ॥ २० ॥

श्रीविश्वनाथचक्रवर्त्ती ।

ननु द्वादशस्कन्धे परीक्षिदपवर्गं प्रापेति प्रसिद्धिः सत्यम् । अपवर्ग इत्याख्या यस्य तद्भक्तैर्भगवत्पादमूलमेवापवर्ग उच्यते । वक्ष्यते च पंचमस्कन्धे—यथावर्णविधानमपवर्गश्च भवति योऽसौ भगवति भक्तियोग इति । येन कथम्भूतेन वैयासकिशब्दितेन । यथैव तत्पादमूलं म । वर्गशब्देनोच्यते तथैव तच्चरितमपि ज्ञानशब्देन वैयासकिनोच्यते । अतो ज्ञानेन परीक्षिदपवर्गं प्रापेति प्रसिद्धिर्नानृतेत्यर्थः । एतेन स प्रेत्य गतवान् यथेति प्रश्नस्योत्तरमुक्तम् ॥ १६ ॥

सिद्धांतप्रदीपः ।

भगवत्संगिनांसंगस्यलवेनलेशमात्रेणनस्वर्गेनचाऽपुनर्भवंमोक्षंतुलयामसम्भावनायांलोट् किंपुनर्मर्त्यानामाशिषः साम्राज्याद्याः नतुलयामेति ॥ १३ ॥

सत्सङ्गमाहात्म्यमुक्त्वातत्फलभूते भगवत्कथाश्रवणे आत्मनःश्रद्धातिशयंसूचयंतिकइति "यआत्माविरजोविमृत्युर्विशोकोविजिघत्सोऽपिपास" इत्यादिश्रुतिभ्योऽगुणस्यहेयगुणरहितस्यअनंतकल्याणगुणात्मकोऽसावि "त्यादिश्रुतिप्रोक्तानांगुणानामंतमवधिंभवपाद्मसुख्याःरुद्रपाद्मप्रधानानजग्मुःयद्यपितथापि महत्तमानामेकांतंनिरतिशयावधिभूतंपरमुत्कृष्टमीयते इत्ययनंप्राप्यंब्रह्मतस्यकथायांयथाशक्तिथथोपदेशं गुणैकदेशवर्णनरूपायांरसविच्चेत्कोनामतृप्येतनकोऽपीत्यर्थः ॥ १४ ॥

तत्तस्मात् हेविद्वन् ! नोऽस्माकंमध्येभगवत्प्रधानः भवान् शुश्रूषतांश्रोतुमिच्छतांनोऽस्यश्रयंहरेश्चरितंवितनोतुविस्तारयतु ॥ १५ ॥

शुकपरीक्षित्संवादद्वाराहरिचेष्टितंश्रावयेत्याह सद्वातिद्वाभ्याम् सउक्तभावः परीक्षित् यैर्वैयासकिशब्दितैर्शुकोपदिष्टैर्ज्ञानेनज्ञानध्यानादिसाधनपरेणाख्यानेनापवर्गाख्यंगरुडध्वजपादमूलंभेजेप्राप्तः तन्नआख्याहीत्युत्तरेणान्वयः ॥ १६ ॥

भाषाटीका ।

भगवद्भक्तों के संग के लेश के तुल्य स्वर्ग और मोक्ष भी नहीं है तो मनुष्यों की संपत्ति तो क्या तुल्य होंगी ॥ १३ ॥

ऐसा कौन है कि जो महत्पुरुषों के आश्रय श्रीकृष्ण की कथा में तृप्ति मानेगा जिसे निर्गुण भगवान के गुणों के अन्त को योगेश्वर ब्रह्म रुद्रादि कभी नहीं प्राप्त हुये ॥ १४ ॥

आप संतों में श्रेष्ठ हो सो वह महत्परायण हरि के उदार विशुद्ध चरित को शुश्रू हमलोगों से बिस्तार करेंगे ॥ १५ ॥

अहं परीक्षित महा भागवत हैं जिन्होंने शुकप्रोक्त ज्ञान से निर्मल बुद्धि होकर मोक्षरूप भगवच्चरण कू प्राप्त हुये ॥ १६ ॥

श्रीधरस्वामी ।

तत् असंवृतार्थं यथा स्यात् तथा आख्याहि । तदेव निर्दिशति । परीक्षिते कथितं पारीक्षितम् । आख्यानं श्रीभागवतं पुराणम् । परं पुण्यं सत्त्वशोधकम् । अत्यद्भुते योगे निष्ठा यस्य । अनन्तस्याचरितैरुपपन्नं युक्तम् । अतएव भागवतानामभिरामं प्रियम् । एतैर्विशेषणैः कर्मज्ञानभक्तियोगप्रकाशकत्वं दर्शितम् ॥ १७ ॥

श्रीभागवतव्याख्याने लब्धप्रसङ्गं महतामादरपात्रमात्मानं श्लाघते द्वाभ्याम् । अहो अत्याश्चर्यं । ह इति हर्षे । वयमिति बहुवचनं श्लाघायाम् । विलोमजाता अपि अद्य जन्मभृतः सफलजन्मानः आस्म जाताः वृद्धानामनुवृत्त्या आदरेण । ज्ञानवृद्धः शुकस्तस्य सेवया इति वा । यतो दुष्कुलत्वं तन्निमित्तमाधिं च मनःपीडाम् । महत्तमानामभिधानयोगः लौकिकोऽपि संभाषणलक्षणः सम्बन्धः । विधुनोति अपनयति ॥ १८ ॥

श्रीधरस्वामी ।

कुतः पुनः किं पुनर्वक्तव्यं, तस्यानन्तस्य नाम गृणतः पुंसो महत्तमानामभिधानयोगो दौष्कुल्यं विधुनोतीति । यद्वा नाम गृणतः कुतः पुनः दौष्कुल्यमिति । यद्वा गृणतः पुंसस्तस्य नाम दौष्कुल्यं विधुनोतीति किं वक्तव्यमिति कैमुत्यमेवाह । अनन्ताः शक्तयो यस्य । स्वतोऽप्यनन्तः । किंच महान्तस्तु गुणा यस्य स महद्गुणः तस्य भावस्तत्त्वम् । तस्मात् यं गुणतोऽप्यनन्तमाहुः ॥ १९ ॥

एतत् प्रपंचयति एतावतेति त्रिभिः । तस्य यदसाम्यं अनतिशायनंच गुणैस्तत्साम्यं तदाधिक्यं चान्यस्य नास्तीत्यर्थस्य ज्ञानाय एतावता सूचितेन अलं पर्याप्तम् । कस्तद्वक्तुं विस्तरतः शक्नोति । तदेवाह । इतरान् ब्रह्मादीन् प्रार्थयमानान् हित्वा विभूतिः श्रीः अनभीप्सोरपि यस्यांघ्रिरेणुं सेवत इति ॥ २० ॥

---

श्रीवीरराघवः ।

तदाख्यानंपुराणंनोऽस्मभ्यमाख्याहिकथयकथंभूतं वदतांशृण्वतांचपरंपुण्यं निरातिशयपुण्यावहंयद्वापरमुत्कृष्टंस्वतुल्याधिकपुराणांतर रहितमसंवृताअसंकुचिताः स्पष्टावाअर्थामुमुक्षूणामुपादेयाः शास्त्रार्थाः प्रतिपाद्यायस्मिन्अत्यद्भुताभगवद्भक्तियोगनिष्ठायस्मात्अनंतस्या परिच्छिन्नस्वरूपस्वभावस्यभगवतः आचरितैःचेष्टितैःप्रतिपाद्यैरुपपन्नमतएवभागवततानामभिरामंश्रीभागवतमितिभावः भागवतशब्दस्या न्यगामित्वव्युदासायविशिनष्टिपारीक्षितंपरीक्षिताश्रुतम् ॥ १७ ॥

इत्थंभगवद्गुणानुवर्णनेप्रवर्त्तितस्तावदात्मानंकृतार्थंमन्यतेअहोइति स्वभाग्यंशिरःकम्पेनाविःकरोति तद्भाग्यमित्यत्रतदेवदर्शयतिवयं विलोमजाताअपिब्राह्मण्यांक्षत्रियाज्जाताअपि वृद्धानांज्ञानेनवयसाजन्मनाचवृद्धानां भागवतानामनुवृत्त्याहेतुभूतयाअधुनाजन्मभृतःप्रशस्तदेह धृतः स्मःभवामःहेत्याश्चर्येहर्षेवाविलोमजानामपिहेत्वंतरेणप्राशस्त्यमूलकोहर्षः आश्चर्यंचयुक्तमेवेत्यभिप्रायेणाहदौष्कुल्यमितिमहत्तमानां त्वादृशानामभिधानयोगः श्रवणव्याख्यानसंबंधः दौष्कुल्यंदुष्कुलप्रभवत्वप्रयुक्तंहीनत्वमाधिंमनः क्लेशंवाशुधुनोतिनिरस्यति ॥ १८ ॥

यतोमहत्तमानामभिधानयोगएवाधिंदौष्कुल्यंचविधुनोतिकुतः पुनः साक्षान्महत्तमैकांतपरायणस्यभगवतोनामगृणतःकीर्त्तयतःपुंसो दौष्कुल्यमाधिश्चसंभाव्येतनन्वकोऽसौमहत्तमैकांतपरायणभूतः केतस्यमहिमानः तन्नामग्रहणमात्रस्यैवकथंदौष्कुल्यादिपरिहारकत्वंकथंत- द्भक्ताभिधानयोगस्यतत्त्वमित्यतः तंविशिंषन्नाहयोभगवान्पूर्णषाड्गुण्यःयश्चानंतशक्तिरनंताः शक्तयोयस्यतथाभूतः पावकस्यदाहकत्वशक्ति वन्नामाभिधातृगतदौष्कुल्याद्यपनोदकशक्तिरस्तीतिभावः यश्चस्वरूपेणानंतः यंचमहद्गुणत्वादनंतगुणत्वादनंतमाहुःसत्यंज्ञानमनंतमित्या दयोवेदांतास्तस्यनामगृणतइत्यन्वयः अनंतो ऽनंतगुणत्वाच्चेत्यनेनतस्मिन्स्वरूपतोगुणतश्चानंत्यमनंतपदप्रवृत्तिनिमित्तमिति सूचितमनेन भक्ताभिधानयोगस्यदौष्कुल्याद्यपनोदकत्वयुक्तानेकगुणाश्रयत्वमुक्तमगुणानांमहत्त्वंनामानन्त्यमनितरसाधारण्यंवानतुसाधारणोऽनवधिक गुणत्वादित्यर्थः ॥ १९ ॥

महद्गुणशब्दाभिप्रेतमेवविशदयंस्तत्संगृह्यदर्शयामीत्यभिप्रायेणाहएतावतेतिगुणैर्नेविद्यतेसाम्यंयस्यतैर्नेविद्यते ऽतिशायनमतिशयोय- स्यसाम्यश्चासावनतिशायनस्तस्यानिःसमाभ्यधिकगुणस्येत्यर्थः सूचितेनदिङ्नात्रदर्शितेनैतावतामहिम्नालंवहुनाकिंतद्दर्शनीयमितिभावः कियताविभूतिर्लक्ष्मीः प्रार्थयमानानपिइतरान्ब्रह्मादीन्हित्वानभीप्सोरकामयमानस्यापियस्यभगवतोऽङ्घ्रिरेणुंजुषतेसेवतेइतियथाश्रियःपति त्वमेवतन्मात्रप्रदर्शनायालमित्यर्थः ॥ २० ॥

---

श्रीविजयध्वजः ।

तदितिकिंतत्राह सवाइति अदभ्रबुद्धिः पूर्णज्ञानः महाभागवतः परीक्षिद्व्यासकिनाशुकेनशब्दितेनोपदिष्टेनश्रुतेनज्ञानेनयेनापवर्गाख्यं खगेन्द्रध्वजस्यगरुडध्वजस्यपादमूलंभेजइत्यन्वयः वाइत्यनेनाख्यानस्यइष्टसाधनावबोधकत्वेनोपादेयत्वंदर्शयतीति ॥ १७ ॥

हेमहात्मनशौनक । विलोमजाताःहीनजन्मानोऽपिवयंज्ञानवृद्धानामनुवृत्त्यासेवयाजन्मभृतः सफलजन्मानोऽभूमेत्यन्वयः अहोआश्चर्य मस्मद्भाग्यंकुतः महत्तमानामभिधानंगोष्ठीतस्ययोगः संबंधः आभिधानेततान्नायोगइतिवा दुष्कुलोत्पत्तिरितिमिस्वदौष्कुल्यमाधिंमनोदुःखं शीघ्रंविधुनोतीत्येकान्वयः ॥ १८ ॥

कैमुत्यमाह कुतइति महत्तमैकांतपरायणस्यहरेर्नामगृणतः पुंसः आधिंविधुनोतीतिकुतः पुनः किंवक्तव्यमित्यन्वयः अनंताअपरिमि ताः शक्तयोयस्यसतथा देशादितः परिच्छेदोनविद्यतेयस्यसोऽनंतः योभगवाननंतशक्तिरनंतश्च नकेवलंताभ्यामानंत्यंगुणानंत्यमप्यस्तीत्याह महदिति महांतोगुणाः महद्गुणाः तेषांभावः महद्गुणत्वं तस्माच्छांदसत्वान्महच्छब्दस्यमहादेशाभावः यंभगवंतमनंतंगुणतःपरिच्छेदरहितं सत्यंज्ञानमनंतमित्यादिवेदांताआहुरित्यन्वयः ॥ १९ ॥

प्रार्थयतः कटाक्षमोक्षमितिशेषः इतरान्ब्रह्मादीन्हित्वाकटाक्षवीक्षामकृत्वाविभूतिर्महालक्ष्मीः स्वरतत्वावनभीप्सोरनिच्छोर्यस्यहरेरंघ्रि रेणुमनवरतंजुषतेसेवते तस्यास्यहरेरसाम्येअद्वितीये तथागुणैरनतिशयितेआधिक्यरहितेसर्वोसमत्वेचसूचितेनलक्ष्मीपातिरित्येतावताअलं नन्वित्येकान्वयः । अहमेवस्वयमिदंवदामिजुष्टंदेवेभिरुतमानुषेभिः श्रीमन्मंदकटाक्षलब्धविभवब्रह्मेन्द्रगंगाधरमित्यादिश्रुतिस्मृतिभ्योऽति रेषामशेषाणांलक्ष्म्याभवतारत्वाल्लक्ष्मीपतित्वंविष्णोः सर्वोत्तमत्वयुक्तिरितिभावः ॥ २० ॥

---

सुबोधिनी ।

भीष्टिकथंभजेत तत्रापिअनभीप्सोः अंघ्रिरेणुकथंभजेत भोमार्थोनान्वितताबांर्थयत्ता अन्यानपिविहाय अतः अंघ्रिरेणोरपिमाहात्म्यंतदपेक्षया चान्येषांतस्मान्माहात्म्यनिरूपणंनकर्तव्यं तद्दिसर्वभूतमेवसर्वंज्ञानितिकश्चिद्वदतिगुरुस्तिवाप्रकृतिसम्बन्धादस्यात् ज्ञात्वाह्यनुरूपभाव: ॥ २० ॥

श्रीविश्वनाथचक्रवर्ती ।

असंवृतार्थं यथा स्यात् तथाख्याहि । अत्यद्भुते योगे भक्तो निष्ठा यस्य । आख्यातं श्रीभागवतम् । यतो भागवतानां भक्तानाम् अभिरामं प्रियं पारीक्षितं परीक्षिते कथितम् ॥ १७ ॥

श्रीभागवताख्याने ऋषिभिर्दत्तयोग्यताकमात्मानमभिनन्दति । विलोमजा जिन्या अपि वयं जन्मभृतः सफलजन्मानः आस्म जाता इ स्पष्टम् । वृद्धानां ज्ञानवृद्धस्य शुकस्य वा अनुवृत्त्या । यतो दुष्कुलत्वं तन्निमित्तमाधिं च मनःपीडां महत्तमानामभिधानयोगः लौकिकोऽपि संभाषणलक्षणसम्बन्धः विधुनोति । कुतः पुनः किं पुनः वक्तव्यं गृणतः कीर्तयतः पुंसः नाम कर्म दौष्कुल्यं विधुनोति । ननु दौष्कुल्यारम्भकं पापं प्रारब्धमेव तस्य नाशं विना कथं दौष्कुल्यधूननं प्रारब्धस्य तु भोगेनैव नाश इति प्रसिद्धेः नासतः कथं स्यात् यत्वित्यत आह । यो भगवाननन्तशक्तिरिति । शक्तीनामानन्त्यात् कृतप्रारब्धनाशिन्यपि काचित् शक्तिरस्त्येवेति भावः तथाच महत्सु सम्यक्त्वेषु गुणा यस्य स, महद्गुणास्तस्य भावस्तत्त्वम् । तस्माद्यमनन्तमाहुरिति । तेन तद्भक्तेषु तदीयगुणसंक्रमात् तस्मिन्निव तद्भक्तेऽपि प्रारब्धं न तिष्ठति ॥ १८ ॥ १९ ॥

ननु के ते गुणास्तत्र तान् वक्तुं कः समर्थः किन्तु एतावता सूचितेनालं यद्गुणैरसाम्यं न अतिशायनं यस्य तस्येति यस्य समएव नास्ति अधिकः कुतो भविष्यतीत्यर्थः । एवम्भूतस्य यस्यानभीप्सोरपि अंघ्रिरेणुं विभूतिर्लक्ष्मीः सर्वगुणापूर्णामन्विष्यन्ती जुषते सेवते इतरान् ब्रह्मादीन् प्रार्थयमानानपि त्यक्त्वा ॥ २० ॥

सिद्धान्तप्रदीपः ।

तदाख्याहि अत्यद्भुतेवेदनोपासनभजनध्यानाख्येयोगेभगवद्यत्प्रापकसाधनेनिष्ठायस्यतत् परेसर्वेभ्यः शास्त्रेभ्यउत्कृष्टम् पुण्यंपुण्यावहम् असंवृतार्थमसंदिग्धसाध्यसाधनबोधकम् अनंतस्यापरिच्छिन्नस्याचरितैरुपपन्नंयुक्तम् अतएवभागवतानामाभिराममतिप्रियम् परीक्षिते प्रोक्तंपारीक्षितम् श्रीमद्भागवताभिधंमहापुराणमाख्याहिकथय ॥ १७ ॥

एवंश्रीमद्भागवताख्यानेमहत्तावरैस्तमहात्मभिः प्रवर्तितस्यात्मनः कृतार्थतामाह अहोइतिद्वाभ्याम् "ब्राह्मण्यांक्षत्रियाज्जातः सर्वसूत उदाहृत" इतिस्मृतिप्रसिद्धोविलोमजा अपिवृद्धानांज्ञानादिभिःस्थविराणामनुवृत्त्यासेवयाऽद्यजन्मभृतः आस्महइतिहर्षेसफलजन्मानोभवामः अहोइत्याश्चर्ये अहोमहत्तमानामभिधानयोगः श्रवणकथनादिनिबन्धनः सम्बन्धः दौष्कुल्यंकुष्कुलजत्वंतन्निमित्तमाधिमनो व्यथांचशीघ्रं विधुनोति अपनयति ॥ १८ ॥

श्रवणस्मरणअनामधानयोगोदौष्कुल्यमाधिंचविधुनोतिकुतः पुनस्तस्यमहत्तमैकांतपरायणस्यनामगृणतः कीर्तयतःपुंसोदौष्कुल्यं तन्निमित्तआधिश्चनकुतोऽपीत्यर्थः ननुयन्नामगृणतोदौष्कुल्यादिनस्यात्तादृशो ऽन्योपिकश्चिदस्त्येवेत्यतोनिः समानातिशयत्वमाह योऽनंत शक्तिः अनंताःशक्तयोयस्यस "परास्यशक्तिर्विविधैवश्रूयतेस्वाभाविकीज्ञानबलक्रियाचे" तिश्रुतेः षड्स्वाभाविकषडैश्वर्यसंपन्नोभगवान् स्वतोऽप्यनंतः "सत्यंज्ञानमनंतंब्रह्मे" तिश्रुतेः महांतः "अनंतकल्याणगुणात्मकोऽसौतेजोबलैश्वर्यमहावबोध" इत्यादि श्रुतिप्रोक्ता गुणायस्य समहद्गुणस्तस्यभावस्तत्त्वंतस्मान्महद्गुणत्वादपियमनंतमाहुर्मुनयोवेदाश्चातस्यसमानातिशयशून्यस्यनामगृणतइत्यन्वयः ॥ १९ ॥

निःसमानातिशयत्वंप्रपंचयतित्रिभिः गुणैरसाम्यानतिशायनस्य गुणास्त्युपलक्षणंशक्तिस्वरूपयोःगुणतःशक्तितः स्वरूपतश्चयदसाम्यमसमत्वमनतिशायनमनतिशयत्वंचतस्यैतावतासूचितेनमाहात्म्यलेशमात्रेणादर्शितेनालम् तल्लेशमेवदर्शयतिविभूतिः श्रीःइतरान्ब्रह्मादीन्प्रार्थयतोऽपिहित्वायस्यानंतगुणशक्तिमतोऽनभीप्सोरकामयमानस्यापिभगवतोऽङ्घ्रिरेणुभजतेसेवते ॥ २० ॥

भाषाटीका ।

तिस कारण से प्रगट अति अद्भुत योगनिष्ठ भगवच्चरित्र से युक्त मनोहर पवित्र परीक्षित जी के चरित्र को कथन करो ॥ १७ ॥

अहो आश्चर्य है कि हम विलोमज हो के भी वृद्धों के अनुवर्तन से आज धन्य जन्मवाले होगये क्योंकि महात्माओं का नाम कीर्तन भी दुष्कुलत्व मनःपीडा का नाश करता है ॥ १८ ॥

यदि महत्त् पुरुषों के पराय[illegible] अनंतशक्ति वाले अनंत भगवान् महद्गुण होने से जिनको अनंत कहते हैं उनका नाम लेने से क्यों न पुण्य होगा ॥ १९ ॥

उनके इतना ही गुण कथन करना बस है जोकि गुणों से सब से अधिक ही है लक्ष्मी भी अपने सेवक ब्रह्मादिकों को त्याग करके निरपेक्ष जिन हरि के चरण रज को चाहती है ॥ २० ॥

अथापि यत्पादनखावसृष्टं जगद्विरिञ्चोपहृतार्हणाम्भः ।
सेशं पुनात्यन्यतमो मुकुन्दात् को नाम लोके भगवत्पदार्थः ॥ २१ ॥
यत्रानुरक्ताः सहसैव धीरा व्यपोह्य देहादिषु सङ्गमूढम् ।
व्रजन्ति तत् पारमहंस्यमन्त्यं यस्मिन्नहिंसोपशमः स्वधर्म्मः ॥ २२ ॥
अहं हि पृष्टोऽर्य्यमणो भवद्भिराचक्ष आत्मावगमोऽत्र यावान् ।
नभः पतन्त्यात्मसमं पतत्त्रिणस्तथा समं विष्णुगतिं विपश्चितः ॥ २३ ॥
एकदा धनुरुद्यम्य विचरन् मृगया वने ।
मृगाननुगतः श्रान्तः क्षुधितस्तृषितो भृशम् ॥ २४ ॥

### श्रीधरस्वामी ।

अथेत्यर्थान्तरे । यस्य पादनखावसृष्टं निःसृतमपि विरिञ्चेनोपहृतं समर्पितम् अर्हणाम्भः अर्घ्योदकम् ईशसहितं जगत् पुनाति । विरिञ्चोपहृतं सेशमिति च तयोरप्युपासकत्वमुक्तम् । तस्मान्मुकुन्दव्यतिरिक्तः को नाम भगवत्पदस्यार्थः सर्व्वेश्वरः स एवेत्यर्थः ॥ २१ ॥
धीराः सन्तः । ऊढं धृतम् । अन्त्यं परमकाष्ठापन्नम् । तदाह यस्मिन्नहिंसा उपशमश्च स्वाभाविको धर्म्मः ॥ २२ ॥
एवं स्वभाग्यमभिनन्द्य पारीक्षितोपाख्यानं वक्तुमाह अहं हीति । अर्य्यमणः हे सूर्य्याः अर्य्यमूर्त्तयः अत्र यावानात्मावगमः मम ज्ञानं तावत् आचक्षे प्रवक्ष्यामि तथाहि यथा पक्षिणो नभः आत्मसमं स्वशक्त्यानुरूपमेवोत्पतन्ति न कृत्स्नं तथा विपश्चितोऽपि विष्णोर्गतिं लीलां समं स्वमत्यनुरूपमेव वदन्तीत्यर्थः ॥ २३ ॥ २४ ॥

### श्रीवीरराघवः ।

अन्यं प्रपितन्माहात्म्यदिशं दर्शयामीत्यभिप्रायेणाह अथापीति द्वाभ्याम् अथापि अपि च पुनरपि वेत्यर्थः यस्य भगवतः वामपादाङ्गुष्ठनखावसृष्टमर्वाक्प्रस्तुतं विरिञ्चेन ब्रह्मणोपहृतं समर्पितमर्हणाम्भोऽर्घ्यजलं गङ्गात्मकं कर्त्तृ सेशमिन्द्रादिलोकपालैः सहितं जगत् पुनातीत्येतात् सूचितेन माहिम्नालमित्यर्थः एवंविधमहागुणगणयुक्ताच्छ्रीनिवासात्तीर्थपदान्मुकुन्दादन्यः को वा लोके भगवत्पदार्थः भगवत्पदाभिधेयः ज्ञानशक्तिबलैश्वर्य तेजः प्रभृत्यसंख्येयकल्याणगुणपौष्कल्यवद्वाभिधायकेन भगच्छब्देन प्रवृत्तिनिमित्तानामाश्रयः पुरुषोत्तमादन्यः को वाभिधीयते न कोऽपीत्यर्थः एतेनयोऽनन्तशक्तिर्भगवानित्याकांक्षा शामिता ॥ २१ ॥
यत्रेति यत्र यस्मिन्भगवति मुकुन्देऽनुरागयुक्ताः सन्तो धीराः जितेन्द्रियाः सहसाऽकस्मादेव देहे आदिशब्दात्तदनुबन्धादिषु चोढं रूढं मूलं सङ्गमपोह्य तत्पारमहंस्यमन्त्यं तुरीयं परमहंसाश्रमं व्रजन्तिय यस्मिन्पारमहंस्याश्रमेऽहिंसा उपशमश्च स्वानुरूपो धर्मः दयादिरस्ति ॥ २२ ॥
एवंविधानन्त्यमाहात्म्यशालिनो भगवतो माहात्म्यं वर्णयितुमहं न वर्णयामीत्यभिप्रायेणाह अहमिति अर्य्यमणः हे ज्ञानाधिकाः अर्कगतौ गत्यर्था बुद्ध्यर्थाः अत्र भगवन्माहात्म्ये भवद्भिः पृष्टोऽहं यद्वाहे अर्य्यमणः सूर्याः अर्य्यमूर्त्तयः यावानात्मनो बुद्धेरवगमः प्रसरः यावान्महिमा मद्बुद्धिविषयो भवति तावन्तं महिमानमाचक्षे वर्णयामि तथाहि यथा पतत्रिणः पक्षिणो वाणा वा आत्मसमं स्वबलानुरूपमेव नभः प्रतिपतन्ति उद्गच्छन्ति तथा विपश्चितोऽपि समस्तबुद्धिबलानुरूपं विष्णुगतिं भगवन्माहिमानं पतन्ति विषयीकुर्वन्ति न हि पतत्रिणो नभसि उद्गच्छन्तो नभसोऽभावान्निवर्तन्ते स्वबलक्षयान्निवर्त्तन्ते एवं विपश्चितोऽपि तिक्षयादेव निवर्त्तन्ते न तु भगवन्महिम्नः क्षयादित्यर्थः तथा चोक्तमन्यत्रापि "इषुक्षयान्निवर्त्तन्ते नान्तरिक्षक्षितिक्षयात् मतिक्षयान्निवर्त्तन्ते न गोविन्दगुणक्षयात्" इति ॥ २३ ॥
अथ तत्पृष्टं भागवताख्यं पुराणं परीक्षिच्छुकसंवादरूपं शुश्रावयिषुस्तावत्संवादप्रवृत्तिं तदुपोद्घातरूपं परीक्षिच्छुकयोः सङ्गमं परीक्षितः प्रायोपवेशं च तन्मूलं विप्रशापं तन्निमित्तं चाह एकदेत्यादिना यावत्स्कन्धसमाप्ति तावच्छापनिमित्तमाह षड्भिः एकदेति कदाचित्परीक्षिद्धनुरुद्यम्य उद्धृत्य वने मृगयां चरन् पर्यटमानः श्रान्तः नितरां तृषितः तृषा संजाता क्षुदस्य संजातेति तथा तारकादित्वादितच् ॥ २४ ॥

### श्रीविजयध्वजः ।

अथ सर्वोत्तमत्वाद्द्वितीयत्वसमर्थनस्य बहुयुक्तिसंदृष्टत्वप्रकटनायैवमपि भवतीत्याह अथापीति यस्य पादनखावसृष्टं गलितं विरिञ्चेन ब्रह्मणाऽपहृतं समर्पितं महंणाम्भः अर्घ्यजलं श्रीपादावनेजनोदकमिति यावत् रुद्रेण सह वर्तमानं च जगच्चतुर्दश भुवनं पुनाति यस्मादयं तस्माल्लोकेषु वन्मुकुन्दान्मोक्षप्रदान्नारायणादन्यतमः अन्यः स्वार्थे तमप्प्रत्ययः को नाम भगवत्पदार्थः निरतिशयज्ञानादिगुणवत्तया भगवानिति नामवाच्योऽस्ति सर्वेषां तदधीनत्वान्न कोऽप्यस्तीत्यर्थः अनेन विरिञ्चिपूज्यत्वशिवशुद्धिकरतीर्थपदत्व भगवन्नामवाच्यत्वाद्द्वितीयत्वानि सर्वोत्तमत्वसूचकानीति ज्ञातव्यम् ॥ २१ ॥

श्रीविजयध्वजः ।

मुकुंदत्वंविवृणोतियत्रेति यत्रमुकुंदमनुरक्ताः स्निग्धाः धीराविषयवार्तायांनिवृत्तायांबुद्धौरताः संतोदेहादिषुदृढंप्ररूढंसंगंस्नेहलक्षणंसह साविमर्शज्ञानेनव्यपोह्यनिरस्यतत्परमहंसाश्रमप्राप्यंसत्यंसाधुगुणायुक्तंब्रह्ममुकुंदाख्यंव्रजंति यस्मिन्परमहंसाश्रमेअहिंसाविहितातिरिक्ताहिं सावर्जनमुपरमम् उरुद्रंपातिपिबतिहिनस्तीतित्विंडउपांविष्णुः सर्वाधिकस्तस्मिन्हरीरमारमणेरतिविषयनिवृत्तिर्वाधर्मोविहितइतिशेषः अनेन मुक्तिदानमपिसर्वोत्तमत्वद्योतकमितिसूचितंभवति ॥ २२ ॥

आख्याहीतिशौनकप्रश्नोत्तरंवक्ति अहंहीति अस्यहरेर्गुणानवक्तुंभवद्भिःपृष्टोऽहम् अत्रहरिगुणेषुयावानात्मावगमआत्मनोममअवगमः ज्ञानंतावत्आचक्षेव्याकरिष्ये गुणानामनंतत्वात्कस्यापिसर्वात्मनाज्ञातुंशक्तिर्नास्तीत्येतदर्थेहिशब्देनाह नकेवलमहमेवाशक्तः किंतुभवतानागतवर्तमानाब्रह्मादयः सर्वेऽप्येवमेवहरेर्गुणाविषयकतिसोत्तमयथाप्रमाणमतआहइति यथापतत्रिणः पक्षिणः नभः आत्मसमंस्वशक्त्यनुसारेणप तंति शक्त्यभावादेवोपरमंतिननभोऽवसानादनंतत्वादस्य तथाब्रह्मादयोविपश्चितोज्ञानिनोविष्णुगतिंविष्णुज्ञानंप्रतिसममात्मशक्त्यनुसारे णायतंते शक्त्यभावादुपरमंति नगोविंदगुणानांमितत्वादितिभावः ॥ २३ ॥

पारीक्षितमाख्यानंवक्ष्यंस्तस्यनिर्वेदनिमित्तंब्रह्मशापंवक्तुमुपक्रमते एकदेति धनुरुद्यम्यसज्जंकृत्वाग्रगृह्यमृगयामुद्दिश्यवनेविचरन् ॥२४॥

---

क्रमसंदर्भः ।

तस्य चानन्तगुणस्य महत् स्वाभिव्यक्तत्वं दर्शयति अथेति । सेशं पुनातीत्यत्रेशस्यापि पवित्रीकरणमखण्डतमोगुणाधिष्ठानत्वेऽपि तदावेशखण्डनं ज्ञेयम् ॥ २१ ॥

तस्मात् तमेव भजेदित्यभिप्रेत्याह यत्रेति । अन्त्यं पारमहंस्यं भागवतपरमहंसत्वम्—मुक्तानामपि सिद्धानां नारायणपरायणः । सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने इत्युक्तेः । यस्मिन् यदर्थम् अहिंसया मात्सर्यादिराहित्येन उपशमो भगवन्निष्ठाविधीयत इत्यर्थः ॥ २२ ॥

नन्वनन्तगुणस्य तस्य कथं गुणगणने प्रवृत्तोऽसि तत्राह अहं हीति ॥ २३ ॥

अथ श्रीभगवानेव स्वपार्श्वे नेतुं ब्रह्मशापद्वारा तं विरक्तं सम्पादितवान् । तत्र च श्रीमद्भागवतं प्रकाशितवानिति वक्तुं तच्चरितांतर माह एकदेत्यादिना ॥ २४ । २५ । २६ । २७ ॥

---

सुबोधिनी ।

तथाच महतीविचारपूर्वकंभजनंस्तवनार्थंवक्तव्यमितिचेत्तत्राह यद्यपिविभूतित्वात्लक्ष्म्याः नखीत्वादिकृतदोषःसंभवति युक्तिश्री काअथापितुष्यतुदुर्जनइतिन्यायेनप्रकारांतरेणमाहात्म्यसूचनंनिरूप्यतेत्रयोहिमहांतःब्रह्माविष्णुः रुद्रश्च तत्रब्रह्माचरणक्षालनकर्ताशैव श्चरणोदकधारकः अतः परकोमहान्भवेत्तदाह यत्पादनखावसृष्टमर्हणांभः चिरंविरिंच्येनब्रह्मणाउपहृतंसमर्पितमर्हणांभः पूजासा धनोदकंगंगेतियावत्सेशंमहादेवसहितंजगत्पुनाति नखावसृष्टमितिभिन्नंवानेनब्रह्मांडभेदेनयदिवाचरणजलमागतंनंदारूपंतदसंगृहीतंभवति अथवाभगवदपेक्षयातुलक्ष्म्याहीनत्वंज्ञापयति नखावसृष्टमितिनखोदकंख्यातिहीनं ईशस्यपावित्र्यमग्रेवक्ष्यते सेशंपुनातीतिपाठेभगवद्व्यति रिक्तं आब्रह्मतृणस्तंबपर्यंतंपुनातिनखोदककर्तृकगावनाद्यपेक्षयवात्येषांतदाभगवत्पदार्थः कोवासवेत् ननुकोऽपिमास्तुअक्षरात्परस्यैवभगव त्वात्तथाहलोकइतिवेदेतुसभगवान्भवत्येवलोक सिद्धोऽपिवक्तव्यः लोकस्तुब्रह्मांडमात्रदर्शी अतोब्रह्मांडनायकः सभगवानित्युक्तंभवति भगवच्छब्दोनिरतिशयब्रह्मवाचकः ॥ २१ ॥

एवंयुक्त्याप्रमाणेनचभगवत्त्वंस्थापयित्वानुभवेनापिभगवत्त्वमाह यथानखोदकं अन्यदीयंसर्वार्थं नाशकंतदेवभगवदीयं सर्वपुरुषार्थ साधकं तथान्यत्रानुरागः आत्मनाशकः भगवतितुअल्पोऽपिरागः सर्वपुरुषार्थसाधकस्तदाह यत्रभगवति अनुरक्तायेकेचनवासाधनां तरापेक्षा तदाह सहसेतिएकमत्रवाधकंयत्कामनावलादागतविषयभोगोवातत्परिहारार्थमाह धीराइतिआपाततःसुखकरत्वंतेषां अतोविवेक धैर्यंकर्तव्यम् अथवाधीराइतिविभजंतिननुरागएवअसहायः साधनमपेक्षितंफलसाध्यंचसाधयतीत्यर्थः रागोद्यन्तः करणधर्मःसत्त्वगर्व गुणातिभगवत्सम्बन्धंतुप्राप्यभगवतासंस्कृतः स्वर्वर्गंसर्वमेवनाशयति यतोयदेवबाधकं संसारहेतुभूतंतदेववर्गंनाशयित्वाभगवत्पदंप्राप यतीति उपलक्षणत्वाद्रागस्यनद्वेषादिभिर्व्यभिचारः देहादिषुरूढः संगःअहंताममतालक्षणः तादृशमूढंसंगंव्यपोह्य ऊढपदेनवेदनादि बोधितत्वंसूचितम् यथाविवाहितस्त्रीयोनपरित्यागः तद्वद्देहादिषुसङ्गेनत्यागइति आत्मानंसततंरक्षेत्शरीरमाद्यंखलुधर्मसाधनमिति पुरुष स्याखिलार्थदश्च एवंविधैर्वाक्यैर्जनितामपिबुद्धिंत्यजन्तीत्यर्थः सजहातिमतिंलोकेवेदेचपरिनिष्ठितामितिवाक्यात् ज्ञानेतुतावानेव पुरुषार्थः अत्रतुसःअवान्तरव्यापारइत्याह व्रजन्तीतियत्रानुरक्ताः तत्प्रजन्तीत्यर्थः मत्भक्तायांतिमामपीतिवाक्यात् नन्वस्यगौणफलत्वंभविष्यती त्याशंक्याह पारमहंस्यमिति आनन्दमात्रमक्षोवसानइतिवाक्यप्रतिपादितं अतःपरमन्यत् प्राप्तव्यंनास्तीत्यर्थः नन्वस्यधर्महेतुत्वाभा वात् अवेदप्रतिपाद्यत्वेनअप्रामाणिकस्यात् अतःपूर्वंनिरूपितः असत्मार्गःइत्याशंक्याह यस्मिन्नहिंसोपरमः स्वधर्मइतिपूर्वकांडेधर्मःप्रति पाद्यः उत्तरकांडेज्ञानसाध्याउपरतिः अविद्यायापततवयम् अनुरागस्यस्वाभाविकोधर्मः यथाजलस्यरस अतोभक्तिधर्मप्रतिपादक त्वात्सर्ववेदानांनभक्तौवेदविरोधःशंकनीयः अहिंसापदेनचमुख्योधर्मोनिरूपितः आलभतइतितद्धिहिंसार्थइत्यवोचाम अतः सहजत्वात्क प्रतिविधिशक्तिरेवकुण्ठिता नतुविरोधइतिभावः एतावताभगवन्माहात्म्यमनंतंनकस्यापि वक्तुंयोग्यमित्युक्तम् ॥ २२ ॥

## सुबोधिनी ।

तर्हि भवान्कथं वक्ष्यतीत्याशंक्याह अहंहीति अर्यमणः ! सूर्यसंकाशाः अर्जनीयाद्भिर्बोधोदिताः स्मारिताः भगवद्गुणाः स्वमाहात्म्येन प्रबोधिताः ते भवद्भ्यो वक्तव्याः अतो न ममापूर्वकृत्यं किंत्वनुवादकत्वमिति न ब्राह्मणोपदेशकृतोऽपि दोषः अतएवाहंहीति अहं पृष्टः भगवद्गुणवर्णने आज्ञप्तः भवद्भिरेव आचक्षे भवद्भिरित्युभयत्र सम्बध्यते परं स्वबुद्ध्यनुसारेण तदाह आत्मावगमोऽत्र यावानिति यद्यप्यर्थं बुध्वा वाक्यरचनमिति न्यायेन वाक्यानुक्रमः समायात्येव तथापि वेदे यावत् कथनं यावार्तितं तथा सत्यर्थाववोधनं स्यादिति ननु किमेतावता स्यात् भगवद्गुणानां सर्वेषामनिरूपणात् नभः पतन्तीति पतत्रिणः गरुडादयः नभः आकाशमात्मसममेवोत्पतंति न त्वाकाशविशालतानुरोधेन तथापि खेचरत्वं सिद्ध्यति तथापि मम भगवद्गुणवक्तृत्वं सत्स्यतामिति भावः ननु विषमो दृष्टान्तः क्रिया तु परिच्छिन्ना भवति ज्ञानं परिच्छिन्नविषयकमपि इत्याशंक्याह तथा समिति विपश्चितो ज्ञानिनोऽपि विष्णोर्व्यापकस्य गतिं चरित्रं स्वयोग्यतानुसारेणैवामनन्ति अन्यथा किंचिद्ज्ञत्वं न स्यात् भगवत्तुल्यता च स्यात् गतिमित्येकवचनं सर्वोऽपि गुणः आकाशतुल्य इति एकोऽपि गुणः न कैश्चित् सम्यक् गम्यत इत्युक्तम् ॥ २३ ॥

स्वभावप्रवृत्तेरनर्थहेतुत्वं बोधयन्नितिहासमाह एकदेति धनुर्विस्फारयन् वने मृगान् अनुगतः मृगसंगात् श्लोकोऽस्यापि संजातः आरण्याः पशवः कनीयांसः श्रुता इति श्रुतेः अतएव श्रान्तः देहवैकल्यं जातं क्षुधितः तृषितो जातः दोषत्रयमुत्पन्नमित्यर्थः अन्यथा महावीरस्य निरन्तरं युद्धकरणेऽप्यक्षीणबलस्य कथं श्रमादि स्यात् तस्मान्मृगानुगमनं न विधेयम् ॥ २४ ॥

## श्रीविश्वनाथचक्रवर्त्ती ।

अथ इत्यर्थान्तरे । यत्पादनखावसृष्टं निःसृतमपि विरिंचेनोपहृतं समर्पितमर्हणाम्भः अर्घ्योदकं ईशो महादेवस्तत्सहितं सर्वं जगत् पुनाति तस्मान्मुकुन्दव्यतिरिक्तः को नाम भगवत्पदस्यार्थः सर्वेश्वरः स एवेत्यर्थः । एवञ्च जगति सर्वोत्कृष्टा लक्ष्मी-ब्रह्म-शिवा एव तत्पदं सेवमानास्तस्य महोत्कर्षं सूचयन्तीति वाक्यार्थः ॥ २१ ॥

तथा दृश्यमाना मनीषिणोऽप्यत्रार्थे प्रमाणमित्याह यत्रेति । ऊढं धृतम् । अन्त्यं परमकाष्ठापन्नम् । यस्मिन् व्रजने ॥ २२ ॥

एवं स्वभाग्यमभिनन्द्य पारीक्षितोपाख्यानं वक्तुमाह अर्यमणः ! हे सूर्यास्तत्तुल्यास्त्रयीमूर्त्तयः अत्र यावानात्मावगमः मम ज्ञानं तावदाचक्षे प्रवक्ष्यामि । यथा पक्षिणः आत्मसमं स्वशक्त्यनुरूपमेव नभ उत्पतन्ति न तु कृत्स्नं तथा विपश्चितोऽपि विष्णोर्गतिं लीलां समं स्वमत्यनुरूपमेव ॥ २३ । २४ ॥

## सिद्धांतप्रदीपः ।

निःसमानातिशयत्वलेशांतरं दर्शयति अथेति यस्य भगवतः पादनखावसृष्टं निःसृतं विरिंच्येन ब्रह्मणोपहृतं समर्पितमर्हणाम्भोऽर्घ्यजलं सेशं सशिवं जगत्पुनाति अतो मुकुंदाद्भगवतोऽन्यत्र भगवच्छब्दार्थः को नामेत्यकोऽपीत्यर्थः ॥ २१ ॥

यत्र श्रीमुकुंदेऽनुरक्ताः संतो धीराः स्थिरस्वभावा देहादिषूढं धृतं संगं संघोर्थे सहसेति यादवः सहसा सद्य एवापोह्य यस्मिन्नहिंसया सहितं उपशमः स्वधर्मः स्वारस्यात् तेभ्यो यत्र तत् परमहंस्यं व्रजन्ति ॥ २२ ॥

शुकपरीक्षित्संवादद्वारा मुनिप्रश्नानुसारतो भागवतं वक्तुमाह अहंहीति हे अर्यमणः ! सूर्याः अज्ञानतिमिरघ्नाः भवद्भिः पृष्टोऽहं यावदात्मनोऽवगमो ज्ञानं तावदाचक्षे यथा पतत्रिणः आत्मसमं स्वबलानुरूपं नभः पतंति तथा विपश्चितो विवेकिनो विष्णोर्गतिलीलामात्मसमं वदंति एवमहमपि वर्णयामीत्यर्थः ॥ २३ ॥

शुकपरीक्षित्संवादं वक्तुं तन्निमित्तभूतवैराग्योदयकारणं विप्रशापं दर्शयति एकदेत्यादिना क्षुदस्य संजाता क्षुधितः तृषास्य संजाता तृषितः आश्रमं प्रविवेशेत्युत्तरेणान्वयः ॥ २४ ॥

## भाषाटीका ।

तथापि ब्रह्मा का समर्पित जिनके पाद नख से निःसृत जल महादेव सहित जगत् को पवित्र करता है उन मुकुन्द से दूसरा कौन भगवान् होसकता है ॥ २१ ॥

जिस मुकुन्द में अनुरक्त ज्ञानी जन देहादिकों में आसक्त मन को छोड़के जहां अहिंसा शांतरूप धर्म है उस परमपदको जाते हैं ॥ २२ ॥

हे सूर्य तुल्य मुनि हो आपके पूँछने से मेरी जहांतक बुद्धि है वहां तक कहौंगा जैसे आकाश में पक्षी बल के अनुसार जाते हैं तैसे विद्वान् विष्णुगति को कहते हैं ॥ २३ ॥

परीक्षितजी एक दिन धनुष लेकर वनमें मृग मारने गये थे मृगों के पीछे भ्रमित होकर क्षुधा तृषायुक्त भये अत्यन्त से ॥ २४ ॥

जलाशयमचक्षाणः प्रविवेश तमाश्रमम् ।
ददर्श मुनिमासीनं शान्तं मीलितलोचनम् ॥ २५ ॥
प्रतिरुद्धेन्द्रियप्राणमनोबुद्धिमुपारतम् ।
स्थानत्रयात् परं प्राप्तं ब्रह्मभूतमविक्रियम् ॥ २६ ॥
विप्रकीर्णजटाच्छन्नं रौरवेणाजिनेन च ।
विशुष्यत्तालुरुदकं तथाभूतमयाचत ॥ २७ ॥
अलब्धतृणभूम्यादिरसम्प्राप्तार्घसूनृतः ।
अवज्ञातमिवात्मानं मन्यमानश्चुकोप ह ॥ २८ ॥

श्रीधरस्वामी ।

अचक्षाणः अपश्यन् । तं प्रसिद्धमाश्रमम् । तस्मिन् मुनिं शमीकम् ॥ २५ ॥

प्रतिरुद्धाः प्रत्याहृताः इन्द्रियादयो येन अतएव उपारतं । स्थानत्रयात् जाग्रदादिलक्षणात् परं तुरीयं पदं प्राप्तम् । अतएव ब्रह्मभूतत्वात् अविक्रियम् ॥ २६ ॥

विप्रकीर्णाभिर्जटाभिराच्छन्नम् । रुरुः मृगविशेषः तस्य चर्मणा चाच्छन्नम् । विशेषेण शुष्यत् तालु यस्य सः । तथाभूतं मुनिम् ॥ २७ ॥

न लब्धं तृणं तृणासनं भूमिरुपवेशस्थानंच येन सः । न सम्प्राप्तोऽर्घः सूनृतं प्रियवचनं च येन सः ॥ २८ ॥

श्रीवीरराघवः ।

कचिदपि जलाकरमपश्यंस्तमाश्रमंप्रविवेश आंगिरसस्याश्रमंप्रविष्टवानित्यर्थः तत्र मुनिमांगिरसंददर्शकथंभूतमासीनमुपविष्टंशांतंप्रसन्नं मीलितेलोचनेयेनतम् ॥ २५ ॥

प्रतिरुद्धानिनिर्व्यापारितानींद्रियादीनियेनतमतएवोपारतं बाह्यव्यापारादुपरतंस्थानत्रयाज्जाग्रत्स्वप्नसुषुप्तिरूपावस्थात्रयात्परंस्वात्मानंप्राप्तमनुसंदधानंब्रह्मभूतं ब्रह्मविषयकध्यानेनयान्वितमविक्रियंब्रह्मयुक्तविकाररहितम् ॥ २६ ॥

विप्रकीर्णाभिर्विक्षिप्ताभिर्जटाभिश्छन्नमावृतंरौरवेणरुरोर्मृगस्य संबंधिनाचर्मणाच्छन्नम् एवंभूतंमुनिंविशुष्यंतीतालुवदनं च यस्य तथाभूतोराजोदकं जलमयाचत ॥ २७ ॥

नलब्धंतृणंभूमिरादिशब्दादन्यच्चोपवेशार्थं येन नसंप्राप्तमर्घ्यंसूनृतं च मधुरवाचश्चयेन तथाभूतोऽतएवावज्ञातमवहेलितमिवात्मानंमन्यमानोराजाचुकोप ॥ २८ ॥

श्रीविजयध्वजः ।

जलाशयंजलाधारंतटाकविशेष मचक्षाणोऽपश्यन्सपरीक्षित्आश्रममालस्यपरिहारकारणंस्थानविशेषंप्रविवेशेत्यन्वयः शांतमसंप्रज्ञातसमाधिस्थंकिंचिन्मीलितनेत्रम् ॥ २५ ॥

प्रतिरुद्धाः परमात्मन्येवसन्निधापिताः श्रोत्रादींद्रियाणिचप्राणाश्चमनश्चबुद्धिश्चयेनसतथोक्तः तं प्राणरोधः कुंभकेश्वासरोधः चेष्टानिवृत्तिर्वा अतएवशब्दादिविज्ञानेभ्यउपारतं तदेवस्पष्टयति स्थानेति जाग्रदादिस्थानत्रयात्परमतीतंतुरीयंब्रह्मप्राप्तम् अतएवब्रह्मणिभूतंप्रयत्नंतरेणस्वतएवमनसासाक्षाद्विवरूपंपरमात्मानमनुभवंतं अतएवाविक्रियं निश्चेष्टंनिवातस्थदीपोपमंविरुद्धक्रियारहितंवा ॥ २६ ॥

विप्रकीर्णाभिर्जटाभिः छन्नंसंवृतं रुरोः कृष्णमृगस्यविद्यमानेनाजिनेनचसंवृतमासीनंवा विशुष्यत्नीरसं तालुजिह्वामूलंगूढजिह्वायस्य सतथा सपरीक्षित्तथाभूतमेवंविधंमुनिमुदकमयाचतप्रार्थितवानित्यन्वयः ॥ २७ ॥

सराजाचुकोपेत्यन्वयः तस्मादतिरोषः अलब्धंतृणभूम्यादियेनसतथोक्तः आदिशब्देनमधुपर्कोगृह्यते स्वागतमित्यादिप्रियवचनंसूनृतं "तृणानिभूमिरुदकंवाक्चतुर्थीचसूनृते"तिस्मृतेः आत्मानंमुनिनाऽवज्ञातमिवमन्यमानः क्षुधादिनिमित्तोऽयंकोपइत्यस्मिन्नर्थेहशब्दः इतिहासद्योतकोवा ॥ २८ ॥

क्रमसंदर्भः ।

नलब्धेत्यादि । अत्र तस्येदृशभावो भगवदनुग्रहेण श्रीभगवदिच्छयैवेति ज्ञेयम् तस्यैव मे ऽघस्येत्यादि वक्ष्यमाणात् ॥ २८ । २९ । ३० । ३१ । ३२ । ३३ । ३४ । ३५ । ३६ । ३७ । ३८ । ३९ । ४० । ४१ । ४२ ॥

---

सुबोधिनी ।

भृशमिति सोढुमशक्यं दोषोत्पन्नस्य श्रमादेः दोषजनकत्वमेवनगुणाजनकत्वमितिवक्तुंतादृशस्यदोषजनकत्वमेवनगुणाजनकत्वमितिवक्तुं तादृशस्यदोषांतरमपिजातमित्याह जलाशयमितिअचक्षाणाः जलाशयनामपिदेवत्वात्प्रतीतोऽपितिरोहितइतिभावः प्रकर्षेणप्रवेशः अपृष्ट्वा अननुज्ञाप्य अन्तःस्थानपर्यन्तगमनं तमितिप्रसिद्धं यथाभूतदृष्टौशिमश्रस्थानं सतोदोषव्याप्तस्यसद्दर्शनेऽपिनसद्बुद्धिरुत्पन्नायथासाक्षिपा तव्याप्तः इविषापिम्रियतेतथाजातमित्याह ददर्शेतित्रिभिःसार्धैः तत्रद्वयेनमुनेःस्वरूपंप्रदर्शयति तस्यदोषाधिक्याय मुनिरितिश्रवणमनने ब्रह्मविषयकेसिद्धेतस्येतिज्ञापितम् आसीनमितिनिदिध्यासनपरत्वंयोगेआसनंतृतीयमंगमतः पूर्वद्वयमपि अर्थोतुक्तंभवतिशान्तमिति प्राणायामेनमनोनियमनमुक्तं मीलितलोचनमितिप्रत्याहारः ध्यानधारणेवक्तुंप्रत्याहारमेवदर्शयाति प्रतिरुद्धेति अथवामीलितलोचनमितिविषयाणामप्रतिवन्धकत्वं सूचितंप्रतिलोमतयारुद्धाः अन्तर्नीताःइन्द्रियप्राणमनोबुद्धयोयेन एवंवाह्यविषयभ्रान्तविषयं निवृत्यनंतरंस्वस्वरूपेविद्यमानेभगवति आसमन्ताद्वृतः तेनस्वरूपेणभगवत्स्वरूपइत्युक्तम् अनेनध्यानधारणे अपिसूचिते समाधिमाहस्थानत्रयात्परंसमाधिंप्राप्तस्यस्वरूपंभासतइत्यर्थः नकेवलंध्यानमात्रं किंतुफलमपिजातमित्याह ब्रह्मभूतमिति "ब्रह्मवेदब्रह्मैवभवती"तिश्रुतेः असंप्रज्ञातसमाधित्वंज्ञापनायाह अविक्रियमितिसर्वविकाररहितम् अनेनदेहायुद्धिविकारादिकमपिनिवर्त्तितं मनोव्यापारोऽपिनिराकृतः केवलंस्वरूपेणैवभगवतिसेवत इत्युक्तंभवति वहिश्चोपघातानिराकरणप्रकारं पूर्वमेवकृतवानित्याह विप्रकीर्णेतिविप्रकीर्णाभिर्जटाभिश्छन्नं रुरुर्वहुशृंगमृगः तस्यचर्मणाकृष्णाजिनेनचउपरिआच्छान्नम् एतावतावहिरन्तर्व्यवस्थायास्तुनप्रार्थनीयइत्युक्तं तादृशमपियाचितवानित्याह विशुष्यत्तालुरितिविशेषणशुष्यत्तालुयस्यशोकेनैवतालुशोषणं तथाभूतमितिपूर्वोक्तधर्मयुक्तं याचनमपिदोषएव ॥ २५ । २६ । २७ ॥

तेनदोषेणदोषान्तरमप्युत्पन्नमित्याह "तृणानिभूमिरुदकंवाक्चतुर्थीचसूनृता एतान्यपिसतांगेहेनोच्छिद्यंतेकदाचने"तिसत्कर्मे सतस्मिन्नदृष्टास्वस्यशिक्षकत्वंस्मृत्वाशिक्षार्थमपिकृतवान् नलब्धातृणांभूमिः आदिशब्देनोदकंतृणांभूमिःआदिर्यस्येतिजलस्यापेक्षितत्वात्तदेवमुक्तं राजनिमित्तविशेषधर्मः अर्घ्यादिनसम्प्राप्तः अर्घ्यादिनसूनृतांतायेन राजसुब्राह्मणैः पाद्यस्याकर्त्तव्यत्वात् अर्घ्यग्रहणांतरभावदोषेण हेत्वंतरंकल्पयति अवज्ञातमितिनिषेधाभावाचइत्वप्रयोगः यदिस्वयमेवजलादिकंगृह्णीयात् तदापिनदोषःस्यात् आपद्धर्मत्वात् परमभिमानेनतदपिनकृतवान्तदाह आत्मानंमन्यमानइतिदोषेणादृष्टेः प्रतिरुद्धत्वात् तत्स्वरूपमविचार्यैवकेवलंचुकोपइत्याश्चर्यंकोपः शिक्षार्थमपिभवतिमन्युस्तुद्विष्टएव ॥ २८ ॥

---

श्रीविश्वनाथचक्रवर्त्ती ।

अचक्षाणोऽपश्यन् ॥ २५ ॥

मुनिं शमीकम् । स्थानत्रयात् जाग्रत्स्वप्नसुषुप्तितः परं तुरीयं समाधिं प्राप्तम् अतएव ब्रह्मभूतम् ॥ २६ ॥

रुरुमृगविशेषस्तस्य चर्मणा च आच्छन्नम् ॥ २७ ॥

अलब्धेति । ममातिथ्यमनेन किमपि न कृतमिति चुकोप ॥ २८ ॥

---

सिद्धांतप्रदीपः ।

जलाशयम् अचक्षाणः क्वचिदपि अपश्यमानः तंप्रसिद्धमाश्रमंप्रविवेश तत्रचमुनिंशमीकंददर्श ॥ २५ ॥

प्रतिरुद्धाः विषयेभ्यः प्रत्याहृताः इंद्रियादयोयेनसतथातम् अतएवोपरतम् स्थानत्रयात् जाग्रदादेः परंतुरीयंस्थानंप्राप्तमतएवब्रह्मभूयंभूतंप्राप्तंयेनतमित्यर्थः विप्रकीर्णाभिः परितोलंबमानाभिर्जटाभिश्छन्नमजिनेनरुरुसंज्ञकमृगचर्मणाचाच्छन्नम् तथाभूतंमुनिंविशुष्यत्तालुर्यस्यसनृपः उदकमयाचत ॥ २७ ॥

नलब्धंतृणांतन्मयमासनंभूमिरुपवेशस्थानमादिनाजलादेर्ग्रहणम् नसंप्राप्तआगतेराज्ञियेयोऽर्घ्योसूनृतमियं वाक्यंचयेनसः ॥ २८ ॥

---

भाषाटीका ।

कहीं जल न मिलने से शमीक ऋषि के आश्रम में जाकर नेत्र बंद किये भये बैठे मुनि को देखा ॥ २५ ॥

वह ऋषि इंद्रिय प्राण मन को रोकेहुये निवृत्त तीन अवस्था से अतीत ब्रह्मभूत अविकारी होगये थे ॥ २६ ॥

अभूतपूर्व्वः सहसा क्षुत्तृड्भ्यामर्द्दितात्मनः ।
ब्राह्मणं प्रत्यभूद्ब्रह्मन्! मत्सरो मन्युरेव च ॥ २९ ॥
स तु ब्रह्मऋषेरंसे गतासुमुरगं रुषा ।
विनिर्गच्छन् धनुष्कोट्या निधाय पुरमागतः ॥ ३० ॥
एष किं निभृताशेषकरणो मीलितेक्षणः ।
मृषासमाधिराहो स्वित् किं नु स्यात् क्षत्रबन्धुभिः ॥ ३१ ॥
तस्य पुत्रोऽतितेजस्वी विहरन् बालकोऽर्भकैः ।
राज्ञाघं प्रापितं तातं श्रुत्वा तत्रेदमब्रवीत् ॥ ३२ ॥

भाषा टीका ।

जटा उनके फैले थे मृगचर्म ओढे थे ऐसे मुनि को देखकर जल बिना शुष्क तालुवाले राजा ने उनसे जल मांगा ॥ २७ ॥ तृणासनभूमि जल सत्कार वचनों के लाभ न होने से अपना अपमान समझकर राजा ने कोप किया ॥ २८ ॥

---

श्रीधरस्वामी ।

मत्सरः तदुत्कर्षासहनम् ॥ २९ ॥
गतासुं मृतम् । धनुष्कोट्या चापाग्रेण ॥ ३० ॥
सर्पनिधाने राज्ञोऽभिप्रायमाह एष किमिति । एष किं प्रत्याहृतसर्वेन्द्रियः सन् मीलितेक्षणः स्थितः । यद्वा क्षत्रबन्धुभिरागतैर्गतैर्वा किं नु स्यात् इत्यवज्ञया मृषासमाधिः सन्निति जिज्ञासयेत्यर्थः ॥ ३१ ॥
तस्य पुत्रः शृङ्गी नाम । अघं दुःखम् । तत्रार्भकमध्ये ॥ ३२ ॥

---

श्रीवीरराघवः ।

क्षुत्तृड्भ्यामर्दितःपीडितआत्माशरीरंयस्यतस्यराज्ञोऽतएवाभूतपूर्वःपूर्वंभूतोभूतपूर्वःकदाचिदपिपूर्वंनजातइत्यर्थः मत्सरोमन्युश्चहेब्रह्मन्! ब्राह्मणंमुनिंप्रत्यभूद्बभूव मन्युः क्रोधः अमर्षइतियावत्मत्सरोद्रोहोऽपचिकीर्षतियावत् ॥ २९ ॥
ततः सतुराजानिर्गच्छन्निर्गंतुमुद्युक्तो रुषाब्रह्मर्षेरंसेभुजः कोट्याधनुषोऽग्रभागेनागतप्राणंसर्पंनिधायपुरंययौ ॥ ३० ॥
किमर्थंनिहितवानित्यत्रराज्ञस्तात्पर्यमाविःकरोतिएषइति किमेषमुनिर्निभृतानिनियमितान्यशेषाणि करणानीन्द्रियाणियेनमीलितेक्षणे लोचनेयेनतथाभूतःयथार्थसमाधिनिष्ठः आहोस्वित्क्षत्रबन्धुभिरस्माकं किंप्रयोजनंवियतेइति बुद्ध्यामृषामिथ्याभूतः समाधिर्यस्यतथाभूतएव मास्तेइत्यभिप्रायेणनिधायगतइत्यर्थः ३१ ॥
ततस्तस्यमुनेः पुत्रः अतितेजस्वीब्राह्मतेजःसंपन्नः बालकोऽर्भकैः सहक्रीडंस्तातंपितरंराज्ञाऽघंप्रापितमपराधविषयीकृतं श्रुत्वातत्रैवेदं वक्ष्यमाणमब्रवीत् ॥ ३२ ॥

---

श्रीविजयध्वजः ।

तस्यपरीक्षितः ब्राह्मणंप्रतिमन्युरभूत्नकेवलंमन्युः किंतुमत्सरश्चाभूदित्यन्वयः मन्युरेवनप्रसादइत्येवशब्दार्थः मत्सरोनायंमद्वशइत्यप्रीतिश्च कीदृशः अभूतपूर्वः इतः पूर्वमनुत्पन्नः कीदृशस्य क्षुत्तृड्भ्यामर्दितात्मनः पीडितमानसस्य ॥ २९ ॥
शापनिमित्तमाह सइति सराजातस्यब्रह्मर्षेः स्कंधेगतासुंमृतंसर्पंधनुःकोट्यानिधायपुरमागमदित्यन्वयः ॥ ३० ॥
पुरमागच्छतस्तस्यालोचनप्रकारमाह एषइति एषमुनिः विषयेभ्यः प्रत्यङ्मुखतयानिभृताशेषकरणः परतत्त्वविषयीकृतसकलेन्द्रियः मीलितेक्षणः किंनोऽस्माकंक्षत्रबंधुभिः किंस्यादितिमुधासमाधिर्मीलितेक्षणः आहोस्विदिति मनसापितर्कयन्पुरमगादितिपूर्वेणान्वयः ॥ ३१ ॥
तस्यब्रह्मर्षेः पुत्रः शृंगीनामकः तत्रेदमब्रवीदित्यन्वयः इदमितिवक्ष्यमाणं किंकृत्वा राज्ञापरीक्षिताघमपराधंप्रापितंपितरंश्रुत्वाअशुचितांप्रापितमितिवा अतितेजस्वीत्यनेनशापदानसामर्थ्यमस्यास्तीतिदर्शितम् अर्भकैः बालैः सहविहरन्वयसाबालः नतुसामर्थ्येनेत्येतद्दर्शितंप्रत्ययेन ॥ ३२ ॥

---

## सुबोधिनी।

तदातस्यान्यत् दोषद्वयमुत्पन्नमित्याह अभूतपूर्वइति कदाप्येतादृशोदोषोनोत्पन्नः यस्तुब्राह्मणेमत्सरः सहसेतिविचारोत्पत्तिर्निवारिता देहधर्माएवंप्रवलाजाताइत्याह क्षुत्तृड्भ्यामितिआत्माअन्तःकरणं यस्यएवंब्राह्मणातिक्रमंश्रुत्वाशौनकस्यक्षोभोजातइतिब्रह्मर्षिरितिसम्बोधनं ब्राह्मएवमत्सरोमन्युश्चजातः परोत्कर्षासहनंमत्सरः एवंदशदोषाःसमुत्पन्नाः चकारेणसमुच्चिताः ॥ २९ ॥

उपसंहारायदोषाणांफलमाहसतुब्रह्मऋषेरिति तुशब्देनपूर्वज्ञाननिवारितं कार्यस्यजातत्वात्कलेः स्थानप्रदानाद्धिब्राह्मणातिक्रमेमतिः ब्रह्मभूतस्यऋषेरितिप्रमेयप्रमाणवलवत्त्वंसूचितं तन्नित्यंअंसइतिनीयमानः सर्पःशिरसःसाक्षात्ब्रह्मत्वात्अंसएवपतितः तस्यवाहस्तोऽग्रेनचलितःसर्पंहत्वामरणानंतरंगतासुंतम् उत्थायविनिर्गच्छन्धनुःकोट्याउत्थाप्यअंसेनिधायस्वपुरमागतः मृगयांगतःधनुषःस्वस्यचकार्यंकृत्वासमागतः तत्रैवनिकटेतिष्ठेश्चेत्सांत्वयेदपिवालकम् ॥ ३० ॥

ननु तथाकरणेराज्ञःकोऽभिप्रायस्तत्राहएषकिमितिनिभृतानिअशेषाणिकरणानियस्यतादृशोभूत्वाकिंमीलितेक्षणः आहोस्विदज्ञानार्थंमृषासमाधिज्ञापकोमीलितेक्षणइतिननुतथाज्ञापनेकिंप्रयोजनंतत्राहकिंनुस्यादितिनुइतिवितर्केनिश्चयेवाक्षत्रवंधुभिः किंस्यात्आगतैर्गतैर्वाक्षत्रवंधुत्वंज्ञानयोगात्यद्यपिमृषासमाधित्वेनकिंचिदनेनकर्तुंशक्यतेतथापिचित्तसमाधानार्थमेवंविचारउत्पन्नइत्यर्थः ॥ ३१ ॥

एवमविचारितकृतेः अनर्थपर्यवसायित्वमाहतस्येति पुन्नाम्नोनरकात्त्रायतइतिपुत्रः सचेदस्मान्नत्रायेतपुत्रत्[illegible]पगतःस्यात्अतितेजस्वी अनेनसामर्थ्यंद्योतितम् अविवेकहेतुमप्याह अर्भकैः सहवालकएवआश्रमप्रांतेविचरन्राज्ञाअपराधंपापंप्रापितंगुरु[illegible] परस्पराऽपिपापंभवति पापान्मरणमपिमरणंवाआश्रमस्यवधंनवा अपराधपक्षेराजकर्तृकोऽपराधःमुनिपर्यवसायीजातइति तातंतिर[illegible]भतेत्रेतिय[illegible]श्रुत्वातत्रैवेदमब्रवीत् ॥ ३२ ॥

---

## श्रीविश्वनाथचक्रवर्त्ती।

मत्सरस्तदुत्कर्षासहनम् ॥ २९ ॥

धनुष्कोट्या धनुरग्रेण निधायेति भो ब्रह्मन्! त्वयाहमतिथिर्यथा साधुसंमानितस्तथा त्वामप्यनया सुकुमारमालया सम्मानयामीति भावः ॥ ३० ॥

निर्गमनसमये राजा परामृशति एष इति। निभृताशेषकरणः प्रत्याहृतसर्व्वेन्द्रियः अतः सत्यसमाधिकः आहो स्विन्मृषासमाधिस्तत्र हेतुः किं न्विति। अत्र राज्ञो विकर्म्मेदमभाग्योत्थं न ज्ञेयं किन्तु तं शीघ्रं स्वपार्श्वं नेतुं ब्रह्मशापद्वारा विरक्तं विधाय शुकदेवेन सङ्गं कृत्वा तत्र श्रीभागवतरूपेण स्वयमाविर्भूय जगदुद्दिधीर्षुः कलौ जनिष्यमाणानपि कांश्चन सेवकान् स्वकृतां रासादिलीलामास्वादयितुंच भगवत एवेयमिच्छेति मनीषिण आहुः। तस्यैव मऽघस्येत्यादिवक्ष्यमाणात्। मच्छुद्धभक्तस्य दैवाद्विकर्म्मापि शुभोदर्कंमेवेति ज्ञापयितुं यदा यदा हि धर्म्मस्य ग्लानिर्भवति भारत। अभ्युत्थानमधर्म्मस्य तदात्मानं सृजाम्यहमिति श्रीभागवतरूपेण स्वाविर्भावे कारणाभासं चोत्थापयितुं भगवतैव तस्य तथा भाव उद्भावितः। न च तस्य स्वप्नेऽपि स स्वभावः अभूतपूर्व इत्युक्तेः। न च दैवादभाग्यविशेषोत्थोऽयं तात्कालिको भावस्तत्फलस्य शुकसमागममहाभाग्यस्यानुपपत्तेः। न च तस्य पिपासातिशय एव हेतुरिति वाच्यं तत्क्षणानन्तरमेव जलमपीतवत एवानुतापशतविदीर्य्यमाणस्य गृहागतस्य सद्य एव प्रायोपवेशात्। इत्यंत्र जन्मनि मरणे च ब्रह्मतेजसो मध्यवयसि कालस्य च निर्जयात् तस्य राज्ञो भगवत्कृपामहावलवत्त्वं साधारणमेव द्रष्टव्यम् ॥ ३१ ॥

तस्य पुत्रः शृङ्गी ॥ ३२ ॥

---

## सिद्धांतप्रदीपः।

अर्दितः पीडितआत्मादेहोयस्यतस्यपूर्वंमृतोभूतपूर्वस्तद्विपरीतोऽभूतपूर्वः मत्सरस्तदुत्कर्षासहनात्मकश्चित्तविकारः मन्युःक्रोधश्च सहसाऽभूत् सद्यएवबभूव ॥ २९ ॥

सतुमत्सरमन्युभ्यांयुक्तस्तुरुषाक्रोधेनमत्सरेणचब्रह्मऋषेः पूज्यस्यनिरपराधिनः गतासुंगतप्राणमुरगंधनुषोऽग्रेणनिधायपुरमागतः प्राप्तः अत्याश्चर्यरूपात्क्रोधादेरुत्पत्तिः प्रवृत्तिश्चेतिभावः ॥ ३० ॥

किमेषनिभृतानिप्रत्याहृतान्यशेषाणिकरणानियेनमीलितेईक्षणेयेनसतथाभूतःसन्सत्यसमाधिःआहोस्वित्क्षत्रवंधुभिः किंनुस्यात् इत्येवमस्मदुपेक्षयामृषासमाधिः इतिसर्पनिधानेतदाशयः ॥ ३१ ॥

पुत्रःशृंगीअर्भकैः सम प्रापिततातंपितरंश्रुत्वेदमब्रवीत् ॥ ३२ ॥

---

## भाषाटीका।

क्षुधा तृषा से पीड़ित होने से राजा को शीघ्रही ब्राह्मण मुनि पर अपूर्व मत्सर तथा क्रोध हुआ ॥ २९ ॥

वह राजा चलते समय उस ब्राह्मर्षि के कान्धे पर धनुष से मरा हुआ सर्प को डालकर ग्राम को चला गया ॥ ३० ॥

राजा का अभिप्राय था कि यह ऋषि सब इन्द्रियों को रोककर नेत्र मूंदकर क्षत्रियों से क्या होगा यह जानकर झूंठी समाधि लगाया है क्या ॥ ३१ ॥

अहो अधर्म्मः पालानां पीव्नां वलिभुजामिव ।
स्वामिन्यघं यद्दासानां द्वारपाणां शुनामिव ॥ ३३ ॥
ब्राह्मणैः क्षत्रबन्धुर्हि गृहपालो निरूपितः ।
स कथं तद्गृहे द्वाःस्थः सभाण्डं भोक्तुमर्हति ॥ ३४ ॥
कृष्णे गते भगवति शास्तर्युत्पथगामिनाम् ।
तद्भिन्नसेतूनद्याहं शास्मि पश्यत मे बलम् ॥ ३५ ॥
इत्युक्त्वा रोषताम्राक्षो वयस्यानृषिबालकः ।
कौशिक्याप उपस्पृश्य वाग्वज्रं विससर्ज ह ॥ ३६ ॥

भाषाटीका ।

उस ऋषि का [illegible] बड़ा तेजस्वी बालक बालकों के साथ खेलता हुआ राजा का किया पिता के अपराध को सुनकर वहीं यह वचन बोला ॥ ३२ ॥

श्रीधरस्वामी ।

पालानां राज्ञाम् । पीव्नां पुष्टानाम् । अधर्ममेव निर्दिशति स्वामिनि दासानां यदघं पापाचरणम् वलिभुजां काकानामिव शुनामिवेति ॥ ३३ ॥

दासत्वं दर्शयति ब्राह्मणैरिति । सभाण्डं भाण्ड एव स्थितम् ॥ ३४ ॥

तत् तदनन्तरम् । अहं शास्मि दण्डयामि ॥ ३५ ॥

इति वयस्यानुक्त्वा रोषेण ताम्रे अक्षिणी यस्य । कौशिकी नदी तस्या अपः । सन्निधरार्थः । वाग्वज्रं शापम् ॥ ३६ ॥

श्रीवीरराघवः ।

तदेवाहअहोइतिपंचाभिः वलिभुजांशुनांवायसानामिवपीव्नांवर्धितानांपालानांराज्ञामहोअधर्मः पश्यतांकोऽसावधर्मः द्वारपालानांशुनामिवदासभूतानांराज्ञांस्वामिनिब्राह्मणेऽघमपराधइतियद्देवएवाधर्मः ॥ ३३ ॥

तदेवोपपादयतिक्षत्रवंधुर्हिब्राह्मणैर्द्वारपालत्वेनश्ववनियोजितः सद्वाःस्थः क्षत्रवंधुस्तद्गृहेब्राह्मणगृहेश्वेवकथंसभांडमेकपात्रेयथातथाभोक्तुमर्हतियोग्योभवेत् ॥ ३४ ॥

उत्पथप्रतिपन्नानांशास्तरिदंडयितरिकृष्णेभगवतिस्वलोकंप्रतिगतेसतितान्भिन्नमर्यादानहमद्यशास्मिशिक्षयेममवलंपश्यत ॥ ३५ ॥

वयस्यान्समानवयस्कान्बालकान्प्रतीत्थमुक्त्वारोषेणताम्रेईक्षणेयस्यसऋषिबालकः कौशिक्यानद्याअपउपस्पृश्याचम्यवाग्वज्रंशापात्मकंवाग्रूपंवज्रंससर्जप्रायुंक्त ॥ ३६ ॥

श्रीविजयध्वजः ।

किमाहेतितत्राहअहोइति बलिभुजांकाकानामिवपृथ्व्याः पालानांराज्ञामधर्मोऽन्यायोऽस्माभिर्दृष्टःअहोकष्टंतत्कुतइतितत्राहस्वामिन्निति शुनांस्वामिन्यघमिवब्राह्मणादासानांतद्गृहद्वारपानांराज्ञांसंप्रतिस्वामिनिब्राह्मणे [illegible] मिति [illegible]तस्मादिति ॥ ३३ ॥

राज्ञांविप्रदासत्वंकथमितितत्राह ब्राह्मणैरिति ब्राह्मणैर्दासतयाद्वारपालोनिरूपितः सराजातस्यविप्रस्यगृहे द्वाः स्थोद्वारपालः कथंसभांडंभांडेनसहवर्तमानंगृहंभोक्तुंनाशयितुमर्हतिनार्हत्येवह्वियस्मात्तस्मात् असौस्वामिनादंड्यइत्यर्थः ॥ ३४ ॥

तर्हिसंप्रतिकोदंडकर्तातेषामितितत्राह कृष्णइति उत्पथगामिनांविहितमार्गंपरित्यज्यगच्छतांशास्तरिकृष्णेभगवतिगतेभिन्नसेतून्लंघितमर्यादांस्तानद्याहंशास्मिदंडयामीत्यन्वयः मेवलंसामर्थ्यंपश्यतहेबाला । इतिशेषः ॥ ३५ ॥

सचदंडः कीदृशइतितत्राह इतीतिरोषताम्राक्षः रक्तनेत्रः कौशिकीकुशपाणिः अपउपस्पृश्यआचम्यवाग्वज्रंशापलक्षणंविससर्जदत्तवान् राज्ञइतिशेषः इतिहासद्योतकेनहशब्देनकौशिकीनदीतस्याअपउपस्पृश्येत्यपव्याख्यानमपहस्तितमितिज्ञातव्यम् ॥ ३६ ॥

### सुबोधिनी ।

अग्रेदण्डनिरूपणार्थंदण्डयोग्यतामाहत्रिभिः अधर्मः स्वामिद्रोहोदण्डनिमित्तंराजनिष्ठं दण्डनसामर्थ्यायस्वनिष्ठं तत्रप्रथमंदोषमाह अहोइति आश्चर्येपालानामधर्मःधर्मपालका धर्मनिराकुर्वन्ति नतकुर्वन्तीत्याश्चर्यंआश्चर्यनिविष्टोध्यायन्नेदमाश्चर्यमितिज्ञातवान् अतोअधर्म हेतुंवदन् स्थानविशेषंप्राप्यतस्यहेतुत्वं ज्ञापयन्दृष्टान्तमाह पीव्नामितिवलवत्त्वमेक अधर्मकरणेहेतुः नीचाराज्यंनपुष्टा अधर्मकृतवन्त इत्यर्थः यथाश्वानोवलिनापुष्टाः वलिदातारमेवभक्षयन्तिगृहंचप्रविशन्तिब्राह्मणानांराज्यद्वयंस्वराज्यंवहीराज्यंच वहीराज्यंस्वभाग्येनम वतीतिस्वराज्यसाधकत्वेनविनियुक्ताः अतएवक्षत्रियाः स्थापिताः ब्रह्मणानिर्मिताभूः कश्यपेनचदत्ता तथापरशुरामेणरघुनाथेनचतथा पियत् ब्राह्मणैर्वहीराज्यंनकृतंतदंतस्ततत् करणार्थंतदवाह स्वामिन्यघसितिदासानांयत् स्वामिन्यधर्मपराधकरणंपापं तच्छुनामिवजाति दोषेणच अविवेकेनजातंद्वारपालनेयेविनियुक्ताःश्वानःद्वारपालनार्थंवातेतथा अज्ञानात् स्वामिनमेवभक्षयंति गृहंमाप्रविशत्वितिमातथा समाध्यर्थमेव राजाविनियुक्तः समाधिमाकरोतु अस्मत्पूजांकरोत्विति ॥ ३३ ॥

एतावताशुनस्तुल्यताराज्ञोनिरूपिता विषमदृष्टांतशंकामाह ब्राह्मणैरिति अनेनस्वामिद्रोहः समर्थ्यतेहीति चतुर्धानिरूपणं वोधितं शारीरादिवाह्यपदंद्वारंवस्तुतोऽङ्ग निरूपकाभूमवः अतोयैर्निरूपितं तेषामेवगृहेद्वाःस्थः सर्वदाद्वारपालकः सभांडभोजनं पाकंपाकस्थमन्नं भोक्तुमर्हति ब्राह्मणामाज्ञापयितुंनार्हति तेषामेवकृपयाराज्यकरणाल ब्राह्मणाहिगृहंब्रह्मांडं तत्र सर्वपुरुषार्था भोगस्थानानि ब्राह्मणानां तदुपघातक निराकरणातद्वारपालकोराजा राज्यं वलिस्थानं ब्राह्मणमपि कृषीवलवत् वलिमध्यपातनात् सभांडभोजनं समाधिस्थापरा-धात् गृहप्रवेशेनसभांडभोजनम् ॥ ३४ ॥

एवमपराधंसमर्थयित्वास्वस्य दंडनसामर्थ्यं वदन् प्रकारांतरं व्यावर्त्तयति कृष्णेमतेभगवतीति सदानंदनरूपेस्वानुभवार्थमेव ब्राह्म-णाभियुज्यस्वस्थानंगते भगवत्त्वात् स्वानंदानुभवस्य संपादनार्थं पूर्वंब्राह्मणैरेवदंडःकर्त्तव्यः कोटिद्वयस्यस्थापितत्वात् अतोद्वयमस्मा भिरेवकर्त्तव्यमित्याह भिन्नसेतूनितिभिन्नाः सेतवोमर्यादायैः अनेनस्वार्थपरित्यागउक्तः ननुकदापिसेतुबंधनं नश्रुतं तत्राह अद्य अद्यै वजातमद्यैवदंडनं कर्त्तव्यमित्यर्थः स्वसामर्थ्यं तथाविधमस्तीति वालकान्बोधयति पश्यतेति आविर्भूतब्रह्मतेजः स्वस्मिन्स्वयंपश्यन् स्वामित्रत्वात् तानपिप्रदर्शयति ॥ ३५ ॥

एवमध्यवसायंकृत्वायतकृतवान्तदाह इत्युक्त्वेति राजभावनयापालकत्वाभावाद्रोषः तेनताम्रअक्षिणीयस्य अनेनपुनर्विचारांतरंनकृत वानितिज्ञापितं कौशिकीनदीतस्याः अपउपस्पृश्य आचम्यस्वस्यब्रह्मभावमाविर्भाव्य वाग्रूपं वज्रंविससर्जवषट्फट्जहीत्यादि मंत्रात्मक त्वादधीच्यस्थिनिर्मितः सवज्रः अयंतुब्राह्मणानांमूलभूतोवाग्वज्रः ॥ ३६ ॥

---

### श्रीविश्वनाथचक्रवर्ती ।

पालानां राज्ञाम् । पीव्नां पुष्टानाम् । वलिभुजां काकानाम् ॥ ३३ ॥

गृहपालः श्वा गृहं प्रविश्य सभाण्डं भाण्डसहितं घृतादि वस्तु । तेन राज्ञां मुनीनामाश्रममध्ये सहसा प्रवेशो तत्र जलादिप्रार्थने च का योग्यतेति भावः ॥ ३४ ॥

तत् तदनन्तरमहं शास्मि दण्डयामि ॥ ३५ ॥

वयस्यानुक्त्वा । कौशिक्यापः इति सन्धिरार्षः ॥ ३६ ॥

---

### सिद्धांतप्रदीपः ।

तदेवाह अहोइत्यादिपंचभिः अहोवलिभुजांकाकानामिवपीव्नांद्वारपानांशुनामिवपुष्टानांपालानांरक्षायैनियुक्तानांदासानांभृत्यभूतानां स्वामिनियदघंपापाचरणम् तद्वेवभूतोऽधर्मः पश्यताम् ॥ ३३ ॥

द्वारपालशादृश्यंदर्शयति ब्राह्मणैरिति तद्गृहेयैर्निरूपितस्तेषांगृहेसः क्षत्रियः द्वाःस्थः सन्सभांडंभोक्तुं कथमर्हतियोग्योभवेत् ॥ ३४ ॥

तत्तस्मादुत्पथशास्तुरिहाविद्यमानत्वात् अहमेवशास्मि शिक्षये ॥ ३५ ॥

कौशिक्यानद्याः अपः संधिरार्षः उपस्पृश्यआचम्यवाग्वज्रंशापंविससर्जप्रायुंक्त ॥ ३६ ॥

---

### भाषाटीका ।

अहो आश्चर्य है कि पालक राजाओं का पुष्ट बलि पानेवाले कुत्ता की नाईं द्वारपाल राजा लोग दास होकर स्वामी का द्रोह करते हैं ३३

ब्राह्मणों ने राजा को द्वारपाल बनाया है वह कैसे घरमें पैठकर पात्र सहित घरमें भक्षण कर सकेगा ॥ ३४ ॥

उत्पथगामियों के शासन करनेवाले कृष्ण भगवान के चले जाने से मर्यादा छोड़नेवाले कूँ मैं शासन करता हूँ मेरा बल देखो तुम ३५

क्रोध से लाल नेत्र होकर सखा बालकों से ऐसा कहकर कौशिकी नदी के जल का आचमन करके शापरूप वाग्वज्र को विसर्जन किया ॥ ३६ ॥

---

इति लङ्घितमर्य्यादं तक्षकः सप्तमेऽहनि ।
दङ्क्ष्यति स्म कुलाङ्गारं चोदितो मे ततद्रुहम् ॥ ३७ ॥
ततोऽभ्येत्याश्रमं बालो गलेसर्पकलेवरम् ।
पितरं वीक्ष्य दुःखार्तो मुक्तकण्ठो रुरोद ह ॥ ३८ ॥
स वा आङ्गिरसो ब्रह्मन् ! श्रुत्वा सुतविलापनम् ।
उन्मील्य शनकैर्नेत्रे दृष्ट्वा चांसे मृतोरगम् ॥ ३९ ॥
विसृज्य तं च पप्रच्छ वत्स ! कस्माद्धि रोदिषि ।
केन वा तेऽप्यपकृतमित्युक्तः स न्यवेदयत् ॥ ४० ॥

श्रीधरस्वामी ।

इति एवं सर्पनिक्षेपेण । दङ्क्ष्यति भक्षयिष्यति । धक्ष्यतीति पाठे भस्मीकरिष्यति । स्मेति पादपूरणे । कुलस्याङ्गारतुल्यम् । मे मया ततद्रुहमिति वक्तव्ये ततेति ह्रस्वत्वमार्षम् ॥ ३७ ॥

गले सर्पकलेवरं यस्य इत्यलुक्समासः । मुक्तकण्ठ उच्चैरित्यर्थः ॥ ३८ ॥

आङ्गिरसो अङ्गिरोगोत्रोद्भवः ॥ ३९ ॥

तं सर्पं विसृज्य । केनापकारः कृतः ॥ ४० ॥

---

श्रीवीरराघवः ।

वाग्वज्रमेवदर्शयतिइतीत्थंउल्लंघितामर्यादायेनतंमेततततद्रुहंततस्तातःपितातस्यापकारिणंकुलनाशकंराजानमितः सप्तमेऽहनिमयाचोदितः प्रेरितस्तक्षकः सर्पोदंक्ष्यतीति ॥ ३७ ॥

ततोबालःपितुराश्रममागत्यगलेकंठेसर्पोयस्यतत्कलेवरंयस्यतंपितरमालोक्यदुःखपीडितोमुक्तः कंठोयेनसः उच्चैः स्वरयुक्तइत्यर्थः रुरोदरोदनंकृतवान् ॥ ३८ ॥

ततोहेब्रह्मन्सवैआंगिरसः सुतस्यविलापंश्रुत्वाशनैर्नेत्रेउन्मील्यांसेमृतमुरगंदृष्ट्वा ॥ ३९ ॥

तंपरिहृत्यपुत्रंपप्रच्छप्रश्नमेवाहहेवत्स । कस्माद्धेतोस्त्वमितिशेषः विरोदिषिरोदनंकरोषिकेनवातेतवापकृतंभावेक्तः इतीत्थमुक्तोबालकः सर्ववृत्तंन्यवेदयत्कथयामास ॥ ४० ॥

---

श्रीविजयध्वजः ।

इतोऽद्यतनादह्नः सप्तमेऽहनिमेमयाचोदितः प्रेरितस्तक्षकः सर्पविशेषः लंघितमर्यादंकुलांगारंकुलनाशकं ममपितृद्रुहंपरीक्षितंनामराजानंधक्ष्यतिस्मदग्धंकुर्यादित्येकान्वयः धक्ष्यतीतिलट्स्मशब्दसामर्थ्याल्लोडर्थेबोद्धव्यः भागवतप्रधानराजदहनेऽपिसामर्थ्यंद्योतनायवायंव्यत्ययः ॥ ३७ ॥

आश्रमंगतः ततः गलेसर्पकलेवरंकंठस्थितसर्पशरीरंपितरंदृष्ट्वामुक्तकंठः उच्चैरुरोदेत्यन्वयः समाधिस्थितोवाचातोबोधनीयइत्यतोरोदनमुच्चैः कृतमित्यर्थद्योतकोहशब्दः ॥ ३८ ॥

वैअपिआंगिरसकुलोत्पन्नः सः शमीकोऽपिसुतस्यविलापितंरोदनम् ॥ ३९ ॥

उरगंविसृज्य परिहृत्यकस्माद्धेतोः विरोदिषीतिपुत्रंपप्रच्छेत्यन्वयः विप्रकृतंविपरीतंकृतम् ॥ ४० ॥

---

सुबोधिनी ।

तस्यवाग्वज्रस्य अर्थमाहइतीति एवंप्रकारेण त्यक्तमर्यादंतक्षकः सप्तमेदिनेजक्षतिस्मकुलांगारंनोदितोमेपितृद्रुहं धक्ष्यति भस्मसात्कारिष्यतिस्मेति प्रसिद्धसर्वप्रसिद्ध्यालं भक्षयिष्यतीत्यर्थः अनेनतस्यप्रतीकारोनभविष्यतीति सूचितं "सप्तवैशीर्षण्याः प्राणा" इतिश्रुतेः शिरसोरक्षितत्वात् प्राणाघातकत्वेऽपितावत् कालंजीवनमुक्तं यदिशिरसिस्थाप्येत तदैवम्रियेत ननुपांडवकुलोत्पन्नं कथं धक्ष्यतितक्षकः तत्राह कुलांगारमिति यद्विदुरादीनदग्धः एतादृशापराधांतरकरणे कुलमेवनाशयिष्यति यावद्भवत् अतः पांडवानामुपकारार्थमेवं धक्ष्यतीत्यर्थः ननुप्रार्थितोनधक्ष्यतीत्याशंक्याह चोदितोमइति यत्प्रेरितोनान्यथाकरिष्यतीत्यर्थः अन्यथात्वमपिधक्ष्यामीतिभावः एवमाज्ञापनेहेतुः पितृद्रुहमिति अस्मत्पित्रेद्रुह्यतीति ॥ ३७ ॥

निशम्य शप्तमतदर्हं नरेन्द्रं स ब्राह्मणो नात्मजमभ्यनन्दत् ।
अहो बतांहो महदद्य ! ते कृतमल्पीयसि द्रोह उरुर्दमो धृतः ॥ ४१ ॥
न वै नृभिर्नरदेवं पराख्यं संमातुमर्हस्यविपक्वबुद्धे ! ।
यत्तेजसा दुर्विषहेण गुप्ता विन्दन्ति भद्राण्यकुतोभयाः प्रजाः ॥ ४२ ॥
अलक्ष्यमाणे नरदेवनाम्नि रथाङ्गपाणावयमङ्ग ! लोकः ।
तदा हि चौरप्रचुरो विनंक्ष्यत्यरक्ष्यमाणोऽविवरूथवत् क्षणात् ॥ ४३ ॥
तदद्य नः पापमुपैत्यनन्वयं यन्नष्टनाथस्य वसोर्विलुम्पकात् ।
परस्परं घ्नन्ति शपन्ति वृञ्जते पशून् स्त्रियोऽर्थान् पुरुदस्यवो जनाः ॥ ४४ ॥

सुबोधिनी ।

एवंशप्त्वातस्मिन्तेजसिशांतेमानुषभावेन्गृहमागत्यरोदनंकृतवानित्याहततइति गलेइत्यलुकसमासः बालत्वात्मृतोजीवतिवेतिनज्ञातवान्तादृशंपितरंवीक्ष्यदुःखेनार्त्तः मुक्तकंठः प्लावितेनस्वरेण पितातुसर्पकंठः स्वयंमुक्तकंठइति निश्चयोजातः ॥ ३८ ॥

किंवृत्तंतदाह सवाइति आंगिरसः तद्गोत्रेउत्पन्नः सहि कुलीनत्वंच सूचितं ब्रह्मामिति शंकांतरंवारितंनहिब्रह्मभूताअन्यथाकुर्वंति आतिस्वराघातेनसमाधिर्नश्यति स्वप्नवततदाशनकैर्नेत्रेउन्मील्यउद्घाट्य अंसेचसर्पंदृष्ट्वास्वभावात्तुप्रथमतोविसृज्यपुत्रत्वाद्वान्यथावचनंसंभवति ३९

प्रश्नमेवाहवत्सेति कृतमित्यंतेनवाक्यद्वयं कस्माद्रोदिषिकेनवातेअपकृतमिति विशेषकथनेप्रयोजनाभावात् संक्षेपेणाहसर्वमिति ४०

श्रीविश्वनाथचक्रवर्त्ती ।

इति यतो मत्पितुर्देहे मृतसर्पो निक्षिप्तस्तस्माज्जीवन्नेव सर्पश्रेष्ठस्तक्षकस्तं दक्ष्यति भक्षयिष्यति । धक्ष्यतीति पाठे भस्मीकरिष्यति । मे मया प्रेरितः । ततद्रुहं तातद्रुहम् ॥ ३७ ॥

गले इत्युलुक् समासः ॥ ३८ । ३९ । ४० ॥

सिद्धांतप्रदीपः ।

इतीत्थंसर्पनिक्षेपेणालंघितासमर्यादायेनततद्रुहं ततस्तातस्तदपकारिणमितः सप्तमेऽहनिमेमयाचोदितः प्रेरितस्तक्षकः धक्ष्यतिस्म ॥ ३७ ॥
गलेसर्पोयस्यतद्गलेसर्पंतत्कलेवरंयस्यसगलेसर्पकलेवरइत्यलुक्समासस्तंवीक्ष्यमुक्तः कंठोयेनसरुरोद ॥ ३८ ॥
सशमीकः आंगिरसः विलापंश्रुत्वानेत्रेउन्मील्यस्वांसे मृतोरगंदृष्ट्वाविसृज्यपुत्रंपप्रच्छेत्युत्तरेणान्वयः ॥ ३९ ॥
सचमृतोरगंपरिहृत्यपुत्रंपप्रच्छहेवत्स ! तेकेनविप्रकृतमपकृतंभावेक्तः ॥ ४० ॥

भाषाटीका ।

इस प्रकार से मर्यादा उल्लंघन करनेवाले कुलांगार राजा हमारे पिता के द्रोही को हमारा प्रेरित तक्षक आज से सप्तम दिन में दंशन करेगा ॥ ३७ ॥

तदनन्तर बालक आश्रम में आकर पिता के गले में सर्प को देखकर दुःखित होकर कंठ खोलकर रोने लगा ॥ ३८ ॥

हे ब्रह्मन् ! शौनक वह आंगिरस सुत के बिलाप को सुनकर धीरे से नेत्र खोल गले में मरा सर्प देख उसको फेंककर पूँछने लगा हे वत्स ! क्यों रोता है किसने तेरा अपकार किया है ऐसे कहनेपर उस बालक ने निवेदन किया ॥ ३९ । ४० ॥

श्रीधरस्वामी ।

अनभिनन्दनवाक्यम् अहो इति । बत कष्टम् । ते त्वया महत् पापं कृतम् । अल्पीयसि द्रोहे अपराधे । दमो दण्डः ॥ ४१ ॥
परो विष्णुरित्याख्या ख्यातिर्यस्य तं नरदेवम् । नृभिः समातुं समं द्रष्टुम् ॥ ४२ ॥
अलक्ष्यमाणे अदृश्यमाने । अविवरूथवत् मेषसंघवत् ॥ ४३ ॥

## श्रीधरस्वामी ।

नष्टो नाथो यस्य लोकस्य तस्य वसोर्वसुनो धनस्य विलुम्पकादपहर्तुश्चौरादेर्हेतोर्यत् पापं भविष्यति तदस्मन्निमित्तत्वात् अस्मानुपैष्यति । अनन्वयं सम्बन्धशून्यमेव । तदेव पापं दर्शयति परस्परमिति । शपन्ति परुषं वदन्ति । पश्वादीन् वृंजते अपहरन्ति पुरुदस्यवश्चौरबहुलाः ॥ ४४ ॥

---

## श्रीवीरराघवः ।

ततोऽतदर्हं शापानर्हं राज्ञानं शप्तमाकर्ण्य ब्राह्मणः आंगिरसः पुत्रं नाभ्यनंदत् तदेव दर्शयति अहो इति सार्द्धैः सप्तभिः हे अज्ञ ! त्वया महदंहः पापमहो कृतं त्वतर्कितदल्पीयसि द्रोहेऽल्पापराधनिमित्ते उरुर्दमो दंडो धृतः कृत इत्येतत् ॥ ४१ ॥

अपकृतेनापि राज्ञा नापकार्यं इत्याह नवा इति हे अविपक्वबुद्धे ! नृभिरपकृतैर्नरदेवो नापकार्यः अतस्त्वं नरदेवं पराख्यं परमपुरुषमिति सामर्थ्यलब्धोऽर्थः नरदेवं नाम्निरथांगपाणाविति वक्ष्यमाणानुरोधात् नरदेव इत्याख्यामात्रमेव सतु साक्षादीश्वर एवेति भावः तं समातुमर्वाहः नत्वपकर्तुं तत्र हेतुमाह यद्यस्माद्य [illegible] पकारात्तस्य दुर्विषहेण शत्रुभिरसोढव्येन तेजसा गुप्ताः प्रजाः कुतश्चिदपि भयरहिताः भद्राणि मंगलानि सुखानीति यावत् विंदंति [illegible] तस्मात् [illegible] सुखापहो न नरदेवो न हंतव्य इति भावः ॥ ४२ ॥

विपर्यये नर्थमाह अलक्ष्यमाण इति त्रिभिः नरदेवाख्ये चक्रपाणौ विष्णावलक्ष्यमाणे विद्यमाने सत्यं गहे पुत्र ! तदा ह्ययं लोकः अरक्ष्यमाणः तथा चौरभूयिष्ठः सन् वृकप्रचुराविसंघवत् क्षणमात्रेण नंक्ष्यति नष्टो भविष्यति ॥ ४३ ॥

नष्यत्तु का हानिरित्यत्राह तदिति तत् पापमनुक्षयम् अस्मत्संताननाशकमद्याधुनानोऽस्मानुपैति किं तत्पापं यद्विलुंपकाद्धेतोर्वसोर्द्धनस्य नष्टनाथस्य रक्षकरहितस्य सतः पुरुदस्यवः [illegible] तेजनाः परस्परं घ्नंति शपंति वाक्पारुष्यं कुर्वंति वृंजते छिंदंति अर्थान् वृंजते हरंतीत्येतत् ॥ ४४ ॥

---

## श्रीविजयध्वजः ।

अतदर्हं तस्य शापस्यायोग्यं [illegible] इतीत्यतदर्हस्तं । नकेवलं नाभ्यनंदत् निंदच्चेत्याह अहो इति । अंहः पापं घत खेदे अल्पीयसि अणुतरे द्रोहे अपराधलक्षणे उरुश्रमो महादंडः ॥ ४१ ॥

कुत अनिंददिति तत्राह नवा इति नराणां देवो राजा तदधीनैर्नृभिः नापराध्य इति दुर्विषहेणायस्य राज्ञस्तेजसा गुप्ताः रक्षिताः न कुतोऽपि भयं यासां ताः अकुतोभयाः प्रजाः भद्राणि विंदंति लभंत इतिवैयतः बहुश्रेयो विवक्षया भद्राणीति बहुवचनम् ॥ ४२ ॥

बाधकं चाह अरक्ष्यमाण इति नरदेवांतर्यामित्वान्नरदेवनाम्नि रथांगपाणौ विष्णौ अरक्ष्यमाणे पालनमकुर्वाणे सति तदानीमेवायमरक्ष्यमाणोऽपाल्यमानः चोरप्रचुरः लोको जनोऽविवरूथवत् रक्षारहितसेनावत् क्षणाद्विनंक्ष्यति हीत्येकान्वयः "सेनारक्षा वरूथः स्याद्वरोधो निवेशनामि"त्यभिधानम् ॥ ४३ ॥

नष्टनायकस्य पालकरहितस्य पशोराष्ट्रस्य चोरादयो विलुंपकाः नाशकाः इति यद्यस्मात्तस्माद्यन्नोऽस्माकमनन्वयमनुपमम् अन्वयविरोधि संततिनाशकं वा पापमुपैतीत्यन्वयः उक्तमेवाविवृणोति परस्परमिति वृंजते अपहरंति छिंदंतीति वा वसु हिंसायामिति धातोः नगरनाशकाः पुरगताविति धातोः इतस्ततो यात्रा विघ्नकरा वा पशून् घ्नंति स्त्रियः शपंति उपालभं [illegible] अर्थान् वृंजत इति विवेकः ॥ ४४ ॥

---

## क्रमसंदर्भः ।

अलक्ष्येति । तदा हि तदैवेत्यर्थः ॥ ४३ । ४४ । ४५ ॥

---

## सुबोधिनी ।

तदा शमीकः शृंगिवचनं श्रुत्वा विचार्य नासाधु कृतवानित्याह निशम्येति अयुक्तत्वे हेतुः नरेन्द्रमिति नन्वपराधिषु दण्ड एव कुतो नाभ्यनन्दत तत्राह सब्राह्मण इति ब्राह्मणाः क्षमयार्हतां गताः क्षमाभावे ब्राह्मणत्वं गच्छतीति भावः नतु यथा राजा उपेक्षणीयः आत्मजत्वात् अप्रतिषिद्धमनुमतं भवतीति न्यायेन राज्ञः परलोकोऽपि गच्छेत् पितुरनुमत्या तक्षककृतमिति शब्दार्थमात्रेणासत्यता न पर्यवसानतस्तथा फलमपि पुत्रस्यापि मन्युं त्याजयति युक्तिभिः अन्यथा तस्य कुमरणमेव स्यात् अतो यथा स्यानुतापो भवति तथा वचनान्याह अहो इति राज्ञः शापः पुरुषार्थपंचकेनापि हानिर्भविष्यतीति भयप्रदर्शनेन अनुतापवचनं प्रथमतः अधर्मः कृत इत्याह अहो आश्चर्ये एवेति खेदे कृतं महदंहः त्वया कृतं महत्पापरूपं परमज्ञानात् अन्यथा प्रायश्चित्तमपि न स्यात् तदेवाह अल्पीयसि द्रोहे अपराधे महान् दण्डः कृतः पर्यवसाने विचार्यमाणे अस्मासु स्वल्पोऽपराधः आश्रमस्थ एव सर्पो हतः सर्पस्पर्शः स्नानहेतुः कारितः भयं च जनितं तव तस्य तु धाराप्रवहता नहि सर्पेण राज्ञस्तुल्यता भवति नहि दर्पेण विषयव्याप्तस्तुल्यता न ह्यापाततो भयेन निकटोपस्थित प्राणहारि महाभयस्य तस्माद्यथापराधदण्डाभावात् अधर्मः ॥ ४१ ॥

## सुबोधिनी ।

नन्वस्माभिस्तुल्यमेवकृतंमारणेमारणंसर्पस्पर्शः भयेभयमितितत्राह नवैनृभिरिति हेअविपक्वबुद्धे ! नहिपदार्थानांतुल्यतावस्तंतमनुष्यै रेवराजातुल्योनभवति किंपुनःक्षुद्रजीवैःननुब्रह्मविदांनेदंवचनंयुक्तं "शुनिचैवश्वपाकेचपंडिताः समदर्शिनः" इतिवाक्यात्तत्राह पराख्यमिति इदंत्वक्षरविचारेणजीवेषुब्रह्मतुल्यमित्युक्तं ननुभगवतासहजीवानांतुल्यताभगवतोगुणावतारत्वाद्राज्ञः "स्थानेयंधर्ममसमन्वमरावनीशा"

इतिवाक्यात् "नाविष्णुःपृथिवीपति"रितिच ननुतत् भाक्तंसंमानतार्थमुक्तमिति चेत्तत्राहयत्तेजसेतिजीवानांसर्वत्रसमत्वेनराजानियततेजः यावाआज्ञाशक्तिः स्वरूपमात्रेणैवसर्वेषांभयनिवर्त्तनम् एते नजीवधर्माः अतोनोपचारइत्यर्थः ॥ ४२ ॥

एवमधर्मकरणेनधर्मविरोधमाह अलक्ष्यमाणइति एकस्मिन्नपिदिवसेराजनिअलक्ष्यमाणेअपश्यतिसतिनरदेवइतिनाममात्रेवस्तुतस्तु सचक्रपाणिःतदाह अङ्गपदार्थज्ञानंभवत्विितिभाग्रहपरित्यागेनश्रवणार्थेकोमलसंबोधनं तस्यस्वरूपमात्रादर्शनेअयंलोकश्चौरप्रचुरोभवति प्रायेणसर्वेचौराएवभवन्ति विनश्यन्तिच वुद्धिभ्रंशश्चभवतीत्याह जनोमेषसमूहवत् पालकाभावेसर्वेतागतानश्यंतीत्यर्थः अतःसर्वेषामर्यादा नाशात् अर्थविरोधः ॥ ४३ ॥

ननुतेषामर्थविरोधेकानोहानिस्तत्राह तदद्येति तस्माद्धेतोरद्यपापमनन्वयमुपैतिअस्मान्प्रतिनिष्कारणमेवअस्माभिरकृतमेवपापमुपैति ननुकथमकारणमुपैति अन्यथासर्वदैवस्यात् तत्राह यन्नष्टनाथस्येति यस्मादस्मान्निमित्तनष्टोनाथोयस्यलोकस्यतस्यवसुनस्तस्यविलुंपकात् चोरनिमित्तात् यद्यपिसाक्षादस्माभिर्नकृतं तथापि अस्मत्कृतेनकार्येणतथाजातमिति पापसम्बन्धः नकेवलमर्थनाश एव किंतुकामनाशो ऽपीत्याहपरस्परमिति अन्योऽन्यमेवघ्नंतिमारयन्तिशपंतिगालीः प्रयच्छन्तिस्त्रियादिपदार्थानवृंजतेअपहरंतिप्राणिनःसर्वस्वंत्रयंपशवःस्त्रियः अर्थाश्चभूम्यादीनामेततसाधकत्वम्एतदभावेसर्वमेवकामनोपभोग्यनश्यतीत्याहतदार्यधर्म इति आर्याणांसतांधर्मःसदाचाररूपःसामान्य रूपएववर्णाश्रमसहितःविशेषरूपः सएवपुनर्वेदत्रयप्रतिपाद्योयज्ञरूपः एतावताधर्मोनष्टइत्युक्तम् ॥ ४४ ॥

---

## श्रीविश्वनाथचक्रवर्त्ती ।

अतदर्हे शापायोग्यम् । अनभिनन्दनवाक्यमाह अहो इति । दमो दण्डः ॥ ४१ ॥

परो विष्णुरित्याख्या ख्यातिर्यस्य तं नृभिः संमातुं समं द्रष्टुम् ॥ ४२ ॥

अलक्ष्यमाणे अदृश्यमाने । अविवरूथवत् मेषसङ्घवत् ॥ ४३ ॥

नष्टो नाथो यस्य तस्य लोकस्य वसोर्वसुनो धनस्य विलुम्पकादपहर्तुश्चौराद्धेतोर्यत् पापं भविष्यति तदस्मान्निमित्तत्वादस्मानुपैष्यति । अनन्वयं सम्बन्धशून्यमेव । तदेव पापं दर्शयति परस्परमिति । विशेषमाह वृंजते अपहरन्ति ॥ ४४ ॥

---

## सिद्धांतप्रदीपः ।

तदनर्हेशापायोग्येनरदेवेशापंतेनिशम्याकर्ण्यात्मजंनाभ्यनंदत् अनभिनंदनप्रकारंदर्शयति अहोइतिकरुणायांवत्सेतिकष्टेपैअज्ञातिस्वेनमहत् पापंकृतम् अतीयसिद्रोहे अपराधेउरुःतल्पः दमोदंडः धृतः ॥ ४१ ॥

हेअपक्वबुद्धे ! पराविष्णुरेवइत्याख्याख्यातिर्यस्यतंनरदेवंनृभिः संमातुंसमंद्रष्टुंनार्हसि ॥ ४२ ॥

अलक्ष्यमाणेपरलोकंगते अविवरूथवत् विनंक्ष्यतिनष्टोभविष्यति ॥ ४३ ॥

तत्पापम् अनन्वयम् तवबालयेतरसंबन्धशून्यम् अद्य अधुनानोऽस्मानुपैतिकिंतत् पापंयत्नष्टनाथस्यलोकस्यधनैः सर्वोधनस्यविलुंपका चोरादेर्भविष्यति पुरुषादस्यचोरेषुतेजनाः परस्परंघ्नंतिहिंसंतिशपंतिवाक्पारुष्यंकुर्वंति पश्वादीन्वृंजतेहरंतितत्सर्वंपापमस्मानुपैति ४४

---

## भाषाटीका ।

राजा को शाप दिया सुन कर ब्राह्मण ने पुत्र पर असंतुष्ट होकर कहा हे अज्ञ ! तैंने बड़ा पाप किया जो कि थोड़े दोष पर बड़ा दण्ड दिया है ॥ ४१ ॥

हे अपक्व बुद्धे ! ईश्वर के तुल्य राजा को मनुष्यों के तुल्य मत समझो जिसके कठिन तेज से रक्षित हुए प्रजा निर्भय होकर कल्याणों को प्राप्त होते हैं ॥ ४२ ॥

हे पुत्र ! विष्णु रूप राजा के न रहने से यह सब लोक अधिक चोरों वाला होकर अरक्षित भेष समूह की नाईं क्षणमात्र में नष्ट होजायगा ॥ ४३ ॥

तब अनाथ धनियों के धन लूटनेवाले चोरों से जो कष्ट प्रजा को होगा सो पाप हमही को प्राप्त होगा क्योंकि अधिक चोरों के होने से मनुष्य परस्पर मारते हैं गाली देते हैं पशु तथा स्त्रियों को हरते हैं ॥ ४४ ॥

तदार्य्यधर्म्मश्च विलीयते नृणां वर्णाश्रमाचारयुतस्त्रयीमयः ।
ततोऽर्थकामाभिनिवेशितात्मनां शुनां कपीनामिव वर्णसङ्करः ॥ ४५ ॥
धर्म्मपालो नरपतिः स तु सम्राड्बृहच्छ्रवाः ।
साक्षान्महाभागवतो राजर्षिर्हयमेधयाट् ।
क्षुत्तृट्श्रमयुतो दीनो नैवास्मच्छापमर्हति ॥ ४६ ॥
अपापेषु स्वभृत्येषु बालेनापक्कबुद्धिना ।
पापं कृतं तद्भगवान् सर्व्वात्मा क्षन्तुमर्हति ॥ ४७ ॥
तिरस्कृता विप्रलब्धाः शप्ताः क्षिप्ता हता अपि ।
नास्य तत् प्रतिकुर्व्वन्ति तद्भक्ताः प्रभवोऽपि हि ॥ ४८ ॥

श्रीधरस्वामी ।

धर्मः सदाचारः । शुनां कपीनामिव चार्थकामयोरेवाभिनिवेशितानि चित्तानि येषां तेषाम् ॥ ४५ ॥

एवं राजमात्रस्य शापानर्हत्वमुक्त्वा [illegible] स्तुतेरतिविशेषमाह धर्मपाल इति सार्द्धेन । हयमेधयाट् अश्वमेधयाजी ॥ ४६ ॥

अस्य महापापस्यान्यत् प्रायश्चित्तमदृष्ट्वा फलमावेदयन् भगवन्तं प्रार्थयते अपापेष्विति ॥ ४७ ॥

राजा चेत् प्रतिशापं दद्यात् तर्हि निष्कृतिर्भवेदपि तत्तु न सम्भवति तस्य भागवतत्वादित्याह । तिरस्कृताः निन्दिताः । विप्रलब्धा वञ्चिताः । क्षिप्ता अवज्ञाताः । हतास्ताडिताः । अस्य तिरस्कारादिकर्त्तुः न तत्प्रतीकारं कुर्वन्ति तद्भक्ता विष्णुभक्ताः प्रभवः समर्था अपि ॥ ४८ ॥

---

श्रीवीरराघवः ।

किंच तदानरदेवनाम्निरथांगपाणावलक्ष्यमाणेसतिवर्णाश्रमाचारयुतः त्रय्याआगतस्त्रयीमयः ततआगतइत्यधिकारे "मयट्च ॥ ४।३।८२ ॥ इतिमयट्वैदिकइत्यर्थः नृणामार्यधर्मः सतांधर्मश्चविलीयतेनंक्ष्यतिततोधर्मलयादर्थकामयोर्निवेशितः अभिनिविष्टःआत्मामनोयेषांनृणांशुनामिव चसंकरोभविष्यति ॥ ४५ ॥

एवंसामान्यनरदेवस्यानिग्राह्यत्वमुक्त्वाथप्रकृतंपरीक्षितंनिर्दिश्याहधर्मपालइतिसतुनृपतिः परीक्षिद्धर्मपालः वर्णाश्रमधर्ममर्यादापालकतयात्वेनविश्रुतः विपुलकीर्त्तिः सार्वभौमश्चतत्रापिमहाभागवतः अनेनब्रह्मविदपकर्तॄणांनोगतिरेवनास्तीतिभावः राजर्षिः केवलंराजऋषिरेवनहयमेधयाट्हयमेधेनइष्टवान् ॥ ४६ ॥

क्षुत्तृड्भ्यांयः श्रमस्तेनयुतः अतएवदीनश्चतथाभूतः सर्वथाऽस्मच्छापंनार्हतिएवमात्मजमनभिनंद्यतत्कृतादघादात्मनोऽनर्थमाशंक्य भगवंतंक्षमापयतिअपापेष्विति सर्वात्मासर्वांतरात्माशप्तृशप्तयोरप्यंतरात्मतयावस्थितइतिभावः भगवानपापेषुस्वभक्तेष्वनेनापक्वबुद्धिना विवेकरहितेनकृतंपापमिदंक्षंतुमर्हति ॥ ४७ ॥

शास्त्रान्मद्विषयापराधः कथंचिन्मच्छरणवरणादिनासह्यः स्यान्मद्भक्तविषयापराधस्तुनकथंचिदपिकिंतु तैरेवसह्यःइत्येवंविधंभगवदभिप्रायमालोच्यतानेवक्षमापयतितिरस्कृताइतितिरस्कृताःपरिभूताः अपिप्रलब्धाः प्रतारिताअपिक्षिप्तानिंदिताअपिहतास्ताडिताअपितद्भक्ताः भगवद्भक्ताः प्रभवोऽपिप्रत्युपकर्तुंसमर्थाअप्यस्यतिरस्कारकर्तुः नतिरस्कारादिकर्तॄन्प्रतिकुर्वंतिकिंतुकेवलंक्षाम्यन्ति ॥ ४८ ॥

---

श्रीविजयध्वजः ।

तस्यपरिपाकमाह तदेति यदापश्वादिहंतृशिक्षानक्रियतेतदाआर्याणांशिष्टानांसंमतोधर्मोधर्मेऽधिकृतानामनुष्ठातॄणांविलीयतेक्रमेणाच्छादितस्तिरोभवतिचकीदृशः त्रय्यात्रिभिर्वेदैर्मीयतेज्ञायतेप्रतिपाद्यतइतित्रयीमयः अतएववर्णाचारैराश्रमाचारैश्चयुतः धर्मलयपरिपाकमाह ततइति ततः वर्णाश्रमाचारयुतवैदिकार्थधर्मनाशानंतरंकनकाद्यर्थेषुस्रक्चंदनवनितादिभोगलक्षणकामेषु अभिनिवेशितआत्मामनोयेषां तेतथोक्ताः तेषांपुंसांयथाशुनांकपीनांचभक्षणभोगादावनवस्थातथाहीनजातीनामुत्तमजातिभिरुत्तमजातीनांहीनजातिभिर्भोगसंभोगादिनावर्णानांसंकरः कलुषीभावोभविष्यतीत्येकान्वयः ॥ ४५ ॥

परीक्षितोऽदुष्टत्वेनन्निवर्त्तत देवकथमितितत्राह धर्मपालइति अत्रधर्मपालादिविशेषणानिहेतुगर्भाणि धर्मपालत्वान्महाभागवतत्वाद्राजर्षित्वाद्धयमेधयाजित्वाच्चसम्राट्नदुष्टोऽतः क्षुत्तृट्श्रमान्वितत्वेनबुभुक्षापिपासयादीनोऽस्मदाश्रममागतोऽर्घ्यादिपूजायोग्यो तैवास्मदस्मत्तः शापमर्हति तस्मादनिवार्यमघमापन्नमितिभावः हयमेधैरश्वमेधैरिष्टवानितिहयमेधयाट् ॥ ४६ ॥

इति पुत्रकृताघेन सोऽनुतप्तो महामुनिः ।
स्वयं विप्रकृतो राज्ञा नैवाघं तदचिन्तयत् ॥ ४९ ॥
प्रायशः साधवो लोके परैर्द्वन्द्वेषु योजिताः ।
न व्यथन्ते न हृष्यन्ति यत आत्माऽगुणाश्रयः ॥ ५० ॥
इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां वैयासिक्यां
प्रथमस्कन्धे पारीक्षिते विप्रशापोपलम्भो नाम
अष्टादशोऽध्यायः ॥ १८ ॥

सिद्धांतप्रदीपः ।

हयमेधयाद् हयमेधयाजी अस्य महापापस्य भगवत्प्रार्थनेनतत्प्रायश्चित्तमपश्यमानस्तंप्रार्थयते भगवान् सर्वात्माक्षंतुमर्हतीति ॥ ४६ । ४७ ॥ प्रतिज्ञापरूपंप्रायश्चित्तंपुनप्राप्स्यामीत्याह तिरस्कृताइति तिरस्कृताः निराहताः विप्रलब्धाः वंचिताः क्षिप्ताः निंदिताः हतास्ताडिताअपि तस्यभगवतोभक्ताःप्रभवः प्रतिकर्तुंसमर्थाअपि अस्यतिरस्कारादिकर्तुः नतत्प्रतिकुर्वंति ॥ ४८ ॥

भाषाटीका ।

तबतो मनुष्यों का वर्णाश्रमाचारयुक्त वैदिक आर्य धर्म नष्ट होजाता है तब अर्थ काम परायण मनुष्यों का वांदर कुक्कुरों की नांई वर्णसांकर्य होजाता है ॥ ४५ ॥
वह परीक्षित राजा तो धर्म पालक हैं महाकीर्तिमान् हैं साक्षात् महाभागवत हैं राजर्षि हैं अश्वमेध कर्ता हैं क्षुधा तृषा श्रमयुक्त होने पर कसूर करने से हमारे शाप के योग्य नहीं हैं ॥ ४६ ॥
इस निर्बुद्धि बालक ने निष्पाप स्वभृत्यों का जो पाप किया है तिसको सर्वान्तर्यामी नारायण क्षमा करेंगे ॥ ४७ ॥
उन भगवान के भक्त तो तिरस्कार करने पर ठगने पर शाप देने पर गाली देने पर भी प्रतिकार के समर्थ होकर भी उसका प्रतिकार नहीं करते हैं ॥ ४८ ॥

श्रीधरस्वामी ।

विप्रकृतः अपकृतः । अघमपराधम् ॥ ४९ ॥
युक्तं चैतदित्याह प्रायश इति । द्वन्द्वेषु सुखदुःखादिषु । अगुणाश्रयः सुखदुःखाद्याश्रयो न भवति ॥ ५० ॥
इति श्रीमद्भागवतभावार्थदीपिकायां प्रथमस्कन्धे अष्टादशोऽध्यायः ॥ १८ ॥

दीपनी ।

( महामुनिशब्दोऽत्र यौगिकः महामननशील इति यावत् ॥ ४९ । ५० ॥ )

श्रीवीरराघवः ।

इतीत्थंसमहामुनिः पुत्रकृतेनाघेनानुतप्तः राज्ञास्वयंविप्रकृतोऽपितद्राजकृतमघमपराधंतन्नाचिंतयन्नचिंतितवान् ॥ ४९ ॥
कुतोनाचिंतयदित्यत्राह प्रायशइतिलोकेपरैरन्यैर्द्वन्द्वेषुशीतोष्णसुखदुःखादिषुयोजिताःसंयोजिताअपिसाधवः प्रायेणनव्यथंतिनहृष्यंतिच यथासुखेयोजितानहृष्यंतितथादुःखेयोजितानव्यथंतीत्यर्थः कुतः यतः आत्मातेषांमनः गुणाश्रयःशीलाश्रयः यद्वाअगुणाश्रयइतिच्छेदः गुणकार्यरागद्वेषाद्यनाश्रयः ॥ ५० ॥
इतिश्रीवीरराघवटीकायांप्रथमस्कंधे
अष्टादशोऽध्यायः ॥ १८ ॥

श्रीविजयध्वजः।

तदर्थंतेनराज्ञाकृतमपराधं महाम्मुनिरितिहेतुगर्भविशेषणं सर्वज्ञतमत्वाच्छरीराभिमानिमयदुः खादिप्राप्त्याकोपोत्पत्तिचिंतनत्वसंप्रज्ञातसमाधेस्तस्यपद्मपत्रपानीयवदश्लिष्टदुरितत्वादित्यादिविशेषत्वादित्यर्थः ॥ ४९ ॥

साधूनामयंस्वभावइत्याह साधवइति द्वंद्वेषुसुखदुः खादिषुयोजिताः साधवः यथास्थितवस्तुदर्शिनः कुतोव्यथाद्यभावइतितत्राह यत इति आत्मागुणाश्रयइत्यस्याकारप्रश्लेषाप्रश्लेषाभ्यांपदच्छेदः कर्तव्यः गुणस्यागुणस्यदोषस्यवात्माकर्ताजीवः स्वयमेवाश्रयः तस्मादिति ॥ ५० ॥

इतिश्रीम० प्रथमस्कंधेविजयध्वजटीकायामष्टादशोऽध्यायः ॥ १८ ॥

---

सुबोधिनी।

एवंपितुरनुतापनिरूपणेनराज्ञोनिर्दुष्टत्वं निरूप्यसदुष्टस्यसदुष्टानुमोदनंयुक्तमेवेतिइमामाशंकांपरिहर्तुमृषिस्तौतिद्वाभ्यामिति अन्यकृतेनापि पापेनसोऽनुतप्तोजातः तत्रहेतुः मुनिरितिभगवताप्यनुचितंज्ञातमितिभगवद्धृदयपरिज्ञानात्मुनित्वम् किंच सर्पद्वाराप्येनस्वयंविप्रकृतःतदपराधंमनसापिनधृतवान् अतःपरंपरयापिपापानिरूपकत्वात्भगवद्धृदयज्ञानात्दोषदर्शित्वाच्चमहान्मुनिः ॥ ४९ ॥

उभयोस्तुल्यतयाउपसंहरतिप्रायशइति साधवः राजामुनिश्चापकृतेसामान्यतस्तुसर्वलोकेसर्वत्रैवपरैरसाधुभिः तदानींतन राज्ञात्रऋषि बालकेनचसाधरणैरन्यैः द्वंद्वेषुसुखदुःखादिषुयोगंप्रापिताःदुःखेनयोजितानव्यथंति सुखेनयोजितानहृष्यन्ति तस्माद्यदेतयोः क्षोभाभावः तद्युक्तमेवतत्रोपपत्तिमाह यतआत्माअगुणाश्रयइति गुणाहर्षादयःतेषामाश्रयः अंतःकरणमेवनआत्मा अतस्तेषामंतःकरणधर्मत्वात्तदाश्रयत्वाभावात्क्षोभाभावउचित इतिभावः ॥ ५० ॥

इतिश्रीभागवतसुबोधिन्यांश्रीमल्लक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां

प्रथमस्कन्धाऽष्टादशाध्यायः ॥ १८ ॥

---

श्रीविश्वनाथचक्रवर्त्ती।

यद्विप्रकृतास्तिरस्कृतस्तात्तिरस्करणो अघम् अपराधं न अभावयत् ॥ ४९ ॥

युक्तं चैतदित्याह प्रायश इति। द्वन्द्वेषु सुखदुःखादिषु। अगुणाश्रयः प्राकृतसुखदुःखाद्याश्रयो न भवति ॥ ५० ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।

प्रथमेऽष्टादशोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ १८ ॥

---

सिद्धांतप्रदीपः।

राजास्वयंविप्रकृतोऽ पकृतोऽपितस्याघमपराधंनैवाचिंतयत् ॥ ४९ ॥

अचिंतनेहेतुमाह प्रायशइति अगुणाश्रयः रागद्वेषाद्याश्रयोनभवति ॥ ५० ॥

इतिश्रीमद्भागवतसिद्धांतप्रदीपेप्रथमस्कंधीयेऽष्टादशाऽध्यायार्थप्रकाशः ॥ १८ ॥

---

भाषाटीका।

इस प्रकार से पुत्र कृत अपराध से दुखित भये मुनि ने राजाने जो अपना अपराध किया था उसका विचारही नहीं किया ॥ ४९ ॥

प्रायः कर के महात्मा लोग अन्य पुरुषों से सुख दुःख युक्त होनेपर भी न हर्ष को प्राप्त होते न दुःख को प्राप्त होते हैं क्योंकि आत्मस्वरूप तो सुख दुःख गुणों से रहित है ॥ ५० ॥

इति प्रथमस्कंध का अष्टादशोऽध्याय ॥ १८ ॥

## ऊनविंशोऽध्यायः ।

—:*:—

सूत उवाच । महीपतिस्त्वथ तत् कर्म्म गर्ह्यं विचिन्तयन्नात्मकृतं सुदुर्म्मनाः ।
अहो मया नीचमनार्य्यवत् कृतं निरागसि ब्रह्मणि गूढतेजसि ॥ १ ॥
ध्रुवं ततो मे कृतदेवहेलनाद्दुरत्ययं व्यसनं नातिदीर्घात् ।
तदस्तु कामं ह्यघनिष्कृताय मे यथा न कुर्य्यां पुनरेवमद्धा ॥ २ ॥
अद्यैव राज्यं बलमृद्धकोशं प्रकोपितब्रह्मकुलानलो मे ।
दहत्वभद्रस्य पुनर्न मेऽभूत् पापीयसी धीर्द्विजदेवगोभ्यः ॥ ३ ॥
स चिन्तयन्नित्थमथाशृणोद्यथा मुनेः सुतोक्तो निर्ऋतिस्तक्षकाख्यः ।
स साधु मेने न चिरेण तक्षकानलं प्रसक्तस्य विरक्तिकारणम् ॥ ४ ॥

### श्रीधरस्वामी ।

प्रायोपविष्टे गंगायां राज्ञि योगिजनावृते ।
शुकस्यागमनं तत्र प्रोक्तमेकोनविंशके ॥ ० ॥

स्वकृतं तत् कर्म मुनिस्कन्धे सर्पनिक्षेपणं, गर्ह्यं निन्द्यं विचिन्तयन् सुदुर्मना जातः चिन्तामेवाह सार्द्धद्वयाभ्याम् अहो इति । नीचं पापम् अमीवमिति पाठे स एवार्थः । ब्रह्मणि ब्राह्मणे । गूढं गुप्तं तेजो यस्य ॥ १ ॥

कृतं यद्देवहेलनम् ईश्वरावज्ञापापमित्यर्थः । तस्मात् नूनं मे व्यसनं भविष्यति । तत्तु नाति दीर्घात् कालात् अचिरादेवास्तु । तत्रापि अद्धा साक्षात् न पुत्रादिद्वारेणेति प्रार्थना । कामम् असंकोचतः । एवं प्रार्थनायाः प्रयोजनम् अघस्य निष्कृताय प्रायश्चित्ताय यथा पुनरेवं न कुर्यामिति च ॥ २ ॥

एवं साक्षात् स्वस्यैव व्यसनं संप्रार्थ्य ततः प्रागेव किंचित् प्रार्थयते अद्यैव मे राज्यादि दहतु प्रकोपितं ब्रह्मकुलं तदेवानलः । पुनर्द्विजादीन् पीडयितुं सा धीर्मे माभूत् न भवेदित्यर्थः ॥ ३ ॥

इत्थं चिन्तयन् स नृपो मुनेः सुतोक्तः सप्तमेऽहनि निर्ऋतिर्मृत्युर्यथा भविष्यति तथाशृणोत् । शमीकप्रेषितात् शिष्यात् श्रुत्वा च सः तक्षकस्य विषाग्निं साधु मेने । यतो विषयेषु प्रसक्तस्य विरक्तिकारणम् ॥ ४ ॥

---

### दीपनी ।

० । १—३५ ॥

---

### श्रीवीरराघवः ।

महीपतिरिति अथस्वपुरप्रवेशानंतरंमहीपतिःपरीक्षिदात्मकृतंतद्गुरगनिधानरूपंगर्ह्यकर्मविचिंतयन्सुदुर्मनाः आत्मनिंदापरोवभूवेत्यर्थः तदेव दर्शयतिसार्द्धद्वयेन अहोमयामूर्खवन्निरागसिनिरपराधिनि गूढमनभिव्यक्ततेजः सामर्थ्यंयस्मिन् ब्रह्मणिब्राह्मणविषये अमीवंनिकृष्टकर्मकृत ममीवंपापम् ॥ १ ॥

ततोनीचात्कृताद्देवहेलनरूपात्कर्मणो निमित्ताद् नकेवलंमयाब्राह्मणोऽवहेलितः किंतुसाक्षाद्देवो भगवानेवेत्यभिप्रायेणादेवहेलनादित्युक्तं मेममनातिदीर्घात्सममनंतरकालमेव दुरत्ययमतिवर्तितुमशक्यंव्यसनं दुःखंध्रुवंनूनंभविष्यति तत्स्वस्यहितमेव मन्यतेतदिति तद्व्यसनं ममाघनिष्कृतायपापविशुद्धयेकामंप्रकाममस्तु किमनिष्टंप्रार्थयसेइत्यत्राह यथापुनरेवंविधमघंनकुर्यामद्धानकुर्यामेव अद्धेतिस्फुटावधारणयोर्द्योतकमव्ययंशिक्षार्थमस्त्वितिभावः अस्त्वद्धाऽस्त्वेवेतिवान्वयः ॥ २ ॥

अद्येतिप्रकोपितंकोपंप्रापितंयद्ब्रह्मकुलंब्रह्मकुलतत्कर्तृकनिग्रहात्मकोऽनलोऽग्निरद्यैव ममराज्यंबलंसैन्यंप्रभूतधनकोशंच दहतुयथापुनरभद्रस्य ममद्विजर्षिदेवेभ्यो गोभ्यश्चापचिकीर्षायुक्तावैवं विधापापीयसीबुद्धिर्माभूत्तथा शिक्षार्थंदहत्वितिभावः ॥ ३ ॥

श्रीवीरराघवः ।

इत्थंसंचिंतयन्नृराजायथायेन प्रकारेणतक्षकाख्योनिर्ऋतिर्मृत्युर्मुनेः सुतेनोक्तःशापात्मकोक्त्याप्रचोदितस्तथैव सुश्रावततः सराजाप्रसक्तस्य विषयेष्वितिशेषः विषयासक्तस्य स्वस्य विरक्तिकारणं हेतुगर्भमिदंविरक्तिकारणत्वादचिरेण तक्षकरूपमनलंसाधुयथातथामेने ॥ ४ ॥

---

श्रीविजयध्वजः ।

विमुक्तिसाधनेषुप्रथमापाद्यसाधनत्वेनवैराग्यमवश्यमापाद्यंमुमुक्षुणेतिपरीक्षिन्निचिंताकथनापदेशेनतत्प्रतिपाद्यतेऽस्मिन्नध्याये ननुपरीक्षितोधर्मपालत्वादिकंनयुज्यते नृशंसवन्नीचकर्मकरणात्पश्चात्तापानुदयाच्चेत्याशंकापरिहारत्वेनाह महीपतिरिति मुनेः स्कंधेमृतसर्पशरीरार्पणलक्षणमात्मनाअनुष्ठितंयत्कर्मतच्चिंतयन्सुदुर्मनाः सुष्ठुदुःखितमनाः अभूदितिशेषः तुशब्दईश्वरेच्छाधीनत्वंदर्शयति "श्वपचादपिकष्टत्वंब्रह्मेशानादयः सुरा" इतिस्मृतेः कस्मिन्विषयेअनुष्ठितंयेनमहतीचिंतासंभाव्यतइति मयानिरागसिनिरपराधेगूढतेजसिअप्रकाशिततेजोलक्षणमहिम्निब्रह्मणिब्राह्मणेअनार्यवत्मूर्खवत्नीचंकर्मकृतमहोकष्टमिति । महीपतेःकर्मणोगर्ह्यत्वद्योतनायब्रह्मणीति सोऽप्यपराधीचेत्कथंचिद्भवतइत्यतोनिरागसीति प्रतिक्रियासामर्थ्यप्रकटनायगूढतेजसीति "ब्रह्मवेदस्तपस्तत्त्वंब्रह्माविप्रःप्रजापति" रित्यभिधानात् "ब्राह्मणोनावमंतव्योनिरागास्तुविशेषत" इतिवचनात् ॥ १ ॥

तच्चदुष्कृतमपरिहार्यविपत्तिकरमितिचिंतयतीत्याह ध्रुवमिति ब्राह्मणस्यास्यअवज्ञाविष्णोरवज्ञैवयतस्तत्तस्माद्देवस्यहरेर्हेलनादवज्ञानात् ध्रुवमवश्यंदुरत्ययमत्येतुमशक्यंव्यसनंदुःखंनातिदीर्घादचिरान्ममभविष्यतीत्यन्वयः तद्व्यसनंमनसाभ्युपगच्छतीत्याह तदिति अघनिष्कृतायपापप्रायश्चित्तायतद्व्यसनंकाममस्तु कुतः अद्धानिरंकुशतयाअहंपुनरेवंविधमघंयथानकुर्यांतथास्त्वितिशेषः ॥ २ ॥

नौपचारिकमिदमांतरमेवेत्यभिप्रेत्यतदेवाह अद्यैवेति प्रकोपितब्रह्मकुलमेवानलः बहुदाहेऽप्यलंबुद्धिर्नास्तीत्यनलः मेमदीयत्वेनअभिमतंराज्यादिकमद्यैवकालक्षेपमंतरेणदहतु भूयः अभद्रस्यमेद्विजदेवतासुपापीयसीबुद्धिर्नाभूत्नभूयादित्यन्वयः अभूदितिव्यत्ययोराज्ञोमहानुतापसूचनायेतिज्ञातव्यं द्विजाश्चदेवताश्च द्विजदेवताः द्विजेषुसन्निहितादेवतावा द्विजरूपदेवतावा तासु न विद्यतेभादीप्तिर्येषांतेअभास्तान्द्रातिकुत्सयतीत्यभद्रः द्राकुत्सायामितिधातुः तद्वत्द्राणमज्ञानंयस्यसतथेतिवाद्रानिद्रायामितिधातुः तस्य ॥ ३ ॥

अथेत्थंचिंतयन्सपरीक्षित्तक्षकाख्यान्मुनेःसुतोक्तात्सुतेनप्रेरितात् विकृतिकृतापराधपरिहारंदेहवियोगलक्षणंयथावदशृणोदित्यन्वयः आकर्ण्यकिमकार्षीदितितत्राह सइति सचाकर्ण्यतक्षकादचिरेणमरणंराज्यादिषुअलंप्रसक्तस्य विरक्तिकारणमभूदितिसाधुमेनइत्यन्वयः ॥४॥

---

क्रमसंदर्भः ।

० । १ । २ ॥

अद्यैवेति । दहतु ( प्रकोपितब्राह्मणकुलं निमित्तीकृत्य राज्यादिकमद्यैव ) मे मत्तः सकाशाद्दग्धवदपयात्वित्यर्थः । राज्यादौ अपरेषां द्विजादीनां सद्भावेन तथाभिप्रेतुमयुक्तत्वात् ॥ ३ । ४ । ५ ॥

---

सुबोधिनी ।

"सर्वदोषनिवृत्तिस्तुपूर्वाध्यायेनिरूपिता प्रमादेपीश्वरेच्छायाव्यामोहाभाववर्णनात् अधुनापूर्णगुणतावैराग्यज्ञानभक्तिषु यशःकर्मस्वभावेषुभावेषुचनिरूप्यते एकोनविंशेवैराग्यात्प्रायेमुनिगणागमः तत्रपृष्टार्थसंदेहेशुकागमइतीर्यते मुनयोभगवद्भक्तयानंद्रष्टुंहरेःकथाम् श्रोतुंचभावितज्ज्ञानात्विवादस्तुशुकोन्नतौ वैराग्यस्यप्रकर्षेणप्रकर्षोऽत्रविवक्षितः ज्ञानेतुल्येऽपिदेवर्षेस्त्यागाभावान्नपात्रता भार्गवस्यापिरामस्यव्यासस्यापिहरेस्तनोःगुरुणैवस्वरूपास्तिज्ञानदानान्नवक्तृता द्वात्रिंशल्लक्षणोपेतः शुकएवततोगुरुः एतदर्थंहिभगवानवतीर्णोवृषध्वजः गर्भाधानोत्तररक्षाविष्णोरन्तेशिवात्मना" पूर्वाध्यायेराज्ञःशापोनिरूपितः इदानीमद्भुतकर्मणोभगवतःशापफलंनिरूप्यते गङ्गासंगमेयत्रप्रथमंवैराग्यापरनामनैरपेक्ष्यम् अनुतापलक्षणंतपसासहनिरूप्यतेचतुर्भिः "कृतेपापेऽनुतापोवैयस्यपुंसःप्रजायते प्रायश्चित्तंस्मृतंतस्यहरिसंस्मरणंपर" मिति हरिसंस्मरणांगभूतमनुतापंनिरूपयन् भक्तस्यतद्रूपमिति तदंगननिरपेक्षेणसहनिरूपयाति महीपतिरिरितिततःसमागत्यश्रमापनोदनानन्तरं यदाराज्यविचारार्थंसिंहासनस्थोमहीपतिर्जातः ब्राह्मणस्यगलेसर्पदानलक्षणंतुशब्देनतुपूर्वपक्षवत्पूर्वभावे निवारितःगर्ह्यनिषिद्धत्वेऽप्यपकीर्तिजनकंलोकद्वयनाशकमित्यर्थः चिन्तान्तरपरित्यागेनविशेषाकारेणतदेवचिन्तयन् दुर्मनाजातः यदापिदण्डादिप्रकारेणैवचौरबन्धंकरोति तदाप्यन्यद्वाराकारयतिनतुसाक्षात्इदन्तुस्वयमेवकृतमिति दुर्मनाजातःमनसःशोकजनकत्वात् दुष्टत्वंशोकेनभगवत्स्मरणात् सुष्ठुत्वम् अन्यथामूर्च्छैवस्यात् तस्यानुतापाभिलाषमाह अहोइत्याश्चर्येमयाभगवद्भक्तेन धर्मपालकेनअमीवपापमपराधरूपंनिःशंकमनार्यवत्स्वभावदुष्टवत्कृतं स्वभावदुष्टोऽपिनैतादृशे अपराधंकरोतीतिविषयं वर्णयतिनिरागसिब्रह्मणिगूढतेजसि प्रमाणविचारेणलोकविचारेणवानिरपराधेदण्डः क्रियते किंच प्रमेयविचारेणापिजीवएवदण्डोनब्रह्मणि नीतिविचारेणापि यत्रसर्वनाशोनसम्भावितस्तत्रदण्डःनतुगुप्ततेजसि सर्वनाशकेगूढत्वात्तदेवाह अन्यथातावन्मात्रदाहःस्यात् ॥ १ ॥

तर्हिकिंकर्तव्यमित्याकांक्षायां विषयएवकरिष्यति नमयाकिंचित्कर्तव्यमित्याह ध्रुवमिति ननुनैष्यावस्थतवनकिंचित्भविष्यतीत्याशंक्याह देवहेलनादिति अन्तःस्थितोभगवानेवतेनव्यायमानःसदेवालयरूपः अतोदेवालयापकारेदेवएवापकृतोभवतीति भक्तोऽपिभगव

अथो विहायेममसुं च लोकं विमर्शितौ हेयतया पुरस्तात् ।
कृष्णाङ्घ्रिसेवामधिमन्यमान उपाविशत् प्रायममर्त्यनद्याम् ॥ ५ ॥
या वै लसच्छ्रीतुलसीविमिश्रकृष्णाङ्घ्रिरेण्वभ्यधिकाम्बुनेत्री ।
पुनाति सेशानुभयत्र लोकान् कस्तां न सेवेत मरिष्यमाणः ॥ ६ ॥
इति व्यवच्छिद्य स पाण्डवेयः प्रायोपवेशं प्रति विष्णुपद्याम् ।
दध्यौ मुकुन्दाङ्घ्रिमनन्यभावो मुनिव्रतो मुक्तसमस्तसङ्गः ॥ ७ ॥
तत्रोपजग्मुर्भुवनं पुनाना महानुभावा मुनयः सशिष्याः ।
प्रायेण तीर्थाभिगमापदेशैः स्वयं हि तीर्थानि पुनन्ति सन्तः ॥ ८ ॥

सिद्धांतप्रदीपः ।

सपरीक्षित् इत्थंचिन्तयन्मुनेः सुतेनतक्षकाख्योनिर्ऋतिर्मृत्युः तक्षकःसप्तमेऽहनिधक्ष्यतिसमकुलांगारमित्येवंयथोक्तस्तथा शमीकप्रेषितात् गौरमुखाख्यात्तच्छिष्यादशृणोत् अथश्रवणानन्तरंसःपरीक्षित् तक्षकस्यविषानलंप्रसक्तस्यराज्यादावासक्तस्यात्मनोविरक्तिकारणं साधुमेने स्वीकृतवान् नतुतत्प्रतिकारंचिन्तितवानितिभावः सप्तमेऽहनिधक्ष्यतीतिचिरेणानुसाधुत्वमेने ॥ ४ ॥

---

भाषाटीका ।

सूतजी बोले इसके अनन्तर राजा परीक्षित अपने किये निंदित कर्म को विचारकर दुखित हो बोले मैंने गुप्त तेजवाले निरपराध ब्राह्मण के विषय में बडा अकर्म किया है ॥ १ ॥

अब निश्चय से इस देवता अवज्ञा से अल्पकाल में अत्यन्त दुःख होगा वह दुःख मेरे पाप का प्रायश्चित्त होगा जिससे फिर मैं ऐसा न करूँ ॥ २ ॥

प्रकोपित ब्रह्मकुलरूप अग्नि आजही मेरे समृद्ध राज्य खजाना आदि को जलावै जिससे फिर मेरी मती पापवाली ऐसी गौ ब्राह्मण देवताओं में न होय ॥ ३ ॥

उस राजा ने ऐसे चिंता करतेमात्र मुनिपुत्र का प्रेरित तक्षकरूप काल को श्रवण किया उसने शाप को अपने वैराग्य का कारण समुझकर अच्छा मानलिया ॥ ४ ॥

---

श्रीधरस्वामी ।

अथो अनन्तरम् । इमौ लोकौ पुरस्ताद्राज्यमध्य एव हेयतया विचारितौ विहाय । श्रीकृष्णाङ्घ्रिसेवामेवाधिमन्यमानः सर्वपुरुषार्थेभ्योऽधिकां जानन् । प्रायमनशनं तस्मिन्नित्यर्थः तत्सङ्कल्पेनोपाविशदिति यावत् । यद्वा प्रायं प्रकृष्टमयनं शरणं यथा भवति तथा ॥ ५ ॥

अमर्त्यनद्यामिति विशेषणस्य फलमाह । या गंगा लसन्ती श्रीर्यस्याः तया तुलस्या विमिश्रा ये कृष्णाङ्घ्रिरेणवस्तैरभ्यधिकं सर्वोत्कृष्टं यदम्बु तस्य नेत्री तद्वाहिनी । उभयत्र अन्तर्बहिश्च सेशान् ईशैः लोकपालैः सहितान् लोकान् पुनाति । मरिष्यमाणः आसन्नमरणः मरणस्यानियतकालत्वात् सर्वोऽपि तथा ततस्तां को न सेवेत ॥ ६ ॥

इति एवं विष्णुपद्यां गंगायां प्रायोपवेशं प्रति व्यवच्छिद्य निश्चित्य । पांडवेय इति तत्कुलौचित्यं दर्शयति । नास्त्यन्यस्मिन् भावो यस्य सः । कुतो मुनिव्रतः उपशान्तः । तत् कुतः मुक्तः समस्तसङ्गो येन सः ॥ ७ ॥

तत्र तदा तद्दर्शनार्थं मुनय उपागताः न तु तीर्थस्नानार्थं कृतार्थत्वात् । ननु तादृशानामपि तीर्थयात्रा दृश्यते तत्राह प्रायेणेति । तीर्थयात्राव्याजैः ॥ ८ । ९ । १० ॥

---

श्रीवीरराघवः ।

अथोततः इममसुंचलोकंविहायलोक्यतइतिलोकः फलसुखमितियावत् ऐहिकामुष्मिकसुखस्पृहांविहायेत्यर्थः इममसुंचलोकंकीदृशं नष्टं स्वस्यपुरस्तात्पूर्वमेवहेयतयाविमर्शितौ विचारपूर्वकंहेयत्वेननिश्चितौ विचारपूर्वकम् इममसुंचलोकंविहायेत्यन्वयः ततः कृष्णस्यभगवतोऽङ्घ्रिसेवामधिमन्यमानः निरवधिपुरुषार्थसाधनतयामन्यमानः अमर्त्यनद्यांदिव्यनद्यां गंगायाम् प्रायमनशनमुपाविशत्[illegible]नदीक्षितोबभूवेत्यर्थः ॥ ५ ॥

श्रीवीरराघवः ।

स्वगृहेऽन्यत्रवाप्रायमुपविशतुर्किविशेषणामर्त्यनद्यामेव तदुपाविशदित्यत्र तांविशिंषन्नाह यावाइतिलसंत्या श्रीतुलस्यामिश्रोयः कृष्णस्यांघ्रिरेणुस्ततोऽभ्यधिकस्य प्रशस्तस्यांबुनोंऽभसोनेत्रीप्रवहंतीयाऽमर्त्यनदीउभयत्रेहामुत्रचसेशाँल्लोकपालैः सहिताँल्लोकानूजनान्पुना तितांनदींमरिष्यमाणः कोवापुमान्नसेवेतअपितुसर्वइत्यभिप्रायेण तस्यामेव प्रायमुपाविशदित्यर्थः लसच्छ्रीतुलसीश्रीकृष्णांघ्रिरेणुनाहेतुना अभ्यधिकंस्वाधिकरहितमंवुतस्य नेत्रीतिवार्थः ॥ ६ ॥

सपांडवेयः परीक्षिदित्थंविष्णुपद्यां गंगायांप्रायोपवेशंप्रतिव्यवच्छिद्यविनिश्चित्यसंकल्पान्मुक्तः समस्तेषुदेहतदनुवंध्यादिषु संगोयेनमुनी नांव्रतंयस्यनविद्यतेऽन्योभावःचिंतायस्यसः कुमुंदांघ्रिंदध्यौध्यातवान् ॥ ७ ॥

तदातत्रराज्ञः संनिधौमहानुभावाः सशिष्यामुनयोलोकंपुनानाः पवित्रीकुर्वंतः आजग्मुः भुवनंपुनानाइत्येतदेवोपपादयति प्रायेणसंतः साधवः तीर्थयात्राव्याजैः स्वयमेवतीर्थानिपुनंतिहि यथाचपुनंतितथोपपादितं पुरस्तात्तीर्थीकुर्वंतितीर्थानीत्यत्रेत्यर्थः ॥ ८ ॥

---

श्रीविजयध्वजः ।

ससम्राट्कस्यवाहेतोरितिशौनकप्रश्नंपरिहरति अथोइतिअथोब्रह्मशापाकर्णनसमनंतरमेवममायंशापोऽपिविरक्तिहेतुत्वात्साधुरितिमन्वा नः पुरस्तात्प्रथमंताविहलोकपरलोकावनित्यत्वदुः खमिश्रत्वादिनाहेयतयाविमृश्याधिराट् श्रीयुतामिमंभूलोकंतथाअमुंस्वर्गलोकांनिर्विद्याविद्यायामिन्संसारेकृष्णांघ्रिसेवैवात्यंतिकदुः खनिवृत्ति[illegible]साधनत्वात्कर्तव्येतिचविमृश्य तामेवाम्रियमाणस्यात्मनः कर्तव्यामभिमन्यमा नः परीक्षित् अमर्त्यनद्यांगंगायांप्रायमुपाविशत्यावज्जीवमनशनव्रतंचकारेत्यन्वयः ॥ ५ ॥

[illegible]कामितितंगंगामेवप्रायोपवेशोऽन्य[illegible]नस्यादितित्राह यावाइति लसंतीश्रीमतीतुलसीलसच्छ्रीतुलसीब्रह्मज्ञानेनतुलांसिनोतीति तुलसीब्रह्मज्ञानसदृशीब्रह्मज्ञानस्यसंसारो[illegible]कत्वंयन्माहात्म्यंतदस्याअप्यस्तीतितत्सदृशी तनोतिकरोतिमोक्षादिपुरुषार्थमितितुर्विष्णुस्तत्रलसतीतिवातुलसी तस्यामंजरीरजोभिर्विमिश्राः कृष्णस्यांघ्रिरेणवः तैः सहाधि[illegible]यान्यंबुनिजलानितेषांनेत्रीलसच्छ्रीतुलसीमंजरीरजो विमिश्रश्रीकृष्णचरणरेणुसमधिगतमाहात्म्याभ्यधिकसलिलप्रवाहाकुलेत्यर्थः याचातएवाशेषानूलोकानुभयत्रांतर्बहिश्चपुनातीति उभयत्रइहलोकेशिष्टव्यवहारयोग्यतालक्षणांशुद्धिंपरलोकेनुरकप्राप्त्यादिनिवर्तनलक्षणांकरोतीतिवाअतोमरिष्यमाणः पुमान्कस्तांगंगांनसेवेत ॥ ६ ॥

अतोमरिष्यमाणोऽहंतीर्थोत्तमत्वाद्विष्णुपद्यांगंगायामनशनव्रतंकरिष्यइतिप्रायोपवेशंप्रतिव्यवस्थायनिश्चित्यानन्यभावोऽनन्यचेताराज्य भारादिचिंतारहितांतःकरणोविष्ण्वैकचेतावामुनीनांनिवृत्तानांज्ञानिनांव्रतमिवव्रतंयस्यसमुनिव्रतः वाचालत्वरहितोवा अतएवमुक्ताःसमस्ताः संगाः पुत्रादिविषयस्नेहायस्यसमुक्तसमस्तसंगः श्रोत्रादींद्रियैरन्यप्रसंगमंतरेणतत्कथाश्रवणादिप्रसंगोयस्यसतथेतिवा सपांडवेयः परीक्षित्विष्णुपद्यांप्रायोपवेशंप्रतिस्थितः मुकुंदंतदंघ्रिंचएवंदध्यावित्येकान्वयः चः समुच्चयेऽवधारणेवा ॥ ७ ॥

यत्रपरीक्षित्स्थिततित्रोपजग्मुः ॥ ८ ॥

---

क्रमसन्दर्भः ।

प्रायोपवेशश्चायं तस्यामर्त्यनद्यामेव युक्तः । यतस्तस्यां तदभीष्टस्य श्रीकृष्णस्य सम्बन्धः सर्वेषांपावनत्वं च स्फुटं दृश्यते इत्यास्ताम् तस्य ब्राह्मणापरा[illegible]षभीतस्य श्रीकृष्णस्यांघ्रिसेवामेव च सर्वाधिकपुरुषार्थतया लिप्सोर्वार्त्ता सर्वस्यापि जीवस्य तत्राप्यासन्नमरणस्य सैवाश्रयितुं यो[illegible] या वै इति । या वै तादृशत्वेन स्वयं प्रसिद्धा पुनर्लसत्श्रियस्तदानीं प्रचुरतया वृन्दावनजाता यास्तुलस्यस्ताभिर्विमिश्रा पूर्वं विमिश्राभूता ऐक्यं प्राप्ता या वृन्दावनस्थिताः स्वयं भगवतः कृष्णस्यांघ्रिरेणवस्ताभिरभ्यधिकं यमुनारूपमम्बु तस्यापि नेत्री वोढ्रीत्यर्थः । अभ्यधिकत्वं चोक्तमादिवाराहे—गङ्गा शतगुणा पुण्या माथुरे मम मण्डले । यमुना विश्रुता देवि ! नात्र कार्य्या विचारणा इति । जलप्रवाहरूपा गङ्गा ह्यत्र वोढ्री । वाह्यश्च तादृगम्बु । ततो भिन्नत्वमेवोपपद्यत इति नेत्रीति सदैव तन्नयनं लभ्यत इति च तथा व्याख्यातम् । कृष्णशब्दश्च रूढ्या श्रीगोपाल एवाधिकं प्रसिद्ध इति तु तथा व्याख्यातमेव । अभेदे हि तादृगम्बुरूपेत्येवावक्ष्यदिति ॥ ६ ॥

कीदृशः सन् दध्यौ तत्राह मुक्तेति अनन्येति च ॥ ७ ॥

तत्रेति । साक्षाच्छ्रीभगवत्पादसम्बन्धीनि गंगादीनि विनेति ज्ञेयम् । तेषु तेषामपि परमादरात् । किं वा उत्प्रेक्षामात्रमिदं न तु तेषामप्यभिप्रायः । तामेवाह प्रायेणेति ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥

---

सुबोधिनी ।

एवंनिरपेक्षतांनिरूप्यकर्तव्यत्वेनसन्यासलक्षणंवैराग्यमाह अथोइहामुत्रार्थफलभोगविरागोनज्ञानार्थः किंतुभगवत्सेवार्थइतिनिरूपयितुमाह कृष्णांघ्रिसेवामधिमन्यमानइति अतएवलोकपदप्रयोगः नतुलोकेभोगपरित्यागः भक्तिमार्गेणभगवत्सेवायाः शरीरमात्रसाध्यत्वात् नतुशापेनायमेवंकरोति परित्याग मतःकथमस्यभक्तत्वमित्याशंक्याह विमर्शितोहेयतयापुरस्तादिति पूर्वमेवत्यक्तव्याविति भगवत्सेवार्थं विचारितौ केवलशरीरेणभगवत्सेवांकरिष्यन् तस्यशरीरस्यक्रियान्तरेवियोगाभावार्थमनशनंकृतवानित्याह उपाविशत्प्रायामिति प्रायमनशनंप्रायस्यसर्वथान्नपरित्यागरूपस्यभगवद्व्रतेनाभीष्टत्वात् प्रायस्यकर्मत्वमन्यथातादर्थ्येचतुर्थीस्यात् अन्नमयत्वाच्छरीरस्यतदभावे

अत्रिर्वशिष्ठश्च्यवनः शरद्वानरिष्टनेमिर्भृगुरङ्गिराश्च ।
पराशरो गाधिसुतोऽथ राम उतथ्य इन्द्रप्रमदेध्मवाहौ ॥ ९ ॥
मेधातिथिर्देवल आर्ष्टिषेणो भरद्वाजो गौतमः पिप्पलादः ।
मैत्रेय और्वः कवषः कुम्भयोनिर्द्वैपायनो भगवान्नारदश्च ॥ १० ॥
अन्ये च देवर्षिब्रह्मर्षिवर्य्या राजर्षिवर्य्या अरुणादयश्च ।
नानार्षेयप्रवरान् समेतानभ्यर्च्य राजा शिरसा ववन्दे ॥ ११ ॥
सुखोपविष्टेष्वथ तेषु भूयः कृतप्रणामः स्वचिकीर्षितं यत् ।
विज्ञापयामास विविक्तचेता उपस्थितोऽग्रेऽभिगृहीतपाणिः ॥ १२ ॥

सिद्धांतप्रदीपः ।

तत्रराजर्षिसंनिधौ [illegible] उपजग्मुः कथम्भूता भुवनम्पुनानाः लोकम्पवित्रीकुर्वन्तः यतःसन्तःसाधवः प्रायेणतीर्थाभिगमापदेशैःतथात्र [illegible] स्वयन्तीर्थानिपुनन्ति श्रीगङ्गास्नानव्याजेनतदुगतं[illegible]तापापानिनाशयितुं परमभागवतराजर्ष्यनुग्रहार्थंचागताइत्यर्थः ॥ ८ । ९ । १० ॥

भाषाटीका ।

तदनंतर इसलोक तथा परलोक दोनों को पहिले त्यागने योग्य विचारे थे उसको छोडकर श्रीकृष्णसेवाको ही अधिक मानकर श्रीगंगाजी में अनशन व्रत लेकर राजा बैठ गये ॥ ५ ॥

जो श्रीगंगाजी प्रकाश मान तुलसी मिश्रित श्रीकृष्ण चरणरेणुसे पवित्रित जल की धारणकरती हुई श्रीमहादेव जी सहित दोनों लोकों को पवित्र करती है तो उसको मरनेवाला कौन नहीं सेवन करेगा ॥ ६ ॥

[illegible] विचार कर श्रीगंगाजी में प्रायोपवेश करके समस्त आंसक्ति को छोड मुनिव्रत से अनन्य भाव होकर श्रीमुकुंद चरणों का ध्यान करनेलगे ॥ ७ ॥

तहां पर भुवनों को पवित्र करनेवाले महानुभाव मुनिगण शिष्यों के सहित आये क्योंकि महात्मा लोक तीर्थों के निमित्त से स्वयं तीर्थों को पवित्र करते हैं ॥ ८ ॥

श्रीधरस्वामी ।

अरुणादयः [illegible] पृथक् निर्दिष्टाः । नाना नाम्यार्षेयाणि ऋषीणां गोत्राणि तेषु प्रवरान् श्रेष्ठान् । शिरसा भुवं स्पृष्ट्वा ववन्दे ॥ ११ ॥

विज्ञापनार्थं [illegible] कृतप्रणामः । विविक्तं शुद्धं चेतो यस्य । अभिगृहीतौ संयोजितौ पाणी येन सः । स्वचिकीर्षितं प्रायोपवेशनादि युक्तमयुक्तं वेति विज्ञापयामास ॥ १२ ॥

श्रीवीरराघवः ।

केचतेमुनयस्तत्रतान् [illegible] सार्द्धद्वयेन गाधिसुतोविश्वामित्रः रामोभार्गवः कुंभयोनिरगस्त्यः ॥ ९ । १० ॥

अन्येचदेवर्षि[illegible]अरुणादयश्चऋषयःतानागतान्नानाविधार्षेयप्रवरान्समेतान्संघीभूतानभ्यर्च्यराजापरीक्षित्शिरसाववंदे ॥ ११ ॥

अथतेषुसुखंयथातथोपविष्टेषुसत्सुपुनरपिकृतः प्रणामोयेनसराजाउपस्थितस्तेषांसमीपेतिष्ठन्नभिगृहीतपाणिः बद्धांजलिः विवेकयुक्तचेतोयस्यतथाभूतः स्वचिकीर्षितंकर्तुमिष्टंयत्तद्विज्ञापयामास ॥ १२ ॥

श्रीविजयध्वजः ।

मुनीनांनामानिनिर्दिशतीत्यादि अत्रिरिति गाधिसुतोविश्वामित्रः रामः परशुरामः इंद्रप्रमतिश्च[illegible]इध्मवाहश्च[illegible] ॥ ९ ॥
कुंभयोनिरगस्त्यः ॥ १० ॥

श्रीविजयध्वजः ।

योऽहमेवंमहत्तमानुग्रहणीयशीलः तमामांद्विजोपसृष्टः द्विजकुमारशापप्रेरितः वेषांतरधारीयथातथाकुहकः कपटीसर्पजातिविशिष्टोवा तक्षकः दशतुभक्षयतु युस्माभिरेतत्कर्तव्यमित्याह अलमिति यूयंदवकीनंदनमित्यादिकाविष्णुविषयागाथाश्चरणात्रयाद्युपलक्षितानूश्लोकानदेहवियोगपर्यंतंगायतषड्जादिस्वरैरितिशेषइत्यन्वयः ॥ १५ ॥ ॥

नकेवलमस्मिन्जन्मन्येवहर्योदामनोरतिप्रसंगोऽपितुजन्मांतरेऽपीतिप्रार्थयइत्याह पुनश्चेति तदाश्रयेषुभगवद्भक्तेषुयुष्माद्विधेषु मैत्रीअस्तु मदीयोऽयमितिचित्तवृत्तिलक्षणा सृष्टिजन्म ॥ १६ ॥

---

क्रमसंदर्भः ।

अहो आश्चर्यम् । किमाश्चर्य्यं तत्राह । नृपाणां मध्ये वयं पाण्डवाः महत्तमानां भवतामनुग्रहे [illegible] स्वाग [illegible]नाः सन्तो धन्यतमा जाता इति शेषः । स्वतस्तु नृपाणां कुलमीदृशमित्याह राज्ञामिति । एता गर्ह्य कर्म [illegible]विलक्षणं [illegible]मिति ॥ १३ ॥

तत्रापीदमाश्चर्यमित्याह । तस्यैव भगवदनुग्रहशीलानां वंशे गणनीयस्य [illegible] मे ममाभी[illegible] तत्रा[illegible] तादृशब्राह्मणापराधकर्त्तुः । परावरेशस्तु नूनं यदनुगृहीतवंशजोऽयमित्यास्मृत्य स्वयं द्विजशापरू[illegible] [illegible] एव मूलमवष्टम्भको यस्य स्वस्मिन्नासङ्गस्य तद्रूपोऽभवत् । तर्हि किं स्यात्तत्राह । तत्र परावरे[illegible] रति [illegible] प्राप्तया भयाभावं धत्ते । मर्त्यो मृत्युव्यालभीतः पलायन्नित्यादेः । अतोऽकस्मादेव[illegible] [illegible]ष्यत च श्रीशुकदेवमुपलभ्य अपि मे भगवान् प्रीतः इत्यादिद्वाभ्याम् ॥ १४ ॥

प्रतियन्तु अङ्गीकुर्वन्तु । तत एव हेतोरीशे धृतचित्तं सन्तं मां गंगादेवी चाङ्गीकरोतु [illegible] सृष्टि जन्म । अन्यत्र सर्व्वत्र तु मैत्री अविषमा दृष्टिरस्तु । ब्राह्मणेषु त्वादरविशेषोऽस्त्वत्या[illegible] [illegible] ॥ १६ ॥

---

सुबोधिनी ।

प्रथमतः स्ववृत्तांतं कथयन् श्लोकद्वयेन ऐहिकामुष्मिकं च साधनद्वयं प्रार्थयतेऽतद्वयं भगवत्कृपा महत्कृपा तथापि महत् कृपायाहेतुत्वात् प्रथममाह अहोइति आश्चर्यंवयमितिश्लाघायांधन्यतमाः धनंपुरुषार्थमर्हंतीति धन्याः तत्रातिशयः सर्वपुरुषार्थप्राप्तिः भवतश्चपुरुषार्थरूपाः तेचसंप्राप्ताइति नचगमनमात्रेणैवस्वाधीनत्वाभावात् कथंपुरुषार्थप्राप्तिः तत्राह महत्तमेतिभगवदंतरंगाः अनुग्रहणीयशीलयेषांतेषांशीलैःऋषिभिरनुग्रहः कृतः यादृशतादृशोऽस्य स्वभावोभवतुच एतेषांपुरुषार्थसाधकाभविष्यामइति अतएवनृपाणांमध्ये श्रेष्ठाः ननुराज्ञांब्राह्मणानांच तुल्यत्वात् एवं रूपतायुक्तेच किमाश्चर्यम् "अतोह्यन्योऽन्यमात्मानं ब्रह्मक्षत्रंच रक्षत" इतिवाक्यात्तत्राह राज्ञांकुलमिति तद्वाक्यंमहापुरुषाणां कार्यप्रशंसापरं वस्तुतस्तुराज्ञांकुलमात्रं यत्रब्राह्मणाश्चरणा क्षालनंकृत्वा अंतः प्रविशंति तच्छुद्धाशुद्धमध्येवेदिकरूपं स्थानंभवति तत्पादशौचमित्युच्यते ततोऽपिदूराद्राज्ञांकुलं तत्रापिगंतुमयोग्यम् अंतर्गमनं दूरापास्तमित्यर्थः वर्ततिहर्षेइदानीं विपरीतं जातमिति तेषांनिकृष्टत्वेहेतुः गर्ह्यकर्मेति गर्ह्यपरहिंसालक्षणं कर्मयस्य ॥ १३ ॥

एवंतेषांकृपामुक्त्वा भगवत्कृपामाह तस्यैवेति राज्ञांकुलेकस्य चित् गर्ह्यकर्मनभवदिति अहंतुसएवअतस्तस्य गर्ह्यकर्मणोमितत्राप्य घस्यकेवलं पापरूपस्य पूर्वक्षात्रियत्वमपि अधुनाकुलांगारत्वादघत्वमेतादृशस्यापिनिर्वेदमूलः द्विजशापरूपोभगवानेवजातः तस्यैवेति भगवतस्तथाभवनेहेतुः परावरेशइति अन्यथापरावरेशएवनस्यात् अन्यथाअवरेषामस्मदादीनामनुद्धारकः स्यात् ननुशापस्य कथंभगवद्रूपत्वंतत्राह निर्वेदमूलइतिवैराग्यमूलः षड्गुणानांमध्येपर्यवसानरूपस्य वैराग्यस्यतद्धन्यो मूलंभवितुमर्हति अतएकत्वाद्भगवतोद्विजशापोऽप्येवं ननुशापद्वाराकथं नभगवान् वैराग्यहेतुर्जातः अघत्वंतुकृपायामप्रयोजकमतआह गृहेषुव्यासक्तचित्तस्येति बहुवचनंपुत्रादिषुगृहेष्वपि विशेषासक्तिः स्वस्यापिसाधनत्वेनतद्योजनात् अभीक्ष्णमिति समयेऽपिश्रवणाभावः ततस्यतत्त्वग्रहणायसाक्षादितिन्यायात् अतः शास्त्राणामसामर्थ्येनतुएकजनंमोचयति सर्वं समर्थत्वात् भगवतः तत्राह यत्रप्रसक्तइति येषुगृहेषुप्रसक्तः शीघ्रंहृदयेभयमेवधत्ते नतुभयापरिणामतोभयनिवृत्त्यर्थं तथाजातमित्यर्थः ॥ १४ ॥

एवमुभयोरुपकारमुक्त्वाइदानींस्वकर्त्तव्यमाह तंमोपयातमिति एवमुपकारविषयंवामामुपयातंभवच्छरणमागच्छन्तं प्रतियंतुजानंतु हेविप्राः ! विशेषेणापूरकाः मामपिपूरयिष्यंतीतिभावः देवतारूपागङ्गाचमांशरणागतंजानातुहेविप्राः ! गङ्गायाजलप्रकृतित्वंलोकसिद्धमिति अनेनशरणागतेरयुक्तत्वात्देवीत्युक्तं भक्तचरणोदकशरणागतिःनभगवन्मार्गविरोधिनीननुकिंशापविमोक्षार्थंप्रार्थयसेनेत्याहईशे भगवतिधृतचित्तंमांद्विजेनबालकेनउपसृष्टःकुहकोवंचकःकृत्रिमरूपेणातक्षकरूपेणावातक्षकोवावेत्यनादरेअलमत्यर्थंदशतुनकाचित्ममक्षतिरित्यर्थः नन्वस्माकंतर्हिकोपयोगस्तत्राहगायतविष्णुगाथाइति एतावतावहिश्चितानिवारितापाक्षिकोऽपिदोषःपरिशंकनीयइतिचित्तस्य चंचलत्वादेवं प्रार्थना ॥ १५ ॥

एवमैहिकंप्रार्थयित्वाआमुष्मिकं प्रार्थयतेपुनश्चेति मुक्तिस्तुनसंभावितानापेक्षिता राज्यरसभक्तिरसयोःअन्यतरस्वैलक्षण्याविरुद्धधर्माश्रयत्वाच्च भगवतिरतिरेवास्तुनराज्यादिजन्मत्ववश्यंभाविदेहजातिगुणक्रियासुनकोपिरसः अतः यांयामेव सृष्टिमुपयामितत्रतत्रभगवतिरतिरस्तुननुसर्वस्यापिभगवत्त्वात्पुत्रादिषुरतिः सिद्धैवतदलंप्रार्थनयेत्यतआह देशकालवस्त्वपरिच्छिन्नएतादृशत्वंनपुत्रादिषुतस्यारतेःकारणमपि प्रार्थयतेप्रसंगश्चेतिअन्यथासक्तइतिक्षिप्तमुत्पाद्यकार्यार्थमाक्षिप्तसाधनमुपक्षिप्तंस्यात्नचसर्वदैवरतिःप्राप्यारतेर्मनोधर्मत्वेनसर्वदास्फुरणेदे-

## सुबोधिनी ।

हादि निर्वाहोऽपिनस्यातवाद शरतौप्रमाणसाधनत्वाभावाच्चवरस्यैवसाधनत्वेऽत्प्रेक्षायाश्चप्रमाणत्वेनप्रकारांतरंचयुक्तिबाधात् भगवत्त्वंपर्यव स्यान्तितश्चभक्तानामनपेक्षितं रतिश्च अनित्यास्नेहत्वाततस्य चात: करयाश्रमत्वात्एवमभ्यासेऽन्यत्र "वाक्यान्वयादि" त्यत्रएतदस्माभि: सम्यग् विवृतमतोभगवन्नैकट्यसाध्यत्वात्स्वतस्तस्यासंभवात्भगवद्भक्तैरेवततसाधयितुंशक्यतइतितिप्रसंगःसर्वथाभवत्वित्याह प्रसंगश्चेतिआश्रयो नैकट्यसूचक: नाश्रयमत्रेण अन्यस्यनैकट्यंसंपादयितुंशक्यमिति महत्स्वीत्युक्तं चकारास्तेष्वपिरति: एवंससाधनाभगवतिरतिःप्रार्थिता अस्यावाधकाभावं प्रार्थयतेमेऽस्तुसंगइति अहमुष्मावचैद्भूत्यैरितिवाक्यात् भूतग्रामावमाननेभगवत्तोषाभावात्भक्त्यैवतुष्टिमभ्येतीति वाक्यात् फलप्रतिबंधकं भूतावमाननं स्वरूपप्रतिबंधकंच भगवदतोषेभक्त्यनुपपत्तेः मेअसेवनावमाननंभवति सोम्येतितदवमानने अवमानकरणं तुसज्यते ननुब्राह्मणातिक्रमस्य कृतत्वात् कथंवरोदेय: तत्राह नमोद्विजेभ्यइति ॥ १६ ॥

---

## श्रीविश्वनाथचक्रवर्ती ।

स्वस्मिन् मुनीनां स्वाभाविकमनुग्रहमालक्ष्याह अहो [illegible] । महत्तमानामनुग्रहणीयम् अनुग्रहार्हं शीलं येषां ते । एतच्च राज्ञामतिकु- लभमित्याह [illegible] "[illegible] भूत्रपादाम्भांसि समुतसृजेदि" ति स्मृतेः । आश्रमाद्दूरस्थपादशौचस्थलादपि आराद्दूरे राज्ञां [illegible] विसर्ग [illegible] ज्ञानादित्यर्थः । यतो गर्ह्यकर्म सर्व्वतोऽप्यपवित्रम् ॥ १३ ॥

तस [illegible] ब्राह्मणगले सर्पनिक्षेपेण अवमाननात् एवं पतितपावनत्वख्यापनार्थं परावरेशो भगवानेव [illegible] जरा [illegible] मूलः निर्व्वेदस्य मूलं कारणमित्यर्थः । पुंस्त्वमार्षम् । भवद्विधमहत्समागमादनुमीयते यत्र भगवान् [illegible] न्तीत्यर्थः । यत्र परावरेशे प्रसक्त आसक्तो जन आशु शीघ्रमेवाभयं भयाभावं धत्ते ॥ १४ ॥

तान् प्रार्थयते [illegible] मा मा [illegible] तं शरणागतं प्रतियन्तु जानन्तु । देवी देवतारूपा गङ्गा च प्रत्येतु । वाशब्दः प्रतिक्रिया- [illegible] गाथाः कथाः ॥ १५ ॥

पुनश्च पुनरपि यां यां सृष्टि [illegible] प्राप्नोमि तस्यां [illegible] रतिः तद्भक्तेषु प्रकृष्टः संगः सर्व्वजीवेषु मैत्रीति मद्वाञ्छितत्रयं भूयात् इति प्रार्थ्य प्रणाममाह नम इति । यद्वा अवज्ञानादिजातानुताप आह ब्राह्मणेभ्यो नमो भूयादिति वाञ्छितचतुष्टयंच ॥ १६ ॥

---

## सिद्धांतप्रदीप: ।

सिद्धान्तेस्ववृत्तस्त्वेनतदनुग्रहभाजनमात्मानंमत्वाऽऽत्मभाग्यंनिवेदयन्नाह अहोइति नृपाणांवयंधन्यतमाअतिभाग्यवन्त: तत्रहेतुमाह महत्तमैर्भवद्भिरनुग्रहणीयमनुग्रहीतुंयोग्यंशीलंवृत्तं येषांते महत्तमसम्बन्धशून्यंराजकुलंत्वयुक्तमित्याह राज्ञांकुलं ब्राह्मणानांभवद्विधानांपाद शौचात् पादप्रक्षालनतोयात् आरात् दूरात् विसृष्टंदैवेनापनीतंविमुखीकृतंचेत् वर्ततेतिखेदेतर्हिविगर्ह्यकर्मभवति विगर्ह्यंनिंद्यंकर्मयस्यतथा भूतंभवति ॥ १३ ॥

महत्तमानुग्रहपात्रत्वमात्मन उक्त्वाद्विजशापोऽप्यनुग्रहायैवजातइतिवदन्भगवदनुग्रहपात्रत्वंदर्शयति तस्येतितस्यतद्ध्याननिष्ठमुनि स्कंधेमृतोरगनिक्षेपकर्तुः अतएवाघस्यपापबुद्धेः अभीक्ष्णंपुनः पुनः गृहेषुव्यासक्तंचित्तंयस्यस्वात्मभावापत्तयेपरावराणांपरे अवरेयेभ्यस्ते षांब्रह्मादीनां यद्वापरेचावरेचेतिद्वंद्वस्तेषांब्रह्मादिपिपीलिकांतानामीशोनियंता श्रीकृष्णः द्विज शापरूप: द्विजशापप्रवर्तकोऽभूत् यत्रयस्मिन् परावरेशेप्रसक्तोऽभयंतत्प्राप्तिसाधनंनिर्वेदमाशुशीघ्रंधत्तेनिर्विण्णोभवति यतः स्वयमपिनिर्वेदमूलः निर्वेदोमूलंप्राप्तिसाधनंयत्रसः स्वात्म भावप्राप्तयेवैराग्यार्थंशापप्रवर्तकोऽभूत् ॥ १४ ॥

मुनीन्प्रार्थयतेतमितिद्वाभ्याम् हेविप्राः । भवंतःमामुक्तविधम् ईशेश्रीकृष्णेधृतचित्तंमामुपयातंशरणागतंप्रतियंतुजानंतु देवीगंगाचप्रत्येतु द्विजेनोपसृष्टस्तक्षकः साक्षात्कुहकः वंचकः मन्वादशतु यूयमलमत्यर्थंविष्णोर्गाथाः कथाः गायतकथयत ॥ १५ ॥

किंचभगवतिप्रतिसक्तिस्तदाश्रयेषुभगवानाश्रयोयेषांतेषुप्रकृष्टः संगश्चभूयात् पुनश्चयांयांसृष्टिमुपयामितस्यांसृष्टौजन्मनिमहत्सुमैत्रीहि तानुवर्तित्वमस्तु संकल्पसिद्धयेमुनीन्प्रणामतिद्विजेभ्योनमः ॥ १६ ॥

---

## भाषाटीका ।

राजा बोले अहो हमलोग धन्य हैं जोकि महात्माओं के अनुग्रह पात्र होगये नहीं तो राजों का कुल तो ब्राह्मणों के पाद शौच जल से भी दूर दुराने लायक निंदित कर्मवाला है ॥ १३ ॥

मैं अपराधी हूँ निरन्तर गृहादिकों में आसक्त चित्तवाला हूँ तिस मेरे कूं ब्राह्मण शाप वैराग्य का हेतु हुआ घर में आसक्त पुरुष शीघ्रही भययुक्त होता है ॥ १४ ॥

हे विप्रो ! मैं शरणागत आया हूं सो देवी गङ्गाजी और आप लोग भगवत् चित्त वाले मेरे को जानो ब्राह्मण का भेजा कपटी तक्षक दंशन करो आप लोग विष्णु कथा का गान करो ॥ १५ ॥

फिर भी अनन्त भगवान में तथा तिनके भक्तों में महत् पुरुषों में मेरा संग होय जिन २ जन्ममें मैं जाऊं सर्वत्र भक्तों से मित्रता होय आप ब्राह्मणों को नमस्कार है ॥ १६ ॥

---

इति स्म राजाध्यवसाययुक्तः प्राचीनमूलेषु कुशेषु धीरः ।
उदङ्मुखो दक्षिणकूल आस्ते समुद्रपत्न्याः स्वसुतेन्यस्तभारः ॥ १७ ॥
एवञ्च तस्मिन्नरदेवदेवे प्रायोपविष्टे दिवि देवसङ्घाः ।
प्रशस्य भूमौ व्यकिरन्न प्रसूनैर्मुदा मुहुर्दुन्दुभयश्च नेदुः ॥ १८ ॥
महर्षयस्तं समुपागता ये प्रशस्य साध्वित्यनुमोदमानाः ।
ऊचुः प्रजानुग्रहशीलसारा यदुत्तमःश्लोकगुणाभिरूपम् ॥ १९ ॥
न वा इदं राजर्षिवर्य्य ! चित्रं भवत्सु कृष्णं समनुव्रतेषु ।
येऽध्यासनं राजकिरीटजुष्टं सद्यो जहुर्भगवत्पार्श्वकामाः ॥ २० ॥

श्रीधरस्वामी ।

अध्यवसायो निश्चयः । प्रागग्रेषु कुशेषु आस्ते स्म । स्वसुते जनमेजये न्यस्तो भारो
मुदा व्यकिरन् । देवसंघैर्व्वादिताः नेदुः ॥ १८ ॥
प्रजानुग्रहे शीलं सारो बलंच येषाम् । उत्तमःश्लोकगुणैरभिरूपं सुन्दरमिव ॥ १९ ॥
भवत्सु पाण्डोर्व्वंशेषु । ये जहुरिति युधिष्ठिराद्यभिप्रायेण ॥ २० ॥

---

श्रीवीरराघवः ।

इतीत्थंनिश्चययुक्तोराजाधीरः स्वसुतेजनमेजयेन्यस्तोनिहितोराज्यभारोयेनतथाभूतः समुद्रपत्न्यागंगायादक्षिणकूलेदक्षिणतीरेप्राचीनकूलेषुप्राचीनाग्रेषुकुशेष्वास्तेस्मउपविष्टवान् ॥ १७ ॥

इत्थंतस्मिन्नरदेवानांदेवेपरीक्षितिप्रायोपाविष्टेसतिदिविसर्वदेवसंघाः तंप्रशस्यप्रस्तुत्यमुदाप्रसूनैः कुसुमैः पुनः पुनर्भूमौव्यकिरन्दुंदुभयश्चनेदुर्दध्वनुः ॥ १८ ॥

येसमागतामहर्षयस्तेसर्वेउत्तमैः श्लोक्याः प्रशंसनीयागुणास्तैरभिरूपंराजानंप्रशस्यसाधुसाध्वीत्यनुमोद[illegible] ऊचुः कृत यद्यतस्ते प्रजास्वनुग्रहएवशीलंस्वभावः सएवसारोयेषांतेतथाभूतत्वात्प्रशस्यानुमोदमानाः ऊचुरित्यर्थः ॥ १९ ॥

उक्तिमेवाहनवाइतिहेराजर्षिवर्य ! नित्यंश्रीकृष्णमनुव्रतेष्वनुवर्तिषुभवत्स्विदंविचित्रंनवैनभवतिकिंतत्येभवतः भगवतः पार्श्वसामीप्यं कामयमानाः सन्तोराज्ञांकिरीटैर्जुष्टंसेवितमध्यासनंसार्वभौमसिंहासनंसद्योजहुस्तत्यजुरित्येतत् ॥ २० ॥

---

श्रीविजयध्वजः ।

कुत्रगंगायांस्थितइतितत्राह इतिस्मेति स्वसुतेजनमेजयेन्यस्तोनिहितोराज्यभारोयेनसतथोक्तः इत्युक्तप्रकारेण[illegible] अत्यसनो योगयुक्तः निश्चययुक्तोवा राजापरीक्षित्समुद्रपत्न्यागंगाख्यायानद्याउदक्प्रवाकिञ्चिद्दक्षिणकूलेदक्षिणतीरभागे[illegible] उदङ्मुखआस्तइत्यन्वयः मृत्युचिंतारहितत्वाद्धीरइत्युक्तकूलशब्दस्यलक्षणार्थमनाश्रित्यमुख्यार्थांगीकारेभारता[illegible] स्याद्यथागंगापदेन तीरंलक्ष्यते कूलपदेनापिजलेलक्षणोपपत्तेः आस्तइतिलड्प्येवंविधिविशेषद्योतनार्थः ॥ १७ ॥

श्वेतच्छत्रचामरादिनरदेवचिन्हंनकेवलंतावदेव किंतुकेयूरादींश्चनिरस्यत्यक्त्वा चर्म कृष्णाजिनादि मुनिवे[illegible] ॥
व्यकिरन्वर्षितवंतः ॥ १९ ॥

यदुत्तमश्लोकस्यहरेर्गुणानुरूपंगुणप्रकटनानुकूलंतद्वचयऊचुरित्यन्वयः प्रजानुग्रहमंतरेणान्यस्वभावोनास्तियेषांतेतथोक्ताः ॥ २० ॥

---

क्रमसंदर्भः ।

मूलमन्तः ( कूलमन्तः ) अन्तश्चाग्रेऽपि । तस्माल्लक्षणया प्रागग्रैर्वित्येव व्याख्यातम् ॥ १७ ॥
प्रसूनैः प्रसूनानीत्यर्थः ॥ १८ ॥
मन्दरमिवेति टीकायामिवशब्दो वाक्यालंकारे ॥ १९ ॥

तत्राभवद्भगवान् व्यासपुत्रो यदृच्छया गामटमानोऽनपेक्षः ।
अलक्ष्यलिङ्गो निजलाभतुष्टो वृतश्च बालैरवधूतवेशः ॥ २५ ॥
तं द्व्यष्टवर्षं सुकुमारपादकरोरुबाहंसकपोलगात्रम् ।
चार्वायताक्षोन्नसतुल्यकर्णसुभ्र्वाननं कम्बुसुजातकण्ठम् ॥ २६ ॥
निगूढजत्रुं पृथुतुङ्गवक्षसमावर्तनाभिं वलिवल्गूदरञ्च ।
दिगम्बरं वक्त्रविकीर्णकेशं प्रलम्बबाहुं स्वमरोत्तमाभम् ॥ २७ ॥
श्यामं सदापीच्यवयोऽङ्गलक्ष्म्या स्त्रीणां मनोज्ञं रुचिरस्मितेन ।
प्रत्युत्थितास्ते मुनयः स्वासनेभ्यस्तल्लक्षणज्ञा अपि गू[illegible] ॥

सिद्धांतप्रदीपः ।

यतो भवन्तः सर्वेऽत्र पर[illegible]तिना[illegible]श्च ततो हे निर्दोषविप्राः! वायुष्मान् विश्व[illegible]विश्व[illegible] [illegible]म्यं गृहेषु व्यासं [illegible]पः तदुपदेशः सन् । सिद्धत्वय मागांपृच्छय[illegible] [illegible]यतश्च सर्वात्मनासर्वावस्थासु विशेषतश्चाम्रियमाणैर्मुमूर्षु[illegible] अ[illegible]शो प्रसक्तः शीघ्रमेवाभ[illegible] कुशलाय्यूयंविमृश्य[illegible] [illegible]तत्कुरुपादिशत ॥ २४ ॥ [illegible] [illegible]त्रा[illegible]मत् तत्प्रेरणयैव जातमिति [illegible] नास्ति [illegible] [illegible]सत [illegible] तेषु ।

---

भाषाटीका ।

ऋषि लोग आपस में बोले यह भागवत प्रधान इस देहकूं त्याग कर जबतक [illegible] शोकरहित वैकुंठ लोककुं जायगा तब लग हम सब आज इहां हीं पर बैठे हैं ॥ २१ ॥

परीक्षित जी मुनियों के सम मधुर गंभीर [illegible] विष्णुचरित्र के श्रवण की इच्छा से मुनियों कूं वंदन करके बोले ॥ २२ ॥

हे मुनियो! आप लोग सब दिशाओं से आये हो जैसे ब्रह्म लोकसे मूर्तिमान् वेद हैं तैसे आप लोगहो आप लोगों को इस लोकमें वा परलोक में केवल दयालुता के विनादुसरा कोई प्रयोजन नहीं है ॥ २३ ॥

तिससे हे विप्रो कर्तव्यता में आपका विश्वास करके आपसे प्रश्न पूछता हूँ मरनेवालों कूँ जो कर्तव्य होयसो आपयुक्त लोगहो विचार करके कहोगे ॥ २४ ॥

---

श्रीधरस्वामी ।

तत्र तेषु योगयागतपोदानादिभिर्विवदमानेषु सत्सु यदृच्छया गां पर्यटन् व्यासपुत्रस्तत्राभवत् प्राप्तः । न लक्ष्यमाश्रमादिलिङ्गं यस्य । अवधूतः अवज्ञया जनैस्त्यक्तो यस्तस्येव वेशो यस्य ॥ २५ ॥

तमित्यादीनां प्रत्युत्थिता इति तृतीयश्लोकेनान्वयः । द्विगुणान्यष्टौ वर्षाणि यस्य । सुकुमारौ पादौ करौ ऊरू बाहू अंसौ कपोलौ गात्रञ्च यस्य तम् । चारुणी आयते च अक्षिणी यस्मिन् । उन्नता नासा यस्मिन् । लम्बत्वादिवैषम्यं विना तुल्यौ कर्णौ यस्मिन् । शोभते भ्रुवौ यस्मिन् । एवम्भूतमाननं यस्य तम् । कम्बुवद्रेखात्रयाङ्कितः सुष्ठु जातः कण्ठो यस्य ॥ २६ ॥

कण्ठस्याधोभागे स्थिते अस्थिनी जत्रुणी । मांसेन निगूढे जत्रुणी यस्य । पृथु विस्तीर्णं तुङ्गमुन्नतं वक्षो यस्य । आवर्तवन्नाभिर्यस्य । वलिभिस्त्रिरेखैर्निम्नरेखाभिर्वल्गु रम्यमुदरं यस्य । दिश एवाम्बरं यस्य । वक्रा विकीर्णाश्च केशा यस्य । प्रलम्बौ बाहू यस्य । स्वमरेषु श्रेष्ठेषु देवेषु उत्तमो हरिः तद्वदाभा यस्य ॥ २७ ॥

सदा अपीच्यम् अत्यन्तोत्तमं यद्वयो यौवनं तेन या अङ्गलक्ष्मीः देहकान्तिस्तया रुचिरस्मितेन च । गूढवर्चसमपि प्रत्युत्थिताः तं दृष्ट्वा प्रत्युद्गमं कृतवन्त इत्यर्थः ॥ २८ ॥

---

श्रीवीरराघवः ।

तत्रैवंपृच्छतोराज्ञः संनिधौ भगवान् व्यासस्यपुत्रः श्रीशुकोऽभवदागत्यतस्थौ कथंभूतः यदृच्छयागांभूमिमटमानः तत्रहेतुरनपेक्षः कृत्य पेक्षारहितः तत्रहेतुः निजलाभेनब्रह्मात्मकस्वात्मानुभवेनैवतुष्टः अलक्ष्यमृषिरितिज्ञातुमशक्यलिंगरूपंयस्यतत्रहेतुरवधूतवेषः अभिभाव्य वेशः अतएववालैर्वृतः परिवृतः ॥ २५ ॥